र्गमे मरणाशौचनिर्गमे सति शान्त्या च स्वनुष्ठितया विवाहः कार्य्य इति परैराचार्य्यैरिष्यते । यदाह मेधातिथिः । "प्रेतकार्य्याण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियामिति" ज्योतिःप्रकाशेऽपि । "प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासमन्ततः । शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेद्बुधः" इति । तन्त्रावरुद्धकल्पे स्वल्पाशौचादनन्तरं मासमध्येऽपि शान्तिं विधाय विवाहः कार्य्य इत्यर्थः पी०धा० "चूडा व्रतञ्चापि विवाहतोव्रताच्चूडा नेष्टा पुरुषत्रयान्तरे । वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतोवाऽब्दविभेदतः शुभः" मु०चि० "चूडा चौलं व्रतमुपनयनञ्च अपिशब्दात् महानाम्न्यादिसमावर्त्तनञ्च विवाहात् परतः पुरुषत्रयान्तरएव नेष्टम् । तथा व्रतादुपनयनाच्चूडा पुरुषत्रयपर्य्यन्तं नेष्टा । तथा वध्वाः स्नुषायाः कन्यायाः विनिर्गमोऽपि पुरुषत्रयपर्य्यन्ते नेष्टः एतन्मूलवाक्यं "पुरुषत्रयपर्य्यन्तमित्यादि" "आदौ चौलं ततो मौञ्जीत्यादि" च प्राग्लिखितम् । तस्मान्मूलपुरुषस्य चतुर्थादौ नायं दोषः । स चायं दोषः पुरुषत्रये षण्मासपर्य्यन्तमेव अतः षण्मासात इति मासषट्कानन्तरमयं व्यस्तोऽपि विवाहादिः सर्वोविधिः शुभः । एतन्मूलवाक्यम् "कुले ऋतुत्रयादर्वाक्" इत्यादि प्रागुक्तम् । अत्रापवाद उच्यते वेति अथवाऽब्दभेदात् वर्षभेदात् षण्मासमध्येऽपि शुभः । यथा फाल्गुने मासि विवाहो वैशाखे चौलं यज्ञोपवीतं वा भवत्येवेत्यर्थः । तदुक्तं संहितासारावल्याम् "फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्त्तुत्रयविलङ्घनमिति" अत्र फाल्गुनपदं प्रागब्दगतमासान्तरस्याप्युपलक्षणं चैत्रपदं चोत्तरवर्षगतवैशाखाद्युपलक्षणं तत्र कैमुतिकन्यायेन यत्र मासद्वयान्तरं तत्रापि निषेधाभावस्ततोऽधिकव्यवधाने किं वाच्यम्, अब्दभेदस्यैव प्रयोजकत्वात्" पी०धा० । अथ गण्डान्तमूलादिदूषणयोर्वधूवरयोः श्वशुरादिपीडकत्वमाह "श्वश्रूविनाशमहिजौ सुतरां विधत्तः कन्यासुतौ निरृतिजौ श्वशुरं हतश्च । ज्येष्ठाभजाततनया स्वधवाग्रजञ्च शक्राग्निजा भवति देवरनाशकर्त्री" मु०चि० । "अहिजावश्लेषोत्पन्नौ कन्यासुतौ श्वश्वाः मातुः पत्युर्मातुर्विनाशं विधत्तः कुरुतः तथा निरृतिजौ मूलोत्पन्नौ कन्यासुतौ श्वशुरं हतोमारयतः । उक्तञ्च वशिष्ठेन "मैत्र्यभोद्भूतसुतः सुता वा माताहद्यस्य श्वशुरं निहन्ति । तदन्त्यपादे जनितो निहन्ति मैत्रोत्थमेवाहिभवः फलत्वमिति" अहिभव इति पुंस्त्वमपि वर्जितम् । सुतः सुता वेति पूर्व्वोक्तेः "मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनामिति" नारदोक्तेश्च तस्य श्वशुरस्याङ्गनां पत्नीम् । वरस्य कन्याया वा मातामातरं न तु सापत्नमातरं हन्तीत्यर्थः । तदेव स्पष्टमुक्तं वशिष्ठेन । "जनकं जननीं हन्ति भर्त्तुर्मैत्राहिधिष्ण्यजा" । तुल्यन्यायत्वात् कन्याया अपि मातामातरम् । ज्येष्ठेति ज्येष्ठानक्षत्रोत्पन्नकन्या स्वधवाग्रजं भर्त्तुर्ज्येष्ठभ्रातरं हन्ति । शक्राग्निजा विशाखानक्षत्रोत्पन्नकन्या देवरस्य भर्त्तुः कनिष्ठभ्रातुर्नाशकर्त्री भवति" । यदाह वशिष्ठः । "सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरमिति" । हन्तीत्यनुवर्त्तते । नारदोऽपि । "ऐन्द्री पत्यग्रजं हन्ति देवरन्तु द्विदैवजेति" पी०धा० अत्र विशेषः "द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा । मूलान्त्यपादसार्पाद्यपादजातौ तयोः शुभौ" । मु०चि० 'द्वीश' विशाखा । यदाह च्यवनः । "विशाखा तुलयायुक्ता देवरस्य शुभावहा । विशाखा वृश्चिकोद्भूता देवरं हन्त्यसंशयमिति" । बृहन्नारदोऽपि "न हन्ति देवरं कन्या तुलाभिन्नद्विदैवजा । चतुर्थपादजा त्याज्या दुष्टा वृश्चिकपुच्छवत्" । तस्माद्विशाखाचतुर्थपादे निषेधः फलित" इत्यर्थः । मूलेति । तयोः श्वशुरश्वश्र्वोः मूलचतुर्थचरणोत्पन्नौ तौ कन्यासुतौ श्वशुरसौख्यदौ । आश्लेषाद्यचरणोत्पन्नौ कन्यासुतौ तयोः सौख्यदौ तदुक्तं नारदेन ।"सुतः सुता वा नियतं श्वशुरं हन्ति मूलजः । तदन्त्यपादजो नैव तथाऽश्लेषाद्यपादजः" अत्र पुंस्त्वमविवक्षितं चेत् स एव" पी०धा० । इति वधूवरयोः सामान्यतो गुणदोषविचारः

अथ वधूवरयोर्मेलकम् । तत्र कूटान्यनेकविधानि तत्र केचिद्दश कूटान्याहुः । तदाह नारदः । "दिनं गणञ्च माहेन्द्रं स्त्रीदीर्घं योनिरेव च । राशिराश्यधिपौ रज्जुर्वश्यं वेधो दश स्मृताः" । "पुनश्च वर्णकूटञ्च माहेन्द्रं वा ततः परम् । एते द्वादश योगाश्च प्रीतिभेदाः प्रकीर्त्तिताः" । अन्येऽष्टादशकूटान्याहुः । यदाह गर्गः "माहेन्द्रं गणकूटञ्च दिनकूटञ्च योनिजम् । स्त्रीदीर्घं रज्जुकूटञ्च वश्यं वर्णाख्यकूटकम् । राशिराश्यधिपाख्ये च वेधो नाड्याख्यकूटकम् । भूतविज्ञाख्यकूटञ्च जात्याख्यं पक्षिकूटकम् । योगिनीगोत्रकूटन्तु कूटान्यष्टादशैव तु । दम्पत्योर्वृद्धिकारीणि यत्नाच्चिन्त्यानि शास्त्रतः" इति । तत्र दृशादिकूटानां तत्तद्देशविशेषप्रसिद्धत्वात् तानि विहाय

सर्वदेशप्रसिद्धान्यष्टकूटानि वक्तव्यानि आह पी॰धा॰

"वर्णोवश्यं तथा तारा योनिश्च ग्रहमैत्रकम् । गणमैत्रम्भकूटञ्च नाडी चैते गुणाधिकाः" मु॰चि॰।

"एते राशिकूटभेदवर्णादिमैत्राः सन्तो गुणाधिका एकादिगुणाधिकाः स्युः । वर्णमैत्र्यामेकगुणः, वश्ये द्वौ गुणौ, तारायां त्रयोगुणाः, योनिमैत्र्यां चत्वारः, ग्रहमैत्र्यां पञ्च, गणमैत्र्यां षट्, भकूटे सप्त, नाडीभेदेऽष्टौ इत्यर्थः । तदुक्तम् "वर्णोवश्यं तारा योनिग्रहभकूटनाडिकाश्चेति । ज्ञेया यथोत्तरं ते बलिनः स्त्रीपुंसयोर्घटने" इति । दैवज्ञमनोहरेऽपि । "नाडीभेदे गुणा अष्टौ सप्त सद्राशिकूटके । षट् गुणा गणमैत्र्यात्तु मैत्र्यां पञ्चकं तयोः । योनिमैत्र्यात्तु चत्वारस्त्रयस्ताराबले गुणाः । वश्यत्वे द्वौ गुणौ प्रोक्तौ वर्णएकः प्रकीर्त्तितः इति" पी॰धा॰। तत्रादौ वर्णकूटमाह

"द्विजा झषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः । वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः" मु॰चि॰।

"मीनवृश्चिककर्कराशयोद्विजाः ब्राह्मणाः। ततोऽनन्तरमन्ये मेषसिंहधनूराशयोन्नृपाः क्षत्रियाः । वृषकन्यामकराशियो वैश्याः । मिथुनतुलाकुम्भा अङ्घ्रिजाः शूद्राः । तत्र वधूवरराश्योर्वर्णौ ज्ञात्वा वरस्य वर्णतः ब्राह्मणादिकात् वधूरधिका श्रेष्ठवर्णा बुधैर्न शस्यते । किन्तु समा हीना वा शस्यत इत्यर्थः। यदाह नारदः । "झषालिकर्कटा विप्राः स्तद्बाह्याः क्षत्रियादयः । पुंवर्णराशेः स्त्रीराशौ समे हीने तथा शुभम् । वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान् । विवाहं यदि कुर्वीत तस्या भर्त्ता विनश्यति"। अत्र को गुणो वर्णाधिके वरे वर्णसमे वा वर्णहीने तु गुणाभावः तदुक्तं दैवज्ञमनोहरे । "एकोगुणः सद्गवर्णे तथा वर्णोत्तमे वरे । हीनवर्णे वरे शून्यं केऽप्याहुः सदृशे दलमिति । दलमर्द्धम् । पी॰ धा॰ । अथ वश्यकूटम् ।

"हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजाश्च भक्ष्याः । सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत्" मु॰ चि॰ । "नरराशयो मिथुनकन्यातुलाः एषां सर्वेऽपि मेषादयः सिंहं त्यक्त्वा वश्याः ननु मनुष्याणां जलचराः कथं वश्याः अत उभयोः सहावस्थानाभाव इत्यत आह तथेति । एषां नरराशीनां जलजाः कर्कमकरकुम्भमीनास्तु भक्ष्याः किं पुनर्वश्या इति सूचयितुं तुशब्दः । सिंहस्य वशे अलिं वृश्चिकं विना सर्वे राशयोवश्याः अन्यदुक्तं चतुष्पदानां स्थलचराणां चतुःपदजलचराणां वा परस्परं वश्यावश्यं, नराणां मनुष्याणां व्यवहारतो ज्ञेयं यदाह वसिष्ठः "वश्याख्यका राशयोऽन्ये नृभाना सिंहत्यक्त्याऽन्येन्यस्य(?) विधेयाः । कोटन्यकला(?) लोकतोऽन्यप्रसिद्धम् वश्यावश्यं नैव तोयाश्रयाणाम्" तोयाश्रया जलचराः अन्निव(?) ते परस्परं वश्या नैव स्युरित्यर्थः । अत्र गुणविभागो दैवज्ञम॰ "सख्यं वैरं च भक्ष्यं च वश्यमाहुस्त्रिधा बुधाः । वैरे भक्ष्ये गुणाभावो द्वयोः सख्ये गुणद्वयम् । वश्यवैरे गुणस्त्वेको वश्यभक्ष्ये गुणोऽर्द्धक इति" यद्यपीदं वधूवरयोः परस्परं तुल्यमेवोक्तं तथापि सख्यवश्यकत्वं वरं प्रति भक्ष्यत्वं वश्यत्वं वा स्त्रियोऽपेक्ष्यं न तु विपरीतं "वर्णज्येष्ठा तु या नारीत्यनेन" समानन्यायत्वात् "अन्योन्यवश्यत्वे तूत्तममेव" पी॰धा॰। अथ ताराकूटम् ।

"कन्यर्क्षाद्वरभं यावत् कन्याभं वरभादपि । गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत् स्मृतम्" मु॰चि॰ "कन्याजन्मनक्षत्रात् वरनक्षत्रं यावद्गणयेत्तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत्ततोऽप्यगतेऽङ्के नवभिर्भक्ते यदवशिष्टं तच्चेत् त्रिपञ्चसप्तमितम्भवेत्तदाऽसत् अशुभदं स्मृतमन्यथा द्विचतुःषडष्टनवमितञ्चेत्स्यात्तदा शुभमित्यर्थादुक्तम्भवति यदाह नारदः "स्त्रीभमारभ्य गणने नवपर्य्यायतः क्रमात् । जन्मत्रिपञ्चसप्तम्यमशुभं स्यादरनाशनम् । पुम्भमारभ्य गणने स्त्रीभञ्चन्मादिके त्यजेत् । स्त्रीविनाशो भवेत्तस्मात्त्रिनकूटं(?) विवर्जयेत्" दिनकूटं ताराकूटम् । शार्ङ्गीयेऽपि "वरर्क्षाद्गणयेद्यावत्कन्यर्क्षं त्वाश्यभादपि । वरभं न प्रदृश्यते(?) ताराः सन्ति परस्परम्। त्यक्त्वा त्रिपञ्चसप्ताख्याः शेषोद्वाहे मिथः शुभाः" इति यत्तु कश्यपेन "गणयेत्कन्यकाधिष्ण्याद्यावत्वा वरजन्मभम् । जन्मत्रिपञ्चसप्ताख्यं हित्वाऽन्यच्च शुभमदमिति" । कन्यानक्षत्रादेव गणनोक्ता । अत एव "भीरूभाद्वलपञ्चकतीयाः भौकवैरविपदेव च तारा" इति केशवार्केणाप्युक्ता सा त्वावश्यकद्योतनार्था । तथाहि । द्वयोरपि परस्परनक्षत्रगणने शुभत्वे उत्तममेवाशुभत्वे दशुभमेव तत्कथमाद्न्यतरनक्षत्रगणनयाऽशुभत्वेऽपि स्त्रीनक्षत्रादुरनक्षत्रं त्वशुभं नापेक्षितव्यमेवेति भावः । अत्र गुणविभागो दैवज्ञम॰ । "एकतोऽभ्युते तारा शुभाऽन्यत्राशुभाऽन्यतः । तदा सार्द्धौ गुणश्चैव तारायुक्त्या मिथःस्मृतः । उभयोर्न शुभा तारा तदा शून्यं समादिशेदिति" अत्र यद्यपि नारदादिभिर्जन्मतारा निषिद्धेत्युक्तम् । तदुपन्यस्तता एकनक्षत्रे तावत् "राश्यैक्ये चेद्भिन्नमृक्षन्दयोः

स्यान्नवात्मकौ राशिकुम्भलग्नैवेति" वचनमाश्रित्योक्तम्। इयमेकोनविंशतितारयोस्तु निषेधो दुष्टभकूटे ज्ञेयः। सद्भकूटे तु दोषाभावएव"। पी॰धा॰ योनिकूटमाह "अश्विन्यम्बुपयोर्हयोनिगदितः स्वात्यर्कयोः कासरः, सिंहोवस्वजपाद्भयोः समुदितोयाम्यान्त्ययोः कुञ्जरः। मेषोदेवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः, स्याद्वैश्वाभिजितोस्तथै नकुलश्चान्द्राब्जयोन्योरहिः। ज्येष्ठामैत्रभयोः कुरङ्ग उदितो मूलार्द्रयोःश्वा तथा, मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथैवोन्दुरुः। व्याघ्रोद्वीशभचित्रयोरपि च गौरार्य्यमणबुध्न्यर्क्षयोर्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत्" मु॰चि॰ "अश्विनीशततारयोर्हयः अन्त्ययोनिरक्तः१ स्वातीहस्तयोः कासारोमहिषः२। वस्वजपाद्भयोर्धनिष्ठापूर्व्वभाद्रपदयोः सिंहः३। याम्यान्त्ययोर्भरणीरेवत्योः कुञ्जरोहस्ती४। पुष्यकृत्तिकयोः मेषः५ कर्णाम्बुनोः श्रवणपूर्व्वाषाढयोर्वानरःस्यात्६। उत्तराषाढाभिजितोर्नकुलः७। चान्द्रं मृगः अब्जयोनिर्ब्रह्मा तद्भं रोहिणी तयोरहिः सर्पः८। ज्येष्ठानुराधयोः कुरङ्गो हरिणउदितः९। मूलार्द्रयोःश्वा कुक्कुरः१०। तथा पुनर्वस्वश्लेषयोर्मार्जारः ११। मघापूर्व्वफल्गुन्योरुन्दुरुः मूषिकः१२। द्वीशं विशाखा चित्रा तयोर्व्याघ्रः१३। आर्य्यमणम् उत्तरफल्गुनी बुध्न्यर्क्षमुत्तरभाद्रपदा तयोर्गौः१४। तत्फलमाह पादगयोरिति। एकस्मिन् पादे श्लोकचरणे उक्तनक्षत्रयोन्योः परस्परं महावैरं भवेदन्यथा नेत्यर्थः। यथा। "अश्विन्यम्बुपयोर्हयोनिगदितः स्वात्यर्कयोः कासरः" इतिपादस्थयोरश्वमहिषयोर्महावैरं भवेत्। एवं सिंहहस्तिनोरित्यादिष्वपि द्रष्टव्यम्। यदाह वशिष्ठः। "अश्वेभमेषभुजगश्वकुरौतुमेषौतुमूषकमयोन्दुरुगोलुलायाः। शार्दूलमाहिषगणारिमृगद्वयं च कीशोऽथ बभ्रुयुगकीशगवाश्वसिंहाः। गौःकुञ्जराविति यथाक्रममाश्विनादिभानामभवन्ति खलु कल्पितयोनिरूपाः"। लुलायो महिषः, गजारिःसिंहः कीशोवानरः बभ्रुर्नकुलः। "बभ्रुरगं श्वेभमिन्द्रसिंहमोतुश्चसंशत्यजवानरौ च। गोव्याघ्रमश्वोत्तरमाहिषञ्च वैरं जनायोर्नृपभृत्ययोश्चेति" एतत्फलं शाबदादमाहाश्विनः। "एकयोनिषु सम्पत्तिर्दम्पत्योः सङ्गमः सदा। भिन्नयोनिषु मध्यःस्यादरिभावो न चेत्तयोः। योनेरभावे योदूवाहः स तु कार्य्यो वियोगदः। राशिवश्यञ्च यद्यस्ति कारयेन्न तु दोषभाक्"। अथ गुणविभागोदैवज्ञम॰ "अष्टाविंशतितारायां योनयस्तु चतुर्दश। मैत्रं वैरातिमैत्रञ्च विवाहे नरयोषितोः। महावैरे च वैरे च सभावे च यथाक्रमम्। मैत्रे वैरातिमैत्रे च खेन्दुद्विचतुर्गुणाः" पी॰धा॰। अथ ग्रहमैत्री "मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ, सौम्यश्चास्य समो, विधोर्बुधरवी मित्रे, न चास्य द्विषत्। शेषाश्चास्य समाः, कुजस्य सुहृदश्चन्द्रेज्यसूर्य्या, बुधः शत्रुः, शुक्रशनी समौ च, शशभृत्सूनोः सिताहस्करौ। मित्रे, चास्य रिपुः शशी, गुरुशनिक्ष्माजाः समा, गीष्पतेर्मित्राण्यर्ककुजेन्दवोबुधसितौ शत्रू, समः सूर्य्यजः। मित्रे सौम्यशनी, कवेः शशिरवी शत्रू, कुजेज्यौ समौ। मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः" मु॰चि॰

एतत्फलं शाबदादमाह जगन्मोहने वशिष्ठः "अन्योन्यमित्रं शुभं स्यात् समभित्रं तु मध्यमम्। उदासीनं कनिष्ठं स्याच्छिदं शात्रवं स्मृतम्। शत्रुमित्रञ्च विज्ञेयं दम्पत्योः कलहप्रदम् अन्योन्यसमशत्रुत्वं दम्पत्योर्विरहप्रदम्" अस्यापवादस्तत्रैव "राशिनाथे विरुद्धेऽपि सबलांशकाधिपौ, तन्मैत्रेऽपि च कर्त्तव्यं दम्पत्योः शुभमिच्छता। अत्र गुणभेदो दैवज्ञम॰। "ग्रहमैत्रं सप्तविधं गुणाः पञ्च प्रकीर्त्तिताः। तत्रैकाधिपतित्वे च मित्रत्वे गुणपञ्चकम्। चत्वारः सममित्रत्वे द्वयोः साम्ये त्रयो गुणाः। मित्रवैरे गुणश्चैकः समवैरे गुणार्द्धकम्। परस्परखेटवैरे गुणशून्यं विनिर्द्दिशेत्। अस्मिन् समभित्रादौ ज्ञेया ग्राह्या यथोदिताः" पी॰धा॰। अथ गणकूटम्। "रक्षोनरामरगणाः क्रमतोमघाहिवस्विन्द्रमूलवरुणानलतक्षराधाः। पूर्वोत्तरात्रयविधात्रयमेशभानि मैत्रादितीन्दुहरिपौष्णमरुल्लघूनि" मु॰ चि॰।

"क्रमतः रक्षोनरामरगणाः वाच्यत्वेनोच्यन्ते। मघा प्रसिद्धा अहिरश्लेषा वसुर्धनिष्ठा इन्द्रोज्येष्ठा मूलं प्रसिद्धं वरुणः शततारका अनलः कृत्तिका तक्षा चित्रा राधा विशाखा एतानि भानि रक्षोगणः। पूर्वात्रयम् उत्तरात्रयं चेत्येवं षड्भानि विधाता रोहिणी यमोभरणी ईशः आर्द्रा एतानि भानि नरगणोमनुष्यगणः। मैत्रमनुराधा अदितिः पुनर्वसुः इन्दुर्मृगः हरिः श्रवणः पौष्णं रेवती मरुत् स्वातिः लघूनि अश्विनीहस्तपुष्याभि एतानि भान्यमरगणो देवगण इति। यदाह नारदः। "रक्षोगणः पितृस्वाष्ट्रद्वीशवह्नीन्द्रतारकाः। वसुवारीशमूलाहिकृत्तिकाभिर्युतास्ततः। तिस्रः पूर्वोत्तराधात्रयममाहेशतारकाः। इति मर्त्त्यगणोज्ञेयः स्याद्-

मर्त्यगणः परे। इत्यादित्याकंशायन्त्यमित्याश्चिन्त्येन्दुतारकाः" पी०धा०। फलमाह। "निजनिजगणमध्ये प्रीतिरुत्तमा स्यादमरमनुजयोः सा मध्यमा संप्रदिष्टा। असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुजविबुधयोः स्याद्वैरमेकान्ततोऽत्र" मु०चि०। "असुरमनुजयोः राक्षसमनुष्यगणयोः स्त्रीपुंसयोः मृत्युरेव प्रदिष्ट उक्तः इयोर्वान्यतरस्य वेत्याकाङ्क्षायां प्रबलेन दुर्बलं बाध्यते इति न्यायेन मनुष्यगणस्यैव नाशः, यदाह नारदः। "दम्पत्योर्जन्मभे चैकगणे प्रीतिरनेकधा। मध्यमा देवमर्त्यानां रक्षोनृणां तयोर्मृतिः" कश्यपः "स्वगणे चोत्तमा प्रीतिर्मध्यमाऽमरमर्त्ययोः। मर्त्यराक्षसयोर्वैरमसुरासुरयोरपीति" अयमर्थः पुरुषोरक्षोगणः स्त्री मनुष्यगणा तदा वैरं, यदि वैपरीत्यन्तदा मृत्युः। तथा पुरुषोरक्षोगणः स्त्री देवगणा तदा वैरं वैपरीत्ये क्षतिः। उक्तं च। "राक्षसी यदि वा नारी नरो भवति मानुषः। मृत्युस्तत्र न सन्देहो विपरीतः शुभावहः"। शार्ङ्गीये। "रक्षोगणः पुमान् स्याच्चेत्कन्या भवति मानवी। केऽपीच्छन्ति तदोद्वाहं व्यस्तश्चोऽपीह नेच्छतीति"। एतत्तुल्यन्यायत्वाद्देवराक्षसयोरपि द्रष्टव्यम्। अत्र गुणविभागो दैवज्ञम०। "षड्गुणा गणसाम्ये स्युः सुरमानुषे। नार्या देवो नरः पुंसश्चत्वारो वा गुणाः स्मृताः। देवराक्षसयोः शून्यं तथैव नररक्षसोः। पुंसी रक्षोगणो यत्र नार्या देवोऽथ वा नरः। गुणौ द्वौ क्रमतश्चैको गुणोग्राह्योऽन्यथा न हीति"। अस्यापवादमाह गर्गः। "ग्रहमैत्री च राश्योर्वे विद्यते नियतं यदि। न गणाभावजनितं दूषणं स्याद्विरोधनम्"। अत्रिरपि। "राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः। गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्द्धनः"। अमुं परिहारं गणवर्जमन्ये वदन्ति। मनुरपि। "ग्रहमैत्री च रज्जुश्च यदि नाडी पृथक् तयोः। विवाहः शुभदः कन्या राक्षसी वा नरो नरः" इति पी०धा०। रज्जुकूटमन्यत्र द्रष्टव्यम्। अथ भकूटम् "मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे। द्विद्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत्" मु०चि०। "स्त्रीपुंसराश्योः परस्परं षडष्टमराशित्वे सति मृत्युर्ज्ञेयः। यथा मेषकन्ययोः वृषधनुषोः। एवं नवात्मजे नवपञ्चमेऽपत्यानां बालानां हानिर्नाशः स्यात्। यथा सिंहधनुषोः एवं द्विद्वादशे सति निर्धनत्वं दारिद्र्यं स्यात्। यथा मेषवृषयोः। अन्यत्र तृतीयैकादशे चतुर्थदशमे समसप्तमे वा सति सौख्यकलत्राणिपीडनं स्यात्। यदाह नारदः "षट्काष्टके

मृतिर्नन्दनवमे त्वनपत्यता। नैस्वं द्विद्वादशेऽन्येषु दम्पत्योः प्रीतिरुत्तमेति"। अत्र विशेषोज्योतिःप्रकाशे। "पुंसो रन्ध्रात् सुतगृहे सुतदा च कन्या धर्मे स्थिता धनवती पतिवल्लभा च। द्विद्वादशे धनगृहे धनदा च कन्या रिपुके स्थिता धनवती पतिवल्लभा चेति"। अन्यच्च। "मृगः कुलीरेण घटेन सिंहो वैरप्रदः स्यात् समसप्तकोऽयम्। तुला मृगेणाथ वृषेण सिंहो मेषेण कर्कोमिथुनेन मीनः। चापेन कन्या घटभेन चालिर्दौर्भाग्यदैन्ये दशहृयकेऽस्मिन्निति" पी०धा० अत्रापवादः "प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभोऽथो राशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि। अन्यर्क्षेऽंशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः" मु०चि०। "प्रोक्ते दुष्टराशिकूटे यद्यपि द्वयोःस्त्रीपुरुषराश्योरेकाधिपत्ये एकस्वामित्वे परिणयो विवाहः शुभोगदितः। यथा षट्काष्टके मेषवृश्चिकयोस्तुलावृषयोर्वा। नवमपञ्चमे त्वेकाधिपत्याभावः। द्विद्वादशे मकरकुम्भयोः। अथ वा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रे परिणयः शुभोगदितः। यथा षट्काष्टके मीनसिंहयोरित्यादौ, नवपञ्चमे मेषधनुषोरित्यादौ। द्विद्वादशे मीनमेषयोरित्यादौ। यदाह वसिष्ठः "द्विद्वादशे वा नवपञ्चमे वा षट्काष्टके राशिपयोर्मिथोर्वा। एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयमिति" राजमा० "मैत्रे त्रिकोणे बहुपुत्रवित्तं द्विद्वादशे चार्थमुपैति कन्या। षट्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहे ग्रहमैत्रभावे" इति एकाधिपत्येऽपीति शेषः। अतएव ग्रहमैत्र्यैकाधिपत्याभावे वैरषट्काष्टकमित्यादि वदन्ति। यदाह नारदः "वैरषट्काष्टकं मेषकन्ययोर्घटमीनयोः। चापोक्षयोर्नृयुक्कीटभयोः कुम्भकुलीरयोः। पञ्चास्यमृगयोर्जन्मराशेः प्रोक्तोऽशुभप्रदः" इति। उक्ता द्वयः चापोक्षयोरित्यत्र कारान्तनिर्देशश्छान्दसः। एतद्भिन्नं मित्रषट्काष्टकमित्याहुः। तदुक्तं जगन्मोहने "मित्रषट्काष्टकं कीटमेषयोर्वृषजूकयोः। कर्किचापयोर्मीनसिंहयोर्मृगकुम्भयोः। कन्यकाकुम्भयोरन्यत् प्रयत्नादेव वर्जयेदिति"। एवञ्च ग्रहमैत्र्याभावे वैरनवपञ्चममित्याहुः। तथा च शार्ङ्गधरीयेऽप्युक्तः। "मीनालिभ्यां युते कीटे कुम्भे मिथुनसंयुते। मकरे कन्यकायुक्ते न कुर्यान्नवपञ्चमे" इति। एतावद्वस्तु नवपञ्चमस्य फलान्तरमुक्तं कैश्चित् यथा ज्योतिर्निबन्धे शार्ङ्गधरः। "वरकन्ये मीनयुते मिथुनो-

सुहृदिनाथतत् । त्रिकोणमीनकीटाद्यं न स्यादन्यत्र दोष-
दमिति" । एतत्फलमनार्षत्वादुपेक्ष्यम् । इतोन्यच्च मेष-
सिंहादिकं नवपञ्चमं ग्रहमैत्रीसत्त्वाच्छुभं नवपञ्चममिति
ननु मीनकर्कादिकमपि त्रिकोणं ग्रहमैत्रीसत्त्वाच्छुभनवप-
ञ्चममिव, कथं ? गुरोश्चन्द्रोमित्रमेव चन्द्रस्य तु गुरुः
समोऽपि मित्रमिव "अपदोषतैव विगुणस्य गुणः" इति
न्यायात्तथा सति त्रिकोणदोषोच्छेदापत्तिः स्यादिति
चेत् उच्यते यत् द्वयोरेकस्य मित्रत्वमपरस्य समत्वन्तत्
दुष्टनवपञ्चममिति व्यवहारः । तादृशं मीनकर्कादिकं
त्रिकोणचतुष्टयमेव सम्भवति । यत्र तूभयोरपि ग्रहमै-
त्री तत्रैव मेषसिंहादिके मित्रनवपञ्चममिति व्यवहृतः ।
अयञ्च परिहारो वरवध्वोर्मातापित्रोरित्थमपि दोषा-
न्तरस्य सत्त्वसति वा अनुकूलत्वे नायको भवति तत्सन्या-
यत्वात् । स्वमातापितृकयोस्तु वरवध्वोर्नायं दोषो-
न्वेषः एवं द्विद्वादशेऽपि । तथा जगन्मोहने वशिष्ठ
कश्यपौ । "द्विद्वादशं शुभं प्रोक्तं मीनादौ युग्मराशिषु ।
मेषाद्ययुग्मराशौ तु निन्दितं न संशयः । "आयुष्य
सन्ततिमभोगसम्पत्पुत्रार्थसम्पत्पतिसौख्यसम्पत् । सौभाग्य
सम्पद्धनधान्यसम्पत् अजादियुग्मे क्रमतः फलानि ।
अजादियुग्मे क्रमतः फलानि वै वैधव्यमृत्युर्धनधान्यनाशं ।
वियोगसन्तापमतीव दुःखं वशिष्ठगर्गप्रमुखैः स्मृतानि"
इति । अथैवंविधेऽपि प्रीतिषट्काष्टकादिविषये नाडीदोषः
सर्वथा त्याज्य एवेत्याह नाड्यादिशुद्धिरिति । वक्ष्यमाणानां
त्रिविधनाडीनक्षत्राणां शुद्धिः स्त्रीपुरुषनक्षत्रस्थितिरे-
कस्यां कस्यामपि नाड्यां यदि न भवति तदा प्रीतिषट्काष्ट-
कादि भवति तदा विवाहः कार्यः। यद्येकस्यां नाड्यां स्त्रीपु-
रुषनक्षत्रस्थितिस्तदा तु नैव विवाहः। उक्तञ्च रत्नमालायाम्
"भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं यदि भवनवियत्त्वेऽथ
षट्काष्टकेऽपि । शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ
यदि खलु फणिचक्रे स्यान्न नाडीसमाज" इति । अपिश-
ब्दात्तथा नवपञ्चमद्विद्वादशयोरपि । अत्र केचित् षडष्टक-
स्यैव मरणरूपानिष्टफलश्रवणाच्च तस्यापवादकः षट्काष्टके-
ऽपीति परिहारः, किन्तु निन्दां प्रतिपादयतोऽपिशब्दान्त
स्य वाक्यस्याधिपतिमैत्र्यादिगुणप्रशंसाद्वारा नवपञ्चम-
द्विद्वादशयोरेव दुष्टभकूटयोर्विधानपर्यवसानात्तयोरेवाप-
वादक इति यथा "नष्टकापि नरः पूज्यो यदि स्याद्धि
पुत्रं धनमिति" अत्र वाक्ये धनस्तुतिर्धनवन्नरपूजापरा न
तु धनरहितमन्नरपूजापरापीति मैवं बोध्यः 'द्विर्द्वादशे वा
नवपञ्चमे वा षट्काष्टके" इत्यादि वशिष्ठादिवाक्यानि दुष्टभ-
कूटापवादभूतान्यधिपतिमैत्र्यादिविशिष्टं षडष्टकादि विद-
धते । षट्काष्टके मृत्युरित्यादीनि निन्दार्थवादवाक्यानि-
षड्टोऽप्रषड्टकादिविषयाणि अन्यथा दुष्टफलषड-
ष्टकनिराकरणस्य नवपञ्चमस्य द्विद्वादशयोरपि तत्स्तव-
मापवादकवाक्यानां विषयालाभात् । इष्टान्ते तु मन्त्र-
प्रायश्चित्तविधानस्य वैयर्थ्यापातात् धनस्तुतिर्धनवत्
प्रशंसापरैवेति युक्तमुत्पश्यामः । अथ नाडीसमाजप-
दस्यार्थः । अश्विन्यादित्रिकगणनया त्रिविधानां नाडी
नक्षत्राणां वेधो नाडीसमाजः । यदाह श्रीपतिः "ना-
ड्यस्तिस्रोऽश्विनीतः प्रथमधिष्ण्यात्रिग्र्यश्वाभ्यादिभ्य एव प्र-
सूताः । सर्पाकारास्तत्र नाडीसमाजो नक्षत्राणामेकना-
डीस्थितां स्यादिति"। एवञ्च यत्र भकूटादयः सप्रभेदाः शुभा
भवन्ति । तत्र नाडीदोषश्चेत्तदा विवाहो न विधेयः ।
उक्तञ्च सप्तर्षिमते विवाहपटले । "यदा नाड्येकना-
डीसमाजो भकूटादिकान् सप्रभेदान् प्रशस्तानिति"। अत्र
केचित् । नाडीसमाजशब्दोपादानात् समाजशब्दस्य
समुदायवाचित्वात् यदा त्रिचतुःपञ्चपर्वनाडीसमुदा-
याये स्त्रीपुरुषनक्षत्रयोरेकनाड्यां पातस्तदा समस्तभकूटादि
गुणसत्त्वे विवाहो नैव भवेत् । यदा त्रिचतुःपञ्चपर्व-
नाडीष्वेकैव नाडी स्त्रीपुरुषयोः स्यात्तदा भवत्येव विवाहः ।
अतएव "भकूटादिकान् सप्रभेदांश्च ते तानिति" श्रीपतेर्व-
चनमनुकूलम् । अस्यायमाशयः" ते इति बहुत्वात् सप्र
भकूटादयः शुभास्ताभिस्तत्र वचनात्दोषादेकामेव ना-
डीं परिहरेयुः न तु नाडीसमाजमित्याहुः । तच्चि-
न्त्यम् । यतश्चतुर्भिस्त्र्यङ्घ्रिभोग्यायाः" इति वाक्यादुक्त-
स्वरूपनक्षत्रोत्पन्नायाः कन्याया त्रिपर्वैव, त्रिचरणन-
क्षत्रोत्पन्नायाः कन्यायाः द्विपर्वैव द्विचरणनक्षत्रोत्पन्नायाः
कन्यायाः पञ्चपर्वैव नाडी गणनीयेति नियमाच्च गणनाडी-
त्रयविचारासम्भव एव । किञ्च रत्नमालादिवाक्येषु
पार्थक्येन नाडीत्रयाभिधानात्तत्र समाजपदं नाडी-
संस्थनक्षत्रसमुदायपरं तथाहि "अश्वादिभ्यस्तिस्र
एव नक्षत्रेभ्यः प्रसूता व्यस्तनिःशेषधिष्ण्याः सर्पाकारा-
स्तिस्रो नाड्यः स्युः तत्रैकनाडीस्थितानां नक्षत्राणां समाजो
नाडी स्यात् इति । यत् "यस्माद्नर्थकलहागमसम्भवः
स्यात् पाणिग्रहाद्धि तयोः खलु नाडीयोगे । तस्मादुत-
स्त्रियमनागपि मैव नूनं नाडीसमाजइति चिन्त्यमनु-
क्रमेणेति" इत्यादिवचनान्नाडीसमाजपद स्थिते दोषः नै-

मित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी। षष्ठाष्टे नव पञ्चमे व्ययधने द्वौ नेषु पुंयोषितोः प्रीत्यायुःसुतवृद्धिवित्तजनकः कार्यो विवाहस्तदेति"। चकारात् षष्ठी च। जन्मतारा यद्युत्पत्तितारा तदा राशिभेदे चरणभेदे वा शुभा ध्येया। दशमैकोनविंशतितारे शुभे एव। अत्रापि पक्षे नाडीशुद्धिरपेक्षितैव। नाडीशुद्ध्यभावे विवाहोनैव भवेत्। उक्तं वात्र संमतिः"। अथ तस्यापि परिहारस्याभावे परिहारान्तरमाह। अथ राशिवश्यताभाव इति। अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षट्काष्टकादौ सति "हित्वा मृगेन्द्रं नरराशिवश्या" इत्यादिना पुरुषराशेः स्त्रीराशिवश्यताभावे सति विवाहः शुभोनिगदितः। "यदि भवनवशित्वमिति" श्रीपत्युक्तेश्च अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवोक्तादेव हेतोः। तदयमत्र निष्कृष्टोऽर्थः। षट्काष्टकनवमपञ्चमद्विद्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्री एकः परिहारः। एकाधिपत्वे द्वितीयः। पत्योरप्यंशपयोः सबलत्वे मैत्रे च तृतीयः। तारासुद्धौ चतुर्थः। राशिवश्यत्वे पञ्चमः। सर्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव। नाडीविरोधसत्त्वे तु विवाहोनैव स्यादिति। एवञ्च ग्रन्थकर्त्ता "भवनपतिसुहृत्त्वमित्यस्य" श्रीपतिश्लोकस्य वाक्यचतुष्टयमङ्गीकृत्य तत्परिहाराभिधानकृतम्। तट्टीकाकृन्महादेवोऽप्येवमेव व्याख्यत्। यत्तु हि प्रत्येकं परिहारकम् तत्र गुणसमुदायः परिहारकः स्यादिति किं वाच्यम्। वस्तुतस्तु। "मैत्री चेत्पयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्ताराभित्सुमित्रजन्मशुभदा क्षेमा च सम्पत्करीत्यादि प्राग्लिखितेन राजमार्त्तण्डवाक्येन दुष्टभकूटे ग्रहमैत्र्या सह तयैकाधिपत्येन सह तारासुद्धिरेव परिहारिका समुचिता। अर्थादेकस्य मित्रत्वेऽपरस्य समत्वे बलत्वापेक्षा अतएतद्वाक्यं ज्योतिःसारसागरे विवृतम् "तत्रान्योन्यमित्रत्वे तुल्याधिपतित्वे वा तारासुद्धिरेव चिन्त्या। एकमित्रतायान्तु वशित्वादि गुणान्तरापेक्षा। शत्रुत्वे तु सर्वथा त्याग इति"। अत एतस्मिन् पक्षे चेत्पदाभिधानादेकवाक्यताध्यवसायः। एवं श्रीपतिवाक्यमपि व्याकर्त्तव्यमेकवाक्यताबलात्। तत्र षट्काष्टके पुनर्भवनपतिसुहृत्त्वमिति सकलगुणसत्त्वमेव परिहारकम्। अनयोर्दुष्टभकूटयोर्द्वयमेव। यदाह ज्योतिर्निबन्धे गर्गः "ग्रहमैत्र्या शुभा तारा राशिवश्यं त्रिभिः शुभम्। षडष्टकम्बुधाः प्राहुर्द्वाभ्यां द्व्यर्कन्त्रिकोणकमिति"। "द्विर्द्वादशम्। "द्विद्वादशे वा नवपञ्चमे चेत्यादीनि" वशित्वादीनि तूपलक्षणपरतया व्याख्येयानि। अत्र यथासम्प्रदायं व्यवस्था ध्येयेत्यलमियता" पी० धा०

अत्रापवादः। "मैत्र्यां राशिस्वामिनोरंशनाथद्वन्द्वस्यापि स्याद्गणानां न दोषः। खेटारित्वं नाशयेत् सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम्"। मु० चि० "स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वन्द्वं द्वयम् तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात्, स्त्री रक्षोगणा पुमान् मनुष्यगणो देवगणो वा तदा गणदोषो न स्यादित्यर्थः"। यदाहालिः "राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः। गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्द्धनः"। अथ सद्भकूटं शुभफलदभकूटं राशिकूटं तृतीयैकादशादिकं खेटारित्वं पत्योः शत्रुतासम्बन्धिनं दोषं नाशयेत्। एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूटं षडष्टकादिसम्बन्धिनं दोषं नाशयेदित्यर्थः" तदुक्तं सप्तर्षिमते विवाहपटले। "नभोगारिभावं हरेत् सद्भकूटं विरुद्धं भकूटं हरेत् खेटमैत्री। सदा नाशयत्येकनाडीसमाजोभकूटादिकान् सप्तभेदांश्च ते ताम्"। (मु० चि०) चतुर्थचरणः "प्रोक्ते दुष्टभकूटके इत्यादिना पुनरुक्तोऽपि स्मरणाविच्छेदार्थं पठितः"। यत्तूक्तं नारदेन "एकाधीशे मित्रभावे शुभदं पाणिपीडनम्। द्विद्वादशे त्रिकोणे च न कदाचित् षडष्टके" इति। एतन्नाडीदोषसत्त्वे द्रष्टव्यम्। अधुनोदितवाक्यस्वरसात्। "भवनपतिसुहृत्त्वं स्यात् तदैकाधिपत्यं यदि भवनवशित्वं चैव षष्ठाष्टकेऽपि। शुभकृदिह विवाहोऽन्योऽन्यताराविशुद्धौ यदि खलु फणिचक्रे स्याद् नाडीसमाज" इति श्रीपत्युक्तेश्च "अन्यथा प्रागभिहितवशित्वादिवाक्यान्यनर्थकान्यापद्येरन्निति"। पी० धा०। अथ नाडीकूटमाह। "ज्येष्ठार्यम्णेशनीराधिपभयुगयुगं दास्रभं चैकनाडी पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनिबुध्ने च मध्या। वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्याद्दम्पत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः" मु० चि० ज्येष्ठा प्रसिद्धा। अर्यम्णमुत्तराफल्गुनी। ईश आर्द्रा। नीराधीपो वरुणस्तद्भं शततारका एभ्यो नक्षत्रेभ्यो युगयुगं द्वयं द्वयम्। ज्येष्ठामूलं उत्तराफल्गुनीहस्तश्च। आर्द्रा पुनर्वसुश्च। शततारकापूर्वभाद्रा चेत्यर्थः। दास्रभमश्विनी च एतन्नक्षत्रनवकं परस्परमेकनाडीत्युच्यते। अथ पुष्यः प्रसिद्धः इन्दुर्मृगः त्वाष्ट्रं चित्रा मित्रोऽनुराधा अन्तकं भरणी व-

मूर्भनिशा, जलभं पूर्वाषाढ़ा, योनिः पूर्वफाल्गुनी, बुध्नोऽ-हिर्बुध्न्य उत्तरभाद्रपदा, एतन्नक्षत्रनवकं परस्परं मध्य-नाडीत्युच्यते । अथ वायुः स्वाती, अग्निः कृत्तिका, आ-श्लेषा, विश्वोत्तराषाढ़ा, एभ्यो युगयुगं स्वाती विशाखा च, कृत्तिका रोहिणी च अश्लेषा मघा च उत्तराषाढ़ा-श्रवणश्चेत्यर्थः । अथ पौष्णभं रेवती च, एतन्नक्षत्र-नवकमपरा तृतीयनाडीत्युच्यते । एतत्फलमाह । दम्पत्योः स्त्रीपुंसयोरेकनाड्यां परिणयनमसद्दुष्टफलं स्यात् । मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात् । "मूले-न्द्राग्निभपाश्यजैकचरणादिस्वार्यमेशाग्निमैत्रांम्बुमीज्यमभिज-भाग्यशुभभाद्राम्बुहिर्बुध्नभैः । अन्यैर्नाडिरिहैकना-डिजयोः स्यातां द्विभे चेत्कृतिर्गोदादक्षिणतः क्वचिन्नृपकुले पार्श्वैकनाडी स्थिता" । गोदादक्षिणतः सर्ववर्णेषु पार्श्वैक-नाडी स्थिता, क्षत्रियादौ क्वचित्, अन्यकन्याया अलाभे पार्श्वैकनाडी स्थितेत्यर्थः" । यदाह गर्गः । 'नाड़ीकूटं तु संग्राह्यं कूटानां तु शिरोमणिः । ब्रह्मणा कन्यका-कण्ठसूत्रत्वेन विनिर्मितमिति" । वराहः'आद्यैकनाडी-कुरुते वियोगं मध्याख्यनाड्यामुभयोर्विनाशम् । अन्त्या च वैधव्यमतीव दुःखं तस्माच्च तिस्रः परिवर्जनीयाः"इति । अत्र चक्रन्यासोऽवसिष्ठेनोक्तः । "आवृत्तिभिर्मैत्रिभिरश्वि-भाद्यं क्रमोत्क्रमात् संगणयेदुडूनि । यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा ज्ञमादौ मृगमेकनाडी"। फलेऽपि विशेषमाह वसिष्ठः "सा मध्यनाड़ी पुरुषं निहन्ति तत्पार्श्वनाडी खलु कन्यकां तु । आमयपर्य्यायसमागताश्चेद्दूर्वेव साध्वन-रिता त्रिवर्षैः"। उत्तरार्द्धस्यायमर्थः । आद्यचे समीप-स्थिते पर्य्याये आवृत्तौ चेदेकनाड़ी समागता । यथा-ऽश्विन्यार्द्राद्योर्भरणीमृगशीर्षरोहिण्याश्लेषयोर्वा सा नाड़ी व-र्षैकेन स्त्रीपुंसयोरल्पाऽशुभफलदात्री स्यात् । यदा त्वश्वि-न्युत्तरफाल्गुन्योरितरक्षत्रव्यवधाना सा नाड़ी त्रिभिर्वर्षै-रल्पाऽशुभफलदात्री स्यात् । इयञ्चाश्विन्यादित्रिकगणना कन्यायाश्चतुश्चरणे जन्मनक्षत्रे सति यदा तु त्रिचरणं नक्षत्रं तदा कृत्तिकामारभ्य साभिजिच्चतुःपर्वगणना द्विचरणे कन्यानक्षत्रे मृगशीर्षतः पञ्चपर्वगणना । यदाह नारदः । चतुस्त्रिद्व्यङ्घ्रिभोत्पायाः कन्यायाः क्रमशोऽश्विभात् । वह्निभादिन्दुभाच्चाड़ी त्रिचतुःपञ्चप-र्वसु । गणयेत् संख्यया चैकनाड्यां मृत्युर्न संशयः"। अय-मर्थः स्फुटमाह गर्गः । "चतुःपात् कन्यकाऋक्षं गण-येदश्विभादिकम् । त्रिभं मध्यावधेयेन भिन्नं पर्व सुखा-वहम् । कन्यकर्क्षं त्रिपाच्चेत् स्याद्गणयेत् कृत्तिकादिकम् । चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम् । कन्यकर्क्षं द्विपाच्चेत् स्याद्गणयेत् सौम्यभादिकम् । पञ्चभिस्त्वपरोक्ते तु पञ्चमात् त्रिकवर्जिते" एतत्फलमप्याह गर्गः । "संस्थि-ता मध्यनाड़ी तु पुरुषं हन्ति वेगतः । संस्थिता पार्श्व-नाड़ी तु कन्यकां हन्त्यसंशयम् । आसन्ना त्वेकनाड़ी स्यादासन्नमृतिदायिनी । दूरस्था चैकनाड़ी स्याद्दूरानि-ष्टस्य कारिणीति" । जगन्मोहने नारदः । "एकनाड़ी-विवाहश्च गुणैः सर्वैः समन्वितः । वर्ज्जनीयः प्रयत्नेन दम्पत्योर्निधनं यतः" । आसां नाड़ीनां देशभेदेन व्यवस्थामाह जगन्मोहने नारदः । 'चतुर्नाड़ी त्वहि-च्छत्रायां पाञ्चाले पञ्चनाड़िका । त्रिनाड़ी सर्वदेशेषु वर्ज्ज-नीया प्रयत्नतः" इति । अहिच्छत्रपाञ्चालौ देशविशेषौ । तस्माद्वसिष्ठादिभिर्द्दशभेदेन नक्षत्रभेदेन चानिलप्रदर्शितैः चतुःपञ्चनाड्यापुपेक्ष्य सकलदेशव्यापित्वात् सकलजनव्या-पित्वाच्च त्रिनाड्येवोक्ता । नचैतावता चतुःपञ्चनाड्या स्वस्वदे-शव्यतिरिक्तदेशेषु नैवावश्यक्ये किन्तु सर्वेष्वपि देशेषु विचार्यैव तत्र स्वदेशे दोषमहत्त्वमन्यदेशे दोषाल्पता त्रिनाड़ी तु सर्वत्रैव समानदोषा" यदाह मनुः । "अहिच्छत्रायां चतुर्नाड़ीसंयोगः कालमृत्युदः। एव योगोऽन्यदेशेषु स्वल्प-मृत्युफलप्रदः। पञ्चनाड़ीसमायोगः पाञ्चाले कालदण्डदः। इतरत्र समायोगो दुःखदारिद्र्यदोषकृत् । त्रिनाड्यां तु स-मायोगः सर्वत्रानिष्टकारकः"इति । यत्तु ज्योतिर्निबन्धे ज्योतिःप्रकाशे अश्विन्यादित्रिनाड़ीं प्रकृत्याभिहितम् "निधनं मध्यमनाड्यां दम्पत्योर्नैव पार्श्वयोर्नाड्योः"अत्र पार्श्वनाड्यां मृत्युरूपमहादोषाभावं मत्वा विवाहादिकरणं शुभमित्यर्थः। तत् क्षत्रियादिविषयं गोदावरीतोदक्षिणदेश-वासिविषयं वा । तदप्युक्तं तत्रैव । "करपक्षे पृथनाडी न निन्द्या इति यद्वचः । तत्क्षत्रियादिविषयं गौतम्याया-म्यतस्तथेति" । गौतमी गोदावरी । अतार्थे चार्षं मूलं मृ-ग्यम् ।"इयं चाश्विन्यादित्रिनाड़ी गुरुमन्त्रादिष्वनिष्टा प्रभु-पत्न्याद्यन्नादौ तु शुभैव" । उक्तञ्च स्वरोदये "एकनाड़ी स्थिता यत्र गुरुमन्त्राश्च देवता: । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुः पत्न्याङ्गना मित्रं देशो ग्रामः पुरं गृहम् । एकनाड़ीस्थितं भव्यं विरुद्धं वेधवर्जित-मिति"। अत्र नाड़ीवेधे चरणवेधेऽधिकदोषः, आवश्यके स एव त्याज्यः" एतदप्युक्तं तत्रैव ।"आद्यांशेन चतुर्थांशं चतु-र्थांशेन चादिमम्। द्वितीयेन तृतीयञ्च तृतीयेन द्वितीयकम्।

एवं भांशव्यधो येषां जायते वरकन्ययोः। तेषां मृत्युर्न सन्देहः शेषांशाः स्वल्पदोषदा इति" तत्प्रायश्चित्तकल्पे गुरुः "दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम्। विधाय ब्राह्मणांश्चैव तर्पयेत् काञ्चनादिना। हिरण्मयीं दक्षिणाञ्च दद्याद्वर्णादिकूटके। गामोऽन्नं वसनं देयं सर्वदोषापहारकमिति"। एवं सर्वसम्मतत्वादष्टौ कूटभेदा अभिहिता नान्ये। "माहेन्द्रं गौडदेशे च मालवे रज्जुसंज्ञकमित्यादिना बादरायणवाक्येनान्यकूटानां तत्तद्देशविषयतादर्शनात्। ते च कूटभेदा वसिष्ठसंहितायां तोडरानन्दे च सामान्यविशेषभावसहिता द्रष्टव्याः" पी० धा०। अथ नाडीदोषापवादः "राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव। नाड़ीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात्" मु० चि०। "द्वयोः स्त्रीपुंसयोरेकराशित्वे सति यदि भिन्नमृक्षं स्यात् तदा नाड़ीदोषो गणानाञ्च राक्षसमनुष्यगणानाञ्च दोषो नास्ति। यथा एकस्मिन्नपि कुम्भराशौ शततारकापूर्वभाद्रपदापादत्रयं च इत्येवं रूपो नक्षत्रभेदः। तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत् स्यात् तदापि प्रागुक्तो दोषो न स्यात्। उपलक्षणत्वात् तारादोषोऽपि न भवेत्। यथा। एकस्मिन्नेव नक्षत्रे पूर्वभाद्रपदाख्ये पूर्वभाद्रपदायाः प्रथमपादत्रयं कुम्भे चतुर्थचरणश्च मीने इत्येवंरूपो राशिभेदः"। यदाह नारदः। "एकराशौ पृथक् धिष्ण्ये दम्पत्योः पाणिपीड़नम्। उत्तमं मध्यमं भिन्नराशेरेकर्क्षगयोस्तयोः। एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः"। वशिष्ठः। "दम्पत्योर्जन्मभे चैके राशौ च निधनं तयोः। एकस्य च तयोरुद्वाहे किञ्चिद्भेदेऽपि वा तथा"। किञ्चिद्भेदे नक्षत्रभेदे राशिभेदे च। गर्गः "एकराशिं विना नाड़ीयोगमादौ विवर्जयेत्। न दोषस्त्वेकराशिस्थे भकूटेऽन्येषु मृत्युदेति"। भृगुरपि "दम्पत्योरेकराशिश्चेत् पृथगृक्षं यदा भवेत्"। वशिष्ठोक्तो विवाहः स्याद्ब्राह्मणादृते न योजयेदिति। "अतएवाह केशवार्कः "नक्षत्रमेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षम्। प्रीतिस्तदानीं निविड़ा नृनार्योश्चेत् कृत्तिकारोहिणिवन्न नाड़ीति"। चतुर्थचरणस्यायमर्थः चेद्यदि कृत्तिकारोहिणीवत् स्यात् तदापि नाड़ीदोषो न स्यात्। उपलक्षणत्वाद्गणदोषोऽपि। यथा कृत्तिकारोहिण्योरेकनाड़ीस्थत्वेऽपि गणदोषेऽपि तत्सम्बन्धिताऽशुभफलं नैव स्यात्। अत्रापि प्रथमतः पुंताराऽपेक्षिता द्वितीयतः स्त्रीतारेत्यपि विशेषोऽध्येयः।

यदाह गर्गः "एकराशौ पृथक् धिष्ण्ये पुंतारा प्रथमा भवेत्। अतीव शोभना प्रोक्ता स्त्रीतारा चेन्न शोभनेति"। तदेवं कौतुकिकल्पादेन यत्र नाड़ीगणदोषाद्यभावो यथा रोहिण्युत्तमयोर्हस्तचित्रयोर्वा तत्र पाणिपीड़नं शुभं स्यादिति किं वाच्यमित्यर्थः। अथैकराशिनक्षत्रत्वेऽपवादमाह। नक्षत्रैक्ये इति। स्त्रीपुंसयोः राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदो यथा भरण्याः प्रथमपादे पुंसोजन्म द्वितीयपादे स्त्रियास्तदापि शुभं कल्याणं स्यात्। तदुक्तं केशवार्केण। "परास्पदः प्राक्नवांशभेदादेकर्क्षराश्योरपि सौमनस्यमिति"। सौमनस्यं प्रीतिः। वशिष्ठेनापि "एकाङ्घ्रिसम्भवानां भवति विवाहः सुतार्थसम्पत्त्यै। यद्युभयोरैक्यं भवति यदा चांशको भिन्न" इति। एतच्च सङ्कोचविषयं वेदितव्यम्। तथा च जगन्मोहने। "एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः। सङ्कोचे तु तदा कार्यो भिन्नपादो यदा तयोरिति"। अत्रापि विशेषो ज्योतिर्निबन्धे विधिरत्ने। "रोहिण्यार्द्रा मघेन्द्राग्नी तिष्यश्रवणपौष्णभम्। उत्तराप्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभना" इति। इन्द्राग्नी विशाखा तद्देवत्वात्। स्वरूपं तत्रैव विधिरत्ने। "विशाखिकार्द्राश्रवणप्रजेशतिष्यान्त्यतत्पूर्वमघाः प्रशस्ताः। स्त्रीपुंसतारैक्यपरिग्रहे तु शेषा विवर्ज्या इति सद्भिरत्न" इति। शेषास्तारा इत्यर्थः। अत्र द्वयोरन्यतरस्य वा जन्मराशिनक्षत्राद्यज्ञाने उपायमाह। वशिष्ठः। "अज्ञातजन्मनां नृणां नामभे परिकल्पना। तेनैव चिन्तयेत् सर्वं राशिकूटादि जन्मवत्। जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम्। व्यत्ययेन यदा योज्यं दम्पत्योर्निधनप्रदम्। कुर्यात् षोड़श कर्माणि जन्मराशौ बलान्विते। सर्वाण्यन्यानि कर्माणि नामराशौ बलान्विते" इति। इदमन्यत्रापि। "व्यवहारराजसेवासंग्रामग्रामवर्त्तेषु। ज्ञातेऽपि जन्मराशौ फलमुक्तं नामराशिवशादिति"। नाम्नः सकाशाज्जन्मनक्षत्रज्ञानं स्वरोदयाभिहितशतपदचक्रान्तर्गतस्वीयनामादिवर्णवशात् ज्ञेयमिति। यत्तु अकारादिवर्णे वृषभादिनामसु दृश्यते तत् यवनमतादव्यवस्था" पी० धा०। नाड़ीभेदेऽष्टौ गुणाः प्रागुक्ताः।

ज्यो० त० नाड़ीचक्रेऽन्यतद्विशेषो दर्शितो यथा स्वरोदये। "अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाड़िकम्। तत्र वेधवशात् ज्ञेयं विवाहादौ शुभाशुभम्। त्रिनाड़ीवेधनक्षत्रमश्विन्यार्द्रायुगोत्तराः। हस्तेन्द्रमूलशत-

ऋणाः पूर्वभाद्रपदादिभा । याम्यः सौम्योगुरुर्योनिश्चितमित्रसमाकुलम् । धनिष्ठा चोत्तरा भद्रा मध्यनाडी व्यवस्थिता । कृत्तिका रोहिणी सर्पोमघा स्वातीविशाखके । उत्तराश्रवणापौष्णं पृष्ठनाडी व्यवस्थिता । अश्व्यादिनाडीविधर्वे वर्ज्यं द्वितीयकं क्रमात् । याम्यादित्रितयेषु कृत्तिकादिद्विषट्ककम् । एवं निरीक्षयेद्वेधं कन्याकन्ये वरे गुरौ । पत्तनस्योभ्यामिमित्रेषु देशे ग्रामे पुरे गृहे । एकनाडीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः । तदा वेधं विजानीयात् पुत्रादिषु तथैव च । प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतोव्यधः । नष्टं जन्मभं यस्य तस्य नामर्क्षतोवदेत् । द्वयोर्जन्मभयोर्वेधे द्वयोर्नामभयोस्तथा । नामजन्मर्क्षयोर्वेधे न कर्त्तव्यं कदाचन । एकनाडीस्थिता चेत् स्यात् भर्त्तुर्नाशाय चाङ्गना । तस्मान्नाडीव्यधोऽशोभनोविवाहे शुभमिच्छता । पार्श्वनाड्या वेधतोऽभवो मध्यनाड्योभयं तथा । पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः । एकनाडीस्थिता यत्र गुरुर्मन्त्रश्च देवता । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुः पत्तनकृन्मित्रं देशोग्रामः पुरं गृहम् । एकनाडीगता भव्या अभव्या वेधवर्जिताः" । अस्यापवादः ज्यो०त० । "एकराश्यादियोगे तु नाडीदोषो न विद्यते" एकराश्यादिच "एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके । चतुर्थे दशमे चैव तृतीयैकादशे तथा" इत्युक्तः । समसप्तमाद्विषमसप्तके दोषः । तथा च "योटके सप्तके मेषतुले कुम्भहयो तथा । सिंहघटौ सदा वर्ज्यौ भृतिं तत्रान्नवीक्षितः" । ज्योतिर्व्यवहारनिर्णये । "एकदेशाधिपयोगे ताराबले वश्यराशौ वा । अपि नाड्यादिवेधे भवति विवाहोहितार्थाय,राजमार्त्तण्डे च ।"न राशियोगे ग्रहवैरिता च न तारशुद्धिर्गणकूटकं स्यात् । न नाडीदोषो न च वर्णदुष्टिर्गोदयस्ते मुनयोवदन्ति" अत्र देशभेदात् व्यवस्था । अन्यत्रोक्तम् ।"लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे । भर्त्ता कन्याविनाशाय कन्याभर्त्तृविनाशकृत्" । अस्यापवादः । "अज वा गुरुवारस्थे कुजे वा तादृशे दृष्टे:" मातृकारोक्ता अष्टानां कूटानां गणाद्यानां सङ्कलने अष्टादशतोऽधिकत्वे उभयोर्वरकन्ययोः कुजलग्नादिस्थाने मङ्गलस्थितौ च न दोषः एवमन्योऽपि वैधव्ययोगोभिन्नेनीयः स च जातकशब्दे वक्ष्यते । एवं विवाहे वर्णादिशुद्धिं दम्पत्योरानुकूल्याख्यं चोक्त्वेदानीं निर्दोषदिनलग्नादि निरूप्यते । "तत्रैकविंशतिः सर्वकर्मता दोषा नारदेन परिगणिताः । "एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः । पञ्चाङ्गशुद्धिरहितोदोषस्त्वाद्यः प्रकीर्त्तितः । उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः । तृतीयः पापषड्वर्गो भृगुषष्ठः कुजाष्टमः । गण्डान्तं कर्त्तरी रिप्फषष्ठेन्दुश्च संग्रहः । दम्पत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्त्तो वारदोषः खार्जूरिकसमाङ्घ्रिभम् । ग्रहणोत्पातभं क्रूरविद्धं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिरिति" अन्यैस्तु दश दोषा उक्ताः "वेधश्च१लत्ता२च तथा च पातः३खार्जूरयोगो४दशयोगचक्रम्५। युतिश्च६जामित्र७मुपग्रहाश्च८बाणाख्यपञ्चौ९दश चैव दोषा इति व्यवहारोच्चयेऽभिधानात् । तत्र "दुर्मुहूर्तो रवावर्यमेत्यादिः । वारदोषः कुलिकादिः, क्रूरसंयुतमित्यस्योपलक्षणत्वात्कालदृष्टिनामकोऽपि दोषो ग्राह्यते । यदाह वशिष्ठः । "पञ्चाङ्गशुद्धिरहिताश्चोत्पाताःकालदृष्टिताः" इति । एषां दोषाणां कर्मविशेषे फलमाह वशिष्ठः "एकविंशन्महादोषास्त्वेते ब्रह्मणोदिताः । कदाचिन्नैव कोदन्ति गुणानां कोटिकोटिभिः । तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबन्धने । ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् । कर्त्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम् । चालायां कलत्रनाशः स्यात् स्थाने विशेषतः । लभ्यते शमकृत्पुण्यमेध्यादिकर्मभिरिति" पी०धा० ।

तत्र सर्वकर्मोपयोगिषड्वर्गे वक्तव्ये आदौ तेषामंशपानाह "कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः कविभौमजीवशनिसौरयोगुरुः । इह राशिपाः, क्रियमृगास्यतौलिकेन्दुभतो नवांशविधिरुच्यते बुधैः" मु०चि० ।

"अत्र लग्नादीनां लक्षणं नारदोक्तम् ।"त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते । लग्नत्रिभागो द्रेक्काणो नवमांशो नवांशकः । द्वादशांशोद्वादशांशस्त्रिंशांशस्त्रिंशदंशकः । षड्वर्गाः कथिताह्येते- तेषामीशा इमे स्मृताः" इति । तत्रैते भौमशुक्रबुधचन्द्रसूर्यबुधशुक्रभौमगुरुशनिगुरवः, क्रमेणेह चतुर्णां राशिपा मेषादिराशीनां स्वामिनः । क्रियेति । क्रियो मेषः मृगास्यो मकरः तौलिकं तुला द्वन्द्वं कर्कः एभ्यो राशिभ्यो द्वादशस्वपि राशिषु नवांशकं बध्यते इत्युच्यते । मेषे मेषादेव, वृषे मकरादेव मिथुने तुलातः कर्के कर्कादेव, एवं सिंहेऽपि मे-

भागेन एवं कन्यादिषु अपि राशिषु मकरादित एव । एवमेव धनुरादिष्वपि इत्यर्थः । यदाह नारदः । “सिंहस्याधिपतिर्भानुश्चन्द्रः कर्कटकेश्वरः । मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः । धनुर्मीनयोर्देवेज्यः शुक्रो वृषतुलेश्वरः । शनिर्मकरकुम्भेश इत्येते राशिनायकाः” । “नवमांशा मेषसिंहचापे, मेषादयः क्रमात् । क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः । तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः । अलिकर्कटमीनेषु क्रमात् स्युः कर्कटादयः” इति पी॰ धा॰ । अथ होरेशकथनम्

“समभहमध्ये शशिरविहोरा विषमभमध्ये रविशशिनोः भा” मु॰ चि॰ । “पञ्चदशभागात्मिका होरा समराशिमध्ये प्रथमा चन्द्रस्यापरा सूर्य्यस्य । विषमराशिमध्ये प्रथमा रवेः परा चन्द्रस्येत्यर्थः । “होरार्केन्द्वोरोजराशौ समभे चन्द्रसूर्य्ययोरिति नारदोक्तेः” पी॰ धा॰ । अथ त्रिंशांशद्रेक्काणेशाः । “शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपञ्चविशिखाः समराशिमध्ये । त्रिंशांशकोविषमभे विपरीतमस्माद्द्रेक्काणकाः प्रथमपञ्चनवाधिपानाम्” मु॰ चि॰ । समराशिमध्ये क्रमेण प्रथमतः पञ्चानामंशानां शुक्रः स्वामी ततः शैलानां सप्तानां सौम्यो बुधः । ततोऽष्टानां जीवो गुरुः । ततः पञ्चानां शनिः । ततो विशिखा बाणाः पञ्च तेषां भूतनयो भौमः । शुक्रस्येत्यादिसमाहारद्वन्द्वः । विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम् । यथा प्रथमतः पञ्चानां भौमः ततः पञ्चानां शनिः ततोऽष्टानां गुरुः । ततः सप्तानां बुधः ततः पञ्चानां शुक्रः इत्यर्थः । अयमेव त्रिंशांशकशब्दः इति । यथाह नारदः । “कुजार्किजीवज्ञशुक्राणां बाणेषुवस्वद्रिमार्गणाः भागाः स्युः विषमे ते तु समराशौ विपर्य्ययात्” इति । द्रेक्काणा राशित्र्यंशाः द्वादशसु राशिषु प्रथमो द्रेक्काणः प्रथमस्य स्वराशेरधीशस्य, द्वितीयो द्रेक्काणः पञ्चमराशीश्वरस्य, तृतीयः स्वराशितो नवमराशीश्वरस्य । यथा वृषे प्रथमो द्रेक्काणो वृषाधीशशुक्रस्य, स्वापेक्षपञ्चमकन्याधीशबुधस्य द्वितीयः, तृतीयः स्वापेक्षनवममकराधीशशनेरित्यर्थः । “स्युर्द्रेक्काणा लग्नपञ्चनवराशीश्वराः क्रमादिति” नारदोक्तेः पी॰ धा॰ । द्वादशांशेशानाह ।

“स्याद्द्वादशांश इह राशित एव गेहं होराश्च द्रेक्कनवमांशकत्र्यंशभागाः । त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः सौम्यैः शुभं भवति चाशुभमेव पापैः” मु॰ चि॰ । “इह षड्वर्गे द्वादशांशः सार्द्धभांशद्वयं तत् स्वराशित एवैकांशान्तं गणितं यद् यस्तद्राशिस्वामी स द्वादशांशेश्वरः “आरभ्य लग्नराशेस्तु द्वादशांशेश्वराः क्रमादिति” नारदोक्तेः । अन्यद्भरणतत्वं स्फुटतरम् । तदुक्तं वशिष्ठेन । “लग्नं तदर्द्धञ्च ततस्त्रिभागो नवांशकश्च द्विदशांशकश्च । त्रिंशांशकश्चेति हि वर्गषट्कं शुभं शुभस्वामिकराशिजत्वम् । यः पापषड्वर्गभवो हि दोषः पञ्चाङ्गसौम्यग्रहलग्नजातम् । गुणौघमस्याधिकमीक्षणाच्च शुभत्वमेवं खलु राघवस्येति” । तस्मात् सौम्यपापग्रहषड्वर्गसाम्ये सति सौम्यषड्वर्गस्त्रिभ्योऽधिकश्चेच्छुभः त्रिभ्यो हीनश्चेदशुभ इत्यर्थः” पी॰ धा॰ । अथ गण्डान्तदोषः । “ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम् । कर्काल्यण्डजभान्ततोऽर्धघटिका सिंहाश्वमेषादिगा पूर्णान्ते घटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम्” मु॰ चि॰ ।

“गण्डान्तं नाम सन्धिविशेषः स चानेकविधः नक्षत्रसन्धिस्तिथिसन्धिर्लग्नसन्धिश्च तथा योगसन्धिः करणसन्धिश्च सन्धिरयनसन्धिश्च ऋतुसन्धिर्माससन्धिः पक्षसन्धिर्दिनसन्धी रात्रिसन्धिमध्याह्नसन्धिः प्रातःसायंसन्धिर्निशीथसन्धिश्च । तत्र तिथिनक्षत्रलग्नविशेषाणां यः सन्धिर्नियतकालः स गण्डान्तसंज्ञः । अन्येषां तु सन्धिर्नियतकालः कश्चिद्गण्डाख्य एव । तत्रादौ नक्षत्रगण्डान्तमुच्यते । ज्येष्ठा प्रसिद्धा पौष्णभं रेवती सार्पभमश्लेषा एषामन्ते घटिकाद्वयम् (४दण्डाः) । तथा मूलाश्विन्यौ प्रसिद्धे पित्र्यं मघा । एषामादौ घटिकाद्वयं च गण्डान्तमाह । तथा च रेवत्यश्विन्योरश्लेषामघयोर्ज्येष्ठामूलयोरन्तरालवर्त्तिघटीचतुष्टयं नक्षत्रगण्डान्तमशुभदम् तदुक्तं रत्नमालायाम् । “पौष्णाश्विन्योः सार्पपित्र्याख्ययोश्च यच्च ज्येष्ठामूलयोरन्तरालम् । तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टमिति” । यत्तु वशिष्ठेनोक्तम् “यदन्तराले पितृसार्पयोश्च मूलेन्द्रयोराश्विनपौष्णयोश्च । ससन्धि गण्डान्तमिति त्रयं तद्यामप्रमाणं शुभकर्महन्तृ इति” । यामः प्रहरो नक्षत्रभोगस्येति शेषः । नारदोऽपि ‘सार्पेन्द्रपौष्णभिष्ण्यान्ते षोडशांशा भसन्धयः । तदग्रभेष्वाद्यजाताः पापागण्डान्तसंज्ञकाः । अयं सन्धित्रितयं गण्डान्तत्रितयं महत् । स्मृतं जन्मयानादिविवाहस्थापनादिषु” । षोडशांशो नक्षत्रभोगस्यार्द्धप्रहर इति यावत् । आद्यजाताः षोडशांशाः । तदेतद्दोषमहत्त्वात्स्वल्पच-

नार्थम् । तथा हि । चतुर्घटिके नक्षत्रगण्डान्ते महान् दोषः, तदधिके षट्घटिकात्मके मध्यमदोषः। ततोऽधिके चरणावधिके स्वल्पदोषः । अतएवोक्तं सूर्यसिद्धान्ते "सार्पेन्द्रपौष्णधिष्ण्यानामन्त्याः पादा भसन्धयः । तदग्रभेषु साद्धांशो गण्डान्तं नाम कीर्त्त्यते । व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा । एतद्भसन्धित्रितयं सर्वकर्मसु वर्जयेदिति" । सार्द्धांशचरणार्द्धं प्रहर इत्यर्थः । दीपिकायाञ्च । "आद्ये मघाचतुर्भागे मूलपादाद्य एव च । रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः" इति । अथ लग्नगण्डान्तमुच्यते । कर्कीति कर्कः प्रसिद्धः अलिर्वृश्चिकः झषश्च मीनः एषाम्भानां लग्नानामन्तेऽर्द्धघटिका, तथा सिंहमेषौ प्रसिद्धौ चापोधनुः एषां लग्नानामादिभूतार्द्धघटिका गण्डान्तं नाम । तथा च कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोश्च लग्नयोरन्तरालवर्त्तिन्येका घटिका लग्नगण्डान्तमशुभदमित्यर्थः । यदाह कश्यपः "सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः । गण्डान्तमन्तरालं तन्नाडिका निधनप्रदेति" । यत्तु नारदेनोक्तम् "कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्यात् घटिकार्द्धं मृतिप्रदमिति" । वसिष्ठेनापि । "लग्नान्तरालं घटिकार्द्धमेतत्कुलीरसिंहयोरलिचापगोश्च । मीनाजयोः सर्वगुणान्निहन्ति लोभो यथा सर्वगुणान्नरस्येति" । तद्दोषाधिक्यसूचनार्थम् । अथ तिथिगण्डान्तमुच्यते । पूर्णान्त इति । पूर्णाः पञ्चमीदशमीपञ्चदश्याख्यासामन्ते घटिकैका, तथा नन्दाः प्रतिपत्षष्ठ्येकादश्याख्यासामादिभूतैका घटिका तिथिगण्डान्तं नाम । तथा च पञ्चमीषष्ठ्योर्दशम्येकादश्योः, पञ्चदशीप्रतिपदोश्च तिथ्योरन्तरालवर्त्तिघटीद्वयं तिथिगण्डान्तमशुभमित्यर्थः । यदाह नारदः "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं सदा । गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु" इति । यत्तु कश्यपेनोक्तम् "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीचतुष्टयम् । उद्वाहजन्मयानेषु गण्डान्तं निधनप्रदमिति" । तद्दोषतारतम्यसूचनार्थम् । एवं गण्डान्तशब्दः सन्धिपरः । तत्र तिथिलग्नगण्डान्तपरिहारः शाकल्यसंहितायाम् । "तथैव तिथिगण्डान्तं नास्तीन्दौ बलशालिनि । तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते" इति । अथात्र प्रसङ्गादन्येषामपि सन्धिरुच्यतेऽस्माभिः । यदाह गुरुः "घटिकाद्वयमृत्वन्ते मासान्ते तु दिनत्रयम् । वर्षान्ते वर्जयेत्तत्र पक्षाहदिनसप्तकमिति" । तिथ्यादिसन्धिम-

प्याह वसिष्ठः "पक्षोऽब्दसन्धिस्त्रिदिनञ्च मासस्य सन्धिस्त्रिनाड्यः खलु सन्ध्ययोश्च । नाड्यश्चतस्रस्तिथिभक्षयोगसन्धिर्द्वयं कर्णस्य सन्धिः" । वर्षेषु विशेषमाह स एव "सौराब्दान्ते त्वशेषत्वं चान्द्रे तु नवमन्त्यजेत् । सावनान्तेऽष्टमन्त्यार्क्षं नाक्षत्रे पौष्णभात् त्र्यहमिति" । अत्रापि विशेषमाह स एव । "अब्दाः स्युस्त्रिविधा जीवसौरचान्द्राह्वयाः सदा । तेषामादौ तथा चान्ते त्रिदिनं वर्जयेच्छुभे" इति । अयञ्च सर्वकार्यसाधारणो निषेधः अन्यथा मीनादित्ये विवाहप्रसङ्गाभावादेव वर्षान्तनिषेधस्य वैयर्थ्यापातात् । गुरुः "ऋत्वन्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः । वर्षान्ते वंशनाशः स्यादग्रहपाच्च सर्वनाशनमिति" । ज्यावश्यकत्वे तु "नक्षत्रयोगतिथिसन्धिषु नाडिकैका तिस्रश्चतुर्दशपलैः सहितोभयत्र । कर्कालिमीनतनुसन्धिषु दिक्पलानि त्याज्यानि शेषविवरेषु च पञ्च पञ्चेति" वासनाभिज्ञकेशवार्कवाक्यमनुसर्त्तव्यम् । वासना च सिद्धान्तशिरोमणावभिहिता । "शशितनुविकलाभ्य चन्द्रभुक्तिर्न्द्भान्वोर्गतिविवरकलाभिर्भूय एवाभिरेव । पृथगथ गतियुक्ता नाडिकाः सन्धिराप्ता भतिथिकरणयोगानां फलं तत्र मिश्रमिति" । सन्धिफलमप्याह केशवार्कः । "सन्धौ पुरन्ध्री मृतमेति वन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः । वदन्ति वात्स्या ऋतुनाडिरूढां निशीथमध्यं दिनसन्धिपूर्वाम्" तत्राद्यं रात्रिमध्यन्दिनसन्धिः 'मध्ये निशाह्नोर्घटिकाद्वयं त्यजेत्' मु॰ चि॰ । इत्याद्यो प्रकरणेऽभिहितः । सन्धिसन्धिस्तु केशवार्केणोक्तः "रवेर्भवेदेकघटाधिकस्य यदंशषट्कं खलु सायनस्य । तदत्र राशिद्वयभागतष्टं स्फुटं वसन्तादृतवो भवन्ति । ऋतुमन्ययोगाङ्कघटीसमाः स्युर्दिवि कक्षपाते हिमवायनीयाः । स सन्धिसन्धिः खलु यत्र शेषं शून्यं भवेदेष विशेषयुग्मः" इति मीनसंक्रान्तिमारभ्य दशलग्नं तु गणयेति पञ्चमञ्चोक्तंरेकघटाधिकस्येत्युक्तम् । गण्डान्तदोषपरिहारमाह वसिष्ठः "गण्डान्तदोषमखिलं मुहूर्त्तोऽभिजिदाह्वयः । हन्ति वह्निमृगव्याधः पक्षिसङ्घमिवाखिलम्" । तदेतद्दोषापवादाख्यस्य प्रकारस्य नियामकत्वाद्विवाहविषयं न जातकादौ" पी॰धा॰। अथ कर्त्तरीदोषः। "लग्नात् पापावृजुवक्रौ व्ययार्थस्थौ यदा तदा। कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा"। मु॰ चि॰ "यदा पापग्रहौ लग्नाद्व्ययार्थस्थावृजुवक्रौ द्वादशस्थः पापग्रहो मार्गी, द्वितीयस्थः पापग्रहो वक्री स्यात्तदा कर्त्तरी नाम दोषः

कन्नति स्त्रीपुंसयोः प्राणांश्छेदयतीति कर्त्ती च्छेदन इति धात्वर्थानुसारादन्वर्था सम्मुखकर्त्तरीयं, मृत्युदारिद्र्यशोकदा भवेत् । यदाह नारदः "लग्नाभिमुखयोः पापग्रहयोर्ऋजुवक्रयोः । सा कर्त्तरीति विज्ञेया दम्पत्योर्गलकर्त्तरी । कर्त्तरीदोषसंयुक्तं यल्लग्नं तत् परित्यजेत् । अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितमिति"। गर्गोऽपि ।"व्यये मार्गगतिः क्रूरो वक्री क्रूरो धने यदि । तौ च लग्नांशतुल्यौ च तदा घोराख्यकर्त्तरी" । यदा तु द्वितीये मार्गी द्वादशे च वक्री अथ द्वावपि क्रूरौ व्ययार्थस्थौ सन्तौ शीघ्रिणौ वा स्यातां तदा कर्त्तरी नास्त्येव । यदाह वशिष्ठः "लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्त्तरी स्यादृजुवक्रगन्त्रोः । तावेव शीघ्रौ यदि व्यक्रचारौ न कर्त्तरी चेति पितामहोक्तिरिति" । इयं कर्त्तरी चन्द्रस्यापि द्रष्टव्या । यदाह कश्यपः "चन्द्रस्य कर्त्तरी तद्वच्च शुभदृष्टा न दोषकृदिति"। परन्तु लग्नस्य चन्द्रस्य वा क्रूरग्रहमध्यगतत्वदोषोऽप्यस्त्येव कर्त्तरीतोऽल्पफलः कन्यानाशकरत्वात् । यदाह वशिष्ठः ।"क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथ वा करग्रहणम् । ते यमसदनाभिमुखं गमनं कुर्वन्ति कन्यायाः" इति कर्त्तरीदोषेऽन्यदपवादान्तरं "पापौ कर्त्तरिकारकावित्यादिना स्वयं वक्ष्यति । अत्र लग्नादित्युपलक्षणात् सर्वेषामपि भावानां कर्त्तरीदोषोऽध्यवसेयः "यो यो भावः स्वामिदृष्टोयुतो वेत्यादिना" तुल्यन्यायत्वात् । तत्र लग्ने कर्त्तरी महादोषकरी लग्नभङ्गाधायकत्वात्तस्या अन्यत्र तादृग्दोषाभाव इति तु तत्त्वम्" पी॰धा॰। अतःपरं राहुकेत्वोः पापग्रहत्वं व्यवस्थापितं तच्च केतुशब्दे विस्तरेण वक्ष्यते । अथ युतयोगापरपर्य्यायसंग्रहदोषः।"चन्द्रे सूर्य्यादिसंयुक्ते दारिद्र्यं मरणं शुभम् । सौख्यमापत्यवैराग्यं पापद्वययुते मृतिः"मु॰चि॰ "सूर्य्ययुक्ते चन्द्रे दारिद्र्यं स्यात् । भौमादियोगे मरणादि फलं क्रमेण स्यादित्यर्थः । पापग्रहद्वयस्थितेऽप्यशुभफलं राहुकेत्वोरपि द्रष्टव्यम् । यथाह नारदः "शशाङ्के ग्रहसंयुक्ते दोषः संग्रहसंज्ञकः । सूर्य्येण संयुते चन्द्रे दारिद्र्यमावति ध्रुवम् । कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता । दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु । प्रव्रज्या सूर्य्यपुत्रेण राहुणा कलहः सदा । केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता । तस्मिन् संग्रहदोषे तु विवाहं नैव कारयेत्" । सापत्न्यं भर्त्तुरन्या भार्य्या स्यात् । अत्र गुरुबुधसाहित्यफलमशुभतमम् अन्यकर्त्ता तु वशिष्ठवाक्ये कस्यचिन्मताभिप्रायेण शुभफलत्वकम् । यथोक्तं वशिष्ठेन "दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रे सपत्नीकम् । प्रव्रज्याऽर्कसुतेन सेन्दुजगुरौ शास्त्युन्ति केचिच्छुभं द्वाद्यैर्ग्रहैरशुभैः शशियुतैर्दोषः प्रवासः शुभैरिति" । अत एव श्रीपतिनोक्तम् । "शुभद्व- दम्भोलिभद्रोक्तविद्वद्भिरिति" दम्भोलिभद्रोक्त्यौ वीरः । पापेति । पापद्वयेन युते उपलक्षणत्वात्पापत्रयादियुते मृतिरेव स्यात् । "पापद्वययुते चन्द्रे दम्पत्योर्मरणं ध्रुवमिति" नारदोक्तेः । बहुसौम्यग्रहयोगे तु बहुकालं पश्चाद्देशान्तरेऽवस्थानं स्यात् तद्वाक्यमधुनैवाभिहितम् । अथास्य परिहारो नारदोक्तः । "स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः । युतिदोषाय न भवेद्दम्पत्योः श्रेयसे तदेति" । कश्चिद्वर्गोत्तम इति पठते । कश्यपेनापि । "तुङ्गमित्रस्वराशिस्थः शुभयुक्तः शुभप्रदः । एवंविधः क्रूरयुतः सम्पूर्णफलदः शशीति" पी॰ धा॰ ।

अथ जन्मराशिलग्नयोरष्टमलग्नदोषं सापवादमाह ।

"जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः । एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत्" मु॰चि॰ ।

"जन्मलग्नजन्मराश्योः सम्बन्धिनि मृत्युराशावष्टमलग्ने करग्रहो नेष्टः । यदाह नारदः "दम्पत्योरष्टमं लग्नं त्वष्टमो राशिरेव च । यदि लग्नगतः सोऽपि दम्पत्योर्निधनप्रदः । स राशिः शुभयुक्तोऽपि लग्नं वा शुभसंयुतम् । लग्नं विवर्जयेत् यत्नात् तदंशांश्च तदीश्वरान्" इति । अत्र लग्नलग्ने जन्मराशौ च विशेषमाह कश्यपः । "दृष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः । लग्नगस्तु तयोः स्यामाच्चेद्भान्युपचयानि वै" इति। नारदोऽपि "जन्मराश्युदयोनैव जन्मलग्नोदयः शुभः । तयोरुपचयस्थानं यदि लग्नगतं शुभमिति" । अथाष्टमलग्नदोषपरिहारमाह । एकेति जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः, तथा तयोराशीश्वरयोः मैत्रे यथा सिंहमीनयोः । अत्र हि सूर्य्यगुर्वोरन्योन्यप्रीतिरस्ति । एतादृशविषये विवाहो लग्नाष्टमदोषकृत् न स्यात् । यदाह कश्यपः "जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ । जन्मराश्यष्टमोत्थदोषो नश्यति भावतः" इति पी॰धा॰। परिहारान्तरमाह "मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत् । अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्द्धसौख्यभागिनी" । "उद्वाहतः स्त्री कन्या कन्ये प्रसि-

ष्टाः एते राशयो यद्यष्टमलग्नं स्युः यथा सिंहान्मीनः तुलातोवृषः धनुषः कर्कः मेषात् वृश्चिकः मिथुनान्मकरः कुम्भात्कन्याऽष्टमलग्नम्। तदाष्टमगेहदोषजन्य भवेत्। कुत इत्यत आह। अन्योन्येति। प्रागुक्तपरस्परप्रीति वशे। इदञ्चोपलक्षणम्। मेषवृश्चिकयोस्तुलावृषयोरेकाधिपत्यात्। एवं सति सा वधूः परिणीता कन्या सुता पुत्रहर्षसौख्यभागिनी स्यात्। उक्तञ्च "झषकुलीरवृषालिमृगाङ्गना जननराशिविलग्नगृहाष्टमाः। शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परमिति"। परिहारान्तरमप्याह गुरुः।"लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः। यद्यष्टमगतस्तोक्त दोषमाशु व्यपोहति। रन्ध्रेशः स्वशुभांशस्थस्तुङ्गः स्वक्षेत्रमित्रगः। अष्टमस्थानदोषोऽपि विनश्यति न संशय" इति।

अथ लग्नेऽष्टमेशादियोगफलम्।"मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्। व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात्" मु०चि०। "अष्टमभवनस्यांशो यदि विलग्ने स्यादथ वाष्टमभवनस्वामी विलग्ने स्यात्तदा शुभकरो न स्यात्। यदाह कश्यपः।"दम्पत्योरष्टमे लग्ने राशौ वापि तदंशके। तदीशे वा लग्नगते तयोर्मृत्युर्न संशय" इति। अथ व्ययभवनञ्चन्द्रलग्नजन्मराशिभ्यां द्वादशस्थानम् अथवा व्ययांशो व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत् स्यात्। उक्तञ्च कश्यपेन "तयोर्द्वादशे लग्ने तदंशे वा तदीश्वरे। विवाहे लग्नगे नैस्वं नित्यं स्यात् कलहो द्वयोरिति"। नारदेनापि "दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः। अर्थहानिस्तयोस्तस्मात्तदंशस्वामिनं त्यजेदिति"।

अथ विषघटीदोषः।"स्वरामतो३०ऽन्त्यादितिवह्निपित्र्यभे श्रुवेदतः४०के, रदत३२स्त्वार्यमे। खशराष्टतो५०ऽम्बे, धृतितो१८ऽर्यमाम्बुपे, कृते२०र्भगत्वाष्ट्र भविष्णुजीवभे। मनो१४र्हिदैवानिलसौम्यशाक्रभे कुपक्षतः२१ शैवकरेऽष्टि। ६ तोऽजभे। युगाश्विनो२४बुध्न्यभतोयदास्थभे, खचन्द्रतो१० मित्रभवासवस्तुतो। मूलेऽङ्गशराद्व५६ विषनाडिकाः कृता४ वर्ज्याः शुभेष्वोविषनाडिकाध्रुवाः। भिन्ना भभोगेन खतर्क६०भाजिताः स्फुटा भवेयुर्विषनाडिकास्तथा" मु०चि०। "रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु स्वरामतः त्रिंशत्घटिकोत्तरं कृताश्चतस्रो घटिकाविषनाडिकाः शुभकार्ये वर्ज्याः स्युरिति"तृतीयश्लोकेनान्वयः। एवं सर्वत्र व्याख्येयं के रोहिण्यां कृतैर्विंशतेः। अजभे पूर्वभाद्रपदायाम् अन्यानि पदानि स्पष्टानि। तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकायतश्चो विषनाडिकाः प्रोक्ताः न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते। भिन्ना इति। विषनाडीनां ध्रुवाः स्वरामतः इत्येवमाद्यायो नक्षत्रभोगेनेष्टेन भिन्नाः खतर्कैः षष्ट्या भाजितास्ततोविषनाडिका ध्रुवाः स्फुटा भवेयुरित्यर्थः। अत्रोपपत्तिस्त्रैराशिकेन। यदि षष्टीषष्ट्यात्मकभभोगेनेमे ध्रुवका इमायतश्चो विषनाडिकाश्च लभ्यन्ते। तदेष्टभभोगेन किमपि, ध्रुवाविषनाडिकाश्चेष्टभभोगेन गुणिताः षष्ट्या भाज्या फलितम्। यदाह कश्यपः "वियद्बाणा५० वेददस्राः२४ खरामा३० व्योमसागराः४०। वेदचन्द्रा१४ चन्द्रदस्राः१२ खरामा३० व्योमबाहवः२०। नेत्राग्नयो३२ व्योमगुणाः३० शून्यदस्रा२० गजेन्दवः१८। व्याबाहवो२१ वियद्दस्राः२० शक्रा१४ खेन्द्राः१४ खभूमयः१०। वेदचन्द्रा १४ शर्कशाखा५६ वेददस्राः२४ खबाहवः२०। व्योमेन्दवो१० व्योमचन्द्रा१० धृतयः१८ शर्कभूमयः१६ वेदाश्विनः२४ खरामाः ३० स्युर्दर्शर्क्षात् घटिकाः क्रमात्। आभ्यः परस्तात्क्रमशस्तत्श्चो विषनाडिकाः। अजाद्यन्तघटीभिन्नाः षष्टिभक्ताः स्फुटाः स्मृताः। विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम्। शुभैः सर्वैश्च संयुक्तमपि यत्नेष्टकं त्यजेदिति"। वशिष्ठः "कुर्य्यान्न्युद्वाहितां कन्यां विधवां वत्सरत्रयात्। अन्येषाम् मङ्गले ताश्च निधनं याश्च निर्द्धनमिति"। ताः विषनाडिकाः।

अथ प्रसङ्गात् मन्वान्तरोक्तास्तिथिवारविषनाडिकाः प्रोच्यन्तेऽस्माभिः दैवज्ञम०। "तिथौ१५पु५नागाऽष्टद्रि७-गिरी७षु५ वारिधि४र्गजाऽष्टऽद्रि७दिक्१०पावक३ विश्वा१३ वासवाः१४। मुनीभ७,८दशं स्यात्प्रथमा तिथेः क्रमात्परं विषं स्यात् घटिकाचतुष्टयम्।नखा२०द्वयं२द्वादश१२दिक्१० च शैला७श्चाष्टाच५तत्त्वानि २५यथाक्रमेण। सूर्य्यादिवारेषु परं चतस्रो नाड्यो विषं स्यात् खलु वर्जनीयम्"। ज्योतिः सागरे।"विवाहव्रतचूडासु गृहारम्भप्रवेशयोः। यात्रादिशुभकार्येषु निन्द्या विषनाडिकेति"। अस्य परिहारमाह दैवज्ञः गुरुः"चन्द्रो विषघटीदोषं हन्ति केन्द्रत्रिकोणगः। लग्नं विना शुभैर्दृष्टः केन्द्रे वा लग्नपस्तथेति" फलप्रदीपे "विषनाड्युत्थितं दोषं हन्ति सौम्यखगः शशी। मित्रदृष्टोऽथ वा स्वीयवर्गस्थो लग्नपो भवेत्"पी०धा०। अथ मुहूर्तेशाः।

"गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वेऽभिजिदथ च विधाताऽप्यपीन्द्र इन्द्रानलौ च। निर्ऋतिरुदकनाथोऽप्यर्यमाऽथो भगः स्युः क्रमश इह मुहूर्त्ता वासरे वाणचन्द्राः" मु०चि०।

"अत्र शाकचन्द्रा इत्युक्तेः मुहूर्त्तस्य पार्थक्येनात्र लक्षणं नोक्तम् । गिरिशो महादेवः भुजगः सर्पः मित्रः सूर्य्यविशेषः पित्र्यं वसवः अम्बु विश्वे प्रसिद्धाः अष्टमोऽभिजित् ततो विधाता ब्रह्मा, इन्द्रः इन्द्राग्नी अत्र समुदितयो-र्व्यासज्यवृत्तिदेवतात्वम् अत्र तत्तन्मुहूर्त्तस्वामिनः पितर इत्यपेक्षितम् पित्र्यमिति नक्षत्रतद्दैवतयोरभेदोपचारात् तस्य स्वामिनि वृत्तिः । निर्ऋती राक्षसः उदकनाथो वरुणः अर्य्यमा भगश्चेमौ सूर्य्यविशेषौ । इत्येतद्दैवता वाक्यचन्द्राः पञ्चदश वासरे मुहूर्त्ताः स्युः यदाह नारदः "दिवामुहूर्त्ता रुद्राहिमित्राः पितृवसूदकम् । विश्वे विधातृब्रह्मेन्द्रा इन्द्राग्न्यसुरतोयपाः । अर्य्यमा-भगसंज्ञश्च विज्ञेयाः दश पञ्च चेति" पी० धा० ।

"शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ । विष्णु-र्कत्वष्टृमरुतो मुहूर्त्ता निशि कीर्त्तिताः" मु० चि० ।

"प्रथममुहूर्त्तस्वामी शिवः ततोऽजपादात् पूर्वाभाद्रपदा-दष्टौ भेशा नक्षत्रस्वामिनो मुहूर्त्तेशाः स्युः । यथा 'अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निर्ब्रह्मा सोम इत्यष्टौ भेशाः। ततो दशमेशोऽदितिः जीवको गुरुः। विष्णुर्कत्वष्टृम-रुतः प्रसिद्धाः एतद्दैवता निशि मुहूर्त्ताः सङ्कीर्त्तिताः यदाह नारदः "ईशाजपादहिर्बुध्न्यपूषाश्वियमवह्नयः। धातृचन्द्रा-दितीज्याख्यविष्णुर्कत्वष्टृवायवः" इति। मुहूर्त्तलक्षणं कश्य-पेनोक्तम् । "अह्नः पञ्चदशो भागो मुहूर्त्तोऽथ तथा निशः" इति । प्रयोजनमाह नारदः । "यद्यद्भे हि यत्कर्म कथितं निखिलञ्च यत् । तद्दैवत्ये तन्मुहूर्त्ते कार्य्यं यात्रा-दिकं सदेति" यात्रेत्युपलक्षणं देवस्थापनाद्यपि कार्य्यम् । पी० धा० । एवं मुहूर्त्तेशे निरूपिते तद्दोषमाह ।

"रवावर्य्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चा-भिजित् स्यात् । गुरौ तोयरक्षो भृगौ ब्रह्मपित्र्ये शना-वीशसार्पौ मुहूर्त्ता निषिद्धाः" मु० चि० ।

"रवेर्वारेऽर्य्यमा [illegible] अर्य्यमस्वामिकश्चतुर्दशसं-ख्याको मुहूर्त्तो निषिद्धः । एवं सोमवारे ब्रह्मरक्षः इत्यै-तद्भावः । ब्रह्मरक्षःस्वामिकौ मुहूर्त्तौ निषिद्धौ एवं सर्वत्र व्याख्येयम् । ईशो महादेवः । यदाह नारदः । "अर्य्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथा-भिजित् । रक्षःसार्पौ ब्राह्मपित्र्यौ भौजङ्गेशाविनादिषु । वारेषु वर्जनीयास्ते मुहूर्त्ताः शुभकर्म्मसु" पी० धा० ।

"अथ वेधदोषं विवक्षुर्विहितनक्षत्रादिकमभिजिन्मानञ्चाह

"निर्व्वेधैः शशिकरमूलमैत्रपित्र्यब्राह्मान्त्योत्तरप-वनैः शुभो विवाहः । रिक्तामारहिततिथौ शुभेऽह्नि वैश्वदे-व्याङ्घ्रिश्रुतितिथिभागतोऽभिजित् स्यात्" मु० चि० ।

"मृगशिरोहस्तमूलानुराधा मघारोहिण्युत्तराफाल्-गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्वेधैः वेधा-ख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः यदाह वशिष्ठः । "स्वातीमघायां निर्ऋतौ ध्रुवान्त्यमित्रेन्दुकरेषु च कन्यकानाम् । पाणिग्रहस्त्विष्टफलप्रदः स्याद्विद्धभेषु च गुणान्वितानामिति" । नारदोऽपि "पौष्णधातृत्तरामैत्रम-रुच्चन्द्रार्कपित्र्यभैः । समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते" अर्कोहस्तः पी० धा० । वशिष्ठवाक्ये इष्टफलदइत्युक्तेरन्ये-षामपि ग्रहणमापद्विषये सूचितम् तेन "कुमार्य्याः पाणि-ग्रहणोदीचिमूत्तरादिषु" पारस्करसूत्रे चित्राश्रवणाधनिष्ठा-श्विनीनां ग्रहणं तच्च तस्य यजुर्वेदीयगृह्यसूत्रकारत्वेन तद्वेदिविषयमापद्विषयं चेति ज्यो० रघु० अतएव भीमपरा-क्रमे अन्यान्यनक्षत्रेऽनिष्टमुक्तं यथा

"पूर्वात्रये विशाखायां शिवाद्ये भचतुष्टये । जटा चापु भ-वेत् कन्या विधवाऽतो विवर्जयेत् । विष्णुभात्तु त्रिके चित्रे ज्येष्ठायां श्रवणे यमे । एभिर्विवाहिता कन्या भवत्येव सु-दुःखिता" ।अत्र चित्रादिवर्जनात् यजुर्वेदिनामप्यत्वनापद्येव ग्राह्यता । तिथिनिर्णयमाह रिक्तेति । रिक्तामाः प्रसिद्धाः ताभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः। यदाह वशिष्ठः। "शुक्लद्वितीयादित एव कृष्णे पक्षे दशम्यन्तगताः प्रशस्ताः । तास्वष्टमीकन्दशवेशदुर्गाचतुर्दशी चापि तिथिर्विवर्ज्या । वाराः प्रशस्ताः शुभखेचराणां सूर्य्यार्किवारौ खलु मध्यमौ तु । त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषाविति" तौ सूर्य्यार्कि-वारौ तयोर्दशीद्वादश्योः प्रदोषौ प्रकृष्टदोषाविलर्थः। गणेशच-तुर्थी दुर्गा नवमी । अत्र यदि विवाहितविवाहदिनमारभ्य चतुर्थीकर्मपर्य्यन्तं पित्राद्याद्यावत्सरकश्राद्धदिनममावास्या वा भवति तदा विवाहो न कार्य्यः । उक्तञ्च "विवाहमा-रभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति तदाशु कन्या जीवेत् पतिश्चेदनप-त्यता स्यादिति । अन्यच्च ।"विवाहमध्ये यदि तत्क्षयाह-कालाश्रमुख्याः पितरो न यान्ति । हते विवाहे परतस्तु कुर्यात् श्राद्धं स्वधाभिर्न तु दूषयेत् तमिति । पी० धा०। तेन कृष्णपक्षे द्वादश्यादिदिनचतुष्टये आपद्यपि विवाहो न कार्यः। रिक्ताया वर्ज्यत्वेऽपि शनिवारयुक्ताया-स्तस्याः ग्राह्यता इति गौड़ा अनार्षमूलत्वात्तच्चिन्त्यम्"न

पादेदोषाः प्रभवन्ति रात्रौ सूर्यान्वितास्तु शुभचरणमिति"। गौड़ावदन्ति तन्न ज्ञमपि रम्यम्"। अथाभिजित्प्रमाणम्। वेधेति पी०धा० 'अभिजित्शब्दे २२७पृ० तद्दर्शितः।

अथ पञ्चशलाकचक्रे विद्धनक्षत्राणि। "वेधोऽन्योन्यमसौ विरिञ्च्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतोर्हस्तोत्तराभाद्रयोः। स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोफान्त्ययोः खेटे तत्र गते तुरीयचरणाद्यौ वा तृतीयद्वयोः" मु०चि०।

"त्रिरेखः रोहिणी रोहिण्यभिजितोर्मध्ये क्रूराक्रूरैः कृतो वेधोऽन्योन्यं परस्परं भवेत्। रोहिणीस्थे ग्रहे अभिजिद्विद्धः अभिजित्स्थे रोहिणी विद्धेत्यर्थः। एवं सर्वत्र ऊह्या उत्तरफल्गुनी। तच्चक्रप्रकारमाह नारदः। "तिर्यक् पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणयोः। शम्भुकोणे द्वितीयेऽग्निधिष्ण्यं चक्रे च विन्यसेत्। भान्यतः साभिजिन्त्येकरेखाकोणे च विद्धमिति"। चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धं खेचरेण प्रदिष्टम्। क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पाद एवेति"। नन्वष्टाविंशतिर्नक्षत्राणि चक्रे तत्र द्वयोर्द्वयोः परस्परवेधे चतुर्दश युग्मानि वक्तव्यानि स्युः कथमष्टावेवाभिहितानि उच्यते विवाहे ह्येकादशनक्षत्राणामेव प्रायश्चाभिधानात् तद्वेधोपयोगीन्येतावन्त्येव युग्मानि सम्भवन्तीति तावतामेवाभिधानम्। अतएव दैवज्ञम० "रोहिण्यभिजितोर्मूलादित्योर्मृगर्क्षयोः। रेवत्युत्तरफाल्गुन्योर्मघाश्रवणयोर्भवेत्। हस्तोत्तराभाद्रपदोः स्वातीवारुणयोर्मिथः। अनुराधाभरण्योश्च वेधोऽयं पञ्चरेखजः" इति तत्रैवोक्तम्। वाराहविवाहपटले ग्रहैकवेधफलानि "रविवेधे वैधव्यं कुलनाशं करोति कुजवेधे। वन्ध्या पवित्रवेधे दौर्भाग्यं करोति गुरुवेधः। अपुत्रवेधेऽपुत्रा दासी रविजातराहुकेतुकृते" इति। पण्डितो बुधः दौर्भाग्यं प्रव्रज्याम् चरणवेधमाह खेट इति। तत्र तस्मिन् नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा विद्धनक्षत्रस्य प्रथमपादे वेधः। यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः एवं यदि द्वितीयपादस्थः तदा तृतीयपादे वेधः यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः। यदाह वसिष्ठः 'अन्तोऽन्त्यपादमादिगो द्वितीयगस्तृतीयकम्। तृतीयगो द्वितीयकञ्चतुर्थगस्तु चादिमम्। भिनत्ति वेधकृद्ग्रहोऽनथान्यपादमादिशेत्"। एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते तथापि सौम्यग्रहपरम् द्रष्टव्यम्। यतो वसिष्ठेनैव खार्जूरदोषाभिधानावसरे "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं यथाहृते। तथैव पादो न शुभोऽवशिष्टपादाः शुभा इति पितामहेन" इत्याद्युक्त्वा समाहितम्। "पाद एव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम्। क्रूरविद्धमयुतं न शोभनं शोभनेषु गदितं न पादतः" इति। नारदः। "पादमेव शुभैर्विद्धमशुभैश्चैव तद्भ्रमम्" इति। कश्यपोऽपि। "क्रूरविद्धं युतञ्चर्क्षं क्रूराक्रान्तञ्च तद्भमम्। मणिहेममयं कुम्भं सुराक्रान्तमिव त्यजेत्" इति तद्भमं सकलमखिलम्। तस्मात् क्रूरग्रहविद्धे संपूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धान्तः। तत्र विवाहे पञ्चशलाकावेध एव यदाह वसिष्ठः "पञ्चशलाकाचक्रे पाणिग्रहणे भवेधविधिरुक्तः। अन्यः शुभमित्यतः सप्तशलाकाजहतरत्रेति"। श्रीपतिः "वधूप्रवेशने दाने वरणे पाणिपीडने। वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाकक" इति पी०धा०। अत्र केचित् सप्तशलाकाचक्रवेधमाहुः। तत्र विद्धनक्षत्राणि यथा "शाक्रे ज्येष्ठे, शतभाग्निये, अजशिवे, पौष्णार्यमर्क्षे, वसुदौर्गे, वैश्वसुधांशुभे, हयभगे, सार्पानुराधे, तथा। हस्तोपान्तिमभे, विधातृविधिभे, मूलादिती त्वाष्ट्रभाऽजाङ्घ्री, याम्यमघे, तथान्तकहरिभे, विद्धे कुभद्रे यथे" मु०चि०। "कुभद्रे चक्रे सप्तशलाके चक्रे शाक्रेज्येष्ठेऽन्योन्यं परस्परं मिथः क्रूराधिविशेषेण विद्धे ज्ञेये। एवं अजशिवे पूर्वभाद्राद्रे विद्धे ज्ञेये एवं सर्वत्र। वैश्वसुधांशुभे उत्तराषाढामृगशिरसी, हयभगे अश्विनीपूर्वफाल्गुन्यौ, उपान्तिमभं उत्तराभाद्रपदा, अत्र मूलवाक्यं स्वरोदयस्थं यज्ञोपवीतप्रकरणे मिहितम्। चक्रोद्धारो व्यवहारसमुच्चये "सप्त सप्त विनिपात्य रेखिकास्तिर्यगूर्द्ध्वमथ कृत्तिकादिकम्। वेधवेदभिजिता समन्वितञ्चैकरेखगमनेन विध्यते" दीपिका। "यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। रक्ताम्बरस्था तु संवृताङ्गी श्मशानभूमिं रुदती प्रयाति"। तथा च भोजः। "विद्धे सप्तशलाकाख्ये विधवा लग्नशासना। पुनर्यौवनविराशारी स्वामी सुधचन्द्रिकाम्"। वैधव्यस्तु नक्षत्रं ग्राह्यं तस्याद्वैधव्यति तदुक्तं वराहेण "नक्षत्रसहग्रहे फलमस्ति तारकाभिः सदसदिति"। अत्रापि तुल्यन्यायत्वात् क्रूरवेधे पूर्णं नक्षत्रं त्याज्यम्. शुभग्रहवेधे पादस्त्याज्यः इति ध्येयम्। पी० धा०। 'सप्तशलाकाजहतरत्रेति" प्रागुक्तवचनात्

वादिस्थतेऽपि वक्रगामिना राहुणा चन्द्रखमन्धिनीरेवतीत्यादिगणनया विंशतिभम् ऋक्षं वैव नत्वन्यथाऽऽश्वयितव्यमिति साम्प्रदायिकाः" पी॰धा॰ ।

अथ पातदोषः । "हर्षणवैधृति साध्यव्यतिपातकगण्डशूलयोगानाम् । अन्ते यन्नक्षत्रं पातेन निपातितन्तत् स्यात्" । मु॰चि॰ । "हर्षणेत्यादि षड्योगानामन्ते यन्नक्षत्रं भवेत् तत्पातेन चण्डीशचण्डायुधाख्येन निपातितं स्यात् यदाह त्रिविक्रमः "साध्यहर्षणशूलानि वैधृतिव्यतिपातयोः । गण्डभञ्च गण्डस्य चान्ते स्याच्चेत् पातेन निपातितमिति" । नारदेन प्रकारान्तरेणैतत्प्रकारसम्पादकः पातोऽभिहितः । "सूर्यभाच्छ्लेषपित्र्यान्त्यत्वाष्ट्रमित्रोडुविधुभे । गण्यया दिनभे तावदाश्विभात् पातदुष्टभम्" । वशिष्ठेनापि "रविभाद्भ्रेषपित्र्यमित्रत्वाष्ट्रभरिपौष्णभेषु गणितेषु । आश्विनभादिन्दुयुतौ तावति वै पतति गगनचा पातः । अयमपि पातोदोषश्चण्डीशचण्डायुधाख्योक्तेयः । यथिलेषु मङ्गलेष्वपि वर्ज्यो यस्माद्विनाशदः कर्तुरिति" यद्यप्यत्र हर्षणादीनामुपादानं नास्ति तथाप्यभिहिताश्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तत्सङ्ख्याकेष्वेव योगेषु पातसम्भवो जायते इति मत्वा हर्षणादीनामनुक्तिः । एवञ्च प्रागुक्तेषु दशसु विरुद्धयोगेषु लत्तापातयोः पृथक् कीर्त्तनम्" । ज्यो॰त॰ रघुनन्दनेन "ऋक्षं द्वादशतुर्यरन्ध्रिरवनौस्तुतीयं गुरुः षष्ठं त्र्यष्टमर्कजस्तु पुरतो हन्ति स्फुटं लत्तया" इत्यादि रत्नमालावाक्यं मत्वा "लत्तापातोऽयमिति, यदुक्तं तच्चिन्त्यमूलम् अनयोर्भिन्नदोषत्वात् अन्यथा प्रागुक्तव्यवहारोच्चयवाक्ये- वर्ज्यदशसंख्यानुपपत्तेः तद्वाक्ये पातशब्दस्याश्रवणाच्च ।

अथ क्रान्तिसाम्यम् "पञ्चास्याजौ गोमृगौ तौलिकुम्भौ कन्यामीनौ कर्क्यली चापयुग्मे । तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं क्रान्तेः साम्यं नो शुभं मङ्गलेषु" मु॰चि॰ । "पञ्चास्याजौ सिंहमेषौ अन्ये प्रसिद्धाः । एषु राशियुग्मेषु चन्द्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रान्तिसाम्यं निरुक्तमङ्गलेषु नो शुभं स्यात् । अत्र पञ्चास्याजादिस्थमादीनामुदाहरणदिक्प्रदर्शनार्थत्वात्तथा वा सूर्याचन्द्रमसोः सायनयोर्योगः षड्राशिमितो द्वादशराशिमितो वा विवक्षितस्तदैव क्रान्तिसाम्यस्य सम्भवात् । अतः प्रमितिवाक्यस्वारस्यपरः नन्वेतावन्त एव षड्राशियोगा द्वादशराशियोगा वा सम्भवन्तीति चेन्न राश्यन्तावच्छेदस्थित्याधिकानामपि सम्भवात् प्रत्यंशकलाधिकत्वात्स्थितत्वे नानन्तभेदसम्भवाच्चातः प्रागुक्तं व्याख्यानं न्याय्यम् । क्रान्तिसाम्यस्य च महापात इति नाम । एतच्च निन्द्यताभाक् प्रसिद्धः "दोषो महापात इति प्रसिद्धः सर्वेष्वतो हन्ति वधूं वरं च । तं रक्षितुं लग्नगुणान्वयज्ञाः सवान्वया नाऽशनितोऽप्यपातम्" । अशनिर्वज्रम् । नारदोऽपि "यस्मिन् दिने महापातस्तद्दिनं वर्जयेत् शुभे" इति अतएव पतनमात्रात्पातः सकलशुभकर्माभिलाषनर्थतापि । सा च स्पष्टा सोमसिद्धान्ते । "सच्छुभानां विनाशाय तद्दिने पतत्ययम् । व्यतीपातः प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः" इति । महापातशब्दस्य रूढिस्तु रवीन्द्वोः क्रान्तिसाम्य एव न त्वन्येषां ग्रहाणां क्रान्तिसाम्ये । यथा जलजशब्दस्य रूढिः कमले न तु भेकादौ । क्रान्तिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सूर्यस्य क्रान्तिः सा यदा चन्द्रक्रान्त्या तुल्या स्यात्स पातसमयकालः । तयोश्चैकगतोरवीन्द्वोः क्रान्त्योः समानत्वं भुजसाम्ये सति भवति । भुजो नाम "त्रिगुणं भुजः स्यात् त्र्यधिकेन हीनं भार्द्धस्य भार्द्धादधिकं विभार्द्धम् । नवाधिकेनोनितमर्कभं चेति" लक्षणलक्षितः तत्साम्यं तु सूर्याचन्द्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा सति भवति । अतएव ग्रन्थकृता तादृशा योगा एव पठिताः । "विनाशपातेन्दुभिदायनांशकैर्युतोरविः शीतकरश्च लक्ष्यते । समापमत्वे व्यतिपातवैधृताख्यपातर्दकौ रसभेऽर्कभे क्रमात्" इति भास्कराचार्योक्तिमङ्गीकृत्य सामान्यतः क्रान्तिसाम्यदिवसस्य शीघ्रोपस्थित्यर्थं भुजसाम्यप्रतिपादनम् । तदुक्तं वसिष्ठेन स्वसिद्धान्ते "चक्रे चक्रार्द्धतुल्ये वा किञ्चिन्न्यूनाधिकेऽपि वा । सायनार्केन्दुयोगे चेत्तदा पातस्य सम्भवः । शुभमङ्गलकर्माणि लोकानां च विनाशयेत् । स्नानदानादिकं तत्र जपश्राद्धादिकाः क्रियाः । कदापि कुरुते मर्त्यः सुमहत् फलमश्नुते । सूर्यग्रहे कुरुक्षेत्रे कोटिसूर्यग्रहे फलम् । तत् फलं लभते पाते स्नानश्राद्धजपादिना । उत्पत्तौ लक्षगुणितं भ्रमणे कोटिसङ्ख्यम् । पातेऽप्यर्बुदसङ्ख्यं प्रवदन्ति दत्तमक्षयमिति" । तथा सूर्यसिद्धान्तेऽपि । "एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा । तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः । विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः । समास्तदा व्यतीपातो भगणार्द्धे तयोर्युतौ । तुल्यांशुजालसम्पर्कात्तयोस्तु प्रवहाहतः । तादृक् क्रोधोद्भवो वह्निर्लोकाभावाय जायते" इति । अतएवानन्तरोक्तक्रान्तिसाम्ये महापातदोषो

नःस्त्वेव। तदुक्तं गर्गेणदैवज्ञैः “पूर्वं तत् स्यात् पातमध्यं द्वितीयं पूर्वैरुक्तं तद्यतोनातिदुष्टमिति”। अनेनैवाशयेन वशिष्ठेन स्वसंहितायामुक्तम्। “शास्त्रात् समानीत महातिपातः सर्वेष्टतोहन्ति वधूं वरं च। त्रिःसप्तशाखानिव आमदग्न्यक्रोधोऽचिरात् क्षत्रकुलं समस्तमिति”। शास्त्राद्गणितशास्त्रोक्तान्महापाताधिकारादित्यर्थः। तत्र हि योगादेव महापातस्यानित्यत्वात्तस्यैव दोषत्वं नान्यस्येत्यर्थादुक्तं भवति। किन्तु पञ्चाङ्गीयोऽपि योगः सूर्याचन्द्रमसोर्योगादेव साधितः स्पष्टाधिकारेऽतस्तस्मादेव महापातोऽपि साधयितुमुचित एव” पी॰धा॰।

अथ खार्जूरापरपर्यायैकार्गलदोषः

“व्याघातगण्डव्यतिपातपूर्वे शूलान्त्यवज्रे परिघातिगण्डे एकार्गलाख्योह्यभिजित्समेतोदोषः शशी चेद्विषमर्क्षगोऽर्कात्” मु॰चि॰। “अन्त्योवैधृतिः। अन्त्ये प्रसिद्धाः। यस्मिन्दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कादर्कनक्षत्रात् शशी चन्द्रोऽभिजित्समेतोविषमे विषमसंख्याके ऋक्षे नक्षत्रे स्यात्तदा खार्जूरचक्रोत्पन्न एकार्गलाख्योदोषः स्यात्। यदा समे स्यात्तदा न दोषः इत्यर्थः। यदाह त्रिविक्रमः “विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः। अर्कादिन्दुस्तदा योगोनिन्द्य एकार्गलाभिधः” इति वशिष्ठेन तच्चक्रमभिहितम्। “अन्त्यातिगण्डपरिघव्यतिपातपूर्वव्याघातगण्डवरशूलमहाशनीषु। चित्रानुराधपितृपञ्चगदस्रभेषु शाक्रिस्वमूलशशिसूर्यदितिषु मूर्द्धभेषु। “रेखामेकामूर्द्धगां षट् च सप्त तिर्यक् कृत्वाथत्र खार्जूरचक्रे। तिर्यगेकासंस्थयोश्चन्द्रभान्वोर्दृक्सम्पातोदोष एकार्गलाख्यः। “खरकरतुहिनांशोर्दृष्टिसम्पातजातस्त्वनलसमशरीरस्तूहिरवह्निसंस्थात्। भुवि पतति जनानां मङ्गलध्वंसनाय शुभगणगतशक्रुरप्यशार्योऽग्निकोपः” इति अत्र वशिष्ठवाक्येऽभिजित्साहित्यमस्ति न वेति सन्देहः नारदस्त्वभिजिद्वर्जितं चक्रमाह “व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि। गण्डातिगण्डकुलिशवैधृत्या सहितेषु च। अदितीन्दुमघाहार्यमूलमैत्रेजभानि च। शेषाणि सहचित्राभिर्मूर्भिं भानि यथाक्रमम्। लिखेदूर्ध्वगतामेकान्तिर्यक्चैकात्रयोदश। तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत्। भान्येकरेखागतयोः सूर्याचन्द्रमसोर्मिथः। एकार्गलो दृष्टिपाताद्याभिजिद्वर्जितानि वै। शाकुने कमठे चक्रे फणिचक्रे त्रिनाडिके। अभिजिद्गणना नास्ति चक्रे खार्जूरिके तथेति”। काश्यपेनापि एकार्गलेऽदृष्टिपाताभिजिद्गहितानि वै” इति। तत्र त्रिविक्रमकेशवार्कशाकयोः समूलत्वम् शिष्टसम्मतत्वान्नारदादिवाक्यैः सह विकल्पः ततोऽनयोः पक्षयोर्यथादेशाचाराद्व्यवस्थेति युक्तं प्रतीमः” पी॰धा॰। खार्जूरवेधे ज्यो॰ति॰

“एकामूर्द्धगतां त्रयोदश तथा तिर्यग्गताः स्थापयेत्। रेखाचक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु। व्याघातादि तु मूर्ध्नि भन्तु कथितं तत्रैकरेखास्थयोः सूर्याचन्द्रमसोर्मिथोनिगदितो दृक्पात एकार्गलः” “व्याघातादीति व्याघातयोगसंस्थाद्दस्रयोदशाद्यः। तथा च हस्तादीनि नक्षत्राणि देयानीत्यर्थः” इति यद्व्याख्यातं तच्चिन्त्यतक्रवाक्यैः व्याघातादिदुष्टयोगयुक्तदिवसे एव खार्जूरवेधप्रतिपादनात् तत्र हस्तनक्षत्रादीनां च नारदेन विशेषाभिधानाच्च।

अथोपग्रहदोषः स च उपग्रहशब्दे १२०२ पृ॰ उक्तप्रायः विशेषार्थं पुनरुच्यते।

“शराष्टदिक्शक्रनगातिधृत्यस्तिथिर्देतिथ प्रकृतेश्च पञ्च। उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम्”। “सूर्यभतः सूर्याक्रान्तनक्षत्रात् अब्जताराः चन्द्रनक्षत्राणि पञ्चाष्टदशचतुर्दशसप्तकोनविंशतिपञ्चदशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपञ्चविंशतिसंख्याकाश्चेत्तदोपग्रहनामकादोषाः स्युः प्रकृतिरेकविंशतिः ततः पञ्च। यदाह नारदः “भूकम्पः सूर्यभात्सप्तमर्क्षे विद्युच्च पञ्चमे। शूलोऽष्टमे च नवमेऽशनिरष्टादशे ततः। केतुः पञ्चदशे दण्डश्चोल्का एकोनविंशतौ। निर्घातपातसंज्ञश्च ज्ञेयः स नवपञ्चमे। मोहनिर्घातकम्पाश्च कुलिशं परिवेषकम्। विज्ञेयाश्चैकविंशाख्यादारभ्य च यथाक्रमम्। चन्द्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेदिति”। वराहः “उपग्रहर्क्षेषु विवाहिता स्त्री सूर्यर्क्षतो दुर्भगतामुपैति”। अन्यत्रापि। “गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत्। प्रस्थाने विपदः प्रोक्ता उपग्रहदिने सदीति”। एवं सामान्यतो निषेधमभिधाय देशभेदेन परिहारमाह। शुभा इति। “बाह्लिके कुरुदेशे च वर्जयेत्तूपग्रहमिति” काश्यपोक्तेः” पी॰धा॰। अत्रापवादः।

“पातोपग्रहकक्षांश नेष्टोऽङ्घ्रिः खेटपत्समः” मु॰चि॰।

“पातचण्डीशचण्डायुधाख्योदोषः उपग्रहः प्रागुक्त एव। लत्ता शराङ्कपूर्णेन्दु मिताः” इत्यादिनोक्ता, तत्र खेटपत्समः पञ्चदशतुल्यो नक्षत्रचरणोऽनिष्टः कक्षार्धः

पाते उपग्रहे च रविर्यस्मिन् स्थात्तत्संख्यचरणस्य नक्षत्रस्य वर्ज्यानाम्य; लत्तायान्तु लत्ताकारिणोग्रहा-यद्घरणे स्थितस्तत्संख्य एव पादो वर्ज्यानान्यः। उक्तं च मुहूर्त्तदीपिकायाम् "उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये ग्रहोऽस्ति यत्प्रमाणांशे धिष्ण्यांशस्तत्प्रमाणकः" इति उपग्रहचण्डायुधयोः सूर्य्यतोऽङ्घ्रिपाञ्छ्यसंख्येन सम्भवात्। अयञ्च परिहारस्तुल्यन्यायत्वात् खार्जूरकेऽपि द्रष्टव्यः। सूर्यो यस्मिन् पादे भवेत्तत्समसंख्यचरण एकरेखावस्थितचन्द्रनक्षत्रस्य वर्ज्य इत्यर्थः "खार्जूरिकसमाङ्घ्रिभमिति" नारदोक्तेः। ज्योतिर्निबन्धे गर्गः "पूर्वाह्णे दण्डदोषः स्यादपराह्णे तु मोहजः। उभौ चैवार्द्धरात्रे तु सन्ध्याऽहोरात्रदूषकः"। तत्रापि "खेटलकादण्डभेहानाकाङ्घ्रिभमिति" नारदोक्तेः कालभेद एव वर्ज्यः "शरमार्गदृशर्त्तव ७,१२,१०,६, आदितो घटिकास्तेषु वर्जनीयाः पराः शुभाः" पी० धा०।

अथ वारदोषः। स च अर्द्धयामकुलिकयमघण्टभेदात् त्रिविधः। ते च कश्यपेनोक्ताः यथा "शैलाब्धितयः सूर्ये चन्द्रे षड्वेदपर्वताः। भौमे वाणाग्निनेत्राणि सौम्ये वेदाब्धितारयः। गुरुवारेऽग्निचन्द्रेभाः शुक्रे नेत्राद्रिवह्नयः। शनौ चन्द्रेभतर्कोऽस्तु; कुलिकोयमघण्टकः। अर्द्धप्रहरसंज्ञाश्च मङ्गलेषु विवर्जयेत्। वारदोषेण दुष्टन्तु लग्नं सर्वगुणान्वितम्। त्यजेद्यथा पुरोडाशं श्वायसोपहतन्तथेति"। फलमाह वशिष्ठः "निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके। कुलिके सर्वनाशः स्यादृग्रावारेति न दोषदाः" पी० धा०। दिवसाष्टमभागात्मकार्द्धयामे। तत्र अर्द्धयामशब्दे ३७६ पृ० अर्द्धयामविशेष उक्तः। मुहूर्त्तात्मककुलिकस्तु कुलिकशब्दे वक्ष्यते तत्र कुलिकमुहूर्त्तमुपक्रम्य श्रीपतिना "यात्रायां मरणं काले वैधव्यं पाणिपीडने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्" उक्तम्।

अथ जामित्रदोषः। "लग्नाच्चन्द्रान्मदनभवनगे खेटे न स्यादिह परिणयनम्। किंवा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम्" मु० चि०। "विवाहलग्नाच्चन्द्राद्वा सप्तमं भवनं स्मृतं जामित्रं तत्र गते खेटे परिणयनं न स्यात्। उक्तञ्च 'जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः। लग्नाल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्ज्जयेदिति"। तत्स्वरूपमाह महेश्वरः "लग्नाच्छीतकराद्वापि दानवता ज्ञेया विवाहे स्मृता" इति। वशिष्ठः स्थानप्रकरणे "सर्वे जामित्रसंस्थाविदधति मरणम्" इत्याह च। कश्यपः "पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा यत्नेनापि विवर्जयेन्मुनिमते दोषोऽपि संकथ्यते। उद्वाहे विधवा, व्रते तु मरणं, सूतश्च पुंसवने, यात्रायां विपदो, गृहेषु दहनः, क्षौरेऽपि रोगो महान्"। भुजबलः "चन्द्रात् सप्तमराशिगे दिनकरे त्यक्ता पतिः कन्यका, भौमे च प्रमदा प्रयाति विलयं, सौरे च वन्ध्या सरुक्। जीवः शुक्रशशाङ्कजौ शुभकराः केचिद्वदन्ति क्रमात् भर्तृप्रेमसुतदीप्तिमात्सभवने नित्यं प्रवासान्वितेति"। अस्यापवादमाह। कश्यपज्योतिर्विदले पूर्णग्रहाधिपतिराशेः सप्तमराशिस्थितत्रिंशद्भागात्मके लग्नेऽपि चन्द्रोऽतिविद्धम्युक्तमिदानीन्तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पञ्च पञ्चाशत् तत्स्थितनवांशगे लग्ने चन्द्रे सति जामित्रं स्यात्। यथा मेषराशौ पञ्चमनवांशे भौमोऽस्ति तस्मात् तुलायां पञ्चमनवांशस्थं लग्नं तत्र चन्द्रो वा निषिद्धोऽन्येऽष्टौ नवांशाः शुभाः। एवंविधं स्वल्पं जामित्रमिदमशुभकरं स्यात्। यदाह महेश्वरः "केचित् कामनवांशकादिषु शरैस्तुल्ये नवांशे स्थिताः" इति। केशवार्कस्तु चन्द्रनवांशापदेशाह। "हिमकरविलग्नांशकात् सप्तमो यदि खेटः परः कायकांशके। अयमतनुगुणैर्न हन्यते निबिड़ैरत्र पराशरस्तर:" अपवादान्तरमाह राजमार्त्तण्डः "तनुत्रिकोणभवने भवने निजे वा सौम्याधिमित्रस्वगृहेऽपि तदीक्षितो वा। जामित्रवेधजनितानपहृत्य दोषान् दोषाकरः सुखमनेकविधं विधत्ते" इति। व्यवहारसमुच्चयेऽपि। "स्वोच्चेऽथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा। जामित्रकारिपरिदृष्टहतदोषराशिं कृत्वा ददाति बहुशः सुखमेव चन्द्रः"। कालखण्डे वात्स्यायनः "गुरुश्चन्द्रश्च जामित्रे तिष्ठति यदि सत्वान्वितः। धनसौभाग्यपुत्रांश्च लभते नात्र संशयः। सचित्रकामपालैश्च सुवर्णाभरणैः शुभैः। शोभिता तु सदा नित्यं द्युत्यापि निरीक्षिते। सा तु भर्तुः प्रिया नित्यं बुधे चन्द्रस्य सप्तमे" पी० धा०।

"एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयास्तदोषाः। नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्कोऽभ्युदये तु दोषाः" मु० चि०। "एकार्गलः खार्जूरचक्रोक्तः उपग्रहः शराहेत्यादिनोक्तः पातश्चण्डीशचण्डायुधम् लत्ता सप्ताह्निकादिनोक्ता, जामित्रमधुनोक्तम्। कर्त्तरी, लग्नात् पापाद्व्याद्युक्ता उदयास्तदोषा वक्ष्यन्ते। एवंविधा दोषा नश्यन्ति। कदा विवाहलग्ने चन्द्रार्कयोर्बलं स्वोच्चमित्रादिराशि-

स्थितत्वरूपं विहितस्थानस्थितत्वञ्च तेनोपपन्नं घटिते भवति । अतएव सूर्य्यस्याभ्युदये दोषा रात्रिर्यथा नश्यतीत्यर्थः । गाढान्धकारयुक्तापि रात्रिरेकाकिना सूर्य्यस्योदयेन स्वयमेव नश्यतीति यथा" पी०धा० ।

मतभेदाद्व्याप्यदोषस्य देशान्तरविषयत्वमाह "उपग्रहर्क्षं कुरुवाह्लिकेषु कलिङ्गवङ्गेषु च पातितर्क्षम् । सौराष्ट्रशाल्वेषु च लत्तितर्क्षं त्यजेत्तु विद्धं किल सर्वदेशे" मु०चि० ।

"कुरवोवाह्लीकाश्च पश्चिमदेशास्तेषूपग्रहदोषाक्रान्तर्क्षं त्यजेन्न तदितरसर्वदेशेषु तेषु शुभमेवेत्यर्थः । कलिङ्गोऽङ्गश्च प्राग्देशौ बहुवचनान्मगधाङ्गादयोऽपि । तेषु चण्डीशचण्डायुधापरपर्य्यायं पातं त्यजेत् । न तु क्रान्तिसाम्यरूपं पातं तस्य महापातत्वव्यवहारात् । सौराष्ट्रः शाल्वदेशः पश्चिमदेशविशेषः बहुवचनाद्गुर्जरबाहुल्यं तेषु लत्तितं लत्तासंज्ञातात्म तद्भं परित्यजेत् । विद्धं क्रूरेण शुभेन वा पञ्चशलाकादिचक्रद्वारा भिन्नर्क्षं भूतलवर्त्तिसर्वदेशेषु त्यजेत् । किल निश्चयेन तस्य देशभेदेन परिहारः एतदपि वाक्यं सम्मत्यन्तरं नार्हति । विवाहपटलेऽपि "लत्तामालवके देशे पातः कोशलके तथा । एकार्गलन्तु काश्मीरे वेधं सर्वत्र वर्जयेदिति" । वराहः । "युतिदोषस्तु विन्ध्याख्ये देशे नान्येषु केषु चेति" । दशयोगो भवेद्गौडे जामित्रश्च च यामुने । वेधदोषश्च शेषेषु" इत्यादि वाक्यानां यथादेशाचारात् व्यवस्था" पी०धा० ।

अथ दशयोगः "शशाङ्कसूर्य्यर्क्षयुतेर्भशेषे खं भूयुगाङ्गानि दशेशतिथ्यः नागेन्दवोऽङ्गेन्दुमिता नखाश्च भवन्ति चैते दशयोगसंज्ञाः" मु० चि० । "चेद्यदि चन्द्रसूर्य्यनक्षत्रयोर्युतेर्योगाद्भैः सप्तविंशत्याभक्ताद्यच्छेषं तस्मिन् खं एकचतुःषडङ्कदशपञ्चदशाष्टादशैकोनविंशतिविंशतिसंख्याके सति एते अङ्काः दशयोगसंज्ञा भवन्ति नान्य इत्यर्थः । शिष्टानां दशानामङ्कानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा तदुक्तं दीपिकायाम् "तिथ्यङ्कवेदैकदिगन्तविंशभैकादशाष्टादशविंशसंख्याः । इन्दोरिना सूर्य्यसुतोडुना वा योगाद्भशेषे दशयोगदोषः" । तन्त्रोऽपि "यस्मिन्नृक्षे रविस्तिष्ठेद्यस्मिन्नृक्षे शशी तथा । विश्लिष्टे द्वयोर्योगहृते शेषः स्यात् शाद्रिशोदश । अन्धवेदर्त्तुरूपाग्नि दिग्वद्रतिथयोऽष्टतिः । ऊनविंशा नखाश्चेति दश योगाः प्रकीर्त्तिता" इति पी०धा० तत्फलम् "वाताभ्राग्निमहीपचौरमरणं रुग्वज्रवादाः क्षतिर्योगाङ्के द्वयिते समे मनुयुतेऽथौजे तु सैकेऽर्द्धिते । मन्त्राश्चाद्य सम्मितासु मनुभीरेखाः क्रमात् संलिखेद्भोऽस्मिन् खगचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः" मु०चि० ।

"शून्यशेषे वातदोषः स्यात् एकशेषेऽभ्रान्निपात्, चतुर्थशेषेऽग्नेः, षट्सु महीपाद्भयः, दशसु चौरात्, एकादशसु मरणं द्वयोरन्यतरस्य वा, पञ्चदशसु रुक्, अष्टादशसु वज्रम् एकोनविंशतिशेषे वादः कलहः, विंशतिशेषे क्षतिः द्रव्यनाशः स्यात् । यदाह लल्लः "मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः । कलिहानिर्दशैताश्च दोषा ज्ञेयाः सदा बुधैः" । विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा । कर्णवेधे च चूड़ायां दशयोगं विवर्जयेदिति" । अथापवाद उच्यते । योगाङ्क इति । योगाङ्के समे युग्मसंख्याके सति दलिते अर्द्धीकृते मनुभिश्चतुर्दशभिर्युते योगाङ्के तदा दास्नादश्विनीतोभं नक्षत्रं स्यात् । यथा समाङ्के अङ्कयोगः दशाङ्कः १० अर्द्धितः ५ मनुयुतः १९ मूलनक्षत्रं जातम् । अथ योगाङ्के अयुग्मसंख्याके सति सैके एकयुक्ते ततोऽर्द्धिते अश्विनीतोभं स्यात् । यथा विषमाङ्को योगःपञ्चदश सैकः १६ अर्द्धितः ८ पुष्यनक्षत्रं जातम् । तदुक्तं यथा अथ मनुभिः सम्मिताश्चतुर्दश रेखास्तिर्यक् क्रमात् संलिखेत् । अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रचन्द्रमसि चक्रे लेख्यं तत्र स्वाक्रान्तनक्षत्रे स्थाप्याः । दिननक्षत्रे च चन्द्र एवं सति यदि खगचन्द्रावेकरेखास्थौ स्यातां तयोस्तादृशयोः परस्परावलोकनरूपवेधोन शुभदः । एतच्च ज्योतिःसागरे "योगाङ्के विषमे सैके समे मनुलोचने१८ । दलीकृतेऽश्विनीपूर्वं दशयोगसदाहृतम् । दशयोगे महाचक्रे प्रमादाद्यदि विध्यते । क्रूरैः सौम्यग्रहैर्वापि दम्पत्योरिकनाशनमिति" दशयोगापवादान्तरमाह भरद्वाजः । "गुरौ लग्नाधिपे शुक्रे सवीर्य्ये लग्नकेन्द्रगे । दश दोषा विनश्यन्ति यथाग्नौ तूलराशयः" । व्यासोऽपि "शुक्रेण गुरुणा वापि संयुतं दृष्टमेव च । दशयोगसमायुक्तमपि लग्नं शुभावहमिति" पी०धा० । अपवादान्तरं ज्यो०त० । "आद्यपादस्थिते ऋक्षे तुरीयांशः प्रदुष्यति । द्वितीयस्थे तृतीयस्थो विपरीतमतोऽन्यथा" । विपरीतं चतुर्थस्थे आद्यः तृतीयस्थे द्वितीयो दुष्यति नान्यस्थे नान्यपादो दुष्यतीत्यर्थः ।

अथ वाणदोषः "लग्नेनाढ्यायातातिथ्योऽङ्कतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंस्थे रोगोवह्नीराजचौरौ च मृत्युर्वाणश्चायं दाक्षिणात्यप्रसिद्धः" मु०चि० । "शुक्लपक्षप्रतिप-

दमारभ्य गततिथ्योऽङ्कैर्नवभिर्हृताः शेषे नागसंख्ये ऽष्टसंख्ये रोगाख्यो बाणः । एवं द्विसंख्ये शेषे वह्न्याख्यः षट्‌संख्ये शेषे राजा । तथा षट् नवसंख्ये शेषे चौराख्यः एकसंख्ये शेषे मृत्युसंज्ञो बाणः । अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु प्रसिद्धः तेन देशाचारात् व्यवस्थया बाणस्य त्यागः । न तु प्राच्योदीच्यपाश्चात्यानाम् । तदुक्तं मुहूर्त्तचिन्तामणौ विवाहप्रकरणे । "गततिथियुतलग्नं पञ्चधा स्थापनीयं तिथि १५रवि १२दश१०नागै८र्वेद ४युक्तं क्रमेण । नवहृतगत५शेषे बाणसंज्ञाः क्रमेण रुगनलनृपचौराः पञ्चमो मृत्युसंज्ञ इति" पी॰धा॰ अथ प्राच्यादिबाणापवादौ

"रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातांशकमितिरथ तष्टाङ्कैर्यदा पञ्चशेषाः । रुगनलनृपचौरा मृत्युसंज्ञश्च बाणो नवहृतशरशेषे शेषकैक्ये सशल्यः" मु॰चि॰ ।

"रसगुणशशिनागाब्धिभिराढ्याश्चासौ संक्रान्तियातांशकमितिश्चेति स्वऽस्मिन् वर्त्तमानसूर्यसंक्रान्तिभुक्तांशानामितिः संख्या पञ्चधा स्थाप्या क्रमादिकरूपेण अष्टम् । सा क्रमेण षट्त्र्येकाष्टचतुर्भिराढ्या संयोज्याङ्कैर्नवभिस्तष्टा सती यदा पञ्चशेषा यस्मिन् स्थले पञ्चावशिष्यन्ते तत्र क्रमेण रुगादिबाणोज्ञेयः । यथा आदौ पञ्चशेषे रोगबाणः द्वितीये पञ्चशेषेऽग्निबाणः तृतीये पञ्चशेषे राजबाणः चतुर्थे पञ्चशेषे चौरबाणः पञ्चमे पञ्चशेषे मृत्युबाणः तत्तात्पर्य्यमूह्यं भवतीत्यर्थः । यदाह कश्यपः "संक्रान्तियातांशकनन्दशेषस्ताग्निनृपाष्टयुगैः समेतः । तष्टोऽयं रोगहुताशभूपचोरा मृतिश्चेति च पञ्च बाणाः । इति पञ्चेति पृथक् पृथक् पदं शिष्यन्ते तदा बाणाः स्युरित्यर्थः । तत्र बाणो द्विविधः एकः काष्ठमय्योऽपरोऽलोहमयः तत्राभिहितो बाणः काष्ठमय उच्यते । अस्य नाम प्राच्याख्यो बाण इत्याहुः । तेन तादृशे बाणे लग्ने तथा पीडा न भवेत्तदर्थं तदपवादभूतो लोहमयसहितो बाण उच्यते न वेति । यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते सशल्यशरशेषे भवति सशल्यः लोहसहितोबाणः स्यात् । पञ्चव्यतिरिक्ते शेषे शल्यसहितो दुष्टबाणः । अयं तुल्यन्यायत्वात् प्राक् प्रोक्तेऽपि बाणे सशल्यो बाणोऽयं ज्योतिर्विन्नामप्राग्न्यथा बाणोऽभिहितः । "तिथिवारभलग्नाङ्कोरेकाग्न्यङ्गाष्टवेदयुक् ६,२,१,८,४, नन्दाप्त पञ्चशेषे रुगवह्निराट्‌चौरमृत्युकृदिति" पी॰धा॰ । अथ समयादिभेदेन बाणापवादः "रात्रौ चौररुजौ दिवा ऽग्निनृपतौ त्याज्यौ सदा सन्ध्ययोर्मृत्युश्चाथ शनौ नृपो विदि मृतिर्भौमेऽग्निचौरौ रवौ । रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे वर्ज्याश्च क्रमतो बुधैरुगनलक्ष्मापालचौरा मृतिः" मु॰चि॰ ।

"रात्रौ चौररुजौ बाणौ त्याज्यौ, दिवा दिवसेऽग्निनृपतौ वह्निराजबाणौ त्याज्यौ सन्ध्ययोः प्रातःसायंसन्ध्ययोः सदा मृत्युर्बाणस्त्याज्यः । ज्योतिःप्रकाशे "रोगचौरत्यजेद्रात्रौ दिवा राजाग्निपञ्चकम् । उभयोः सन्ध्ययोर्मृत्युमन्यकाले न निन्दितः" । अथ शनौ शनिवारे नृपबाणः, विदि बुधवारे मृतिबाणः, भौमेऽग्निचौरबाणौ रवौ रोगबाणः त्याज्यः । उक्तञ्च दैवज्ञम॰ "रवौ रोगं, कुजे वह्निं, शनौ च नृपपञ्चकम् । वर्जयेच्च कुजे चौरं, बुधवारे च मृत्युमिति" । एतेषु शुभकर्म्मसु एते बाणा वर्ज्याः यथा व्रते यज्ञोपवीते रुक्, गेहं गृहं तस्य गोप आच्छादनं तत्रानलोऽग्निः, नृपसेवायां क्ष्मापालोराजा, याने यात्रायां चौरः पाणिग्रहे मृतिर्बाणो वर्ज्य इत्यर्थः । तदुक्तं ज्योतिःप्रकाशे "नृपाख्यं राजसेवायां गृहगोपेऽग्निपञ्चकम् । याने चौरं, व्रते रोगन्त्यजेन्मृत्युं करग्रहे इति" । केचिदेवं पाठमाहुः । व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपञ्चकम् । यात्रायां राजचौराख्यौ विवाहे मृतिपञ्चकमिति" पी॰धा॰।

अथ लग्नसप्तमयोः शुद्ध्यपयोगिपश्यद्दृष्टिभेदः 'त्र्याग' त्रिकोणं चतुरस्त्रमस्तं पश्यन्ति खेटाचरणाभिवृद्ध्या । मन्दो गुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवन्ति" मु॰चि॰।

"खेटाग्रहा यस्मिन् स्थाने तिष्ठन्ति तस्मात् कथ्यमानानि स्थानानि चरणाभिवृद्ध्या पादवृद्ध्या पश्यन्ति तद्यथा त्र्यागं तृतीयं दशमञ्चैकचरणदृष्ट्या पश्यन्ति त्रिकोणं नवपञ्चमं द्विचरणदृष्ट्या पश्यन्ति । चतुरस्त्रं चतुर्थम् अष्टमं च त्रिचरणदृष्ट्या पश्यन्ति । अस्तं सप्तमस्थानं चतुश्चरणदृष्ट्या पश्यन्ति । अनेन तत्तद्दृष्टिवशशुभफलं चरणाभिवृद्ध्यैव भवतीत्यपि सूचितम् । तदुक्तं वराहेण "दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च । पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्तीति" । मन्द इति । मन्दः शनैश्चरः स्वस्थानात् त्र्यागं संपूर्णदृक् चतुश्चरणदृष्टिः । एवं गुरुस्त्रिकोणं, भूमिसुतः चतुरस्त्रं, परे चन्द्रबुधसूर्य्यशुक्राः क्रमेण सप्तमे संपूर्णदृश इत्यर्थः यदाह गार्गिः । "दुश्चिक्यदशमान्, सौरिस्त्रिकोणस्थान् बृहस्पतिः । चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान् । भवन्ति वीक्षणे नित्यमेवाधिकफला ग्रहाः" इति । वराहोऽपि "पूर्णं पश्यति

रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं चेति" पी०धा०। अत्रापि शब्दात् सप्तमस्थानेऽपि पूर्णदृष्टिः एवं शनिकुजयोः। अत एव मु०चि०पदे वेधकम् तत्प्रमाणाच्च पद्धतिशब्दे वक्ष्यते।

अथ लग्ननिरूपणम्। दीपिका "कन्यातुलाधृन्मिथुनेषु शस्तो मेषेषु मध्यो धनवर्जिता च। निन्द्योऽपि लग्ने द्विपदांश इष्टः कन्यादिलग्नेष्वपि नान्यभागः"। कन्यादिलग्नेष्वपि द्विपदांशएव इष्टोनान्य इत्यर्थः। वक्ष्यमाणवचने चरे चरांशवर्ज्जनात् चरलग्नेऽपि तुलातिरिक्तद्विपदांशस्य ग्राह्यता "धनुषि कुलटा तत्पूर्व्वार्द्धे सतीत्यपरे जगुः" विवाहपटले धनुरुत्तरार्द्धनिषेधात् पूर्व्वार्द्धस्य ग्राह्यतैव। मासभेदे लग्नभेदानां शून्यत्वात् तत्तन्मासे शून्यलग्ने विवाहो नेष्टः यदाह ज्यो०त०"घटमत्स्यहया युगमेषकन्यालयतुला। चापः कर्की मृगः सिंहवृत्तादौ शून्यराशयः"चैत्रादिलग्नानि यानि शून्ये तान्यपि तत्तत्काले वर्ज्यानि।

अथ लग्नसप्तमशुद्धौ "यदा लग्नांशेशोऽवनमथ तनुं पश्यति युतोभवेद्वाऽयं वोढुः शुभफलमनल्पं रचयति। तवद्यूनस्वामी तव मदनभं लग्नमदनं प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम्" मु०चि०। "यदा लग्नांशेशोलग्नांशस्वामी स्वं नवांशं पश्यति। अथ वाऽयं नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहुशुभफलं रचयति। यथा मेषलग्ने मिथुनांशस्तदांशो बुधः तुलायां मिथुनं पश्यति तत्र तिष्ठति वा अयं तदयशुद्धेः प्रथमः कल्पः। तदलाभे तु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तदापि वोढुः शुभफलमनल्पं स्यात् यथा मेषलग्न एव मिथुननवांशस्वामी बुधो मकरे स्वनवांशं न पश्यति किन्तु लग्नं पश्यति अथवा मेष एव तिष्ठति। अयं लग्नशुद्धेः द्वितीयः प्रकारः। तवेति। तवद्यूनस्वामी तवांशनवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी तवमदनभं नवांशमदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत् तदा वध्वा अनल्पं शुभं रचयति। यथा मिथुननवांशात् सप्तमो धनुरंशस्तदधीशो गुरुर्मेषे धनुः पश्यति तत्र तिष्ठति वा अयं मदशुद्धेः प्रथमः प्रकारः। तदलाभे तु तवद्यूनस्वामी लग्नमदनं सप्तमभवनं पश्यति सप्तमभवनेन सहयुतो वा भवेत्तदा वध्वाः शुभं यथा मेषलग्ने गुरुः कर्के सप्तमतुलागतं स्वनवांशं धनूरूपं न पश्यति किन्तु सप्तमभवनं तुलां पश्यति अथवा तुलायामेवास्ति। अयं मदशुद्धेर्द्वितीयः प्रकारः। इतरथेति इतरथा यदा लग्नांशेशोऽवनमंशं वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात्। यदा त्वस्तांशेशोऽस्तांशमस्तभवनं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः। यदाह कश्यपः "स्वस्वेशेनोदयास्तांशौ वीक्षितौ वाथ संयुतौ। लग्नं चास्तगृहं तत्तदंशेशेनेक्षितं युतमिति" तदाऽशुभमित्यनुषङ्गः। वशिष्ठः "इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तनुसंयुते च। अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्येति"। तुल्यन्यायत्वाल्लग्नेऽप्यस्तलग्नेऽपि उदयलग्नांशास्तांशस्वामिनोर्दृष्ट्यभावेऽप्येतदेव फलं ध्येयम्। "तवेशोऽवनं लग्नपो लग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य। तवद्यूनपोऽंशं द्यूनं लग्नपोऽस्तं मिथोवेक्षते स्याच्छुभं कन्यकायाः" मु०चि०। "नवांशस्वामी नवांशं प्रपश्येल्लग्नस्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात्। अथ वा मिथः परस्परं नवस्वामी लग्नं लग्नेशोऽवनं प्रपश्येत् तदाऽपि वरस्य शुभम् एवं तवद्यूनपो नवांशात्सप्तमनवांशस्वामी अंशं द्यूनमंशं सप्तमराशिमीक्षते लग्नपः लग्नस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यायाः शुभं स्यात्। वा अथवा मिथः सप्तमाधीशोऽलग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशश्चांशसप्तममीक्षते तदापि कन्यायाः शुभं स्यात्। अतोऽन्यथात्वे दम्पत्योरशुभमित्यर्थः। यदाह नारदः "लग्नवांशकौ स्वस्वपतिना वीक्षितौ युतौ। न चेदाभ्यामन्यपतिना शुभमित्रेण वा यथा। वरस्य मृत्युः स्यात्ताभ्यां सप्तमोदयांशकौ। एवन्तौ वीक्षितौ युक्तौ मृत्युर्वध्वाः करग्रहे"। वशिष्ठोऽपि "उदयांशः सनाथो मित्रसौम्येन वा युतः। प्रेक्षितो वा तथास्तांशो दम्पत्योः सुखपौरुषः"इति। परस्परयोगेऽप्येतदेव फलं ध्येयं नारदवाक्यस्वरसात् पी०धा०।

"लवपतिशुभमित्रं वीक्षतेऽंशं तनुं वा परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम्। मदनलवमितं सौम्यमंशद्यूनं वा तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः" मु०चि०। "अथ पूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेऽपि तृतीयप्रकार उच्यते। लवपतीति शुभमित्रं शुभश्च तन्मित्रं चेति कर्मधारयः। लवपतेर्लग्ननवांशेशस्य शुभग्रहः सौम्यबुधगुरुशुक्राणामन्यतमो मित्रं स्यात् चेदंशं स्वनवांशं तनुं लग्नं वा वीक्षते तदा परिणयनकरस्य वरस्य

शाखाइद्दं वशिष्ठोक्तपुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् अथ वा एवं मदनलग्नस्वामिग्रहस्य मित्रं सौम्यं चेत् स्यात्तद्वांशात् शून्यं सप्तमनवांशं चेद्दीक्षते वा अथ वा तन्मदनस्थं लग्नात्सप्तमनवांशं चेद्वीक्षते तदा वध्वाः शाखाइद्दं शर्म्म स्यात्। यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत्तस्य दृष्टिरशुभैवेति फलितार्थः। यदाह वराहः "शुद्धिरिह स्यात् यदोदयांशोऽस्मिन् नवांशस्वामिनमुपैति शुद्धिम्। तदा शुभसौम्यनिरीक्षितोयः शुभाय स स्यात्प्रवदन्ति सन्तः" इति। कश्यपः "राश्यंशौ मित्रसौम्येन वीक्षितौ वाथ संयुतौ। उदयास्तांशयोः शुद्धिस्त्रिविधा मङ्गलप्रदेति"। वशिष्ठः "लग्नास्तगृहात् रहितः सदोषः करोति मृत्युं वरकन्ययोश्च। त्रात्वं तदा लग्नगुणास्तगतास्तं बन्धुर्गां इव सर्पदष्टमिति"। केचित्तु विवाहादौ पञ्चयोगं निषिद्धमाहुस्तल्लक्षणम्। "तिथिवारं च नक्षत्रं नवभिश्च समन्वितम्। सप्तभिस्तु हरेद्भागं शेषाङ्के फलमादिशेत्। त्रिशेषे तु जलं विद्यात् पञ्चशेषे हुताशनः। सप्तशेषे वज्रपातो शेषे वज्रस्य लक्षणमिति टोडरानन्दे" पी॰ धा॰।

अथ सूर्य्यसंक्रान्तिदोषः "विषुवायनेषु परपूर्व्वमध्यमान्दिनांस्त्यजेदितरसंक्रमेषु हि। घटिकास्तु षोड़श शुभक्रियाविधौ परतोऽपि पूर्व्वमपि सन्त्यजेद्बुधः" मु॰ चि॰। "विषुवत्तुलामेषसंक्रान्ती अयनं कर्कमकरसंक्रान्ती एतत्सञ्ज्ञासु विषुवायनाख्यासु संक्रान्तिषु परपूर्व्वमध्यमान् दिवसान् बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्य्येषु त्यजेत्। इतरासु संक्रान्तिषु संक्रमकालात् परतोऽग्रेऽपि पूर्व्वं प्रागपि षोड़श घटिकाः मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत्। यदाह वशिष्ठः "विषुवतोरयनयोर्द्दिनत्रयं हरिपदे षड़शीतिमुखेषु च। पूर्व्वतोऽपि परतोऽपि संक्रमात् घटिकाश्च खलु षोड़श त्यजेत्। संक्रान्तिदोषे त्वचिरात् कृतं यद्दाहान्नपूर्व्वाखिलमङ्गलाद्यम्। ज्वालासमुद्भूतलितान्निमध्ये विलीयते तद्वदशेषमेतदिति" उद्वाहादिशुभकार्य्यत्वात् स्नानादावनिषेधः। तद्वाक्यानि संक्रान्तिप्रकरणेऽस्माभिरुक्तानि। किन्तु दिनत्रयं त्याज्यं किं संक्रान्तिकालात् प्राग्दिनत्रयमुत तदनन्तरमुत मध्यमं वेति पक्षत्रयसम्भवे निर्णयमाह गुरुः। "अयने विषुवे पूर्व्वं परं मध्यन्दिनं त्यजेत्। अन्यसंक्रमणे पूर्व्वाः पराः षोड़श नाड़िकाः इति"। अयञ्च निषेधः शयनसंक्रान्तिष्वपि ध्येयः। यदाह वशिष्ठः "यदायनप्रवेशः स्यात्तदा तद्दिवसंक्रमः। तस्मिन्नपि दिने त्याज्या नाड्यः षोड़श षोड़शेति"। शौनकः "अयनद्वये समूढा भर्त्तारं नाभिनन्दते नारी। विषुवद्वयेऽपि विधवा षड़शीतिमुखेषु सा म्रियते। विष्णुपदेषु विनीता कन्या विकलेन्द्रिया व्यतीपाते। वैधृतिविष्कोभे ष्टा सुभगा शेषेषु करयोषिदिति" पी॰ धा॰।

अथ पङ्ग्वादिलग्नदोषः "पङ्गौ तुलाली बधिरौ मृगाख्यौ रात्रौ च सिंहाजवृषा दिवान्धाः। कन्यानृयुक्कर्कटका निशान्धा दिने घटोऽन्त्यो निशि पङ्गुसंज्ञः" मु॰ चि॰। "पङ्गौ दिवसे तुलावृश्चिकौ बधिरौ स्मृतौ, मृगाख्यौ मकरधनुषी रात्रौ न तु दिवसे, सिंहाजवृषा दिवान्धा दिवसे बधिरा न तु रात्रौ। कन्या नृयुक्कर्कटा निशान्धा रात्रावन्धा न तु दिवान्धाः। घटः कुम्भो दिने पङ्गुसंज्ञो न तु रात्रौ। अन्त्यो मीनो निशि पङ्गुसंज्ञो न तु दिने। यदाह वशिष्ठः "मेषादिचात्वकं षट्कं चत्वारो बधिराः स्मृताः। द्वौ पङ्गू चेति विज्ञेयावित्येतन्मिश्रलक्षणम्। मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्त्तिताः। नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिताः। तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा। धनुश्च मकरश्चैव बधिरौ निशि कीर्त्तितौ। कुम्भमीनौ च पङ्गू द्वौ दिवारात्रौ यथाक्रममिति"। कुम्भो दिवा पङ्गुर्मीनो रात्रौ पङ्गुः, अनेन वशिष्ठकाले लग्नस्य योऽन्धपङ्ग्वादिदोषः उक्तस्तस्मिन्नेव काले तल्लग्नदोषावहं न कालान्तरे" पी॰ धा॰। तत्फलम्। "दारिद्र्यं बधिरतनौ दिवान्धलग्ने वैधव्यं शिशुमरणं निशान्धलग्ने पङ्ग्वङ्गे निखिलधनानि नाशमीयुः सर्व्वत्राधिपगुरुदृष्टिभिर्न दोषः" मु॰ चि॰। "वशिष्ठः "अन्धे वैधव्यमाप्नोति दारिद्र्यं बधिरे तथा। अथ नाशो भवेत् पङ्गाविति धात्रा विनिर्म्मितम्"। व्यासः "मासशून्याश्च याः प्रोक्ता राशयो बधिरादयः। गौड़मालवयोस्त्याज्यास्त्वन्यदेशे न गर्हिता इति" पी॰ धा॰।

अथ नवांशशुद्धिः। "कार्त्तिकतौलिककन्यायुग्मलवे प्रथमे वा। यदि भवेदुपयामस्तर्हि सती खलु कन्या" मु॰ चि॰। "कार्त्तिकं धनुस्तौलिकं तुला न्युग्मं मिथुनम् एषामंशे नवांशे अथवा मीनगते चापस्यैकोयमस्तकमाद्यः धनुरादिनवांशाः सर्व्वशुभिकला इत्यर्थः तेष्वंशेषु यदि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु यदाह वशिष्ठः "लग्ने हि सर्व्वे शुभदायकाश्च शुभेक्षिता वाथ युताः शुभाः स्युः। नवांशकस्तौलिकयुग्मकन्याचापाद्य-

न्तरं मौक्तिकं स्थित्यर्द्धम्। एवं मर्द्दखण्डेनोन्मार्द्धस्थितागतात् सम्मीलनकालः। मर्द्दखण्डेन मुक्तादुन्मीलनकालः। सम्मीलनमध्यग्रहकालयोरन्तरं प्रथमं स्फुटं मर्द्दार्द्धम्। उन्मीलनमध्यग्रहकालयोरन्तरं द्वितीयम्। यद्यसकृद्विधिना लम्बनं क्रियते तदैवम्। यदा पुनः सकृद्विधिना लम्बनं तदा स्पर्शकालो मोक्षकालोऽपि सकृदेव स्फुटो भवति। किन्तु तत्रायं विशेषः। स्पर्शकाले मोक्षकाले वा पुनर्विक्षिप्तलम्बं कृत्वा तस्मान्नतिः साध्या। तया तत्कालभवो विक्षेपः संस्कृतः सन् स्फुटः स्पार्शिकः। मौक्षिको वा स्फुटो भवति। नचेदेवं तदा स्थूलः। अत्रोपपत्तिः स्थित्यर्धानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। गणितागतो हि दर्शान्तकालो मध्यग्रहकालो भवितुमर्हति चन्द्रार्कयोस्तत्र तुल्यत्वात्। स्थित्यर्द्धेनोनो दर्शान्तकालः स्पर्शकालो भवति। युतो मोक्षकालः। अत्र च द्रष्टुः कर्णोच्छ्रितत्वाल्लम्बनकल्पनम्। अतस्तेन संस्कृतो दर्शान्तो मध्यग्रहकालः स्फुटो भवति। एवं स्पर्शकालोऽपि तत्कालजनितलम्बनेन संस्कृतः स्फुटो भवितुमर्हति। या युक्तिर्मध्यग्रहणकालस्य लम्बनसंस्कारे सैव स्पर्शमोक्षसम्मीलनोन्मीलनकालानां, किन्तु स्पर्शमोक्षकालस्य लम्बनसंस्कारे क्रियमाणे कालान्तरत्वाच्छरः किञ्चिदन्यथा भवति। नतिश्च किञ्चिदन्यादृशी। तत्संस्कृतिजं स्थित्यर्द्धमपि किञ्चिदन्यादृशम्। अतस्तेनोने गणितागते दर्शान्ते तल्लम्बनं धनमृणं वा कर्त्तुं युज्यते। अत उक्तं तत्कालोत्थनतीषुसंस्कृतिभवस्थित्यर्द्धहीनाधिक इत्यादि। यद्यसकृद्विधिना लम्बनं तदा पुनः पुनर्लम्बनं नतिश्च। तया तत्कालशरः स्फुटः स्थित्यर्धार्थं किल क्रियते। तदा स्थित्यर्धं स्फुटं भवति। तदा तत्कालशरोऽपि स्फुटो भवति। स एव स्पार्शिकः शर इति वेदितव्यम्। यदा पुनः सकृद्विधिना लम्बनं तदा पुनः पुनः शरस्य नतेश्चाकरणात् स्पार्शिकः शरः पुनः कर्त्तुं न युज्यते। अत उक्तं किन्त्वत्र स्पर्शावनती पुनश्च तात्कालिकाभ्यां विधुविक्षिप्तिभाभ्यामिति" प्रमिताक्षरा।

इदानीं विशेषमाह।

"भेदं शशाङ्कग्रहणोक्तवत्र स्फुटेषुखेन स्थितिखण्डकेन। हृतोऽथ तेनैव कृतः स्फुटेन भङ्गः स्फुटः स्यादुपरागजातो भानोः। ग्रासाच्च कालानयने फलं यत् स्फुटेन निघ्नं स्थितिखण्डकेन। स्फुटेषुणोनाल्लब्धं तत् स्थित्यर्द्धयुक्तं भवतीष्टकालः" इति सिद्धान्तशिरोमणिः।

"अत्र रविग्रहणे बिम्बवलनभुजकोट्यादीनामानयनं शशाङ्कग्रहणोक्तवत् वेदितव्यम्। किं त्वत्र भुजसाधने विशेषः अत्र पूर्वानयनेन यो भुज आगच्छति। असौ तत्कालस्फुटशरजनितेन स्थित्यर्धेन गुणितः स्फुटेन स्थितिखण्डकेन भाज्यः। स्पर्शमध्यकालयोरन्तरेण भाज्यः इत्यर्थः। फलं स्फुटो भुजो भवति"। "ग्रासोनमानैक्यदलस्य वर्गात् क्षेपकृत्या रहितात् पदं यत्। मध्यान्तरांशैर्विहृतमिति" यत् फलं लभ्यते तस्य स्फुटीकरणम्। तत् फलं स्फुटेन स्थित्यर्धेन स्पर्शमध्यकालयोरन्तरेण गुणितं तत्कालस्फुटशरजनितेन स्थित्यर्धेन भक्तं स्फुटं भवति। तत् खस्थित्यर्धाच्छुद्धमिष्टकालो भवति। स च स्पर्शादग्रतो मोक्षात् पृष्ठतः। तस्मिन् काले नतिसंस्कृतं शरं पुनः कृत्वा ग्रासोनमानैक्यदलस्य वर्गात् क्षेपकृत्येत्यादिना फलं साध्यम्। तत् फलं पुनः स्फुटं कर्त्तव्यम्। एवं यावदिष्टकालः स्फुटो भवति तावदसकृत्कर्म। अत्रोपपत्तिः। भुजानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। यथा चन्द्रग्रहणे स्थित्यर्धं शरमानैक्यार्द्धयोर्वर्गान्तरान्मूलं तथेहाप्यानीतम्। तदस्फुटम्। लम्बनसंस्कारे कृते स्पर्शमध्यग्रहकालयोरन्तरं तत् स्फुटं स्थित्यर्द्धम्। लम्बनान्तरसंस्कृतमित्यर्थः। भुजो हि स्थित्यर्द्धसम्बन्धेनागच्छति। यथा चन्द्रग्रहे मध्यममेव स्थित्यर्द्धम्। तत्सम्बन्धेन यादृशो भुजस्तत्रागच्छति तादृशेनेहापि भवितव्यम्। वासनायास्तुल्यत्वात्। अथ चांशेन निघ्नः स्थितिखण्डकेनेत्येवं यदानीयते तदा स्फुटस्थित्यर्धं बीजं कृत्वा पृथक् आनीयते तदा स्फुटस्थित्यर्धसम्बन्धी भुजः स्यात्। असावसम्यक्। अतस्तस्य तत्कालस्फुटशरजनितस्थित्यर्द्धसम्बन्धीकरणायानुपातः। यदि स्फुटस्थित्यर्धेनैतावान् भुजस्तदा तत्कालजनितस्फुटशरभवस्थित्यर्द्धेन किमिति। फलं स्फुटो भुजो भवति। एतदेव विपरीतं कर्म ग्रासात् कालानयने। "ग्रासोनमानैक्यदलस्य वर्गात्" इत्यादिना यत् फलमागच्छति तन्मध्यमं स्थित्यर्धं बीजम्। तत् स्फुटस्थित्यर्धाद्यावद्भिर्भाज्यते तावदन्तरमिदं भवति। अतस्तत्र फलस्य स्फुटस्थित्यर्द्धपरिणामायानुपातः। यदि मध्यमस्थित्यर्धेनैतावत् फलं तदा स्फुटस्थित्यर्द्धेन किमिति। अत्र यल्लभ्यते स्फुटं फलं तस्मिन् स्फुटस्थित्यर्धाच्छोधिते स्फुटमिष्टकालमानम्" इति प्रमिताक्षरा।

बृहत्संहितायां ग्रासप्रकारभेदे तत्फलानि प्रोक्तानि यथा

"अमृतास्वादविशेषाच्छिन्नमपि शिरः किलासुरस्येदम्। प्राणैरपरित्यक्तं ग्रहतां यातं वदन्त्येके। इन्द्वर्कमण्डलाकारमसितत्वात् किल न दृश्यते गगने। अन्यत्र पर्वकालाद्वरप्रदानात् कमलयोनेः। मुखपुच्छविभक्ताङ्गं भुजङ्गमाकारमुपदिशन्त्यन्ये। कथयन्त्यमूर्तमपरे तमोमयं सैंहिकेयाख्यम्। यदि मूर्तो भविचारी शिरोऽथवा भवति मण्डली राहुः। भगणार्धेनान्तरितौ गृह्णाति कथं नियतचारः। अनियतचारः खलु चेदुपलब्धिः संख्यया कथं तस्य। पुच्छाननाभिधानोऽन्तरेण कस्मान्न गृह्णाति। अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा स गृह्णाति। मुखपुच्छान्तरसंस्थं स्थगयति कस्मान्न भगणार्धम्। राहुद्वयं यदि स्याद्ग्रस्तेऽस्तमितेऽथोदिते चन्द्रे। तत्समगतिनान्येन ग्रस्तः सूर्योऽपि दृश्येत। भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः। प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्वार्धात्। वृक्षस्य स्वच्छाया यथैकपार्श्वेन भवति दीर्घा च। निशि निशि तद्वद्भूमेरावरणवशाद्दिनेशस्य। सूर्यात् सप्तमराशौ यदि चोदग्दक्षिणेन नातिगतः। चन्द्रः पूर्वाभिमुखश्छायामौर्वीं तदा विशति। चन्द्रोऽधःस्थः स्थगयति रविमम्बुदवत् समागतः पश्चात्। प्रतिदेशमतश्चित्रं दृष्टिवशाद्भास्करग्रहणम्। आवरणं महदिन्दोः, कुण्ठविषाणस्ततोऽर्द्धसंछन्नः। स्वल्पं रवेर्यतोऽतस्तीक्ष्णविषाणो रविर्भवति। एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्यैः। राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः। योऽसावसुरो राहुस्तस्य वरो ब्रह्मणायमाज्ञप्तः। आप्यायनमुपरागे दत्तहुतांशेन ते भविता। तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः। याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेन। न कथञ्चिदपि निमित्तैर्ग्रहणं विज्ञायते निमित्तानि। अन्यस्मिन्नपि काले भवन्त्यथोत्पातरूपाणि। पञ्चग्रहसंयोगान्न किल ग्रहणस्य सम्भवो भवति। तैलं च जलेऽष्टम्यां न विचिन्त्यमिदं विपश्चिद्भिः। अवनत्यार्कौ ग्रासो दिग्ज्ञेया वलनयावनत्या च" अथ वेलाभेदे फलम्। "तिथ्यवसानाद्वेला करणे कथितानि तानि मया। षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः। ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः। ब्राह्मे द्विजपशुवृद्धिः क्षेमारोग्याणि सस्यसम्पच्च। तद्वत् सौम्ये तस्मिन् पीडा विदुषामवृष्टिश्च। ऐन्द्रे भूपविरोधः शारदसस्यक्षयो न च क्षेमम्। कौबेरेऽर्थपतीनामर्थविनाशः सुभिक्षं च। वारुणमवनीशाशुभमन्येषां क्षेमसस्यवृद्धिकरम्। आग्नेयं मित्राख्यं सस्यारोग्याभयाम्बुकरम्। याम्यं करोत्यवृष्टिं दुर्भिक्षं संक्षयं च सस्यानाम्। यदतः परं तदशुभं क्षुन्माराऽवृष्टिदं पर्व। वेलाहीने पर्वणि गर्भविपत्तिश्च शस्त्रकोपश्च। अतिवेले कुसुमफलक्षयो भयं सस्यनाशश्च। हीनातिरिक्तकाले फलमुक्तं पूर्वशास्त्रदृष्टत्वात्"।

अथ एकमासे ग्रहद्वयस्य ग्रासभेदस्य च फलम्। "स्फुटगणितविदः कालः कथञ्चिदपि नान्यथा भवति। यद्येकस्मिन् मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः। सबलक्षोभैः संक्षयमायान्त्यतिशस्त्रकोपैश्च। ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ। सर्वग्रस्तौ दुर्भिक्षमरकदौ पापसंदृष्टौ" अथ दिनाद्यंशभेदे ग्रासफलम्।

"अर्धोदितोपरक्तो नैकृतिकान् हन्ति सर्वयज्ञांश्च। अग्न्युपजीविगुणाधिपविप्राश्रमिणोऽयुगाभ्युदितः। कर्षकपाषण्डिवणिक्क्षत्रियबलनायकान् द्वितीयेंऽशे। कारुकशूद्रम्लेच्छान् तृतीयांशे समन्त्रिजनान्। मध्याह्ने नरपतिमध्यदेशहा शोभनश्च धान्यार्घः। तृणभुगमात्यान्तःपुरवैश्यघ्नः पञ्चमे भागे। स्त्रीशूद्रान् षष्ठेंऽशे दस्युप्रत्यन्तहाऽस्तमयकाले। यस्मिन् भागे मोक्षस्तद्भोक्तॄणां शिवं भवति"।

अथायनादिभेदे फलम् "द्विजनृपतीनुदगयने विट्शूद्रान् दक्षिणायने हन्ति। राहुरुदगादिदृष्टः प्रदक्षिणं हन्ति विप्रादीन्। म्लेच्छान् विदिक्स्थितोऽध्वयायिनश्च हन्त्याहुताशभक्तांश्च। सलिलचरदन्तिघाती याम्येनोदग्गवामशुभः। पूर्वेण सलिलपूर्णां करोति वसुधां समागतो दैत्यः। पश्चात् कर्षकसेवकबीजविनाशाय निर्दिष्टः। पाञ्चालकलिङ्गशूरसेनाः काम्बोजोड्रकिरातशस्त्रवार्ताः"

अथ मेषादिराशौ ग्रासफलम्। "जीवन्ति च ये हुताशवृत्त्या ते पीडामुपयान्ति मेषसंस्थे। गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः। पीडामुपयान्ति भास्करे ग्रस्ते शीतकरेऽथवा वृषे। मिथुने प्रवराङ्गना नृपा नृपमात्या बलिनः कलाविदः। यमुनातटजाः सबाह्लिका मत्स्याः सुह्मजनैः समन्विताः। आभीरान् शबरान् सपह्लवान् सह मल्लान् मत्स्यकुरुञ्छकानपि। पाञ्चालान् विकलांश्च पीडयत्यन्नं चापि निहन्ति कर्कटे। सिंहे पुलिन्दगणमेकलसत्त्वयुक्तान् राजोपमान्नरपतीन् वनगोचरांश्च। षष्ठे तु सस्यकविलेखकगेयसक्तान् हन्त्यश्मकत्रिपुरशालियुतांश्च देशान्। तुलाधरेऽवन्त्यपरा-

न्साधून् वणिग्दयाधौतान् मत्स्यकच्छपांश्च । अलिन्यथोदुम्ब-रमद्रचोलान् द्रुमान् सयौधेयविषायुधीयान् । धन्विन्यमा-त्यवरवाजिविदेहमल्लान् पाञ्चालवैद्यवणिजो विषमायुध-ज्ञान् । हन्यान्मृगे तु झषमन्त्रिकुलानि नीचान् मन्त्रौष-धिषु कुशलान् स्थविरायुधीयान् । कुम्भेऽन्तर्गिरिजान् स-पश्चिमजनान् भारोद्वहांस्तस्करान् आभीरान्दरदार्य्यसिंह-पुरकान्हन्यात्तथा बर्ब्बरान् । मीने सागरकूलसागरज-द्रव्याणि मान्यान् जनान् प्राज्ञान् वाय्वुपजीविनश्च भफलं कूर्म्मोपदेशाद्वदेत्" । ताराफलं कूर्म्मविभागशब्दे वक्ष्यते ।

अथ ग्रासभेदनामतत्फले "सव्यापसव्यलेहग्रसन-निरोधावमर्द्दनारोहाः । आघ्रातं मध्यतमस्तमोऽन्त्य इति ते दश ग्रासाः । सव्यगते तमसि जगज्जलप्लुतं भवति मुदितमभयं च । अपसव्ये नरपतितस्कराव-मर्दैः प्रजानाशः । जिह्वेव लेढि परितस्तिमिरनुदो मण्डलं यदि स लेहः । प्रमुदितसमस्तभूता प्रभूततोया च तत्र मही । ग्रसनमिति यदा त्र्यंशः पादो वा गृह्यतेऽथवाप्यर्द्धम् । स्फीतनृपवित्तहानिः पीडा च स्फीतदेशानाम् । पर्य्यन्तेषु गृहीत्वा मध्ये पिण्डीकृतं तमस्तिष्ठेत् । स निरोधो विज्ञेयः प्रमोदकृत् सर्व्वभूता-नाम् । अवमर्द्दनमिति निःशेषमेव संछाद्य यदि चिरं तिष्ठेत् । हन्यात् प्रधानदेशान् प्रधानभूपांश्च तिमिरमयः । वृत्ते ग्रहे यदि तमस्तत्क्षणमाहत्य दृश्यते भूयः । आ-रोहणमित्यन्योऽन्यमर्द्दनैर्भयकरं राज्ञाम् । दर्पण इवैक-देशे सवाष्पनिःश्वासमारुतोपहतः । दृश्येताघ्रातं तत् सु-वृष्टिवृद्ध्यावहं जगतः । मध्ये तमः प्रविष्टं वितमस्कं म-ण्डलं च यदि परितः । तन्मध्यदेशनाशं करोति कुक्ष्या-मयभयं च । पर्य्यन्तेष्वतिबहुलं स्वल्पं मध्ये तमस्तमोऽन्त्या-ख्यम् । सस्यानामीतिभयं भयमस्मिंस्तस्कराणां च" ।

अथौत्पातिकराहुवर्णभेदे फलम् । "श्वेते क्षेमसुभिक्षं ब्राह्मणपीडां च निर्दिशेद्राहौ । अग्निभयमनलवर्णे पीडा च हुताशवृत्तीनाम् । हरिते रोगोल्बणता सस्यानामीतिभिश्च विध्वंसः । कपिले शीघ्रगसत्त्वम्लेच्छ-ध्वंसोऽथ दुर्भिक्षम् । अरुणकिरणानुरूपे दुर्भिक्षावृष्टयो विहगपीडा । आधूम्रे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिं च । कापोतारुणकपिलश्यावाभे क्षुद्भयं विनिर्द्देश्यम् । कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च । विमलकमणिपीताभो वैश्यध्वंसी भवेत् सुभिक्षाय । साचिष्प्रत्यग्निभयं गैरिकरूपे तु युद्धानि । दूर्वाकाण्डश्यामे हारिद्रे वापि निर्दिशे-न्मरकम् । अशनिभयकृद्दाग्नी पाटलकुसुमोपमो राहुः । पांशुविलोहितरूपः क्षत्रध्वंसाय भवति वृष्टेश्च । बालरविकमलसुरचापरूपभृत् शस्त्रकोपाय" । शिरोमध्यग्रासो ग्रासभेदे ग्रासवर्णभेदस्तु स्वाभाविक इत्यविरोधः ।

अथ ग्रहभेददर्शने फलभेदः । "पश्यन् ग्रस्तं सौम्यो घृतमधुतैलक्षयाय राज्ञां च । भौमः समर-विमर्दं शिखिकोपं तस्करभयं च । शुक्रः सस्य-विमर्दं नानाक्लेशांश्च जनयति धरित्र्याम् । रविजः करोत्यवृष्टिं दुर्भिक्षं तस्करभयं च । यदशुभमवलोकना-भिरुक्तं ग्रहजनितं ग्रहणे प्रमोक्षणे वा । सुरपति-गुरुणावलोकितं तच्छममुपयाति जलैरिवाग्निरिद्धः" ।

अथ ग्रासोत्तरपक्षाभ्यन्तरे पुनर्ग्रासे भूकम्पादौ स-पातेन्दुना सूर्यस्येव भौमादिपञ्चकस्याप्याच्छादकत्वेन त-थात्वे औत्पातिकं ग्रहणं तदनिष्टफलानि चोक्तानि यथा । "ग्रस्ते क्रमान्निमित्तैः पुनर्ग्रहो मासषट्कपरिवृद्ध्या । पवनोल्कापातरजःक्षितिकम्पतमोऽशनिनिपातैः । आवन्तिका जनपदाः कावेरीनर्मदातटाश्रयिणः । दृप्ताश्च मनुजपतयः पीड्यन्ते क्षितिसुते ग्रस्ते । अन्तर्वेदीं सरयूं नेपालं पूर्व्व-सागरं शोणम् । स्त्रीन्नृपयोधकुमारान् सह विद्वद्भि-र्बुधो हन्ति । ग्रहणोपगते जीवे विद्वन्नृपमन्त्रिगजहय-ध्वंसः । सिन्धुतटवासिनामप्युदग्दिशं संश्रितानां च । भृगुतनये राहुगते दशेरकाः केकयाः सयौधेयाः । आ-र्य्यावर्त्ताः शिबयः स्त्रीसचिवगणाश्च पीड्यन्ते । सौरे मरुभव-पुष्करसौराष्ट्रा धातवोऽर्बुदान्त्यजनाः । गोमन्तपारियात्रा-श्रिताश्च नाशं व्रजन्त्याशु" ।

अथ मासभेदे ग्रासफलम् । "कार्त्तिक्यामनलोपजीविम-गधान् प्राच्याधिपान् कोशलान् कल्माषानथ शूरसेनस-हितान् काशींश्च सन्तापयेत् । हन्यादाशु कलिङ्गदेशनृ-पतिं सामात्यभृत्यं तमो दृष्टं क्षत्रियतापदं जनयति क्षेमं सुभिक्षान्वितम् । काश्मीरकान् कौशलकान् सपुण्ड्रान् मृगांश्च हन्यादपरान्तकांश्च । ये सोमपास्तांश्च निहन्ति सौम्ये (मार्गे) सुवृष्टिकृत् क्षेमसुभिक्षकृच्च । पौषे द्विजक्षत्र-जनोपरोधः ससैन्धवाख्याः कुकुरा विदेहाः । ध्वंसं प्रजान्यत्र च मन्दवृष्टिं भयं च विन्द्यादसुभिक्षयुक्तम् । माघे तु मातृपितृभक्तवसिष्ठगोत्रान् स्वाध्यायधर्मनिरतान् करिणस्तुरङ्गान् । वङ्गाङ्गकाशिमनुजांश्च दुनोति राहुर्वृष्टिं च कर्षकजनानुमतां करोति । पीडाकरं फाल्गुनमासि पर्व वङ्गाश्मकावन्तकमेकलानाम् । नृत्यज्ञसस्यप्रवराङ्गनानां ध-

तुषकरज्वलनपक्षिणां च । चैत्रे तु चित्रकरलेखकगेयसक्तान् रूपोपजीविनिगमज्ञहिरण्यपण्यान् । पौण्ड्रोड्रकैकयजनानथ चाश्मकांश्च तापः स्पृशत्यमरपोऽत्र विचित्रवर्षी । वैशाखमासि ग्रहणे विनाशमायान्ति कर्पासतिलाः समुद्गाः । इक्ष्वाकुयौधेयशकाः कलिङ्गाः सोपद्रवाः किन्तु सुभिक्षमस्मिन् । ज्यैष्ठे नरेन्द्रद्विजराजपत्न्यः सस्यानि वृष्टिश्च महागणाश्च । प्रध्वंसमायान्ति नराश्च सौम्याः साल्वैः समेताश्च निषादसङ्घाः । आषाढपर्वण्युदपानवप्रनदीप्रवाहान् फलमूलवार्त्तान् । गान्धारकाश्मीरपुलिन्दचीनान् हतान् वदेन्मण्डलवर्षमस्मिन् । काश्मीरान् सपुलिन्दचीनयवनान् हन्यात् कुरुक्षेत्रजान् गान्धारानपि मध्यदेशसहितान् दृष्टो ग्रहः श्रावणे । काम्बोजैकशफांश्च शारदमपि त्यक्त्वा यथोक्तानिमान् अन्यत्र प्रचुरान्नहृष्टमनुजैर्धात्रीं करोत्यावृताम् । कलिङ्गवङ्गान् मगधान् सुराष्ट्रान् म्लेच्छान् सुवीरान् दरदाश्मकांश्च । स्त्रीणां च गर्भानसुरो निहन्ति सुभिक्षकृद्भाद्रपदेऽभ्युपेतः । काम्बोजचीनयवनान् सह शल्यहृद्भिर्बाह्लीकसिन्धुतटवासिजनांश्च हन्यात् । आनर्त्तपौण्ड्रभिषजश्च तथा किरातान् दृष्टोऽसुरोऽश्वयुजि भूरिसुभिक्षकृच्च" ।

अथ मोक्षभेदनामतत्फलानि "हनुकुक्षिपायुभेदा द्विर्द्विः सञ्छर्दनं च जरणं च । मध्यान्तयोश्च विदरणमिति दश शशिसूर्ययोर्मोक्षाः । आग्नेय्यामपगमनं दक्षिणहनुभेद संज्ञितं शशिनः । सस्यविमर्दो मुखरुग् नृपपीड़ा स्यात् सुवृष्टिश्च । पूर्वोत्तरेण वामो हनुभेदो नृपकुमारभयदायी । मुखरोगं शस्त्रभयं तस्मिन् विन्द्यात् सुभिक्षञ्च । दक्षिणकुक्षिविभेदो दक्षिणपार्श्वेन यदि भवेन्मोक्षः । पीड़ा नृपपुत्राणामभियोज्या दक्षिणा रिपवः । वामस्तु कुक्षिभेदो यद्युत्तरमार्गसंस्थितो राहुः । स्त्रीणां गर्भविपत्तिः सस्यानि च तत्र मध्यानि । नैर्ऋतवायव्यस्थौ दक्षिणवामौ तु पायुभेदौ द्वौ । गुह्यरुगल्पा वृष्टिर्द्वयोस्तु राज्ञीक्षयो वामे । पूर्वेण ग्रहणं कृत्वा प्रागेव चापसर्पेत । सञ्छर्दनमिति तत् क्षेमसस्यहार्दिप्रदं जगतः । प्राक्प्रग्रहणं यस्मिन् पश्चादपसर्पणं तु तज्जरणम् । क्षुच्छस्त्रभयोद्विग्नाः न शरणमुपयान्ति तत्र जनाः । मध्ये यदि प्रकाशः प्रथमं तन्मध्यविदरणं नाम । अन्तःकोपकरं स्यात् सुभिक्षदं नातिवृष्टिकरम् । पर्य्यन्तेषु विमलता बहुलं मध्ये तमोऽन्तदरणाख्यम् । मध्याख्यदेशनाशः शारदसस्यक्षयश्चास्मिन् । एते सर्वे मोक्षा वक्तव्या भास्करेऽपि किन्त्वत्र । पूर्वा दिक् शशिनि यथा तथा रवौ पश्चिमा कल्प्या" ।

अथ मोक्षोत्तरं सप्तदिनमध्ये पांशुपातादौ फलम् । "मुक्ते सप्ताहान्तः पांशुनिपातोऽन्नसंक्षयं कुरुते । नीहारो रोगभयं भूकम्पः प्रवरनृपमृत्युम् । उल्का मन्त्रिविनाशं नानावर्णा घनाश्च भयमतुलम् । स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीड़ाम् । परिवेषो रुक्पीड़ां दिग्दाहो नृपभयं च साग्निभयम् । रूक्षो वायुः प्रबलश्चौरसमुत्थं भयं धत्ते । निर्घातः सुरचापं दण्डश्च क्षुद्भयं सपरचक्रम् । ग्रहयुद्धं नृपयुद्धं केतुश्च तदेव संदृष्टः । अविकृतसलिलनिपाते सप्ताहान्तः सुभिक्षमादेश्यम् । यच्चाशुभं ग्रहणजं तत् सर्वं नाशमुपयाति । सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद्ग्रहोऽर्कस्य । तत्रानयः प्रजानां दम्पत्योर्वैरमन्योऽन्यम् । अर्कग्रहात्तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः । नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव" वृ०स० ।

ज्यो०त० 'रविभौमनवांशे तु नित्यं ग्रासमादिशेत् बुधसौरिनवांशे तु मलिनं धूम्रवर्णम् । गुरोरंशकमासाद्य दृश्यते सकलाहतः । शशिशुक्रनवांशे तु प्रावृट्काले महज्जलम् । अन्यत्राव्यक्तभूतौ तौ दृश्येते आदिताम्बरौ"। "अन्यत्र वर्षे तरलौ चन्द्रार्कौ ।

एवं ग्रहणस्य कालभेदेन शुभाशुभसूचकत्वे सामान्यतः स्थिते इदानीं व्यक्तिभेदेन जन्मादिराशिभेदेन ग्रहणस्य दर्शननिषेधतत्फलञ्चोच्यते । राजमा० "सप्ताष्टजन्मरिपुषु (१२) चतुर्थे दशमे तथा । नवमे च तथा चन्द्रे न कुर्याद्राहुदर्शनम् । श्रीपतिव्यवहारनिर्णये वशिष्ठः । "जन्मभे जन्मराशौ च सप्ताष्टमगते तथा । चतुर्थे द्वादशे चन्द्रे न कुर्याद्राहुदर्शनम् । ग्रासदर्शनमात्रेण बाधहानिर्महद्भयम् । जायते मात्र सन्देहस्तस्मात्तत्परिवर्जयेत्" । "जन्मनक्षत्रापेक्षया षष्ठे सप्तमे अर्थात् निधनतारायाम्" ज्यो०रघु० । "जन्मसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे । दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च" । "वैनाशिके भे दृष्टं ग्रहणं सुधांशुभास्करयोः । जनयति रोगं बहुधा क्लेशं वित्तक्षयं चाशु" वराहः । तस्मान्निरस्ता ज्यो०त० तत्रैव 'जन्माष्टमायान्त्यगधर्मसंस्थे निशाकरे जन्मसु तारकासु । कृत्वा तमश्चन्द्रमसं प्रयत्नादश्वं च दद्यात् कनकं द्विजाय" चन्द्रमसमित्युपलक्षणं चन्द्रग्रहे चन्द्रं सूर्यग्रहे सूर्यमभ्यर्च्य इत्यर्थः" ज्यो०रघुनन्दनः ।

ग्रहणं च खराशेः स्थानभेदेन शुभादिसूचकं यथाह ज्योतिषे। "त्रिषडदशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः। द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनीन्द्रैरिति"। गृहचन्द्रोदये विश्वकर्मा "यस्य जन्मगतो राहुर्ग्रसते शशिभास्करौ तज्जातानां भवेत्पीडा ये नराः शान्तिवर्ज्जिताः" तत्रैव पुरा० "सूर्य्यस्य संक्रमोवापि ग्रहणं चन्द्रसूर्य्ययोः। यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा मृतिः। तस्य दानं च होमं च देवार्चनजपौ तथा। उपरागाभिषेकं च कुर्य्याच्छान्तिर्भविष्यति। स्वर्णेन नाग पिष्टेन कृत्वा सर्पस्य चाकृतिम्। ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः"। त्रिजन्मनक्षत्रम् जन्मदशमैकोनविंशति तारा इति। सर्पस्य तदाकारस्य राहोरित्यर्थः। अद्भुतसागरे भार्गवः। "यस्य राज्ञस्य नक्षत्रे स्वर्भानुरुपरज्यते। राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेत्" तच्छान्तिश्च निर्णयसिन्धौ दर्शिता तत एवावगम्या

चन्द्रार्कयोर्ग्रहणे यस्य प्रभोदर्शनं न पर्य्युदस्तं तस्यैव श्राद्धाद्यधिकार इति ति० त० रघुनन्दनेन समर्थितं यथा "ननु ज्योतिःशास्त्रादिना निषेधो हिंसावद्रुपादिकपरोऽस्तु न तु वैधपरः अतएव "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च" इति देवलवचने दर्शनपदश्रवणाद्दर्शने इति स्नानादेर्महाभ्युदयहेतुत्वाद्दर्शनमपि विधेयम्। तथा च संवत्सरप्रदीपे मार्कण्डेयः। "एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽधैर्य्यं नरः। पुण्यमाप्नोति कृत्वा च दानं श्राद्धं विधानतः"। ततश्च तस्यैव प्रकृतत्वेनोपस्थितस्य वैधदर्शनस्य पर्य्युदासो न तु रागप्राप्तदर्शनस्य निषेधोऽप्रकृतत्वेनानुपस्थितेः। एवञ्च पदार्थान्तराकाङ्क्षाविशेषविधिमपहाय तदितरत्र सामान्यमन्वेतीति सर्वत्र पदान्वयनीयादौ सामान्यस्य विशेषेतरपरत्वे बीजम्। यथा "अहरहर्दद्यात्" इति "दीक्षितो न ददातीति" प्रतिषेधात् दीक्षितेतरपरं न रागप्राप्तनिषेधकम्। तदुक्तं "त्रिधैव बाध्यते कर्त्ता विशेषेण प्रतिक्रियम्। योग्यत्वं प्रतिषिद्धत्वं विशेषणपदान्वयैः" "यजमानः पठतीति श्रुत्वा तद्योग्योविद्वान्, दीक्षितो न ददातीति प्रतिषेधाद्दीक्षितेतरः, "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यत्र विशेषणात् स्वर्गकामः कर्त्तेति तेन ग्रस्तचन्द्रादीतरो राहुं दृष्ट्वा स्नायादिति लभ्यते। एवं वैधदर्शनपर्य्युदासेऽपि निन्दाप्रायश्चित्तयोः श्रवणाद्रागप्राप्तदर्शनस्य प्रसज्यप्रतिषेधः सत्यभिगमननियमे पर्व्वसु पर्य्युदस्तत्वेऽपि तत्र रागप्राप्तगमनस्य प्रसज्यप्रतिषेधवदिति" तदेतन्निर्णयसिन्धुकृता निराकृतं यथा "केचित्तु चाक्षुषग्रहणस्य निमित्तत्वेन तद्विषयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना ज्ञातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचर" इति जाबाल्यादिवचनेषु दर्शिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेन निमित्तत्वम्। अन्यथा दर्शौ लक्षणा स्यात्। तेन मेघाच्छादने अन्धादीनां, जन्मभ्रात्रेत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकार" इति। कल्पतरुराह। "दर्शनशब्देन चाक्षुषज्ञानं गृह्यते। न ज्ञानमात्रम् अज्ञातस्य निमित्तत्वासम्भवान्निमित्तमहिम्नैव ज्ञानलाभेन दर्शनपदवैयर्थ्यापत्तेः। तेन चाक्षुषधीयोग्यः कालः पुण्यः। योग्यत्वं च प्रसज्ञानपदेषु चाक्षुषज्ञानप्रतिबन्धकराहित्यं तेन मेघच्छन्ने योग्यताभावान्न स्नानादीति" निर्णयामृतेऽप्येवम्। तदेतत्तुच्छम्। यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति" वाक्यं व्यर्थं स्यात्। चाक्षुषज्ञानाभावेन प्राप्त्यभावात् तत्पूर्वकत्वाच्च निषेधस्य। न चेदं गृह्यास्तपरम् रविचन्द्रयोरस्तानन्तरं रात्रिदिवाग्रहणादिति वाच्यम् तत्पदस्य ग्रहणपरत्वेऽधिकरणत्वायोगान्निमित्तपरत्वे च तद्ग्रहनिमित्तकस्नानादेरस्तात्प्रागप्यभावापत्तेः। अथ तत्रेति रात्रिदिने उच्येते वैश्वदेवीत्यद्गुणभूते अपि तत्र तादृशमन्त्रलिङ्गाभावात्। तयोर्निमित्तत्वेऽधिकरणत्वे शास्त्रप्रयुक्तस्नानाद्यभावापत्तेश्च। किञ्च "नैक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतमिति" मनुवचनं बाध्येत "दृष्टोऽरिष्टप्रदो राहुरित्यादि" च। न चात्र विहिते दर्शने निषेधाप्रवृत्तिवत्पर्य्युदसनीयतापि न युक्तेति वाच्यम् दर्शनस्यानुपादेन विधेयत्वाभावात्। एतच्चाग्रे वक्ष्यामः। तच्चे वा विरुद्धत्रिकद्वयापत्तेः अस्तु सकृद्दर्शनविधानेन सङ्कोच इति चेत् न "मुक्तिं दृष्ट्वा ततः स्नायादिति" मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्ततापत्तेः अस्तु किं नश्छिन्नमिति चेत् न ग्रस्तास्ते "तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरिति" दर्शनोत्तरं भोजनविधानादभ्रस्य पूर्वेद्युः काल एव यावद्दर्शनं भोजननिषेधापत्तिः मध्येऽभ्रीभूतस्य सुतरां यावच्चक्षुःप्राप्तग्रहणप्रसङ्गश्च।

अधावलोकपरतया तत्र स्नानमात्रं विवक्षितं तत् तत्पूर्वमपि निर्बन्धेन स्वीक्रियताम्। एतेन यत्तु कैश्चिदुक्तं स्पर्शस्नाने मुक्तिस्नाने च यस्य दर्शनं विहितं तेनैव कार्यं नान्येन क्त्वाप्रत्ययेन समानकर्त्तृत्वावगतेरिति तन्निरस्तम्। का तर्हि तस्य गतिः इत्थमुद्देश्यविशेषणत्वाद्ग्रहैकत्ववदविवक्षयार्थतः सिद्धस्नानमात्रानुवादत्वे सर्वं सुस्थम्। अशक्त्याद्यनादेश्यग्रहस्यादत्वे वा दर्शनस्यार्थवत्त्वम्। न भोक्तृयोग्यतापि साध्वी दर्शनोत्तरं मेघच्छन्ने योग्यताभावापत्त्या दानाद्यभावापत्तेः। तेन तत्तद्देशावच्छेदेन ज्योतिःशास्त्रवेद्यत्वमेव योग्यता। किञ्च "रजसोदर्शने नारी त्रिरात्रमशुचिर्भवेत्" इत्यत्राप्यन्धस्त्रीणामाशौचाभावप्रसङ्गः। यत्तु वर्द्धमानेनोक्तम् "स्नानोत्तरं ह्यधिकारो न स्नानकाले, स्नानकाले स्नानाभावात्। एवं दर्शनोत्तरं मुक्तिपर्य्यन्तमस्यैव योग्यतेति" तदपि प्रतिज्ञामात्रम्। किञ्च पक्षान्ते "तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नृपेत्यादि" वाक्यवैयर्थ्यापत्तिः। यात् स्नानाभ्यवहारपदस्वारस्यादुदये स्नानविधेः ननु मुक्तिस्नाने शास्त्रीयमेव स्नानं निमित्तं न चाक्षुषम् "चन्द्रसूर्य्यग्रहे नाद्यात् तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" इत्युक्तेन विज्ञायेति स्नानमात्रोक्तेः। यत्तु "मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततःपरमिति" तदपि स्नानमात्रपरम्। "मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते। आकलय्य तु तं कालं स्नात्वा भुञ्जीत शास्त्रतः"। इति गौडनिबन्धे दर्शनात्" मैवम् अस्नानस्य निमित्तत्वाभावेन निमित्तसङ्ग्रहेणैव स्नानलाभे वाक्यवैयर्थ्यात्। पक्षान्तेऽपि तदापत्तेश्च। किञ्च, दर्शनं पुंयोगिविशेषणमुपलक्षणं वा, नाद्यः दर्शनावच्छिन्ने काले स्नानत्वादेर्बाधात्। दर्शनविच्छेदे स्नातमपि स्नानादि न ग्रहणनिमित्तं स्यात्। नान्त्यः, "यावद्दर्शनगोचर" इति यावत्पदवैयर्थ्यप्रसङ्गात् दृष्टग्रहणोत्तरमपि स्नानाद्यापत्तेश्च। स्नानपक्षेऽप्येष दोषस्तुल्य इति चेत्। तुल्योऽसि। यदि स्नानवाचकं पदं श्रूयेत ततस्त्वाम्नायो विचार्येत। इविस्तु श्रूयत इति वैषम्यात् कथं तर्हि स्नानं लभ्यते। संक्रान्तौ स्नायादिति वदर्थादित्यवेहि। अश्रुतत्वादेवनोद्देश्यविशेषणविवक्षातो वाक्यभेदोऽपि। अस्तु तर्हि दृष्टग्रहणं निमित्तमिति चेत्। पक्षान्तेऽन्योत्तरं स्नानापत्तेः। विशिष्टोद्देशे वाक्यभेदाच्च तथाप्येतत्तुल्यमिति चेत् "यावद्दर्शनगोचर" इति वचनेन तन्निषेधात्। तत्र तन्त्यपक्ष इव पक्षान्तेऽपि स्यात्। किञ्च, दर्शनस्य विधिरनुवादो वा। आद्ये ग्रहणोद्देशेन दर्शनविधिस्ततदर्शनविशिष्टस्नानविधिः। नाद्यः, ग्रहणोद्देशेन स्नानविधाने दर्शनविधाने च वाक्यभेदात्। एतेन द्वितीयोऽपि परास्तः दर्शनस्य निमित्तत्वेनाविधेयत्वात् स्नानस्याप्राप्तेः। अन्यथा सोमवमनादौ प्रसङ्गविधिः केन वार्य्येत। अथ नानावाक्येषु कश्चिद्दर्शनविशिष्टस्नानविधिः। कश्चिच्च प्राप्तदर्शननिमित्तोद्देश्य स्नानमात्रविधिः। तत्र, स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तत्प्राप्तौ च निमित्ते सति स्नानमित्यन्योन्याश्रयात्। एवं दर्शनविधौ सति तन्निमित्तकस्नानविधिः सति च प्रधानस्नानविधौ तदङ्गदर्शनविधिः। एवमधिकारे प्रयोजकत्वे च योज्यम्। स्नायात्पूर्वकालत्वविधौ चाक्षेपे च वाक्यभेदः। अन्यथा स्नानोत्तरमपि दर्शनमङ्गं स्यात्। न द्वितीयः। तत्रापि दर्शनग्रहणयोर्निमित्तत्वे स्नानद्वयापत्तेः दर्शनादर्शने नैमित्तिकावृत्तिप्रसङ्गात्। दर्शनविशिष्टग्रहस्य विशिष्टस्यानुवादे वाक्यभेदापत्तेः। न च द्विविरावृत्तिर्वद्विशिष्टं निमित्तमिति वाच्यं आवृत्तिमात्रस्य हि निमित्तत्वे निमेषाद्यावृत्तेरपि तन्त्रापत्तेर्नैमित्तिकत्वभङ्गाद्युक्तं विशिष्टोद्देश्यत्वम्। इह तु ग्रहणमात्रस्य निमित्तत्वे न काचित् क्षतिः। तस्माद्दर्शनवाक्यानां ग्रस्तास्तविषयत्वात् अनादेश्यग्रहणपरत्वाद्वा स्नानस्य चार्थतः प्राप्तेस्तदेव निमित्तम्। तेन मेघाच्छादनेऽप्यादेव स्नानादि भवत्येवेत्युक्तं वेदवाद्यैः संक्षेपेण"।

"प्रागुक्तमनुवचनेनोपरक्त दिवाकरदर्शननिषेधः साक्षाद्दर्शनपरः। अतएव मत्स्यसिद्धान्ते "सर्वैः पटस्थितं पौष्णं स्वक्षतीलाम्बुदर्पणैः। ग्रहणं गुर्विणी जातु न पश्येत्तु पटं विना" पटादिस्थतयैव ग्रहणदर्शनमुक्तम्।

अत्र पूर्वापरवेधः हेमाद्रौ दर्शितो यथा "तपोदग्ध्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्। मासत्रयेण समस्तेन ग्रहणे चन्द्रसूर्ययोः"। प्रकारान्तरं तत्रैवोक्तम्। "द्वादशादि तृतीयान्तो वेध इन्दुग्रहे स्मृतः। एकादशादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः" इदं च पर्वग्रासे, "त्र्यहं खण्डग्रहे तयोरिति" तत्रैवोक्तेः इदञ्च "ग्रस्तास्ते त्रिदिनं पूर्वमिति नारदेन ग्रस्तास्ते विशेषोक्तेर्मुक्ताभिन्नग्रहणपरम्। ज्योतिर्निबन्धे च्यवनः ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम्। यावच्च रविणा भुक्तं भुक्तं भं दग्धकाष्ठवत्"

चन्द्रार्कग्रहणस्य भूच्छायाचन्द्राभ्यामावरणरूपस्याऽपि अमावास्यासंक्रान्तिकालवत् तत्र स्नानदानादौ बहुफलसाधनत्वं स्मृत्यादिषु प्रसिद्धम् तत्रादौ कालमाधवीये यथा निर्णीतं तत् प्रदर्श्यते वृद्धगार्ग्यः "पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम् । ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे" इति तत्र पर्वणोऽन्तिमोभागः स्पर्शकालः प्रतिपद आद्योभागोमोक्षकालः तदुक्तं ब्रह्मसिद्धान्ते "यावत्कालः पर्वणोऽन्ते तावान्प्रतिपदादिमः । रवीन्दुग्रहणाशेषाः स पुण्योभिन्नपार्श्ववेदिति" ग्रहणाशेषाः राहुग्रहणकालः तत्र कर्त्तव्यमाह वृद्धवसिष्ठः "गङ्गातोये च संप्राप्ते इन्दोःकोटी रवेर्दश । गवाङ्कोटिप्रदानेन सम्यग्दत्तेन यत् फलम् । गङ्गास्नाने तत् फलं स्याद्राहुग्रस्ते निशाकरे । दिवाकरे पुनस्तत्र दशसंख्यगुणाकृतमिति" अस्य श्लोकद्वयस्य प्रथमार्द्धमपेक्षितपदाध्याहारेण योजनीयं इन्दोर्ग्रहणे संप्राप्ते सति गङ्गातोये अवगाहनं गोकोटिदानसमं भवति रवेर्ग्रहणे ततो दशगुणं फलम् अवशेषार्थं उपरितनेनार्द्धद्वयेण स्पष्टीकृतः । व्यासोऽपि "इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः । गङ्गातोये तु संप्राप्ते इन्दोः कोटीरवेर्दश । गवाङ्कोटिप्रदानस्य यत् फलं लभते नरः । तत् फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे । दिवाकरे तु स्नानस्य दशसंख्यगुणाकृतम् चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् । स स्नातः सर्वतीर्थेषु किमर्थमटते महीमिति" गङ्गाव्यतिरिक्तमहानदीतोये लक्षगुणदशलक्षगुणत्वं गङ्गातोये तु कोटिगुणदशकोटिगुणत्वम् । ब्रह्मपुराणेऽपि "तिस्रोनद्यो महापुण्या वेणा गोदा च जाह्नवी । गां हरेराङ्घ्रिकात् प्राप्ता गङ्गा इति हि कीर्त्तिताः" हरेः पादादीश्वरस्य शिरसश्च गाम्भुवि प्राप्ता गङ्गा । यद्यपि जाह्नव्येव तादृशी न तु वेणागोदे तथापि छत्रिणो गच्छन्तीति न्यायेन जाह्नव्या सह निर्द्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्धं यद्वा जाह्नवीजलमेव केनचिन्निमित्तेन मध्यगिरिवायुगिर्योरुद्गतमिति मत्वा तयोरपि मुख्यमेव गङ्गात्वन्तासु गङ्गासु स्नानं मुख्यं तदसम्भवे नद्यन्तरेषु स्नायात् तदुक्तं महाभारते "गङ्गास्नानं तु कुर्वीत ग्रहणे चन्द्रसूर्ययोः महानदीषु चान्यासु स्नानं कुर्याद्यथाविधीति" महानद्यो ब्रह्मपुराणे दर्शिताः "गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः । भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतस्त्विति" महानद्युपस्नाने जलान्तराण्याह मनुः "वापीकूपतडागेषु गिरिप्रस्रवणेऽपि च । नद्याःनदे देवखाते सरसीषूद्धृताम्बुनि । उष्णोदकेन वा स्नायात् ग्रहणे चन्द्रसूर्ययोरिति" एतत् सर्वमभिप्रेत्याह व्यासः "सर्वं गङ्गासमन्तोयं सर्वे ब्रह्मसमो द्विजः । सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोरिति" उष्णोदकस्यातुरविषयत्वमाह व्याघ्रः "आदित्यकिरणैः पूतं पुनः पूतं च वह्निना । अतोव्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणेति" गङ्गातोयमारभ्योष्णोदकान्ते पूर्वपूर्वस्योत्तरस्मादुत्कृष्टत्वमुक्तम् । एतद्देशाभिप्रेत्योष्णोदकादिषु समुद्रजलान्तेषु उत्तरोत्तरस्य प्राशस्त्यमाह मार्कण्डेयः "शीतमुष्णोदकात् पुण्यमपारक्यं परोदकात् । भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् । ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिरिति" मासविशेषेण ग्रहणे नदीविशेषो देवीपुराणेऽभिहितः "कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे । मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने । पौषे तु नर्मदा पुण्या माघे संनिहिता शुभा । फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती । वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा । ज्यैष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी । श्रावणे सिन्धुनामा तु तथा भाद्रे तु चन्द्रिका । आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदेति" ग्रहणविशेषे नदीविशेषस्तत्त्वेनाभिहितः । "गोदावरी महापुण्या चन्द्रे राहुसमन्विते । सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ! । नर्मदातोयसंस्पर्शे कृतकृत्या भवन्ति हीति" स्नानवत् अरण्यादिष्वपि पुण्यमाह "स्नात्वा शतक्रतुफलं दद्या सर्वाघनाशनम् । स्नात्वा गोमेधपुण्यं तु पीत्वा सौत्रामणेर्भवेत् । स्नात्वा वाजिमखे पुण्यं प्राप्नुयाद्विचारतः रविचन्द्रोपरागे च अयने चोत्तरे तथेति" । क्षेत्रविशेषमाह । "गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा । कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे" इति ग्रहणे श्राद्धं विहितं विष्णुपुराणे "व्यतीपातस्तथो यावांश्चन्द्रसूर्यग्रहस्तथा । गजच्छाया तु सा प्रोक्ता पितृणां दत्तमक्षयम्" इति महाभारतेऽपि "सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदतीति" । आपस्तम्बोऽपि "चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे" इति । विष्णुरपि "राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् । गुणवत् सर्वकामीयं पितृणा-

सुपतिष्ठते” इति ग्रहणे रात्रावपि स्नानादेर्न निषेधः। तथा च शातातपः “स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेदिति” देवलः “यथा स्नानं च दानं च सूर्य्यस्य ग्रहणे दिवा। सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते” श्राद्धं प्रकृत्य कूर्म्मपुराणे “नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः। बान्धवानां तु मरणे नारकी स्यादतोऽन्यथा। काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु” वारविशेषे योगफलातिशयमाह व्यासः “रविग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा। चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम्। वारेष्वन्येषु यत् पुण्यं ग्रहणे चन्द्रसूर्य्ययोः। तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतमिति” अतिविप्रकृष्टादिवत् ग्रहणस्यापि श्राद्धकालत्वमाह मार्कण्डेयः “विशिष्टे ब्राह्मणे प्राप्ते सूर्य्येन्दुग्रहणे दिने। जन्मर्क्षग्रहपीडासु श्राद्धं कुर्य्यात् तथेच्छयेति”। अत्र च श्राद्धं नाम्नेन किन्तु हेमादिना तदाह बौधायनः “अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं संग्रहे च कुर्य्याच्छूद्रः सदैव हीति” शातातपोऽपि “आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं प्रकुर्व्वीत हेमश्राद्धमथापि वेति” अशौचिनोऽपि ग्रहणे स्नानादि न निषिद्धं तथा च वृद्धवशिष्ठः “सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते” इति स्पष्टा शुद्धिः सर्व्वस्मार्त्तकर्म्मविषया कश्चित्तु प्रोक्तः एतदेवाभिप्रेत्य व्याघ्रपादाह “स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्म्मणि तत्कालस्नातः शुद्धिमवाप्नुयादिति” यत्तु ग्रहणनिमित्तमाशौचं तत्स्नानेन निवर्त्त्यं तदुक्तं ब्रह्मपुराणे “आशौचं जायते नृणां ग्रहणे चन्द्रसूर्य्ययोः। राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः” इति वृद्धवशिष्ठस्मृतेऽपि “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्ज्जयेदिति” ग्रहणस्य आद्यन्तयोः स्नानं विहितं स्मृत्यन्तरे “गृह्यमाणे भवेत् स्नानं गृहीते होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते” होमदानवद्देवार्च्चनमपि स्नानद्वयमध्ये कार्य्यं तदुक्तं ब्रह्मवैवर्त्ते “स्नानं स्यादुपरागादौ मध्ये होमः सुरार्च्चनमिति” तत्काले स्वापादिकं न कुर्य्यात् तदुक्तं मित्रवृद्धे “सूर्य्येन्दुग्रहणं यावत् तावत् कुर्य्याज्जपादिकम्। न स्वपेन्न च भुञ्जीत

स्नात्वा भुञ्जीत मुक्तयोरिति” मोक्षानन्तरभावि यत् स्नानं तस्य शुद्ध्यर्थतया तत् सचेलं विधेयं तदाह वृद्धवशिष्ठः “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। सचेलं तु भवेत् स्नानं सूतकान्नञ्च वर्ज्जयेदिति” ग्रहणकाले ततः पूर्व्वं वा यावत् पक्वं तत्सूतकान्नं तत्तु पश्चादपि न भुञ्जीत”। अत्र विशेषोऽभक्ष्यशब्दे २८०पृ० उक्तस्तावद्विशेषः “आदिमध्यावसानेषु यद्विहितं तस्य फलातिशय उक्तो ब्रह्मपुराणे “उपमर्द्दे लक्षगुणं ग्रहणे चन्द्रसूर्य्ययोः। पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकमिति” अत्र ग्रहणे यद्दानं तत् सत्पात्रे कर्त्तव्यं तदुक्तं महाभारते। “अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणामिति” पात्रलक्षणमाह याज्ञवल्क्यः। “न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितमिति” पात्रे सत्यासत्यत्वादाह बौधायनः “श्रोत्रियोऽश्रोत्रियो वापि पात्रं वाऽपात्रमेव वा। विप्रस्तुतोऽपि वा विप्रो ग्रहणे दानमर्हतीति”। अस्ति सूर्य्यग्रहणं निशि चन्द्रग्रहणमिति हि प्रसिद्धिः सर्व्वजनीना, तादृशे ग्रहणे यत्कर्त्तव्यं तदुक्तं यत्तु कालविपर्य्यासेन छायामात्रं ज्योतिःशास्त्रमात्रप्रसिद्धं ग्रहणं तत्र स्नानादिकं न कर्त्तव्यं तदुक्तं निगमे “सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचिदिति” ग्रस्तास्तमये जाबालिराह “संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः। चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचरः” इति ग्रस्तास्तमनपर्य्यन्तं दर्शनगोचरत्वात् तावत् पुण्यकालो भवति ग्रहणे भोजनव्यवस्थामाह मनुः। चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः। अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनीति” ग्रहे ग्रहणकाले स्पर्शमारभ्य मोक्षपर्य्यन्तो ग्रहणकालः तस्मिन् काले न भुञ्जीत किन्तु राहुणा चन्द्रसूर्य्ययोर्मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत यदा तु ग्रस्तास्तमयस्तदा परेद्युः शौ विमुक्तौ दृष्ट्वा स्नात्वा भुञ्जीत। न केवलं ग्रहणकाल एव भोजनाभावः किन्तु ग्रहणात्प्रागपि तदाह व्यासः “नाद्यात् सूर्य्यग्रहात् पूर्व्वमह्नि सायं शशिग्रहात्। ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाद्विमुक्तयोः। मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा। अमुक्तयोरस्तगयोरद्यात् दृष्ट्वा परेऽहनीति”। पूर्व्वकाले भोजननिषेधे विशेषः अभक्ष्यशब्दे २८०पृ०उक्तस्तावद्विशेषः। “ग्रहणस्य भोजने प्रायश्चित्तमुक्तं कात्यायनेन” चन्द्रसूर्य्य-

हे भुक्त्वा प्राजापत्येन शुध्यति"। ग्रस्तास्तमये विशेषमाह भृगुः "ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। परेद्युरुदये दृष्ट्वा स्नात्वाभ्यवहरेन्नरः" इति वृद्धगार्ग्योऽपि "सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ। तदहर्नैव भुञ्जीत रात्रावपि कदाचनेति"। विष्णुधर्मोत्तरेऽपि "अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति" ननु मेघाद्यन्तर्धाने चाक्षुषदर्शनं न सम्भवतीति न दर्शनशब्देन शास्त्रीयज्ञानस्य विवक्षितत्वात् तदाह वृद्धगौतमः "चन्द्रसूर्यग्रहे नाद्यात्तत्किञ्चनाहनि पूर्वतः। तयोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रीयविज्ञानसम्भवात्तदैव भोजनं प्रसज्येतेति चेन्न "परेद्युरुदये दृष्ट्वा स्नात्वाभ्यवहरेन्नरः" "अहोरात्रं न भोक्तव्यमिति" वचनद्वयेन तदप्रसक्तेः यत्तु "स्कन्दपुराणे" "यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत्। भोक्तव्यं तत्र पूर्वाह्णे नापराह्णे कथञ्चन। पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्। तदा दिवा न कर्त्तव्यं भोजनं पिप्पलाद नेति" तदिदं यामत्रयाभिप्रायं "चन्द्रग्रहे तु यामांस्त्रीनिति" विशेषस्य वृद्धगौतमेनाभिधानात्। पापक्षयकामो ग्रहण दिने उपवसेत् तदाह दक्षः "अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः। अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यत" इति पुत्री तु नोपवसेत् तदाह नारदः "संक्रान्त्यामुपवासञ्च कृष्णैकादशिकादिने। चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृहीति" ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव "अहोरात्रं न भोक्तव्यमिति भोजनप्रतिषेधात्"। कालमा०।

ग्रहणश्राद्धे विशेषः नि॰ सि॰ "सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु। गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्। एतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्" इति वायुपु॰ विज्ञानेश्वरोऽप्याह "ग्रहणश्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदय इति। "सूतके मृतके भुङ्क्ते गृहीते शशिभास्करे। छायायां हस्तिनश्चैव न भूयः पुरुषो भवेत्" इत्यापस्तम्बेन भोजननिषेधात् अयं च निषेधः श्राद्धभोक्तुः। अत्र ग्रहणनिमित्तकश्राद्धे नैवामासंक्रान्त्यादिनिमित्तकानां सिद्धिः"। प्रागुक्तवचनैरशौचाभ्यन्तरेऽपि स्नानादिकर्मविधानात् "स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितमिति" निर्मूलं वदन्तो गौडाः परास्ताः नि॰ सि॰। अशौचिनां ग्रहणकाले शुद्धिरविशेषात्कन्यादोषापरचरणादिसर्वकालकर्मविषया मदनरत्नेऽप्येवम्। रजस्वलायास्तु भावार्थदीपिकायाम् भेदः। "न स्नातकादिदोषोऽस्ति ग्रहे होमजपादिषु। ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृतवारिणेति" अत्र "स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला। पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्"। इत्यादि मिताक्षरोक्तो विधिर्ज्ञेयः" नि॰ सि॰।

ग्रहणदिने वार्षिकं श्राद्धं हेमाद्रिना कार्य्यम् यथाह प्रयोगपारिजाते गोभिलः। "दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्। अन्नेनासम्भवे हेम्ना कुर्य्यादामेन वा सुतः" इति। अत्र दर्शरविग्रहशब्दाः प्रदर्शनार्थाः न्यायसाम्यात्। तेन चन्द्रग्रहेऽपि सपिण्डादि वार्षिकमन्नादिना तद्दिन एव कार्य्यमिति" मदनपारिजाते व्याख्यातम्। इत्थं चन्द्रोदयेऽप्येवं तेन यानि "आमश्राद्धं तु कुर्वीत मासंवत्सरात्यये" इति। "अन्ने नैशार्द्धिके कुर्याद्धेम्ना वाऽऽमेन न क्वचिदिति" मरीचिलौगाक्षादिवचनानि तानि ग्रहणदिनातिरिक्तविषयाणि निर्णयामृतेऽप्येवम्। यानि तु "ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे"। तथा "ग्रस्तावेवास्तमानन्तु रवीन्दू प्राप्नुतो यदि। प्रत्यब्दं तु तदा कार्य्यं परेऽह्न्येव सर्वदा"। "चन्द्रसूर्योपरागे च तथा श्राद्धं परेऽहनि" इत्यादीनि वचनानि तानि महानिबन्धेष्वप्यनुपलम्भान्निर्मूलानि। प्रत्युत पूर्वोक्तवचनेभ्यस्तद्दिन एव श्राद्धयुक्तमित्यलम्" नि॰ सि॰।

"ग्रहणादिसप्तदिनपर्य्यन्तमागमे दीक्षोक्ता शिवार्चनचन्द्रिकायां ज्ञानार्णवे। "मन्त्राद्यारम्भणं कुर्य्याद्ग्रहणे चन्द्रसूर्य्ययोः। ग्रहणाद्यपि देवेशि कालः सप्तदिनावधीति"। रत्नसागरे "सतीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणि। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्"। अत्र सूर्य्यग्रहणमेव शस्तम्। "सूर्य्यग्रहणकाले तु नान्यदन्वेषितम्भवेत्। सूर्य्यग्रहणकालेन समो नान्यः कदाचन। न मासतिथिवारादिशोधनं सूर्य्यपर्वणीति" तत्रैव कालोत्तरवचनात्। "चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम्। वनस्थस्य च या दीक्षा दारिद्र्यं सम्प्रजायते" इति तत्रैव योगिनीतन्त्रे निषेधाच्च" नि॰ सि॰।

"पुरश्चरणचन्द्रिकायाम्। "चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शादिमोक्षपर्य्यन्तं जपेन्मन्त्रं समाहितः। जपाद्दशांशतो होमस्तथा होमाच्च तर्पणम्। तर्पणस्य दशांशेन मार्ज्जनं कथितं किल। मार्ज्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। जपार्चापूर्वको होमस्तर्पणञ्चाभिषेचनम्। भूदेवपूजनं पञ्चप्रकारोक्ता पुरक्रिया। होमाशक्तौ जपं कुर्य्याद्धोमसंख्याचतुर्गुणम्"। अविशेषतया तन्त्रमाले च।

४निन्दायाम् हेम० ५पङ्कक्षोले ६व्यसने ७दृष्टनीतौ च मेदि० उपरज्यते मिथ्यासम्बन्धेन सम्बध्यते ऽनेन करणे घञ्। आध्यासिकसम्बन्धेन सम्बद्धे ८विशेषणभेदे। यथा घटत्वोपरागेण घटमानम्। घटत्वं हि घटस्य आध्यासिकसम्बन्धेन सम्बद्धं विशेषणम्।

**उपराज** अव्य० सामीप्ये ऽव्ययी० अच् समा०। १राज्ञः सामीप्ये उपगतो राजानं सादृश्येन अत्या० स० टच् समा०। २राजतुल्ये त्रि० स्त्रियां ङीप्। ततः काश्या० भवार्थे ठञ्। औपराजिकः तद्भवे त्रि० स्त्रियां ङीप्। तदर्थे ञिठोऽपि रूपमेकं स्त्रियां तु टाप् इति भेदः

**उपराधक** त्रि० उप+राध-णिच्—कर्त्तरि ण्वुल्। उपसेवके। ततः मनोज्ञा० भावे कर्म्मणि च वुञ्। औपराधक्य तद्भावे तत्कर्म्मणि च न०।

**उपराम** पु० उप+रम-घञ् वा वृद्धिः। १उपरतौ २त्यागे ३निवृत्तौ ४संन्यासे च। अव्ययी०। ५रामसामीप्ये अव्य०

**उपराव** पु० उप+रु-घञ्। समीपोच्चारितशब्दे

**उपरि** अव्य० ऊर्द्ध+रिल् उपादेशश्च। प्रथमाद्यन्तमीसप्तम्यन्तार्थवृत्तेः ऊर्द्धशब्दस्यार्थे। ऊर्द्धं पुरम् ऊर्द्धा वा वसतिः ऊर्द्धात् पुरात् ऊर्द्धाया वा वसतेरागतः ऊर्द्धे पुरे ऊर्द्धायां वा वसतौ वसति इत्याद्यर्थे सर्व्वत्र उपरीत्येव। "तदुपर्य्यपि बादरायणः" शा० सू०। "नीचानाः स्थुरुपरि बुध्न एषामस्मे" ऋ० १,२४,७, "अधः स्विदासीदुपरि स्विदासीत्" १०,१२९,५, "तनूपा अस्मात्तोपरि पाहतन्त्रः" वेद०। "त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः" मेघ०। "अथाङ्गुलस्योपरि पुष्पवृष्टिः" "परस्परस्योपरि पर्य्यचीयत" रघुः। "जित्वा सांयानिकस्येव यदि सोपरिजोऽभवत्" रघु०। "उपरिजतरुजानि याचमानाम्" किरा०। "भिन्ना ततस्त्वादुपरिष्टा मह्येन" यजु० ७,२, अस्य सामीप्ये द्वित्वं उपर्य्युपरि समीपोर्द्धे अव्य० "उपर्य्युपर्य्यभ्रमुचां वितानैः" माघः। "अभितस्तमोःकार्य्यौ धिक्सु पर्य्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इत्युक्तेः तद्योगे सर्व्वत्रैव द्वितीया। "उपर्य्युपरि लोकं हरिः" सि० कौ०। उपर्य्युपरि गच्छन्तः शैलराजसुदङ्मुखाः" भा० आ० ४१४ अ०। बाहुलकात् क्वचित्। "उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः"।

**उपरिचर** त्रि० उपरि+चर-ट। १ऊर्द्धं चरे विहगादौ। २राजभेदे पु०। स च वसुनामा चेदिदेशपतिः सम्राजपूजापरस्तकः। तस्येतिहासं च भा० आ० ६३अ०। "राजोपरिचरो नाम धर्म्मनित्यो महीपतिः" इत्युपक्रम्य तुष्टेन शक्रेण तस्मै आकाशगं विमानं दत्तं तत्र चरणादुपरिचरनामेत्युक्तं यथा "देवोपभोग्यं दिव्यञ्च आकाशे स्फाटिकं महत्। आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते। त्वमेकः सर्व्वमर्त्त्येषु विमानवरमास्थितः। चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव। ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम्। धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतम्। लक्षणं चैतदेवेह भविता ते नराधिप। इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत्। वैशम्पायन उवाच। यष्टिञ्च वैणवीं तस्मै ददौ वृत्रनिषूदनः। इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालनीम्। तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा। प्रवेशं कारयामास गते संवत्सरे तदा। ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः। प्रवेशः क्रियते राजन् यथा तेन प्रवर्त्तितः। अपरेद्युस्तथा चास्याः क्रियतेऽच्छ्रयो नृपैः। अलङ्कृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः। माल्यदामपरिक्षिप्ता विधिवत् क्रियतेऽपि च। भगवान् पूज्यते चात्र हंसरूपेण शङ्करः। स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः। स तां पूजां महेन्द्रस्तु दृष्ट्वा देवः कृतां शुभाम्। वसुना राजमुख्येन प्रीतिमानब्रवीत् प्रभुः। ये पूजयिष्यन्ति नरा राजानश्च महं मम। कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः। तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति। तेषां स्फीतो जनपदो मुदितश्च भविष्यति। एवं महात्मना तेन महेन्द्रेण नराधिपः। वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः। उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः। भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते। वरदानमहायज्ञैस्तथा शक्रोत्सवेन च। संपूजितो मघवता वसुश्चेदीश्वरो नृपः। पालयामास धर्म्मेण चेदिस्थः पृथिवीमिमाम्। इन्द्रप्रीत्या चेदिपतिश्चकारेन्द्रमहं वसुः। पुत्राश्चास्य महावीर्य्याः पञ्चासन्नमितौजसः। नानाराज्येषु तान् पुत्रान् स सम्राडभ्यषेचयत्। महारथो मागधानां विश्रुतो यो बृहद्रथः। प्रत्यग्रहः कुशाम्बश्च यमाहुर्म्मणिवाहनम्। मावेल्लश्च यदुश्चैव राजन्यश्चापराजितः। एते तस्य सुता राजन् राजर्षेर्भूरितेजसः। न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च। वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः। वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम्। उपतस्थु-

महात्मानं गन्धर्वाप्सरसोत्तमम् । राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् । पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः । अरौत्सीच्चेतनायुक्तः कामात् कोलाहलः किल । गिरिं कोलाहलं तन्तु पदा वसुरताडयत् । निश्चक्राम ततस्तेन प्रहारविवरेण सा । तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम् । तस्माद्विमोक्षणात् प्रीता नदी राज्ञे न्यवेदयत् । यः पुमानभवत्तत्र तं स राजर्षिसत्तमः । वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः । चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः”। [ऊर्द्ध्वभवे ।

**उपरितन** त्रि० उपरि भवः ष्युल् तुट् च स्त्रियां ङीप् ।

**उपरिमर्त्त्य** अव्य०वेदे बा० अव्ययी० । मर्त्त्यस्योपरीत्यर्थे “यशोदेवमुपरिमर्त्त्यं कृधि” ऋ० ८,१९,१२, “उपरिमर्त्त्यं मर्त्त्यानामुपरि” इति भा० । लोके तु षा ईत० । मर्त्त्यापरीत्येव । अतएव “तदुपर्य्यपि बादरायणः” शा०सू० । “आत्मोपरिपातुकन्तु” नै० इत्यादौ षा षष्ठीसमासप्रयोगः ।

**उपरिमेखल** पु० उपरि ऊर्द्ध्वा मेखला यस्य । गोत्रप्रवर्त्तके ऋषिभेदे ततः गोत्रार्थे इञ् औपरिमेखलि तद्गोत्रे पुंस्त्री बहुषु तु अस्त्रियाम् यस्कादि०तस्य लुक् । उपरिमेखलाः

**उपरिष्टाद्बृहती** स्त्री वैदिके बृहतीच्छन्दोभेदे “यद्यर्थं बृहती तृतीयो द्वादशकः । आद्यश्चेत् पुरस्ताद्बृहती द्वितीयश्चेन्न्यङ्कुसारिणी उपरिष्टाद्बृहती स्कन्धग्रीवा वा अन्त्यश्चेदुपरिष्टाद्बृहती” सर्वानुक्रमणिका० ५ख०। एवमुपरिष्टाद्बृहत्यपि वैदिके बृहतीच्छन्दोभेदे ।

**उपरिष्टात्** अव्य०ऊर्द्ध्व+नि०रिष्टातिल् उपादेशश्च। उपरिशब्दार्थे “उपरिष्टादाज्यस्याभिघारयति” शत०ब्रा० १, ६,१,२१,“पुरुष उपरिष्टात् पञ्चदशतितिष्ठति” १२,२,६,४, “तस्योपरिष्टाद् हंसस्य बलाका संन्यषीदत” भा०द० २०५अ०विप्रस्योपरिष्टादुभयतः कुर्वः” श्रुत०।

**उपरिसद्** पु०उपरि सीदति सद–क्विप् । राजसूययज्ञे सोमनेत्रके द्रुवसन्नामके ११देवभेदे । “सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो द्रुवस्वद्भ्यः स्वाहा” “ये देवा सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा” यजु०९,३५,३६।२ऊर्द्ध्वस्थे त्रि०

**उपरिसद्य** न० उपरि सद्यं सदनमुपवेशनम् सद–भावे बा० यत् । ऊर्द्ध्वोपवेशने अन्तरिक्षोपवेशने “उपरिसद्यं वा एष जयति योऽजयन्नरिक्षसद्यम्” शत० ब्रा०२,१, २२, उपरिसद्यम् अन्तरिक्षसद्यमाकाशे उपवेशनम्”भा०।

**उपरीतक** पु०“एकपादमूरौ कृत्वा द्वितीयं स्कन्धसंस्थितम् । नारीं कामयते कामी बन्धः स्यादुपरीतकः” रतिम० उक्ते शृङ्गारबन्धभेदे

**उपरुद्ध** त्रि०उप+रुध+क्त । १निरुद्धे २आहृते च “अलघुविलम्बिपयोधरोपरुद्धाः”माघः“उपरुद्धाः निरुद्धा आहताश्च” मल्लि०३प्रतिरुद्धे च । “वृत्तं हि राघामुपरुद्धवृत्तम्” रघुः ४भूतादिवेशयुक्ते च ।

**उपरूपक** न० उपगतं रूपकं दृश्यकाव्यम् सादृश्येन अत्या०स०। नाटकभेदे तद्भेदाश्च अष्टादश यथाह सा० द० “नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा । संलापकं श्रीगदितं शिल्पकञ्च विलासिका । दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च” अष्टादश प्राहुरुपरूपकाणि मनीषिणः । विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्” तल्लक्षणानि तत्तच्छब्दे वक्ष्यन्ते

**उपरोध** पु०उप+रुध–घञ् । १आवरणे“शरत्प्रमृष्टाम्बुधरोपरोधम्” रघुः । २प्रतिबन्धे च “अन्येषामपि मैत्रोपजीविनां त्वमुपरोधं करोषि”भा०आ०३अ० । “तपोधननिवासिनामुपरोधो मा भूत्”शकु० ३अनुरोधे च । भावे ल्युट् उपरोधनमप्युक्तार्थेषु न० ।

**उपरोधक** न० उप+रुध–ण्वुल् । १वासगृहे शब्दरत्ना०। २उपरोधकर्त्तरि ३आवरके ४प्रतिबन्धके ५अनुरोधकर्त्तरि च त्रि०स्त्रियां टाप् अत इत्त्वम् ।

**उपल** पु० उप+ला–आदाने क उपलीयते गिरिरस्मिन् वा स्त्री वा० ड, पल–गतौ अच् पलः ओः शिवस्य पलः बोधक इत्यपरे । १पाषाणे“रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्” मेघ० “परिस्फुरन् शतम्नीव सचक्राः सगुडोपलाः”भा०व०२८३अ०२शालग्रामे “भिषगुपलप्रक्षिणो नना” ऋ० ९,११२,३ । “उपलेषु बालुकासु प्रक्षिपन्ति”भा०३रत्नमात्रे मेदि० “दलयार्पितामितमहोपलप्रभाः “शुकाङ्गनीलोपलनिर्म्मितानाम्” “नीलोपलस्यूतविचित्रधातुः” माघः “मध्यमोपलनिभे लसदंशौ” किरा० । ४शर्करायां स्त्री । उपराति वारि रा–दाने क वा रस्य लः । ५मेघे निरु०। जलाभावे उपरोऽपि मेघे

**उपलक्षक** त्रि० उप+लक्ष–ण्वुल् । १उल्लापके “मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते” नीतिः उपादानलक्षणया स्वस्वेतरबोधके २शब्दे च यथा काकेभ्योरक्ष्यतामन्नमित्यादौ काकशब्दः उपघातकत्वेन काकतदितरबोधकत्वात् उपलक्षकः ।

**उपलक्षण** न० उपलक्ष्यते स्वं स्वेतरच्चानेन उप+लक्ष–करणे

रेति” छा०उ०। “यदमते रतिस्तामनुभवति इत्यादि संयोगात्तदुपसदैः समानतामेति उपसदाञ्च पयोव्रतनिमित्तं सुखमस्ति अल्पभोजनीयानि चाहानि आसन्नानीति यथाशोऽशनादीनामुपसदाञ्च सामान्यम्” शा०भा०। “पयोव्रतत्वं पयोभक्षणमात्रम् यस्ते यान्यहान्यभोजनीयानि तानि प्रसिद्धानि उपसत्सु क्रियमाणासु यथाशः खास्थ्यविशेषः अशनादिषु सोऽस्तीति प्रसिद्धमित्यल्पसुखनिमित्तत्वं तत्रैकदेशत्वञ्च सामान्यम्” आ०गि०

**उपसदन** न०उप+सद–ल्युट्। १सेवायामुपसेवने २आनुगत्यादिना प्राप्तौ “तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि” भा०व० २०८ अ० “प्रतिगृह्य च तान् सर्वान् द्रोणश्चैव समब्रवीत्। रहस्येकः प्रतीताक्षा कृतोपसदनांस्तथा” आ० १३२अ०सामीप्ये अव्ययी०। ३तत्समीपे अव्य०। “धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव!। यदोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह” रामा०। अत्राव्ययीभावस्यापि यत्नेन समासः कार्यः।

**उपसदी** स्त्री उप+सद–बाहुलकात् क गौ० ङीष्। सन्ततौ धारायाम्। “स्वष्टेऽस्योपसद्यां मा च्छेत्सीत् प्रजाता च पशुभिश्चायितम् शत०१४,६,४,२१। अस्य यजमानस्य उपसद्यां सन्ततौ” भा०। सन्ततिश्च द्वेधा कालिकी दैशिकी च। तत्र समानानेककालिककार्य्यमात्रधर्मत्वं कालिकसन्ततित्वम्। विभिन्नकालीनघटपटादिकार्य्यमात्रवृत्तिधर्मघटत्वादौ सन्ततित्ववारणाय समानेति सामान्यस्यान्वयितावच्छेदकधर्मेण। तेन सत्त्वद्रव्यत्वादिना घटपटयोः समत्वेऽपि न क्षतिः। सत्त्वद्रव्यत्वादिकमादाय तद्वारणाय कार्य्यमात्रेति। एककालोत्पन्नेषु बहुषु घटेषु तद्वारणाय अनेककालिकेति। दैशिकसन्ततित्वञ्च समानानेकदेशवृत्तिकार्य्यमात्रधर्मत्वमितिभेदः। तत्र कालिकसन्ततेः प्रवाहादिपदेन व्यपदेशः यथा ज्ञानप्रवाहः, दुःखप्रवाहः इत्यादि दैशिकसन्ततौ तु श्रेणिप्रभृतिशब्दव्यवहारः यथा वृक्षश्रेणी वृक्षपङ्क्तिरित्यादि। उभयसन्ततौ तु सन्ततिधारादिशब्दप्रयोगः यथा ज्ञानधारा सुखधारा दुःखसन्ततिरित्यादि एवं जलधारा तैलधारा तैलसन्ततिरित्यादि। तादृशधर्मश्च सुखत्वदुःखत्वज्ञानत्वादिकं इक्षत्वतैलत्वादिकञ्च। उभयविधापि सन्ततिः पुनर्द्विविधा अविच्छिन्ना विच्छिन्ना च देशकालयोरव्यवधानेऽविच्छिन्ना यथा धारावाहिक स्थले ज्ञानादिधारा। तयोर्व्यवधाने विच्छिन्ना यथा विच्छिद्य विच्छिद्य जायमानदुःखानाम्। विच्छिन्नसन्ततिमादायैव स्थितिप्रवाहः। सुखदुःखसन्ततिरित्यादिव्यवहारः।

**उपसद्य** त्रि०उपसदं सेवामर्हति यत् उप+सद–कर्मणि वा० यत् वा। १सेवनीये २नैकट्येन प्राप्ये च “भरेषु हव्यो नमसोपसद्यो गन्ता” ऋ० २,२३,१३। “उपसद्याय मीढुष आस्ये जुहुता हविः” ऋ० ७,१५,१।

**उपसद्वन्** त्रि० उप+सद–क्वनिप् स्त्रियां ङीप् वश्चान्तादेशः। १उपसन्ने २सेवके च। कर्मणि क्वनिप्। ३सेव्ये च। “नमस्ते अस्तु मीढुषे नमस्त उपसद्वने” अथ०खी०२,५,८।

**उपसद्व्रत** न० उपसत्सु विहितं व्रतम्। उपसद्विहिते पयोव्रते। “आपूर्य्य मासमेतस्य द्वादशाहमुपसद्व्रती भूत्वा” छ०उ०। “उपसत्सु व्रतमुपसद्व्रतम् उपसदः प्रसिद्धाः ज्योतिष्टोमे। तत्र स्तनोपचयापचयद्वारेण पयोभक्षणं व्रतं तत्र च तत्कर्मानुपसंहारात् केवलमिति कर्माव्यतानुष्ठं पयोभक्षणमात्रमुपादीयते। उपसद्व्रती पयोव्रती सन्नित्यर्थः” शा०भा०।

**उपसन्न** त्रि० उप+सद–क्त। १उपस्थिते, २निकटागते ३उपसेवके च ४आनुगत्येन नैकट्यप्राप्ते “ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः” भा०शा०२८९ अ०। “भगवन्नुद्धौ मतिजन्मजले सुखदुःखसङ्के पतितं व्यथितम्। कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम्” “तस्मै स विद्वानुपसन्नाय–प्रोवाच तत्त्वतो ब्रह्मविद्याम्” श्रुतिः।

**उपसमाधान** न० उप+सम–आ–धा–ल्युट्। राशीकरणे, “शिवासचितिशरीरोपसमाधानेत्यादि” पा०। “उपसमाधानं राशीकरणम्” सि०कौ०। २समिधः प्रक्षिप्य ज्वालने। “विवाहाग्निमुपसमाधाय पश्चादस्याः” आश्व०गृ०१,८,९. “उपसमाधाय समिधःप्रक्षिप्य प्रज्वाल्य” ना०वृत्तौ। अग्निमुपसमाधाय” गो०सू० “उपसमाधाय ज्वालयित्वेति सं तत्त्वे च समापूर्व्वधाञ्धातोस्तदर्थदर्शनात् तदार्थत्वम्।

**उपसमिध(ध्)** अव्य०समिधः समीपे अव्ययी०वा बहुव्री०। समिधः समीपे।

**उपसम्पत्ति** स्त्री उप+सम्+पद–क्तिन्। अभिनवत्वेन सम्पत्तौ। “प्रथमोऽचिरोपसम्पत्तौ” पा० “अभिसम्पत्तौ अभिनवत्वे” सि०कौ०। सम्पत्तिशब्दानुरूपाभावः सि०कौ०

**उपसम्पन्न** त्रि०उप+सम्–पद+क्त। १प्राप्ते २मृते च हेम०। “श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्” मनुः।

**उपसम्भाषा** स्त्री उप+सम्+भाष–भावे अ। उपसान्त्वने। “भाषणोपसम्भाषाज्ञानयत्नेत्यादि” पा० “उपसम्भाषा उपसान्त्वनम्” सि०कौ०।

**उपसर** पु० उप+सृ "प्रजने सर्त्तेः" पा० अप्। गर्भग्रहणार्थं स्त्रीपशुषु पुम्सां गमने। "प्रजननं प्रथमगर्भग्रहणम्। गवामुपसरः" सि० कौ०। उपचारात् २नैरन्तर्य्येणनिर्गमने "धीनामुपसरं इहा" भट्टिः "धीनामुपसरं नैरन्तर्य्येण निर्गमनम् इहा उपसर इव उपसरः नैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुंसामभिगमनमुच्यते स च नैरन्तर्य्येण भवति" जयमङ्गलः।

**उपसरण** न० उप+सृ–ल्युट्। १उपसर्पणे २समीपगमने च। "यस्तु भयाद्वा भेषजवेगं प्रवृत्तमप्रवाहादिनिरुन्धि तस्योपसरणं हृदि कुर्व्वन्ति दोषाः" "परिस्रावः प्रवाहिका हृदयोपसरणं विबन्धः" सुश्रु०। कर्म्मणि ल्युट्। २उपसर्त्तव्ये उपगम्ये च। "अथ खल्वायोःक्षत्त्रविदुपसरणान्युपासीत" छा० उ०। "उपसरणानि उपसर्त्तव्यानि उपगन्तव्यानि ज्ञेयानि" भा०।

**उपसर्ग** पु० उप+सृज–घञ्। १रोगविकारे २उपद्रवे, शुभाशुभसूचके ३दिव्यादिविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयोऽभिधाः प्रादयस्तूपसर्गकाः। द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे ४प्रादिषु च। "उपसर्गाः क्रियायोगे" पा०। "अत्र प्रादीनामन्वयश्च प्रत्येकमुपसर्गसंज्ञोपलक्षणाय योगग्रहणम्। तेन निर्गतः सेचको यस्मादिति वाक्ये निःसेचक इत्यादौ न षत्वम्" शब्देन्दु०। ते च द्वाविंशतिविधा यथा, प्र, परा अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः। निस् दुस् इति सान्तौ "निसस्तपतावनासेवने" पा० सूत्रे निस इति निर्देशात्। निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य चाप्रत्ययस्य" इति भाष्योक्तेश्च "निरःकुष इति" "इदुदोरधिकरणे" इति च पा० निर्देशात् रान्तावपि" मनो०। निर्दुरोरभेदारोपेण क्वचिद्विंशतिवाचकवचनं द्रष्टव्यम्। "तस्य त्रिधा प्रवृत्तिः "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा"। क्रमेणोदाहरणानि यथा। प्रादत्ते प्रस्तुते प्रणमतीति। अपि च। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्"। "विभाषोपसर्गे" "द्व्यन्तरुपसर्गेभ्योऽप ईत्" पा०।

प्रादयस्तूपसर्गा न सार्थकाः, सार्थकाश्च चादयो निपाता वाचकत्वात् उपसर्गास्तु न तथा किन्तु द्योतका इति नैयायिकाः। वैयाकरणास्तु उभयेऽपि द्योतका इति मेनिरे तदेतत् वै० भू० दर्शितम् "प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम् वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते। "द्योतकाः प्रादयो येन निपाताश्चादयस्तथा। उपास्येते हरिहरौ लकारो दृश्यते यथा" येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः। अयं भावः। ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः भातीत्यत्रापत्तेः। नोपसर्गार्थः तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थान्वयापत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुभवतीत्यादौ अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः गौरवात्। तथा च धातोरेव विद्यमानत्वादिवाचकस्य तथा उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्य्यग्राहकत्वमेव द्योतकत्वमिति। तच्च चादिष्वपि तुल्यम् चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। स्वयं युक्त्यन्तरमाह। उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थः? विशिष्टस्य? धातुमात्रस्य? वा। नाद्यः तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्म्मकत्वस्यास्य धातोरुपासनारूपफलवाचकत्वेनाभावादकर्म्मकत्वापत्तेस्ततः कर्म्मणि लकारो न स्यात्। न द्वितीयः गौरवात्। तृतीये त्वागतं द्योतकत्वं तात्पर्य्यग्राहकत्वस्वाभाव्यात् इति भावः। दृश्यते इत्यत्र कर्म्मणीति शेषः। तद्वादिष्वपि तुल्यमित्याह। "तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः। विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः"। (अन्यत्र) साक्षात्क्रियते अलङ्क्रियते उरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तदर्थे कर्म्मणि लकारसिद्धये तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवद्द्योतकत्वमेषामपरिहार्य्यम्। यद्यपि कृधातोः सकर्म्मकत्वमस्त्येव तथाप्यलमर्थेऽप्यकर्म्मकता न स्यात्। अन्यथा वायुर्विकुरुते सैन्धवा विकुर्वते इत्यत्रापि स्यादिति भावः। यत्तु साक्षात्कारादि निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोरिति" कोषस्वरसात् तदनुकूलो व्यापार एव धात्वर्थोऽस्तु अस्मदुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्म्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्म्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति। किञ्च प्रादीनां वाचकत्वे भूयान् प्रकर्षः कोऽर्थो निचय इतिवद्-

स्यात् म, कोऽयोनिरित्यपि स्यात् । अथवान्यते प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव द्योतकता तेषां स्यादिति । साधकान्तरमभिप्रेत्याह । विशेषणेति । शोभनः सन्नश्च योद्दृश्य इति वच्छोभनश्च दृश्य इत्यस्यान्वयापत्ते स्तुल्ययमाधेयत्वादिति भावः। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासम्भवः । अन्यथा राज्ञा पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यस्यापत्तेरित्यभिप्रेत्याह आद्येति । धवखदिरयोः समुच्चय इति वद्धवस्य च खदिरस्य चेत्येव स्यादिति भावः । ननु प्रातिपदिकार्थयोरभेदान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह । "पदार्थः सदृशान्वेति विभागेन कदा च न । निपातैतरसङ्घोषे प्रमाणं किं विभावय" । (सदृशा) सदृशेन समानाधिकरणेनेति यावत् । (अन्वेति)अभेदेनेति शेषः । (विभागेन) असदृशेन असमानाधिकरणेनेति यावत् । अयमर्थः समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवञ्च । अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः अतएव घटो नास्तीत्यादौ घटपदं तत्प्रतियोगिनि लाक्षणिकमिति नैयायिकाः। अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह । "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव । इत्यादावन्वयो न स्यान्न पाश्च श्रवणं ततः" । अतोऽस्य सदृशैः शरैः रसवदुदीच्यानुद्धरिष्यन्नित्यर्थः । अयञ्चोस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे च सङ्गच्छते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः । तथाहि । उस्रैरिति करणे तृतीया । न चोस्रोऽत्र करणम् इवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यम् अप्रकृत्यर्थत्वात् । इवशब्दस्य चासत्त्वार्थकतया तदुत्तरतृतीयाया असम्भवात् । सम्भवे वा श्रवणप्रसङ्गात् । उस्रपदोत्तरतृतीयानर्थक्यप्रसङ्गाच्चेत्याह । सुपां चेति । सुपां श्रवणञ्चेत्यर्थः । चकारादुस्रपदोत्तरतृतीयानन्वयः समुच्चीयते इत्यादाविवादिपदात् "वागर्थाविव सम्पृक्तौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र वागर्थयोर्वन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः इवार्थस्य कर्मत्वान्वयबोधासम्भवश्च संगच्छते । यदि च विशेषणविभक्तिरभेदार्थी साधुत्वमात्रार्था वा तदापि इवशब्दस्य वाचकत्वेऽन्वय एव उस्रसदृशपदार्थयोः समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात् । बाधादभेदेनापि न सः । नह्युस्राभिन्नसदृशाभिन्नः शर इत्यर्थ इष्टः" ।

उत्पातरूप उपसर्गश्च त्रिविधः "अतिलोभादसत्याद्वा नास्तिक्याद्वाऽप्यधर्मतः । नरापचारान्नियतमुपसर्गः प्रवर्त्तते । ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः । ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान् । तएव त्रिविधा लोके उत्पाता देवनिर्म्मिताः । विचरन्ति विनाशाय रूपैः सम्भावयन्ति च" गर्गः । "उपसर्गभये चैव सद्यः शौचं विधीयते" पराश॰ । उपद्रवरोगश्चाप्युपसर्गः सुश्रु॰उक्ताः "देवताप्रहृता ये देवद्रोहादभिशस्ताः अथर्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च" "उपसर्गोद्भवो रोगा ये चाप्यागन्तवः स्मृताः" "चौर्यं कृत्वोपसर्गाः प्रभूताः" सुश्रुतः उपद्रवशब्दे विवृतिः । "उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम" देवीमा॰ । तस्मै प्रभवति सन्तापा॰ तेन निर्वृत्तम् वा ठञ् । औपसर्गिक तत्र पर्य्याप्ते तेन निर्वृत्ते च त्रि० । औपसर्गिकात्यन्तमरकपीडायाम् शु॰त॰ ।

**उपसर्ज्जन** त्रि॰ उप+सृज-ल्युट् । १देवाद्युपद्रवे "निर्घाते भूमिचलने ज्योतिषामुपसर्ज्जने" मनुः । २अप्रधाने गौणे विशेषणे "चोपसर्ज्जनस्य" "गोस्त्रियोरुपसर्ज्जनस्य" पा० । "उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते" मनुः "उपसर्ज्जनमप्रधानम्" कुल्लू॰ । "अनुपसर्ज्जनात्" "आचार्य्योपसर्ज्जनश्चान्तेवासी" पा॰ उपसृज्यतेऽनेन करणे ल्युट् । ३संमार्गसाधने त्रि॰ स्त्रियां ङीप् । "अथैक उपसर्ज्जनीभिरेभिः" शत॰१,२,२,२, "पिष्टसमार्ज्जनार्थास्तु अपस्तु पिष्टसमार्ज्जनार्थत्वोपसर्ग साधनानि उपसर्ज्जन्यः" भा॰ । "प्रथमानिर्द्दिष्टमुपसर्ज्जनम्" पा॰उक्ते । समासविधायकशास्त्रे ४प्रथमान्तपदनिर्द्दिष्टे । "एकविभक्ति चापूर्व्वनिपाते" विग्रहवाक्ये ऽनियतविभक्तिकं तदुपसर्ज्जनसंज्ञम् इत्यर्थक पाणिनिसूत्रोक्ते ५शब्दभेदे च "उपसर्ज्जनं पूर्व्वम्" पा॰ समासे उपसर्ज्जनस्य पूर्व्वप्रयोगः यथा "द्वितीया श्रितेत्यादि" पा॰सूत्रे द्वितीयेति प्रथमान्तम् पदं तदेव प्राक्प्रयोज्यम् यथा कष्टं श्रित इत्यादि वाक्ये कष्टश्रित इत्यादि

**उपसर्पण** न॰ उप+सृप-भावे ल्युट् । समीपगमने "न तावदयमुपसर्पणकालः" विक्र॰ । "मचिकोपसर्पणमावसमित्यादि" सुश्रु॰ ।

**उपसर्पिन्** त्रि॰ उप+सृप-गतौ णिनि । समीपगन्तरि

तपःसिद्धा दान्ताः शमपरायणाः । तयोर्भयाद्द्रुवुः सर्वे वैनतेयादिवोरगाः । मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः । शून्यमासीज्जगत् सर्वं कालेनेव हतं तदा । ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ । उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ । प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ । संलीनानपि दुर्गेषु निन्यतुर्यमसादनम् । सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ । तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः । निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा । उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा । हाहाभूता भयार्त्ता च निवृत्तविपणापणा । निवृत्तदेवकार्य्या च पुण्योद्वाहविवर्जिता । निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा । अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना । निवृत्तपितृकार्य्यञ्च निर्वषट्कारमङ्गलम् । जगत् प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा । चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः । जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दोपसुन्दयोः । एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा । निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः" २११अ० । तत तिलोत्तमासृष्टिमुपवर्ण्य तस्यास्तत्समीपयानं तयोस्तदासक्तिमुक्त्वा तत्कृतान्योन्ययुद्धेनान्योन्यवधः २१२अ० उक्तः यथा "ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती । वेषमाक्षिप्तमाधाय रक्तेनैकेन वाससा । नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती । शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ । तौ तु पीत्वा परं पानं मदरक्तान्तलोचनौ । दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः । तावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता । उभौ च काममत्तावुभौ प्रार्थयतस्तु ताम् । दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना । उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् । वरप्रदानमत्तौ तावौरसेन बलेन च । धनरत्नमदाभ्याञ्च सुरापानमदेन च । सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ । मदकामसमाविष्टौ परस्परमथोचतुः । मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत । मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत । नैषा तव ममैषेति तत्र तौ मन्युराविशत् । तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ । तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा । प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ । अहं पूर्वमहं पूर्वमित्यन्योन्यं निजघ्नतुः । तौ गदाभिहतौ भीमौ पेततुर्धरणीतले । रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ" । सुन्दोपसुन्दन्यायः ।

उपसूर्य्यक न० उपगतं सूर्य्यं चन्द्रं वा संज्ञायां कन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ ।

उपसृष्ट न० उप+सृज–क्त । १मैथुने । २व्याकरणोक्ते प्रादुपसर्गयुक्ते, "स्रुषट्श्नोरुपसृष्टयोः" पा० । ३विसृष्टे ४उपद्रुते च त्रि० । ५राहुग्रस्ते चन्द्रेऽर्के पु० "नैवेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" मनुः ६बाधिते "उपसृष्टा इव क्षुद्राधिष्ठितभवना" काद० । ७व्याप्ते च "रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः" रघुः । [करणे ।

उपसेक पु० उप+सिच–भावे घञ् । जलादिसेचनेन आर्द्री-

उपसेचन त्रि० उप+सिच–ल्यु । उपसेककर्त्तरि "त्वयं कोशास उपसेचनास" ऋ० ७,१०१, ४. उच् । उपसेक्तृतत्पार्थे त्रि० "लोकेभ्य उपसेक्तारमवकारम्" यजु० ३०, १२, स्त्रियां ङीप् । भावे ल्युट् । १उपसेके न० "दुहन्त्यूधरुपसेचनाय कम्" ऋ० १०,७६,७, "पर्ज्जन्यादुपसेचनात् कृता" कात्या० ८,५,२६, भा० कर्त्तरि ल्युट् । २उपसेचके त्रि० स्त्रियां ङीप् "वेति स्नामुपसेचनी" ऋ० १०,२१,२. उपसेचनी उपरिक्षरणशीला आहुतिः भा० । करणे ल्युट् । ३तत्साधने

उपसेवक त्रि० उप+सेव–ण्वुल् । उपभोगादिना १सेवनकर्त्तरि २भोगप्रसक्ते । "अदत्तादाननिरतः परदारोपसेवकः" याज्ञ० ३उपेत्य सेवके च ।

उपसेवन न० उप+सेव–भावे ल्युट् । १उपभोगप्रसक्तौ । "न हीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम्" मनुः २समीपस्थित्या सेवने च । "निरताहं सदा सत्ये ! भर्तृणामुपसेवने" भा० व० २३२ अ० ३तत्तत्कर्म्मणि अनन्यासक्तौ "अश्रोत्रियगणाया-सविद्याद्योपसेवनात्" "एवंविधानां द्रव्याणामन्येषाञ्चोपसेवनात्" सुश्रु० । भावे अ उपसेवा । तत्रार्थे स्त्री । "गोभिरश्वैश्च यानैश्च तथा राजोपसेवया" । "परदारोपसेवा च शारीरं त्रिविधं स्मृतम्" "विषयोपसेवा याऽजस्रम्" मनुः ।

उपसेविन् त्रि० उप+सेव–णिनि । उपसेवके "अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । तेषां सततसक्तानां विषयाननुपसेविनाम्" मनुः । "ये हितं वाक्यमसूयन्त्यविपरीतोपसेविनः" सुश्रुत० । "श्वदाका पुलिनवनान्तरोपसेवी" सुश्रु० । स्त्रियां ङीप् ।

उपसोम पु० उपगतः सोमम् अत्या० स० । सोमोपगते सोमयाजिनि । अत्र तत्पुरुषत्वात् द्वन्द्वत्वादल्लोदा-

न्यासा" इति भ॰ भा॰ ४वेदाप्रयुक्ते अनार्षे च । "अनुतद्दुपस्थिते" पा॰। "उपस्थितोऽनार्षः" सि॰कौ॰ "उद्धृत्य स्वरेण चित्ते उपगते ५ज्ञाते "तौ ज्ञौ गुरुणेत्यनुपस्थिता" इ॰र॰उक्ते दशाक्षरपादके ६छन्दोभेदे स्त्री "उपस्थितमिदं ज्सौ तगौ यदि गश्च स्यात्" इति छ॰ र॰ उक्ते त्रयोदशाक्षरपादके ७छन्दोभेदे न॰ । ८सेविते त्रि॰ । भावे क्त सेवने ९उपगमने न॰ । तेन जीवति वेतना॰ ठक् । औपस्थितिक सेवनोपजीविनि त्रि॰

**उपस्थिति** स्त्री उप+स्था—क्तिन् । १उपसेवने २उपगतौ ३स्मृतौ च "आसत्तिरव्यवधानेन पदजन्यपदार्थोपस्थितिः" का॰ इ॰ आसत्तिशब्दे उपसर्गशब्दे च उदा॰ ।

**उपस्थूण** अव्य॰ स्थूणायां तत्समीपं वा अव्ययी॰ । १स्थूणायामित्यर्थे २तत्समीपे च तत्र भवः परिमुखा॰ ञ्य । औपस्थूण्य तद्भवे त्रि॰ । उपगता स्थूणाम् अत्या॰ स॰ । ३स्तम्भोपगते त्रि॰ ततो भवार्थे अण्, न ञ्य इति भेदः

**उपस्थेय** त्रि॰ उप+स्था—मैत्र्यर्थत्वात् कर्मणि यत् । उपसेव्ये "मातृवत् तस्योपस्थेयं चेत्" कात्या॰ १७,१,२, "यदीदृशं रह विभैरुपस्थेयैरुपस्थितः" रामा॰ ।

**उपस्नेह** पु॰ उप+स्निह—घञ् । क्लिन्नस्य नैकट्यसम्बन्धेन क्लेदे "मूलयुक्त उपस्नेहात् प्रविश्य कुरुतेऽङ्कुरम्" । "आस्य मातुराहाररसवीर्यमभिवहन्ति तेनोपस्नेहेनास्याभिवृद्धिर्भवति" । "सर्वशरीरावयवानुसारिणीनां रसवाहानां विदग्धतानां धमनीनामुपस्नेहो जीवयति" सुश्रु॰ ।

**उपस्पर्श** पु॰ उप+स्पृश—घञ् । १स्पर्शे, २स्नाने च । उपस्पृश्यन्ते इन्द्रियाण्यत्र आधारे घञ् । विधिना जलपानपूर्वके मुखादिस्पर्शयुक्ते ३वैधाचमने तत्र हि "त्रिःप्राश्याऽपो द्विरुन्मृज्य मुखमेतानुपस्पृशेत् । आस्यनासाक्षि कर्णांश्च नाभिवक्षःशिरोऽंसकान्" छन्दो॰ आस्यनासिकादिस्पर्शो विहित इति तस्य तथात्वम् । "तथेत्युपस्पृश्य पयः पवित्रम्" रघौ आचमनार्थे उपात्स्पृशतेः प्रयोगात् । भावे ल्युट् । उपस्पर्शनम् तत्रार्थे न॰ "अथात उपस्पर्शनम्" कात्या॰ ५,१०,२०

**उपस्रवण** न॰ उप+स्रु—भावे ल्युट् । सम्यक्क्षरणे उपरतं स्रवणम् प्रा॰स॰ । १विरतस्रवणे रजोनिवृत्तौ "पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासीतोपस्रवणात्" का॰२५,११,१२, "ज्योतिष्टोमादौ दीक्षितस्य पत्नी रजस्वला दीक्षारूपाणि मङ्गलादीनि निधाय सिकतासु आसीत आ रजःस्रावविरमणात्" कर्कः ।

**उपस्वत्व** न॰ उपगतमनुदर्शितकालेनैव प्राप्तं स्वत्वं यत्र । स्वत्वाश्रयीभूतभूम्यादिभ्य उत्पन्नशस्यादिद्रव्ये । लोकव्यवहारः । अन्यस्य द्रव्यस्य प्रतिग्रहार्जनाधीनं स्वत्वं न तु उत्पत्तिकालात्, अस्य तु तत्काले एव स्वत्वमस्त्येव तथात्वम् ।

**उपस्वावत्** पु॰ सत्राजितो नृपस्य पुत्रभेदे । "सत्राजितोऽथ त्वाभवन् भार्यास्तासां शतं सुताः । ख्यातिमन्तस्त्रयस्तेषां भङ्कारस्तु पूर्वजः । वातोत्रातपतिश्चैव उपस्वावांस्तथैव च" हरिवं॰ ३८अ॰

**उपस्वेद** पु॰ उप+स्विद—करणे घञ् । १यज्ञादिसमीपस्थानात् जाते ऊष्मणि "तयोरङ्गानि निदधुः प्रहृष्टाः परिचारिकाः । सोपस्वेदेषु भाण्डेषु पञ्च वर्षशतानि च" भा॰ आ॰ ६६अ॰ "सोपस्वेदेषु ऊष्मवत्सु तत्र ह्यग्न्यन्तर्जलभृता मात्रं घनीभवतीति" नी॰क॰ "अलावुमध्यादिप्रकृतबीजं यत्नेन गोप्यताम् । सोपस्वेदेषु पात्रेषु इतपूर्वेषु भागशः" भा॰व॰१०६अ॰ । भावे घञ् । २उपतापे

**उपहत** त्रि॰ उप+हन—क्त । १तिरस्कृते "करोत्यवज्ञोपहतं पृथग्जनम्" किरा॰ । "उपहतं तिरस्कृतम्" मल्लि॰ । २दूषिते "कृमिभिरात्मोपहताङ्गलिभिः" कुमा॰ "आगसा उपहता दूषिता" मल्लि॰ । ३विनाशिते ४उत्पातग्रस्ते अशुद्धद्रव्यसंयोगेन ५अशुद्धे च "शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम्" विष्णुः । ६अभिभूते "मन्युमुपहतः सहसा" किरा॰ ।

**उपहति** स्त्री उप+हन—क्तिन् । १उपघाते । २कार्यासामर्थ्यप्रयोजकापाटवे ३प्रतिहनने च ।

**उपहत्नु** त्रि॰ उप+हन—क्नु । उपहन्तरि "मृगं न भीममुपहत्नुमुग्रम्" ऋ॰ २,३३,११,

**उपहन्तृ** त्रि॰ उप+हन—तृच् स्त्रियां ङीप् । उपघातके (कटुकः) "तन्वगुरुमेदसामुपहन्ता चेति" सुश्रु॰ ।

**उपहरण** न॰ उप+हृ—ल्युट् । १परिवेषणे २उपायनदाने च

**उपहर्तृ** त्रि॰ उप+हृ—तृच् स्त्रियां ङीप् । परिवेषणकर्त्तरि "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" मनुः । २उपायनदातरि च ।

**उपहव** पु॰ उप+ह्वे—अप् सम्प्र॰ गुणः । आह्वाने, "वीणामुपहरं दृष्ट्वा तेऽन्योन्योपहवाः सुहृदाम्" भट्टिः । "अध्वर्युर्होतर्युपहवं काङ्क्षते" आ॰श्रौ॰ ५,७,४, "प्रतिस्थाप्योपहवमिड्डाऽवेचेत" ६,१२,१,

**उपहव्य** पु॰ उपहूयतेऽत्र उप+ह्वे—बा॰ आधारे यत् । यज्ञ-

दशस्तोमकेषु पञ्चसु क्रतुषु मध्ये क्रतुभेदे। ते च क्रतवः कात्या० २२, दर्शिताः यथा। "सप्तदशाः पञ्च".६, "वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्तीत्यर्थः" कर्कः। "उपहव्योऽनिरुक्तो ग्रामकामस्य" ७ "उपहव्य इति विशेषसंज्ञा स ग्रामकामस्य भवति स चानिरुक्तश्च" कर्कः। "ऋतपेयोऽभिशस्यमानस्य" ८ "अन्तिकेनाभिशस्य मानस्याप्युपहव्यो भवति" कर्कः "स्थापत्येऽग्नौ दक्षिणा तं ब्रह्मणे ददाति" ९, इत्युपक्रम्याग्रे चत्वारस्तत्र दर्शिताः।

**उपहसित** न० उप+हस–भावे क्त। उपहासे (ठाट्टाकरा) निन्दासूचके हासभेदे। कर्मणि क्त। २हासेन सूचितनिन्दे त्रि०।

**उपहस्त** पु० उपहस्ति–भावे अच्। हस्तेन यद्दृव्यं प्रतिपद्यते तेन जीवति वेतना० ठञ्। औपहस्तिक तदुपजीविनि त्रि०।

**उपहस्ति** हस्तेन उपग्रह्णाति उप+हस्त–णिच् नामधातुः उभ० सक० सेट्। उपहस्तयति ते उपा(ज)जीहस्तत् त।

**उपहस्तिका** स्त्री उपगता हस्तम् अत्या० स० संज्ञायां कन् अत इत्वम्। (वेट्या) वस्त्रादिनिर्मिते ताम्बूलाद्याधारपात्रभेदे। "उपहस्तिकायास्ताम्बूलं कर्पूरसहितसद्भुत्य मह्यं दत्त्वा" दशकु०।

**उपहार** पु० उप+हृ–घञ्। (भेट) १उपढौकने उपायने "ततः सपर्यां सपशूपहाराम्" "रत्नपुष्पोपहारेण छायामानर्च पादयोः" रघुः कर्मणि घञ्। २उपढौकनीये उपायनद्रव्ये "बभ्रुपीत्वा भवनशिखिभिर्दत्तनृत्योपहारः" मेघ० उपगतः हारम् अत्या० स०। ३हारसमीपस्थे तदुपयोगके द्रव्ये। अव्ययी०। ४हारसमीपे अव्य०। उभयत्र "उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्" नै०। "ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्" कुमा०। [प्रवर्त्तोयत। कुन्तलदेशे हेम०।

**उपहालक** पु० हले प्रसृतः वा० वुण् उपगतो हालको हल-

**उपहास** पु० उप+हस–भावे घञ्। निन्दासूचके हासे (ठाट्टा) "कमलस्योपहासस्य सद्यःप्राप्तासि पश्य माम्" रघुः

**उपहास्य** त्रि० उप+हस–कर्मणि ण्यत्। उपहासेन निन्दनीये "गमिष्याम्युपहास्यताम्" रघुः।

**उपहित** त्रि० उप+धा–क्त। १निहिते २अर्पिते ३समीपस्थापिते ४आरोपिते च। "वसनमुपहितशोभं तूर्णमायादयोध्याम्" भट्टिः। "पुष्पं प्रवालोपहितं यदि स्यात्" कुमा०। ५उपाधिसङ्गते उपलक्षिते "अन्तःकरणोपहितं चैतन्यं जीवः अज्ञानोपहितचैतन्यमीश्वरः" वेदान्तप०।

**उपहूत** त्रि० उप+ह्वे–क्त संप्रसारणे दीर्घः। समाहूते आचितादित्वाद्गतिरूर्ध्वकत्वेऽपि नान्तोदात्तता।

**उपहूति** स्त्री उप+ह्वे–क्तिन् संप्रसारणे दीर्घः। आह्वाने "षट्कप्रथाद्विहितोपहूतयः" माघः।

**उपहृत** त्रि० उप+हृ–क्त। १उपढौकिते उपहाररूपेण दत्ते "उपहृतपशुरुद्रः" सि० कौ०।

**उपहोम** पु० उपगतः होमं प्रधानहोमम् अत्या० स०। प्रधानयागसमीपे क्रियमाणः पूर्वं होतव्ये अग्निसोमादिदशदेवताके प्रत्येकं दशाहुतिके दशदक्षिणाके होमभेदे। स च शत० ब्रा० ११.४,३.८, कण्डिका १७ पर्यन्तेषु दर्शितः। "सैतानुपहोमानपश्यत्" इत्युपक्रम्य "अग्निरन्नाद इत्यादि१" "सोमो राजेत्यादि२" "वरुणः सम्राडितिः३ "मित्रः क्षत्रमिति४ "इन्द्रो बलमिति ५" "बृहस्पतिर्ब्रह्मेति ६" "सविता राष्ट्रमिति७" "पूषा भगमिति८" "सरस्वती पुष्टिमिति९" "त्वष्टा रूपाणीति १०" इत्येतद्दश देवता उक्ता "तावत्यता दश देवता, हवींषि दशाहुतयोदश, दश दक्षिणाः" इति यथोक्तविशेषणतया दर्शितः।

**उपह्वर** उप+ह्वृ–आधारे अ। निर्जने रहस्योपगमाधारे "उपह्वरे पुनरिन्द्रियजयं धर्ममिमम्" दशकु०। "यत्सोमपह्वरे विदत्" ऋ० ८,६९,६, "यन्नास्पह्वरे नद्यः" ऋ० ८,९६,१४, "उपह्वरे अत्यन्तगुह्यस्थाने" भा०। २अन्तिकस्थाने "कर्मान्तिके जोष्ठ्याः समानीतामुपह्वरम्" भा० व० ३०८ अ०। ३भूप्रदेशमात्रे च "उपह्वरे यदुपरा अपिन्वत्" ऋ० १,६२,६, "कौटिल्यवचनगतिराचिनात् गतिमात्रं लक्ष्यते उपह्वरन्ति गच्छन्त्यस्मिन् भः इत्युपह्वरो भूप्रदेशः" भा०। कर्मणि च। ४गन्तव्ये "उपह्वरेषु यदचिध्वम्" १,८७,२। "उपह्वरेषु गन्तव्येषु" भा०। ५प्रान्तभागे। "उपह्वरे गिरीणां संगथे च" ऋ० ८,६,२८ "उपह्वरे प्रान्तभागे" भा०।

**उपह्वान** न० उप+ह्वे–ल्युट्। १आह्वाने २मन्त्रोच्चारणे आह्वाने च "द्यावापृथिव्योरुपह्वाने षडवत्तम्" कात्या० २,४,१९, "आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम्" १०,६,२२,

**उपांशु** अव्य० उप+अंश–उ। १निर्जने "परिचेतुमुपांशु धारणाम्" रघुः। "उपांशु विजने" अमरः०। २अप्रकाशे च। "जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः" इत्युक्तलक्षणे ३मन्त्रादेर्जपभेदे पु०। जपोहि त्रिविधः नरसिंहपु० उक्तः।

"त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः । त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यदोच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्वाक्यं जपःप्रोक्तः स वाचिकः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् । शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः" । तेन स्वरादिसुव्यक्तवर्णोच्चारणवान् वाचिकः स्वयंमात्रश्रवणयोग्यः किञ्चिच्छब्दवान् उपांशुः । जिह्वोष्ठचालनमन्तरेण वर्णार्थानुध्यानवान् मानसः" व्या०त० । हारीतः "यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्वाचा जपयज्ञस्तु वाचिकः । शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । शब्दार्थचिन्तनाभ्यास तदुक्तं मानसं स्मृतम्" "तेषामुत्तरोत्तरफलतारतम्यमाह" मनुः "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः" "उपांशुदेवतां यजत्यनिरुक्तं वा उपांशु इति शत० ब्रा० २,३,५,२, उक्तेः अनिरुक्तमात्रे ४मौने । "उपांशु वै रेतः सिच्यते" शत० ६,२,२,२, मैथुनकाले मौनविधानात् तस्योपांशुत्वम् । ६निभृते च "यस्य त्वेकमुपांशु व्रतम्" भा० आ० २अ० । परमश्रवणायोग्यतया निभृतमित्यर्थः नील०क०

**उपांशुयाज** पु० यज–घञ् बाहुलकात् प्रयाजादिवत् न कुत्वम् । उपांशु अनुच्चैर्यो याजः । यागभेदे तत्र शत० ब्रा० १,६,२,१ दर्शयित्वा "एतेन वै देवाः उपांशुयाजेन यं यमसुराणामकामयन्त तमुपत्सर्य्य वज्रेण वषट्कारेणाघ्नंस्तत एवैष एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजते" तत्फलमुक्तम् । "उपांशुयाजमन्तरा यजति" प्रयाजादियागेतिकर्त्तव्यतायां श्रुतिः ।

**उपाक** पु० उप+अक–अच् । परस्परं समीपगते सन्निहिते "आसुष्वयन्ती यजते उपाके" यजु० २९,११, "उपाके परस्परसमीपगते" वेददी० । "आ भन्दमाने उषसा उपाके" ऋ० २,३,६, "आभन्दमाने उपाके" १,१४२,७, २अन्तिके च । "दूरे उपाकचक्षसम्" ऋ० ८,६,२५, "उपाक इत्यन्तिकनाम" भा० ।

**उपाकरण** न० उप+आ+कृ–ल्युट् । उपावर्त्तयितव्ये स्तोत्रप्रैषे "नापव्याहरेदोपाकरणादुपावर्त्तध्वमित्येवाध्वर्युरुद्गातृभ्यः" शत० ब्रा० ४,२,२,१२, "यदा उद्गातारः स्तोत्रमारभेरन् तावदध्वर्युप्रैषणादनन्तरं नापव्याहरेत्" भा० "प्राग्वा च मन्त्रदितोः प्रातरनुवाकोपाकरणम्" कात्या० ९,१,१०, । "सोमे च यद्वं यज्ञोत्थोपकरणात्" २,२,१७, "उपावर्त्तध्वमित्ययं स्तोत्रप्रैषः उपाकरणशब्देनोच्यते" कर्कः । तथा प्रैषस्य हि स्तोत्रारम्भार्थत्वात्तस्य तथात्वम् । २यज्ञियपशुसंस्कारविशेषे च "गोतमस्तोमः प्रथमं द्वितीयस्याह्नः पशोरुपाकरणकालेऽभ्यमानीय बर्हिर्द्धावादेवाध्यापयेत्" आश्व० श्रौ० १०,८,२ । "तमवस्थितमुपाकरणाय यदक्रन्दस्यैकादशभिः स्तौति प्रथमम्" ५. "पशुकल्पेन पशुं संस्कृत्य प्रोक्षणोपाकरणवर्ज्जं यथासूक्तं जुहुयात्" आश्व० गृ० २,४,१५, ३आरम्भे च । "अथातोऽध्यायोपाकरणम्" आश्व० गृ० ३,५,१, "उपाकरणमारम्भः" ना०वृ० । उपाकर्मशब्दार्थे च तत्प्रकारकालादिकं वक्ष्यते

**उपाकर्म्मन्** न० उप+आ+कृ-करणे मनिन् । येन कर्मविशेषेण अर्थान्तो पुनर्वेदः पठितुमारभ्यते तादृशे कर्मभेदे तच्च "अथातोऽध्यायोपाकरणम्" इत्युपक्रम्य आश्व० गृ० दर्शितम् तत्कालकर्त्तव्यतादि च तत्रैवोक्तं विशेषस्तु नि० सि० उक्तो यथा "तत्र बह्वृचानां प्रयोगपारिजाते शौनकः । "अथातः श्रावणे मासि श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विदधीतैतदुपाकर्म यथोदितम् । स्वाध्यायोपाकृतिं कुर्य्यात्सत्योपासनवह्निना" अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदपरेति हेमाद्रिः । अत्र हस्तयुक्ता पञ्चम्युक्ता कारिकयाऽपि "तस्मिन् हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । केवलपञ्चम्यां हस्तयुतेऽन्यस्मिन् वा दिन इति तु हेमाद्रिः । उपासनवह्निनेति तु "कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते" इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र "अध्यायान्वारम्भः" इति सूत्रात् सर्वशिष्यत्वेन तदधिकारित्वात् नाचार्य्याग्नौ "नाग्न्यवस्त्रस्यान्योऽजुहुयादिति" निषेधाल्लौकिक एव । तदभावे स्मार्त्त इति निर्णयः । यद्यपि दीपिकायाम् । "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे" इति शुक्लपक्षेऽपि सर्वेषां मुख्यकालत्वेनोक्तः । पञ्चम्याश्च वचनेन छन्दोगान् प्रति विहितस्य तस्याविरोधिता सर्वान् प्रति निवृत्तिश्च । तथापि श्रावणमासस्यैवास्य स्वीकृतत्वात् कृष्णपक्षेऽपि कार्य्यमिति वृद्धाः । तथा च आश्व०

सूत्राणि "अथातोऽध्यायोपाकरणम्" "ओषधीनां प्रादुर्भावे" "श्रवणेन श्रावण्यां पञ्चम्यां हस्तेन वा"। अत्र श्रवणोत्सुक्योऽन्यो गौणः। तत्राहर्द्वययोगे हेमाद्रौ व्यासः। "धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत्। तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम्। श्रवणेन तु यत् कर्म उत्तराषाढसंयुतम्। संवत्सरकृतोध्यायस्तत्क्षणादेव नश्यतीति"। प्रयोगपारिजाते गार्ग्योऽपि। "उदयव्यापिनी त्वेव विष्णुर्क्षे घटिकाद्वयम्। तत्कर्म सफलं ज्ञेयं तस्य पुण्यमनन्तकमिति" पूर्वेद्युरुत्तराषाढायोगे, परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादौ कार्यम्। न तु पूर्वविद्धायां सङ्गवेऽपि, अपवादाभावात्। किन्तु परेद्युः सङ्गवास्पर्शे निषिद्धपूर्वग्रहणे किं मानम्। सङ्गववाक्यं श्रवणवाक्यं चेति चेत् तर्हि व्रीहिवाक्याद्यवयववाक्याच्च मापमिश्राणामप्युपादानं स्यादिति महत्यसङ्गतम्। एतेन पर्यायो द्वयिकं व्याख्यातम् निषेधप्रवेशस्योभयत्र साम्यात्। श्रवणयुतदिने संक्रान्त्यादौ तु "उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः। ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु" इति हेमाद्रौ निषेधात् पञ्चम्यादयो ग्राह्याः। अत्र ग्रहसंक्रान्तिदिने येषां प्राप्तिः तैरुपाकर्म न कार्यम् इत्येको वाक्यार्थः। तेनाथर्ववेदिनामपि निषेधः। अन्यथा हस्तादित्रये प्रत्येकं ग्रहसंक्रान्त्योः षड्वाक्यकल्पनापत्तेः। मदनरत्नेऽपि "यदि स्यात् श्रावणं पर्व ग्रहसंक्रान्तिदूषितम्। स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु" स्मृतिः, स्मृतिमहार्णवे "संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते। तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते"। तत्रापि प्रयोगपारिजाते वृद्धमनुकात्यायनौ। "अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं यदा। उपाकर्म न कुर्वीत परतश्चेन्न दोषकृदिति"। मदनरत्ने गार्ग्योऽपि। "यद्यर्द्धरात्रादर्वाक् तु ग्रहः संक्रम एव वा। नोपाकर्म तदा कुर्य्याच्छ्रावण्यां श्रवणेऽपि वा"। एतेन ग्रहणकाले श्रवणसत्त्व एव निषेधो नान्यथेति मूर्खगाथा परास्ता, ग्रहविशिष्टानां हस्तश्रवणपर्वणां प्रत्येकं निषेधे तद्युक्तोपाकर्मनिषेधे च विशिष्टोद्देशे वाक्यभेदात् पञ्चम्यां संक्रान्तौ निषेधाभावापत्तेश्च। तेनार्द्धरात्रात् पूर्वं ग्रहणमात्रे उपाकर्मनिषेधो न तद्योगे। यत्तु "प्रतिपन्मिश्रिते नैव नोत्तराषाढसंयुते। श्रवणे श्रावणं कुर्य्याद्ग्रहसंक्रान्तिवर्जिते" इति प्रतिपन्मिश्रितनिषेधकं वचनं तन्निर्मूलम्। हेमाद्रौ निगमः। "ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी। तयोरन्यत्तराषाढा उपाकर्मणि वर्ज्जयेत्" अत्र च "वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ। उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके" इति वचनं देशान्तरविषयम्। "नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके। कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणा" इह० वचनात् इति प्रयो०पा० उक्तम्। पराशरमाधवीयेऽप्येवम्। सामगानां सिंहस्थरवावुक्तं हस्तयमेवेदं, पुरोडाशचरुहोमकरणवदुपसंह्रियत इति। न तु बह्वृचादिपरम्। तेषां सूत्रे चान्द्रश्रावणोक्तेः सौरे पञ्चम्ययोगात् सामान्येन सौरविशेषस्य बाधायोगादिति तु वयं पश्यामः। यत्तु कालादर्शे "अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्कोऽभवेद्यदि। हस्तयुक्तपञ्चम्यां तदद्युपरस्परसंक्रमे। सिंहार्कप्रौष्ठपद्यां श्रवणेन व्यवस्थेति" तन्मूलाभिधानात् सूत्रविरोधाच्च चिन्त्यम्। सूत्रे च श्रवणेन श्रावणस्येति चान्द्रमास एवोक्तो न सौरः तस्य पञ्चम्यभावात् स्मृतिवचनाभ्यामुभयपरत्वे स्मृतिद्वयविरोधाच्च। तेन सिंहस्थोऽर्कोऽभवेद्यदि तदा कर्केऽपि ग्रहसंक्रमे सति सिंहार्के शुक्लपञ्चम्यां श्रवणे वा बह्वृचाः, प्रौष्ठपद्यां तैत्तिरीया इति व्याख्येयम् तेषां सौरमासाभावात्। श्रावणे शस्यानुद्गमादौ बह्वृचपरिशिष्टे "अहश्चौषधयस्तस्मिन् मासे तु न भवन्ति चेत्। तदा भाद्रपदे मासि श्रवणेन तदिष्यत इति"। "तथास्यनुद्गमे तु "कुर्य्यादेव तदाधिकमित्यापद्यते" इति स्मृतात्। वर्षतौ भवं वार्षिकम्। एतच्च शुक्रास्तादावपि कार्यम्। "उपाकर्मोत्सर्जनं च पवित्रदमनार्पणमिति" दमनारोपणे लिखितवचनात् "नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते" इति प्रयोगपारिजाते हेमाद्रौ च संग्रहोक्तेः। पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभावं वक्तुमिदम्। तेन पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे कार्यमिति हेमाद्रिः। प्रथमारम्भस्तु न भवति "गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा। तथाधिमाससंसर्गे मलमासादिषु द्विज! प्रथमोपाकृतिर्न स्यात् कृता कर्मविनाशकृदिति" तत्रैव कश्यपोक्तेः। अत्र प्रथमारम्भे हरिश्राद्धं कुर्यादिति। नारायणवृत्तौ एतच्चाधिमासे न कार्यम् "उपाकर्म्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः। मास-

दृष्टौ पराःकार्या वर्जयित्वा तु पैतृकमिति” ज्योतिःपराशरोक्तेः “उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि । अभिषेकादिषु होनां न तत्कर्मो युगादिष्विति” कात्यायनोक्तेश्च । यत्तु “उपाकर्म्मणि चोत्सर्गे स्रोतदिष्टं युगादिवत्” इति ऋष्यशृङ्गवचनं तत्सामगविषयम् तेषां सिंहार्के एवोक्तेः । एतच्चापराह्णे कार्य्यम् । “उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव त्विति” “अध्यायानामुपाकर्म्म कुर्य्यात्तत्र तु अपराह्णके । पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति” हेमाद्रौ गोभिलोक्तेः । वस्तुतस्तु ‘भवेदुपाकृतिः पौर्णमास्यां पूर्व्वाह्ण एव त्विति” प्रचेतोवचनात् पूर्व्ववाक्यं सामग विषयम् । तेषामपराह्णे एवोक्तेरिन्नतुपदं वक्ष्यते । दोषश्चापि । “अस्य तु विधिः पूर्व्वाह्णकालः स्मृत”इति । याजुषास्तु पर्व्वणि कुर्य्युः । तच्चापरमौदयिकं ग्राह्यम् । अन्ये तु पूर्व्वम् । “पर्व्वण्यौदयिके कुर्युः श्रावणे तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्जिते” इति गर्गोक्तेः “संप्राप्नवान् सुतीर्थेच्छा पर्व्वण्यौदयिके पुनः । अतो भूतदिने तस्मिन्नोपाकरणमिष्यते” इति कालिकापुराणात् । “श्रम चेद्ग्रोपसंयुक्ते पर्व्वणि स्यादुपाक्रिया । दुःखशोकामयप्रस्तारान्ते तस्मिन् द्विजातयः” इति मदनरत्ने गर्गोक्तेः । अत्र भिक्षाभट्टीये विशेषः । “श्रवणः श्रावणं पर्व्व सङ्क्रान्तिस्तु यदा भवेत् । तदैवौदयिकं कार्य्यं नान्यदौदयिकं भवेत्” । पराशरमाधवीयेऽपि गार्ग्यः “श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि । तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्”। कर्कभाष्ये कात्यादर्शे निगमः । “श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् पञ्चभूतकैः । विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्” । अत्र पौर्णमासी श्रवणहस्तयोरन्यतरयुक्ता तेन तावपि सङ्गवस्पर्शौ ग्राह्यौ । “उदये षड्घटीस्पर्शे स्थिते पर्व्वणि शाकभे । कुर्युर्नभस्युपाकर्म सम्यक् सामगाः क्रमात्” इति पृथ्वीचन्द्रः । “विष्णुः षटिकाद्वयमिति” पूर्व्वोक्तविरोधात् सामान्यशास्त्रादौदयिकी कर्म्मपर्य्याप्ता ग्राह्या न पूर्व्वा । सङ्क्रान्तिनिमित्तपूर्व्वविद्धापवादाभावात् भाद्रादौ कालान्तरे वास्तु, न तु निषिद्धम् । न हि मौढ्यलाभे निषिद्धमाचरणं युक्तम् । अतएव परेद्युः सङ्गवव्याप्तौ पूर्व्वनिषेधः । तदभावे तु नेति मूर्खत्वस्याप्यपाला विधिवैयर्थ्यात् मायनिषेधे तथापत्तेश्च । पूर्व्वविद्धावचनमपि हि ना युज्यते । एवं श्रवणेऽपि ज्ञेयम् । एतच्चाधिक्यपरं तेन यथाग्निहोत्रादौ सायं प्रातः कालबाधे सामान्यस्य जीवनावच्छिन्नकालदर्शादेरनुष्ठानम् । यथा व्रीह्यलाभफलाद्यभावे यागात्तिप्राप्तिनिषिद्धावर्ज्यद्रव्येण तथात्र सङ्क्रान्त्यभावेऽनिषिद्धावच्छिन्नकर्म्मपर्य्याप्तौदयिके कालान्तरे वानुष्ठानं न तु कदापि निषिद्धे अपवादाभावे उत्सर्गस्यैव प्राप्तेः । कात्यायनादीनान्तु दिनद्वये पूर्व्वाह्णव्याप्तौ एकदेशस्पर्शे वा पूर्व्वैवेति हेमाद्रिः । घटिकाद्वयमिति पूर्व्वोक्तविरोधात् तेन प्रायस्त्वमात्रपरमिदम् । यदपि “श्रावणी दोर्गनवमी दूर्वा चैव हुताशनी । पूर्व्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनमिति” तच्छ्रावणम् तदुत्सर्गपरमिति विषयमिति हेमाद्रिः । मदनपारिजातेऽपि पूर्व्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्मेत्युक्तम् मदनरत्नेऽपि “पर्व्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः” इति बह्वृचपरिशिष्टाद्बह्वृचानां प्रति कर्म्मविधानार्थं प्रवृत्ते तत्र तैत्तिरीयककर्म्मविध्ययोगात् पूर्व्वोक्तकालिकापुराणादौ सामान्यत औदयिकपर्व्वप्राप्तेस्तन्निषेधे न बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदम् अनुवादत्वात्तस्य च प्राप्त्यधीनत्वात् प्राप्तेश्च यजुर्वेदमात्रपरत्वात् सर्वयजुर्वेद्युपलक्षणार्थम् । अथवानुवादो वा । न तु विधायकम् । तेन विशेषविधिना उपसंहारः स्यात् । अनुवादत्वाच्चान्यथा न दोषः । अन्यथौदयिकपर्व्वविशिष्टोपाकर्मोद्देशेन कर्त्तृविधौ कर्त्तृविशिष्टे औदयिकपर्व्वविधौ वाक्यभेदापत्तेः । तस्मात्तैत्तिरीयक पदाविवक्षया सर्वयजुर्वेदिनामौदयिकमेव पर्व्वेत्युक्तम् । तत्र न तावत्परिशिष्टे बह्वृचान् प्रत्येव विधिः । धनिष्ठा प्रतिपद्युक्तत्वात् ‘साङ्गश्रवणसमन्वितमित्यादि तदुदाहृते एव परिशिष्टे वेदान्तरधर्म्मविधीनां दर्शनात् । नाप्यनुवादोऽयम् कालिकापुराणाद्बह्वृचादीनामपि तदापत्तेः कुर्य्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वे नैतत्प्राप्त्यनुवादित्वाच्च । न च तैत्तिरीयकाणां स्मृत्यौ तद्विधिरस्ति येनानुवादः स्यात् । न च वाक्यभेदः । तैत्तिरीयकपदमात्रस्य कर्म्ममात्रस्य वा उद्देश्यत्वायोगेन हविरार्त्तिवद्दृष्टवर्षं ब्राह्मणमुपनयीतेतिवद्भागत्वा विशिष्टोद्देश्यत्वात् । अन्यथोत्तरार्द्धे बह्वृचपदस्याप्यविवक्षापत्त्या श्रावणस्य सर्वसाधारण्यापत्तेः । तस्मात् हेमाद्रिमतमेव युक्तमिति दिक् । इदं च । शिष्यानध्यापयत आवश्यकेऽन्यो अनध्यापयतोनाधिकार इति कर्कः । श्रावण्यामपि ग्रहणादिदुष्टायां कात्यायनैः प्रौष्ठपद्यां कार्यं तैस्तु श्रावणपञ्चम्याम् । “संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपा-

हतिस्तु पञ्चम्यां कार्या वाजसनेयिभिरिति" स्मृतिमहार्णवे वाजसनेयिपरिशिष्टादिति हेमाद्रिः । इदं सकलोक्त श्रावणपरत्वात् बह्वृचपरमपि । शाखायनैस्तु हस्ते कार्य्यम् । आपस्तम्बैराषाढ्यैव प्रौष्ठपद्याम् । यत्तु बौधायनः "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकुर्य्यादित्यूचे । तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्य्यमित्येवमर्थम् । तच्छाखीयविषयं वा । सामगास्तु श्रावणे हस्ते कुर्युः । "बह्वृचाः श्रावणे चैव हस्तर्क्षे सामवेदिनः" इति निर्णयामृते गोभिलोक्तेः । कौस्तुभे तु "धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् । श्रावणं कर्म्म कुर्वीरन्नृग्यजुःसामपाठकाः" इति मदनरत्ने परिशिष्टोक्तेः । गर्गोऽपि "सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विमले बह्निः । छन्दोगाभिहिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् । शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकमिति" । पुष्यर्क्षे पूर्वाह्णे उत्सर्गः आपराह्णिकमुपाकर्म्मेत्यन्वयः । अविमले ग्रहादिदोषरहिते । अन्योविशेषः पूर्व्वमुक्तः । प्रयोगपारिजाते गोभिलः "उपाकर्म्मोत्सर्जनं च वनस्थानामपीष्यते । धारणाध्ययनाङ्गत्वाद्गृहस्थानां ब्रह्मचारिणाम् । उत्सर्जनं च वेदानामुपाकरणकर्म्म च । अकृत्वा वेदजप्येन फलं नाप्नोति मानवः" । सर्वथा लोपे तु कृच्छ्र उपवासश्च "वेदोदितानां नित्यानामिति" मनुनाऽभोजनोक्तेः । एवमुत्सर्गेऽपि ।

अथ प्रसङ्गाद्वेदोत्सर्जनमुच्यते । तच्च पौषमासे रोहिण्यां तत्कृष्णाष्टम्यां वा कार्य्यम् । "पौषमासस्य रोहिण्यामष्टकायामथापि वा । जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति" याज्ञ० उक्तेः । आषाढ्यां प्रौष्ठपद्यां चोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि, माघशुक्लप्रतिपदि च कार्य्यम् "अर्द्धपञ्चमासानधीयीतेति" तेनैवोक्तेः । यत्तु हारीतः "अर्द्धपञ्चमान्मासानधीत्योर्द्ध्वमुत्सृजेत् षष्ठार्द्धमासानिति" । तदाषाढ्युपाकर्म्मविषयम् । बौधायनास्तु पौष्यां माघ्यां वा कुर्युः । "पौष्यां माघ्यां वोत्सृजेदिति" तत्सूत्रात् । तैत्तिरीयैस्तु तैष्यां कार्य्यं "तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति" तत्सूत्रात् । बह्वृचैस्तु माघ्यां कार्य्यम् "अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते" इति कारिकोक्तेः । कातीयास्तु भाद्रपदे कुर्युः । "उत्सर्गश्च तदा तिष्यतिथ्यां प्रौष्ठपदेऽपि वेति" कात्यायनोक्तेः । सामगास्तु सिंहार्के पुष्ये कुर्युः । तथा च सिंहे रवौ चेति गार्ग्यवचनं पूर्व्वमुक्तम् । सर्वैरुपाकर्म्मदिने वा कार्य्यम् । "पुष्ये तूत्सर्जनं कुर्य्यादुपाकर्म्मदिनेऽथवेति" हेमाद्रौ स्मृत्यन्तरोक्तेः । यदा सिंहस्थे सूर्य्ये सति तत्कालस्थहस्तनक्षत्रात् प्राक् पुष्यः कर्कस्थो भवति तदा तस्मिन् पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म्म सामगाः कुर्युः । "मासि प्रौष्ठपदे हस्तात् पुष्यः पूर्व्वो भवेद्यदि । तदा तु श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः" इति तत्रैव परिशिष्टोक्तेः । अत्र द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरत्वोक्तेः । अत्र विशेषमाह कार्ष्णाजिनिः । "उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः । संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः । उपाकर्म्मोदितं प्रोक्तमृषीणाञ्चैव तर्पणम् । शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते" । "उपाकर्म्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वानध्याय" इति मिताक्षरायामुक्तम् । अत्र नदीनां रजोदोषो नास्ति । "उपाकर्म्मणि चोत्सर्गे रजोदोषो न विद्यते इति" गर्गोक्तेः । "उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते" छन्दो० उक्तेश्च उपाकर्म्मणि चोत्सर्गे दुर्गादौ सूतकामरे । निषेधेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्" स्मृतिः । "त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोरिति" सामान्यतो ग्रहणे दिननवकनिषेधस्तु अनियतकालीनकर्म्मपरः न तु नियतकालीनकर्म्मपरः । "नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च । उपाकर्म्मणि चोत्सर्गे ग्रहदोषो न विद्यते" इति नि० सि० स्मृत्युक्तेर्नोपाकर्म्मणि ग्रहणवेधदोषः । आषाढ्यामपि उपाकर्म्मविधानात् आषाढीप्रयोजनकत्वात् दण्डस्याषाढनामता वेदग्रहणस्य दण्डपूर्व्वकत्वात् तथात्वमिति बोध्यम् । करणे क्तिन् उपाकृतिरप्यत्र स्त्री कर्म्मकरणयोरभेदोपचारात् उपाक्रियाप्यत्र स्त्री ।

उपाकृत त्रि० उप+आ+कृ—क्त । यज्ञे हननार्थं १कृतसंस्कारे पशौ "अनुपाकृतमांसानि देवान्नानि हवींषि च" अभक्ष्ये मनुः । "पशुयागादौ मन्त्रविशेषेण पशोः स्पर्शनमुपाकरणं तद्विहितपशुरुपाकृतः" कुल्लू० । "पशवेऽनुपाकृतः पश्चायेत वायवे तमनुद्दिश्य तदर्थं तद्धनमालभेत" कात्या० २५,८,१ २श्रौतप्रैषेण प्रेषिते च "उपाकृत उद्गातार आर्त्विज्यं यात्" कात्या० ३,२,१८ । ३आरब्धे च । भावे क्त । ४उपाकरणे ईर्यादियज्ञसंस्कारे ५आरम्भे च न० । ततः इष्टा० कर्त्तरि इनि । उपाकृतिन् उपा-

करणकर्त्तरि त्रि० स्त्रियां ङीप् उपाकृतिनी ।

**उपाक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० नि० टच्समा० । नेत्रसमासे "कूलतीरतूलमूलशालाक्षसममव्ययीभावे" पा० अन्तोदात्तता अक्षैर् अक्षेतिनिर्देशात् नि० टच्समा०

**उपाख्या** स्त्री० उप+आ+ख्या—भावे अ । १प्रत्यक्षे "द्वितीयेऽनुपाख्ये" पा० । उपाख्या प्रत्यक्षं तद्भिन्नेऽनुमानगम्ये इत्यर्थः । २शब्दादिभिर्निर्वचने च । "ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्देव परमा सा गतिर्भवेत्" भा० अनु० २६अ० । निरुपाख्योऽभावः । तस्य च भावभिन्नत्वादिना यथा निर्वक्तुमशक्यत्वं तथाऽभावशब्दे उक्तम् "प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशञ्चेति" शा० सू० भाष्ये "तदवस्तु अभावमात्रं निरुपाख्यम्" "न हि भावानां निरन्वयो निरुपाख्यो विनाशः सम्भवति" "निरोधद्वयमाकाशञ्चेति निरुपाख्यम्" । "तत्र निरोधद्वयस्य निरुपाख्यत्वम् पुरस्तान्निराकृतमाकाशस्येदानीं निराक्रियते" "आकाशे च न युक्तो निरुपाख्यत्वाभ्युपगमः" इत्येवम् सौगतमतनिराकरणे अभावपरतयाऽसकृदुक्तम् ।

**उपाख्यान** न० उप+आ+ख्या—ल्युट् । १पूर्ववृत्तकथने "रामोपाख्यानमत्रैवेति" भा०आ०१अ० । एवं नलोपाख्यानाद्युपाख्यानानि बहून्युपाख्यानानि तत्र सन्ति । "चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् । उपाख्यानैर्विना तावत् भारतं प्रोच्यते बुधैः" भा० आ० १अ० । २विशेषकथने । "सर्वाख्यानं श्रुतं ब्रह्मन् ! अतीव परमाद्भुतम् । अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमद्भुतम्" "शृणु नारद ! वक्ष्यामि दुर्गोपाख्यानमद्भुतम्" इति च ब्रह्मवै० । तत्र साधु कन् । उपाख्यानक तत्प्रतिपादके ग्रन्थभेदे स्वार्थे कन् । कथनमात्रे च । [गते च ।

**उपागत** त्रि० उप+आ+गम—क्त । १समुपस्थिते २अभ्युप-

**उपागम** पु० उप+आ+गम "ग्रहवृदृनिश्चिगमश्च" पा० अप् । १स्वीकारे २समीपगमने च ।

**उपाग्रहण** न० उप+आ+ग्रह—ल्युट् । संस्कारपूर्वकवेदप्रारम्भे अमरटीकायां रायमु० ।

**उपाग्रहायण(णि)** अव्य० आग्रहायण्याः समीपं अव्ययी० वा० टच्समा० । आग्रहायणीसमीपे

**उपाङ्ग** न० उपमितमङ्गेन अन्या०स० । १प्रधानस्याङ्गोपयोगिनि "साङ्गोपाङ्गैरिकोदितम्" इत्यमरः २वेदाङ्गषड्के शास्त्रभेदे अपकृष्टानि शास्त्राणि च "पुराणन्यायमीमांसाधर्मशास्त्राणि । चत्वार्युपाङ्गानि" इत्युक्तानि तेषां वेदाङ्गवत् वेदार्थस्य बहुलं करणादुपाङ्गत्वम् । "साङ्गोपाङ्गोपनिषदः" हरि० २५अ० "साङ्गोपाङ्गा चतुर्वेदाः सरहस्याः क्रमेण तु" विक्र० । "षडङ्गमाद्यं तस्यापि कृतस्वर्मायत् प्रतितिष्ठत् । तत पुत्रे महाबाहौ साङ्गोपाङ्गं मखाग्नि" भा०आ०१००अ० । अङ्गं देहस्तदुपयोगीनि ३प्रत्यङ्गे प्रत्यङ्गानि च अङ्गशब्दे ७२ पृ० दर्शितानि ४तिलके पु० जटाधरः ।

**उपाजिन** त्रि० उपगतोऽजिनम् अत्या० स० । चर्मोपगते उपात् अजिनान्ततत्पुरुषत्वात् अन्तोदात्तता । अजिनस्य समीपम् अव्ययी० । २चर्मसमीपे अव्य० । निरुक्तादित्वात् अन्तोदात्तता । उपगतमजिनं येन प्रा०ब० । ३उपगतचर्मके त्रि० अत्र मध्यस्वरः इति भेदः

**उपाजे** अव्य० उप+अज—बा० के बलाधानाभावः । दुर्बलस्य बलाधाने "उपाजेऽन्वाजे" पा० कृञि परे तस्य गतित्वम् तेन समासे उपाजेकृत्य असमासे तु उपाजे कृत्वेति दुर्बलस्य बलमाधायेत्यर्थः" सि०कौ० । एतौ च विभक्तिप्रतिरूपकावव्यये इत्यन्ये

**उपाञ्जन** न० उप+अञ्ज—ल्युट् । १लेपने "मार्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृण्मयम्" मनुः २गोमयादिनानुलेपने च "सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः" "स्नानं तपोऽग्निराहारो मृण्मनो वार्युपाञ्जनम् । वायुः कर्मार्ककालौ च शुद्धेः कर्त्तॄणि देहिनाम्" मनुः उपाञ्जनमुपलेपनम्" कुल्लू० । आधारे ल्युट् । ३अञ्जनाधारे कलशादौ च । "चतुर्थक आङ्क्तनीयस्योपयमनीधान्योऽभीवक्षात्योपाञ्जने च" कात्या० ८,६,२४, "तृतीयं चतुर्भागमत्योपाञ्जने अवधरावनक्ताञ्जनार्थाच्छेषे पत्नीपात्र्याविदधुः" कर्कः । अवधराञ्जनप्रकारस्तत्र "दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां शेषं प्रतिक्लृप्ताऽवधरावनक्ति "धराग्र देवस्त्विति" "प्रतिप्रस्थात्रा समानीता पत्नी क्षौमवेदेनाक्तेनाभ्यस्य भागात् पक्ष्यादिति सूत्रार्थः" वेददी० ।

**उपात्त** त्रि० उप+आ—दा—क्त । १गृहीते, २प्राप्ते च "अयं केचिदुपात्तस्य दुरितस्य प्रवर्त्तते" काव्या० । ३अनर्गलमदे गजे पु० हलायुधः ।

**उपात्यय** पु० उप+अति—इण्—अच् । १लोकशास्त्राचारातिक्रमे, २व्यतिक्रमे, क्रमोल्लङ्घने, ३नाशे च । "परावनुपात्यय इणः" पा० "क्रमप्राप्तस्यानतिपातोऽनुपात्ययः" सि०कौ० ।

**उपादान** न० उप+आ+दा—ल्युट् । १ग्रहणे "विशुद्धं ना-

न्यायः शूद्रात् द्रव्योपादानमाचरेत्" मनुः। "स्यादात्मनोऽप्युपादानात्" सा॰द॰। स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे २प्रत्याहारे, कर्म्मणि ल्युट्। कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते ३कारणे, यथा मृदादि घटादेः स्वर्णादि अलङ्कारादेः, जननार्थं गृह्यते। तच्च सर्वदा कार्य्येऽनुगतम्। "असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्य्यम्" सां॰का॰ "उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सह सम्बन्धः उपादानैः कार्य्यस्य सम्बन्धादिति यावत् एतदुक्तं भवति कार्य्येण संबन्धि कारणं कार्य्यस्य जनकं सम्बन्धश्च कार्य्यस्यासतो न सम्भवति तस्मात् सत् कार्य्यमिति" सां॰कौ॰ "उपादाननियमात्" "अकर्म्मण उपादानायोगात्" सां॰सू॰ उपादानकारणञ्च कार्य्याभिन्नकारणमिति सांख्या वेदान्तिनश्च मन्यन्ते यथा मृत्तिकादयः घटादिकं प्रति, सुवर्णं कुण्डलादिकं प्रति, तन्तवः पटं प्रति, तत्तत्कार्य्याभिन्नत्वादुपादानकारणम्। नैयायिकास्तु उपादानकारणं समवायिकारणतया व्यवहियते। "यत्समवेतं कार्य्यं भवति ज्ञेयन्तु समवायि जनकं तत्" भाषा॰ तेषांमते उपादानशब्देनापि तस्य व्यवहारोऽस्त्येव 'उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्" भाषोक्तेः। तत्तदुपादानगोचरचिकीर्षाकृतिमत्त्वेन तैः ईश्वरस्य सर्व्वकर्त्तृत्वाभ्युपगमात् तच्च ईश्वरशब्दे चिन्तामणिग्रन्थे विस्तृतम् सांख्यमतसिद्धे ४आध्यात्मिकतुष्टिभेदे च यथाह सां॰का॰। "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः"। "या तु प्राकृत्यविवेकख्यातिः सा प्रकृतिमात्रात् मा भूत् सर्व्वस्य सर्व्वदा तन्मात्रस्य सर्व्वान् प्रत्यविशेषात् प्रव्रज्यायास्तु सा भवति तस्मात् प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्! इति उपदेशे या तुष्टिः सोपादानाख्या सामाम्भ इत्युच्यते" सां॰कौ॰। सलिलस्येव अङ्कुरं प्रति प्रव्रज्यायाः साक्षात्कारं प्रति सहकारिकारणत्वेन सन्निधापकत्वात् सलिलत्वम्। आत्मसाक्षात्काराय च फलार्थिभिरुपादीयमानतया तस्या उपादानत्वमिति बोध्यम्। तेन निर्वृत्तम् ठक्। औपादानिक स्वीकारमात्रजन्ये स्वत्वादौ यथा निध्यादौ द्रव्ये ग्रहणमात्रादेव स्वत्वमुत्पद्यते। उपादानोपादेयभावः

उपादानलक्षणा स्त्री उपादानात् स्वार्थस्य ग्रहणात् लक्षणा। "मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये। स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा" सा॰द॰ उक्ते अजहत्स्वार्थारूपे लक्षणाभेदे। यथा कुन्ताः प्रविशन्तीत्यादौ कुन्तयुक्तस्य कुन्तधारिणः लक्षणाभ्युपगमेऽपि तत्र कुन्तरूपस्वस्यार्थस्यापि विशेषणविधयाऽन्वयात्तथात्वम्।

उपादिक पु॰ उप+अद–इन् संज्ञायां कन्। कीटभेदे। उपदीकायां स्त्री

उपादेय त्रि॰ उप+आ+दा–कर्म्मणि यत्। १पाद्ये ग्रहीतुं योग्ये विषये "उपादेयतारतम्यमेव" सा॰द॰। "भवे सौख्यं हित्वा शमसुखमुपादेयमनघम्" शान्तिश॰ उपादानकारणे सम्बद्धे २तद्भवे कार्य्ये। ३विधेयत्वादिना उपकृष्टे च "कर्म्मास्वविहितं नैव वृद्धौ विपरिवर्त्तते। गङ्गात्तु तद्गत्यानमुपादेये गुणो भवेत्" भट्टका॰। "उपादेये विधेये" ति॰त॰ रघुनन्दनः।

उपादेयं ग्रहणयोग्यं तच्चानुकूलवेदनीयं सुखं तत्साधनञ्च "हेयोपादेयरहिते परिनिष्ठिते" शा॰भा॰ वाक्ये "स यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदुपादेयं तावदादाय निवर्त्तते" सर्व॰दर्शने च प्रयुक्तम्।

उपाधि पु॰ उप+आ–धा–कि। अन्यथास्थितस्य वस्तुनोऽन्यथा प्रकाशनरूपे १कपटे, उपधिशब्दे उदा॰। उपाधीयते स्वधर्म्मोऽनेन करणे वा॰ कि। समीपस्थादिना अन्यस्मिन् स्वधर्म्मारोपसाधने विशेषणभेदे। २उपाधिभेदोऽयं कस्य नानायोगः आकाशस्येव घटादिना" गतिश्रुतिरप्युपाधियोगादाकाशवत्" सा॰सू॰ "उपाधिना क्रियते भिन्नरूपः" इति श्रुतिः "कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः" पञ्चद॰ कार्य्यमन्तःकरणं कारणमज्ञानमिति वस्तुभावोपाधिशब्दे उदा॰ ३उपलक्षणरूपे विशेषणे च। स च जात्यादिरूपस्तद्भिन्नश्च पदार्थवृत्तिधर्म्मः। "पदार्थविभाजकोपाधिमत्त्वम्" मुक्ता॰। पदार्थविभाजकाश्च द्रव्यत्वगुणत्वकर्म्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वरूपाः तत्र द्रव्यत्वादयो जातिरूपाः सामान्यत्वादयस्तद्भिन्नाः तत्र नित्यत्वे सति समवेतत्वम् जातित्वम् परमसामान्यावर्त्तित्वे सति नित्यद्रव्यमात्रवृत्तित्वं विशेषत्वम्। नित्यत्वे सति सम्बन्धत्वम् समवायत्वम्। भावभिन्नत्वमभावत्वमन्योन्याश्रयभावात् अखण्डोपाधिरभावत्वमिति नव्याः। एवं प्रतियोगित्वादयोऽपि अखण्डोपाधयः तैः कल्प्यन्ते। "उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक्" भाषा॰ ४कुटुम्बव्यापृते। उपाधीयते नामसमीपे कर्म्मणि कि। ५उपनामनि यथा भट्टाचार्य्यमिश्रादयः उपाधीयतेऽनेनोऽत

व्यभिचारे कि । इत्यर्थचिन्तायाम् व्यभिचारोन्नायकत्वे न्यायमतसिद्धे पदार्थभेदे च । "सर्वे साध्यसमानाधिकरणाः सदुपाधयः हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता भाषा० उपाधिपदार्थनिरूपणप्रस्तावस्य प्रायेण बहुदेशादौ पठनपाठनाभावेन लुप्तप्रायतया प्रचारो नास्तीति अनुमानचिन्तामणिगता यथा उपाधिवादे तन्निरूपितं यथा च तस्य दूषकतायां बीजं निरूपितं तदत्र प्रदर्श्यते ।

"तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानञ्च न व्याप्तिज्ञाने हेतुरतो व्यापकपदादिज्ञानेन नान्योन्याश्रयः । यद्वा व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वञ्चाव्यापकत्वं प्रतियोगित्वञ्च तदधिकरणानधिकरणत्वमिति वदन्ति तन्न साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः न च तयोरनुपाधित्वं दूषकताबीजसाम्यात् मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च यास्तेऽप्रयोजकत्वेनोपाधित्वस्वीकारात् पक्षेतरेऽतिव्याप्तेश्च । न च व्यतिरेके पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वासिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः इतरान्यत्वस्याप्रसिद्धा विशेषणं विना व्याप्त्यग्रहेण तत्सार्थकत्वात् । वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत् अस्तु तथा, तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वं तच्च तत्रास्ति, अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रोच्छेद इति विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणं तेन बाधोन्नीतपक्षेतरस्य परिग्रहः तत्र पक्षस्यैव विपक्षत्वात् न तु पर्वतेतरत्वादेरिति चेन्न न हि वस्तु विपक्षव्यावर्त्तकविशेषणशून्यं सर्वत्र प्रमेयत्वादेः अव्यापकत्वापत्तेरिति विशेषणे सिद्ध्यसिद्धिव्याघातः तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात् तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अतएवानुमानमात्रोच्छेदकतया जातित्वाच्च पक्षेतर उपाधिरित्यपास्तम् दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्, उपाधित्वाभावेऽपि दूषणसमर्थत्वात् । अथोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषकं, पक्षेतरस्य व्यतिरेकश्च न साध्याभावसाधकोऽसाधारण्यात् न तु व्यभिचारोन्नायकतया दूषकं यथा हि साध्यव्यापकोपाध्यव्याप्यतया हेतोः साध्याव्याप्यत्वं तथा साध्यव्याप्यहेतुव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिद्ध्येत् व्याप्यव्यापकयोरुभयत्रापि साम्येन विनिगमकविरहात् । तथाहि यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिपक्षधर्मतौल्यादिति दूषकताबीजं सोऽयं सत्प्रतिपक्ष एवेति चेन्न एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत् । किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात् व्यतिरेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात् । न च हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः प्रत्यक्षे वह्नौ तत्कल्पेनानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवादिति चेन्न तेजोमात्रपक्षत्वेऽतेजस्त्वं विनान्यस्य उपाधेरभावात् । किञ्च पर्वतावयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगासाधारणत्वं ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारण्यं, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् तथाह्युभयोरपि व्याप्यव्यापकसाम्ये विरोधान्न व्याप्तिनिश्चयः किन्तु भवतु व्यभिचारसंशयः तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वं तच्च पक्षेतरेऽप्यस्ति तद्व्यतिरेकेणैव व्यभिचारशङ्केति । भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वं दूषकताबीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च । अथ साध्यप्रयोजको धर्म उपाधिः प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः तस्मिन् सत्यवतत्वेन विनापि भवतस्तदप्रयोजकत्वात् अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् न दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं नत्वधिकं व्यर्थत्वात् ।

अथोपाधिः स उच्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते यथा जवाकुसुमं स्फटिकलौहित्ये उपाधिः तथा चोपाधिरसिव्यापकत्वं हेतुत्वाभिमते चकास्ति तेनायमुपाधिः न च व्यापकत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापेक्ष्यते तथा च समव्याप्त एवोपाधिरिति चेत् तत् किं विषमव्याप्तस्य

दूषकताबीजाभावाच्चोपाधिगड्डुवाच्यत्वं तज्ज्ञानेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा नाद्यः तस्यापि व्यभिचाराद्युन्नायकत्वात् । नापरः न हि लोके समव्याप्तस्यैवान्यत्र स्वधर्मप्रतिबिम्बजनक एवोपाधिपदप्रयोगः लाभाद्युपाधिना कृतमित्रादौ लाभाद्युपाधिपदप्रयोगात् । किन्तु न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थं तत्र साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तस्यैवोपाधिपदप्रयोगात् । अन्ये तु यदभावो व्यभिचारविरोधी स उपाधिः न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि तस्याभावेऽपि व्यभिचारात् अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वं तत्र पक्षे गुणत्वं न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति समव्याप्तिकस्य च व्यतिरेकस्तथा, न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत् साध्यं व्यभिचरति व्यभिचारे वाऽन्ततः साध्यमेवोपाधिः अभेदेऽपि व्याप्यव्यापकत्वात् साधनव्यापकत्वादिति स्वीकुर्वन्तु तथापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्मात्रमूलकत्वाद्व्याप्यत्वाच्च न साध्यव्यापकव्याप्यत्वमपि भवतैव व्यभिचारस्य दर्शितत्वात् । न च साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वं साध्यव्याप्यमित्रत्वापि ह्यनौपाधिकत्वं तदेव वाच्यं तथा चानवस्थेति । अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्तमेव किन्तु यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र दूषणं न तु यदारेके न भवत्येवेत्येतद्गर्भं विरुद्धत्वादेरपदोषत्वापत्तेः नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनव्यापकत्वमुपाधित्वं साधनावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात् । शब्दोऽभिधेयः प्रमेयत्वादित्यत्र श्रावणत्वस्योपाधित्वापत्तेश्च शब्दधर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्र श्रावणत्वं व्यापकं पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत् । आर्द्रेन्धनवत्त्वाद्युपाधौ पक्षनियततादृशधर्माभावाच्च । अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः । श्यामत्वे शाकपाकजत्वमुपाधिरिति तत्र पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमितीत्यस्योपाधित्वप्रसङ्गात् सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नेतरस्य व्यर्थत्वप्रसङ्गाच्च । किन्तु पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयस्तथा चार्थान्तरं केवलसाध्ये हि विवादो न तु विशिष्टे । अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेन्न अप्रकृतत्वात् प्रथमं साधनव्यभिचारप्रयोजकत्वादिसिद्धावुपाधिरिति चेत् तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात् । किन्तु साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोपन्यसनयोग्योऽनुपाधिः । स्यादेतत् पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः पर्यवसितं साध्यं च पक्षधर्मताबललभ्यं यथा शब्दानित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्यवसितं यत्साध्यम् अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः यदि च तयोः कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः तदुक्तं वाद्युक्तसाध्यनियमश्रुतोऽपि कथकैरुपाधिरुद्भाव्यः पर्यवसितं नियमयन् दूषकताबीजसाम्यादिति । अनेन पक्षधर्मतासाधनावच्छिन्नसाध्यव्यापकोपाधिः संगृह्यते तादृशसाध्यस्य पर्यवसितत्वादिति तन्न एवं हि द्व्यणुकस्य सावयवत्वसिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र नित्यद्रव्यसमवेतत्वमुपाधिः स्यात् । भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसितं साध्यं तस्य व्यापकं साधनाव्यापकञ्च । किन्तु पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः तदंशे च कस्य व्यापकः न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति यस्य व्यापक उपाधिः स्यादिति । अथोच्यते यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः लक्षणन्तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं यद्धर्मावच्छेदेन साध्यं स च धर्मः । क्वचित् साधनमेव क्वचिद्द्रव्यत्वादि क्वचित्स्नानत्वादि । तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात् साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायौ प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारित्वे साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् । अतएव नार्थान्तरं, विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्षधर्मताबलात् । अन्यथा प्रतीतेरपर्यवसानात् । न च पक्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम् । यद्वा प-

त्वव्यापकस्पर्शवत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वाक्रान्तत्वात् तथा मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्वात् । व्यभिचारश्च तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वं तच्चाभेदेऽपि । यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः तच्च साक्षात् परम्परया वेति नार्थान्तरम् । किन्त्वर्थान्तरस्य पृथग्दोषत्वात्तदाभासान्तरस्य तत्राभावादुपाधिरेव भावत्वादिकं दोषः न चैवं मन्त्रोऽभिधेयः प्रमेयत्वादित्यत्राव्याप्यत्वं, जलं प्रमेयं रसवत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यात् केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विघटाव्यापकत्वात् न च पक्षेतरे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः तत्रानुकूलतर्काभावेन साध्यव्यापकत्वानिश्चयात् सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तं बाधोन्नीते चानुकूलतर्कोऽस्त्येवेति । एवं पर्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वं पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात् अतएव धूमे आर्द्रेन्धनप्रभववह्निमत्त्वं बहिरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वं मित्रातनयश्यामत्वे शाकपाकजत्वं जन्यानित्यत्वे भावत्वमुपाधिः तदुत्कर्षेण साध्योत्कर्षात् अन्वयाभिज्ञान्वयव्यतिरेकतो वैद्यकात् कारणतावगमेन घटोन्मज्जनप्रसङ्गेन साध्यव्यापकतानिश्चयात् । तत् किं कार्यकारणयोरेव व्याप्तिः तथा च बहुधा व्याकुलोऽस्यादिति चेन्न तदुपजीव्यान्येषामप्यनुकूलतर्केण व्याप्तिग्रहात् यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा व्याप्तिग्राहकताभ्यासैकत्र व्याप्तिनिश्चयस्तत्र सन्दिग्धोपाधित्वं व्यभिचारसंशयोपाधायकत्वात् । यदा च तादृक्केवलानुकूलतर्कावतारस्तदा चैवत्वमुपाधित्वं वा निश्चितं पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचारसंशायकत्वमतो न सन्दिग्धोपाधिरपि सः । यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि ग्राहकसाम्यात् तथा चोभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे निवर्त्तितव्यम् न चैवम् । तथा च पक्षेतरः साध्यव्यापकतांशेन सन्दिग्धः कथं परं दूषयेदिति तन्न तथापि हि साध्यव्यापकता पक्षमात्रव्यावृत्ते हेतुव्यभिचारसंशयाधायकत्वेन दूषणं स्यादेव । ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति तदा तदभावेनैव व्याप्तेरग्रहः अथास्ति तदा साध्यव्याप्यव्यापकत्वेनोपाधिः साध्यव्यापकत्वानिश्चयान्नोपाधिरित्युभयथापि नोपाधिर्दूषणं न च व्याप्यतदभावव्याप्यमुभयमत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्यं उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न सोपाधावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वादवच्छेदभेदेन तदुभयसम्बन्धो वाच्यः तथा च साधने साध्यसम्बन्धितावच्छेदकरूपमनुकूलतर्काभावोपजीवनमन्तरेणोपाधिरावश्यकस्तथानुकूलतर्काभावोऽप्यावश्यक इति उभयोरपि विनिगमकाभावाद्दूषकत्वम् । अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्त्तते स धर्म्मस्तत्र हेतावुपाधिः स च धर्म्मीयस्याभावात् पक्षे साध्यसाधनसम्बन्धाभावः यथा आर्द्रेन्धनवत्त्वं, व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । अतएव तत्र साध्यसाधनसम्बन्धाभावं पक्षे । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धो निवर्त्तमानः पक्षधर्म्मतावशादनित्यत्वाभावमादाय सिध्यति । तथा वायावुद्भूतरूपवत्त्वं निवर्त्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति तथा चोभयथापि पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति अतएव बाधानुन्नीतपक्षेतरस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति । वस्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्म्मत्वं पक्षेतरोऽपि कश्चिदुपाधिः तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वं न च धूमवह्निसम्बन्धोपाधिः पक्षेतरत्वं स्यादिति वाच्यम् आपाद्याप्रसिद्धेरिति तन्न अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यं तच्च न व्यतिरेकित्वमतिप्रसङ्गात् विशेषणत्वे वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गाच्च । केचित्तु साधनव्यापकोऽप्युपाधिः क्वचिद्यत्र पक्षावृत्तिर्हेतुः यथा करका पृथिवी कठिनसंयोगात् इत्यत्रानुष्णाशीतस्पर्शवत्त्वं न च तत्र स्वरूपासिद्धेरेव दोषः सर्वत्रोपाधेर्दूषणान्तरसङ्करादित्याहुः । साध्यस्तु नोपाधिः व्यभिचारसाधने साध्याविशिष्टत्वात् अनुमितिमात्रोच्छेदप्रसङ्गाच्च ।

स चायं द्विविधः निश्चितः सन्दिग्धश्च साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितोऽव्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधिः यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम् । यत्र साधनव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः यथा मित्रातनयत्वेन श्यामत्वे साध्ये

शाकाद्याहारपरिणतिजत्वं न च तेन हेतुना शाकपाकजत्वमपि साध्यं तत्र श्यामत्वस्योपाधित्वादुभयस्यापि साधने अर्थान्तरं श्यामत्वमात्रे विवादो नतूभयत्र । न चैवं धूमाद्वह्न्यनुमानेऽपि वह्निसामग्र्युपाधिः स्यात् तत्र वह्निनेव तत्सामग्र्यापि समं धूमस्यानौपाधिकत्वनिश्चयात् । अत्र तु मित्रातनयत्वव्याप्यश्यामसामग्र्या स्यातव्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् । अतएव साध्यसामग्र्या सह हेतोरपि यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः यत्र तु नास्ति तत्र साध्युपाधिरित्यभिप्रायः सामग्री च क्वचिन्नोपाधिर्नतु सर्वत्र इत्युक्तं यथा तत्त्वयोगक्षेमयोरुपाधेर्व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वाकुलादिः यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे । यत्तु उपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति तन्न सन्दिग्धानैकान्तिकव्यभिचारसंशयाधायकत्वेन दूषकत्वादुपाधेरिव व्यभिचारनिश्चयाधायकतया ।

इदानीमुपाधेर्दूषकताबीजं निरूप्यते । नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वं तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात् न च प्रतिपक्षबाहुल्येनाधिक्यार्थमुद्भावनं गतस्य गतिर्न यस्यतीति न्यायात् एकेनापि बहूनां प्रतिबन्धाच्च व्याप्तिपक्षधर्मतेति बलं तन्न तुल्यमेव न तु भूयस्त्वमपि एकस्मादनुमितेरदर्शनात् । सन्दिग्धोपाधेरदूषकतापाताच्च तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात् अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात् व्यतिरेकेऽसाधारण्यात् पक्षधर्मस्योपाधिर्न स्यात् यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्यत्वं, शब्दाभरो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वं, तद्व्यतिरेकस्य पक्षावृत्तित्वात् । न च नायमुपाधिः, तल्लक्षणसत्त्वात् अन्यथा दूषकत्वमस्यभावाच्च । किञ्च साध्यव्यापकव्याप्यत्वेनोपाधेः साध्याव्यापकत्वे तद्व्यतिरेकेण कथं सत्प्रतिपक्षः, न ह्यव्यापकव्यतिरेकादव्याप्यव्यतिरेकः । नापि व्याप्तिविरहरूपतया अधिकत्वेनानौपाधिकत्वस्य व्याप्तित्वनिराकात् । सानौपाधिकत्वज्ञानस्य व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धावन्तर्भावात् । नत्वन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमस्य व्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम् । न च साध्यव्यापकत्वसाध्यव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्यापकत्वज्ञानं नोत्पत्तुमर्हतीति वाच्यं न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणं येन तत् प्रतिबन्धकं स्यात् किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा, नापि व्यभिचारोन्नायकत्वेन । यथा हि साध्यव्यापकव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमेयं तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयं व्याप्तिग्राहकसाम्यात् । नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया, साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात् तस्मादुपाधिर्दूषकताबीजाभावान्तरमिति । उच्यते आर्द्रेन्धनवत्त्वादेरुक्तदिशा साध्यव्यापकत्वसाधने व्यापकत्वे निश्चिते दूषकताबीजचिन्तनं यदि हि साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकतानिश्चय एव नास्ति तदोपाधित्वनिश्चयाभावात् दूषकत्वं नास्तीति क्व बहिर्भावान्तर्भावचिन्ता । किन्तु सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया वान्तर्भावेण वा यदि दोषत्वं सर्वथा साध्यव्यापकतानिश्चयोऽपेक्ष्यः तेन विना तेषामभावात् । तस्मादुपाधिनिश्चयाद्व्यभिचारनिश्चयः तत्संशयात् संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वम् । यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयं न च साधनाभाववद्वृत्तित्वमुपाधेरिति वाच्यम् उपाधिमात्रोच्छेदप्रसङ्गात् सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवत् अवृत्तिगगनादौ साध्याव्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च । अत्रोपाध्याभासाः । असाधारणविपर्ययो यथान्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरत्वम् । असिद्धसाध्यविपर्ययो यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः । बाधितसाधकविपर्ययो यथा वह्निरनुष्णो जन्यत्वादित्यत्राकृतकत्वम् । पक्षविपर्ययो यथा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राप्यव्यतिरिक्तत्वम् अस्याव्यतिरेकव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धेः । पूर्वसाधनव्यतिरेको यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्, रसोऽनित्यो रसनेन्द्रियग्राह्यनिर्विकल्पकविषयत्वात् रसत्ववदित्यादौ पूर्वसाधनतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदाचिदनित्यवृत्तिसाधनव्यतिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात् उपाधेर्नित्यदोषत्वाच्च । न हि सदोन

सोपाधिसम्बन्धं तत्त्वेनानुपाधित्वसम्बन्धं सम्भवति न तु सत्प्रतिपक्षोच्छेदः पूर्वसाधनव्यतिरेकस्यानुपाधित्वे बीजं स्थापनाया यत्राभावत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् न च पूर्वहेतोस्तत एवासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं तत्रेति वाच्यम् अस्वव्यभावविशिष्टस्याया सत्प्रतिपक्षसम्भवात् । पूर्वसाधनव्याप्यव्यतिरेको यथा अकर्तृत्वानुमाने नित्यत्वादिः । पक्षविपक्षान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम् । पक्षेतरसाध्याभावो यथात्रैव पर्वतेतराग्निमत्त्वं न चात्र व्यर्थविशेषणत्वं दूषणं सत्प्रत्युपाधेराभासत्वात् । तत्त्वस्य यथात्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वह्निसामग्र्यादिकमूह्यम्" विवरणं दीधित्यादौ द्रष्टव्यं विस्तरभयान्नोक्तम् । उपाधिना निर्वृत्तः ठञ् स्त्रियां ङीप् । औपाधिक उपाधिजनिते मिथ्याभूते आरोपिते स्फटिकलौहित्यादौ जवासन्निकर्षात् स्फटिके च मिथ्याभूतं लौहित्यमुत्पद्यते इति वेदान्तिनः । नैयायिकादयस्तु तत्र लौहित्यस्य भ्रान्तिरित्युररीचक्रुः । प्रमेयवि०सं०प्रश्ने तयोः पक्षयोर्युक्तायुक्तत्वं यथावर्णितं तदत्र दर्श्यते ।

"ननु लौहित्यमिथ्यात्वं न सहते स प्रष्टव्यः किं स्फटिकमहत्ता नयनरश्मयः स्फटिकप्रतिफलितजपाकुसुमसम्पर्युः ? किं वा कुसुमगतरूपमात्रं स्फटिके प्रतिबिम्बितं स्फटिकात्मना भासते ? उत पद्मरागादिमणीप्रभयेव कुसुमप्रभया व्याप्तत्वात् स्फटिको लोहितद्रव्यवभासते ? । अथ वा तत्र व्याप्नुवती प्रभैव लोहिता भाति ? आहोस्वित्तया प्रभया स्फटिके नूतनं लौहित्यमुत्पादितम् ? आद्ये नेत्राभिमुखं कुसुममपि प्रतीयेत । यदि च दोषवशात् कुसुमेन संयोगः तर्हि लौहित्यमपि न भासेत तद्युक्तसंगतस्य तत्राभावात् । न द्वितीयः क्वचिदपि द्रव्यं परित्यज्य रूपमात्रस्य प्रतिबिम्बादर्शनात् । तृतीये तु स्फटिकलौहित्ययोः सम्बन्धो मिथ्येति त्वयाभ्युपगतमेव स्यात् द्रव्यस्यप्रयोगात् । चतुर्थे स्फटिकशौक्ल्यमपि प्रतीयेत अप्रतीतिकारणाभावात् न च जपाप्रभया विरोधिगुणयुक्तया शौक्ल्यमपसारितं तत्रास्ति नीरूपस्य स्फटिकस्याचाक्षुषत्वप्रसङ्गात् न हि रूपं विहाय द्रव्यमात्रस्य चाक्षुषत्वं सम्भवति वायोरपि तत्प्रसङ्गात् । पञ्चमेऽपि प्रभा निमित्तकारणं चेत्तदा प्रभापगमेऽपि स्फटिके लौहित्यमवतिष्ठेत् । उपादानं प्रभेति चेत् न मणाविव कुसुमे प्रभाया एवादर्शनात् पूर्वोक्तविकल्पदूषणानामङ्गीकारवादत्वात् तदेवं स्फटिके मिथ्या लौहित्यं कुसुमनिमित्तमित्यङ्गीकर्त्तव्यम् । एवमात्मन्यहङ्कारनिमित्तं कर्तृत्वादिकमारोप्यते" । प्रतिबिम्बपक्षेऽपि प्रतिबिम्बपदार्थस्य यथा मिथ्यात्वं तदपि तत्रैव निर्णीतं यथा "ननु जीवस्याहङ्कारस्थप्रतिबिम्बत्वे दर्पणस्थमुखप्रतिबिम्बवद्बिम्बाद्भेदः स्यात् । तत्र हि ग्रीवास्थदर्पणस्थयोरन्योन्याभिमुखत्वेन भेदोऽनुभूयते । नैवं मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञयाभेदानुभवस्य बाधात् । न च प्रत्यभिज्ञैवेतरेण बाध्येति वाच्यम् सति भेदे प्रतिबिम्बासम्भवात् । किं प्रतिबिम्बो नाम मुखलाञ्छितमुद्रा उत दर्पणावयवा एव बिम्बस्य सन्निधिवशात्तथा परिणमन्ते । नाद्यः दर्पणस्य मुखक्षेत्रादल्पत्वात् । यत्र तु प्रौढे दर्पणे प्रौढं मुखमुपलभ्यते तत्रापि तस्य न मुद्रात्वम् दर्पणमुखयोः संयोगाभावात् । न द्वितीयः निमित्तकारणस्य बिम्बस्यापायेऽपि तस्यावस्थानप्रसङ्गात् न हि तथावतिष्ठते । तेनैव पुरुषेण दर्पणे तिर्यक्कुरीचिते पुरुषान्तरेण सम्यगवलोकिते वा तन्मुखस्यानुपलम्भात् । न चैवं मन्तव्यम् कश्चिन्निमित्तापाये कार्यमस्यर्पति हस्तसंयोगजन्यस्य कटप्रसारणस्य हस्तसंयोगापायेऽप्यपायदर्शनादिति । न तत्र निमित्तापायात् कार्यापायः किन्तु चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्योत्पादनात् । अन्यथा चिरकालप्रसारणेन संवेष्टनसंस्कारे विनाशितेऽपि हस्तापाये प्रसारणमपेयात् । न चैवमपैति । इह तु चिरकालबिम्बसन्निधापयत्ने बिम्बापाये प्रतिबिम्बोऽपि गच्छत्येवेति न बिम्बं परिणामस्य निमित्तम् । अथ मन्यसे चिरकालावस्थितोऽपि कमलविकासः अविकल्पिरणस्य निमित्तस्यापायेऽपगच्छतीति । तन्न तत्रापि प्राथमिकतरुणत्वे हेतुभिः पार्थिवैराप्यैश्च कमलावयवैः पुनरपि रात्रौ सङ्कोचे विरुद्धकार्ये जनिते विकासापायात् । अन्यथा तादृगवयवरहिते म्लाने कमलेऽपि रात्रौ विकासोऽपगच्छेत् । आदर्शे तु मुखाकारपरिणते पुनः केन हेतुना समतलाकारपरिणामः तदवयवानां कारकसंव्यतिरेकेण अकिञ्चित्करत्वात् । अतएव बिम्बासन्निधिमात्रेण नादर्शावयवा मुखाकारेण परिणमेरन् । अन्यथा दर्पणद्रव्ये प्रतिमाहस्ते कर्त्तव्ये सति लौकिका बिम्बमेव सन्निधापयेयुर्न तद्घटनमाचरेरन् । दर्पणद्रव्यस्यान्याकार परिणामे कारकमपेक्षायामपि प्रतिबिम्बपरिणामे पुनः मुखरूपपरिणामे वा न तदपेक्षेति चेत् एवमपि न मुख-

प्रतिबिम्बाकारपरिणामो युक्तिसहः चक्षुर्नासिकादिनिम्नोन्नतभावस्य स्पर्शेनानुपलम्भात्। समतलमेव हि पाणिना स्पृश्यते। समतलेन व्यवहितं मुखमिति चेत्। तर्हि चाक्षुषमपि न स्यात्। तत एतत्सिद्धम्। विमत आदर्शासुखाध्यासस्तरहितः तज्जन्मकारणशून्यत्वात्। यथा विषाणजन्मकारणशून्यं विषाणरहितं शशमस्तकमिति। ननु तर्हि शुक्तिरजतवन्मिथ्यात्वापत्तेर्न बिम्बैकत्वसिद्धिः प्रत्यभिज्ञा तु व्यभिचारिणी मिथ्यारजतेऽपि मदीयमिदं रजतमिति तद्दर्शनादिति चेत्। विषमोदाहानः नेदं रजतमिति हि तत्र रजतस्वरूपबाधया रजताभिज्ञाया भ्रमत्वे तत्प्रत्यभिज्ञाया अपि भ्रमत्वमुचितम् इह तु न तथा नेदं मुखमिति स्वरूपबाधः किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाधे सत्यप्यसौ मदीयमेव मुखमिति प्रत्यभिज्ञा कथं भ्रमः स्यात्। न च स्वमुखावयवानामचाक्षुषत्वात् कथं प्रत्यभिज्ञानमिति वाच्यम् नासाग्रादिकतिपयावयवदर्शनादपि घटादिवदवयविनश्चाक्षुषत्वोपपत्तेः। यः पुनर्दर्पणगतो प्रतिबिम्बागमः नासौ स्वरूपबाधः दर्पणेऽपि तत्प्रसङ्गात्। ननु तत्त्वमसिवाक्येन जीवरूपः प्रतिबिम्बो बाध्यते यः स्थाणुरसौ पुरुष इति बाधायां सामानाधिकरण्यात् संसार्यविनाशे च मोक्षानुपपत्तेः। मैवम् सोऽयं देवदत्त इति वदैक्यपरत्वेनापि सामाधिकरण्यसम्भवात् विरुद्धांशबाधमात्रेण मोक्षोपपत्तेः। तत्स्वस्य जीवस्य बाधे मोक्षस्यापुरुषार्थत्वात्। यस्तु मन्यते प्रतिबिम्ब एव नास्ति, दर्पणप्रतिस्फालिता नेत्ररश्मयः परावृत्य बिम्बमेव दर्पणादविविक्तं गृह्णन्तीति, स्पष्टप्रत्यक्षसुखत्वाद्यनुभवेनैवासौ निराकरणीयः। कथं तर्हि मूर्त्तद्रव्यस्य मुखस्यैकस्य विच्छिन्नदेशद्वये युगपत् कात्स्न्र्येन वृत्तिः। दर्पणदेशस्य मायाकृतत्वादिति ब्रूमः। न हि मायायामसम्भावनीयं नाम स्वशिरश्छेदादिकमपि स्वप्ने माया दर्शयति। अन्यथैव जलमध्येऽधोमुखस्य वृक्षप्रतिबिम्बस्य तीरस्थवृक्षेणैक्ये सति तीरस्थस्योऽधिष्ठानं तत्र च मायया जलगतत्वमधोमुखत्वं चाध्यस्तमिति वक्तव्यम्। न चात्राध्यासहेतुरस्ति। अधिष्ठानस्य कार्त्स्न्येन प्रतीतेस्तत्कथमध्यासः। उच्यते। किमत्र स्वावरणाभावादध्यासाभावः? किं वा दोषाभावात्। उतोपादानाभावात्? आहोस्विदध्यासविरोधिनोऽधिष्ठानतत्त्वज्ञानस्य सद्भावात्? नाद्यः। चैतन्यावरणस्याध्यासोपादानतया जडे पृथगावरणानुपयोगात्। एतेन तृतीयोऽपि निरस्तः। न द्वितीयः। औपाधिकभ्रमेषूपाधेरेव दोषत्वात्। न चतुर्थः। निरुपाधिकभ्रमस्यैवाधिष्ठानतत्त्वज्ञानविरोधित्वात्। तर्हि सोपाधिकभ्रमस्य कर्त्तृत्वादेर्नात्मतत्त्वज्ञानान्निवृत्तिः किन्तु अहङ्कारोपाध्यपगमादिति चेत्। बाढम्। पारमार्थिकदर्पणाद्युपाधिमत्कृतभ्रमस्य च ज्ञानादनिवृत्तावप्यज्ञानजन्योपाधेरहङ्कारस्य निरुपाधिकभ्रमरूपस्यात्मतत्त्वज्ञानान्निवृत्तौ कर्त्तृत्वादेर्ज्ञानान्निवृत्तिरर्थात् सिध्यति"।

परिभाषायां तु उपाधिसन्निकर्षस्थले भ्रममेवाङ्गीचकार न तु तत्र मिथ्यात्वमिति भेदः। "तत्र सङ्केतवत्त्वाम सैव संज्ञेति कीर्त्त्यते। नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा" इति संज्ञां त्रिधा विभज्य। "उभयाद्दत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी। औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते" इति "यद्यपि धार्मिकसङ्केतवाच्यत्वात् पारिभाषिकम्। जात्या नैमित्तिकं यत्रमौपाधिकमुपाधिना"। "यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिकं यथाकाशपक्षादि" इति च शब्दप्र०। अत्र उपाधिना शक्तेरवच्छेदकत्वात् तत्कृतत्वम् इति बोध्यम्।

उपाधेय त्रि० उप+आ+धा-कर्मणि यत्। १अभिनिवेशनीये २आरोप्ये ३उपाधिना विशेष्ये च। "उपाधेयसङ्करेऽपि उपाधेरसङ्करात्" जगदी०।

उपाध्याय पु० उपेत्याधीयतेऽस्मात् उप+अधि+इङ्-घञ्। "एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके। स्त्रियां ङीषि उपाध्याया उपाध्यायीतिरूपद्वयम्। उपाध्यायस्य पत्नीत्यर्थे ङीष् आनुक् वा उपाध्यायानी "उपाध्यायानी च्युतमती" मा० आ० ३अ० उपाध्यायी च। "उपाध्यायान् दशाचार्य आचार्याणां शतं पिता"। "आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्" मनुः। तत्करणे एकदाप्यौचम् "आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रेण" विष्णुः।

उपानस् त्रि० उपगतमनः शकटं पितरं वा अत्या० समा०। १शकटस्थे २पितृस्थे पितृव्यादौ च। जातौ अच् समा०। उपानस शकटगर्भे वृषभवादौ शकटे आकरेऽक्षुद्रत्वाऽस्य जातिलम्। वेदे तु उक्तमपि "सचायोरिन्द्रश्चकर्ष उपानसः" ऋ०१०,१०५,४.

उपानह् स्त्री उप+नह–क्विप् उपसर्गदीर्घः। चर्मपादुकायाम्। "कृतावरोहस्य हयादुपानहौ नियोक्तुकामे किमु चक्रवर्त्तिनी" इति नैष०। अत्रोपानहोः चर्मत्वेनोक्तत्वात् तस्याः सर्वाङ्गावरकत्वं गम्यते तेन लोके (मोजा) इत्यादिप्रसिद्धाया एव तथात्वम् एकदेशमात्रावरकत्वे तु पादुकाशब्दप्रयोगः। "अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्" "चैलं हिरण्यं गावश्च अन्नोपानहमासनम्" मनुः अन्नोपानहमित्यत्र समा० द्व० अच् समा०। एवमन्यशब्देन द्वन्द्वेऽपि। दण्डोपानहमित्यादि "उपानहौ च वासश्च धृतमन्यैर्न धारयेत्" "स्वयं नोपानहौ हरेत्" "सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते" मनुः। [समीपस्थे वैदिके वाक्यभेदे

उपानुवाक्य न० उपगतमनुवाक्याम् अत्या० स०। अनुवाक्या-

उपान्त पु० उपमितमन्तेन अत्या० स०। १निकटे, २प्रान्ते च। "दिगन्तेषूपान्तेषु ससर्ज वृष्टिम्" "नयनोपान्तविलोकितञ्च यत्" "उपान्तभागेषु च रोचनाङ्कः" कुमा०। "मेरोरुपान्तेष्वपि वर्त्तमानः" "उपान्तवानीरगृहाणि" रघुः। "मध्योपान्तनिविष्टसिद्धफलकमुर्वी" मा० द० "तिरोहितोपान्तनभोदिगन्तरा" किरा०। अन्तश्च सीमाभेदः स च दैशिकः कालिकः बुद्धिकल्पितश्च। "उपान्त्यतो निवर्त्तेत" ह० र०। अन्तस्य समीपम् अव्ययी०। ३अन्तसमीपे अव्य०।

उपान्तिक न० उप आधिक्ये प्रा० स०। १अत्यन्तान्तिके अतिनिकटे "यदुपान्तिकेषु ददतो महीरुहः" माघः "प्रसभानुपान्तिकनीपरेणुकीर्णम्" किरा०। २तद्वति त्रि० अर्शआदित्वात् ततः प्रातिपदिकार्थे पञ्चमी "यद्वीरं न पश्यामि धनञ्जयमुपान्तिकात्" भा० व० अ०

उपान्तिम त्रि० उपगतमन्तिमम् अत्या० स० उपान्त्यशब्दात् न डिमच् प्रत्ययविधौ तदन्तविध्यभावात्। १अन्तिमोपगते "गुणान्त्यमङ्कं गुणकेन हन्यादुत्सारितैर्नवमुपान्तिमादीन्" लीला०। सामीप्ये अव्ययी०। २अन्तिमसमीपे अव्य०

उपान्त्य त्रि० उपान्ते भवः दिगा० यत्। अन्तसमीपवर्त्तिनि "अन्त्योपान्त्यौ विभौ ज्ञेयो फाल्गुनश्च विभो भवः" म० त० "अन्तमपदस्योपान्त्यस्योपचयार्थम्" सि० कौ०।

उपाप्ति स्त्री उप+आप–क्तिन्। प्राप्तौ, "यदेतानि सर्वाणि सह हविःपात्राणि कृतैतासामुपाप्तिरिति" शत० ब्रा० १०,१,२,६

उपाभृत् स्त्री उप+आ+भृ–क्विप् तुक्। उपाहरणे, "स न जज्ञोमुपाभृतया क्षपा न जूर्व्वति" ऋ० १,१०८,२। "उपाभृति उपाहरणे" भा०।

उपाय पु० उप+अय–भावे घञ्। १उपगमे। उपायतेऽर्थोऽनेन करणे घञ्। २साधने, स च द्विविधः लौकिकोऽलौकिकश्च तत्र घटादिकं प्रति दण्डादिर्लौकिक उपायः स्वर्गं प्रति यागादिरलौकिक उपायः। "उपायेन च यच्छक्यं तच्छक्यं न पराक्रमैः" हितो०। "पुंसोऽनेकाभ्युपायत्वात्" कुसु०। ३राज्ञां रिपुनिराकरणहेतुषु सामादिषु च। "चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया"। "उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः" माघः। "सर्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः" मनुः। राज्ञां विजयोपायाश्च सामादयश्चत्वारः "साम भेदश्च दण्डश्च दानञ्चैव चतुष्टयम्। उपायाः कथिता राज्ञां स्वार्थसम्पत्तये ध्रुवम्" इत्युक्तेः एतेषां लक्षणानि तत्तच्छब्दे वक्ष्यन्ते। क्वचित् सप्तोपायाः प्रयन्ते। "साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्त्तिताः" शृङ्गारोपायौ च द्वौ "शृङ्गारे तु पुराविद्भिरुपायौ द्वौ प्रकीर्त्तितौ। उपायौ द्वौ प्रयोक्तव्यौ कान्तानुविवक्षणैः। सामदाने इति प्राहुः शृङ्गाररसकोविदाः। भेदे प्रयुज्यमाने हि रसाभासस्तु जायते। निग्रहे रसभङ्गः स्यात्तस्मात्तौ दूषितौ बुधैः" इत्यालङ्कारिकोक्तेः। ४प्रयुक्तधनप्राप्तिसाधने उत्तमर्णव्यापारभेदे च "यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः। तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम्" मनुः। ते चोपायाः मनुना दर्शिता यथा "धर्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च"। तत्र धर्म्म उक्तो बृहस्पतिना "सुहृत्सम्बन्धिसन्दिष्टैः साम्ना चानुगमेन च। प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः" छलादीनि लोकप्रकानि तेनैव "छद्मना याचितञ्चार्थमानीय ऋणिकाद्धनी। अन्वाहितादि वाऽऽहृत्य दाप्यते यत्र सोपधिः। दारपुत्रपशून् हृत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते। बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः। ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः" व्यवहारस्तु मनुना स्वयं दर्शितः। "अर्थेऽपव्ययमानं तु कारणेन विभावितम्। दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः"। तेन राजावेदनरूपो व्यवहारः" कुल्लू० (नाशिय)। मेधातिथिस्तु निःस्वो व्यवहारेण दापयितव्यः अन्यत् कर्मोपकरणं धनं दत्त्वा, कृषिवाणिज्यादि तेन कारयित्वा तत्रोत्पन्नं धनं तस्मादुद्धरेदित्याह"। ५उपक्रमे च।

**उपायन** न० उपायते समीपे उपह्रियते उप+अय-ल्युट् । १उपढौकने ( भेटकोया )"तस्योपायनयोग्यानि रत्नानि सरितां पतिः" कुमा० कर्मणि ल्युट् । २उपढौकनीये "परस्परेण विज्ञातस्तेषूपायनपाणिषु" रघुः "साधिवेशस निर्हारिहसावनैः" माघः "प्रतोच्छतु पायनानि" कादं० । भावे ल्युट् । ३उपगमने "उप यन्त उपसो गोमन्तम्" ऋ० १,१८,१, "उपायो उपगमने" भा० । "सत्रोपायनकौस्थौ उताथ" ऋ०३० "उपायनकोस्थौ उपगमन कीर्तनसाधने" वा०भा० ।

**उपायिन्** त्रि० उपायोऽस्यास्ति इनि । १साधनयुक्ते । उप+इण-णिन । २उपगन्तरि । "सर्वान् योनीनौपायिनान्" काव्य०२,२,८, "पशुमन्तमृतं सर्वं उपयन्ति उपगच्छन्ति" कर्कः । "स्वस्थानाव्येन नोपायिनात्" कात्या०२५।६ एकैकः पाकयाया मध्यास्तत्रायोपायी काचा० ५,१,२,१, "स्वतुकाबदन सर्वोपायेः" कात्या० १८,६,१७, । उभयतः स्त्रियां ङीप् ।

**उपाय्** त्रि०उप+इण्-उण् । उपगन्तरि । "तस्मादाहु श्रायवः स्वेति उपायोऽस्वेतेक आहुस्य हि द्वितीयोऽस्तीति" शत० ब्रा०१७,१,२,

**उपार** पु० उप+ऋ-गतौ कर्मणि घञ् । उपागते १समीपे । "अन्त ज्यायान् कनीयस उपारे" ऋ० ७,८६,६, "उपारे उपागते समीपे" भा० ।

**उपारण** पु०उपेत्य न रमणं यत्र इषी० । उपेत्यारतिस्थाने "तुष वा सदुपारणे" ऋ०८,३२,२१, उपारणे ब्राह्मणा उपेत्य यस्मिन् देशे न रमन्ते सदुपारणः" भा० ।

**उपारत** त्रि० उप+आ+रम-क्त । १प्रतिनिवृत्ते "उपारताः पश्चिमरात्रगोचरात्" किरा० ।

**उपारम्भ** उप+आ+रभ-घञ् मुम् । प्रारम्भे "सर्वकर्मोपारम्भे विनियोग" सन्ध्यापद्धतिः

**उपार्ज्जन** न० उप+अर्ज्ज-ल्युट् । स्वत्वसम्पादकव्यापारभेदे स च अर्जनशब्दे १६५ पृ० दर्शितः "धनधान्यसरत्नानां कृत्वा सम्यगुपार्ज्जनम्" रामा० ।" ण्वुल् । उपार्ज्जक तत्कर्त्तरि त्रि० ।

**उपालब्ध** त्रि० उप+आ+लभ-क्त । तिरस्कारेण निन्दिते

**उपालम्भ** पु०उप+आ-लभ-घञ् मुम् च । निन्दापूर्वकतिरस्कारे । ल्युट् । उपालम्भन तत्रार्थे न० । कर्मणि यत् । उपालम्भ्य निन्दनीये । "बौद्धैः पशुरुपालभ्यः सवनीयश्च" शाङ्करा०सू० । तिरस्कार्ये तु न मुम् । उपलभ्य इत्येव ।

**उपावर्त्तन** न० उप+आ+वृत-ल्युट् । १पुनरागमने प्रत्यावृत्तौ "तदुपावर्त्तनयाहि मे मनः" रघुः ।२भूमौ लुठने च ।

**उपावृत्त** त्रि० उप+आ+वृत-क्त । १अभ्यावर्त्तनाद् पुन पुनःभूमिलुण्ठितेऽश्वे, २निवृत्ते च ।"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह" ए०त० भविष्यपुराणम् ।

**उपावृत्** स्त्री उप+आ-वृत-क्विप् । १आवर्त्तिनां समीपे आवृत्तौ ।"शतं ते सत्त्वावृतः सहस्रं त उपावृतः" यजु० १२,८ । "सहस्रावर्त्तनमावृत् तत्समीपवर्त्तिनामावर्त्तनमुपावृत्" वेददी० । २निवृत्तौ च । उप+आ+वृत-क्तिन् । उपावृत्तिरप्यत्र स्त्री

**उपाश्रम** पु० उपमितमाश्रमेण कर्मा०स० । १अ श्रमवद्ये पाशुपतादिदीक्षादौ ।"उपाश्रमानथपरान् पाषण्डान् विविधानपि" भा०शा० ३५अ० । "उपाश्रमान् पाशुपतपाञ्चरात्रादीन् दाक्षायोगान्" नीलक० । सामीप्ये अव्य० । २आश्रमसमीपे अव्य०।

**उपाश्रय** पु०उप+आ+श्रि-पचाद्यच् । १ आश्रयकर्त्तरि "ब्राह्मणोपाश्रय तत्सुतकटं ज्ञातिभक्तते" मनुः कर्मणि अच् । २आश्रयणीये "राजर्षीणां हि सर्वेषामन्ते वनमुपाश्रयः" भा०आश्र०३अ० । "त्वं हि नस्तात ! कर्षी तु शिवानामुपाश्रयः" भा०व० ६११ अ० । भावे अच् । ३आश्रये ।

**उपाश्रित** त्रि० उप+आ+श्रि-कर्मणि क्त । यस्याश्रयो कृतस्तस्मिन्"तद्वोपाश्रिता देवी बुद्धिर्युद्धमताश्च !" भा०शा०४५अ० उपाश्रितेति पाठान्तरम् । कर्त्तरि क्त । २कृताश्रये त्रि०।

**उपासक** त्रि०उप+आस-ण्वुल् । १सेवके २उपासनाकर्त्तरि "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पना"वेदा०। ३शूद्रे पुंस्त्री तस्य द्विजसेवकत्वात् तथात्वम् स्त्रियां जातित्वात् ङीष् । हेमचन्द्रोक्ते ४वाकादशाभेदे यथा वाक्यमुपक्रम्य"आचारांग सूत्रकृतं स्थानाङ्गं समवायमुक् । पञ्चमं भगवत्यङ्गं ज्ञाता धर्मकथापि च । उपासकान्तकृदनुत्तरोपपातिका दशाः । प्रश्नव्याकरणञ्चैव विपाकश्रुतमेव च । इत्येकादश सोपाङ्गान्यङ्गानि द्वादश पुन" इति। उपासनञ्च चिन्तनापरपर्य्यायमननात्मिका मानसी क्रिया । सा च क्वचिद्गुणादिकमारोप्य प्रवर्त्तते यथा निर्गुणे ब्रह्मणि सगुणत्वाद्यारोपेण आगमवचने निर्गुणस्य ब्रह्मणो रूपभेदेनैव उपासनोक्तेः अतएव"सर्वं खल्विदं ब्रह्म तज्जलान् इति

तत्रचोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते । न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति किन्तु सुवर्णात्मत्वेन । ब्रह्मात्मत्वेनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते" भा० । "ब्रह्मदृष्टिरुत्कर्षात्" भा० । "तेष्वेवोदाहरणेष्वन्यः संशयः किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः ? किं वा ब्रह्मदृष्टिरादित्यादिष्विति ? । कुतः संशयः ? सामानाधिकरण्ये कारणानवधारणात् अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते "आदित्यो ब्रह्म" "प्राणो ब्रह्म" "विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात् । न चात्राञ्जसं समानाधिकरण्यमवकल्पते अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानां न हि भवति गौरश्व इति सामानाधिकरण्यम् । ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात् नेत्युच्यते विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात् ततश्च प्रतीकाभावप्रसङ्गमवोचाम । परमात्मवाक्यञ्चेदन्तदानीं स्यात् ततश्चोपासनाधिकारो बाध्येत परिमितविकारोपादानञ्च व्यर्थम् । तस्माद्ब्राह्मणः "अग्निर्वैश्वानरः" इत्यादिवदन्यतरत्रान्यतरदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः । तत्रानियमः नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् । अथवा आदित्यादिदृष्टय एव ब्रह्मणि कर्त्तव्या इत्येवं प्राप्तम् एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासनञ्च फलवदिति शास्त्रमर्य्यादा । तस्माच्च ब्रह्मदृष्टिरादित्यादिष्विवेवं प्राप्ते ब्रूमः। ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति । कस्मात् ? उत्कर्षात् एवमुत्कर्षेणादित्यादयोदृष्टा भवन्ति उत्कृष्टदृष्टेस्तेष्वध्यासात् । तथा च लौकिकोन्यायोऽनुसृतो भवति । उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिकोन्यायः यथा राजदृष्टिः क्षत्तरि, स चानुसर्त्तव्यः विपर्य्यये प्रत्यवायप्रसङ्गात् । न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् । ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति । अत्रोच्यते निर्द्धारिते शास्त्रार्थे एतदेवं स्यात् सन्दिग्धे तु तस्मिन् कस्मिंश्चित्पक्षं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते । तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्य्यमाणे निकृष्टदृष्टिमध्यस्यन् प्रत्यवेयादिति श्लिष्यते । प्रायम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधाद्ग्रहीतव्यम् । तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासम्भवाद्ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते । इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थोऽन्याय्यः । तथा हि ब्रह्मेत्यादेशः ब्रह्मेत्युपासीत, ब्रह्मेत्युपास्ते इति च सर्व्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान् । ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः प्रत्येत्येव हि केवलं रजतमिति न तु तत्र रजतमस्ति, एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते । वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति "स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते" "यो वाचं ब्रह्मेत्युपास्ते" "यः सङ्कल्पं ब्रह्मेत्युपास्ते" इति । यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वादिति तदयुक्तं उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात् । फलन्त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्व्वाध्यक्षत्वात् । वर्णितञ्चैतत् "फलमत उपपत्तेरित्यत्र" । ईदृशञ्चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम्" भा० । एवं प्रतीकोपासनं निरूप्य तत्फलमुक्तम् तत्रैव ४अ० ३पादे

"अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च" सू० । "स्थितमेतत् कार्य्यविषया गतिर्न परविद्येति । इदमिदानीं सन्दिह्यते किं सर्व्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकम् ? उत कांश्चिदेवेति ? । किं तावत् प्राप्तं सर्व्वेषामेवैषां विदुषामन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् । तथा हि अनियमः सर्व्वासामित्यत्राविशेषेणैवैषा विद्यान्तरेष्ववतारितेत्येवं प्राप्ते प्रत्याह । अप्रतीकालम्बनानिति । प्रतीकालम्बनान् वर्जयित्वा सर्व्वानन्यान् विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायण आचार्य्यो मन्यते । नह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति । अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः । तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः । यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्य्यमासीदेदिति श्लिष्टं "यथा यथोपासते तदेव भवतीति" श्रुतेः । न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य । ननु अब्रह्मक्रतुमपि ब्रह्म गमयतीति श्रूयते यथा पञ्चाग्निविद्यायां स एनान् ब्रह्म गमयतीति" । भवतु यत्रैवमाहत्य वाद उपलभ्यते, तदभावे-

क्रतुर्भेदेन तत्क्रतुन्यायेन ब्रह्मक्रतुत्वाभावे तत्प्राप्ति नैरपेक्ष्यमिति गम्यते" भा० । "विशेषञ्च दर्शयति" सू०। "नामादिषु च प्रतीकोपासनादिषु पूर्व्वस्मात् पूर्व्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' "वाग्वाव नाम्नो भूयसी" "यावद्वाचो गतं तत्रास्य यथाकामचारो भवति "मनो वाव वाचो भूयः" इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात् ? । तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति" भा० ।

उपासनञ्च मानसव्यापारो यद्यपि देहव्यापारानपेक्षस्तथापि आसीनस्यैव तद्भवति नान्यस्य यथाह शा०सू०भाष्ययोः" "आसीनः सम्भवात्" सू०।"कर्म्माङ्गसम्बन्धिषु कर्म्मतन्त्रत्वादासनादिविनिवेऽपि सम्यग्दर्शने वस्तुतन्त्रत्वात् ध्यानस्य इतरेषूपासनेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्त्तेतोत नियमे न आसीन एवेति । तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरित्येवं प्राप्ते ब्रवीति आसीन एवोपासीतेति कुतः ? सम्भवात् । उपासनं नाम समानप्रत्ययप्रवाहकरणं न च तद्गच्छतो धावतो वा सम्भवति गत्यादीनां चित्तविक्षेपकरत्वात् । तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति । शयानस्याप्यकस्मादेव निद्रयाऽभिभूयते । आसीनस्य त्वेवंजातीयको भूयान्दोषः सुपरिहर इति सम्भवति तस्योपासनम्" भा० । "ध्यानाच्च" सू० "अपि च ध्यायत्यर्थ एषः यत्समानप्रत्ययप्रवाहकरणं, ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्य्यमाणो दृश्यते ध्यायति बको ध्यायति प्रोषितबन्धुरिति । आसीनश्चानायासो भवति । तस्मादप्यासीनकर्म्म उपासनम्" भा०। "अचलत्वञ्चापेक्ष्य" सू०। "अपि च ध्यायतीव पृथिवीत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति तच्च लिङ्गमुपासनस्यासीनकर्म्मत्वे" भा० । "स्मरन्ति च" सू० "स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम्" "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" इत्यादिना अतएव च पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे" भा०। उपासनञ्चामरणात् भूयः कर्त्तव्यमित्यपि तत्रैवोक्तम् ।

"आ प्रायणात् तत्रापि हि दृष्टम्" सू०।"आवृत्तिः सर्वोपासनेष्वादर्त्तव्येति स्थितमाद्येऽधिकरणे । तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तान्यवघातादिवत् कार्य्यपर्य्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणं न हि सम्यग्दर्शने कार्य्ये निष्पन्ने यत्नान्तरं किञ्चिच्छासितुं शक्यम् अनियोज्यब्रह्मात्मत्वप्रतीतेः शास्त्रस्य विषयत्वात् । यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता किं कियन्तञ्चित्कालं प्रत्ययमावर्त्त्योपरमेत् उत यावज्जीवमावर्त्तयेदिति । किन्तावत् प्राप्तं कियन्तञ्चित्कालं प्रत्ययमभ्यस्योत्सृजेत् आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादित्येवं प्राप्ते ब्रूमः। आ प्रायणादेवावर्त्तयेत् प्रत्ययम्, अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः । कर्म्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति । "सविज्ञानो भवति" "सविज्ञानमेवान्ववक्रामति" "यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयतीति" चैवमादिश्रुतिभ्यः तृणजलायूकानिदर्शनाच्च । प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकाले भावनाविज्ञानमपेक्षेरन् । तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेषु प्रायणादावृत्तिः । तथा च श्रुतिः "स यावत्क्रतुरयमस्माल्लोकात् प्रैतीति" प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति । स्मृतिरपि "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" इति "प्रयाणकाले मनसाऽचलेनेति" च । सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येतेति" च मरणवेलायां कर्त्तव्यशेषं श्रावयति" भा० । प्रतीकभिन्नेषु उपासनेषु अर्च्चिरादिमार्गेण ब्रह्मलोकप्राप्तिः फलम् । "अर्च्चिरादिना तत्प्रथितेः" शा०सू० भाष्ययोरुक्तम् तच्च अर्च्चिरादिमार्गशब्दे आतिवाहिकशब्दे च उक्तम् । युच् उपासनाप्यत्र स्त्री । "न्यायवर्त्मदर्शीयस्य मननमघदेहभाक् । उपासनेव क्रियते सत्यवागन्तरात्मना" कुमु० सेवने च "उपासनामेत्य पितुः स्म सृज्यते" नैष० । शाण्डिल्योक्ता भक्तिरूपोपासना भक्तिशब्दे वक्ष्यते ।

**उपासा** स्त्री उप+आस भावे अ । उपासने "उपासाविहस्य सर्वयामालम्" शां०सू०

**उपासादित** त्रि० उप+आ+सद–णिच्-कर्म्मणि क्त । १प्राप्ते भावे क्त । २प्राप्तौ न०; तत्कृतमनेन इष्टा० इनि उपासादितिन् ततलाभे स्त्रियां ङीप् ।

**उपासित** त्रि० उप+आस–सेवनार्थत्वात् कर्म्मणि क्त । कृतोपासने यस्योपासनं कृतं तस्मिन् देवादौ ।

**उपास्ति** स्त्री उप+आस-क्तिन् स्त्रीप्रत्ययत्वेऽपि वा०युच् का वा च क्तिनोबाधकः । उपासनायाम् "स्वर्गापवर्गयोर्मार्गमामनन्ति

मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते" कुसु॰ ।

**उपास्त्र** न॰ उपगतमस्त्रम् उपकरणत्वेन अत्या॰ स॰ । अस्त्रोपकरणे तूणादौ" । "राजानौ नीतिमार्गरतौ अस्त्रोपास्त्रकृतिनौ भा॰ व॰ १८६ अ॰ ।

**उपास्य** त्रि॰ उप+आस–सेवनार्थत्वात् कर्मणि ण्यत् । १सेवनीये २चिन्तनीये "द्रवन्तु तव रक्षा उपास्या गुरवश्च ते" भा॰ अनु॰ ८अ॰ "गङ्गा सर्वात्मना सर्वैरुपास्या" भा॰ अनु॰ २६अ॰ उप+आस–ल्यप् । ३सेवयित्वेत्यर्थे ४चिन्तयित्वेत्यर्थे च अव्य॰ । ४उपास्य सन्ध्यां विधिवत्" स्मृतिः ।

**उपाहित** पु॰ उप आसन्नमाहितं यतः । १उल्कापातादौ अग्न्युत्पातरूपे उपद्रवे उप+आ–धा–क्त । २आरोपिते, त्रि॰

**उपेक्ष** पु॰ गान्दिनीसुते अक्रूरभ्रातृभेदे । "अक्रूरः सुषुवे तस्मात् श्वफल्कात् भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः । अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः" हरि॰ ३५ तत्रैव ३८अध्याये च गान्दिनीसुतत्वमस्योक्तम्

**उपेक्षक** त्रि॰ उप+ईक्ष–ण्वुल् । उपेक्षाकारके योगिनि "उपेक्षकोऽसङ्कुसुको द्युनिर्भावसमन्वितः" सनु "द्रष्टा सर्वस्योपेक्षक एको द्रष्टाहमित्युपरता स्वन्या" सां॰ का॰

**उपेक्षण** न॰ उप+ईक्ष–भावे ल्युट् । १त्यागे २औदासीन्ये च ३राज्ञां सप्तविधोपायान्तर्गते उपायभेदे "साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च" भा॰ व॰ १५० । उपेक्षणस्य यथोपायत्वं तथा उपायशब्दे उक्तम् ।

**उपेक्षणीय** त्रि॰ उप+ईक्ष–अनीयर् । १त्याज्ये २प्रतीकारार्थमनालोचनीये च "नश्यत् पुरस्तादनुपेक्षणीयम्" रघुः ।

**उपेक्षा** स्त्री उप+ईक्ष–अ । १त्यागे इदं न मम स्यादिति इच्छाभेदे २औदासीन्ये ३अनपेक्षायां च । उपेक्षा च परस्वत्वानभिसन्धानपूर्वकस्वत्वप्रागभावासमानकालीनस्वत्वाविषयेच्छा । उपेक्षायाः स्वत्वनाशकत्वम् स्मृतौ व्यवस्थापितम् "उपेक्षानाशकं तत्र नियमः कारणं भवेत्" भाषोक्तेः ४इदमुपादेयं न भवतीत्याकारकज्ञानभेदे च "कुर्यामुपेक्षां हतजीवितेऽस्मिन्" रघुः । ६योगशास्त्रोक्ते चित्तप्रसादनार्थभावनाचतुष्टयान्तर्गते भावनाभेदे । "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" पात॰ सू॰

**उपेत** त्रि॰ उप+इण–क्त । १उपगते २समीपगते सेवादिधर्मेण ३प्राप्ते ४उपनीते च । "यं प्रव्रजन्तमनुपेतमपेतकृत्यम्" भा॰ स्क॰ । "न स्त्री जुहुयादनुपेतः" स्मृतिः । "अनुपेतः अनुपनीतः" म॰ त॰ रघु॰ । गर्भाधानार्थं ५स्त्रियमुपगते च "गर्भाधानमुपेतो ब्रह्मगर्भं सन्दधाति" हारीतः "उपेतः स्त्रियमुपगतः" सं॰ त॰ रघुनन्दनः ।

**उपेन्द्र** पु॰ उपगत इन्द्रम् अनुजत्वात् अत्या॰ स॰ । १विष्णौ । स हि कश्यपात् अदितौ इन्द्रादनन्तरं वामनरूपतया संजातः इति तस्य तथात्वम् । "उपेन्द्रो वामनः प्रांशुः" विष्णु स॰ । अत्र भाष्ये अन्यापि निरुक्तिर्दर्शिता यथा । "ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण ! त्वां गास्यन्ति दिवि देवताः" इति हरिवंशवचनात् उपरि इन्द्रः उपेन्द्रः" इति । अत्र वासुदेवस्यैव यथोपेन्द्रनामता, तथा गोवर्द्धनोद्धारणेन गोषु रक्षितासु तत्प्रीतये गोभिस्तस्य सर्वोपरिलोकस्थितत्वेन उपेन्द्रनामतयाऽभिषेकः कृत इति वर्णितं हरिवं॰ ७६अ॰ यथा । "अधोभवस्तात्लोकोऽयं तस्योपरि महीधराः । नागानामुपरिष्टाच्च पृथिव्युपरि मानुषाः । मनुष्यलोकादूर्द्धं तु खगानां गतिरुच्यते । आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् । देवलोकः परस्तस्माद्विमानगमनो महान् । यत्राहं कृष्ण ! देवानामैन्द्रे विनिहितः पदे । स्वर्गादूर्द्ध्वं ब्रह्मलोको ब्रह्मर्षिगणपूजितः । तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनाम् । तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि । स हि सर्वगतः कृष्ण ! महाकाशगतो महान् । उपर्युपरि तत्रापि गतिस्तव तपोमयी । यां न विद्म वयं सर्वे पृच्छन्तोऽपि पितामहम् । लोकास्त्वधो दुष्कृतिनां नागलोकस्तु दारुणः । पृथिवी कर्मशीलानां क्षेत्रं सर्वस्य कर्मणः । खमस्थिराणां विषयो वायुना तुल्यवर्त्तिनाम् । गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्मणाम् । ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः । गवामेव तु गोलोको दुरारोहा हि सा गतिः । स तु लोकस्त्वया कृष्ण ! सीदमानः कृतात्मना । धृतो धृतिमता वीर ! निघ्नतोपद्रवं गवाम् । तदहं समनुप्राप्तो गवां वाक्येन नोदितः । ब्रह्मणश्च महाभाग ! गौरवात्तव चानघ ! । अहं भूतपतिः कृष्ण ! देवराजः पुरन्दरः । अदितेर्गर्भपर्याये पूर्वजस्ते पुरातनः । तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहम् । मेघरूपेण तत्सर्वं क्षन्तुमर्हसि मे विभो ! । एवं क्षान्तमनाः कृष्ण ! स्वेन सौम्येन तेजसा । ब्रह्मणः शृणु मे वाक्यं गवाञ्च गजविक्रम ! । आह त्वां भगवान् ब्रह्मा गावश्चाकाशगा दिवि । कर्मभिस्तोषिता दिव्यैस्तव संरक्षणादिभिः । भवता रक्षिता लोका गोलोकश्च महात्मनम् । तदयं युष्मैः सार्द्धं यत्नांसः प्रहर्षस्तथा । कर्म-

वातपित्तहा । पथ्यान्न दीपनमनी निद्राकुष्ठिकरी मता" उपाधिकशब्दकं यत उदाहृतः गौरा० ङीष् स्वार्थे कन् वा ह्रस्वः । उपोदीकाप्यत्र स्त्री

उपोद्ग्रह पु० उप+उद्+ग्रह–अप् । ग्रहणे । "तस्मात् स्व-स्थस्योपोद्ग्रहणमिति" श०ब० । "उपोद्पूर्वकग्रहेः ग्रहणार्थत्वदर्शनात् तथार्थत्वम् ।

उपोद्घातः पु० समीपवर्त्तिनः प्रकृतस्य उद्घातः उद्भवनम् ज्ञानं चिन्तनम् यत्र । उप+उद्–हन-गतौ गत्यर्थत्वात् ज्ञानार्थता आधारे घञ् । १प्रकृतसिद्ध्यर्थमालोचनात्मके सङ्गतिभेदे । "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" अवसरशब्दे विवृतिः । २तदर्थवर्णने च । "अथ चोपोद्घातेन विशिष्टज्ञानस्य कारणत्वं व्यवस्थापयति" दीधि० ३प्रारम्भे च

उपोद्बलन न० उप+उद्+बल–ल्युट् । उद्दीपने उत्तेजने ।

उपोषण न० उप+वस–ल्युट् । उपवासे अहोरात्राभोजने । "माघे श्रीरामनवमीदिने मर्त्योविमूढधीः । उपोषणं न कुरुते कुम्भीपाके महीयते" । "उपोषणं भवेत्तस्माद् दशम्यामेव पारणम्" ति० त० आगस्त्यसं० । उपवासशब्दे विवृतिः । उपवासस्य उपदाहसाधनत्वात् तथात्वम् ।

उपोषित न० उप+वस+भावे–क्त । १उपवासे । "नास्ति स्त्रीणां पृथग्यज्ञः न व्रतं नाप्युपोषितम्" मनुः । कर्त्तरि क्त । २उपवासकर्त्तरि त्रि० । "उपोषितो द्वितीयेऽह्नि पूजयेत् गुरुदेव ताम्" दुर्गो० त०पु० ।

उपोष्य त्रि० उप+वस–अकर्मकधातुयोगे कालस्य कर्मसंज्ञा विधानात् कर्मणि वा० यत् । १उपवासेन यापनीये तिथ्यादौ । "तिथिस्त्वव्यापिनी या तु सैवोपोष्या सदा तिथिः" कालमा०पु० । उप+वस–ल्यप् । २उपवासं कृत्वेत्यर्थे अव्य० ।

उप्त त्रि० वप–क्त । १कृतवापे धान्यादौ अधिकरणे क्त । २उप्तधान्यादौ क्षेत्रे । "यथैव तेन तदभूदमदीय ! रिक्तं मकान् उप्तं कुहकराड्भिरोप्रमुप्याम्" भाग० । ३छेदिते च । "पर्य्युप्यमिवरचिति" पार०सू० । परितस्तोभावेन उप्तचिरराम् मुण्डितशिरसम्" हरिनाथः । भावे क्तिन् । उप्ति वपने स्त्री "बीजानामुप्तिविच्च स्यात्" मनुः ।

उप्तकृष्ट त्रि० पूर्वमुप्तं पश्चात् कृष्टं पूर्वकालेत्यादिना स० । बीजवपनानन्तरं कृष्टे क्षेत्रे (बीजाकृते क्षेत्रे) । (काड़ान)

उप्तिम त्रि० वप+क्त्रि मप् च । वपनजाते ।

उप्य त्रि० वप–वा० कर्मणि क्यप् । वपनीये बीजादौ "दोषितस्वेन्द्रपतस्वैतोप्यानां देवेभ्येव विकिरेत्" कात्या० २१,१२,२० । "उप्यानां व्रीहियवादीनाम्" कर्कः ।

उब्ज आर्जवे तुदा० पर० सक० सेट् । उब्जति औब्जीत् । णिचि उब्जयति ते औब्जिजत् त । "इन्द्राग्नीरक्ष उब्जतम्" ऋ० १,२१,५ । "उब्जन्तु तं सुभ्वः पर्वतासः" ६,५२,१ । अब्ज नि० सञ्च दः समुद्रः अम्बुदः । नि+उब्ज (उबुडान) उत्तानस्यावतानकरणे न्युब्जति उत्तानं वस्तु अवतानं करोतीत्यर्थः ।

उब्जक त्रि० उब्ज–ण्वुल् । आर्जवयुक्ते । ततः तिका० फिञ् औब्जकायनि तदपत्ये पुंस्त्री । तिककितवादित्वात् गोत्रप्रत्ययस्य बहुषु द्वन्द्वे लुक् । उब्जककुभाः ।

उभ(म्भ) पूर्तौ तुदा० प० सक० सेट् । उभति औभीत् । उवोभ । उम्भति उम्भीत् अयं मुचादिरिति कविकल्प० तन्मते औम्भत् भोपधत्वात् नोपधालोपः उम्भाम् बभूव आस चकार । वेदे गणव्यत्ययः उनप्ति उभ्नाति "हृदान्यौम्भाद्ग्रमानमोजः" ऋ० ४,१९,४ । "हन्तुभ्नां ना वै मानम् परिपन्तमद्रिम्" ऋ० ४,१,१५ । "सर्वमर्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः" भट्टिः । भा० मते लुङि रूपम् । अन्यमते लुङि रूपम् ।

उभ त्रि० द्वि० । उब्जगतौ–भक् । उभ–पूर्तौ क वा । द्वित्वविशिष्टे एकत्वापेक्षाबुद्ध्या प्रथमं द्वित्वस्यैव जननेन द्वित्वस्यैकत्वेन ज्ञानद्वारा गम्यमानत्वात् पूर्णत्वाद्युपचारात् तथात्वम् । "उभौ यदि व्योम्नि पृथक् पतेताम्" माघः । "उभावपि हि तौ धर्म्मौ सम्यग्युक्तौ मनीषिभिः" "प्रवृत्ता यथावुभौ" "श्रावस्य प्रयतोनित्यमुभे सन्ध्ये समाहितः" मनुः । ततः वृत्तिमात्रे नित्यम् अयच् । "उभयपक्षविनीतनिद्राः" रघुः । उभयविधः, उभयथा उभयतः उभयत्र । अस्य सर्वादि० सर्वनामकार्य्यम् तेनास्य द्विवचनान्तत्वेन अन्यकार्य्याभावेऽपि टेरकच् । उभकौ नायच् । स्वार्थे तद्धितकनि तु अयच्प्रसङ्गः । ततः प्रथमाद्यन्तप्रभृत्यर्थे तसिल् अयच् । उभयतस् । द्वाभ्यां द्वाविन्यर्थे द्वयोरित्यर्थे च अव्य० "तत्प्रतः पुनरप्युभयतः पुष्पानेकविंशतिम्" याज्ञ० । "भक्तिं चोभयतश्चिन्तामायस दश्रुमेव वा" । "ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः । अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः" मनुः । प्रकारे थाल् अयच् । उभयथा द्विप्रकारार्थे अव्य० । "नैव नः प्रियतमोभयथासौ यद्यमुं न दृष्टे दृष्टे वा" नैष० । "विनापि नाम्नि मा तव सति वियोगोऽस्त्युभयथा" ।

प्रयो०। यद्रूप्यर्थे तस् च्यच्। उभयत इयोरित्यर्थे अव्य० "उभयतश्चरौ मुनीन्द्राः" जातकप० "द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा" मनु०। अह्नि द्युस् एद्युस् वा-च्यच्। उभयद्युस् उभयेद्युस् च इयोरह्नोरित्यर्थे अव्य०। "यो अस्मै घ्रंस उभयद्युरभ्येति" ऋ० १.२५,४। "उभयेद्युः कृता प्राप्तौ परोपेक्ष्या मनीषिभिः" स्मृतिः।

**उभय** त्रि० उभ+अयच्। इयवयवे द्वित्वविशिष्टे अस्य द्वित्वबोधकत्वेऽपि एकवचनबहुवचनान्ततयैव प्रयोगः न द्विवचनप्रयोगः। सि० कौ०। "उभयमानशिरे वसुधाधिपाः" रघुः। सर्वादि० सर्वनामकार्यम्। उभयस्मै उभयेषाम्। "अथा न उभयेषाममृत मर्त्यानाम्" ऋ० १,२६,९। जसि वा यो। उभये उभयाः। "परेऽवर उभया अमित्राः" ऋ० २,१२,८। "ये जना उभये भुञ्जते विशः" २,२४,१०। "किं तत्साध्यं यदुभये साधयेयुर्न सङ्गताः" रघुः। स्त्रियां गौरा० ङीप्। "उभयीं सिद्धिमुभाववापतुः" रघुः।

**उभय(त्र)चर** पुंस्त्री० उभयत्र उभयोर्वा चरति चर-ट। भूम्यन्तरिक्षचरे पक्षिभेदे स्त्रियां ङीप्। सूर्याक्रान्तराशेर्द्वितीयस्थग्रहयोगभेदे स्त्री "सूर्याद्व्ययेऽपि च धने च तयोभयत्र संस्थैर्विना विधुमयन्ति खगैस्तु योगान्। वेशीं च वोशिमुभयत्रचरीं मुनीन्द्राः स्वष्ट फलानि विविधानि वदन्ति तेषाम्" "समो राघोभयचरीप्रभवो बहुभक्ष्यभाक्" जातकपद्धतिः।

**उभयतोदत्(न्त)** पुंस्त्री० उभयतोदन्तः दन्तपङ्क्तिरस्य वा दन्तादेशः। उभयदन्तपङ्क्तियुक्ते मनुष्यादौ। "पशूंश्च मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः" मनुः। स्त्रियां ङीप्। दन्तादेशाभावपक्षे तन्नार्थे स्त्रियां वा ङीप्। "उभयतोदन्ताः प्रजाः प्रजायन्ते" शत० ब्रा० १,६,३,२,

**उभयतोमुख** त्रि० उभयतो मुखे यस्य। द्विमुखे घटादौ "उभयतोमुखाभ्यां पात्राभ्याम्" शत० ब्रा० ४,७,१,७, स्त्रियां स्वाङ्गत्वाभावे टाप् स्वाङ्गे तु ङीप्। उभयतोमुखी धेनुः। "यावत्सा रोमतुल्यानि युगान्युभयतोमुखी। दाताऽऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्। यावद्वत्सस्य पादौ द्वौ मुखं योनौ च दृश्यते। तावत् गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति" याज्ञ० उक्तो धेनुभेदः। अन्यत्र रुद्रयमेव उत्क्रान्तिसंज्ञयोक्ता। "उत्क्रान्ते तु महातल उभयोत्क्रान्तिलक्षणे। तस्य संप्रददे नाम्ना नामभुत् क्रान्तिसंज्ञिताम्" विश्वा० पा० ब्रह्मानन्दः।

**उभयतश्शीर्षी** स्त्री उभयतः शीर्षे यस्याः शीर्षस्यादेशः ङीप् अल्लोपः विसर्गस्य वा षः। उभयतःशीर्षेऽस्वप्राक्षीयादिशुक्रायां गवि "अदितिरस्युभयतश्शीर्ष्णी" यजु० ४,१९, "उभयतः शीर्षे यस्याः ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् "द्वे शीर्षे प्रायणीयोदयनीये" याज्ञिकोक्तेः" वेददी०।

**उभयवेतन** पु० उभयोः भेद्ये स्वामिनि च वेतनं यस्य अच्। दूतभेदे यो हि स्वामिसकाशात् प्रच्छन्नो भृतिं लब्ध्वा तद्भेद्यस्य सकाशे तदीयदासत्वेनात्मानं ख्यापयित्वा तत्सकाशात् भृतिं लब्ध्वापि पूर्वस्वामिनोऽन्तर्हितभृतिनिमित्तकार्यमनुसरन् अमित्रादिभेदं जनयति स उभयवेतन इत्युच्यते। "स्वपातदोषैर्दोषश्च स्वदूतश्चोभयवेतनैः। भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः" माघः। तादृशदूताश्च मुद्राराक्षसे चाणक्यप्रेषिता बहवो वर्णिताः ते च मलयकेतोः प्रधानसचिवादीन् राक्षसादीन् ततो विभिद्य चाणक्यकार्यं साधितवन्तः तच्च तत एवावसेयं विस्तरभयान्नोक्तम्।

**उभयादन्ति** अव्य० उभौ दन्तौ प्रहरणं यत्र युद्धे द्विदण्ड्या० इच् समा० अच्। उभयदन्तसाध्ये युद्धे एवम् उभयाञ्जलि उभयाबाहु उभयाहस्ति उभयाकर्णि इत्यादयोऽपि नि० साध्याः तत्तत्साधनयुद्धे। उभाहस्ति उभाकर्णि उभाबाहु उभादन्ति इत्यादयः नि० साध्याः तत्र नायच्। तेऽपि तत्तदर्थे।

**उम्** अव्य० उ-बा० डुमि। १रोषे, २स्वीकारे, ३प्रश्ने च।

**उमा** स्त्री ओः शिवस्य मा लक्ष्मीरिव उं शिवं माति मन्यते पतित्वेन मा+क वा। शिवपत्न्याम् १दुर्गायाम् "उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामेति" कुमारे निरुक्तायां २पार्वत्याम्। "यदा च तपसे पूर्वी वनं गन्तुञ्च मेनका। उ मेति तेन सोमीत नाम प्राप तदा सती" कालि० पु०। "माता निषिद्धा तपसे यदा सा यथाम्बुमाख्यां भवभक्तिभाविनी" शिवपु० अत्र पक्षे उ मेति शब्दः नामहेतुत्वेनाख्यस्याः अर्श आ० अच् 'यस्येति' पा० आलोपे टाप्। "उमामुखे बिम्बफलाधरोष्ठे" "उमासुखन्तु प्रतिपद्य लोला" "उमारूपेण ते यूयम्" "उमा वधूर्भवान् दाता" इति च कुमा०। "नियोजयिष्यकामस्तु उमायां चन्द्रशेखरम्" शिव० पु० उमामाहेश्वरव्रतम्। व्रतशब्दे दृश्यम्। वे-बा० मक् संप्रसारणम्। ३हरिद्रायाम् ४अतसीवृक्षे (मसिना) उमाकटः उमाः क्षौमीनः। ५कीर्त्तौ ६कान्तौ, ७शान्तौ च।

**उमाकट** पु० उमाया अतस्या हरिद्राया वा रजः कटच्। अतस्या हरिद्रायाश्च रजसि।

**उमागुरु** पु० ६त०। हिमालये तस्य उमायाजनकत्वात्तथात्वम्। उमाजनकादयोऽप्यत्र। तस्माच्च तदुत्पत्तिकथा शिवपु० दृश्या।

**उमाचतुर्थी** स्त्री उमायाजन्मदिनम् चतुर्थी। ज्यैष्ठशुक्लचतुर्थ्याम् "ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती। तस्मात् सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये" ब्र०पु०

**उमापति** पु० ६त०। महादेवे। स च यथा तामुपयेमे तत्कथा शिवपु० दृश्या तन्मूलकं कुमारे च वर्णिता एवमन्यत्रापि पुराणे दृश्या। "मेनां मातुः सती प्राप्य हिमाचलपतिव्रताम्। उमकया हि तपसा पतिं प्राप पिनाकिनम्"। काशीख० उमाधवादयोऽप्यत्र

**उमावन** न० उमाप्रीतये वनमत्र। पुरभेदे शोणितपुरे हेम०

**उमासहाय** पु० ६त०। महादेवे दुर्गासहायतत्सहचरादयोऽप्यत्र

**उमासुत** पु० ६त०। कार्त्तिकेये। तत्कथा अग्निकुमारशब्दे ५५४ पृ० शिवपुराणे च दृश्या। उमातनयपार्वतीसुतादयोऽप्यत्र

**उम्बर** पु० उमित्यव्यक्तशब्दं वृणाति वृ अच्। १द्वारोर्द्धकाष्ठे, २गन्धर्वभेदे च। "उम्बरस्तुम्बुरुश्चैव अनुरन्ये च षड्गणान्" हरि० १२८अ०।

**उम्बी** स्त्री उम्+वा–क गौरा० ङीष् पृषो० वस्य बः। "मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत्। हुतानलेन सम्भृष्टा अर्द्धक्वाथेति सा स्मृता" इति भा० प्र० उक्तायाम् अर्द्धपक्वयवगोधूमयोर्भृष्टयाम्। "उम्बी कफप्रदा बल्या लघ्वी पित्तानिलापहा" भा० प्र०।

**उम्बुर** पु० उम्+वृ–क उत् रपरः। द्वारोर्द्धकाष्ठे।

**उम्भि** त्रि० उम्भ–इन्। पूरके। ततः अच्छा० जाताद्यर्थे इकञ्। औम्भियक तज्जातादौ त्रि०

**उम्य** न० उमाया अतस्या भवनं क्षेत्रम् वा यत्। अतसीभवनक्षेत्रे पक्षे अण् औमीन तदर्थे न०

**उम्लोचा** स्त्री अप्सरोभेदे। "अनुम्लोचा घृताची च विश्वाची पूर्व्वचित्त्यपि। उम्लोचेति च विख्याता" भा० आ० १२३अ०

**उर** गतौ भ्वा० पर० सक० सेट्। ओरति औरीत् उवोर उरतुः

**उर** पुंस्त्री उर–क। १मेषे स्त्रियाम् अजा० टाप्। "उरा विमेमिरेषादराम्" ८,३४,३, 'उरां मेषीम्' भा० २गन्तरि त्रि०। "उरामथिरा वधुनेव" ऋ० ८,६६,८।

**उरःसूत्रिका** स्त्री ६त०। मुक्ताहारे अमरः।

**उरग** पुंस्त्री० उरसा गच्छति उरस्+गम–ड सलोपश्च। १सर्पे, स्त्रियां जातित्वात् ङीष् पादशून्यतया उरसैव तेषां हि गमनम्। "भित्त्वोत्थितं भूमिमिवोरगाणाम्" "विलमग्नाविवोरगौ" 'अङ्कितोरगलता' रघुः। २तद्देवताके अश्लेषानक्षत्रे। "उरगाधिपमस्तकाः शशरीनाथवारे" ज्यो० त०। ३सीसके तस्य नागशब्दवाच्यनागभेदोपचारात्तथात्वम्। अहिमृद्‌ ५८१ पृ० विवृतिः।

**उरगभूषण** पु० उरगोभूषणमस्य। सर्पभूषणे महादेवे

**उरगराज** पु० ६त० टच् समा०। १सर्पराजे वासुकौ। उरगोराजेव उपमि०स०। २महासर्पे च। "एकतरैवोरगराजरज्जवः" माघः उरगेन्द्रादयोऽप्युभयत्र। "उरगेन्द्रमूर्द्धरुहरत्नसन्निधेः" माघः। [तथात्वम्।

**उरगस्थान** न० ६त०। पाताले तेषां तत्रस्थितत्वात् पातालस्य

**उरगाशन** पु० उरगानश्नाति अश–ल्यु ६त०। सर्पभक्षके १गरुडे च २मयूरे उरगभक्षादयोऽप्यत्र। "छायाबभासमुरगाशनकेतुयष्ट्या" माघः।

**उरङ्ग** पुंस्त्री उरसा गच्छति उरस्+गम–ड नि०। सर्पे स्त्रियां जातित्वात् ङीष्। [ सर्पे स्त्रियां जातित्वात् ङीष्।

**उरङ्गम** पुंस्त्री उरसा गच्छति उरस्+गम–खच् सलोपः।

**उरण** पुंस्त्री ऋ–क्यु धातोरुत्व रपरः। १मेषे स्त्रियां जातित्वात् ङीष्। "इक्ष्वोरणमाघ्राय सत्वरादाय गच्छति" भा० शा० ६५ अ०। "स उरणं खनाम नव चक्रन्वांस नवतिं च बाहून्" ऋ० २,१४,४, २दद्रुघ्ने पु० स्वामी।

**उरणाक्ष** पु० उरणस्य मेषस्य आक्षीव अक्षि पुष्पं यस्य। दद्रुघ्ने (दादमर्द्दन) वृक्षे। स्वामी तु उरणाक्षसत्वार्थे इत्याह। तन्मते उरणस्याक्षा आख्या यस्येति विग्रहः

**उरभ्र** पुंस्त्री उरु उत्कटं भ्रमति भ्रम–ड पृषो० उलोपः। १मेषे स्त्रियां जातित्वात् ङीष् २दद्रुघ्ने पु० स्वामी। तस्येदम् अण्। औरभ्र मेषमांसादौ "हविषाऽऽज्येन वै मासं पायसेन तु वत्सरम्। मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः। ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्। मासाभिवृद्ध्या तृप्यन्ति दत्तैरेव पितामहाः" याज्ञ०। "दर्पिताश्चाक्षघनाक्षमहिषोरभ्रकुक्कुराः" इत्युक्ते पशुषु तस्य दर्पितत्वमुक्तम् स च ग्राम्यपशुः "अजाश्वगोखरोष्ट्रोरभ्रमेदःपुच्छमृगतयो ग्राम्याः" सुश्रु० तन्मांसगुणाश्चोक्ता "ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः। मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" "बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु"।

**उरुष्या** स्त्री उरुष्यं रक्षणमिच्छति क्यच् अ यलोपः रक्षणेच्छायाम्। "उरुष्या पायुरभवत् सखिभ्यः" ऋ० ६,४४,७। "उरुष्या रक्षणेच्छया" भा० तृतीयाया लुक्। ततः उ। "उरुष्यु रक्षणेच्छावति "इमे मा पीता यशस उरुष्यवोरथम्" ऋ० ८,४८,५। "उरुष्यवः रक्षाकामाः" भा०।

**उरूची** स्त्री उरु अञ्चति क्विप् ङीप् अलोपे पूर्व्वाणो दीर्घः। अतिव्यापिन्यां स्त्रियाम्। "उरूची विश्वे यजते निपातम्" ऋ० ४,५६,४। "शं न उरूची भवतु स्वधाभिः" ऋ० ७,३५,२ 'विश्रयमाणो अमतिमुरूचीम्' ऋ० ७, १५,२ "या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची" ऋ० ३,५७,५। स्त्रीभिन्ने उरुच् तदार्थे प्रथमादावपि उरूचः उरूचा इत्यादि।

**उरूणस्** त्रि० उरु दीर्घं नासिके तस्य नसादेशः वेदे नि० णत्वं दीर्घश्च। दीर्घनासिकायुक्ते "उरूणसावसुतृपा" ऋ० १०,१४,१२।

**उरोज** पु० उरसि जायते जन–ड "ङे विभाषा" पा० सप्तम्या लुक्। स्तने "दधत्युरोजद्वयमुर्व्वशीतलम्" "रेजाते रुचिरदृशामुरोजकुम्भौ" माघः स्तनादिकं सूक्ष्मरूपेण जन्मकाले उत्पन्नमपि यौवने उद्भिद्यते। यथाह भावप्रका०। "बालानां शुक्रमस्त्येव किन्तु सौक्ष्म्यान्न दृश्यते। तेषां तदेव तारुण्ये पुष्टत्वादभिव्यज्यते। कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा। रोमराज्यादयः पुंसां नारीणामपि यौवने। जायन्ते तत्तयोर्भेदो ज्ञेयो व्याख्यानतः स च"। तथा च पुंसां रोमराजीश्मश्रुप्रभृतयः नारीणां तु रोमराजीस्तनस्तन्यार्त्तवप्रभृतयः"। आर्त्तवस्तनोद्भेदकालश्च एकादशवर्षादुत्तरः स्मृत्युक्तः। "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी। दशमे कन्यका प्रोक्ता तत ऊर्द्ध्वं रजस्वला" उ०त० स्मृतिः। इदमपि बाहुल्यविषयम् धातुभेदेन तत उत्तरमपि भवतीति लोके दृश्यते बाल्यावस्थाभिधा दशमाब्दादर्वाक् देयेति तत्त्वम्। सुश्रुते तु द्वादशवर्षोपरि रजःसम्भव उक्तः। "रसादेव रजः स्त्रीणाम् मासि मासि त्र्यहं स्रवेत्। तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम्" रजःपदं स्तनोद्भेदस्याप्युपलक्षणम्। गर्भिण्याः पीनस्तनत्वे दुग्धवत्त्वे च कारणमुक्तम् भा०प्र०। "स्वहीतगर्भाणां स्त्रीणामार्त्तव-वहानां स्रोतसां गर्भेणावरोधादार्त्तवं न स्रवति तदेव प्रतिहतमूर्द्ध्वमागतमुपचीयमानमपरा भवति शेषञ्चोर्द्ध्वतर-

मागतं पयोधरौ याति तस्माद् गर्भिण्याः पीनोन्नतौ पयोधरौ भवतः" इति। उरोभूषणत्वोऽप्यत्र "उरोभुवा कुम्भयुगेन जृम्भितम्" नैष०।

**उरोभूषण** न० उरोभूष्यतेऽनेन भूष–करणे ल्युट् ६त०। १वक्षोऽलङ्कारे हारे। उरोभूषयति ल्यु। २तदर्थे त्रि०।

**उरोबृहती** स्त्री वैदिके छन्दोभेदे। "बृहती जागतस्त्रयश्च गायत्राः। पथ्या पूर्वश्चेत्तृतीयः। न्यङ्कुसारिणी द्वितीयः। स्कन्धग्रीवी क्रौष्टुकेः। उरोबृहती यास्कस्य" कात्या० उक्तेः यास्कमते द्वितीयचरणस्य जागतात्मकत्वे अन्येषां त्रयाणां गायत्रात्मकत्वे च सा भवतीत्यर्थः।

**उरोहस्त** न० उरसि हस्तपेटाघातोयत्र। बाहुयुद्धभेदे बाहुयुद्धप्रकारः भा०स०२३अ० दर्शितः यथा "करग्रहणपूर्वन्तु कृत्वा पादाभिवादनम्। कर्णैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो!। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ। करसंपीडनं कृत्वा गर्जन्तौ वारणाविव। दुर्दान्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यतम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः। संपूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्"। व्याख्यातञ्चैतत् नीलकण्ठेन "कर्णैः दोर्मूलैः कक्षां प्रकोष्ठगतां रज्जुं धुन्वानौ। यतः तत्र कर्णैः आस्फोटं चक्रतुः बाहुमूलास्फालनेन अङ्गुष्ठबन्धरज्जुयोगं कम्पयन्ताविव्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेन आकुञ्चनप्रसारणोपर्यधश्चालनमुष्टीकरणानि चित्रहस्ताः आदिपदात् पादस्याप्याकुञ्चनादि। कक्षाबन्धं परस्परकक्षायां हस्तौ कृत्वा बन्धनम् गलेन गण्डेन भालदेशेनाभिघातस्तेन पाषाणद्वयाकृत्यात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव संहननतुल्यर्थः। बाहुपाशादिकं चरणपाश आदिशब्दार्थः। पादाभ्याम् आहताः

राजन् उलूकमिदमब्रवीत्। उलूक! गच्छ कैतव्य! पाण्डवान् सहसोमकान्" इत्यादिना भा० उ० ५०।अ०। उलूकस्य कैतव्यः कितवस्यापत्यम्। तदागमनमधिकृत्यैव उलूकदूतगमनपर्व्व उद्योगपर्व्वान्तर्गतं पर्व्व। ४ देशभेदे। "उलूकवासिनं राजन् बृहन्तमुपजग्मिवान्"। "उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्" भा० स० अ०। अयञ्च देशः "प्रययावुत्तरां तस्माद्दिशं धनदपालिताम्" इत्युपक्रम्य तस्य कीर्त्तनात् धनञ्जयस्य उत्तरदिग्विजय एव तस्य उलूकदेशस्य वर्णनाच्च उत्तरदेशवर्त्तीति गम्यते। ५ तद्देशनृपे च "उत्तरं पर्वतोद्देशं ये ते दुर्गसहा नृपाः। आरोहन्त विमर्द्दन्तो वज्रप्रतिमगौरवाः। उलूकः कैतवेयश्च" हरिवं० ९६।

**उलूकयातु** पु० उलूकरूपेण याति या—तुन्। असुरभेदे। "उलूकयातुं शुशुलूकयातुं जहि" ऋ० ७,१०४,२२। "उलूकरूपेण यातमुलूकयातुम्" भा०।

**उलूखल** न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति ला—क। धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी) तच्च यज्ञियपात्रभेदः। तल्लक्षणमुक्तम् "उलूखलमुषले वारणमये औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंगृहीतमूर्द्ध्वं वृत्तम्, मुषलं दक्षिणमुलूखलात्" कात्या० १७,५,२। तदुत्तरत्र सूत्रेऽपि उदा०। "वनस्पतिभ्य इत्येव मुषलोलूखले हरेत्" मनुः "स्फ्यशूर्पशकटानाञ्च मुषलोलूखलस्य च। अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्" तस्य मनूक्तशौचं ज्ञेयम् उलूखलशब्दस्य यास्केनान्यथा निरुक्तिर्द्दर्शिता यथा। "उलूखलमुरुकरं वोर्करं वोर्द्धकं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तदुलूखलमित्याचक्षते परोक्षेण"। स्वार्थे कन् तत्रार्थे "गृहे गृह उलूखलके" ऋ० १,१२८,५। तदस्य साधनत्वेनास्त्यस्य ठन्। उलूखलिकः। तत्साधनके जने "दन्तोलूखलिकोऽपि वा" मनुः। २ गुग्गुलौ पु०

**उलूखलसुत** पु० ३त०। उलूखलेनाभिषुते सोमरसे "उलूखलसुतानामवेदिन्द्र" ऋ० १,२८,१,२,३।

**उलूत** पु० उड—वा० ऊतच्। अजगरसर्पे त्रिका०।

**उलूपिन्** पु० ऊः शम्भोः रूपमस्त्यस्य इनि रस्य लः। शिशुमारे अमरः। पृ० ह्रस्वपाठोऽपि तत्रैव उलुपिन् इत्यपि पाठः क्वचित् तत्रार्थे।

**उलूपी** स्त्री कौरव्यनागकन्याभेदे तत्कथा भा० आ० २१४अ०। "उलूप्युवाच ऐरावतकुले जातः कौरव्यो नाम पन्नगः। तस्याऽस्मि दुहिता राजन्! उलूपी नाम पन्नगी। साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम्। दृष्ट्वैव पुरुषव्याघ्र! कन्दर्पेणाभिमूर्च्छिता। तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन!। अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ!। अर्जुन उवाच। ब्रह्मचर्य्यमिदं भद्रे! मम द्वादशवार्षिकम्। धर्म्मराजेन चादिष्टं नाहमस्मि स्वयंवशः। तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि!। अनृतं नोक्तपूर्वञ्च मया किञ्चन कर्हिचित्। कथञ्च नानृतं मे स्यात्तव चापि प्रियं भवेत्। न च पीड्येत मे धर्म्मस्तथा कुर्य्यां भुजङ्गमि!। उलूप्युवाच। जानाम्यहं पाण्डवेय! यथा चरसि मेदिनीम्। यथा च ते ब्रह्मचर्य्यमिदमादिष्टवान् गुरुः। परस्परं वर्त्तमानान् द्रुपदस्यात्मजां प्रति। यो नोऽनुप्रविशेन्मोहात् स वै द्वादशवार्षिकम्। वने चरेद्ब्रह्मचर्य्यमिति वः समयः कृतः। तदिदं द्रौपदीहेतोरन्योऽन्यस्य प्रवासनम्। कृतवांस्तत्र धर्म्मार्थमत्र धर्म्मो न दुष्यति। परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन!। कृत्वा मम परित्राणं तव धर्म्मो न लुप्यते। यदि वाऽप्यस्य धर्म्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः। स च ते धर्म्म एव स्याद्दत्त्वा प्राणान्ममार्जुन!। भक्ताञ्च भज मां पार्थ! सतामेतन्मतं प्रभो!। न करिष्यसि चेदेवं मृतां मामुपधारय। प्राणदानान्महाबाहो! चर धर्म्ममनुत्तमम्। शरणञ्च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम। दीनाननाथान् कौन्तेय! परिरक्षसि नित्यशः। साऽहं शरणमभ्येमि रोरवीमि च दुःखिता। याचे त्वां चाभिकामाऽहं तस्मात्कुरु मम प्रियम्। स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि। वैशम्पायन उवाच। एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया। कृतवांस्तत्तथा सर्व्वं धर्म्ममुद्दिश्य कारणम्। स नागभवने रात्रिं तामुषित्वा प्रतापवान्। उदितेऽभ्युत्थितः सूर्य्ये कौरव्यस्य निवेशनात्। आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह। परित्यज्य गता साध्वी उलूपी निजमन्दिरम्। दत्त्वा वरमजेयत्वं जले सर्व्वत्र भारत!। साध्या जलचराः सर्व्वे भविष्यन्ति न संशयः"।

**उल्का** स्त्री उष-दाहे क नि० षस्य लः। रेखाकारे गगनात् पतत्तेजःपुञ्जे। अद्भुतोत्पातशब्दे १२९ पृष्ठे तत्स्वरूपफलादिकमुक्तम्। "बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः" मेघ०। "उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च"। "उल्कापाते दिशां दाहे गोमायुविरुते तथा" "विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे" मनुः। स्त्र,र-

महाकृति विक्षिपन्त्यनेषु" किरा० । उल्काकारणमुक्तम् श्रीपतिना "यासां गतिर्दिवि भवेद्वलितेन गम्या तारकाः खकक्षचरतोऽतिदूरे । तिष्ठन्ति वा अनिलतोऽथवा ताराचन्द्राद्धोऽपि निवसन्ति तदन्तिकास्ताः । शीतांशुवज्जलमयाः कदनात् स्फुरन्ति ताश्चाप्रबलमारुतसन्निवसंस्थाः । पूर्वानिलैरमितभावमपागतेऽपि ताराः पतन्ति कुहचित् स्वरतापयेन" । (अवलपटेरतुड़ा) २शुष्कदशरस्कादिदीपिते (मशाल) इति प्रसिद्धे ३दीपभेदे च । "तुलाराशिं गते भानौ अमावास्यां नराधिपः । स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च । कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडादिभिः । ततोऽपराह्णसमये घोषयेन्नगरे नृपः । लक्ष्मीः संपूज्यतां लोकाः! उल्काभिश्चापि वेष्ट्यताम्" ति०त०ज्यो० उल्कादाने दर्शद्वैधे निर्णयः । "तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्" ति०त०ज्यो०वचनात् प्रदोषव्यापिदर्शे कार्यम् । उभयत्र प्रदोषप्राप्तौ परदिने एव, युग्मादिशास्त्रात् । "दण्डैकरजनीयोगो दर्शस्य स्यात् परेऽहनि । तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिका" ज्योतिर्वचनाच्च । उभयत्र प्रदोषाप्राप्तावपि उल्कादानं पूर्वोक्तपार्वणानुरोधात्, न पूर्वदिने भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतसः । निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्" ज्योतिर्वचनात् । उल्काग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणाभिमुखेन कार्यम् । "प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमा निधनात् कार्यं विधिवद्दर्भपाणिना" मनूक्तेः । तद्दानमन्त्रादि ति०त० द्रष्टव्यम् । ४ज्योतिषोक्ते नाक्षत्रिकदशाभेदे । "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा । उल्का सिद्धा सङ्कटा च ह्यष्टौ ज्ञेया महादशाः" ज्यो० । तदानयनञ्च "वह्निभाज्जन्मनक्षत्रात्सङ्ख्याचाष्टिभभादय" इत्युक्तेः मतभेदेन कृत्तिकानक्षत्रात् पूर्वभाद्रपदचतुर्थपादात् जन्मनक्षत्राद्वाऽऽरभ्य एकैकास्मिंस्त्रिरावृत्त्या क्रमेण मङ्गलादिका दशा भवन्ति इत्येवं चतुर्विंशतिनक्षत्रेषु त्रिरावृत्त्या अष्टौ दशा अवशेयाः ततोऽन्तिमत्रिभेषु मङ्गलाद्यास्तिस्रो भवन्ति । एवमन्यत्राप्यूह्यम् । तासां भोगकालश्च । "एकाद्येकोत्तरा अष्टयोगिनीवत्सरा मताः इत्युक्ता मङ्गलायाः १एकोऽब्दः पिङ्गलायाः २द्वौ, धान्यायास्त्रयः, भ्रामर्याः ४वर्षाः, भद्रिकायाः पञ्च, उल्कायाः षट्, सिद्धायाः सप्त, सङ्कटायाः अष्टौ वर्षाः, तेषां योगेन ३६वर्षा मङ्गलाद्यानां भोगकालाः, इत्येवं त्रिरावृत्त्यां अष्टोत्तरशतवर्षास्तासां भोगकालः । अन्तर्दशादिकं योगिनीशब्दे वक्ष्यते ।

उल्काचक्र न० रुद्रयामलोक्ते मन्त्रस्य शुभाशुभज्ञापकचक्रभेदे "उल्काचक्रं सर्वसारं मन्त्रदोषादिनिर्णयम् । मत्स्याकारमूर्द्ध्वमुखं सर्वमन्त्रादिसिद्धिदम् । मस्तकदेशावधि नाथ ! पुच्छपर्यन्तमेव च । अकाराद्यक्षरमारभ्य द्वादशाक्षरमात्रकम् । विलिखेत् मुखदेशे तु शुभाशुभविशुद्धये । त्रयोदशाक्षराद्यावत् एकविंशाक्षरान्तकम् । नेतव्यं साधकर्मन्त्रं पृष्ठस्थं समुदाहृतम् । तथा श्रीशुभदं प्रोक्तं द्वाशठादिपुच्छकान्तकम् । द्वात्रिंशादि चतुस्त्रिंशदक्षरान्तं शुभं मतम् । पुच्छस्थं नापि गृह्णीयान्मुखस्थञ्च तथा भ्रमम् । पृष्ठस्थञ्चापि गृह्णीयात् तदक्षरं शृणु प्रभो ! । पञ्चविंशादि द्वाचत्वारिंशदक्षरान्तमेव च । मस्तकस्थं शुभं प्रोक्तं शुभवर्णान् शृणु प्रभो । त्रिचत्वारिंशदर्णादि एकपञ्चाशदन्तकम् । पुच्छस्थमन्त्रं मन्त्री तु न गृह्णीयात् कदाचन । पुच्छस्थं शृणु यत्नेन निरर्थकमहानिदम् । भ्रमो नाशश्च पीडाभिः देवता कुप्यतेऽनिशम् । द्विपञ्चाशदक्षरादि एकषष्टिमान्तिकान् । वर्णान् पुच्छस्थितान् प्रोक्तान् नेत्रस्थान् शृणु वल्लभ ! । द्विषष्टितमवर्णादि चतुःषष्ट्यक्षरान्तकम् । चक्रं लोचनमन्त्रञ्च ततोऽन्यत् रसनास्थितम् । तत् सर्वं शुभदं प्रोक्तं एतदन्यतमं शृणु । वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापनम् । अन्यदेवेषु भक्तानां भक्तिमुक्तिप्रदं सदाम्" । "एतच्च चतुःषष्टिस्त्रिषष्टिर्वा वर्णाः शम्भुमते मताः । स्वराविंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमास्तथा । अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च" इति शिक्षोक्तविभागाभिप्रायं चतुःषष्टेरभिधानम् लृकारस्य दीर्घस्वत्वमतेनेति बोध्यम् ।

उल्काजिह्व पु० उल्केव जिह्वाऽस्य । रामा० प्रसिद्धे राक्षसभेदे

उल्कामुख पु० उल्केव मुखमस्य । प्रेतभेदे "वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात् स्वकात् च्युतः" मनुः ( स्याक मेकोयालि )इति प्रसिद्धे जन्तुभेदे स्त्री ङीप् ।

उल्कुषी स्त्री उष-दाहे क्विप् उषा दाहेन कुष्णाति कुष-क गौ० ङीष् । उल्कायाम् । 'अग्निरेव प्रथमोऽनुयाजः ह्रादुनिर्द्वितीय उल्कुषी तृतीयः" । "उल्कुषीं जहीति तृतीयम्" 'उल्कुषीश्च तमनुयाजोऽर्हन्ति' उल-

कृष्णलमाहुर्देवानां यज्ञः" इति शत० ब्रा० ११,२,७,
२१,२५. "उलूखली उलूका" भा०। "अभिवरमनु-
याजानुमन्त्रणमन्त्रम् जहि क्रुद्ध्यन्तं जहि उलूक्यम्
जहि" काव्या० २,५,१४.

**उल्ब** न० उला दाहेन वलति वल-बा० ड। जरायौ गर्भ-
वेष्टनचर्म्मणि। "यथोल्बेनावृतोगर्भस्तथा तेनेदमावृतम्"
गीता। "तस्योत जायमानस्योल्ब आसीद्धिरण्मयः"
अथ० ४,२,८. "गर्भो वा एष यद्दीक्षित उल्बं वासः
प्रोर्णुते"। "तस्माद्गर्भाः प्रावृता उल्बेन जायन्ते" तैत्ति०
सं० "उल्बे गर्भवेष्टने तिष्ठति" यजु० ५,२,४,१८.
"गर्भोजरायुणावृतः उल्बं जहाति जन्मना" १९,७६.

**उल्बण** त्रि० उला वलति अच्। १उत्कटे २प्रकाशान्विते
३अतोद्धते च। "व्याजितैः फलकसङ्घातैर्भल्लैश्च बहुधा
कृतैः। तस्मात् दुरुल्बणो मार्गः पादपैरिव दन्तिनः" रघुः
"प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् भा० व० ८अ०।

**उल्मुक** न० उष-दाहे मुक्, षस्य लः। १ज्वलदङ्गारे अमरः।
२वृष्णिभेदे "उल्मुकोनिशठश्चैव वीरश्चाङ्गावहस्तथा भा० स०
३३अ० ३अग्न्याधानार्थे ज्वलदङ्गारे च। "अग्न्या-
धेयपचनादुल्मुकमादायोदङ् परेत्य जुहोति" शत० ब्रा० २,६,
२,७ "उद्धृत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैत एकैकमेवो-
ल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तत्रैव तेषामुल्मुकैः
प्रघ्नन्तीति" ४,६,८,७। उल्मुके भवः यत्। उल्-
मुक्यसाध्ये त्रि०। "अथ एक उल्मुक्येन दहन्ति"
शत० ब्रा० १२,५,१,१३।

**उल्लङ्घन** न० उद्+लघि-भावे ल्युट्। अतिक्रमे, ऊर्द्ध्वभाग-
गमनादिना अतिक्रमणे (डिङ्गान)। [२उल्लङ्घिते त्रि०।

**उल्लल** त्रि० उत्+लल-अच्। १बहुरोमयुक्ते हारा०।

**उल्ललित** त्रि० उद्+लल-क्त। १उच्चलिते २तरलिते,
३आन्दोलिते च।

**उल्लसन** न० उद्+लस-ल्युट्। १उल्लासे हर्षजनकव्यापारे
आधारे ल्युट्। संज्ञायां कन्। २रोमाञ्चे हेम०।

**उल्लसित** त्रि० उद्+लस-क्त। १स्फुरिते २उद्गते ३हृष्टे च।

**उल्लाघ** त्रि० उद्+लाघ-क्त नि०। १रोगनिर्मुक्ते, २दक्षे,
३शुचौ, च। ४मरिचे पु०।

**उल्लाप** पु० उद्+लप-घञ्। १काकुवाक्ये, २शोकरोगा-
दिना विकृतस्वरयुक्तवाक्ये ३दुष्टवाक्ये "खलोल्लापाः सोढाः
कथमपि तदाराधनपरैः" वारा०। ४स्तवने च ततो-
ऽस्त्यर्थे ठन्। स्तवके त्रि० "बालोल्लापिकयूमाद्या-

सङ्घमाकारतोरणम्" भा० उ० १८२अ० [ख्याने।

**उल्लापन** न० उद्+लप-णिच्-ल्युट्। स्तुत्यादिना व्या-

**उल्लास** पु० उद्+लस-घञ्। १प्रकाशे, २आह्लादे. "निप-
तन्ति कन्दलस्तनोल्लासाः पयोबिन्दवः" अमरुशत०।
"मौलिव्यवनोल्लासलसत्कामप्रतिभादितत्" सा० द०।
ग्रन्थस्याध्यायस्यार्थे ३परिच्छेदे च यथा काव्यप्रकाशे।
४मारम्भे च

**उल्लासिन्** त्रि० उद्+लस-णिनि। १उल्लासयुक्ते प्रभान्विते
२आह्लादिनि स्त्रियां ङीप्। "सुमनसामुल्लासिनी-
मानसे" चन्द्रालोकः।

**उल्लिखित** त्रि० उद्+लिख-क्त। १उत्कीर्णे २तनूकृते "त्वष्ट्रेव
यन्त्रोल्लिखितो विभाति" रघुः। ३उपरि लिखिते।
४विलिते ५वर्त्त्यतया उल्लेखविषये पदार्थे च।

**उल्लुञ्चन** न० उद्+लुचि-अपनयने ल्युट्। १उत्कर्त्तने (उपड़ान)
२उन्मूलने च "पादकेशांशुककरोल्लुञ्चने च पणान् दश" या०

**उल्लुण्ठन** न० उद्+लुठि-क्तौ। स्वाभिप्रायाप्रकाशेन अ-
न्यथाभावप्रकाशने (ठाट्टा) च। उल्लुण्ठाऽप्यत्र स्त्री।
"धीराधीरा तु सोल्लुण्ठभाषितैः संवदेदमुम्" यथा
"अनलङ्कृतोऽपि सततं हरसि मनोमे यतः प्रसभम्। किं
पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः" सा० द०
अत्र सपत्नीसङ्गतदर्शनजातेर्ष्याप्रकाशेन मनोहर्षजनक-
त्वोक्तिच्छलाद्भावद्योतनार्थः"।

**उल्लू** त्रि० उद्+लू-क्विप्। उत्पाटके

**उल्लेख** पु० उद्+लिख-घञ्। इदं कर्त्तव्यमित्यादिना संक-
ल्पितार्थप्रतिपादकशब्दोच्चारणे "संशयच्छेदमेव प्रयोज-
नम् यत्रोल्लेखः" ति०त०। अलङ्कारभेदे पु० स च
२६८पृ०उक्तः। २घर्षणे च। "अग्रत्रिरिमितपल्लोल्ले-
खविषमितगण्डैस्त्रे" काद०। ३उत्कीर्त्तने च

**उल्लेखन** न० उद्+लिख-ल्युट्। १वमने, २वमने, कर्त्तव्य-
तया ३संकल्पितार्थकवाक्योच्चारणे "मासपक्षतिथीनाञ्च
निमित्तानाञ्च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फल-
भाग् भवेत्" ति०त०ब्र०पु०। "संकल्पेन विना राजन्।
यत्किञ्चित् कुरुते नरः। फलं चाल्पाल्पकं तस्य धर्मस्यार्द्ध-
क्षयो भवेत्" ति०त०भ०पुराणाच्च संकल्पवाक्ये मासादी-
नामवश्यं कीर्त्तनीयताऽवगम्यते। "मनसा सङ्कल्पयति वा-
चाऽभिलपतीत्युक्तेरपि अभिलापस्यावश्यकता। अभिला-
पवाक्ये च मासादिनिमित्तानामिव आत्मसम्बन्धित्वेन
तत्तत्कर्मादिकस्यापि कीर्त्तनं कर्त्तव्यम्" "प्रत्येकं नि-

तस्य त्यागो विगर्हितः । यो हि कश्चिद्द्विजान् हन्याद्गां वा लोकस्य मातरम् । शरणागतञ्च त्यजते तुल्यं तेषां हि हि पातकम् । श्येन उवाच । आहारात् सर्वभूतानि सम्भवन्ति महीपते ! । आहारेण विवर्द्धन्ते तेन जीवन्ति जन्तवः । शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् । न तु भोजनमुत्सृज्य शक्यं वर्त्तयितुं चिरम् । भक्ष्याद्वियोजितस्याद्य मम प्राणा विशाम्पते ! । विसृज्य कायमेष्यन्ति पन्थानमकुतोभयम् । प्रमृते मयि धर्मात्मन् ! पुत्रदारं विनङ्क्ष्यति । रक्षमाणः कपोतं त्वं बहून् प्राणान्न रक्षसि । धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् । अविरोधात्तु यो धर्मः स धर्मः सत्यविक्रम ! । विरोधिषु महीपाल ! निश्चित्य गुरुलाघवम् । न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् । गुरुलाघवमादाय धर्माधर्मविनिश्चये । यतो भूयांस्ततो राजन् ! कुरुष्व धर्मनिश्चयम् । राजोवाच । बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ! । सुपर्णः पक्षिराट् किं त्वं धर्मज्ञश्चास्यसंशयम् । तथा हि धर्मसंयुक्तं बहु चित्रञ्च भाषसे । न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहम् । शरणैषिपरित्यागं कथं साध्विति मन्यसे । आहारार्थं समारम्भस्तव चायं विहङ्गम ! । शक्यश्चाप्यन्यथा कर्त्तुमाहारोऽप्यधिकस्त्वया । गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा । त्वदर्थमद्य क्रियतां यद्वान्यदिह काङ्क्षसि । श्येन उवाच । न वराहं न चोक्षाणं न मृगान् विविधांस्तथा । भक्षयामि महाराज ! किं ममान्येन केनचित् । यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ! । तमुत्सृज महीपाल ! कपोतमिममेव मे । श्येनः कपोतमत्तीति स्थितिरेषा सनातनी । मा राजन् ! सारमज्ञात्वा कदलीस्कन्धमाश्रयः । राजोवाच । राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर ! । यं वा कामयसे कामं श्येन ! सर्वं ददानि ते । विनेमं पक्षिणं श्येन ! शरणार्थिनमागतम् । येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम ! । तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् । श्येन उवाच । उशीनर ! कपोते ते यदि स्नेहो नराधिप ! । आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् । यदा समं कपोतेन तव मांसं नृपोत्तम ! । तदा देयन्तु तन्मह्यं सा मे तुष्टिर्भविष्यति । राजोवाच । अनुग्रहमिमं मन्ये श्येन ! यन्माभियाचसे । तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् । लोमश उवाच । उत्कृत्य स स्वयं मांसं राजा परमधर्मवित् । तोलयामास कौन्तेय ! कपोतेन समं विभो ! । ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते । पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः । न विद्यते यदा मांसं कपोतेन समं धृतम् । तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् । श्येन उवाच । इन्द्रोऽहमस्मि धर्मज्ञ ! कपोतो हव्यवाडयम् । जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ । यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशाम्पते ! । एषा ते भास्वरी कीर्त्तिर्लोकानभिभविष्यति । यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ! । तावत् कीर्त्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः । इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः । उशीनरोऽपि धर्मात्मा धर्मेणावृत्य रोदसी । विभ्राजमानो वपुषा प्रारुरोह त्रिविष्टपम्" १३१ अ० । उशीपूरको वाञ्छापूरको नरो यत्र । २ तदधिकृतदेशे जटाधरः ।

**उशीर** पु०न० वश–ईरन् किच्च । वीरणमूले (खसखस) तस्य गुणाः "उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् । मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तनुत् । तृष्णास्त्रविषवीसर्पदाहकृच्छ्रव्रणापहम्" भावप्र० "अगरुप्रकोशीरभद्रदारु कुङ्कुमानि पुन्नागकेशरञ्चेति" "चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीछिन्नभिः" सुश्रु० स्वार्थे कन् तत्रैव । उशीरं पण्यमस्य किशरादि० ष्ठन् । उशीरिक तद्विक्रेतरि स्त्रियां षित्वात् ङीष् । उशीनरस्यापत्यम् अण् । औशीनर तदपत्ये शिविप्रभृतौ ।

**उशीरवीज** पु० उशीरस्य वीरणमूलस्य वीजं यत्र । उत्तरदिक्स्थे पर्वतभेदे "उशीरवीजं मैनाकं गिरिं श्वेतञ्च भारत ! । समतीतोऽसि कौन्तेय ! कालशैलञ्च पार्थिव ! " इत्युपक्रम्य "श्वेतं गिरिं प्रवेक्ष्यामो मन्दरञ्चैव पर्वतम् । यत्र माणिवरो यक्षः कुवेरश्चैव यक्षराट्" भा०व० १३९अ० उक्तेस्तस्य उत्तरदिक्स्थत्वं मन्दरगिरिसन्निकृष्टत्वञ्च "तपारचयसङ्काशो मन्दरश्चैव पर्वतः । उशीरवीजश्च गिरिर्ब्रह्मोपत्यकागिरिराट्" हरि० २३६अ० उक्तेः कैलासस्थितत्वमपि ।

**उशीरादि** न० चक्रदत्तोक्ते ज्वरातिसाराधिकारोक्ते पाचनभेदे । "उशीरं बालकं मुस्तं धान्यकं विश्वभेषजम् । समङ्गाधातकी लोध्रं विल्वं दीपनपाचनम् । हन्त्यरोचकपिच्छासं विबन्धं सातिवेदनम् । सशोणितमतीसारं सज्वरं वाथ विज्वरम्" ।

**उशेन्य** त्रि० वश–वा० केन्य स०प्र० । कमनीये । "आ शेमाखोरुशेन्योजनिष्ट" ऋ०८,२,९, "उशेन्यः कमनीयः" भा०

वेददी० ४नाडीमुहूर्त्ते "उषायै अश्वस्य मेध्यस्य विध्याय" बृ०उ०। "उषा ब्राह्मो मुहूर्त्तकालः" शं०भा०। ५दिवोदुहितृदेवतायाम् स्त्री प्रौढ़मनोरमा।

उषसी स्त्री उषं तापकत्वात् दिवसं स्यति षो–क गौरा० ङीष्। सायं सन्ध्यायाम् मेदिनिः।

उषस्ति पु० ऋषिभेदे "उषस्तिर्ह चाक्रायणः" छा०उ०। उषस्तोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत०ब्रा०१४,६,५,१।

उषा स्त्री ओषत्यन्धकारम् उष+क। १प्रातरादिसन्ध्यासु "वेमीरतुमतरुषाश्रियः" ऋ०८,४१,३। तिस्रः प्रातःसायं मध्याह्नसन्ध्या उषाः" भा०। "उषा विभातीरनु भासि पूर्व्वीः" २,३,७, "तेजःपरिहाणिरुषा भानोरर्द्धोदयं यावत्" इ० सं०उक्ते २काले नक्षत्रप्रभाक्षयः काल उषा। तेन पञ्चपञ्चाशद्घटिकोत्तरमारभ्य सूर्य्योदयपर्य्यन्तः स कालः। लग्नाद्यलाभे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रलुप्तद्युतितारका स्फुटतटी प्राची भवेन्निर्म्मला लोपद्रक्तविलोहितान्तगगना देवैः सदा वाञ्छिता। नो वारं न तिथिं न योगकरणं लग्नस्य नापेक्षते कृत्वा दोषसहस्रहन्त्र्यमुषा नूनं करोत्युन्नतिमिति"। "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः। उषां गोधूलियोगं वा स्वीकृत्य गमनं चरेत्। प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृप। दक्षिणेऽभिजितं चैवमुत्तरे च निशां तथा"। "आरक्तबिम्बं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः। व्यासः" "आहुः प्रयातुः सकलार्थसिद्धिः संजायते श्वस्तनस्थितैव" ज्यो०त०व्यासः। ३अन्धकारेण सन्तापकारिण्यां ३रात्रौ मेदि० "अधिकरुचिरशेषामप्युषां जागरित्वा" माघः। ४आरभूमौ। ततः कचित् गौरा० ङीष्। "भवान् कुर्त्त कुक्कुटाङ्गमिवोषस्युषाम्" भाग० ५स्त्रीगव्यां हेम० ६उखायां शब्दच० ७स्थाल्यां रमानाथः। ८बाणराजसुतायाञ्च तत्र दीर्घादित्वमपि भारतादौ तथैव निर्द्देशात्। तया च यथा अनिरुद्धः पतित्वेनाप्तः तथा वर्णितं भाग०१०स्क०६२अ०यथा (बाणस्य) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम्। कन्याऽलभत कान्तेन प्रागदृष्टश्रुतेन सा। सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी। सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम्। बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीमुषां कौतूहलसमन्विता। कं त्वं मृगयसे सुभ्रु! कीदृशस्ते मनोरथः। हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये। उषोवाच। दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः। पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः। तमहं मृगये कान्तं पाययित्वाऽधरं मधु। क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे। चित्रलेखोवाच। व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते। तमानेष्ये नरं यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुजांश्च यथाऽलिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते!। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम्। तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता। गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत्। सा च तं सुन्दरवरं विलोक्य मुदितानना। दुष्प्रेक्ष्ये स्वगृहे पुंसा रेमे प्राद्युम्निना समम्। परार्द्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः। पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्च्चितः। गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया। नाहर्गणान् स बुबुधे उषयोपहृतेन्द्रियः" विस्तरस्तु हरिवं०१७६अ०। ९प्रातःकाले अव्य० मेदि० अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च। उषातन तद्भवे त्रि० स्त्रियां ङीप्।

उषाकल पु० उषायां कलो रवो यस्य। कुक्कुटे।

उषापति पु० ६त०। कृष्णपौत्रे प्रद्युम्नसुते यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषानाथादयोऽप्यत्र, अमरे "अनिरुद्ध उषापतिरिति" ह्रस्वपाठः भारतादौ तु दीर्घपाठः।

उषित त्रि० वस क्त। १पर्य्युषिते २कृतवासे च। उष–दाहे क्त। ३दग्धे मेदि०। ४त्वरिते शब्दचि०। भावे क्त। ५वासे न० "चाण्डालैरुषितं यत्र" शु०त० देवलः।

उषीर पुंन० उष–कीरच्। वीरणमूले रायमुकुटः।

उष्ट्र पु० उष–सेचने ष्ट्रन् वेदे नेट्। १ककुद्मति बलीवर्द्दे। तस्याभोषनीयत्वात् तथात्वम् "ओष्टारौ वा" काठ्या० ५,११,१२। "ओष्टारौ महाबलीवर्द्दौ" कर्कः। आ+सम्यक् उष्टारौ इति विग्रहः। "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १५,१०६,२। लोके तु उष्ट्र इत्येव। २सेक्तरि त्रि० स्त्रियां ङीप्।

उष्ट्र पुंस्त्री० उष+ष्ट्रन् कित्। (उट) प्रसिद्धे पशुभेदे

स्त्रियां जातित्वात् ङीष्। “हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति” “नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम्। न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः” मनुः। तद्यानविधेमाह “उष्ट्रयानं समारुह्य खरयानं तु कामतः। स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति” मनुः। कामतः” इत्युक्त्या कर्म्मभेदे तद्याने न दोष इति सूचितम् अतएव “उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि” पार० गृ०सू० मन्त्रलिङ्गेन तद्यानं विहितम्। तस्य मांसं न भक्ष्यम् “भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः” मनूक्तेः। तेनास्य एकदन्तपङ्क्तियुक्तत्वम्। “गौरजो महिषः कृष्णः सूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!” भाग०उक्तेः गवादयः उष्ट्रान्ता द्विशफाः इति बोध्यम्। तथा तद्घाते दोषः “मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत्। प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु” मनूक्तेः। ब्रह्महत्यादिपापेन तज्जातिर्भवति यथाह मनुः “यां यां योनिन्तु जीवोऽयं येन येनेह कर्म्मणा। क्रमशो याति लोकेऽस्मिंस्तत्तत् सर्वं निबोधत। बहून् वर्षगणान् घोरान् नरकान् प्राप्य दारुणान्। संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमे। श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति”। यानहरणपापेऽप्युष्ट्रयोनिप्राप्तिमाह वृकेत्युपक्रम्य मनुः “स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः”। तद्वधे प्रायश्चित्तमाह “हयवाजाश्विकोष्ट्रेषु गर्दभेषु च मारणात्। मात्रापत्याहमेवेह प्रायश्चित्तं विधीयते” प्रा०वि०विष्णुः। तद्भक्षणे प्रायश्चित्तमाह भक्ष्यतदुक्तौ प्रा०वि०यमः “ग्रामश्च कुक्कुटोष्ट्रौ च सर्वं पञ्चनखं तथा। क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्” “अथोष्ट्रवामीशतवाहितार्थः” रघुः। “दतिश्च तत्र कुर्व्वीत यावद्गोनावलोकयेत्” मनुः। “अन्योन्यतः पथि वताविमीतामिभोष्ट्रौ” माघः। तन्मूत्रगुणाः सुश्रु० उक्ताः। “अथ मूत्राणि गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कट्न्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातकृमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः। भवन्ति चात्र। सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु। शोधनं कफवातघ्नं कृमिमेदोविषापहम्। अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम्। पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्”। सामान्यत उक्त्वा “अर्शोघ्नं कारभं मूत्रमिति” विशेषगुण उक्तः। तन्मांसगुणाः सुश्रुते उक्ताः तत्र उष्ट्रशब्दे दर्शितम्। तस्य ग्राम्यत्वं तत्रोक्तम्। तच्च उष्ट्रशब्दे दर्शितम्। किन्तु तस्यारण्यत्वमपि अतएव “उष्ट्रमारण्यमनु ते दिशामि” यजु०१३,२४, तस्यारण्यत्वमुक्तम्। तस्य त्वष्टृदेवतार्थं अश्वमेधे देयतोक्ता “ऋष्टुत्वचे गवयान् त्वष्ट्र उष्ट्रान्” यजु०२४,२८, द्वित्वे गोयुगच्। उष्ट्रगोयुग उष्ट्रद्वित्वे न०। शालायां गोष्ठच्। उष्ट्रगोष्ठ उष्ट्रशालायां न०। षट्के षड्गवच्। उष्ट्रषड्गव उष्ट्रषट्के न०। तस्येदमण्। औष्ट्र तत्सम्बन्धिमांसादौ त्रि०। “परं चौष्ट्रं मैषं नरमहिषयोश्छागमपि वा” कर्पूरस्तवः।

**उष्ट्रकर्णिक** पु० उष्ट्रस्य कर्णः भेदनम् कर्ण+भिदि–अच्। सोऽस्त्यस्य ठन्। दक्षिणस्थे जनदेशभेदे तद्देशवासिभिर्हि भोजनार्थम् उष्ट्रभेदनात् तद्देशस्य तथात्वम्। सहदेवदक्षिणदिग्विजयवर्णने “अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्। आटवीं च पुरीं रम्यां यवनानां पुरीं तथा” भा०स०२०अ० उष्ट्रतुल्यकर्णजनवत्त्वाद्वा तथात्वम्।

**उष्ट्रकाण्डी** स्त्री उष्ट्र इव काण्डोऽस्य जातित्वात् ङीष् (उटाटी) क्षुपभेदे राजनि०।

**उष्ट्रग्रीव** पु० उष्ट्रग्रीवा आकारत्वेनास्त्यस्य अर्श० अच्। सुश्रुतोक्ते पैत्तिके भगन्दररोगभेदे। तन्निदानलक्षणादि तत्रोक्तं यथा “वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्वाः पिडकाः पक्वास्तु भगन्दराः। तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति” इत्युपक्रम्य। “पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति। साऽऽस्योषादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति अग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति, तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते”। उष्ट्रशिरोधरोऽप्यत्र “प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिडकां गुदाश्रिताम्। तदाशुपाकाहिमपूतिवाहिनीम् भगन्दरं तूष्ट्रशिरोधरं वदेत्” निदानम्।

**उष्ट्रधूसरपुच्छी** स्त्री उष्ट्रस्येव धूसरः पुच्छ इव मञ्जरी अस्याः जातित्वात् ङीष्। (विछाति) क्षुपभेदे रत्नमाला स्वार्थे कन् ह्रस्वः। तत्रार्थे।

**उष्ट्रपादिका** स्त्री उष्ट्रस्य पादा इव पादोमूलमस्याः कपि अत इत्त्वम् । (मदनमाली) भूमिलतायाम् रत्नमा॰

**उष्ट्रस्थान** न॰६त॰। उष्ट्रस्य शालायाम् । तत्र भवः अण् । स्थानान्तत्वात् तस्य लुक् । उष्ट्रस्थान तत्रभवे त्रि॰तद्धित वृत्ति विशेष्यलिङ्गत्वनियमात् त्रिलिङ्गत्वम् ।

**उष्ट्रासिका** स्त्री आसनम् आसिका आस–भावे ण्वुल् उष्ट्रस्येवासिका । उष्ट्रस्येव आसने । "उष्ट्रासिकाः आसन्ते" पा॰ भाष्यम् अत्र क्रियाविशेषणस्यापि यथा बहुवचनान्तताऽक्लीवता च तथाकारे समर्थितम् तच्च शब्दार्थरत्ने अस्माभिर्दर्शितम् ।

**उष्ट्रिका** स्त्री उष्ट्रस्याकारः पृष्ठावयव इव आकारोऽस्त्यस्याः ठन् । मृण्मये मद्यभाण्डभेदे विश्वः "घूर्णत्क्षिप्तविदारितोष्ट्रिका" माघः। उष्ट्री+स्वार्थे कन्। उष्ट्रजातिस्त्रियाञ्च ।

**उष्ण** पु॰उष+नक् । १ग्रीष्म ऋतौ, २आतपे, ३पलाण्डौ ४नरकभेदे, ५शीतविरोधिस्पर्शे च । अर्श॰अच् ।६तद्वति, ७आलस्यरहिते ८दक्षे च त्रि॰ । "सूतके मृतके चैव न स्नायादुष्णवारिणा" स्मृतिः "आददे नातिशीतोष्णो नभस्वानिव दक्षिणः" रघुः "अभीक्ष्णमुष्णैरपि तस्य सोष्मणः" "आपयद्भिमानोष्णैर्वनमालां सुखानिलैः" माघः ६तापे पु॰ "मुष्णन्मुष्णं ततिभिस्तरूणाम्" माघः "उष्णं तापम्" मल्लि॰ । तत्र ग्रीष्मस्य सूर्यतापाधिक्यवत्त्वात् उष्णत्वम् "शीघ्रातीव्रकरोभानुर्न हेमन्ते तथाविधः" इति प्रश्ने "अत्रासन्नतया तेन ग्रीष्मे तीव्राः कराः रवेः । देवभागेऽसुराणान्तु हेमन्ते मन्दताऽन्यथा" सू॰सि॰तद्वचोक्तेः । विवृतञ्चेदं रङ्गनाथेन "तेन उत्तरदक्षिणगोलयोः सूर्यस्योत्तरदक्षिणस्थानरूपकारणेनेत्यर्थः । देवभागे जम्बुद्वीपे अत्रासन्नतया सूर्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्त्तौ सूर्यस्य तेजोगोलकस्यकिरणास्तीक्ष्णा अत्युष्णाः । असुराणां देवभाग इत्यस्य समन्वयाद्दैत्यानां भागे समुद्राद्दक्षिणप्रदेशे हेमन्ते हेमन्तर्त्तौ तुकारात् सूर्यस्यात्युष्णाः किरणाः सूर्यस्यात्यासन्नत्वात् । अन्यथा सूर्यस्य दूरस्थत्वे मन्दता किरणानामुष्णताभावः । देवभागे हेमन्तर्त्तौ कराणां मन्दता । अतएव तत्र शीताधिक्यम्, दैत्यभागे ग्रीष्मे कराणां मन्दता शीताधिक्यं च । तथाच देवभागे दक्षिणगोले सूर्यस्य दूरस्थत्वमुत्तरगोले निकटस्थत्वं मध्यगतदेशानां क्रमेणाधिकाल्पत्वादीति भावः" । अतएवोक्तं "मिथुनकर्कटयोर्मध्ये गाढं तपति भास्करः" ति॰त॰ पु॰ । एतच्च देवभाग एव नासुरभागे, ग्रीष्म ऋतुश्च ज्यैष्ठाषाढात्मकः । "मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रैष्मावृतुः" काल॰मा॰इत्कोपधानमन्त्रोक्तेः । ततो भावे इमनिच् । उष्णिमन् पु॰ तल् उष्णता स्त्री त्व उष्णत्व न॰ ष्यञ् औष्ण्य न॰। उष्णस्पर्शे स्वार्थे कन् उष्णस्पर्शाद्यर्थे । उष्णस्पर्शस्तु तेजसोगुणः "स्पर्श उष्णस्तेजसस्तु" भाषोक्तेः जलादीनां तेजःसंयोगविशेषादौपाधिकः । देहस्य तथात्वे कारणभूतत्वगद्दे वक्ष्यते गुणवचनत्वात् प्रकारे द्वित्वम् उष्णोष्ण उष्णप्रकारे । "उष्णोष्णशीकरस्तुजः" माघः

**उष्णक** त्रि॰उष्णमिव करोति कन् । १अलसे, क्षिप्रकारिणि क्षिप्रकारी हि आदावायकमालस्यमनाहत्य स्वकर्तव्ये व्याप्रियते इति तस्य तथात्वम् । उष्णं करोति उष्ण+णिच्-ण्वुल् । २ज्वरे पु॰ ।

**उष्णकर** प॰ उष्णः करः किरणोऽस्य । १सूर्ये । उष्णकिरणोष्णदीधिति प्रभृतयोऽप्यत्र । उष्णं करोति कृ–अच् ६त॰ । २उष्णकारके त्रि॰

**उष्णकाल** पु॰कर्म॰६त॰वा । ग्रीष्मे ऋतौ । "तक्रं नैव ददातेद्यात् नोष्णकाले न दुर्बले" सुश्रुतः ।

**उष्णग** पु॰उष्णमुष्णस्पर्शं गच्छति यत्र गम–बा॰आधारे ड । ग्रीष्मे काले "मातङ्गोन्यपतत् भूमौ नदीरोधइवोष्णगे" भा॰उ॰१२३अ॰। आधारे घञ् उष्णगमोऽप्यत्र हेम॰।

**उष्णगु** पु॰ उष्णागावः कराः अस्य लुप्तः । सूर्ये । उष्णरश्म्यादयोऽप्यत्र "कुबेरगुप्तां दिशमुष्णरश्मौ" कुमा॰ ।

**उष्णङ्करण** न॰ ६त॰करणे परे मुम् । उष्णसाधने ।

**उष्णनदी** स्त्री कर्म॰। "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् तप्तायां वैतरण्याम् नद्याम् ।

**उष्णवारण** न॰उष्णं वारयति वृ–णिच्–ल्यु ६त॰। आतपत्रे, छत्रे "यदर्थमम्भोजमिवोष्णवारणम्" कुमा॰अस्योत्पत्त्यादिकम् आतपत्रशब्दे ६४८ पृ॰ उक्तम् । तल्लक्षणं वृह॰सं॰ दर्शितं यथा "निचितं तु हंसपक्षैः कृकवाकुमयूरसारसानां च । दौकूलेन नवेन तु समन्ततश्छादितं शुक्लम् । मुक्ताफलैरुपचितप्रलम्बमालाविलं स्फटिकमूलम् । षड्हस्तशुद्धहैमं नवपर्वनगैकदण्डं च । दण्डार्धविस्तृतं तत् समावृतं रत्नविभूषितहृदयम् । नृपतेस्तदातपत्रं कल्याणकरं विजयदं च । युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानां च । दण्डोऽर्धपञ्चहस्तः समपञ्चकरार्धविस्तारः । अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिरस्कम् । व्यालम्बिरत्नमालं छत्रं कार्यं च मायूरम् ।

कृषेषां च नराणामातपवारणं तु चतुरस्रम् । समरक्तदण्डयुक्तं छत्रं कार्य्यं तु विप्राणाम्" उष्णप्रादयो ऽप्यत्र । तद्धारणे गुणाः सुश्रुते उक्ता यथा "वर्षानिलरजोघर्महिमादीनां निवारणम् । वर्ण्यं चक्षुष्यमोजस्यं मङ्गलं छत्रधारणम्"।

उष्णवीर्य्य पु० उष्णमुष्णं वीर्य्यमस्य । १ शिशुमाराख्ये जलजन्तौ । २ उष्णवीर्य्यवति त्रि० हेम० । उष्णवीर्य्यद्रव्याणि च सुश्रुते नानास्थाने उक्तानि तानि तत एवावगम्यानि

उष्णांशु पु० उष्णाः अंशवोयस्य । सूर्य्ये ।

उष्णागम पु० उष्णम् आगम्यतेऽत्र गम+आधारे-अप् । निदाघकाले । उष्णाभिगमोऽप्यत्र शब्दच० ।

उष्णालु त्रि० उष्णं न सहते आलुच् । उष्णाऽसहने । "उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी" विक्रमो० ।

उष्णासह पु० उष्णम् आसह्यतेऽत्र आ+सह-घञ् । १ हेमन्ते ऋतौ । उष्णं न सहते अच् । २ असहिष्णौ त्रि० ।

उष्णिका स्त्री अल्पमन्नमस्याम् अल्पार्थे कन् नि० अन्नस्य उष्णादेशः । १ यवाग्वाम् (याउ) । उष्णकशब्दात् स्त्रियां टाप् अत इत्त्वम् । २ दक्षायाम् स्त्रियाम् ।

उष्णिज पु० उष-इजिक् बा० तुट् । उष्णस्य गर्भयुक्ते ततः प्रज्ञा० स्वार्थे अण् । औष्णिज तदर्थे ।

उष्णिह् स्त्री उत्स्निह्यति क्विन् नि० छन्दोऽन्यलोपे षत्वम् । सप्ताक्षरपादके १ छन्दोभेदे । स्वादौ कुः उष्णिक् । उष्णिग्भ्याम् । "गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च" वृ० र० । "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब् बृहती" इत्युपक्रम्य "द्वितीयमुष्णिक् त्रिपदान्त्योद्वादशकः । आद्यश्चेत् पुरउष्णिक्, मध्यमश्चेत् ककुप् । त्रैष्टुभ जागतचतुष्काः ककुबन्यङ्कुशिरैकादशिनो: परः षट्कस्तनुशिराः मध्ये चेत् पिपीलिका मध्याद्यपञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा चतुःसप्त कोष्णिगेव" सर्वानु० ५ अ० । "एवमेवोष्णिहं सवितारं पीवासनूके" इति सर्वानु० ४ अ० उक्तेः तस्याः सवितृदेवताकत्वेन पीवासु अनूके च न्यासः । तस्या उपधानप्रकारः शत०ब्रा० ८,६,२,२, आदौ दर्शितं तत एवावसेयः । २ तदभिमानिदेवभेदे च । अश्वमेधे "त्रिवत्सा अनुष्टुभे तुर्य्यवाह उष्णिहे" यजु० २५,१२१ । पशुविशेषाणाञ्छन्देवताविशेषोद्देशेन यूपादौ बन्धनक्रमम् । अस्य हलन्तत्वेऽपि अजादि० टाप् । उष्णिहा "उष्णिहा छन्द इन्द्रियम्" यजु० २१,१२, "बृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा २३,३२, "स्नुषातु पीवाः प्र स्त्वा तूष्णिहा हंसस्येव शचीपतिः" अथर्ववेदे ६,१२४,१,

उष्णीगङ्ग न० उष्णीभूता गङ्गा नदीभेदो यत्र मध्यपदलोपः । भृगुतुङ्गपर्वतस्थे तीर्थभेदे "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम् । उष्णीगङ्गे च कौन्तेय ! सामात्यः समुपस्पृश" भा० व० १२५ अ० ।

उष्णीष पु० न० उष्णमीषते हिनस्ति ईष-क शक० पररूपम् । १ शिरोवेष्टनवस्त्रे (पागड़ि) २ किरीटे च "अथास्मा अध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रिःप्रदक्षिणं शिरः सम्मुखं वेष्टयित्वा" आ० श्रौ० सू० ६,७ । सर्वहा लोहितोष्णीषा निश्लेषिणो याजयेयुः" आ० श्रौ० ८, ७,४ । "लोहितोष्णीषा ऋत्विजश्चरन्तीति" श्रुतिः । समावर्त्तनकाले च तस्य धारणमाचार्य्याय दानं च विहितम् । "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने आचार्य्याय च" । "यद्युभयोर्न विन्देताचार्य्यायैव" आ० गृ० ३,८,१,२ । तद्धारणगुणः सुश्रु० उक्तः "पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम् । वर्षानिलरजोघर्महिमादीनां निवारणम्" ।

उष्णीषिन् त्रि० उष्णीष+अस्त्यर्थे इनि । १ उष्णीषधारिणि स्त्रियां ङीप् २ महादेवे पु० । "उष्णीषी च सुवक्त्रश्च उदग्रोविनतस्तथा" शिवस्तुतौ" भा० अनु० १७ । "उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे" भा० अनु० ८ ।

उष्णोदक न० कर्म० । अग्निना तप्तजले क्वाथ्यमानपादशेषार्द्धावशेषपादादिहीनके जले तद्गुणादि भावप्र० "अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा । अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्" । तद्गुणाः "श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् । कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि । क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्म्मलन्तथा । अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते । ज्वरकासकफश्वासवातपित्तामभेदसाम् । नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा । त्रिपादशेषं सलिलं पीतं शरदि शस्यते । हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः" अन्ये तु "निदाघे सर्वपादोनं पादहीनन्तु शारदम् । शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम् । अष्टमांशावशेषन्तु वारि वर्षासु शस्यते" केचित्तु "विभिन्नेषु वाक्येषु वेदेषु त्रिषु पक्षयोः । एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्" । अत्र दोषाणां यथोल्वणता हीनता वा तथा व्यवस्था कल्पनीया । "तत् पादहीनं पित्तघ्न-

र्द्धहीनन्तु वातनुत् । त्रिपादहीनं श्लेष्मघ्नं संपाद्यग्निकरं लघु"। त्रिपादहीनस्य तन्त्रान्तरे आरोग्याम्बु संज्ञा। तस्य लक्षणगुणास्तु । "पादशेषन्तु यत्तोयमारोग्याम्बु तदुच्यते । आरोग्याम्बु सदा पथ्यं कासश्वासकफापहम् । सद्योज्वरहरं ग्राहि दीपनं पाचनं लघु । आनाहपाण्डुशूलार्शोगुल्मशोथोदरापहम्" भा॰प्र॰ "दिवा शृतन्तु यत् तोयं रात्रौ तद्गुरुतां व्रजेत्" वैद्यकम् । "संक्रान्तौ पर्वहस्ते च ग्रहणे चन्द्रसूर्ययोः । सूतके मृतके चैव न स्नायादुष्णवारिणा" स्मृतिः । "अन्नस्योपहृतं वापि शीतमुष्णमथापि वा । गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम्" मरीचिः । "नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् । तीर्थाभावे च कर्त्तव्यमुष्णोदकपरोदकैः" यमः । "उष्णाम्बुनाधःकायस्य परिषेको बलापहम् । तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषोः" श्रा॰त॰ आयुर्वेदः । उष्णोदकेनाचमननिषेध आचमनशब्दे उक्तः ।

उष्णोपगम पु॰ उष्णम् उपगम्यतेऽत्र आधारे घञ् ६तत्॰ । निदाघकाले। ग्रीष्मर्त्तौ [कन्। तत्रैव आतपे च ।

उष्म पु॰ उष-मक्। १ धर्मे, २ आतपे, ३ ग्रीष्मऋतौ च । स्वार्थे

उ(ऊ)ष्मन् त्रि॰ उष-आधारे मनिन् वा॰ वा दीर्घः । १ ग्रीष्मर्त्तौ कर्त्तरि मनिन् । २ आतपे "नोपतापि मनः सोष्म" "उष्णोष्मयोगकरसतलः प्रबलोष्मणोऽन्तः" "अभितप्तयोरपि तस्य सोष्मणः" माघः । दीर्घादिः ३ शषसहवर्णेषु ।

उ(ऊ)ष्मप पु॰ उष्माणं पिबति पा-क्विप् । भृगोः पुत्रे १ पितृगणभेदे "सुकालिनो बर्हिषद उ(ऊ)ष्मपा आज्यपास्तथा" पितृगणनायां स्मृतिः । २ उ(ऊ)ष्मपानकर्त्तरि तपस्विभेदे त्रि॰ । "उद्दण्डैरिव रविनिविष्टदृष्टिभिर(रू)ष्मपैः" काद॰ । [घञ् वृद्धिः । निदाघकाले ।

उ(ऊ)ष्मागम पु॰ उ(ऊ)ष्मा आगम्यतेऽत्र आ+गम-आधारे

उ(ऊ)ष्माय नामधा॰ उ(ऊ)ष्माणमुद्वमति उ(ऊ)ष्मन्+क्यङ् । उ(ऊ)ष्मायते औष्मायिष्ट उ(ऊ)ष्मायमाणः ।

उस्र पु॰ वसन्ति रसा अत्र वस-रक् नि॰ न षत्वम् । १ किरणे, सूर्यकिरणानां जलाकर्षकत्वेन रसवत्त्वात्तथात्वम् । २ अन्येषां यथायथं रसवत्त्वम् बोध्यम् । ३ वृषे । ३ सुरभ्यां ४ लतायां ५ पृथिव्यां च स्त्री निघ॰। देवभावे पु॰ छन्द॰ "उस्रावेतं धूर्षाहौ" यजु॰ ४,२२ । "उस्रौ अनड्वाहौ" वेददी॰ "उस्रा नार्वोग्रः पितेव" ऋ॰ ६,१२,४ । "उस्रो वृषभः" भा॰ "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" रघुः "यो धर्त्ता भुवनानां य उस्राणामपीच्या" ऋ॰ ८,४१,१ । ७ सूर्ये "प्रमित्रासो न ददृशुस्रो अपे" २,५८,४ । "वसति नभसीयुस्रः सूर्यः" भा॰। सूर्यरश्मिसम्बन्धात् ८ दिवसे च । "द्युमा उस्रयामा" ऋ॰ ७,७१,४, उस्रयामा दिवसं प्रति गन्ता" भा॰ उस्रमिच्छति उस्रयति "उस्रोमाश्चाटः प्रतिषेधः" वार्त्ति॰ अश्वादौ नाट उस्रीत्युः षत्वाभावश्च आर्षं यत् । ९ सहवासिनोः अश्विनीकुमारयोः हि॰ व॰। "अग्नयः उस्रा जरन्ते" ऋ॰ ४,४, ५,५, उस्रा सहनिवसन्तावश्विनौ सुतौ" भा॰ ।

उस्रि स्त्री वस-बा॰ क्रि षत्वाभावः । गव्याम् "क्षियन्ति सूर मुस्रयः" ऋ॰ ८ ६५,१, "उस्रयः सर्वत्र गन्त्र्यः" भा॰ ।

उस्रिक पु॰ उस्र+अल्पार्थे स्वार्थे वा ठन् । अल्पार्थके १ जीर्णवृषभे अल्पक्षीरस्राविण्यां २ स्त्रीगव्याम् स्त्री

उस्रिय पु॰ उस्र+स्वार्थे अल्पार्थे वा घ । १ जीर्णवृषभे "उस्रियो वृषभः क्रन्दतु द्यौः" ऋ॰ ५,५८,६, २ स्त्रीगव्याम् स्त्री निघ॰। "गवामृष्व मुस्रियाणाम्" ऋ॰ ५,२,४, "उस्रियाणां क्षीरमुत्पादयन्तीनाम्" भा॰।

उह अर्दने भ्वादि॰ पर॰ सक॰ सेट् इदित् । ओहति औहत्, औहीत्, उवोह ऊहतुः । अप अपसारणे "तामपौहीत् निशाचरः" भट्टिः "अपोहद्युत्तर." रघुः

उह अव्य॰ उ च ह च द्व॰ । १ संबोधने, २ एवार्थे च ।

उहह अव्य॰ उह च ह च । सम्बोधने ।

उहू स्त्री उह-कू। खेदसूचके शब्दे "नखानि विधुसङ्गया करतलेन तत्याजयोत् ततः क्षितितलभ्रमात् करमपास्य सद्दूरतः । ततोऽवलयशिञ्जितैर्भ्रमरगुञ्जिता यद्वया उहूरिति कुहूरवध्वनिभियाऽपतत् मूर्च्छिता"। वह-कू। वाहके त्रि॰। "हिरण्यपक्षाँ उहुव उपर्बुधः" ऋ॰ ४,४५, ४, उहुवः वाहकाः" भा॰ उवङ् छान्दसः

उह्यमान त्रि॰ वह-कर्मणि शानच्। यस्य वहनं क्रियते तस्मिन् "यथोह्यमानः किल भोगिनैरिणा" नैषध॰।

उह्र पु॰ वह-रक् । वृषभे शब्दार्थचिन्तामणिः

इति वाचस्पत्ये उकारादिशब्दार्थसङ्कलनम् ।

## ऊ

ऊकारः स्वरवर्णभेदः "ओष्ठ्यावुपू" इत्युक्तेः ओष्ठस्थानोच्चारणीयः स च उदात्तानुदात्तस्वरितभेदात् त्रिविधः दीर्घश्च द्वाभ्यां मात्राकालाभ्यामुच्चार्यत्वात् तस्य प्लुतस्योक्तिश्चिन्त्या त्रिमात्रकालस्यैव प्लुतत्वात् व्यञ्जनाकारभेदाच्च प्लुतस्य पार्श्वस्थत्र्यङ्कचिह्नितह्रस्वाकारेणैव लेखनप्रथाचारात्। त्रिविधोऽपि अनुनासिकाननुनासिकभेदात् द्विधा तेन षड्विधः तस्योच्चारणे विवार आन्तरप्रयत्नः "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" शिक्षोक्तेः विवृतत्वञ्च जिह्वाग्रादेः स्पर्शाभावः। "अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः तस्य तन्त्रे शुक्लाद्याकारतया ध्येयतोक्ता यथा "शुक्लकुन्दसमाकार ऊकारः परकुण्डली" कामधेनुतन्त्रम्। तस्य वामकर्णे सबिन्दुकतया निर्बिन्दुकतया वा मातृकान्यासे न्यासः। अतएव वामकर्णशब्देन तस्याभिधेयता "दीर्घाः सेन्दुर्वामकर्णपरिगतो बीजमन्त्रकेऽपि।" कर्पूरस्तवे हूङ्कारमन्त्रोद्धारः। तत स्वरूपे कारप्रत्ययः। तमव्ययम्। अधिकं स्वरवर्णसमाप्तौ दृश्यते।

ऊ अव्य॰ वेञ् क्विप्। १सम्बोधने, २वाक्यारम्भे, ३दयायां, ४रक्षायाञ्च मेदि॰ उञः स्थाने इतौ परे अनुनासिक ऊँ इति आदेशे तदर्थे तस्य प्रगृह्यत्वादितौ न सन्धिः।

ऊँ पु॰ अवतीति अव-क्विप् ऊठ्। १महादेवे २चन्द्रे च। ३पालके त्रि॰ शब्दरत्ना॰

ऊढ पु॰ वह–प्रापणे यानार्थत्वात् १कर्त्तरि क्त। १कृतविवाहे पुंसि "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" अमरः कृतवत् ऊढवत् तत्रैव पु॰। कर्म्मणि क्त। कृतविवाहायां स्त्रियाम् स्त्री। "भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽमर्षी" भट्टिः "कन्या पितुर्धनहरी यद्यनूढा भवेत्तदा" स्मृतिः "ऊढानूढासमवायेऽनूढैव प्रथमं धनहारिणी" दायक॰। "ऊढमाख्यत्" इति वाक्ये औजढत् न सि॰कौ॰ औजढत् न इत्यन्ये। २कृतवहने धृते त्रि॰। अस्य प्रशब्देन प्रा॰ स॰ वृद्धिः। प्रौढः "प्रौढकन्यावरादोषदर्शनात्" रघु॰ "अवयदुपहत्ये नार्थकस्येति" परिभाषया प्रौढवानिष्पत्त्ये न वृद्धिः

ऊढकङ्कट पु॰ ऊढो धृतः कङ्कटः कवचो येन। धृतकवचे वर्म्मिते।

ऊढि स्त्री वह-भावे क्तिन् संप्र॰। १वहने २विवाहे च। प्र+ऊढि प्रा॰स॰ वृद्धिः। प्रौढिः। ऊढिमाख्यत् औजिढत् न सि॰कौ॰ औजिढत् इत्यन्ये।

ऊत त्रि॰ वेञ्–क्त संप्र॰ दीर्घः। १तन्तुवयने २ग्रथिते। अवीतन्तुसन्ताने क्त। ३स्यूते "यस्मिन्नोतञ्च प्रोतञ्च" श्रुतिः। अव-क्त ऊठ्। ४रक्षिते त्रि॰।

ऊति स्त्री अव–क्तिन् ऊठ्। १रक्षणे। "देवस्य सन्त्यूतयो विविधाः" ऋ॰२,१४,६, "शतमस्माण् ऋद्धस्तूतयः" ४,३१,१०, कर्त्तरि क्तिच् ऊठ्। २रक्षितरि "उरुष्यत्समाधीदृशो न ऊती" ऋ॰४४,२, "ऊतीः ऊतयः रक्षन्तः" भा॰ अव–वेञ् वा क्तिन्। ३सीवने (सेलाइ) ४वयने (बोना) ५हरणे शब्दचि॰। ६लीलायाम् "नचास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः" भा॰१,५,३८, "ऊतीर्लीलाः" श्रीधरः वेञ्–कर्म्मणि कर्त्तरि वा क्तिन् क्तिच् वा। पुराणलक्षणमध्ये ७कर्म्मवासनारूपे लक्षणभेदे। "तस्मादिदं भागवतं पुराणं दशलक्षणम्" इत्युक्ता "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश लक्षणान्युद्दिश्य तेषां लक्षणान्युक्तानि यथा "भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः। स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः। मन्वन्तराणि सद्धर्म्म ऊतयः कर्म्मवासनाः। अवतारानुचरितं हरेश्चास्यानुवर्त्तिनाम्। पुंसामीशकथाः प्रोक्ताः नानाख्यानोपबृंहिताः। निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः। आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते" भाग॰ २,१०,२,८ "कर्म्मणां वासनाः ऊयन्ते कर्म्मभिः सन्तन्यन्ते इत्यूतय यद्वा इकारान्त संज्ञायां वयतेर्धातोरिदं रूपम्। ऊयन्ते कर्म्मभिर्बध्यन्ते संक्षिप्यन्ते वा ऊतयः" श्रीधरः

ऊधन् न॰ ऊधस्+टचो॰ सस्य नः। स्त्रीपशोः दुग्धाधारस्थाने (मेङ्) "वत्सो न मातुरुप सर्ज्यूधनि" ऋ॰८,६९,११ "यदः पीतासो अंशवो गावो न दुह्र ऊधभिः" ८,९,१९। "प्र धेनवः सिस्रते दुग्ध ऊधः" ऋ॰४,२२,६।

ऊधर न॰ ऊधस्+पृ॰ सस्य रः। स्त्रीगव्यादेः ऊधसि (मेङ्) "ऊधर्नग्ना भरन्ते" ऋ॰ ८,२,१२।

ऊधस् न॰ उन्द–क्लेदने असुन् किच्च दीर्घः। स्त्रीगव्यादेः दुग्धाधारे स्थाने (मेङ्) "गवामूधस्सु वक्षणासु" ऋ॰१०,४९,१०।

ऊर्व्वादि० इति गतिसमासादि ऊररीवत् द्रष्टव्यम् ।

**ऊरु** पु० ऊर्णूयते आच्छाद्यते ऊर्णु-कर्म्मणि कु नुलोपश्च । जानूपरिभागे तस्य वस्त्रादिभिराच्छादनीयत्वात् तथात्वम् । "नितान्तनारीपरिधानधूननस्फुटागसाप्यूरु लोलचक्षुषः" "करभकरोरुभिरुरुभिर्द्दधानैः" माघः । "कदली कदली, करभः करभः करिराजकरः करिराजकरः । भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" प्रसन्नरा० । "धात्रीकराभ्यां करभोपमोरुः" "भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः" रघुः अस्य उपमानपूर्व्वकत्वे उत्तरपदस्यास्य बहु०स०स्त्रियाम् ऊङ् । करभोरूः "करभोरु ! रतिमात्रे द्वितीये पञ्चमेऽप्यहम्" विद्यासुन्द० संहितशफलक्षणवामपूर्व्वकस्यापि ऊङ् । संहितोरूः सम्यग्हितौ-रुका इत्यर्थः शफाविव संश्लिष्टौ ऊरू यस्याः शफोरूः । लक्षणयुक्तावूरू यस्याः लक्षणोरूः । वामौ मनोहरौ ऊरू यस्याः वामोरूः "वक्षन्नो नवगमकरोविषद्वितो-र्वामोरुरतिशयमाप विभ्रमस्य" किरा० । संहितसहपूर्व्वकस्यापि तादृशस्य ऊङ् । संहितौ हितयुतौ ऊरू यस्याः संहितोरूः । भारं सहेते सहावूरू यस्याः सहोरूः । ऊरौ भवः शरीरावयवत्वात् यत् । ऊरव्य ऊरुभवे वैश्ये पुंस्त्री तद्भवमात्रे त्रि० । स्वाङ्गतयाऽस्मात् निपातनात् बहु०स०स्त्रियां ङीष् । ऊरुभिन्नी ।

**ऊरुग्राह** पु० ऊरू गृह्णाति बध्नाति ग्रह-अण् उप०स० । ऊरुस्तम्भरोगे ऊरुस्तम्भशब्दे विवृतिः । "ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि" भा०द्रो०१४६ अ० ।

**ऊरुज** पुंस्त्री ऊरोर्जायते जन-ड । वैश्ये स्त्रियां जातित्वात् ङीष् । २ऊरुजातमात्रे त्रि० ऊरुजातोरुजन्मादयोऽप्यत्र । ३भृगुवंश्ये और्व्वे ऋषिभेदे पु० तस्य ऊरुतोजन्मकथा भा० आ० १७८, ७९ अ० "कृतवीर्य्य इति ख्यातो बभूव पृथिवीपतिः । याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः । स तानग्रभुजस्तात ! धान्येन च धनेन च । सोमान्ते तर्पयामास विपुलेन विशाम्पते ! । तस्मिन्नृपतिशार्दूले स्वर्य्यातेऽथ कथञ्चन । बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम् । भृगूणां धनं ज्ञात्वा राजानः सर्व्व एव ते । याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान् । भूमौ तु निदधुः केचिद् भृगवो धनमक्षयम् । ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् । भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम् । क्षत्रियाणां तदा तात ! कारणान्तरदर्शनात् । ततो महीतलं तात ! क्षत्रियेण यदृच्छया । खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि । तद्वित्तं ददृशुः सर्व्वे समेताः क्षत्रियर्षभाः । अवमन्य ततः क्रोधाद्भृगूंस्तान् शरणागतान् । निजघ्नुः परमेष्वासाः सर्व्वांस्तान्निशितैः शरैः । आगर्भादवकृन्तन्तश्चेरुः सर्व्वां वसुन्धराम् । तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा । भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे । तासामन्यतमा गर्भं भयाद्दधे महौजसम् । ऊरुणैकेन वामोरुर्भर्त्तुः कुलविवृद्धये । तद्गर्भमुपलभ्याशु ब्राह्मण्यास्तु भयार्दिता । गत्वैका कथयामास क्षत्रियाणामुपह्वरे । ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः । ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा । अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह । मुष्णन् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः । ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः । ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः । ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् । ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः । ज्योतिःप्रहीणा दुःखार्त्ताः शान्तार्च्चिष इवाग्नयः । भगवत्याः प्रसादेन गच्छेत् क्षत्त्रं सचक्षुषम् । उपरम्य च गच्छेम सहिताः पापकर्म्मणः । सपुत्रा त्वं प्रसादं नः कर्त्तुमर्हसि शोभने ! । पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि । ब्राह्मण्युवाच । नाहं गृह्णामि वस्तात ! दृष्टीर्नास्मि रुषान्विता । अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः । तेन चक्षूंषि वस्तात ! व्यक्तं कोपान्महात्मना । स्मरता निहतान् बन्धूनादत्तानि न संशयः । गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः । तदायमूरुणा गर्भो मया वर्षशतं धृतः । षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह । विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया । सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति । तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः । तमिमं तात ! याचध्वमौर्व्वं मम सुतोत्तमम् । अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति । वसिष्ठ उवाच । एवमुक्तास्ततः सर्व्वे राजानस्ते तमूरुजम् । ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः । अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः । स और्व्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत । चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः" ।

**ऊरुदघ्न** त्रि० ऊरु+"प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः ऊर्द्ध्वमाने दघ्नच् । ऊरुपर्य्यन्तोर्द्ध्वमानान्विते जलादौ । "यावानुदाङ्कःपुरुषस्तावत् क्षत्रियस्य

कुर्य्यात् प्रपदघ्नं ब्राह्मणस्योपस्थदघ्नं क्षत्रिया ऊरुदघ्नं वैश्यस्य एतावद्धि स्त्रुग्सर्ववीर्य्यो भवति" शत॰ब्रा॰ १२,८,२,११। "ऊरुदघ्ने द्वितीयोजानुदघ्नस्तृतीयः १२,२,१,२। अत्रार्थे द्वयसच् तत्परिमाणे उभयत्र स्त्रियां ङीप्।

ऊरुपर्व्वन् पु॰ ऊर्वोः पर्वेव। जानुनि (हांटु)।

ऊररी अव्य॰ऊर-ईक्। १अङ्गीकारे २विस्तारे च ऊर्य्यादि॰ गतित्वात् कृञि प्र॰। ऊररीकृत्य। घञ्। ऊररीकारः अङ्गीकारे विस्तारे च पु॰। क्त। ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि॰।

ऊरुस्तम्भ पु॰ऊरू स्तभ्नाति स्तम्भ–अण् उप॰स॰। रोगभेदे स च रोगः भावप्र॰ सनिदानपूर्वरूपादिदर्शितः यथा "शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः। जीर्णाजीर्णे तथायासक्षोभस्वप्नजागरैः। सश्लेष्मेदःपवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते। सक्थ्यस्थिनी प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन सः। तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्यातामतिभृशव्यथौ। ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः। संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" "प्राग्रूपं तस्य निद्रा ऽतिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा। वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः। पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा। जङ्घोरुग्लानिरत्यर्थं शश्वदाहश्च वेदना। पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च। संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः। अन्यनेयौ हि सम्भग्नावूरूपादौ च मन्यते। यदा दाहार्त्तितोदार्त्तौ वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्" अन्यथा दाहाद्युपद्रवरहितं तमपि नवमुत्पन्नमात्रं साधयेत्। सात्त्विकभावेन २ऊर्वोःस्तम्भे च। "करिणीयोरुस्तम्भविघ्नता" काद॰।

ऊर्ज्ज बलाधाने जीवने वा अदन्तचु॰ पक्षे भ्वा॰पर॰ सकरणे सक॰ सेट्। ऊर्ज्जयत्। नाभयो वाजिनमूर्जयन्ति" ऋ॰८,८६,४, "यो देवोवान्नमत्ति स शाखति तमूर्ज्जयति" शत॰ब्रा॰७,५,१,१८, "तां वो देवाःसुमतिमूर्ज्जयन्तीमिषमश्याम" ऋ॰५,४१,१८।

ऊर्ज्ज् स्त्री ऊर्ज्ज–भावे क्विप्। १बले। करणे क्विप् २अन्ने न॰। ३अमृतनामभेदेऽस्य अत्यन्तसारभूते रसभेदे स्त्री "विश्वे देवा यामूर्ज्जं मदन्ति" ऋ॰७,४६,४, "यास्त ऊर्ज्जस्सम्बभूवुः" अथ॰१२,१,१२, इह पृथिव्याः सम्बोधनेन तस्या विकाराद्रसाख्यादस्तमूर्ज्जोद्भवम्। "स ऊर्जमुपजीवतीति" छ॰ उ॰ "ऊर्ज्जं दुहन्ति सूनृतम्" ऋ॰ ३,२०, "ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्ज्जं मयि धेहि" यजु॰४,१०, "ऊर्क् अन्नरसरूपा" वेददी॰ऊर्ज्जं बलं धेहि इत्यर्थः "अन्नमूलं बलं पुंसाम्" इत्युक्तेः अन्नरसस्य बलाधायकत्वम्। "ततःसमूहात्क्षतिमप्यगेषाद्दूर्जा ज्वलन्तं प्रथितप्रकाशान्" भट्टिः ऊर्ज्जा बलेन "बलमूर्ज्जं च यच्छति" मनुः अत्र बलोर्जोर्भेदोदैहिकमानसिकत्वाभ्यां शारीरिकं बलमूर्क् इति बोध्यम्। ४जले स्त्री। "ऊर्जो नपातं स हि नायमस्मयुः" यजु॰२७,४४, ऊर्क्शब्देनाप उच्यन्ते अद्भ्यो वृक्षाजायन्ते ततोऽग्निः इत्यग्नेरपाम्नप्त्वम्। वेददी॰। "ऊर्ज्जांपते पाहि" यजु॰२७,४२।

ऊर्ज्ज पु॰ऊर्जति रसादिकं सोमोऽत्राधारे अच्। १कार्त्तिके मासि तस्य शरदृतोरुत्तरावयवत्वात् तत्र सोमेन रसवीर्य्याधिक्यवर्द्धनेन तथात्वम्। "इषोर्जौ शरत्" इत्युपक्रम्य अयने विभज्य च "तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुररसा बलवन्तो भवन्त्युत्तरोत्तरं च सर्वप्राणिनां बलमभिवर्द्धते" सुश्रुते शरदृतोरन्तिमस्य कार्त्तिकस्य उत्तरोत्तरबलाधिक्याभिधानेनास्य तथात्वम्। करणे अच् घञ् वा सेट्कत्वान्न कुत्वम्। २उत्साहे। भावे अच् घञ् वा। ३बले ४जीवने च। करणे अच् घञ् वा। ५जले न॰ "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालम्" यजु॰ २,३४। जलस्योजाधायकत्वात् अन्नस्य जलाधीनत्वेन बलहेतुत्वात्तथात्वम् "ऊर्जसन! ऊर्ज्जं धाः" ऋ॰६,३,७, "ऊर्जस्य सने! अन्नस्य दातः!" भा॰ "ऊर्जाद उत यज्ञियासः" ऋ॰१०,५३,४। ऊर्जादः अन्नादाः भा॰ "अत्र ऊर्जशब्दःअन्नगतं रसमभिधत्ते तेन तदाधायकत्वात् तथात्वम्। "तदचितपथ्यादेश ऊर्भितोर्जमसंशयम्" सुश्रु॰ कर्त्तरि अच्। ६बलान्विते त्रि॰ "सततगत्यमूर्जमतङ्गजम्" माघः।

ऊर्ज्जयोनि पु॰ ऋषिभेदे "ऊर्ज्जयोनिरुदायेषो नारदोऽपि महानृषिः" भा॰ अनु॰४अ॰।

ऊर्ज्जव्य पु॰राजभेदे "सिषेतु न ऊर्ज्जव्यस्य पुष्टेः" ऋ॰५,४१, २०, "ऊर्ज्जव्यस्य एतन्नामकस्य राज्ञः" भा॰

ऊर्ज्जस् न॰ ऊर्ज्ज–असुन्। १उत्साहातिशयाधायके बले २अन्नरसभेदे च। ततोऽस्त्यर्थे विनि ऊर्ज्जस्विन्, मतुप् ऊ-

र्जस्वत्, मतुप् मस्य वः। ऊर्जस्वत्। तद्धति त्रि०तत्र विन्नन्तस्य मतुबन्तस्य च स्त्रियां ङीप्। "ऊर्जस्वन्तं हविषोदत्त भागम्" ऋ०१०,५१,८, "ऊर्जस्वती चासि पयस्वती च" यजु०१,२७, "ऊर्जस्वन्तं मन्यमानम् आत्मानं भगवानजः" भाग०३,२०,४२, "ऊर्जस्वलं हस्तिवरस्य मेतत्" भट्टिः "भोङ्कारमूर्जस्वलमाकदेहम्" रघुः "ऊर्जस्विन्य ऊर्जमेधाय यत्ते" भा० अनु०७६ अ०। "बलमूर्जस्वरं लोके दन्तोर्जस्वी भवेन्नरः" भा०अनु० ११२अ० ऊर्जः करोति। ऊर्जस्+कृ–अच् इत०। बलतायमानरसाधायके त्रि०। "ऊर्जस्करान् हव्यवाहान्" भा०व०२२अ०।

ऊर्जा स्त्री भा०ऊर्ज–भावे अ। १बले २उत्साहे ३बलकरविकारे ४वृद्धौ च। ५ऊर्जास्त्यस्य मतुप् मस्य वः। ऊर्जावत् बलान्विते हविष्मति च त्रि० स्त्रियां ङीप्। "ऊर्जावतीं महापुण्यां मधुमतीं त्रिवर्गगाम्" भा०अनु० २६अ०।

ऊर्जित त्रि०ऊर्ज–कर्त्तरि क्त। १बलान्विते २वृद्धियुक्ते च। "माहकं च भृशमूर्जितं दधत्" रघुः। "विनिहत्य बलमूर्जितश्रीः" माघः। भावे क्त। ३बले ४सामर्थ्ये ५उत्साहे च न०। "उपपत्तिमदूर्जिताश्रयम्" किरा० णिच् क्त। ततद्दो ६वर्द्धिते त्रि०। "हिमकरोमकरोर्जितकेतनम्" रघुः।

ऊर्ण न० ऊर्णा अस्त्यस्य कारणत्वेन अर्श०अच्। मेषलोमरचितवस्त्रादौ "ऊर्णं राङ्कवं चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलानां सहस्रशः। श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्" भा०स० ५०अ०। २मेषलोम्नि स्त्री। "माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य" रघुः "कार्पासकीटजोर्णानां द्विशफैकशफस्य च" मनुः। ३ललाटस्थचिह्नभेदे ऊर्णाशब्दे उदा०। स च चक्रवर्त्तित्वसूचकः भ्रूद्वयमध्यगत श्वेतावर्तसूक्ष्मांशुनिभः प्रदक्षिणावर्तः। नरलक्षणग्रन्थे दृश्यते।

ऊर्णनाभ पु०ऊर्णु नाभवत्। (माकड़सा) लूतायाम् "यथोर्णनाभ इव तन्तुभिः प्रधानजैः" श्वे०उ०। कौरवपक्षे २यक्षभेदे ततः अपत्ये शिवा० अण्। और्णनाभ तदपत्ये पुंस्त्री। स्त्रियां ङीप्। तस्य परिखीक्षितोदेशः राजन्या० वुञ्। और्णनाभक तत्क्षीक्षितदेशे। समासान्तविधेरनित्यत्वात् क्वचित् अच् न। "आधारेण विना सृष्टिरूर्णनाभेरपीष्यते। न च निःसाधनः कर्त्ता कश्चित् सृजति किन्तु न" भट्टा०तन्त्रवार्त्तिकम्। "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति" मुण्डकोप०।

ऊर्णम्रदस् त्रि० ऊर्णमिव ऊर्णानिर्म्मितवस्त्रमिव म्रदीयः अतिशयेन मृदु वेदे म्रदीयस्+नि० ईयसोरीयसोर्लोपः। ऊर्णावत्यातिमृदौ "ऊर्णम्रदा युवतिर्दक्षिणावतः" ऋ०१०, १८,१०, "ऊर्णम्रदसं त्वा स्तृणामि" यजु०२,२, "ऊर्णम्रा-च्छिरस्पूर्णम्रदा ऊर्जं मयि धेहि ४,१०। अत्र मृदुत्वे-नोर्णाया उपमानतोक्तेः काश्मीरदेशजस्य (पशम) प्रसिद्धस्य आविकलोमस्य एव ऊर्णत्वं तस्यैवातिमृदुत्वात्।

ऊर्णवाभि पु० ऊर्णनाभिः पृ० षत्वे वा नस्य वः। (माकड़सा)। लूतायां "यथोर्णवाभिस्तन्तुनोच्चरेत्" शत० ब्रा० १४,५,१,२३।

ऊर्णामय ऊर्णा+विकारे मयट्। मेषलोमविकारे वस्त्रादौ "ऊर्णामयं कौतुकहस्तसूत्रम्" कुमा०।

ऊर्णायु त्रि० ऊर्णा–अस्त्यर्थे युस् बिवयात् भत्वाभावेन न आतो लोपः। १ऊर्णाविशिष्टे "इममूर्णायुं वरुणस्य नाभिम्" यजु०१३,५० "ऊर्णायुमूर्णावन्तम्" वेददी०। २गन्धर्वभेदे "ऊर्णायुचित्रसेनश्च हाहा हूहूश्च भारत! हरिवं० १२८ अ० "बहुभिः सह गन्धर्वैः प्रागास्येत च तुम्बुरः। महाद्युतिचित्ररथा ऊर्णायुतनयस्तथा" भा० २६१ अ०। "सोमदा नाम गन्धर्वी ऊर्णायुदुहिताऽभवत्" रामाय०।

ऊर्णावत त्रि०ऊर्णा अस्त्यर्थे बा०वतच्। ऊर्णायुक्ते। "अवावेः इममूर्णायुमिव ऊर्णावतं त्वष्टुर्वरुणस्य नाभिम्" शत०ब्रा०७,५,२,२१।

ऊर्णास्तुक त्रि० अस्तीति विभक्तिप्रतिरूपकम् अव्ययम् ऊर्णास्याव बा० उक। ऊर्णायुक्ते "ऊर्णास्तुकं केशपक्षयोर्वेले भवतः" आश्व० गृ० १,७,१०,

ऊर्णु आच्छादने अदा०उभ०सक० सेट्। ऊर्णोति ऊर्णौति ऊर्णुतः ऊर्णुवन्ति ऊर्णुते। ऊर्णुयात् ऊर्णुवीत। ऊर्णोतु ऊर्णौतु ऊर्णुहि ऊर्णुताम्। और्णोत् और्णौत्। और्णुत। और्णवीत् और्णावीत् और्णुवीत् और्णु(र्णा)(र्णु)विष्ट ऊर्णुनाव ऊर्णुनुवतुः। ऊर्णुनुविरे। ऊर्णु(र्ण)विता। ऊर्णूयात् ऊर्णु(र्ण)विषीष्ट। ऊर्ण(र्णु)विष्यति ते और्णु(र्ण)विष्यत् त। ऊर्णुवन् ऊर्णुवानः ऊर्णुतः। "स द्यामौर्णोदन्तरिक्षम्" अथ०७,१,२, "ऊर्णुनाव दिशः शरैः" "द्रोणोर्णुवानात् ककुभो बलीयान्" भट्टिः "ऊर्णुना-

मिर्यद्योर्णुते" भा० २,६,२७,। यनि ऊर्णुनूषति ते ऊर्णुनुविषति ते ऊर्णुनविषति ते ।

अप+अपसारणार्थे "अपोड्ता अपोर्णुवन्तो अस्तु:" ऋ० १,१६०,६, "अपोर्णुवन्तः अपगतनिरसनवन्तः" भा०।

अभि+आभिमुख्येन आच्छादने । "अभ्यूर्णोति यन्नग्नं भिषक्ति" ऋ० ८,७९,२, [२,१४,२

आ– सम्यगाच्छादने । "इन्द्रं सोमैरोर्णुत जूर्णुवस्त्रैः" ऋ०

प्र– प्रच्छादने । प्रौर्णुवन् शरवर्षेण तानपौरोहिताचरः" । "प्रोर्णुवन्तं दिशो बाणैः" भट्टिः ।

वि–विगतावरणे प्रकाशने । "व्यवितर्व्यूर्णुवेऽरुचीना" ऋ० ४,५४,२, "व्यूर्णुषे प्रकाशयसि" भा०

ऊर्द् ऊर्द् धातुवत् ।

ऊर्द् त्रि० ऊर्द्–अच् । क्रीडायुक्ते स्त्रियां गौ० ङीष् ।

ऊर्द्दर न० ऊर्जा बलेन दृणाति दृ–"ऊर्जि दृणातेरलची पूर्वान्त्यलोपश्च" उणा० अल् अच् वा ऊर्जोऽन्त्यलोपश्च उज्ज्व० । १शूरे २राक्षसे च उज्ज्वल० । उद्दीर्णम् पूर्णम् उद्+दृ–अच् पृषो० उद् ऊरादेशः । धान्याधारभेदे कुसूले माधवः । "ऊर्दरं पृणता यवेनेदम्" ऋ० २,१४,११। उद्दीर्णम् ऊर्दरं कुसूलम्" भा०

ऊर्द्ध(र्द्ध्व) त्रि० उद्–हाङ्–ड पृषो०ऊरादेशः । १उच्चे २उपरि ३उपरितने च "प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः"कुमा० "मौलोर्द्धरेखागतवेन संसन्" । "व्यक्तोर्द्धरेखाभ्युदयोर्द्ध-र्द्धिः" "गङ्गोर्द्धप्रवर्त्तिनी" रघु: । ४उत्पाटिते ऊर्द्धकचः हेम०। ५अनुपविष्टे दण्डायमाने "आसीनः ऊर्द्धः प्रह्वो वा नियमोयत्र नेदृशः"छन्दो० "ऊर्द्धः अनुपविष्टः" व्या०त० रघु० । ६उत्क्षिप्ते "ऊर्द्धग्रावाणः" ऋ० ३,५४,१२ । ऊर्द्धग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणः भा० । हुयतेर्वा च तेन सकारत्वमपि तत्रार्थ

ऊर्द्ध(र्द्ध्व)क पु० ऊर्द्धः सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्थितावपरिमितः सार्द्धाऽर्धाङ्गुलः ऊर्द्धं कृत्वा वाद्यते । "ऊर्द्धको गोपुच्छसमस्थितालोऽर्धाङ्गुलो मुखे । कृत्वोर्द्धं वाद्यते"शब्दार्थचिन्ता: । "हरीतक्याकृतिस्त्वङ्क्यस्त्वालिङ्ग्यो यवाकृतिः । ऊर्द्धकोदस्तु गोपुच्छः स्यात् मुरजाभेदतोमताः" शब्दचि० ।

ऊर्द्ध(र्द्ध्व)कच त्रि० ऊर्द्धा उत्पाटिता कचा यस्य । विकचे हेम० स्त्रियां स्वाङ्गत्वात् वा ङीष् ।

ऊर्द्ध(र्द्ध्व)कण्ठ त्रि० ऊर्द्धः कण्ठोऽस्य । १उन्नतकन्धरे स्त्रियां वा ङीष् । २महाशतावरीलतायां स्त्री ङीष् राजनि०।

ऊर्द्ध(र्द्ध्व)कर्म्मन् न० ऊर्द्धं ऊर्द्धदेशप्राप्त्यर्थं कर्म क्रिया । उत्थानक्रियायाम् "उदोऽनूर्द्धकर्म्मणि" पा० । ऊर्द्धचेष्टोर्द्धक्रियादयोऽप्यत्र । बहु०स०। तत्कर्मवति त्रि० स्त्रियां वा टाप् ।

ऊर्द्धकाय पुंन० । ऊर्द्धं कायस्य एकदे० तत० । देहस्योर्द्धभागे

ऊर्द्धकेतु त्रि० ऊर्द्धः उच्छ्रितः केतुर्यस्य यत्र वा । १उच्छ्रितध्वजे राजादौ तथाभूतपृथ्व्यां स्त्री । २जनकवंश्ये नृपभेदे पु० । "ऊर्द्धकेतुःसनद्वाजादजोऽथ पुरजित्सुतः" भाग० ९,१३,१३ ।

ऊर्द्धकेश पु० ऊर्द्धः केश इव कुशाग्रं यस्य । "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः"स्मृत्युक्ते कुशमयब्राह्मणे । उन्नताग्रकेशयुक्ते त्रि० स्त्रियां वा ङीप्

ऊर्द्धग त्रि० ऊर्द्धं गच्छति गम–ड । १उपरिगते ।"भुजा मह्योत्पाथमसह्यदूर्द्धगम्" कुमा० "उत्पाटनमुरोभागोहिताकारानूर्द्धगान् दीप्ततेजसः" भा० व० २२अ० । ऊर्द्धगतदेहस्थवायुकृते २रोगभेदे "ऊर्द्धगे रक्तपित्ते च शीतमच्छः प्रशस्यते"सुश्रु० "तद्योर्द्धगोऽनिलः कार्श्यं दौर्बल्यं पाण्डुगात्रता" सुश्रु० । सर्वेषामुपरिगतत्वात् ३परमेश्वरे पु० "ऊर्द्धगः सत्पथाचारः" विष्णुसह० । "सर्वेषामुपरि तिष्ठन् ऊर्द्धगः" शा०भा० । ऊर्द्धगतिशालिनि ४धार्म्मिके त्रि० "धर्मेण गमनमूर्द्धमधस्ताद्भवत्यधर्म्मेण" सां०का० धर्मेणोर्द्धगत्यभिधानात् धार्मिकस्य तथात्वम् । ऊर्द्धगतादयोऽप्यत्र । ५ऊर्द्धगतियुक्ते उत्थायिनि त्रि० ।

ऊर्द्धगति स्त्री० ऊर्द्धा गतिः । १ऊर्द्धगमने । यथा ज्वलनादेः यथोक्तं सुश्रु० "उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपगुणबहुलमीषच्चक्षुं कटुकरसप्रायम् विशेषतश्चोर्द्धगतिस्वभावमिति तैजसं समूहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति" । ऊर्द्धज्वलनादयोऽप्यत्र । "गमनं रेचनं स्पन्दनोर्द्धज्वलनमेव च । तिर्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा० । "प्रसिद्धमूर्द्धज्वलनं हविर्भुजः" माघ: ऊर्द्धगतिश्च लाघवातिशयेन भवति सत्त्वस्य च लघुत्वात् ऊर्द्धगतिहेतुत्वमुक्तम्" सा०का० "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः"। "तत्र वायोरुद्गमने हेतुलाघवं गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्द्धज्वलनं भवति" सा०कौ०। २ऊर्द्धलोके स्वर्गादौ गमने च तद्धेतौ धर्मे "धर्मेण गमनमूर्द्धमिति" सा०का०उक्तेः "ऊर्द्धं गच्छन्ति सत्त्वस्थाः" इति गीतोक्तेश्च सात्त्विकभावमात्रस्यापि तद्धेतुत्वम् । ऊर्द्धम् देहात् ३उत्क्रमणे । ऊर्द्धं गतिर्यस्य ४ऊर्द्धगामिनि त्रि०।

**ऊर्द्धगपुर** न॰ कर्म॰। अन्तरिक्षपुरे खपुरे हरिश्चन्द्रपुरे त्रिका॰। हरिश्चन्द्रपक्षे तत्पुरस्योर्द्धत्वं वक्ष्यते। २त्रिपुरासुरपुरे च तत्पुरस्यान्तरिक्षगतत्वम् हरिवं॰ २२४ अ॰ यथा
"त्रिपुरं पुरुषव्याघ्र! शङ्खजालसमीरितम्। विक्रामति नभोमध्ये मेघवृन्दमिवोत्थितम्। प्राकारेण महद्धेन काञ्चनेन विराजता। मणिभिश्च प्रकाशद्भिः सर्वरत्नैश्च तोरणैः। बभासे नभसो मध्ये श्रिया परमया ज्वलत्। गन्धर्वोत्पामिवोदग्रं कर्म्मणा साधितं पुरम्। वाजिनः पवनसंयुक्ता वहन्ति बलदर्पिताः। पुरं प्रभाकरं श्वेतं मनोभिः कामचारिणः। धावन्तो वेगमास्थाय विक्रमैः प्राक्संस्थितैः। खादन्त इवाकाशं खुरैः शशदलप्रभैः। वायुवेगसमैर्वेगैः कम्पयन्त इवाम्बरम्। सर्वतः समदग्धनं चक्षुर्भिर्विदितात्मभिः। अग्निभिर्ज्वलनप्रख्यैर्लीपता दग्धकिल्विषैः। गीतवादित्रबहुलं गन्धर्वनगरोपमम्। चित्रायुधसमाकीर्णैः प्रतप्तकनकप्रभैः। भवनैर्बहुवर्णैश्च पांशुभिः समलङ्कृतैः। देवेन्द्रभवनाकारैः शुशुभे तत्पुरद्युति। प्रासादाग्रैः महद्भिश्च कैलासशिखरप्रभैः। शुशुभे दैत्यनगरं बहुरूपमिवाम्बरम्। चर्याट्टालकसम्पन्नं तप्तकाञ्चनसप्रभम्। क्ष्वेडितोत्क्रुष्टबहुलं सिंहनादविनादितम्। बभौ दनुजनाकीर्णं वनं चैत्ररथं यथा। समुद्गतपताकं तद्दिविभिव विराजितम्। रराज त्रिपुरं राजन्! महाविद्युदिवाम्बरे"।

**ऊर्द्धचरण** पु॰ ऊर्द्ध ऊर्द्धस्थः चरणोऽस्य। १तपस्विभेदे ऊर्द्धपाददयोऽप्यत्र। २अष्टपादे शरभे च तस्याष्टानां पादानां मध्ये चतुर्णामूर्द्धस्थत्वात् तथात्वम्।

**ऊर्द्धजानु** त्रि॰ ऊर्द्धमुच्चम् जानु यस्य। उच्चजानुके वा कप् ऊर्द्धजानुक तदर्थे। कबभावपक्षे वा जानुनोर्ज्ञुः ऊर्द्धज्ञु तदर्थे "अथमथमसभूय स्वप्नमूर्द्धज्ञुरेव" माघः अत्रार्थे ऊर्द्धज्ञः इति द्विरूपकोषः पृषो॰ साधु।

**ऊर्द्धथा** अव्य॰ ऊर्द्ध+था॰ थाल्। ऊर्द्धप्रकारे ऊर्द्ध इत्यर्थे च "स यस्य दोधूवदूर्द्धथाभूत्" ऋ॰ १०,२२,१।

**ऊर्द्धदंष्ट्रकेश** पु॰ ऊर्द्ध ऊर्द्धगतदंष्ट्राणां भूतानामीशः। महादेवे "नमोऽर्द्धदंष्ट्रकेशाय शुष्कायावततायच। विलोहिताय धूम्राय नीलग्रीवाय वै नमः" भा॰ शा॰ २८६ अ॰ नमोऽर्द्धेत्यत्र "सैषदाशरथी रामः" इति वत् पादपूरणाय सन्धिः।

**ऊर्द्धदृष्टि** स्त्री ऊर्द्धा भ्रुवोर्मध्यस्था दृष्टिः। उपासनाङ्गे योगार्थं भ्रुवोरन्तरालस्थदृष्टौ २ऊर्द्धोत्क्षिप्तदृष्टौ च ऊर्द्धा दृष्टिरस्य बहु॰। ३तादृशदृष्टियुते ४ऊर्द्धोत्क्षिप्तदृष्टियुक्ते च ऊर्द्धनेत्रोर्द्धदृगादयोऽप्यत्र।

**ऊर्द्धदेव** पु॰ ऊर्द्ध उच्चो देवः। १परमेश्वरे २विष्णौ शब्दरत्ना॰

**ऊर्द्धदेह** पु॰ ऊर्द्धः मरणोत्तरं भावी देहः। मरणोत्तरभाविनि देहे "ऊर्द्धदेहनिमित्तार्थमहं दास्ये जलाञ्जलीन्" रामा॰ ऊर्द्धदेहाय साधु "ऊर्द्धन्दमाश्च देहाश्च लोकोत्तरपदस्य च" का॰ ठञ्। और्द्धदैहिक मरणोत्तरकर्त्तव्ये श्राद्धादौ तच्च कर्म स्मृतिषु प्रसिद्धम् और्द्धदैहिकशब्दे विवृतिः।

**ऊर्द्धनभस्** पु॰ ऊर्द्धं नभोयस्य। नभोमध्ये वर्त्तमाने वायौ "स्वाहाकृते ऊर्द्धनभसं मारुतं गच्छतम्" यजु॰ ६,१६,

**ऊर्द्धन्दम** त्रि॰ ऊर्द्धम्+दम–खच्। ऊर्द्धस्थे त्रिका॰ ततो भवाद्यर्थे ठञ्। और्द्धन्दमिक तद्भवादौ त्रि॰।

**ऊर्द्धपात्र** न॰ ऊर्द्धं नेतव्यं पात्रम्। यज्ञपात्रे उलूखलादौ "सौवर्णराजतोनामूर्द्धपात्रप्रक्षालनाम्" याज्ञ॰ "ऊर्द्धपात्रम् यज्ञियोलूखलादि यज्ञादिसाधनत्वात्" मिता॰।

**ऊर्द्धपुण्ड्** पु॰ ऊर्द्ध ऊर्द्धमुखः पुण्ड्रः इक्षुयष्टिरिव। ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्मके तिलकभेदे। तद्धारणे विधिनिषेधादिकं निरूप्यते। "ऊर्द्धपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा। तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया" शा॰ त॰ पु॰। "ऊर्द्धपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम्। अर्द्धचन्द्रन्तु वैश्यश्च वर्त्तुलं शूद्रयोनिजः" आ॰ त॰ ब्रह्मा॰ पु॰। "अशुचिर्वाप्यनाचारो मनसा पापमाचरन्। शुचिरेव भवेन्नित्यमूर्द्धपुण्ड्राङ्कितोनरः" ऊर्द्धपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित्। श्वपाकोऽपि विमानस्थो मम लोके महीयते" इति ब्रह्मपु॰। तद्धारणे वैदिकद्विजातिरिक्तस्यैवाधिकारः यथोक्तं देवीभागवते श्रीनारायणेन "ऊर्द्धपुण्ड्रं त्रिशूलञ्च वर्त्तुलं चतुरस्रकम्। अर्द्धचन्द्रादि वा लिङ्गं वेदनिष्ठो न धारयेत्। जन्मना लब्धजातिस्तु वेदपन्थानमाश्रितः। पुण्ड्रान्तरं भ्रमादपि ललाटे नैव धारयेत्। ख्यातिकान्त्यादिसिद्ध्यर्थमपि विष्ण्वागमादिषु। स्थितं पुण्ड्रान्तरं नैव धारयेद्वैदिकोजनः"। नि॰ सि॰ धृतसं॰ "विष्ण्वागमादितन्त्रेषु दीक्षितानां विधीयते। शङ्खचक्रगदादाद्यैरङ्कनं नान्यदेहिनाम्। वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितोयदि। पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि। शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा। एकजातेरयं धर्म्मो न जातु स्यात् द्विजन्मनः"। "शङ्खचक्रमृदा यस्तु कुर्यात् तप्तायसेन वा। स शूद्रवद्बहिः कार्य्यः सर्व्वस्मा-

ण्ड्रवर्ज्जितः" यथा स्नानाङ्गं कायमनर्हं सर्व्वकर्म्मसु । द्विजस्तु तप्तशङ्खादिचिह्नाङ्कितततुस्तथा । संभाष्य रौरवं याति यावदिन्द्राश्चतुर्द्दश" वृहन्ना०। "त्रिशङ्खचक्रयोरङ्कान् शूलचक्रादिकान् द्विजः । न धारयेत मतिमान् वैदिके कर्म्मणि स्थितः" तत्र त्रिपुण्ड्रादिधारणविधायकवाक्यं वैदिकेतरद्विजविषयम् शूद्रविषयञ्च । यदपि ब्राह्मणस्य तद्धारणविधानम् "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेह तप्तमुद्रादिधारणम्" पद्मपु० । "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः । शङ्खचक्राङ्कितततुस्तुलसीमञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः" काशी० । तदपि वैदिकेतरविप्रपरम् सर्व्वासामङ्गत्वात् एवं व्यवस्थायां स्थितेऽपि कुलाचारात् तत्तद्वृत्तैः कर्त्तव्यता । तथैव भारतटीकायां नीलकण्ठेन निर्णीतम् यथा

"औषामिक उदकं गामव्रजति मांसमेकः पिंशति सूनया भृतम् आ निम्रुचः शकृदेको अपाभरत् किं स्वित् पुत्रेभ्यः पितरावुपावतुः" श्रुतिः। "अस्यार्थः हे ऋभवः! भवतां मध्ये एकः ओषां अरुणां गां शुद्धं गोपीचन्दनादिरूपां तीर्थनिकटस्थां शुक्लकर्दमभूतां प्रति उदकं जलं गौणकर्म अवाजति अवगमयति अन्तर्भावितण्यर्थोऽजतिः । ओषां गाम् उदकेन मिश्रयतीत्यर्थः ओषां गां रक्तचन्दनादिरूपां वा तथा । एकः सूनया हिंसया ततृकर्त्त्या आभृतं आहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि उदकेन सह इति शेषः निम्रुचः नितरामस्तं गच्छतो दृश्येष्वनन्त्यार्कैः अस्मिन् शकृत् गोमयं शुष्कगोमयौघं भक्षेति यावत् अपाभरत् अपाहृतवान् अप्सूदकेन सहेति शेषः व्यवहिताश्चेति छन्दसि व्यवहितेनाप्युपसर्गेण क्रियायाः सम्बन्धः । हृग्रहोर्भश्छन्दसीति हस्य भः । एतानि मन्त्रपदानि अर्थपूर्णार्थत्वात् स्वार्थलाभाय ब्राह्मणमपेक्षन्ते "इषे त्वोर्जे त्वेत्यादिमन्त्रवत् तत्र यथा "इषे त्वेति शाखां छिनत्ति ऊर्जे त्वेत्यनुमार्ष्टीति" ब्राह्मणानुसारात् हे शाखे त्वा त्वाम् इषे अन्नाय छिनद्मीति ऊर्जे पयसे त्वामनुमार्ज्मीति व्याख्यानम् एवमिहापि वासुदेवोपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् ऊर्द्ध्वपुण्ड्रार्थं शुक्लां मृदं जलेन मिश्रयेदिति व्याख्येयं तथा कालाग्निरुद्रबृहज्जावालाद्युपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् त्रिपुण्ड्रकर्त्तुः निम्रुचः शकृदपाभरदिति च व्याख्येयम् इतरेतरस्यापि पदस्य ब्राह्मणमन्त्रलिङ्गाद्युपबृंहणे स्मृतिभ्यश्चाङ्गकामपा-

विधिरनुमेयं तथाच औषामिति पदस्य रक्तामिति व्याख्याने सौरशाक्तगाणेशानां रक्तमेव पार्थिवं द्रव्यं पुण्ड्रार्थं तत्तत्तन्त्रे विधीयते वैष्णवानां पीतं शैवानां भस्मेति अनेन तत्तत्पुण्ड्रविशेषोपलक्षिततत्तद्देवताभजनेनापि देवताभावं प्राप्नुवन्तीति निर्णीयते । केवलवैदिकानां तु ओषां शुक्लामिति व्याख्यानेन लिङ्गस्यापि तत्स्मृत्यः "स्नात्वा पुण्ड्रं मृदा कुर्य्यात् भुक्त्वा चैव तु भस्मना । देवान् पितॄन् समभ्यर्च्च्य चन्दनेन समाचरेदिति" स्मृतिभ्यः अत्र गोरोचनाग्रहणं चन्दनाद्युपलक्षणोपलक्षणार्थम् एतेषां विकल्पसमुच्चयपक्षाणां पितृपैतामहपरंपराक्रमेण व्यवस्थामाह किं स्वित् पुत्रेभ्यः पितरावुपावतुरिति पुत्रहितार्थं यत्किञ्चिद्धृतं पितरौ मातापितरौ पितृपितामहौ वा अपेक्ष्य स्वीकृत्य अवतुः व्रतं सम्यक् परिपालयामासतुः तदेव तस्य श्रेयः साधनमित्यर्थः एवं कति तीर्थानि यथाद्यमन्त्रमार्गेण सर्व्वाद्यन्यतमोपास्तिः केवलवैदिकता चेति देवताभावप्राप्तिसाधनानि" इत्यन्तेन ।

श्राद्धकर्म्मणि तु त्रिपुण्ड्रादौ विधिनिषेधयोर्व्यवस्था नि० सि० उक्ता यथा ।

"जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि । तत्सर्व्वं नश्यति क्षिप्रमूर्द्ध्वपुण्ड्रविनाकृतमिति" हेमाद्रावुक्तेः । "यशोदानं जपो होमः स्वाध्यायः पितृकर्म्म च । वृथा भवति विप्रेन्द्रा ! ऊर्द्ध्वपुण्ड्रविनाकृतमिति" वृहन्नारदीयात् "ऊर्द्ध्वञ्च तिलकं कुर्य्याद्दैवे पित्र्ये च कर्म्मणीति" वृद्धपराशरोक्तेश्च ऊर्द्ध्वपुण्ड्रधारणं पैत्रे विहितम् । अन्ये तु "ऊर्द्ध्वपुण्ड्रो द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले च संप्राप्ते कर्त्ता भोक्ता च वर्ज्जयेदिति" वामनपुराणे "च ये दर्भा मध्ये रक्तवर्त्तिनस्तथा । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति संग्रहोक्तेः "ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्व्वपेत्" इति विष्णुरहस्ये वचनाच्च न धार्य्यमित्याहुः । अत्र कुलाचारादेव व्यवस्था । अत एव वृहन्नारदीये "ऊर्द्ध्वपुण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचन" इत्यत्र केचनेत्युक्तम् ऊर्द्ध्वपुण्ड्रविधिः श्राद्धभोक्तृपरः, निषेधः कर्त्तृपरः इति पृथ्वीचन्द्रः । यत्तु हेमाद्रौ देवलः "ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिमिति" । तद्भस्मत्रिपुण्ड्रविषयम् । "पाखण्डवहदानात् गन्धादौ नीलकुर्य्यात्तविषयकम्" इत्याश्वलायनोक्तेः

पुण्ड्रं वर्त्तुलमित्यपरार्के मदनरत्ने च । पृथ्वीचन्द्रस्तु "पुण्ड्रं त्रिपुण्ड्रम् ऊर्द्धं च तिलकं कुर्य्याच्च कुर्य्याद्वै त्रिपुण्ड्रकम् । निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकमिति" इत्युपरागरीतिः । भोक्तृभिर्व्यवस्थैव भवन्त्येव । "यज्ञे देवे तिलकं श्राद्धे श्राद्धकाले च सर्वदा । ऊर्द्धपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु प्रयत्नतः" इति व्यासोक्तेरित्याह" । पृथ्वीचन्द्रोदये ब्राह्मे "मृद्दर्भेण हस्तेन यः कुर्य्यात्तिलकं बुधः । श्राद्धस्य स विमुच्येत दर्भ्याग्रेन चैव हि" ।

ऊर्द्धपृश्नि पु० ऊर्द्धाः पृश्नयोविन्दवोऽस्य । पशुभेदे । अश्वमेधे तृतीययूपे बन्धनीयमारुतपशुकीर्त्तने "पृश्निस्तिरश्चीनपृश्निरूर्द्धपृश्निस्ते मारुताः" यजु० २४.४.

ऊर्द्धबर्हिस् पु० ऊर्द्धं प्रायश्च बर्हिर्येषाम् । सोमपाख्ये पितृभेदे "स्वाहा पितृभ्य ऊर्द्धबर्हिर्भ्यो घर्म्मपावभ्यः" यजु० २.१९, "ऊर्द्धबर्हिर्भ्यः सोमपाभ्यः" वेददी०

ऊर्द्धबाहु पु० ऊर्द्ध उत्तोलितो बाहुः कर्म्म० । १ऊर्द्धोत्तोलिते बाहौ "तद्यदेनमूर्द्धबाहुरभिष्टौति" शत० ५,४,१.१०,। बहु०। २प्रसारितबाहुके त्रि० ऊर्द्धबाहुः प्रांशु प्रलम्बादूर्द्ध ज पू ष इति" काव्या० १६,२,८, ऊर्द्धबाहुः प्रसारितबाहुः" कर्कः "पञ्चमोरैवतो नाम मनुस्तामससोदरः" इत्युपक्रम्य "हिरण्यरोमावेदशिरा ऊर्द्धबाह्वादयो द्विजाः" इति" भाग० ८,५,२,श्रीधरोक्ते २रैवतमन्वन्तरीयसप्तर्षिभेदे ते च "वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा । हिरण्यरोमा पर्जन्य ऊर्द्धबाहुश्च सोमजः । सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोमताः" हरिवं० ७अ० विशेषत उक्ताः । ऊर्द्धमुत्क्षिप्तौ बाहू येन । ३तपस्यार्थमूर्द्धोत्क्षिप्तबाहौ तपस्विभेदे ।

ऊर्द्धबुध्न पु० ऊर्द्धं बुध्नं शिरोऽस्य । ऊर्द्धशिरस्के चमसे "अर्वाग्बिलश्चमस ऊर्द्धबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम् । तस्यासत ऋषयः सप्त धीराः वागष्टमी ब्रह्मणा संविदानेति" "अर्वाग्बिलश्चमस ऊर्द्धबुध्न इति तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्द्धबुध्नस्तस्मिन् यशोनिहितं विश्वरूपमिति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त धीरा इति प्राणा वा ऋषयः प्राणानेतदाह" उ० उ०। "देहस्य चमसरूपेण रूपकमिदम् अर्वाग्बिलश्चमस ऊर्द्धबुध्नः इदं तच्छिरः चमसाकारं हि तत् कथम् ? एष ह्यर्वाग्बिलः मुखस्य बिलरूपत्वात्, शिरसोबुध्नाकारत्वात् ऊर्द्धबुध्नः, तस्मिन् यशोनिहितं विश्वरूपमिति यथा सोमश्चमसे एव तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं भवति, किं पुनस्तद्यशः ? प्राणा वै यशोविश्वरूपम् । प्राणाः श्रोत्रादयः सप्त ऋषयः धीराः(श्रोत्रे द्वे नासिके द्वे नेत्रे द्वे रसना चैकेति सप्त) तेषां परिस्पन्दात्मकशब्दादिज्ञानहेतुत्वात्" । अभिधातोर्गत्यर्थतया परिस्पन्दात्मकवृत्तिमत्त्वम् ज्ञानहेतुत्वेन धीरत्वमिति बोध्यम् ।

ऊर्द्धभाग पु० ऊर्द्धः उपरिस्थोभाग एकदेशः कर्म्म० । उपरितनदेशे "ताल्वादिषु सभागेषु ऊर्द्धभागे निष्पन्नोऽजुदात्तः" सि० कौ० ।

ऊर्द्धभाज् त्रि० ऊर्द्धं भजते भज–ण्वि । १उपरिभागस्थे २ऊर्द्धदेशस्थे वह्निभेदे पु० । "ऊर्द्धभागूर्द्धभाङ् नाम कविः प्राणाश्रितस्तु यः" भा० व० २१८अ० अग्निनामतत्कर्म्मभेदकथने ।

ऊर्द्धम् अव्य० उद्–ह्वे–अम् वम् आदेरूरादेशश्च । ऊर्द्धशब्दार्थे । "ऊर्द्धं प्राणाह्युत्क्रामन्ति यूनःस्थविर आयति" "तिष्ठेदूर्द्धं रजः पिबेत्" मनुः "अधश्चोर्द्धं च प्रसृतास्तस्य शाखाः" गीता ।

ऊर्द्ध(र्द्धं)मन्थिन् पु० ऊर्द्धं ब्रह्मचर्य्यादुत्तराश्रमं गार्हस्थ्यादि मथ्नाति मन्थ–णिनि दूत० । नैष्ठिकब्रह्मचारिणि स हि ब्रह्मचर्य्योत्तरगार्हस्थ्याद्याश्रमं त्यजतीति तस्य तथात्वम् । "धर्म्मान् प्रदर्शयितुकामोवातरशनानां श्रमणानामृषीणामूर्द्धमन्थिनां शुक्लया तन्वाऽवततार" भाग० ५,३,२१,

ऊर्द्ध(र्द्धं)मान न० ऊर्द्धमारोप्य मीयते येन मा–करणे ल्युट् । पलकर्षादिमिते पाषाणादौ(बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमनुमीयते । भावे ल्युट् । २उन्नतापरिच्छेदकपरिमाणे च "ऊर्द्धमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" व्या० का० । अयमर्थः । तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमितिः तुलापरकोटिदेशे आरोपाद्यदुन्मीयते तदुन्मानम् । प्रस्थादिना स्वगताभ्यामारोहपरिणाहाभ्यां व्रीह्यादेः सर्वतोमानात् परिमाणम् । आयामोदैर्घ्यं वस्त्रादेर्जलादेश मितिर्हस्तदण्डादिना यत् मीयते तत् प्रमाणम् । सर्वतः उक्तप्रकारमानत्रयाद्बाह्या बहिर्भूता संख्या द्वित्वादिरित्यर्थः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" पा० विहितौ द्वयसज्दघ्नचौ प्रत्ययौ ऊर्द्धमानादेव "प्रथमश्च द्वितीयश्च ऊर्द्धमाने मतौ मम" वार्त्तिकोक्तेः ।

ऊर्द्धमुख त्रि० ऊर्द्धं मुखमस्य । १ऊर्द्धगतप्रथमभागे "प-

बोधयन्नूर्द्धमुखैर्मयूखैः” कुमा० २ऊर्द्धस्थितायभागे “अधो-मुखैरूर्द्धमुखैश्च पत्रिभिः” रघुः। ३उच्चमितवदने च स्वाङ्गत्वात् स्त्रियां ङीप्। ऊर्द्धं मुखस्य एक०त०। ४मुखस्योर्द्धभागे न० “दन्तान्तोर्द्धमुखं मणेरदङ्कनम्” तन्त्रसा०। मातृकान्यासे मुखस्योर्द्धभागे बिन्दोर्न्यस्त-त्वादभेदोपचारात् बिन्दुवर्णेऽस्य तदर्थः।

ऊर्द्धमूल त्रि० ऊर्द्धं मूलमस्य। १ऊर्द्धस्थितमूलभागे कूपादौ ऊर्द्धः क्षरादुत्कृष्टः पुरुषोत्तमो मूलमस्य। २संसारे च “ऊर्द्धमूलमधःशाखमश्वत्थं प्राहुरव्ययम्” गीता।

ऊर्द्धरेतस् पु० ऊर्द्धमूर्द्धगं नाधःपतत् रेतो यस्य। १महा-देवे, २सनकादिमुनौ ३तपस्विभेदे, ४भीष्मे च। रेतो हि पुंचिह्नेन प्रायः सर्वेषामधो गच्छति यस्य चोर्द्धं गतं संरुध्यदि स ऊर्द्धरेता इत्युच्यते। सनकादीनां निवृत्ति-धर्मपरत्वेन नैष्ठिकब्रह्मचारितया तथात्वम् “अष्टाशीति-सहस्राणि ऋषीणामूर्द्धरेतसाम्” भा० स०११अ०। “इत्युक्ता चोर्द्धमनयत्तेजोऽग्रमवाहनः। ऊर्द्धरेताः समभवत् ततः प्रभृति चापि सः” भा०अनु०८४अ०। “ऊर्द्धरेता ऊर्द्धलिङ्ग ऊर्द्धशायी नभःस्थलः” भा०अनु० १७० अ० शिवस्तुतौ। भीष्मस्य च शन्तनुभावर्त्तनस्यापि पितृकाम्यविवाहार्थं सत्यवतीसमीपे गार्हस्थ्यपरित्याग-प्रतिज्ञानात् तथात्वम् तत्कथा “अद्यप्रभृति मे दाश! ब्रह्मचर्यं भविष्यति” भा०आ० १००अ० दृश्या।

ऊर्द्धरोमन् पु०ऊर्द्धानि रोमाण्यस्य। १ऊर्द्धमुखतया विकट-रोमसु यमदूतादौ “स पाशहस्तांश्चतुरो ददर्श पुरुषान् भय-दान्वान्। वक्रतुण्डानूर्द्धरोम्ण आत्मानं नेतुमागतान्” भा० ६,१,२६। २कुशद्वीपसीमापर्वतभेदे च। कुशद्वीप-वर्णने “तेषां वर्षेषु सीमागिरयोनद्यश्चाभिज्ञाताः सप्तैव। चक्रश्चतुःशृङ्गः कपिलश्चित्रकूटोदेवानीक ऊर्द्धरोमा द्रविणः” इति भाग०५,२०,११। ऊर्द्धमुखरोमयुक्ते त्रि०। ३स्त्रीजङ्घे “ऊर्द्धरोमाणं काकजङ्घाविनाशिकम्” भा०अनु० ९८ अ०। स्त्रियां वा डाप्।

ऊर्द्धलिङ्ग पु०ऊर्द्धमुत्कृष्टं लिङ्गं चिह्नमस्य। १महादेवे ऊर्द्ध-लिङ्गं विरूपाक्षमिति” सन्ध्याङ्गमन्त्रः “ऊर्द्धरेता ऊर्द्ध-लिङ्ग ऊर्द्धशायी नभःस्थलः। त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः” ।भा० अनु०१७०।

ऊर्द्धलोक पु० कर्म०। स्वर्गे।

ऊर्द्धवात पु०ऊर्द्धगतो वातः। सुश्रुतोक्ते स्वाभाविकगतिरोधेन ऊर्द्धगते वायौ। स च मूत्रादिवेगधारणादभवति यथोक्तं सुश्रु०। “अधश्चोर्द्धं च भावानां प्रवृत्तानां स्वभावतः। न वेगान् धारयेद्धीमान् वातादीनां जिजीविषुः”। अधिक-मुदावर्त्तशब्दे १६२४ उक्तम्। “आटोपमूर्च्छौ परिवर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्धवातम्” सुश्रु० २सप्तमारुतान्त-र्गते परावहे वायौ तस्य सर्ववायूनामुपरिस्थत्वात् तथा-त्वम् आवहशब्दे विवृतिः।

ऊर्द्धवृत त्रि०ऊर्द्धगत्या वेष्टनेन वृतः। ऊर्द्धमावर्त्तनेनावृते दक्षिणावर्त्तनेनावर्त्तिते सूत्रादौ “कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं त्रिवृत्” मनुः। यथा च दक्षिणावर्त्ति-तस्यैव तथात्वम् यज्ञोपवीतशब्दे उक्तम्।

ऊर्द्धबृहती स्त्री वैदिके छन्दोभेदे। “चतुर्थं बृहती”। इत्युप-क्रम्य “अष्टिनीमध्ये द्वयकोविटारबृहती त्रिजागतोर्द्ध-बृहती” सर्वानु० ५अ०।

ऊर्द्धशायिन् त्रि० ऊर्द्धः सन् शेते शी–णिनि। १उत्तान-शायिबालके। स्त्रियां ङीप्। २महादेवे पु०। ऊर्द्ध-लिङ्गशब्दे उदा०।

ऊर्द्धशोषम् अव्य० ऊर्द्धः सन् शुष्यति ऊर्द्ध+शुष–णमुल्। ऊर्द्धतया शुष्के कर्मादिषु यथाविध्यनुप्रयोगनियमात् शुषधात्वनुप्रयोग एवास्य साधुत्वम्। “ऊर्द्धशोषं शुष्यति वृक्षः ऊर्द्धः सन् शुष्यतीत्यर्थः” सि०कौ०। “यद्दोर्द्धशोषं हृष्यदहिपुष्कः” भट्टिः।

ऊर्द्धसानु पुंन०कर्म०। १पर्वतादीनामुपरिस्थे सानौ। ऊर्द्धं स्यति सो–नु। २अपर्य्युपर्य्युक्ते “कनिक्रदत् पतयदूर्द्ध-सानुः” ऋ० १,१५२,५। “ऊर्द्धसानुरपर्य्युपरिसञ्च-यथाः” भा०।

ऊर्द्धस्थिति स्त्री ऊर्द्धं स्थितिर्यत्र यस्य वा। १अश्वपृष्ठभागे त्रिका०। २ऊर्द्धस्थे त्रि०। ऊर्द्धं स्थितिः। ३ऊर्द्धस्थाने स्त्री

ऊर्द्धस्रोतस् पु० ऊर्द्धम् ऊर्द्धगतं नाधोगामि स्रोतः रेतसः प्रवाहोऽस्य। १ऊर्द्धरेतसि योगिभेदे स हि उत्पतनहेतु-सत्वाधिक्येन रेतःप्रवाहमूर्द्धमानयतीति तस्य तथात्वम् सत्वबाहुल्ये एव यथोर्द्धस्रोतस्त्वं तथा सां०कौ० उक्तम् यथा “केचित् खलु सत्वबहुलाः सत्वनिकाया यथो-र्द्धस्रोतस इति” ऊर्द्धं स्रोत आहारसञ्चारोऽस्य २वनस्पत्यादिषु “वनस्पत्योषधिलतात्वक्सारवीरुधोद्रुमाः। उत्स्रोतसस्तमःप्राया अन्तःस्पर्शाविशेषिणः” भाग० ३, ८,२०, तेषां तथात्वोक्तेः “ऊर्द्धं स्रोत आहारसञ्चारो-ऽेषाम्” श्रीधरः। मूले सिक्तजलादीनां मूलेनैवोर्द्धमाक-र्षणात् तेषामूर्द्धस्रोतस्त्वम्।

ऊषाम् बभूव आस चकार । ऊषितः ऊषः ऊषणः ।

**ऊष** पु॰ ऊष–इगुपधात् क । १क्षारे, २कर्णरन्ध्रे, ३चन्द्रनाड्यां च । "कौशेयाविकयोरूषैः" मनुः । "सोषैरुदकगोमूत्रैः शुध्यत्याविककौषिकम्" या॰ । तत्र चन्द्रनाडेः विरहितापकत्वात् कर्णच्छिद्रस्य अल्पजलादिप्रवेशेन उद्वेगहेतुत्वात् क्षारमृत्तिकायाः मलापहारकत्वात् तथात्वम् इति भेदः । ऊषति अन्धकारं भेदकम् वा । ४प्रभाते ५रैतसि न॰ । तस्य च क्षारवत्तीव्रत्वात् उष्णत्वाच्च तथात्वम् । यथा च रेतस ऊषत्वम् तथाह "रेतो वा ऊषाः प्रजननं तदेव प्रजननं आभजन्त्येतद्वै पितरः प्रजननस्याभक्ता भवन्ति यदेषां प्रजा भवति" शत॰ ब्रा॰ १३,८,१,१४ । ६क्षारमृत्तिकायां स्त्री [ शब्दच॰ ।

**ऊषक** न॰ ऊषति अन्धकारं भेदकं वा ऊष–ण्वुल् । प्रत्यूषे

**ऊषण** न॰ ऊष–ल्युट् । १मरिचे, २पिप्पलीमूले, ३शुण्ठ्यां च । (चिता) ४चित्रके पु॰ । ५पिप्पल्यां ६चव्ये च (चइ) स्त्री । मरीच्यादीनां कटुत्वेन जिह्वोद्वेजकतया तथात्वम् । त्र्यूषणं त्रिकटु शुण्ठी पिप्पली मरिचं च यथाह "विश्वोपकुल्या मरिचं त्र्यूषणं त्रिकटु कथ्यते । कटुत्रिकं त्रिकटुकं त्र्यूषणं व्योषमुच्यते । त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहं च त्वक्स्थौल्यं मेदसा सह पीनसाम्" भावप्र॰ । त्र्यूषणं सकणामूलं कथितं चतुरूषणकम् । व्योषस्यैव गुणाः प्रोक्ता अधिकाश्चतुरूषणे" भा॰ प्र॰ । षडूषणम् । "पिप्पली पिप्पलीमूलम् चव्या चित्रकनागरैः । पञ्चभिः कोलमात्रन्तु पञ्चकोलम् तदुच्यते । पञ्चकोलं समरिचं षडूषणमिहेष्यते" भावप्रकाशः ।

**ऊषर** त्रि॰ ऊष+मत्वर्थीयो रः, ऊषं क्षारमृत्तिकां राति ददाति कः वा । क्षारमृत्तिकायुक्ते देशे यत्र उप्तं बीजं न प्ररोहति । "अनूषरमविवादिग्गु भूम" कात्या॰श्रौ॰ २, ७,२ । आधानाङ्गोषरभूप्रकृतम् शत॰ब्रा॰ २,१,१,६ । उक्तम् यथा "अथोषान् सम्भरति ।" अस्यै ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ तस्मात् पशव्यमूषरमित्याह" । "वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूषरम्" माघः । "तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे" मनुः "नचोषरां न विदग्धां भर्त्री दद्यात् कदाचन" भा॰ अनु॰ १२४ ।

**ऊषरज** न॰ ऊषराज्जायते जन–ड । (पाङ्गा) लवणभेदे । तद्गुणादि सुश्रु॰ "ऊषसूतं पांशुजं गौलं सूक्ष्मकरोद्भवम्" लवणं त्रिभक्ष्य "लवणं कटुकं दीप्तिविह्वितं पटु चोच्यते" सुश्रु॰

**ऊषवत्** त्रि॰ ऊष–मतुप् मस्य वः । ऊषरस्थाने । स्त्रियां ङीप्

**ऊषा** स्त्री बाणराजसुतायाम् उषाशब्दे तत्कथोक्ता ।

**ऊष्म** पु॰ ऊष–म । १शीतविरोधिनि स्पर्शे । कर्त्त–मक् । २तद्वति त्रि॰ । ३निदाघकाले अमरः ।

**ऊष्मण** त्रि॰ पामादि॰ अस्त्यर्थे न । ऊष्मयुक्ते मतुप् मस्य वः ऊष्मवत् तदर्थे त्रि॰ स्त्रियां ङीप् ।

**ऊष्मण्य** त्रि॰ ऊष्मा निःसरणीयत्वेनास्त्यस्य यत् । अग्निनिवारणार्हे "ऊष्मण्या पिधानां चरूणामङ्काः" ऋ॰ १,१६२, १२ ।"ऊष्मण्य अग्निनिवारणार्होऽपि पात्राणि" भा॰ ।

**ऊष्मन्** पु॰ ऊष–मनिन् । १ग्रीष्मे २तेजोद्रव्यस्य सूक्ष्मावयवे (भाप) "भुवा सकोष्माणमसह्यदूष्मम्" कुमा॰ "यथाग्नेर्धूम उदयते एवमेषामूष्मोदयते" शत॰ब्रा॰ १, ६,२,१,५ । व्याकरणोक्तेषु शोष्मवायुनोष्मार्थमाणेषु शषसहरूपेषु वर्णेषु । "स्वराणामूष्मणां चैव विवृतं करणं मतम्" शिक्षा । "शषसहा ऊष्माणः" शि॰ कौ॰ । "सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः इन्द्रे बलं ददानीति । सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति" छा॰ उ॰ । "सर्वे ऊष्माणोऽग्रस्ता अन्तरप्रवेशिता अनिरस्ता बहिरप्रक्षिप्ता विवृता विवृतप्रयत्नोपेताः प्रजापतेरात्मानं परिददानि प्रयच्छामि" शा॰भा॰ ।"अथ यद्येनमूष्मसूपालभेत प्रजापतेः शरणोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयात्" छा॰ उ॰ । "स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः । ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः । स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः" भाग॰ ३,१२,२० , ऊष्माणः शषसह इति चतुष्टयम् अन्तःस्था यरलवाः सप्त स्वराः षड्जादयः विहारेण क्रीडया" श्रीधरः । "खे प्राणं वायौ निश्वासं तेजःसूष्माणमात्मवान् । अप्सु शुक्रं पृथिव्यां गन्धं यथोद्भवम्" भाग॰ ७,१२,२४ । अत्र तेज ऊष्माणमिति सकारणे लयाभिधानात् तस्य तेजःकार्य्यता गम्यते । श्रुतौ च तस्य तेजःकार्य्यत्वमुक्तं तच्च ऊष्मशब्दे दर्शितम् । देहस्थोष्मा च मन्दाग्निश्च कोष्ठेयाग्नेरौपाधिकजीवसंयोगेनैव भवति यथोक्तं छा॰ उ॰ भाष्ययोः । "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः विजानाति" छा॰ । "इदं वावेदमेव तद्यदिदमस्मिन् पुरुषेऽन्तर्मध्ये ज्योतिः चक्षुःश्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन वावगम्यते । यत्त्वचा स्पर्शरूपेण स्पृश्यते तच्चक्षुषैव । दृढप्रतीतिकरत्वाच्चक्षोऽग्निमूलत्वाच्च रूप-

स्पर्शयोः । कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यते? इत्याह यत्र यस्मिन् काले एतदिति क्रियाविशेषणं अस्मिन् शरीरे हस्तेनालभ्य संस्पर्शेनोष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति स ह्युष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गमव्यभिचारात् । न हि जीवन्तमात्मानमूष्णिमा व्यभिचरति । "उष्ण एव जीविष्यन् शीतो मरिष्यन्निति" हि विज्ञायते । मरणकाले च "तेजः परस्यां देवतायामिति" परेणाविभागत्वोपगमादतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः । अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः' ।

एतद्वाक्यस्य कौक्षेयानलोपाधिकजीवाभिन्नब्रह्मपरं तस्यैव ज्योतिःशब्दाभिधेयत्वेन तत्सम्पर्कादेव देहस्यौष्ण्यसम्भवः तदेतत् शा० सू० भाष्ययोः समर्थितं यथा "ज्योतिश्चरणाभिधानात्" शा० सू० "इदमामनन्ति अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति" तत्र संशयः किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते? किं वा परमात्मेति? । अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम् इह तल्लिङ्गमेवास्ति नास्ति वेति विचार्यते किन्तावत् प्राप्तं आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति । कुतः? प्रसिद्धेः तमो ज्योतिरिति ह्येतौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ । चक्षुर्वृत्तेर्निरोधकं शार्वरादिकन्तम उच्यते । तस्या एवानुग्राहकमादित्यादिकं ज्योतिः । तथा दीप्यते इतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति । किञ्च द्युमर्यादत्वश्रुतेश्च । न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात् "परो दिवो ज्योतिरिति" च ब्राह्मणम् ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् मर्यादावत्त्वमसमञ्जसं अस्तु तर्ह्यत्रिवृत्कृतन्तेजः प्रथमजम् । न अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति । इदमेव प्रयोजनं यदुपास्यत्वमिति चेन्न प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात् । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" चाविशेषश्रुतेः । नचात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम् । अस्तु तर्हि त्रिवृत्कृतमेव तेजो ज्योतिःशब्दम् । नन्वुक्तमर्वागपि दिवो गम्यतेऽग्न्यादिकं ज्योतिरिति, नैष दोषः सर्वत्रापि गम्यमानस्य ज्योतिषः परो दिव इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते न तु निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना भागिनी । सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विति चाधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम् । "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति" च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते सारूप्यनिमित्ताश्चाध्यासा भवन्ति यथा "तस्य भूरिति शिर एकं शिर एकमेतदक्षरमिति" कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वं तस्यैषा दृष्टिस्तस्यैषा श्रुतिरिति चौष्ण्यघोषविशिष्टत्वश्रवणात् "तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीतेति" च श्रुतेः । "चक्षुष्यः श्रुतो भवतीति य एवं वेदेति" चाल्पफलश्रवणादब्रह्मत्वं महते हि फलाय ब्रह्मोपासनमिष्यते । नचान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवत् ज्योतिषोऽस्ति ब्रह्मलिङ्गम् । न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति । "गायत्री वा इदं सर्वं भूतमिति" छन्दोनिर्देशात् । अथापि कथञ्चित् पूर्वस्मिन् वाक्ये ब्रह्म निर्दिष्टं स्यात् एवमपि न तस्येह प्रत्यभिज्ञानमस्ति । तत्र हि त्रिपादस्यामृतं दिवीति द्यौरधिकरणत्वेन श्रूयते । अत्र पुनः परो दिवो ज्योतिरिति द्यौर्मर्यादात्वेन । तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः । ज्योतिरिह ब्रह्म ग्राह्यं कुतः? चरणाभिधानात् पादाभिधानादित्यर्थः । पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं "तावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यनेन मन्त्रेण । तत्र यत् चतुष्पदो ब्रह्मणः त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः परस्यामपि हि शाण्डिल्यविद्यायामनुवर्त्तिष्यते ब्रह्म । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् । यत्तूक्तं ज्योतिर्दीप्यते इति चैतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति, नायन्दोषः प्रकरणाद्ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात् दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात् "येन सूर्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णात् । यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्त्तते । अन्यत्रापि प्रयोगदर्शनात् "वाचैवायं ज्योतिषास्ते" "मनो ज्योतिर्जुषतामिति" च । तस्माद्यद्यत्कस्य चिदवभासकन्तत्तद्

ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोऽपि चैतन्यस्वरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"। "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च। यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत इति। अत्रोच्यते सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति। नायं दोषः निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा हि आदित्ये चक्षुषि हृदय इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते। एतेन "विश्वतः पृष्ठेषु" इत्याधारबहुत्वमुपपादितम्। यदप्येतदुक्तं औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्यं ज्योतिरेवेति। तदप्ययुक्तं परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः। "दृष्टं च श्रुतं चेत्युपासीतेति" तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति। यदप्युक्तमल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नम्। न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति। यत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद" इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किञ्चित् ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति। तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति। कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्त्तयितुम्। नैष दोषः। "यदतः परो दिवो ज्योतिरिति" प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थात् ज्योतिःशब्दस्यापि तद्विषयत्वोपपत्तेः। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्" भा०। सूत्रान्तरे तु कौक्षेयाग्निसम्बन्धात् ऐक्यश्रौत्यशक्तम्। तथापि कौक्षेयाग्नेरपि जीवस्थितिनियतत्वात् जीवाधीनत्वं कल्पाशिखाकरे प्रपञ्चः

ऊह वितर्के भ्वादि० आत्म० सक० सेट्। ऊहते औहिष्ट। ऊहांबभूव आस चक्रे। ऊहितः ऊहमानः ऊहितम् ऊहः। "औहिष्ट तान् वीतवितर्कबुद्धीन्" भट्टिः। कर्मणि ऊह्यते औहि णिच्। ऊहयति ते औजिहत् त। "ऊहेण तावौजिहतां समिद्धौ" भट्टिः अस्य ऊहशब्दे वक्ष्यमाणेऽर्थेऽपि वृत्तिः। परस्मैपदित्वमस्य ऊहति, इत्येतद्विदेवनं द्विविधेषु" कात्या० १०१,२,१,१०, यादौ उपसर्गात् परस्यादेर्ह्रस्वः। समस्यते

अति—एकदेशस्थितस्य तद्विपरीतदेशप्रेरणे "द्रोणकलशमत्यूह्य" कात्या० ८,२,१६। "अत्यूह्य प्राञ्चमेव प्रतीच्यां प्रेर्य" कर्कः।

अधि+अञ्जने। "अग्निमग्नीत् संमृड्ढीति यथाधुरमभ्यूहेदेवं तद्यत् पूर्वमाघारमाघार तदभ्यूहा हि धुरं युञ्जन्ति" शत० ब्रा० १,४,४,१२,

अप+निरसने दूरीकरणे। "अपोह्य बर्हींषि" कात्या० ३,२,१७, "एतैस्तैरपोहेत पापं सेयत्नं द्विजः" मनुः। "सर्वान् रसानपोहेत कृतान्नं च तिलैः सह" मनुः प्रतिकूलतर्केण प्रकृततर्कापनयने अपोहः।

अप+वि+निवारणे "व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः" भा० आ० १३० अ०। [२८। "अभ्यूहति आच्छादयति" भा०।

अभि+आच्छादने। "अथाङ्गारैरभ्यूहति" शत० ब्रा० १,२,४,

उत्+उत्कर्षणे। "रशनामुदूह्य प्राच्याम्" कात्या० १,६,१। "उदूह्य उत्कृष्य" कर्कः निरसने च। "तेन प्राचोऽङ्गारानुदूहति" शत० ब्रा० १,२,१,४। [१,२,५,१७।

प्रति+उद्+प्रक्षेपणे "दक्षिणतः पुरीषं प्रत्युदूहेत" शत० ब्रा०

वि+उद्+अन्ते विवर्द्धने। "पक्षपुच्छमयतो बाहुतो व्युदूहति" शत०ब्रा०१०२,१,४। व्युदूहति अन्ते विवर्द्धयति" भा०

उप+अधस्तात् प्रवेशने। "पश्चात्स्माकुपोहति" कात्या० २,५,४। "उपोहति अधस्तात् प्रवेशयति" कर्कः।

निर्+निष्काशने पृथक्करणे च। "गार्हपत्यादुष्णं भस्म निरूह्य" शत० ब्रा० १२,४,२,२। "निरः प्रियस्य निरौहत्" शत० ब्रा० १०,५,४। यदान्नेऽन्नमेषामध्वर्युः प्रैष्यति निरूहैतं गर्भमिति" "निरूह्यमाणमभिमन्त्रयीत" कात्या० २५,१०,४,५। निरूह्यमाणं पृथक्क्रियमाणम् वेददी० निरूहणम्

परि+परितः स्थानपूरणे। "अरत्निमात्रे संस्कृते वोपवेशाति-पर्यूहति च" कात्या० ८,५,२५। "पर्यूहति पांशुभिरन्तरालं परितः पूरयति" कर्कः। पर्यूहणम्।

तारणोहभेदस्तु अधिकरणमालादौ द्रष्टव्यः । द्रव्यप्रतिनिधौ तु नोहः । "तैलं प्रतिनिधिं कुर्य्यात् घृतार्थे याज्ञिको यदि । प्रकृत्यैव तदा होता ब्रूयात् घृतवतीमिति" मीमां० कात्यायनसूत्रादौ प्रतिनिधिविषये ऊहाभावोदर्शितो यथा

"अथेदं चिन्त्यते विहितद्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे अनुवाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्य्यः "अग्नीषोमाभ्यां मेषस्य वपाया" इत्येवम् उत विहितद्रव्यशब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति । तत्र मन्त्रेण द्रव्यमभिधेयम् न चानूहितः प्रतिनिहितं द्रव्यं शक्नोत्यभिधातुम् तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्त आह" "शब्देऽविप्रतिपत्तिः" कात्या० १, ४, ८, "प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेऽपि प्रयोक्तव्यम् न तु मेषस्येत्येवं विपरिणतरूपमित्यर्थः कुतः ? प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तरबुद्ध्या अतश्छाग एवायमिति बुद्ध्या गृहीतत्वात्तच्छब्देनैवाभिधानम् । यद्यत्र मेषश्छागवत् साधनं भवेत्तदा तत्प्रकाशकम् मेषपदं प्रक्षिप्येत न त्वेवम्, किं तर्हि मेषगता ये छागावयवा एवात्र साधनम् ते च छागगता इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्त इत्यनूहेनैव प्रयोगः । यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा "सारस्वतीं मेषीमिति" "ऐन्द्रं मेषमिति" "ऐन्द्र ऋषभः" इति तत्र द्रव्यान्तरबुद्धिर्भवति तत्र ऊहोऽपि भवति । नचात्रैवंविधं किमपि वचनमस्ति तस्मादवयवानां सामान्याच्च तद्द्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम् । तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम् शब्देऽविप्रतिपत्तिरिति । यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् तेन सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह" कर्कः "सोमेन जात्यभावात्" का० सू० १० "सोमेनेति तृतीयैकवचनम् । सोमाभावे पूतीकेषूपात्तेषु सोमशब्देनैव पूतीकानामभिधानं कर्त्तव्यम् । "अंशुरंशुष्टे देव ! सोम ! प्यायतामित्येवम् न तु पूतीकाशब्देन । अथ वा सोमे इति सप्तम्येकवचनम् नेति निषेधः । सोमप्रतिनिधित्वेनोपात्तेषु अर्ज्जुनशब्देनतृणपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति कुतः जात्यभावात् जात्यन्तरत्वाभावात् नह्यत्र वचनेन द्रव्यान्तरं विधीयते किं तर्हि सोमाभावे यागस्यावश्यकर्त्तव्यत्वादनेकेषु कुशगोत्रीयतृणेषु च प्राप्तेषु पूतीकादेर्नियमः क्रियते तेनैन्द्रमेषवदतिदेशः वाचनिकजात्यन्तराभावादतोऽप्यूहो न भवति" कर्कः ।

"छाग ! त्वं वर्हिरूपेत्यादिमन्त्रे च बहुपशुघाते न बहुत्वोहः । तदेतत्" ति० त० "बहुपशुघातेऽपि मन्त्रे एकवचनान्त एव प्रयोज्यः न बहुवचनोहः । "नरं पञ्चत्वमागतम्" इत्यत्र नार्य्यां स्त्रीत्वोहाभाववत् अतएव सपत्नीकयजमानप्रयोगेऽपि "पत्नीं सन्नह्येति" मन्त्र एकवचनान्त एवेति । ऊहं प्रकृत्य "प्रकृतावपूर्व्वत्वात्" कात्यायनेनोहस्य प्रकृतौ प्रतिषेधात् । विकृतावेवोहः । "ऊहोऽपूर्व्वात्प्रैषेषु उच्यतामिति" जै० तत्रवचनात् न वाग्ययावर्वैभक्तिकार्थविवक्षया प्रायणिकत्वेन बलवतः प्रातिपदिकार्थस्य समन्वितत्वेनाविरोधात् । एवञ्च प्रकृतौ नरपदबहुपशौ बहुवचनोहाभावात् छागादौ विकृतिभूतेऽपि न बहुवचनोहः किन्तु एकवचनमात्रमिति" वदता रघुनन्दनेन तथा समर्थितम् । संकल्पादिवाक्ये तु ऊह इति भेदः । अविगादिप्रयोगे च अस्मदादिपदघटिते "दातारो नोऽभिवर्द्धन्तामित्यादि" मन्त्रेऽपि नोहः तैकाया प्रयोगेऽपि यजमानगतानामेव तत्तत्फलानामङ्गतम इत्याकरे प्रपञ्चः । तथाचासमवेतार्थस्य समन्वयाय मन्त्रे समवेतार्थकरणरूपमपूर्व्वं प्रोतृप्रैषमूहः । ५आरोपे ६सङ्कलने च । "इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः" भा० अनु० १४५ अ० "ऊहापोहाभ्यां तत्त्वावधारणम्" पातञ्ज० भा० ।

ऊहगान न० सामगानग्रन्थभेदे ऊहगीतिरप्यत्र स्त्री ।

ऊहा स्त्री ऊह अ स्त्रीत्वात् टाप् । १अध्याहारे २ऊहशब्दार्थे

ऊहिनी स्त्री ऊह-णिनि । समवेतायाम् "अक्षात् परस्य तस्मादेर्ह्ढिः अक्षौहिणी सेना ।

ऊह्य त्रि० ऊह-ण्यत् । १तर्कणीये २उद्भावनीये ३अध्याहार्य्ये ४मीमांसकोक्तोहविषये च । अनीयर् । ऊहनीय तदर्थे त्रि० ।

ऊह्यगान न० सामगानग्रन्थभेदे ।

इति वाचस्पत्ये उकारादिशब्दार्थसङ्कलनम् ।

—◇—

वृत्तस्य च यः संपातः मीनान्तादपक्रमे याम्योत्तरवृत्ते गैस्तावत्सु धिष्ण्यस्य ध्रुवांशा ज्ञेयाः। अथ वेधवलये तस्यैव संपातस्य योगतारायाश्च यावन्तोऽन्तरेंऽशास्तावन्तस्तस्य शरांशा उत्तरा दक्षिणा वा वेदितव्याः। अथ ये ध्रुवभागाः पठितास्ते कृतदृक्कर्मका एव। ये तु शरांशाः पठितास्ते स्फुटा एव। यतो ध्रुवद्वयकीलयोः प्रोतं वेधवलयम्। तस्मिन् वेधवलये यो ज्ञातः शरः स ध्रुवाभिमुखः। ध्रुवाभिमुखः शरः स स्फुटः। अस्फुटस्तु कदम्बाभिमुखः। अत एव पूर्वं भगोलोत्पत्तिकथने यष्टिवेधवलयं कदम्बकीलयोः प्रोतं कर्त्तव्यमित्युक्तम्। अत एव कारणात् कृतदृक्कर्मका एव भध्रुवाः। यतो ध्रुवादुपरि नीयमानं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र कृतायनदृक्कर्मको ग्रह इति दृक्कर्मवासनायां पूर्वं कथितमेव। अथागस्त्यलुब्धकयोराह" प्रमि०। "अगस्त्यध्रुवः सप्तभागास्तु भागास्तुरङ्गादयस्तस्य याम्याः शरांशाः। षडष्टौ तथा लुब्धकस्य ध्रुवोऽयं नभोऽम्भोधिभागाः शरस्तस्य याम्यः" सि०शि०। स्पष्टम् "अत्रोपपत्तिः पूर्ववत्। अथेष्टघटिका आह" प्रमि०। "अगस्त्यस्य नाडीद्वयं मोक्षमिष्टं सदृग्वाणनाडीद्वयं लुब्धकस्य। त्रिभागाधिकं सूत्रभागावमूनां ततश्चाधिकं तारतम्येन कल्प्यम्" सि०शि०स्पष्टार्थम्। "अत्रोपपत्तिः अगस्त्यस्य नाडीद्वयं यदिष्टं तत् तस्य द्वादश कालांशा उत्पद्यन्ते। सप्तभागनाडीद्वयं लुब्धकस्येति। तत्र त्रयोदश १३ कालांशाः त्रिभागाधिकं सूत्रपातमिति। यानि सूक्ष्माणि नक्षत्राणि तेषां चतुर्दश कालांशाः। अमूनां ततश्चाधिकमिति केषाञ्चित् पञ्चदश केषाञ्चित् षोडशेति कल्प्यते। अत्र पठितानां भागानां ये कालांशास्ते स्थूलसूक्ष्मत्वतारतम्यपर्य्यालोचनया। याः स्थूलास्ताराश्च अर्कोदयादल्पेन कालेनान्तरिता दृश्या भवन्ति। याः सूक्ष्मास्ता अधिकेनेत्युपपन्नम्" प्रमि०

सू०सि०रङ्गनाथाभ्यान्तु तदुदयज्ञानार्थमन्यप्रकार उक्तो यथा "प्रोच्यन्ते लिप्तिका भानां स्वभोगोऽथ दशाहतः। भवन्त्यतीतधिष्ण्यानां भोगलिप्ता युता ध्रुवाः" सू०सि०। "भानामश्विन्यादिनक्षत्राणामुत्तराषाढाभिजिच्छ्रवणधनिष्ठावर्जितानां लिप्तिका योगसञ्ज्ञाः कलाः प्रोच्यन्ते स्पष्टमन्यदेव कथ्यन्ते। अथानन्तरं स्वभोगः स्वाभीष्टनक्षत्रभोगः कलात्मको वक्ष्यमाणो दशभिर्गुणितः कार्यः। तत्र स्वाभीष्टनक्षत्रतः पूर्वनक्षत्राणामश्विन्यादीनां भोगलिप्ताः। "भभोगोऽष्टशती लिप्ताः" इत्युक्ताष्टशतकलाः। प्रत्येकं युताः। अश्विन्याद्यतीतनक्षत्रसङ्ख्यागुणितकलाष्टशतयुतमित्यर्थः। ध्रुवा नक्षत्राणां भवन्ति"। रङ्ग०। अथ प्रतिज्ञाता नक्षत्रभोगलिप्ता उत्तराषाढाभिजिच्छ्रवणधनिष्ठाव्यतिरिक्तानां तेषां ध्रुवकार्थत्वात्पादांशाष्टश्लोकैराह। "अष्टार्णवाः शून्यकृताः पञ्चषष्टिर्नगेषवः। अष्टार्था अब्धयोऽष्टागा अङ्गागा मनवस्तथा। कृतेषवो युगरसाः शून्यबाणा वियद्रसाः। खवेदाः सागरनगा गजागाः सागरर्त्तवः। मनवोऽथ रसा वेदा वैश्वमाप्यार्धभोगगम्। आप्यस्यैवाभिजित्प्रान्ते वैश्वान्ते श्रवणस्थितिः। त्रिचतुःपादयोः सन्धौ श्रविष्ठा श्रवणस्य तु। स्वभोगतो वियन्नागाः षट्कृतिर्यमलाश्विनः। रन्ध्राद्रयः क्रमाद् या विक्षेपाः स्वादपक्रमात्। दिङ्मासविषयाः सौम्ये याम्ये पञ्च दिशो नव। सौम्ये रसाः खं याम्ये गाः सौम्ये खार्कास्त्रयोदश। दक्षिणे रुद्रयमलाः सप्तत्रिंशदथोत्तरे। याम्येऽध्यर्धत्रिकृतता नवसार्धशरेषवः। उत्तरस्यां तथा षष्टिस्त्रिंशत् षट्त्रिंशदेव हि। दक्षिणे त्वर्धभागस्तु चतुर्विंशतिरुत्तरे। भागाः षड्विंशतिः खं च दस्रादीनां यथाक्रमम्" सू०। "अश्विन्यादिनक्षत्राणां क्रमाद्भोगा एते। तत्राश्विन्या अष्टचत्वारिंशत् कलाः। भरण्याश्चत्वारिंशत्। कृत्तिकायाः कलाः पञ्चषष्टिः। रोहिण्याः सप्तपञ्चाशत् कलाः। मृगशिरसोऽष्टपञ्चाशत्। आर्द्रायाश्चत्वारः। अत्राष्टव इत्यत्र गोऽक्षयो गोऽन्नय इति वा पाठस्तु युक्तः। शाकल्यसंहिताविरोधात्। एतेन "सौरोक्तरुद्रभस्यांशास्त्वद्रयोऽष्टाक्षयः कलाः" इति मार्कण्डोक्तम् "दशककोनपञ्चदशभागा मिथुने सर्वजनाभिमतध्रुवको दशककायुतत्रयोदशभागाः पर्वताभिमतध्रुवकश्च निरस्तः। पुनर्वसोरष्टसप्ततिः। पुष्यस्य षट्सप्ततिः। अश्लेषायाश्चतुर्दश। तथेति छन्दःपूरणार्थम्। मघायाश्चतुःपञ्चाशत्। पूर्वफाल्गुन्याश्चतुःषष्टिः। उत्तरफाल्गुन्याः पञ्चाशत्। हस्तस्य षष्टिः। चित्रायाश्चत्वारिंशत्। स्वात्याश्चतुःसप्ततिः। विशाखाया अष्टसप्ततिः। अनुराधायाश्चतुःषष्टिः। ज्येष्ठायाश्चतुर्दश। अनन्तरं मूलस्य षट्। पूर्वाषाढायाश्चत्वारः। उत्तराषाढाया ध्रुवकमाह। वैश्वमिति। उत्तराषाढायोगतारानक्षत्रम्। आप्यार्धभोगगम्। आप्यस्य पूर्वाषाढानक्षत्रस्यार्धभोगः। अनूराषाढविंशतिभागसात्र स्थितं ज्ञेयम्। अतो राशयो विंशतिभागा उत्तराषाढाया ध्रुव इत्यर्थः। एतेन पूर्वाषाढायोगतारायाः सकाशादुत्तराषाढायोगतारा

विंशतिकलोनसप्तभागान्तरिता। तेन पूर्वाषाढ़ाध्रुवकोऽष्टराशयश्चतुर्दश भागा विंशतिकलोनसप्तभागैर्युत उत्तराषाढाया ध्रुवश्चत्वारिंशत्कलाधिकोऽष्टध्रुव इति पर्वतोक्तमपास्तम् सूर्य्यसिद्धान्तविरोधात्। अभिजिद्ध्रुवकमाह। आद्यस्येति। पूर्वाषाढाया अवसाने धनूराशेर्विंशतिकलोनसप्तविंशतिभागेऽभिजिद्योगतारा ज्ञेया। चत्वारिंशत्कलाधिकषड्विंशतिभागाधिका अष्टौ राशयोऽभिजितो ध्रुव इत्यर्थः। एवकारोऽन्ययोगव्यवच्छेदार्थः। तेन संहितास्मृतं श्रवणपञ्चदशांशस्थानं विंशतिविकलायुतत्रयोदशकलायुतचतुर्दशभागादिकनवराशयो निरस्तम्। श्रवणस्य ध्रुवकमाह। वैश्वान्त इति। उत्तराषाढाया अवसाने श्रवणयोगताराया: स्थानं ज्ञेयम्। नव राशयो दश भागाः श्रवणध्रुवक इत्यर्थः। धनिष्ठाया ध्रुवकमाह। त्रिचतुःपादयोरिति। श्रवणस्य तृतीयचतुर्थचरणयोः क्रमेणान्तादिसन्धौ मकरराशेर्विंशतिभागे श्रविष्ठा धनिष्ठा ज्ञेया। नव राशयो विंशतिभागा धनिष्ठाध्रुव इत्यर्थः। तुकारात् खेटान्तर्गतधनिष्ठास्थानं कुम्भस्य विंशतिकलोनसप्तभागा निरस्तम्। शततारायाः भोगमाह। खनोनत इति। धनिष्ठाभोगात् कुम्भस्य विंशतिकलोनसप्तभागावधेरित्यर्थः। शततारायाः अशीतिर्भोगः। अतः प्राग्वद्ध्रुवा इति ज्ञापनार्थं स्वभोगत इत्युक्तम्। शततारायाः स्थानं शततारकाध्रुव इति पर्य्यवसन्नम्। अवशिष्टनक्षत्राणां भोगानाह। षट्कृतिरिति। पूर्व्वभाद्रपदायाः षट्त्रिंशत् कला भोगः। उत्तरभाद्रपदाया द्वाविंशतिः। रेवत्या एकोनाशीतिः। अथ ध्रुवकानयनं यथा। अश्विन्या भोगः। ४८। दशगुणितः ४८०। अतीतनक्षत्राभावाद्भोगयोजनाभावः। अतोऽश्विन्याः कलात्मको ध्रुवः। ४८०। राश्याद्यस्तु। ०८। भरण्या भोगः। ४०। दशाहतः। ४००। अतीतनक्षत्रस्यैकत्वादष्टशतयुतो भरण्याः परिभाषया राश्याद्यो ध्रुवः। ०।२०। एवमार्द्राभोगः। ४ दशाहतः ४०। अतीतनक्षत्राणां पञ्चतया पञ्चगुणिताष्टशतेन ४००० चतुःसहस्रात्मकेन युतः कलाद्यो ध्रुवः ४०४० राश्याद्यस्तु २।७।२०। एवं पूर्वाषाढाया दशगुणितो भोगः। ४०। एकोनविंशतिगुणिताष्टशतेन। १५२००। युतः परिभाषया राश्याद्यो ध्रुवः। ८।१४। शततारायाः दशगुणितो भोगः। ८००। त्रयोविंशतिगुणिताष्टशतेन। १८४००। युतश्चतुर्विंशतिगुणिताष्टशतरूपो। १९२००। जातो ध्रुवो राश्याद्यः। १०।२०। पूर्वभाद्रपदाया दशगुणितो भोगः ३६०। चतुर्विंशतिगुणिताष्टशतेन। १९२००। युतः। १९५६० जातो ध्रुवो राश्याद्यः। १०।२६। उत्तराषाढ़ाभिजिच्छ्रवणधनिष्ठानां स्वभोगस्थानात् पश्चात् स्थितत्वेनोक्तरीत्यसम्भवाद्विपरीता ध्रुवका उक्ताः स्वादिस्थानाद्योगतारा यदन्तरकलाभिः स्थितास्ता आचार्य्यप्रदर्शिता भोगसञ्ज्ञा उक्ताः। तथा च सूर्य्यसिद्धान्ते। "अष्टौ विंशतिरर्धेन शक्राग्निर्व्वेदभूमयः। त्रिनखाः सत्रिभागा द्विरसाश्चाङ्काश्च षट्शतम्। नवाष्टा नवसूर्य्याश्च वेदेन्द्राः शरराशयः। अत्यष्टिः सङ्कृतिर्गोऽतिधृतिर्विंशाश्विना तथा। वेदाकृतिर्गोऽद्रिकृताः कविश्वता गुणार्णवः। षोनृकृतिस्त्रयं शशीनाश्च रसकृताः सहस्रितक। अगोऽश्विनः सदन्ताः षड्दन्ताः शैलगुणाग्नयः। मेषाद्यत्वादिग्ध्यांशाः चक्रभोगाः स्वकट्याः" इति। अत्र नक्षत्राणां विक्षेपभागानाह। यथाम्निति। उक्ताद् चक्रे अश्विन्यादिनक्षत्राणां यथाक्रमं क्रमादित्यर्थः। गोलस्थात् स्वकीयापक्रमात् क्रान्तिपातात् क्रान्तिवृत्तस्थाद् ध्रुवकस्थानादित्यर्थः। विक्षेपा विक्षेपभागा दक्षिणा उत्तरा वा भवन्ति। तत्रोत्तरदिग्स्थाश्विन्यादित्रयाणां दिग्भागविषयाः क्रमेण दश द्वादश पञ्चेत्यर्थः। दक्षिणदिशि रोहिण्यादित्रयाणां पञ्च दश नव। उत्तरस्यां पुनर्वसोः षड्भागाः। पुष्यस्य च विक्षेपाभावः। अत्र पञ्चमाक्षरस्य गुरुत्वेन छन्दोभङ्ग आर्षत्वान्न दोषः। दक्षिणस्यामश्लेषायाः षट्। उत्तरस्यां मघादित्रयाणां शून्यं द्वादश त्रयोदश। दक्षिणस्यां हस्तचित्रयोरेकादश द्वौ। अनन्तरं स्वात्या उत्तरदिशि सप्तत्रिंशत्। दक्षिणस्यां विशाखादीनां षण्णां सार्धैकं त्रयं चत्वारः नव सार्धपञ्च पञ्च क्रमेण उत्तरदिशि तथा विक्षेपभागाः। अभिजितः षष्टिः। श्रवणस्य त्रिंशत्। धनिष्ठायाः षट्त्रिंशत्। एवकारो न्यूनाधिकव्यवच्छेदार्थः। चकारः पूरणार्थः। दक्षिणस्यां तुकारस्तथा। अर्धभागः शततारायाः। तुकारस्तथा। उत्तरस्यां पूर्व्वभाद्रपदायाश्चतुर्विंशतिः। तस्यामेव दिशि भागा विक्षेपभागा उत्तरभाद्रपदायाः षड्विंशतिः। रेवत्या विक्षेपाभावः। चकारः पूरणार्थः। अथागस्त्यलुब्धकवह्निब्रह्महृदयतारानां ध्रुवकविक्षेपांस्तदुपपत्तिं श्लोकत्रयेणाह" रङ्ग०। "अशीतिभागैर्याम्यायामगस्त्यो मिथुनान्तगः। विंशे च मिथुनस्यांशे मृगव्याधो व्यव-

जाम्बवति, (ऋषिजाङ्गल) २मद्राश्वेतायां, ३श्वेतकिरातार्याञ्च । (गौरताड़) स्वार्थे कन् तत्रैव

**ऋक्षगिरि** पु० कर्म०। कुलाचलभेदे ऋक्षनामके पर्वते ।

**ऋक्षचक्र** न० ६त०। नक्षत्रसमुदाये ज्योतिषां चक्रमिव गगनस्थे नक्षत्रात्मके चक्राकारे पदार्थभेदे। ऋतुचक्रशब्दे तद्विवृतिः। भचक्रस्य प्रवहवायुना प्रत्यहं पश्चाद्गमनेऽपि ग्रहाणां यथा प्राग्गतित्वं भवेत्तथा सू० सि० रङ्गनाथव्याख्ययोः यथा। "अथ ग्रहपूर्वगत्युपपत्तौ कारणमाह।" "पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः" सू० सि०। "पश्चादनन्तरं पुनरावृत्त्या पश्चात् पश्चिमदिगभिमुखं नक्षत्रैस्तारकादिभिः सह ग्रहाः सूर्यादयोऽतिजवात् प्रवहवायुसत्वरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्गगाः स्वकक्षास्थास्तस्मात् जीयमाना नक्षत्रैः पराजिता नक्षत्राणामपि गमनात्। अतएव लम्बन्ते गुरुभूता इति तात्पर्यार्थः। तुल्यं समम्। एतत्कारादधिकन्यूनत्वव्यवच्छेदः। लम्बन्ते स्वस्थानात् पूर्वस्मिन् लम्बायमाना भवन्ति। यथा लम्बितः पश्चाद्व्रजति नाग्रे। ऊर्ध्वादधोऽधः कक्षाक्रमानुरोधेन शन्यादिग्रहाणां चन्द्रान्तानां गुरुत्वाच्चयः शनिरतिगुरुभूतस्तस्मात् किञ्चिन्न्यूनो गुरुस्तस्मादपि भौम इत्यादि यथोत्तरम्। यस्य कक्षा महती तस्य गुरुत्वाधिक्यं यस्य कक्षा तस्य तदनुरोधेन गुरुतास्वल्पमिति। एतदुक्तं भवति। ब्रह्मणा प्रवहवायौ नक्षत्राधिष्ठितो मूर्त्तो गोलः स्थापितस्तदन्तर्गताः स्वकक्षाकाशगोलस्थाः शन्यादयो नक्षत्राधिष्ठितमूर्त्तगोलस्थक्रान्तिवृत्तस्थरेवतीयोगताराश्वरूपमेषादिप्रदेशसमसूत्रस्थाः स्थापिताः। क्रान्तिवृत्तं तु मेषादिस्थाने विषुवद्वृत्तलग्नं सम्पातात् त्रिभान्तरितक्रान्तिवृत्तप्रदेशाभ्यां चतुर्विंशत्यंशान्तरेण दक्षिणोत्तरौ मकरकर्कादिरूपौ तदेवं द्वादशराश्यात्मकं वृत्तं ग्रहचारभूतम्। विषुवद्वृत्तं तु ध्रुवमध्यस्थं निरक्षदेशोपरिगम्। तत्र प्रवहवायुना स्वाघातेन मूर्त्तो नक्षत्रगोलो भ्रामयित्वा पश्चिमाभिमुखैः परिवर्त्तते। तदन्तर्गतवायुभिस्तदाघातेन वा ग्रहा भ्रमन्तोऽपि नक्षत्रगोलस्थितक्रान्तिवृत्तीयमेषादिप्रदेशेन समं न गच्छन्ति वायूनां स्वल्पत्वात् तदाघातस्थानसत्वाद्बिम्बानां गुरुत्वाच्च। अतस्तत्स्थानादुपग्रहाणां लम्बना दृश्यन्ते। अतएव नक्षत्रोदयकाले तेषां द्वितीयदिने नोदयः किन्तु लम्बितप्रदेशेन वायुना तदनन्तपूर्वभागस्थत्वे तदुदयः। लम्बनं तु शन्यादीनां

कक्षानुरोधेन गुरुत्वाद्द्वयूनां तद्वातानां वा कक्षानुरोधेन बहुत्वात् तुल्यम्। यद्यपि वायोर्मूर्त्तानुरोधेन स्वल्पत्वादुपग्रहव्रजलम्बनं विषुवद्वृत्ते भवितुमुचितं न क्रान्तिवृत्ते। तथा च वक्ष्यमाणक्रान्त्यनुपपत्तिः क्रान्तिवृत्तस्थद्वादशराशिभोगेन वक्ष्यमाणानां भगणानामनुपपत्तिश्च। तथापि वायुनावलम्बितो ग्रहो विषुवन्मार्गगोऽपि तद्विषयप्रदेशाच्छन्नक्रान्तिवृत्तप्रदेशेन ग्रहाकाशगोल एव स्वमण्डलेषाक्ष्यते इति नानुपपत्तिः। अतएव स्वमार्गगा इति क्रान्तिवृत्तानुकृतस्वाकाशगोलस्थकक्षामार्गगता इत्यर्थकमुक्तमिति सङ्क्षेपः" रङ्ग०। "अथात एव ग्रहाणां लोके प्राग्गतित्वं सिद्धमित्याह। 'प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः। परिणाहवशाद्भिन्ना तद्वशाद्भानि भुञ्जते" सू० सि०। "अतोऽवलम्बनादेव तेषां ग्रहाणां प्राग्गतित्वं प्राच्यां दिशि गतिरेवं ते प्राग्गतयस्तद्भावः प्राग्गतित्वं सिद्धम्। लम्बनस्वरूपैव ग्रहाणां पूर्वगतिरन्यथा लोकैः कारणानभिज्ञैः प्रत्यक्षावगता तच्छक्तिजनिता कल्पितेत्यर्थः। सा कियतीत्यत आह। भगणैरिति। वक्ष्यमाणभगणैः प्रत्यहं प्रतिदिनं गतिः प्राग्गमनरूपा भगणानां गत्युपलक्षणात् भगणसम्बन्धिकल्पमानादिभिः सूर्यचान्द्रादिकभगणा लभ्यन्ते तदैकेन दिनेन त्रैराशिकाज्ज्ञेया। ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगतिर्भिन्नेति पूर्वं लम्बनरूपा ग्रहगतिरयुक्तेत्यत ग्रहलम्बनस्याभिन्नत्वादित्यत आह। परिणाहवशादिति। परिणाहः कक्षापरिधिस्तद्वशात् तदनुरोधादियं ग्रहगतिर्भिन्नाऽवस्था। अयमभिप्रायः ग्रहाणां लम्बनं तुल्यप्रदेशेन, परन्तु स्वस्वकक्षायां तत्प्रदेशे दृश्याः कक्षाया गतिकलास्तु भवति कक्षाहर्नेऽल्पा च बृहत्कक्षे बह्व्यः सर्वकक्षापरिधीनां चक्रकलाङ्कितत्वात्। भगणास्तु गतिवशादेव यस्य कक्षावृत्तं महत् तस्याल्पा यस्य च लघु कक्षावृत्तं तस्य बहवस्तदुत्पन्ना गतिरपि तथैव न विरोधः। नन्वेकरूपगतिं विहाय भिन्नरूपा गतिः कथमङ्गीकृतेत्यत आह। तद्वशादिति। भिन्नगतिवशाद्भानि राशीन् नक्षत्राणि भुङ्क्ते ग्रहा भुञ्जन्तीत्यर्थः। तथा च ग्रहराश्यादिभोगज्ञानार्थमियमेव गतिरुपयुक्ता नैकरूपेति भावः" रङ्ग० "अथ भभोगे विशेषं वदन् नक्षत्रभोगमानमाह। 'शीघ्रगस्तान्यथाल्पेन कालेन महताऽल्पगः। तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू० सि० "अथ ग्रह्यः पूर्वोक्तैर्विशेषमाह। शीघ्रगतोऽग-

"ऋचीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्" शत० ब्रा० १२,२,४,२।४, २ऋच्छाकारपुरुषमेधीयदेवताभेदे स्त्री। "नदीभ्यः पौञ्जिष्ठमृचीकाभ्यो नैषादम्" यजु० ३०,८। पुरुषमेधे उक्तम्।

**ऋचेष्टि** स्त्री नक्षत्रविशेषविहिते इष्टिभेदे।

**ऋचोद** पु० ऋचं नक्षत्रमिव स्वच्छम् उदकं यत्र उदादेशः। पर्वतभेदे। "ऋचोदः पर्वतोऽभिजनो येषाम् अण्। आर्चोदा द्विजाः" सि० कौ०।

**ऋक्संहिता** स्त्री ६त०। ऋग्वेदसंहितायाम्। ऋग्वेदपदे विवृतिः "ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः। साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते" मनुः वेदो हि मन्त्रब्राह्मणभेदेन द्विविधः तत्र मन्त्रात्मको भागः संहिता। "अग्निमीडे" इत्यादिकः ऋक्समुदायात्मकः ऋक्संहिता। मन्त्रेतरवेदभागो ब्राह्मणम्। संहिताद्युपदर्शितार्थनियताश्रयतया संहितात्वं ब्राह्मणे पदग्रन्थे च न संहितानियम इति तयोर्न संहितात्वमिति भेदः संहितास्थपदविच्छेदज्ञापको ग्रन्थः पदग्रन्थः। स च व्याडिकृतः पौरुषेय इति बोध्यम्।

**ऋक्सम** न० ऋचा समम्। सामभेदे। "जगत्या ऋक्समम् ऋक्समाच्छुक्रः" यजु० १३,५६, "ऋक्समम् ऋक्समसंज्ञं यत् साम" वेददी०।

**ऋक्साम** न० द्विव०। ऋक् च साम तदाह्वगानं च इयोः समाहारः अच् समा०नि०द्विव०। ऋगात्मकमन्त्रभेदतदाह्वगानयोः समाहारे "ऋक्सामाभ्यां संतरन्तः" यजु० ४,१। "ऋक्सामयोः शिल्पे स्थः" ४,९। अत्र सामानि चेति बहुत्वे तु नाच्। ऋक्सामन् इत्येव। "ऋक्सामान्यद्धरस्य पदयोनाम" यजु० १८,४२।

**ऋगयन** न० ऋचामयनम्। ऋक्पारायणपर्य्यन्ते पूर्वपदात् णत्वं नेह गव्यवधानात्। ऋगयनस्य व्याख्यानो ग्रन्थः ऋगयनादि० अण्। आर्गयन तद्व्याख्यानग्रन्थे।

**ऋगयनादि** पु० पाणिन्युक्ते तस्य व्याख्यान इत्यर्थे अण्प्रत्यय निमित्तप्रकृतिभूतशब्दसमुदाये। स च गणः "ऋगयन, पदव्याख्यान, छन्दोमान, छन्दोभाषा, छन्दोविचिति, न्याय, पुनरुक्त, निरुक्त, व्याकरण, निगम, वास्तुविद्या, क्षत्रविद्या, अङ्गविद्या, विद्या, उत्पात, उत्पाद, उद्याव संवत्सर, मुहूर्त्त, उपनिषद्, निमित्त, शिक्षा, भिक्षा"

**ऋगावान** न० आ+नेज्भावे ल्युट्। ऋचामावानं पठनं संहितायामेव अवसानम्। वेदपाठकाले अर्द्धर्चादीनां संहितया पूर्वोत्तरयोः सन्धाने "ऋचमृचमवानानन्ता प्रणुयाद्रचेत्" आश्व० श्रौ० ४,६,२। "तेनाद्ध्वर्योः संहितयैव वक्तव्याः" नारा० वृ०। अथावानं तु न संहितया पठनमित्यर्थः। "अभिष्टु याहगावानम्" ५,६,१। "तस्योक्तमृगावानधर्मेण" ५,१९,२। "तस्याद्यां पच्छ ऋगावानं पच्छः यक्ष्य चेत्" ५,२०,२।

**ऋग्गाथा** स्त्री ऋचामिव गाथा। लौकिकगीतिभेदे। "ऋग्गाथापाणिकादक्षविहिताब्रह्मगीतिकाः" याज्ञ०।

**ऋग्मत्** त्रि० ऋक् स्तुतिः पूजा वा अस्त्यस्य मतुप्। १स्तोतरि २अर्चनीये पूजनीये। "राजानमुपतस्थुर्ऋग्मियम्" ऋ० ६,८,४ सुतेर्निरुक्तौ ऋग्मियमृग्मन्तमर्चनीयं पूजनीयम्" निरुक्तकारः। ऋग्मानिव स्वार्थे च द्वितीयाचः परलोपः। ऋग्मियोऽप्यत्र। "नाभिष्टयन्तमृग्मियम्" ऋ० १,९,९।

**ऋग्मिन्** त्रि० ऋच्+अस्त्यर्थे मिनि। स्तोतरि। "गिरा यदि निर्णिजमृग्मिणो ययुः" ऋ० ९,८६,४६। "ऋग्मिणः स्तोतारः" भा०।

**ऋग्विधान** न० ऋचा ऋग्वेदेन कर्मविशेषस्य विधानम्। ऋग्वेदोक्तमन्त्रभेदेन कर्मविशेषविधाने तच्च हेमाद्रौ व्रतखण्डे विस्तरेणोक्तम्। वह्निपुराणोक्तमत्र दर्श्यते

"अग्निरुवाच प्रतिवेदन्तु कर्माणि काम्यानि प्रवदामि ते। प्रथमं ऋग्विधानं वै शृणु त्वं भुक्तिमुक्तिदम्। अन्तर्जले तथा होमे जपतो मनसेप्सितम्। कामं करोति गायत्री प्राणायामाद्विशेषतः। गायत्र्यादशसाहस्रो जपोनक्ताशनो द्विजः। आश्रमाद्वहिः स्नातः सर्व्वकल्मषनाशनः। दशायुतानि जप्त्वाथ हविष्याशी स मुक्तिभाक्। प्रणवो हि परं ब्रह्म तज्जपः स च पापहा। ओङ्कारशतजप्तस्तु नाभिमात्रोदके स्थितः। जलं पिबेत् स सर्वैस्तु पापैर्विप्रः प्रमुच्यते। मात्रात्रयं त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः। महाव्याहृतयः सप्त लोका होमोऽखिलाघहः। जलार्थे तथा राम। मोक्षार्थं वाघमर्षणः। अग्निमीडे पुरोहितं सूक्तोऽयं वह्निदैवतः। शिरसा धारयन् वह्निं योजयेत् परिवत्सरम्। होमं त्रिषवणं भैक्ष्यमनग्निपक्वञ्च चरेत्। अतः परमृचां सप्त आद्याद्या याः प्रकीर्तिताः। भोजयन् प्रयतोऽनिशमिष्टान् कामान् समश्नुते। मेधाकामो जपेन्नित्यं सदसस्पतिमित्यृचम्। अम्ब्यो यन्ति याः प्रोक्ता नवर्चो मृत्युनाशनः। शुनःशेपमृषिं बद्धः सन्निरुद्धोऽथ वा जपेत्। मुच्यते सर्व्वपापेभ्यो गदी चाप्यगदी भवेत्। यदीच्छेत् शाश्वतं कामं मित्रं प्राज्ञं

पुरन्दरम् । ऋग्भिः षोड़शभिः कुर्यादिन्द्रस्येति दिने-
दिने । हिरण्यस्तु समित्येतत् जपन् शत्रून् प्रबाधते ।
क्षेमी भवति चाध्वाने ये ते पन्था जपन्नरः । रौद्रीति
षड्भिरीशानं स्तूयाद्यो वै दिने दिने । चरुं वा कल्पयेद्रौद्रं
तस्य शान्तिः परा भवेत् । उदुत्युदितमादित्यमुपतिष्ठन्
दिनेदिने । क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविना-
शनः । द्विषन्तमित्यर्द्धर्चं यद्विष्यान्तं जपन् स्मरेत् ।
आगस्यो सप्तरात्रेण विद्वेषमधिगच्छति । आरोग्य-
कामो रोगी च प्रस्कण्वस्योत्तमं जपेत् । उत्तमस्तस्य
चार्द्धर्चो जपेद्वैरिविनाशने । उदयत्यायुरक्षय्यं तेजो म-
ध्यंदिने जपेत् । अस्तं प्रतिगते सूर्य्ये द्विषन्तं प्रतिबा-
धते । नव यस्येति सूक्तानि जपन् शत्रून्नियच्छति । एक-
देशं सुवर्णस्य सर्व्वकामान् विनिर्द्दिशेत् । आध्या-
त्मिका क इत्येता जपन्मोक्षमवाप्नुयात् । आ नोभद्रा इ-
त्यनेन दीर्घमायुरवाप्नुयात् । त्वां सोमेति च सूक्तेन
नवं पश्यन्निशाकरम् । उपतिष्ठेत् समित्पाणिर्व्वासां-
स्याप्नोत्यसंशयम् । आयुराय्येपि समिति कौत्ससूक्तमदा-
जपेत् । अपानः शोशुचदिति स्तुत्वा मध्ये दिवाकरम् ।
यथा मुञ्चति वेषीकान्तथा पापं प्रमुञ्चति । जातवेदस
इत्येतज्जपेत् स्वस्त्ययनं पथि । भयैर्व्विमुच्यते सर्व्वैः स्वस्ति-
मानाप्नुयाद् गृहम् । व्युष्टायाञ्च तथा रात्र्यामेतद्दुः-
स्वप्ननाशनम् । प्रमन्दिनेति सूयन्त्यां जपेद्गर्भविमोच-
नम् । जपन्निन्द्रमिति स्नातो वैश्वदेवं तु सप्तकम् । सु-
हुत्येभ्यस्तथा जुह्वत् सकलं किल्विषं नरः । इमामिति
जपन् शश्वत् कामानाप्नोत्यभीप्सितान् । मा नस्तोक इति
द्वाभ्यां त्रिरात्रोपोषितः शुचिः । औदुम्बरीश्च जुहुयात्
समिधश्चाज्यसंभृताः । छित्वा सर्व्वान् मृत्युपाशान् जी-
वेद्रोगविवर्ज्जितः । ऊर्द्ध्वबाहुरनेनैव स्तुत्वा शम्भुं
तथैव च । मा नस्तोकेति च ऋचा शिखाबन्धे कृते नरः ।
अधृष्यः सर्व्वभूतानां जायते संशयं विना । चित्रमि-
त्युपतिष्ठेत त्रिसन्ध्यं भास्करं तथा । समित्पाणिर्न-
रोनित्यमीप्सितं धनमाप्नुयात् । दुःस्वप्नं नुदते कृत्स्नं
भोजनं चाप्नुयाच्चिरम् । इतेपचामीति तथा रक्षोघ्नः
परिकीर्त्तितः । यदि वाचा इत्यृचेन जपन् कामान
वाप्नुयात् । नमोयश्चिति जपन् उपगे तापनः शुचिः ।
अवान इति च जपन् जातिश्रैष्ठ्यमवाप्नुयात् । इमन्ते-
षोमसित्येतत् सर्व्वान् कामानवाप्नुयात् । पितुर्न्नूपतिष्ठेत
नित्यमन्नमुपस्थितम् । अग्ने तत् पति सूक्तेन स्निग्धमाप्नो-
त्युत्तमम् । योमेराजन्नित्यपान्तु दुःस्वप्नशमनीमृचम् ।
अध्वनि प्रस्थितो यस्तु पश्येच्छत्रुमथाशुभम् । अमयन्तं
प्रमत्तं वा कनिक्रदमिमं जपेत् । द्वाविंशकं जपन् सूक्तमा
ध्यात्मिकमनुत्तमम् । पूर्व्वं सुप्रयतोनित्यमिष्टान् कामान्
समश्नुते । कृणुष्वेति जपेन्नित्यं जुह्वदाज्यं समाहितः ।
अरातीनां हरेत् प्राणं रक्षांस्यपि च नाशयेत् । उपति-
ष्ठेत् स्वयं वह्निं परीत्यकं दिने दिने । सुरक्षति स्वयं
वह्निर्विश्वतो विश्वतोमुखः । हंसः शुचिषदित्येतत् शुचिर्वीक्षेत्
दिवाकरम् । कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि ।
जुहुयात् क्षेत्रमध्ये तु स्थालीपाकांस्तु पञ्चभिः । इन्द्र
यमभरत्सूर्य्यपर्ज्जन्याय भगाय च । यथालिङ्गं तु
विहरे लाङ्गलन्तु कृषीबलः । मोक्षोधान्याय सीतायै शु-
नासीरमथोत्तरम् । गन्धमाल्यनमस्कारैर्जपेदेताश्च दे-
वताः । प्रवापने प्रलवने खले स्थापनहारयोः । अमोघं
कर्म्म भवति वर्द्धते सर्व्वदा कृषिः । समुद्रादिति सू-
क्तेन कामानाप्नोति पावकात् । वैश्वानर इति द्वाभ्यां
य ऋग्भ्यां वह्निमर्हति । स तरत्यापदः सर्व्वा यशः
प्राप्नोति चाक्षयम् । विपुलां श्रियमाप्नोति जयं प्राप्नोत्य-
नुत्तमम् । अग्ने त्वमिति च स्तुत्वा धनमाप्नोति चोच्छ्रितम् ।
प्रजाकामो जपेन्नित्यमरुणादेवमित्यृचम् इत्यात्रेयं जपेत्
प्रातः सदा स्वस्त्ययनं महत् । स्वस्ति पन्था इति प्रोच्य स्व-
स्तिमान् व्रजतेऽध्वनि । विजिगीषुर्वनस्पते शत्रूणां
व्याधिदम्भवेत् । स्त्रियागर्भप्रसूताया गर्भमोक्षणमुत्त-
मम् । आ वद्वादिति सूक्तस्तु वृष्टिकामः प्रयोजयेत् । नि-
राहारः क्लिन्नवासो न चिरेण प्रवर्षति । मनसः काम-
मित्येतां पशुकामो नरो जपेत् । कर्द्दम इति स्नायात्
प्रजाकामः शुचिव्रतः । अश्वपूर्व्वामिति स्नायाद्राज्यका-
मस्तु मानवः । रोहिते चर्म्मणि स्नायात् ब्राह्मणस्तु यथा
विधि । राजचर्म्मणि वैयाघ्रे छागे वैश्यस्तथैव च । इयमाह-
स्त्रिकोहोमः प्रत्येकं परिकीर्त्तितः । आ गा वेति सूक्तेन
गोष्ठे गां लोकमातरम् । उपतिष्ठेज्जपेच्चैव यदीच्छेत्ताः
सदाऽक्षयाः । उपैते तिसृभीराज्ञो दुन्दुभिं चाभिमन्त्रयेत् ।
तेजोबलञ्च प्राप्नोति शत्रूंश्चैव नियच्छति । कुशपाणि-
र्जपेत् सूक्तं रक्षोघ्नं दस्युभिर्हृतः । ये केचिच्चेत्यृचं
जप्त्वा दीर्घमायुरवाप्नुयात् । जीमूतस्येति सूक्तेन वाहु-
वान्यभिमन्त्रयेत् । यथा लिङ्गं ततो राजा विनिहन्ति
रणे रिपून् । अमीवेति त्रिभिः सूक्तैर्धनमाप्नोति चाक्षयम् ।
अमीवहेति सूक्तेन भूतानि स्थापयेन्निशि । संबाधे विषमे

यज्ञवति । "ऋतावानं महिषं विश्वदर्शतमग्निम्" यजु० १२,१११ । "ऋतावानो जने जने" ऋ० ५,६८,४ । "ऋतावानः यज्ञवन्तः" भा० । लोके तु मतुप् मस्य वः । ऋतवत् इत्येव । "ऐक्ष्वाकस्य ऋतवानिति विश्रुतः" भाग० १५,२० । "ऋतवान् सत्यवान्" इति श्रीधरः ।

**ऋतावृध्** त्रि० ऋतं यज्ञं वर्द्धयति वृध-अन्तर्भूतण्यर्थे क्विप् दीर्घः । यज्ञवर्द्धके । "विश्वयन्ता ऋतावृधो होतारः" यजु० २८,५ । "सुतः सोम ऋतावृधः" ७,९ । "देवीरम्बा ऋतावृधः" ४,१२ ।

**ऋताषाह्** त्रि० ऋतं सहते असत्यं न, सह-ण्वि दीर्घः हृत० इ० "सहेः पृतनर्त्ताभ्याञ्चेति" पा० षत्वम् । सत्यसहने असत्ये कुपिते "ऋताषाडृतधामाग्निः" यजु० १८,३८ ।

**ऋति** स्त्री ऋ-क्तिन् । १गतौ २स्पर्द्धायाम् ३निन्दायाञ्च । कर्म्मणि क्तिन् । ४वर्त्मनि ५मङ्गले च । ६पुरुषमेधयष्टव्यदेवभेदे । तत्र चतुर्थ्यन्तरूपे अन्वनीयपशुकीर्त्तने । "ऋतये स्तेनहृदयम्" यजु० ३०,१२ । कर्त्तरि क्तिच् । ७शत्रौ पु० निरु० । "अग्निरक्षामृतीषहम्" ऋ० ६,१४,४ "परव्याधस्तेऽपि नद्दमान ऋतिर्दन्यमाना" अथ० [कारके । १२,५,२५ ।

**ऋतिकर** त्रि० ऋतिं पीड़ां करोति कृ-अच् ६त० । पीड़ा-

**ऋतीय** नामधा० ऋतमिच्छति ऋतीयति आर्त्तीयत् । ऋतीयाम् बभूव आम चकार । वेदे तु "न छन्दसि" पा० न ईत्वम् । ऋतयति इत्येव "अकृत्सार्वधातुकयोः" पा० क्वचिदात्त्वं ऋतायति । ऋतायन् । "देवा ऋतायते दमे" ऋ० ४,८,२ । "ऋतायते यज्ञमिच्छते" भा० । "अग्निमृतयन्नषादि" ऋ० ५,४२,७ । "ऋतयन् यज्ञमिच्छन्" भा० । "अवर्त्तो ऋतायन्" ऋ० ७,८७,१ "ऋतायन् गोष्ठगमनमिच्छन्" भा० । तत उ प्र० । ऋतयु यज्ञकामे "त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि" ऋ० ८,७०,१० । दीर्घे ऋतायु तत्रार्थे "न वा एतस्य ब्राह्मणा ऋतायवः" तै० स० २,२,५,५, भावे अ । ऋतया ऋताया वा "धियं वने ऋतया सपन्ता" ऋ० २,११,१२ । "ऋतया ऋतं कर्मफलं तत्कामनया" भा० । वेदे सुपांसुलुगित्यादिना तृतीयास्थाने या० ।

**ऋतीया** स्त्री ऋत-ईयङ् भावे अ । जुगुप्सायाम् अमरः ।

**ऋतीषह्** त्रि० ऋतिं पीड़ां शत्रुं वा सहते क्विप् दीर्घः । "सहेः पृतनर्त्ताभ्याञ्च" पा० यात् ऋतिशब्दादपि षत्वम् । १पीड़ासहे २शत्रुसहने च "अग्निरक्षामृतीषहम्" ऋ० ६,१४,४ "ऋतीषहम् अरातीनां सोढारम्" भा० ।

**ऋतु** पु० ऋ-तु किच्च । शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः । माघादिमासद्वन्द्वैस्तु ऋतवः षट् क्रमादिमे इत्युक्ते १कालभेदे । "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः" इति मनूक्ते स्त्रीणां २शोणितदर्शनयोग्ये गर्भधारणसमर्थे च काले "ऋतौ भार्य्यामुपेयात्" श्रुतिः "ऋतुस्नाताहतौ, ऋतुकालाभिगामी स्यात्" मनुः । ऋतोरस्य प्राप्तः अण् । आर्त्तव स्त्रीरजसि न० आर्त्तवशब्दे ८०८ पृष्ठे विवृतिः । ३दीप्तौ ४मासे च । मासद्वयात्मकऋतुश्च सौरश्चान्द्रश्च यथा काल० मा० "ऋतुशब्दस्य गतार्थत्वकालात्मनोर्निष्पन्नः । इयर्त्ति गच्छति अशोकपुष्पविकासान् साधारणचिह्नमिति वसन्तादिकालविशेष ऋतुः । स च षड्विधः "षड्वा ऋतव इति" श्रुतेः । यत्तु "द्वादश मासाः पञ्चर्त्तव" इति श्रुतं तत्र हेमन्तशिशिरयोरैकीकरणं विवक्षितं याजमानेषु पञ्चप्रयाजानुमन्त्रणमन्त्रेषु हेमन्तशिशिरयोरैकविध्ये नैव पदेनैकीकरणमित्युक्तं तथा हि "वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि वर्षा ऋतूनां प्रीणामि शरदमृतूनां प्रीणामीति" चतुर्णां प्रयाजानां पृथक् पृथगनुमन्त्रणमन्त्रानाम्नाय पञ्चमप्रयाजस्यानुमन्त्रणे मन्त्र एवं श्रूयते "हेमन्तशिशिरावृतूनां प्रीणामीति" एतदेवाभिप्रेत्य बह्वृचब्राह्मणे "द्वादश मासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति" यत्तु नयोर्मन्त्रब्राह्मणयोर्द्विवचनं तत्स्वरूपद्वैविध्याभिप्रायेण शिशिरस्य षष्ठस्यान्तिमत्वात्तेनानुमन्त्रणीयस्य षष्ठप्रयाजस्याभावाच्च तस्यैव पञ्चमे हेमन्तेऽन्तर्भावोन्याय्यः । अतएव प्रयाजब्राह्मणे "वसन्तमेवर्तूनामवरुन्धे" इत्यादिना चतुरः प्रयाजान् प्रशस्य पञ्चमे प्रयाजे केवलेन हेमन्तेन प्रशंसा "स्वाहाकारं यजति हेमन्तमेवावरुन्धे" इति । अस्तु नाम यथा तथा पञ्चसंख्या तथापि स्वरूपेण षोढा भिद्यते द्वादशमासात्मके संवत्सरे एकैकस्य ऋतोर्मासद्वयात्मकत्वे सत्येव द्वादशमासयोर्वर्ज्जयितुमशक्यत्वात् ऋतौ पृथगनुष्ठानविधानाच्च तच्चोपरिष्टादुदाहरिष्यामः । मासद्वयात्मकत्वं चाग्निचयने ऋतव्येष्टकोपधानब्राह्मणे श्रूयते । "द्वन्द्वमुपदधाति तस्मात् द्वन्द्वमृतव" इति । एकस्मिन् ऋतौ मासयोर्द्वन्द्वं पठ्यतामिति चेत् वसन्ताद्यृतुक्रमेण चैत्रमासादि द्वन्द्वमिति ब्रूमः । तच्चेष्टकोपधानमन्त्रेषु श्रूयते "मधुश्च माधवश्च वासन्तिकावृतू" "शुक्रश्च शुचिश्च ग्रैष्मावृतू" "नभश्च नभस्यश्च वार्षिकावृतू" इषश्चोर्जश्च "शारदावृतू" "सहश्च सहस्यश्च हैमन्तिकावृतू" "तपश्च तपस्यश्च

शिशिरावृतू" एषु च वाक्येषु ऋतु इति द्विवचनं मासाभिप्रायम् अन्यथा षडृतव इति श्रूयमाणा षट्संख्या बाध्येत । अवयवावयविनोर्वसन्तादेरेकात्मत्वं सौत्रामणीयहौत्रमन्त्रेषु एकवचनेन व्यवहारादवगन्तव्यं "वसन्तेन ऋतुना देवाः, ग्रीष्मेण ऋतुना देवा" इत्यादि हि तत्र पठ्यते तथैवाधानब्राह्मणे श्रूयते "वसन्तो वै ब्राह्मणस्यर्त्तुः, ग्रीष्मो वै राजन्यस्यर्त्तुः, शरद्वैश्यस्यर्त्तुरिति" यद्यप्येते षडृतवो भडीयसम्वत्सरेऽन्तर्येव प्रवर्त्तन्ते तथापि संवत्सरोपक्रमरूपत्वेन वसन्तस्य प्राथम्यं द्रष्टव्यम् एतदेवाभिप्रेत्य श्रूयते "मुखं वा एतदृतूनां वसन्त" इति पूर्वोदाहृतेषु मन्त्रब्राह्मणेषु सर्वत्र वसन्तोपक्रमणाच्च वसन्तस्य प्राथम्यं ते च वसन्ताद्यृतवो द्विविधाः चान्द्राः सौराश्च । चैत्रादयश्चान्द्राः तत्रोदाहृतं "मधुश्च माधवश्चेत्यादिना" न च तत्र चैत्रादयोऽनोक्ता इति शङ्कनीयं मध्वादिशब्दानां चैत्रादिपर्यायत्वात् । अत एवाहुः "चैत्रोमासो मधुःप्रोक्तो वैशाखो माधवो भवेत् । ज्यैष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते । नभोमासः श्रावणः स्यान्नभस्यो भाद्र उच्यते । इषश्चाश्वयुजोमासः कार्त्तिकोर्ज संज्ञकः । सहोमासो मार्गशिरः सहस्यः पुष्यनामकः । माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः" इति । एतेषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरिकल्प्यत्वाच्चान्द्रत्वम् । अतएव होतृमन्त्रेषु आम्नायते "चन्द्रमाः षड्ढोता स ऋतून् कल्पयति तथा" सूक्तविशेषे सूर्याचन्द्रमसौ प्रकृत्य आम्नायते "पूर्वापरं चरतो मायर्यैतौ शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूनन्यो विदधज्जायते पुनरिति" अत्र पुनर्जायत इति लिङ्गादृतुविधाता चन्द्र इति अवगम्यते । नन्वस्त्वेवं मध्वादीनां चान्द्रमासानां वसन्ताद्यृतुत्वं संसर्पाख्यस्य तु त्रयोदशस्य चान्द्रमासस्य कथमृतुषु निर्वाहः । तन्मासस्य सद्भावस्तु षड्ब्राह्मणे मन्त्रानुवादपुरःसरमाम्नायते "उपयामगृहीतोऽसि संसर्पोऽसि अंहस्पत्याय त्वेत्याहास्ति त्रयोदशोमास इत्याहुस्तमेव तत् प्रीणातीति" तथा शतपथब्राह्मणेऽपि "अस्ति त्रयोदशोमास इत्याहुः यत्त्रयोदशः परिधिर्भवति तेनैव त्रयोदशं मासमवरुन्धे" इति । तदुत्पत्तिप्रकारोऽस्माभिर्मलमास निर्णये वक्ष्यते । विद्यतामेवं त्रयोदशोमासस्तस्य का उपपत्तिर्वसन्तादिषु ऋतुषु इति चेत् उच्यते किमयं सप्तम ऋतुः? आहोस्विदुक्तेष्वेव षट्सु अन्तर्भावः? उतर्त्तुद्वयान्तरालवर्त्ती कश्चिदन्तुरूपः? न तावत् सप्तमः "ऋतुर्ऋतु-नानुद्यमान" इति ऋतूनां नैरन्तर्यश्रवणात् । नाप्यधिकः । "षड्वा ऋतवः" इति षट्संख्यानियमात् । वसन्तादिशब्दवाच्यमासद्वयात्मकयोर्मासान्तराश्रयणाच्च नापि मध्यमः मध्वादिषु अपाठात् । उच्यते ययोर्मासयोर्मध्ये मलमासो दृश्यते तयोरुत्तरस्मिन् तस्यान्तर्भावः। तथा चासौ षष्टिदिनात्मकोऽपि मलमासद्वयात्मक इति मध्वादिशब्दवाच्यत्वे मोऽप्यन्तर्भावाच्च काप्यनुपपत्तिः । सौरेषु ऋतुषु बौधायनेन मीनमेषयोर्मेषवृषयोर्वा वसन्त इत्यभिधानात् मीनादित्वं मेषादित्वं च वैकल्पिकं वसन्तस्याङ्गीकृतम् । तथा च तदनुसारेण उत्तरे ग्रीष्मादयोऽपि यथायथं विकल्प्यन्ते । विनियोगश्चैषां ऋतुविशेषाणां श्रुतिस्मृतिपुराणेष्ववगम्यते । तत्र श्रुतिः । "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीतेत्यादि" स्मृतिरपि "वसन्ते ब्राह्मणं उपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यमिति" विष्णुधर्मोत्तरेऽपि परामृष्टेष्वेते वसन्ताद्यृतवः पृथक्पूजा विशेषतः कथिताः। तथा तत्रैव वसन्ते स्नानानुलेपादिदानम् ग्रीष्मे मानकादिदानमुक्तं देवीपुराणे । वर्षासु तिलदानं तथा शरदन्नदानं हेमन्ते वस्त्राग्निदानं शिशिरे वस्त्रदानमित्येतानि विष्णुधर्मोत्तरपर्योक्तानि एवमन्यदप्युदाहार्य्यम्" ।

"वसन्तेन ऋतुना देवा वसवस्त्रिवृतास्तुताः" "ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः" "वर्षाभिरृतुनादित्या स्तोमे सप्तदशे स्तुताः" "शारदेन ऋतुना देवा एकविंश ऋभवस्तुताः" "हेमन्तेन ऋतुना देवास्त्रिणवे मरुतस्तुताः" "शैशिरेण ऋतुना देवास्त्रयस्त्रिंशेऽमृतास्तुताः प्राचस्थान्" यजु॰ २१,२३,२४,२५,२६,२७,२८ । सूर्य्यसिद्धान्ते तु सौरत्वमङ्गीकृतम् । यथा "द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः । मेषादयो द्वादशैते मासास्तैरेव वत्सरः" । ऋतुमध्ये च वत्सरारम्भकत्वं वसन्तस्यैव तत्र काल॰मा॰ उक्तम् अतएव गीतायाम् "ऋतूनां कुसुमाकरः" इत्यनेन वसन्तस्य ऋतुषु प्राथम्येन भगवद्विभूतित्वमुक्तम्" म॰त॰ मञ्जु॰ । "चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रन्तु तदा सूर्योदये सति । प्रवर्त्तयामास तदा कालस्य गणनामपि । ग्रहान्नागानृतून् मासान् वत्सरान् वत्सराधिपान्" । मासस्य वत्सराणां च चान्द्रत्वमुक्तम् ब्रह्मसिद्धान्तेऽपि "चैत्रसितादेरुदयाद्भानोर्दिनमासयुगकल्पाः । सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य" । चैत्रसितादेश्च शुक्लप्रतिपदमा-

इत्येवमाद्यैः दिनैर्विविच्यतिः" भ॰त॰। प्रमाद्युतवाक्ये "मुख्यं स्याद् मासि मासि अपथ्याशनं प्रति" स्मृतिः । सुश्रुते ऋतुनिरूपणं तद्गुणलिङ्गादि च दर्शितं यथा "अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः । तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति । तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः । पञ्चदशाक्षिनिमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । विंशतिकलो मुहूर्त्तः कलादशभागश्च । त्रिंशन्मुहूर्त्तमहोरात्रम् । पञ्चदशाहोरात्राणि पक्षः । स च द्विविधः शुक्लः कृष्णश्च तौ मासः । तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः । तेषां तपस्तपस्यौ शिशिरः । मधुमाधवौ वसन्तः । शुचिशुक्रौ ग्रीष्मः । नभोनभस्यौ वर्षाः । इषोर्जौ शरत् । सहःसहस्यौ हेमन्त इति । त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च । तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमभिवर्द्धते । उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमपहीयते । भवति चात्र । शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि । तावुभावपि संश्रित्य वायुः पालयति प्रजाः । अथ खल्वयने द्वे युगपत् संवत्सरो भवति । ते तु पञ्च युगमिति संज्ञां लभन्ते । स एष निमेषादि युगपर्य्यन्तः कालश्चक्रवत्परिवर्त्तमानः कालचक्रमुच्यत इत्येके । इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम् । ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः । तद्यथा भाद्रपदाश्वयुजौ वर्षाः । कार्त्तिकमार्गशीर्षौ शरत् । पौषमाघौ हेमन्तः । फाल्गुनचैत्रौ वसन्तः । वैशाखज्यैष्ठौ ग्रीष्मः । आषाढश्रावणौ प्रावृडिति । तत्र वर्षास्वोषधयस्तरुणोऽल्पवीर्य्या आपश्चाप्रशान्ताः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति । ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यश्च ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति । ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः । तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम् । तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि, स्वभावत एव, त एते सञ्चयप्रकोपोपशमा व्याख्याताः । तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम्, शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् । तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति । तेषां व्यापदोऽदृष्टकारिताः । शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति । तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापरक्षःक्रोधाधर्म्मैरुपध्वस्यन्ते जनपदाः । विषौषधिपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा । तत्र स्थानपरित्यागशान्तिकर्म्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति । ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः । वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः । नभस्तु

षारः सविता हिमानद्धा जलाशयाः । दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः । लोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये । शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः । शेषं हेमन्तवत् सर्वं विज्ञेयं लक्षणं बुधैः । दिशो वसन्ते विमलाः काननैरुपशोभिताः । किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः । कोकिलाः षट्पदगणैरुपगीता मनोहराः । दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः । ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः । भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव । भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः । ध्वस्तवीरुत्तृणलताविपर्णाङ्घ्रिपपादपाः । प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः । अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः । कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही । कदम्बनीपकुटजसर्जकेतकिभूषिता । तत्र वर्षासु नद्यम्भःपूरोद्भिन्नतटद्रुमाः । वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः । भूरव्यक्तस्थलश्वभ्रा बहुसस्योपशोभिता । नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः । बभ्रुरुच्चः शरद्यर्कः श्वेताभ्रविमलं नभः । तथा सरांस्यम्बुजवन्ति हंसांसघट्टितैः । पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः । बाणसप्ताह्वबन्धूककाशासनविराजिता । स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः । विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् । हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् । वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्” ऋतुचर्याध्यायः। भा॰ प्र॰ ऋतुचर्यादि यथा “माघादिसंख्यमासाद्यैः क्रमात् षडृतवः” स्मृताः । हेमन्ते कुपिताहारो स्वाद्वम्ललवणानुपान् । गोधूमपिष्टमांसेक्षुक्षीरोत्थविकृतिर्भजेत् । नवमन्नं रसान् तैलं शौचे तप्तोदकं नरः । गर्भार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा । उष्णस्नानैर्लघुभिः प्रावृतः शयनं भजेत् । अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः । वसन्ते कुपितः श्लेष्मा ह्यग्निमान्द्यं करोत्यतः । तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम् । व्यायामोद्वर्त्तनं धूमं शौचे तप्तोदकं भजेत् । पुराणयवगोधूमक्षौद्रजाङ्गलमांसभुक् । गुर्वम्ल स्निग्धमधुरं दिवा स्वप्नञ्च वर्जयेत् । स्वादु शीतं द्रवं स्निग्धमनुपानं सशर्करम् । घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति । मध्याह्ने शीतले हर्म्यात् निशि शातहिमार्चिते । लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् । वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः । अग्नेः संवर्द्धकं द्रव्यं जीर्णधान्यं रसान् लघु । आन्तरं पिबेत् सद्यात् दिव्यं कौपं जलं शुचि । हृद्याम्ललवणं स्नेहं संशुष्कं क्षौद्रमेव च । नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् । शरदि कुपिते पित्ते विरेकं रक्तमोक्षणम् । स्वादुतिक्तकषायैस्तु यानि तद्वत्सरोजलम् । तुषारक्षारसौहित्यदधितैलवसातपान् । अस्तीक्ष्णदिवास्वप्नप्राग्वातान् विवर्जयेत् । नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ । ऋतूनां शेषसप्ताहे सेवितव्यः परः क्रमः । तद्धि नित्यं प्रयुञ्जीत स्वास्थ्यं येन प्रवर्त्तते । अजातानां विकाराणामनुत्पत्तिकरञ्च यत् । व्यायामादपतर्पणादभिघातात् क्षयाज्जागरात् वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च । कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्पर्कतिलातसीदधिसुराशुक्तारनालादिभिः । भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनाम् मध्याह्ने च तथार्द्धरात्रसमये पित्तप्रकोपं व्रजेत् । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः संप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते” । ५ कालमात्रे ऋतुधामशब्दे दृश्य॰। ६ तदभिमानिदेवे पु॰। ऋतव्यशब्दे दृश्य॰। ७ विष्णौ पु॰। “ऋतुः सुदर्शनः कालः” विष्णु स॰। “कालात्मना ऋतुशब्देन लक्ष्यते इति ऋतुः” भा॰। “प्रधानपुरुषक्षोभकं यत्कालाख्यं रूपं तदृतुशब्देन लक्ष्यते” आनन्दगि॰। ऋतस्य प्राप्तः अण्। आर्त्तव प्राप्तर्त्तौ त्रि॰ स्त्रियां ङीप्। छन्दसि घस् भत्वाच्च गुणः। ऋत्विय तदर्थे त्रि॰। ऋतुर्देवतास्य यत्। ऋतव्य ऋतुदेवताके इष्टकादौ।

**ऋतुकाल** पु॰ वसन्तसमयवत् कर्म॰ राजदन्तादित्वात् ६त॰ वा। स्त्रीणां पुष्पदर्शनयोग्ये षोडशरात्रात्मके काले। “ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः” मनुः। “ऋतुकालाभिगामी स्यात्” मनुः। पर्व्वादिवर्ज्जं तत्काले च स्त्रीगमनं नियम्यते। तत्र नियमस्वरूपनिर्वाहकारणादिप्रदर्शनेन ऋत्वभिगमस्य यथानियमविधित्वं तथा भा॰ त॰ व्याख्यातेनोक्तम् यथा “स्वरुच्या क्रियमाणे तु यत्रावश्यं क्रिया क्वचित्। नोद्यते नियमस्तत्र ऋतावभिगमो यथा” मीमांसकवाक्यम्। ऋत्वभिगमनस्य परिसंख्यापरत्वनिराकरणेन नियमपरत्वं समर्थितं मिता॰ यथा।

"तस्मिन् युग्मासु संविशेदिति"। "किमयं विधिर्नियमः परिसंख्या वा। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते"। इति। उच्यते। न तावद्विधिः, प्राप्तार्थत्वात्। नापि परिसंख्या, दोषत्रयप्रसक्तेः। अतो नियमत्वमूचिरे न्यायविदः। कः पुनरेषां भेदः। उच्यते। अत्यन्ताप्राप्तप्रापणं विधिः। यथा अग्निहोत्रं जुहुयात्" "अष्टकाः कर्त्तव्याः" इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। यथा "समे यजेतेति" "दर्शपूर्णमासाभ्यां यजेतेति" यागः कर्त्तव्यतया विहितः स च देशमन्तरेण कर्त्तुमशक्य इत्यर्थात् देशः प्राप्तः। स च समो विषमश्चेति द्विविधः। यदा यजमानः समे यियक्षते तदा "समे यजेतेति" वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात्। यदा तु विषमे देशे यियक्षते तदा समे यजेतेति स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी नोदितदेशेनैव यागनिष्पत्तेः। अनोदितदेशोपादानेन यथाशास्त्रं यागोऽननुष्ठितः स्यादिति। तथा "प्राङ्मुखोऽन्नानि भुञ्जीतेति"। इदमपि स्यात्तदाहरणं पूर्वेण व्याख्यातम्। एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा। "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः। पुनरश्वाभिधानीमादत्ते इति वचनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या विनिवर्त्तते। तथा "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तम्। पुनः शशादिषु न्यायमार्थं श्वादिभ्यो निवर्त्तत इति। किं पुनरत्र युक्तं परिसंख्येत्याह। तथाहि कृतदारसंग्रहस्य स्वेच्छयैव ऋतौ गमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य, स्मृत्यन्तरविरोधात्। एवं हि स्मरन्ति स्मृतिकाराः "दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति"। तत्र द्वादशरात्रात् संवत्सराद् वा पूर्वमेवर्त्तुसम्भवे ऋतौ गच्छेदेवेति नियमात् ब्रह्मचर्य्यचरणं बाध्येत। अपि च प्राप्ते भार्यार्थे वचनं विशेषणपरं युक्तम्। प्राप्तकर्त्तॄ भार्य्यागमनमिच्छवैरातौ यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता। किन्तु नैयमिकात् पुत्रोत्पत्तिविधेरेवर्त्तौ नित्यं गमनं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। किन्तु ऋतौ गन्तव्यमेवेति नियमेऽविहितस्य व्याध्यादिनाऽसमर्थस्यानिष्टोत्पादकयोऽर्थ उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथा हि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति। तस्मादृतावेव गच्छेदन्यत्र इति परिसंख्यैव युक्ता। तदिदमप्यविरुद्धपादयोनानुसन्धत्ते। यतो नियम एव युक्तः पक्षे स्वार्थविधिसम्भवात्। अगमने दोषश्रवणाच्च यथाह पराशरः "ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति" न च विध्यनुवादविरोधोऽनुवादाभावात् विध्यर्थत्वाद्वचनस्य। तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तद्देशानुवाद्यत्वमप्राप्ततयान्योद्देशेन विधातव्यश्चेति। यथा वाजपेयाधिकरणे पूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेतेति" वाजपेयलक्षणगुणविधानायविहितेन यागोऽनुवदितव्यः स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति। न चानुवादेनेह कृत्यमस्ति। यत्तु नियमेऽदृष्टं कल्पनीयमित्युक्तं तत्परिसंख्यायामपि समानम्। अन्यतो गच्छतो दोषकल्पनात्। यत्तु नैयमिकपुत्रोत्पादनविध्यापेक्षयैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति। तदसत् स ह्ययं नैयमिकः पुत्रोत्पादनविधिः। छान्दसम् "एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेदिति" स्त्र्यभिगमनादिकः पुत्रोत्पादनविधिरिति। तत्र गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता गम्यते। "एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन" यथाग्निहोत्रं जुहुयात् स्वर्गं भावयेदिति। न चासन्निहितादेरयक्यार्थे विधिप्रसङ्गः सन्निहितयोरेवोपदेशात् "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति" "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छतीति" विशेषोपादानात्। स्वविशेषणानिवृत्तिस्तु नियमविधानादेव। न च विशेषणपरता पक्षे भार्यार्थविधिसम्भवात्। नापि स्मृत्यन्तरविरोधः संवत्सरात् पूर्वमेवर्त्तुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः। यथा श्राद्धादिषु, तस्मात् स्वार्थहानिपरार्थकल्पनप्राप्तबाधरूपदोषत्रयवती परिसंख्या न युक्ता। "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यद्यपि शशादिभक्षणस्य पक्षे प्राप्ते नियमः, शशादिषु श्वादिषु च प्राप्ते परिसंख्येति उभयसम्भवस्तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः। श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाश्रिता। एतेन "श्राद्ध"

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात्" १६सू० । "द्वादशे ऋतुग्रहे स्तुपते ! यजेत्येवं प्रयाक्या प्रेषितो यजमानः होतरेतद्यजेति एवं ब्रूयात् तदन्तां यजमानयाज्यां होता ब्रूयात्" कर्कः । "अध्वर्यू च" १७सू० "एकादशे ऋतुग्रहे प्रयाक्या अध्वर्यू यजतमित्येवं प्रेषिताध्वर्यू होतरेतद्यजेति एवं ब्रूयाताम् तत्र तद्याज्यामपि होतैव ब्रूयात् । शाखान्तरे तु विकल्पेन होतुः प्रैषं स्वयं वा याज्यापठनमित्येवक्रमस्ति । मानवे "एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चादुपविश्य ये यजामहेऽश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतां वौषडिति प्रैषेण यजेदग्ने चेद्वा । ये यजामहेऽश्विना पिबतं मधु दीद्यग्नी शुचिव्रत ऋतुना यज्ञवाहसा वौषडित्यनवानं यजेति होतरेतद्यजेति वा न प्रेष्यन्नुत्तमे प्रैषे यजमानस्य याज्यानि प्रैषो वेति" काठके विशेषः "द्वारे हविर्धानस्योपविश्याध्वर्यू यजतमित्युक्तेऽश्विनाध्वर्यू यजतम् आध्वर्यवादृतुना सोमं पिबतमिति होतारं वा प्रेष्ये होतरेतद्यजेति यद्याध्वर्यू यजेतां होता यदेव चरेदिति" कर्कः । "त्रयोदशं गृह्णीयादित्युपयामगृहीतोऽस्यंहस्पतये त्वेति" १८सू० । शत० ब्रा० ४,३,१,२, द्वादशादिग्रहपक्षे चैतद्दर्शितो यथा "सर्वेऽच्छावाके । ऋतुग्रहैश्चरन्ति तद्यत् सर्वेऽच्छावाके ऋतुग्रहैश्चरन्ति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वं हि मिथुनं प्रजननं स एतस्मान्मिथुनात् प्रजननादृतून् संवत्सरं प्रजनयति यद्वेव सर्वेऽच्छावाके ऋतुग्रहैश्चरन्ति सर्वं वा ऋतवः संवत्सरः सर्वमेवैतत् प्रजनयति तस्मात् सर्वेऽच्छावाके ऋतुग्रहैश्चरन्ति तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश मासा इति द्वादश त्वेव गृह्णीया देवैव सस्मृत् । त्रयोदशमाहुः गृह्णीयात् प्रजापतिर्वै त्रयोदशकश्चः स एतस्मात् प्रजापतेरृतून् संवत्सरं प्रजनयति उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तौ ऐ उभयतोमुखौ तस्मादयमनन्तः संवत्सरः परिप्लवते नं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः नानुवाक्यमन्वाह । भवति वाऽऋतुरनुवाक्यवान्नौदेवावयङ्गतुर्यदि दिशा यदि नक्तं नानुवषट्करोति नेदृतून् प्रवृञ्जा इति यदेव प्रथमौ ग्रहौ गृह्णीत यदेतस्मादिदमेवैतत् सर्वं संवत्सरेण परिगृह्णीतस्मादिदं सर्वं संवत्सरेण परिगृहीतम् । निरेवान्यतरः क्रामति प्रान्यतरः पद्यते तस्मादिमेऽन्यस्त्रोमासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथगुहैवेमे मासा ईयुस्तस्मादितरेतान्यतरः क्रामति प्रान्यतरः पद्यते । तौ वा ऋतुनेति षट् प्रचरतः । तद्देवा ऋतूनसृजन्तर्तुभिरिति चतुस्तद्वाभिमनुजन्त स यद्वैतावदेवाभविष्यद्यावदेवाभविष्य अथयत्खलु तौ वा ऋतुनेत्युपरिष्टादुद्विचरतः । तद्देवाः परस्तादर्वाद्दुस्तस्मादिदमर्वाग्वृतम् ओऽवभ्विता । ऋतुनेति वै देवाः मनुष्यानसृजन्तर्तुभिरिति पशूंस्तद्यत् तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशव उभयतः परिगृहीता वशमुपेता मनुष्याणाम् । तौ वा ऋतुनेति षट् प्रचर्य इतरथा पात्रे विपर्यस्येते ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते अन्यतरत एव तद्देवा अङ्गरसृजन्तान्यतरतोऽस्मिमन्यतरतएव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून् । अथातो गृह्णात्येव उपयामगृहीतोऽसि मधवे त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च । उपयामगृहीतोऽसि शुक्राय त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेन हैतौ शुक्रश्च शुचिश्च । उपयामगृहीतोऽसि नभसे त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च । उपयामगृहीतोऽसि इषे त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्गेव ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च । उपयामगृहीतोऽसि सहसे त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च । उपयामगृहीतोऽसि तपसे त्वेत्याध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च । उपयामगृहीतोऽस्यंहस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादथ प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयत्याहरति भक्षम् । अथ प्रतिप्रस्थाता सञ्चितेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदसञ्चितेन पात्रे-

ऐन्द्राग्नं ग्रहं गृह्णाति न वा ऋतुग्रहाणामनु वषट्कुर्वन्त्येतेभ्यो वा ऐन्द्राग्नं ग्रहं गृहीष्यन् भवति तदासैन्द्राग्ने नैवानुवषट्कृता भवन्ति यद्वैन्द्राग्नं ग्रहं गृह्णाति सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत् इदं सर्वं प्रजनय्येदमेवैतत् सर्वं प्राणोदानयोः प्रतिष्ठापयति तदिदं सर्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथिवी प्राणोदानावनयोर्हीदं सर्वं प्रतिष्ठितम्। यद्वैन्द्राग्नं ग्रहं गृह्णाति। सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत् इदं सर्वं प्रजनय्यास्मिन्नेवैतत् सर्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन् सर्वस्मिन् प्राणोदानौ हितौ। अथातो गृह्णात्येव। इन्द्राग्नी आगतं सुतं गीर्भिर्नभोवरेण्यम्। अस्य पातं धियेषिता। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति सादयतीन्द्राग्निभ्यां ह्येनं गृह्णाति। अथ वैश्वदेवग्रहं गृह्णाति। सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत् यद्वैतावदेवाभविष्यन्न प्राजनिष्यन्त। अथ यद्वैश्वदेवं ग्रहं गृह्णाति। इदमेवैतत् सर्वमिमाः प्रजा यथायथं व्यवसृजति तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो य एष तपति तस्य वै रश्मयो विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति। अथातो गृह्णात्येवो मासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वांसो दाशुषः सुतम् उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति"।

**ऋतुथा** अव्य० थोभार्थे था० थाल्। काले काले इत्यर्थे "अतस्त ऋतुथा पर्वं शमितारो विशासत" यजु० २१,४०, "ऋतुथा ऋतौ ऋतौ काले काले" वेददी०। "या ते गात्राणामृतुथा कृणोमि" ऋ० १,१६२,१८।

**ऋतुपति** पु० ६त०। वसन्तकाले तस्य सर्वर्त्तुषु प्रथमत्वात् "ऋतूनां कुसुमाकरः" गीतायां भगवद्विभूतित्वोक्तेश्च तथात्वम्। ऋतुनाथादयोऽप्यत्र। [मेवर्त्तुपर्य्यये" मनुः।

**ऋतुपर्य्यय** पु० ६त०। ऋतूनां परिपाट्या गमने। "स्वय-

**ऋतुपा** पु० ऋतून् पाति निर्वाहकतया, ऋतुषु सोमं पिबति ऋतुभिर्देवैः सह सोमं पिबतीति वा पा-पालने पा-पाने वा क्विप्। यज्ञपालके तथाभूतसोमपातरि च। १इन्द्रे "उत ऋतुभिर्ऋतुपाः पाहि सोममिन्द्र!" ऋ० २,४०,२ २ऋतुयाजदेवे च। "सजोषा इन्द्र! वरुणेन सोमम् सजोषाः पाहि गिर्वणो मरुद्भिः। अग्रेपाभिर्ऋतुपाभिः सजोषाः" ऋ० ४,३४,७। "ऋतुपाभिः ऋतुयाजदेवैः" भा०

**ऋतुपात्र** न० ऋतूनुद्दिश्य पात्रम्। आश्वत्थे श्रीपर्णोद्भवे वा यज्ञिये यज्ञरूपे पात्रभेदे तदाकारश्च "ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृती उभयतोमुखे काश्मर्य्यमये आश्वत्थे वा" कात्या० ९,२,१२ उक्तः। "पूर्वे आग्रयणस्थाल्याः पूर्वे द्वे ऋतुग्रहपात्रे योजनीये स्रुक्पुष्करस्येवाकारोऽनयोस्ते अग्रे मूले च मुखं ययोस्ते द्विमुखे इत्यर्थः। काश्मर्य्यमये श्रीपर्णीवृक्षविकारे आश्वत्थे वा पिप्पलवृक्षकाष्ठनिर्म्मिते वा" कर्कः। "तद्यत्रैतत्तृतीयात् गृह्णातीत्युपक्रम्य। "तस्मादाश्वत्थे ऋतुपात्रे स्यातां काश्मर्य्यमये त्वेव भवतः" शत० ४,३,१,४।

**ऋतुप्राप्त** त्रि० ऋतुलभ्योऽस्य पुष्पादिः प्राप्तोऽनेन निष्ठान्तस्य परनि०। फलेग्रहौ अवन्ध्यवृक्षे।

**ऋतुबल** पु० ऋतौ ऋतुभेदे बलं यस्य। शिशिरादिषु बलयुक्तरव्यादिग्रहेषु ते च यथा। "शशिशुक्रकुजेन्दुगुरवः शिशिरादिषु। भवन्ति कालबलिनो सौम्ये स्वर्त्तौ तथैव च" ज्यो०।

**ऋतुमत्** त्रि० ऋतुतत्कालयोग्यप्रशस्तपुष्पफलादिभोग्यतयाऽस्त्यस्य ऋतु+प्राशस्त्ये मतुप्। १प्रशस्तर्त्तुफलपुष्पभोक्तरि। "कल्पन्ते ह्यस्मा ऋतव ऋतुमान् भवति य एवं विद्वानृतुषु पञ्चविधं सामोपास्ते" छा० उ०। "आर्त्तवै भोगैश्च सम्पन्नो भवति" भा०। ऋतुकाले २यजनीयपितृभेदे पु०। "अग्निष्वात्तानृतुमतो हवामहे" यजु० १९,६१। ऋतुः स्त्रीरजःकालः प्राप्तत्वेनास्त्यस्याः मतुप् स्त्रियां ङीप्। ३आर्त्तववत्यां स्त्रीधर्म्मिण्यां स्त्रियाम् "काममामरणात् तिष्ठेत् गृहे कन्यर्त्तुमत्यपि" मनुः। "तत्र प्रथमदिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति" सुश्रु०। "उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम्" भा० आ० ३अ०। ऋतुमत्या धर्म्मश्च आर्त्तवशब्दे उक्तः। विशेषस्त्वयम् "स्त्रीधर्म्मिणी त्रिरात्रन्तु स्वं मुखं नैव दर्शयेत्। स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुद्धितः। सुस्नाता भर्त्तृवदनमीक्षतेऽन्यस्य न क्वचित्। अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत्" काशीख०।

**ऋतुमयी** स्त्री० ऋतुप्रचुरा चितिः ऋतु+प्राचुर्य्ये मयट् ङीप्। ऋतुप्रधाने चितिभेदे तदुपधानप्रकारः शत० ब्रा० ८,१,२,१० उक्तः यथा "अथ उत्तरतः पीयूषाणां प्रथमा, वर्षा द्वितीया, हेमन्तस्तृतीया, हेमन्तश्चतुर्थी, वर्षाः पञ्चमी

ग्रीष्मः षष्ठी, ग्रीष्मः सप्तमी, वर्षा अष्टमी, हेमन्तो नवमी, यजमान एवास्य दशमी सएष यजमान एतस्यां विराज्यधिरूढः प्रतिष्ठितः ऋतुमय्यामर्व्वाचीश्च पराचीश्चोपदधाति"

ऋतुमुख न० ६त०। गौणचान्द्रमासप्रथमदिने प्रतिपद्रूपे तिथिभेदे। "चातुर्मास्येषु चर्त्तुमुखश्रुतेः" कात्या० १,२,१२। "चातुर्मास्येषु च न यथाकाम्यम् कुतः ऋतुमुखश्रुतेः 'ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेतेति' श्रोत्राश्रवणात् ऋतोर्मुखं प्रथमदिनं प्रतिपत् तत्रेत्यर्थः। अत एव वैश्वदेववरुणप्रघासादीनि चातुर्मास्यपर्व्वाणि प्रतिपद्येव क्रियन्ते न पौर्णमास्यामित्यवसीयते यतः प्रतिपदेव चर्त्तुमुखं न पौर्णमासीति तथा च श्रूयते" "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्व्वा मुखतएव तत् संवत्सरमारभते" शत०ब्रा०६,२,१,१७, कर्कः। "द्वे ह वै पौर्णमास्यौ द्वे अमावस्ये" इति श्रुतेः योत्तरा पौर्णमासी कृष्णप्रतिपदित्यर्थः। तथा च पौर्णमास्यां दीक्षा प्रतिपदि पौर्णमास्येष्टिसमापनम् ऋतुसन्धिशब्दे विवृतिः। एतच्च पौर्णमासेष्टिविषयम् अमावास्येष्टौ दर्शएव दीक्षा शत० ब्रा० ६,२,२,२०,२६. "अमावास्यायां दीक्षते" इत्युपक्रम्य "या प्रथमामावास्या तस्यां दीक्षित एतद्वै संवत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते" २०इत्युक्तेः।

ऋतुराज पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ

ऋतुलिङ्ग न० ६त०। वसन्तादिषु जायमाने चूतमञ्जर्य्यादिरूपे तच्चिह्ने "यथर्त्तुलिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये" मनुः। तच्चिह्नानि च ऋतुशब्दे दर्शितसुश्रुतवाक्यादवगम्यानि।

ऋतुवृत्ति पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तना यत्र। वत्सरे त्रिका०। ६त०। २ऋतुधर्म्मे स्त्री।

ऋतुशस् अव्य० कारकार्थे ऋतु+शस्। ऋतौ ऋतौ इत्याद्यर्थे "यद्विप्रस्य ऋतुशोदेवयानम्" ऋ० १,१६२,४। "ऋतुशः ऋतावृतौ काले काले" भा० "ऋतिं होतार ऋतुशो यजन्ति" यजु० २१,५७। ऋतुशः काले काले" वेददी०।

ऋतुष्ठा(स्था) त्रि० ऋतौ तिष्ठति स्था–क्विप् वेदे षत्वं लोके तु न। वसन्तादिषु स्थायिनि। "ऋतवः स्थ ऋतावृधः ऋतुष्ठाः स्थ ऋतावृधः" यजु० १७,२,।

ऋतुसंहार पु० ऋतूनां संहारः समूहोवर्ण्यत्वेन यत्र। कालिदासप्रणीते काव्यभेदे।

ऋतुसन्धि पु० ऋत्वोः सन्धिः। दर्शान्तमुख्यचान्द्रमासपक्षे १दर्शे, पौर्णमास्यान्तगौणचान्द्रमासपक्षे २पौर्णमास्याम्। ऋतोर्मासद्वयघटितत्वात् मासस्य च पर्व्वसन्धियुक्तत्वेन पर्व्वसन्धिरेव ऋतुसन्धिः अतः प्रसङ्गात् पर्व्वसन्धिर्निरूप्यते स च कालमा० उक्तः यथा "कुहूप्रतिपत्क्षामां अक्षरोच्चारणपरिमितः कालः सन्धिरित्युच्यते कुहूलवद्वयपरिमितः कालः तदेतदुक्तं भगवतीपुराणे "अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना। एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृतेति" तत्र लवस्वरूपं ग्रन्थान्तरे दर्शितम् "अक्षरार्द्धचतुर्भागस्त्रुटिरित्यभिधीयते। त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयमिति" एवं च सति त्रुटिशब्दाभिधेयानां भागानां चतुष्टयं लवद्वयरूपं अक्षरार्द्धसमं भवति तस्मिन् अक्षरार्द्धपरिमिते काले एकः पर्व्वणोभागः, द्वितीयः प्रतिपदः, तदुभयं मिलित्वा सन्धिर्भवति कुहूप्रतिपदोः सन्धिस्तु पूर्व्वस्मात् द्विगुणः अक्षरद्वयपरिमितत्वात् मत्स्यब्रह्माण्डपुराणयोः "राका चानुमतिश्चैव सिनीवाली कुहूस्तथा। एतासां द्विलवः कालः कुहूमात्रा कुहूस्तथा। कुह्विति कोकिलेनोक्ते यावान् कालः समाप्यते। तत्कालसंमिता चैषा अमावस्या कुहूः स्मृता। इत्येव पर्व्वसन्धीनां कालोयोद्विविधः स्मृत" इति।

एवं सन्धौ निरूपिते सति योऽयं प्रक्रान्तोविचारस्तत्र सन्धिरेवेष्टिकाल इति तावत् प्राप्तम् "सन्धौ यजेतेति" श्रुतेः नैवं सूक्ष्मत्वात्तत्र यागानुष्ठानानुपपत्तेः का तर्हि श्रुतेर्गतिः पार्श्वद्वयलक्षणेति ब्रूमः यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दः प्रवाहेऽनुपपन्नस्तत्समीपं तीरं लक्षयति तथा सन्धिशब्दोऽपि पार्श्वद्वयं लक्षयतु। अतएव श्रुत्यन्तरं "सन्धिमभितो यजेतेति" बौधायनोऽपि "सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते। सामीप्यं विषयं प्राहुः पूर्व्वेणापरेण चेति" अत्र पूर्व्वापरशब्दाभ्यां सन्धेः प्राचीनं प्रतिपद्दिनं चाभिधीयते। तत्र पूर्व्वस्मिन् पर्व्वदिने प्रयोगप्रारम्भः नोत्तरस्मिन्, प्रतिपद्दिने यागसमाप्तिः अन्वाधानमिध्माबर्हिःसम्पादनमग्निपरिग्रहणमुपवसथं चेत्येवमादि प्रयोगप्रारम्भः स पूर्व्वेद्युरनुष्ठेयः तथा च तैत्तिरीयब्राह्मणे श्रूयते "पूर्व्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसतीति" शतपथब्राह्मणेऽपि "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति" तत्र पञ्चदं नामाध्वर्युणा आहवनीयगार्हपत्यदक्षिणाग्निषु "ममाग्ने वर्च्च" इत्यादिभिर्मन्त्रैः समिदाधानलक्षणे अन्वाधाने क्रियमाणे पार्श्ववर्त्तिना यजमानेनापि ममाग्नीत्यादीनां मन्त्राणां पठनं तदिदं पर्व्वदिने क्रियते। प्रतिपद्दिने तु "बर्हिषे त्वा देवेभ्य" इ-

स्तादिभिरध्वर्य्युर्हस्तप्रक्षालनतण्डुलनिर्वापपुरोडाशप्रदानादि कञ्चप्रधानं करोति तदिदं यजनम् । एतदेवाभिप्रेत्य गोभिल आह "पञ्चान्ता उपवस्तव्याः पञ्चादयोऽपि यष्टव्याः" इति अत्रोपवासशब्देन न्युपस्तरणादिर्विवक्षितः तस्मिन् क्रियमाणे यजमानसमीपे देवतानां निवासात् तदेतत्तैत्तिरीयब्राह्मणे दर्शितम् "उपास्मिन् श्वो यक्ष्यमाणे देवताः वसन्ति य एवं विद्वानग्निमुपस्तृणातीति" उपवासशब्दाभिधेयस्य पर्व्वदिने कर्त्तव्यस्यान्वाधानादेः पर्व्वणि चतुर्थ यदिति आद्यास्त्रयोऽंशा विहितः कालः न तु चतुर्थोऽंशः यागशब्दाभिधेयस्य पुरोडाशप्रदानादेः पूर्व्वोक्तः पर्व्वचतुर्थोऽंशः प्रतिपदंशास्त्रयश्च विहितः कालः न तु प्रतिपदश्चतुर्थोऽंशः । तदेतदाह लौगाक्षिः "त्रीनंशानौपवस्थ्यस्य यागस्य चतुरो विदुः । द्व्यंशावुत्सृजेदन्त्यौ यागे च व्रतकर्म्मणोरिति" तमेतं यज्ञकालं वत्सपाद्योऽप्याह "पञ्चदश्याः परः पादः पञ्चाद्रेः प्रथमास्त्रयः । कालः पार्व्वणयागे स्यादन्त्ये तु न विद्यत इति" वृद्धशातातपोऽपि "पर्व्वणो यश्चतुर्थोऽंश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिरिति" अत्र प्रातरिति विशेषणात् सूर्य्योदयस्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति प्रतिपदश्चतुर्थांशं निषेधति कात्यायनः "न यष्टव्यं चतुर्थेऽंशे यागैः प्रतिपदः क्वचित् । रक्षांसि तद्धि लुम्पन्ति श्रुतिरेषा सनातनीति" तदेवं पर्व्वण्यन्वाधानादिकं प्रतिपदि चेष्टिरिति सन्धिपार्श्वयोरुभयोः प्रारम्भपरिसमाप्ती व्यवस्थिते । यदा पर्व्वप्रतिपदावुदयमारभ्य सम्पूर्णतिथी भवतः तदा न सन्देहः यदा तु खण्डतिथी तदा निर्णयोऽभिधीयते तत्र गोभिलः "आवर्त्तने यदा सन्धिः पर्व्वप्रतिपदोर्भवेत् । तदहर्यागमुक्तेत परतश्चेत् परेऽहनि । पर्व्वप्रतिपदोः सन्धिरर्वागावर्त्तनाद्यदि । तस्मिन्नहनि यष्टव्यं पूर्व्वेद्युरुपक्रमः । आवर्त्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः । परेद्युरिष्टिरित्येष पर्व्वद्वयविनिश्चयः" इति आवर्त्तनमह्नो मध्यभागः । लौगाक्षिरपि "पूर्व्वाह्णे वाऽथ मध्याह्ने यदि पर्व्व समाप्यते । उपोष्य तत्र पूर्व्वेद्युस्तदहर्याग इष्यते ॥ अपराह्णेऽथवा रात्रौ यदि पर्व्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते" इति एषु वचनेषु मध्याह्नादिशब्दा यौगिकाः न तु पञ्चधा विभागमाश्रित्य प्रवृत्ताः यथा सप्तह्नो मध्यो मध्याह्न इति व्युत्पत्तेरावर्त्तनं मध्याह्नशब्देनाभिधीयते अतएव गोभिलेनावर्त्तनशब्दः प्रयुक्तः शातातपेनापि मध्यमशब्दः प्रयुक्तः "पूर्व्वाह्णे मध्यमे वापि यदि पर्व्व समाप्यते । तदोपवासः पूर्व्वेद्युस्तदहर्याग इष्यते" इति अह्नोऽपरो भागोऽपराह्णः अतस्ताभ्यां शब्दाभ्यामावर्त्तनात् पूर्व्वोत्तरभागावभिधीयेते । वाजसनेयिनान्तु विशेषमाह भाष्यार्थसंग्रहकारः "मध्यंदिनात् स्यादहनीह यस्मिन् प्राक् पर्व्वणः सन्धिरियं तृतीया । सा वर्द्धिका वाजसनेयिनस्तु तस्यामुपोष्याथ परेद्युरिष्टिरिति" आवर्त्तनादूर्द्ध्वमस्तमयादर्व्वाक् यदा सन्धिर्भवति तदाहःसन्धिमती तिथिः प्रथमा, रात्रौ सन्धिश्चेत् सा तिथिर्द्वितीया उभे अपि च पूर्व्वाह्णे सन्धिमती पर्व्वतिथिस्तृतीया भवति तस्यां तृतीयतिथौ पर्व्वकालस्याल्पत्वात् वार्द्धिकेत्युच्यते । शाखान्तराध्यायिनामीदृशे विषये पूर्व्वेद्युरन्वाधानादिकं सन्धितिथाविष्टिर्वाजसनेयिनान्तूत्तरतिथाविष्टिः एवं सति वाजसनेयिनां न क्वापि सन्धिदिनात् पूर्व्वेद्युरन्वाधानादिकमस्ति सोऽयं विशेषः आवर्त्तने ततः पुरा वा यदा सन्धिर्भवति तदा वाजसनेयिव्यतिरिक्तानां पर्व्वचतुर्थांशे इष्टिः प्राप्नोति तत्र विशेषमाह गार्ग्यः "प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कर्त्तव्या यागविच्छेदितैरिति" पर्व्वचतुर्थांशः प्रतिपदस्त्रयोऽंशाश्च यागकालत्वेन विहिताः । अत्र पर्व्वचतुर्थांशस्य विषय उदाहृतः प्रतिपदंशानां विषय उदाह्रियते । उषःकाले सन्धौ प्रतिपदः प्रथमांशो यागकालः निशीथे सन्धौ द्वितीयांशः रात्रिप्रारम्भे सन्धौ तृतीयांशः अनेनैव न्यायेनापराह्णे सन्धौ प्रतिपच्चतुर्थांशस्य यागकालत्वं प्राप्नोति तच्च प्रतिषिद्धं "न यष्टव्यं चतुर्थेऽंशे" इति स्मृतेः अतस्तादृशे विषये याग एव लुप्येतेति चेन् मैवं वृद्धशातातपेन प्रतिप्रसवाभिधानात् "सन्धिर्यद्यपराह्णे स्यात् यागं प्रातः परेऽहनि । कुर्य्यात् प्रतिपद्यागे चतुर्थेऽपि न दुष्यतीति" एवं तर्हि प्रतिषेधो निर्विषयः स्यादिति चेन्नैवं सद्यस्कालविषये चरितार्थत्वात् तं च विषयं दर्शयति कात्यायनः "सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्राक्पर्य्यावर्त्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति" भाष्यार्थसंग्रहकारोऽपि "अन्वाहितियास्तरणोपवासः पूर्व्वेद्युरेते खलु पौर्णमास्याम् । आवर्त्तनात् प्राग्यदि पर्व्वसन्धिस्तदैव यागः क्रियते समस्तः" इति । आपस्तम्बोऽपि "पौर्णमासीमन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायां सर्व्वं क्रियते" इति सङ्गवावर्त्तनयोर्मध्ये पौर्णमासीप्रतिपदोः सन्धौ सति पूर्व्वोदाहृतवचनैः सन्धिदिनात् पूर्व्वेद्युरन्वाधानादिकं प्राप्तं तच्च

पद्यस्तावगाक्य: सन्धिदिन उत्कृष्यते । सन्नीहये विषये सन्धिदिनात् परदिने याग उत्कृष्यतां तथा सत्यपराह्ला-दिसन्धिविषयान्वाधानयागयोर्दिनभेदो भविष्यति । अस्ति च दृष्टान्तः वाजसनेयिनामीदृशे विषये, अन्वाधानोत्कर्षे सति यागस्याप्युत्कृष्टत्वात् नैवम् अन्वयव्यतिरेकरूपाभ्यां विधिनिषेधाभ्यामस्य: पद्यस्यानिवारितत्वात् तत्र पद्यस्ता-वविधयोऽन्वयरूपा:, प्रतिपच्चतुर्थांशे प्रतिषेधाश्च व्यति-रेकरूपा: एवं च सति प्रतिषेधवाक्यं सावकाशं भवति । अमावास्यायां विशेषमाह बहृचाश्वलायनः "द्वितीया त्रिमुहू-र्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्न्याधानं चतुर्दश्यां परतः सोमदर्शनादिति" सोऽयं विशेषोनाश्वलायनापस्तम्बविषय: किन्तु बौधायनमतानुयायिविषय: अतएव बौधायनः "द्विती-या त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतु-र्दश्यां परतः सोमदर्शनात् । चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । क्षीभूते प्रतिपच्चे तु स्यात् पूर्वा तत्रैव कारयेत् । चतुर्दशी च संपूर्णा द्वितीया क्षयगामिनी । प्रातरिष्टिरमायां स्याद्भूते कार्यादिका क्रियेति" एतेषां वचनानामयमर्थः यत्र चतुर्दशी संपूर्णा अस्तमयादर्वागमावास्या स्वल्पा तत्र पक्षा-पराह्णव्याप्त्यभावाद्यागान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात् प्र-तिपद्युतायाममावास्यायामिष्टिः स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धान्वाधानादिकं कर्त्तव्यमिति । एतदेवाभि-प्रेत्य स्मृत्यन्तरे "आदितेऽस्तमिते चन्द्रः प्रतीच्यामुदियाद् यदा । प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदेति" ह्वयमितोऽपि "ऐन्द्रे निरुप्ते पर्वणि पुरस्तादुदिते विधौ । यद्वैगुण्यं कृतं तस्मिन् पश्चादपि हि तद्भवेदिति" अस्यायमर्थः यदा संपूर्णचतुर्दश्यामविचारेणामावास्या-बुद्धिं कृत्वा अन्वाधानादिकं कृत्वा हविर्निर्वापे कृते तस्मिन् उषःकाले पूर्वस्यां दिशि चन्द्रमा उदेति । तदा न दर्शकर्म भवितुमर्हति दर्शकालस्याप्राप्तत्वात् किन्तु का-म्यपरां निमित्तीकृत्य दर्शदेवता अपनीय दात्रादिगुण-विशिष्टाग्न्यादिदेवतान्तरायोद्दिश्य हविः प्रक्षेपो विहितः तदेतत् तैत्तिरीयब्राह्मणे श्रूयते "यस्य हविर्निरुप्तं पुर-स्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थ-विष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति" सोऽयं दृष्टान्तोक्त-विधि निरुप्ते सति तदूर्ध्वं पूर्वस्यां दिशीन्दावुदिते सति दर्शकर्मविधेयदैगुण्यमुक्तरीत्यावस्थितं तद्वैगुण्यं होम-दिने पश्चिमदिशि चन्द्रोदये भवतीति । एतदेव बौधायन-मतमुपोद्बलयति श्रुतिः "यस्मिन्नहनि पुरस्तात्पश्चात् सो-मो न दृश्यते तदहर्यजेतेति" अयमर्थः सिनीवाल्यां पुर-स्ताच्चन्द्रदर्शनं भवति द्वितीयायुक्तायां प्रतिपदि पश्चाच्चन्द्रो दृश्यते तयोरुभयोर्मध्यवर्त्तिन्यां कुह्वां द्विविधमपि चन्द्र-दर्शनं नास्ति अतस्तस्मिन् दिने यष्टव्यमिति चन्द्रद-र्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह का-त्यायनः "यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति चन्द्रदर्शन-राहित्यमेवाभिप्रेत्य बौधायनकारिकासु पठ्यते "इष्टेस्तु प्रातिपदादिनाड्यः सप्राष्ट वा यत्र भवन्ति तत् स्यात् । सो-मस्य नाडीषु दिनस्य पूर्वः कल्पोऽपरश्चात्र भवेद्द्वितीयः" इति अयमर्थः अमावास्यातिथेः सम्बन्धिनीषु नाडीषु सोमस्य सतीषु तस्मिन् दिने अस्तमयात् पूर्वं प्रतिपत्सम्ब-न्धिन्यो नाड्यः सप्राष्ट वा यदि भवन्ति तदा तद्दिनमिष्टे-रेव योग्यं सोऽयमेकः पक्षः । अमावास्याप्रतिपदौ यदा वर्द्धेते तदा द्वितीयः कल्पो भवेत् । अमावास्यामग्निमाधाय सोमदर्शनरहिते प्रतिपद्दिने यागः कर्त्तव्य इति । स्मृत्यन्त-रेऽपि "अर्वागस्तमयात् यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत कुर्वीतास्तु पराह्णका" इति बौधायनमतानुसा-रिणामन्वाधानश्राद्धमपि स्वल्पामावास्योपेतायां च-तुर्दश्यां कर्त्तव्यं तथा च बौधायनेनोक्तम् "यदा चतुर्दशी यामं तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्रा-द्धमाचरेत् । चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते । क्षीभूते प्रतिपच्चैव भूते कार्यादिका क्रियेति" चतुर्थे यामे अमावास्या सम्पूर्णा न दृश्यते किन्त्वस्माने स्वल्पा वा चेत् परदिने क्षीयते तदानीं चतुर्दश्यां श्राद्धमाचरेत् । न तु चन्द्रदर्शनोपेतायां प्रतिपदीष्टिः समाम्नाता तथा च शतपथब्राह्मणम् "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्य-जेतिमामैतां कामभ्युदेतीति" । तैत्तिरीयब्राह्मणमपि "एतां वै सुमना नामेष्टिं यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्य-स्मिन्नेवास्मै लोके समर्धुकं भवतीति" अयमर्थः सेय-मिष्टिश्चन्द्रदर्शनोपेते दिने क्रियते सेयमिष्टिः सुमनःशब्द-वाच्या तादृशीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन् दिने पश्चाच्चन्द्रमा उदेति तस्मै यजमानायास्मिन्नेव लोके समृद्धि-र्भवतीति बाढं तदेतच्छ्रुतिद्वयं बौधायनमतानुसारिव्यति-

रिक्तविषयम् एतदेवाभिप्रेत्य प्रतिपच्चतुर्थ्योर्यागः उदाहृतः। ननु बौधायनव्यतिरिक्तानामपि चन्द्रदर्शनयोग्यं द्वितीयायुतं प्रतिपद्दिनमिष्टौ निषिद्धं तथा च स्मृतिः "पर्वणोऽंशे चतुर्थे तु कार्या चेदिष्टिरुत्तमैः। द्वितीयासहितं यस्मात् पयस्याद्भवायना;" इति तदेतदावर्त्तनात्पूर्वकालयोः सन्धौ सति द्रष्टव्यं अपराह्णादिसन्धिषु चतुर्थस्यैवाप्राप्तत्वात्। तदेवं प्रकृतिरूपाया इष्टेः कालो निरूपितः विकृतेस्तु कालो निरूप्यते तत्र कात्यायनः "आवर्त्तनात् प्राग्यदि पर्वसन्धिः स्यात्तु तस्मिन् दिवसे प्रकृत्याः। तत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति" आवर्त्तने ततः पुरा वा पर्वसन्धौ तस्मिन् सन्धिदिने प्रकृतियागं कृत्वा पश्चाद्विकृतिसम्बन्धी यागः कर्त्तव्यः। यद्यावर्त्तनात्परतः सन्धिस्तदा केवलं विकृतियागः सन्धिदिने कर्त्तव्यः प्रकृतियागस्तु सन्धिदिनात्परेद्युरनुष्ठेय इत्यर्थः। आवर्त्तनतः पूर्वकाले ततः परकाले वा सन्धिरित्येतेषु त्रिष्वपि पक्षेषु सन्धिदिन एव विकृतेरनुष्ठानं प्रकृतेस्तु पूर्वोक्तरीत्या सन्धिदिने परेद्युर्वाऽनुष्ठानं व्यवतिष्ठते

इष्टीनां सर्वासां प्रकृतिर्दर्शपूर्णमासौ "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम" इत्यादयः काण्डान्तरपठिताः काम्येष्टयो विकृतयः। तत्र "प्रकृतिवद्विकृतिः कर्त्तव्येति" न्यायेन विकृतीनामपि सन्धिदिनात् परेद्युः कदाचिदनुष्ठानं प्राप्तं तदेतदुदाहृतेन वचनेन निवार्य्यते"।

तेन सर्व्वैः स्वस्वकालत्वेन कर्म्मानर्हत्वात् संक्रान्तिवत्तदुपलक्षितदिनविशेषे तत्तत्कर्म्म कर्त्तव्यमिति फलितम्। अत एव "ऋतुसन्धिषु वाचयेत्" इतिवर्तिधर्म्मे स्मृतिः तत्र यदि दर्शान्तविवक्षा स्यात् तदा दर्शस्यैव सन्धित्वात् तत्रैव वचनं कुर्य्युः कुर्व्वन्ति तु पूर्णिमायां तस्मात् दर्शान्तपूर्णिमान्तयोः समो विकल्पः अनुष्ठाने तु तत्र वचनविशेषाच्छिष्टाचाराच्च व्यवस्था" कालत०। अयञ्च कालः श्रौतस्मार्त्तकर्म्मार्थम् वैद्यके तु कालविशेषोऽपि परिभाषितः "यथा ऋत्वोरन्त्यादि सप्ताहावृतुसन्धिरिति स्मृतः। तत्र पूर्वविधिस्त्याज्यः सेवनीयः परोविधिः" वाग्भटः। ज्योतिःशास्त्रे तु ऋत्वोः सन्धिपलक्षितस्य कालभेदस्य "रवेर्मेषादिकस्थाधिकस्य यदंशद्वन्द्वं खलु सायनस्य। तदत्र राशिद्वयभागतष्टं शेषं वसन्तादृतवो भवन्ति। तत्सन्ध्योर्गोऽङ्कदण्डोक्षमाः स्तुर्दिसंज्ञा (१२७ घटीसमाः) चैत्र विषुवायनीयाः। स सन्धिसन्धिः खलु यत्र शेषं न्यूनं भवेद्वेत्र विशेषवृत्तेः "वैराशवेच सन्धिसन्धिर्नापि परिभाषा

कृता तत्र न्यूनावशेषे स्नानदानादौ विशेषपुण्यफलम्। इतरत्र विवाहे वर्ज्जना। यथाह स एव "सन्धौ ऋत्वोः शुभमिति वन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः" इति।

**ऋतुसेव्य** त्रि० ऋतुभेदे सेव्यं वैद्यकोक्तगुणयुक्तमाहारादि। सुश्रुतोक्ते ऋतुभेदे सेवनीये पथ्यरूपे वस्तुभेदे तच्च सुश्रुते दर्शितं यथा। "यस्मिन्यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्। तेषु तेषु प्रदातव्याः रसास्ते ते विजानता।

पक्वाम्लत्वादुदीराणां वर्षासु खलु देहिनाम्। मन्दोऽग्नौ कोपमायान्ति संचयोत्कारतादयः। तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च। कषायतिक्तकटुकै रसैर्युक्तमयाच्युतम्। नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च। देयमन्नमपतये यच्चलं चोक्तमादितः। तथावरतमस्त्रोषा पिबेन्मधुसमायुतम्। अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले। तत्तथ्याहिदाहश्च गन्धस्योपचयस्तदा। अतिमांसविमित्तञ्च नैव व्यायाममाचरेत्। अलम्भ्य पानाचक्षायमाण्यधर्मातपाश्चिता। भूयाल्पपरिहारार्थं शयीत च विहायसि। शीते मासी निवाते च गुरुप्रावरणे मठे। संयावागरुधूमित्र प्रवत्तागुरुधूपितः। दिवास्वप्नमजीर्णञ्च वर्ज्जयेत्तत्र यत्नतः"। वर्षासेव्यान्युक्त्वा।

"सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः। क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः। सलिलञ्च प्रसन्नत्वात् सर्व्वमेव तदा हितम्। शरत्काम्बुदनञ्चैव कमलोत्पलशालिषु। प्रदोषे शशिनः पादाश्चन्दनञ्चानुलेपनम्। तिक्तस्य सर्पिषः पानै रक्तस्रावैश्च युक्तितः। वर्षास्पचितं पित्तं हरेच्चापि विरेचनैः। नीपैयानीतमस्नोष्णं क्षारं स्वप्नं दिवाऽऽतपम्। रात्रिजागरणञ्चैव मैथुनञ्चापि वर्जयेत्। स्वादु शीतजलं मद्यं शुचिस्फटिकनिर्मलम्। शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम्। प्रसन्नत्वाच्च सलिलं सर्व्वमेव तदा हितम्। सचन्दनं वा कर्पूरं वासयामलिनं वसु। भजेच्च शारदं माल्यं सौधैः पानञ्च युक्तितः। पित्तप्रशमनं यच्च तच्च सर्व्वं समाचरेत्"। शरदि सेव्यान्युक्त्वा।

"हेमन्तः शीतलो रूक्षो मन्दार्कोऽनिलाकुलः। ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति। कोष्ठः शीतसंस्पर्शाद्यन्तःपिण्डीकृतोऽनलः। रसहन्त्वोपचयाच्च तस्मात् स्निग्धं तदा हितम्। हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम्। सर्पिःतैलमछिममयनं हितमुच्यते। तीक्ष्णान्यपि च पानानि पिबेद्गुरुन्नूपितः। तैलाभ्यक्तः शरीरे च कारिकोष्णत्वनाद्ववेत्। साङ्गारधाने सकृति कौशेयाकारणावृते। शयीत

तद्योगे पञ्चमी द्वितीया तृतीया च भवति उक्तोदाहरणेषु पञ्चमी द्वितीयाद्युदाहृता। तृतीयाया उदाहरणं मृग्यम्।

**ऋतेकर्म्म** अव्य० वेदे बा०वर्ज्जने अव्ययी० अव्ययमा०। कर्म विनेत्यर्थे। “ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्म-मुदजायन्त देवाः” ऋ० १०,५५,६०।

**ऋतेजा** त्रि०ऋते यज्ञनिमित्तं जायते जन-विट् अलुक्-स०। यज्ञनिमित्तजाते। “अग्ने स क्षेषदृतपा ऋतेजाः” ऋ० ६,३,१। “ऋतेजा यज्ञनिमित्तं जातः” भा०।

**ऋतेयु** पु० वरुणस्य ऋत्विजि १ऋषिभेदे। “दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान्। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः। अत्रेः पुत्रश्च धर्म्मात्मा ऋषिः सारस्वतस्तथा। वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः” भा० आनु० १५० अ०। २पौरवे नृपभेदे। “पूरोर्वंशं प्रवक्ष्यामि” इत्युपक्रम्य। “संयातिस्तस्याहंयातीरौद्राश्वस्तत्सुतः स्मृतः। ऋतेयुस्तस्य कक्षेयुस्थण्डिलेयुकृतेयवः। जलेयुः सन्ततेयुश्च धर्म्मसत्यव्रतेयवः। दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः। घृताच्या इन्द्रियाणीव मुख्यस्य जगदात्मनः। ऋतेयोरन्तिनावोऽभूत्” भाग०९।२०, २।

**ऋतेरक्षस्** पु० ऋते उद्देश्यतया वर्ज्जितं रक्षो यतः। यज्ञे “ऋतेरक्षा वै यज्ञः” ऐत०ब्रा०। यज्ञस्य रक्षोभ्यो रक्षणीयत्वात् तथात्वम्।

**ऋतोद्य** न० ऋत+वद्–भावे क्यप्। सत्यकथने “ऋतं वदन्त ऋतोद्येषु” अथ० १४,१,३१।

**ऋत्विज्** पु०ऋतु+यज्–क्विन् उ०प०। १याजके, “अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते” इति मनूक्ते २ऋतुकर्त्तव्ययज्ञादिककर्मकरे। ऋत्विजश्च षोड़श तत्र मुख्याश्चत्वारः तेषां प्रत्येकं सहकारिण स्त्रय स्त्रय इति षोड़श। विवृतिरध्वर्यु-याकयशब्दे ८५९ पृ०दृश्या। “यथर्त्विजो वा काश्चिदाशिषमाशासते सा यजमानस्यैवेति श्रुतेः “ऋत्विग्वादेनियुक्तौ च यतो संपरिकीर्त्तितौ। यद्यत्स्वाम्यानुयात् पुण्यं हानिं वाऽऽदेयथा जयम्” इति बृहस्पत्युक्तेश्च ऋत्विकृतयज्ञफलं केतनदक्षिणादिना दर्शयतैव। “वृतस्यार्त्तं क्रियाहेतोर्दं वयादृत्विजः स्वयम्” या०। “तस्य सांख्यतवेन तन्वतां विभ्रतः स्वयमकुर्व्वतः क्रियाः। कर्त्तृता तदुपलब्धतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि” मा०। ऋत्विजः कर्म अञ्। आर्त्विज्य ऋत्विक्कर्मणि आर्त्विज्यशब्दे उदा० ऋत्विक्कर्मार्हेति यञ्। आर्त्विजीन ऋत्विक्कर्मार्हे “दाक्षिण्यादिष्ट आर्त्विजीनैः” भट्टिः।

**ऋत्विय** त्रि०ऋतुरस्य प्राप्तः तत्र भवं तत्रानुष्ठेयं वा वेदे घस् भित्त्वात् भत्वाभावेन न गुणः। १प्राप्तकाले२काले भवे ३ऋतुकालानुष्ठेये च “अयं वो गर्भऋत्वियः प्रत्नं सधस्थमासदत्” यजु० ११,४८। “इमे ह गर्भमृत्वियं यतोजातः प्रजापतिः” २१,६२। ऋत्वियावान् लोके तु यत्। ऋतव्य इत्येव तेष्वर्थेषु त्रि०।

**ऋत्वियावत्** त्रि०ऋत्वियमृतुकालभवं प्रजोत्पादनकर्म तत्रानुष्ठेयकर्म वाऽस्त्यस्य मतुप् मस्य वः दीर्घः। १प्रजोत्पादनकर्मयुक्ते २तत्रानुष्ठेयकर्मयुक्ते च। “ऋतं न ऋत्वियावतः” ऋ०८,८,१० स्त्रियां ङीप्। “इदं त ऋत्वियावती धीतिरेति नवीयसी” ऋ० ८,१२,१०। “ऋतौ वसन्तादिकालेऽनुष्ठेयं यज्ञकर्म ऋत्वियं तद्वती” भा०।

**ऋत्व्य** त्रि० ऋतुरस्य प्राप्तः तत्र भवं तत्रानुष्ठेयं वा कर्म यत् संज्ञापूर्वकविधेरनित्यत्वात् न गुणः अजवत्। ऋत्वियशब्दार्थे “अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्” ऋ० १०,१८३,२।

**ऋदूदर** त्रि० ऋदु उदरं यस्य वेदे पृ० अलोपः। मृदूदरे निरु०। “ऋदूदरः सुहवो मा नो अस्यै” ऋ०२,३३,५, “ऋदूदरेण सख्या सचेय” ऋ० ८,४८,१०।

**ऋदूपा** त्रि०पृषो०। १अर्द्दनपातिनि २गमनपातिनि ३दूरपातिनि निरु०। “उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा” ऋ० ८,७७,११। इमामेवर्चमधिकृत्य यास्केन तथार्थतया निर्वचनं कृतम्।

**ऋदूवृध** पु० पृषो०। १मर्मगतर्द्दनवेधिनि २गमनवेधिनि ३गन्तृवेधिनि ४दूरवेधिनि च निरु०। ऋदूपाशब्दे उदा०। तामेवर्चमधिकृत्य यास्केन तथार्थतया निरुक्तम्।

**ऋद्ध** न० ऋध–क्त। १प्रकर्मादितधान्ये २सिद्धान्ते ३वृद्धौ च। ४समृद्धे ५सम्पन्ने त्रि० “इयमृद्धधनौ हृताऽऽस्तनी” नैष०। “अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्” गीता “धर्मज्ञानवैराग्यादिभिः सम्यक् प्रपञ्चरूपेण विवर्त्तमाने च ईश्वरे पु०। “ऋद्धः स्फटाकटो मन्त्रः” विष्णु स० धर्मादिभिरुपेतत्वात् ऋद्धः” भा०। “सर्वर्द्धिर्ऋद्धो हृष्टात्मा” विष्णुस०। “प्रपञ्चरूपेण वर्द्धमान ऋद्धः” भा०।

**ऋद्धि** स्त्री ऋध–भावे क्तिन्। १वृद्धौ २सम्पत्तौ ३सिद्धौ च। “परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना” कुमा०। “ऋद्ध्या भवान् ज्योतिरिव प्रकाशते” भा० व० १११। कर्त्तरि क्तिच्। ४पार्वत्यां शब्दरत्ना०। ५कुबेरपत्न्यां

न्द्रो दिवि पर्य्यो यदभक्" ऋ०६,३०,५। "ऋधक् सा वो मरुतः" ७,६७,४। "ऋधगुद्देशा इव यजा चिकित्वः" २,२५,१। "ऋधगित्था स मर्त्यः" ऋ० ८,१०१,१। "ऋधक् सत्यम्" भा०। "ऋधग्यतो अनिमिषं रक्षमाणाः" ६,१,२। "ऋधग्यतः सत्येन गच्छतः" भा०। कर्त्तरि अजिक्। ६समृद्धे, ७उरुके च त्रि०। "ऋधगया ऋधगुताशमिष्ठाः" यजु०८,२०। "ऋधक् समृद्धयाः" "ऋधक् यज्ञं समर्द्धयन्" वेददी०। "ऋधक् सोम! स्वस्तये" ऋ०९,६४,३०। "ऋधक् साधु वन् तथा च" यास्क० "ऋधगिति पृथग्भावस्यानुप्रवचनम् भवति अथाप्यृध्नोत्यर्थे दृश्यते" भा०। "ऋधगुद्वेम कविनेषिताः" ऋ० ६, ५९,१०। "ऋधक् समृद्धं यथा तथा हुवेम" भा०।

ऋधत् त्रि० ऋध० शतृ वेदे गणव्यत्ययः। वृद्धमाने। "इव स्वाता ऋधद्वयोवीतवारास आशवः" ऋ०८,४६,२२। "ऋधद्वयोऽवृद्धवेगाः" भा०। रयशब्दो वेगवाची जसः स्थाने प्रथमा। "समाभिक्षर्धद्वारायाग्नये ददाश" ६,१,२। "ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं धनं यस्य" भा०।

ऋन्फ(म्फ) हिंसायां तुदा० मुचा० सक० पर० सेट्। ऋम्फति आर्म्फीत्—आर्फीत् ऋम्फाम् बभूव आस चकार आनर्फ

ऋफ दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायाम् अक० तुदा० पर० सेट्। ऋफति आर्फीत्। कविकल्पद्रुमे ऋफधातुस्तदर्थे पा० मते रिफधातवः पूर्वेषु ऋफधातुस्तु हिंसायामिति भेदः। आनर्फ आनृफतुः।

ऋबीस न० अप+गर्जने भाव-अच् पृ०। १पृथिव्यां निरु० तत्स्थे २अग्नौ च। "हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम्। "ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति" ऋ० १,११६,८। इमामृचमधिकृत्य यास्केन ऋबीसमपगतभासमपहृतभासं गतभासम् वा इति निरुक्तोक्तम् "योऽयं ऋबीसे पृथिव्यामग्निरन्तरोऽवधिरन्तस्ततिवस्य तस्य उन्न्यतुः" "युवमृबीसमुत तप्तमत्रये" ऋ०१०,३९,९। "तप्तमृबीसमग्निकुण्डम्" भा०। "अत्रिर्यद्वामवरोहन्नृबीसम्" ऋ० ५,७८,४। "ऋबीसं तप्ताग्निम्" भा०। "अनृतातिव्ययमोदप्लुतिदार्वाधानबीसपक्वनाम्युत्कानि वर्जयेत्" कात्या० ४,१०१,५। "ऋबीसशब्दः पृथिवीवाची "योऽयमृबीसे पृथिव्यामिति" यास्कोक्तेः ऋबीसे यत् पक्वं तिन्दुकादि" कर्कः।

ऋभु पु० ऋरि स्वर्गे अदितौ वा भवति ऋ++भू-डु। १देवे। तेन ऋभवश्च स्वर्गवासित्वं द्रष्टव्यं तत्र प्रमादात् पूर्वमनुक्तमिति तस्य च स्वर्गे पुंस्त्वम् बोध्यम्। "समीचीनास ऋभवः समस्वरन्" ऋ०८,३,७। "तं नेमिमृभवो यथा" ऋ०७५,५। २मेधाविनि निरु०। "अग्नये ब्रह्म ऋभवस्ततक्षुः" ऋ० १०,८०,७। "ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन" ऋ०९,८७,३। ३देवानामपि यष्टव्ये देवे। "ऋभवोनाम तत्रान्ये देवानामपि देवताः। तेषां लोकाः परतरे यान् यजन्तीह देवताः" भा० व०१५४५९। चाक्षुषमन्वन्तरीये ४देवगणभेदे च। "चाक्षुषस्यान्तरे तात! मनोर्देवानिमान् शृणु। आप्याः प्रभूताः ऋभवः पृथुकाश्च दिवौकसः। लेखानाम महाराज! पञ्च देवगणाः स्मृताः" हरिवं०७। ५रथकारे ६जातिभेदे "ऋभूणां त्वेति रथकृतः" कात्या० ४,९,५, "ऋभुः सौधन्वन सात्वतापरपर्यायस्त्रैवर्णिकेभ्यो हीनो नियतः कश्चिज्जातिविशेषः इति पार्थसारथिमिश्राः" कर्कः। तृतीयसवनीये सुधन्वनः पुत्ररूपे ६देवभेदे च। "इहोपयात शवसो नपातः सौधन्वना ऋभवो माप भूत" ऋ० ४,३५,१, एतत्सूक्ते च तदवैभवस्यैव गुणादिवर्णनम्। ऋ+भा-डु। ७उरुभासमाने त्रि० "ऋभुमृभुक्षणो रयिम्"। ऋ०४,३७,५, "ऋभुमुरुभासमानम्" भा०। ऋभुरस्त्यस्य देवतया मतुप्। ऋभुमत् ऋभुदेवताके त्रि०। "ऋभुमन्तं वाजवन्तं त्वा कवे"! ऋ०२,५२,६। ऋभुणा दृष्टं साम अण्। आर्भव तद्दृष्टे सामभेदे आर्भवशब्दे उदा०। क्विप्। ऋभूरपि देवे पु०।

ऋभुक्ष पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+आधारे बा० ड। १स्वर्गे २वज्रे ३इन्द्रे च रायमुकुटः। ऋभून् आक्षीयते गम्यते कर्म्मणि बा० ड। ऋभुनामके देवे "उप नो वाजा अध्वरमृभुक्षाः" ऋ०४,३७,१, "ऋभुक्षा ऋभवः" भा०।

ऋभुक्षन् पु० ऋभुनाम्ना क्षायते क्षै—क्षये धातूनामनेकार्थत्वात् ख्यातौ कर्मणि कनिन्। ऋभुनामख्याते देवभेदे "सोमो राजा ऋभुक्षणो ददे वः। "ऋभुमृभुक्षणो रयिम्" ऋ० ४,३७,२,५।

ऋभुक्षिन् पु० ऋभुक्षः वज्रं स्वर्गो वाऽस्त्यस्य इनि। इन्द्रे आदौ ऋभुक्षा ऋभुक्षाणौ पथ्यादावजादौ टिलोपः ऋभुक्ष इत्यादि "इन्द्रो विभ्वाँ ऋभुक्षा वाजो अर्य्यः" ऋ०७,३८,२, "ऋभुक्षेवाचरति ऋभुक्षिन्+आचारे क्विप् अनुनासिकदीर्घः ऋभुक्षीयति। ततः क्विप् ऋभुक्षीन् तद्दाचारान्विते त्रि०।

**ऋभ्व** त्रि० उरुभूतः पृषो०। महति उरुभूते निरु०। "स्तुष्वेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम्" ऋ०१०,१२०,६, व्याख्या च यथा यास्केन "स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामिति" क्रमेण पदानि निरुक्तानि। ऋभुः उरुभूत इवाचरति ऋभु+आचारे क्विप् ततो वा० वत्। ऋभ्वत् उरुभूते महति। "पुरुहूतो यः पुरुगूर्त्त ऋभ्वा एकः पुरुप्रशस्तः" ऋ० ६,३४,२, "ऋभ्वान् महान्" भा० छान्दसत्वान्नुम्लोपः। कनिन्। ऋभ्वन् तत्रार्थे "जुषद्धव्या मनुषस्योर्द्ध्वस्तस्थावृभ्वा यज्ञे" ऋ० १०,२०,५ भा०वसन्। ऋभ्वस अतिमहति। "सत्यशवसमृभ्वसम्" ऋ०५,५२,८, "ऋभ्वसम् अतिमहद्भमिति" भा० "इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमहृतम्" ऋ०८,७०,२,

**ऋश** हिंसायां गतौ च भ्वा०पर०सक०सेट्। अर्शति आर्शीत् आनर्श आनृशतुः अर्शः। ऋश्यः।

**ऋश्य** त्रि० ऋश-कर्मणि क्यप्। १हिंस्ये २मृगे पुंस्त्री मन्द-रत्ना०। स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। "ऋश्यो न तृष्यन्नवपानमा गहि" ऋ०८,४,१०, "ऋश्य आश्यान्मृग इव तृष्यन्" भा० "वसुभ्य ऋश्यानालभेत" यजु०२४,२७, "ऋश्यो मयूरः सुपर्णस्ते गन्धर्वाणाम्" यजु० २४, ३७, ततः चतुरर्थ्याम् ऋश्या० क। ऋश्यक तत्-सन्निकृष्टदेशादौ। भावे क्यप्। ३हिंसायां न०। ऋश्यं हिंसां पतनेन ददाति दा-क। ऋश्यद कूपे पु० "युवं वन्दनमृश्यदादुदूपथुः" ऋ०१०,३९,८। "ऋश्यदात् कूपात्" भा०।

**ऋश्यपाद्** त्रि० ऋश्यस्येव पादावस्य अन्त्यलोपः समा०। ह-स्त्यादयपादत्वके स्त्रियां ङीप् पद्भावश्च। "ऋश्यपदीं वृषदतीं गोषेधां विधमामुत" अथ० १,१८,४।

**ऋश्यादि** पु० पाणिन्युक्ते चतुरर्थ्यां कप्रत्ययनिमित्ते शब्दगणे। स च गणः। "ऋश्य, न्यग्रोध, शर, निलीन, निवास, निवात, निधान, निबन्ध, विबद्ध, परिगूढ, उपगूढ, अश्मनि, सित, मत, वेश्मन्, उत्तराश्मन्, अश्मन्, स्थूल, बाहु, खदिर, शर्करा, अनडुह्, अरडु, परिवंश, वेणु, वीरण, खण्ड, दण्ड, परिवृत्त, कर्दम, अंशु"।

**ऋष** गतौ वधे च तुदा०पर०सक०सेट्। ऋषति आर्षीत्। आनर्ष आनृषतुः अर्षिता ऋष्यात् अर्षिष्यति आर्षि-ष्यत्। अर्षितव्यः अर्षणीयः ऋष्यः। अर्षिता ईदित् ऋष्टः ऋष्टवान् ऋष्टिः। "ऋष्टाभ्यां रक्ष आवलन्तिम्" अथ०८, ४,१७। "अथ दक्षिणायुग्मसुत्तरार्षति" शत० ब्रा० ५, ४,२,८। "हृदं न हि त्वा न्यृषन्त्यूर्मयः" ऋ०१,५२,७। "यदुद्यर्थस्य मेदस परिविध्यते तद्गुदे न्यृषेत्" शत० ब्रा०२,८,४,५। "अथ पर्य्यृषति" इत्युपक्रम्य "समं भूमि पर्य्यृष्य करोति" २,६,१,१८। अस्य वेदे भ्वादित्वमपि दृश्यते। गत्यर्थत्वात् साधुः। "अर्षन्त्यापस्तथेह प्रस्नुताः" ऋ० २,२०८। "अर्षो गतौ व्यत्ययेन शप्" भा० "तस्मा आपो घृतमर्षन्ति सिन्धवः" १,१२५,५। "अश्वो न धारा-स्वश्वो अर्षति" ९,८६,४४। "एता अर्षन्त्यललाभवन्तीः" ४,५८,६। "एता अर्षन्ति हृद्यात् समुद्रात्" ४,५८,५। "गगमाक्रन्दमर्षति" यजु० २२,५५।

अभि+आभिमुख्येन गतौ "अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मा-सु" ऋ०४,५८,१०। "हसन्ति यस्यो गवे अभ्यर्षन्ति सुष्टुतिम्" ९,६२,२।

नि+परि+सम्+इत्यादौ गत्यर्थधातोरिवार्थः। "गुहाकरिन्द्रं माता वीर्येण न्यृष्टम्" ऋ०४,१८,१०। "न्यृष्टं नितरां प्राप्तम्" भा०। "अयं निधिः सरमे अद्रिबुध्नो गोभि-रश्वेभिर्वसुभिर्न्यृष्टः" १०,१०८,७।

**ऋषद्गु** पु० यदुवंश्ये राजभेदे। "यदुस्तस्मात्क्रोष्टा(?) क्रो-ष्टा तस्माद्भविष्यति" इत्युपक्रम्य "वृजिनीवतस्तु भविता ऋषद्गुरपराजितः। ऋषद्गोर्भविता पुत्रश्चित्ररथ-स्तथा" भा० अनु० १४७ अ०।

**ऋषभ** पु० ऋष-अभक्। १ओषधिभेदे, ओषधिभेदश्च द्रव्य-गणान्तर्गतः। स च सुश्रु०दर्शितः यथा "अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः। समा-सेन सप्तत्रिंशद्द्रव्यगणा भवन्ति। तद्यथा विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा वृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति"। तल्लक्षणाद्युक्तं भावप्र० "ऋषभातिविषा कृष्णा काकनासा च चामरैः। जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ। जीवकः कूर्च-काकार ऋषभो वृषशृङ्गवत्। जीवको मधुरः शृङ्गो ह्र-स्वाङ्गः कूर्चशीर्षकः। ऋषभो वृषभो धीरो विषाणी द्राक्ष इत्यपि। जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ। मधुरौ पित्तदाहघ्नौ कार्श्यवातक्षयापहौ"। अष्टवर्गान्तर्गतः। जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्ट-भिर्द्रव्यैः कथितश्चरकादिभिः" भावप्र०। "राज्ञामष्टवर्गस्तु यतोऽयमतिदुर्लभः। तस्माद्दस्य प्रतिनिधिं गृह्णीयात्तद्गुणं

भिषक्। मेदा जीवककाकोली ऋद्धिर्वृद्धिस्तथाऽष्टमी। परीविदाश्च ऋषभ्याद्यासां क्षीरस्तु क्रमात् क्षिपेत्" भावप्र०। २मुनिभेदे च। ऋषभकूटशब्दे मुनिभेदो दृश्यः। वर्षति रेतः ऋष–अभक् ऋ०बलोपः। ३वृषभे "ते ते भवन्तूक्ष ऋषभासो वशा उत" ऋ० ६,१६,४७। ऋषभासो रेतोवर्षकावृषभाः" भा०। "उप ऋषभस्य रेतसि पेन्द्र ! तव वीर्ये" २८,८ "ततो नियुक्ताः पशवो यथा शास्त्रं मनीषिभिः। तं तं देवं समुद्दिश्य पक्षिणश्च यथाविधि ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये" सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि" भा० आश्व०८८। अश्वमेधस्य वृषभादयश्च सङ्ख्या अश्वमेधशब्दे दर्शिताः अस्य व्याघ्रादिषु पाठात् उपमितसमासः। नरः ऋषभ इव वाक्ये नरर्षभः एवं राजर्षभः पुरुषर्षभ इत्यादि। सर्वत्र प्राधान्यं तेन द्योत्यते। "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" अमरोक्तेः। क्वचिद्वाक्येऽपि श्रेष्ठत्वं द्योत्यते। "सात्वतामृषभं सर्वे भूतावासममंसत" भाग० १०,२,१०। "स्वत्वथा प्रादुरभूत् किबाखतः स मे ऋषीणामृषभः प्रसीदतु" भाग० २,४,२२। गोलक्षणान्तर्गतवृषभलक्षणमुक्तं वृहत्सं० "काक्षाविलरूक्षाक्षो मूषकनयनाश्च न शुभदा गावः। प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाः। दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठाः। ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च। श्यावातिदीर्घजिह्वा गुल्फैरतितनुभिरतिबृहद्भिर्वा। अतिककुदाः कृशदेहा नेष्टा हीनाधिकाङ्ग्यश्च। वृषभोऽप्येवं स्थूलातिलम्बवृषणः शिराततक्रोडः। स्थूलशिराचितगण्डस्त्रिस्थानं मेहते यश्च। मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्येष्टः। कृष्णौष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः। स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च। गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः। श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो विडालाक्षः। विप्राणामपि न शुभं करोति वृषभः परिगृहीतः। ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः। कातरनयना हीनाश्च पृष्ठतस्ते न भारसहाः। मृदुसंहतताम्रोष्ठास्तनुस्फिचस्ताम्रतालुजिह्वाश्च। तनुह्रस्वोच्चश्रवणाः सुकुक्षयः स्पृष्टजङ्घाश्च। आताम्रसंहतखुरा व्यूढोरस्का बृहत्ककुदयुक्ताः। स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः। तनुभूस्पृग्बालधयो रक्तान्तविलोचना महोच्छ्वासाः। सिंहस्कन्धास्तन्वल्पकम्बलाः पूजिताः सुगताः। वामावर्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्तैः। शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः। वैदूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रवर्त्माणः। पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वेऽपि भारसहाः। घ्राणोद्देशे सवलिर्मार्जारमुखः सितश्च दक्षिणतः। कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्यजवः। लम्बैर्वृषणैर्मेषोदरश्च संक्षिप्तवङ्क्षणक्रोडः। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः। सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः। हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः। भूस्पृग्वालधिराताम्रवङ्क्षणो रक्तदृक् ककुद्मी च। कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः। यो वा सितैकचरणो यथेष्टवर्णश्च सोऽपि शस्तफलः। मिश्रफलोऽपि ग्राह्यो यदि नैकान्तप्रशस्तोऽस्ति"। "ऋषभाख्यमेतदुदितं सजसाः सयौ चेत्" इत्युक्ते ४छन्दोभेदे ५कर्णच्छिद्रे ६कुम्भीरपुच्छे मेदि० ७पर्वतभेदे भरतः। ८वराहपुच्छे ९जिनभेदे च हेम० "नाभिमूलात् यदा वायुः उत्थितः कुरुते ध्वनिम्। वृषभस्येव भिर्वाति हेलया ऋषभः स्मृतः" इति सङ्गीतदा० उक्ते १०स्वरभेदे। "निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" अमरः। ११भगवदवतारभेदे स च नाभेर्मेरुदेव्यामजनि भाग० ५।६ अ०। "नाभिरपत्यकामो मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत्" इत्युपक्रम्य तपःप्रसन्नो भगवांस्तयोः पुत्रतयावतीर्णः इत्युक्तं तत्रैव। यथा "भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्यात्मजो मया सदृशो भूयादिति" १८। ममाहमेवाभिरूपः कैवल्यात् १९ अथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद् द्विजदेवकुलम्। तत आग्नीध्रीयेऽंशकलयाऽवतरिष्याम्यात्मतुल्यमनुपलभमान इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान्। बर्हिषि तस्मिन्नेव विष्णुदत्त ! भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान् प्रदर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्द्ध्वमन्थिनां शुक्लया तन्वाऽवततार" देव० "शुक उवाच अथ तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः। तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लो-

केन च ओजसा बलेन श्रिया यशसा वीर्यशौर्याभ्याञ्च पिता ऋषभ इतीदं नाम चकार। यस्य हीन्द्रः स्पर्द्धमानो भगवान् वर्षे न ववर्ष तदवधार्य्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्वं वर्षमजनाभं नामाभ्यवर्षत्। नाभिस्तु यथाभिलषितं सुप्रजास्त्वमवरुध्याति प्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकधर्म्मं भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्स तातेति सानुरागमुपलालयन् परां निर्वृतिमुपगतः। विदितानुरागमापौरप्रकृतिजनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपःसमाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमानमवाप। यत्र ह पाण्डवेय! श्लोकावुदाहरन्ति। कोनु तत् कर्म राजर्षेर्नाभेरन्वाचरेत् पुमान्। अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा। ब्रह्मण्योऽन्यः! कुतो नाभेर्विप्रा मङ्गलपूजिताः। यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा। अथ ह भगवानृषभदेवः स्वं वर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं कर्मसमाम्नायमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास। येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीत् येनेदं वर्षं भारतमिति व्यपदिशन्ति"। १२राजकर्त्तव्ये ऋषभसहस्रादिदक्षिणके एकाहसाध्ये यागभेदे "ऋषभगोसवौ" कात्या० २२,११,२, "ऋषभश्च गोसवश्च क्रतू भवतः" कर्कः "पूर्वाराधः" ४। "पूर्वः ऋषभसंज्ञोराधः" कर्कः "दक्षिणा ऋषभसहस्रं द्वादशं वा शतम्" ५। "ऋषभाणां सहस्रं द्वादशाधिकं शतं वा" संग्रहः। १३ वत्सतरमुत्रे ऋषभेदे च। "एकविंशस्तोमेन ऋषभो याचतर ईजे शिक्षानां राजा तदेतद्गाथयाऽभिगीतम्। याश्वतरे यजमाने ब्रह्माण ऋषभे जनाः। अश्वमेधे धनं विप्रा विभजन्तस्म दक्षिणाः" शत० १२,५,४,१५,

**ऋषभकूट** पु० हेमकूटपर्वते भा०व०११०अ०। "पर्वतं च समासाद्य हेमकूटमनामयम्। अचिन्त्यानद्भुतान् भावान् ददर्श सुबहून् नृप!" इत्युपक्रम्य तदाश्चर्य्यमूलप्रश्ने युधिष्ठिरं प्रति लोमशवाक्यं यथा

"ऋषिरासीदृषभकूटेऽभूदृषभोनाम तापसः। अनेकशतवर्षायुस्तपस्वी कोपनोभृशम्। स वै सम्भाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह। य इह व्याहरेत् कश्चिदुपलान् त्वं क्षिपस्व ह। वातश्चाहूय मा शब्दमित्युवाच स तापसः। व्याहरंश्चेह पुरुषो मेघशब्देन वार्य्यताम्। एवमेतानि कर्माणि राजंस्तेन महर्षिणा। कृतानि कानि चित् क्रोधात् प्रतिषिद्धानि कानि चित्। नन्दां त्वभिगता देवा पुरा राजन्निति श्रुतिः। अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः। ते दर्शनं त्वनिच्छन्तो देवाः शक्रपुरोगमाः। दुर्गं चक्रुरिमं देशं गिरिप्रत्यूहरूपकम्। तदा प्रभृति कौन्तेय! नरा गिरिमिमं सदा। नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम्। नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः। आरोढुं वाऽपि कौन्तेय! तस्मान्नियतवाग्भव। इह देवास्तदा सर्वे यज्ञानाजह्रुरुत्तमान्। तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत!। कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम्। यूपप्रकाराबहवो वृक्षाश्चेमे विशाम्पते!। देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत!।"

**ऋषभगजविलसित** न० "भरिनगैः स्वरात् ऋषभगजविलसितमिति" वृ०र०उक्ते षोडशाक्षरपादके वर्णवृत्तभेदे।

**ऋषभतर** पु० तनुः ऋषभः तनुत्वे ष्टरच्। भारवहने मन्दशक्तौ वृषभे। जातित्वेन षित्त्वात् स्त्रियां ङीष्। वृषभतरी।

**ऋषभद्वीप** पु०न० ऋषभ इव श्वेतः द्वीपः। द्वीपभेदे श्वेतद्वीपे यत्र क्रौञ्च पर्वतोऽस्ति स च कुमारेण विदारितः "ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिषूदकम्" भा०व०८४अ०।

**ऋषभध्वज** पु० ऋषभोवृषभोध्वजोऽस्य। वृषवाहने १महादेवे। ऋषभकेतनादयोऽप्यत्र। २अर्हद्विशेषे मेदिनिः।

**ऋषभी** स्त्री ऋषभ+गौरा०ङीष् जातौ वा ङीष्। १नराकारायां स्त्रियाम् २शूकशिम्ब्याम् ३शिरालायाम् ४विधवायाञ्च मेदिनिः। ५ऋषभजातिस्त्रियां स्त्रीगव्याम् ६कपिकच्छ्वाञ्च। ऋषभशब्दे उदा०।

**ऋषि** पु० ऋषति ज्ञानेन संसारपारं ऋषी गतौ कि। ज्ञानेन संसारपारगते १वशिष्ठादौ २याज्ञवल्क्याचार्य्ये ३वेदे ४किरणे च तस्य व्युत्पत्तिर्यथा। "ऋषी हिंसा गतौ धातुर्विद्यासत्यतपःश्रुतिः। एष सन्निचयो यस्मात् ब्राह्मणस्य ततस्त्वृषिः। निवृत्तसमकाले तु बुद्ध्या ह्रस्वोऋषिस्त्वयम्। ऋषन्ति परमं यस्मात् परमर्षिस्ततः स्मृतः। गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिकारणम्। यस्मादेतत् स्वयम्भूतस्तस्माच्च ऋषिता मतेति" मत्स्य०पु०१२०अ०। "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्ते ऋषयोऽभवन् तदृषीणामृषित्वम्" ऐत०ब्रा० इत्यादिरप्यत्र "विद्याविद्यवशतयोविषयः प्रसिद्धाः" भरतः। "तत्र ब्रह्मर्षिदेवर्षिम-

र्षिपरमर्षयः। काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः” रत्नकोषोक्तं सप्तविध ऋषिर्भवति। तेषां विशेषः लिङ्गा० उक्तः यथा “व्यासाद्यास्तु महर्षयः। परमर्षयस्तु भेलाद्याः देवर्षयः कण्वादयः। ब्रह्मर्षयो वशिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः। ऋतपर्णादयो राजर्षयः काण्डर्षयस्त्वमी। जैमिन्याद्याः” वशिष्ठाद्याश्च मरीच्याद्याः दश। “भृगुर्मरीचिरत्रिश्च अङ्गिरा पुलहः क्रतुः। मनुर्दक्षो वशिष्ठश्च पुलस्त्यश्चेति ते दश। ब्रह्मणो मानसा ह्येते उत्पन्नाः स्वयमीश्वराः। परत्वेनर्षयो यस्मान्मतास्तस्मान्महर्षयः” मत्स्य० १२० अ०। तेषां पुत्राणां तु तपसैव ऋषित्वं यथोक्तं तत्रैव “ईश्वराणां सुतास्तेषामृषयस्तान् निबोधत। काव्यो बृहस्पतिश्चैव कश्यपश्च्यवनस्तथा। उतथ्यो वामदेवश्च अगस्त्यः कौशिकस्तथा। कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्द्धनः। इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः”। किन्तु मरीच्यादीनामेव ऋषित्वं भूरि प्रसिद्धम्। तएव भोगसमाप्तौ नक्षत्ररूपेण गगनमण्डले उत्तरस्यां सारस्वतीकाः स्थिताश्च भ्रमन्ति तेषां च गति कालसहितचारादि निरूपितं वृह० सं० यथा

“सैकावलीव राजति ससितोत्पलमालिनी सहासेव। नाथवतीव च दिग्यैः कौवेरी सप्तभिर्मुनिभिः। ध्रुवनायकोपदेशान्नरिनर्त्तीवोत्तरा भ्रमद्भिश्च। यैश्चारमहं तेषां कथयिष्ये वृद्धगर्गमतात्। आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ। षड्द्विकपञ्चद्वियुतः (२५२६) शककालस्तस्य राज्ञश्च। एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम्। प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः। पूर्वे भागे भगवान् मरीचिरपरे स्थितो वशिष्ठोऽस्मात्। तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च। पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः। तत्र वशिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी। उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः। हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै। गन्धर्वदेवदानवमन्त्रौषधिसिद्धयक्षनागानाम्। पीड़ाकरो मरीचिर्ज्ञेयो विद्याधराणां च। शकयवनदरदपारतकाम्बोजांस्तापसान् वनोपेतान्। हन्ति वशिष्ठोऽभिहतो विवृद्धिदो रश्मिसम्पन्नः। अङ्गिरसो ज्ञानयुता धीमन्तो ब्राह्मणाश्च निर्दिष्टाः। अत्रेः कान्तारभवा जलजान्यम्भोनिधिः सरितः। रक्षःपिशाचदानवदैत्यभुजङ्गाः स्मृताः पुलस्त्यस्य। पुलहस्य तु मूलफलम् क्रतोस्तु यज्ञाः सयज्ञभृतः”।

एते च स्वायम्भुव मन्वन्तरे सप्तर्षय आसन् ततोऽधिकारसमाप्तौ नक्षत्ररूपेण नभोमण्डले स्थिताः। मन्वन्तरभेदे तु अन्ये एव सप्तर्षयोभवन्ति यथाह हरि०।

१ “मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः। पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणः सुताः। उत्तरस्यां दिशि तथा राजन्। सप्तर्षयः स्मृताः। नाभा नाम तथा देवास्त्वासन् स्वायम्भुवेऽन्तरे”।

२ और्वो वशिष्ठपुत्रश्च स्तम्बः काश्यप एव च। प्राणो बृहस्पतिश्चैव दत्तोनिश्च्यवनस्तथा। एते महर्षयस्तात! वायुप्रोक्ता महाव्रताः।

३ वशिष्ठपुत्राः सप्तासन् वाशिष्ठा इति विश्रुताः। हिरण्यगर्भस्य सुता ऊर्ज्जानाम सुतेजसः। ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमानान्निबोध तान्।

४ काव्यः पृथुस्तथैवाग्निर्जन्नुर्धामा च भारत। कपीवान कपीवांश्च तत्र सप्तर्षयोऽपरे।

५ वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा। हिरण्यरोमा पर्ज्जन्य ऊर्द्ध्वबाहुश्च सोमजः। सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोऽपरे

६ भृगुर्नभो विवस्वांश्च सुधामा विरजस्तथा। अतिनामा सहिष्णुश्च सप्तैते तु महर्षयः। चाक्षुषस्यान्तरे तात! मनोर्द्देवानिमान् शृणु

७ अत्रिर्वशिष्ठो भगवान् कश्यपश्च महानृषिः गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च। तथैव पुत्रो भगवानृचीकस्य महात्मनः। सप्तमोजमदग्निश्च ऋषयः साम्प्रतं दिवि। मन्वन्तरे व्यतिक्रान्ते चत्वारः सप्तका गणाः। कृत्वा कर्म दिवं यान्ति ब्रह्मलोकमनामयम्। ततोऽन्ये तपसा युक्ताः स्थानं तत्पूरयन्त्युत। अतीतावर्त्तमानाश्च क्रमेणैतेन भारत!। एतान्युक्तानि कौरव्य! सप्तातीतानि भारत!

८ रामो व्यासस्तथात्रेयो दीप्तिमानिति विश्रुतः। भारद्वाजस्तथा द्रौणिरश्वत्थामा महाद्युतिः। गौतमस्यात्मजश्चैव शरद्वान्नाम गौतमः। कौशिको गालवश्चैव रुरुः काश्यप एव च। एते सप्त महात्मानोभविष्या मुनिसत्तमाः। ब्रह्मणः सदृशाश्चैते धन्याः सप्तर्षयः स्मृताः।

९ मेधातिथिस्तु पौलस्त्योवसुः काश्यप एव च। ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा। सवनश्चैव वाशिष्ठ आत्रेयो हव्यवाहनः। पौलहः सत्यः इत्येते मुनयो रोहितेऽन्तरे

१० दशमे त्वथ पर्याये द्वितीयस्यान्तरे मनोः। हविष्मान्

पौलहश्चैव सुतनिश्चैव भार्गवः । आपोमूर्त्तिस्तथात्रेयो वाशिष्ठश्चाष्टकः स्मृतः । पौलस्त्यः प्रमतिश्चैव नभोगश्चैव काश्यपः । अङ्गिरा नभसः सत्यः सप्तैव परमर्षयः ।

११ एकादशे तु पर्याये तृतीयस्यान्तरे मनोः । तस्य सप्तर्षींश्चापि कीर्त्त्यमानान्निबोध मे । हविष्मान् काश्यपश्चापि हविष्मान् यश्च भार्गवः । तरुणश्च तथात्रेयो वाशिष्ठः स्वनयस्तथा । अङ्गिराश्चोदधिष्ण्यश्च पौलस्त्यो निश्चरस्तथा । पुलहश्चाग्नितेजाश्च भव्याः सप्त महर्षयः ।

१२ चतुर्थस्य च सावर्णेर्ऋषीन् सप्तर्षींश्च मे । द्युतिर्वशिष्ठपुत्रश्च आत्रेयः सुतपास्तथा । अङ्गिरास्तपसोमूर्त्तिस्तपस्वी काश्यपस्तथा । तपोधनश्च पौलस्त्यः पौलहश्च तपोरविः । भार्गवः सप्तमस्तेषाम्"

१३ त्रयोदशेऽथ पर्याये भव्ये मन्वन्तरे मनोः । अङ्गिराश्चैव धृतिमान् पौलस्त्यो हव्यपस्तु यः । पौलहस्तत्त्वदर्शी च भार्गवश्च निरुत्सुकः । निष्प्रकम्पस्तथात्रेयो निर्मोहः काश्यपस्तथा । सुतपाश्चैव वाशिष्ठः सप्तैते तु महर्षयः ।

१४ चतुर्द्दशेऽथ पर्याये भौत्यस्यैवान्तरे मनोः । अग्नीध्रः काश्यपश्चैव पौलस्त्यो भार्गवस्तथा । भार्गवो ह्यतिबाहुश्च शुचिराङ्गिरसस्तथा । युक्तश्चैव तथात्रेयः शुक्रो वाशिष्ठ एव च । अजितः पौलहश्चैव अन्त्याः सप्तर्षयश्च ते । सप्तर्षीणां उत्तराद्युदयश्च" शत०ब्रा० २,१,२,१ । उक्तः यथा "सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते अमी ह्युत्तराहि सप्तर्षय उद्यन्ति" ।

विश्वामित्रसृष्टाः सप्तर्षयस्तु दक्षिणस्यां नभोमण्डले स्थिताः तदुक्तं "ततो ब्रह्मतपोयोगात् प्रजापतिरिवापरः । ससर्ज दक्षिणे भागे सप्तर्षीनपरान् पुनः" । "मनुमेकाग्रमासीनमभिगम्य महर्षयः" । "ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः" । "ऋषयः संयतात्मानः इति च" मनुः । "वसन् ऋषिकुलेषु सः" "आक्रोशमृषिपत्नीनाम्" रघुः । "ऋषीन् ज्योतिर्मयान् सप्त" "सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्त्तमानः" कुमा० । वेदमन्त्रस्य प्रथमं १४द्रष्टरि च । "येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च तेन वै । मन्त्रेण, तस्य तत् प्रोक्तमृषिभावः स उच्यते" योगि या० । येन ऋषिणा कल्पादौ यो मन्त्रो दृष्टस्तस्य मन्त्रस्य स ऋषिः । तज्ज्ञानावश्यकत्वमार्षशब्दे दर्शितम् तत्र वैदिकमन्त्राणामृषिनिरूपणस्य सर्वानुक्रमणिकादौ दृश्यं संक्षेपेण तत्रोक्तमत्रोच्यते । "सर्वमाग्नेयं गायत्रं गौतमीयम्, सर्वं सावित्रमौष्णिहं भारद्वाजीयम्, सर्वं सौम्यमानुष्टुभमाथर्व्वणिकम् । सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसम्, सर्वं वारुणं पाङ्क्तमाम्नायनीयम्, सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयं, सर्वमादित्यदैवतं जागतम् कौत्सम् । ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यमाण दीक्षायां भृगुरग्नाविष्णू गायत्री । प्रायणीये, आङ्गिरसोऽदितिरुष्णिक्, क्रये विश्वामित्रः सोमोऽनुष्टुप् । आतिथ्ये वशिष्ठो विष्णुर्बृहती, प्रवर्ग्ये कश्यप आदित्यः पङ्क्तिः । उपसत्स्वात्रेय उपसद्देवता त्रिष्टुप् । अग्नीषोमीयेऽगस्त्योऽग्नीषोमौ जगती । प्रायणीयेऽतिरात्र आग्निवेश्योऽहोरात्रे अतिजगती, चतुर्विंशत्यहे शौकरायणः संवत्सरः शक्करी । अतिप्लवे षडहे सावर्णोऽर्द्धमासा मासाश्चेति शक्करी, पृष्ठ्ये षडहे सावकायन ऋतवोऽष्टिः, अभिजिति, प्रियव्रतोऽग्निरत्यष्टिः, स्वरसामसु सरस्वत्यापो धृतिः, विषुवति रौहिणायन आदित्योऽतिधृतिः, विश्वजिति सौनर इन्द्र निर्ऋतिः कृतिः, गो आयुषोरार्कशिर्भिलावरुणौ प्रकृतिः, दशरात्र आथर्वो विश्वेदेवा आकृतिः, दशरात्रिके पृष्ठ्ये षडहे मारेयो दिशो विकृतिः, छन्दोमेषु कौत्सायन इमे लोकाः संकृतिः, दशमेऽहनि पराशरः संवत्सरोऽतिकृतिः, महाव्रते जैमिनिः प्रजापतिरुत्कृतिः, उदयनीयेऽतिरात्रे भौवनायनो वायुश्छन्दांसि सर्वाणि, ऋषिभिरुपलक्षितं वाक्यमृषयः" । अधिकं हेमा० व्रत०खण्डम् । भावे क्तिन् । १५दर्शने १६ज्ञाने च । ऋषिवत् ऋषिसमाः । १७तन्त्रोक्तमन्त्रस्य प्रथमोपादानेन सिद्धे आद्यादिशब्दे पु० उदा० ।

**ऋषिकुल्या** स्त्री ऋषीणां कुल्येव । १नद्यां त्रिका० । ऋषीणां कृतिमा सरित् । मानससरोऽन्तिकस्थे ऋषिनिर्म्मितसरोवरे "तांस्तु सान्त्वेन निर्ज्जित्य मानसं सर उत्तमम् । ऋषिकुल्यास्तथा सर्वा ददर्श कुरुनन्दनः । सरो मानसमासाद्य हाटकानभितः प्रभो! । गन्धर्वरक्षितं देशमजयत् पाण्डवस्ततः" भा०स० २७ अ० । ३तीर्थभेदे "ऋषिकुल्यां समासाद्य वाशिष्ठञ्चैव भारत! । वाशिष्ठीं समतिक्रम्य सर्वे वर्णा द्विजातयः । ऋषिकुल्यां समासाद्य नरःस्नात्वा विकल्मषः । देवान् पितॄंश्चार्च्चयित्वा ऋषिलोकं प्रपद्यते" भा०व०८४अ० । "भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च । ऋषिकुल्यास्तथा मेध्या नदी चित्रवहा तथा" भा०अनु०१६५अ० । ऋषिकुल्यायै हितं यत् । ४ऋषिकुल्यहिते त्रि० । "उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः" भाग०२,२२,२६ । "ऋषिकुल्यायाः ऋषिकुल्याहितायाः सरस्वत्याः" श्रीधरः । ऋषिकुल्यमर्हति

यत् । ५ऋषिकुल्यायोम्ये त्रि०। "अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम्" भाग० ३,१६,१२। सा च "भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तारो देवकुल्यायाम्" भाग० ५,१५,६ । भारतवर्षस्थे ६महानदीभेदे तत्र-त्यमहानदीकीर्त्तने भा० ५,१६,१८ । चन्द्रवशा ताम्रपर्णीत्युपक्रम्य "ऋषिकुल्याऽद्रिसामा कौशिकी मन्दाकिनीति ताः प्रदश्यं इति महानद्य इत्युक्तम् ।

**ऋषिकृत्** त्रि० ऋषिं दर्शनं करोति कृ–क्विप् ६त०। सर्वद्रष्टरि । "ऋषिमनाय ऋषिकृत् स्वर्षाः" ऋ०९,९६,१८,

**ऋषिगिरि** पु० गिरिव्रजाख्यमागधदेशस्थजरासन्धपुरसन्निकृष्टस्थेषु पञ्चसु पर्व्वतेषु मध्ये पर्वतभेदे "एष पार्थ ! महान् भाति पशुमान्नित्यमम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः । वैहारोविपुलः शैलो वराहो वृषभस्तथा । तथा ऋषिगिरिस्तात ! शुभाश्चैत्यकपञ्चमाः । एते पञ्च महाशृङ्गाः पर्व्वताः शीतलद्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्" भा०स०२०अ० [रत्नमा०

**ऋषिजाङ्गलिकी** स्त्री ऋषिप्रिया जाङ्गलिकी । ऋक्षगन्धाशब्दे

**ऋषितर्पण** न० ऋषीणां तर्पणम् । ऋषीनुद्दिश्य जलाञ्जलिदाने तद्विधिः आ०त० "ततोपवीती देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकश्च सनन्दश्च तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा। सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा । मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च । देवान् सर्व्वानृषीन् सर्वान् तर्पयेदक्षतोदकैः" अक्षता अत्र यवाः "अक्षताश्च यवाः प्रोक्ताः" इत्युक्तेः। तच्च स्नानकाले नित्यं कर्त्तव्यम् यथाह याज्ञ० "तर्पणञ्च शुचिः कुर्यात् प्रत्यहं स्नातकोद्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् । "नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्" मनुः । तर्पणस्य प्रधानाङ्गभेदेन द्विविधता तर्पणशब्दे वक्ष्यते ।

**ऋषिपञ्चमी** स्त्री ऋषीणां सप्तर्षीणां पूजार्थं पञ्चमी । भाद्रशुक्लपञ्चम्याम् । तत्र हि सप्तर्षीन् प्रतिमास्थान् पूजयित्वाऽकृष्टभूमिजशाकेन वर्त्तनम् कार्यम् । सप्त वर्षाण्येवं कृत्वा अष्टमेऽब्दे सप्तकलशस्थितासु प्रतिमासु सप्तर्षीन् संपूज्य तन्मन्त्रैर्णाष्टोत्तरशतं तिलैर्हुत्वा सप्त ब्राह्मणान् भोजयेदिति विधिः । मूलं हेमाद्रौ व्रतखण्डे दृश्यम् । सा च मध्याह्नव्यापिनी ग्राह्या "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति" माधवीये हारीतोक्तेः दिनद्वये तथात्वाभे हेमाद्रिमते परा ग्राह्या "पराविद्धा स्यात् पञ्चमीति" दीपिकोक्तेः माधवमते पूर्वा "कर्त्तव्य पञ्चमी पूर्वा" इत्युक्तेः युग्मवाक्याच्च । "ऋषिपञ्चमी षष्ठीयुतैव ग्राह्येति" दिवोदासः । [मयपञ्चाम्" रत्नमा० ।

**ऋषिप्रोक्ता** स्त्री ऋषिणा धन्वन्तरिणा भैषज्याय प्रोक्ता । मा-

**ऋषिबन्धु** पु० ऋषिर्बन्धुः उत्पादकोऽस्य । १ऋषिवंशजाते ऋ-ऋषौ २शरभनामके ऋषौ च । "वसुपाश्वयोः शरभास ऋषिबन्धवे" ऋ०८,१००,५ । ६त०। ३ऋषिमित्रे च ।

**ऋषिमनस्** पु० ऋषिभिर्वा ईदर्शि मनोऽस्य । सर्वाथदर्शिमनस्के ऋषिशब्दे उदा०।

**ऋषियज्ञ** पु० ऋष्युद्देश्यको यज्ञः ऋषिर्वेदस्तदध्ययनरूपो यज्ञो वा । नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते वेदाध्ययनरूपे ब्रह्मयज्ञे "ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा । नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् । एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः" । स्वाध्यायेनार्च्चयेतर्षीन् होमैर्देवान् यथाविधि । पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा" मनुः

**ऋषिलोक** पु० ऋषिभिर्भोग्योलोकः । सत्यलोकसन्निकृष्टस्थे ऋषीणां भोगस्थानभेदे ऋषिकुल्याशब्दे उदा०। स च लोकः शनिलोकादूर्द्धं ध्रुवलोकादधोवर्त्तमानः यथाह काशीखण्डे शनिलोकवर्णनानन्तरं "नेत्रयोः प्राप्नुषोरके ततः सप्तर्षिमण्डलम्" इत्युपक्रम्य "शिवशर्म्मन् ! शिवमते ! सदा सप्तर्षयोऽमलाः । यस्मीक्ष प्रजाः स्रष्टुं विनियुक्ताः प्रजासृजा । मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः । वसिष्ठश्च महाभागा ब्रह्मणोमानसाः सुताः । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः । संभूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः । स्मृतिरूर्जा क्रमादेषां पत्न्योलोकस्य मातरः । एतेषां तपसा चैतत्त्राय्यते भुवनत्रयम् । उत्पाद्य ब्रह्मणा पूर्वमेतत् प्रोक्ता महर्षयः । प्रजाः सृजत रे सुता ! नानारूपाः प्रयत्नतः" इत्यादिकमुपवर्ण्य "ध्रुवतोरिति संकथां तथा गणयोर्विष्णुगयोस्तदावहाम् । ध्रुवलोक उपागतस्तयोर्नयनातिथ्यमतथ्यवर्ज्जितः" १८अ० ।

**ऋषिश्राद्ध** न०६त० । ऋषीणां कर्त्तव्ये श्राद्धे । तत्र हि बह्वारम्भे लघुक्रिया तदुक्तम् "अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे । दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया" ।

**ऋषिसाह्** त्रि० ऋषीन् सहते अभिभवति सह–ण्वि ६त० । ऋषीणां इन्द्रियाणामभिभावके । "ऋतस्य धीतिमृषिषाड़वीवशत्" ऋ०९,७६,४ । "सहेसाढ" पा० सत्वपक्षे

यत्नमन्वत्र ऋषिमाहो इत्यादौ न यत्नमिति भेदः ।

**ऋषियाण** पु० ऋषिभिः याग्यते भज्यते यज–संभक्तौ कर्मणि वञ् वेदे यत्वम् । ऋषिभिः संभक्ते । "ये त्वा इन्द्रान्वृषियाण ! वेधसः" ऋ०८,८६,४। "ऋषियाण ! ऋषिभिः संभक्त" भा० । लोके तु न यत्वम् ।

**ऋषि(ष्टि)षेण** पु० नृपभेदे । ततो विदा० अञ् । आर्षि(र्ष्टि)षेणः । तद्गोत्रापत्ये पुंस्त्री०स्त्रियां ङीप् ।

**ऋषिष्टुत** त्रि० ऋषिभिः स्तुतः वेदे षत्वम् । ऋषिभिः स्तुते "ऋषिष्टुता जरयन्ती" ऋ०७,७५,५। २अग्नौ च "ऋषिष्टुत इति अग्रयोऽह्येतमग्रेऽस्तुवंस्तस्मादाहर्षिष्टुत इति" शत० १,४,२,६ । लोके तु न षत्वम् । क्वचिल्लोकेऽपि षत्वम् । "ऋषिष्टुतां विष्णुपदीं पुराणाम्" भा०अनु०२७

**ऋषिस्तोम** पु० एकाहसाध्ये यागभेदे । "ऋषिस्तोमा व्रात्यस्तोमाश्च एकाहानि" आश्व०श्रौ० २५ । "ऋषिस्तोमा नाम सप्त एकाहाः । उभयत्र सप्तमोज्योतिष्टोमः प्रकृतिः" नारा० ।

**ऋषिस्वर** पु० ऋषिभिः स्वर्य्यते शब्द्यते स्तूयते स्वृ–कर्मणि अप् ईत०। ऋषिभिः स्तुत्ये । "ऋषिस्वरं चरति यासु नाम ते" ऋ० ५,४४,८ । "ऋषिस्वरमृषिभिः स्तुत्यम्" भा० । [ कृते जगत्सर्जने ।

**ऋषिसर्ग** पु० ऋषिभिः कृतः सर्गः । ब्रह्मणानियुक्तैर्ऋषिभिः

**ऋषी** स्त्री ऋषि+गौरा०स्त्रियां ङीष् । ऋषिपत्न्याम् ।

**ऋषि(षी)क** पु० ऋष्यां भवः क वा ह्रस्वः । ऋषिपत्नीगर्भजाते ऋषेरौरसे पुत्रे । "ऋषिपुत्रा ऋषीकास्तु मैथुनात् गर्भसम्भवात् । परस्त्रैणयस्तो वै भार्याये ऋषिकास्ततः। ऋषीकाणां सुताये वै विज्ञेया ऋषिपुत्रकाः" इत्युपक्रम्य कतिचिदृषीनुक्त्वा "तेषां पुत्रानृषीकांस्तु गर्भोत्पन्नान्निबोधत" इत्युपक्रम्य ऋषीणामौरसान् कतिचिदुक्त्वा "इत्येते ऋषिकाः सर्वे ह्येवं ऋषितां गताः" मत्स्यपु० १२०अ०।

**ऋषीवत्** त्रि० ऋषिः स्तोतृत्वेनास्त्यस्य मतुप् "छन्दसीरः" पा० मस्य वः दीर्घः । ऋषिस्तोतृके ऋषिस्तुते । "शिप्रिन्नृषीवः शचीवो" ऋ० ८,२,२८, "ऋषीवः ! ऋषिभिर्युक्त" भा०। अत्र "मतुवसोरु सम्बुद्धौ छन्दसि" पा० सम्बुद्धौ नस्याने रुः । ऋषीवःशब्दकल्पनं प्रामादिकमेव । लोके तु ऋषिमत् इत्येव ।

**ऋषीवह** त्रि० ऋषीन् वहति पचा०अच् ईत० "इकोवहेः पीलो" पा० दीर्घः । ऋषिवाहके

**ऋषु** पु०ऋष–गतौ कु । "अनवरतगतियुक्ते सूर्य्यरश्मौ" अग्नेमियों मातृभिऋष्वा पर्येति" ऋ०१०,१, "ऋष्णां सूर्य्यरश्मीनाम्" भा० ।ग्रन्मत्वे २महति ३बलवति ४प्राज्ञमात्रे च "अग्ने रेभीन जरत ऋषूणां जूर्णिर्होत ऋषूणाम्" ऋ०१,१२०, "ऋषूणामागन्तृणाम्" 'ऋषूणां महताम् ज्ञानवताञ्च" भा०। ५मन्त्रद्रष्टरि ऋषौ च "इच्योभिर्वहस्तुऋषूणाम्" ऋ०८,७१,१५, ऋषूणामृषीणां स्तुत्यादिद्रष्टॄणाम्" भा०।

**ऋष्टि** स्त्री ऋष–करणे क्तिन् । उभयतो धारायुक्ते खड्गे । २खड्गमात्रे अमरः । ३आयुधमात्रे च "चित्रोवोयामः प्रयतास्वृष्टिषु" ऋ०१,१६६,४, "ऋष्टिषु युद्धसाधनेषु" भा०। "ऋष्टयो वां निमिमृक्षुर्ऋष्टयः" ऋ०१,६४,४, "आभा ऋष्टीरसृक्षत" ऋ०५,५२,६, "ऋष्टीरायुधविशेषान्" भा० "वाशीमन्त ऋष्टिमन्तो मनीषिणः" ऋ०५, ५७,२,"ऋष्टिर्नाम छुरिका"भा०"शरयष्टि ऋष्टिभिः" देवोमा० "अनूपि चापप्रागिण शराश चित्रा शतघ्न्यः काञ्चनभूषणाव" भा० आ०१८४अ० "कोवोऽन्तर्मरुत ऋष्टिविद्युतः"ऋ०१,१६८,५, "ऋष्टिविद्युत ऋष्ट्या मेघभेदनायुधविशेषेण विद्योतमानाः"भा०भावे क्तिन् । ४हिंसायाम् ५अनिष्टोत्पादने । "हिरण्यनिर्णिगुपरा ऋष्टिः" ऋ०१,१६७६, रिष हिंसायां रिष्टिरष्टम 'गोचरे वा विलग्ने वा ये ग्रहा रिष्टिसूचकाः"ज्योति० ६दीप्तौ च । ऋष्टिरस्त्यस्य मतुप् । रिष्टियुक्ते दीप्तियुक्ते त्रि०स्त्रियां ङीप् 'विद्युद्रथा मरुत ऋष्टिमन्तो दिवो मर्या" ऋ०२,५४,१२"ऋष्टिमन्तो दीप्तिमन्तः" भा०

**ऋष्टिषेण** पु० नृपभेदे ततः पाठान्तरे विदा० अञ् शिवा० अण् वा । आर्ष्टिषेण तत्पुत्रे । "आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्" एतामृचमधिकृत्य यास्केनेतिहासो वर्णितः यथा "तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शान्तनुश्च द्वौ कौरव्यौ भ्रातरौ बभूवतुः स शान्तनुः कनीयानभिषेचयाञ्चक्रे देवापिस्तपः प्रपेदे ततः शान्तनोराज्ये द्वादश वर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणाः अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरेत्याभिषेचितं तस्मात्ते देवो न वर्षतीति" आर्ष्टिषेणस्य नामान्तरं प्रतीप इति । "प्रतिश्रवसः प्रतीपः खलु शैव्यामुपयेमे मद्रं नाम तस्यां पुत्रानुत्पादयामास देवापिं शान्तनुं वाह्लीकं चेति देवापिः खलु बाल एवारण्यं विवेश शान्तनुस्तु महीपालो बभूवेति" भा० आ० ६५ । "ब्रह्मसत्त्वाद्द्वितीयोऽभूत् प्रतीपस्य चा-

त्मज:। देवापिः शान्तनुस्तस्य वाह्लीक इति चात्मजा:। पितृराज्यं परित्यज्य देवापिस्तु वनं गतः। अभवच्छान्तनूराजा प्राङ्महाभिषसंज्ञित:। यथा द्वादश तद्राज्ये न ववर्ष यदा विभुः। शान्तनुर्ब्राह्मणैरुक्तः परिवेत्ता यदग्रभुक्। राज्यं देह्यग्रजायाशुपुरं राष्ट्रविवृद्धये। एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत्। नाहं राजा त्वमेवाद्य विप्रान् दृष्टो दृशु ! प्रभो। तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा। वेदवादातिवादान् वै ततो देवो ववर्ष ह। देवापिर्योगमास्थाय कलापग्राममास्थित:। सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति" भाग०९.२२. १२ श्लो०। आर्ष्टिषेणशब्दस्यावयवार्थौ निरु० दर्शितौ यथा "आर्ष्टिषेण आर्ष्टिषेणस्य पुत्रः इषितसेनस्येति वा। सेना सेश्वरा समानगतिर्वा। पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायते इति वा"।

**ऋष्य** पु० ऋष-हिंसायां कर्मणि क्यप् अमरादि० यत् नि०। "ऋष्योनीलाण्डकोलोके सरोष इति कीर्त्तितः" इत्युक्ते १मृगभेदे।

**ऋष्यकेतु** पु० अनिरुद्धे त्रिका०। ऋष्यकेतनादयोऽप्यत्र।

**ऋष्यगता** स्त्री ऋष्य इव गता ज्ञाता। ऋष्यप्रोक्ताह्वये शब्दरत्ना०

**ऋष्यगन्धा** स्त्री ऋष्यस्य गन्ध इव गन्धो यस्याः। १वृद्धदारके वृक्षे। २क्षीरविदार्य्यां ३महाश्वेतायाम्।

**ऋष्यजिह्व** न० सुश्रुतोक्ते महाकुष्ठरोगभेदे। सुश्रुते। "सप्त महाकुष्ठानि" इत्युपक्रम्य "तत्र महाकुष्ठान्यरुणो दुम्बरर्ष्यजिह्वकपालकाकणपुण्डरीकदद्रव इति" विभज्य। तत्र "वातेनारुणं, पित्तेनौदुम्बरर्ष्यजिह्वकपालकाकणानि। श्लेष्मणा पौण्डरीकं दद्रुकुष्ठञ्चेति" तन्निदानमुक्त्वा "ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि" लक्षितम्।

**ऋष्यप्रोक्ता** स्त्री ऋषिभिःप्रोक्ता ऋष्य इव प्रोक्ता इति वा। १शतावर्य्याम्, २अतिबलायाम्, ३शूकशिम्बीवृक्षे च। "ऋष्यप्रोक्ता वयस्था च" सुश्रु०।

**ऋष्यमूक** पु० ऋष्येण मृगेण मूको यत्र। "ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुमः" इति रामायणोक्ते पम्पासरोऽन्तिकस्थे पर्वतभेदे "ऋष्यमूकमगात् कपिः" भट्टिः अयञ्च पर्वतः कूर्मविभागे वृह० दक्षिणस्यतयोक्तः "अथ दक्षिणेन" इत्युपक्रम्य "क्रौञ्चद्वीपजटाधरकावेर्य ऋष्यमूकश्च"।

**ऋष्यशृङ्ग** पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकमुनिपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ ऋषिभेदे तस्योत्पत्त्यादि भा०व० ११० अ० उक्तं यथा। "विभाण्डकस्य विप्रर्षेस्तपसा भावितात्मनः। अमोघवीर्य्यस्य सतः प्रजापतिसमद्युतेः। शृणु पुत्रो यथा जात ऋष्यशृङ्गः प्रतापवान्। महाहूदे महातेजा बालः स्थविरसम्मतः। महाहूदं समासाद्य काश्यपस्तपसि स्थितः। दीर्घकालं परिश्रान्त ऋषिः स देवसम्मतः। तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम्। अप्सूपस्पृशतो राजन्! मृगी तच्चापिबत्तदा। सह तोयेन तृषिता गर्भिणी चाभवत्ततः। सा पुरोक्ता भगवता ब्रह्मणा लोककर्त्तृणा। देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे। अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्म्मितात्। तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः। ऋष्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्त्तत। तस्यर्षेः शृङ्गं शिरसि राजन्नासीन्महात्मनः। तेनर्ष्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत्। न तेन दृष्टपूर्व्वोऽन्यः पितुरन्यत्र मानुषः। तस्मात्तस्य मनो नित्यं ब्रह्मचर्य्येऽभवन्नृप। एतस्मिन्नेव काले तु सखा दशरथस्य वै। लोमपाद इति ख्यातो ह्यङ्गानामीश्वरोऽभवत्। तेन कामात् कृतं मिथ्या ब्राह्मणस्येति नः श्रुतम्। स ब्राह्मणैः परित्यक्तस्तदा वै जगतः पतिः। पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया। न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः। स ब्राह्मणान् पर्य्यपृच्छत्तपोयुक्तान्मनीषिणः। प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथिवीपते!। कथं प्रवर्षेत् पर्जन्य उपायः परिदृश्यताम्। तमूचुर्नोदितास्तेन स्वमतानि मनीषिणः। तत्र त्वेको मुनिवरस्तं राजानमुवाच ह। कुपितास्तव राजेन्द्र! ब्राह्मणा निष्कृतिं चर। ऋष्यशृङ्गं मुनिसुतमानयस्व च पार्थिव!। वानेयमनभिज्ञञ्च नारीणामार्जवे रतम्। स चेदवतरेद्राजन् विषयं ते महातपाः। सद्यः प्रवर्षेत् पर्जन्य इति मे नात्र संशयः। एतच्छ्रुत्वा वचो राजन्! कृत्वा निष्कृतिमात्मनः। स गत्वा पुनरागच्छत् प्रसन्नेषु द्विजातिषु। राजानमागतं दृष्ट्वा प्रतिसंजगृहुः प्रजाः। ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान्। ऋष्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चयम्। सोऽध्यगच्छदुपायन्तु तैरमात्यैः सहाच्युत!। शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः। तत आनाययामास वारमुख्या महीपतिः। वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः। ऋष्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः। लोभयित्वाभिविश्वास्य विषयं मम शोभनाः!"।

ततोवेश्याभिश्छलेन तस्योपहरणमुपवर्ण्य "ततो राजन्!

चण्डालत्वङ्गतस्त्वं प्रवेश्य योगेन दिवञ्च नायम्। प्रमोदयन्वो विविधैरुपायैर्राजन्सुरर्ष्याधिपतेः समीपम्। संस्थाप्य तामाश्रमदर्शने तु कन्यारितां नावमतातिदुष्प्राम्। तीरादुपादाय तथैव चक्रे नाव्याश्रमं नाम वनं विचित्रम्। अन्तःपुरे तं तु निवेश्य राजा विभाण्डकस्यात्मजमेकपुत्रम्। ददर्श देवं सहसा प्रहृष्टमापूर्य्यमाणञ्च जगज्जलेन। स चोमपादः परिपूर्णकामः सुतां ददावृष्यशृङ्गाय शान्ताम्” अनेनैव याजयित्वा दशरथेन पुत्रचतुष्टयं लेभे इति कथा रामायणादिस्थानुसन्धेया “शान्योरुनिः स्वां पुरमृष्यशृङ्गः” भट्टिः।

ऋष्यादि पु० ऋषिरादिरस्य। वैदिकमन्त्रस्याध्ययनादौ ऋषिप्रभृतिपञ्चके तच्च पञ्चकं यथा “आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता” योगिया०। ब्राह्मणेन सह आर्षादिकमित्यर्थः व्यक्तमाह स एव “यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्। विनियोगं ब्राह्मणञ्च मन्त्रार्थज्ञानकर्म च। एकैकस्या ऋचः सोऽभिमन्त्र्योऽप्रतिचित्तवेत्। देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः। पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः। अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु। मन्त्रे मन्त्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु। विज्ञानपरिपूर्णस्तु स्वाध्यायफलमश्नुते। छन्दांस्ययातयामानि भवन्ति फलदान्यपि। श्रेयश्च लभते सोऽत्र धर्ममायुश्च विन्दति। दिव्यं वर्षसहस्रन्तु स्वस्थाने ऋषिभिः सह। तिष्ठन्ति तत्र तैः सार्द्धं तत्तुल्यश्चैव जायते”। ऋष्यादिपदार्थानाह स एव। “येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै। मन्त्रेण, तस्य तत्प्रोक्तमृषिभावस्तदात्मकः। छादनाच्छन्द इत्युक्तं वाससीवाऽऽस्य वा स्तुते। आत्मा तु च्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा। आदित्यैर्वसुभीरुद्रैस्तेन च्छन्द इतीरितम्। यस्य यस्य च देवस्य उद्दिष्टा या च देवता। तदाकारं भवेत्तस्य दैवतं देवतोच्यते। पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च। अनेनेदं तु कर्त्तव्यं विनियोगः स उच्यते। निरुक्तं यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनम्। प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं त्वभिधीयते। एवं पञ्चविधं प्रोक्तं जपकालेष्वनुस्मरेत्। होमे चान्तर्जले योगे स्वाध्याये याजने तथा”।

ऋष्यादिन्यास पु० ऋष्यादीनां न्यासः। तन्त्रोक्ते पूजादिषु ऋष्यादीनां न्यासे। ऋष्यादिशब्दार्थप्रदर्शनपूर्ब्बकं तन्न्यासप्रकारः तन्त्रसा० उक्तः। “महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम्। संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः। गुरुत्वात् मस्तके चास्य न्यासस्तु परिकीर्त्तितः। सर्वेषां मन्त्रतत्त्वानां छादनात् छन्द उच्यते। अक्षरत्वात् पदत्वाच्च मुखे छन्दः समीरितम्। सर्वेषामेव जन्तूनां भावनात् प्रेरणात्तथा। हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत्। ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रफलभाग्भवेत्। दौर्बल्यं याति मन्त्राणां विनियोगमजानताम्”। तन्त्रान्तरे “ऋषिं न्यसेन्मूर्द्धि देशे छन्दस्तु मुखपङ्कजे। देवतां हृदि चैव बीजन्तु गुह्यदेशके। शक्तिञ्च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत्”। “आदावृष्यादिकन्यासः करशुद्धिस्ततः परम्। अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च। तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम्। ध्यानं पूजा जपश्चेति सर्वतन्त्रेष्वयं विधिः” तन्त्रम्”। तत्तद्देवमन्त्राणां विशेषत ऋष्यादयस्तु तन्त्रसारादौ दृश्याः।

ऋष्व त्रि० ऋष व-उत्वादयश्च नि०। “महति महत्त्वामध निरु०। “अजा इन्द्रस्य गिरयश्चिदृष्वाः” ऋ० ६,२४,८, “ऋष्वा महान्तः” भा०। “गम्भीरय ऋष्वया यः” ऋ० ६,१८,१०। “गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः” ऋ० ४,२०,६। “त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य पतिर्भूः” ऋ० १,५२,१२। “प्रास्तोदृष्वौजा ऋष्वेभिस्ततक्ष”. ऋ० १०,१०५,६। “ऋष्वा ऋष्टीः” ऋष्टिशब्दे

ऋहत् त्रि० रह-शतृ पृ० साधु। क्षुद्रकायादौ। “दहन्नं चिदृहते रत्नधानि” १०,२८,६। “ऋहते क्षुद्रकायास्थाय” भा०।

इति वाचस्पत्ये ऋकारादिशब्दार्थसङ्कलनम्।

---

# ॠ

ॠकारः स्वरवर्णविशेषः मूर्द्धन्यः स च दीर्घः उदात्तानुदात्तस्वरितभेदात् त्रिविधः पुनः अनुनासिकाननुनासिकभेदेन प्रत्येकं द्विधेति षट्। मातृकान्यासे वामनासायां तस्य न्यस्ततया वामनासाशब्देनाप्यभिधेयता। तस्य कामधेनुतन्त्रे ध्येयस्वरूपमुक्तं यथा। “ॠकारं परमेशानि! स्वयं परमकुण्डलीम्। पीतविद्युल्लताकारं पञ्चदेवमयं

सदा । चतुर्ज्ञानमयं वर्णं पञ्चप्राणयुतं सदा । त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये !" । अस्य प्लुतत्वोक्तिचिन्त्या दीर्घस्य द्विमात्रत्वेन त्रिमात्रोच्चार्य्यप्लुताद्भिन्नत्वात् आकारभेदाच्च ।

ॠ गत्यां क्र्यादि० प्वादि० पर० सक० सेट् । प्वादि० शिप्रत्यये ह्रस्वः । ऋणाति ऋणीतः ऋणन्ति । ऋणीयात् ऋणातु ऋणीहि । आर्णात् आर्णीताम् आर्णन् । आरीत् । आर । आरतुः । अरिता । ईर्य्यात् । अरिष्यति । आरिष्यत् । अरितव्यः अरणीयः आर्य्यः । अरिता । ऋणन् । ईर्णः । अरः ।

ॠ अव्य० ऋ-क्विप् बा० इत्वाभावः । १आकारस्ये २रचायां मेदि० । ३निन्दायां ४भये च शब्दरत्ना० । ५देवमातरि ६दानवमातरि ७स्मृतौ ८गतौ च स्त्री० वचसि न० मेदि० । ९भैरवे १०दनुजे पु० मेदि० ।

इति वाचस्पत्ये ॠकारादिशब्दार्थसङ्कलनम् ।

---

## ऌ

ऌकारः स्वरवर्णभेदः स च दन्तमूलीयः। उदात्तानुदात्तस्वरितभेदात् त्रिविधः अनुनासिकाननुनासिकभेदात् प्रत्येकं पुनर्द्विधेति षड्विधः । तस्य मातृकान्यासे दक्षगण्डे न्यस्ततया तच्छब्देनाप्यभिधानम् । तस्य ध्येयरूपं कामधेनुतन्त्रे उक्तं यथा । "ऌकारं चञ्चलापाङ्गि ! कुण्डली परदेवता । अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये ! । पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा । पञ्चप्राणयुतं वर्णं तथागुणत्रयात्मकम् । बिन्दुत्रयात्मकं वर्णं पीतविद्युल्लता यथा" । अस्य प्लुतत्वोक्तिचिन्त्या एकमात्रत्रिमात्रत्वाभ्यां तयोर्भेदात् । तकाररहितस्तु द्वादशानां बोधक इति सि० कौ० अयशब्दे विवृतिः ।

ऌ अव्य० अगतौ ऌ-क्विप् तुगभावः लत्वम् । १देवमातरि २भूमौ ३पर्वते च मेदि० ।

इति वाचस्पत्ये ऌकारादिशब्दार्थसङ्कलनम् ।

---

## ॡ

ॡकारः तन्त्रमते मुग्धबोधमते च स्वरवर्णभेदः पा० मते तस्य दीर्घत्वं नास्ति तेन उदात्तानुदात्तस्वरितभेदात् अनुनासिकाननुनासिकभेदाच्च षड्विधः । अत्रेदं बोध्यम् ऌवर्णस्य दीर्घत्वाभावेऽपि "ऌति ऌ वा" वार्त्ति० उक्तेः लकारद्वययुत ऌवर्ण एव तत्र विधेयः तत्र लकारद्वयरूपव्यञ्जनद्वयस्य एका मात्रा अचश्चापरा इति द्विमात्रत्वं तेन होतॢकारः इत्यादौ दीर्घत्वव्यवहारः । मुग्धबोधे ॡत्वमित्युक्तिरपि एकमात्रद्विमात्रत्रिमात्रत्वभेदापेक्षया । तेन न विरोधः । अतएव शिक्षायां "दुस्पृष्टश्चेति विज्ञेय ऌकारः प्लुत एव चेति" ऋकारऌकारयोः दुःस्पृष्टत्वोक्तिः । दुःस्पृष्टत्वञ्च ईषत्स्पृष्टत्वं तच्च रकारलकारादिष्वेव सम्भवति "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथा" शिक्षायां यरलानामीषत्स्पृष्टत्वोक्तेः । "तेन ऋकारऌकारयोरीषत्स्पृष्टत्वात् दुःस्पृष्टत्वम् । एवं सर्वसामञ्जस्ये ऌवर्णस्य न दीर्घत्वकल्पनमिति सूक्ष्ममीक्षणीयम् । अस्य च लकारद्वयघटितत्वात् दन्त्यता । अन्ते च स्वरवर्णयोगात् अस्पृष्टत्वम् । तस्य च उदात्तादिभेदैः षड्विधत्वमपि । मातृकान्यासे च तस्य वामगण्डे न्यस्तता तेन तच्छब्देनाप्यस्याभिधानम् । कामधेनुतन्त्रे तस्य ध्येयस्वरूपमुक्तम् यथा "ॡकारं परमेशानि पूर्णचन्द्रसमप्रभम् । पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा । अणुत्रयात्मकं वर्णं तथाबिन्दुत्रयात्मकम् । चतुर्वर्गप्रदं देवि ! ध्यायेत् परमकुण्डलीम्" ।

ॡ अव्य० ऌ-रस्य लः । १देवमातायाम् २दैत्यस्त्रियाम् ३दनुजमातरि ४कामधेनुमातरि च स्त्री एकाक्षरकोषः । ५महादेवे पु० एकाक्षरकोषः ।

इति वाचस्पत्ये ॡकारादिशब्दार्थसङ्कलनम् ।

# ए

एकारः स्वरवर्णभेदः एषः "एदैतौ कण्ठतालव्यावित्युक्तेः कण्ठताल्वोः स्थानयोरुच्चार्य्यः । स च दीर्घः द्विमात्रत्वात् उदात्तानुदात्तस्वरितभेदैरनुनासिकाननुनासिकाभेदैश्चाष्टविधः। तस्य मातृकान्यासे कटिदेशस्थाने न्यस्ततया तत्कट्याख्यमभिधेयता । तस्य ध्येयरूपं कामधेनुतन्त्रे । "एकारं परमं दिव्यं ब्रह्मविष्णुशिवात्मकम् । रक्तिमीकुसुमप्रख्यम् पञ्चदेवमयं सदा । पञ्चप्राणात्मकं वर्णं तथा बिन्दुत्रयात्मकम् । चतुर्वर्गप्रदं देवि ! ध्यायेत् परमकुण्डलीम्" । एशब्दस्य वाचकाः शब्दास्तन्त्रे उक्ता यथा "एकारो वामजं शक्तिर्झिण्टीशो गौरी भगं भवत् । मूलोऽड्डीशो च ज्योत्स्ना श्रद्धा प्रमर्द्दनः । भगं ज्ञानं क्षमा धीरा जङ्घा सर्व्वसमुद्भवः । वह्निर्विष्णुर्भगवती कुण्डली मोहिनी वसुः । योनिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः । सन्ध्यैरेकादशी भद्रा पद्मनाभः कुलाचलः" । "एकारो वामगण्डान्तः शक्तिर्झिण्टी भगन्तथा । माधवी-जङ्घा विजया ओष्ठः एकादशस्वरः" इति बीजवर्णाभिधानम्

ए अव्य० इ–विच् वा० न वृद्धः । १स्मृतौ २असूयायाम् ३अनुकम्पायाम् ४संबोधने ५आह्वाने च" मेदिनिः । ६विष्णौ पु० एकाक्षरकोषः ।

एक त्रि० इण्–कन् । १एकत्वरूपप्रथमसंख्यान्विते, २केवले, ३मुख्ये, ४अन्यार्थे, ५सत्ये, ६अद्वितीये, ७समाने, ८अल्पे च । प्रायशः संख्यावाचकस्य संख्यासंख्येयोभयपरत्वेऽपि एकशब्दस्य भूरिशः एकत्वसंख्यान्वितपरत्वम् । तेन एको घट इत्यादि न तु घटस्यैकः । क्वचित्तु भावप्रधाननिर्द्देशपरत्वेन संख्यावाचकत्वमपि । "द्व्येकयोर्द्विवचनैकवचने" पा० । इह द्वित्वम् एकत्वं च द्व्येकशब्दयोरर्थः। अत्र द्विवचनान्तत्वमेव तथात्वे लिङ्गम् संख्येयपरत्वे द्व्येकेषामिति स्यात् द्व्याद्यर्थानां संख्यान्वितानां बहुत्वात् । तेन एकद्विवचनशब्दोऽपि एकत्वद्वित्वार्थकः तत्रार्थे तयोःपरिभाषितत्वात् अतएव "सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्" इति सुपां तिङाञ्च संख्यावाचकत्वमुक्तम् । तथा "अनेकमन्यपदार्थे" पा० सूत्रे अनेकपदस्य एकवचनान्ततया प्रयोगात् नास्ति एकत्वं यत्र इति विग्रहेण एकत्वशून्यार्थकता । एकसंख्यान्वितपरत्वे अनेके इति स्यात् "पतन्त्यनेके जलधेरिवोर्मयः" इत्यादौ बहुवचनान्ततयैवानेकशब्दस्य प्रयोगात् । स्वारसिकप्रयोगे तु न लक्षणा तेन घटस्यैक इत्यादि न प्रयोगः इति द्रष्टव्यम् । इतरसंख्यासु एकत्वस्यानुगमात् द्वित्वादीनामेकत्वबहुत्वैव जननाच्च इषुधात्वर्थानुगमात् तस्य अन्वर्थनामता । संख्या च द्रव्यसमवेतो गुणविशेषः गुणादौ च संख्यान्वयः परम्परयेति विशेषः । एकत्वादेर्जातित्वनिरासेन गुणत्वव्यवस्थापनं कणा० सू० वृत्त्योःकृतं यथा "रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम्" क० सू० "रूपरसगन्धस्पर्शेति संख्यादिपञ्चकभिन्नगुणोपलक्षणं व्यतिरेकादिति व्यभिचारात् । तदयमर्थः, एको घट इति विशिष्टप्रतीतिर्विशेषणजन्या, तत्र विशेषणं न रूपादि, तद्व्यतिरेकेण जायमानत्वात् । न च घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, न चैकत्वं सत्तावत् सामान्यम्, सत्तया सहान्यूनानतिरिक्तवृत्तित्वात्, न च द्रव्यमात्रे सामान्यं तत्, द्रव्यत्वेनान्यूनानतिरिक्तदेशत्वात्, न चान्यूनानतिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः, प्रतीतिभेदस्य स्वरूपकृतत्वे सत्ताऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्तत्वात् अन्यथा घटत्वकलसत्वयोरपि भेदापत्तेः । न च स्वरूपाभेद एकत्वमिति भूषणोक्तं युक्तम् । घटस्वरूपभेदश्चेदेकत्वं तदा पटादावेकत्वप्रत्ययो न स्यात् स्वरूपभेदो द्वित्वादिकमित्यपि भूषणमतमनुपपन्नं स्वरूपभेदस्य त्रित्वादिसाधारण्येन व्यवहारवैचित्र्यानुपपत्तेरिति भावः" । वैया० भू० संख्यानिरूपणपूर्वकं तद्वित्वादिनिरूपणं यथा "अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः । कपिञ्जलालम्भवाक्ये त्रित्वन्यायाद्यथोच्यते । उक्तञ्च वाक्यपदीये । "यथौषधिरसाः सर्वे मधुन्याहितशक्तयः । अविभागेन वर्त्तन्ते संख्यां तां तादृशीं विदुरिति" । परित्यक्तविशेषं वा संख्यासामान्यं तत् । उक्तञ्च "भेदानां वा परित्यागात्संख्यात्मा स तथाविधः । व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते । अगृहीतविशेषेण यथा रूपेण रूपवान् । प्रख्यायते न शुक्लादि भेदापोहस्तु गम्यते इति" । अस्याः वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः । इति मतस्थितिर्वैयाकरणानाम् । अयं भावः राजपुरुष इत्यादौ राज्ञो राज्ञोः राज्ञां वायं पुरुष इति जिज्ञासा जायते । विशेषजिज्ञासायां सामान्यरूपेणैव तत्प्रतीतिः शब्दादव-

द्वकौ ञ्यतरस्यां सक्तिरिति। तथा एकत्वेन प्रतीतौ न्यायमाह कपिञ्जलेति। बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव मानवदेकत्वस्य सर्वतः प्रथमोपस्थितत्वमस्तीति। वस्तुतस्तु त्रित्वांशे नानुभवसिद्धा। तथात्वे वा प्रामेन्द्वयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात्तद्रूपेणैव वाच्यता स्यादिति ध्येयम्"।

तथा च उक्तगोत् सर्वत्र अभेदैकत्वसंख्यैव उक्तौ प्रतीयते न तु विशेषेण। अत एव "संख्या तु व्यञ्जकाभावाद्-व्यक्ता प्रातरादिवत्। यत्र तु व्यञ्जकं किञ्चित् तत्र संख्या प्रतीयते" इति वाक्यपदीये उक्तम्

तेन राजपुरुष इत्यादौ न विशेषसंख्याप्रतीतिः व्यञ्जकाभावात् त्वत्पुत्रः मदङ्गम् इत्यादौ तु विशेषेण तत्प्रतीतिः त्वादेशतदभावयोर्व्यञ्जकत्वात् "त्वमावेकवचने" इति पा० एकवचने त्वमादेशस्य विधानात्। तदभावादेव द्वित्वबहुत्वयोर्विशेषेण प्रतीतिः। एवं द्व्यंशे एकदेशितत्पुरुषविधानात् अर्द्धपिप्पलीत्यादौ एकत्वप्रतीतिः द्वित्वादौ विवक्षिते तु पिप्पल्यर्द्धमित्याद्येव स्यादिति तत्र विशेषसंख्याप्रतीतिः। "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति" श्रुतिः "एकमेवाद्वितीयं ब्रह्म" श्रुतिः। ५ भेदत्रयशून्ये परमेश्वरे पु०। "एकोऽनेकः सवः कः किम्" विष्णुस०। "परमार्थतः सजातीयविजातीयस्वगतभेदराहित्यात् एकः" भा०। सजातीयभेदः यथा वृक्षे वृक्षान्तरात् भेदः विजातीयभेदः यथा वृक्षे पटाद्भेदः। स्वगतभेदः यथा वृक्षे शाखादिभ्यो भेद इत्येवं भेदत्रयराहित्यस्य सर्वस्य ब्रह्मात्मकत्वात् कार्य्यकारणयोरभेदात् तद्रिक्तपरमार्थवस्त्वन्तराभावाच्च। तदेव "एकमेवाद्वितीयमिति" श्रुतौ पदत्रयेणोक्तम् इह तु अन्यपदाभावात् एकशब्दस्यैव तथा भेदत्रयराहित्यपरत्वमिति बोध्यम्। सांख्यमते तु "एकोऽद्वितीय इति वेदवचांसि पुंसि वैधर्म्यलक्षणभिदाविरहं वदन्ति" इत्युक्तेर्वैधर्म्यरूपभेदराहित्यमेकत्वमिति बोध्यम्। न्यायमते तु "एकत्वमनुपश्यतः" इति श्रुत्यन्तरात् एकत्वेन चिन्त्यतया, प्राधान्येन वा एकत्वं समर्थनीयम्। "एकातपत्रा पृथिवीभर्त्तुः" माघः। "त्वमेकहंस्य नदभैः पिवन्त्यः" "समाल भावैकरसं मनः स्थितम्" कुमा० त्वमेकोह्यस्य सर्वस्य विधानस्य स्वयम्भुवः" मनुः। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येकोजुषमाणोऽनुशेते" श्रुतिः। "एकातपत्रं जगतः प्रभुत्वम्"

"त्वमेका कल्याणी गिरिशरमणी जागर्षि सततम्" कर्पू०स्त० "हेतोरेकाश्रये येषां स्वसाध्याव्यभिचारिता" भाषा०। विशेषणयोरेकस्य विशेष्यत्वविवक्षया क० स० एकशब्दस्य पूर्वनिपातः एकधुर्द्धर इत्यादि "अमोघं सन्दधे यस्मै धनुष्येकधनुर्द्धरः" रघुः। वीरशब्देन समासे तु एकवीरः वीरैक इति रूपद्वयं भवतीति भेदः। वस्तुतस्तत्र वीरैकः इत्येव एकेषु मुख्येषु वीरयते इति वीरधातोरूपवीरशब्देन सप्तमीतत्पुरुषे एकवीर इति प्रौढम०। एकशब्दस्य संख्यावाचकत्वेऽपि "संख्यापूर्वो द्विगुः" पा० न द्विगुत्वमिति। अस्य सर्वनामकार्यम् एके एकस्मै एकस्मात् एकेषाम् एकस्मिन्। स्त्रियाम् एकस्यै एकस्याः एकासामेकस्यामित्यादि नञ्तत्पुरुषे तु। अनेक एकभिन्ने त्रि० ब० व०। तत्र एकत्वसंख्यान्वयासम्भवाद्बहुवचनप्रयोगः। तत्र च सर्वनामकार्यम् "अनेके अनेकस्मै इत्यादि "अनेके सेवन्ते भवदधिकगीर्वाणनिवहान्" कर्पू०स्त०। एकत्वार्थकेन तेन बहुव्रीहौ एकवचनप्रयोगोऽपि "अनेकमन्यपदार्थे" पा०।

एकस्य भावः त्व। एकत्व न० तल्। एकता स्त्री, ष्यञ् ऐक्य न० एकत्वसंख्यायां साम्ये अपृथक्त्वे अभेदे च। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" श्रुतिः "अद्यान्तरमेकत्वम्" कथा०स०। "एकत्वं याच्यता यस्मात्" स्मृतिः। "समालोक्यैकतामेव शशिनो भास्करस्य च" भा०व० २२३। "प्रकृतोरपि प्रणयपूर्वमेकताम्" माघः "ऐक्यं सोऽन्वये" मुग्धबो०। "इन्द्यैक्ये" सि०कौ०।

डतर। एकतर द्वयोर्मध्ये जातिगुणक्रियादिभिर्निर्द्धार्य्ये एकस्मिन् त्रि० एकतरो ब्राह्मणः एकतरः कठः एकतरो नीलः एकतरपच इत्यादि। "अश्वापि वा शरीरं वा मन्यसेकतरं हृत" भा० आ० ६६ अ०। "एकतरपक्षपातिनी युक्तिर्विनिगमना" न्याय०। स च शब्दः अन्यतरान्यतमवत् अव्युत्पन्नं प्रातिपदिकमित्यन्ये अतएव "अड्डतरादिभ्यः" पा० एकतरशब्दाच्च अद्ड्। एकतरं कुलम्। तेन न सर्वनामकार्य्यम् "द्वयोरेकतरे बुद्धिः क्रियतामित्यादि, एकशब्दस्य भिन्नार्थकत्वेन एकतरशब्दोऽपि भिन्नार्थे अमरः। डतम। एकतम बहूनां मध्ये जात्यादिभिः निर्द्धार्य्ये एकस्मिन् त्रि० "यदि त्वेकतमोऽप्येषां ज्ञीपनं प्रपदेद्दुकात्" कात्या०स्र०। सर्वनामकार्य्यम् एकतमे एकतमस्मादित्यादि क्लीबे स्वमोः अद्ड् एकतमत्। तद्धित। एकतस् एकस्मिन्नर्थे अव्य० "एकतोदत" मनुः "तामेक-

तल्पं विनर्त्ति गुरुचिंतनया" रघुः। त्रल्। एकत्र एकस्मिन्नित्यर्थे अव्य० "एकत्र स्फटिकतटांशुभिन्ननीराः" माघः। "तदेकत्र करे दृश" मनुः "अन्यजन्मर्द्दं भैरवैः सर्व्वैकत्रावतिष्ठते" भा०। दाच्। एकदा एकस्मिन् काले अव्य०। "स वा भुङ्क्ते सहस्राणां बहूनामद्यमेकदा। एकदा ह्यात्मकं भुङ्क्ते" भा०अनु०१२८ अ०। असत्यार्थकात् कारकार्थे वीप्सार्थे शस्। एकशस् अल्पमल्पमेकमेकं वेत्याद्यर्थे अव्य० "परिस्तीर्य तं पूर्व्ववत् पालाशादनमेकशः" कात्या० ४,२,४। एकमेकेनैकेन एकैकशः इत्याद्यर्थेऽपि। प्रकारे धा। एकधा एकप्रकारे "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" स्मृतिः। ध्यमुञ् ऐकध्यम् एकधेत्यर्थे अव्य०।

एकक त्रि०एक+असहायेऽर्थे वा कन्। असहाये "समावरिष्ठं कं भरतामष यद्रपः" ऋ० १०,५८,८। "महानध्येकको ह्यग्नः सर्व्वतः सुप्रतिष्ठितः। समस्तैव हि पातेन यक्ष्योधर्षयितुं यतः" पञ्चत०। "विधिरेककचक्रचारिणम्" नैषधम्। सर्व्वनामत्वेन टेरकचि तु। एकशब्दार्थे इति भेदः

एककपाल त्रि० एककपाले संस्कृतः अण् तस्य लुक्। एककपालसंस्कृते पुरोडाशादौ। "एतं द्यावापृथिव्यमेककपालं पुरोडाशम्" शत० ब्रा० २,४,३।

एककार त्रि० एकं करोति एक+कृ—"दिवाविभेत्यादिना" पा० संख्यापूर्व्वकत्वेन अप्रोत्साधकः ट उप०स० स्त्रियाम् ङीप्। एकमात्रकारके एवं द्विकरत्रिकरादयोऽपि तत्तत्संख्यान्वितकारके त्रि० स्त्रियां ङीप्।

एककार्य्य त्रि०एकं समानं कार्य्यं यस्य। समानकार्य्यकरे एकस्य पाककर्त्तुर्दर्शने अन्यस्य पाककर्त्तुः स्मरणं भवतीति न्या०रत्नगणमध्ये गौत०स्० उक्तम् यथा। "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषरागार्थित्वक्रियाधर्म्माधर्म्मनिमित्तेभ्यः" सू०। "एककार्य्यात् एककर्त्तुर्दर्शनात् कर्त्तन्तरस्य स्मृतिः" वृत्तिः। एकं कार्य्यं ययोः तयोर्भावः। एककार्य्यत्व-तत्त्वकार्य्यकरत्वरूपे सङ्गतिभेदे। तथा च समानकार्य्यकारित्वं स्वकर्त्तव्यकार्य्यकारित्वं सङ्गतिः। "समस्तक्षपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वं षोढा सङ्गतिरिष्यते" अनुमानजा०। कर्म्मधार०। एकस्मिन् कार्य्ये "एककार्य्ये समुद्यन्तौ कृष्णौ युद्धेऽपराजितौ" भा० स०१०अ०। "शुभाशुभमनादृत्यमेककार्य्य-

मनन्तरम्। एवन्तु सङ्घषो दत्तमाङ्करेकपदं हवम्" भा०व०२१२अ०।

एककाल कर्म्मधारयः। एकस्मिन् काले "एककालं चरेद्भैक्ष्यं न प्रसज्जेत विस्तरे" मनुः। "सनिभिर्द्दिरशनमुक्तम्" इत्युक्तेर्भोजनस्य द्विकालिकत्वं सार्व्वजनीनं यतेस्तु भिक्षान्नभोजनस्य रागप्राप्ततया तदंशे विधित्वासम्भवेन एककालशब्देन द्वितीयकालनिवृत्त्यर्था परिसंख्यैवेहाश्रयणीया न च नियमः, एककालभोजनाकरणे दोषाश्रवणात्। एककालभोजनव्रतमस्त्यस्य ठन्। "कालाट्ठञ्" तु न भवति समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधात्। एककालिक एककालभवे त्रि०। "तेभ्यो यच्चेन भैक्ष्येण वर्त्तयेदेककालिकम्" स्मृतिः। तत्रभवः खञ्। एककालीनोऽप्यत्र त्रि०।

एककुण्डल पु०एकं कुण्डलमस्य। १बलरामे २कुबेरे च मेदि०

एककुष्ठ न० एकमसाध्यत्वात् प्रधानं कुष्ठम्। सुश्रुतोक्ते कुष्ठभेदे। तत्र "एकादशक्षुद्रकुष्ठानीति" उद्दिश्य "क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्म्मदलम् विसर्पः परिसर्पः सिध्म विचर्चिका किटिभं पामा रकसेति" विभज्य "कृष्णारुणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यमिति" लक्षितम्।

एकगम्य त्रि० एकत्वेन गम्यः। १निर्विकल्पकसमाधिगम्ये अखण्डाकारे चिदात्मनि। तत्र च भितिमात्रमेयशून्यत्वेनैकरूपतया ज्ञानात् तथात्वम्। परमेशतया गम्ये २परमेश्वरे च "त्वमसि एको गम्यस्त्वमसि पयसामर्णव इव" पुष्पदन्तेन तस्यैकगम्यत्वोक्तेस्तथात्वम्।

एकगुरु पु० एकोऽभिन्नो गुरुर्यस्य। समानाध्यापके सतीर्थ्ये।

एकग्राम पु० कर्म०। १अभिन्नग्रामे। "एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति" ज्यो०। तत्रभवः छ। एकग्रामीण एकग्रामभवे त्रि०। "नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा। उपस्थितं गृहे विद्यात् भार्य्या यत्राग्नयोऽपि वा" मनुः अस्य गृहा०पाठात् अएव एकग्रामीय तत्रार्थे। एकग्रामीणप्रयोगस्तु आर्षः। एको ग्रामोऽस्य। २समानग्रामवासिनि त्रि०।

एकचक्र न०एकं श्रेष्ठं वा चक्रं यत्र। १हरिवंशे २सूर्य्यरथे पु०। ३पुरीभेदे स्त्री यत्र बकासुरस्य बधो भीमेन कृतः। "एकचक्रो रथो यस्य" सूर्य्यस्तुतिः "पृथुवर्त्तुलतान्वितम्बलन्मिहिरस्यन्दनशिल्पशिल्पया। विधिरेककचक्रचारिणं किमु निर्मितुमसति मान्मथं रथम्" नैष० सूर्य्यरथस्यैकचक्रता-

रित्वमुक्तम्" । ३ असहायवरे त्रि० "सूर्य्यरथवर्णनञ्च" ऋ० १,१६४,२ । "सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः" । व्याख्यातैषा भाष्यकृता यथा

"एकचक्रमेकरथाङ्गोपेतम् । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते एवं रंहणस्वभावं सूर्य्यस्य सम्बन्धिनं सप्तैतत्संख्याका अश्वा युञ्जन्ति अनुबध्नन्ति अहन्यहोरात्रनिर्वाहाय किं वस्तुतः सप्त नेत्याह । एकोऽश्वः सप्तनामा । एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा एक एव वायुः सप्तरूपं कृत्वा वहतीत्यर्थः वायुधीनत्वादन्तरिक्षसञ्चारस्य एकचक्रमित्युक्तं कीदृशं तदित्यत आह । त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतम् । अजरम् अमरणधर्माकम् । अनर्वम् अशिथिलं पुनस्तदेव विशेष्यते । यत्र यस्मिंश्चक्रे इमा विश्वा भुवना इमानि सकलानि सर्वाणि भूतजातान्यधि आश्रित्य तस्थुः तिष्ठन्ति । यद्वा एकचक्रमेकचारिणमसहायेन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्य्या असाधारणाः परस्परविलक्षणाः षडृतवः एकः साधारण इत्येवं रूपाः अथवा मासद्वयात्मकाः षट् अपरोऽधिमासात्मक एक इत्येवं सप्तर्त्तवो युञ्जन्ति । एतस्य कार्य्यं निर्वहन्तीत्यर्थः । स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्तरसानां सन्नमयिता रोरश्मयो वस्य तादृशः । सप्त ऋषिभिः स्तूयमानो वादित्यो वहति धारयति भ्रमयतीत्यर्थः । किं भूतं ? त्रिनाभि चक्रम् । तिस्रो नाभिस्थानीया सन्ध्यासन्ध्या वा एव ऋतवो यस्य तत्तादृशं ते ग्रीष्मवर्षाहेमन्ताख्याः यद्वा भूतभविष्यद्वर्त्तमानाख्यास्त्रयः कालास्त्रिनाभयः । तदिदमीदृशं चक्रं चक्रवत् पुनःपुनः परिभ्रममाणं संवत्सराख्यचक्रमजरममरणं न हि कदाचिदपि कालो म्रियते "अनादिनिधनः कालः" इति स्मृतेः । अनर्वमप्रतिहतम् । ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतमयमादित्यः पुनः पुनरावर्त्तयति संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात् क्षणादीनां तदावृत्तिसाध्यत्वात् संवत्सरस्य चक्रत्वेन रूपणम् । पुनः कीदृशं तत् । यत्र यस्मिंश्चक्र इमा विश्वा भुवना इमानि सर्वाणि भूतान्यधितस्थुः आश्रित्य तिष्ठन्ति कालाधीनत्वात् सर्वस्याः स्थितेः । ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षाद्यप्रशंसा चेत्यनुगमयत्वामुक्तम् । अयमपि मन्त्रो यास्केन सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः तद्व्याख्यानुसन्धेयम्" भा० ।

भाष्येऽनुसन्धेयतयोक्तं यास्कवाक्यमुदाह्रियते "सप्त युञ्जन्ति रथमेकचक्रमित्यादि" श्रुतिमधिकृत्योक्तम् सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् । चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा । एकोऽश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभि संनामयन्ति सप्तैनमृषयः स्तुवन्तीति वा । इदमपीतरं नामैतस्मादेवाभिसंनामात् । संवत्सरप्रधान उत्तरोऽर्द्धर्चः । त्रिनाभि चक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति । संवत्सरः संवसन्तेऽस्मिन् भूतानि । ग्रीष्मो ग्रस्यन्तेऽस्मिन् रसाः, वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वा । अजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभि संतिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति । "पञ्चारे चक्रे परिवर्त्तमाने" श्रुतिःपञ्चर्त्तुतया । "पञ्चर्त्तवः संवत्सरस्येति" इति च ब्राह्मणं हेमन्तशिशिरयोः समासेन । "षडर आहुरर्पितमिति" श्रुतिः षडृतुतया । अराः प्रत्यृता नाभौ । षट् पुनः सहतेः । "द्वादशारं नहि तज्जराय द्वादशप्रधयश्चक्रमेकम्" इति श्रुतिः मासानाम् । मासा मानात् । प्रधिः प्रहितोभवति "तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः" श्रुतिः । "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च" ब्राह्मणं समासेन । "सप्तशतानि विंशतिश्च तस्थुः" श्रुतिः । "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च" ब्राह्मणं विभागेन" ४ दनोः पुत्रभेदे पु० "चत्वारिंशद्दनोः पुत्राः" इत्युपक्रम्य "एकपादेकचक्रश्च विरूपाक्षमहोदरौ" भा० आ० ६५ । स एव प्रतिविन्ध्यतया जातः यथाह भा० आ० ६७ । "एकचक्र इति ख्यात आसीद्यस्तु महासुरः । प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ" भा० ५ पुरोभेदस्तु "एकचक्रां ततो गत्वा पाण्डवाः संशितव्रताः" इत्युपक्रम्य "माता सहैकचक्रायां ब्राह्मणस्य निवेशने । तत्र तस्माद् बुभुक्षितं पुरुषादं वृकोदरः । भीमसेनो महाबाहुर्बकं नाम महाबलम्" भा० आ० ६१ अ० उक्तः । एकमेव चक्रं सैन्यसंघो यत्र । ६ एकराजचिह्ने त्रि० । "तावत् प्रशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः" भाग० ३,१,६० । "एकस्यैव चक्रं सैन्य"

यत्र श्रीधरः। "बकराक्षसमिव प्रहृत्यैकचक्राम्" काद०। बकस्य तत्पुरीयकृष्णभीमकर्तृकवधकथा च भा०आ० १५७ अध्यायादौ। "एकचक्रां गतास्ते तु कुन्तीपुत्राः महारथा" इत्यादिना "भक्ष्यमानस्य भीमेन तस्य घोरस्य रक्षस" इत्यन्तेन १६२अ० वर्णिता।

**एकचत्वारिंशत्** स्त्री एकाधिका चत्वारिंशत् शा०त०।( एकचत्वारिंश ) १एकाधिकचत्वारिंशत्संख्यायां २तत्संख्यान्विते च बहुत्वबोधकत्वेऽपि उभयत्र नित्यैकवचनम्। एवमेकत्रिंशति एकत्रिंशत् एकपञ्चाशत् एकषष्टि एकसप्तति एकाशीति एकनवति इत्येते शब्दाः क्रमेण एकत्रिंशदादिसंख्यायां तदन्विते च स्त्री एकाधिकादश इत्यस्य तु क्वात् एकादश इति भेदः सर्वेभ्यः पूरणे डट्। एकचत्वारिंशादिस्तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**एकचर** त्रि०एकः सन् चरति चर–पचा० अच् सुप्सुपेति स०। एकाकीभूत्वा चारिणि असहायचारिणि। "हरिरेकचरः श्रीमान्" धर्म्मौ विपद्रवानिव भा०व०७२अ०।"अनोकशायी चतुरल्पचारचरन् देशानेकचरः स भिक्षुः" भा०आ० ८१अ०। "न भक्षयेदेकचरान् अज्ञातांश्च मृगद्विजान्" मनुः। "ते एकाकिनः प्रायेण चरन्ति सर्पादयस्तानेकचरान्" कुल्लू०"अयमेकचरोऽभिवर्त्तते माम्" किरा०। "पृथिव्यामेकचरः परिबभ्राम" भा०५,५,२०।

**एकचरण** पु० एकश्चरणो यस्य। एकपादयुक्ते १मनुष्यभेदे २तद्युक्तजनपदभेदे च स च देशः हस्तः० कूर्म्मविभागे ऐशान्याशस्थः। "ऐशान्यामेकव्यराज्यपशुपालकीरकाश्मीरा" इत्युपक्रम्य "एकचरणानुविश्वाः सुवर्णभूर्वसुवनं दिविष्ठाश्च" [यवमते

**एकचर्य्या** स्त्री एकस्य चर्य्या चर–भावे क्यप् ६त०। असहा-

**एकचारिन्** त्रि०एकः सन् चरति चर-णि.न "सुप्सुपेति"स०। असहायचरे १एकचरे त्रि०। २बुद्धसहचरभेदे पु० त्रिका०।

**एकच्छाया** स्त्रीं एकस्य अधमर्णधनेऽन्यासहायस्याधमर्णस्य छाया साहाय्यम्। अधमर्णसाहाय्ये। "बहवः स्युर्यदि स्वांशान् दद्युः प्रतिभुवो धनम्। एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि" या०। "एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया साहाय्यं तामाश्रिताः एकच्छायाश्रिताः अधमर्णो यथा अप्रदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं द्रव्यदानाय स्थिताः" मिता०। "एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते। प्रोषिते तत्सुतो दाप्यः पितृमर्णं मृते सति" कात्या०स्मृ०। एकैव छाया यत्र। तुल्यच्छादने त्रि० "एकच्छायं चक्रतुस्ताशाखाग्रं शरवृष्टिभिः" भा० वि० १८०।

**एकज** त्रि०एकस्मात् जायते जन–ड ५त०। १एकस्माज्जाते "साकञ्जानां सप्तथमाहुरेकजम्" ऋ० १, १६४,१५। साकंजानामेकस्मादादित्यात् सहोत्पन्नानामृतूनां मध्ये सप्तथं सप्तममृतुम् एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः, चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड्तवो भवन्ति अधिमासेनैक उत्पद्यते सप्तमर्तुः" भा०। एकेन जातमित्युक्तिविवक्षा कर्त्तृकरणयोरेव तृतीयासमासो न हेतुतृतीययेति नियमात्।२सोदरासोदरभ्रातरि तयोरेकशरीरोत्पन्नत्वात् एकजत्वम् ३भगिन्यां स्त्री जन–ड। ५त०। एकजातादयोऽप्यत्र सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्वांस्तांस्तेन पुत्रेण पुत्रिणोमनुरब्रवीत्" स्मृतिः"बहूनां चैकजातानां नानास्त्रीषु निबोधत" मनुः। एकः असहाय एव जायते जन–ड सुप्सुपेति स०। ४असहायतया जाते "एकजम्" कात्या० ६, १,१। "एकः असहाय एव भूमेर्जातः तमेकं यूपं हरति" कर्कः। "उप ते पाजो न त्वा रुरुधे वशी वशं नयस एकज! त्वम्" ऋ० १०,८४,२।

**एकजटा** स्त्री एका जटा यस्याः। सर्वतारिणीगणप्रकृतिरूपे देवीभेदे तदाविर्भावः कालिका०६१अ० वर्णितो यथा "सर्वे सुरगणाः सेन्द्रास्ततोगत्वा हिमाचलम्। गङ्गावतारनिकटे महामायां प्रतुष्टुवुः। अनेकशः स्तुता देवी तदा सर्वामरोत्करैः। मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत। युष्माभिरमरैरत्र स्तूयते का च भाविनी। किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति। एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः। समुद्भूता ब्रवीद्देवी मां स्तुवन्ति सुरा इति। शुम्भो निशुम्भोऽसुरौ बाधेते सकलान् सुरान्। तस्मात् तयोर्वधायाहं स्तुवेऽद्य सकलैः सुरैः। विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा। भिन्नाञ्जननिभा कृष्णा साभूत् गौरी क्षणादपि। कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया। तामुग्रतारामृषयो वदन्तीह मनीषिणः। उग्रादपि भयात् त्राति यस्माद्भक्तान् सदाम्बिका। एतस्याः प्रथमं बीजं कथितं तन्मतेन च। एषैवैकजटा ख्याता यस्मात्तस्या जटैकिका। ईषत्तु चिन्तनं चास्याः सम्यक् वेतालभैरवौ!। यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम्। चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम्। खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं तथः। कर्त्रीं च

खर्परञ्चैव क्रमाद्वामेन बिभ्रती । सा बिभ्रती जटामेकां बिभ्रती शिरसा स्वयम् । मुण्डमालाधरा शीर्षे ग्रीवायामपि सर्व्वदा । वक्षसा नागहारन्तु बिभ्रती रक्तलोचना । कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विता । वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् । विन्यस्य सिंहपृष्ठे तु लेलिहानाऽऽसवं स्वयम् । साट्टहासमहाघोरारावयुक्ताऽतिभीषणा । चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः । एतस्याः संप्रवक्ष्यामि या अष्टौ योगिन्यो मताः । महाकाली च रुद्राणी उग्रा भीमा तथैव च । घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी । भैरवी चाष्टमी प्रोक्ता योगिनीस्तु प्रपूजयेत्" । तन्त्रसा० पञ्चाक्षरीं विद्यां प्रदर्श्य "पञ्चाक्षरी एकजटा(ओम्)ताराभावे महेश्वरि ! । (ओम्) ताराद्या तु भवेद्देवि! श्रीमन्नीलसरस्वती" । "अन्यासां विद्यानामेकजटैव देवता प्रकीर्त्तिता" इत्युक्ता० । तद्भेदाश्च "ताराचोग्रा महोग्रा च वज्रा काली सरस्वती । कामेश्वरी च चामुण्डा इत्यष्टौ तारिणीभिदाः" तन्त्रसा० ।

**एकजन्मन्** पु० एकं प्रधानं जन्म यस्य एकेभ्यो प्रधानेभ्यो दिक्पालांशेभ्यो वा जन्म यस्य वा । १ नृपे त्रिका० । तत्र मनुष्यापेक्षया प्रधानभोगसाधनजन्मत्वेन दिक्पालांशभूतत्वेन च तथात्वम् । एकमेव न द्वितीयं जन्म यस्य । २ शूद्रजातौ पुंस्त्री० तस्य सावित्रजन्माभावात् गर्भमात्रजन्मकत्वात्तथात्वम् स्त्रियां वा ङाप् ।

**एकजाति** पुंस्त्री० एका जातिर्जन्मास्य । शूद्रजातौ "ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः" मनुना तस्यैकमात्रजन्मप्रतिपादनेन द्विजातिवत् सावित्रजन्मराहित्येन एकजातित्वम् । "एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्" मनुः । "एकजातेरयं धर्मो यद्द्विजस्योपि क्रयधारणम्" पुरा० । सुश्रुतोक्ते २ कीटभेदे । "एकजातीनतरूर्द्ध्वं कीटान् वक्ष्यामि भेदतः । सामान्यतोदृष्टलिङ्गैः साध्यासाध्यक्रमेण च । त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः । चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः" इति कीटशब्दे विवृतिः । एका तुल्या जातिः सामान्यधर्म्मोऽस्य । ३ तुल्यधर्म्मयुक्ते त्रि० कर्म्मधा० । ४ तुल्यधर्म्मे स्त्री । तामर्हति छ । एकजातीय समानधर्म्मान्विते त्रि० "सर्व्वेषामेकजातीयानां महाशरीरेभ्यः क्षुद्रशरीराः प्रधानतमाः" सुश्रु० "एकः प्रकारः जातीयर् । एकजातीय । तुल्यप्रकारे त्रि० ।

**एकजीववाद** पु० एक एव जीव इत्येवं वादः । एकं चैतन्यमेकयैवाविद्यया बद्धं संसरति तदेव ज्ञानेन कदाचिन्मुच्यते शुकवामदेवादीनां तत्त्वमोक्षौ च इत्येवं रूपे सिद्धान्तैकदेशिवादभेदे । उक्तौ चैकानेकजीववादौ वेदा० प० यथा "एकजीववादेऽविद्याप्रतिबिम्बो जीवः अनेकजीववादे तु अन्तःकरणप्रतिबिम्बः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् । तत्र जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः । इन्द्रियजन्यज्ञानञ्चान्तःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात् । सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम् । तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्व्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्व्वदा घटादेर्भानप्रसङ्गः अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात् । तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं, तद्भासकस्य तदनिवर्त्तकत्वात् न चिदुपहितं चैतन्यं परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य आवरणभङ्गहेतुत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते । सम्बन्धार्था वृत्तिरित्यपरं मतम् । तथाविद्योपाधिकोजीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना समं सम्बन्धाभावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात् । ननु अविद्योपाधिकस्य जीवस्यापरिच्छिन्नस्य स्वत एव सकलवस्तुसम्बन्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतं असङ्गत्वश्रुत्या सम्बन्धाभावाभिधाने च वृत्त्युत्तरमपि सम्बन्धो न स्यादिति चेत् उच्यते न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः किन्तु घटादिभानप्रयोजकं सम्बन्धविशेषम् । स च सम्बन्धविशेषोविषयावभासकस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकतालक्षणः कादाचित्कस्तदाकारवृत्तिनिबन्धनः । तथाहि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यञ्जनसमर्थं घटादिकन्तु न तथा अस्वच्छद्रव्यत्वात् । आकारवृत्तिसंयोगदशायान्तु वृत्त्यभिभूतजाड्यधर्म्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति ।

मुक्तं विवरणे अन्तःकरणं हि स्वसंविद्धं स्वसंसर्गिणामपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति । इदञ्चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसम्बन्धदशायां प्रतिबिम्बग्राहित्वम् । घटादेरभिव्यञ्जकत्वञ्च तत्प्रतिबिम्बग्राहित्वम् चैतन्यस्याभिव्यक्तत्वञ्च तत्र प्रतिबिम्बितत्वम् । एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः । परोक्षस्थले तु वह्न्यादेर्वृत्तिसंसर्गाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम् । एतन्मते च विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम्" । "एकानेकजीववादौ सिद्धान्तलेशे दर्शितौ यथा । "अथ विद्योदये सत्युपाधिविलयादुपेतजीवभावस्य किमीश्वरभावापत्तिरुत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयम् । उच्यते । एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयाच्चिद्विशेषचैतन्यरूपेणैवावस्थानम् । अनेकजीववादमभ्युपगम्य बन्धमोक्षव्यवस्थाङ्गीकारे यद्यपि कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेऽपि बद्धपुरुषान्तराविद्याकृतजीवेश्वरविभागादिप्रपञ्चोऽनुवर्त्तते तथापि जीववदीश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम् अनेकोपाधिष्वेकस्य प्रतिबिम्बे सत्येकोपाधिविलयेन तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात् तत्सम्भवे कदाचिज्जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्ष इव मुक्तस्य पुनर्बन्धापत्तेः । अतएवानेकजीववादेऽवच्छेदपक्षो नाद्रियते तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वरः उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वेश्वरत्वसत्यकामत्वादिगुणकपरमेश्वरभावापत्तिरिष्यते यथानेकेषु दर्पणेषु एकस्य मुखस्य प्रतिबिम्बे सत्येकदर्पणापनये तत्प्रतिबिम्बो बिम्बभावेनावातिष्ठते । न तु मुखमात्ररूपेण, तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् तथैकस्य चैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सत्येकस्मिन् प्रतिबिम्बे विद्योदयेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावात् । न च मुक्तस्याविद्याऽभावात् सत्यकामत्वादिगुणविशिष्टेश्वरत्वानुपपत्तिः तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात् न चेश्वरस्येश्वरत्वं सत्यकामादिगुणविशिष्टत्वञ्च स्वाविद्याकृतं तस्य निरञ्जनत्वात् किन्तु बद्धपुरुषाविद्याकृतमेव तस्यैश्वर्यमनन्त्यम्" ।

एकत पु॰ पिष्टलिप्तपात्रीप्रक्षालनजलनिनयनदेवे आप्त्ये देवभेदे । तस्योत्पत्तिकथा यज्ञांशभागित्वकथा च शत॰ ब्रा॰ १, २,३,१, दर्शिता यथा । "चतुर्धा विहितो ह वा अग्रेऽग्निरास । स यमग्रेऽग्निं होत्राय प्रावृणत स प्रैवाधन्वद्यं द्वितीयं प्रावृणत स प्रैवाधन्वद्यं तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः सोऽपोऽभितिष्ठेवावष्ठ्यूतास्थ या अप्रपदनं स्थ याभ्यो वो मामकामं नयन्तीति तत आप्त्याः सम्बभूवुस्त्रितो द्वित एकतः । त इन्द्रेण सह चेरुः यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित एव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः । त उ हैत ऊचुः । उपैवेमएनो गच्छन्तु येऽस्य वध्यस्याविदुरिति किमिति यज्ञ एवैषु मृष्टामिति तदेषु तद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ।

त उ हाप्त्या ऊचुः । अत्येव वयमिदमस्मत् परो नयामेति कमभीति य एवादक्षिणेन हविषा यजाता इति तस्मादक्षिणेन हविषा यजेताप्त्येषु ह यज्ञो मृष्ट आप्त्या उ ह तस्मिन् मृजते, यो दक्षिणेन हविषा यजते । ततो देवाः, एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन् यदन्वाहार्यं नेददक्षिणं हविरसदिति तन्नाना निनयति तथैभ्योऽसमदं करोति तदभि तपति तथैषां शृतं भवति स निनयति त्रिताय त्वा द्विताय त्वैकताय त्वेति" "यं होत्रकर्मणे प्रावृणत ते देवा इत्यर्थः । प्राधन्वत् प्रागच्छद्म्रियत इव गमने । भीषा पूर्वाग्निमरणभयेन निलीनोऽन्तर्हितो बभूव । लिय निरसने । अप्रपदनमनाश्रयभूताः । यः पञ्चम्यर्थे चतुर्थी युष्मत् सकाशात् । ततो निष्ठीवनलक्षणदोषधारणात्ताभ्योऽद्भ्यः सकाशात् । यथेदानीं ब्राह्मणः पुरोहितः । तं बध्यं वधार्हं ज्ञातवन्तः । अनन्तरं चैनं त्रिशीर्षं त्रित एवेन्द्रस्य हिताय जघान इन्द्रश्च तद्धननजनितात् पापादति मुक्तोऽभवत् यस्मादयमिन्द्रो देवः अतोऽस्मिन् पापसंश्लेषो न युक्त इत्यर्थः । ते औचित्यज्ञाना त्रिशीर्षहननानन्तरमेतदूचुः । एषु त्रितादिषु त्रिशीर्षवधजनितमेनस्तद्गच्छतु मृजीत शोधयेदिति अत एतत् एतेन पात्रीनिर्णेजनादिनिनयनेन एषु तदेनो यज्ञः संयोजयति तस्मादद्धननमेषादिजनितस्यैनसो रूपं पा-

वाक्यार्थो बाध्यते, इति, उच्यते, न श्रुतिर्बाध्यते, वाक्यार्थो नास्ति इति, केवलं तु प्रातिपदिकार्थगतां संख्यामाह । तादृशी संख्या वाक्येन यत्ने विधीयते, प्रातिपदिकार्थो हि आख्यातवाच्येन सम्बध्यते, विभक्त्यर्थोऽपि, तथा हि तद्विशेषणविशिष्ट आलम्भो गम्यते, तत्र एकार्थत्वात् एकवाक्यम् अवकल्पते । यदि हि संख्यायां विधीयमानायामेव आख्यातशब्दो न शक्नुयात्, आख्यातार्थं विधातुम्, संख्यासम्बन्धं च । तस्मात् यत्ने विवक्षिता संख्या इति" भा० "तद्वच्च लिङ्गदर्शनम्" १६सू० । किम् ? इति । "कर्णयाम्या, अवलिप्ता रौद्रा, नभोरूपाः पार्जन्याः, तेषाम् ऐन्द्राग्नो दशमः" इति, यदि त्रित्वं विवक्षितं तदा ऐन्द्राग्नो दशमो भवति । तथा "कृष्णा भौमाः, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारकाः" इति प्रकृत्य आह । "अद्भुतानां वा एतत् रूपं यत् पञ्चदशिनः" इति तस्मात् अपि पश्यामि, विवक्षिता संख्या इति । यत्तु उक्तम्, "एकां गाम्" इत्यविवक्षां दर्शयति इति । अत्र उच्यते गोसंख्यासम्बन्धं विधातुम्, एतत् उच्यते, इतरथा हि, गोदक्षिणासम्बन्धो विहितो गम्यते । तस्मात् विवक्षितेऽपि वाच्यमेतत् । अथो द्वे धेनू द्वे लोतुजकामात् इति च अनुवादाः" भा० "तथा च लिङ्गम्" १७सू० "एवं च कृत्वा समानश्रुतिकं लिङ्गमपि विवक्षितं भविष्यति, तत्र इदं दर्शनम् उपपद्यते, "वसन्ते प्रातराग्नेयीं कृष्णग्रीवीमालभते, ग्रीष्मे माध्यन्दिने संहितामैन्द्रीं शरदि अपराह्णे श्वेतां बार्हस्पत्याम्" इति । तत्र श्रूयते, "गर्भिण्यो भवन्ति" इति, गर्भः स्त्रीणां गुणः, तेन स्त्रियो दर्शयति इति भविष्यति । तथा "अथ ऋषभो वृष्णिवत्सः पुरुषः इति ते प्राजापत्याः" इति । तत्र श्रूयते "मुष्करा भवन्ति सेन्द्रियत्वाय" इति, मुष्करत्वं पुंसां गुणः, तेन पुंप्राप्तिं दर्शयति इति । अधिकरणान्तरं वा, तथा च लिङ्गम् इति, संख्याधिकरणं लिङ्गाधिकरणेऽतिदिश्यते । लिङ्गम् अविवक्षितं, श्रुत्या वाक्यस्य बाधितत्वात्, न च, विवक्षितमिव श्रूयते इति भवति लिङ्गं, "स्त्री गौः सोमक्रयणी" इति, स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते । "ननु कथं वशीमालभ इति न स्त्रीः आलभ्यते ?" नैवम्, तत्, अपवादस्य पूर्वो धावति इति यथा । लिङ्गं विवक्षितं वाक्यार्थेन श्रुत्यादिनिमित्तत्वात्, तथा च लिङ्गम् "गर्भिण्यो भवन्ति" इति, तथा "मुष्करा भवन्ति" इति । यदुक्तं "स्त्री गौः सोमक्रयणी" इति, तत्र स्त्रीत्वविवक्षितं, तथा "प्रजापतये पुरुषान् हस्तिन आलभते" इति, पुरुषग्रहणम् अविवक्षितं, विस्पष्टो हि न्याय उक्तो लिङ्गविवक्षायाम् । तस्मात् विवक्षितं लिङ्गम् इति भा० ।

तत्त्वबोधिन्यां तूक्तं यथा "अग्नीषोमीयं पशुमालभेत" "पशुना रुद्रं यजेत्" इत्यादौ पशोरेकत्वं विवक्षितं न वेति संशयः । तत्र पशुमित्यत्र द्वितीयान्तादिश्रुत्या पुंस्त्वैकत्वयोरुपस्थितयोः परस्परान्वये परस्पराकाङ्क्षाभावात् तयोर्यागेनैव एकत्वयोः परस्परमन्वयः यथा च आलभेतेत्यादि पदान्तराकाङ्क्षया वाक्यादेकत्वान्वयपशोर्यागादावन्वय इति वाक्यात् श्रुतेर्बलीयस्त्वेन पशुविशेषणत्वेनोपस्थितस्यैकत्वस्य न यागादावन्वयः निराकाङ्क्षत्वात् तथा च सूत्रम् "एकत्वमयुक्तमर्थस्य गुणभूतत्वात्" । अर्थस्य पशोर्गुणभूतत्वात् विशेषणत्वेन प्रागन्वयात् तस्मादेकत्वमविवक्षितं द्वाभ्यां बहुभिरपि यागसिद्धिरिति प्राप्ते उच्यते । पशुमित्यादौ प्रकृत्या पशुरूपस्थापितः प्रत्ययेन चैकत्वं कारकत्वञ्च तत्र चैकपदोपात्तत्वप्रत्यासत्त्या एकत्वस्य कर्मत्वादौ कारकेऽन्वयः कारकत्वञ्च क्रियानिमित्तत्वमिति क्रियायाश्चोपस्थितयागादेरिति पशोः प्रथमं कारकद्वारा क्रियायामन्वयः । पश्चाद्धात्वर्थस्यैकत्वस्य क्रियासाधनत्वान्यथानुपपत्त्या द्रव्यद्वारा तदन्वयार्थं पशुविशेषणत्वेनान्वयः अरुणाधिकरणन्यायादिति विवक्षितमेकत्वमतो द्वाभ्यां बहुभिर्वा न यागसिद्धिः तदुक्तं "समानप्रत्ययत्वेन कारकेष्वात्मलाभतः । क्रियायै नीयते संख्या न परस्य पदाङ्गतेदिति" । एवमजाभ्यां शुनकमपिन्द्रमालभेतेत्यादौ द्वित्वबहुत्वयोर्विवक्षितत्वम् । एवं पुंस्त्वमपि विवक्षितं प्रत्ययार्थत्वेन कारकान्वयित्वात् । अथ कथं लिङ्गं विवक्षितं शब्दार्थस्य तदनुष्ठानस्य विचारे तदुपयोगादर्शनात् अपुंस्यपि दृष्टे दृढशब्दः, मक्षिकादौ स्त्रियामपि मक्षिकादिशब्दः प्रयुज्यत इति लिङ्गं न शब्दार्थः अपितु प्रयोगसाधुत्वमात्रार्थं तत्प्रयोगोऽनुष्ठाने एकत्वविशिष्टपशुत्वस्याविशेषात् स्त्रियामपि अनुष्ठानसाम्यात् जातित्वादिवत् लिङ्गस्य दृष्टव्यवहारैरन्वयव्यतिरेकाभ्यां शब्दार्थावगमात् तस्य च तत्तत्पदसमभिव्याहारेण तत्तत्पदवाच्यत्वाभ्युपगमात् दृढादिषु न वास्तवं पुंस्त्वं किन्तु अभियुक्तोक्तिबलेन तेषां तु पि साधुतेति । न वानुष्ठानसाम्यं पुंपशौ विशेषसम्भवात् "वाङ्क्ते आप्यतेताम्" इत्यादि-

सत्त्वेन द्रव्यस्याप्यायनकाले "मेद्यं ते आप्यायताम्" इति श्रुम-नवरस्याप्याप्यायनश्रवणात् । यत्र च सारस्वतमेधीयया-गादौ स्त्रिया आनमनस्तु तत्र स्तोत्रं विवक्षितम्" ।

एवं यज्ञगतसंख्यायास्तु विवक्षा नास्तीति यच्च न्यायपक्षे वक्ष्यते एकत्वविवक्षास्थले गदाधरेण धर्म्मिपारतन्त्र्येण एकपदादेर्योगादावन्वयोऽभ्युपगतः धर्म्मिणः पदार्थान्तरान्वये तद्गतैकत्वस्य स्वाश्रयपशुकरणकत्वस्यानान्वयप्रसङ्गकत्वात् भयप्रसक्त्येन यागेऽन्वय इति तेनोक्तेः ।

एकदंष्ट्र पु॰ एका दंष्ट्रा यस्य । गणेशे शब्दच॰ । तस्य परशुरामेणैकदन्तस्योत्पाटनात् तथात्वम् परशुरामेण तद्दन्तस्योत्पाटनकथा च ब्रह्मवै॰पु॰ गणेशखण्डे दर्शिता । शिवपार्वत्योः रहसि वर्त्तमानयोर्द्वारपालत्वेन स्थितेन गणपतिना परशुरामस्य शिवं द्रष्टुम् अन्तःपुरमध्ये जिगमिषोर्द्वाररोधे कृते तयोः कलहप्रसङ्गेषु "चिक्षेप परशुमव्यर्थं शिवतुल्यं च तेजसा" इति गणेशं प्रति परशुनिक्षेपमुक्त्वा "निपत्य परशुर्वेगेन छित्वा दन्तं समूलकम् । जगाम रामहस्तं तु महादेववरेण च" इत्युक्त्वा "पपात भूमौ दन्तश्च महान्तं यज्ञपूरयन्" इत्युक्तम् अत्र दन्त इत्येकवचननिर्देशात् एकस्यैव दन्तस्य भग्नता प्रतीयते । एकदन्तादयोऽप्यत्र । "कपिलश्चैकदन्तश्च" गणेशस्तवः ।

एकदण्डिन् पु॰ एकः केवलः शिखायज्ञोपवीतादिशून्यो वा दण्डोऽस्त्यस्य इनि ।"यदा बुद्धाव्यवसितं परं ब्रह्म सनातनम् । तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्" इत्युक्तलक्षणे परिव्राजके । संन्यासी तावत् चतुर्विधः कुटीचकबहूदकहंसपरमहंसभेदात्. तत्र कुटीचकबहूदकयोस्त्रिदण्डधारणं हंसस्यैकदण्डधारणम् परमहंसस्य न दण्डधारणमिति भेदः । तदेतत् निर्ण॰सि॰ निरूपितं यथा

"कुटीचकोबहूदकोहंसश्चैव तृतीयकः । चतुर्थः परमहंसोऽयं पश्चात् स उत्तमः" हारीतः । आद्यः पुत्रादिना कुटीं कारयित्वा तत्रैव वसन् काषायवासाः शिखोपवीतत्रिदण्डवान् बन्धुषु स्वगृहे वा भुञ्जान आत्मनो भवेत् । एतदशक्तावगतपरम् । द्वितीयस्तु बन्धून् हित्वा सप्तागारादिभैक्षं चरन् पूर्वोक्तवेषः स्यात् । हंसस्तु पूर्वोक्तवेषोऽप्येकदण्डः । "एकन्तु वैणवं दण्डं धारयेदिति" स्कान्दात् । विष्णुरपि "यज्ञोपवीतं दण्डं च वस्त्रं गोवालनिर्मितम् । शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्" इत्यपरमेकदण्ड एव । ये तु शिखोपवीतादित्यागनिषेधास्ते कुटीचकादिपराः ।

यत्तु मेधातिथिः "यावत् सूक्ष्मो दण्डस्तावदेकेन वर्त्तयेदिति" । तदपि तत्परमेव । यच्चात्रिः "चतुर्थी भिक्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिनः" इति तत् वाग्दण्डादिपरं न यष्टिपरम् । "वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च । यस्यैते नियता दण्डाः स त्रिदण्डीति चोच्यते" इति मनूक्तेः । तस्मात् परमहंसस्यैकदण्ड एव । सोऽप्यन्यदुष्टः । विद्वस्तु सोऽपि नास्ति । "न दण्डं न शिखां नाच्छादनं चरति परमहंसः" इति महोपनिषदुक्तेः "ज्ञानमेवास्य दण्ड इति" वाक्यशेषाच्च । यत्तु यमः "काष्ठदण्डो धृतो येन सर्वाशीज्ञानवर्जितः । स याति नरकान् घोरान् महारौरवसंज्ञकानिति" तद्वैराग्यं विना जीवनार्थं संन्यासपरम् । "एकदण्डं समाश्रित्य जीवन्ति बहवो नराः । नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते" इति स्मृतेः । यत्तु मेधिके "एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा । काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरेति" तत्रापि पूर्वोक्ता व्यवस्था ज्ञेया । "त्रिदण्डो एकदण्डो वेति" बौधा॰ "चतुर्थमाश्रमं गच्छेत् ब्रह्मविद्यापरायणः । एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः" चतुर्विंशतिमतञ्च व्यवस्थितविकल्पाश्रयणात् कुटीचकबहूदकविषयम् इति शङ्कराचार्यमतानुसारिणः । रामानुजमतानुसारिणस्तु त्रिदण्डधारणमेवाचरन्तः सम्प्रदायाचारो व्यवस्थाभेदक इति कल्पयन्ति । एतेषां शिखायज्ञोपवीतधारणमपि वैकल्पिकम् ।"शिखी मुण्डो वेति" गौतमस्मरणात् "मुण्डोऽममोऽपरिग्रह" इति वशिष्ठस्मरणात् ।"सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतमिति" काठकश्रुतेः "कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः । केशान् यज्ञोपवीतञ्च त्यक्त्वा गूढश्चरेन्मुनिः" वाक्यशेषोक्तेः मिता॰ । एतदपि कुटीचकबहूदकविषयकम् व्यवस्थितविकल्पाश्रयणेनावगन्तव्यम् । अत्र प्रसङ्गात् यतिधर्म्मा उच्यन्ते ते च मिता॰ दर्शिता यथा

"सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः । एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत्" या॰ ।
"काषायी मुण्डः त्रिदण्डी सकमण्डलुः पवित्रपादुकासनकन्थामात्र" इति देवलः । मौनादर्शी सकमण्डलु सहितश्च भवेत् । एकारामः सर्वमतान्तरेणासहायः सन्न्यासिनामपि स्त्रीभिश्च 'स्त्रीपाशके' इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणात् । तथा च दक्षः "एकोभिक्षु-

चानां तथात्वम्। "उदाहृतः सर्वथा ते गुणानां मयैकदेशः प्रसमीक्ष्य बुद्ध्या" भा० अनु० २६ अ०। अत्रापि तथा। "तान्येकदेशाद्विभ्रष्टं पयोधेः" माघ. "ग्रामिव कदेशमाक्रमणीये प्रख्याति" काव्या० २, ६, १४। एकदेशशब्दश्च पूर्वापरमध्योत्तरादिशब्दः तेन सहैकदेशिना षष्ठीसमासापवादकः एकदेशिसमासः। "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" पा०। "सर्वोऽप्येकदेशः कालेन सह समस्यते" सि० कौ०। "अपरतः पश्चिमराज्यगोचरात्" किरा०। एवं मध्यरात्र इत्यादि। एकाधिकरणे इत्युक्तेः पूर्वश्छात्राणामित्यादौ न। तत्रार्द्धशब्दस्यैकदेशवाचकत्वेऽपि समांशवाचिन एव एकदेशिसमा० अर्द्धं पिप्पल्या इति वाक्ये अर्द्धपिप्पलीत्यादि। असमांशवाचित्वे तु षष्ठीसमासः "क्रोशार्द्धं क्षिप्रजवेन गत्वा" रघुः। द्व्यैक्य एव तेन पिप्पलीनामर्द्धमित्यादौ न किन्तु द्वि त०। एकदेशोऽस्त्यस्य इनि। एकदेशिन् तदंशयुक्ते त्रि० स्त्रियां ङीप्। "अवयविशब्दमाश्रित्य प्रवृत्तसमासस्य एकदेशिसमाससंज्ञा तत्र प्रमाणम्। "पूर्वापरेत्यादि" पा० सू०।

**एकदेशविभावितन्याय** पु० एकदेशो विभावितः प्रमाणादिना संसाध्याङ्गीकारितो येन तमधिकृत्य न्यायो न्यायसाध्यतर्कविशेषः। ऋणादानादिव्यवहारे सुवर्णादिबहुद्रव्याभियोगे प्रतिवादिनाऽपह्नवे वादिनैकदेशमात्रस्य प्रमाणैः साधने एकदेशे तयोः सत्यमिथ्यात्वावधारणमूलके सर्वधनदापनानुकूले तर्कभेदे तत्र एकदेशसाधने कचित् पूर्वं निवेदितसर्वधनदापनं कचिन्नेति विषयविशेषव्यवस्थापनम् मिता० यथा। "निह्नुते लिखितं नैकमेकदेशविभावितः। दाप्यः सर्वं नृपेणार्थं, न ग्राह्यस्त्वनिवेदितः" या०। नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्वमेव निह्नुते अपजानीते तदार्थिनैकदेशे हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण न ग्राह्यस्त्वनिवेदितः पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृतम् इति निवेद्यमानो न ग्राह्योऽनादर्तव्यो नृपेण। एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनो मिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसम्भवात्। एवं तर्कोपकरणासम्भावनाप्रत्ययानुगृहीतादृक्षादेव योगीश्वरवचनतः सर्वं दापनीयम् नृपेण इति निर्णयः। एतच्च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहार दर्शनान्न दोषः तथा च गौतमः" "न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेत्" इत्युक्त्वा "तस्माद्राजाचार्यावनिन्द्यौ" इत्युपसंहरति। न चैकदेशविभावितोऽनुपादेयवचनः प्रत्यर्थित्वितावदिह गम्यते एकदेशविभावितो नृपेण सर्वं दाप्य इति वचनात्। यत्तु कात्यायनेनोक्तम्। "अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितं धनमिति" तत् पुत्रादिदेयपित्राद्यृणविषयम्। तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति प्रतिवदन् निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति "निह्नुते लिखितं नैकमिति शास्त्रं तत्र न प्रवर्त्तते। निह्नवाभावादपेक्षिततर्काभावाच्च" "अनेकार्थाभियोगेऽपीति" कात्यायनवचनं सामान्यविषयं विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्त्तते। ननु "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम्। ऊने वाप्यधिके चार्थे प्रोक्ते साध्यं न सिध्यतीति" वदता कात्यायनेन अनेकार्थाभियोगे साक्षिभिरेकदेशे विभाविते अधिके वा भाविते साध्यं सर्वमेव न सिध्यतीत्युक्तम्। तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्यात्? उच्यते लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने च कृत्स्नमेव साध्यं न सिध्यतीति तत्रार्थतत्त्वापि निश्चितन्न सिध्यतीति वचनात् पूर्ववत् संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव "कुलं निरस्येति" नियमात्। शाठ्यवादौ तु सकलसाध्यसाधनतयोपदिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव तावतैव शाठ्यवादेः सिद्धत्वात्कात्यायनवचनाच्च। "साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत्। स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्त्तितम्"।

अतएवार्थमवलम्ब्य एकदेशविभावितन्यायः प्रवर्त्तते इत्येकदेशविभावितन्यायस्य तात्पर्यार्थत्वम् इति बोध्यम्।

**एकदेह** पु० एकः श्वेतो देहोऽस्य। बुधग्रहे त्रिका०। तस्य ग्रहेषु अतिसुन्दरत्वात् तथात्वम्। एकस्तुल्यो देहो यत्र एकस्मात् देहो यत्र वा। २ वंशरूपे गोत्रे तत्र सर्वेषां तुल्यदेहत्वादेकस्मादुत्पन्नदेहत्वाच्च तथात्वम्। "बहूनि मे गोत्राणि मुनीनां भावितात्मनाम्। एकदेहानि तिष्ठन्ति विभक्तानि विना प्रजाः" हरिवं० ३६। ३ समानदेहाश्रये मिथुनसङ्गे च एकमेकतां गतं देहमस्य। ४ दम्पत्योः तयोर्विवाहेन एकदेहोत्पादनात्तथात्वम् "अस्थिभिर-

स्थीति मांसैर्मेदांसि त्वचा त्वचमिति" श्रुतेः । "आकाशे मरुति तस्मिंश्च लोकाचारे च सूरिभिः । शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा । यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति । जीवत्यर्द्धशरीरे तु कथमन्यो धनं हरेत्" बृह०स्मृतेश्च तयोरेकदेहत्वम् । तत्र पुंसि पु०, स्त्रियां स्त्रीति भेदः एकाङ्गादयोऽप्यत्र । स्त्रियां ङीप् इति भेदः । कर्म्म० । ५एकस्मिन् देहे न० ।

**एकद्यू** पु० एकेन परात्मना दीव्यति दिव–क्विप् ऊठ् श०त० । आत्मारामे क्वचौ यद्धि आत्मनैव रमत इति प्रसिद्धम् । "असन्नोदेकद्यूर्देवाउत याश्च देवीः" ऋ० ८,८०,१०, "एकद्यूः ऋषिः" भा० ।

**एकधन** न० एकमेव धनम् । १एकमात्रधने "सुतानां धा-म्नामेकधनमुपाह्वितम्" शत०ब्रा० ११,४,१,१, "एकमेक-ममस्मद्युक्तं धनं धीयमानमुदकं यत्र । २अयुग्मसंख्याके उदकाधारे कलसे "अयुजा अयुजा एकधना भवन्ति "त्रयो वा पञ्च वा, पञ्च वा सप्त वा, सप्त वा नव वा, नव वैकादश वा, एकादश वा त्रयोदश वा, त्रयोदश वा पञ्चदश वा द्वन्द्वमद्दर्मिथुनं प्रजननम् । अथ य एष एकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वा एषां सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषां सधनं तस्मा-देकधना नाम" शत०ब्रा० ३,९,२,४, "प्रत्यगेकधनान-युग्मानुदहरणोक्षिप्रभृत्यायमुदयम्यः" काव्या० ९, ३,२२, "उत्तरस्येशानकोऽग्यात् प्रत्यक् अधोभूमौ एक-धनानयुग्मान् स्थापयिदधाति एकधनशब्दार्थं स्वयमेव आचष्टे उदकहरणानीति उदकं ह्रियते एभिरित्युदकहरणाः कलशास्तान् त्र्यादिपञ्चदशपर्य्यन्तायुग्मसंख्यान् विषम-संख्यान् । तत्राग्निष्टोमे त्रयः पञ्च वा, अत्यग्निष्टोमे-ऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिनि सप्त नव वा, वाजपेये नवैकादश वा, अतिरात्रे एकादश त्रयोदश वा आप्तोर्यामे त्रयोदश पञ्चदश वेति" कर्कः "अत्र कलशपरत्वात् पुंस्त्वम् अपां विशेषणत्वे स्त्रीत्वम् "वासतीवरीरेकधनानुद्विधारा इत्यादावेकधनास्" आश्व० श्रौ० ५,१,९। "द्विविधा आपः वसतीवर्य्य एकधनाश्च तत्र पूर्वेद्युरेव वसतीवर्य्यो गृहीता एकधना इदानीं गृह्यन्ते । ता गृहीता यज्ञदेशादेव यजनदेशं प्रति यथा वर्त्तन्ते तद्देयमनुवक्तव्या" नारा० वृ० । अपामाधारं वि-ना देशान्तरगमनासम्भवात् प्रयुक्तवाक्याच्च पुनरयुग्मकलशै-राहरणं कर्त्तव्यमिति बोध्यम् । वस्तुतः एकधनशब्देन अयु-ग्मसंख्याककलशा उच्यन्ते । स आधारत्वेनाप्यस्य अच् । ३तत्स्थे जलादौ त्रि० इत्येव न्याय्यम् "तानेकधनानाम्" काव्या० ९,२,२२,सू० "एकधनानामेकधनस्थानामपामिति" कर्केण तथा व्याख्यानात् "एकधनांस्त्रीनुद्धयन्ति" काव्या० ३,१०, "एकधनान् उन्नयन्ति उदकेन पूरयित्वा उत्क्षि-पन्ति जलमध्यादूर्द्ध्वं नियन्ति निष्कासयन्ति" कर्कः एकं मुख्यं धनम् कर्म० । ४मुख्ये धने न० "सोमसाम्ना-यतामिन्द्रायैकधनविदे" यजु० ५,७, "एकं धनं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित् । यद्वा सोमकलशाय यैर्जलमानीयते ते कुम्भाः एकधना एकं धनं सोमरूपं यत्रेति वेत्ति जानातीति" वेददी० "एक-धनसाहक् कलशः" अत्यन्त इति । एकधनिन् तादृशैक-धनयुक्ते त्रि० "प्रत्नेरुद्रानेकधनिनः" शत०ब्रा० ३,९,२,१०, "एकं समानं साधारणं धनं यस्य । ५अविभक्ते दायादिनि च त्रि० । अविभक्तधनानां संसृष्टधनानाञ्च साधारणधन-त्वात् तथात्वम् । ७एकमात्रधनयुक्ते त्रि० ।

**एकधर्म्मिन्** त्रि० एकस्तुल्यो धर्म्मो यस्य अनिच् स० । तुल्यधर्म्म-युक्ते स्त्रियां वा डाप् । एकोधर्म्मोऽस्यास्य इनिरप्यत्र साधुः । "सर्वेषामेकधर्म्मिणाम्" स्मृतिः । अत्र स्त्रियां ङीप् ।

**एकधुरा** स्त्री एका धूः कर्म०अ समा० । १एकभारे । तद्वह-तीत्यर्थेऽण् तस्य लुक् । एकधुर-एकभारवाहके २गवादौ त्रि० । अस्यार्थे अच् । ३एकधुरायुक्ते त्रि० । एकधुरं वहति ख । एकधुरीण एकधुरवाहके त्रि० ।

**एकधुरावह** त्रि० एकधुरां वहतीति वह–अच् ईत० । एक-भारवाहके गवादौ ।

**एकनक्षत्र** न० एकं नक्षत्रं यत्र । एकताराके नक्षत्रभेदे आर्द्रा चित्रा स्वातिश्च एकताराकं नक्षत्रं तच्च अश्वे आयश्चे ४९७पृ० दर्शितम् । शत०ब्रा०भाष्ये तु पुष्यस्यैक-ताराकत्वमुक्तं तदनुसारेण शरत्कायामयाभिप्रायोऽयं किन्तु तन्मूलं ज्योतिषवचनं मृग्यम् । वस्तुतोऽत्र एक-मात्रस्यायुग्मपरत्वं पुष्यस्य च त्रिताराकत्वेन तदाभि-प्रायेण पुष्यस्यैवोक्तिः "अयुग्मं हि पितृणामेकनक्षत्रे एकनक्षत्रं हि पितृणाममावास्यायाम् अमावास्या वा एकनक्षत्रमेको हि यद्वेतां रात्रिं सर्वाणि भूतानि सं-वसन्ति तेनो तं काममाप्नोति या सर्वेषु नक्षत्रेषु" शत० ब्रा० १०,१२,८,१,२ । 'एकनक्षत्रे काव्या० २१, २,२ । एकं नक्षत्रं हि पितृणामिति" एकनक्षत्रं च यत्रैका तारा चित्रा स्वाति रेवत्यादि यथा"

कर्क्कः । अत्र रेवत्या द्वात्रिंशत्तारत्मकत्वम् अश्लेषा-मन्ते उक्तम् अतस्तस्या एकत्वाभावात् रेवत्यादिश-ब्देन बहु॰ अश्विनीति बोध्यम् तस्याश्च त्रितारत्वेनायुग्मप-रत्वम् । अमावास्या वा एकनक्षत्रमित्युक्तेः २अमावास्या-याञ्च । तत्र च रविचन्द्रयोरेकनक्षत्रस्थितत्वात् एकनक्ष-त्रतुल्यफलदातृत्वाद्वा तथात्वम् कर्म॰ । ३एकस्मिन् नक्षत्रे

**एकनट** पु॰ एको मुख्यो नटः । नाट्यप्रवर्त्तके सूत्रधारनटे त्रिका॰

**एकपक्ष** पु॰ एकः पक्षो यस्य । १सहाये कर्म॰ । एकत्र २पक्षे पु॰

**एकपत्नी** स्त्री एकः समानः अनन्यो वा पतिर्यस्याः नान्तादेशः नान्तत्वात् ङीप् १सपत्न्याम् "सर्व्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् । सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रव-तीर्मनुः" मनुः २पतिव्रतायाञ्च । "यो धर्म एकपत्नी-नां काङ्क्षन्ती तमनुत्तमम्" मनुः "तांश्चावश्यं दिव-सगणनातत्परामेकपत्नीम्" मेघ॰ । "कामैकपत्नीव्रत-दुःखशीलाम्" कुमा॰ । एकःपतिरीशो यस्य वा कप् । एकपतिक एकस्वामिके त्रि॰ स्त्रियां टाप् । "पत्युर्नोयज्ञ-संयोगे" इत्यधिकारात् भर्त्तर्य्येकस्यैव नादेशङीपो नेतरस्य ।

**एकपत्रिका** स्त्री एकं गन्धयुक्ततया श्रेष्ठं पत्रं यस्याः कप् टापि अत इत्वम् । गन्धपत्रावृक्षे राजनि॰ ।

**एकपद** न॰ एकं पदं पदोच्चारणयोग्यकालो यत्र । एकपदो-च्चारणयोग्यकाले १तत्काले । कर्म॰ । एकस्मिन् २स्थाने ३सुप्तिङन्तरूपे पदे च "निहन्त्यरीनेकपदे य उदात्तः स्वरानिव" माघः । "अनुदात्तं पदमेकवर्जम्" पा॰ एकपदे अन्यस्वरस्य उदात्तेन निघातविधानात्तेन सादृश्यमित्युक्त-मिति बोध्यम् "कथमेकपदे निरागसम्" रघुः । एकं पदं चरणो यस्य । ४एकचरणमनुष्ये ५तद्युक्ते देशभेदे पु॰ स च देशः बृहत्सं॰ कूर्म्मविभागे प्राच्यामुक्तः । अथ पूर्व्वस्यामञ्ज-न इत्याद्युपक्रम्य "एकपदताम्रलिप्तिककोशलकावर्द्धमानाश्चेति" एकं पदं कोष्ठं पूजास्थानं यस्य । वास्तुमण्डले एककोष्ठपूज्ये ६देवभेदे पु॰ "भृगुश्चैकपदो ज्ञेयः" वास्तु॰ त॰ देवीपु॰ । एकं पदं कोष्ठरूपं स्थानम् । कर्म्म॰ । वास्तुमण्डलस्थे ७एककोष्ठात्मकस्थाने न॰ "इन्द्रश्चेन्द्रात्मजश्चोभावेकैकपद संस्थिता" तत्रैव । तत्कोष्ठविन्यासनादिप्रकारो वास्तुशब्दे वक्ष्यते । एकं पदं चरणोऽस्य । ८मृगभेदे पुंस्त्री । स्त्रियां जातित्वात् ङीष् । "कर्णैकपदाश्वास्यैर्निकुष्टं चकसाद्विभिः" भाग॰ ४,६,१५ । एकं सुबन्तं पदं वाचकं यस्य । ९एकपदवाच्ये त्रि॰ "किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः । किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम्" । यक्षप्रश्ने "दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः । सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम्" भा॰ व॰ ३१२ अ॰ । युधिष्ठिरेणैकपदवाच्यदाक्ष्याद्युत्तरे उक्तम् एकं पदं पदविन्यासविशेषो यत्र । १०रतिबन्धभेदे पु॰ "पादमेकं हृदि स्थाप्य द्वितीयं स्कन्धसंस्थितम् । कामी धृत्वा रमेत् कामो बन्धस्त्वेकपदः स्मृतः" रत्नमालोक्तेः ।

**एकपदि** अव्य॰ एकः पादः साधनं यस्मिन् प्रहरणे । द्विद-ण्ड्यादि॰ इच्समा॰ भत्वात् पद्भावश्च । पादसाधने प्रहरणे ।

**एकपदी** स्त्री एकं गन्तुः समानं पदं तद्विक्रमस्य गौ॰ ङीष् । पथि अमरः । तत्र हि गन्तुः पदसमानचिह्नं दृश्यते इति तस्य तथात्वम् । एकः पादो यस्याः संख्या-पूर्व्वकत्वात् पाद्भावः कुम्भपद्या॰ ङीष् पद्भावश्च । २एक-चरणयुक्तायां स्त्रियाम् ३एकहस्तचतुर्भागयुक्तायामृचि च "गायत्र्यस्येकपदी द्विपदी त्रिपदी" श्रुतिः । "एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीम्" यजु॰ ८,३१ ।

**एकपरि** अव्य॰ एकेन विपरीतं प्रवृत्तम् "अक्षशलाकासंख्याः परिणा" पा॰ अव्ययी॰ । एकेन विपरीततया पतनेन परा-जये द्यूते व्यवहारेऽयं प्रयोगः । यस्य यथा पातने ज-योभवति तस्य एकस्यान्यथाचारेः पातने एवं प्रयो-जनः एवं व्यवहारेऽपि ।

**एकपर्णा** स्त्री एकं पर्णं तपःसाधनतया आहारो यस्याः । शैल-राजस्य मेनायामुत्पन्ने हिमवत्त्रयमध्ये दुहितृभेदे । "तिस्रः कन्यास्तु मेनायां जनयामास शैलराट् । अपर्णामेकपर्णाञ्च तृतीयामेकपाटलाम्" इत्युपक्रम्य । "आहारमेकपर्णेन एकपर्णा समाचरत्" हरि॰ १८ अ॰ । स्वार्थे कन् बहु॰ कप् वा अत इत्वम् अपर्णिकाप्यत्र । "अपर्णा निराहारा एकाग्रा एकपर्णिका" देवीपु॰ ४५ अ॰ । अस्य पूर्वोक्तवा-क्येनैकवाक्यतया हिमवत्कन्याभेदपरत्वम् न तु दुर्गापर त्वमिति बोध्यम् । एकमात्रं पर्णमस्य । एकपत्रावृक्षे-ष्वादौ त्रि॰

**एकपर्व्वतक** पु॰ पर्वतभेदे "कुरुभ्यः प्रस्थितास्ते तु (कृष्ण-भीमार्ज्जुनाः) मध्येन कुरुजाङ्गलम् । रम्यं पद्मसरो गत्वा कालकूटमतीत्य च । गण्डकीञ्च महाशोणं सदानीरां त-थैव च । एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते । उत्तीर्य्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोशलान्" भा॰ स॰ २१ अ॰ ।

**एकपलाश** पु॰ एकः पलाशो यत्र । एकपलाशवृक्षे तत्र भवः तस्येदं वा गहा॰ छ । एकपलाशीय तत्रभवे तदीये च त्रि॰

**एकपाटला** स्त्री एकं पाटलं पुष्पं तपःसाधनतया आहारो

यस्याः । छिन्नरोमेणाबाहुस्तूपवद्दुच्छिदलमध्ये दुच्छि-क्षभेदे एकपत्त्रोगच्छे भूलं इस्वं तत्रैव तन्नामनिरुक्तिर्यथा । "पाटलापुष्पमेकञ्च यादधावेकपादका" ।

**एकपातिन्** त्रि॰ एकः सन् पतति पत—णिनि "बहुलमेति" स॰ । एकाकितया १पतनशीले अतिरात्रयागस्थे २ग्रहविशेषे न॰ "एकपातीनि स्वह्नानाम्यतिरात्राः" आश्व॰श्रौ॰१०,६,१२ । "चतुर्विंशाभिजिद्विषुवन्महाव्रतादीनि एकपातीन्यहानि तानि अतिरात्रसंस्थानि भवन्ति" नारा॰ । ३ऋग्भेदे स्त्री ङीप् । "धाय्याचासैकपातिनीः" आश्व॰श्रौ॰ ५,१८,११ । "अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पञ्चः" ६,५,६ ।

**एकपाद्** त्रि॰ एकः पादोऽस्य अन्त्यलोपः समा॰ । १विष्णौ "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्" विष्णुस॰ । "एकः पादोऽस्येत्येकपात् पादोऽस्य विश्वाभूतानीति" श्रुतेः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" गीतोक्तेश्च" भा॰। परमेश्वराभिन्नत्वेन एकपादयुक्तत्वेन वा २शिवे च । स च रुद्रभेदः । "अजैकपादहिर्बुध्नो विरूपाक्षश्च रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः । रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" विष्णुध॰ अन्यनामानोऽपि रुद्राः सन्ति तत्र दानादौ त्वेत एव पूज्याः । अजेतिनामान्तरं तेन एकादशसंख्यापूर्त्तिः अतएव विष्णुध॰ "अजनामा महारुद्रः" इत्यादिना तद्ध्यानमुक्तम् "एकपादभिधो विप्र ! कर्त्तव्यः स्याद्वहन् परम् । चक्रं डमरुकं शूलं मुद्गरं तदधोवरम् । वर्णं खड्गं मेघवाचान् खट्वाङ्गञ्च मस्तके । चतुर्थं चापि कपालञ्च कौमुदीं तक्षमोचटम् । परशुं चक्रमाधत्ते क्रमाद्धामाष्टके करे । अनेकभोगसम्पत्तिं कुरुते यस्तु तं सदा" इति तत्रैव एकपदोध्यानान्तरमुक्तम् ।३एकपादयुक्ते त्रि॰ स्त्रियां ङीपि पद्भावः एकपदीति भेदः एकपदीशब्दे उदा॰।

**एकपाद** पु॰ कर्म॰। १एकमात्रचरणे "ध्यायन्तिष्ठदेकपादेन परमं योगमास्थितः" भा॰अनु ०८३अ॰। "उत्तिष्ठदेकपादेन दश वै विबुधर्षभान्" भाग॰ ४,१,१९ "एकःपादोऽस्य समासान्तविधेरनित्यत्वात् नान्त्यलोपः।एकपादयुक्ते २परमेश्वरे । "पादोऽस्य विश्वाभूतानीत्युक्तेः तस्य सर्वभूतरूपैकपादत्वात् तथात्वम् "तत्र शिश्रियेऽज एकपादः" ऋ॰ १२,1,६,२, एकचरणयुक्तमात्रे त्रि॰ स्त्रियां जातित्वात् ङीष् टाप् वा । "खर्वी खर्वी निशाचार्यो दीर्घजिह्वा-प्रतिजिह्विकाम् । त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम्" भा॰व॰२७९अ॰ "एकपादांश्च पुरुषान् केरलान् वनवासिनः" भा॰ स॰ ३०अ॰ सहदेवदक्षिणदिग्विजये "एकपादांश्च तत्राहमपश्यं द्वारि वारितान्" ५०अ॰ । ३असुरभेदे "एकपादमहोदरौ" भा॰आ॰ असुरगणनायाम् । एकपादोऽवलम्बनत्वेनास्त्यस्य अच् । ५एकपादमात्रालम्बके । "पर्वतारोहणं कृत्वा एकपादो विभावसुम् । निरीक्षेत निराहार ऊर्द्ध्वबाहुः कृताञ्जलिः" भा॰आ॰१२५अ॰

**एकपादिका** स्त्री एकः पादोऽवलम्बनत्वेनास्त्यस्याः ठन् । एकपादावलम्बनेन खगानां स्थितिभेदे "अथावलम्ब्य क्षणमेकपादिकाम् तदा निदद्रावुपपल्वलं खगः" नैष॰।

**एकपिङ्ग** पु॰ एकं पिङ्गं नेत्रमस्य । कुबेरे । तस्य क्रूरदृष्ट्या पार्वतीदर्शने वामनेत्रस्य स्फुटने शिववाक्येन प्रसादायात्तया वरेण पिङ्गलं वामनेत्रं जातमिति तस्य तथात्वम् तत्कथा काशी॰ यथा

"प्रसार्य नयने पूर्व्वमुमामेव व्यलोकयत् । शम्भोः समीपे का योषिदेषा सर्वाङ्गसुन्दरी । अनया किं तपस्तप्तं ? ममापि तपसोऽधिकम् । अहो रूपमहो प्रेम सौभाग्यश्रीरहो भृशम् । क्रूरमालोकते यावत् पुनः पुनरिदं वदन् । तावत् प्रस्फोटितं नेत्रं वामं वामविलोकनात् । अथ देव्यब्रवीद्देवं किमसौ दुष्टतापसः । असकृद्वीक्ष्य मां वक्ति व्यकुर्वन्नो तपःप्रभाम् । असकृद्दक्षिणेनाक्ष्णा पुनर्मामेव पश्यति । असूयमानो मे रूपप्रेमसौभाग्यसम्पदः । इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः । उमे ! त्वदीयपुत्रोऽयं न च क्रूरेण चक्षुषा । संपश्यति तपोलक्ष्मीं तव किन्त्वधिवर्णयन् । इति देवीं समाभाष्य तमीशः पुनरब्रवीत् । वरं ददामि ते वत्स ! तपसाऽनेन तोषितः । निधीनामधिनाथस्त्वं गुह्यकानां भवेश्वरः । यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत ! । पतिः पुण्यजनानाञ्च सर्वेषां धनदो भव । मया सख्यञ्च ते नित्यं वत्स्यामि च तवान्तिके । अलकां निकषा मित्र! तव प्रीतिं विवर्द्धयन् । आगच्छ पादयोरस्याः पत ते जननी त्वियम् । इति दत्त्वा वरान् देवः पुनराह शिवां शिवाम् । प्रसादं कुरु देवेशि ! तपस्विन्यङ्गजे तव । देव्युवाच । वत्स ! ते निर्मला भक्तिर्भवे भवतु सर्व्वदा । भवैकपिङ्गो नेत्रेण वामेन स्फुटितेन च । देवदत्तास्तु ये तुभ्यं वरास्सन्तु तथैव ते । कुवेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत !" एकपि-

कृतोऽप्यत्र । एकपिण्डत्वं नेत्रयुक्तत्वात्तस्य तथात्वम् ।

**एकपिण्ड** त्रि० एकः समानः पिण्डः देहः श्राद्धदेयपिण्डो वा यस्य । १सपिण्डे तस्य एकदेहारब्धदेहकत्वात् दायत्व-भोक्तृत्वान्यतरसम्बन्धेनैकपिण्डसम्बन्धाद्वा तथात्वम् । “स-वायाशुदकं कार्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः संप्र-दातैषां पञ्चमो नोपपद्यते” इति मनूक्तेः । लेपभाजश्चतुर्था-द्याः पित्राद्याः पिण्डभागिनः” इत्युक्तेः “जीवति यत्-पिण्डदाता स मृतः सन् तत्पिण्डभोक्तान्युक्तेश्च सप्रा-नामेव सपिण्डत्वमिति दायभागानुसारिणः ।

**एकपुरुष** पु० एकः श्रेष्ठः पुरुषः । १पुरुषोत्तमे परमेश्वरे तस्य श्रेष्ठत्वमुक्तं गीतायाम् “यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्त-मः” तस्य च पुरुषत्वमन्तर्यामितया सर्वदेहे पुरि वा-सात् । “द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्न-न्नन्योऽभिचाकशीति” श्रुतौ वृक्षरूपदेहे वासोक्तेश्च पुरु-षत्वम् । २प्रधानपुरुषे च । एकः पुरुषो यस्मिन् । ३एकपुरुषान्विते त्रि० । “तदेकपुरुषं राष्ट्रं विश्वसृड्ढ-निर्ममम्” भाग० ६, ५, ७, “एकः पुरुषो भोक्ता यत्र । ४ए-कपुरुषभोक्तृके भोगभेदे तत्रायं भेदः प्रपितामहादीनां त्रयाणां जीवित्वे एकपुरुष एव भोगः यथाह दा० त० व्यासः “पिता पितामहो यस्य जीवेच्च प्रपितामहः । त्रयाणां जीवतां भोगो विज्ञेयो ह्येकपुरुषः” । “युगपद्भोगे वर्षशतैरपि न स पुरुषिकः प्रपितामहस्य तत्र स्वातन्त्र्यात् तस्यैव भोगस्तेन तत्रैकपुरुषो भोगः” दाय० त० रघु०

**एकपुष्कल(र)** पु० एकं पुष्करं मुखं यस्य रस्य वा लः । काहले वाद्यभेदे । “अथ प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कला(रा)-वाः” भा० उ० ८३ अ० “एकपुष्कराः काहलाः” नीलकण्ठः

**एकपुष्पा** स्त्री एकं पुष्पं यस्याः । वृक्षभेदे यस्य क्रमात् पुष्पं जायते तस्मिन् जातित्वेऽपि अजा० टाप् ।

**एकप्रस्थ** पु० कर्म० । १एकस्मिन् प्रस्थे धान्यमानभेदे माषादि-धान्यदानेऽयम् । एकः प्रस्थोऽस्य । २एकप्रस्थयुक्ते पर्वते पु०

**एकफला(ली)** स्त्री एकं फलमस्याः सुगन्धचोक्मते टाप् । पा० मते ङीप् । एकमात्रफलके ओषधिभेदे

**एकभक्त** न० एकं भक्तं भोजनं यत्र । पक्षन्तुक्ते व्रतभेदे तत्स्व-रूपकालादिनिरूपणं कालमाधवीये यथा

“अथैकभक्तनिर्णयः । मत्स्यपुराणे वैशाखव्रते पद्यते “प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः” इति । तस्मादा-

वेकभक्तव्रतं त्रिविधम् स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधि-रूपं चेति । तेष्विदानीमुदाहृतं स्वतन्त्रम् । तत्रेदं चिन्त्यते । किमुपवासवत् तिथिरत्रापि ग्रहीतव्या ? उत प्रकारान्तरेणेति ? । उपवासवदिति तावत् प्राप्तम् “दैवं पित्र्यं तथा कार्यम्” इति वचनेन उपवासैकभक्तादिव्रत-स्यापि विवक्षितत्वात् । न च कर्मकालव्याप्त्या तन्निर्ण-यइति शङ्कनीयम् । तत्कालस्य व्याप्त्यनिर्णीतत्वात् । किञ्च तन्निर्णये कर्मकालव्याप्तिवचनस्य पित्र्यविषय-त्वेनोपपत्तेः । तस्मादुपवासवत्तन्निर्णय इति प्राप्ते ब्रू-मः । कर्मकालव्याप्तिरेवात्र निर्णयहेतुः । कर्मकालस्त-त्कर्मस्वरूपं चेत्युभयं स्कन्दपुराणे दर्शितम् । “दिनार्द्ध-समयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्त-मतस्तत् स्यादिवैव हीति” । देवलोऽपि “दिनार्द्धसमये-ऽतीते भुज्यते नियमेन यत् । एकभक्तं तु तत् प्रोक्तं न्यूनं ग्रासत्रयेण त्विति” । अत्र च दिनार्द्धस्योपरि सार्द्धमुहूर्त-परिमितोऽस्य कालः पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य कालः दिनार्द्धेऽतीते सति समनन्तरत्वात् । अतएव प्राचीनोऽपराह्णो गौणः कालः द्विवेलत्व तुल्यत्वात् एवंस्थिते सति मुख्यकालव्यापिनी तिथि-र्ग्रहीतव्या अतएव पद्मपुराणम् । “मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति” । बौधायनोऽपि “उदये तूपवासस्य नक्तस्यास्तमये तिथिः । मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिरिति” नचात्रोपवासन्यायो युक्तः तत्र पूर्वविद्धायामेव विशेषशास्त्रपर्यवसानात् । द्विविधं हि विशेषशास्त्रं तिथिप्रयुक्तमेकं कर्मप्रयुक्तमपरम् । तत्र “पौर्णाह्णिकास्तु तिथयो दैवे” इत्यनेन कर्मविशेषेण सा-मान्यशास्त्रेणोत्तरविद्धायां प्राप्तायाम् “उपोष्याः परसंयुताः पराः पूर्वेण संयुताः” इत्यनेन कर्मविशेषेण विशेषशास्त्रेण पूर्वविद्धतिथिविषये अपि सामान्यविशेषशास्त्रे उदासीने “पूर्वाह्णिकास्तु तिथय” इति तिथिमात्रमुपजीव्य प्रवृत्तत्वात् सामान्यशास्त्रम् “प्रतिपत् सम्मुखी कार्या” इति तिथिविशेषमुप-जीव्य प्रवृत्तत्वाद्विशेषशास्त्रम् । तथा सति द्विविधेनापि विशेषशास्त्रेण पूर्वविद्धायामेवोपवासः सुस्थितः । अत्र तु मध्याह्नव्यापिनीत्येतत्कर्मविषयं विशेषशास्त्रम् । अत-स्तदनुसारेण निर्णयो युज्यते ! ननु प्रतिपत्सम्मुखी का-र्येत्यनेन तिथिविषयेण विशेषशास्त्रेण कुतो न निर्णय इति चेत् उपवासविषयत्वेनापि तस्योपपत्तेरिति ब्रूमः । ननु मध्याह्नव्यापित्ववचनमपि तिथ्यन्तरैकभक्तविषयत्वेनोप-

पादव्यापित्वं वक्तव्यम् अतः कर्मविशेषशास्त्रतिथिविशेषशास्त्रयोः समानबलत्वमिति चेत् अस्तु नाम किं नश्छिन्नं मध्याह्नव्यापित्वमंशतस्तयोः पूर्वविद्धायामपादव्यापित्वं वक्तव्यत्वेन विरोधाभावात्। यदा तूत्तरविद्धायामेव मध्याह्नव्यापित्वं तदा विरोध इति चेत्। बाढम्। तथापि तिथिविषयविशेषशास्त्रात् कर्मविषयविशेषशास्त्रं प्रबलं मध्याह्नतिथेर्गुणत्वात् कर्मणश्च प्रधानत्वात्। तस्मादेवं विधैर्विषयैः कर्मकालव्याप्त्यैव निर्णेतव्यम्। अत्र निर्णेतव्यो विषयो भिद्यते। पूर्वेद्युरेव मध्याह्नव्यापित्वम् परेद्युरेव तद्व्यापित्वम्। उभयत्र तद्व्यापित्वम् उभयत्र तदव्यापित्वम् उभयत्र साम्येन तदेकदेशव्यापित्वम्। उभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति। तत्र प्रथमद्वितीययोर्मध्याह्नव्यापित्वस्य निर्णायकत्वम्। इतरे पूर्वविद्धा ग्राह्या मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेरधिकत्वात्। अनेनैव न्यायेनोभयत्र मुख्यकालव्याप्त्यभावेऽपि गौणकालव्याप्तिलाभात्पूर्वविद्धैव। पञ्चमेऽप्ययमेव न्यायो योज्यः। षष्ठे तु यदा पूर्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदाधिकगौणकालव्याप्त्यैव पूर्वेद्युर्ग्राह्या। यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदा गौणकालव्याप्त्यभावेऽपि मुख्यकालव्याप्त्याधिक्यानुसारेण परेद्युर्ग्राह्या! नन्वस्त्वेवं स्वतन्त्रैकभक्ते निर्णयः अङ्गभूते तु कथम्?। तत्र कालानुपपत्तिः? इति चेत्। "पूजाव्रतेषु सर्वत्र मध्याह्नव्यापिनी तिथिः"। "मध्याह्ने पूजयेद्भूपेत्यादि" शास्त्रैरङ्गिनः पूजादेर्मध्याह्ने विहितत्वेनाङ्गस्यैकभक्तस्यापराह्णादौ मुख्यकालासम्भवः। मा भूदीदृशविषये मुख्यः कालः। प्रधानानुसारेण गुणस्य नेतव्यत्वात्। यदा स्वतन्त्रैकभक्तेऽपि केनचिन्निमित्तेन मुख्यकालासम्भवे गौणकालोऽभ्यनुज्ञायते तदा किमु वक्तव्यम् अङ्गभूते। यत्तूपवासप्रतिनिधिरूपमेकभक्तं तदुपवासतिथौ कार्य्यं तस्य गौणेऽभ्यनुज्ञातत्वात्। अतएव सुमन्तुः "तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तथेति" न च तादृशमेव नास्तीति शङ्कनीयम्। उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्वनुज्ञयानशनैकभक्तस्य सम्भावितत्वात्। "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलम्पयः! हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति" शास्त्रात्"। "एकभक्तेन नक्तेन तथैवायाचितेन च" या० एकस्मिन् नान्यस्मिन् भक्तः। २नितान्तभक्ते ३अनन्यभक्ते च त्रि० "पौष्णाद्यं चैकभक्ताद्" मनुः। एकभक्ताद्य अन्य मासक्षामःदत्त।

**एकभक्ति** स्त्री एका अनन्यविषया भक्तिः। १नितान्तभक्तौ २अनन्यभक्तौ एकस्मिन् अनन्यस्मिन् भक्तिरस्य। ३नितान्तभक्ते त्रि० "एकभक्तिर्विशिष्यते" गीता।

**एकभक्तीनय** पु० एका भक्ती रीतिस्तस्य तामधिकृत्य नयः। एकरूपाणां बहूनां मध्ये एकस्य यथा प्रवृत्तिरन्यस्यापि तथा प्रवृत्तिरित्येवं ज्ञापके न्यायभेदे "सर्वेषामेकरूपाणामेकस्यापि यदुच्यते। सर्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृताः" इत्युक्तलक्षणम्।

**एकभार्य्या** स्त्री एकस्यैव भार्य्या। १अनन्यपतिकायां साध्व्यां स्त्रियां "तामेकभार्य्यां परिवादभीरोः" रघुः। "एकभार्य्याम् च साध्वीम्" म० भा०। एका भार्य्या यस्य। २अन्यस्त्रीरहिते पु०। एकेन भार्य्यः। ३एकभर्त्तव्ये त्रि०।

**एकभाव** पु० एको भावः। अनन्यविषये १रागे २एकस्वभावे ३एकाशये "स्त्रीषु यासोः कुपितस्य पञ्चस्त्रीणां विशेषतः। यो भवत्येकभावेन न स जीवति मानवः" इति पञ्चत०। एकस्य भावः ष्यञ्। ४अभिन्नत्वे अभेदे "स्तेजसा सत्वगुणप्रवाहमात्मैकभावेन भजध्वमद्धा" भाग० ४,२१,१६, एकोभावो यस्य। ५तुल्यभावके त्रि० "या वै यूयं सौभद्यैकभावः" भा० अनु० ७६अ०।

**एकभूत** त्रि० अनेक एको भूतः च्व्यर्थे न च्विप्रा० त० स०। १एकीभूते। एकस्मिन् भूतः। २एकाग्रके च "नियतेनैकभूतेन मनसा वरदर्षभम्" भा० शा० ४२अ०।

**एकभूम** पु० एका भूमिर्यत्र ब० समा० डच्। एकभूमिरस्त्यस्य अर्श० अच् वा। (एकतला) प्रासादभेदे एवं द्विभूमादयोऽपि (दोताला) (तेतला) इत्यादि प्रासादभेदे।

**एकमति** स्त्री एका मतिः। एकस्यां मतौ "तथा मनुर्वै भगवान् पितामहोयमेकमत्या पुरुदक्षिणैर्मखैः" ४,१,२४, एका मतिर्यस्य। २एकविषयमतियुक्ते "तैरेकमतिभिर्भूत्वा यत्नोक्तं शास्त्रमुत्तमम्" भा० शा० ३२७अ०। मतेरैक्यत्वम् एकरूपविषयावलम्बनं विरोधविषयानवलम्बनञ्च। तस्य भावः ष्यञ्। ऐकमत्य एकविषयज्ञाने विसंवादित्वाभावे च "ऐकमत्यं महाधियाम्" पुरा०।

**एकमुख** न० एकं मुखं प्रधानं यत्र। १एकप्रधाने द्यूतादौ "द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्" या०। एकं मुखं द्वारं यत्र। २एकद्वारे मण्डपभेदे। "मण्डपं कारयेत्तत्र प्राङ्मुखं वाप्युदङ्मुखम्" पुरा० अत्राष्टकादौ एकमुखमण्डपं विहितम् अन्यत्र तु चतुर्मुखमिति भेदः।

एव मुखमिथोद्‌गताकारविशेषोऽस्य । एकवक्त्राकारोद्गताङ्ग-विशेषयुक्ते २रुद्राक्षफलभेदे । तत्फलस्य एकादिचतुर्दशमुखता शास्त्रे उक्ता । तन्मुखन्तु "रुद्राक्षस्योद्भवं प्रोक्तं मुखं पुच्छन्तु निर्गमम्" तन्त्रसा० स्कन्दमहेश्वरे उक्तम् । रुद्राक्षशब्दे विवृतिः। एकवक्त्रादयोऽप्यत्र ।

एकमूला स्त्री एकं मूलमस्याः अच्। एकं मूलमस्याः बहु० तु जातौ ङीप् स्यात् । ( शालपान ) १शालपर्ण्याम् अतस्याञ्च वैद्यकम् । २एकमूलयुक्ते त्रि० ।

एकयष्टिका स्त्री एका यष्टिरिवावली यस्याः ब०कप् । (एकनर) एकावलीहारभेदे ।

एकयोनि त्रि०एका समा योनिर्जातिरस्य ।समानजातौ "एत-द्विधानं विज्ञेयं विभागमेकयोनिषु" मनुः "समानजा-तिषु" कुल्लू० कर्म० । २एकस्मिन्नुत्पत्तिस्थाने स्त्री एका योनिरुत्पत्तिस्थानं यस्य। ३समानोत्पत्तिस्थानके त्रि०।

एकरज पु० एकं श्वेततया रज्यते केशोऽनेन रन्ज-घञर्थे करणे क। भृङ्गराजे जटा० । स च केशरञ्जनद्रव्यम् ।

एकरस त्रि० एकोऽनन्यविषयकोरसः रागः अभिप्रायः एको-ऽभिन्नः स्वभावो वाऽस्य । १एकरागे २एकाभिप्राये ३अ-भिन्नस्वभावे च "अस्थूलमनण्वह्रस्वमदीर्घमनन्तमनपरम-बाह्यं प्रज्ञानघनमेकरसम्" इति श्रुतिः "चिदेकरसवस्तुनि वेदा० । एकोरसोयत्र । ४एकरागविषये त्रि० "तपस्येक रसे रतम्" रामा० । एकोरसोऽङ्गत्वेन यत्र । प्राधा-न्येन एकरसयुक्ते ५नाटके न० ।"एकएव भवेदङ्गी शृ-ङ्गारो वीरएव वा । अङ्गमन्ये रसाःसर्वे" इति सा०द० उक्तेः नाटकस्य प्राधान्येन शृङ्गारवीररसान्यतरत्वेन वर्णनीयत्वात्तथात्वम् ।

एकराज् पु०एको राजते क्विप् । १सार्वभौमे "हिरण्यकशि-पूराजन्नजेयमजरामरम् । आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत" भाग०७,३,१, "तस्मिन् महेन्द्रभवने महा-बलो महासुरोनिर्ज्जितलोकएकराट्" भाग०७ ४, ११, "यावदीशो महानुर्व्वीमाभिमन्यव एकराट्" भाग० १,१८,६, "एकएव राजते राज-क्विप् । २पर-मेश्वरे तस्य भासा सर्वस्य भासनात् तस्य तथात्वम् । तथा हि "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" श्रुत्या "यदादित्यगतं तेजो जगद्भासयतेऽखि-लम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" गीतोक्तेः "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्य त्रिकं ब्रह्मरूपं मायारूपं ततो द्वयम्" इत्युक्तेश्च तस्य सर्वेषां भानप्रयोजकत्वात् "एष स्वयंज्योतिरिति श्रुतेस्तस्य स्वयंप्रकाशमानत्वात् स्वप्रकाशे अन्यानपे-क्षणाच्च तथात्वम् ।

"स वा एष द्रष्टा नापश्यद्दृश्यमेकराट्" भाग० ३,५,२०,

एकराज पु०एको राजा टच्‌स०। एकस्मिन् श्रेष्ठे च राजनि

एकरात्र न०एका रात्रिः—नि०अच् संख्यापूर्वकतया रात्रा-न्तत्वेऽपि न पुंस्त्वम् । एकाहोरात्रे । "एकरात्रं तु नियसन्नतिथिर्ब्राह्मणः स्मृतः" "यत् करोत्येकरात्रेण वृष-लीसेवनात् द्विजः" । "एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतः" मनुः । रात्रिपदमहोरात्रपरम् । "कतरं त्वेक-रात्रेण" भाग० ३,२१,२ । एकरात्रभोजने पर्य्याप्तम् ठञ् । एकरात्रिक एकदिनभोजननिर्वाहपर्य्याप्ते त्रि० "आददीतामनेशाश्वादहस्त्वैकरात्रिकम्" मनुः ।

एकराशि पु० कर्म०। १एकस्मिन् मेषादौ राशौ ।"एकराशि-गतौ स्यातामेकर्क्षविषये यदा" ज्यो०। २एकस्मिन् धान्यादेः कूपे च । "एकराशिं पञ्चधा कुरुते" सि०कौ० ।

एकरिक्थिन् त्रि० एकस्य पितुः रिक्थमस्यास्ति इनि । एकपित्रंशहरे ।"यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ" मनुः । एकं समानं रिक्थमस्यास्ति इनि । २अवि-भक्ते ३संसृष्टे च। स्त्रियां ङीप् ।

एकरूप त्रि० एकं समानं रूपमस्य । १तुल्यरूपे "सर्वेषामेक-रूपाणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेक-रूपाहि ते स्मृताः" स्मृतिः । कर्मधा०। २एकस्मिन् रूपे । "पुरुषार्थं प्रति विमोचयत्येकरूपेण सां०का० । एक-रूपस्य भावः ष्यञ् । ऐकरूप्य तत्र रूपे न० । त्वएक-रूपत्व न० तल्, एकरूपता स्त्री तत्रार्थे ।

एकरूप्य त्रि० एकस्मात् एकस्या वा आगतः रूप्यप् । १एकत आगते । कर्म०। २केवलरजते न० बहु०। ३तद्वति त्रि० ।

एकर्च पुंन० एका ऋक् अ समा० अर्द्धर्चादि । १एकस्यामृचि एका ऋक् यत्र । २एकर्चयुक्ते सूक्ते न०।"चतुरुत्तराण्ये-कर्चानि"शत०ब्रा०१०,१,२,८, २एकर्चस्तुत्ये देवभेदे"त्र्-चेभ्यः स्वाहा एकर्चेभ्यः स्वाहा" अथ० १९,२२,२०,

एकल त्रि० इण-विट् एगता कला यस्य। १अनन्यये एकलवलायते ष्टहते शायते सा-घञर्थे क "३५ कुर्वेत" म०। २असहाये एकके "अथ ऊर्द्ध्वं दरेद्य नैवेद्यता नात्मनैकैकल एव मध्ये स्यात" का०उ० "एकलोऽ-द्वितीयोनयनो वा" भा० "आयेतं चैकलः प्राणिप्रणीडेत तर्ष्कदः । एकलः सुकृतं भुङ्क्तेऽश्नीयाद्दुष्कृतमेकलः" काशी०

एकमेकत्वं याति वा क । एकत्वान्वये "तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने" भाग०५,७,१२ ।

**एकलव्य** पु० निषादराजस्य हिरण्यधनुषः पुत्रे तत्कथा भारते आ० १३४ अ० । "ततो निषादराजस्य हिरण्यधनुषः सुतः । एकलव्यो महाराज! द्रोणमभ्याजगाम ह । न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् । शिष्यं धनुषि धर्म्मज्ञस्तेषामेवान्ववेक्षया । स तु द्रोणस्य शिरसा पादौ गृह्य परन्तप! । अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम् । तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा । इष्वस्त्रे योगमातस्थे परं नियममास्थितः । परया श्रद्धयोपेतो योगेन परमेण च । विमोक्षादानसन्धाने लघुत्वं परमाप सः । अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः । रथैर्विनिर्ययुः सर्व्वे मृगयामरिमर्द्दन! । तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया । राजन्ननुजगामैकः श्वानमादाय पाण्डवान् । तेषां विचरतां तत्र तत्तत् कर्म्मचिकीर्षया । श्वा चरन् स वने मूढो नैषादिं प्रति जग्मिवान् । स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम् । नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके । तदा तस्याथ भषतः शुनः सप्त शरान्मुखे । लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा । स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह । तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः । लाघवं शब्दवेधित्वं दृष्ट्वा तत् परमं तदा । प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्व्वशः । तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् । ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् । न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् । अथैनं परिपप्रच्छुः को भवान् कस्य वेत्युत । एकलव्य उवाच । निषादाधिपतेर्व्वीरा! हिरण्यधनुषः सुतम् । द्रोणशिष्यञ्च मां वित्त धनुर्व्वेदकृतश्रमम् । वैशम्पायन उवाच । ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः । यथावृत्तं वने सर्व्वं द्रोणायाचख्युरद्भुतम् । कौन्तेयस्त्वर्ज्जुनो राजन्नेकलव्यमनुस्मरन् । रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत् । अर्ज्जुन उवाच । तदाहं परिरभ्यैकः प्रीतिपूर्व्वमिदं वचः । भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति । अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्य्यवान् । अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः । वैशम्पायन उवाच । मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् । सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् । ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् । एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् । एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् । अभिगम्योपसंगृह्य जगाम शिरसा महीम् । पूजयित्वा ततो द्रोणं विधिवत् स निषादजः । निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः । ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः । यदि शिष्योऽसि मे वीर! वेतनं दीयतां मम । एकलव्यस्तु तत् श्रुत्वा प्रीयमाणोऽब्रवीदिदम् । एकलव्य उवाच । किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः । न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम! । द्रोण उवाच । यद्यवश्यं त्वया देयमेकलव्य! प्रयच्छ मे । एकाङ्गुष्ठं दक्षिणस्य हस्तस्येति मतं मम"। "एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् । प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा । तथैव हृष्टवदनस्तथैवादीनमानसः । छित्वाऽविचार्य्य तं प्रादात् द्रोणायाङ्गुष्ठमात्मनः । ततः शरन्तु नैषादिरङ्गुलीभिर्व्यकर्षत । न तथा च स शीघ्रोऽभूद्यथा पूर्व्वं नराधिप!"। अयञ्च निषादराजस्य पालित पुत्रः श्रुतदेवपुत्रः यथोक्तं हरिवं० ३५अ० । "श्रुतदेवात् प्रजातस्तु नैषादिर्यः प्रतिश्रुतः । एकलव्यो महाराज! निषादैः परिवर्द्धितः" अतएवांशावतारे "रुक्मी च नृपशार्दूल ! राजा च जनमेजय"! इत्युपक्रम्य एकलव्यप्रभृतीन् कतिचिन्नृपानुक्त्वा "गणात् क्रोधवशादेष राजपूगोऽभवत् क्षितौ" आ०६७अध्याये तस्य राजवंशत्वेन राजपूगान्तर्गतत्वोक्तिः । "एकलव्यमिव जन्मान्तरगतम्" काद० ।

**एकलिङ्ग** न० एकं पञ्चक्रोशमध्ये लिङ्गं यत्र । १सिद्धिसाधन क्षेत्रभेदे "पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते । तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा" आगमः । एकं लिङ्गं पुंस्त्वादि यस्य । २नियतैकलिङ्गे शब्दे पु०। एकं लिङ्गमिन्द्रियं चक्षुर्यस्य । ३कुवेरे शब्दरत्ना० ।

**एकलू** पु० एकं लुनाति लू०क्विप् ६त०। ऋषिभेदे ततः गोत्रे गर्गा०यञ् । ऐकलव्य तद्गोत्रापत्ये पुंस्त्री बहुत्वे यञो लुक् । एकल इत्येव स्त्रियां न लुक् ऐकलव्यः स्त्रियः

**एकवक्त्र** पु०। १असुरभेदे "एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः" हरिवं० २६३अ० । २एकमुखे रुद्राक्षफले न० ।

**एकवचन** न० एकमेकत्वमुच्यतेऽनेन वच–करणे ल्युट् ६त० । व्याकरणोक्ते एकत्वसंख्यावाचके "द्व्येकयोर्द्विवचनैकवचने" पा०उक्ते स्वादौ तिबादौ च । "एकत्वबोधकाच

सु अम् टा ङे ङसि ङस् ङि इत्येवं सुपः तिप् सिप् मिप् ते से इ इत्येवं रूपाश्च प्रत्ययभेदाः "अयोनेरेकवचनेन बहुवचनं व्यवायामेति" शत० ब्रा० १२.५,१,१८ ।

**एकवत्** अव्य० एकस्येव वति । १एकताप्रयुक्ते सदृशे कार्य्ये "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" पा०। शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् इत्येषां वाक्ये नपुंसकमात्रशेषे विकल्पेन एकवत् कार्य्यविधानात् इदं शुक्लम् इमानि शुक्लानीति वा" सि० कौ०। २एकवचनवदित्यर्थे च । "एकवन्मन्त्रानूहेतैकोद्दिष्टे" विष्णुः । "एकवत् एकवचनवत् यथा स्यात्तथोहेत" आ० त० रघु० । एकेन तुल्यक्रियति । ३एकेन तुल्यक्रियायाम् अव्य० ।

**एकवद्भाव** पु० एकेन तुल्योभावः भवनम् । एकता-व्यवस्थायैकवचनान्तताद्रूपे शब्दनिष्ठे कार्य्यभेदे ।

**एकवर्ण** त्रि० एकोवर्णो रूपं यस्य । अन्यरूपामिश्रितवर्णयुक्ते । एकोवर्णः जातिभेदो यत्र । २ब्राह्मणादिवर्णविभागशून्ये कलियुगावशेषस्थलोके । "एकवर्णस्तदा लोको भविष्यति युगक्षये" भा० व० १९० अ० । वर्ण्यतेऽनेन वर्णः एकः वर्णः स्वरूपं यस्य । ३एकस्वरूपे । "स एकवर्णं तमसः परम्" (उपास्ते) भाग० ८,५,१८ । एकवर्णमेकस्वरूपं धामम् एकरूपमित्यर्थः । कर्म्मधा० । एकस्मिन् ४शुक्लादौ रूपे एकस्मिन् ५ब्राह्मणादौ जातिभेदे एकस्मिन्नक्षररूपे ईश्वरे च । ७एकवर्णे एकजातौ च पु०। तमर्हति ठञ् । ऐकवर्णिक ब्राह्मणवर्णमात्रार्हे स्वधर्मादौ त्रि० । "द्विजातीनामनुमतं धर्मोह्येकवर्णैकवर्णिकः । यथाध्ययनदानानि तपःसाधारणाः स्मृताः" भा०व० १५० अ० । ८बीजगणितोक्ते सजातीये तुल्यवर्णे द्रव्यभेदे च ।

**एकवर्णसमीकरण** न० एकवर्णौ तुल्यरूपौ समीक्रियेते अनेन करणे ल्युट् ६त०। बीजगणितोक्ते बीजचतुष्टयान्तर्गतबीजभेदे अव्यक्तशब्दे तद्गणितप्रकारो दर्शितः 'प्रथममेकवर्णसमीकरणं बीजं, द्वितीयमनेकवर्णसमीकरणं बीजम्, यत्रैकवर्णयोर्द्वयोर्बहूनां वा वर्गादिगतानां समीकरणं तन्मध्यमाहरणम्, यत्र भावितस्य तद्भावितमिति बीजचतुष्टयं वदन्त्याचार्याः" भास्कराचार्य्यः । अस्योदाहरणम् । "एकस्य रूपत्रिंशती षडश्वा अश्वादयोऽन्यस्य तु तुल्यमू[illegible]ः । ऋणं तथा रूपशतञ्च तस्य तौ तुल्यवित्तौ च किमश्व[illegible]ल्यम्" एतद्वाक्यतद्गह्वे व्याख्यातम् । अत्र [illegible]मूल्यज्ञानरूपकैकविषयत्वेन द्वयोर्वाक्यान्वितस्य समीकरणात् एकवर्णसमीकरणमित्यनुगतार्थसंज्ञा ।

**एकवर्णी** स्त्री एकमपकृष्टं यथा तथा वर्ण्यते शब्द्यतेऽनया वर्ण—करणे अच् ३त० गौरा० ङीष् । करतालीरूपे वाद्ये शब्दरत्ना० । कराभ्यामितरकारणानपेक्षया तद्वाद्यवादनात् तथात्वम् ।

**एकवर्षिका** स्त्री एकं वर्षं वयःकालोयस्याः कप् अत-इत्वम् । एकहायन्यां स्त्रीगव्याम् हेम० एकवर्षभवे त्रि०।

**एकवस्त्र** त्रि० एकं वस्त्रं यस्य । १उत्तरीयवस्त्रशून्ये २एकजातीयवस्त्रान्विते च एकवासःप्रभृतयोऽप्यत्र । कर्म्म० । एकस्मिन् वस्त्रे उत्तरीयरहितपरिधानमात्रवस्त्रे न० । तत्रार्थे स्नाननिषेधमाह आ० त० गौतमः "एकवस्त्रेण यत्स्नानं कृत्वा विप्रेण चेत् क्रि । स्नातस्तु न च विशुद्धः स्यात् क्रिया च परिहीयते" अतएव "स्नानं तर्पणपर्य्यन्तं कुर्य्यादेकेन वाससा" । इति यदि समूलं तदा प्रेततर्पणपरमिति । तत्र "एकवस्त्रा वालयः" इत्यादिना एकवस्त्रत्वविधानात् "एकेन एकजातीयेन इति" वाचस्पतिमिश्रः "येन वाससा स्नानं कृतं जलस्थस्य तेनैव तर्पणम्" इति तत्सत्यार्थः । न च "स्नानशाट्यान्तु दातव्याह्न-दशिखोविशुद्धये । जलमध्ये तु यः कश्चित् द्विजातिर्ज्ञानदुर्बलः । निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत्" । इति वशिष्ठवचने स्नानशाट्यामिति तद्वस्त्रमिति एकवचननिर्देशेन च स्नानेऽप्येकवस्त्रत्वमिति वाच्यम् । अत्र विशुद्धय इत्यभिधानेनाधोवस्त्रस्यैव स्वच्छयेण प्रक्षालनं नत्तरीयस्य एतदर्थमेकवचनम् । अतएव "आर्द्रेणाधरीयवस्त्रं प्रक्षाल्य" इत्याह्निकचिन्तामणिः । वशिष्ठवचनैकवाक्यतया "स्नातोनाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना" इति विष्णुपुराणेनाधरीयवस्त्रेणैव गात्रमार्ज्जनं विधीयते । एतेन "निष्पीड्य स्नानवस्त्रमिति" कात्यायनवचने एकत्वमविवक्षितमिति निरस्तम् । अतएव सर्व्वत्रैकवचननिर्देशः" आ०त० रघु० । एवं वैदिककर्म्ममात्रे एकवस्त्रतानिषेधः उत्तरीयशब्दे दर्शितः

**एकवाक्य** न० एकम् एकार्थं वाक्यम् । वाक्यार्थाकाङ्क्षिताकाङ्क्षापूरणेन विशिष्टैकार्थबोधके १वाक्यभेदे तच्च द्विविधं पदैकवाक्यं वाक्यैकवाक्यञ्च तत्र वेदा०प० निरूपितं यथा "एवमर्थवादवाक्यानां प्रशंसापराणां प्राशस्त्ये लक्षणा, सोऽरोदीदित्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात्

एवञ्च विभक्तिनिरपेक्षस्य रूपपदार्थप्रत्यायकतया खण्ड-वाक्यपदसमुदायस्य पदस्थानीयतया विभक्त्यैकवाक्यता भवतीत्यर्थवादवाक्यानां पदैकवाक्यता । का तर्हि वाक्यै-कवाक्यता ? यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वा-क्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वं यथा "दर्श-पौर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवाक्यानां "समि-धो यजति" इत्यादिवाक्यानाञ्च परस्पराङ्गाङ्गिभावबोधक-तयैकवाक्यता । तदुक्तम् भट्टपादैः "स्वार्थबोधे समाप्ता-नामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः सं-हत्य जायते इति" । एकमविसंवादितया तुल्यरूपं वा-क्यम् । अविसंवादितया तुल्यरूपे २वाक्ये च । "श्रवण-कटु नृपाणामेकवाक्यं विवव्रुः" रघुः । "एकमविसंवादि-वाक्यमेकवाक्यम्" मल्लि० ।

एकवाद पु० एकेन रूपेण वाद्यते वाद-कर्मणि घञ् । १डिण्डिमे वाद्ये शब्दरत्ना० तस्यैकरूपेण वादनात् तथा-त्वम् । वादः कथाभेदः एकस्य एकत्वस्य ब्रह्माभिन्नत्वस्य वादः । २वेदान्तिभिरुक्ते वादभेदे सर्वेषां ब्रह्माभिन्नत्वेनै-कत्वस्य प्रतिपादनात्तद्वादस्य तथात्वम् ।

एकविंशत् स्त्री एकाधिका विंशतिः शा० । (एकुश) १संख्या-भेदे २तदन्विते च एकविंशतिशब्दोऽप्यत्र स्त्री । एक-विंशः एकविंशतेः पूरणः डट् । एकविंश तत्संख्यापूरणे स्वार्थे कन् तत्रैवार्थे "दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम्" मनुः । पूरणार्थे डटि वा तमटि तु एक-विंशतम एकविंशतितम इतिभेदः तत्पूरणार्थे स्त्रियां ङीप् । तदधिकमस्मिन् शते सहस्रे वेत्यर्थे कन् । एकविंशतिक एकविंशत्क एकविंशत्यधिकशतादौ इदमाय-लाभोपदाशुल्कं वा दीयते इत्यर्थे कन् । एकविंशतिक एक-विंशत्क हस्तादिरूपेण दीयमानविंशतिके शते । अवयवे कन् रूपसङ्कलनात् एकविंशतिसंख्यायां न० । एकविंशति-र्मन्त्राः परिमाणमस्य स्तोमस्य ड । एकविंश स्तोत्रमन्त्रके स्तोमभेदे एकविंशस्तोमशब्दे विवृतिः । "सत्शतोर्डिनि-र्वक्तव्यः" "विंशतेश्च" वार्त्ति० डिनि । एकविंशिन् एक-विंशतिसंख्यायुक्ते त्रि० स्त्रियां ङीप् । प्रकारे धा एक-विंशतिधा एकविंशतिप्रकारे अव्य० । एकाधिका विंशतिः संख्येया डच् समा० । एकाधिकविंशतिसंख्येये । एकविंश संख्यातः स्तोमोऽस्त्यस्य मतुप् मस्य वः । एकविंश-वत् एकविंशस्तोमान्विते त्रि० स्त्रियां ङीप् । "त्रिवृद्वतीं पुरस्तादुपदधात्येकविंशवतीं पश्चात्" शत०ब्रा०८,४,१,११ ।

एकविंशस्तोम पु० कर्म० । एकविंशतिमन्त्रपरिमिते स्तोमभेदे "एकविंशस्तोमेन अयनो वाजनवरजे" शत०ब्रा० १३,१,३,११, स्तोमश्च सोमादियागेषु सामगैः क्रियमाणः इन्द्रादिसंज्ञः स्तुतिभेदः । एकविंशस्तोमस्य विष्टुतिप्रकारः ताण्ड्य० ब्रा० भा० दर्शितो यथा "एकविंशस्तोमस्य चतस्रो विष्टुतयः । तत्र सप्तकविन्दा-ख्यां प्रथमां विष्टुतिं दर्शयति" भा० । "सप्तभ्यो हि-ङ्करोति स तिसृभिश्च तिसृभिश्च एकया, सप्तभ्यो हिङ्-करोति स एकया स तिसृभिः स तिसृभिः, सप्तभ्यो हिङ्-करोति स तिसृभिस्स एकया स तिसृभिः, सप्तसप्त्येकविं-शस्य विष्टुतिः" ब्रा० । "अथास्यैव स्तोमस्य पञ्चपञ्चाख्यां द्वितीयां विष्टुतिमाह" भा० । "पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः, नवभ्यो हिङ्करोति स ति-सृभिः स तिसृभिः स तिसृभिरुद्यत्येकविंशस्य विष्टुतिः" ब्रा० । "अथास्यैव स्तोमस्य प्रतिष्ठितिनाम तृतीया विष्टुतिः प्रद-र्श्यते" भा० । "नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स ति-सृभिः, प्रतिष्ठितिः" ब्रा० । "त्रिवृदादिस्तोमचतुष्टय-प्रतिरूपकत्वात् अस्याः प्रतिष्ठितिरिति संज्ञा यौगिकी अथास्यैव स्तोमस्य छन्दोमयीं चतुर्थीं विष्टुतिं दर्शयति" भा० । "नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स-प्तभिः, तिसृभ्यो हिङ्करोति स पराचीभिः, नवभ्यो हि-ङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः छन्दोमयत आदीप्ता" ब्रा० । "उभयत आद्यान्त्ययोः पर्याययोर्नव-नवकात्मना स्थितत्वादुभयतः आदीप्ता स्थितत्वाच्च प्रजा-पतिरूपत्वात् सप्तोत्सर्गादीप्ता इत्यर्थे तथा मध्ये तु वैराट तत्पाठमात्रस्या अन्वेषा संज्ञा । अस्या अपि मध्यमपर्या-यस्य अक्षरत्वात्मकत्वेन अक्षरत्वाभ्यामत्वात्" भा० । अत्र उद्गीथस्य दर्शिततद्भाष्यानुसारेण एतदर्थो दर्श्यते एकैकस्य साम्नः पञ्च भक्तयः प्रस्तावोद्गीथप्रतिहारो-पद्रवनिधनाख्याः तत्र हिङ्कारस्तु त्रिभिस्त्रिभिरुद्गातृभिः कर्त्तव्यः "साम्नि साम्नि हिंकुर्युरिति" कल्पसूत्रोक्तेः । तथा च सप्तभ्य इति चतुर्थी सप्त ऋचोगातुं हिङ्कुर्यु-रित्यर्थः । तत्र एकैकं तृचं त्रिरावर्त्तनीयम् । तत्राद्या-वृत्तौ आद्याया द्वितीयायाश्च त्रिरभ्यासः । द्वितीयावृत्तौ द्वितीयाया अन्त्यायाश्च त्रिरभ्यासः । तृतीयावृत्तौ

आद्यान्त्ययोस्त्रिरभ्यासः। एवं सप्तसप्तिनो नाम विष्टुतिः। पर्य्यायत्रयेऽपि सप्तर्चां स्तवनात् तथात्वम् सप्त सप्त ऋचः प्रतिपर्य्यायं परिमाणमस्याः "सप्तानां डिनि" वार्त्ति० डिनि ङीप्। सप्तसप्तिनीति व्युत्पत्तेरन्वर्थसंज्ञा। पञ्चर्च-योगात् हिङ्कुर्य्युरित्यर्थः। तत्र पञ्चानां मध्ये आद्यावृत्तौ आद्याया त्रिरावृत्तिः। द्वितीयावृत्तौ सप्तर्चोयोगात् हिङ्कुर्य्युः तत्र मध्यमान्त्ययोस्त्रिरावृत्तिः। तृतीयावृत्तौ नवर्चोयोगात् हिङ्कुर्य्युः तत्र च सर्वासां त्रिरावृत्तिः इयमत्र ग्रन्थे कथित-स्तोमस्य विष्टुतिः। पञ्चर्चसप्तर्चनवर्चानां यथोत्तर-त्वाधिक्येन उद्यतीति संज्ञाऽन्वर्था। नवर्चो गात् हिङ्कुर्य्युः तत्राद्यावृत्तौ सर्वासां त्रिरभ्यासः। ततः पञ्चर्चो गतम् हिङ्कुर्य्युः। तासु द्वितीयायाः त्रिरावृत्तिः। ततः सप्तर्चोगात् हिङ्कुर्य्युः। तृतीयावृत्तौ तासु आद्यान्त्ययोस्त्रिरभ्यासः। एवं प्रतिष्टुतिर्नाम तस्य स्तोमस्य विष्टुतिः। नवर्चोगात् हिङ्कुर्य्युः आद्यावृत्तौ तासु सर्वासां त्रिरभ्यासः। ततस्त्रिस्तच्चयोगात् हि-ङ्कुर्य्युः। द्वितीयावृत्तौ तासां कस्याश्चिदपि न त्रिरा-वृत्तिः। ततो नवर्चो गात् हिङ्कुर्य्युः तत्र तृतीयावृत्तौ सर्वासां त्रिरावृत्तिः। इयमस्य स्तोमस्य कुर्मी नाम विष्टुतिः तत्त्वं ज्ञानिमित्तं भाष्ये उक्तम्।

**एकविध** त्रि० एका विधा प्रकारोऽस्य। एकप्रकारे "मानुषश्चैकविधः समासतो भौतिकः सर्गः" सां० का०।

**एकविलोचन** त्रि० एकं विलोचनं यस्य। १काणे। २तत्प्र-धानदेशभेदे च स च देशः वृहत्स० कूर्मविभागे पश्चिमो-त्तरस्यामुक्तः। "पश्चिमोत्तरस्यामित्युपक्रम्य एकविलो-चनशूलिकदीर्घग्रीवास्यकेशाश्च"। ३कुवेरे पु० तस्य वामने-त्रस्य स्फोटनात् तथात्वम्। एकपिङ्गशब्दे विवृतिः। ४काके पुंस्त्री स्त्रियां जातित्वात् ङीष्। तस्योभयगोल-कसत्त्वेऽपि एकमेव नेत्रेन्द्रियमुभयगोलके सञ्चरतीति तस्य तथात्वम्। एकलोचनादयोऽप्यत्र। कर्म०। ५एकस्मिन् लोचने न० गौतमदर्शने। एकमेव लोचनं नासास्थिभेदेन व्यवधानाद्द्वित्वेन प्रतीयते इत्यङ्गीक्रियते तदेतन्मतमुत्थाप्य गौत०सू० वृत्त्योः खण्डितं यथा

"नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्" सू० "एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वा-भिमानं प्रयोजयतः मध्यव्यवहितस्य दीर्घस्येव" वृ०। "एक-विनाशे द्वितीयाविनाशान्नैकत्वम्" सू० "एकस्मिन् उपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहण-लिङ्गम् तस्मादेकस्य व्यवधानानुपपत्तिः" वृ०। "अवयवनाशे-ऽप्यवयव्युपलब्धेरहेतुः" सू० "एकविनाशे द्वितीयाविनाशा-दित्यहेतुः कस्मात् वृक्षस्य हि कासुचिच्छाखासु छिन्नास्वप-लभ्यत एव वृक्षः" वृ०। "दृष्टान्तविरोधादप्रतिषेधः" सू० "न कारणद्रव्यस्य विभागे कार्य्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात् बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः। येषां कारणान्यविभक्तानि तान्यवतिष्ठन्ते अथवा दृश्य-मानार्थविरोधो दृष्टान्तविरोधः मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतदेकस्मिन्नासास्थिव्यवहिते सम्भवति। अथ चैकविनाश-स्यानियमात् द्वाविमावर्थौ तौ च पृथगावरणोपघातौ अ-नुमीयेते विभिन्नाविति अवपीडनाच्चैकस्य चक्षुषो रश्मि-विषयसन्निकर्षस्य भेदाद् दृश्यभेद इव गृह्यते तच्चैकत्वे विरुध्यते अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानमिति तस्मा-देकस्य व्यवधानानुपपत्तिः" अवपीडनं चिपिटीकरणम्।

**एकवीर** पु० कर्म० वा० एकशब्दस्य पूर्वनि०। १श्रेष्ठवीरे "अस्त्येकवीरोऽतिरथो विजित्य" भाग० ९.१,४०। "सोऽप्येकवीरो नरदेवनाथः" ४.१६.१८। २मन्दारे "मादकोऽम्लः कटुकस्तोदयामादिनाशकः। कटुकोऽग्नि-दृष्यादिवातपित्तादिनाशकः" इति वैद्यकोक्तगुणके वृक्षभेदे वीरैक इत्यपि पाठः वस्तुत एकशब्दस्य संख्यापरत्वे वीरैकः श्रेष्ठपरत्वे एकवीर इति व्यवस्था।

**एकवीराकल्प** पु० एकः प्रधानं वीरः कुलाचारी यस्याः तादृश्याः तारादिविद्यायाः कल्पः उपासनाप्रकारज्ञापकम्। तन्त्रभेदे यत्र वीराचारसेव्यायाः देव्या एतस्यादिकथनं तस्मिन् तन्त्रशास्त्रभेदे।

**एकवृक्ष** पु० एकोवृक्षोयत्र। "चतुः क्रोशान्तरे यत्र न वृक्षा-न्तरमीक्ष्यते। एकवृक्षः स विज्ञेयो देशः सिद्धिप्रदायकः" इत्यागमोक्ते १देशभेदे। कर्म०। २एकस्मिन् वृक्षे "एकवृक्षो यत्र नौका भवतीति" पारस्करी।

**एकवृत्** स्त्री एकधैव वर्त्तते अन्तर्भूतण्यर्थे वृत-भावे क्विप्। १एकधावर्त्तने एकावृत्तौ "एकवृदुत्तरम्" कात्या०८,२, ३८। कर्त्तरि क्विप्। २एकधा वर्त्तमाने। एकधा वर्त्ततेऽत्र आधारे क्विप्। ३स्वर्गलोके। "एकोत्तरा-ज्जुहोत्येकवृद्वै स्वर्गो लोकएकधैवैनं स्वर्गं लोकं गमयति" शत० ब्रा० १३,२,१,५।

**एकवृन्द** पु० "कण्ठोच्चतोयः श्वयथुःसदाहः कण्ड्वन्वितोऽपाक्य मृदुर्गुरुश्च। नाम्नैकवृन्दः परिकल्पितोऽसौ" इति सु-

पुनर्भोजनमैथुने । द्यूतमद्यप्रमादञ्च दशम्यां वैष्णवस्त्यजेदिति" विष्णुधर्म्मोत्तरे "अवन्ध्याम्बान् हि उपवास व्रतस्य नमिकादकम् । कामतस्त्याः फलं वापि पारणे प्राश्य शुध्यति" "असकृज्जलपानं च दिवास्वापञ्च मैथुनम् । ताम्बूलचर्व्वणं मांसं वर्ज्जयेत् व्रतवासरे" इति च । वशिष्ठः "उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वै" इति" दन्तधावने प्रायश्चित्तं च विष्णुरहस्ये "श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्याः शतसंपूतमम्बु प्राश्य विशुध्यतीति" हारीतः "पतितपाषण्डिनास्तिकसम्भाषणानृतात्शीलादिकमुपवासादिषु वर्ज्जयेदिति" कूर्म्मपुराणे "बहिर्ग्रामान्त्यजान् स्पृष्ट्वा पतितञ्च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" इति विष्णुरहस्ये "स्त्र्यालोकनगन्धादिस्वादनं परिकीर्त्तनम् । अन्नस्य वर्ज्जयेत् सर्व्वं ग्रासानाञ्चाभिकाङ्क्षणम् । गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्ज्जयेत् सर्व्वं यच्चान्यत् निराकृतमिति" ब्रह्माण्डपुराणे "कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् । व्यायामञ्च प्रवासञ्च दिवास्वप्नं तथाञ्जनम् । तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः । द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते" इति ।

एकादश्यां श्राद्धं कृत्वापि न भोक्तव्यं तदाह कात्यायनः "उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्यादाघ्राय पितृसेवितमिति" तथा "मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा । अभ्यर्च्च्य पितृदेवांस्तु आजिघ्रेत् पितृसेवितमिति" यत्तु वचनम् "श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् । हविर्देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति" तदेकादशीव्यतिरिक्तविषयम् आघ्राणेनापि भोजनकार्य्यं सिध्यति तस्य भोजनकार्य्ये विधानात्"

सूतकादौ दानार्च्चनरहितमुपवासमात्रं कुर्य्यात् तदुक्तं कूर्म्मपुराणे "काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र काम्यं व्रतं कुर्य्याद्दानार्च्चनविवर्ज्जितम्" इति वराहपुराणे "सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् । एकादश्यां न भुञ्जीत व्रतमेतं न लुप्यते । मृतके न च भुञ्जीत एकादश्यां सदा नरः । द्वादश्यान्तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य चेति" । तत्र परित्यक्तं देवार्च्चनं सूतकान्ते कुर्य्यात् तदुक्तं मत्स्यपुराणे "सूतकान्ते न स्नात्वा पूजयित्वा जनार्द्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते" इति । स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः किन्तु देवतार्च्चनादिरहितं सूतकादाविवोपवासमात्रं कार्य्यं तदाह पुलस्त्यः "एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि" इति । [illegible] "संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतमिति" । सत्यव्रतोऽपि "प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचनेति" शुद्ध्यनन्तरं देवतार्च्चनादिकं कुर्य्यात् तथा च स्मृतिः "स्नात्वा भर्त्तुश्चतुर्थेऽह्नि शुद्धा स्यात् परिचारणे । पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्म्मणीति"

नित्योपवासप्रकारो विष्णुरहस्येऽभिहितः "अथ नित्योपवासी चेत्ताय प्रातर्भुजिक्रियाम् । वर्ज्जयेत्तिथिमान् विप्रः संप्राप्ते हरिवासरे" इति तत्त्वदैवत्तेऽपि "इति विचार्य्य कुर्वीत नित्यमेकादशीव्रतम् । विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्ज्जितः । निगृहीतेन्द्रियः श्रद्धासहायो विष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः" । शक्तौ सत्यां नियमानाचरेत् तथा च कात्यायनः "शक्तिमांस्तु ततः कुर्य्यान्नियमं सविशेषणमिति" ।

यदा द्वादश्यां श्रवणनक्षत्रं भवेत् तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेत् तथा च नारदीये "शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता । तयोरेवोपवासश्च त्रयोदश्यां च पारणमिति" तथा "एकादश्यान्तु विद्धायां संप्राप्ते श्रवणे तदा । उपोष्या द्वादशी शुद्धा सर्व्वपापक्षयावहेति" यदा पारणपर्य्याप्ता द्वादशी स्यात्तदा तस्यामेव पारणा कार्य्या न तु त्रयोदश्यां तदुक्तम् "भवेद्यत्र त्रयोदश्यां द्वादश्यास्तु कलाद्वयम् । द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् । कलाद्वयं त्वर्द्धं वापि द्वादशीं न व्यतिक्रमेत् । पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति" ननु द्वादश्यतिक्रमेऽपि नास्ति दोषः "सा तिथिः सकला ज्ञेयेति" वचने साकल्यविधानादिति चेत् नैवं साकल्यस्य स्नानादिविषयत्वात् वाक्यशेषे "स्नानदानजपादिषु" इत्यभिधानात् । पारणे तु साकल्यवचनं न प्रवर्त्तते "तिथिस्तात्कालिकी ज्ञेयेत्युक्तेः"

अल्पद्वादशीकाले यदा पारणन्तदा सद्भिः प्रातरेव सर्व्वाः क्रियाः कर्त्तव्याः तदुक्तं नारदीये "अल्पायामथ विप्रेन्द्र ! द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या दानहोमादिसंयुताः । एतस्मात्कारणाद्दुर्व्विप ! प्रत्यूषे स्नानमाचरेत् । पितृतर्पणसंयुक्तं सन्ध्यां कृत्वा च द्वादशीम् । महाहानिकरी ह्येषा द्वादशी लङ्घिता न-

णाम्। करोति धर्म्महरणमस्नातेव सरस्वतीति" गरुडपुराणेऽपि "यदा स्वल्पा द्वादशी स्यादपकर्षे भुक्तिर्भवेत्। प्रातर्माध्याह्निकञ्चापि तत्र स्यादपकर्षणमिति"। स्कान्दपुराणेऽपि "यदा भवेदतीवाल्पा द्वादशी पारणादिने। उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकञ्च यदिति"। तत्र पारणासम्भवे अद्भिः पारणं कुर्य्यात् तदाह कात्यायनः "सन्ध्यादिकम्भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वाथ नैत्तिकान्ते भुक्तिर्भवेदिति" देवलोऽपि "सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम्?। अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृदिति"। यदा कथमपि द्वादशी नास्ति तदा त्रयोदश्यामपि पारणं कुर्य्यात् तदुक्तं नारदीये "त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम्। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयमिति"। पारणञ्च नैवेद्यमिश्रितं कुर्य्यात् तदुक्तं स्कन्दपुराणे "कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनमिति"।

यद्यप्येकादश्यां यान्युपवासप्रतिनिधिरूपाणि एकभक्तनक्तायाचितदानानि तेषां प्रतिपदुक्तन्यायेनोपवासतिथावेवानुष्ठानं, यानि तु स्वतन्त्राण्येकभक्तनक्तादीनि तेषां पूर्व्वोक्तन्यायेन मध्याह्नादिव्यापितिथिग्रहणप्राप्तौ दशमीविद्धा प्रतिषिध्यते द्वादशीकल्पे "पूर्व्वातिथ्यां दिनार्द्धेन नन्दां पूर्ण्णामपि त्यजेत्। यद्युच्छेदात्मसन्तानं नियमेषु चतुर्ष्वपि। नोपोषितं च नक्तञ्च नैकभक्तमयाचितम्। नन्दायां पूर्ण्णविद्धायां कुर्य्याद्देवस्य मोहितः। एकादशी तुला यस्मा द्वादश्या सहपोषणे। नक्तं चायाचितं नित्यमेकभक्तं तथाऽनघ!। नक्तञ्चायाचितं तात! नैकभक्तमुपाहरेत्। दशमीसहिते दानमनर्थं हरिवासरे" इति दिनार्द्धेन माधवप्रभृतिभिरित्थम्। एतदेवाभिप्रेत्य द्विरूपञ्च दर्शितमेवेति" उदाहृतम्। तथा "माहेन्द्रप्रवृत्ते तु वेधोऽयं बाधते व्रतमिति" एतद्वचने तु तिथ्यन्तरमध्याह्नादिव्याप्तिर्ग्रहीतव्या"।

अत्राधिकारिविशेषः हरि०भ० आग्नेये "गृहस्थो ब्रह्मचारी वा आहिताग्निस्तथैव वा। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"। पाद्मोत्तरखण्डे "वर्णानामाश्रमाणाञ्च स्त्रीणाञ्च वरवर्णिनि! एकादश्युपवासस्तु कर्त्तव्यो नात्र संशयः"। "एतस्मात् कारणाद्विप्र! एकादश्यां सुपोषणम्। कुर्य्यान्नरो वा नारी वा पक्षयोरुभयोरपि" विष्णुधर्म्मोत्तरीयम् "वैष्णवो वाथ शैवो वा कुर्य्यादेकादशीव्रतम्"। सौरपुराणम् "वैष्णवो वाथ शैवो वा सौरोऽप्येतत् समाचरेत्"। स्कान्दम्। "न शैवो न च सौरो वा नाश्रमी तीर्थसेवकः। यो भुङ्क्ते वासरे विष्णोः श्वपचादधिको हि सः। विप्रेन्द्र तेन मे गौरि! हतं दुष्टेन पापिना। मद्भक्तिव्रतमाश्रित्य येन भक्तं हरेर्दिने"। "विधवा या भवेन्नारी भुञ्जीतैकादशीदिने। तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने" कात्या०। एकादशीं विना रण्डा यतिश्च सुमहातपाः। पच्यते ह्यन्धतामिस्रे यावदाहूतसंप्लवम्" नारदीयम्। "सधवायास्तु पत्युरनुमत्या सह वाधिकारः। "पत्युश्च सभार्य्यश्च सज्जनैर्भक्तिसंयुतः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि" विष्णु ध०। तदनुमत्या सधवाया अधिकारिता कालमा० दर्शिता।

"वैष्णवस्योभयपक्षयोर्नित्याधिकारः यथाह तत्त्वसागरे। "यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा। तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते" एवमेव ए०त०रघु०। "व्याधिभिः परिभूतानां पित्ताधिकशरीरिणाम्। त्रिंशद्वर्षाधिकानाञ्च नक्तादिपरिकल्पनम्" मार्क० पु०।

प्रागुक्तकालमाधवमतानुसारिण्येकादशीव्रतकालादिव्यवस्था सर्व्वदेशवासिभिः प्रायेणाद्रियते। गौडनिवासिभिस्तु रघुनन्दनोक्ता व्यवस्थाद्रियते। तन्मतसिद्धव्यवस्था तु एकादशीतत्त्वतदनुसन्धेया। तत्र संक्षेपतो दर्शितो यथा "तत्र संक्षेपः पारणादिने द्वादशीलाभे सर्व्व एव पूर्व्वां त्यक्त्वा परामुपवसेत् तदलाभे स्मार्त्तः पूर्व्वां तदन्यः परां विधवापि। यदा तु पूर्व्वदिने दशम्या उत्तरदिने द्वादश्या युक्तैकादशी तदोत्तरामुपोष्य द्वादश्यां पारणं कुर्य्यात्। परदिने द्वादश्यनिर्गमे त्रयोदश्यामपीति। यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी अथ च परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत्। (कालमाधवमते भेदः) यदा तु सूर्य्योदयात् प्राक्कालीनदशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सती परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय परामुपोष्य द्वादश्यां पारयेत्। यदा तु पूर्व्वदिने तद्विद्धैकादशी परदिने च द्वादशी तदा षष्टिदण्डात्मिकां विहायोपोष्य परदिने द्वादश्याः प्रथमपादमतीत्य पारयेत्। वैष्णवस्तु तथापि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति।

सर्व्वेषां तथैकादश्यां वैष्णवानां सपुत्राणां गृहस्थानामप्युपवासोनित्यः। ब्राह्मणस्य तु विशेषतोनित्यः। वैष्णवेतरेषान्तु तादृशानां हरिशयनमध्यवर्त्तिनीषु कृष्णैकादशीष्वपवासोनित्यः। अपुत्रवतां गृहिणान्तु सर्व्वास्वेव नित्याधिकारः। काम्योपवासे तु अविशेषेणैव सर्व्वेषामधिकारः। विष्णूपवासे तु रविसंक्रमादिदोषोनास्ति अष्टाब्दादधिकोऽसीत्यपूर्णवर्षोनियतव्रतोनित्याधिकारी विधवायास्तु सर्व्वास्वेव नित्याधिकारः।

अत्र मलमासादिदोषोनास्ति। यथा ज्योतिःपराशरः "अनादिदेवताद्यास्तु कालदोषेण विद्यते। नित्यस्वाध्याययोगे च तथैवैकादशीव्रते" एका०त०रघु०।

अत्र विशेषो हेमाद्रौ स्कान्दे। "एकादशी कला यत्र द्वादशी च त्रयं गता। नक्तं तत्र प्रकुर्व्वीत नोपवासं गृहाश्रमी"। व्रतोपवासविधायकसामान्यशास्त्रस्य नक्तविधायकविशेषशास्त्रेण बाधः। "एकादशी कलायुक्ता द्वादशी यत्र लभ्यते। तत्रोपवासं कुर्व्वीत निष्कामोविष्णुतत्परः" तत्रैव स्कान्दम्। "अत्र पूर्वापरवचनपर्य्यालोचनया नक्तविधानं कामिनः काम्योपवासव्रतविषयं, निष्कामस्य, नित्योपवासार्थिनो विष्णुपरायणस्य गृहस्थस्याप्युपवासः" ए० त० रघु०। वाचस्पतिमते "निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं तथा। सकामस्तु तदा पूर्वां कुर्य्याद्बौधायनोऽब्रवीत्" विष्णुरहस्यात् सकामेन तत्र दशमीविद्धा कार्य्या निष्कामेण द्वादशीयुक्तोपोष्येतिभेदः।

वेधविषये हेमाद्रौ तु सार्द्धघटिकात्रयोत्तरदशाविंशतिमात्ररात्रिविषया महत्तरास्तु रात्रीरपेक्ष्य चतुर्घटिकात्मिका "निशःप्रान्ते तु यामार्द्धं देवादिस्थापने। सारस्वतानध्ययने चारुणोदय उच्यते इति" स्मृतेरित्युक्तम्। हेमाद्रिमतानुसारेण निर्ण०सि० एकादशीभेदा अष्टादशोक्ताः तद्व्यवस्था तत्रोक्ता यथा

"शुद्धा विद्धा द्वयो नन्दा त्रेधा न्यूनसमाधिकैः। षट्प्रकाराः पुनस्त्रेधा द्वादश्या न्यूनसमाधिकाः" इत्यष्टादशैकादशीभेदाः तत्र शुद्धाधिकन्यूनद्वादशिका शुद्धाधिकसमद्वादशिका च सकामैः पूर्वा निःकामैरुत्तरा कार्य्या "प्रथमेऽह्नि संपूर्णेति" पूर्वोक्तस्कान्दात् "ऊनद्वादशिकायां तु विष्णुप्रीतिकामैरुपवासद्वयं कार्य्यम् "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्?। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति" इत्यग्निहोक्तेः। "शुद्धन्यूना शुद्धाधिका शुद्धसमा विद्धन्यूना विद्धसमाधिकद्वादशिका च सर्व्वेषां परैवेति" हेमाद्रिः मदनरत्ने तु शुद्धाधिका परा। "संपूर्णैकादशी यत्रेति" पूर्वोक्तेः। "शुद्धा यदा समा हीना समा हीनाधिकोत्तरा। एकादशीमुपासीत शुद्धां वैष्णवोऽपीति" स्कान्दात् अत्र शुद्धा एकादशी, उत्तरा द्वादशी "नवेकादशी विष्णाविति" नारदोक्तेश्च। यत्तु "अविद्धापि च विद्धा स्यादिति" पाद्मन्तच्छुद्धाधिकापरम्। यत्तु "संपूर्णैकादशी त्याज्या परतो द्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्" इत्यादि तद्वैष्णवपरम्। स्मार्त्तानां तु पूर्वैवेत्युक्तम्। विद्धन्यूना समद्वादशिका तु सपुत्राणां पुत्रवतां च परा अन्येषां तु पूर्वा। पुत्रवतोऽपि पूर्वेति मदनरत्ने। विद्धसमा समद्वादशिकोनद्वादशिका च इत्यनुनिः पराऽन्यैः पूर्वा कार्य्या। "दशमी मिश्रिता पूर्वा द्वादशी यदि लुप्यते। पूर्वैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिरिति" व्यासोक्तेः मोक्षकाङ्क्षिग्रहणादन्येषां पूर्वैव। "पारणाहे न लभ्येत द्वादशी कलयापि चेत्। तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिरिति" ब्रह्माण्डोक्तेश्च। विद्धाधिका समद्वादशिका च सर्व्वेषां परैव माधवमते तत्र गृहिणः पूर्वा यतेरुत्तरा "सर्व्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः। प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति" पाद्मोक्तेः। विद्धाधिका न्यूनद्वादशिका मोक्षपरैः विष्णुप्रीतिकामैः परा कार्य्या गृहस्थेन तु नक्तं कार्य्यम् "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। उपवासं न कुर्व्वीत पुत्रपौत्रसमन्वित" इति कौर्म्मे दिनत्रये उपवासनिषेधात्। "दशम्येकादशी विद्धा द्वादशी च त्रयं गता। क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतमिति" वृद्धशातातपोक्तेश्च गृहिणः पूर्वत्रोपवासः। एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यूनसमत्वयोरेकादश्यामुपवासः। यानि तु "दशम्यनुगता हन्ति द्वादशद्वादशीफलम्। धर्मापचयमाप्नोति त्रयोदश्यां तु पारणमिति" कौर्मादीनि दशमीवेधत्रयोदशीपारणयोर्निषेधकानि तानि विहितभिन्नपराणि, अत्र मूलवचनानि तद्व्याख्या चाकरे ज्ञेया। यत्तु कालहेमाद्रौ "बहुवाक्यविरोधेन सन्देहो जायते यदा। द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणमिति" मार्कण्डेयोक्तेः "सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत्। विवादेषु च सर्वेषु द्वादश्यां समुपोषणम्। पारणं च त्रयोदश्यामाज्ञेयं मा-

मनो गुरे !" इति पाद्मोक्तेश्च वेधसन्देहे ज्योतिर्विदां विप्रतिपत्तौ वा परा कार्य्येत्युक्तम् । तत्तु वैष्णवविषयम्"

"अथात्रोपयुक्तं किञ्चिदुच्यते । तत्र दशम्यामेकादशीयोगे दशमीमध्य एव भोजनम् । "एकादश्यां न भुञ्जीतेति" तस्या एव निमित्तत्वात्, "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति हेमाद्र्युक्तेश्च । केचित्तु एकादशीव्रताङ्गत्वेन पूर्व्वेद्युरेकभक्तविधानाद्विधिस्पृष्टे च विषये निषेधानवकाशेन काम्यव्रताङ्गे न भोजननिषेध प्रवर्त्तते तेनैकादशीमध्येऽपि पूर्व्वदिने भोजनमित्याहुः" निर्ण० सि० । तत्रैकादशीदिवसे श्राद्धप्राप्तौ विशेषः नि० सि० उक्तः

माधवीये "उपवासो यदा नित्यः" इत्यादि प्रागुक्तकात्यायनवाक्यमाश्रित्य उपवासदिनेऽश्राद्धं कृत्वा श्राद्धशेषघ्राणं कार्य्यमिति व्याख्यायोक्तम् । "हेमाद्र्यादिसर्व्वनिबन्धेष्वेवम् । एतेनैकादशीनिमित्तकं श्राद्धं द्वादश्यां कार्य्यमिति" वदन्तः परास्ताः किन्तु महालये । "स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रतीति, स्मृतं षोडशत्वम् । पौर्णमास्यां च मन्वादिश्राद्धं, क्षयाहापरिज्ञाने च कृष्णैकादश्यां विहितं श्राद्धं बाधितमेव स्यात् । यदपि स्मृतिचन्द्रिकास्थं पठन्ति । "यन्त्राश्चितानि पापानि ब्रह्मोक्तदानैरेव वा । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समा" इति । तत्रापि रागप्राप्तभुक्तिगोचरस्य वैधं श्राद्धगोचरयतां महत्साहसमित्युक्तम् । योऽपि "कृतश्राद्धनिषया जलपिण्डविनाकृताः" इति बृहन्नारदीये एकादश्यां श्राद्धादिनिषेधः स मातापितृभिन्नविषयः पूर्व्ववाक्ये तदुपक्रमात्"

हरिभक्तिविलासानुसारिणस्तु वैष्णवदीक्षावतां तद्दिने श्राद्धनिषेधः द्वादश्यां तत् करणीयमिति वदन्ति यथा "अथोपवासदिने श्राद्धनिषेधः । पाद्मे पुष्करखण्डे "एकादश्यां यदा राम ! श्राद्धं नैमित्तिकं भवेत् । तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत्" । तत्रैवोत्तरखण्डे "एकादश्यान्तु प्राप्तायां मातापित्रोर्मृतेऽहनि । द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् । गर्हितान्नं न चाश्नन्ति पितरश्च दिवौकसः" । स्कान्दे "एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्यात् द्वादश्यां श्राद्धमाचरेत्" । ब्रह्मवैवर्त्ते । "ये कुर्व्वन्ति महीपाल ! श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः" । हरिभक्तिविलासः ।

"एकादश्यां यदा रामेत्यादिना उपवासदिने श्राद्धं निषिद्धम् । यच्च स्कान्दादौ "श्राद्धदिनं समासाद्य उपवासो यदा भवेत् । तदा कृत्वा तु वै श्राद्धं भुक्तशेषन्तु यद्भवेत् । तत् सर्व्वं दक्षिणे पाणौ गृहीत्वाघ्राय शिखिध्वज ! । अवजिघ्रेदनेनाथ भवेत् श्राद्धं शिखिध्वज ! । पितृणां यत्प्रियं तात ! व्रतभङ्गो न विद्यते" इत्यादि । तत्तु वैष्णवेतरविषयं मन्तव्यम् वैष्णवपितृणामपि श्रीविष्णुदिने श्राद्धभक्षणायोगादिति" तट्टीका ।

अत्रेदं बोध्यं स्मृतिचन्द्रिकास्थवचनेन हरिभक्तिविलासधृतवचनचतुष्टयेन च उपवासदिने श्राद्धनिषेधात् प्रागुक्तकात्यायनस्कान्दादिवचनेन श्राद्धशेषभोजनाशक्तावप्याघ्राणमात्राङ्गतया श्राद्धविधानात् परस्परं विरोधप्रसक्तयोर्विरोधपरिहाराय कर्म्मभेदविषयकत्वमवश्यं कल्पनीयं तद्विना तदपरिहारात् तत्र वैष्णवेतरविषयतया आघ्राणाङ्गश्राद्धस्य, वैष्णवविषयकतया च श्राद्धनिषेधस्य कल्पनं युक्तं न च विनिगमनाविरहेण वैपरीत्यं शङ्कनीयं वैष्णवस्य सत्त्वगुणाधिकविष्णोः सेवकत्वेन सात्त्विकपुराणोक्तविधेरेव ग्राह्यतया सात्त्विकपुराणेषु च पाद्मस्य कीर्त्तनात् वैष्णवैः पाद्मोक्तविधेरेव ग्राह्यतौचित्येन स्कान्दस्य तामसत्वेन तदुक्तविधेस्तदितरैर्ग्राह्यतौचित्येन च विनिगमनासम्भवात् "पाद्मस्कान्दयोर्यथा सात्त्विकतामसत्वं तथोक्तम्" मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत । वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि षट्" पद्मपु० । एवञ्च सति पाद्मवाक्यस्य वैष्णवविषयकत्वनिर्णये स्कान्दकात्यायनादिवाक्यस्य तदितरविषयत्वं निर्णीयते । निर्णयसिन्धुकृता श्राद्धनिषेधवाक्यस्य मातापितृश्राद्धव्यतिरिक्तविषयकत्वं यत्कल्पितं तन्न मनोरमं पाद्मोक्तवाक्ये गर्हितान्नं न गृह्णन्ति पितर इति पितृमात्रस्यापकर्षोक्तेः सर्व्वश्राद्धस्यैव निषेधात् मातापित्रोर्मृताहमात्रादिपाद्मोत्तरवचने तयोरपि श्राद्धनिषेधात् । तेन वैष्णविकन्यायेनेतरश्राद्धस्यापि निषेधः सूपपन्न एव । किन्तु शेषभोजननिमित्तकालयोरुभयोरप्यरक्षणतया स्मार्त्तानां शेषभोजनरूपाङ्गबाधः वैष्णवानां तु कालबाध इत्युभयोरपि एकतरबाधस्य शास्त्रबोधिततया न दूषकत्वम् । स्मार्त्तैरपि एकादश्यादिनिमित्तकोपवासदिने श्राद्धं निषिध्य पक्षात् परेद्युः श्राद्धविधानेन कालरूपाङ्गबाधस्य तत्र स्वीकारात् तद-

दत्तापि एकादश्युपवासदिनमध्ये विहिताष्टकापकालबाधेनो-त्तरदिने श्राद्धविधानेनार्थवत्त्वम् । तथा च “पक्षोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम् । तद्दिने चोपवासः स्यात् प्रत्यब्दं तु परेऽहनि” “एकादश्यामुपोष्य तु दर्शीन्दु प्राप्तुतो यदि । प्रत्यब्दं तु तदा कार्यं परेऽहन्येव सर्वदा” नि० सि० धृतवचनैः निमित्तकालबाधेनापरेद्युः श्राद्धकालः । एतेन एकादशीतद्दिवसे श्राद्धनिषेधे विप्रपतितश्राद्धस्य कर्त्तव्यं विधानम् अथ तुल्यापन्निमित्तकषोडश-श्राद्धविधानस्य निर्विषयं स्यादित्याशङ्कितिरपास्ता विषयभेदेन व्यवस्थासम्भवात् । तथाहि विप्रपतितश्राद्धे आ-द्यकालव्याप्त्यैकादशीतिथिमात्रस्य निमित्तता तस्य प्रत-दिमात् पूर्वेद्युरपि कदाचित् सम्भवेन तद्रूपविषय-लाभेन निर्विषयत्वाभावात् कचिदेकदिने तत्प्रसक्तावपि सामान्यशास्त्रेन प्रवृत्तत्वात्तस्य उपवासदिनव्यतिरिक्ततिथि-समृद्धिविषयकत्वकल्पनेनाविरोधः । किञ्चात्र कर्तृभेदेन-व्यवस्थाप्युपपद्यते वैष्णवेतरसपुत्रगृहस्थस्य तस्यैकाद-श्युपवासस्य नित्यत्वाभावेन तत्परं श्राद्धविधानं, वैष्णव-स्योपवासस्य नित्यत्वाभावेन तत्परं श्राद्धविधानं, वैष्णव-विषयः श्राद्धनिषेध इति कर्तृभेदसम्भवात् । अथ यु-कुल्यापन्निमित्तकषोडशश्राद्धविधानमपि न निर्विषयं तिथिविप्लवादिवशादेकयावद्दिवसे तत्र विहितश्राद्धद्वय-वद्वैष्णवैः द्वादश्यां श्राद्धद्वयकरणेन षोडशसंख्या-पूर्त्तिसम्भवात् । पौषैकादश्यां कृष्णमन्वादिनिमित्तकश्राद्ध-स्यापि नैमित्तिकतया मन्वादिकल्पत्वेन पूर्वाह्णे विहि-तत्वेन उपवासदिन एव तत्प्रसङ्गस्यैव लाभसम्भवेन पूर्व-दिवसे च तदसम्भवेन विरोधप्रसङ्गेऽपि वैष्णवानां द्वाद-श्यामेव कृताकृतश्राद्धस्यैव तस्य कर्त्तव्यता वैष्णवेतरगृहस्थस्य तद्दिने कर्त्तव्यतेति कर्तृभेदात् व्यवस्थाया नानुपपत्तिः ।

पाद्मे नैमित्तिकमित्युक्तेः प्रत्यर्थं यत्तेतच्च इत्युक्तेश्च श्राद्धश्राद्धमपि एकादश्युपवासदिवसे वैष्णवैर्न कर्त्तव्यमेव । “एकोद्दिष्टं तु यत् श्राद्धं तन्नैमित्तिकमु-च्यते । तदप्यदैविकं कार्यं मयुग्मानाशयेद् द्विजान्” इति भविष्य पु० एकोद्दिष्टस्य नैमित्तिकत्वेन परिभाषितत्वात्-प्रेतोद्देशकश्राद्धस्य च एकोद्दिष्टत्वाच्च तस्यापि तद्दिने निषेध एव प्रेतश्राद्धस्य यदेकोद्दिष्टत्वं तदेकोद्दिष्टशब्दे वक्ष्यते इत्थं स्मार्त्तवैष्णवकर्तृभेदात् व्यवस्थाभेदः ।

एकादशगुरु पु० एकादशमिता गुरवः । “आचार्यश्च पिता ज्येष्ठोभ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ । वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवोमताः” इति देवलोक्तेषु आचार्यादिषु । माता त्वाचकर्त्ता । वर्णज्येष्ठः क्षत्रियादीनां ब्राह्मणादिः । “अनेनैकादश गुरवःसङ्केतिताः । कथमनेकेषामेकगुरुशब्द-वाच्यत्वमेकस्य प्रवृत्तिनिमित्तस्याभावात् इति चेन्न “गुरुरनुगन्तव्यः” इत्यादि श्रुत्वा सदापरितोषणीयत्वादि धर्म्मात्मकस्योपाधित्वात् यद्यप्याचार्यस्यैव परितोषणी-यता श्रूयते तथापि तदन्येष्वतिदिश्यते अतोऽतिदिष्ट-धर्म्मोऽप्येकपदप्रवृत्तावुपाधिर्भवति इष्टशब्दप्रवृत्ताविव तद्धर्म्मसंबन्धः शास्त्रीयगुरुपदप्रवृत्तिविषयत्वं वोपाधिर्भव तु विशेषाणशब्दवादिशब्दवदनेकार्थत्वे कोदोषः” मा० वि० । अयञ्च शब्दः एकादशिन्शब्दात् पूर्वं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्र लिखितः ।

एकादशराशिक न० एकादश राशीनधिकृत्य प्रवृत्तं गणनम् कन् । लीलावत्युक्ते गणनप्रकारभेदे तत्प्रकारश्च तत्रैव यथा “पञ्चसप्तनवराशिकादिकेऽन्योन्यपक्षनयनं फल-च्छिदाम् । संविधाय बहुराशिजे वधे स्वल्पराशिवध-भाजिते फलम्” इत्युक्तदिशा फलानयनम् । तत्रोदा० “पिण्डे येऽर्कमिताङ्गुलाः किल चतुर्वर्गाङ्गुला विस्तृतौ

लि० १२ ८ पट्टा दीर्घतया चतुर्दश कराख्रिंशन्मिताः”

लि० १६ १२ “एता विस्तृतिदीर्घपिण्डमितयो येषां

दी० १४ १० चतुर्वर्जिताः” इति नवराशिके उक्ता ।

मि० २० १४

“पट्टास्ते प्रथमोदितप्रमितयोगव्यूतिमात्रे गतास्तेषा-

लि० १२ ८ मानयनाय चेच्छकटिनां द्रम्माष्टकं भाट-

लि० १६ १२ कम् । अन्ये ये तदनन्तरं निगदितामाने

दी० १४ १० चतुर्वर्जितास्तेषां का भवतीति भाटक-

मि० २० १४ मितिर्व्यूतिषट्के वद” । अत्र फलस्येतर-

ग० १ ६ पक्षनयने तस्य बहुराशिकत्वं तद्रहितपक्षस्य

भा० ८ ० स्वल्पराशिता तेन समानाङ्केनोभयपक्षयो-रपवर्त्तने फलसहितबहुराशिपक्षस्याङ्कस्य परस्परगुणने जाताः ४८ अङ्काः फलरहितपक्षाङ्कानां परस्परघातनिष्पन्नेन ६ षडङ्केन भाजिते लब्धाः ८ अष्टौ अङ्कास्तेन अष्ट द्रम्मा-स्तत्र भाटकमितिरिति तत्र निश्चयः । अत्रेदमवधेयम् फल-च्छिदामित्युक्तावपि फलच्छेदभिन्नराशिच्छेदस्यैव अन्योन्य-पक्षनयनम् न तु फलच्छेदस्येति । अयञ्च शब्दः एकादशहार-शब्दात् परं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्रोक्तः ।

एकादि त्रि० एक आदिर्यस्य । १एकत्वसङ्ख्यान्वितमारभ्य परार्द्धसङ्ख्यायुक्ते ।२तत्कारके रेखादिचिह्नविशेषरूपे-

अङ्के च । अङ्कानाञ्च तेषामेव स्थानविशेषयोगभेदेन विभिन्नसंख्याकारकत्वम् । अथ एकाद्यङ्कैः यद् यत्संख्यान्विताः कार्य्यन्ते तदुच्यते ।। इत्यङ्केन एकः एवं २, द्वौ ३, त्रयः, ४, चत्वारः ५, पञ्च ६, षट् ७, सप्त ८, अष्टौ ९, नव १०, दश । दशानामेकादिनवभिरङ्कैराधिक्ये ११, १२, १३, १४, १५, १६, १७, १८, १९ इत्येतेऽङ्काः क्रमेण एकादशद्वादशत्रयोदशचतुर्द्दशपञ्चदशषोड़शसप्तदशाष्टादशनवदशानां कारकाः। दशाङ्कस्य च द्व्यादिनवभिर्गुणने क्रमेण २०, ३०, ४०, ५०, ६०, ७०, ८०, ९० एतेऽङ्काः क्रमेण विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिसंख्यान्वितानां कारकाः । एषाञ्च एकादिकनवभिराधिक्ये २१, २२, २३, २४, २५, २६, २७, २८, २९, इत्येतेऽङ्का एकविंशत्यादीनां कारकाः । एवं ३१इत्यादयोऽङ्का एकत्रिंशदादीनां कारकाः। दशभिर्गुणिते दशाङ्के १००इत्यङ्कः शतस्य कारकः। क्रमेण दशोत्तरगुणने "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्व्वनिखर्व्वं महापद्मशङ्कवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संज्ञाः संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्व्वैः" इति लीलावत्युक्तदिशावसेयम् । संक्षेपेण तत्रैकाद्यङ्कानां क्रमशः स्थितानां योगजसंख्याज्ञानार्थमुपायान्तरमुक्तं तत्रैव यथा "एकादिनवान्तानामङ्कानां योगे का संख्येति प्रश्ने "सैकपदघ्नपदार्द्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्या" इत्युक्तरीत्या इष्टसंख्यापदं एकयुक्तेन तेन १०अङ्केनाहतं इष्टाङ्कार्द्धम् ९/२ ४५ संकलितसंख्या । तथाचैकादिनवाङ्कानां योगे ४५ संख्या भवतीति निश्चय इत्यन्यत्राप्यूह्यम् । "एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः" लीला०

एकादिसंख्यानां वाचकाश्च कतिचित् शब्दाः कविकल्पलतायां संगृहीताः यथा ।

"एकोमहीन्दुब्रह्मश्वगजाद्यदन्तरत्नक् १ । द्वयं पक्षनदीकूलाक्षिधारारामनन्दनौ २ । त्रयं कालोऽग्निभुवनं गङ्गामार्गमहद्गुणाः । पौवारेखा कालिदासकाव्यम् शूलमिता वलिः । सन्ध्यापुरपुष्कराणि रामविष्णुपदं वयः ३ । चत्वारि वेदब्रह्मास्यवर्णाश्रमहरिबाहवः । स्वर्द्दन्तिदन्तसेनाङ्गोपायहामयुगाश्रमाः ४ । पञ्च पाण्डवप्राणेन्द्रियशम्भुव्रतास्त्रवः । महापापमहाभूतमहाकाव्यमहामखाः । पुराणलक्षणान्यङ्गानिलकर्मेन्द्रियार्थकाः ५ । षट् तर्ककोशलिपिशिरोनेत्रतर्काङ्गदर्शनम् । चक्रवर्त्तिमहासेनवदनानि गुणा रसाः ६ । सप्त पातालभुवनमुनिद्वीपार्कवाजिनः । धाराब्धिस्वरराज्याङ्गर्षिह्रीशक्तिमिषाह्वयः ७ । अष्टौ योगाङ्गवसुनागमूर्त्तिदिग्गजसिद्धयः । मङ्गलश्रुतिव्याकरणदिक्पालादिकुलाचलाः ८ । नवाङ्कद्वारभूखण्डक्षत्तारावणमस्तकाः । व्याघ्रीस्तनग्रहाः रत्नसेवब्धुरसपद्माः ९ । दश हस्ताङ्गुलीशम्भुपाण्डरावणमौलयः । कृष्णावतारदिग्विश्वेदेवावस्थेन्दुवाजिनः १० । एकादश महादेवाः सेनाश्च कुरुभूपतेः ११। द्वादशार्कमासराशिसंक्रान्तिगुहबाहवः । शारीकोष्ठकसेनानीनेत्रच्छायापतिमण्डलाः १२ । त्रयोदश सुस्ताम्बूलगुणा १३ अथ चतुर्दश । विद्यामनुत्रिदिवराड्भुवनस्वप्नतारकाः १४। तिथयः स्युः पञ्चदश १५ षोड़शेन्दुकलात्मिकाः १६ । अष्टादश द्वीपविद्यापुराणस्मृतिधान्यकम् १८। विंशतिरावणभुजाङ्गुलयो२०ऽथ शतं यथा । धार्त्तराष्ट्राः शतभिषक्तारकाः पुरुषायुषम् । रावणाङ्गुलजलतरङ्गशताब्धियोजनम् १०० । सहस्रं जाह्नवीवक्त्रशेषशीर्षाम्बुजच्छदम् । रविवाणार्जुनकरा वेदशाखेन्द्रदृशः" । १००० ।

शा० ति० केषाञ्चित् संख्याभेदान्विततयोत्पत्तिकथनेन तेषां तत्तत्संख्याबोधकत्वं सूचितं यथा "हंसवर्णौ परात्मानौ शब्दार्थौ वामरूपे । सृजत्येषा परा देवी तदा प्रकृतिपूरुषौ । यद्यदन्यज्जगत्यस्मिन् युग्मं तत्तदजायत२ । त्रिगुणीकृतसर्वाङ्गी चिद्रूपा शिवगेहिनी । प्रसूते त्र्यक्षरं मन्त्रम्" इत्युपक्रम्य "लोकत्रयगुणत्रये । धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभम् । त्रिपुष्करं सुरान्देवान् ब्रह्मादीनां त्रयं तथा । वह्निकालत्रयं शक्तित्रयं इच्छात्रयं महत् । नाडीत्रयं त्रिवर्गं सा यद्यदन्यत्त्रिधा मतम् । चतुःप्रकारगुणिता शाम्भवी शर्म्मदायिनी" इत्युपक्रम्य "चतुरः सागरानन्तःकरणानां चतुष्टयम् । सृष्ट्यादींश्चतुरोभावान् विष्णोर्मूर्त्तिचतुष्टयम् । चतुष्टयं गणेशानामात्मादीनां चतुष्टयम् । उड्डियानादिकं पीठं धर्म्मादीनां चतुष्टयम् । इभकादीन् गजान् देवी यद्यदन्यच्चतुष्टयम्४। पञ्चधा गुणिता पत्नी शम्भोः सर्व्वार्थसाधिनी। पञ्चरत्नं महादेवी सर्व्वकामफलप्रदम् । पञ्चाक्षरं महेशस्य पञ्चवर्णान् शरत्कृतः । सम्मोहनान् पञ्च बाणान् कामान् पञ्च सुरद्रुमान् । पञ्च प्राणादिकान् वायून् पञ्च वर्णान् महेशितुः । मूर्त्तीः पञ्च कलाः पञ्च पञ्च ब्रह्मवः क्रमात् । सृजत्येषा परा शक्तिर्वेदेदार्थरूपिणी५ । षोढा संगुणिता देवी धत्ते मन्त्रं षडक्षरम् । ऋतून् वसन्तप्रमुखाना-

निरूपं जन्मत्रयम्। वाजपेयोपलक्षितं कर्मत्रयम् तच्च वेदभेदात् द्विजभेदाच्च त्रयम्। त्रीण्येव प्रातर्मध्याह्नतृतीयसवनानि। त्रयो लोकाः स्वर्गो नरकं भूश्चेति भोगभूमयः। त्रीणि ज्योतींषि जाग्रदाद्यवस्थात्रयम्। ३। निर्णीतमाश्रमम् यत्रमिह ज्ञानयज्ञं तेन चातुर्वर्ण्यमध्ये शूद्रस्यापि तत्राधिकारः। दिशः विराट्शरीरान्तर्यामितुर्यसाक्षात्काररूपाः चतस्रः दिशः। वाङ्मयप्रणवस्य यच्च चतुष्टयम् अकारउकारोमकारः अर्द्धमात्रा इत्येवं चतुष्टयम्। चतुष्पदा परा पश्यन्ती मध्यमा वैखरीति भेदात् गीर्वाक् चतुष्पदा ४। पञ्चाग्नयः गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्याः। पञ्चपदाऽष्टाक्षरैः पादैः पङ्क्तिः छन्दः पञ्चपदा। यज्ञाः पञ्च ब्रह्मर्षिपितृनृभूतयज्ञाः पञ्च श्रौताः, अग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशुः सोम इति श्रौता वा पञ्च। अप्सु परोराकारपरिणतासु जलप्रधानासु मात्रासु सरति गच्छतीत्यप्सराः चितिः पञ्चचूडा तत्तद्विषयाकारतया प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपवृत्तिपञ्चकसाहचर्येण चित्तापञ्चकवती पञ्चानां विषयरूपस्रोतसां समाहारः पञ्चनदम् ५ षट् आधाने शा इति शेषः। मनस इन्द्रियत्वमभ्युपेत्य षट्कोपपत्तिः षाड्गुण्या यज्ञविशेषाः ६। "ग्राम्यारण्याः पशवश्चतुर्दश गौरविरजोऽश्वोऽश्वतरोगर्दभोमनुष्यश्चेति सप्त ग्राम्याः महिषवानरर्क्षसरीसृपरुरुपृषन्मृगाश्चेति सप्तारण्याः" पैठीनसिरुक्ताः। सप्त छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीसमाख्यानि। सप्तर्षयः सप्त प्राणाः "प्राणा वै ऋषय" इति श्रुतेः मनोबुद्धिसहिताः प्राणादयः पञ्च सप्तेत्यर्थः। सप्त अर्चींषि अर्चींषि यानि शुभानि पञ्चभिरिन्द्रियैः मनोबुद्धिभ्यां प्राप्यानि सुखानीतिभेदात् सुखानि सप्त। ७ "अष्टौ पक्षा अष्टावतिपक्षाः" श्रुतेः शाखाः यज्ञनिर्मिता गौण्यः व्यापनविशेषा इव इन्द्रियप्रवेशयोग्याः अष्टौ। ८। पितृणामिष्टौ "उशन्तस्त्वा निधीमहीति" ऋक् त्रिरभ्यस्ता प्रत्येकं त्रिरभिनुक्ता नव सामधेन्योऽग्निसमिन्धनार्था ऋचः यस्यन्ते। तथा एका प्रकृतिरेव त्रिगुणा एकद्विगुणप्रधानभावविमर्द्दैः प्रत्येकं त्रिविधा नवैव संपद्यते तथा नवैवाङ्काः क्रमस्थानभेदात् यथेष्टसंख्यावाचिनो भवन्ति ९। दिश उपदेष्टार दासा तत्त्वबोधकाः। यज्ञोक्तत्याधिकारिणश्च दश १०। इन्द्रियाणि मनसा सह ज्ञानकर्मेन्द्रियाणि तेषां विषयाः तदुपहृताश्चिकाराश्च एकादश ११। प्राकृतयज्ञः द्वादशाहसाध्यत्वात् द्वादशाहः १२। त्रयोदशहोपासौ भूरादिषट्केन पातालसप्तकेन युक्ता च मध्यस्था मही त्रयोदशद्वीपवती १३। एवमेकादिसंख्याया बोधकत्वं तत्तत्पदार्थानाम् दर्शितम्। अन्ये च शब्दाः शास्त्रान्तरेषु एकादिसंख्याबोधकतया प्रयुज्यन्ते ते च शब्दाः पूर्वदर्शितशब्दाश्च यथा तत्तत्संख्याबोधका भवन्ति तथा दर्श्यते तत्र सर्वत्र शब्दतदर्थयोरभेदात् स्वशब्दार्थगतसंख्यातुल्यसंख्याबोधकत्वेन स्वशब्दार्थसंख्यापूर्णसंख्यातुल्यसंख्याबोधकत्वेन वा तथात्वं बोध्यम्। सर्वेषाञ्च क्वचित् तत्तत्संख्यापूरणवाचकतापि "दुग्माग्नी हतभूतानि चक्षुनी वसुरन्ध्रयोः" इतौ दुग्मादिभिः तत्संख्यापूरणद्वितीयादीनां बोधनात्।

१ तत्रादौ एकत्वबोधकाः। कवि०क०। ब्रह्म च: "एकमेवाद्वितीयं ब्रह्मेति" श्रुतेरेकत्वात्तथात्वम् विरञ्चिवाचिब्रह्मणोप्येकमहासर्गे एकत्वात्तथा "चन्द्रेन्द्र" इति पाठे भूमिचन्द्रयोरेकत्वात्तथा। इन्द्रहस्तिन ऐरावतस्य तदश्वस्योच्चैःश्रवसश्चैकत्वात् तथा। गणेशदन्तस्य शुक्रनेत्रस्य चैकत्वात् तथा एवं काकनेत्रस्यापि। भा०च०उक्ताः। स्वप्रकाशस्य अन्यप्रकाशकस्य सूर्यस्याग्नेश्च यमस्य सर्वनियन्तुरीश्वरस्य, इन्द्रपदाभिधेयस्य तथा "इन्द्रोमायाभिः पुरुरूप ईयते इति" श्रुतेरीश्वरस्येन्द्रपदवाच्यत्वात्।

रूपम् वैशेषिकमतसिद्धचतुर्विंशतिगुणेषु आद्यत्वात् तथा। "भजेच्छिदोऽंशैरथ तैर्विमिश्रै रूपं भजेत् स्यात् परिपूर्त्तिकालः" लीला०। अश्विनी तस्याः ताराणामाद्यत्वात् अभेदात्तद्विपाश्विशब्दोऽपि। तस्य स्वपरत्वे द्वित्वबोधकतेति भेदः। उक्था तस्याः एकाक्षरपादकत्वात् प्रधानवाची प्रकृतिशब्दस्तथा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतेस्तदर्थस्यैकत्वात्।

२ द्वित्वबोधकाः। कवि०क० उक्ताः। चान्द्रमासघटकयोः पक्षिच्छदरूपयोर्वा पक्षयोः, नदीकूलयोः, असिधारयोः, कुमकरूपयोर्दाशरथिपुत्रयोश्च तथा। शा० ति० उक्ताः। हंस इति वर्णौ जीवपरमरूपौ परात्मानौ शब्दार्थौ दिनरात्री स्त्रीपुरुषौ, परस्परविरोधिगुणरूपाः शीतोष्णसुखदुःखादयश्च तथा। भा०च० उक्ताः। इन्द्राग्नी सत्यजीवौ नारदपर्वतौ अश्विनौ रथचक्रे च तथा। एवम् भरणी ताराश्च तस्याद्वितीयत्वात् तदभेदात् तद्धर्मायभोऽपि। यमशब्दस्य शमयितृत्वेश्वरपरत्वे एकत्वस्य, यमजपरत्वे द्वित्वस्य योगाक्य-

मोदादीन् गणाधिपान्। कौणानूर्मीन् रसान् शक्तीर्डाकिन्याद्याः षडध्वनः। यन्त्रं षड्गुणितं शक्तेः षडाधारानजीजनत्। षड्विधं यज्जगत्यस्मिन् सर्वन्तु परमेश्वरीद्दं। सप्तधा गुणिता भिन्ना शङ्कराद्दं शरीरिणी। सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम्। सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम्। लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि। समिधः सप्त संख्याताः सप्तजिह्वा हविर्भुजः। अन्यत् सप्तविधं यद्यत्तदस्याः समजायत७। अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम्। गन्धाष्टकं शुभं देवीदेवानां हृदयङ्गमम्। ब्राह्म्याद्याभैरवान् सर्वान् मूर्त्तीरीशोर्वसूनपि। अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्। अष्टौ सा प्रकृतीर्विप्रान् वक्रतुण्डादिकान् क्रमात्। अणिमादिगुणान्नागान् शम्भोर्मूर्त्तीर्भवादिकान्। अष्टात्मकं जगत्यन्यत् सर्वं वितनुते तदा ८। गुणिता नवधा भिन्ना सूते मन्त्रं नवात्मकम्। नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी। नवकं पीठशक्तीनां शृङ्गारादीन् रसानपि। माणिक्यादीनि रत्नानि नवरागयुतानि सा। नवकं प्राकृतीनां मण्डलं नवकं शुभम्। यद्यन्नवात्मकं लोके सर्वमस्यास्तदुद्गत ९। दशधा गुणिता शम्भोर्भामिनी भद्रःखहा। दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी। नाडीनां दशकं विष्णोरवतारान् दश क्रमात्। दशकं लोकपालानां यद्यन्यत्कल्पयत्यसौ१०। एकादश क्रमात् संविद् गुणिता सा जगन्मयी। रुद्रैकादशनामाद्या शक्तेरेकादशाक्षरम्११। समुद्धरति सर्वात्मा गुणिता द्वादश क्रमात्। राशीन् मासान् हरेर्मूर्त्तीर्यन्त्रं सा द्वादशात्मकम्। अन्यदेतादृशं सर्वं यत् तदस्याव्यजायत"।

अत्र च यो यः पदार्थः यद्यत्संख्यान्विततया उत्पन्नः सतःस्वगतसंख्यातत्संख्यासूचकः भवति च निर्दर्शित पदार्थानां तत्तत्संख्यायुक्ततया लोकशास्त्रप्रसिद्धिः इत्यतस्तत्तच्छब्दानां तत्तत्संख्यापरकत्वम्। तथा चैकविधसंख्यान्वितप्रकृतिकार्यत्वेन तत्संख्याबोधकत्वम्। अन्येऽपि केचित् संख्याविशेषसूचकाः भा० व० १३४ अ० दर्शिता यथा। "बन्दुवाच। एक एवाग्निर्बहुधा समिध्यते एकः सूर्य्यः सर्व्वमिदं विभाति। एको वीरो देवराजोऽरिहन्ता यमः पितृणामीश्वरश्चैक एव१। अष्टावक्र उवाच। द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदपर्व्वतौ च। द्वावश्विनौ द्वे रथस्यापि चक्रे भार्य्यापती द्वौ विहितौ विधात्रा२। बन्दुवाच। त्रिः सूयते कर्म्मणा वै प्रजेयं त्रयो युक्ता वाजपेयं वहन्ति। अध्वर्य्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः३। अष्टावक्र उवाच। चतुष्टयं ब्राह्मणानां निकेतं चत्वारो वर्णा यज्ञमिमं वहन्ति। दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा गौरपि शश्वदुक्ता४। बन्दुवाच। पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि। दृष्टा वेदे पञ्चचूडाप्सराश्च लोके ख्यातं पञ्चनदञ्च पुण्यम्५। अष्टावक्र उवाच। षडाधाने दक्षिणामाहुरेके षड् वै चेमे ऋतवः कालचक्रम्। षडिन्द्रियाण्युत षट् कृत्तिकाश्च षट् साद्यस्काः सर्व्ववेदेषु दृष्टाः६। बन्दुवाच सप्त ग्राम्याः पशवः सप्त वन्याः सप्त छन्दांसि क्रतुमेकं वहन्ति। सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा७। अष्टावक्र उवाच। अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती। अष्टौ वसून् शुश्रुम देवतासु यूपश्चाष्टाश्रिर्विहितः सर्व्वयज्ञे८। बन्दुवाच। नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गम्। नवाक्षरा बृहती संप्रदिष्टा नवाङ्कयोगो गणनामेति शश्वत्९। अष्टावक्र उवाच। दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि। दशैव मासान् बिभ्रति गर्भवत्यो दशैरका दश दाशा दशार्हाः१०। बन्दुवाच। एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः। एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः११। अष्टावक्र उवाच। संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि। द्वादशाहः प्राकृतयज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः१२। बन्दुवाच। त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च। लोमश उवाच। एतावदुक्त्वा विरराम बन्दी श्लोकस्यार्द्धं व्याजहाराष्टावक्रः। अष्टावक्र उवाच। त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः" १३ अत्र नीलकण्ठोक्तदिशाव्याख्या यथा एकोऽग्निः सूर्य्यो वा इतराप्रकाश्योऽन्यप्रकाशकश्च। एवं देवानामिन्द्रियाणां राजा प्रधानभूतः अरिहन्ता पराभिभूततत्त्वान्तराभिभावकः। यमः सर्वेन्द्रियाणां नियन्ता पितॄणां विषयोपहारद्वारा पालयितॄणामिन्द्रियाणाम् ईश्वरो भोक्ता कर्त्ता प्रधानभूत एक एव १। सखायौ सयुजौ जीवेश्वरौ वा। २ पुण्येन देवस्थावरमनुष्यरूपं, पापेन नारकस्थावरतिर्य्यग्यो-

रत्वे चटत्वस्य बोधकतेति भेदः । प्रेतराजपरकालशब्द-
स्यापि तथात्वम् । तस्य समयपरत्वे त्रित्वस्य, पितृपरत्वे
श्राद्धाधिपत्वात् षट्कस्येति भेदः । अश्वकुरवा ह्यश्वपा-
दत्वात्तथा । शकटाङ्गभेदार्थकयुगशब्दस्तथा तस्य शकटादौ
द्वित्वसंख्यकतयैव योजनात् । एवं हस्त्यादिकयुगशब्दोऽपि ।
अयनशब्दोऽपि तथा वर्षे तदर्थयोर्द्वयोरेव घटकत्वात् ।
पर्वसन्धिः चान्द्रमासे तयोर्द्वित्वात् । शब्दः ध्वन्यात्मक-
वर्णात्मकरूपः, अदृष्टम् पुण्यापुण्यरूपम्, शब्दशक्तिः
अभिधालक्षणारूपा, बुद्धिः अनुभवस्मृतिरूपा, गन्धः
सुरभिदुर्गन्धरूपः, ध्वनिधर्मः तारत्वमन्द्रत्वात्मकः, स्पर्शः
उष्णानुष्णात्मकः, मृदुत्वकाठिन्यात्मको वा, अभावः, संस-
र्गाभावभेदात्मकश्च द्वित्वस्य बोधकः । सामान्यं व्याप्य-
व्यापकात्मकम्, क्रिया सिद्धसाध्यात्मिका वेदान्तिमते पदा-
र्थः चिज्जडरूपः दृग्दृश्यरूपो वा आर्हतमते जीवाजीव-
रूपो वा न्यायमते भावाभावरूपो वा, परिमाणम्
वेदान्तिमते अणुत्वमहत्त्वरूपं च द्वित्वात्तथा । वैशेषिकमते
तु अणुमहत्त्वह्रस्वत्वदीर्घत्वरूपं चतुष्कात् चतुष्कस्य
तथेति भेदः । पदम् सुबन्ततिङन्तरूपत्वात्, धात्वर्थः
फलव्यापाररूपत्वात् तथा । प्रयोजनं गौणमुख्यरूपत्वा-
त्तथा । न्यायमते व्याप्तिः अन्वयव्यतिरेकरूपत्वात्तथा ।

वेदान्तादिमते व्यतिरेकव्याप्तेरभावात् तस्याः एक-
त्वादेकत्वस्येति भेदः । संयोगः कर्मजसंयोगजात्मकः,
विभागः कर्मजविभागजात्मकश्च द्वित्वात् तथा । नाटक-
प्रस्ताव्यवस्तु आधिकारिकप्रासङ्गिकरूपं द्वित्वात् तथा ।
काव्यम् दृश्यश्राव्यरूपं द्वित्वात् तथा मतान्तरभेदपरत्वे
ध्वन्यादिपरत्वात् त्रित्वस्येति भेदः । गुरुत्ववद्द्रव्यम् रस-
वद्द्रव्यञ्च क्षितिजलात्मकत्वात्तथा । नैमित्तिकद्रववद्द्रव्यं
क्षितितेजोरूपत्वात्तथा । समाधिः सविकल्पनिर्विकल्पा-
त्मकः सबीजनिर्बीजात्मकः संप्रज्ञातासंप्रज्ञातात्मको वा
द्वित्वात्तथा । समापत्तिः सविचारनिर्विचारात्मिका
द्वित्वात् तथा । परमुक्तिर्विदेहकैवल्यात्मिका द्वित्वा-
त्तथा । सालोक्यादिपरत्वे चतुष्कस्येति भेदः । समाधि-
प्रज्ञा ज्योतिष्मत्यृतम्भरात्मिका द्वित्वात्तथा । कर्मकारकं
मुख्यगौणात्मकं द्वित्वात्तथा । कर्तृकारकं स्वतन्त्रप्रयो-
जकरूपं, सम्प्रदानकारकं प्रेरकानुमन्तृरूपञ्च द्वित्वात्तथा ।
प्रत्यक्षं लौकिकालौकिकात्मकतया द्वित्वात् तथा मतान्तरप्र-
त्यक्षपरत्वे षट्त्वस्येति भेदः । ध्यानं सविकल्पकनिर्वि-
कल्पकात्मकं तथा । अनुमानं स्वार्थपरार्थात्मकं अनु-
मानकत्वं तच्च सगुणनिर्गुणविषयरूपं तथा । ब्रह्म सगुणनिर्गुण-
रूपम्, जीववादः एकानेकविषयात्मकः वेदान्तिमते ज्ञानं
वृत्तिरूपस्वरूपावच्छिन्नचैतन्यात्मकम् जीवभेदकः अवच्छेद
प्रतिबिम्बरूपश्च द्वित्वात् तथा । कर्म शुक्लकृष्णात्म पु-
ण्यापुण्यसाधनम् विहितनिषिद्धरूपं, धर्मः प्रवृत्ति
निवृत्तिलक्षणः वेदमेयं सिद्धसाध्यरूपं, प्रधानःपरि-
मद्विषरूपः, वेदान्तिमते अविद्या कार्यकारणरूपा
तूलाविद्यामूलाविद्यात्मिका द्वित्वात्तथा । कान्तिः
विष्णुशिवकान्तिरूपत्वात् तथा । आगमरूपप्रमाणशब्दः
दृष्टादृष्टार्थकत्वात्तथा उदाहरणं साधर्म्यवैधर्म्यकृतम्, शृङ्गारः
विप्रलम्भसंभोगात्मकः, मानश्च प्रणयेर्ष्याजातः द्वित्वात्तथा

३ त्रित्वबोधकाः कवि० क० उक्ताः । कालः भूत-
भविष्यद्वर्तमानरूपत्वात्, अग्निः दक्षिणाग्निगार्हपत्याह-
वनीयरूपत्वात्, लोकः स्वर्गमर्त्यपातालरूपत्वात्, ग-
ङ्गायाश्च त्रिलोकस्थत्वात्, शिवनेत्रम् सूर्येन्दुवह्निरूप-
त्वात्, गुणः सत्त्वरजस्तमोरूपत्वात् तथा । नीतिशास्त्रप्र-
सिद्धगुणपरत्वे षट्कस्य, द्रव्यधर्मभेदपरत्वे चतुर्विंशति
त्वस्य बोधकतेति भेदः । वलीरेखा, कालिदासकृतकाव्यं कुमा-
ररघुसंमेघदूतरूपत्वात्, त्रिशूलशिखा, देहोदराधःस्थल-
स्थितमांसरूपवलिश्च त्रित्वात् तथा । प्रातर्मध्यसायाह्नरूप
सन्ध्यानां, त्रिपुरासुरस्वर्गादिस्थपुराणां, भारतिचिन्तन-
भेदात्मकज्योतिषोक्तपुष्करदोषाणाम्, परशुरामदाशरथि-
बलभद्रात्मकरामाणां, त्रिलोकव्यापिवामनरूपविष्णुपदानां,
बाल्ययौवनजरारूपवयसाञ्च त्रित्वात् तथा । वा०
ति० उक्ताः । सूर्येन्दुवह्निरूपधाम्नाम्, ऋग्यजुःसामरूप-
त्रय्यात्मकवेदानां त्रित्वात् तथात्वम् । अथर्ववेदसहितत्र-
यीपरत्वे तु चतुष्टयस्य बोधकतेति भेदः । प्रणववर्णानाम्
अकारोकारमकाररूपाणाम्, उदात्तानुदात्तस्वरितरूपस्व-
राणाञ्च त्रित्वात् तथा । स्वरस्य षड्जादिपरत्वे सप्त-
कस्य अलङ्कारपरत्वे षोडशत्वस्येति भेदः । देवीनां
गायत्रीसावित्रीसरस्वतीरूपाणां, ब्रह्मविष्णुशिवरूपेश्वर-
मूर्त्तीनाञ्च त्रित्वात् तथा । कृषिपाशुपाल्यवाणिज्यरूपा
याजनाध्यापनप्रतिग्रहरूपा वा आजीविकात्मिका वृत्ति-
स्तथा मनोवृत्तिपरत्वे चतुष्कस्य, प्रमाणादिवृत्तिपरत्वे
पञ्चकस्य, शब्दनिष्ठबोधनार्थशक्तिरूपवृत्तिपरत्वे आल-
ङ्कारिकमते त्रित्वस्य, अन्यमते द्वित्वस्य, वाचक-
शब्दभेदपरत्वे रूढितादिपञ्चत्वस्येति भेदः । ज्योतिषोक्ता
ग्रामारूपा, ज्ञानेच्छाक्रियारूपा वा प्रभावोत्साह-

मन्त्रजारूपा वा शक्तिः तथा, नाडी इडापिङ्गला-सुषुम्णात्मकप्रधाननाडीरूपा तथा। गान्धार्य्यादिनाडीपरत्वे सप्तत्वस्य, दण्डपरत्वे तस्याः षष्टिपलात्मकत्वात् दिवसे षष्टिसंख्यकत्वाच्च षष्टित्वस्येति भेदः। भा०द०उक्ताः। प्रजा देवतिर्य्यग्मनुष्यरूपा, त्रयीभेदात् द्विजभेदाच्च वा-जपेयादिकर्म्म च तथा। प्रातर्मध्यमायाह्नकर्त्तव्यानि सव-नानि, ज्योतिः त्रिविधप्राणतैजसरूपम् तथा। एवम् कटु शुण्ठीपिप्पलीमरिचरूपतया, फलम् हरीतक्यामलकीवय-स्थारूपतया, दोषः वातपित्तकफरूपतया रागद्वेषमोहरूप-तया वा तथा। कृत्तिका तस्या राशिचक्रे तृतीयत्वात्, अभे-दोपचारात् तदधिप वह्निरपि। तदुपटकतारापरत्वे तु षट्कस्य बोधिका इति भेदः। मध्या त्रिस्वरपादत्वात् तथा शब्दवृत्तिः शक्तिलक्षणाव्यञ्जनारूपा तथा इत्यालङ्कारिकाः अन्यमते द्वित्वस्येत्युक्तम्। कारणम् समवाय्यसमवायि-निमित्तात्मकं त्रित्वात् तथा। फलावहहेतुः दैवपुरुष-कारकालात्मकः "दैवं पुरुषकारश्च काले फलति पार्थिव!। त्रयमेतन्मनुष्यस्य पिण्डितं फलवाहकम्" इत्युक्तेः त्रयाणां तथात्वात्तथा। "अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम्" गीतोक्तत्वात् पञ्चत्वस्यापि। संस्कारः स्थितिस्था-पकवेगभावनात्मकस्त्रित्वात् तथा, गर्भाधानादिपरत्वे दश-त्वस्य चत्वारिंशत्त्वस्य वेति भेदः। संसर्गाभावः प्रागभाव-ध्वंसात्यन्ताभावात्मकत्वात्तथा। यत्नः प्रवृत्तिनिवृत्तिजीवन-योनिरूपत्वात्तथा। दुःखम् आध्यात्मिकाधिभौतिकाधिदै-विकात्मकत्वात्तथा। त्यागकर्त्तृकरणकर्म्मज्ञानबुद्धिधृतिसु-खसुखादिकं गीतोक्तं प्रत्येकं सात्त्विकराजसतामसरूपतया त्रित्वात्तथा। अवस्था सांख्यमते आविर्भावतिरोभावाभि-व्यक्तिरूपा वेदान्तमते जाग्रत्स्वप्नसुषुप्तिरूपा, अधिकारश्च गङ्गास्रोतोमण्डूकप्लुतसिंहावलोकनात्मकः त्रित्वात् तथा

असिद्धिः आश्रयासिद्धिव्याप्यत्वासिद्धिस्वरूपासिद्धि-रूपत्वात् तथा, विरुद्धहेतुदोषः साधारणासाधारणा-नुपसंहारिरूपत्वात् तथा। न्यायमते "प्रकृतिः प्रत्ययश्चैव निपातश्चेति च त्रिधा" इत्युक्तानां प्रकृत्यादीनां सार्थकशब्दानां त्रित्वात् तथा। वाचकशब्दः रूढयौगिकयोगरूढरूपतया त्रित्वात्तथा वाचकशब्दशक्तिः नैमित्तिकौपाधिकीपारिभाषिक्यात्मकतया त्रित्वात्तथा। लक्षणा जहत्स्वार्थाऽजहत्स्वार्थाजहदजहत्स्वार्थात्मिका त्रित्वात्, आलङ्कारिकमते षड्विधत्वस्येति भेदः। ग्रामः स्वरारोहावरोहक्रमात्मकः त्रित्वात्तथा "सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः। तानाश्चैकोनपञ्चाशत् मात्रातिस्रो लयास्त्रयः। स्थानत्रयं यतीनाञ्च षडास्यानि रसा नव। रागाः षट्त्रिंशत्तु भाषाश्चत्वारिंशत्ततः (तान) स्मृताः" भरतोक्तेः द्रुतमध्यविलम्बितकालरूपा मात्रा, लयः उत्तममध्याधमसमानात्मकः, आदिमध्यान्त्यरूपयतिस्थानं, च त्रित्वात् तथा। विपद्दफलम् भूमिहिरण्यमित्रलाभा-त्मकं त्रित्वात् तथा। काव्यं ध्वनिगुणीभूतव्यङ्ग्याव्यङ्ग्या-त्मकमुत्तममध्यमाधमात्मकं त्रित्वात् तथा। देहः कारण-स्थूलसूक्ष्मात्मकः त्रित्वात् तथा। मूर्त्तभेदः देहेन्द्रियवि-षयात्मकस्तथा। सर्गः सात्त्विकराजसतामसात्मकस्तथा। मुख्यसिद्धिः दुःखत्रयाभिघातात्मिका प्रमोदमुदितमो-दमानाभिधेया त्रित्वात् तथा। विद्याङ्कुरः विपर्य्ययाशक्तितुष्टिरूपत्रित्वात् तथा। कर्मविपाकः जात्या-युर्भोगात्मकत्रित्वात् तथा। अतीन्द्रियगुणः गुरुत्वा-दृष्टभावनात्मकः त्रित्वात् तथा। कर्मजगुणः वेग-संयोगविभागात्मकत्रित्वात्तथा। लिङ्गभेदः शब्द-भेदश्च सहजप्राकृतकृत्रिमात्मकत्रित्वात्तथा। संसृतिमार्गः देवयानपितृयानयमयानात्मकः त्रित्वात्तथा। वि-ष्णुपदम् तस्य प्रत्येकपदत्वे त्रित्वात् तथा। वेदान्तिमते सत्ता पारमार्थिकीव्यावहारिकीप्रातिभासिकीरूपा त्रि-त्वात्तथा। क्रोतः ज्ञातृधर्मिधर्म्यरूपं त्रित्वात्तथा। ईप्सिततमकर्म्म निर्वर्त्त्यविकार्य्यप्राप्यात्मकं त्रित्वात्तथा। आधारकारकम् औपश्लेषिकाभिव्यापकवैषयिकात्मकं त्रि-त्वात् तथा। अपादानकारकम् निर्द्दिष्टविषयोपात्त-विषयापेक्षितक्रियात्मकं त्रित्वात्तथा। व्यापारः कायिक-वाचिकमानसात्मकस्तथा। ऋणं देवर्षिपितृसम्बन्धिरूपं तथा। अलौकिकसन्निकर्षः सामान्यलक्षणाज्ञानलक्षणा-योगजात्मकत्रित्वात्तथा। काव्यगुणः माधुर्य्यौजःप्रसा-दात्मकः त्रित्वात्तथा। श्लेषौदार्य्यादीनामोजस्यन्तर्भावात् त्रित्वम् सा० द०। नायिका स्वकीयापरकीयासाधारण-स्त्र्यात्मिका, मुग्धा मध्या प्रगल्भात्मिका वा तथा तासा-मेकैकस्या उभयधर्मत्वे नवत्वस्य अवस्थाभेदात् बहुत्वस्येति भेदः। अनुमितिलिङ्गं पूर्ववच्छेषवत्सामान्यतोदृष्टात्मकं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपं वा त्रित्वात्तथा छलं वाक्सामान्योपचारछलात्मकं त्रित्वात्तथा।

४ चतुष्कबोधकाः कवि० क० उक्ताः। वेदः ऋग्यजुःसा-माथर्व्वात्मकः, चतुर्ब्रह्मणो मुखानि, पूर्व्वापरदक्षिणो-

न्तरमुद्रत्व· चतुष्टात् तथा । करणमुद्रादिपरत्वे मुद्रात्व-बोधक इति भेदः । चतुर्भुजविष्णुबाहुमन्त्रोऽपि तथा । स्वर्गदूर्भिनामैरावतादीनां चतुर्दन्तानामुत्तरं दन्तमद्ध-त्वमा । कृच्छ्रचरणपादात्मकप्रायश्चित्तम्. उपायः साम-दानभेददण्डरूपः. दिनरात्रयोश्चतुर्णां महत्त्वयामयञ्च तथा । युगं सत्यत्रेताद्वापररूपं तथा शकटाङ्गविशेषपरत्वे द्वित्वपरत्वे च द्वित्वबोधकमिति । आश्रमः ब्रह्मचर्यगा-र्हस्थ्यवानप्रस्थसंन्यासरूपस्तथा । शा० ति० उक्ताः । तत्त्वम् आत्मविद्याशिवतत्त्वरूपम् प्रधानादितत्त्वपरत्वे चतुर्विंशतिसंख्याबोधकमिति भेदः । मनोवृत्तिः संशयनि-श्चयगर्वाभिमानरूपा तथा । वाग्वृत्तिः परापश्यन्तीम-ध्यमावैखरीरूपा तथा । अर्थबोधनशक्तिविशेषपरत्वे द्वित्वस्य त्रित्वस्य वा मतभेदेन बोधिकेति भेदः । भावः वेदान्तिमते जाग्रत्स्वप्नसुषुप्तितुरीयरूपस्तथा । सांख्यमते तु धर्माद्य-ष्टपरत्वेनाष्टत्वबोधकः शैवमते षट्त्वस्येति भेदः । महा-विष्णुमूर्त्तिः वासुदेवानिरुद्धसंकर्षणप्रद्युम्नरूपा तथा । महा-दिक्चतुष्टयविन्यासभेदकृता तन्मूर्त्तिस्तु चतुर्विंशतित्वस्य बोधिकेति भेदः । गणेशः "गणाधिपं गणेशानं हस्तीयं गणनायकम् । गणाक्रीडं पीतगौररक्तनीलरुचः क्रमात्" शा० ति० १२प० उक्तपीतादिवर्णयुक्तगणाधिपादिरूप-स्तथा । आत्मादि आत्मान्तरात्मज्ञानात्मपरात्मरूप-स्तथा । पीठशक्तिः उड्डियानजालन्धरपूर्णगिरिकामार्षकः तथा । धर्मादि धर्मज्ञानैश्वर्यवैराग्यरूपम् अधर्मादि तथा । अधर्माज्ञानानैश्वर्यावैराग्यरूपञ्च तथा सांख्यमते धर्मादि-अष्टत्वस्य बोधकमिति भेदः । वर्गयोगजः दमकादि-रूपः, दिशः प्राच्यवाचीपश्चिमोत्तररूपा तथा । कोणान्तर-दिक्परत्वे अष्टत्वस्य दशत्वस्य वा बोधिका इति भेदः । ज्योतिःविद्यागतसूत्रात्मान्तर्यामिरूपम् । एवमन्येऽपि यथा रोहिणी राशिचक्रे तत्पादरूपत्वात् तद्भेदात् तदधिप-ब्रह्माऽपि तथा । प्रतिष्ठा तत्पादचतुरक्षरपादकत्वात् तथा । सत्ययुगार्थककृतशब्दः "चतुस्त्रिद्व्येककृतं युगम्" सू० सि० उक्तेः "अष्टाङ्गप्रमाणद्वादशसहस्रदशांशस्य चतुर्गुणरू-पत्वात्तस्य तथात्वम् । सार्थकशब्दः नामाख्यातनिपातोपस-र्गात्मकत्वात्, पुरुषार्थश्च धर्मार्थकाममोक्षरूपत्वात् तथा । नायकः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्तात्मकत्वात् दक्षिणधृष्टानुकूलशठात्मकत्वाद्वा तथा तेषां प्रत्येक-मुभयधर्मत्वे षोडशभेदत्वात् षोडशत्वस्येति भेदः । काव्यरीतिः वैदर्भीगौडीपाञ्चालीलाटिकात्मिका चतुष्ट-त्वात्तथा । प्रलयः नित्यनैमित्तिकप्राकृतात्यन्तिकात्मकत्वात् तथा भगवद्भक्तः "चतुर्विधा भजन्ते माम्" इत्युपक्रम्य "आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!" इति गीतोक्तेः चतुष्कत्वात् तथा । अभिनयः आङ्गिकवाचिकाहार्य्य-सात्त्विकात्मकः चतुष्कत्वात् तथा । नायकादिव्यापार-विशेषात्मकवृत्तिः कौशिकीसात्वत्यारभटीभारतीरूपा चतुष्कत्वात्तथा । कौशिक्यङ्गम् 'नर्म च नर्मस्फुञ्जो नर्मस्फोटश्च नर्मगर्भश्च" इत्युक्तनर्मादिरूपं तथा । सात्वत्यङ्गम् । "उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः । विशेषा इति चत्वारः सात्वत्याः परिकीर्त्तिता" इत्यु-क्तोत्थापकादिरूपस्तथा । आरभट्यङ्गम् "वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् । इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः" इत्युक्तवस्तूत्थापनादिरूपं तथा । अनेका-श्रितगुणः संयोगविभागद्वित्वादिसंख्यापृथक्त्वरूपः चतुष्टात्तथा । आध्यात्मिकतुष्टिः "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः" सा० का० उक्तप्रकृत्यादि-रूपा चतुष्टात्तथा । चित्तपरिकर्मार्थभावना मैत्रीकरुणा-मुदितोपेक्षात्मिका चतुष्टात्तथा । समाधिविघ्नः लयविक्षेप-कषायरसास्वादात्मकः चतुष्कत्वात्तथा । संन्यासी कुटीचक-बहूदकहंसपरमहंसात्मकस्तथा । अनुबन्धः विषयप्रयो-जनसम्बन्धाधिकारिरूपस्तथा । ब्रह्मविविदिषासाधनम् इहामुत्रार्थफलभोगविरागनित्यानित्यवस्तुविवेकशमादि-षट्कमुमुक्षारूपं तथा । कल्पितकर्मकारकम् । औदासीन्य-प्राप्तिसिद्धिकल्पितान्यपूर्वकरूपं तथा । बीजम् एकानेक-वर्णसमीकरणमध्यमाहरणभावितात्मकं तथा । सङ्केतविषयः जातिद्रव्यगुणक्रियारूपस्तथा । द्रव्यारम्भकः स्पर्शवद्द्रव्यञ्च क्षितिजलतेजोवायुरूपत्वात्तथा । अपरमुक्तिः सालोक्य-सायुज्यसार्ष्टिसारूप्यात्मिका तथा । कार्योत्पत्तिप्रकारः असतः सदुत्पत्तिः सतोऽसदुत्पत्तिः सतो विवर्त्तः सतः सदुत्पत्तिश्चेति चतूरूपत्वात् तथा । वृद्धिः कायिकाका-लिकाकारिताचक्रवृद्धिरूपा तथा । सिद्धान्तः सर्वतन्त्र-प्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरूपः चतुष्टात्तथा । बलोत्पत्तौ आभ्यन्तरप्रयत्नः स्पृष्टेषत्स्पृष्टविवृतसंवृता-त्मकचतुष्कत्वात्तथा । विप्रलम्भः पूर्वरागमानप्रवास-करुणात्मकः चतुष्कत्वात्तथा ।

५ पञ्चत्वबोधकाः । कवि०क० युधिष्ठिरभीमार्जुननकुलसहदेवा-नाम् पाण्डुपुत्राणां, पञ्चाननशिवमुखानां, श्रोत्रत्वग्नेत्र-रसनघ्राणात्मकानां ज्ञानेन्द्रियाणाम्, वाक्पाणि-

न्ते इत्याद्यर्थे। "इष्टे माऽप्यार्थी चेदैकान्ततोऽत्यन्ततोऽभावात्" सां०का०। तत्र भवः ठञ्। ऐकान्तिक एकान्तभवे त्रि० स्त्रियां ङीप्। 'ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते' पुरा०। एक एवान्तः स्वभावो यस्य। एकरूपतामापन्ने त्रि०। "त्रिलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः। स्त्रियं चक्रे स्वदेहार्द्धं यया पुंसां मतिर्हृता" भाग० ६,१८,२२।

**एकान्तत्यागवाद** पु० वस्तुनः एकान्तता एकस्वरूपता अस्तीत्यादिरूपस्वरूपता तस्य त्यागप्रतिपादकोवादः। आर्हतविशेषोक्तवादभेदे। स च वादः आर्हतशब्दे स्याद्वादप्रकरणे ३८६ पृ० दर्शितः।

**एकान्तदुःषमा** स्त्री दुष्टा समा वर्षो दुःषमा सुषमा० षत्वम् एकान्तं दुःषमा २त०। बौद्धकल्पिते कालभेदे हेमच०। यथा "कालो द्विविधोऽवसर्पिण्युत्सर्पिणीषु भेदतः। सागरकोटिकोटीनां विंशत्या स समाप्यते। अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्। तत्रैकान्तसुषमारश्चतस्रः कोटिकोटयः। सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः। सुषमदुःषमा ते द्वे दुःषमसुषमा पुनः। सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता। अथ दुःषमैकविंशतिरब्दसहस्राणि तावती तु स्यात्। एकान्तदुःषमापि ह्येतत्संख्याः परेऽपि विपरीताः। प्रथमारत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः। त्रिद्व्येकगव्यूतुच्छ्राया स्त्रिद्व्येकदिनभोजनाः। कल्पद्रुफलसंतुष्टाश्चतुर्थे त्वरके नराः। पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः। पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः। षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः। एकान्तदुःखप्रचिता उत्सर्पिण्यामपीह्याः। पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि"।

**एकान्तर** त्रि० एकमन्तरं व्यवधानम्। १एकव्यवधाने "एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ तथा स्मृतौ" मनुः। बहु०। २एकान्तरवर्त्तिनि त्रि०। "एकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्" मनुः। एकदिनव्यवधानेन भोजनरूपे ३व्रतभेदे न०। एकदिनव्यवधानेन जायमाने ४ज्वरभेदे पु०।

**एकान्तसुषमा** स्त्री सु शुभा समा वर्षः सुषमा सुषमादि० षत्वम् २त०। बौद्धमतसिद्धे कालभेदे एकान्तदुःषमाशब्दे विवृतिः।

**एकान्तिन्** त्रि० एकान्तमस्त्यस्य इनि स्त्रियां ङीप्। १अतिप्रयुक्ते एकान्तः एकस्वरूपः उपास्यत्वेनास्त्यस्य इनि। स्त्रियां ङीप्। २भगवद्भक्तविशेषे त्रि०। "एकान्तेनासमोविष्णुर्यस्मादेवं परायणः। तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः" गरुडपु० १३१।

**एकान्न** त्रि० एकस्यैवान्नं भक्ष्यं यत्र। १एककालिकभक्ष्ये एकान्नरूपे व्रते कर्म०। २एकमात्रभक्ष्ये अन्ने न०। "अन्नं यथाल्पमश्नीयादेकान्नमथ वा पुनः। एलाकं न्यूरणञ्चैव शुक्तिभिश्चैव वर्जयेत्" काशी०। "भक्ष्ये च यत्र देवित्वं नैकान्नादी भवेत् व्रती" मनुः। "क्रीत्वा लब्ध्वा प्राप्य स्वयमेकान्नमन्नमेकरात्रं त्रिरात्रं वा भोक्तव्यमिति" शु०त० स्मृतिः। एकस्मिन् स्थाने पचनीयमन्नं यस्य। अविभक्ते भ्रात्रादौ "एकान्नवर्त्तिनाञ्चैव एकोद्दिष्टं न पार्वणम्। एकपाकेन वसतां पितृदेवद्विजार्चनम्। एकं भवेद्विभक्तानां तदेव स्यात् गृहेगृहे" छ०।

**एकायन** त्रि० एकमयनं विषयोऽवलम्बनं वा यस्य। १विषयान्तरव्यापृतचित्ते एकाग्रमनस्के २एकावलम्बने च। "तानि वा एतानि संकल्पैकायनानि संकल्पप्रतिष्ठितानि" छा०उ०। एकमयनमवलम्बनीयं यस्य। ३एकावलम्बनीये त्रि०। "एवमेकायनं धर्ममाहुर्वेदविदोजनाः" भा०शा० ७८७२ श्लो०। एकस्यायनं गतिर्यत्र। ४एकमात्रगमनयोग्ये त्रि० "भ्रातरं भीमसेनन्तु विज्ञाय हनुमान् कपिः। दिव्यरूपं करोधाय मार्गं भीमस्य वारयात्। अनेन हि पथा मा वै गच्छेदिति विचार्य सः। आस्त एकायने मार्गे कदलीखण्डमण्डिते। भ्रातुर्भीमस्य रक्षार्थम्" भा० व० १४६अ०। कर्म०। ५एकस्थाने न०। "यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन्" भा० अनु० ५३२श्लो०।

**एकार्थ** पु० एकः अर्थः प्रयोजनमभिधेयम् पदार्थो वा। एकस्मिन् १प्रयोजने २अभिधेये ३पदार्थे च। "वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः" सा०द०। बहु०। ४एकाभिधेये शब्दभेदे एकार्थस्य एकशब्दोपस्थापितार्थकः। ५एकप्रयोजनयुक्ते त्रि०। अभूततद्भावे च्वि+भू-घञ्। एकार्थीभाव अनेकार्थानामेकार्थताप्राप्तौ पु० "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्। बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महत् गौरवं तस्मादेकार्थीभाव आश्रितः" इति भर्तृहरिः। कर्त्तरि क्त। एकार्थीभूत परस्परमन्विते एकस्मिन् विशिष्टार्थे च "एकार्थमनेकपदं वाक्यम्" निरु०। वै०मते वाक्येऽपि शक्तिः अखण्डवाक्यस्फोटस्यैव वाचकत्वात् "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च। वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।

माश्रयार्थीयथा नास्ति कश्चिदु माश्रयकस्तथे । देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः” इति “वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरिति च” हरिः ।

**एकावली** स्त्री एकाऽद्वितीया आवली माला मणिश्रेणी । (एकनर) हारभेदे, सा०द० उक्तेऽर्थालङ्कारभेदे अलङ्कारशब्दे ३६८ पृ० विवृतिः ।

**एकाब्दा** स्त्री एकः अब्दो वयोमानं यस्याः । १एकहायन्यां स्त्रीगव्याम् । “एकाब्दा त्वेकहायनी” अमरः । २एकवर्षयुक्ते त्रि० । एकवर्षादयोऽप्यत्र । “एकवर्षे गवि हते कृच्छ्रपादो विधीयते” स्मृतिः । एकहायनोऽप्यत्र हायनस्य वयोवाचित्वेतु संख्यापूर्वकत्वात् स्त्रियां ङीप् इति भेदः । “अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति” श्रुतिः ।

**एकाशीतिपद** न० एकाशीतिः पदान्यत्र । गृहारम्भप्रवेशादौ वास्तुपूजार्थं कर्त्तव्ये तावत्सितकोष्ठके वास्तुमण्डलभेदे । तत्र मण्डलं तिर्य्यगूर्द्ध्वाभिर्दशभीरेखाभिः एकाशीतिकोष्ठात्मकं गृहारम्भाद्यर्थं वास्तुयागे वेद्यम् यथाह देवीपु० । “प्रासादे च चतुःषष्टिरेकाशीतिपदं गृहे” तद्वेषनप्रकारादि वास्तुमण्डलशब्दे वक्ष्यते ।

**एकाश्रय** त्रि० एक आश्रय आधारोऽवलम्बनं वा यस्य । १अनन्यगतिके । २एकाधारहत्तौ वैशेषिकोक्तगुणभेदे च ते च गुणाः अनेकाश्रितगुणभिन्नाः । “संयोगश्च विभागश्च संख्याद्वित्वादिकास्तथा । द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः । अतः शेषगुणाः सर्वे मता एकैकवृत्तयः” भाषा० दर्शिताः । एवं च रूपरसगन्धस्पर्शशब्दाः एकत्वमेकपृथक्त्वं परिमाणपरत्वापरत्वानि बुद्धिसुखदुःखेच्छाद्वेषयत्नगुरुत्वस्नेहसंस्काराऽदृष्टानि च तादृशाः, तेषां प्रत्येकस्य एकैकवृत्तित्वात् संयोगादीनान्तु एकैकस्यैव द्विवृत्तित्वमिति न तथात्वम् । एकाधिकरणादयोऽप्यत्र । कर्म० । ३एकस्मिन् आधारे पु० “हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता” भाषा० ।

**एकाष्टका** स्त्री एका अष्टका । १माघकृष्णाष्टम्याम् २तत्कर्त्तव्ये श्राद्धे च । अष्टकानां तासु कर्त्तव्यश्राद्धानां च त्रित्वेऽपि का०श्री०सू० “हैमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वेति” एकस्या अपि कर्त्तव्यतया विधानात्तथा । सा च मध्यत्वेन माघकृष्णाष्टमी प्राह्या । अत एव “सत्रायणमेकाष्टकायां दीक्षा” कात्या०१२,१,२, सू० व्या० “एकाष्टका नाम माघस्य कृष्णाष्टमी भविष्टेः” कर्कोक्तम् । २तदभिमानिदेव्यां यथाम् “एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन देवा असहन्त शत्रून् हन्तासुराणामभवच्छचीभिः” शा०ब्रा०२म०३क० । शचीभिरित्यत्र शचीपतिरिति” अथ०३,१०,१२,पाठः । “एकाष्टके ! सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम्” अथ०३,१०,५

**एकाष्ठील** पु० एकमस्थीव काण्डं तद्वत्कठिनत्वात् नास्ति षा-च पृषो०सत्वं दीर्घश्च । वकवृक्षे अमरः पाठायां स्त्री । (आकनादी) राजनि० ।

**एकाह** पु० एकमहः टच्समा० एकशब्दोत्तरत्वात् नाह्नादेशः । “अह्नाह्नान्ताःपुंसि” पा० पुंस्त्वम् । “एकस्मिन् दिवसे “एकाहेनैव निर्वपेत्” याज्ञ०स्मृतिः “यत्रब्रह्मचारिण्येकाहः” मनुः । “अन्वस्यैकाहगमः” पा० । उपचारात् । २एकाहसाध्ये अग्निष्टोमादौ यागभेदे च । “उक्तप्रकृतयोऽहीनैकाहाः” आश्व० ८,१,१ । “उक्तो ज्योतिष्टोम एकाहाहीनसत्राणां प्रकृतिभूतः उक्तानि षड्विंशतिरहानि सात्त्विकानि एतेभ्य एव सात्त्विकेभ्योऽङ्गोभ्यो ऽहीनैकाहा व्याख्यास्यन्त इत्युक्तम् इदानीं तानेकाहाहीनान् वक्तुकामेनाचार्य्येण “उक्तप्रकृतयोऽहीनैकाहा” इत्युक्तम् । तस्यायमर्थः उक्ता प्रकृतिर्येषां ते इमे उक्तप्रकृतयोऽहीनैकाहाः । प्रकृतिः प्रकारो न रूपान्तरमित्यनर्थान्तरं ज्योतिष्टोमोऽपि सर्वामेकाहाहीनसत्राणां प्रकृतिरिति सिद्धम्” नारा० । “अनतिदेशे सेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणेन पशुमेकाहानाम्” ६,१,२ ।

**एकाहगम** पु० एकाहेन गम्यते गम–कर्म्मणि खच् । एकाहगम्ये देशे “अन्वस्यैकाहगमः” पा० ।

**एकाहार** पु० एकस्मिन् दिने एक आहारः । एकस्मिन् दिने सकृद्भोजने “एकाहारस्तथा (विधवया) कार्य्यो न द्वितीयः कथञ्चन” शु०त०पुरा० । “मुनिभिर्द्दिरशनं प्रोक्तम्” इत्यादिना द्विर्भोजनस्य विधानेऽपि एककालमात्रभोजनं तस्या विहितम् । एकाहारे च दरिद्रस्यैकाहारस्य रागप्राप्तेः न द्वितीय इत्यनेन तस्यैव प्रतिपादनात् । एक आहारो यस्य । एकस्मिन्नह्नि सकृद्भोक्तरि त्रि० “पौषपदं तु यो मासमेकाहारो भवेन्नरः” मा० अनु०१०६अ० ।

**एकीकरण** न० एक+अभूततद्भावे च्वि-कृ–भावप्रयोगः ल्युट् । अनेकधान्यादेः राशिकरणेन एकतापादने । कर्म्मणि क्त ।

एकीकृत तथापादिते धान्यादौ त्रि० एकी+भू-घञ् । एकीभाव अनेकधान्यादेः राशितापादनरूपे व्यापारे पु०। कर्त्तरि क्त । एकीभूत एकत्वप्राप्ते अनेकधान्यादिराश्यादौ । कृ-ल्यप् । एकीकृत्य तथापादनं कृत्वेत्यर्थे अव्य० भू-ल्यप् । एकीभूय एकत्वं प्राप्येत्यर्थे अव्य० ।

एकीय त्रि० एक+भवार्थे तस्येदमित्यर्थे वा छ । १एकपक्षभवे सहाये, २एकसम्बन्धिनि च ।

एकेक्षण पु० एकमीक्षणं यस्य । १काके २एकचक्षुर्युतमात्रे काणे त्रि० । ३शुक्राचार्य्ये पु०। बलिना वामनाय दीयमानत्रिपदभूमिं प्रतिषेधतः शुक्रस्य वचनमनादृत्य तद्दानाय प्रवर्त्तमानं बलिं वीक्ष्य दानार्थन्धृतजलपात्रद्वारं सूक्ष्ममूर्त्त्या प्रविश्य रुध्यतस्तस्य छलं बुद्ध्वा जलधारावरोधनिवारणच्छलेन कुशेन तस्यैकं नेत्रं वामनेन विदारितमिति तस्य तत्काणत्वादेकनेत्रतेति पौराणिकी कथाऽत्रानुसन्धेया ।

एकैक त्रि० सुबन्तस्य एकस्य वीप्सार्थे द्वित्वम् "एकं बहुव्रीहिवत्" पा० द्विरुक्त एकशब्दो बहुव्रीहिवत् तेन सुब्लोपपुंवद्भावौ । प्रत्येकपदार्थे इह द्वयोरपि सुपोर्लुकि कृते सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात् समुदायात् पुनः सुप् । स्त्रियां टाप् । एकैका आहुतिः । "न बहुव्रीहौ" पा० सर्व्वनामसंज्ञानिषेधः मुख्यबहुव्रीहिपरत्वेन एकैकस्मै एकैकस्मात् इत्यादौ सर्व्वनामकार्य्यम् । "दश दश वा एकैकस्मिन् मासाः" शत०ब्रा० ८,१,१,२ । ततः कारकार्थे शस् । एकैकशस् कारकरूपप्रत्येके अव्य० । "एकैकमप्याचरेत् कृच्छ्रं द्विजः पापापनुत्तये" प्रा०त० विष्णु० "ब्राह्मणस्य चतुर्दश यत् प्रमाणं समासतः । एकैकशो युगानां तु क्रमशस्तान्निबोधत" मनुः । स्वार्थे यत् । एकैकश्य तदर्थे न० "एकैकश्येनानुपूर्व्व्या भूत्वा भूत्वेह जायते" भा०७,१५,४२ "एकैकश्यं तदा योधा धार्त्तराष्ट्रस्य भारत । प्रत्यवर्त्तन्त गन्धर्व्वैर्दशभिर्दशभिः सह" भा०व०। २४० । नीलकण्ठेन "एकैकश्येति पठित्वा एकैकमिति व्याख्यातम्" एकैकशो भावः यत् । एकैकश्य "एकैकं राशिभवने "एकैकश्येन यथानुपूर्व्यम्" भाग०५,१,२५ ।

एकैषिका स्त्री नित्यकर्म्मधा० । (आकनादि) वृक्षे रत्नमाला । "एकैषिकाजलरुही च प्रवेपे सम्प्रयोजयेत्" । "एकैषिकातैलं सप्तमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिहरणम्" इति च सुश्रु० । क्वचित् रत्नमालायाम् एकैषिकेतिपाठं दृष्ट्वा शब्दकल्पद्रुमे तादृशशब्दोल्लिखितः ।

एकोक्ति स्त्री एका उक्तिः अभिधाशक्तिः । उभयपदार्थविषयिण्यामेकस्यां शक्तौ । यथा पुष्पवन्तौ इत्यादौ पुष्पवत्पदेन दिवाकरनिशाकरयोरुभयोरेव बोधः न तु अन्यपदादिवत् प्रत्येकपदार्थबोध इत्याकरे दृश्यम् । एवं "जात्याकृतिव्यक्तयः पदार्थः" गौ०सू० जात्यादीनामेकशक्त्यैव बोध इति व्युत्पत्तिवादे गदाधरः ।

एकोत्तर त्रि० एकैकमुत्तरं यत्र वृत्तौ सप्रश्नदशवत् संख्याशब्दस्य वीप्सार्थता । एकैकाधिके । "एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः" लीला० । "सर्गादौ तु यथाकाशं वायुं ज्योतिर्जलं महीम् । सृजत्येकोत्तरगुणांस्तथादत्ते भवन्नपि" । "तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि च" इति च याज्ञ० । "यथास्वमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः" सुश्रु० एकाधिकादयोऽप्यत्र त्रि० ।

एकोदक पुंस्त्री एकं समानमुदकं यस्य । समानोदके सप्तमपुरुषादूर्द्ध्वं चतुर्द्दशपुरुषपर्य्यन्ते गोत्रजे "समानोदकभावस्तु निवर्त्तताचतुर्दशात्" स्मृतेस्तत्पर्य्यन्तानामेकोदकत्वम् । "जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते" मनुः ।

एकोदर पु० एकं समानमुदरं गर्भस्थानं यस्य । समानोदरे १भ्रातरि स्त्रियां टाप् । कर्म्म० । २समाने उदरे न० । "एकोदरप्रसूतानाम्" स्मृतिः ।

एकोद्दिष्ट न० एकः प्रेतः उद्दिष्टोयत्र । प्रेतोद्देश्यके श्राद्धभेदे तस्य इतिकर्त्तव्यतादिकं श्रा०त०निरूपितं यथा । गोभिलः । "अथैकोद्दिष्टमेकं पवित्रमेकोऽर्घ एकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमिति प्रत्युत्तरम् उपतिष्ठतामित्यक्षय्यस्थाने, अभिरम्यतामिति विसर्गे, अभिरतोऽस्मीति प्रतिवचनमेतत् प्रेतश्राद्धमिति" । अथेत्यनेनैकोद्दिष्टस्य पार्व्वणानन्तर्य्याभिधानं तयोः प्रकृतिविकृतित्वं सूचयति । अतएवैकोद्दिष्टे पार्व्वणधर्म्मप्राप्त्यावाहनादिप्राप्तौ नावाहनमित्यादिनिषेध उपपद्यते अन्यथा प्राप्त्यभावान्निषेधोऽनुपपन्नः स्यात् । एतत् प्रेतश्राद्धमित्युपसंहारात् एकं प्रेतमुद्दिश्य यद्दीयते श्राद्धं तदेकोद्दिष्टमिति वैदिकप्रयोगाधीनयौगिकम् । अतएव प्रतिसांवत्सरिकस्य नैकोद्दिष्टत्वं किन्त्वेकोद्दिष्टविधिकत्वम् । अमार्थ्यैकोद्दिष्टरूपसङ्कलितपवित्रप्राप्तौ एकं पवित्रमिति पुनरभिधानसार्थकत्वाय तदवयवैकत्वपरम् ।

व्याख्यात्पवनप्रकरणे "बर्हिषः प्रादेशमात्रे पवित्रे कुरुते" इति गोभिलसूत्रे पवित्रपदस्य दलपरत्वात्। अत्र नावाहनं नाग्नौकरणमिति निषेधयोः पौर्व्वापर्य्यादग्नौकरणपूर्व्वकालीनं प्रधानसम्बन्धि आवाहनोदितं ब्राह्मणावाहनमेव निषिध्यते नत्वप्रधानसम्बन्धि पितृयज्ञवदतिदेशप्राप्तं पिण्डाङ्गावाहनमिति। एतेन पिण्डाङ्गावाहननिषेधोऽमैथिलोक्तो हेयः। अत्राग्नौकरणनिषेधेन हुतशेषस्यालाभे "हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवीत्यादि व्याहृत्यन्तमन्त्रोक्तपात्रालम्भनस्यापि बाधः आनन्तर्य्याभावात् अमृतमिति मन्त्रलिङ्गविरोधाच्च। स्वदितमिति तृप्तिप्रश्न इति तृप्ताःस्थ इति तृप्तिप्रश्ने, स्वदितमिति प्रश्नः। कुशमयब्राह्मणपक्षे तु प्रतिवचनानुपपत्त्या प्रश्नस्यापि निवृत्तिः अक्षय्यशब्दस्थाने उपतिष्ठतामिति प्रयोगः अक्षय्योपतिष्ठतामित्यनेनान्नादिकमित्यस्यान्वये अक्षय्यस्यान्वयानुपपत्त्या तस्याप्रयोगः। अतएव पितृदयितायामन्नादिकमुपतिष्ठतामिति लिखितम्। ततश्च "प्रेतायाक्षय्यमस्तु च" इति ब्रह्मपुराणीयं "ततो वदेत् पुनर्धीमानक्षय्यमुपतिष्ठताम्" इति मार्कण्डेयपुराणीयञ्च गोभिलविरुद्धत्वात् शाखान्तरीयम्। अभिरम्यतामिति "वाजे वाजे" इति स्थानेऽभिरम्यतामित्यनेन विसर्जनमिति। एतेन "प्रेतश्राद्धेषु सर्व्वेषु न स्वधा नाभिरम्यताम्। स्वस्त्यस्तु विसर्जेदेवं सकृत् प्रणववर्जितम्" "इत्याश्वलायनगृह्यपरिशिष्टात् एकोद्दिष्टे प्रणववर्जितस्वस्त्यस्त्वित्यनेन यद्विसर्जनं तत्प्रेतश्राद्धविषयम् अभिरम्यतामिति तु सांवत्सरिकविषयमिति कल्पतरूक्तोदत्तवाचस्पतिमिश्राद्युक्तं निरस्तम्। बह्वृचानामेव पार्व्वणेऽभिरम्यतामिति विसर्जनस्य प्राप्तत्वादेकोद्दिष्टेऽपि तथात्वात् सर्व्वशाखिसाधारणनिषेधानुपपत्तेश्च। एतद्दिति पूर्व्वोक्तेतिकर्त्तव्यताकश्राद्धमित्यर्थः। प्रेतश्राद्धं नतु पार्व्वणविकृतित्वेन प्राप्तपितृलोकरूपपितृः श्राद्धम् अकृतसपिण्डीकरणस्य तथाविधपितृत्वाभावात्। अतएव तच्छ्रायमूलकमेवाश्वलायनगृह्यपरिशिष्टेऽपि "पितृशब्दं न युञ्जीत पितृहा चोपजायते" इत्युक्तम्। अतएव विष्णुना "प्रेतस्य नामगोत्राभ्यां दत्त्वाक्षय्योदकं"च इत्यत्र प्रेतनामगोत्राभ्यामित्यनेन प्रेतस्योल्लेखं नतु सम्बन्धिन इत्युक्तम् तत्र मन्त्रे प्राप्तपितृलोकोपाधिकस्य पितृपदस्थाने प्रेतपदोल्लेखो नतु अभिव्यक्तत्वाद्युपाधिके। एवमभिलापवाक्ये सम्बन्धित्वेन नोल्लेखः किन्तु प्रेतत्वेन असम्बन्धिनोऽपि सवर्णाद्ब्राह्मणादेरपि प्रेतश्राद्धाधिकारित्वात्। अतएव शातातपेनापि "प्रेतान्नामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्" इत्युक्तम्। अत्र प्रेतस्यान्नः प्रेतान्नो नतु सम्बन्धिवाचकस्यान्नः तथा मैथिलोक्तो बहुव्रीहिकल्पे तत्पुरुषापेक्षया जघन्यत्वात्, प्रेतपदस्य सम्बन्धिस्थानीयत्वेन तत्पुरुषस्यैव युक्तत्वाच्च। ततश्च प्रेतान्नाम च गोत्रञ्च इति द्वन्द्वः अतएव तर्पणे विष्णुः "ततश्च सर्व्वे यवस्थाने तिलेन पितृपदस्थाने प्रेतपदोल्लेखेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चारणे पितृहा भवति" इति। एतेषां वचनानां न्यायमूलकत्वात् सांवत्सरिकश्राद्धे एकोद्दिष्टविकृतिभूतेऽपि प्राप्तपितृलोकोपाधिकपितृपदयुक्तमन्त्रेऽभिलापे च सम्बन्धिबोधकपितृत्वेनैवोल्लेखः। यत्तु देवताभ्यः पितृभ्यश्चेत्यत्र न प्रेतपदोहः तत्र पितृपदस्य दिव्यपितृपरत्वात् एवं नैकवचनोहोऽपि तथा "मधु द्यौरस्तु नः पिता" इत्यस्य द्यौः स्वर्गः पिता पितेव भर्त्ता स्वाधिगम्यत्वात् मध्वस्तु मधुमयी भवत्विति भाष्यव्याख्याने द्यौरिति पितेतिपदयोः सामानाधिकरण्यं प्रतीयते अत्र च द्युत्वपितृत्वयोर्भेदेऽपि धर्म्मिणोः सामानाधिकरण्येनाभेदावगमात् दिवः पितृत्वधर्म्मप्राप्तिरिति पितृपदं पितृत्वपरं नतु जनकपरं प्राप्तपितृलोकपरं वेति तेनात्र मन्त्रे पितेत्येव वक्तव्यं नतु प्रेतपदोहः तथा "पितृशब्दं न युञ्जीत" इत्यनेन निषेधः। एवम् आमावेति मन्त्रे पितरित्यत्र नोहः यदाऽहं श्राद्धं करोमि तदा मातरपितरावागच्छतामित्यनुष्ठाने क्रियमाणे व्यापकस्य प्रार्थनीयत्वात्। एवं हविश्राद्धेऽप्येतेषु नान्दीमुखविशेषणं न देयमेवेति अन्यत्र सर्व्वत्रोत्सर्गवाक्ये मन्त्रे च पितृपदप्रयोगनिषेधात् प्रेतपदोहः कार्य्यः।

"अथैकोद्दिष्टे गोभिलसूत्रोक्तविशेषोऽभिधीयते; यथाह विष्णुः "एकवन्मन्त्रानूहेतैकोद्दिष्टे" इति एकवत् एकवचनवद्युक्ता स्यात्तयोहेत "अपूर्व्वोत्प्रेतवदूहः" (अं॰) इत्युक्तेन पूर्व्वप्राप्तैकवचनान्तकल्पनेन बहुवचनान्तान्मन्त्रान् विकृतान् कुर्य्यात् एकस्मिन् पितरि बहुवचनस्यासमवेतार्थत्वात् प्रकृतार्थप्रकाशनाख्यदृष्टप्रयोजनकस्य मन्त्रस्य विकृतौ बहुवचनस्थाने एकवचनोहः कर्त्तव्य इति न्यायमूलमिदं वचनम्। यद्वा "पवित्रे स्थो वैष्णव्यावित्यत्र "पवित्रासि वैष्णवी" इति न चात्र पवित्रमसि वैष्णवम् इति पितृदयितोक्तं युक्तं "पवित्रे स्थो वैष्णव्यावित्ति" मन्त्रस्य हे पवित्रे युवां विष्णुदेवताके स्थः भवथः स्त्रीलिङ्गत्वं छान्दसमिति सायनाचार्य्यव्याख्याने सुब-

विष्णुनापि तथा व्याख्याने सम्बुद्ध्यन्तताप्रतीतेः। एवं "विश्वोमेनसा पूते स्थः" इत्यत्रापि पूतसंबोति।"अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति मन्त्रे अत्र प्रेत! मादयस्व यथाभागमावृषायस्वेत्यूहम्। प्रार्थनार्थकतृतीयलकारीयमध्यमपुरुषबहुवचनस्थाने तदेकवचनस्यैव ऊह्यत्वात् न तु भूतार्थकचतुर्थलकारीयमावृषायथा इत्यनिवृत्तभङ्गीको युक्तः अतएव श्रीदत्तादिभिरपि "मादयस्वेत्यूहम् "अमीमदन्त पितरः" इत्यत्र अमीमदत्प्रेतेति वृषायिषतेत्यत्र वृषायिष्टेति। एत पितर इत्यादिपिण्डाह्वानमन्त्रे एहि प्रेतेति, सौम्यास इत्यत्र सौम्येति दत्तास्मभ्यमित्यत्र देह्यस्मभ्यमिति, निदधतेत्यत्र निधत्स्वेति, नमोवइत्यादिमन्त्रेषु पितर इति स्थानचतुष्टये प्रेतेत्यूहम्। एवं वद इत्यत्र ते इति। आगोःपाठे च येभ्य इत्यत्र यस्मै इति तेषामित्यत्र तस्येत्यूहम्। एतद्वः पितर इत्यत्र तु प्रेता इति विकृतावूहो न तु न एतद्वः... "एतद्वः पितरो वास इति जपत् पृथक् पृथक्" इति ब्रह्मपुराणेन प्रकृतावेव पार्वणे पित्रादिषु प्रत्येकमेतद्वः पितर इति बहुवचनान्तमन्त्रप्रयोगात् अस्थानैक्येन तद्विकृतावेकोद्दिष्टेऽप्यसमवेतार्थबहुवचनस्यैव युक्तत्वात्। तत्र प्रकृतौ समवेतार्थस्यैव विकृतावूहः। सांवत्सरिके त्वेकवचनान्ततयैवोहो न तु पितृपदस्य तत्र मातृपितृलोकत्वेन तथैव युक्तत्वात्" श्रा० त० रघुनन्दनः।

एकोद्दिष्टस्य "द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा" इत्युक्त षोडशश्राद्धात्मकम्। अत्र द्वादशपदं त्रयोदशानामप्युपलक्षणम् "संवत्सरे विवृद्धेऽपि प्रतिमासन्तु मासिकमिति" काल० मा० कौथुमिना वत्सरघटकप्रतिमासे तस्य विधानात् अत एव "द्वादश मासाः संवत्सरः क्वचित् त्रयोदश मासाः संवत्सरः" इति श्रुतौ वत्सरस्य त्रयोदशमासात्मकत्वमुक्तम्।

अथ कोद्दिष्टनिमित्तकालो निरूप्यते स च श्रा० त० रघुनन्दनेन दर्शितो यथा

याज्ञवल्क्यः। "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्। प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि"। एकादशेऽहनीति स्वाशौचान्तद्वितीयदिनोपलक्षणम्। "श्राद्धिः सम्यकाले तु भोजयेदयुजो द्विजान्" इति मत्स्यपुराणैकवाक्यत्वात्। आद्यं षोडशश्राद्धानामादिभूतम्। तथा च छन्दोगपरिशिष्टम्। "श्राद्धमग्निमतः कुर्यात् दाहादेकादशेऽहनि। ध्रुवाणि तु प्रकुर्वीत प्रमिताहनि सर्वदा। द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव इत्येतं श्राद्धषोडशम्। एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा"। अग्निमतः श्रौताग्निमतो दाहादेकादशेऽहनि श्राद्धं कर्त्तव्यं तस्य दाहावधिदशाहाशौचित्वात्। अन्येषान्तु मरणावधि तथा च शङ्खः "मरणादेव कर्त्तव्यम् संयोगो यस्य नाग्निना। दाहादूर्द्ध्वमशौचं स्याद्यस्य वैतानिको विधिः"। वैतानिकः श्रौतो होमः तस्मादग्निपदं श्रौताग्निपरम्। ततश्च केवलस्मार्त्ताग्निमतो निरग्नेश्च मरणादेवाशौचम्। ध्रुवाणि एतानि षोडश श्राद्धानि नित्यानि सर्वदा मृतधनाभावेऽपि। प्रमिताहनि मृततिथौ आद्यश्राद्धषाण्मासिकश्राद्धद्वयेतरश्राद्धानि कार्य्याणि आद्यश्राद्धस्यैकादशाहे विधानात् षाण्मासिकयोस्तु कालान्तरविधानात्। अत्राशौचान्तद्वितीयदिवसीयाद्यश्राद्धस्यादिभूतत्वमात्रस्यानुरोधेन तदुत्तरकर्त्तव्यमासिकतिथेर्मृततिथित्वानुपपत्त्या तत्सजातीयत्वमेव प्रतीयते। तेन प्रथममृततिथिं विहायान्यमृततिथिमादाय मासिकादिसिद्धिरिति। एवञ्च एकाहेन तु षण्मासान्यूना इत्यनेन मृततिथिपूर्व्वतिथिः प्रतीयते। एवं त्रिभिरित्यत्रापि तथा संवत्सरस्यापेकाहादिन्यूने। अत्र संवत्सरकर्त्तव्यस्यापि षाण्मासिकत्वं द्वितीयषाण्मासभवत्वाद्यनुपपन्नम्। संवत्सराभिधानन्त्वादिमध्याधिमासयुक्तप्रथमाब्दस्य "द्वादश मासाः संवत्सरः क्वचित् त्रयोदश मासाः संवत्सरः" इति श्रुत्यनुसारेण त्रयोदशमासघटितत्वात् त्रयोदशमासस्यैव द्वितीयषाण्मासिककरणाय आद्यः प्रथमकालकर्त्तव्यस्य षाण्मासिकत्वं 'षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः' इत्यनेनाविरुद्धम्। ननु षोडशश्राद्धगणने द्वादशमासिकत्वस्य कर्म्ममलमासयुताब्दे त्रयोदशमासिकत्वमिति चेन्न "संवत्सरस्य मध्ये तु यदि स्यादधिमासकः। तदा त्रयोदशश्राद्धं कार्य्यं तदधिकं भवेत्" इतिवक्ष्यमाणवचनेन द्वादशमासिकादधिकं त्रयोदशमासिकं श्राद्धमित्युक्तेः। एतदुक्तं न्यायमूलकम्। "एवं मृताहनि प्रतिमासं श्राद्धं कुर्य्यादतन्द्रितः" "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्" इति वचनद्वयेन पूर्व्वोक्तानुमितप्राप्तत्रयोदशमासात्मकं संवत्सरं व्याप्य मृततिथेर्वर्त्तितयं यावच्चान्द्रप्रत्युक्ततत्प्रतिमासकर्त्तव्यमासिकानुरोधेन तदुपजीवनतिथिषु श्राद्धमिति बोधयता अर्थापत्त्या वैयासादि-

मृतस्यान्यमासिकं तत्कालीयतत्पक्षीयतत्तत्तिथिषु कर्त्तव्यमिति बोधनात् मध्येऽधिमासपाते द्वादशे मासि मृतमासीयतिथ्यप्राप्त्या सर्वान्तविहितस्य मासिकस्य सपिण्डनस्य चाप्राप्तेः। एवमाद्याधिमासेऽपि चतएवाद्याब्देऽधिमासपातेऽपि लघुहारीतेन द्वादशमासे यद्द्वादशमासिकमित्युक्तं तदन्याधिमासविषयम् तत्र द्वादशमासे मृतमासीयतत्तत्तिथिप्राप्तेः। यथा लघुहारीतः 'प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया द्विजैः। क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्ता तु वत्सरम्। चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद्यतः। अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्। मासचिह्नन्तु कर्त्तव्यं पौषमासाद्यमेव हि। यतस्तत्र विधानेन मासः स परिकीर्त्तितः। असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः। तथैव मासिकं पूर्व्वं सपिण्डीकरणन्तथा। गर्भे वार्द्धुषिके च मृतानां पिण्डकर्म्मसु। सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः"। सपिण्डीकरणादूर्द्धं यत् किञ्चित् श्राद्धिकं भवेत्। दर्शं वाप्यथ वा पूर्त्तं तत्र कुर्य्यान्मलिम्लुचे" श्रा०त० रघुनन्दनः।

एकोद्दिष्टञ्च मध्याह्नकालव्यापितिथौ कर्त्तव्यं यथाह "आममाद्यं तु पूर्वाह्ने एकोद्दिष्टन्तु मध्यतः। पार्व्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्" हारी०। "पूर्वाह्ने दैविकं श्राद्धमपराह्णे तु पार्व्वणम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" मनुः। "यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्" श्रा०त०। मध्याह्नकालश्च त्रिधा विभक्तदिनतृतीयभागरूप एव। तत्रापि कुतपपञ्चमभागरूप स्तदारम्भकालः "कुतपे प्रथमे भागे एकोद्दिष्टमुपक्रमेत्। आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्" श्रा० व्यासोक्तेः। आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्व्वदिग्गमनारम्भकालः तत्समीपे कुतपशेषदण्डे। गौतमोऽपि "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्" अत्र कुतपस्यारम्भकालत्वोक्तेः पूर्व्वेद्युः रौहिणमात्रलाभे परदिने कुतपमात्रलाभेऽपि परेद्युरेव श्राद्धं "योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे। तिथिर्याऽभिमता सा तु याह्या नोपक्रमोज्झिता" बौधायनेनोपक्रमयोग्यतिथेरेव ग्राह्यतोक्तेः। उभयदिने कुतपालाभे रौहिणमात्रलाभे तु तत्रैव श्राद्धम् 'रौहिणन्तु न लङ्घयेदित्युक्तेः। उभयदिने तयोरलाभे सप्तममुहूर्त्ते कार्य्यं तल्लाभे तयोर्लाभे वा पक्षभेदेन व्यवस्था "एकपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः। तया कर्म्माणीत्यादि स्कन्दपु०वक्तेः। "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशना" व्यासोक्तेश्च। तत्र स्कान्दवाक्ये ह्रासवृद्धिपदञ्च तिथिविषयः व्यासवाक्ये चन्द्रह्रासवृद्धिपरत्वेन कृष्णशुक्लपक्षभेदेन व्यवस्थेति स्थितम्। तदेतत् कालमा० निर्णीतम् यथा। "नन्वत्र वाक्यद्वयपर्य्यालोचनेन निर्णयः क्रियते। सचानुपपन्नः। व्यासवाक्ये ह्रासवृद्धिनोदनायाः पितृयज्ञविषयत्वाभिधानात्। "एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिनोदनेति" हि पूर्व्वमुदाहृतम्। "दानव्रते चैतद्वेति" च अतः कथमनयोर्द्वैविध्याभ्यां निर्णयः। किञ्चोदाहृतवाक्यद्वयस्कान्दपुराणमात्र्यैव वचनेषु "ह्रासवृद्धी न कारणमित्युक्तं तत्कथमत्र ह्रासवृद्ध्योर्निर्णयकारणत्वम्। अत्रोच्यते। सन्ति ह्यन्यानि ह्रासवृद्धिवाक्यानि। तत्रोशनाः, "खर्व्वो दर्पस्तथा हिंसस्त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्व्वकालिकी"। पितामहोऽपि "खर्व्वो दर्पस्तथा हिंसस्त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ पूज्यौ हिंसं पूर्व्वत्र पूजयेदिति" भविष्योत्तरे "खर्व्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्व्वकालिकेति"। खर्व्वः साम्यमल्पक्षयो वा। दर्पो वृद्धिः। हिंसाधिकक्षयः। एतैः खर्व्वादिवाक्यैः सह यस्मिन्विषये युग्मादिवाक्यस्य विरोधः प्राप्नोति तत्र दैवपित्र्यभेदेन व्यवस्थापकं व्यासवाक्यम् ननु प्रकृतयोः वाक्ययोः पितृविषयत्वप्रतिपादकयाज्ञवल्क्यादिवचनेष्वपि कर्म्मकालव्याप्तिशास्त्रस्य खर्व्वदर्पादिशास्त्रस्य च विरोधेप्राप्ते सति कर्मकालव्याप्तिशास्त्रस्य प्राबल्यमुच्यते न तु प्रकृतयोः वाक्ययोः निर्णयहेतुत्वं प्रतिपाद्यते। न तु व्यासः खर्व्वादिवाक्यानि पितृविषयत्वेन संकोचयामास, याज्ञवल्क्यादयस्तु पित्र्येऽपि कर्म्मकालव्याप्त्या खर्व्वादिवाक्यान्यबाधन्त, कुत एवं निर्विषयत्वमेषां प्रसज्येतेति चेत् मैवं यदा पूर्व्वोत्तरदिनयोः पितृविषयकर्म्मकालव्याप्तिः समाना यदा वा दिनद्वयेऽपि कर्म्मकालव्याप्त्यभावः तत्रोभयत्र खर्व्वादिवाक्यैर्निर्णेतुमशक्यत्वात्"। तत्र शास्त्रविषयलाभ इति भावः।

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नं प्रजायते। मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्यात् विचक्षणः"

देवतः"। एकोद्दिष्टविधिकत्वात् सांवत्सरिकं श्राद्धमपि एकोद्दिष्टशब्देन शास्त्रे व्यवह्रियते। "एकोद्दिष्टं सुता दश" "एकोद्दिष्टं न पार्वणम्" इति च स्मृत्योः सांवत्सरिकेऽपि तथा प्रयोगात्।

एकोद्दिष्टाधिकारिणस्तु निर्ण०सि०दर्शिताः यथा "चन्द्रिकायां सुमन्तुः "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादृतः"। तत्रैव हेमाद्रौ शङ्खः "पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया। पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः। अत्र पुत्रपदं यद्यपि क्षेत्रजादिद्वादशविधपुत्रपरम्। ते च द्वादशपुत्रा याज्ञवल्क्येनोक्ताः "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतः स्मृतः। अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः। पिण्डदोंऽशहरश्चैषां पूर्वाभावे परःपरः"। इति तथापि "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" इति हेमाद्र्यादिधृतवचने कलावितरेषां पुत्रत्वनिषेधादौरसदत्तकपरमेव। यद्यपि "पिण्डदोंऽशहरश्चैषां पूर्वाभावे परःपरः" इति याज्ञवल्क्योक्तेरौरसाभावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्रः प्रपौत्रस्तदभावे दत्तकादय इति ज्ञेयम्। "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इति "अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति" श्रीसूतवाक्यनष्टतद्धारीतवसिष्ठशङ्खलिखितोक्तेः "लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति" याज्ञवल्क्योक्तेश्च। "पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च। पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा। भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा। असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः" इति स्मृतिसंग्रहे प्रपौत्रानन्तरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य। यद्यपि वृहस्पतिना "पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ। रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तिताविति" पौत्रसाम्यमुक्तम्। याज्ञवल्क्येन च "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" इत्यौरससाम्यमुक्तम् तथापि लोके राजसमो मन्त्रीत्यादौ किञ्चिन्न्यूने समशब्दप्रयोगाद्दीप मुख्ययोः साम्यायोगाच्च न्यूनत्वेनैव न तु समविकल्प इति भावितव्यम्। 'पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हो नृप! जायते। एषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षः सपिण्डेन सम्बद्धो यो जलेन वा। कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप!। तत्सङ्घातान्तर्गतैर्वापि तद्रिक्थात्कारयेन्नृपः" इति विष्णुपुराणाच्च प्रपौत्रानन्तरं दत्तकादयः इति पृथ्वीचन्द्रमदनरत्नकालादर्शादयः। मदनपारिजातेऽप्येवम्। बोपदेवगङ्गाधरादयस्तु "पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम्" इति छमलक्षेः "पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम्। नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः" इति छन्दोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात् पूर्वाभावे परःपर इत्यस्यानन्यपरत्वाच्च दत्तकाद्यभावे पौत्रादीनामधिकार इत्याहुः। अतएव निषेधादुपनीतपौत्रसत्त्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः। औरसस्याप्यनुपनीतोऽपि कुर्य्यादित्याह पृथ्वी० सुमन्तुः। "श्राद्धं कुर्य्यादवश्यं तु प्रमीतपितृकोद्विजः। व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि" इति मनुः। "कुर्य्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः" मनुः "न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्"। सुमन्तुरपि नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी निबध्यते। मन्त्राननुपनीतोऽपि पठेदेक औरसः"। ब्रह्म वेदम् मन्त्रपाठस्त्रिवर्षकृतचूडस्यैव। "अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः" इति सुमन्तूक्तेः। यत्तु व्यासः "कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेदिति" यच्च स्मृतिसंग्रहे "कृतचूडोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत्। उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसाविति"। तत्प्रथमवर्षचूडाविषयमिति माधवमदनरत्नपृथ्वीचन्द्राः। त्रिवर्षोर्द्ध्वं मन्त्रवत्त्वस्य विकल्प इति चन्द्रिका बोपदेवश्च। मदनरत्ने स्कान्दे। 'यत्नेषु मन्त्रवत्कर्म पत्नी कुर्य्यात्तथा नृप!। तथौर्द्ध्वदैहिकं कर्म कुर्य्यात् सा धर्मसंस्कृता"। अपत्नी तु कात्यायनः। "असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्। कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि"। पुत्रश्च न जन्मतोऽधिकारी किन्तु वर्षोत्तरमिति कालादर्शः "चौलादाद्याविद-

कादशाहं न कुर्य्यात्तु नैमित्तिकम्" इत्युक्तेः। मदनरत्ने सुमन्तुरपि "पुत्रश्चोत्पत्तिमात्रेण संस्कुर्य्यादृणमोचनात्। पितरं नाविदुः कश्चीलात् पितृमेधेन कर्म्मणा"। एतच्चौरसस्यैव दत्तकादीनां त्वनुपनीतानामेवाधिकारः इति काव्यादर्शः। ब्रह्मपु० स्कान्दे "पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। और्द्धदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः" इति। अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोऽस्माभिः पूर्व्वमुक्तः। सपौत्राभावे दत्तकादयो द्वादश पुत्राः। तदभावे भर्त्तुः पत्नी तस्याश्च सः "अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत चेति" इति मनूक्तेः। "भार्य्यापिण्डं पतिर्दद्याद्भर्त्तुर्भार्य्या तथैव च। श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः" इति। पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः" इति च हेमाद्रौ शङ्खोक्तेः। देवयाज्ञिकस्तु "कानीनगूढसहजपुनर्भूतनयाश्च ये। पत्न्यभावेऽपि कुर्य्युस्ते अप्रमत्ताः स्मृता हि ते" इति स्मृतिसंग्रहात् पत्न्यभावे कानीनादय इत्याह। भर्त्तुरपि सपत्नीपुत्रे सति नाधिकारः। "पितृपत्न्यः सर्व्वा मातरः" इति सुमन्तूक्तेः। "विदध्यादौरसः पुत्रो जनन्या और्द्धदेहिकम्। तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा सुताः। तेषामभावे स्वपतिस्तदभावे सपिण्डकाः" इति मदनरत्ने कात्यायनोक्तेः "बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः। एका चेत्पुत्रिणी तासां सर्व्वासां पिण्डदस्तु सः" इति बृहस्पतिवचनाच्च। अपरार्कोऽप्येवम्। तेन श्राद्धविवेके उक्तम् "सत्यपि सपत्नीपुत्रे भर्त्तुरेवाधिकार इति तदिदरस्तम्। यच्च तत्रैव कात्यायनः "न भार्य्यायाः पतिर्दद्यादपुत्राया अपि क्वचित्"। यच्च विष्णुपु० "कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृपेति"। यच्च मार्क० पु० "सर्व्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकमिति"। तदासुरादिविवाहोढाविषयम् "धर्म्मार्थिपाठोढा या सा पत्नी परिकीर्त्तिता। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पित्र्ये दासीं तां कश्यपो विदुरिति" माधवीये शातातपोक्तेः। यत्तु शुद्धिरत्नाकरः न्यूनदायिव "अपुत्रस्य च या पुत्री सैव पिण्डप्रदा भवेत्। तस्य पिण्डात् दर्शं वा एकाहेनैव निःक्षिपेत्, इति जाबालोक्तेः "भर्त्तुर्धनहरा पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात् सम्भवति पुत्रवद्दुहिता न्याय्यमिति" बृहस्पतिना दुहितुर्धनहारित्वोक्तेश्च पुत्राभावे कन्या तदभावे पत्नी इत्याहतुः। तन्न पूर्व्वविरोधात् "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः" इति दुहितुर्मातृधनहारित्वेन पुत्रस्य तत्राप्यनधिकारापत्तेश्चोपेक्ष्यम्। वचनं भ्रातृपुत्राद्यभावविषयम्। पत्न्यभावे अविभक्तस्य सोदरः पूर्व्वोक्तशङ्खवचनात्। विभक्तस्य तु दुहिता धनहारित्वात् पूर्व्वोक्तजाबालवचनाच्च। तत्राप्यूढानूढासमवायेऽनूढैव "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता। आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोरिति" भरद्वाजोक्तेः। तदभावे दौहित्रः धनहारित्वात्। "मातापित्रोरुपाध्यायाचार्य्ययोरौर्द्धदेहिकम्। कुर्व्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतादिति" चन्द्रिकायां इति मनूक्तेः "यथा व्रतस्थोऽपि सुतः पितुः कुर्य्यात्क्रियां नृप!। उदकाद्यां महाबाहो! दौहित्रो दुहितार्हतीति" अपरार्के भविष्योक्तेश्च। एतद्धनहारिण आवश्यकं नान्यस्येत्याह तत्रैव स्कान्दः "श्राद्धं मातामहानां तु अवश्यं धनहारिणा। दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं पूर्व्वसुतरमिति"। तेन दौहित्रोऽत्र पुत्रीकृत इति देवयाज्ञिकोक्तिः परास्ता। अत्र पत्नीदौहित्रसमवाये ऽर्द्धहरत्वात्पत्न्येव कुर्य्यात्। दौहित्रभ्रातृपुत्रसत्त्वे विभक्तस्य दौहित्रः। अविभागे भ्रातृपुत्रः। भ्रातृतत्पुत्रसत्त्वे कनिष्ठश्चेद्भ्रातैव। ज्येष्ठश्चेत्तत्पुत्रः कुर्य्यादिति दाक्षिणात्यपन्थः। हारलतादौ तु "भ्रातृभ्राता स्वयं चक्रे तद्भार्य्या चेन्न विद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः" इति शङ्खोक्तेः "पत्नी कुर्य्यात् सुताभावे पत्न्यभावे सहोदरः" इति कौर्म्माच्च। ज्येष्ठभ्रातैव कुर्य्याच्च तत्पुत्रः। यत्तु "नानुजस्य तथाग्रजः" इति, तत्कनिष्ठभ्रातृसत्त्वविषयम्। यच्च मनुः "सर्व्वेषामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्व्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्" इति तत् सोदराभावविषयमित्युक्तम्। एतेन पुत्रत्वातिदेशोऽयम् अतस्मिन् सत्येवाद्य पुत्राः प्रतिनिधयो न कार्य्याः। स एव पिण्डदोंऽशहरश्च" इत्यत्रापीति वाचस्पतिमहदीकाकल्परत्नाकरादयः परास्ताः। मदनरत्ने स्मृतिसंग्रहे "पुत्रः कुर्य्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ। धनहार्य्यपि दौहित्रस्ततो भ्राता च तत्सुतः। भ्रात्रोः सहोदरो भ्राता कुर्य्याद्द्वादशादि तत्सुतः। ततस्त्वसोदरभ्राता तद-

भावे च तत्सुतः" इति । भ्रातृपुत्राभावे क्रमेण पितृमातृस्नुषाश्वशुरतत्पुत्रादयः धनहारित्वात् । "भगिनीतत्सुतयोर्विशेषमाह मदनरत्ने कात्यायनः "अनुजो ह्यग्रजो वापि भ्रातुः कुर्वीत संस्क्रियाम् । ततस्तयोर्दद्यादनुक्रमेण तर्पयेत्तयोः" अपरार्के कार्ष्णाजिनिः । "पुत्रः शिष्योऽपि वा पत्नी पिता भ्राता स्नुषा गुरुः । स्त्रीहारो धनहारी यः कुर्य्यात्पिण्डोदकक्रियाम्" । मार्कण्डेयपुराणे "पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता । पित्राभावे तु शिष्यश्च कुर्वीरन्नौर्द्ध्वदेहिकम्" । तेन धनहारी एतच्चिह्न इति कालादर्शः । अत्र पाठक्रमो न विवक्षितः पूर्व्ववाक्येषु अथ ततःशब्दादिभिः श्रौतक्रमोक्तेः "अथ जिह्वाया अथ वक्षसः" इति वत् । शुद्धिचन्द्रोदये वृहन्मनुः । "स्नुषाः स्वस्रीयतत्पुत्रश्चापि सम्बन्धिबान्धवाः । पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथाविधि" । मार्कण्डेयपुराणे "पुत्राद्युच्छिन्नवंशस्य सख्यापि श्वशुरस्य च । जामाता स्नेहतः कुर्य्यादखिलं पैतृमेधिकम्" । चन्द्रिकायां वृद्धशातातपः "मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषाञ्चैव भार्य्याणां स्वसुर्मातुः पितुस्तथा । श्राद्धमेषां तु कर्त्तव्यमिति वेदविदो विदुः" । शुद्धिविवेके ब्राह्मे "दत्तानां वाग्दत्तानां कन्यानां कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः" । दत्ता वाग्दत्ताः । "मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्व्वदा । जामातुः श्वशुरास्तस्य तेषान्तेऽपि च संयताः । मित्राणां तद्बन्धूनां श्रोत्रियाणां गुरोस्तथा । भागिनेयसुतानां च सर्व्वेषामपरेऽहनि । राज्ञोऽमति सपिण्डे तु निरपत्ये पुरोहितः । मन्त्री वा तदशौचान्ते पुरा श्रौत्रीकरोति सः" । अत्र द्वितीयाह्लादौ श्राद्धविधानमस्थिसञ्चयनपरम् । कालादर्शे "दाहादि मन्त्रवत्पित्रोर्विदध्यादौरसः सुतः । तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः । दौहित्रो धनहारी च भ्राता तत्पुत्र एव च । पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च । सपिण्डः सोदकोमातुः सपिण्डश्च सहोदकः । स्त्री च शिष्यर्त्विगाचार्य्या जामाता च सखाऽपि च । उच्छिन्नवंशोरिक्थेन कारयेदवनीपतिः" । गौतमः "पुत्राभावे सपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ" । यत्तु चन्द्रिकायां वृद्धशातातपः "प्रोक्ता श्राद्धं प्रकर्त्तव्यं सर्व्वेषां वर्णिलिङ्गिनामिति" तत्सवर्णविषयम् । "ब्राह्मणस्त्वन्यवर्णानां न कुर्य्यात्कर्म्म किञ्चन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितां व्रजेत्" इति ब्राह्मोक्तेः "न ब्राह्मणेन कर्त्तव्यं शूद्रस्यौर्द्ध्वदेहिकम् । शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित्" इति पारस्करोक्तेश्च । पारशवः ऊढशूद्रापुत्रः । अत्रेदन्तत्त्वं सर्व्वपुत्रादेः पूर्व्वस्याभावे पत्न्यादेरधिकार उक्तः । तदभावोऽसन्निधिः नाशश्चोच्यते । अतएव पूर्व्वत्र "असन्निधाने पूर्व्वेषाम्" इत्युक्तम् । तत्रासन्निधौ पत्न्यादेः सर्व्वत्राधिकारे प्राप्ते "प्रोषितावसिते पुत्रः कालादतिचिरादपि । एकादश्याः क्रमशोऽस्य विधिवत्क्रियाः" "ऊर्द्ध्वमेव च सत्कृतम्" इत्यादौ देशान्तरेऽपवादात्पुत्रनाश एव पत्न्यादेः सपिण्डनाद्यधिकारः । असन्निधौ तु पूर्व्वमेव नोर्द्ध्वम् । अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्त्तनीयम् । मासिकापकर्षोऽप्यावर्त्तनीयः । एकादशाहमासिकानि नावर्त्त्यन्ते "वत्सरस्यापि कर्त्तव्यं सपिण्डीकरणं पुनरिति" तदावृत्तिविधानाभावादिति केचित् । तच्च तस्य निर्मूलत्वात् । अतस्तदपि कनिष्ठकृतमावर्त्त्यते ह्यग्निमतोऽपिण्डपितृयज्ञार्थं तु कृतं नावर्त्त्यते । मातृपिण्डेऽग्निमान् पुत्रः पितृयज्ञं समाचरेत् । न पार्व्वणं नाभ्युदयिकं कुर्व्वन् लभते फलमिति" इत्युत्तरनिषेधनादिति "भ्राता वा भ्रातृपुत्रो वा" इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् तथा चात्र ज्येष्ठकर्त्तृकत्वबाधः । सपिण्डने तु बहु वक्तव्यं तन्निर्णये वक्ष्यामः । अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे (पूर्व्वादिक्रियाः शुद्धितत्त्वे दर्शयिष्यमाणाः) । "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रिया पुत्रैः प्रोच्यन्ते ताश्चोत्तराः । पितृमातृसपिण्डैस्तु समानसलिलैस्तथा । तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा । पूर्व्वाः क्रियाश्च कर्त्तव्याः पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नरश्रेष्ठ! कार्य्यास्तत्तनयैस्तथा । मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तराः क्रियाः" । दौहित्रतत्पुत्रयोर्धनहारिणोरिदम् । एतच्चान्यत्र धनहर्त्तुः । "यश्चार्थहरः स पिण्डदायी स्यात्" यमोक्तेः । "प्रेतस्य प्रेतकार्य्याणि अकृत्वा धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदिति" शुद्धिचन्द्रोदये व्याघ्रपादोक्तेः । मदनरत्ने स्कान्देऽपि "एकमेतन्महत्यायां त्रिविधं यत्प्रकीर्त्तितम्" इत्युक्त्वा "अनभिज्ञस्य

निर्द्दिष्टा निष्कृतिः पावनी परा । आदेहपतनात्तस्य कुर्य्यात्पिण्डोदकक्रियाम्” इत्युक्तम् । क्रियानिबन्धे कात्यायनः “न च माता न च पिता कुर्य्यात्पुत्त्रस्य पैतृकम् । नाग्रजश्च तथा भ्राता भ्रातॄणां तु कनीयसाम्”। पृथ्वीचन्द्रोदये बौधायनः।“पिता श्राद्धं न कर्त्तव्यं पुत्त्राणां तु कथञ्चन । भ्राता चैव न कर्त्तव्यं भ्रातॄणाञ्च कनीयसाम् । यदि स्नेहेन कुर्व्वीत सपिण्डीकरणं विना । गयायां तु विशेषेण ज्यायानपि समाचरेत्”। अन्याभावे पित्रादिरपि कुर्य्यात् ।“उच्छिन्नबान्धवं प्रेतं पिता भ्राता च वाऽग्रजः । जननी वापि संस्कुर्य्यान्महद्देनोऽन्यथा भवेदिति” सुमन्तूक्तेः । ब्रह्मचारिणां तु शुद्धिविवेके ब्राह्मे “असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः । श्राद्धं तु मातापित्रोर्निमित्ते तु तेषां करोति सः”। श्राद्धं मासिकाब्दिकादि सर्व्वं कार्य्यमित्यर्थः । सत्यपि निषेधोऽन्यसत्त्वे । यत्तु छन्दोगपरिशिष्टे “न त्यजेत्सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित् । न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन् । पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित् । अशौचं कर्म्मणां न स्यात् नाहं वा ब्रह्मचारिणाम्”। यच्च याज्ञवल्क्यः “न ब्रह्मचारिणः कुर्य्युरुदकम्पतितास्तथेति”। तदप्यन्यसत्त्वे । अन्याभावे तु ब्रह्मचारिणापि कार्य्यम् पूर्व्वोक्तब्राह्मवचनात् । “आचार्य्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती । स तदन्नं च नाश्नीयान्न च तैः सह संवसेदिति” तेनैवोक्तेः । “ब्रह्मचारिणः शवकर्म्मणोव्रतान्निवृत्तिः अन्यत्र मातापित्रोरिति” वशिष्ठोक्तेः । अशौचमेकाहं वक्ष्यामः । प्रागुपनयनात्तु पञ्चवर्षोत्तरं सपिण्डीकरणवर्ज्जं षोडशश्राद्धादि सर्व्वं कार्य्यमित्युक्तं देवजानीये “असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेष्विति” प्रचेतोवचनात् । एतच्चापि वक्ष्यामः । अविभक्तानां विशेषमाह पृथ्वीचन्द्रोदये मरीचिः । “बहवः स्युर्यदा पुत्त्राः पितुरेकत्रवासिनः । सर्व्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्” । ज्येष्ठस्य कर्त्तव्येऽपि सर्व्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्य्यपराद्यवर्ज्जनादयः कथिताः संस्कारास्ते सर्व्वेषां भवन्तीति सिद्धम् संहतानामप्येषाम् तुल्यत्वात् । विभक्तानां विशेषमाहोशनाः । “नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि” । लघुहारीतः “सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् । अर्द्ध्वं सपिण्डीकरणात् सर्व्वे कुर्य्युः पृथक्पृथक्” । मदनरत्ने “विभक्तास्तु पृथक्कुर्य्युः प्रतिसंवत्सरादिकम् । एकेनैवाविभक्तेषु कृते सर्व्वैस्तु तत्कृतम्” एतेनाब्दिकादिष्वविभक्तानामनियम इति वदन् शूलपाणिः परास्तः”। अयमधिकारिक्रमो दाक्षिणात्यप्रचलितः ।

गौड़देशवासिभिस्तु रघुनन्दनमतानुसारिणी व्यवस्था क्रियते सा च व्यवस्था शुद्धितत्त्वे तेन दर्शिता यथा व्याघ्रः “कृतचूड़स्तु कुर्व्वीत उदकं पिण्डमेव च” । एतच्च शूद्रेतरपरम् “असंस्कृतः सुतः श्रेष्ठो नाधिकारी वेदपारगः” इति दायभागधृतात् । अन्यथा सुतत्वेन विशेषोपादानं व्यर्थं स्यात् । श्राद्धेऽनुपनीतस्य मन्त्रपाठाधिकारमाह मनुः । “नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्यावद्वेदे न जायते”। अभिव्याहारयेत् वदेदिति यावत् स्वार्थे णिच् । तत्र प्रथमतो ज्येष्ठपुत्त्रः यथाह मरीचिः ‘मृते पितरि पुत्त्रेण क्रिया कार्य्या विधानतः । बहवः स्युर्यदा पुत्त्राः पितुरेकत्र वासिनः । सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्’। तदभावे यथाक्रमं कनिष्ठपुत्त्रपौत्त्रप्रपौत्त्राः । तथाच विष्णुपुराणम् ‘पुत्त्रः पौत्त्रः प्रपौत्त्रो वा तद्वद्वा भ्रातृसन्ततिः । सपिण्डसन्ततिर्व्वापि क्रियार्हा नृप ! जायते”। एतच्च षोडशश्राद्धपर्य्यन्तम् तथाच छन्दोगपरिशिष्टम् “पितामहः पितुः पश्चात् प्रेतत्वं यदि गच्छति । पौत्त्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् । नैतत् पौत्त्रेण कर्त्तव्यं पुत्त्रवांश्चेत् पितामहः” । सपिण्डीकरणपर्य्यन्तमपृथक्कर्त्तव्यमाह लघुहारीतः ‘सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्” । एषामभावे पत्नी तथाच शङ्खः ‘पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया । तदभावे तु पत्नी स्यात्तदभावे सहोदरः । भार्य्यापिण्डं पतिर्द्दद्यात् भर्त्रे भार्य्या तथैव च’ । इति “अपुत्त्रधनं पत्न्यभिगामि तदभावे दुहितृगामीत्यादि” विष्ण्वादिवचनेन धनाधिकारश्रुतेः । तदभावे इति प्रपौत्त्रपर्य्यन्ताभावपरं पार्व्वणपिण्डदातृत्वेन धनाधिकारित्वेन च तेषां बलवत्त्वात् । ‘अपुत्त्रा स्त्री यथा पुत्त्रः पुत्त्रवत्यपि भर्त्तरि । पिण्डं दद्यात् जलञ्चैव जलमात्रन्तु पुत्त्रिणी’ इति निर्मूलं समूलत्वेऽपि व्यवहितान्तरितपुत्त्रपुत्रविषयमिति श्राद्धविवेकप्रभृतयः । पत्न्यभावे कन्या । ‘अपुत्त्रस्य तु

या पुत्री सैव पिण्डप्रदा भवेत् । तस्य पिण्डान् दशवै-
तानेकाहेनैव निर्वपेत्” इति कात्यायनवचनात् “गोत्र-
रिक्थानुगः पिण्डः” इति मनुवचनेन दत्ताद्यपेक्षया
तस्या बलवत्त्वात् । कन्याभावे यथाक्रमं वा दत्तादत्ता-
दौहित्राः “दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता ।
चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः” इति
ब्रह्मपुराणवचनात् । ननु “दुहिता पुत्रवत् कुर्य्यान्मा-
तापित्रोश्च संस्कृता । आशौचमुदकं पिण्डमेकोद्दिष्टं
सदा तयोः” इति वृद्धवचनात् पुत्रानन्तरमेव दुहित्रधि-
कारश्रुतेः इति चेन्न पत्न्याः प्रथमं धनाधिकारश्रुतेः
यथा याज्ञवल्क्यः । “पत्नी दुहितरश्चैव पितरौ
भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्म-
चारिणः । एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः” इति ।
तथा “मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे” ।
इति ब्रह्मपुराणात् । “पौत्त्रदौहित्रयोर्लोके न विशेषो-
ऽस्ति धर्म्मतः । तयोर्हि माता पितरौ संभूतौ तस्य
देहतः” । इति मनुवचनेन ‘पौत्त्रदौहित्रसंयुक्ता ये तथा
चिरजीविनः । प्रियङ्कराश्च बालानां ते नराः स्वर्गगा-
मिनः” इति विष्णुधर्म्मोत्तरेण पौत्त्रतुल्यताभिधानाच्च ।
तेन यथा पुत्राभावे पौत्रस्तथा दुहित्रभावे दौहित्रः । न
च दत्तकन्यादौहित्राभ्यां प्राक् सगोत्रत्वात् सोदराधिकार
इति वाच्यम् गोत्रत्वापेक्षया पिण्डदानादेर्धनसाध्य-
त्वात् ऋक्थग्राहिणोर्दुहितृदौहित्रयोर्बलवत्त्वात् । अत
एव दुहितृधनाधिकारे तद्धनेन मृतोपकारकरणं हेतु-
रित्याहापस्तम्बः । “अन्तेवास्याचार्य्यास्तदर्थेषु धर्म्मकृत्येषु
प्रयोजयेत् दुहिता वेति” तदर्थेषु श्राद्धादिना तद्भोगार्थं
धर्म्मकृत्येष्वदृष्टार्थमिति । ‘गोत्ररिक्थानुगः पिण्डः”
इति मनूक्तेः । “अनंशौ क्लीवपतितौ जात्यन्धबधिरौ
तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः” । इति
मनूक्तानां “पितृद्विट्पतितः षण्डो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः” इति
नारदोक्तानाञ्च भागानधिकारिणां पिण्डदानानधि-
कारः । जात्यन्धबधिरौ जन्मप्रभृत्यन्धबधिरौ निरिन्द्रियाः
पङ्ग्वादयः श्रौतस्मार्त्तकर्म्मानधिकारिणोऽपि गृह्यन्ते
इति रत्नाकरः । तथाच वृद्धशातातपः । “चाण्डालं
पतितं व्यङ्गमुन्मत्तं शवदाहकम् । सूतिकां सूयिकां नारीं
रजसा च परिप्लुताम् । श्वकुक्कुटवराहांश्च ग्राम्यान्
संस्पृश्य मानवः । सचेलं सशिरः स्नात्वा तदानीमेव शु-
ध्यति” । व्यङ्गः पाण्यादिविकलः । व्यङ्गोन्मत्तयोः
सदाचारहीनत्वात् अस्पृश्यतेति प्रायश्चित्तविवेकः । श्रौ-
तस्मार्त्तक्रियानधिकारित्वं सदाचारहीनत्वञ्च मूत्रपुरी-
षाद्यशौचापनयनासमर्थत्वेनेति बोध्यम् । सूयिका प्रस-
वकारयित्री । पितृद्विट् पोषकोद्देशकविद्वेषः । औ-
पपातिकः उपपातकैः संसृष्टः । उपपातकीति प्रकाश-
कारपाठेऽपि स एवार्थः । अपपात्रित इति पाठे तु
राजवधादिदोषेण बान्धवैर्यस्य घटापवर्ज्जनं कृतमिति
कल्पतरुः । अतं याज्ञवल्क्येनोक्तम् “न ब्रह्मचारिणः
कुर्य्युरुदकं पतिता न च । पाषण्डमाश्रितास्तेना व्रात्या
न विकर्म्मस्थाः । गर्भभर्त्तृद्रुहश्चैव सुरापाश्चैव योषितः” ।
पाषण्डं त्रयीबाह्यधर्म्मम् । स्तेनाः सततं चौर्य्यरतयः ।
व्रात्याः षोड़शवर्षपर्य्यन्तमप्राप्तोपनयनाः, विकर्म्मस्थाः आ-
लस्यमात्रप्रधानतया स्वधर्म्माननुष्ठायिनः व्यङ्गत्वा-
दिना स्वधर्म्मानुष्ठानासमर्थाश्च बोध्या इति “कश्चित्
क्षिपति मत्पुत्रो दौहित्रो वा सहोदरः । गृहीत्वास्थीनि
तद्भस्म नीत्वा तोये विनिःक्षिपेत्” इत्यादिपुराणे क्रम-
दर्शनादत्रापि दौहित्राभावे सोदरः पूर्व्वोक्तवृद्धवचनेऽ-
प्येवं क्रमो बोध्यः । अत्र ज्येष्ठः कनिष्ठाविशेषात् । “नानु-
जस्य तथाग्रज” इति छन्दोगपरिशिष्टं कनिष्ठभ्रातृसंस्कार-
विषयं तयोरभावे तथाविधौ वैमात्रेयौ । “भ्रातुर्भ्राता
स्वयं चक्रे तद्भार्य्या चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे
यस्य नास्ति सहोदरः” इति ब्रह्मपुराणाद्वैमात्रेय-
स्यापि एकजातत्वेन भ्रातृत्वात् । “देशान्तरस्थक्लीवैकवृ-
षणानसहोदरान्” इत्यादिछन्दोगपरिशिष्टेन परिवेदने वैमात्रे-
यस्य भ्रातृत्वप्रसक्तावसहोदरानित्यनेन प्रतिप्रसवाच्च ।
पितृव्यपुत्रादौ भ्रातृपदप्रयोगो गौणः । गुणश्च बीजि-
पुरुषापेक्षया समानसंख्यजनकजन्यत्वमिति । धनिपित्रादि
पिण्डत्रयदातुः सोदरपुत्रात्तु धनिपित्रादिपिण्डत्रयदा-
तृत्वाद्वैमात्रेयस्य धनाधिकारित्वेन बलवत्त्वाच्च । ततश्च
सहोदर इति पूर्व्वार्द्धानुरोधात् वैमात्रेयपरमपि अन्यथा
सहोदराभावे वैमात्रेयसत्त्वे वैमात्रेयपुत्राधिकारापत्तेः ।
तेन वैमात्रेयाभावे सोदरवैमात्रेयभ्रातृक्रमवत् सोदर-
पुत्रस्तदभावे वैमात्रेयपुत्रः । तन्मात्रनोन्यपिण्डदातृतया
प्रथमाधिकारित्वेन बलवत्त्वात् तस्यातिदिष्टत्वाच्च । तद-
भावे पिता । “पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च ।
एते पिण्डप्रदाः ज्ञेयाः सगोत्राश्चैव बान्धवाः” इति प्रचे-
तोवचनात् । “न पुत्रस्य पिता दद्यात्” इति छन्दोग-

पत्निरिष्टं भ्रातृपुत्रपर्य्यन्तसङ्कोचविषयम् । तदभावे माता ।"पुत्रोभ्राता पिता वापि" इत्यत्रापिशब्देन मातुः समुच्चयात् । "पितरौ भ्रातरश्चे"त्यादौ धनाधिकारे तथा दर्शनाच्च । अतएव श्राद्धविवेके पितुरभावे तस्यान्यायतया मातापीत्युक्तमिति । तदभावे पुत्रवधूः । तथाच शङ्खः "भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तमः" । अत्रादिपदात् श्वशुरादेरपि परिग्रहः इतरत्र स्नुषात्वाभावात् । द्विजोत्तमइत्यत्र सपिण्डश्च इति मैथिलानां पाठः । स्वपदोपात्तसपिण्डविशेषाभावे "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति धनाधिकारे तथादर्शनादत्रापि सन्निधितारतम्येन माता पुत्रवधूः पौत्री पौत्रवधूः प्रपौत्री प्रपौत्रवधूः पितामहः पितामही पितृव्यादयः सपिण्डाश्चाधिकारिणः" "पुत्राभावे स पिण्डाः" इति वक्ष्यमाणवचनात् । शङ्खवचनस्यमैथिलपाठाच्च । तदभावे समानोदकाः !"सपिण्डसन्ततिर्वापि" इति वक्ष्यमाणात् । सपिण्डसन्ततिः समानोदकादन्यत्र" । तदभावे सगोत्राः "सगोत्राश्चैति" "गोत्रजकुल्यानुगःपिण्डः"इत्युक्तत्वात् "एषामभावे सर्व्वेषां समानोदकसन्ततिरिति" वक्ष्यमाणाच्च । तदभावे मातामहः "द्वामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि सर्व्वदा"इति मत्स्यपुराणात् । तदभावे मातुलः तदभावे भागिनेयः "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च"इति शातातपीयपाठक्रमात् । तदभावे सन्निधिक्रमेण मातामहसपिण्डाः ।तदभावे मातामहसमानोदकाः।"सपिण्डसन्ततिर्व्वापि क्रियार्होन्नप! जायते । एषामभावे सर्वेषां समानोदकसन्ततिः । मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा" विष्णुपुराणात् । तदभावे श्वशुरः तदभावे जामाता "जामातुः श्वशुराद्यन्तु तेषां तेऽपि च संयताः" इति मत्स्यपुराणपाठक्रमात् । तदभावे पितामहीभ्राता । "भागिनेयसुतानाञ्च सर्व्वेषान्त्वपरेऽहनि । श्राद्धं कार्य्यञ्च प्रथमे स्नात्वा कृत्वा जलक्रियाम्" इति मत्स्यपुराणात् । अपरेऽहनि इत्यत्राशौचान्तदिनस्येति शेषः । तदभावे यथाक्रमं शिष्यर्त्विगाचार्य्याः, गौतमेन "पुत्राभावे सपिण्डाः मातृसपिण्डा वा शिष्या वा दद्युः तदभावे ऋत्विगाचार्य्यौ" इत्युक्तत्वात् । तदभावे सुहृत्पितृसुहृदौ "मित्राणां तदपत्यानामिति" मत्स्यपुराणपाठक्रमात् । तदभावे एकग्रामवासी । "संघातान्तर्गतैर्व्वापि कार्य्या प्रेतस्य सत्क्रिया" इति विष्णुपुराणात् तदभावे तद्धनं ग्रहीत्वा यः कश्चित् सवर्णः । "उच्छन्नबन्धोर्वित्ताद्वा कारयेदवनीपतिः" इति विष्णुपुराणात् । स्त्रौर्द्ध्वदेहिकमधिकृत्य विष्णुपुराणं "ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्" ।

स्त्रियास्तु यथाक्रमं पुत्रपौत्रप्रपौत्राः विष्णुपुराणे "पुत्रः पौत्रः प्रपौत्रो वा" इत्यविशेषश्रुतेः । तदभावे कन्या ।"अपुत्रस्य च या पत्नी" इत्यस्योद्देश्यगतलिङ्गाविवक्षया स्त्री पुंसाधारणत्वात् धनाधिकारित्वाच्च । तदभावे वाग्दत्ता "दत्तानामप्यदत्तानाम्" इत्यत्रापि पितृपदस्य मातृपदोपलक्षकत्वात् । तदभावे दत्ता "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता" इति मनुवचनात् । तदभावे दौहित्रः प्रागुक्तमत्स्यपुराणे तथा दर्शनात् । "पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः" इत्यनेन यथा पुत्राभावे पौत्रः तथा दुहित्रभावे दौहित्रः इति प्रागेव उक्तत्वात् । "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषां चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा । पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इति वृद्धशातातपवचनेन मातामह्याश्च साक्षात् दौहित्रेण पिण्डदानश्रुतेः धनाधिकारित्वाच्च । दौहित्राभावे सपत्नीपुत्रः । तस्य पुत्रत्वश्रवणात् । यथाह मनुः । "सर्व्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् । सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः" । एकपत्नीनामिति एकः पतिर्यासामिति अत्र सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्सम्बन्धेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तत्र "पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । पुत्रस्य पुनस्तन्ये भ्रातृपुत्रादयोऽपि ते" इति लघुहारीतवचने एवकारेणातिदिष्टपुत्रनिषेधात् । अतएवोत्तरार्द्धे भ्रातृपुत्रोपादानं सङ्गच्छते । अन्यथा पुंसां तत्पुत्रत्वातिदेशात् पुत्रत्वेनैव प्राप्तेः भ्रातृपुत्रोपादानं व्यर्थं स्यात् । तथाह मनुः । "भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणोमनुरब्रवीत्" एकजातानामेकपितामातृजातानां तथाच "वृहस्पतिः । यद्येकजातावहवोभ्रातरः स्युः सहोदराः । एकस्यापि सुते जाते सर्व्वे ते पुत्रिणोमताः" । एतन्न्यायमूलं तदिति चेन्न चादिपदस्याह्नेषु "भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्यएव वा ।

"ऐकात्म्यं वासुदेवस्य योऽवगन्तुमनस्य च" भा॰ व्या॰ १अ॰। एक आत्मा तस्य भावः। ४आत्मन एकत्वे ऐकात्म्यवादः ऐकात्म्यवादी

ऐकादशिन त्रि॰ एकादशानां संघ इति एकादशिनी अति- नीवत् ङीप्त्वं सा साधनतयाऽस्त्यस्य अण्। एकादशिनी- साध्यफले। "द्वे त्वेवैते एकादशिन्यावालभेत य एवैका- दशिनेषु कामस्तमाप्नुयात्" शत॰ ब्रा॰ १३.२.२.२ तत्रा- श्वमेधे द्विविधैकादशसंख्यपशुभेदाः देवताश्रिताः यजु॰ २९,५८,५९ उक्ता यथा

"आग्नेयः कृष्णग्रीवः१ सारस्वती मेषी २बभ्रुः सौम्यः३ पौष्णः श्यामः४ शितिपृष्ठो बार्हस्पत्यः५ शिल्पो वैश्वदेवः६ ऐन्द्रोऽरुणो७ मारुतः कल्माषः८ ऐन्द्राग्नः संहितो९ ऽधो रामः सावित्रो १०वारुणः कृष्ण एकशितिपात्११पेत्वः" ५८ "अश्वमेधे स्तुतिरस्ति द्वे त्वेवैते एकादशिन्यावालभेतेति" तयोरेकादशिन्योः पशवस्तद्देवताश्च कथिताश्रुत्यैवो- च्यन्ते तेनैतानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रति- पादकानि नतु मन्त्राः। कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १, मेषी सारस्वती सरस्वती- देवताका२ बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः३ श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः४ शिति श्यामं पृष्ठ- मस्य स शितिपृष्ठः बार्हस्पत्यः बृहस्पतिदेवत्यः५ शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः६ अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः७ कल्माषः कर्बुरो मारुतः मरुद्देवत्यः८ संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः९ अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः१० एकः शितिः श्वेतः पादो- यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः ११। एव- मेकादश" वेददी॰। "आग्नेयावनीकवते रोहिताञ्जिरन- ड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माषः आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः पेत्वः" ५९। "द्वितीयैकादशिनीपशुदेवानाह। रोहितो रक्तोऽञ्जिःकायको यस्य सोऽनड्वान् वृषभोऽनीक- वतेऽग्नये आलभ्यः अनीकं मुखं सैन्यं वा यस्य सोऽनीक- वान् तस्मै १ अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवतौ२,३ रजतवर्णा नाभिर्ययोस्तौ रजतनाभी द्वौ पौष्णौ पूषदेवत्यौ४,५ पिशङ्गौ पीतौ तूपरौ निःशृङ्गौ वैश्व देवौ विश्वदेवदेवत्यौ६,७ कल्माषः कर्बुरो मारुतः८ कृष्णः श्यामोऽजो मेषः आग्नेयः अग्निदेवतः९ मेषी सारस्वती१० पेत्वः वेगवान् वरुणदेवतः११ एवमेकादश" इति वेददी॰प॰

ऐकाधिकरण्य न॰ एकाधिकरणस्य भावः ष्यञ्। एकाधि- करणवृत्तित्वे सामानाधिकरण्ये। "अथवा हेतुमन्नि- ष्ठविरहाप्रतियोगिना। साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" भाषा॰। तुल्यविभक्तिकपदयोः स्वोप- स्थाप्यार्थयोरभेदबोधकत्वे च।

ऐकान्तिक त्रि॰ एकान्तमवश्यं भावी ठञ्। १अवश्यम्भाव्ये। "सुखस्यैकान्तिकस्य च" मनुः। "ऐकान्तिकमात्यन्तिक- मुभयमाप्नोति कैवल्यम्" सां॰का॰ ऐकान्तिकमवश्यं भावि" कौ॰। एकान्तं भूतः स्वसत्तया व्यापी ठञ्। २एकान्तस्य स्वसत्तया व्यापके "कृष्णयैकान्तिकः सुहृत्" भाग॰ ३,२, स्त्रियां ङीप्। "ऐकान्तिकी हरेर्भक्तिरुत्- पातायैव कल्पते" नारा॰पु॰।

ऐकान्यिक त्रि॰ एकमन्यत् विपरीतं वृत्तमध्ययनेऽस्य। "कर्माध्ययने वृत्तम्" पा॰ ठक्। यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलनमेकं जातम् तादृशे कुपाठके छात्रे।

ऐकायन पुंस्त्री एकस्य तन्नाम्नो मुनेर्गोत्रापत्यम् नडा॰ फक्। एकस्य गोत्रापत्ये स्त्रियां टाप्।

ऐकार्थ्य न॰ एकार्थस्य भावः ष्यञ्। एकयत्ना विशिष्टैका- र्थोपस्थापने एकार्थीभावे। १एकप्रयोजने च। "२पृथ- गर्थानामैकार्थ्यं समर्थः" सि॰कौ॰।

ऐकाहिक त्रि॰ एकाहमधीष्टो भृतोऽभूतो भावी वा ठञ्। १ए- काहसाध्ये यागादौ स्त्रियां ङीप्। "ततोऽन्यान्यैका- हिकानि" आश्व॰ श्रौ॰ ८,१६,१६, "ताभ्यां पूर्वे ऐकाहिके" २,१०,१०, "अन्यानामैकाहिकानामाम- नात्" २एकाहव्यापके ज्वरादौ "महाह्लोत्तरे तीरे द्विपदोनाम वानरः। ऐकाहिकज्वरं हन्ति तस्य नामानु- कीर्त्तनात्"। ऐकाहिकज्वरश्च एकाहान्तरे एकदिनं व्यापकोज्वरः इति वैद्यके प्रसिद्धम्। एकाहमधीते ३छात्रे एकाहमधीष्टे भृतश्च व्यापारिते ४अध्यापके स्वसत्तया एकाहं व्याप्यकाले ५ एकाहभाविनि उत्सवादौ च। एकाहसाध्ययागभेदे एकाहः तस्य दक्षिणा ठञ् ङीप्। ६एकाहसाध्ययागदक्षिणायां स्त्री।

ऐक्य न॰ एकस्य भावः ष्यञ्। १एकत्वे २अभिन्नत्वे ३एकार्थी भावे च "ऐक्यं सोऽन्यत्र" सुश्रु॰ "ऐक्यसंयोगनानात्व समवायविशारदः" भा॰स॰५अ॰। ४ऐकमत्ये सौहार्दे च "तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कथञ्चन" रघुः। एकस्या-

स्यात्काञ्जिकन्तु २२सौवीर २३मारनालं २४तु दीपकृत् । काञ्जिकं शिशिरस्पर्शं पाचनं रोचनं लघु । तुषोदकं यवैरामैः सतुषैः सकलैः कृतम् । सौवीरकं तु तत्त्वामैः पक्वैर्वा निस्तुषैर्यवैः । गर्ग्यैरैरेतस्यात् २५स्यात् सौवीरकमिति कश्चित् । तुषाम्बु दीपनं हृद्यं पाण्डुकृमिगदापहम् । सौवीरकं ग्रहण्यर्शोनाशनं भेदि दीपनम् । धान्याम्ल २५ अम्लन्धोनित्यात्प्रीणनं लघु दीपनम् । अर्शोदाहकरं पानात्पाचनं शोषनाशनम् । गण्डूषान्मुखवैरस्यदौर्गन्ध्यकफक्लमनम्"। ऐक्षवस्य द्वैविध्यमाह भावप्र० "इक्षोः पक्वैः रसैः सिद्धः सीधुः पक्वरसश्च सः । आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः" इति । इक्षुः काण्डमूलं तस्येदम् अण् । १काण्डमूलावयवभूते स्त्रियां ङीप् । इक्षुः इक्षुपत्राकारः अस्त्यस्य अण् । ४इक्षुपत्राकारे च स्त्रियां ङीप् । "ऐक्षव्यौ विष्टती" कात्या० ८,१,१४, "विष्टती ऐक्षव्यौ काण्डमूलावयवभूते अत्र भवतः 'काण्डमयः प्रस्तरः काण्डमूलमये विष्टती' शाखान्तरीयवाक्यशेषात्" कर्कः । अधिकरणमालायां "बर्हिःप्रस्तरयोर्मध्यमरात्नौ तिर्यक्प्रसार्यमाणौ दर्भौ विष्टती ते अत्र इक्षुपत्ररूपे स्याता मिति" माधवः । तेनात्र ऐक्षव्यशब्दकल्पनं भ्रमादिकम् । "दीर्घकाण्डं पाचव्यानिध्नकार्यमेमयात् परिधीनामन्तरालं प्रस्तरमैक्षव्यौ विष्टती तदूर्ध्वेरूपसंनद्धं भवति" शत०ब्रा० ३,६,३,१०,

ऐक्षुक त्रि० इक्षौ साधु गुडा० ठञ् । इक्षुसाधुनि क्षेत्रादौ इक्षुं भारभूतं वहति आवहति वा ठञ् । १भारभूतेक्षुवाहके २तद्वाहके च । इक्षवः सन्त्यस्यां नडादि० छ कुक् च । इक्षुकीया भूमिस्तस्यां भवः अण् बिल्वकादि० छस्य लुक् । ऐक्षुकः तादृशभूमिभवे त्रि० ।

ऐक्षुभारिक त्रि० इक्षुभारं वहत्यावहति वा ठञ् । इक्षु १वाहके २तद्वाहके च ।

ऐक्ष्वाक पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि० । १सूर्यवंश्ये नृपे बहुषु अणो लुक् । "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" रघुः । इक्ष्वाकोरयं जनपदः । ऐक्ष्वाक २तद्राजके जनपदे च बहुषु लुक् । तत्र भवः कोपधत्वात् अण् ऐक्ष्वाक तज्जनपदभवे बहुषु लुक् । क्वचिन्न लुक् । "ऐक्ष्वाकेषु च मैथिलेषु च फलन्यस्य कद्यायिषः" इति मुरारिः । "ऐक्ष्वाकं पुरुषव्याघ्रमतिमाद्बुपनिक्रमम्" भा० आ० २९अ० । "त्रिषु लुम्भुमिस ऐक्ष्वाकः प्रीतिपूर्वकम् भा० अनु० १अ० । अत्र ऐक्ष्वाकुरितिपाठस्तु आर्षत्वात् साधुः [इङ्गुदीफले (जियापुती)

ऐङ्गुद न० इङ्गुद्याः फलम् फले अण् तस्य लुप्ना० न लुक् ।

ऐच्छिक त्रि० इच्छया निर्वृत्तः ठञ् । इच्छया कृते स्त्रियां ङीप् ।

ऐड पु० इडाशब्दोऽस्त्यत्राऽनुवाकेऽध्याये वा विमुक्ता० अण् । इडाशब्दयुक्ते १अध्याये २अनुवाके च एडस्येदम् अण् । ३मेषसम्बन्धिनि त्रि० स्त्रियां ङीप् । इडा+अपत्ये शिवा० अण् । इडापत्ये पुरूरवसि पु० ।

ऐडक पुंस्त्री एडक एव स्वार्थेऽण् । १मेषाकारे दक्षिणापथप्रसिद्धे पशुभेदे "तयो वा पशवोऽमेध्यादुद्धराङ् ऐडकः स्त्री च" शत०ब्रा० १२,४,६,७ । एडकस्येदम् अण् तत्सम्बन्धिनि त्रि० एडकशब्दे उदा० ।

ऐड(ल)विड(ल) पु० इड(ल) विडा(ला) वा अपत्यम् "अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः" पा० ढकोऽपवादः अण् डलयोरैकत्वस्मरणात् उभयत्र अन्यतरतो वा डस्य लो वा । कुबेरे । "तस्य प्रीतेन मनसा तान् दृष्ट्वैडविडस्ततः" भाग० ४,१२,८ ।

ऐडविड पु० सूर्यवंश्ये क्षत्रियभेदे "नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् । ततो दशरथः पुत्रस्तस्मादैडविडस्ततः" भाग० ९,९,२२ । सूर्यवंशवर्णने ।

ऐण त्रि० एणस्य कृष्णमृगस्येदम् अण् । कृष्णमृगचर्मादौ । एणशब्दे उदा० । [एणीपचनदेशभवे ।

ऐणीपचन त्रि० एणीपचनदेशे भवः आभावद्यो अण् ।

ऐणेय त्रि० एण्या इदम् ढक् । १कृष्णमृगचर्मादौ "ऐणेयरौरवाजानि अजिनानि" गोभि० । २रतिबन्धभेदे हेम० ।

ऐतर त्रि० इतरस्यादूरभवादौ सङ्काशादि० चतुरर्थ्याम् अण् । इतरादूरभवदेशतत्सन्निकृष्टदेशादौ ।

ऐतरेय न० इतरस्य तदाख्यस्य ऋषेरपत्यम् शुभ्रा० ढक् । १इतरर्षेरपत्ये । "महिदासः ऐतरेयः ऋषि तेन प्रोक्तम् छ० अण् । २आरण्यकादि तत्प्रोक्तग्रन्थे ऋग्वेदीयब्राह्मणभेदे "ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं दश" इत्युक्ते तदीये ३उपनिषद्भेदे ४वेदशाखाभेदे च तदधीयते इति ऐतरेयिन् तदध्येतृषु "अन्तरेण हविषी विष्णुरूपामैतरेयिणः" कात्या०श्रौ०१,२,१२ "अग्नीषोमावेवमिन्द्रैतरेयिणः २,६,२ । एकाहांशैतरेयिणः" १०,१,१३ ।

ऐतिकायन पुंस्त्री इतिकस्य गोत्रापत्यं नडादि० फक् । इतिकगोत्रापत्ये । अनन्तरापत्ये तु इञ् । ऐतिकिरिति

ऐतिशायन पुंस्त्री ऐतिकवत् । इतिशस्य गोत्रापत्ये ।

ऐतिहासिक त्रि० इतिहासादागतः इतिहासं वेत्त्यधीते वा

ठक्। १इतिहासप्रपन्नके २तद्वेत्तरि ३तदध्येतरि च।

ऐतिह्य न० इतिह पारम्पर्य्योपदेशः अनिर्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ्। पारम्पर्य्योपदेशे। यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परोपदेशमात्रम् न तु केनाप्येतदुपलभ्य कथितम्। अष्टप्रमाणवादिनः पौराणिका इदं प्रमाणान्तरमूचिरे तदेतन्मतं सां० कौ० निराकृतम् यथा "यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमात्रम् इति होचुरित्यैतिह्यं यथा इह वटे यक्षः प्रतिवसतीति न तत् प्रमाणम् अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम् प्रमाणमिति" "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" ऐतरे० "ऐतिह्यमनुमानञ्च प्रत्यक्षमपि चागमम्। ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता" रामा०। [ काशी

ऐदंयुगीन त्रि० इदंयुगे साधु प्रतियुगा० खञ्। इदंयुग-

ऐनस न० एन एव प्रज्ञा० स्वार्थे अण्। पापे।

ऐन्दव न० इन्दुर्देवताऽस्य। १मृगशिरोनक्षत्रे २इन्दुदेवताके हविरादौ त्रि०। तस्येदम् अण्। ३चान्द्रे मासि पु० "ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते" ब्र०सि०। ४चन्द्रसम्बन्धिनि त्रि०। इन्दुःइन्दुलोकप्राप्तिः प्रयोजनमस्य अण्। ५चान्द्रायणे व्रतभेदे। "महापातककृत्यास्तु मासं शोधनमैन्दवम्" मनुः। "कर्त्तव्यमैन्दवद्वयम्" स्मृतिः तद्व्रतस्य यथा चन्द्रलोकप्राप्तिफलकत्वं तथा चान्द्रायणशब्दे वक्ष्यते। ६सोमराज्याम् स्त्री ङीप्।

ऐन्द्र त्रि० इन्द्रोदेवताऽस्य अण्। इन्द्रदेवताके १हविरादौ "ऐन्द्रं दधि ऐन्द्रं पयः" श्रुतिः। २ऋग्विशेषे स्त्री। "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" श्रुतिः। सा च ऋक् "कदाचन स्तरीरसीत्यादि"। ३तद्दैवताके ज्येष्ठानक्षत्रे न० "ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा" प्रा० त० पुरा०। तस्येदम् अण्। ४इन्द्रसम्बन्धिनि त्रि० "अङ्कं हि राज्यं पदमैन्द्रमाहुः" "ऐन्द्रं पदं भूमिगतोऽपि भुङ्क्ते" रघुः। ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा" "ऐन्द्रस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्" मनुः। ५तच्छक्तिरूपदेवीमूर्त्तिभेदे स्त्री ङीप्। "ऐन्द्रीतमप्यरेश्वरम्" देवीमा०तन्त्रोक्ते भूतशुद्ध्यङ्गे ६धारणाभेदे "ऐन्द्र्या धारणया देहं स्थिरीकृत्येति भूतशुद्धौ" रघु०। तत्र भवः अण्। ७अर्ज्जुने इन्द्रजितात्मरे च पु०तयोस्तत उत्पन्नत्वात्।

अपत्ये तु इञ्। ऐन्द्रिरित्येव ८वनार्द्रके न०राजनि०। "ज्येष्ठे मूले च नक्षत्रे चरेद्यदि बृहस्पतिः। ऐन्द्रः संवत्सरः स स्यात् सर्वभूताभिवप्रदः" विष्णुध० उक्ते द्वादशवर्षमध्ये १०संवत्सरभेदे पु०। तत्फलञ्च "ज्येष्ठे जातिकुलश्रेण्यो श्रेष्ठा नृपाः सर्वधर्म्मिणाः। पीड्यन्ते सर्वधान्यानि हित्वा कङ्गुशमीजानि" मल०त०।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति ठक्। मायाविनि (बाजिकर) जटाधरः।

ऐन्द्रद्युम्न न० इन्द्रद्युम्नमधिकृत्य कृतमाख्यानमण्। इन्द्रद्युम्नन्नृपाधिकारेण कृते आख्याने "व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च" भा०आ०१अ०। इदमाख्यानं व्रीहिद्रौणिकाख्यानात् परं मुद्रितभारते न दृश्यते क्वचित् पुस्तकान्तरेऽस्ति।

ऐन्द्रमहिक त्रि० इन्द्रमहः प्रयोजनं कारणं फलं वास्य ठञ्। १ऐन्द्रमहकारणके २तत्फलके च।

ऐन्द्रवायव त्रि० इन्द्रश्च वायुश्च इन्द्रवायू वायुशब्दयुक्तत्वात् देवताद्वन्द्वेऽपि नानङ् तौ देवते अस्य अण्। इन्द्रवायुदेवताके हविरादौ। "ऐन्द्रवायवपात्रं तत्तस्य द्वितीयम्" शत०ब्रा० ४।१।५।१८ "यदैन्द्रवायवाग्रान् प्रातःसवने" ४,४,१,१७।

ऐन्द्रशर्म्मि पुंस्त्री इन्द्रशर्म्मणोऽपत्यं बाह्वा० इञ्-टिलोपश्च। इन्द्रशर्म्मनामकस्यापत्ये स्त्रियां ङीप्।

ऐन्द्रहव त्रि० ऐन्द्रहव्यस्य छात्रः कण्वा० अण् यलो लुक्। ऐन्द्रहव्यछात्रे। इन्द्रहूशब्दे इन्द्रहव्यसाधनं दृश्यम्।

ऐन्द्राग्न त्रि० इन्द्राग्नी देवते अस्य अण्। इन्द्राग्निदेवताके हविरादौ। "एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीयाः" यजु० २४,८ "ऐन्द्राग्नः संहितोऽधोरामः" २९,५८। "ऐन्द्राग्नेन विधानेन" भा० अनु० ६० अ०।

ऐन्द्रापौष्ण त्रि० इन्द्रश्च पूषा च द्वन्द्वे आनङ् इन्द्रापूषणौ देवते अस्य अण् उपधाऽलोलोपः। इन्द्रापूषदेवताके हविरादौ। "ऐन्द्रापौष्णं चरुमिति" शत०ब्रा० ३,२,५,५। "अन्नापौष्णाः ऐन्द्रापौष्णाः" काठ्या० १५,२,१४ एवम् ऐन्द्रामारुतैन्द्राबार्हस्पत्यादयोऽपि इन्द्रसहित तत्तद्देवताके हविरादौ त्रि०।

ऐन्द्रायण पु० इन्द्रस्यापत्यम् बा० फक्। इन्द्रापत्ये ततः चतुरर्थ्यां अरीहणा०वुञ्। ऐन्द्रायणक तेन निर्वृत्तादौ त्रि०

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ्। १जयन्ते २अर्ज्जुने ३वालिवानरे ४काके च" मेदिनिः। तत्र काके। "ऐन्द्रिः किल

मङ्गले। ३इडानामन्नानां समूहः अण्। ४अन्नसमूहे न०। ५इडायाः पृथिव्या इदम् अण्। ६पृथिवीजाते अन्ने च। "ये पथां पथि रक्षस ऐलबृदा आयुर्युधः" यजु०१६,६०, ऐलमन्नसमूहमन्नं वा बिभर्ति ऐलभृतः परोक्षवृत्त्या भत-कारयोर्बदकारौ। डलयोरैक्यात् ऐडभृदोऽप्यत्रार्थेषु

ऐलवालुक एलवालुकमेव स्वार्थे अण्। एलवालुके (वालुका) गन्धद्रव्ये शब्दरत्ना०।

ऐलविल न० राजभेदे। "भरतश्च दिलीपश्चैलविलो भूमिपतया दर्शिम्। तथा ह्येमे च धर्म्मज्ञो राजर्षिरैलविलस्तथा। ततश्चैलविलाश्चेमे" भा० शा०१६१३४०। ऋषिविद्यावंश-वर्णने। २कुवेरे च। "वरासनगतं तत्र यथैवैलविलं तथा" हरिवं० १७७अ०। ऐडविडशब्दे व्युत्पत्तिः।

ऐलाक त्रि० ऐलाक्यस्य छात्रः कण्वा० अण् यञोलोपः। ऐलाकछात्रे।

ऐलिक पु० इलिन्यां भवः ठक् पुंवत्। इलिन्यपत्ये दुष्मन्तादिपितामहे तंसौ राजनि "इलिनोनाम तस्यासीत् कन्या वै जनमेजय!। ब्रह्मवादिन्यधि स्त्री च तंसुस्ता-मभ्यगच्छत। तंसोः सुरोधो राजर्षिर्धर्म्मनेत्रः प्रताप-वान्। ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी। उप-दानवी सुतान् लेभे चतुरस्त्वैलिकात्मजात्। दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा" हरिवं०३२

ऐलेय पु० इलायाः अपत्यम् ढक्। १भौमे मङ्गले इलायां भवः ढक्। २एलवालुके गन्धद्रव्ये न० मिशादौ० इला-शब्दस्तु भानुपुत्रोडापरस्तेन ततोऽपवेति भेदः।

ऐश त्रि० ईशस्येदम् अण्। ईशसम्बन्धिनि "सुरसरिदिव ते-जो वह्निनिष्ठ्यूतमैशम्" रघुः "यो लोकवीरसमितौ धनु-रैशमुग्रम्" भाग० ८,१०,६। शर्वशानेश्वरादयोऽ-त्र स्त्रियां ङीप्। ऐशानी "पूर्वोत्तरयोरन्तरालदिशि "ऐशानीक्रमतो रेखोत्तरापा देवमण्डले। नैर्ऋतीक्रमतो-रेखा प्रागपा पितृमण्डले" स्मृतिः। "ऐशान्यां मरण-भयं निगदितं दिग्लक्षणं चाग्रने"ति०त०वर्षकृत्यम्। ईश्वरसम्बन्धिनि त्रि० "पश्य मे योगमैश्वरम्" गीता "ऐश्वरं धनुरभाजि यत्त्वया" रघुः २दुर्गायां स्त्री।

ऐश्वर्य्य न० ईश्वरस्य भावः ष्यञ्। १प्रभुत्वे "तस्मै निशाच-रैश्वर्यं प्रतिशुश्राव राघवः" रघु०। इच्छानभिघातात्मके २ईश्वरधर्मे ३अणिमादौ च "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः" इति पुरा०। ऐश्वर्य्यञ्च द्विविधं नित्यं नित्येश्वरानुध्यानजन्यं योगजं वा तत्र नित्यैश्वर्य्यं परस्य स्वाभाविकम् "स्वाम्यं यस्य नित्यं जगत्सु" व्यासत०। योगजञ्च बुद्धेः सात्विकगुणभेदः यथोक्तम् "अध्यवसायो बुद्धिर्धर्म्मो ज्ञानं विराग ऐश्वर्य्यम्। सात्विकमेतद्रूपं तामसमस्माद्वि-पर्य्यस्तम्" सां०का०। व्याख्यातञ्चैतद् वाचस्पतिना "ऐश्वर्य्य-मपि बुद्धिधर्मः यतोऽणिमादिप्रादुर्भावः। तत्राणिमा अ-णुभावः यतः शिलामपि प्रविशति। लघिमा लघुभावः यतः सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति। महिमा महतो-भावः यतो महान् भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यमिच्छानभिघातो यतो भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकं वशीभवत्य-स्यावश्यम्। ईशित्वं भूतभौतिकानां प्रभवस्थितिमीष्टे यच्च कामावसायित्वं सत्यसङ्कल्पता यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति। अन्येषां निश्चया निश्चेतव्य-मनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति चत्वारः सात्त्विका बुद्धिधर्म्माः"।

पातञ्जलसूत्रभाष्यविवरणेषु कारणफलसहितं तत्-सिद्ध्यादिकं दर्शितं यथा। "कायाकाशयोः सम्बन्धसं-यमाल्लघुतूलसमापत्तेश्चाकाशगमनम्" ४१ सू०।

"यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य तेन सम्बन्धप्राप्तिस्तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघु-र्भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभि-तन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाश-गतिरस्य भवतीति" भा० ४१।

"कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृत-संयमात्समापत्तिं चेतसस्तत्समलघुतां लब्ध्वेति सिद्धि-क्रममाह जलइति" वि० ४१।

"बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" सू० "शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा सा यदि शरीरस्थस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता। तत्र कल्पितया साधयन्त्य-कल्पितां महाविदेहामिति यया परशरीराण्याविशन्ति योगिनः ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्म्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति" भा० ४२।

"अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्म्मविपाक-क्षयहेतुं विदेहामाह — शरीरादिति। अकल्पिताया

महाविदेहाया च उपायत्वप्रदर्शनाय कल्पितां विदेहामाह या बहीति। इतिमात्रं कल्पनाज्ञानमात्रं तेन महाविदेहामाह या त्विति। उपायोपेयते कल्पिताकल्पितयोराह तत्रेति। किं परशरीरावेशमात्रमित्यत नेत्याह ततश्चेति। ततोधारणातो महाविदेहायै मनसि सत्त्वे सिद्धे क्लेशाश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः तदेतद्रजस्तमोमूलं विगलितरजस्तमसः सत्त्वमात्रात् विवेकख्यातिमात्रस्वरूपात्तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति तत्क्षयात्तु निरावरणं योगिचित्तं यथेच्छं विहरति जानाति" वि० "स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः" सू० ४३। "तत्र पार्थिवाद्याः शब्दादयोविशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिता एतद्भूतानां प्रथमं रूपं द्वितीयं रूपं स्वसामान्यं मूर्त्तिर्भूमिः स्नेहोजलं वह्निरुष्णता वायुः प्रणामी सर्वतोगतिराकाशइत्येतत् स्वरूपशब्देनोच्यते अस्य सामान्यस्य शब्दादयोविशेषाः तथाचोक्तम् "एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिरिति" सामान्यविशेषसमुदयोऽत्र द्रव्यः। द्विष्ठोहि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षोयूथं वनमिति शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्याः समूहस्य देवा एको भागो मनुष्या द्वितीयोभागस्ताभ्यामेवाभिधीयते समूहः। स च भेदाभेदविवक्षित आम्राणां वनं ब्राह्मणानां सङ्घ "आम्रवन ब्राह्मणसंघ" इति स पुनर्द्विविधोयुतसिद्धावयवोऽयुतसिद्धावयवश्च युतसिद्धावयवः समूहोवनं सङ्घ इति। अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः। एतत्स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपं? तन्मात्रं भूतकारणं तस्यैकोऽवयवः परमाणुसामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वतन्मात्राण्येतत् तृतीयम्। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलागुणाः कार्य्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः। अथैषां पञ्चमरूपमर्थवत्त्वं भोगापवर्गार्थता गुणेष्वन्वयिनी गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत्। तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति तत्र पञ्चभूतस्वरूपाणि जित्वा भूतजयी भवति तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्योभूतप्रकृतयो भवन्ति" भा०। स्थूलञ्च स्वरूपञ्च सूक्ष्मञ्चान्वयश्चार्थवत्त्वञ्चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषु संयमात्तज्जयः। स्थूलमाह तत्रेति पार्थिवाः आप्यास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सौरभादयश्च, एते हि नामरूपप्रयोजनैः परस्परतोभिद्यन्तइति विशेषाः एतेषां पञ्च पृथिव्यां, गन्धवर्जं चत्वारोऽप्सु, गन्धरसवर्जं त्रयस्तेजसि, गन्धरसरूपवर्जं द्वौ नभस्वति, शब्दएवाकाशे। तत्र च ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः यास्ते तत्रापि पार्थिवास्तावद्धर्माः। "आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव च। वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता"। अपां धर्माः "स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्द्दवं गौरवञ्च यत्। शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः"। तैजसधर्माः "ऊर्द्ध्वभाक् पाचकं दग्धृ पावकं लघु भास्वरम्। प्रध्वंस्योजस्वि वै तैजः पूर्वाभ्यां भिन्नलक्षणम्"। वायवीयाधर्माः "तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः"। आकाशीया धर्माः "सर्वतो गतिरव्यूहो विष्टम्भश्चेति च त्रयः। आकाशधर्मा व्याख्याता पूर्वधर्मविलक्षणाः" इति। तत्र आकारप्रभृतयो धर्मास्तैः सहेति आकारश्च सामान्यविशेषो गोत्वादि। द्वितीयरूपमाह। द्वितीयं रूपं स्वसामान्यं मूर्त्तिः सांसिद्धिकं काठिन्यं, स्नेहः जलं सक्तुकलजपुण्डिकाधानहेतुः। वह्निरुष्णता औदर्य्ये सौर्य्ये भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति सर्वत्र तद्धर्मधर्म्मिणोरभेदविवक्षयाभिधानम्। वायुः प्रणामी वहनशीलः तदाह "चलनेन तृणादीनां शरीरस्पन्दनेन च। सर्वगं वायुसामान्यं नाभित्वमनुमीयते" सर्वतोगतिराकाशः सर्वत्र शब्दोपलब्धिदर्शनात् श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्थ प्रपादितमधस्तात् एतत् स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्त्यादिसामान्यस्य शब्दादयः षड्जादयः उष्णादयः शुक्लादयः कषायत्वादयः सुरभ्यादयो मूर्त्त्यादीनां भेदाः सामान्यान्यपि मूर्त्त्यादीनि जम्बीरपनसामलककपित्थादीनि रसादिभेदात् परस्परं व्यावर्त्तन्ते तेनैतेषाम् एते रसादयो विशेषाः तथा चोक्तम् "एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्त्ति स्नेहादीनां समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति। तदेव सामान्यं मूर्त्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः।

यथावस्थापयति तानि तथावतिष्ठन्ते इत्यर्थः । अन्वयार्थवत्त्वसंयमजयात् सिद्धिमाह ईशित्वं ७ तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् यः प्रभव उत्पादो यथाप्ययो विनाशो यश्च व्यूहो यथावदवस्थानरूपः तेषामीष्टे । अर्थवत्त्वसंयमात् सिद्धिमाह । यच्च कामावसायित्वं ८ सत्यसङ्कल्पता विजितगुणार्थवत्त्वो हि योगी यद्यदर्थं तया सङ्कल्पयति तत्तस्मै प्रयोजनाय कल्पते । विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति । स्यादेतद् यथा शक्तिविपर्यासमकरोदेवं पदार्थविपर्यासमपि कस्मान्न करोति तथाच चन्द्रमसमादित्यं कुर्यात् कुहूञ्च सिनीवालीमित्यत आह न च शक्तोऽपीति । न खल्वेते यत्रकामावसायिनस्तत्रभवतः परमेश्वरस्याज्ञामतिक्रमितुमुत्सहन्ते । वस्तुपदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति । एतान्यष्टावैश्वर्याणि तद्धर्म्मानभिघात इति अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्म्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवत् एतत् सूत्रोपनिबद्धसकलविषयसंयमफलप्रत्यायनाय । सुगममन्यत्” ॥४४ वि० ।

वेदान्तिमते निरैश्वर्य्यमीश्वरस्यैव योगिनान्तु ऐश्वर्य्यं तदधीनमित्यतोन जगत्सर्ज्जने तेषां शक्तिः । यथोक्तं शारीरकसूत्रभाष्येषु

“जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च” सू० । “ये सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं व्रजन्ति किन्तु तेषां निरवग्रहमैश्वर्य्यं ? भवत्याहोस्वित् सावग्रहमिति संशयः । किन्तावत् प्राप्तं निरङ्कुशमेवैषामैश्वर्य्यं भवितुमर्हति “आप्नोति स्वाराज्यम्” “सर्व्वेऽस्मै देवा बलिमावहन्ति” “तेषां सर्व्वेषु लोकेषु कामचारो भवतीत्यादि” श्रुतिभ्यः । इत्येवं प्राप्ते पठति जगद्व्यापारवर्ज्जमिति । जगदुत्पत्त्यादिव्यापारं वर्ज्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्य्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्येश्वरस्य । कुतः ? तस्य तत्र प्रकृतत्वादसन्निहितत्वाच्चेतरेषाम् । परएव ह्यीश्वरो जगद्व्यापारेऽधिकृतः तमेव प्रकृत्योत्पत्त्याद्युपदेशात् नित्यशब्दनिबन्धनत्वाच्च तदन्वेषणविजिज्ञासनपूर्ब्बकमितरेषामणिमाद्यैश्वर्य्यं श्रूयते तेनासन्निहितास्ते जगद्व्यापारे । समनस्कत्वादेव चैषामनैकमत्ये कस्यचित् स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित् स्यात् । अथ कस्यचित्सङ्कल्पमन्वन्यस्य सङ्कल्प इत्यविरोधः समर्थ्येत । ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते” भा० ।

**ऐषमस्** अव्य० अस्मिन् वत्सरे नि० । वर्त्तमानवत्सरे । ततः भवार्थे ट्युल् तुट् च । ऐषमस्तन तद्भवे स्त्रियां ङीप् । पक्षे त्यप् । ऐषमस्त्य तदर्थे त्रि० स्त्रियां टाप् ।

**ऐषीक** न० इषीकमेव स्वार्थे अण् । इषीकाशब्दार्थे ।

**ऐषुकारि** पु० इषुकारस्यापत्यम् इञ् । शरकारापत्ये तस्य विषयोदेशः भक्तल् । ऐषुकारिभक्त तद्विषये देशे ।

**ऐषुकार्य्यादि** पु० पाणिन्युक्ते विषये देशेऽर्थे भक्तल्प्रत्ययनिमित्ते शब्दगण भेदे । स च गणः “ऐषुकारि, सारसायन । चान्द्रायण । द्व्याक्षायण । त्र्याक्षायण । औडायन । जौलायन । खाडायन । दासमित्रि दासमित्रायण शौद्रायण द्राक्षायण, शायण्डायन । तार्क्ष्यायण । शौभ्रायण । सौवीर । सौवीरायण । शयण्ड । शौण्ड । शयाण्ड । वैश्वमानव । वैश्वधेनव । नड । तुण्डदेव । विशदेव । शापिण्डि” ।

**ऐष्टिक** पु० इष्टेर्व्याख्यानो ग्रन्थः क्रतुत्वात् ठक् । इष्टेर्व्याख्याने १ग्रन्थे इष्टाय हितम् ठक् । इष्टकूपयागादेर्हिते २अन्तर्वेदिके कर्मभेदे “दानधर्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्” मनुः । “अस्ति तावत् प्राचीनवंशमारभ्य तस्मात् आहवनीयाद्यग्निसमयमैष्टिकवेदिः” यजु० ५,१४ वेददी० इष्टिं प्रभवति ठक् । ३इष्टिसाधनसमर्थे प्रयोगे च । “यजमानशब्दादैष्टिकेषु निगमेषु” आश्व० श्रौ० ९,२,७, । तेषां समावापादि यथार्थमभिधानमैष्टिके तन्त्रे” ४,१,८ ।

**ऐहलौकिक** त्रि० इहलोके भवः ठञ् द्विपदवृद्धिः । इहलोकजाते “ऐहलौकिकमेवेह उताहो पारलौकिकम्” भा०व० २८१ अ० । “ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनम्” भा०व० ११८ अ० । स्त्रियां ङीप् ।

**ऐहिक** त्रि० इह भवः काशादिठञ् । १इहलोकभवे २स्त्रीतशरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च । “क्वचिद्भवदैहिकार्थेषु सज्जेत्” भाग०५,१४,२२ । “सर्वैहिकामुष्मिककामलम्पटः” भाग० ५,१८,१४ । इह विदितः ठञ् । ३इहविदिते ४“ऐहिकमत्रमपतेर्दाहादिनिषेधात् जन्मान्तरीयतत्पापवत एव सहमरणेनोद्धारः” शु०त० रघु० । स्त्रियां ङीप् ।

इति वाचस्पत्ये ऐकारादिशब्दार्थसङ्कलनम् ।

# ओ

ओकारः स्वरवर्णभेदः कण्ठौष्ठस्थानयोरुच्चार्य्यः दीर्घः द्विमात्रत्वात् प्लुतस्तु त्रिमात्रः। स चोदात्तानुदात्तस्वरितभेदैः प्रत्येकमनुनासिकाननुनासिकाभ्यां द्वैविध्यात् षड्विधः तथा प्लुतोऽपि षड्विधः एवं द्वादशविधः। तपरत्वे कारपरत्वे च सवर्णग्राहकः। तन्त्रे तस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा “ओकारः सद्योजातो पञ्चमाख्यः स्मृतिः स्थिरा। सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः। आप्यायनी चोर्द्ध्वदन्तो लज्जोर्वीशौकृशो द्विजः। उड्डीश दर्शकस्तोत्रः कैलासो वसुधाधरः। प्रणवांशो ब्रह्मसूत्रमजेयः सर्वमङ्गला। त्रयोदशी दीर्घनासारतिनाथो दिगम्बरः। त्रैलोक्यविजया प्रज्ञा प्रीतिश्चोकारादिकर्षिणो” इति। तदधिष्ठातृदेवता च तन्त्रेऽोक्ता “ज्वालाख्योकारगा ज्ञेया भीमा च सप्तमालिनी”। तस्य ध्येयरूपं कामधे०त० उक्तं यथा। “ओकारं चञ्चलापाङ्गि! पञ्चदेवमयं सदा। रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम्। पञ्चप्राणमयं वर्णं नमामि देवमातरम्। एतद्वर्णं महेशानि! स्वयं परमकुण्डलीम्”।

ओ अव्य० उ–विच्। १सम्बोधने २आह्वाने ३स्मरणे ४अनुकम्पने च मेदि०। ५ब्रह्मणि पु० एकाक्षरकोषः।

ओक पु० उच–घ चस्य कः। १पक्षिणि २वृषले ३आश्रये च। “अनोकशायी बहुरत्नमचारचरन् देयानेकचरः स भिक्षुः” भा० शा० ९ अ०। उच भावे घञ् कुः। ४समवाये च। ओकाय हितं यत्। ओक्य निवासाय हिते त्रि० “ज्योतीरथः पवते राय ओक्यः” ऋ० ९,८६,४५। [ (उकण) केशकोटे शब्दर०।

ओकण(णि) पु० उ–विच् ओः सन् कणति कण–अच् इन् वा

ओकस् न० उच–असुन् न्यङ्क्वादित्वात् कुत्वम्। १गृहे २आश्रयमात्रे च। “यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः” ऋ० २,१९,१। “यस्मिन् देवा ओकांसि चक्रिरे” १,४०,५। “लोकाश्चाक्षु शुभाः पार्थ! गोलमोकःसमोपजाः” भा० स० २०। वनौकसः दिविौकसः जलौकस इत्यादि।

ओकिवस् त्रि० उच–समवाये क्वसु वेदे नि०। समवेते “ओकिवांसा सुते सचा” ऋ० ६,५९,१। ओकिवांसा ओकिवांसौ समवेतौ” भा०।

ओकुल पु० उच–उलक् न्यङ्क्वा० नि० कुः। अर्द्धाग्निदग्धे अपक्वे गोधूमे (हडा) ‘ओकुलस्तु गुरुर्वृष्योमधुरो बलकारकः। रक्तपित्तापहः स्निग्धो हृद्योमदविवर्द्धनः” राजनि०। [ गौ०ङीष्। (उकुण) केशकीटे शब्दरत्ना०।

ओकोदनी स्त्री ओक आश्रयः गृहरूपम् अदनं भक्ष्यं यस्याः

ओक्कणी स्त्री उच्–विच् ओक् सन् कणति कण–अच् गौ०ङीष्। (उकुण) केशकीटे शब्दरत्ना०।

ओखृ शोषे सामर्थ्ये अक० भूषणे वारणे सक०भ्वा० पर० सेट् ऋदित्। ओखति औखीत् ओखाम् बभूव आस चकार। ओखितः ओखनम्। ओखः णिचि ओखयति ते मा भवान् ओचिखत् त ऋदित्त्वात् न ह्रस्वः। उपसर्गावर्णात् पररूपम् प्रोखति परोखति।

ओगण त्रि० अव–गण्यते अव+गण कर्म्मणि घञर्थे क सम्प्र०। अवगण्ये अधरतया गण्ये। “मघि प्राधम्नओगणास इन्द्र” ऋ० १०,८९,१५ [ “बलं सन्त्वादोगीयः” इत्यु०उ०।

ओगीयस् त्रि० ओजीयस् वेदे नि०। अत्यन्तौजस्विनि।

ओघ पु० उच–घञ् पृषो०च। १समूहे,२जलवेगे,३द्रुतनृत्यादौ ४आध्यात्मिक तुष्टिभेदे च सा च तुष्टिः प्रव्रज्यायां चिरकालसमाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते” इति सां०प्र०भा०उक्ता। इयं तुष्टिः सां०कौ० मेघत्वेन परिभाषिता यथा “प्रव्रज्यापि ते न सद्यो निर्वाणदेति सा च कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तेवेत्युपदेशे या तुष्टिः सा कालाख्या मेघ उच्यते”। क्वचित् पुस्तके मेघ इत्यत्र ओघ इत्येव पाठः। तत्र जलवेगे “ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति” मनुः। “भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः” मेघ०। “पुनरोघेन हि युज्यते नदी” कुमा०। समूहे “स्तोघोर्ज्जितमर्थौघमवाप्य कुरुसत्तमः” भा०व० २५५ अ० ‘गजवाजिरथौघेन बलेन महताऽगमत्” आ० ११२अ० ५परम्परायाम् ६उपदेशे मेदि० परम्पराऽविच्छिन्ना सन्ततिः” “तोऽौघमक्तिसुहृन्”भाग० ४,१२,११।

ओघरथ पु० ओघवतो नृपतेः पुत्रे। “अथोघवान्नाम नृपो नृगस्यासीत् पितामहः। तस्यायोघवती कन्या पुत्रश्चोघरथोऽभवत्” भा०अनु० २अ०।

ओघवत् त्रि० ओघः जलवेगादिरस्त्यस्य मतुप् मस्य वः। १जलवेगादियुक्ते स्त्रियां ङीप्। “एषा सरस्वती रम्या दिव्या चौघवती नदी”भा०व०१२९। २अजनृपस्य पितामहे २नृपभेदे पु० ३तत्कन्यायां स्त्री ङीप्। सा च भर्त्तुराज्ञया

द्विजरूपधरधर्म्मरूपातिथेः आत्मपत्नीप्रदानादिरूपपरिचर्य्येण तुष्टधर्म्मवरेण अर्द्धदेहेन लोकानां पावनार्थं नद्यात्मभावा इति तन्नामप्रसिद्धे कुरुक्षेत्रस्थे नदीभेदेऽपि । तत्कथा भा० अनु० २ अ० यथा "तस्यां समभवत् पुत्त्रो नाम्नाग्नेयः सुदर्शनः । सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः । शिशुरेवाध्यगात् सर्व्वं परं ब्रह्म सनातनम् । अथौघवान्नाम नृपो नृगस्यासीत् पितामहः । तस्यौघवती कन्या पुत्त्रश्चौघरथोऽभवत् । तामोघवान् ददौ तस्मै स्वयमोघवतीं सुताम् । सुदर्शनाय विदुषे भार्य्यार्थे देवरूपिणीम् । स गृहस्थाश्रमरतस्तया सह सुदर्शनः । कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः । गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ! । प्रतिज्ञामकरोद्धीमान् दीप्ततेजा विशाम्पते ! । तामथौघवतीं राजन् ! स पावकसुतोऽब्रवीत् । अतिथेः प्रतिकूलं ते न कर्त्तव्यं कथञ्चन । येन येन च तुष्येत नित्यमेव त्वयाऽतिथिः । अप्यात्मनः प्रदानेन न ते कार्य्या विचारणा । एतद्व्रतं मम सदा हृदि संपरिवर्त्तते । गृहस्थानाञ्च सुश्रोणि ! नातिथेर्विद्यते परम् । प्रमाणं यदि वामोरु ! वचस्ते मम शोभने ! । इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा । निष्क्रान्ते मयि कल्याणि ! तथा सन्निहितेऽनघे ! । नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव । तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः । न मे त्वद्वचनात् किञ्चिदकर्त्तव्यं कथञ्चन । जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् । पृष्ठतोऽन्वगमद्राजन् रन्ध्रान्वेषी तदा सदा । इध्मार्थन्तु गते तस्मिन्नग्निपुत्त्रे सुदर्शने । अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा । आतिथ्यं कृतमिच्छामि त्वयाद्य वरवर्णिनि ! । प्रमाणं यदि धर्म्मस्ते गृहस्थाश्रमसंमतः । इत्युक्ता तेन विप्रेण राजपुत्त्री यशस्विनी । विधिना प्रतिजग्राह वेदोक्तेन विशाम्पते ! । आसनञ्चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये । प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते । तामब्रवीत्ततो विप्रो राजपुत्त्रीं सुदर्शनाम् । त्वया ममार्थः कल्याणि ! निर्विशङ्कैतदाचर । यदि प्रमाणं धर्म्मस्ते गृहस्थाश्रमसंमतः । प्रदानेनात्मनो राज्ञि ! कर्त्तुमर्हसि मे प्रियम् । स तया छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया । नान्यमात्मप्रदानात् स तस्या वव्रे वरं द्विजः । सा तु राजसुता स्मृत्वा भर्त्तुर्व्वचनमादितः । तथेति लज्जमाना सा तमुवाच द्विजर्षभम् । ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह । संस्मृत्य भर्त्तुर्व्वचनं गृहस्थाश्रमकाङ्क्षिणः । अथेध्मानुपादाय स पावकिरुपागमत् । मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः । ततस्त्वाश्रममागम्य स पावकसुतस्तदा । तां व्याजहारौघवतीं क्वासि यातेति चासकृत् । तस्मै प्रतिवचः सा तु भर्त्त्रे न प्रददौ तदा । कराभ्यां तेन विप्रेण स्पृष्टा भर्त्तृव्रता सती । उच्छिष्टास्मीति मन्वाना लज्जिता भर्त्तुरेव च । तूष्णीम्भूताऽभवत् साध्वी न चोवाचाथ किञ्चन । अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः । क्व सा साध्वी क्व सा याता गरीयः किमतो मम । पतिव्रता सत्यशीला नित्यं चैवार्जवे रता । कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा । उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् । अतिथिं विद्धि संप्राप्तं ब्राह्मणं पावके ! च माम् । अनया छन्द्यमानोऽहं भार्य्यया तव सत्तम । तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया । अनेन विधिना सेयं मामर्च्चति शुभानना । अनुरूपं यदत्रान्यत्तद्भवान् कर्त्तुमर्हति । कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात् । हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् । सुदर्शनस्तु मनसा कर्म्मणा चक्षुषा गिरा । त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदं । सुरतं तेऽस्तु विप्राग्र्य ! प्रीतिर्हि परमा मम । गृहस्थस्य तु धर्म्मोऽग्र्यः सम्प्राप्तोऽतिथिपूजनम् । अतिथिः पूजितो यस्य गृहस्थस्य हि गच्छति । नान्यस्तस्मात्परो धर्म्म इति प्राहुर्म्मनीषिणः । प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु । अतिथिभ्यो मया देयमिति मे व्रतमाहितम् । निःसन्दिग्धं मया वाक्यमेतत्ते समुदाहृतम् । तेनाहं विप्र ! सत्येन स्वयमात्मानमालभे । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश । नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः । सुकृतं दुष्कृतं चापि कर्म्म धर्म्मभृतां वर ! । यथैषा नानृता वाणी मयाद्य समुदीरिता । तेन सत्येन मां देवाः पालयन्तु दहन्तु वा । ततो नादः समभवद्दिक्षु सर्व्वासु भारत ! । असकृत् सत्यमित्येवं नैतन्मिथ्येति सर्व्वतः । उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः । वपुषा द्याञ्च भूमिञ्च व्याप्य वायुरिवोद्यतः । स्वरेण विप्रः शैक्षेण त्रीँल्लोकाननुनादयन् । उवाच चैनं धर्म्मज्ञं पूर्व्वमामन्त्र्य नामतः । धर्म्मोऽहमस्मि भद्रन्ते जिज्ञासार्थं तवानघ ! । प्राप्तः सत्यन्तु ते ज्ञात्वा प्रीतिर्मे परमा त्वयि । विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति । रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः । न चास्ति शक्तिस्त्रैलोक्ये

कश्चित् पुरुषोत्तम! । पतिव्रतामिमां साध्वीं तवाहोचितमच्युत । रक्षिता त्वद्गुणैरेषा पातिव्रत्यगुणैस्तथा । अदृश्या यदियं भूयात्तथा तन्नान्यथा भवेत् । एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी । पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति । अनेन चैतद्देहेन लोकांस्त्वमिह पश्यसि । अर्द्धेनौषवती नाम त्वामर्द्धेनानुयास्यति"

**ओङ्कार** पु० ओम्+स्वरूपे कारप्रत्ययः । प्रणवे । "प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति" मनुः । "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा" पुरा० अधिकम् ओम्शब्दे वक्ष्यते । "ओङ्कारं पूर्व्वमुच्चार्य्य पश्चाद्वेदमधीयते" इति श्रुतेः "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः" इति गीतोक्तेः "ग्रन्थनोङ्कृतं सर्व्वम्" इत्युक्तेश्च ओङ्कारस्य सर्व्वकर्म्मारम्भादौ पाठ्यत्वात् आरम्भसाधनत्वेन २आरम्भे । सप्तानां सामावयवानां ३प्रथमावयवे च । उद्गीथशब्दे ११७० पृ० सप्तावयवसामानि दृश्यानि । ओङ्कारः तदाकारः अस्त्यस्य अच् । काशीस्थे ४शिवलिङ्गभेदे "ओङ्कारं प्रथमं लिङ्गं द्वितीयन्तु त्रिलोचनमिति" काशीस्थचतुर्दशप्रधानलिङ्गकथने । तदाविर्भावकथा तत्रैव ७३अध्याये
"यथोङ्कारस्य लिङ्गस्य प्रादुर्भाव इहाभवत् । पुरानन्दवनेऽत्र ब्रह्मणा विश्वयोनिना । तपस्तप्तं महादेवि! समाधिं दधता परम् । पूर्णे युगसहस्रे च भित्त्वा पातालसप्तकम् । उदतिष्ठत् पुरोज्योतिर्विद्योतितहरिन्मुखम् । यदन्तर्यामिरम्भवद्विव्याजेन समाधिना । तदेव परमं धाम बहिराविरभूद्विधेः । अभूच्चटचटाशब्दः स्फुटितो भूमिभागतः । तच्छब्दाद्व्युत्थबुद्धेधाः समाधिं कमलोद्भवः । सहाऽऽस्त्र उन्मत्य तत्प्राची यावदुन्मील्य लोचने । पुरःपश्चाद्ददर्शाथ तावदक्षरमादिमम् । अकारं सत्त्वसम्पन्नमृक्‌चोलं स्थितिपालकम् । नारायणात्मकं साक्षात्तमःपारे प्रतिष्ठितम् । ओङ्कारस्य तस्यापि रजोरूपं यजुर्जनिम् । विधातारं समस्तस्य स्वाकारमिव चिन्तितम् । नीरव्यान्तमखेतमदनाभं तदग्रतः । मकारं च ददर्शाथ तमोरूपं विशेषतः । साम्नां योनिं हरं हेतुं साकाङ्क्षस्वरूपिणम् । अथ तत्पुरतोधाता अधात् स्वनयनातिथिम् । विश्वरूपमथोङ्कारं सगुणञ्चापि निर्गुणम् । अनाख्यनादसदनं परमानन्दविग्रहम् । यच्छब्दब्रह्मेति यत् ख्यातं सर्व्वेषाममयकारणम् । अर्द्धोपरिष्टाद्यादस्य बिन्दुरूपं परात् परम् । कारणं कारणानाञ्च जगदामङ्गलं परम् । विधिर्विलोकयाञ्चक्रे तपसा गोचरीकृतम् । अवनादोमिति ख्यातं सर्व्वस्यास्य स्वभावतः । भक्तप्रणयते यस्मात्तदोमिति यदीरितः । अरूपोऽपि स्वरूपाद्यः स धाता नेत्रयोः स्ततः । तारयेद्भवाम्भोधेः स्वजपासक्तमानसम् । ततस्तार इति ख्यातोयस्तं ब्रह्मा व्यलोकयत् । प्रणूयते यतः सर्व्वैः सुरनिर्व्वाणकाङ्क्षिभिः । सर्व्वेभ्योऽभ्यधिकस्तस्मात् प्रणवोयः प्रकीर्त्तितः । सर्व्वं विस्तारं पुरुषं प्रणमेद्यः परम्पदम् । अतस्तं प्रणवं प्राज्ञं प्रत्यक्षीकृतवान् विधिः । त्रयीमयस्तुरीयोऽयस्तुर्य्यातीतोऽखिलात्मकः । नादबिन्दुस्वरूपो यः स प्रैक्षि द्विजगामिना । प्रावर्त्तन्त यतोवेदाः साङ्गाः सर्व्वस्य योनयः । स वेदादिः पद्मभुवा पुरस्तादवलोकितः । इत्थमोयस्त्रिधामात्रोऽरवीति महोदयः । स नेत्रविषयीचक्रे परमः परमेष्ठिना । षट्काशत्वादि ब्रह्मासनकृत्त्वानुषप्त एव च । द्वे शीर्षे च त्रयः पादाः स देवोऽधिनिवेशितः । यदन्तर्वीजमखिलं भूतं भावि भवत् पुनः । तद्वीजं वीजरहितं द्रुहिणेन विलोकितम् । लीनं यस्मिन्नतं यत्सदानन्दस्य भाजनम् । अतः सभाव्यते वह्निर्यल्लिङ्गं तद्विलोकितम् । पञ्चार्थायतनभासन्ते पञ्चब्रह्ममयं हि यत् । आदिपञ्चस्वरूपं यद्विरिञ्चि ब्रह्मणा हि तत् । तमालोक्य ततो वेधा लिङ्गरूपिणमीश्वरम्" । ओङ्कारेश्वरोऽप्यत्र । ५अनुमतिभेदे स्त्री त्रिका० । अवर्णोऽस्त्यादेः परत्वे पररूपम् ।

**ओज** वले अद० चुरा० उभ० अक० सेट् । ओजय-ति-ते औजिजत्-त ओजयाम् बभूव आस चकार चक्रे । ओजितः

**ओज** पु० ओज-अच् । "ओजोऽथ युग्मं विषमः समश्च" ज्यो० त० उक्ते मेषादीनां द्वादशानां मध्ये १अयुग्मे विषमे राशौ यथा १,३,५,७,९,११, अङ्कबोधिता मेषमिथुनसिंहतुलाधनुःकुम्भाः ओजराशयः "ओजे रवीन्दोः समहन्द्रयो" नील० ता० । ओजस् शब्दोऽप्यत्र न० । "कुजार्किगुरुसौम्यानां भागाः शुक्रस्य च क्रमात् । पञ्च पञ्चाष्टसप्तेषु च वसोजस्व राशिषु" ज्यो० त० अत्र ओजेषु राशिषु इत्येव क्वचित्पाठः । २अयुग्ममात्रे (विजोड) च "मल्लकमोजगतं गुरुणा चेत्" "ओजे तपरौ जरौ गुरुश्चेत्" इत्यादौ अयुग्मपादे प्रयोगात्

**ओजस्** न० उब्ज-असुन् बलोपे गुणः । १दीप्तौ २अवष्टम्भे, ३प्राणनके, ४प्रकाशे, ५सामर्थ्ये ६ज्योतिषोक्ते प्रथमहतीयादौ विषमराशौ, ७अङ्गादिकौशले, ८धातुतेजसि, ज्ञानेन्द्रियाणां ९पाटवे, १०काव्यगुणभेदे, ११मेदि० रौप्याम्,

वैद्यकोक्ते, "भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु। तद्वदोजः शरीरेभ्यो धातुभिर्भ्रियते नृणाम्" इति। २बलकारणे धातुरसपोषके वस्तुभेदे च। अच्। ओजशब्दोऽप्यत्र। ओजःस्वरूपं भिषक्°शास्त्रान्तरे दर्शितं यथा। "हृदि तिष्ठति यत् शुद्धमीषदुष्णं सपीतकम्। ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति"। "पुनर्द्रौतो पुनर्गर्भमोजस्तस्य प्रधावति। अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते" वा०स्मृतिः। सुश्रुते तु बलपर्य्यायत्वमस्योक्त्वा तत्फलान्युक्तानि यथा "बलवत्त्वं बलनयलक्षणमत ऊर्द्ध्वं वक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत्खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात्। तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति। भवन्ति चात्र। "ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्। विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्। देहस्यावयवस्तेन व्याप्तो भवति देहिनाम्। तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्। अभिघातात् क्षयात् कोपाच्छोकाद्ध्यानात् श्रमात् क्षुधः। ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्। तेजः समीरितं तस्माद्विस्रंसयति देहिनः। तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति। सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे। स्तब्धगुरुगात्रता वातशोथो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने। मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति क्षये। भवन्ति चात्र। "एते दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः। विश्लेषसादौ गात्राणां दोषविस्रंसनश्रमाः। अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम्। गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्वर्णस्य भेदनम्। तन्द्रा निद्रा वातशोथो बलव्यापदि लक्षणम्। मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च। पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये। तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत्। नष्टसंज्ञमितरन्तु वर्ज्जयेत्"।

"ओजः समासभूयस्त्वं मांसलं पदबन्धनम्" इत्युक्तलक्षणः काव्यगुणभेदः। का०द०तु "रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा। एवं माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा" इति गुणान् विभज्य तल्लक्षणमुक्तम् "ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते। वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु" इति। तदाद्यवर्णादयश्च तत्रोक्ताः। "वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्य्यधो द्वयोर्वा सरेफौ टठडढैः सह। शकारश्च षकारश्च तस्य व्यञ्जकतां गताः। तथा समासबहुला घटनौद्धत्यशालिनी" "वृद्धौजसा तु मधुरं मयाऽऽस्याम्" रघुः। "महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः" "पुरुषाणां महौजसाम्" "महात्मानो महौजसः" इति मनुः। अतस्तृतीयायाः कृतादौ अलुक्। ओजसाकृतम् तस्यापत्यम् इञ्। औजसाकृतिः तदपत्ये। ५तद्विशिष्टे त्रि० ततः भवा० अभूततद्भावे क्यङ् सलोपश्च। "ओजायते ओजायमाना तस्थावेव मनीष जनकात्मजा।" भट्टिः। "ओजायमानं यस्य शुष्मते" ऋ० १,१३०,६।

**ओजसीन** न० "ओजसोऽहनि यत्खौ" पा० ओजोऽस्त्यस्मिन् अहनि इत्यर्थे ख। ओजोयुक्तेऽहनि। "शुचिः शुक्रे अह-न्योजसीना" तैत्ति० "पक्षे यत् ओजस्यमहः" सि०कौ०। "मत्वर्थे मासतन्वोः" पा० मत्वर्थे यत्। ओजस्या तनुः।

**ओजस्वत्** त्रि० ओजोऽस्त्यस्य मतुप् मस्य वः। बलवति तेजस्विनि "सद्वन्तमूजोषिणमोजस्वन्तम्" ऋ०८,७६,५। विनि। तत्रार्थे त्रि० "रूपं तदोजस्वि तदेव वीर्य्यम्" रघुः। "ओजस्विवर्णोज्ज्वलवृत्तशालिनम्" माघः "शतक्रतुरिवौजस्वी धर्म्मात्मा संशितव्रतः" भा० आश्व० ५अ०। स्त्रियं मतुपि ङीप्। "ओजस्वतीस्थ राष्ट्रदा राष्ट्रम्मह्यं दत्त" यजु०१०,२१। ताभ्याम् अतिशायने तरप् तमप् वा। ओजस्वितर ओजस्वितम अत्यन्तौजोयुक्ते। तत्रार्थे ईयसुन् इष्ठन् वा। मतोर्लुक्। ओजिष्ठ ओजीयस् तदर्थे त्रि० ईयसुनन्तात् स्त्रियां ङीप् इति भेदः ओजीयसी।

**ओज्मन्** त्रि० आ+उज—मनिप् वा० सम्प्र०। १प्रेरके २वेगे पु० "अपामोज्मानं परि गोभिः" ऋ०३,४७,२७। "ओज्मानं प्रेरकं वेगं वा" भा०।

**ओडव** पु० सङ्गीतदामोदरोक्तेषु पञ्चस्वरयुक्तरागभेदेषु तत्र पञ्चस्वराश्च ऋषभपञ्चमवर्ज्जिताः निषादगान्धारषड्ज-मध्यमधैवताख्याः।

**ओडिका** स्त्री उ-ड तस्य नेत्वम् गौरा० ङीप् स्वार्थे क ह्रस्वः। (उड़िधान) नीवारे स च "नीवारः शीतलो-ग्राही पित्तघ्नः कफवातकृत्" भावप्र० उक्तगुणकः।

**ओडी** स्त्री उ-ड तस्य नेत्वम् गौरा० ङीप्।(उड़िधान)नीवारे

**ओड्र** न० आ+ईषत् उनत्ति उन्द रक् नि० दस्य डः। १जवापुष्पे २उत्कलदेशे पु० (उड़िषा) तद्देशस्य राजा तद्भवो वा

ऊरारोहा तपसा दग्धकिल्बिषम्। विश्वामित्रं तथाभूतं मेनका भीरुराश्रमे। अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ। अपोवाह च वासोऽस्या मारुतः शशिसन्निभम्। साऽगच्छत्त्वरिता भूमिं वासस्तदभिलिङ्गती। उत्स्मयन्तीव सव्रीडं मरुता वरवर्णिनी। सक्ततश्च तस्यर्षेरग्निसमतेजसः। विश्वामित्रस्ततस्तान्तु विषमस्थामनिन्दिताम्। गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः। अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा। तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा। चकार भावसंसर्गे तया कामवशङ्गतः। न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता। तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा। रममाणौ यथाकामं यथैकदिवसं तथा। जनयामास स मुनिर्मेनकायां शकुन्तलाम्। प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम्। जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु। कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम्। तं वने विजने गर्भं सिंहव्याघ्रसमाकुले। दृष्ट्वा शयानं शकुनाः समन्तात् पर्यवारयन्। नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः। पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम्। उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम्। निर्जने विपिने रम्ये शकुन्तैः परिवारिताम्। आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम्। शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते। क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने। निर्जने तु वने यस्मात् शकुन्तैः परिवारिता। शकुन्तलेति नामास्याः कृतञ्चापि ततो मया। एवं दुहितरं विद्धि मम विप्र! शकुन्तलाम्। शकुन्तला च पितरं मन्यते मामनिन्दिता"। तस्याश्च दुष्मन्तेन गान्धर्वविधिना परिणयकथा तत्रैवोक्ता।

कण्डूय नामधातुः कण्डू+तत्करणे क्यङ् आत्म०अक०सेट्। कण्डुं करोति कण्डूयते अकण्डूयिष्ट कण्डूयाम्बभूव आस चक्रे। कण्डूयितः कण्डूया।

कत पु०कं जलं शुद्धं तनोति तन–ड। १कतकवृक्षे २ऋषिभेदे च। कतस्य गोत्रापत्यम् गर्गा०यञ्। कात्य तद्गोत्रापत्ये बहुत्वे तु तस्य लुक् कताः कतगोत्रापत्येषु ब०व०। यञन्तत्वात् यूनिफक्। कात्यायनः तद्गोत्रयुवापत्ये। तस्य कात्याः ष्फ फकोलुक्। कातीयाः तदीयच्छात्रेषु बहु०व०। कतश्च विश्वामित्रादुत्पत्तिः विश्वामित्रपुत्रकथने हरि-वं०२७अ०। "देवश्रवाः कतश्चैव यस्मात् कात्यायनाः स्मृताः। शालावत्यां हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुमान्। सांकृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः। मधुच्छन्दोऽजयश्चैव देवलश्च तथाऽष्टकः। कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः। तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम्"

कतक पु०कक–हासे बा०ष कस्य जलस्य तको हासः प्रकाशो यस्मात् ५ब०। (निर्म्मली) वृक्षभेदे राजनि०। तस्य हि फलसम्पर्कात् जलप्रसादः "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्। न नामग्रहणादेव तस्य वारि प्रसीदति" मनुः। "कतकस्य फलं नेत्रं जलनिर्म्मलताकरम्। वातघ्नं मधुरं शीतं मधुरं तुवरं गुरु" भावप्र० तद्गुणाद्युक्तम्। तस्य फलम् अण् तस्य लुक् तत्फले न०। "जलप्रसादि कतकं तत्फलं कतकं स्मृतम्" भावप्र० उक्तेः उभयरत्वेऽपि न० अयञ्च छत्ते काकोल्यादिरित्युपक्रम्य कतकनिर्वापि वादिना मधुरवर्गे उक्तः। [कतकवृक्षे राजनि०

कतफल पु० कं तनोति प्रसन्नम् तन–ड तादृशं फलमस्य।

कतम त्रि० किम्+डतम्। बहूनां मध्ये जात्यादिभिर्निर्द्धारणार्थप्रश्नविषये एकस्मिन् पदार्थे "कतमा कतमक् कतमत् कतमत् साम कतमः कतम उद्गीथः" छा०उ०। कतरा कतर द्वयोर्मध्ये जात्यादिभिर्निर्द्धारणार्थप्रश्नविषये त्रि० "यद्येन-मुत्कमसि तदा कतरोऽवरस्ते" नैष० "अनयोः यथा कतरेण चलितानामपि कुहायसदावर्तीनि भूतानि" छा०उ०। डतरडतमान्तत्वादनयोः सर्वनामकार्यं कतमस्मै कतरस्मै क्लीवे स्वमोरद्दड् कतमत् कतरत् "कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" गीता। "कतमदुदरं च मुखं यत्राजैषीर्धनञ्जयम्" "तथैव कतमद्युद्धं यस्मिन् लक्ष्याजिता पुरा" भा०वि०५०अ०। "कतरकतमौ कर्मधारये" पा० उक्तेः कर्म० प्रकृतिस्वरः धारये।

कतमाल पु० तम षञ् तुमः कस्य जलस्य तमाय शोषणाय अलति पर्याप्नोति अल–अच्। वह्नौ गन्धमाला तस्य जलशोषणहेतुत्वात्तथात्वम् कचमालः खचमालः इत्यपि पाठान्तरे तदर्थे पु०।

कति त्रि०ब० व०किं परिमाणमेषां किम्+डति। संख्यापरिमाणविशेषविषयप्रश्नविषये पदार्थे। "कति देवाःत्रयो च दश च" छा०उ०। अस्य संख्यावत्कार्यभागित्वात् स्त्रियां न ङीप्। पूरणे डट् थुक् च। कतिथ कियत्संख्यापूरणे त्रि०स्त्रियां ङीप्। धाच्। कतिधा कियत्प्रकारे अव्य० "कतस्य विदः कत्यक्षराणि कति होमाश्च कतिधा समिद्धः" यजु० २३,५७। वीप्सार्थे कारकार्थे शस् शस्। कतिशस् कियद्वारादौ अव्य० कतिशो ददाति

कतिपय त्रि० त्रि०कति+अयच् डुक् च । कतिसङ्ख्यार्थे २प-रिमिते च । "बर्हैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघः "कतिपयैः परिमितैः" मल्लि०। "संपत्स्यन्ते कतिपयदि-नस्थायिहंसा दशार्णाः" मेघ० "पोटायुवतिस्तोककतिपये-त्यादि०पा०सूत्रस्य प्रायिकत्वात् न परनिपातः" मल्लि०। अन्यत्र तु नास्त्येव कतिपय इत्यादि । अस्य जसि वा भी कतिपये कतिपया वा "परिक्लृप्तैर्न्ययवान् वहुदय धुरीणाः कतिपये" दशकुमा० । "एवं सम्प्रदाः स्युः कतिपये वासराः" शत०ब्रा०५,१,२,१०। अद्रव्यवाचित्वे कृच्छ्रात् वा करणे पञ्चमी। कतिपयेन मुक्तः कतिपयान्मुक्तो वा समासे तत्र पञ्चम्या अलुक् । द्रव्यपरत्वे तु कतिपयेन विषेण मुक्त इत्येव "षट्कतिकतिपयचतुरां थुक्" पा० निर्देशात् तस्यासंख्यावाचकत्वेऽपि पूरणे डट् थुक् च । कति-पयथ कतिपयपूरणार्थे त्रि० स्त्रियां ङीप् ।

कत्तृण कुत्सितं तृणं प्रा०स०कोः कदादेशः । १रूषौ (खा कु-खिया) मेदिनिः । २कुम्भिकायां(पाना)रत्नमाला ३सुग-न्धितृणे अमरः । अस्य गुणादि भावप्र० उक्तम् "कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा । भूतिकं ध्या-मपौरञ्च श्यामकं धूमगन्धिकम् । रौहिषं तुवरं तिक्तं कटुपाकं व्यपोहति । कण्ठव्याधिपित्तास्रशूलकासकफ-ज्वरान्" (सौगन्धिया हिन्दिभाषा) ।

कत्तोय न०कुत्सितं तोयम् देयद्वा तोयं यत्र । मद्ये त्रिका०

कत्त्रि त्रि०ब०व०कुत्सितास्त्रयः प्रा०स०कोः कद् । कुत्सितेषु त्रिषु । ततो जातादौ ढकञ् कात्त्रेयक तज्जातादौ त्रि०।

कत्त्र्यादि पु० पाणिन्युक्ते जातादर्थे ढकञ्प्रत्ययनिमित्ते शब्दसमूहे स च गणः कत्त्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम । (कुड्याया यलोपश्च) गणसूत्रम् ।

कत्थ श्लाघायाम् (आत्मगुणाविष्करणे) स्वहीतकर्मकत्वात् अक० भ्वा० आ० सेट् । कत्थते अकत्थिष्ट चकत्थे । कत्थमानः कत्थनम् कत्था कत्थितम् । "गर्जितेन वृथा किं ते कत्थितेन च मानुष ! । कृत्वैतत् कर्म्मणा सर्वं क-त्थेथा मा चिरं वृथाः" भा०आ०१,१५२ अ० । "परो-क्षमिव मे राजन् ! कत्थसे यत्र कर्थ !" भा०व०७२अ० "कत्था कत्थिष्यते न कः" भट्टिः "जनस्य गोप्तास्मि विकत्थ-मानः" भाग० ५,१२,७ । आर्षप्रयोगे पदव्यत्ययात् पर० । "तथाऽभिगम्य चित्तानि को विकत्थेद्विचक्षणः" भा० वि० ५० अ० । प्रयाप्तेऽपि अक० । कत्थन । उपयच्छेर्मं निरतं प्रमत्ता" भाग० ८,७,२७ । "कत्थन्ते प्रलपन्ति" श्रीधरः । विवेकेन कथने । "कोऽन्यः कत्थितु-मर्हति" भा०प० २५,२३ । कर्त्तरि युच् कत्थनः ।

कत्पय न० कं सुखमिवाचरति क+क्विप् शत कत् सुखकरं पयोऽस्य वेदे नि०ड समा० । सुखकरजले । "त्वं चिदित्था कत्पयं शयानम्" ऋ० ५,३२,६ । "कत्पयं सुखकरं पयो यस्य तम्" भा० । निरुक्ते ६,३ दमान्तमधि-कृत्योक्तम् "सुखपयसं सुखमस्य पयः" इति लोके तु कत्-पयस इत्येव ।

कत्र शैथिल्ये अद० चुरा० उभ० अक० सेट् । कत्रयति ते अचकत्रत् त । "तत्त्वादन्त्यदीर्घस्य पुक् चेत्यवापयत्यपि" इत्युक्तेः वा दीर्घः पुक् च । कत्रापयति ते इत्यपि । कत्राम् बभूव आस चकार चक्रे । एवं कत्रापयाम् बभूवेत्यादि ।

कत्सवर न० कत्सु—ईषत् स्वः स कत्सः विद्यते उ—अप् । स्कन्धे शब्दच० ।

कथ वाक्यरचनायां अद० चुरा० उभ० सक० सेट् । कथ-यति ते अचीकथत् त अचकथत् त । कथयाम् बभूव आस चकार चक्रे । कथितः कथयित्वा कथयितुम्—कथनम् । कथा "तं जनाः कथयन्तीह यावत् भवति गौरियम्" भा०अनु०२१६८ "हन्त ते कथयिष्येऽहमितिहासं पुरा-तनम्" भा०४,४५,८ । "कथाच्छलेन बालानां नीतिस्तदिह कथ्यते" हितो० "यो मनुः कथितोऽष्टमः" देवी० "प्रत्येकं कथिता ह्येताः संक्षेपेण द्विजर्षभाः" मनुः ।

अनु+अनुवादे कथितस्य कथने अन्वादेशे अनुकथयति अनुवदति उपसर्गं प्रकर्षादिना कथने अस्य ब्रुवर्थतया द्विकर्म-कत्वम् तत्र गौणे कर्मणि लकारः ।

कथक त्रि० कथ-ण्वुल् । १वाचके २तत्त्वनिर्णयार्थं वाद-रूपकथाकर्त्तरि च कथकस्य कथायां नियमविशेषः ख-ण्डने दर्शितः यथा ।

"अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते प्रमाणा-दयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथ-काभ्यामभ्युपेयम् इति । तदपरे न क्षमन्ते । तथाहि प्रमा-णादीनां सत्त्वं यदभ्युपेयं कथकेन, तत् कस्य हेतोः,? किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमकार्यस्य-नियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात् १, उत कथकाभ्यां प्रव-र्त्तनीयवाग्व्यवहारं प्रति हेतुभावात् २, उत लोकसिद्ध-त्वात् ३ अथ वा तदनभ्युपगमस्य तत्त्वनिर्णयविजयान्यतरफल-त्वात् ४ । न तावदाद्यः तदनभ्युपगच्छतोऽपि वाक्यकथा-

मस्ति अस्ति च विधानम् तस्माद्विगुणादपि फलं भवतीति। येषां मते नित्येषु फलाभावेनापूर्वाभावात् तदर्थेतिकर्त्तव्यता नास्ति तेषां प्रायश्चित्तविधानमनन्यानुपपन्नम्। सेतिकर्त्तव्यताके तु निमित्ते भेदने जाते वैगुण्यात्तत्परिहारायापरं होमात्मकं भिन्ने जुहोतीत्यादिकमुत्पन्नं सत् क्रियत एव पक्षान्तरे त्वसत्त्वामिति कर्त्तव्यतायां भेदने जातेऽपि नास्ति वैगुण्यम् गुणहानिर्हि वैगुण्यम् असति गुणे कस्य हानिः स्यात् ततश्चानुत्पन्न एव प्रायश्चित्तविधानमुपपन्नमिति। "तथा च दृष्टम्" सू०। नित्यं कर्म यथा कथञ्चित् श्रुताङ्गपरित्यागेनापि यथाशक्त्यङ्गोपेतमनुष्ठातव्यंत्वेन श्रुतो दृष्टम्। तथा हि "यत् पयो न स्यात् केन जुहुयात्" इति व्रीहियवाभ्यामित्यादि "न वा इह तर्हि किञ्चनासीदथैतदहूयत सत्यं श्रद्धा" इत्यन्तेन ग्रन्थेन तथा "तदैव यावज्जीवक् च होतव्यमिति" शाखान्तराच्च। तस्माद्विगुणेऽपि नित्ये प्रत्यवायपरिहाररूपं फलं भवति अत एवोक्तं कर्काचार्यैः "उपात्तदुरितक्षयो वा उत्पत्स्यमानदुरितप्रतिबन्धो वा भवत्येवेति"। अथ काम्ये कर्मणि चिन्त्यते। काम्येऽपि विगुणे फलाभिनिर्वृत्तिर्भवत्येव। यतस्तत्राप्यङ्गानि प्रधानानि च भिन्नानि। अश्वमेधे च काम्ये प्रायश्चित्तविधानमप्यस्ति अश्वं प्रकृत्य "अथातः प्रायश्चित्तीनां यद्यश्वो वडवां स्कन्देद्वायव्यं पयोऽत्तु निर्वपेद्यदि स्रामो विन्देदित्यादि तथा पञ्चशारदीयेऽपि "उत्सृष्टान् पशून् प्रकृत्य ताण्ड्ये प्रायश्चित्तविधानं दृश्यते "अग्नीषोमीयोऽसु म्रते" इत्यादिकं यदि च विगुणादपि काम्यात् फलं न स्यात् प्रायश्चित्तविधानं व्यर्थमेव स्यात् तथा च दृष्टं विगुणमपि काम्यं फलोत्पादकं वेदे दृष्टम्। कारीरीमिष्टिं प्रकृत्य श्रूयते "यदि वर्षेत्तावत्येव जुहुयादिति" अवासमाप्तायाम् एव कारीर्यां तत्फलं दृष्टिरूपं वेदे दृष्टम् अतो विगुणेऽपि काम्ये फलं सिध्यतीति पूर्वपक्षिते सिद्धान्तमाह "न श्रुतिलक्षणत्वात्" सू०। यदुक्तम् विगुणेऽपि काम्ये फलं सिध्यतीति तन्न कुतः श्रुतिलक्षणत्वात् काम्यस्य, यतः काम्यं सगुणमेव सर्वाङ्गोपेतमेव श्रुत्यावचितम् फलसाधनत्वेन विहितम् तस्मादङ्गलोपे काम्यमानफलस्यानुत्पत्तेः तत्र प्रधानस्य त्यागे यथा फलं नास्ति एवमङ्गत्यागेऽपि, फलसाधनत्वं हि साङ्गैकसमधिगम्यं ततो यदङ्गं प्रधानं वा यावच्छ्रुत्योपात्तम् तस्य लोपे साधनत्वं नास्ति अतो यदा सर्वाङ्गोपेतं कर्तुं शक्नोति तदैव तत्र प्रवर्त्तेत न तु यथाशक्ति। न हि तत्राङ्गत्यागे प्रमाणमस्ति प्रधानवाक्यम्, अङ्गत्यागेऽप्यविरोधात् न हि तस्यावश्यकत्वं केनचिदुक्तं यतः औदासीन्यं न लभ्येत। कामश्रुतिस्तु समर्थेऽपि वर्त्तमाना स्वार्थतां न जहातीति नाङ्गत्यागे प्रभवति। निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणे नैमित्तिके प्रोच्यतेति वैषम्यम्। अतो निमित्ते सति नित्यस्यावश्यकर्त्तव्यत्वात् सर्वदा सर्वाङ्गोपेतस्य केनापि कर्तुमशक्यत्वाद्यथा शक्नुयात्तथा कुर्यादित्येवं कल्प्यते काम्ये त्ववश्यकर्त्तव्यताभावादेवं कल्पयितुं न शक्यते अतः काम्यं विगुणं फलं न साधयत्येवेति सिद्धम्" कथमा योगे गर्हायां "विभाषा कथमि लिङ् च" पा०। लिङ् चात् लट्। "त्वं धर्मं त्यजेस्त्यजसि वा पश्य कातन्त्रकाराः। तत्र भविष्यति नित्यं लृङ् भूते वेति भेदः। कथं नाम तत्र भवान् धर्ममत्यक्ष्यत्" सि०कौ०। गर्हायामित्यनुवर्त्तनाभावे अगर्हायामपीति प्राञ्चः। तेन "मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः" इत्यादौ अगर्हायामपि लिङ्।

**कथमपि** अव्य० कथम् च अपि च द्व०। १अतिकष्टेनेत्यर्थे २अतिगौरवेणेत्यर्थे च। "विसृज्य कथमप्युमाम्" कुमा० "कथमपि वरयोपलैवलद्भिः" माघः "तितद्भिः कथमपि" किरा०। "कथमपि गुरुशोका मा रुदन् माङ्गलिक्यः" भट्टिः। पदद्वयमित्येके।

**कथम्भाव** पु० कथमित्यस्य भावः। १किं प्रकारतायाम् भू-प्राप्तौ घञ् द्वैत०।२कस्यचित् प्रकारस्य प्राप्तौ ३कथमित्यपेक्षायाञ्च। कथमित्याकाङ्क्षया प्राप्तिर्यस्य। इतिकर्त्तव्यारूपे अङ्गे त्रि० कथंभावे कर्त्तव्याकाङ्क्षायाम् उदा०।

**कथम्भूत** त्रि० कथं किंप्रकारं भूतःप्राप्तः भू—प्राप्तौ क्त २त०। १किंप्रकारप्राप्ते २कीदृशे च।

**कथा** स्त्री कथ–नि०अ। १कथने, "अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्" "आप्तागमानुमानाभ्यां साध्यं त्वां प्रति का कथा" रघुः। "का कथा बाणसंधाने ज्याशब्देनैव दूरतः" शकु०। "सत्यासत्यकथा वृथा" उद्भटः। "कथाप्रसङ्गेन मिथः सखीमुखात्" नैष०। "कथाप्रसङ्गेन जनैरुदाहृतात्" किरा०। "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः। परम्पराश्रया या स्यात् सा मताख्यायिका बुधैः" इत्युक्तलक्षणे २स्तोकसत्यप्रबन्धरूपे वाक्ये। प्रबन्धरूपवाक्यसमुदायत्मकत्वाच्च कादम्बर्यादीनां कथात्वं तत्र

ल्युट्। २मर्द्दने, ३मारणे च। आधारे ल्युट्। ४युद्धे। "तथा प्रजानां कदनं विदधुः कदनप्रियाः" भाग० ७,२,११। "संसारचक्रकदनात् प्रसभं प्रणीतः" भाग० ७,८,१६। कद–भावे ल्युट्। ५विक्लवतायाम्।

**कदन्न** न० कुत्सितमन्नं कोः कद्। कुत्सितान्ने। कस्तोऽ-भक्षत्वेन वेदाकेऽपथ्यत्वेन च कीर्त्तितमन्नञ्च कदन्नम्।

**कदपत्य** न० कुत्सितमपत्यं कोः कद्। कुर्स्वादि-रूपे कदाचारयुते चापत्ये। "कदपत्यभृतं दुःखं येन विन्दन्ति दुर्भरम्" भाग० ४,१३,२७। "कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात्" भा० ४, १३,४२।

**कदम्ब** पु० कद–करणे अम्बच्। दर्शनेन विरहिवैक्लव्यसा-धने (कदम) वृक्षे अमरः। "एकहारे चतुष्कं वनमा-लाविभूषितम्। कदम्बकुसुमाकारं तच्छोभारायणं विदुः" शालग्रामलक्षणे पुरा०। "कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः" रघुः "कदम्बमुकुले दृष्टिः समारोपिता" उद्भटः। "कदम्बो मधुरः शीतः कषायो लवणो गुरुः। सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः" भावप्र० तद्गुणा उक्ताः। तस्य भेदास्तत्रैव। "नीपो महाकदम्बः स्यात् धारा कदम्ब इत्यपि। द्वितीयोऽल्पप्रमाणश्च हलिप्रियः कदम्बकः"। हा-रिद्रस्तु रक्तपीतः। धूलीकदम्बको धाराकदम्बः षट्पदप्रियः। हलिप्रियः केशराढ्यः प्रावृषेण्यः कदम्बकः। नीपो महाक-दम्बोऽपि तथा वृत्तफलोभवः" इति भरतः। अत्र प्रावृषेण्य इत्युक्तिर्गौडादिदेशाभिप्रायेण मथुरादौ वसन्तेऽपि तत्पुष्पप्रा-दुर्भावदर्शनात्। अत एव "यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मी-लितमालतीसुरभयः प्रौढाः कदम्बानिलाः" काव्य-प्र० चैत्रमासे तत्पुष्पवर्णनमुपपद्यते। एतेन कदम्बपदं केतकीकदम्बपरमिति" सा० द० रामचरणव्याख्यानं मथु-रादिदेशानभिगमनसूचकम्। तेन देशभेदात्तस्य वसन्त-प्रावृड्द्वयभवत्वमिति ज्ञायः। कविभिस्तु वर्षाकाले एव तद्वर्णनं क्रियते यथा माघे रैवतकपर्वतवर्णने। वर्षर्त्तु-वर्णनमधिकृत्य "विहगाः कदम्बसुरभाविह गाः कल-यन्त्यनुक्षणमनेकलयम्"। "भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः"। वर्षावर्णने च तत्रैव "स्तनवनी नवनीपवनीरमि" तस्य च प्राशस्त्यादेव "कदम्बं न्यूरणं तथैत्यादिना हरिशयने भोजननिषेधः। इति "प्रत्युद्यन्कर्तात् पुलकितमिव प्रौढपुष्पैः कदम्बैः" मेघदू० आषाढ मधिकृत्यैव तद्वर्णनमपयनात्। इति तस्य प्रावेण्यमपि।

कदम्बश्च मेरुविष्कम्भपर्वतरूपमन्दरस्य विशेषचिह्नतरुः "विष्कम्भशैलाः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सु-पार्श्वः। तेषु क्रमात् सन्ति च केतवस्ताः कदम्बजम्ब्वट-पिप्पलकाख्याः। सि० शि०। अस्य सुमेरोः।

**कदम्बक** पु० स्वार्थे कन्। १कदम्बवृक्षे। संज्ञायां कन् सर्षपेण विह्नलीकरणसाधने २समूहे न० अमरः। "गजकद-म्बकमेचकमुच्चकैः" माघः। "पृथुकदम्बकदम्बकराजितम्" किरा०। "कदम्बकं वातमजं मृगाणाम्" भट्टिः कदम्ब इव कायति कै–क। ३हरिद्रौ ४सर्षपे च राजनि० कदम्बकोरकोपरिस्थसूक्ष्मांशतुल्यफलत्वात्तस्य तथात्वम्। ५देवताड़वृक्षे न० रत्नमा०।

**कदम्बकोरकन्याय** पु० कदम्बपुष्पस्य यथा सर्व्वावय-वेषु युगपत्कोरकाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्त-भेदे शब्दानामुत्पत्तिर्हि द्विविधा। "वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता। कदम्बकोरकन्यायादुत्पत्तिः कस्य-चिन्मते" भाषा०उक्ता। दशदिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा इत्येवं कदम्बकोरकोत्पत्तिवत् स-र्वासु दिक्षूपर्युपरि शब्दानामुत्पत्तिरिति कस्य चिन्मतम् न्यायमते तु वीचितरङ्गन्यायेनैव तदुत्पत्तिरिति भेदः।

**कदम्बद** पु० कदम्बः तदुपरिस्थः सूक्ष्मांश इव दीयते खण्ड्यते दो–खण्डने कर्मणि घञर्थे क। सर्षपे शब्दचन्द्रिका तस्य कदम्बकोरकोपरिस्थितसूक्ष्मांशतुल्यफलत्वात्तथात्वम्।

**कदम्बपुष्पा** स्त्री कदम्बस्येव पुष्पमस्याः अच्। अर्श० अच्। मु-ण्डितिका वृक्षे (मुण्डेरी) रत्नमाला तस्य पुष्पमिव पुष्प-मस्याः विपदे तु ङीप्। कदम्बपुष्पी तत्रार्थे राजनि०।

**कदम्बभ्रमवृत्त** न० कदम्बवत् भ्रमस्य वृत्तं गोलक्षेत्रम्। सि० शि० उक्ते गोलक्षेत्रभेदे। तल्लक्षणप्रकारस्तत्रैव "तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा। क-दम्बभ्रमवृत्तं च बध्नीयात् परितो ध्रुवात्। कोणे तु जिनतुल्यां शलाकां कार्त्स्न्यशिञ्जिनी। क्रान्तिः कमर्द्धनाच्च याम्यो-दक् कुजसंगमे। तत्तिर्य्यग्गतसूत्राणां योगः स कदम्-बकः। कदम्बध्रुवः कदम्बानासुपरि ध्रुवराश्रयेत्। खलाच्च वृत्तरूपाणि वलनानि तदन्तरे। चापजं वलनं मध्ये स्यात् समभुवस्थयोः। कदम्बध्रुवसूत्रान्तरायनं च विमेप-पात्। कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत्"।

**कदम्बवादिन्** पु० कदम्ब इति वादः संज्ञा यस्य सः णिनि। कदम्बसंज्ञायुक्ते नीपे। "कदम्बवादिनो नीपान् दृष्टा कण्टकितैरिव। वमन्ती भ्राजमानं कदम्बककदम्बकैः"

कार्यो० । कदम्बककदम्बकैः कदम्बसमुदायैः अतुच्छक-दम्बशब्दवाच्यात् नीपात् महाकदम्बात् तथा करह-किलमीतपुलकैरिवेत्युत्प्रेक्षा । [लतायाम् राजनि० ।

कदम्बी स्त्री कद–करणे अम्बच् गौरा० ङीष् । देवदाली-

कदर पु० कं जलं दृणाति दृ–अच् । १श्वेतखदिरे तस्य सेवनात् कुष्ठस्थितक्लेदरूपस्य कंरूपजलस्य दारणात् “कदरो विशदोवर्ण्यो मुखरोगकफास्रजित्” इति भावप्र० तद्गुणमध्ये मुखकफनाशित्वोक्तेस्तथात्वम् । २पायसभेदे (क्षेड़ापायस) न० शब्दमाला । तस्य अम्लादियोगात् दुग्धान्तर्गतजलदारणात् तथात्वम् । कदः विकृतकारिका दरा अस्य । ३क्रकचे(करात)मेदि०सुश्रुतोक्ते ४क्षुद्ररोगभेदे स च रोगः “समासेन चत्वारिंशत् क्षुद्ररोगा भवन्तीह द्विज” “कदरम् अजगल्लिका इत्यादिना विभज्य “शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः। मेदोरक्तानुगैश्चैव दोषैर्बाधद्यापि वा । कोलमात्रः सरुक्स्रावो जायते कदरस्तु सः” लक्षितः (पायरजाड़ा) तत्र विभागे कदरमित्यत्र नपुंसकतास्य ।

कदर्थ पु० कुत्सितोऽर्थः कोः कद् । कुत्सितपदार्थे । ततः तत्करोतीति” णिच् । कदर्थयति कुत्सितमर्थं करोतीत्यर्थः । ततः क्त कदर्थितः । कुत्सितार्थीकृते । “अङ्गभूषणकदर्थितमाल्यैः” माघः। ल्युट् । कदर्थनम् कुत्सितार्थकरणे । युच् । कदर्थना तत्रैव स्त्री । अकदर्थं कदर्थं करोति च्वि कदर्थीकृ–क्त । कदर्थीकृत अभूतकदर्थे कदर्थतया कृते त्रि० । “कैशैः कदर्थीकृतवीर्यसारः” किरा० ।

कदर्य्य त्रि० कुत्सितोऽर्य्यः स्वामी कुगतिस०कोः कद् । इति विश्वे १अदातरि,लुब्धे । “आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पातयन् । यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृतः” इत्युक्तलक्षणे २अधमसद्व्यवहारके च । “दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च” “आर्त्तस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः” मनुः “उवाच न मे जनपदे कदर्य्यो न मद्यपोनानाहिताग्निर्नाविद्वान् न स्वैरी” छा० उ० ।

कदल पु० कद–वृषा०कलच्। १रम्भावृक्षे मेदि० । २पृश्नी (चाकुलिया) ३डिम्बिकायाम् (डिमि) शाल्मलिवृक्षे च स्त्री मेदि० । अजादेराकृतिगणत्वात् टाप् ।

कदली स्त्री काय जलाय दल्यते लगादौ अवबाहुल्यात् गौरा० ङीष् । १रम्भावृक्षे, अमरः । कदली गुणादि भावप्र० उक्ता यथा । “कदली वारणा मोचाम्बुसारांशुमतीफला । मोचाफलं स्वादु शीतं विष्टम्भि कफनुद्गुरु । स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् । पक्वं स्वादु हिमं पाके स्वादु वृष्यञ्च बृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् । माणिक्यमर्त्त्यामृतचम्पकाद्या भेदाः कदल्या बहवोऽपि सन्ति । उक्ता गुणास्तेष्वधिका भवन्ति निर्दोषता स्याल्लघुता च तेषाम्”। रम्भायाञ्च स्तम्भे जलाधिकयुक्तत्वात् शैत्याधिक्ययुक्तपत्रत्वाच्च तथात्वम् “कदली कदली करभः करभः करिराजकरः करिराजकरः” प्रसङ्गरा० । अत्र द्वितीय कदलीपदम् शैत्यादिगुणयोगात् गौणमिति सा० द० समर्थितम् “ऐकान्तशैत्यात्कदलीविशेषाः” कुमा० । २वैजयन्त्याम् कदल्याकारपत्ररूपस्वरूपत्वात् तथात्वम् अतएव माघे कदल्याः कामवैजयन्तीत्वेनोत्प्रेक्षणम् तदीयाकारसाम्यात् यथा । “जगद्वशीकर्त्तुमिमाः स्मरस्य प्रभावनीके तनवैजयन्तीः । इत्यस्य तेने कदलीर्मधुश्रीः प्रवनी केतनवैजयन्ती” माघः । “क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः” “यास्यत्यूरुःसरसकदलीस्तम्भगौरश्चलत्वम्” मेघ०। स्वार्थे कन् रम्भावृक्षादौ । “अम्बु सुरलकदलिकावनराजिरुच्चैः” माघः । ३हस्तिपताकायां हारा० । “कदलिका कामकारिणः” काद० । ४मृगभेदे “कदलीमृगमोकानि कृष्णश्यामारुणानि च । काम्बोजः प्राहिणोत्तस्मै” भा० स० ४७अ० “मोकानि अजिनानि” नीलक० । तेन तस्य काम्बोजदेशस्थत्वं गम्यते तस्य च कदलीस्तम्भवद्भङ्गुरपादकत्वात्तथात्वम् । कदल्याः फलं पुष्पं वा अण् तस्य लुप् लुपि स्त्रीप्रत्ययस्यापि लुक् । कदल तत्फले न० । “पनसे कदलं कदले च घृतं घृते च लवणं लवणे च दधि” वैद्यकम् । “कदली लवणी चाज्यो” इत्यादौ तु उपचारात् तत्फलपरता । संज्ञे कन् ह्रस्व च । कदलीफलतत्सदृशे न० ।

कदलीकन्द पु० ६त० । रम्भामूले तद्गुणाश्च भावप्र०उक्ता यथा “शीतलः कदलीकन्दो बल्यः केश्योऽम्लपित्तजित् । वह्निकृद्दाहहारी च मधुरो रुचिकारकः” । “कन्दः कदल्यादलितोनितान्तं संस्वेदितो हिङ्गुघृतेन राजः। उद्भिन्नः सैन्धवरेणुनाथ मरीचसंस्पर्शित एव रम्यः”

कदलीकुसुम न० ६त० । (मोचा) कदलीपुष्पे । “कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत्” भावप्र०तद्गुणा उक्ताः । कदलीपुष्परम्भापुष्पादयोऽप्यत्र न०

कदलीदण्ड पु० ६त० । (थोड) ख्याते कदलीस्तम्भमध्यस्थे पदार्थे “कचः शिवः सविषविघ्नतः कृततन्तुः प्रभिन्नः

कवोष्णं वा जलशिरहितः चारजलोरपुटः। मध्ये मध्ये तनुवल्कलितैनार्द्रवेणादिपूर्णैः स्वादुलूर्यं भवति सुतरां गर्भदग्धः कदल्याः। योनिदोषहरोदग्ध काद्लोऽल्पकदरं भवेत्। रक्तपित्तहरः शीतः गुरुश्चोऽग्निप्रवर्द्धनः" भावप्र० तद्गुणाद्युक्तम्।

**कदा** अव्य० कस्मिन् काले किम्+दा—कादेशः। कस्मिन्काले इत्यर्थे अनद्यतने काले तु तदार्थे वा हिल् कर्हि कदा वा। "कदा काश्यां गमिष्यामि कदा द्रक्ष्यामि शङ्करम्। इति ब्रुवाणः सततं काशीवासफलं लभेत्" काशीख०। "न पाटी धावयेत् कांस्ये कदा चिदपि भाजने" मनुः "कदा वाराणस्यामिह सुरधुनीरोधसि वसन्" "कदा वृन्दारण्ये विमलयमुनातीरपुलिने" "कदायोध्यामध्ये विमलसरयूतीरपुलिने। "विभाषा कदाकर्ह्योः" पा० एतद्योगे भव्ये लट्। "कदा कर्हि भुङ्क्ते भोक्ष्यते भोक्ता वा" सि० कौ०। अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च। कदातन कस्मिन् काले भवे त्रि०स्त्रियां ङीप्

**कदाकार** त्रि० कुत्सिताकारोऽस्य कोः कद्। १कुत्सिताकारे कुगति श०। २कुत्सिताकारे पु०।

**कदाख्य** पु० कुत्सिता आख्या यस्य कदादेशः। (कुड़) १इषौषधौ शब्दच०। २कुत्सिताख्ये त्रि०। कुगतिश०। ३कुत्सिताख्यायां स्त्री।

**कदाचन** अव्य० कदा+चन प्रत्य०। अनिर्द्धारिते कस्मिंश्चित् काले इत्यर्थे "कदाचन स्तरीरसि" श्रुतिः। "पञ्चाननगते भानौ पक्षयोरुभयोरपि। चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन" ति०त० पु०। कदा+चित् प्रत्य०।

कदाचित् कदापीत्यर्थे अव्य०। "ततः कदाचिदुर्व्वश्यां भैरवो मैथुनं ययौ" कालिका० "कण्डूयमानेन कटं कदाचित्" रघुः। पा०चिद्धनपृत्रयाभावात् "असाकल्ये तु चिच्चनेत्यमरोक्तेश्च पदद्वयमिति विवेक्तव्यम्।

**कदामत्त** पु० कदाचिन्मत्तः। ऋषिभेदे ततः गोत्रापत्ये इञ्। कादामत्ति तदपत्ये पुंस्त्री तस्य बहुत्वे उपका० वा इञो लुक्। कादामत्तयः कदामत्ताः।

**कदुष्ण** न० ईषत् उष्णम् ईषदर्थकस्य कोः कद्। १ईषदुष्णे स्पर्शे २तद्वति त्रि०। "श्वसन् कदुष्णं पुरमाविवेश" भट्टिः। "कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणः" "कदुष्णं कर्णयोर्दद्यात्तदा वेदनापहम्" सुश्रु०। पक्षे कादेशः कोष्ण तदर्थयोः "भुजं कोष्णेन कुण्डोध्नी" रघुः। पक्षे कवादेशः कवोष्ण उष्णार्थयोः।

कदुष्ण कार्ष्णस्य अक०कद्रुवत् दीर्घवत्वात् क्विप् कद्रू इति भेदः

**कद्रथ** पु० कुत्सितोरथः कोः कद्। कुत्सिते रथे "युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम्" भट्टिः।

**कद्रु** पु० कद्—रु। १पिङ्गलवर्णे। २तद्वति त्रि० "प्राजापत्यं कद्रुमालभेत" तैत्ति० २,१,४,२, ३कर्वुरवर्णे पु० ४तद्वति त्रि० "वासः कृष्णं कद्रु" कात्या० २२,४,१२, "कद्रु कर्वुरं वासः" संग्रहव्या०। संज्ञायामूङ्। कद्रू ६नागमातरि दक्षप्रजापतेः कन्याभेदरूपे कश्यपपत्नीभेदे स्त्री "कद्रूस्तु सुषुवे नागान्" भा० आ०। काद्रवेयशब्दे विवृतिः। "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत" भा० आ० ६५ अ०। "लोका भारतशार्द्दूल! कश्यपस्य निबोध मे। अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा। सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा। कद्रुर्मुनिश्च राजेन्द्र! तास्वपत्यानि मे शृणु भा०हरि०३अ०

**कद्रुण** त्रि० कद्रुरस्त्यस्य पामा० न। पिङ्गलवर्णान्विते।

**कद्रु(द्रू)पुत्र** पु० ६त० पृषो० वा ह्रस्वः। १सर्पे। कद्रु(द्रू)सुतादयोऽप्यत्रार्थे। तस्य कद्रूतनयत्वं काद्रवेयशब्दे वक्ष्यते।

**कद्र्यच्** त्रि० कस्मिन्नञ्चति किम्+अन्च्—क्विप् अद्र्यादेशः किमः कः। अनिश्चितदेशगन्तरि कस्मिन् गन्तरि अनिश्चितदेशगमने। शसादावचि अल्लोपदीर्घौ। कद्रीचः कद्रीचा इत्यादि। स्त्रियां ङीप् अल्लोपदीर्घौ। कद्रीची। "सा कद्रीची कं स्विदर्द्धं परागात्" ऋ० १,१६४,१७।"कद्रीची कगतेत्यनिश्चितगमनादिकं प्राप्नवती" भा०।

**कद्वत्** त्रि० कः कशब्दोऽस्त्यस्य मतुप् मस्य वः पृषो०। कशब्दयुक्ते मन्त्रादौ स्त्रियां ङीप्। "कद्वत्यो वाक्यानुवाक्याः कोहि प्रजापतिः" शत० ब्रा० ६,२,२,५।

**कद्वद** त्रि० कुत्सितं वदति वद—अच् कोः कदादेशः। गर्हितवाक्यवादिनि अमरः "येन जातं प्रियापाये कद्वदं हंसकोकिलम्" भट्टिः। २दुःस्वरशब्दयुक्ते च "वागुविदां वरमकद्वदो नृपः" माघः।

**कद्वर** त्रि० कं जलमिवाचरति क+क्विप् तेन वरा ध्रियते धृ—कर्मणि अप्। दधिभेदे तक्रभेदे कट्वरे त्रिकाण्ड०।

**कधप्रिय** पु०कस्मै प्रीणाति प्री—क वेदे पृषो०। कस्मैप्रिये। "कध जयः कधप्रिये भुजे" ऋ० १,३०,२१। कस्मै प्रीणाति प्री—क्विप् वेदे पृषो०। कधप्री तत्रैवार्थे। "कध

नूनं कधप्रियः पिता पुत्रं न हस्तयोः दधिध्वे वृक्तबर्हिषः" ऋ० १,३८,१ ।

**कान** प्रीतौ अक० गतौ सक० भ्वा० पर० सेट् । कनति अकनीत्-अकानीत् चकान । प्रणिकनति । ईदित् । कान्तः । ओदित् वर्त्तमाने क्त । कान्तोवर्त्तते । कान्तिः । कननम् । "अविक्रीतो अकानिषं पुनर्यन्" ऋ० ४,२४,८,

**कनक** न० कनी दीप्तौ कन्यादि० वुन् । १स्वर्णे अमरः । २पलाशवृक्षे ३नागकेशरे ४धत्तूरे ५काञ्चनारवृक्षे ६कालीयवृक्षे ७चम्पकवृक्षे च पु० मेदि० । ८कासमर्द्दवृक्षे पु० राजनि० ९आम्रातके शब्दमा० । "तप्तः धनुः कनकपलाशसकर्णिकारान्" ऋतु० । "सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम्" "नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः" अन्ये तु "कनकसिकतामुष्टिनिक्षेपगूढैः" मेघ० "कनककुण्डलवान् किरीटी" विष्णुध्यानम् "कनकचषकमेतद्रोचनालोहितेन" माघः । "अद्यापि तां कनकचम्पकदामगौरीम्" चौरप० । कूर्मविभागे वृह० सं० "अपरस्याम् मणिमानभिलु-क्रम्य तारक्षितिवृषध्वजकनकशकाः" इत्युक्ते १०पश्चिमदेशस्थदेशभेदे पु० । कनकस्येम परिमाणम् अण् । कानक तत्परिमाणे निष्कादौ त्रि० । काञ्चनोत्पत्तिकथा च अग्निरेतःशब्दे ५९पृष्ठे उक्ता । भावप्र० तदुत्पत्तिगुणादिकमुक्तं यथा "पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् । मरीचिरत्रिरङ्गिराः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते कीर्त्तिताः परमर्षयः । पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयौवनाः । कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः । पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात् । कृत्रिमञ्चापि भवति तद्रसेन्द्रस्य वेधतः । तारं शुल्वोत्थितं स्निग्धं कोमलं गुरु हेम सत् ।(सत् उत्तमम्) तच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदे सितं श्वेतं कषे त्याज्यं लघु स्फुटम् । सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् । स्वादु तिक्तञ्च तुवरं पाके च स्वादु पिच्छिलम् । पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् । बल्यं वीर्य्यं हरते नराणां रोगव्रजान् पोषयतीह काये । असौख्यकार्य्यपि सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्य्यात् । असम्यग्मारितं स्वर्णं बलं वीर्य्यञ्च नाशयेत् । करोति रोगान् मृत्युञ्च तद्धन्याद्यत्नतस्ततः" ।

**कनकक्षार** पु० कनकस्य द्रावणाय क्षारः । (सोहागा) टङ्के राजनि० । तत्सम्पर्कात् हि झटिति कनकं द्रवति ।

**कनकदण्ड** न० कनकस्य दण्डोयत्र । राजच्छत्रे त्रिका० कनकच्छत्रादयोऽप्यत्र ।

**कनकध्वज** पु० धृतराष्ट्रपुत्रभेदे । "दीर्घबाहुर्महाबाहुर्व्यूढोरः कनकध्वजः" भा० आ० ११७अ० । तत्पुत्रकीर्त्तने ।

**कनकपल** पुंस्त्री कनकमिव पलं मांसमस्य । मत्स्यभेदे हारा० स्त्रियां ङीष् । तस्माद्यन्तयोर्मत्स्यपर्य्यायकथनात् मध्ये सुवर्णपलरूपपरिमाणार्थकताकल्पनं शब्दकल्पद्रुमादौ प्रमादिकमेव । ६त० । कनकस्य कर्षचतुष्टयरूपपलपरिमाणे न० ।

**कनकपत्र** न० कनकनिर्म्मितम् पत्रं पत्राकारं भूषणम् । (कानपात) १कनककर्णाभरणभेदे । "अद्यापि तन्ननहि सम्परिवर्त्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात् कर्णेकृतं कनकपत्रमनालपन्त्या" चौरप० । "कनकपत्रालङ्कृतया" काद० । [ स्वतीलतायाम् राजनि०

**कनकप्रभा** स्त्री कनकस्य प्रभेव प्रभा यस्याः । महाज्योति

**कनकप्रसवा** स्त्री कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् राजनि० ।

**कनकमय** त्रि० कनकस्य विकारः मयट् । स्वर्णविकारे "आधत्ते कनकमयस्य यत्र लक्ष्मीम्" किरा० । [राजनि०

**कनकरम्भा** स्त्री कनकवर्णफलिका रम्भा शा० त० । स्वर्णकदल्याम्

**कनकरस** पु० कनकस्य क्षीरस उपरसः । १हरिताले राजनि० तस्य स्वर्णवर्णत्वात् पारदस्य अनुगुणत्वोपरसत्वाच्च तथात्वम् । उपरसाश्च भावप्र० दर्शिताः यथा । "गन्धोहिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कणम् । राजावर्त्तकचुम्बकौ स्फटिकया शङ्खो खटी गैरिकम् । कासीसं रसकं कपर्द्दसिकता बोलाश्च कङ्कुष्ठकम् सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः" । (सूतस्य पारदस्य) "स्वर्णवर्णं गुरु स्निग्धम्" इत्यनेन तस्य गुणादिकमुक्तम् तत्रैव । तस्य स्वर्णवर्णत्वात् पारदात् किञ्चिदूनगुणकत्वाच्चास्य तथात्वम् । ६त० । स्वर्णस्य द्रवीभूते २रसे च ।

**कनकलोद्भव** पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच् । (धूना) सालनिर्यासे । राजनि०

**कनकसूत्र** न० कनकनिर्म्मितं सूत्रम् । (सोनारतार) स्वर्णसूत्रे

**कनकाङ्गद** न० कनकमयमङ्गदम् । स्वर्णमये केयूरे । "कनकाङ्गदद्युतिरस्य" माघः । तदस्त्यस्य मतुप् मस्य वः । कनका-

ह्रदयत् इति । कनकाङ्गदिन् तद्युक्ते त्रि० विष्णौ पु० "महावराहो गोविन्दः सुषेणः कनकाङ्गदी" विष्णुस० ।

**कनकाचल** पु० कनकमयोऽचलः । १सुमेरुपर्वते, धान्याचलादिषु दशसु दानीयपर्वतेषु मध्ये दानीये स्वर्णपर्वते च । हेमशैलस्वर्णशैलादयोऽप्यत्र । तद्दानकालपरिमाणादि मत्स्यपु० उक्तं यथा "प्रथमो धान्यशैलः स्याद् द्वितीयो लवणाचलः । गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः । पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः । सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः । राजतो नवमस्तद्वद्दशमः शर्कराचलः । वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः । अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । शुक्लपक्षे तृतीयायामुपरागे शशिक्षये । विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः । शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः । धान्यशैलादयो देयाः यथा शास्त्रविधानतः । तीर्थे वायतने वापि गोष्ठे वा भवनाङ्गने । मण्डपं कारयित्वा चतुरस्रमुदङ्मुखम् । प्रागुदक्प्रवणं तद्वत् प्राङ्मुखं वा विधानतः । गोमयेनानुलिप्तायां भूमावास्तीर्य वै कुशान् । तन्मध्ये पर्वतं कुर्याद्विष्कम्भपर्वतान्वितम्" । विधानयुक्तविष्कम्भपर्वतनिर्माणप्रकारादि धान्यपर्वत शब्दे वक्ष्यते । अस्य परिमाणमुक्तं मत्स्यपु० । "अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् । यस्य प्रदानाद्भवनं विरिञ्चेर्याति मानवः । उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः । तदर्द्धेनाधमस्तद्वत् अल्पवित्तोऽपि शक्तितः । दद्यादेकपलादूर्द्ध्वं यथा शक्त्या विमत्सरः । धान्यपर्वतवत् सर्वं विदध्यात् विधिसत्तमम् । विष्कम्भशैलास्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत्" ।

**कनकाध्यक्ष** पु० ७त० । सुवर्णरक्षणादावधिकृते अमरः ।

**कनकायु** पु० धृतराष्ट्रपुत्रभेदे तत्पुत्रगणने भा० आ० ६७अ० "उग्रायुधो भीमरथः कनकायुर्दृढायुधः" ।

**कनकार** पु० कनकं दीप्तं यथा ऋच्छति सर्वतो व्याप्नोति ऋ-अण् । कोविदारवृक्षे । राजनि० ।

**कनकालुका** स्त्री कनकनिर्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलशभेदे अमरः ।

**कनकावतीमाधव** कनकावती माधवश्चाधिकृत्य कृतो ग्रन्थः अण् व्याख्यायिकायाम् तस्य लुक् । कनकावतीमाधवकथाख्यापके विल्हणकृतनाटकभेदे तत्कथा विल्हणशब्दे वक्ष्यते ।

**कनकाह्व** पु० कनकस्याह्वा आह्वा यस्य । १सुवर्णनामनामके नागकेशरे न० । २धुस्तूरे पु० । अमरः कनकाह्वयोऽप्यत्र राजनि० । ३पुष्पे न० ।

**कनखल** पु० । तीर्थभेदे तच्च तीर्थं गङ्गाद्वारसमीपस्थम् यथोक्तं भा० व० ८४अ० "विभेद तरसा गङ्गां गङ्गाद्वारं युधिष्ठिर ! । पुण्यं तदाख्यातं राजन् ! ब्रह्मर्षिगणसेवितम् । सनत्कुमारः कौरव्य ! पुण्यं कनखलं तथा । पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः" । तस्य माहात्म्यमुक्तम् "गङ्गाद्वारे कुशावर्त्ते विल्वके नीलपर्वते । तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत्" भा० अनु० २५ । "विशेषो वै कनखले प्रयागे परमं महत् । यद्यकार्यं शतं कृत्वा कृतं गङ्गावसेचनम् । सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम्" भा० व० ८५अ० । "ततो गच्छेत धर्म्मज्ञ नमस्कृत्य महागिरिम् । स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः" इत्युपक्रम्य "ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति स्वर्गलोकञ्च विन्दति" भा० व० ८४ । तत्तीर्थस्य २समीपस्थपर्वते च "एते कनखला राजनृषीणां दयिता नगाः । एषा प्रकाशते गङ्गा युधिष्ठिर ! महानदी" भा० व० १३५अ० "तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णाम्" मेघ० "तीर्थं कनखलं नाम गङ्गाद्वारेऽस्ति पावनम् । यत्र काञ्चनपातेन जाह्नवी देवदन्तिना उशीनरगिरिप्रस्थाद्भित्त्वात्रावतारिता" कथासरित्सागरः ।

**कनन** त्रि० कन–युच् । काणे एकनेत्रे हेमच० ।

**कनल** त्रि० कन–कलच् । दीप्ते । तेन निर्वृत्तादि चातुरर्थ्याम् कुञ् । कानलक तन्निर्वृत्तादौ त्रि० ।

**कनवक** पु० यदुवंश्ये वसुदेवभ्रातरि शूरस्य पुत्रभेदे । शूरात् वसुदेवोत्पत्तिमुक्त्वा । "देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः । अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः" हरि० ३५ । तत्रैव "तन्त्रिजस्तन्त्रिपालश्च सुतौ कनवकस्य तु" ।

**कना** स्त्री कनि नामधातु–अच् । कनिष्ठायाम् । "पुनस्तदा वहति यत् कनाया दुहितुः" ऋ० १०,६१,५ ।

**कनि** नामधातु युवानं अल्पं वा करोति णिच्–कनादेशः उभ० सक० सेट् । कनयति ते । "कीर्त्तने कनयन्ति च" भट्टिः ।

**कनिक्रद** त्रि० क्रन्द–यङ् लुक् अच्–गुणाभावः निगागमश्च । अत्यर्थं क्रन्दितरि । "इमं मा हिंसीरेकशफं पशुं कनिक्रदम्" यजु० १३,४८ । दाधर्तीत्यादि पा० सू० कनिक्रददिति प्रकृतिभागमात्रनिपातः तेनान्यप्रत्ययेऽपि रूपं भवत्येव ।

**कनिष्ठ** त्रि० अतिशयेन युवा अल्पो वा इष्ठन् कनादेशः । १अतितरुणे २अतल्पे । ३अनुजे ४ह्रस्वे । ५दुर्बलाङ्गुली

गुणात् ।। रूपद्वयमपास्य मूलं ज्येष्ठं २ अत्र भावनार्थं न्यासः प्र ।। क १ ज्ये २ क्षे २ । क १ ज्ये २ क्षे २ प्राग्वल्लब्धं चतुःक्षेपमूले क ६ ज्ये २० क्षे ४ इष्टवर्गहृतः क्षेपःत्वादिना जाते रूपक्षेपमूले क ३ ज्ये १० क्षे १

अनयोस्तुल्य भावनया वा कनिष्ठज्येष्ठमूले जाते क ६० ज्ये १९९ क्षे १ एवमनन्तमूलानि ।

अथवा रूपं कनिष्ठं प्रकल्प्य जाते पञ्चक्षेपपदे क १ ज्ये ४ क्षे ५० अनयोस्तुल्यभावनया मूले क८ ज्ये २७ क्षे २५ । इष्टवर्गहृत इत्यादिना पञ्चकमिष्टं प्रकल्प्य जाते रूपक्षेपपदे क ८/५ ज्ये २७/५ क्षे १

अनयोः पूर्वमूलेभ्यः मूलभावनार्थं

न्यासः प्र ।। क ८/५ ज्ये २७/५ क्षे १ ।

क ३ ज्ये १० क्षे १ भावनया लब्धे मूले क १६१/५ ज्ये ५६४/५ क्षे १ । अथ वा ह्रस्वं वज्राभ्यासयोरन्तर मित्यादिना जातया भावनया जाते मूले क १ ज्ये ४ क्षे ५"

चक्रवालेन तदानयनप्रकारः चक्रवालशब्दे वक्ष्यते । क-निष्ठमूलमप्यत्र न०। [स्वार्थे कन् ।२कनिष्ठशब्दार्थे त्रि०

**कनिष्ठक** न० कनिष्ठमिव कायति कै–क । तृणभेदे राज[नि०]

**कनिष्ठिका** स्त्री कनिष्ठैव स्वार्थे कन् । (कडे आङ्गुल) [अ]ङ्गुलौ "द्विः कनिष्ठिकया" कात्या० ७,७,१८ । [...] गर्वे च माने अनामिकायुक्तुष्ठयोस्तया कनिष्ठिकया [...]रम्" कर्कः । "परिवर्त्यापरिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामार[...] पलाशपुटे प्रास्यति" कात्या० १,५,७,१ । [हेमच०

**कनी** स्त्री कन–अच् गौरा० ङीष् । १दुहितरि २कन्याया[म्]

**कनीचि** स्त्री कन–बा०ईचि । १गुञ्जायां (कुंच) शब्द[च०] । २मधुपलतायाम् ३शकटे च उणादि० । अयं मूर्द्धन्यम-ध्य एव न मध्यस्तु प्रामादिकः "स्वर्णाभ्यामीचिः" उज्ज्व-लदत्तेन धान्तकवैरेव पठ्यात्

**कनीन** त्रि०कन–प्रीतौ ईनन् । १कमनीये । "सद्योजातो वृषभः कनीनः"ऋ० ३,४८,१।"कनीनः कमनीयः"भा० "भिनत् कनीन ओदनं पच्यमानम्" ऋ० ८,६९,१४ । "जारः कनीन इव चक्रदानः" ऋ० १,११७,१८ ।

**कनीनका** स्त्री "कनीनका कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति वा कमतेर्वा कान्ति कर्म्मणः" निरुक्तोक्ता व्युत्पत्तिः पृषो० । १कन्यायाम् "कनीनकेव विद्रधे नवे द्रुपदे अर्भके" ऋ०४,३२,२३, इत्यस्यमधिकृत्य ४,१५,निरुक्ते प्राशुक्ता निरुक्तिर्दर्शिता । भाष्यकृता तु कनीनका कमनीयशालभञ्जिकेति व्याख्यातम् तेन २तदर्थेऽपि। कनीनका कन्या काम्यत्वे नास्त्यस्याः अर्श० अच् । ३कन्याकामे पु० । "जनिष्ट योषा पतयत् कनी-नकः"ऋ० १०,४०,९,। कनीनकः कन्याकामः"इति भा०। कनीन इव कायति कै-क। ४कनीनिकायां न०सुश्रु०"ततः कनीनकगतम्" तत्रोक्तेः अक्षिशब्दे ४५पृ० विवृतिः

**कनीनिका** स्त्री कन–कनि–वा ईनन् संज्ञायां कन् टाप् अत इत्वम् । १अक्षितारायां २कनिष्ठाङ्गुलौ च मेदि० । अक्षिशब्दे४५पृ० विवृतिः [ अमरटीका

**कनीनी** स्त्री कनि–नामधा० ईनन् ङीष् । कनिष्ठाङ्गुलौ

**कनीयस्** त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसुन् कनादेशः । द्वयोर्मध्ये १अल्पतरे, "अद्य कनीयो भवि-ष्यति" का०उप० । २युवतरे, ३अनुजे भ्रातरि पु० । "कथं कनीयानद्यमतुमहेयम् ?" भट्टिः "कनीयान् इयसतुमहेत्" श्रुतिः "कलत्रवानहं बाले कनीयां-सं भजस्व मे"रघुः। स्त्रियां ङीप् ।

**कनीयस** न०कन–दीप्तौ अच् कनः स्वर्णात्सेदं कनीयं तथाभूततया सीयते अवसीयते सो–घञर्थे कर्मणि क । १ताम्रे । हेमच० ताम्रस्य स्वर्णवेधकत्वात्तथात्वम् । कनीयस+स्वार्थे वा० अच् । २कनीयसि कनिष्ठे त्रि० । "अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम्" "ययाति-र्नाहुषोराजा पूरुं पुत्रं कनीयसम्"भा० आ० ८६अ०।

[...] त्रि० कमित्यव्ययं कं सुखमस्यास्य कम्+त। सुखयुक्ते एवम् "गङ्गुम्भ्यां वभयुक्तितयसः" पा० कम्+ति कन्ति [क]म्+तु । कन्तु तत्रार्थे त्रि० ।

[क]न्तु पु० कम–तुन् । १कामदेवे २हृदये न०उणा०। कम्+तु सुखान्विते त्रि० । [ तापचे पुंस्त्री ।

**कन्थक** पु० ऋषिभेदे ततोगोत्रे गर्गा० यञ् । कान्थक्य तद्गो-

**कन्थरी** स्त्री कम– अरन् पृषो० थुक् च गौरा० ङीष् । दुष्प्रवेशायां तीक्ष्णकण्टकयुक्ते वृक्षभेदे राजनि० । अरन् टक् । कन्थारीत्यपत्र राजनि० ।

**कन्था** स्त्री कम–थन् । स्थूलवस्त्रभित्तौ (कांथा)स्यूतपरिजीर्ण-वस्त्रखण्डे । (कांथा) "भिक्षा प्राणस्य रक्षार्थं कन्था-शीतनिवारिणी । अथवा केशवे भक्तिः विभवैः किं प्रयो-जनमिति" पुरा० । "कन्थां वहन्ति दुर्बुद्धे ! गर्द्दभेनापि दुर्वहाम्" महुहरि०अस्य नतुपुरुषे "संज्ञायां कन्थोशीन-रेषु" पा० क्लीवता सौशमिकन्थम् । संज्ञाभावे खोशो-नरभेदे च न । दाक्षिकन्था त्रि०कौ० ।

**कन्द** पुं न०कन्दति कन्दयति कन्द्यते वा कदि–अच्–णिच्–घञ्

घञ् वा । १सूरणे (ओल) २मल्लमालकूले, ३गृञ्जने च (गाँजर) ४मेघे पु०मेदि० । मेघनामनामके ५कर्पूरे च पु० "कन्दमूलफलाशिनः" चातुर्मास्यव्रतविधिः "कन्दोद्भेदा वैदूर्या यारिणीव" माघः "वने निवसतां तेषां कन्दमूलफलाशिनाम्" भा०अनु ०४१अ० । कन्दभेदास्तेषां विशेषगुणाश्च सुश्रु०दर्शिताः यथा "कन्दानत ऊर्ध्वं वक्ष्यामः । विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि । रक्तपित्तहराण्याहुः शीतानि मधुराणि च । गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च । मधुरो बृंहणो वृष्यः शीतः स्वर्योऽतिमूत्रलः । विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः । वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी । महती चैव हृद्या च मेधाग्निबलवर्द्धिनी । ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी । कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः । बिसं विदाहि विष्टम्भि रक्तपित्तप्रसादनम् । विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् । गुरुर्विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ पिण्डालुकं कफकरं गुरु वातप्रकोपणम् । सुरेन्द्रक श्लेष्मघ्नो विपाके कटुपित्तकृत् । तेषोः करीरा गु कफमारुतकोपनाः । स्थूलकन्दरसमाषकप्रभृतयः रैवतकाद्याः कटुका रूक्षा विष्टम्भिनो गुरवः कफव पित्तहराश्च । माषकं स्वादु शीतञ्च गुरु चापि प्र तम् । स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकी कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः । कषाये पित्तशमना विपाके मधुरा हिमाः । वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः । मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायनः" । भावप्र० उक्तगुणादि तत्तच्छब्दे दृश्यम् । माधवनिदानोक्ते ६योनिरोगभेदे पु० । "दिवास्वप्नादति क्रोधाद्व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा । पूयशोणितसङ्काशो लकुचाकृति, सन्निभः । उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः" स चतुर्विधः वातपित्तकफसन्निपातजभेदैः । "रूक्षं विवर्णं स्फुटितं वातिकं तम् विनिर्दिशेत् । दाहरोगज्वरयुतं विद्यात् पित्तात्मकन्तु तम् । नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् । सर्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः । सन्निपातात्मकोऽसाध्यः शेषाः कष्टप्रसाधनाः" ।

कन्दगुडूची स्त्री कन्दोद्भवा गुडूची शाक० । १गुडूचीभेदे, राजनि० (सुदनी) इति ख्याते २कन्दे च शब्दच०

कन्दट न० कदि-अटन् । श्वेतोत्पले (शादा सुँदि) शब्दरत्ना०

कन्दफला स्त्री कन्दात् फलं यस्याः । कुष्माण्डवल्ल्याम् ।
(छोटकुम्हा) राजनि०

कन्दबहुला स्त्री कन्दैर्बहुला । त्रिपर्णिकावृक्षे राजनि०

कन्दमूल न० कन्दरूपं मूलमस्य । मूलके (मूलो) राजनि०

कन्दर न० कम् जलेन दीर्य्यते दृ-कर्मणि अप् । १आर्द्रके २अङ्कुरे च राजनि० ३गुहाकारे पर्वतनितम्बस्थाने पुंस्त्री अमरः । स्त्रीत्वे गौरा०ङीष् स्वामी । ४गुहायां स्त्री टाप् अमरटीकायाम् "निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्" मेघ० । "विदूरगं प्रतिभयमस्य कन्दरम्" माघः "नानामलप्रस्रवणैर्नानाकन्दरधातुभिः" भाग० ४,६,१०, "अभ्यर्थमेव शरणमुटजं वाद्रिकन्दरम्" भाग० ७,१२,१८, कन्दरस्य सन्निकृष्टदेशादि अश्मादि० चतुरर्थ्यां र । कन्दर ५कन्दरसन्निकृष्टदेशादौ त्रि० । कं गजशिरोदीर्य्यतेऽनेन करणे अप् । ६अङ्कुशे मेदि०

कन्दराकर पु०६त० । पर्वते मेदिनिः ।

कन्दराल पु० कन्दरायामङ्कुरायालति-अल-अच् । १गर्द्दभाण्डवृक्षे २प्लक्षवृक्षे(पाकुड़) ३आक्षोटवृक्षे च राजनि० संज्ञायां कन् । ४प्लक्षवृक्षे पु०शब्दरत्ना० ।

कन्दरोद्भवा स्त्री कन्दरे उद्भवति उद्+भू-अच् । १क्षुद्रपाषाणभेदीवृक्षे राजनि० २कन्दरोद्भवमात्रे त्रि० । ३गुडूचीभेदे स्त्री राजनि० [ राजनि०

कन्दरोहिणी स्त्री कन्दात् रोहति रुह-णिनि । गुडूचीभेदे

कन्दर्प पु० कम् सुखं तस्य तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । १कामदेवे अमरः । "तत्र निविश्य कन्दर्पगमनत् पाकशासनः" कुमा० । २रतिशास्त्रोक्ते पुम्भेदे । "वयोविंशतिवर्णोऽस्मिन् वः कन्दर्पसंज्ञकः । वीरे वा करणे वा स्यात् सगन्धतावे विधीयते" संक्षी०दा०

कन्दर्पकूप पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे जटाधरः ।

कन्दर्पकेलि पु० कन्दर्पस्य केलिः । कामक्रीडायां केली तत्र-भिक्षाय वनीपन्थः अच् आस्वायिकायां तस्य लुक् । प्रहसनभेदे ।

कन्दर्पजीव पु०कन्दर्पं जीवयति वर्द्धयति जीव-णिच्-अच् । कामवृद्धिकारफलके पनसवृक्षे राजनि० ।

कन्दर्पमथन पु० कन्दर्पं मथ्नाति मथ-ल्यु । १महादेवे कन्दर्पमथनकामघ्नादयोऽप्यत्र पु० । [त्रिका० ।

कन्दर्पमुषल पु० कन्दर्पे मूषल इव । पुरुषचिह्नभेदे ।

**कन्दर्पशृङ्खल** पु० "नारीपदद्वयं न्यस्य कान्तस्योरुद्वयोपरि। कटिं दोलयेदाशु बन्धः कन्दर्पशृङ्खलः" रतिमञ्जर्य्युक्ते रतिबन्धभेदे।

**कन्दल** त्रि० कदि-कलच्। १कलापे २उपरागे ३नवाङ्कुरे ४कलध्वनौ च मेदि० ५अपवादे शब्दर०। ७कलहभेदे (मागधुद्ध) ७कपाले च पु० धरणिः। गौरा० ङीष् कन्दली ८मृगभेदे ९गुल्मभेदे च स्त्री मेदि०। सा च भूमिकदली, "द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्यपीति" शब्दार्थचिन्ता० उक्तेः "ध्वजांशुकैर्जितकन्दलीवनः" माघः। "आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्" मेघ०। पुष्पे न०। "विडम्बयन्ती नवकन्दलैस्ते" रघुः। "द्विदलकन्दलकम्पनलालितः" माघः "निर्मोडितेन्दुकरकन्दलजोऽनुसेकः" उत्तररामच०। ११०वाने पु० भावप्र०।

**कन्दलता** कन्दप्रधाना लता। माषवल्ल्यां राजनि०।

**कन्दलीकुसुम** न० कन्दल्या इव कुसुममस्य। शिलीन्ध्रे। ६त०। १भूमिकदलीपुष्पे च। [राजनि०

**कन्दवर्द्धन** पु० कन्देन वर्द्धते वृध-ल्यु। शूरणे (ओल)

**कन्दवल्ली** स्त्री कन्दाकारा वल्ली। बन्ध्याकर्कोट्याम् राजनि०।

**कन्दशाक** न० कन्दप्रधानः शाकः। कन्दप्रधाने शाके कन्दशब्दे दर्शितकन्दवर्गशाके शूरणादौ। "सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते" भावप्र०। [राजनि०

**कन्दशूरण** पु० कन्देषु शूरणः श्रेष्ठः। (ओल) शू...

**कन्दसार** न० कन्दानां सारोऽत्र। १नन्दनवने त्रिका०। कन्दः सारोऽस्य। कन्दप्रधाने ओलादौ त्रि०। २कन्दशब्दे दर्शितकन्दवर्गे त्रि०।

**कन्दाढ्य** पु० कन्दे आढ्यः। भूमिकन्दे राजनि०। [राजनि०।

**कन्दामृता** स्त्री कन्दप्रधानाऽमृता। कन्दप्रधाने गुडूचीभेदे

**कन्दार्ह** पु० कन्देषु अर्ह्यः पूज्यः। शूरणे राजनि०। "सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते" इत्युक्तेस्तस्य कन्देषु प्रधानत्वात्तथात्वम्।

**कन्दालु** पु० कन्देनालुरिव। १काशालौ २भूमिकन्दे राजनि० ३कर्णिकायाञ्च राजनि०। [राजनि०।

**कन्दिन्** त्रि० कन्दोऽस्यास्ति इनि। १कन्दयुक्ते। २ओले पु०।

**कन्दिरी** स्त्री कन्द-इरच् गौरा० ङीष्। लज्जालुवृक्षे वैद्य०

**कन्दी** स्त्री कन्दोऽस्त्यस्य अच् गौरा० ङीष्। मांसकन्द्याम्।

**कन्दु** पु० स्त्री स्कन्द उ सलोपश्च। (ताओया) १स्वेदनीपात्रे "कन्दुपक्वं तैलपक्वमिति" स्मृतिः २तत्पक्वखाद्यादेः भर्जनपात्रभाण्डे च (भोजना बाजा) "गोकुले कन्दुशालायां तैलयन्त्रे क्षुयन्त्रयोः" स्मृतिः। "कन्दुपक्वानि तैलेन पायसं दधि सक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" ति० त० कूर्म्मपु०।

**कन्दुक** पु० कं सुखं ददाति दा-मितद्रवा० डु संज्ञायां कन् कन्दु+यावादि० कन्, स्वार्थे कन्दुकेन कन् वा। १वस्त्रादिनिर्म्मिते उत्पातनावपातनक्रीड़ासाधनद्रव्यभेदे (गेंदो)। "सुनाकुरागारवर्णिताञ्च कन्दुकात्"। "श्रमं ययौ कन्दुकलीलयापि या" "सा कन्दुकैः सविभ्रमपुत्रकैश्च" कुमा०। "करामिघातोत्थितकन्दुकेयम्" रघुः "तटभुवि कन्दुकविभ्रमं बभार" माघः। "इदं कन्दुकं यत्र येभ्यश्चतुर्थ्योगः" वृ०र०टीकोक्ते २त्रयोदशाक्षरपादके छन्दोभेदे न०।

**कन्दुकेश्वर** न० काशीस्थे ज्येष्ठस्थानस्थे शिवलिङ्गभेदे कन्दुकखेलनप्रकारः तदाविर्भावकथा च काशी०६५अ० दर्शिता "स्वैरं विहरतस्तस्य ज्येष्ठस्थाने महेशितुः। कौतुकेनैव चिक्रीड शिवा कन्दुकलीलया। उदश्चन्त्यञ्चदङ्गानां लाघवं परितन्वती। निश्वासामोदमिलितभ्रमराकुलितेक्षणा। भ्रश्यत्कुम्भलसन्माल्यसुपटीलनभूमिका। स्विद्यत्कपोलपत्राली सवदम्बुकणोज्ज्वला। स्फुटच्चोलांशुकपथनिर्यदङ्गप्रभाविता। उच्छलत्कन्दुकास्फालातिशोणितकराम्बुजा। कन्दुकानुगसंदृष्टिनर्त्तितभ्रूलताञ्चला। मृडानी किल खेलन्ती ददृशे जगदम्बिका। अन्तरीक्षचराभ्यां च दितिजाभ्यां मनोहरा। कटाक्षिताभ्यामिव वै समुपस्थितमृत्युना। विदलोत्पलसंज्ञाभ्यां दृप्ताभ्यां वरतो विधेः। तृणीकृतत्रिजगतीपुरुषाभ्यां स्वदोर्बलात्। देवीं परिजिहीर्षू तौ विषमेषुप्रपीडितौ। दिवो ऽवतेरतुः क्षिप्रं मायां स्वीकृत्य शाम्बरीम्। धृत्वा पारिषदीं मूर्त्तिं मायातावम्बिकान्तिकम्। तावत्यन्तं सुदुर्वृत्तावशान्तचलमानसौ। सर्व्वज्ञेन परिज्ञातौ चाञ्चल्याल्लोचनोद्भवात्। कटाक्षिताय देवेन दुर्गा दुर्गविघातिनी। विज्ञातनेत्रसंज्ञा तु सर्वज्ञार्द्धशरीरिणी। तेनैव कन्दुकेनाथ युगपज्जिघ्नाय तौ। महाबली महादेव्या कन्दुकेन समाहतौ। परिभ्रम्य परिभ्रम्य तौ दुष्टौ विनिपेततुः। वृन्तादिव फले पक्वे तालाद्दनिलघोरिते। दम्भोलिना परिहते शृङ्गे इव महागिरेः। तौ निपात्य महादैत्यावकार्य्यकरणोद्यतौ। ततः परिणतिं यातो लिङ्गरूपेण कन्दुकः। कन्दुकेश्वरसंज्ञं च तल्लिङ्गमभवत्तदा। ज्येष्ठेश्वरसमीपे तु सर्वदुष्टनिवारणम्। कन्दुकेश्वरसमुत्पत्तिं यः श्रोष्यति मुदान्वितः। पूजयिष्यति यो भक्त्या तस्य दुःखभयं कुतः। कन्दुकेश्वरभक्तानां मानवानां

निदेनसाम् । योगक्षेमं सदा कुर्य्याद्भवानी भवनाशिनी । स्नात्वा तस्य विकुण्ड पूजां कुर्य्यात् यदैव हि । तत्रैव देव्याः सान्निध्यं प्रार्थ्यन्ते भक्तसिद्धिदम् । सर्व्वोपसर्ग संघातविघातकरणं परम् । कान्दुकेयं महालिङ्गं काश्यां येन समर्च्चितम् । कथं तेषां भवानीशौ स्यातां सर्व्वेप्सितप्रदौ । द्रष्टव्यं च प्रयत्नेन तल्लिङ्गं कान्दुकेश्वरम् । कान्दुकेश्वरनामाऽपि श्रुत्वा दुरितसन्ततिः । क्षिप्रं क्षयमवाप्नोति तमः प्राप्योष्णगुं यथा" । कान्दुकेयमप्यत्र ।

**कान्दुपक्व** त्रि॰जलोपसेकं विना कान्दुपात्रे पक्वं तण्डुलादि । शुष्कतया भ्रष्टतण्डुलादौ । "कान्दुपक्वानि तैलेनेत्यादि ति॰त॰ कूर्म्मपु॰ । कान्दुशब्दे उदा॰ ।

**कान्दशाला** स्त्री कान्दुपाकार्था शाला शा॰त॰(कानशाला) कान्दुपाकार्थं शालायाम्"गोकुले कान्दुशालायां तैलयन्त्रेक्षु यन्त्रयोः । अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च" स्मृतिः। [ शब्दरत्ना॰ ।

**कान्दोट** पु॰कदि-ओटन् । १श्वेतोत्पले २नीलोत्पले न॰।

**कान्दोत** पु॰ कन्दे मूले जातः वेञ्-क्त । कुमुदे । त्रिका॰ ।

**कान्दोद्भवा** स्त्री कन्दादुद्भवोऽस्याः । गुडुचीभेदे ।

**कान्ध** पु॰ कं जलं दधाति धा-क । १मेघे शब्दरत्ना॰ । तत्समासके २मुस्ते च ।

**कान्धर** पु॰कं जलं शिरो वा धारयति धृ-अच् ।१मेघे मेदि॰ तन्नामनामके २मुस्ते च । ३मारिषशाके (नटियाशा॰) राजनि॰ । ४ग्रीवायाञ्च सारसुन्दरी । ग्रीवायां स्त्री अमरः । "कन्धराबाहुसंरुग्णाञ्च भङ्क्ते मध्यमसाहसम्" याज्ञ॰ "उत्कन्धरं दारुक इत्युवाच" माघः "कपाटवक्षाः परिणद्धकन्धरः" रघुः। [ २मुस्ते पु॰राजनि॰ ।

**कान्धि** स्त्री कं शिरोजलं वा धीयतेऽत्र आधारे कि ।१ग्रीवायां

**कान्न** न॰ कन्यते प्राप्यते दुःखमनेन कन-गतौ वा करणे क्त । १पापे २मूर्च्छायाञ्च शब्दमाला ।

**कान्यका** स्त्री अज्ञाता कन्या+अज्ञातार्थे कन् क्षिपकादित्वात् नेत्त्वम् । "अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशमे कन्यका प्रोक्ता अतऊर्द्ध्वं रजस्वला" इत्युक्तायां दशवर्षीयां स्त्रियां तस्याद्दशमवर्षादर्व्वाक् रजोयुक्ततया अज्ञातस्वाकत्वात्तस्याः । स्वार्थे कन् । २कन्याशब्दार्थे दानकौ तुकहरणात् पैशाचः कन्यकाच्छलात् "सुवासिनीकालकुमारीभिस्त्वान्तरकन्यकाः । संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्" याज्ञ॰ । "कन्यकातनयकौतुकक्रियाम्" । "न बद्धकोऽनव कन्यकानि" रघुः । ३नायिकाभेदे दशमहर्षाम् स्वकीपरकीयासामान्यवनितेति प्रथमं त्रिधा विभज्य अप्रकटितपरपुरुषानुरागा परकीयेति लक्षयित्वा सा च द्विविधा परोढा कन्यका चेति विभज्य कन्यायाः पित्राद्यधीनत्वात् परकीयत्वमिति समर्थ्य अस्याः गुप्ता एव सर्व्वाश्चेष्टा इत्युक्त्वा उदाहृतम् यथा "किञ्चित् कुञ्चितचारुचारुचरणभ्रूवल्लिमाचिन्वितम्प्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यन्तपर्य्युत्पलम् । अङ्गुल्याङ्कुरदङ्गुलीयकरुचा गण्डस्थकण्डूयनं कुर्व्वाणा नृपकन्यका सुललितं भव्याननमालोकते"

**कन्यकाजात** पु॰ ५त॰ । कानीने व्यासकर्णप्रभृतौ "कानीनः कन्यकाजातोमातामहसुतोमतः" स्मृतेरस्य मातामहसुतता

**कन्यकापति** पु॰ ६त॰ । जामातरि शब्दरत्ना॰ ।

**कन्यना** स्त्री कन्यामाचष्टे कन्या+णिच्-भावे युच् । कन्याख्याने कन्याह्वाने । "स्तोमं जुषेथां युवशेव कन्यनाम्" ऋ॰८,३५, ५, "कन्यनां कन्याह्वानम्" भा॰ ।

**कन्यला** स्त्री कनयतेर्भावे यत् कन्यं कमनीयतां लाति गृह्णाति ला-क । कन्यायाम् ।"हवमच्छन्तीव कन्यला" ऋ॰५,५, २, छान्दसमेके पूर्वा ऋक् न दृश्यते पुस्तकान्तरेऽपि ।

**कन्यस** पु॰कन-अश्रादि॰नि॰कन्यः कन्यत्वेन काम्यत्वेन सीयते अवसीयते सो-घञर्थे क । १कनिष्ठे भ्रातरि सारसुन्दरी "रामस्य कन्यसोभ्राता" रामा॰ । २कन्यसी कनिष्ठायां भगिन्यां स्त्री । वयोवाचित्वात् ङीप् । "अभिजित्स्पर्द्धमाना तु रोहिण्याः कन्यसी स्वसा । इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता" भा॰ व॰ २३८अ॰ । ३अधमे त्रि॰ "कन्यसं षड्भिरुद्दिष्टम्" अङ्गुलिपरिमाणे कालि॰पुरा॰।

**क[...]या** स्त्री कन-यत् अघ्न्या॰ नि॰ ।"कन्यायाः कनीन् चेति निर्देशात्"वयसि प्रथमं"पा॰ न ङीप् । १अनूढायां स्त्रियां २अनूढदुहितरि "अकृतोपयमा कन्या" शा॰ह॰ । ३मेषादितः षष्ठे राशौ च । निरुक्तौ ४,१५ । अस्यैव निरुक्तिरुक्ता । "कन्या कमनीया भवति क्वेयं नेतव्येति कमनेनानीयते इति वा कनतेर्वा स्यात् कान्तिकर्म्मणः"तत्र स्[...] द्रष्टो॰साधु । भा॰व॰३॰६अ॰अन्यैव निरुक्तिर्दर्शिता "सर्व्वान् कामयते यस्मात् कमेर्धातोश्च भा[...]मिनि ! । तस्मात् कन्येह सुश्रोणि ! स्वतन्त्रा वरवर्णिनि !" ४योषिन्मात्रे । "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" पुरा॰। "कातरवाजैरिव पौरकन्याः" रघुः ५दुहितृमात्रे "नरेन्द्रकन्यास्तमवाप्य सत्पतिम्" रघुः ।

"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते" "निषादः शूद्रकन्यायां यः पारशव उच्यते"। "क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते" मनुः तत्र अनूढदुहितरि "कन्यायां दत्तशुल्कायां ज्यायांश्चेत् वर आव्रजेत्" काव्या० स्मृतिः "पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति" विष्णुः। "ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा" विष्णुः। पुत्र्यमूढस्त्रीमात्रे "प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते"। "योऽकन्यां दूषयेत् कन्याम्"। "अभिसह्य तु यः कन्यां कुर्यात् दर्पेण मानवः" इति च याज्ञ०। "कन्यैव कन्यां या कुर्यात् तस्याः स्यात् द्विशतो दमः"। "या तु कन्यां प्रकुर्यात् स्त्री सद्यो मौण्ड्यमर्हति" मनुः "कन्यैवाक्षतयोनिर्या" स्मृतिः। "सह चान्यया स्थविरराजकन्यया" माघः। 'वैकाले पुनःकन्याभिस्तत्सखीज्झितषट्पदम्' रघुः। कन्याया भावः। कन्यात्व संज्ञात्वान्न पुंवद्भावः। पुरुषसङ्गरहितावस्थायां "कन्यात्वे दूषिते चापि कथं [illegible] द्विजोत्तम!" भा० आ० ६०। विवाहयोग्यावस्थायां [illegible] "प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः" [illegible] आ० ११६अ०। कन्यादानविक्रययोर्गुणदोषौ [illegible] "कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्। विवा[illegible] संप्राप्ते यथोक्तवयसे वरे। क्रमात् क्रमं क्रतुगत[illegible] लभन्ते ते। श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः। विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते। ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति। ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः। दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति। भित्त्वा द्वारन्तु सूर्यस्य स्वर्गलोकन्तु गच्छति। गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति। गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम्। शुल्केन दत्त्वा यो कन्यां तां पश्चात् सम्यगर्च्चयेत्। स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम्। (शुल्केन गोमिथुनरूपशुल्कोपलक्षितेनार्षेण) न मन्युं कारयेत्तासां पूज्याश्च सततं स्त्रियः। ब्रह्मदेया विशेषेण ब्राह्मी भोज्या सदा भवेत्। कन्यायां ब्रह्मदेयायामभुञ्जन् सुखमश्नुते। अथ भुञ्जीत यो मोहात् भुक्त्वा स नरकं व्रजेत्। अप्रजायाञ्च कन्यायां न भुञ्जीयात् कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि"। यः कन्यापालनं कृत्वा करोति यदि विक्रयम्। विक्रेता धनलोभेन कुम्भीपाकं स गच्छति। कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश। मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति" ब्रह्मवैवर्त्तपुराणम्। विवाह्यकन्यालक्षणमुद्वाहशब्दे उक्तम्। उद्वाहशब्देऽधिकं दृश्यम्। "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु" इत्युक्तेः सुतपदस्य पुंस्त्वाविवक्षया कन्यापुत्रसंस्कारेषु वृद्धिश्राद्धे प्राप्ते "स्त्रीणामप्येवमेव स्यात्" मनूक्तेश्च सर्वसंस्कारेषु च प्राप्तेषु च निष्क्रमभिन्नकन्यासंस्काराणाममन्त्रकतया कर्त्तव्यता तत्रापि वृद्धिश्राद्धनिषेधमाह महानि०त०८५ प०। "कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते"। वृद्धिश्राद्धनिषेधेऽपि विवाहे वृद्धिश्राद्धमिष्यत एव "कन्यापुत्रविवाहेषु वृद्धिश्राद्धं विधीयते इति" स्मृतेः। "नामान्नप्राशनं चूडां कुर्यात् स्त्रीणाममन्त्रकम्"। इति "जातकर्मादि चूडान्तं कुमार्य्याश्चाप्यमन्त्रकम्। कर्त्तव्यं पशुभिर्वस्त्रैरेकं निष्क्रमणं विनेति" च। तेन निष्क्रमणभिन्नाः संस्काराः अमन्त्रकाः कार्य्याः। विवाहस्य चोपनयनस्थानीयत्वात् न तदाचरणम् इति भेदः। ईषत्कुमार्य्याम् मेदि० उत्पलैलायां वाराहीकन्दे व-न्ध्याकर्कोट्याञ्च राजनि०। "स्त्री चेत् कन्या" इत्युक्तलक्षणे चतुरक्षरपादके छन्दोभेदे च। कन्याराशिश्च उत्तरफाल्गुन्याः शेषपादत्रयहस्तचित्रार्द्धनक्षत्रघटितः राशिचक्रे षष्ठः १५० भागं शतांशोत्तराशीत्युत्तरशतांशपर्य्यन्तस्त्रिंशदंशात्मकः। तदधिष्ठातृदेवतास्वरूपञ्च "कन्या प्लवस्था स्मृताः। कन्या शस्यहुताशयुक्" इति जातकप०। उक्तम् तत्र राशेश्च वर्णादिकमुक्तम् नील०ता० यथा। "पाण्डुर्दिवात् स्त्री द्विजनुर्यमाशा निशा सतत शीतसमोदयः स्मृता। कन्यार्द्धशब्दा शुभभूमिवैश्यरूक्षाल्पसङ्ग प्रभवा शुभा च"। ततश्चास्य राशेः पाण्डुवर्णः द्विपदराशिता स्त्रीराशिता द्विस्वभावात्मकता दक्षिणदिगभिमुखता रात्रिरूपता वातप्रकृतित्वं शीतवीर्य्यं समराशित्वम्। भूमिरूपता। अर्द्धशब्दः शुभस्वामिकत्वम् वैश्यवर्णः रूक्षत्वम् अल्पसङ्गोऽल्पाश्रयः अक्रूररूपत्वञ्च। तत्र जलप्रस्तरफलाद्युपयोगार्हमुक्तम् अस्य स्वामी बुधः। अस्याश्च शीर्षोदयत्वमुक्तम् "कन्यां गते पूषणि" "अप्राप्ते भास्करे कन्याम्" इति च ज्यो०।

कन्याका स्त्री कन्यैव कन् अनुकम्पितत्वात् न ह्रस्वः। कन्यायां शब्दर०।

कन्याकाल पु० कन्यात्वोपलक्षितः कालः शा०त०। अविवा-

क्षेमवर्द्धिते काले विवाहकालश्च उपयमशब्दे उक्तः।

कान्यकुब्ज पु० कन्याः कुब्जाः यत्र । कान्यकुब्जदेशे हेम० "कन्याकुब्जेऽपिबत् सोममिन्द्रेण सह कौशिकः" भा० व० ८७अ०। कन्यानां संघः अण् कान्यं तत् कुब्जं यत्र वा न्यकुब्जोऽस्यत्र । यथा च तद्देशे कन्यानां वायुना कुब्जत्वं कृतं तथा वर्णितम् रामा० आ० काण्डे।
"कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् । जनयामास धर्म्मात्मा घृताच्यां रघुनन्दन ! ॥ तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः । उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव ! । आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ अथ ताश्चारु-सर्व्वाङ्ग्यो रूपेणाप्रतिमा भुवि । उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ ताः सर्व्वा गुणसम्पन्ना रूपयौवनसंयुताः । दृष्ट्वा सर्व्वात्मको वायुरिदं वचनमब्रवीत् । अहं वः कामये सर्व्वा भार्य्या मम भविष्यथ । मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ । चलं हि यौवनं नित्यं मानुषेषु विशेषतः । अक्षयं यौवनं प्राप्ता अमर्य्यश्च भविष्यथ । तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्म्मणः । अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् । अन्तश्चरसि भूतानां सर्व्वेषां सुरसत्तम ! । प्रभावज्ञाश्च ते सर्व्वाः किमस्मानवमन्यसे । कुशनाभसुता देव ! समस्ताः सुरसत्तम ! ॥ स्थाना-च्च्यावयितुं देवं रक्षामस्तु तपो वयम् । मा भूत् स कालो दुर्म्मेधः ! पितरं सत्यवादिनम् । अवमन्य स्वधर्म्मेण स्वयं वरमुपास्महे । पिता हि प्रभुरस्माकं दैवतं परमञ्च सः । यस्य नो दास्यति पिता स नो भर्त्ता भविष्यति । तासां तु वचनं श्रुत्वा हरिः परमकोपनः । प्रविश्य सर्व्वगा-त्राणि बभञ्ज भगवान् प्रभुः । ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् । प्रविश्य च सुसम्भ्रान्ताः सलज्जाः साश्रुलोचनाः । स च ता दयिता भग्नाः कन्याः पर-मशोभनाः । दृष्ट्वा दीनस्तदा राजा ससम्भ्रान्त इदमब्रवीत् । किमिदं कथ्यतां पुत्र्यः ! को धर्म्ममवमन्यते । कुब्जाः केन कृताः सर्व्वाश्चेष्टन्त्यो नाभिभाषत"।

कन्याकूप पु० तीर्थभेदे । "कन्याकूपे उपस्पृश्य बलाकायां कृतोदकः" भा० अनु० २५ अ० ।

कन्याट पु० कन्या अटत्यत्र आधारे घञ् । वासभवने त्रिका० स्त्रीणां वासगृहे एव गतिविधानात् अन्यत्र-गतिनिषेधाच्च तस्य तथात्वम् ।

कन्यातीर्थ न० १कुरुक्षेत्रस्थे कुरुक्षेत्रसमीपस्थतीर्थभेदे कुरु-तीर्थान्युपक्रम्य "ततो गच्छेत धर्म्मज्ञ! कन्यातीर्थमनुत्तमम् । कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्" भा० व० ८३ अ० । समुद्रकावेरीसङ्गमनिकटस्थे २तीर्थभेदे च । "ततो गच्छेत कावेरीं वृतामप्सरसां गणैः । तत्र स्नात्वा नरो राजन् ! गोसहस्रफलं लभेत् । ततस्तीरे समुद्रस्य कन्यातीर्थ उपस्पृशेत् । तत्रोपस्पृश्य राजेन्द्र ! सर्व्व-पापैः प्रमुच्यते" ८५ अ० । [illegible] तस्य कन्यातीर्थत्वम् ।

कन्याधन न० कन्याकाले लब्धं धनम् । स्त्रीधनभेदे शुल्कादौ । अनूढायाश्च तन्मरणे तादृग्धने भ्रातुरधिकारः "भगिनीशुल्कं सोदर्य्याणाम्" गौतमोक्तेः ।

कन्यापति पु० ६त० । जामातरि जटाधरः ।

कन्यापाल पु० कन्याप्रधानः पालः । पालाख्ये वणिग्-जातिभेदे त्रिका० स्त्रियां ङीप् । ६त०। २कन्यायाः पालके त्रि० ।

कन्याभर्त्तृ पु० कन्याभिः प्रार्थनीयः भर्त्ता । कार्त्तिकेये तस्य सौन्दर्य्यातिशयात् सर्व्वकामिनीभिर्भर्त्तृत्वेन प्रार्थनात् तथा-त्वम् । "आग्नेयश्चैव स्कन्दश्च" इत्युपक्रम्य "कन्याभर्त्ता विमलश्च स्वाहेयो रेवतीसुतः" भा० व० २३१ कार्त्ति-केयनामसु तन्नाम पठितम् । ६त०। २जामातरि पु० ।

[कन्या]मय न० कन्या+प्राचुर्य्ये मयट् । कन्याप्रचुरे अन्तःपुरे

[कन्या]राम पु० बुद्धभेदे त्रिका० ।

क[न्या]वेदिन् पु० कन्यां दुहितरमाविन्दति आ+विद-णिनि । जामातरि । "कन्यां कन्यावेदिनश्च पशून् मुख्यान् सुतानपि" वा० द्वितीयाद्यस्य प्रथम-लाभात्तथात्वरूपं फलमुक्तम् ।

कन्याश्रम न० तीर्थभेदे । "ततः कन्याश्रमं गच्छेत् नियतो ब्रह्मचर्य्यवान् । त्रिरात्रोपोषितो राजन् ! नियतो नियताशनः । लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति" भा० व० ८३ ।

कन्यासंवेद्य न० तीर्थभेदे । "कन्यासंवेद्यमासाद्य नियतो नियताशनः । मनोः प्रजापतेर्लोकानाप्नोति भरतर्षभ ! । कन्यायां ये तु प्रयच्छन्ति दानमण्वपि भारत ! । तदक्षयमिति प्राहुर्ऋषयः संशितव्रताः" भा० व० ८४ ।

कन्याह्रद पु० तीर्थभेदे । "यस्तु कन्याह्रदे वासो देवलोकं स गच्छति" भा० अनु० २५ अ० ।

कन्यका स्त्री कन्यैव कन् काम्यत्वेनोत्पन्नत्वात् वा अत्र रूपम् । कन्यायां शब्दरत्ना० ।

द्वाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां पयस्या इडस्पतये, पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिंशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः" यजु० २८, ६० ।
क्षुद्ररोगभेदे न० हेमच० तल्लक्षणम् यथा । "कृष्णारुणकपालाभः यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम्" माधवनि० । सुश्रुते महाकुष्ठान्यरुणोडुम्बरर्ष्यजिह्वकपाल काकणकपुण्डरीकदद्रु कुष्ठानीति विभज्य कृष्णकपालिकाप्रकाशानि कपालकुष्ठानीति लक्षितम् ।

**कपालनालिका** स्त्री कपालस्य सूत्रघमृष्टस्य नालिकेव निःसरणहेतुत्वात् । सूत्रसंघनिःसारणहेतौ तर्क्वौ (टोको) त्रिका० ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ–क्विप् । १शिवे महादेवे अमरः । तस्य यथा ब्रह्मशिरःकपालभृत्त्वा तथा कपालमोचनशब्दे वक्ष्यते २कपालधारके भिक्षुके च त्रि०। कपालधारकादयोऽप्यत्र ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि । १शिवे कपालमोचनशब्दे विवृतिः "कपालमालिने नि-सुवर्णमुकुटाय च" भा० आनु० ८४ । २दुर्गायां स्त्री ङीप् ।

**कपालमोचन** न० कपालं मुच्यतेऽत्र मुच–आधारे ल्युट् काशीस्थे तीर्थभेदे। तन्मूलं तत्कथा काशीख० ३१अ० यथा "पुरा पितामहं विप्र ! मेरुशृङ्गे महर्षयः। प्रोचुः प्रणम्य लोकेशं किमेकं तत्त्वमव्ययम् । स मायया महेशस्य मोहितो लोकसम्भवः । अविज्ञाय परं भावमात्मानं प्राह वर्ष्मिणम् । जगद्योनिरहं धाता स्वयम्भूरेक ईश्वरः । अनादिमदहं ब्रह्म मामनर्च्य न मुच्यते । प्रवर्त्तको हि जगतामहमेव निवर्त्तकः । नान्यो मदधिकः कश्चित् क्वापि सुरोत्तमः । तस्यैवं ब्रुवतोऽधात्रः क्रतुर्नारायणांशजः । प्रोवाच प्रहसन्वाक्यं रोषताम्रविलोचनः । अविज्ञाय परं तत्त्वं किमेतत् प्रतिभाष्यते । अज्ञानं योगयुक्तस्य नचैतदुचितं तव । अहं कर्त्ता हि लोकानां यज्ञो नारायणः परः । न मामनादृत्य विधे ! जीवनं जगतामज ! । अहमेव परं ज्योतिरहमेव परा गतिः । मत्प्रेरितेन भवता सृष्टिरेषा विधीयते । एवं विमतयो मोहात् परस्परजयैषिणौ । पप्रच्छतुः प्रमाणज्ञानाम्नायांश्चतुरोऽपि तौ । विधिक्रतू ऊचतुः। वेदाः प्रमाणं सर्वत्र प्रतिष्ठां परमाश्रिताः । यूयमेव न सन्देहः क्रियतां प्रतिनिश्चितं । श्रुतयऊचुः। यदि मान्या वयं देवौ ! सृष्टिस्थितिकरौ ! विभू ! । तदा प्रमाणं वक्ष्यामो भवत्सन्देहभेदकम् । इत्थं श्रुतमिदमाकर्ण्य प्रोचतुस्तौ श्रुतीः प्रति । युष्मदुक्तं प्रमाणं नौ तत्त्वं तत्सम्यगुच्यताम् । ऋगुवाच । यदन्तःस्थानि भूतानि यतः सर्वं प्रवर्त्तते । यदाहुस्तत् परं तत्त्वं स रुद्रस्त्वेक एव हि । यजुरुवाच । योयज्ञैरखिलैरीश्यो यो योगेन समीक्ष्यते । येन प्रमाणं वयं वा हि स एकः सर्वदृक् शिवः । सामोवाच । येनेदं भ्राम्यते विश्वं योगिभिर्यो विचिन्त्यते । यद्भासा भासते विश्वं स एकस्त्र्यम्बकः परः । अथर्वोवाच । यं प्रपश्यन्ति देवेशं भक्त्यानुग्राहिणोजनाः । तमाहुरेकं कैवल्यं शङ्करं दुःखतस्करम् । श्रुतीरितं निशम्येत्थं नाऽतीव विमोहितौ । विहस्योचतुः क्रतुविधी महामर्षयुतौ मुने ! । कथं प्रमथनाथोऽसौ रममाणो निरन्तरम् । दिगम्बरः पितृवने शिवया धूलिधूसरः । विटङ्कवेषो जटिलो वृषगोव्यालभूषणः । परं ब्रह्मत्वमापन्नः क्व तत्सङ्गविवर्जितम् । तदुदीरितमाकर्ण्य प्रणवात्मा सनातनः । अमूर्त्तोमूर्त्तिमान् भूत्वा इदमाह तदा च तौ । प्रणव उवाच । न ह्येष भगवान् शक्त्या चात्मनो व्यतिरिक्तया । कदाचिद्रमते रुद्रो लीलारूपधरो हरः । असौ हि भगवानीशः स्वयंज्योतिः सनातनः । आनन्दरूपा तस्यैषा शक्तिर्नागन्तुका शिवा । इत्येवमुक्तेऽपि तदा मखमूर्त्तेरजस्य हि । नाज्ञानमगमन्नाशं श्रीकण्ठस्यैव मायया । प्रादुरासीत्ततो ज्योतिरुभयोरन्तरे महत् । पूरयन्निजया भासा द्यावाभूम्योर्यदन्तरम् । ज्योतिर्मण्डलमध्यस्थो ददृशे पुरुषाकृतिः । प्रजज्वालाथ कोपेन ब्रह्मणः पञ्चमं शिरः । आवयोरन्तरं कोऽसौ बिभृयात् पुरुषाकृतिम् । विधिः संभावये यावत्तावत् सहि विलोकितः । क्षणाद्दृष्टेन च महान् पुरुषो नीललोहितः । त्रिशूलपाणिर्भालाक्षो नागोडुपविभूषणः । हिरण्यगर्भस्तं प्राह जाने त्वां चन्द्रशेखरम् । भालस्थलान्मम पुरा रुद्रः प्रादुरभूद्भवान् । रोदनाद्रुद्रनामापि योजितोऽसि मया पुरा । मामेव शरणं याहि पुत्र ! रक्षां करोमि ते । अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम् । स कोपतः समुत्पाद्य पुरुषं भैरवाकृतिम् । प्राह पङ्कजजन्माऽसौ शास्यस्ते कालभैरव ! । कालवद्राजसे यस्मात् कालराजस्ततो भवान् । विश्वं भर्त्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः । त्वत्तोभेष्यति कालोऽपि

ततस्त्वं कालभैरवः । आमर्दयिष्यति भवान् यतो दुष्टात्मनोऽयतः । आमर्दक इति ख्यातिं ततः सर्व्वत्र यास्यति । यतः पापानि भक्तानां भक्षयिष्यति तत्क्षणात् । पापभक्षण इत्येतत्तव नाम भविष्यति । या मे मुक्तिपुरी काशी सर्व्वाभ्योऽपि गरीयसी । आधिपत्यञ्च तस्यास्ते कालराज ! सदैव हि । तत्र ये पापकर्त्तारस्तेषां शास्ता त्वमेव हि । शुभाशुभं न तत् कर्म चित्रगुप्तो लिखिष्यति । एतान् वरान् समादाय तत्क्षणात् कालभैरवः । वामाङ्गुलिनखाग्रेण चकर्त्त च शिरो विधेः । यदङ्गमपराध्नोति कार्य्यं तस्यैव शासनम् । अतो येन कृता निन्दा तच्छिन्नं पञ्चमं शिरः । यज्ञमूर्त्तिधरो विष्णुस्ततस्तुष्टाव शङ्करम् । भीतो हिरण्यगर्भोऽपि जजाप शतरुद्रियम् । आश्वास्य तौ महादेवः प्रीतः प्रणतवत्सलः । प्राह स्वमूर्त्तिमपरां भैरवं तं कपर्द्दिनम् । मान्योऽध्वरेशो भवता तथा शतधृतिस्त्वयम् । कपालं वेधसश्चापि नीललोहित ! धारय । ब्रह्महत्यापनोदाय व्रतं लोकाय दर्शयन् । चर त्वं सततं भिक्षां कपालिव्रतमास्थितः । इत्युक्त्वान्तर्हितो देवः प्रीतः प्रणतवत्सलः । उत्पाद्य कन्यामेकान्तु ब्रह्महत्येति विश्रुताम् । रक्ताम्बरधरां रक्तां रक्तस्रगनुलेपनाम् । दंष्ट्राकरालवदनां ललज्जिह्वातिभीषणाम् । अन्तरीक्षैकपादाभ्यां पिबन्तीं रुधिरं बहु । कर्त्तृकर्परहस्ताग्रां स्फुटं पिङ्गोग्रतारकाम् । जनयन्तीं महोद्वेगं भैरवस्यापि भीषणाम् । यावद्वाराणसीं दिव्यां पुरीमेष गमिष्यति । तावत्त्वं भीषणे ! कालमनुगच्छोपलक्षिणि ! । सर्व्वत्र ते प्रवेशोऽस्ति मुक्त्वा वाराणसीं पुरीम् । नियोज्य तामिति शिवोऽप्यन्तर्धानं गतस्ततः । तच्छापशिष्याद्रुद्रेऽपि कालोऽभूत् कालकालनः । स देवदेववाक्येन बिभ्रत् कापालिकं व्रतम् । कपालपाणिर्विश्वात्मा चचार भुवनत्रयम् । नालालीलापि तं देवं ब्रह्महत्यातिदारुणा । सत्यलोकेऽपि वैकुण्ठे महेन्द्रादिपुरीष्वपि । त्रिजगत्पती रुद्रोऽपि भ्रमतीति जगतीचरन् । प्रतितीर्थं भ्रमताापि विमुक्तो ब्रह्महत्यया । अनेनैवानुमानेन महिमा त्ववगम्यताम् । ब्रह्महत्यापनोदिन्याः काश्याः कलशसम्भव ! । सन्ति तीर्थान्यनेकानि बहून्यायतनानि च । अविमुक्तस्य नो काश्याः कलामर्हन्ति षोडशीम् । तावद्गर्जन्ति पापानि ब्रह्महत्यादिकान्यलम् । यावन्नाम न शृण्वन्ति काश्याः पापापचायिनः । प्रमथैः सेव्यमानोऽपि त्रिलोकीं विचरन् हरः । कापालिको ययौ देवो नारायण-

निकेतनम् । अथायान्तं महाकालं त्रिनेत्रं धृतकुण्डलम् । महादेवांशसम्भूतं भैरवं भीषणाकृतिम् । पपात दण्डवद्भूमौ दृष्ट्वा तं गरुडध्वजः । देवाश्च मुनयश्चापि देवनार्य्यः समन्ततः । निनेमुः प्रणिपत्यैनं प्रणतः कमलापतिः । शिरस्यञ्जलिमारोप्य स्तुत्वा बहुविधैः स्तवैः । क्षीरोदमथनोद्भूतां प्राह पद्मालयां हरिः । प्रिये ! पश्याब्जनयने ! धन्याऽसि शुभगेऽनघे ! । धन्योऽहं देवि ! सुश्रोणि ! यत् पश्यावो जगत्पतिम् । अयं धाता विधाता च लोकानां प्रभुरीश्वरः । अनादिशरणं शान्तः परः षड्विंशसम्मितः । सर्व्वज्ञः सर्व्वयोगीशः सर्व्वभूतैकनायकः । सर्व्वभूतान्तरात्मायं सर्व्वगः सर्व्वदः सदा । यं विनिद्रा विनिःश्वासाः शान्ता ध्यानपरायणाः । धिया पश्यन्ति हृदये सोऽयमद्य निरीक्ष्यताम् । यं विदुर्वेदतत्त्वज्ञा योगिनो जितमानसाः । अरूपो रूपवान् भूत्वा सोऽयमायाति सर्व्वगः । अहो विचित्रं देवस्य चेष्टितं परमेष्ठिनः । यस्याख्यां शृण्वतो नित्यं न देहः कोऽपि देहभृत् । यं दृष्ट्वा न पुनर्जन्म लभ्यते मानवैर्भुवि । सोऽयमायाति भगवान् त्र्यम्बकः शशिभूषणः । पुण्डरीकदलायामे धन्ये मेऽद्य विलोचने । ययोरतिथितां नीतो लोकाद्भुतधरो हरः । धिग्धिक् पदन्तु देवानां परं दृष्ट्वा तु शङ्करम् । लभ्यते यत्र निर्व्वाणं सर्व्वदुःखान्तलक्षणम् । देवत्वादशुभं किञ्चिद्देवि ! लोके न विद्यते । दृष्टापि सर्व्वदेवेशं यत्किञ्चिन्न लभामहे । एवमुक्त्वा हृषीकेशः संप्रहृष्टतनूरुहः । प्रणिपत्य महादेवमिदमाह वृषध्वजम् । किमिदं देवदेवेन सर्व्वज्ञेन त्वया विभो ! । क्रियते जगतां धात्रा सर्व्वपापहराव्यय ! । क्रीडेयमत्र देवेश ! त्रिलोचन ! महाद्युते ! किं कारणं विरूपाक्ष ! चेष्टितं ते स्मरार्द्दन ! । किमर्थं भगवन् शम्भो ! भिक्षाश्चरसि शङ्कर ! । संशयो मे जगन्नाथ ! नतत्रैलोक्यराज्यद ! । एवमुक्तस्ततः शम्भुर्विष्णुमेतदुदाहरत् । ब्रह्मणस्तु शिरश्छिन्नमङ्गुष्ठनखकेन ह । तदघप्रत्यहं विष्णो ! चराम्येतद्व्रतं शुभम् । एवमुक्तो महेशेन पुण्डरीकविलोचनः । स्मित्वा किञ्चिन्नतशिराः पुनरेवं व्यजिज्ञपत् । यथेच्छसि तथा क्रीड सर्व्वविष्टपनायक ! । मायया मां महादेव ! न छादयितुमर्हसि । नाभीकमलकोषात्तु कोटिशः कमलासनान् । कल्पे कल्पे सृजामीश त्वन्नियोगबलाद्विभो ! । त्यज मायामिमां देव ! दुस्तरामकृतात्मभिः । मदादयो महादेव ! मायया तव मोहिताः । यथावन्नावगच्छामश्चेष्टितन्ते शिवापते ! ।

संहारकाले संप्राप्ते सदेवानखिलान् मुनीन्। लोकान् सर्व्वाश्रमवतो हरिष्यसि यदा हर!। तदा क्व ते महादेव! पापं ब्रह्मवधादिकम्। पारतन्त्र्यं न ते शम्भो! स्वैरं लोके स्ततोभवान्। व्यतीतब्रह्मणामस्थां स्रक् कण्ठे तेऽवभासते। यदा तदा क्वानुगता त्वां हत्या ब्रह्मणोऽनघ। कृत्वापि सुमहत् पापं त्वां यः स्मरति भावतः। आधारं जगतामीश! तस्य पापं विलीयते। यथा तमोन तिष्ठेत सन्निधावंशुमालिनः। तथा च तव भक्तस्य पापं नश्यति तत्क्षणम्। यश्चिन्तयति पुण्यात्मा तव पादाम्बुजद्वयम्। ब्रह्महत्याभवमपि पापं तस्य व्रजेत् क्षयम्। तव नामानुरक्ता वाग्यस्य पुंसो जगत्पते!। अप्यद्रिकूटवच्चितं नैनस्तमनुधावति। रजसा तमसा विवर्द्धितं क्व नु पापं परितापदायकम्। क्व च ते शिवनाम मङ्गलं जनजीवातु जगत्तापहम्। यदि जातु शिवस्त्वकाहिवस्तव नामीशपुटाद्विनिःसृतम्। शिव! शङ्कर! चन्द्रशेखरेत्य महनाम न संसृतिः पुनः। परमात्मन्! परं धाम स्वेच्छाविहितविग्रह!। कुतूहलं तवैवेदं क्व पराधीनता शिवे। अद्य धन्योऽस्मि देवेश! यत्र पश्यन्ति योगिनः। पश्यामि त्वां जगन्नाथमव्ययं परमेश्वरम्। अद्य मे परमोलाभस्तदा मे मङ्गलं परम्। त्वद्दर्शनात्प्रशस्यं स्वर्गापवर्गकम्। इत्थं वदति गोविन्दे विमल पद्मया तया। मनोरथवती नाम भिक्षा पात्रे समर्पिता। भिक्षाटनाय देवोऽपि निरगात् परया मुदा। हत्यानुयायिनीन्तु समाहूय जनार्द्दनः। संप्रार्थयद्ब्रह्महत्यां विमुञ्चेति त्रिशूलिनम्। ब्रह्महत्योवाच। अनेनापि मिषेणाहं संसेव्याद्य वृषध्वजम्। आत्मानं पावयिष्यामि क्व पुनर्भवदर्शनम्। सा तत्याज न तत्पार्श्वं व्याहृतापि मुरारिणा। तमूचेऽथ हरिं शम्भुः स्मेरास्यो वचनं शुभम्। त्वद्वाक्यामृतपानेन तुष्टोऽस्मि यदुभामद!। वरं वृणीष्व गोविन्द! वरदोऽस्मि तवानघ!। न माद्यन्ति तथा मखैर्मखवतोऽप्यतिसंस्कृतैः। यथा मानसुधापानैर्नैनु भिक्षाटनज्वराः। विष्णुरुवाच। एष एव वरः श्लाघ्यो यदहं देवताधिपम्। पश्यामि त्वां देव देवं मनोरथपथातिगम्। अलभ्येयं सुधावृष्टिरनायासो महोत्सवः। अयत्नो निधिलाभोऽयं पीयूषं हरते सताम्। अवियोगस्तु मे देव। त्वदङ्घ्रियुगलेन वै। एष एव वरः शम्भो! नान्यं कञ्चिद्वरं वृणे। श्रीभैरव उवाच। एवं भवतु ते देव! यत्त्वयोक्तं महामते!। सर्व्वेषामेव देवानां वरदस्त्वं भविष्यसि। अनुज्ञाप्येति दैत्यारिं स्वेन्द्रादिभुवने चरन्। भेजे विमुक्तिजननीं नाम्ना वाराणसीं पुरीम्। यत्र स्थितानां जन्तूनां कलां नार्हन्ति षोडशीम्। अपि ब्रह्मादि देवानां पदानि विपदास्पदम्। वरं वाराणसीवासो जटाकुलोदिगम्बरः। नान्यत्र कलमस्यश्च वसुधामण्डलेश्वरः। वरं वाराणसी भिक्षा न क्ष्माधिपतान्यतः। क्ष्माधीशोऽपि विशेद्गर्भं तद्भिक्षाशी न गर्भभाक्। भिक्षापि यत्र भिक्षुभ्यो दत्ताऽमृतसम्मिता। सुमेरुणापि तुलिता वाराणस्यां सुवर्णभेत्। वर्षाशनं हि योदद्यात् काश्यां शीदत्कुटुम्बिने। यावन्त्यहानि तावन्ति युगानि स दिवीज्यते। वाराणस्यां वर्षभोज्यं योदद्याच्चिरवासिने। स कदाचित् क्षुत्तृषा नो दुःखं भुङ्क्ते नरर्षभ!। वाराणस्यां निवसतां यत्पुण्य मुपजायते। तदेव संश्रावयितुः फलं त्वविकलं भवेत्। ब्रह्महत्यादिपापानि यस्या नाम्नोऽपि कीर्त्तनात्। व्रजन्ति पापिनां काशी सा केनेहोपमीयते। तत्र प्रविष्टमात्रेऽथ भैरवे भीषणाकृतौ। हाहेत्युक्त्वा ब्रह्महत्या पातालसदनमाविशत्। कपालं ब्रह्मणोरुद्रः सर्व्वेषामेव पश्यताम्। हस्तात्पतितमालोक्य ननर्त्त परया मुदा। विधेः कपालं नामुञ्चत् करमत्यन्तदुःखजम्। हरस्य भ्रमतः क्वापि तत् काश्यां च्यवतोऽपतत्। स्थानिनो ब्रह्मणोहत्या नायैति क्वैव या क्वचित्। सा काश्यां च्यवतोनष्टा कथं काशी न दुर्लभा। वाराणसीति काशीति महामन्त्रमिमं जपन्। यावज्जीवं त्रिसन्ध्यन्तु जन्तुर्जातु न जायते। अविमुक्तं महाक्षेत्रं स्मरन् प्राणांस्तु सन्त्यजेत्। दूरदेशान्तरस्थोऽपि सोऽपि जातु न जायते। आनन्दकाननं यस्य चित्तं स्फुरते सदा। तत्क्षेत्रनामस्मरणात् स भूयोऽभिजायते। रुद्रावासे वसेच्चिरं नरोनियतमानसः। एनसामपि सम्भारं कृत्वा तस्माद्विमुच्यते। महाश्मशानमासाद्य यदि दैवाद्विपद्यते। पुनः श्मशानशयनं न क्वापि लभते पुमान्। कपालमोचनं काश्यां ये स्मरिष्यन्ति मानवाः। तेषां विनङ्क्ष्यति क्षिप्रमिहान्यत्रापि पातकम्। आगत्य तीर्थवरे स्नानं कृत्वा विधानतः। तर्पयित्वा पितॄन् देवान् मुच्यते ब्रह्महत्यया"।

भैरवमहादेवयोरभेदात् महादेवे कपालभृत्त्वादिव्यपदेशः। "कपालमोचनं तीर्थं सर्व्वपापप्रमोचनम्। तत्र स्नात्वा नरव्याघ्र! सर्व्वपापैः प्रमुच्यते" भा॰व॰८३ अध्याये।

**कपालशिरस्** पु॰ कपालं शिरसि यस्य। महादेवे "अमय-

फलत्वात् । जतुकालतायां राजनि० तस्याश्च तत्फल-त्वात्तथात्वम् । [(आलकुषी) शूकशिम्ब्याम् भरतः

**कपिकच्छुरा** स्त्री कपिभ्यः कच्छूं राति ददाति रा—क ।

**कपिकन्दुक** न० कपि+कदि–उक कतोलोपः कस्य शिरसः पिकन्दुकम् । शिरोस्थि शब्दच० ।

**कपिका** स्त्री कपिरिवाह इव कायति प्रकाशते कथुत्वात् कै–क । नीलसिन्धुवारवृक्षे राजनि० ।

**कपिकेतन** पु० कपिश्चिह्नमस्मात् केतने यस्य । अर्जुने कपिध्वजे "स्थानपूर्वमिदं वाक्यमब्रवीत् कपिकेतनः" भा० आश्व० ८२। यथा च तस्य कपिकेतनता तथावर्णितं भा० व० १५१अ०। "एवमुक्तस्तु हनुमान् भीमसेनमभाषत । भ्रातृत्वात् सौहृदाच्चैव करिष्यामि प्रियं तव । चमूं विगाह्य शत्रूणां परशक्तिसमाकुलाम् । यदा सिंहरवं वीर ! करिष्यसि महाबल ! । तदाहं बृंहयिष्यामि स्वरवेण रवं तव । विजयस्य ध्वजस्थश्च नादान् मोक्ष्यामि दारुणान् । शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ" । कपिध्वजादयोऽप्यत्र ।

**कपिकोलि** पु० कपीनां प्रियः कोलिः । (शेयाकुल) कोलिभेदे रत्नमा० ।

**कपिचूडा** स्त्री कपीनां चूडेव । आम्रातकवृक्षे राजनि० । तन्तुकस्य कपिचूडातुल्यतया तथात्वम् । [ त्रिका०

**कपिचूत** पु० कपीनां चूत इव प्रियत्वात् । आम्रातकवृक्षे

**कपिज** पु० कपितोजायते जन–ड । कपितैले तुरुष्के (शिलारस) राजनि० ।

**कपिजङ्घिका** स्त्री कपेर्जङ्घेव जङ्घा यस्याः संज्ञायां कन् । तैलपिपीलिकायां (तेलापोका) राजनि० तस्याः कपितुल्यदीर्घजङ्घत्वात्तथात्वम् ।

**कपिञ्जल** पुंस्त्री "कपिरिव जवते ईषत् पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा" निरुक्तोक्ता व्युत्पत्तिः पृषो० । १पक्षिभेदे चातके राजवल्ल० जलयाचनाय तस्य रम्यशब्दकरणात् तथात्वम् । २तित्तिरौ त्रिका० । तित्तिरिरिह श्वेत एव ग्राह्यः । "वर्त्तिकालावबर्त्तीर कपिञ्जलकतित्तिराः । कलिङ्गाः कुक्कुटाद्याश्च विष्किराः समुदाहृताः । विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः । कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरिः" भावप्र०उक्तेः अतएव "वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरीन्" यजु० २४,२० । कपिञ्जलतित्तिरीणां भेदेन निर्देशः "कपिञ्जलः कपोत उलूकः शशस्ते निरृत्यै" यजु० २४,३८ तस्य चारकत्वात् तद्देवतोद्देशेन तत्सर्ग एवालाभनम् । "कपिञ्जलादीनुत्सृजति पर्य्यग्निकृतान्" कात्या० ४०,६,८ उक्तेः । कपिञ्जलमांसगुणाश्च भावप्र० उक्ताः कपिञ्जलादीन् विष्किरानुक्त्वा "विष्किराः मधुराः शीताः कषायाः कटुपाकिनः । बल्यावृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः" । कपिञ्जलशब्दस्यावर्णान्तत्वेन द्व्यच्त्र्यच्भिन्नत्वेन च अर्म्मशब्देन समासे न आद्युदात्तत्वम् । "अर्म्मे चावर्णं द्व्यच्त्र्यच्" पा० सूत्रात्

**कपिञ्जलन्याय** पु० बहुत्वस्य त्रित्वपर्य्यवसायिताख्यापके न्यायभेदे स च न्यायो यथा "वसन्ताय कपिञ्जलानालभेतेति" श्रुत्या कपिञ्जलगतं बहुत्वं बोधितं तच्च त्रिशब्दितं विधेयसंख्यात्वात् कपिञ्जलस्यान्यतोऽप्राप्तत्वात् विधेयत्वं बहुत्वं च त्रित्वमारभ्य परार्द्धपर्य्यन्तपर्य्यवसन्नमित्यनव्यवसायेनाप्रवृत्त्या वेदाप्रामाण्यापत्तिरिति मात्रेराह "प्रथमोपस्थितत्वात्" लौ० सू० । त्रित्वोत्पत्त्यनन्तरं त्रित्वघटितत्वबहुत्वा चतुष्ट्वं जन्यते तत्र त्रित्वस्य प्रथमोपस्थितत्वात् वेदबोध्यबहुत्वस्य तत्रैव पर्य्यवसानाध्यवसायः संख्यायाम् एकत्वस्येव बहुत्वसंख्यायां त्रित्वस्यैव प्रथमोपस्थितत्वात्तत्रैव वेदतात्पर्य्यात् । अपेक्षाबुद्धिकृतत्वेनत्वमयेव त्रित्वम् एवं तथाविधैकत्वचतुष्केण चतुष्टं जन्यते इति मते तु कारणीभूतापेक्षाबुद्धिलाघवेन प्रथमोपस्थितत्रित्वस्यैव वेदबोध्यता नातोऽप्रवृत्तिः अतएव वैया० भू० संख्यायाम् एकत्वसंख्याया एव यत्र कपिञ्जलालम्भवाक्ये त्रित्वपरत्वं दृष्टान्तीकृतं यथा "अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः । कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद्यथोच्यते" । "बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवदेकत्वस्य सर्व्वतः प्रथमोपस्थितत्वमस्तीति भावः" ।

**कपितैल** न० कपिभिः शिलायादारणेन निष्पादितं तैलम् । सिल्हके तुरुष्के गन्धद्रव्यभेदे (शिलारस) । "सिल्हकस्तु तुरुष्कः स्याद्यतो यवनदेशजः । कपितैलञ्च संख्यातं तथा च कपिनामकः" भावप्र० । तेन तुरुष्कस्य यवनदेशोद्भवशिलादलनेन कपिभिरुद्भावनात्तस्य तथात्वम् ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था–क पृषो० । (कयतबेल) वृक्षभेदे "तिरोवाते तिरोवाते कपित्थवदरायनः" भाग० ४,८,६३ । तस्य गुणपर्य्यायादि भावप्र० उक्तं यथा । "कपित्थस्तु दधित्थः स्यात्तथा पुष्पफलः स्मृतः । कपिप्रियोदधिफलस्तथा दन्तशठोऽपि च । कपित्थमाम

कृषिवाणिज्यादिकर्म्मणां फलेन सम्बध्यते । तथा निरूप्य राजा सर्व्वदा राष्ट्रात् करान् स्वक्षीयात् । अत्र दृष्टान्तमाह यथेत्यादि । यथा जलौकोवत्सभ्रमराः स्तोकस्तोकानि रक्तक्षीरमधूनि अदन्त्येवं राजा मूलधनमनुच्छिन्दताऽल्पोऽल्पो राष्ट्रादाब्दिकः करो ग्राह्यः । तमाह पञ्चाशद्भागो राज्ञा ग्रहीतव्यः । एवं धान्यानां षष्ठोऽष्टमो द्वादशो वा भागो ग्राह्यः भूम्युत्कर्षापकर्षापेक्षया कर्षणादिक्लेशलाघवगौरवापेक्षोऽयं षड्भागपक्षविकल्पः । आददीतेत्यादि । पत्रशाकतृणानामित्यादि । द्रुमशब्दोऽत्र वृक्षवाचकः वृक्षादीनां अश्ममयान्तानां षष्ठो भागो लाभादुपहर्त्तव्यः । म्रियमाण इति । क्षीणधनोऽपि राजा श्रोत्रियब्राह्मणात् करं न गृह्णीयात् न च तदीयदेशे वसन् श्रोत्रियः क्षुधया अवसादं गच्छेत् । यस्येत्यादि । यस्य राज्ञो देशे श्रोत्रियः क्षुधाऽवसन्नो भवति तस्य राष्ट्रमपि दुर्भिक्षादिभिः क्षुधा शीघ्रमवसादं गच्छति । यत एवमतः श्रुतेति । शास्त्रज्ञानानुष्ठाने ज्ञात्वा अस्य तदनुरूपां धर्म्मादनपेतां जीविकामुपकल्पयेत् चौरादिभ्यश्चैनम् औरसं पुत्त्रमिव पिता रक्षेत् । संरक्ष्यमाण इत्यादि । स च श्रोत्रियो राज्ञा सम्यग्रक्ष्यमाणो यं धर्म्मं प्रत्यहं करोति तेन राज्ञ आयुर्द्धनराष्ट्राणि वर्द्धन्ते । यत्किञ्चिदिति । राजा स्वदेशे शाकपर्णादिस्वल्पमूल्यवस्तुक्रयविक्रयादिना जीवन्तं निकृष्टजनं स्वल्पमपि कराख्यं वार्षिकं दापयेत् । कारुकानिति । कारुकान् सूपकारादीन् शिल्पिनश्च रजकतक्षादीन् शिल्पिनश्च लोहकारादीन् शूद्रांश्च देहक्लेशोपजीविनो भारिकादीन् मासि मास्येकं दिनं कर्म्म कारयेत् । नोच्छिन्द्यादिति । प्रजास्नेहात् करशुल्कादेरग्रहणमात्मनो मूलोच्छेदः अतिलोभेन प्रचुरकरादिग्रहणे परेषां मूलोच्छेदः एतदुभयं न कुर्य्यात् यस्मात् आत्मनो मूलमुच्छिद्य कोषक्षयादात्मानं पीडयेत् । पूर्व्वार्द्धात् [परेषाञ्चेत्यपि संबध्यते परेषां मूलमुच्छिद्य तांश्च पीडयेत्"।

भार० शा० ८७अ० विस्तरेणोक्तं यथा

"विक्रयं क्रयमध्वानं भक्तञ्च सपरिच्छदम् । योगक्षेमञ्च सम्प्रेक्ष्य वणिजां कारयेत् करान् । उत्पत्तिं दानवृत्तिञ्च शिल्पं संप्रेक्ष्य चासकृत् । शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत् । उच्चावचकरा दाप्याः महाराजा युधिष्ठिर ! । यथा यथा न सीदेरंस्तथा कुर्य्यान्महीपतिः । फलं कर्म्म च सम्प्रेक्ष्य ततः सर्व्वं प्रकल्पयेत् । फलं कर्म्म च निर्हेतु न कश्चित् संप्रवर्त्तते । यथा राजा च कर्त्ता च स्यातां कर्म्मणि भागिनौ । समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः । नोच्छिन्द्यादात्मनो मूलं परेषाञ्चापि तृष्णया । ईहाद्वाराणि संरुध्य राजा सम्प्रीतिदर्शनः । प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् । प्रद्विष्टस्य कुतः श्रेयो नाप्रियो लभते फलम् । वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना । भृतो वत्सो जातबलः पीडां सहति भारत ! । न कर्म्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ! । राष्ट्रमप्यतिदुग्धं हि न कर्म्म कुरुते महत् । यो राष्ट्रमनुगृह्णाति परिरक्षन् स्वयं नृपः । सञ्जातमुपजीवन् स लभते न महत् फलम् । आपदर्थञ्च निर्यातं राजा न इह विन्दते । राष्ट्रञ्च कोषभूतं स्यात् कोषो वेश्मगतस्तथा । पौरजानपदान् सर्व्वान् संश्रितोपाश्रितांस्तथा । यथाशक्त्यनुकम्पेत सर्व्वान् स्वल्पधनानपि । बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् । एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः । प्रागेव तु धनादानमनुभाष्य ततः पुनः । सन्निपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् । इयमापत् समुत्पन्ना परचक्रभयं महत् । अपि चान्ताय कल्पन्ते वेणोरिव फलागमः । अरयो मे समुत्थाय बहुभिर्दस्युभिः सह । इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् । अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये । परित्राणाय भवतः प्रार्थयिष्ये धनानि वः । प्रतिदास्ये च भवतां सर्व्वञ्चाहं भयक्षये । नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः । कलत्रमादितः कृत्वा सर्व्वं वो विनशेदिति । अपि चेत् पुत्त्रदारार्थमर्थसञ्चय इष्यते । नन्दामि वः प्रभावेण पुत्त्राणामिव चोदये । यथाशक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः । आपत्स्वेव हि वोढव्यं भवद्भिः पुङ्गवैरिव । न प्रियं सततं कार्य्यं धनं कस्याञ्चिदापदि । इति वाचा मधुरया श्लक्ष्णया सोपचारया । स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् । प्राकारं भृत्यभरणं व्ययं संग्रामतो भयम् । योगक्षेमञ्च सम्प्रेक्ष्य गोमिनः कारयेत् करम् । उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः । तस्मात्तेषु विशेषेण मृदुपूर्व्वं समाचरेत् । सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः । गोमिनां पार्थ ! कर्त्तव्यः संविभागश्च प्रियाणि च । अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ! । प्रभावयन्ति राष्ट्रञ्च व्यवहारं कृषिन्तथा । तस्माद्गोमिषु यत्नेन प्रीतिं कुर्य्याद्विचक्षणः । दयावानप्रमत्तश्च

करान् सम्प्रणयेन्नृप । सर्वत्र क्षेमचरणं सुलभं नाम गोमिषु । न ह्यतः सदृशं किञ्चिद्वरमस्ति युधिष्ठिर !" । "मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम् । वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् । जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः । व्याघ्रीव च हरेत् पुत्रान् सन्दशेन्न च पीडयेत् । यथा शल्यकवानाखुः पदं धूनयते सदा । अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् । अल्पेनाल्पेन देयेन वर्द्धमानं प्रदापयेत् । ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् । दमयन्निव दम्यानि शश्वद्भारं विवर्द्धयेत् । मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् । सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः । उचितेनैव भोक्तव्या न भविष्यन्ति यत्नतः । तस्मात् सर्वसमारम्भो दुर्लभः पुरुषं प्रति । यथासुख्यान् सान्त्वयित्वा भोक्तव्य इतरो जनः । ततस्तान् भेदयित्वा तु परस्परविवर्जितान् । भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः । न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् । आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि" इ॰अ॰ । प्रजाभ्यः करादानप्रकारः एवं षड्भागमात्रप्रकारवत् मनूक्तोऽनुसन्धेयः । अत एव शा॰कौ॰ "यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्य करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये" इत्युक्तम् ।

ईहत्ताकारे हस्तनक्षत्रे । हेत्वादौ कर्मोपपदे कृ—कर्त्तरि ट । तत्तत्कर्मकारके त्रि॰ यथा कर्मकरः श्रेयस्करः यशस्करः स्त्रियां ङीप् कर्मकरी दासी यशस्करी विद्येत्यादि । दिवाविभादिपूर्वात् अहेत्वादावपि ट । तत्तदुपपदार्थकारके त्रि॰ तानि च "दिवाविभानिशाप्रभाभास्करान्तानन्तादिबह्नान्दीकिम्लिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" पा॰ दर्शितानि दिवाकरः निशाकरः। अहेत्वादावितोऽन्यत्र अण् । कुम्भकार इत्यादि ।

**करक** पुंन॰ किरति विक्षिपति करोति वा जलमत्र कृ—कॄ—वा ऊनादि॰ संज्ञायां वुन् । कमण्डलौ "उपवीतमलङ्कारं स्रजं करकमेव च" मनुः २दाडिमवृक्षे ३पक्षिभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष् । ४मेघोपले (शिला) पुंस्त्री । करकोद्भवकारणं तल्लक्षणगुणाश्च भावप्र॰ दर्शिताः यथा । "दिव्यवायुग्नियोगात् संहताः खात् पतन्ति याः । पाषाणखण्डवच्चापस्ताः कारक्योऽमृतोपमाः । करकाजं जलं रूक्षं विशदं गुरु सुस्थिरम् । दारुणं शीतलं सान्द्रं पित्तहृत् कफवातकृत्"। (काटा) ५करङ्कभेदे रत्नमा॰ स्वार्थे कन् । ६राजकरे ७हस्ते च । ८पलाशवृक्षे हारा॰ । ९कोविदारवृक्षे १०बकुलवृक्षे ११करीरे १२नारिकेलास्थ्नि च (माला) पु॰ राजनि॰ ।

**करकङ्कणन्याय** पु॰ कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्काले तत्संबन्धताद्योतनार्थः तद्रूपदृष्टान्तसूचके न्याये ।

**करकच** पु॰ "शनिभार्गवजीवज्ञकुजसोमार्कवासरे । षष्ठ्यादितिथयः सप्त क्रमात् करकचाः स्मृताः" ज्यो॰ उक्ते योगभेदे । तथा च शनौ षष्ठी, शुक्रे सप्तमी, गुरौ अष्टमी, बुधे नवमी, कुजे दशमी, सोमे एकादशी, रवौ द्वादशी तिथिः करकच इत्यर्थः ।

**करकच्छपिका** स्त्री कच्छपस्येवाकारोऽस्त्यस्याः ठन् करे हस्ते स्थिता कच्छपिका । तन्त्रसिद्धविशेषमुद्रायां कूर्ममुद्रायाम् । "करकच्छपिकां कुर्यात् कूर्ममन्त्रेण साधकः । तत्र संस्कृतपुष्पेण पूजयेदात्मनो वपुः" कालिकापु॰ ५६अ॰ ।

**करकण्टक** पुंन॰ करस्य कण्टक इव । नखे त्रिका॰ ।

**करकपात्रिका** स्त्री करकः कमण्डलुरूपा पात्रिका । कमण्डलुरूपपात्रे । [करकशब्दे भावप्र॰ वाक्यमुक्तम् ।

**करकाज** न॰ करकातो जायते जन—ड । करकाभवे जले

**करकाम्भस्** पु॰ करकाया इव शीतलमम्भोऽस्य । नारिकेले त्रिका॰ । तज्जलस्यातिशीतलत्वात्तथात्वम् । ६त॰ तदीयजले न॰ । [वायुर्विरोचनः" भा॰ आ॰ ६८अ॰ ।

**करकायु** पु॰ धृतराष्ट्रपुत्रभेदे । "उग्रायुधोबलाकी च कर-

**करकासार** पु॰ ६त॰ । शिलावृष्टौ

**करकुड्मल** न॰ करः कुड्मलमिव । मुकुलिताङ्गुलौ करे कर मुकुलकमलकरकोषादयोऽप्यत्र ।

**करग्रह** पु॰ करो गृह्यतेऽत्र ग्रह—आधारे अप् । विवाहे तत्र करग्रहणेनैव हि संस्कारो विधीयते इति तस्य तथात्वम् । ६त॰ ।२शुल्कधारणे ३प्रजाभ्यः करादाने च । पाणिग्रहकरग्रहणादयोऽप्यत्र ।

**करग्रहारम्भ** पु॰ करग्रहस्य प्रजाभ्यः करादानस्यारम्भः । (पुण्या)वार्षिककरग्रहणारम्भे । करग्रहारम्भदिनलग्नादिकं प्रसङ्गादुच्यते "तीक्ष्णोग्रमिश्रेतरभेषु लग्ने सौम्योदये भानुदिने शुभांशे । कुर्यादनुक्तानि समीहितानि करग्रहारम्भमपि प्रजाभ्यः" ज्यो॰ तत्र तीक्ष्णगणाः ६,९, १८,१९ आर्द्रादयः, उग्रगणाः पूर्वात्रयमघाः वह्निः

च करणस्य विशेषः तदुक्तं "द्रव्यादिविषयोद्देशः करणं चरितक्रियम्"। चरितक्रियं व्यापारद्वारा क्रियामात्रविषयम् इत्यर्थः। "शटापाणुषणाङ्केयं विहितं करणं स्मृतम्" शिक्षा। "नियत् कर्त्तेव करणं रसादौ पाक कारणम्" सुश्रु०। "न तस्य कार्य्यं करणञ्च विद्यते" श्रुतिः ४ इन्द्रिये अमरः तस्य ज्ञानक्रियायाम् साधनत्वात्तथात्वम्। यथा च इन्द्रियाणां ज्ञानक्रियायां साधनत्वं तथा इन्द्रियशब्दे उक्तम्। तच्च सांख्ये त्रयोदशविधमित्युक्त्वा तेषां मध्ये अन्तःकरणानां द्वारित्वमितरेषां द्वारत्वमुक्तं यथा सां० का० कौ०

"करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्। कार्य्यञ्च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यञ्च" का० "करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणम्। न च व्यापारावेशं विना कारकत्वमिति व्यापारमाह तदाहरणधारणप्रकाशकरम् तत्र कर्मेन्द्रियाणि वागादीन्याहरन्ति स्वस्वव्यापारेण व्याप्नुवन्तीति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि प्रकाशयन्ति। आहरणधारणादिक्रियायाः सकर्मकतया किं कर्म, कतिविधं? चेत्यत आह कार्य्यञ्च तस्येति तस्य त्रयोदशविधस्य करणस्य दशधा आहार्य्यं धार्य्यं प्रकाश्यञ्च कार्य्यम्। आहार्य्यं व्याप्यं कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दश इत्याहार्य्यं दशधा। एवं धार्य्यम् अन्तःकरणादि प्राणलक्षणया वृत्त्या शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं शब्दादीनां पञ्चानां समूहः पृथिवीति, ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति" कौ० "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" का० "अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण। बाह्यान्तरयोः करणयोर्विशेषान्तरमाह साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्, साम्प्रतकालं वर्त्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपि वर्त्तमानम् अतो वागपि वर्त्तमानकालविषया भवति। त्रिकालमाभ्यन्तरं करणं तद्यथा नदीपूरभेदादभूद्वृष्टिः, अस्ति धूमादग्निरिह निकुञ्जे, अस्त्युपघाते पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति। कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रपद्यते सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्य्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति" कौ०। साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति। "बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि। वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि" का० "बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः विषयपञ्चकेन भूतआविर्भावयतीति विशेषाश्चाविशेषाश्च विशेषाविशेषास्त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि। तत्रोर्द्धस्रोतसां योगिनाञ्च श्रोत्रं सूक्ष्मशब्दतन्मात्रविषयं, स्थूलशब्दविषयमेव नः। एवं तेषां त्वक् सूक्ष्मस्थूलस्पर्शविषया, अस्मदादीनान्तु स्थूलस्पर्शविषयैव। एवं चक्षुरादयोऽपि तेषामस्मदादीनाञ्च रूपादिषु द्रष्टव्याः। एवं कर्मेन्द्रियेषु मध्ये वाग्भवति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् न तु शब्दतन्मात्रस्य हेतुः तस्याहङ्कारिकत्वेन वागिन्द्रियेण एककारणकत्वात्। शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्यादीनामाहार्य्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति" कौ०। साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित् प्रधानभावं सहेतुकमाह। "सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि" का०। "द्वारि प्रधानं शेषाणि करणानि बाह्येन्द्रियाणि द्वाराणि तैरुपनीतं सर्वं विषयं मनोऽहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति" कौ०। "न केवलं बाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह। "एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" का०।

"यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्, तदिदमुक्तं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति। बाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषाः गुणानां सत्त्वरजस्तमसां विकाराः। ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः यथा वर्त्तितैलवह्नयः सम्भूय रूपप्रकाशाय मिलिताः प्रदीपाः, एवमेते गुणविशेषा इति योजना"।

न्यायादिमते इन्द्रियाणामेकादशविधता वेदान्तपरिभाषामते दशविधतेति भेदः इन्द्रियशब्दे उक्तः। "वपुषा करणोज्झितेन सा" "करणापायविभिन्नवर्णया" रघुः। "करणैरन्वितस्यापि पूर्वेषां कथञ्चन" याज्ञ०। "आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या" वेणी०। अत्र करणं बाह्येन्द्रियम्। आधारे ल्युट्। २क्षेत्ररूपे देहे अमरः करणाश्रयत्वात् तस्य तथात्वम्। "उपमानमभूत् विलासिनां करणं यत्तव कान्तिमत्तया" कुमा०। भावे ल्युट्। ३क्रियायाम्। "प्र ते पूर्व्वाणि करणानि" ऋ० ४,१९,१०। "आवाहनाग्नौकरणरहितमपसव्यवत्" याज्ञ०। "इक्षुकरणे चापि व्याहृताः सर्वशिल्पिनः" भा० व० २५४ अ०। "कृतस्य करणं नास्तीति" प्राचीनगाथा। ५सैनिककर्माङ्गे अनुष्ठाने दैवव्यापारभेदे च। ज्योतिषोक्तेषु तिथ्यर्द्धात्मकेषु ववादिषु तेषामानयनप्रकारः सूर्य्यसि० रङ्गना० उक्तो यथा।

"ध्रुवाणि शकुनिर्नागं तृतीयं तु चतुष्पदम्। किन्तुघ्नं तु चतुर्दश्याः कृष्णायाश्चापरार्द्धतः" सू० सि०। "कृष्णपक्षीयायाश्चतुर्दश्यास्तिथेर्द्वितीयार्द्धाद्द्वितीयार्द्धमारभ्येत्यर्थः। चकार एवार्थे। तेनान्यतिथेरेतत्तिथिपूर्वार्द्धस्य च निरासः। ध्रुवाणि स्थिराणि करणानि। तान्याह। शकुनिरिति। चतुष्पदं तृतीयमित्यनेन शकुनिनागयोः क्रमेणाद्यद्वितीयत्वं सूचितम्। तुकारात् क्रमेण तिथ्यर्द्धेषु भवन्ति। किन्तुघ्नं चतुर्थम्। तदन्तार्थद्योतकः तेनोक्तातिरिक्तं स्थिरकरणं नास्तीति सूचितम्। अथ चरकरणान्याह" रङ्ग०। "ववादीनि ततः सप्त चराख्यकरणानि च। मासेऽष्टकृत्व एकैकं करणानां प्रवर्त्तते" सू० सि०। "ततः स्थिरकरणपूर्व्वानन्तरं ववादीनि चरसञ्ज्ञककरणानि सप्त भद्रान्तानि शुक्लप्रतिपद्द्वितीयार्द्धतश्चतुर्थ्यन्तं भवन्तीति वाक्यार्थः।

ननु पञ्चम्यादितः कानि करणानि भवन्तीत्यत आह मास इति। चरकरणानां ववादीनां सप्तानां मध्ये एकैकमेकमेकं करणं मासे स्थिरकरणकालातिरिक्ततिथ्यात्मकमासे स्वस्थानान्तरस्थानाष्टपदकम्। अष्टकृत्वोऽष्टवारः प्रवर्त्तते प्रकर्षेण तिष्ठति भवतीत्यर्थः। तथा च पञ्चम्याद्यर्द्धादीनि पुनः पुनः परिभ्रमन्ति। कृष्णचतुर्दश्याद्यार्द्धपर्य्यन्तमिति भावः। ननु स्थिरकरणोक्तापरार्द्धत इत्युक्त्या तेषां चतुर्णां तिथ्यर्द्धभोगेन शुक्लप्रतिपदाद्यार्द्धपर्य्यन्तं क्रमेणावस्थानं युक्तं चरकरणानां तु केवलोक्ता तदनन्तरं कृष्णचतुर्दश्याद्यार्द्धपर्य्यन्तमेव एव परिभ्रमोऽस्त्वित्यत उत्तरं कथयन्नन्यदप्याह" रङ्ग०। "तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेत्। एषा स्फुटगतिः प्रोक्ता सूर्य्यादीनां खचारिणाम्" सू० सि०। "सप्तानां चरकरणानां प्रत्येकं तिथ्यर्द्धमात्रो भोगश्च तं तिथ्यर्द्धकालमितावस्थानं प्रकल्पयेत्। "एकत्र निर्णीतः शास्त्रार्थोऽपरत्र भवतीति" न्यायात् करणस्य नैपाव्यवस्थानं तत्तुल्यं कुर्य्यादित्यर्थः। अत एव "तिथ्यर्द्धं करणं स्मृतम्" इत्युक्त्या चान्द्रमासे त्रिंशत्तिथ्यात्मके षष्टिकरणानां सन्निवेशाच्चरकरणानामेव परिभ्रमणे प्रतिमासमनियततिथिभोगकं करणं भवतीति तदारब्धस्थलादनियततिथिभोगकरणकविधानार्थं चरकरणानामष्टवारपरिभ्रमणोत्तरमवशिष्टतिथ्योश्चतुर्थ्वेव स्थिरकरणान्युक्तानीति तात्पर्य्यम्। तत्रापि कृष्णचतुर्दश्यपरार्द्धतत्कल्पनं तदिष्टानियामकं स्वतन्त्रेच्छस्य नियोमानर्हत्वात्" रङ्ग०।

करणानि च ववबालवकौलवतैतिलगरवणिग्विष्टिभद्राख्यानि सप्त चरकरणानि। स्थिरकरणानि शकुन्यादीनीति दशकरणानि। ५जातिभेदे पुंसि अमरः स्त्रियां जातित्वात् ङीष्। तज्जातिश्च ग्राम्यात् क्षत्रियात् वैश्यायामुत्पन्नः जातिभेदः "झल्लो मल्लश्च राजन्यात् व्रात्याल्लिच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड एव च" मनुः। करणरूपवर्णसङ्करस्यैव कायस्थनामता तस्य कर्मविशेषपरिपाकेण तज्जातिप्राप्तिस्तस्य वृत्तिभेदश्च ब्रह्मवै० पु० जन्मखण्डे ८५ उक्तो यथा। "तैलचौरस्तु कीटो भुवि कीटस्थितस्ततः। ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः। ततः कङ्कं वर्षशतं स्थित्वा स्वर्णवणिग् भवेत्। जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत्। विद्वर्णलिपिकर्त्ता च भक्ष्यदात्तर्धनं हरेत्। कायस्थेनोदरस्थेन मातुर्मांसं न भक्षितम्। तत्र नास्ति कृपा तस्य दन्ताभावेन

द्भेदनम् । स्वर्णकारः स्वर्णवणिक् कायस्थश्च प्रजेश्वर ! । नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले । हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् । शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ । सुवर्द्धिः शिवभक्तश्च शास्त्रज्ञो धर्मवानसः" । ८वर्णसङ्करजातिभेदे पुंस्त्री "शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः" मल्लवै॰ पु॰ । कायस्थश्च चतुर्विधः प्रात्यक्षत्रियः शूद्रावैश्ययोर्जातः करणनाम्ना प्रसिद्धः अन्यः चित्रगुप्तजातश्चोक्तकायस्थ । कायस्थशब्दे विवृतिः । तस्य वृत्तिमाह पराशरः । "धनधान्याध्यक्षता च राजसेवा तथैव च । द्विजातेः परिचर्या च दुर्गान्तःपुररक्षणम् । एषा पाराशरस्योक्ता उपस्य करणस्य च प्रोक्ता उभयता वृत्तिरुभयत्र शुभप्रदा" । "नृत्यशाद्धिनगीतानां प्रयोगज्ञमेदिनाम् । संस्थानं ताड़नं रोधः करणानि प्रचक्षते" राजकन्दर्पोक्ते तालव्यवस्थापके १०तालनाविशेषे न॰ "शिखरामक्रमेधानाम् व्यञ्जन्ते यत्र वेश्मनाम् । चारुगर्भितमन्दिरवाः करणैर्मुरजस्वनाः" कुमा॰ सर्वकरणप्रयोक्तृत्वात् ११परमेश्वरे न॰ "करणं कारणं कर्त्ता विकर्त्ता च गतो गुहः" विष्णु॰स॰ । प्रशाद्यर्थे ततः काशा॰ ठञ् ञिठ च इकार उच्चारणार्थः । कारणिक तद्युक्ते स्त्रियां ठञि ङीप् ञिठि टाप् । १२क्रियासाधनस्त्रियां स्त्री ङीप् । क्रियते क्रियाविशेषो ऽस्याम् आधारे ल्युट् ङीप् । बीजगणितोक्ते यस्य वर्गमूलादिकं स्पष्टं न प्रतीयते तत्क्रियाविशेषद्वारा तत्करणविषये राशिभेदे स्त्री । सा च षड्विधा सङ्कलनव्यवकलनगुणभागवर्गवर्गमूलरूपभेदात् । तत्क्रियाविशेषो बीजगणिते दर्शितो यथा । "अथ करणी षड्विधा । तत्र सङ्कलनव्यवकलनयोः करणसूत्रं वृत्तद्वयम् । योगं करण्योर्महतीं प्रकल्प्य वधस्य मूलं द्विगुणं लघुञ्च । योगान्तरे रूपवदेतयोः स्तो ऽवर्गेण वर्गं गुणयेद्भजेच्च । लघ्व्या हृतायास्तु पदं महत्याः सैकं निरेकं स्वहतं लघुघ्नम् । योगान्तरे स्तः क्रमशस्तयोर्वा पृथक् स्थितिः स्याद्यदि नास्ति मूलम् । उदाहरणम् । द्विकाष्टमित्योस्त्रिभसङ्ख्ययोश्च योगान्तरे ब्रूहि पृथक्करण्योः । त्रिसप्तमित्योश्च चिरं विचिन्त्य चेत् षड्विधं वेत्सि सखे ! करण्याः ।

न्यासः क२ । क ८ योगे जातम् क १८ अन्तरे च क २
न्यासः क ३ । क २७ योगे जातम् क ४८ अन्तरे च क १२ न्यासः क ३ । क ७ अनयोर्घाते मूलाभावात्पृथक् स्थितिरेव योगे जातम् क ३ क ७ अन्तरे च क ३ क ७ इति करणीसङ्कलनव्यवकलने ।

गुणनोदाहरणम् । द्वित्र्यष्टसङ्ख्यागुणकः करण्योर्गुण्यस्त्रिसङ्ख्या च सपञ्चरूपा । वधं प्रचक्ष्वाशु विपञ्चरूपे गुणेऽथ वा त्र्यर्कमिते करण्याः । न्यासः गुणकः क २ क ३ क ८ गुण्यः क ३ रू ५

अत्र गुण्ये गुणके वा भाज्ये भाजके करणीनां करण्योर्वा यथासम्भवं लाघवार्थं योगं कृत्वा गुणनभजने कार्ये तदा कृते जातो गुणकः क १८ क ३ गुण्यः क २५ क ३ गुणिते जातम् रू ३ क ४५० क ७५ क ५४ ।

अथवर्गादौ विशेषसूत्रं वृत्तम् । क्षयो भवेच्च क्षयरूपवर्गश्चेत्साध्यतेऽसौ करणीत्वहेतोः । ऋणात्मिकायाश्च तथा करण्या मूलं क्षयो रूपविधानहेतोः ।

न्यासः गुणकः क २५ क ३ क १२ गुण्यः क २५ क ३ अत्र गुणके करण्योर्योगे कृते गुणकः क २५ क २७ गुणिते जातम् क ६२५ क ६७५ क ७५ क ८१ एतयोः क ६२५ क ८१ मूले रू २५ रू ९ अनयोर्योगे जातम् रू १६ अनयोः क ६७५ क ७५ अन्तरे योगइति जातोयोगः क ३०० यथाक्रमं न्यासः रू १६ क ३०० इति करणीगुणनम् । पूर्वगुणनफलस्य स्वगुणच्छेदस्य भागार्थं न्यासः भाज्यः रू ९ क ४५० क ७५ क ५४ भाजकः क २ क ३ क ८ अत्र क २ क ८ एतयोः करण्योर्योगे कृते जातम् क १८ क ३ "भाज्याच्छेदः शुध्यति प्रच्युतः सन्" इत्यादिकरणेन लब्धो गुण्यः रू ५ क ३

न्यासः भाज्यः क २५६ क ३०० भाजकः क २५ क ३ क १२ करण्योर्योगे कृते जातम् क २५ क २७

अत्रादौ विभिन्नर्णयित्वा धनकरण्योः ऋणकरण्योश्च योगं विधाय यथासम्भवं गुणयित्वा शोधिते लब्धं रू ५ क ३ अत्रापि पूर्वसदृशौ गुण्यः रू ५ क ३ अथ वाम्ययोच्यते । धनर्णतात्व्ययमीप्सिताया च्छेदे करण्या असकृद्विधाय । तादृक्छिदा भाज्यहरौ निहन्यादेकैव यावत्करणी हरः स्यात् । भाज्यास्तया भाज्यगताः करण्यो लब्धाः करण्यो यदि योगजाः स्युः । विश्लेषसूत्रेण पृथक् च कार्यास्तथा यथा प्रष्टुरभीप्सिताः स्युः । तथा च विशेषसूत्रं वृत्तम् । वर्गेण योगकरणी विहृता विशुध्येत् खण्डानि तत्कृतिपदस्य यथेप्सितानि । कृत्वा

नीय रूपेषु प्रक्षिप्य मूलं वाच्यम् । अथ महतीरूपाणामुपलक्षणम् । यतः क्वचिदल्पापि ।

तत्रोदाहरणम् । चत्वारिंशद्गोतिहिंयतोदृष्टाः करणयेत् । सप्तदशरूपयुक्तास्तत्र ततो विस्मदं ब्रूहि ।

न्यासः रू १७ क ४० क ८० २०० शोधिते जाते खण्डे क १० क ७ पुनः अन्यौ करण्यौ रूपाणि कृत्वा लब्धे करण्यौ क ५ क २ । एवं मूलकरणीनां न्यासः क १० क ५ क २ । इति करण्यः षड्विधाः। [मस्तके ।

करणत्राण न० करणैर्हस्तादिभिस्त्रायते त्रै-कर्मणि ल्युट् ।

करणव्यापार पु० ६त० । करणजन्यजनकत्वविशिष्टे करणजन्ये व्यापारभेदे । यथा छेदनादिक्रियायां छेद्यदात्रादिसंयोगः तस्य हि दात्रजन्यत्वात् दात्रजन्यच्छेदनजनकत्वाच्च तथात्वम् । एवमिन्द्रियार्थयोर्विषयसंयोगः तस्य हि इन्द्रियजन्यत्वात् इन्द्रियजन्यप्रत्यक्षज्ञानजनकत्वाच्च तथात्वम् न्यायमते अनुमितौ परामर्शः शाब्दबोधे पदार्थस्मृतिः । उपमितौ उपदेशवाक्यार्थस्मृतिः । यथायथमूह्यम् । सांख्यमतसिद्धकरणव्यापारभेदस्तु करणशब्दे उक्ताः।

करणाधिप पु० ६त० । १जीवे तदधिष्ठानेनैव करणानां स्वस्वकार्येषु प्रवृत्तेस्तस्य तदधिपत्वम् २इन्द्रियाधिष्ठातृदेवभेदे च । तत्र बाह्येन्द्रियाधिष्ठातारश्च शा० ति० उक्ता यथा "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । श्रोत्रादीनां दशानां तु" । तथा च श्रोत्रस्य दिक् । त्वचो वायुः । नेत्रस्य अर्कः । रसनायाः प्रचेताः नासिकायाः अश्विनौ । वाचः वह्निः, पाणेरिन्द्रः पादस्य उपेन्द्रो विष्णुमूर्त्तिभेदः । पायोः मित्रः सूर्यमूर्त्तिभेदः । उपस्थस्य कः प्रजापतिः । अन्तःकरणानान्तु मनसश्चन्द्रः, बुद्धेश्चतुर्मुखः, अहङ्कारस्य रुद्रः चित्तस्याच्युतो विष्णुमूर्त्तिभेदः । करणाधिपानाञ्च सर्वेषामधिपः परमेश्वरः । करणाधिपाधिपः परमेश्वरः।

करण्ड पु० कृ-कर्मणि अण्डन् । १मधुकोषे (मौचाक) तस्य मक्षिकाभिर्विरमधुसञ्चयनेन क्रियमाणत्वात् तथात्वम् वा० कृ-अण्डच् । २खड्गे तस्य निर्दिष्टत्वात् तस्य तथात्वम् करण्डसदाकारोऽस्त्यस्य अर्श० अच् । ३कारण्डवखगे पुंस्त्री स्त्रियां जातित्वेऽपि संयोगपधत्वात् न ङीष् किन्तु टाप् । ४दलाढके च मेदि० ।५वंशादिरचितपुष्पादिपात्रभेदे (साजि) "सुभ्रूकणन्दतानिर्मितं मञ्जुकुसुमकरण्डकेन" काद०। समुद्गे (कौटा) अमरः । "दीपभाजनचामरकरण्डकप्रभृत्यनेकोपकरणयुक्तः" दशकुमा० । ७वहति कावखण्डे शब्दचि०। ८पुष्पभाण्डे स्त्री टाप् अत इत्त्वम् करण्डिका । उज्ज्वलदत्तः ।

करण्डिन् पु० करण्डसदाकारोऽस्त्यस्य इनि । मत्स्ये त्रिका०।

करतल न० ६त०। १हस्तस्य तले (हातेरतेलो) । "कथानि विधुयहुया करतलेन तस्य ग्राहयोत्" उद्भटः "करतलगतमपि नश्यति" हितो० । करतलमिव । २हस्ते च ।

करताल(क) न० करेण तालो यत्र वा कप् । भाण्डे वाद्ये (करताल) "शिवागारे भल्लकञ्च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत्" ति० त० पु० तत्र भल्लकं कांस्यनिर्म्मितकरतालकमिति" रघु० ।

करताली स्त्री करेण दीयमानस्तालो यत्र गौरा० ङीष् । १वाद्यभेदे (करताल) त्रिका० । ६त० । २करतलशब्दे (हाततालि) । पु० कचित् स्त्रीत्वमपि "यथा न स्यादालीकपटकरतालीपटुरवः" उद्भटः स्वार्थे कन् अत इत्त्वम् । करतालिकापि करतलशब्दे "उद्घाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः" नैष० ।

करतोया स्त्री करतोयं हरपार्वतीविवाहच्युतजलं तद् अस्त्यस्या हेतुत्वेन अच् । नदीभेदे सदानीरायाम् अमरः । गौरीविवाहे शङ्करकरच्युतजलभवत्वात् तस्यास्तथात्वम् । तस्याश्च यथा सदानीरत्वं तथोक्तं स्मृतौ "प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्व्वा रक्तवहानद्यः करतोयाऽम्बुवाहिनीति" तेनान्यनदीनामिवास्याः उक्तकाले रक्तवहत्वाभावात् सदानीरवाहित्वात्तथात्वम् । "करतोयां समासाद्य त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः" भा० व० ८५ । "करतोयां कुरङ्गे च त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति विरजस्क प्रयतः शुचिः" भा० अनु० २५अ० । अस्याश्च इति करतोयिन्यप्यत्र । "प्रभासं मानसं तीर्थं पुष्कराणि महत् सरः । पुण्यञ्च नैमिषं तीर्थं बाहुदां करतोयिनीम्" अनु० प० ।

करद त्रि० करं राजस्वं ददाति दा-क । १राजस्वदायके । "कच्चिन्न शूद्रेण न हीनजेन वैश्येन वा करदेनोपपन्ना" भा० आ० १८२अ० । "य इमे पृथिवीपालाः करदास्तव पार्थिव !" भा० स० २५४ अ० "भ्रातृभिर्निस्त्रर्हिषाम्" माघः । २हस्तदायके त्रि० ।

करद्रुम पु० किरति समन्तात् शाखाः कृ-अच् नित्यक० । कारस्करवृक्षे राजनि० ।

करहिष पु० १गोत्रभेदे २वेदशाखाभेदे च । "तामिताः कर-

हिव उपासते तस्मात्ते सर्व्वमायुर्यन्ति" ता० २,१५,४। "करहिषोनाम गोत्रभेदाः शाखिभेदा वा" भा० ।

**करन्धम** पु० करं धमति ध्मा–खश् मुम् च । १इक्ष्वाकुवंश्ये खनीनेत्रपुत्रे सार्वीचपे तस्य तन्नामनिरुक्तिः भा० आश्व० ४ अ०।"खनीनेत्रस्तदुद्दृत्ताश्रुत्वा "तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम् । अभ्यषिञ्चन्त राजेन्द्र ! मुदिताश्चाभवंस्तदा । स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं तथा । नियतोवर्त्तयामास प्रजाहितचिकीर्षया । ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः । प्रजास्तञ्चान्वरज्यन्त धर्मनित्यं मनीषिणम् । तस्य धर्म्मप्रवृत्तस्य व्यशीर्यत् कोषवाहनम् । तं क्षीणकोषं सामन्ताः समन्तात् पर्य्यपीडयन् । स पीड्यमानो बहुभिः क्षीणकोषाश्ववाहनः । आर्त्तिमार्च्छत् परां राजा सह भृत्यैः पुरेण च । न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये । सम्यक्वृत्तो हि राजा स धर्म्मनित्यो युधिष्ठिर ! । यदा च परमामार्त्तिं गतोऽसौ सपुरो नृपः । ततः प्रदध्मौ स करं प्रादुरासीत्ततोबलम् । ततस्तानजयत् सर्वान् प्रत्यमित्रान्नराधिपान् । एतस्मात् कारणाद्राजन् ! विश्रुतः स करन्धमः । तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत्" २पाणिध्मे शङ्खमारुतप्रयेनेन हस्ताध्मायकमात्रे त्रि०।

**करन्धय** त्रि० करं धयति धे–खश् मुम् च । हस्तलेहके ।

**करन्यास** पु० करे करावयवे न्यासः । तन्त्रोक्तमन्त्रभेदेन अङ्गुष्ठतर्ज्जनीमध्यमानामिकाकनिष्ठकतरतलपृष्ठेषु न्यासभेदे "अङ्गन्यासः करन्यासो बीजन्यासस्तथैव च" षट्कर्म० ।

**करपत्र** न० करात् पतति–पत–ष्ट्रन् । (करात) १क्रकचे दारुभेदके अस्त्रभेदे अमरः । "स्फुटस्य पत्रैः करपत्रमूर्त्तिभिर्वियोगदुःखादपि दारुणायते" नैष० क्रेतकवर्ण्णने । तच्च सुश्रुतोक्तशस्त्रभेदः । तत्र हि "विंशतिः शस्त्राणि"इत्युद्दिश्य "मण्डलाग्रकरपत्रेत्यादिना" विभज्य "तत्र मण्डलाग्रकरपत्रे स्यातां छेदने भेदने चेति"तस्योपयोग उक्तः । करावेव पत्रं वाहनं यत्र । २जलक्रीडायाम् जटाधरः । तत्र हि हस्ताभ्यां जलमुत्तोल्य परस्परं क्रीडनात् ।

**करपत्रवत्** पु० करपत्रं तदाकारः पत्रमस्त्यस्य मतुप् मस्य वः । तालवृक्षे शब्दच० ।

**करपत्रिका** स्त्री करौ पत्रमिव वाहनमस्याः कप् अत इत्त्वम् । जलक्रीडायां जटा० । हस्ताभ्यां जलोत्तोलनेन अन्योन्यं तत्क्रीडारचनात्तस्यास्तथात्वम् ।

**करपर्ण** पु० करः हस्त इव पर्णं यस्य । (भेंड) १भिण्डातकवृक्षे २रक्तैरण्डे च ( लालभेरण्डा ) राजनिघण्टुः ।

**करपल्लव** पु० करस्य पल्लव इव । १अङ्गुलौ । करः पल्लव इव रक्तत्वात् । २करकिसलये । "करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्व्वतः" देवीमा० ।

**करपात्र** न० करः पात्रमिव यत्र । १जलक्रीडाभेदे हारा० करद्वयेनैव पात्रेण जलोत्तोलनेन तत्क्रीडाकरणात्तस्यास्तथात्वम् । कर एव पात्रम् । २हस्तरूपे पात्रे च । "करपात्रे स्थिते तोये कृत्वा मूत्रपुरीषके । आहारं यत् भवेत्तोयं पीत्वा चान्द्रायणं चरेत्" प्रा० त० स्मृतिः ।

**करपाल** पु० करं पालयति पाल-अण् उप० स० । १खड्गे अमरटीका । गौरा० ङीष् । २कुत्सपट्टौ (सोंटा) स्त्री जटा० । स्वार्थे क टाप् अत इत्त्वम् । करपालिकाऽप्यत्र स्त्री । सा च एकधाराखड्गभेदे क्षीरस्वामी ।

**करपीडन** न० करस्य वधूकरस्य पीड़नं ग्रहणं वरेण यत्र । १विवाहे "सुतपरिणयात् षण्मासान्तः सुताकरपीडनम्" मु० चि० । पाणिपीडनादयोऽप्यत्र ।

**करबाल** पु० करस्य बालः शिशुरिव । १नखे शब्दमा० । करं बलति संवृणोति बल–संवृणो अण् उप० स० । २खड्गे (तरवार) भरतः "भल्लौघ विविधाश्चीष्णाः करबालांश्च निर्म्मलान्" भा० आ० २७ । स्वार्थे क अत इत्त्वम् । करबालिका अस्त्रभेदे स्त्री ।

**करभ** पु० कृ-अभच्, करे भाति भा–क वा । मणिबन्धात् कनिष्ठापर्य्यन्ते करस्य १बाह्यदेशे अमरः । २करिशावके "कदली कदली करभः करभः" प्रसन्नरा० "करभोरु रतिप्रथे द्वितीये पशुमेध्यहन्" शिशुपा० ३उष्ट्रशिशौ (नखो) नाम ४गन्धद्रव्ये, ५उष्ट्रमात्रे पुंस्त्री मेदि० । स्त्रियां ङीष् "करभकण्ठकडारतयाप्यसा" माघः "स तु हस्तस्य परितः करभोपमम्" भाग० ६,१२,२१ । "अत्रायन्त खरा गोषु करभाऽश्वतरीषु च" भा० भीष्म० ३अ० । करोतिमेधमस्याः क्विप् भी भा० क गौरा० ङीष् वा । ६करभी दविकाख्याम् स्त्री (विछाति) स्वार्थे कन् करभक । उष्ट्राद्यर्थे पुंस्त्री । स्त्रियां करभिका ।

**करभकाण्डिका** स्त्री करभप्रियं काण्डमस्याः कप् अत इत्त्वम् । उष्ट्रकाण्डीवृक्षे राजनि० ।

**करभञ्जिका** स्त्री भञ्ज–ण्वुल् ६त० । करमर्दभेदे भावप्र०

**करभप्रिया** स्त्री ६त० । १क्षुद्रदुरालभायाम् राजनि० उष्ट्रप्रियत्वात्तस्यास्तथात्वम् । २उष्ट्रयोषिति च ।

**करभवल्लभ** पु० ६त० । १उष्ट्रप्रिये पीलुवृक्षे, २कपित्थवृक्षे

च राजनि०। २करभप्रियमात्रे त्रि० । स्त्रियां टाप् ।

**करभादनी** स्त्री करभैरद्यते अद्–कर्म्मणि ल्युट् ङीप् । चङ्क्रमिकायां दुरालभायाम् राजनि०

**करभिन्** पुंस्त्री करभः कराग्रवत्भेदस्तदाकारः शुण्डेऽस्त्यस्य इनि । गजे राजनि० तस्य शुण्डे करभाकारत्वात् तथात्वम् । स्त्रियां ङीप् । [ अप् । त्रिं हे मन्दर० ।

**करभीर** पु०करभिणं गजमीरयति पलायनाय प्रेरयति ईर– अण् ।

**करभूषण** न० करोभूष्यतेऽनेन भूष–करणे ल्युट् । १कङ्कणे (काङ्कनि) हस्तभूषणे अमरः । करं भूषयति भूष–णिच–ल्यु । २हस्तभूषणमात्रे त्रि० । [उत्तमस्त्रियाम् ।

**करभोरु** स्त्री करभ इव ऊरुर्यस्याः ऊङ् । प्रशस्तोरुकायां

**करमर्द** पु० करं हस्तिशुण्डमर्द्दति अर्द्द–अनादरे वा० अच् अम् च । १शुभाकरवृक्षे त्रिका० तस्य हस्तिशुण्डवत् काण्डत्वात्तथात्वम् ।(पाणिया आमला) २वृक्षे दन्त्ये ।

**करमरिन्** त्रि० किरत्यत्र इत्यात् कृ–आधारे अप् करो-बन्धनागारः तत्र म्रियते वा० इनि । (कयेदी) वन्दिनि त्रिका० तस्य बन्धनागारे मरणात्तथात्वम् ।

**करमर्द** पु०करं मृद्नाति मृद–अण् उप०स०।(पाणियाआमला) वृक्षे राजनि०। स्वार्थे कन् करमर्दकोऽप्यत्र। तत्स्वर्गे हि करकण्टकादिति तस्य तथात्वम् ।"लघुदीर्घफलाभ्यां तु करमर्द्द द्वयं मतम् । करमर्द्दद्वयं त्वाममम्लं गुरु तृषापहम् । उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत् पक्वं मधुरं रुच्यं लघु पित्तसमीरजित्" भावप्र० "करमर्द्दाल्पफला सा ज्ञेया करमर्द्दिका" इति तत्रोक्ते लघुफलकेऽस्य स्त्री

**करमर्द्दिन्** पु० करं मृद्नाति णिनि ईत० । करमर्द्दे (पाणिया आमला) वृक्षे रत्नमा० ।

**करमाल** पु० करः हस्तिशुण्ड इव तदाकृतिर्माल्यास्य । धूमे हेम०। अनेन हस्तिशुण्डाकारेण प्रसरणात्तस्य तथात्वम्

**करमाला** स्त्री करः कराङ्गुलिपर्व्व मालेव जपसंख्याधेयत्वात् । "आरभ्यानामिकामध्यं दक्षिणावर्त्तयोगतः । तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता" इत्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्व्वरूपायां मालायाम् । अत्र विशेषस्तन्त्रसा० उक्तः यथा सनत्कुमारसंहितायाम् "तर्ज्जनी मध्यमानामा कनिष्ठा चेति ताः क्रमात् । तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका । पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्" । क्रममाह तत्रैव "अनामामध्यमारभ्य कनिष्ठादित एव च । तर्ज्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत्" । तत्रैव । "अनामामूलमारभ्य कनिष्ठादित एव च । तर्ज्जनीमध्यपर्य्यन्तमष्टपर्व्वसु संजपेत्" । एतद्द्वयन्तु अष्टोत्तरशतविषयम् विष्णुविषयञ्च । शक्तिविषये पुनः "अनामिकात्रयं पर्व्व कनिष्ठा च त्रिपर्व्विका । मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि । तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्" । अन्यच्च "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्य्यन्तं संजपेदष्टपर्व्वसु" । इदमपि अष्टोत्तरशतविषयम् । हंसपारमेश्वरे "पर्व्वत्रयमनामायाः परिवर्त्तेन वै क्रमात् । पर्व्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत । पर्व्वद्वयन्तु तर्ज्जन्या मेरुं तद्विद्धि पार्व्वति ! । शक्तिमाला समाख्याता सर्व्वतन्त्रप्रदीपिता । श्रीविद्यायाम् विशेषः । "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्य्यन्तं दशपर्व्वसु संजपेत्" । अन्यच्च "मध्यमाया अनामाया मूलाग्रञ्च द्वयं द्वयम् । कनिष्ठायाश्च तर्ज्जन्याश्चत्रयं पर्व्व महेश्वरि ! । अनामामध्यमयोश्च मेरुःस्यात् द्वितयं शुभम् । प्रादक्षिण्यक्रमाद्देवि । जपेत् त्रिपुरसुन्दरीमिति" यामलात् "कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण तु । तर्ज्जनीमूलपर्य्यन्तं जपेद्दशसु पर्व्वसु" इति श्रीक्रमवचनाच्च । इदमपि तत्रैव । मुण्डमालातन्त्रे "अनामिकाद्वयं पर्व्व कनिष्ठादिक्रमेण तु । तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता । अङ्गुलीं न वियुञ्जीत किञ्चिदाकुञ्चिते तले । अङ्गुलीनां वियोगाच्च छिद्राच्च स्रवते जपः" । अन्यत्रापि । "अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्व्वसन्धिषु यज्जप्तं तत्सर्व्वं निष्फलं भवेत् । गणनाविधिमुल्लङ्घ्य यो जपेत् तज्जपं यतः । गृह्णन्ति राक्षसास्तेन गणयेत् सर्व्वथा बुधः । जपसंख्या तु कर्त्तव्या नासंख्यातं जपेत् सुधीः । असंख्याकारकस्यास्य सर्व्वं भवति निष्फलम् । हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः । आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्" । गायत्रीजपे विशेषः विधानपा० गायत्रीहृदये "अनामिकामध्यरेखावध्यधः प्रक्रमेण च । तर्ज्जन्यादिगतान्ते च अक्षमाला करे स्थिता" अनामिकाया मध्यरेखामादिं कृत्वा तर्ज्जन्या आदिरेखा अन्ते यस्याः सेयं करे स्थिता मालेत्यर्थं विधानपा० । तत्रैव यमः । "सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं तु जपेन्नित्यं सर्व्वकल्मषनाशिनीम् । पर्व्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः । गायत्र्या वेदमूलत्वात् वेदितं सर्वेन्नषा स्मृतम् । अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं

मेरुलङ्घनात् । असंख्यातं तथा जप्तं तत्सर्वं निष्फलं भवेत्” मदनपारिजाते तु मध्यमाया इयं पर्वेतिपाठः । क्षा॰त॰ यद्धः । “त्रिकोऽङ्गुल्यस्थिपर्व्वाणो मध्यमा चैकपर्विका । अनामामध्यमारभ्य जप एवमुदाहृतः” काम्ये मालाऽभावे एवाङ्गाल्यादाता नित्ये तु सर्वत्र प्राशस्ता यथाह योगिनीत॰ । “नित्यं जपं करे कुर्य्यान्न काम्यमवरोधनात् । काम्यमपि करे कुर्य्यात् मालाऽभावे प्रियंवदे ! । तत्राङ्गुल्या जपं कुर्य्यात् साङ्गुष्ठाङ्गुलिभिर्जपेत् । अङ्गुष्ठेन विना कर्म कृतं तन्निष्फलं भवेत्” तत्पश्चिमन्त्रे १प॰ “नित्यं नैमित्तिकं काम्यं करे कुर्य्याद्विचक्षणः । करमाला महादेवि ! सर्वदोषविवर्जिता । छिन्नभिन्नादिदोषोऽपि करे नास्ति कदाचन । अन्यया तु करे देवि ! माला भवति तादृशी । ग्रन्थिः सा कुण्डलीशक्तिः पञ्चाशदस्य रूपिणी । अतएव महेशानि ! करमाला महाफला” । तत्र दक्षिणेनेति प्रागुक्तेः दक्षहस्तपर्व्वभिरेव दशसंख्याजपः कार्य्यः । शतादिजपे तु दक्षिणहस्तेन कृतजपदशसंख्यायाः प्रत्येकं दशकसंख्यागणना वामहस्तस्थितनिर्दिष्टपर्व्वक्रमेण कार्य्या तथा च दशकस्य दशकेन गणने शतसंख्यापूर्त्तिः । अधिकाष्टसंख्या तु दक्षहस्तेनैव प्रागुक्तरीत्या कार्य्येति तत्त्वम् ।

**करमुक्त** न॰ करे स्थापयित्वा मुच्यते यत् प्रति क्षिप्यते मुच-क्त (पट्टिशो) अस्त्रभेदे हेमच॰।

**करम्ब** त्रि॰ कृ-कर्म्मणि अम्बच् । १मिश्रिते । भावे अम्बच् । २मिश्रणे पु॰। हेमच॰।३करम्भे इत्यमरटोकायां नीलकण्ठः

**करम्बित** त्रि॰ करम्बो मिश्रणं जातोऽस्य तार॰ इतच् । मिश्रिते “मधुकरनिकरकरम्बितेति”जयदेवः ।

**करम्भ** पु॰ केन जलेन रभ्यते क्षिप्यते रभ-घञ् मुम् च । १दधिमिश्रितसक्तुषु अमरः “धानावन्तं करम्भिणमपूपवन्तम्” ऋ॰३,५२,१, । “पूषण्वते ते चकृमा करम्भम्” ऋ॰३,५२,७, “अन्नपानिव यवान् कृत्वा तानीषद्भ्रोपतव्य करम्भपात्राणि तेषां कुर्व्वन्ति” शत॰ ब्रा॰ २,५,२,४, २उदमन्थे “धानाः करम्भः सक्तवः परिवापः पयो दधि” यजु॰ १९,२१, “करम्भः उदमन्थः” वेददी॰ । “रूपं बदरमुपवाका करम्भस्य” २२ । “करम्भादिति पूषणम्” ऋ॰६,५६,१ । ३अर्द्धपक्वयवमात्रे । “कामधियस्त्वयि रचिता न परमारोहन्ति यथा करम्भबीजानि” भाग॰ १,२६,२७, “करम्भबीजानि भर्जितयवबीजानि”श्रीधरः । “करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्” मनुः । करम्भपाकार्थं वालुकावदातापोदेषु इति । “करम्भवालुकातप्तामायसीव शिलाः पृथक्” भा॰स्वर्गा॰२अ॰। निरयभेदे । द्रव्यावयववैषम्यात् ४मिश्रगन्धे । “करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक्” एकोविभिद्यते गन्धः” भाग॰ ३,२६,४२, “करम्भोमिश्रगन्धः” श्रीधरः । ५प्रियङ्गुवृक्षे ६शतावर्य्यां च राजनि॰ । स्वार्थे कन् करम्भक तत्रार्थे

**करम्भि** पु॰ यदुवंश्ये नृपभेदे । “करम्भिः शकुनेः पुत्रोदेव रातस्तदात्मजः” भाग॰ ९,२४,२,

**कररुह** पु॰ करे रोहति रुह-क । १नखे अमरः। वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै”मेघ॰। २कृपाणे च(तरवार)

**करर्द्धि** स्त्री करेण ऋद्धिर्यत्र । १करतालयाम् । त्रिका॰ शेत॰ । २हस्तसम्पत्तौ च ।

**करवी** स्त्री कस्य वायोः रवोऽत्र गौ॰ ङीष् । १हिङ्गुपत्रे करेण वीयते वी-क्विप् । २करवल्लिकायाम् त्रिका॰

**करवीर** पु॰ करं वीरयति चु॰ वीर विक्रान्तौ अण् । १कृपाणे खड्गे, २अनामख्याते वृक्षे, ४देशभेदे च मेदि॰।५श्मशाने, हेम॰। ६ब्रह्मावर्त्तदेशस्थदृषद्वतीनदीतीरस्थचन्द्रशेखरराजपुरे च । करवीरवृक्षभेदगुणाश्च भाव॰ उक्ता यथा । “करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः । द्वितीयोरक्तपुष्पश्च चण्डकोपः सुभस्तथा । करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् । वीर्य्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ! । ७तीर्थभेदे । “करवीरपुरे स्नात्वा विशालायां कृतोदकः । देवहृद उपस्पृश्य ब्रह्मभूतो विराजते” भा॰ अनु॰ २५अ॰ । करवीरपुरञ्च चेदिदेशपश्चिमस्थं गोमन्तपर्व्वतात् त्रिदिनगम्यमार्गे स्थितम् । यथोक्तं हरिवं॰१००अ॰ “राज्ञां पराजयं युद्धे गोमन्तेऽचलसत्तमे । अवधाद्वारयाच्चास्य स्वर्गलोकं व्रजन्ति ते । तद्गच्छाम महाराज ! करवीरं पुरोत्तमम् त्वयादिष्टेन मार्गेण चेदिराज ! शिवाय च । ते स्यन्दनगताः सर्व्वे पवनोत्पातिभिर्हयैः । भेजिरे दीर्घमध्वानं सुचिमन्त इवाग्नयः । ते त्रिरात्रोषिताः प्राप्ताः करवीरं पुरोत्तमम् । शिवाय च शिवे देशे निविष्टास्त्रिदशोपमाः” तत्पुराधीशश्च शृगालनामा नृपतिस्तदपाह तत्रैव १०१अ॰ “तानागतान् विदित्वाऽथ शृगालो युद्धदुर्म्मदः। पुरस्य धर्षणं मत्वा निर्ज्जगामेन्द्रविक्रमः” ।

**करवीरक** पु॰करवीर इव कायति कै-क। १अर्ज्जुनवृक्षे राजनि॰ स्वार्थे कन् । २करवीरार्थे । करं वीरयति ण्वुल् । ३खड्गे शब्दमा॰। करवीरे भवः कन् । ४करवीरभूतज-

रूपे विषभेदे न०हेमच० [ कन्दे राजनि० ।

**करवीरकन्दसंज्ञ** पु० करवीरकस्य संज्ञा संज्ञास्य । तैल-

**करवीरभुजा** स्त्री करवीरस्य भुज इव भुजोऽस्याः । आढक्याम् (अरहर) राजनि० [ (अरहर) शब्दचि०

**करवीरभूषा** स्त्री करवीरस्य भूषेव भूषा यस्याः। आढक्याम् ।

**करवीराद्य** न० करवीरमाद्यं यत्र । "करवीरमुद्दण्डं जात्यसनमल्लिकायाश्च । एतैः समन्तु तैलम् नामार्शनाशनन्तु श्रेष्ठम्" इति चक्रदत्तोक्ते तैलभेदे ।

**करवीरी** स्त्री कृ-भावे अप् कराय विक्षेपाय वीरः पुत्रोऽस्याः । १अदितौ तत्पुत्राणां सुरक्षेपकत्वात्तस्यास्तथात्वम् । कं सुखं राति रा-क करः सुखदः वीरः पुत्रोऽस्याः २पुत्रवत्यां स्त्रियाञ्च मेदि० सर्व्वतः गौरा०ङीष् ।

**करवीर्य्य** पु० करवीरे पुरे भवः यत् । धन्वन्तरिं प्रति आयुर्वेदज्ञानाय प्रश्नकारके ऋषिभेदे । "काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः" सुश्रु० ।

**करशाखा** स्त्री करस्य शाखेव । अङ्गुलौ अमरः । अङ्गुलशब्दस्य दशिसाधनिमेषे परिभाषिकत्वेऽपि अस्य तदर्थे पारिविभाषिकत्वकल्पनं अङ्कशब्दे निर्मूलमेव ।

**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः । हस्तिहस्तात् निर्गते जलकणे अमरः ।

**करशुद्धि** स्त्री ६त० । फडित्यस्त्रेण मन्त्रपुष्पाभ्यां हस्तयोः शोधने । "आदाइस्त्रादिकन्यासः करशुद्धिस्ततः परम्" तन्त्रसा० ।

**करशूक** पु० करस्य शूकः शूकेव । नखे । त्रिका० ।

**करस्** न० कृ-असुन् । कर्म्मणि । "प्र ते पूर्व्वाणि करणानि विप्रा विद्वां आह विदुषे करांसि" ऋ० ४,१९,१० । "करांसि कर्म्माणि" भा०।

**करसूत्र** न०६त०। विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे ।

**करस्थालिन्** पु० करः स्थालीयास्य ब्रीह्या० इनि । महादेवे "तत्रकाक्षः करस्थाली ऊर्द्धसंहननो महान्" भा० अनु० १७ अ० शिवसहस्रनामकथने । तस्य कालरूपेण सर्व्वभूतानां करस्थस्थाल्यामेव पचनात्तथात्वम् ।

**करस्न** पु०कर्म्म करः कृ-भा० अप् तं स्नाति करोति धातूनामनेकार्थत्वात् स्ना-क । कर्म्मकरे बाहौ निघ० "रेवत्स्या करस्ना दधिषे वपूंषि" ऋ० ६,१८,५ । करस्ना कर्म्माणि प्रस्नातारौ बाहू" भा० "पृथु करस्ना बहुला गभस्ती" ऋ०६,१९,३ । एतावृचमधिकृत्य "करस्ना बाहू कर्म्मणां प्रस्नातारौ" निरु० ६,१६ निरुक्तिदर्शिता ।

**करहाट** पु०करैःसूर्य्यकिरणैः हाट्यते दीप्यते हट-दीप्तौ णिच् कर्म्मणि घञ् । १पद्मादिकन्दे, अमरः करं हाटयति हट-णिच् अण् । २मदनद्रुमे, ३देशभेदे च । मेदिनिः । ४पिण्डीतकतरौ राजनि० ।

**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच्-ण्वुल् । १मदनवृक्षे । करहाटकार्ज्जुनककुभेत्यादि सुश्रु० । ६त० । २हस्ताभरणे सुवर्णे । अमरः । [हारा० ।

**कराङ्कण** न०करस्य राजस्वादानस्याङ्कणम् । राजस्वादानस्थाने ।

**कराघात** पु० ६त० । करतलाघाते चपेटाघाते (चापड़मारा)

**कराट** त्रि०कराय विक्षेपायाटति अट्+अच् । विकटे शब्दचि०

**करामर्द** पु० करमामृद्नाति आ+मृद-अण् उप० स० । करमर्दे शब्दर०।

**कराम्बुक** पु० कीर्य्यते कॄ-कर्म्मणि अप् करमम्बु यतः कप् । (पाणिया आमला) करमर्द्दभेदे शब्दच० । [राजनि० ।

**कराम्लक** पु० करं कौद्ध्यमापयत्यम्लं यतः कप् । करमर्द्दवृक्षे

**करायिका** स्त्री कर इवाचरति कर+आचारे क्यङ् ण्वुल् । १बलाकायाम् तस्याः सङ्कुचितहस्तात् प्रकाशमानत्वात्तथात्वम् । २कूटपूर्ण्याम् शब्दचि० [त्रिका० ।

**करारोट** पु० करे आरोटते रुट-दीप्तौ अच् । अङ्गुरीयके

**कराल** पु० कराय विक्षेपायालति पर्य्याप्नोति करं लाति ला-क वा । १सर्जरसयुक्ततैले (तेलधुना) २कृष्णकुठेरके (कालतुलसी)३दक्षे ४दन्तुरे उच्चदन्ते (दाँतो) ५भयानके त्रि० मेदि० । "करालवदनां घोराम्" "घोरदंष्ट्रां करालास्याम्" श्यामाध्यानम् । "वपुर्म्महोरगस्येव करालफणमण्डलम्" रघुः "लम्बा कराला विनता तथैव बहुपुत्रिका" "दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका" (पूतना) सुश्रु० । (अनन्तमूल) ६शारिबौषधौ स्त्री राजनि०। गौरा०ङीष् ।७वह्नेर्जिह्वाभेदे जटाधरः । सा च तामसी यथाह शा०ति० "विश्वमूर्त्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा । लोहितान्या कराला च काली तामस ईरिताः" । संज्ञायां कन् अत इत्वम् । करालिका राजसवह्निजिह्वायाम् । "पद्मरागा सुवर्णा त्या ततीया भद्रलोहिता । लोहितानन्तरं श्वेता धूमिनी च करालिका । राजस्येरसना वह्नेर्विहिताः काम्यकर्म्मसु" अग्निजिह्वाशब्दे दर्शितवाक्यन्तु सामान्यविषयम् । ८दन्तरोगभेदे पु० । "शनैः शनैर्विकुरुते वायुर्दन्तसमाश्रितः। करालान् विकटान् दन्तान् करालो न स

विध्यति"भावप्र०। तालयरोगयुक्तत्वात् दन्तरस्य तथात्वम्। "तप्रस्थे हे पचेत् पूर्वं वेसवारकमुत्तकम्। पाकप्रापितसौरभ्यं करालं छदकर्मितम्"पाकराजोक्ते लेहपके १०वेसवारे न०।(कडि)११कलरवस्थे पु'स्त्री "एणहरिणर्ष्यकुरङ्ककरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्कमृगमातृकाप्रभृतयो जङ्गलाः मृगाः कषाया मधुरा लघवो वातपित्तहराश्चोष्णा हृद्या बस्तिशोधनाश्च"सुश्रुते मृगभेदानुक्त्वा तद्गुणा उक्ताः। १२दैत्यभेदे पु०। "मदनः कालवदनः करालः कौशिकः शरः" हरिवं४२ असुरनामकथने। "मदनः कालवदनः करालः केशिरेव च"हरिवं० २६२ अ०। स्वार्थे कन् करालकः उक्तार्थे अत्युन्नतदन्तवत्याम् पु०रत्ना०।

**करालत्रिपुटा** स्त्री करालानि त्रीणि पुटान्यस्याः। क्षुद्राधान्ये त्रिकाखिडिकायाम् राजनि०।

**करालभैरव** न० तन्त्रभेदे। म०त० कुमपु० हिमालयं प्रति देवीवाक्यम्। "करालभैरवञ्चापि यामलं वाममाश्रितम्। एवंविधानि चान्यानि मोहनार्थानि यानि तु। मया सृष्टानि चान्यानि मोहायैषां भवार्णवे" [हृत्ते हेमच०।

**करालिक** त्रि० करालां करतुल्यशाखानामालिमयत कप्।

**करास्फोट** पु०करेण आस्फोटः शब्दो यत्र। वक्षःस्थले मकुञ्चितहस्तेन स्थापिते एकस्मिन् इतरकराघातेन ताड़ने (तालठोका)। ६त०। २कराघाते।

**करिक** पु० करो विशेषोऽस्त्यस्य ठन्। विट्खदिरे शब्दच०

**करिकणवल्ली** स्त्री करिकणः गजपिप्पल्यवयव इव वल्ली। चविकाख्ये (चइ) राजनि०।

**करिका** स्त्री करोविशेषणमस्त्यस्याम् अर्श० अच् अत इत्वम्। नखरेखायाम् वैज०। [चूर्णे शब्दचि०

**करिकुसुम्भ** पु०करी नागकेशरस्तस्य कुसुम्भइव। नागकेशरक्रिज पु'स्त्री करिणोजायते जन—ड। हस्तिशिशौ शब्दरत्ना०

**करिणी** स्त्री करिन्+स्त्रियां ङीप्। १हस्तिन्याम् अमरः "लीलावलन्मदधारकपोलभागाः सम्पादयन्ति करिणः करणोभ्रमं नः" धनञ्जयविज०। २देवताभेदे शब्दचि०।

**करिदारक** पु०।करिणं दृणाति छिनत्ति दृ-ण्वुल्। सिंहे। शब्दर०।स्त्रियां टाप् अत इत्वम्। [शब्दचि०

**करिनासिका** स्त्री करिणोनासेवाकारोऽस्याः। यन्त्रभेदे

**करिन्** पु'स्त्री करः शुण्डः प्रशस्तो नासास्त्यस्य इनि। हस्तिनि गजे "बृंहितं करिगर्जितम् अमरः 'मुक्ताफलाय करिणाम् हरिणं पलाय" व्या०उदा०। "अरिकरिदरणार्थं योजनानामशीत्या" शीघ्रा०। "करीव सिक्तं पृषतैः पयोमुचाम्" "कटप्रभेदेन करीव पार्थिवः"रघुः "छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्" ... "आयामवद्भिः करिणां घटाशतैः"माघः। २अष्टसंख्यायाम् एकाद्यादिशब्दे विवृतिः। करिभेदादिकम् पृ० ८५८ इभशब्दे उक्तम्। तन्नामनामके १नागकेशरे पु०।

**करिप** पु० करिणं पाति पा—क। हस्तिपके (माहुत)। चूर्णादि० अप्राणिवाचकषष्ठ्यन्तात् अस्याद्युदात्तता। वनकरिप इत्यादि। [राजनि०

**करिपत्र** न० करी तत्कर्ण इव पत्रमस्य। तालिपत्रवृक्षे

**करिपथ** पु० ६त०अच् समा०। हस्तिगमनयोग्ये पथि ततः संज्ञायां कन् देवपथादि०तस्य लुक्। करिपथनामके देशभेदे पु०। [पिप्पल्याम् अमरः

**करिपिप्पली** स्त्री करिपूर्वपदयुक्ता पिप्पली शा०त०। गज

**करिपोत** पु० ६त०। हस्तिशावके हारा०।

**करिबन्ध** पु०करिणं बध्नातयत्र बन्ध—आधारे घञ्। १हस्तिबन्धस्तम्भे हारा०। भावे घञ् ६त०। २गजबन्धने च

**करिभ** न० करीव भाति भा—क। कुष्ठभेदे त्रिका०।

**करिमाचल** पु'स्त्री मच—भावे घञ् करिणि माचं शाठ्यं लाति ला-क। १सिंहे त्रिका० गजमाचलादयोऽप्यत्र स्त्रियां जातित्वात् ङीष्।

**करिमुख** पु० करिणोमुखं मुखमस्य। १गणेशे यथा चास्य गजवक्त्रता तथा इभाननशब्दे ९८१पृ०उक्तम्। ६त०। २गजस्य मुखे न०।

**करिर** पु'न० कृ—इरन्। गूढपत्रे उष्ट्रप्रिये मरुभूमिजे करीरे वृक्षभेदे। शब्दरत्ना०। करीरशब्दे गुणादि।

**करिरत** न० "भुजतलनभूजाख्यमस्तकालम्बिनां स्तनमधोमुखीं स्त्रियम्। क्रामति स्वकरकृतमेहने वल्लभे करिरतं तदुच्यते" इत्युक्तलक्षणे १रतिबन्धभेदे शब्दचि० करिपदमिति पाठान्तरे"करिपदमित्यपि तत्रार्थे। ६त०२गजरतये च।

**करिव** त्रि० करिणं वाति वा—क। करिगते अप्राणिषष्ठ्यन्तात्तस्य चूर्णा० आद्युदात्तता। वनकरिव इत्यादि

**करिशावक** पु० गजशिशौ "यावत्पञ्चाब्दमेतस्मिन् करभः कलभोऽपि च" शब्दर० उक्ते पञ्चाब्दपर्यन्ते हस्तिबालके।

**करिष्ठ** त्रि० अतिशयेन कर्त्ता इष्ठन् तृचोलोपः। कर्त्तृतमे "शुद्ध सनिभ्य आहुतिं करिष्ठः" ऋ०७,९७,७। ईयसुन्। करीयस् कर्त्तृतरे त्रि० स्त्रियां ङीप्।

**करिष्यमाण** त्रि०कृ—भविष्यति शानच् स्यट्। कर्त्तव्ये। वेदे तु नि० मागलोपः। "यानि करिष्या कृणुहि प्रवद्ध!"

ऋ० १, १६५, ८, "करिष्या कर्त्त्वानि" भा० । द्वितीया-स्थाने थाद् ।

**करिसुन्दरिका** स्त्री करीव सुन्दरी संज्ञायां कन् । ना-गयष्टौ जलशोषणार्थमङ्कयस्यापितस्तम्भभेदे हारा० ।

**करिस्कन्ध** न० करिणां समूहः स्कन्धच् । गजसमूहे । हेम० । गजस्य २स्कन्धे पुंन० ।

**करीर** पु० कृ–ईरन् । १घटे मेदि० । २वंशाङ्कुरे अमरः । (वाँशेरकोँड)३अङ्कुरमात्रे भावप्र० वंशसङ्कुरा "तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः । कषायः कफकृत् स्वादुर्विदाही वातपित्तलः" तद्गुण उक्तः । "हिंसांशुवंशस्य करीरमेव मां निशम्य किमसि फलेग्रहिस्पृहा" नैष० । "आनिन्यिरे वंशकरीरनीलैः" माघः । "वंशशब्दस्याम्नानताच्चेतीरलूनतायाः प्रतिपत्त्यर्थत्वाच्च पौनरुक्त्यम् अतएव एकार्थं पदम् न प्रयोक्तव्यमित्युक्ता करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः" मल्लि० । तेन वंशाङ्कुरार्थकस्यापि करीरशब्दस्य प्रतिपत्तिविशेषार्थं वंशशब्दप्रयोग इति तत्त्वम् । ३मरुदेशजे मरुभूमिजे उष्-णिषे वृक्षभेदे भावप्र० । "करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः । दुर्नामकफवातामगरशोषव्रणप्रणुत्" भावप्र० ४चीरिकायां झिल्ल्याम् (झिँझिपोका) ५हस्तिदन्तमूले च स्त्री उणा० । अस्य प्रस्थशब्देन समासे करीरप्रस्थे कर्क्यादि० आद्युदात्तता । मध्वा० चतुरर्थ्यां मतुप् मस्य वः । करीरवत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप् ।

**करीरकुण** न० करीरस्य पाकः पीलवा० पाके कुणच् । तत्पाके

**करीरिका** स्त्री करीरमिवाकारोऽस्त्यस्य ठन् । हस्तिदन्तमूले त्रिका० ।

**करीरी** स्त्री कृ–ईरन् गौरा० ङीष् । चीरिकायां (झिँझि-पोका) १झिल्ल्याम् २गजदन्तमूले च मेदि० ।

**करीष** पुंन० । कृ–ईषन् । १शुष्कगोमये (घुटिया । "करीष-मिष्टकाङ्गारान् शर्करा वालुकास्तथा" मनुः । २पशुपुरीष-मात्रे च "उच्छुष्ककरभपुरीषपांशुला" कादम्ब० । करी-षाग्निः (घुटेर आगुन ) ।

**करीषगन्धि** पु० करीषस्येव गन्धोऽस्य इत् समा० । करीषतु-गन्धयुक्ते तस्यापत्यम् अण् स्त्रियां ष्यङ् कारीषगन्ध्या तदीय-स्त्र्यपत्ये । तस्याः पुत्रपतिशब्दाभ्यां समासे सं प्र० दीर्घश्च । कारीषगन्धीपुत्रः कारीषगन्धीपतिः एवं परमकारीषगन्धी-पुत्र इत्यादि उपसर्जने तु न अतिकारीषगन्ध्यापुत्र इत्याद्येव सि० कौ० ।

**करीषङ्कषा** स्त्री करीषं कषति हिनस्ति कष–खच् मुम् च । वात्यायाम् तस्याः गोमयशोषणात्तथात्वम् ।

**करीषिन्** त्रि० करीषस्य देशः पुष्करा० इनि न मतुप् । १करीषयुक्तदेशे स्त्रियां ङीप् । करीषमाश्रयत्वेनास्त्यस्याः इनि ङीप् । गोमयाधिष्ठातृदेव्यां २लक्ष्म्याम् स्त्री । "गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्" श्रीसूक्तम् ।

**करुण** त्रि० करोति मनः आनुकूल्याय कृ–उनन् । दयायुक्ते २रसभेदे पु० तल्लक्षणाद्युक्तं सा० द० यथा "इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् । धीरैः कपोतवर्णोऽयं कथितो यमदैवतः । शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् । तस्य दाहादि-कावस्था भवेदुद्दीपनं पुनः । अनुभावा दैवनिन्दा भूपातक्रन्दितादयः । वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च । निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः । विषा-दजडतोन्मादचिन्ताद्या व्यभिचारिणः" ।

शोच्यं विनष्टबन्धुप्रभृति । यथा राघवविलासे । "विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः । अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीष-कर्त्तनम्" । अत्र हि रामवनवासजनितशोकार्त्तस्य दश-रथस्य दैवनिन्दा । एवं बन्धुवियोगविभवनाशादावप्युदा-हार्य्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः । अस्य करुणविप्रलम्भाद्भेदमाह । शोकस्थायितया भिन्नो वि-प्रलम्भादयं रसः । विप्रलम्भे रतिः स्थायी पुनः सम्भोगहे-तुकः" ३परदुःखप्रहरणेच्छायां दयायां स्त्री । "अहो विधे त्वां करुणा रुणद्धि नः" नैष० । "प्रायः सद्योभवति करुणा-वृत्तिरार्द्रान्तरात्मा" मेघ० । "करुणाविमुखेन मृत्युना" रघुः । दुःखितेषु दया करुणा सा अस्त्यस्य अर्श० अच् विषयत्वेन । ४करुणाविषये दीने त्रि० । "अनिशं नितान्तकरुणः करुणम्" माघः । "करुणं दीनं यथा तथेति" मल्लि० । "अनुरोदि-तीव करुणेन पत्रिणां विरुतेन" माघः । "विरुतैः करुण-स्वनैरियम्" कुमा० । (करकचनेबु)५वृक्षभेदे पु० त्रिका० । "पिकात् वने शृण्वति भृङ्गहुङ्कृतैर्दशामुदञ्चत्करुणे वियोगिनाम्" नैष० । "करुणस्य फलं स्वादु वातामयभेदकम् पुनः । पाचनं पित्तकोपस्य शमनं परिकीर्त्तितम्" इति त-त्फलगुणाश्च वैद्यकोक्ताः । ६वृक्षभेदे पु० त्रिका० । ७परमेश्वरे ८भूताभयकारके परिव्राजके पु० शब्दचि० ।

**करुणमल्ली** स्त्री करुणा करुणाविषयः मल्ली । १नवमल्लि-कायाम् शब्दच० । तत्पुष्पस्यातिसुकुमारत्वात् करुणावि-

वर्णनेन सदयं धीयमानतया तस्याकरुणामूलत्वम् ।

**करुणविप्रलम्भ** पु० शृङ्गाररसभेदे । शृङ्गारशब्दे" सा० द० उक्तं यथा

"विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः । तत्र यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । अभीष्टं नायकं नायिकां वा । स च पूर्वरागमान-प्रवासकरुणात्मकश्चतुर्धा स्यात्" ।

**करुणानिधि** पु० करुणा निधीयतेऽत्र नि+धा–आधारे कि उप०स० । करुणाधारे दयायुक्ते करुणानिधानादयोऽप्यत्र । [ यस्य । अत्यन्तकरुणायुक्ते ।

**करुणापर** त्रि० करुणायां परः आसक्तः करुणा परा वा

**करुणामय** त्रि० करुणा+प्राचुर्ये मयट् । प्रचुरकरुणावति "काकुत्स्थं करुणामयं गुणनिधिम्, विप्रप्रियं धार्मिकम्" महाना० स्त्रियां ङीप् करुणामयी ।

**करुणिन्** त्रि० करुणाऽस्त्यस्य सुखा० इनि । कृपायुक्ते स्त्रियां ङीप् । सिद्धे सुखादिपाठणम् ठनादिनिवृत्त्यर्थमिति सि०कौ० । तेन सुखादिभ्यो न मतुप् । आर्षे तु क्वचिदिष्यते ।

**करुत्थाम** पु० तुर्वसुवंश्ये दुष्मन्तपुत्रभेदे । "तुर्वसोस्तु सुतो-वह्निरित्युपक्रम्य "दुष्मन्तस्य तु दायादः करुत्थामः प्रजे-श्वरः "हरिवं० ३२अ० ।

**करन्धम** पु० तुर्वसुवंश्ये त्रैसानोः पुत्रे नृपभेदे । "करन्धमस्तु त्रैसानोर्मरुत्तस्तस्य चात्मजः" हरिवं० ३२अ० ।

**करुम** पु० पिशाचभेदे । ये शालाः परिनृत्यन्ति सायं गर्दभ-नादिनः । कुसूला ये च कुक्षिलाः ककुभाः करुमाः स्निमाः । तानोषधे ! त्वं गन्धेन विषूचीनान् विनाशय" अथ० ८,६,१० ।

**करू** स्त्री कृ–हिंसायाम् क । १कर्त्तने । "यदुदेव वा भ्रातर्वा करूकराणि" शत०ब्रा० ११,२,४,१० । कर्मणि क । २कृत्ते च । "वामं देवः करूलती" ऋ० ४,३०,२४ । "करूलती कृत्तदन्तः" भा० पृषो० दन्तस्य लतादेशः पृषोदरादित्वेन तथात्वम् ।

**करूष** पु० कृ–ऊषन् । १देशभेदे तस्याधिपतिर्दन्तवक्रः "एष महान् वशे कृत्वा कृष्णं च सह सोमकैः । चेदि-कार्थकरूषांश्च कुरुवर्ज्यो वधिष्यति" भा० आ० १२२ अ० । "शिशुपालः सहसुतः करूषाधिपतिस्तथा" भा० व० ४अ० । करूषाणां जनपदानां राजा अण् तद्राजत्वात् बहुषु तस्य लुक् । करूषाः तद्राजेषु "दन्तवक्रः करूषश्च करभोमेघवाहनः" भा० स० १३अ० । एकत्वेऽपि लुक् आर्षः । अस्य तालव्यमध्यताऽपि भर्गादिगणे तथापाठात् ततो भर्गा० स्त्रियां न तद्राजप्रत्ययस्य लुक्" सि० कौ० ।

**करूषज** पु० करूषदेशे जायते जन–ड । दन्तवक्रे नृपभेदे "तावेव तु पुनर्जातौ शिशुपालकरूषजौ" भा० भा० ७, १०,३० । तौ जयविजयौ विष्णोःपार्षदौ ।

**करूषाधिपति** पु० ६त० । दन्तवक्रे नृपे । "काश्मीरराजो-गोनर्दः करूषाधिपतिस्तथा" हरिवं० ६ । करूषाधिपा-दयोऽप्यत्र ।

**करेऽट** पु० करे अटति अट–अच् अलुक् स० । नखे त्रिका० ।

**करेऽटव्या** स्त्री करेऽटनं व्ययति व्ये–ड टाप् । धनसूप-क्षिणि त्रिका० । [ ख्याते खगे । अमरः ।

**करेटु** पु० केन मस्तकेन रेटति रेट–कु । (करकटिया) इति

**करेणु** पु० कृ–एणु(नु)के मस्तके रेणुरस्य वा । १गजे अमरः । "प्रसृतः समजजन्तावस्करः करेणोः" माघः । "उत्-क्षिप्तगात्रः स विलम्बयत्वम;–करेणुरारोहयते निषादि-नम्" माघः "स्नातस्तनूचन्नसभाय करेणुराजः" माघः । २कर्णिकारवृक्षे त्रिका० । ३गजस्त्रियां स्त्री अमरः । "गजाय गण्डूषजलं करेणुः" कुमा० । "करेणुभिर्दन्तमृणाल-भङ्गाः" रघुः । करेणुदुग्धगुणाश्च सुश्रुते "अश्वायाश्चैव नार्याश्च करेण्वाश्च यत् पयः । तत्त्वेकौषधिरसप्रसादं प्राबल्यं गुरु । मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं मृदु मृत्स्नम्" सामान्यत उक्ता । "हस्तिन्याः मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं स्थैर्यकरं शीतं च-क्षुष्यं बलवर्द्धनम्" उक्ताः । "करेणुः सचहुषीरा कन्दे-न गजकर्णिका । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णि-नी" सुश्रुतोक्तलक्षणायाम् ४ओषधौ स्त्री तदुत्पत्तिकालश्च तत्रैवोक्तः । "करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा । गोलोमी चाजलोमी च महती श्रावणी तथा । वसन्ते कृष्णसर्पाख्यो गोलोमी च प्रजायते" स्वार्थे कन् करेणु-काप्यत्र स्त्री । रायमुकुटस्तु करेणूशब्दं दीर्घान्तं पठित्वा हस्तिनि पुंस्त्रीत्याह ।

**करेणुभू** पु० करेणौ भवति भू–क्विप् । १हस्तिशास्त्रप्रवर्त्तके पालकाप्यमुनौ हेमच० । २हस्तिजातमात्रे त्रि० ।

**करेणुमती** स्त्री नकुलस्य भार्याभेदे । "नकुलस्तु चैद्यां करे-णुमतीं भार्यामुदावहत्तस्यां पुत्रं निरमित्रं नामाजनयत्" भा० आ० ९५ अ० ।

**करेणुसुत** पु० ६त० । पालकाप्ये मुनौ त्रिका० ।

करेनर पु० तुरुष्कनामगन्धद्रव्ये करेवरोऽप्यत्र राजनि० ।

करेन्दुक पु० करेण किरणेनेन्दुरिव भायति कै—क । मूलये राजनि० ।

करोट न० के शिरसि रोटते रुट—इगुतो अच् । शिरोऽस्थि । (माथारखुलि) इन् करोटिरप्यत्र स्त्री वा ङीप् अमरः । "वपुषि भटकरोटिव्यस्तकीलालसिन्धुः" धनञ्ज० ।

करोटक पु० नागभेदे "आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा" भा०आ०३५ अ० नागनामकीर्त्तने । अत्र कर्कोटाद्यभिधानं प्रामादिकमेव । उपक्रमे ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" इति कर्कोटकस्य पृथगुक्तेस्ततोभिन्न एवायमिति तत्त्वम् । [ प्रतिकर्कति ।

कर्क हासे सौत्र: पर०सक० सेट् । कर्कति अकर्कीत् । चकर्क

कर्क पु० करोति करोति क्रियते वा कृ—क तस्य नेत्त्वम् कर्क—अच् वा । १वह्नौ २श्वेताश्वे अमरः ३दर्पणे ४घटे ५मेषावधिचतुर्थे राशौ ६कुलीरे ७कर्कटवृक्षे (काँकडाशिङ्गा) च हेम० । ८कात्यायनश्रौतसूत्रभाष्यकारे पु० ।

कर्कखण्ड पु० कर्कः श्वेताश्वयुक्तः खण्डः भूमिखण्डो यत्र देशभेदे । "मागधान् कर्कखण्डांश्च निवेश्य विषये स्वनः" भा० व० २५२ अ० ।

कर्कचिर्भटि स्त्री कर्कस्याः चिर्भटी । कर्कटीभेदे । राजनि० ।

कर्कट पु० स्त्री० कर्क—अटन् । चक्रामलकस्तुष्टुकतके १वृक्षभेदे २जलजन्तुभेदे कुलीरे । ( काँकडा ) "गमनाटत् करकर्कटोत्करम्" नैष० राजनि० । ( करकटिया ) ३पक्षिभेदे । ४अलाबूमूले च मेदि० । ५पद्मकन्दे जटा० मेषादितश्चतुर्थे ६राशौ "पादः पुनर्वसोरन्त्यः पुष्यो ऽश्लेषा च कर्कटः" ज्यो०त०उक्तसपादनक्षत्रद्वयात्मकः । तथा च ३६०अंशात्मके राशिचक्रे ९०अंशोत्तरम् ३० त्रिंशदंशात्मकः स राशिः । "शेषाः स्वनामसदृशाकृतयो भवन्ति" ज्यो०त०उक्तेस्तस्य कुलीराकृतित्वम् । अस्य वर्णाद्युक्तं नील०ता० "बहुप्रजाबहुपदः कुलीरवरोऽङ्गना पाटलक्षीणवर्णः । शुभः कफी स्निग्धजनोऽम्बुचारी समोदयी विप्रनियोत्तरेशः" तथा च अस्य बहुप्रजाश्रयिता बहुपदता चरराशित्वं स्त्रीरूपता पाटलवर्णता क्षीणवर्णता शुभत्वं शुभस्वामिकता च । कफप्रकृतित्वं स्निग्धजनत्वम् जलचरत्वम् समराशित्वम् विप्रवर्णत्वम् निशाबलित्वम् उत्तरदिग्गतत्वञ्च । अयं च कीटराशिः "कर्कटवृश्चिकमीना धनुषश्चान्त्यार्द्धं च कीटसंज्ञाः स्युः" इत्युक्तेः तत्र समत्वं युग्मराशित्वं समपरिमाणत्वञ्च । "ओजोऽथ युग्मं विषमः समश्च" "क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च" इत्युक्तेः "शुक्राश्विनि गोऽविघटा मिथुनधनुःकर्किमृगदृशाश्च समाः" इत्युक्तेश्च । "पृष्ठोदयाविभमिथुना दिवा शीर्षोदयाः परे" इत्युक्तेः अस्य शीर्षोदयत्वम् । अस्याधिपः चन्द्रः ।कुजशुक्रबुधेन्द्वर्क सौम्य शुक्रावनीभुवाम् ।—क्षेत्राणि स्युरजादयः इत्युक्तेः "मेष कर्कटयोर्मध्ये गाढं तपति भास्करः" तिथि० पु० । "कर्कटे प्रथमं देवी त्र्यहं गङ्गा रजस्वला" स्मृतिः । ( काँकुड ) ७एर्वारौ स्त्री गौरा० ङीष् भावप्र० । तस्याः गुणाः भावप्र० उक्ता यथा । "एर्वारुः कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ । कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा साऽऽमा पक्का तृष्णाग्निपित्तकृत्" । अस्याः पाकप्रकारस्तु । "त्वम्बीजरहिता प्रौढ़ा गुलिकाकारखण्डिता । तलिता सर्पिषि तप्ते कर्कटी वारवेष्टिता । विपाचह्य खण्डं घृतदुग्धपाद्धैं विभावितं मञ्जुलशर्कराभ्याम् । सतैलमाषं कटुष्णमेतत् प्रतिक्षणं रोचनमातनोति" । कोषलः । ८शाल्मलौ मेदि० । ९सर्पे शब्दरत्ना० । १०देवदालीलतायां ११घोषिकावृक्षे राजनि० । १४कर्कटजातिस्त्रियाञ्च । "यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः" भा०विरा०२७२श्लो० । कर्कटस्य कोषस्थता तन्मांसगुणाश्च भावप्रका० उक्ता यथा । "शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः । कोषस्था मधुराः स्निग्धा वातपित्तहरा हिमाः । "ताम्रचूडकर्कटकृष्णमत्स्यशिशुमारवराहवशाः" क्षीरं कर्कटरसे सिद्धं चास्य घृतं पिबेत्"सुश्रु० । अस्तौ चास्यामभ्युपातोक्ता तच्चाभ्युपशब्दे दर्शितम् । कर्कट साच्छृङ्गाकारोऽस्त्यस्य अर्श०अच् । तुलामानविशेषे कर्कट शृङ्गाकारे चायसे १५कीलकभेदे"पु०मिता०१६करटके पु० च । तत्पादाग्रतुल्याग्रत्वात्तस्य तथात्वम् । १७कर्कटशृङ्ग्याम् स्त्री ङीष् भाव०प्र० ।

कर्कटक न० कर्कटइव कायति कै-क । १यन्त्रभेदे (कम्पास) "कचिद्गुणकाकाशीसंदंशकछुरपशोषिकयोगचूर्णयोगवर्त्तिकासानस्तुतकर्कटकरज्जुदीपभाजनभ्रमरकरण्डक प्रभृत्यनेकोपकरणयुक्तः"दशकुमा० । कर्कटः इव इव कायति कै क । २वृक्षभेदे शब्दचिन्ता० । स्वार्थे कन् । ३कुलीरे अमरः ।

कर्कटशृङ्गी स्त्री कर्कट इव शृङ्गं यस्याः । (कांकडाशिङ्गा) १वृक्षभेदे । स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र । "शृङ्गी

कर्कटशृङ्गी च स्यात् कुलीरविषाणिका । अजशृङ्गी च वक्रा च कर्कटाख्या च कीर्त्तिता । शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्द्ध्ववाततृट्कास हिक्कारुचिवमीन् हरेत्" भावप्र० तद्गुणादि उक्तम्

**कर्कटाक्ष** पु० कर्कट इवाक्षि यस्य भेदोऽस्य । कर्कट्याम् (काँकुड) रत्नमाला । [ शृङ्ग्याम् भावप्र० ।

**कर्कटाख्या** स्त्री कर्कटस्याख्याख्या यस्याः । (काकडाशिङा)

**कर्कटाङ्गा** स्त्री कर्कटस्याङ्गं शृङ्गमिव शृङ्गमस्याः अजा० टाप् । शृङ्ग्याम् । राजनि० । [बिल्वहृदे राजनि० ।

**कर्कटाह्व** पु० कर्कटमाह्वायते कण्टकाररत्वात् आ+ह्वे–क ।

**कर्कटि** स्त्री कर्कं कण्टकमटति इन् शक०। (काँकुड) १चर्भटी शब्दचि०। वा ङीप् स्वार्थे, २गालमलीवृक्षे ३कर्कटशृङ्ग्यां च । मेदि० ।

**कर्कटिनी** स्त्री कर्कटस्येवाकारोऽस्त्यस्याः इनि ङीप् । दारुहरिद्रायाम् राजनि० । [ शब्दरत्ना० ।

**कर्कटु** पु० कर्क– बाहुलका० नि० । (करकटिया) पक्षिभेदे

**कर्कन्धु** स्त्री कर्कं कण्टकं दधाति धा–कु नि०सम् । १बदर्याम् (कुल) "कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाशङ्कया" सा०द० । तस्य पुंस्त्वमपि । "पुंसि स्त्रियाञ्च कर्कन्धुः बदरी कोलमित्यपि । फेनिलं कुवलं घोंटा सौवीरं बदरं महत् । अजप्रिया कुहा कोलो विषमोभयकण्टका । पच्यमानं सुमधुरं सौवीरं बदरं महत् । सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् । बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम् । सौवीरं लघु सपक्वं मधुरं कोलमुच्यते । कोलन्तु बदरं ग्राहि रुच्यमुष्णञ्च वातलम् । कफपित्तकरञ्चापि गुरु सारकमीरितम् । कर्कन्धूः क्षुद्रबदरं कथितं पूर्व्वसूरिभिः । अम्लं स्यात् क्षुद्रबदरं कषायं मधुरं मनाक् । स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् । शुष्कं भेद्यग्निकृत्सर्वं लघु तृष्णाक्लमास्रजित्" फले न० । "दध्नोरूपं कर्कन्धूनि" यजु० १६,२१, कर्कन्धूनां पाकः पीलादि० कुणच् । कर्कन्धुकुण तत्पाके न० । प्रस्थपरे कर्क्यादि० कर्कन्धुप्रस्थइत्यादौ नाद्युदात्तता । ततः मध्वा० चतुरर्थ्यां मतुप् । कर्कन्धुमत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप् । कर्कन्धुमती । तस्या अदूरभवः सुवास्त्वा० अण् । कार्कन्धुमत तददूरदेशभवे त्रि० ।

**कर्कफल** न० कर्क–हासे अच् कर्कं प्रकाशान्वितं सत् फलति फल–अच् । चुद्रामलके राजनि० ।

**कर्कर** पु० कर्क–हासे–अरन् १दर्पणे, मेदि० २चूर्णसाधने क्षुद्रपाषाणखण्डे कङ्करे, (काँकर) । कर्क–घञ् कर्कं हासं राति–रा–क । ३दृढे ४कठिने त्रि० मेदि० । "किं नो कर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते" अमरुश० । "करीरः कर्करोऽर्ककृक्" माघः । ५हङ्करे शब्दचि० ।

**कर्कराङ्ग** पु० कर्करइवाङ्गं यस्य । खञ्जने कालकण्ठविहङ्गमे शब्दमा० ।

**कर्कराट्** पु० कर्कं हासं रटति रट–कु । कटाक्षे जटाधरः ।

**कर्कराटुक** पु० कर्कं कठिनं रटति रट–उकञ् । (करकटिया) विहभेदे शब्दर० ।

**कर्करान्धुक** पु० कर्करः कठोरः अतिशयितान्धकारवत्त्वात् अन्धुः कूपः संज्ञायां कन् । अत्यन्तान्धकारवति कूपे । त्रिका० ।

**कर्कराल** पु० कर्करः सन् अलति अल–अच् । चूर्णकुन्तले हेमच० । तस्य इतरकेशापेक्षया कठिनत्वात्तथात्वम् ।

**कर्करिका** स्त्री कर्कर इवास्त्यस्याः अच् संज्ञायां कन् अत इत्वम् । नेत्ररोगभेदे शब्दचि० । तत्र हि नेत्रे कङ्करद्युक्ततेवोपलभ्यत इति तस्यास्तथात्वम् ।

**कर्करी** स्त्री कर्कं हासं राति रा–क गौरा० ङीष् । (झारी) १गलन्तिकापात्रे, अमरः कन्दोर्ध्वतादिपकलिगन्तुकाममाधने (झाँझरा) २कुम्भे च शब्दचि० । कर्कं राति रा–ईकन् । कर्करीकोऽप्यत्र । कर्करी+स्वार्थे कन् न ह्रस्वः कर्करीका तत्रार्थे स्त्री । [उज्ज्वल० ।

**कर्करीक** न० कर्क–फर्फरीका० ईकन् नि० । शरीरे

**कर्करेट** पु० कर्कं कर्कति शब्दं रेटत्यस्मात् रेट–अपादाने घञ् । अर्द्धचन्द्रे गलहस्ते (गलाटिपि) गलामर्दने हि कर्कशब्दकरणात्तस्य तथात्वम् ।

**कर्करेटु** पु० कर्कति शब्दं रेटति उन् उण० स० । (करकटिया) पक्षिभेदे अमरः ।

**कर्कश** पु० कृञ् हिंसायां विच् कः सन्+कशति–कर्क–अच् कर्क+लोमादि०श, करे कशति कश–शब्दे अच् शक० वा । १काम्पिल्लवृक्षे (गुड़ारोचनी) अमरः । २कासमर्दे । (कास्कासिन्दा) ३इक्षुदण्डे ४खड्गे च हेम० । ५साहसिके कठोरे च त्रि० अमरः "नेत्रकर्कशपर्वया" रघुः । "ऐरावतास्फालनकर्कशेन" कुमा० । "कृष्णा रूक्षाथवालिप्ता वा जिह्वा न्यूना च यस्य वै । कर्कशा वा भवेद्यस्य सोऽचिरात्हिजहात्यसून्" सुश्रु० । कर्कशं परिजीर्णेषु कृमिकृत्स्मदेयजम् । वर्जयेत् पलशाकन्तत्" सुश्रु० "सुरद्विपास्फालन-

विलताकुलनीलभासः प्रम्लानरागमलिनाः कलुषा विरूपाः । तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः कर्केतनस्य सदयं वपुरुद्वहन्ति । कर्केतनं यदि परीक्षितवर्णरूपं प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदां महिम्ना तस्यन्तु मूल्यमुदितं तुलितस्य कार्य्यम्" ७५अ०

**कर्कोट(क)** पु० कर्क—कोट । नागभेदे स च अष्टनागान्तर्गतः । "अनन्तोवासुकिः पद्मो महापद्मोऽपि तक्षकः । कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः" त्रिका० । ति०त० पुराणान्तरे गारुड़े च द्वितीयार्द्धे "कुलिकः कर्कटः शङ्ख इति पाठः । अयञ्च नागपञ्चम्यां पूज्यः यथाह तत्रैव । "शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः । वासुकिः तक्षकश्चैव कालियो मणिभद्रकः । ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ" इति । अयञ्च कद्रुसुतभेदः । "शेषः प्रथमतोजातोवासुकिस्तदनन्तरम् । ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" भा० आ० ३५अ० नागनामकथने । कर्कोटकनागस्य नारदशापेन जड़तामाप्तिकथा नलेन सह संवादश्च भा० व० ६६अ०

"उत्सृज्य दमयन्तीन्तु नलो राजा विशाम्पते ! । ददर्श दावं दह्यन्तं महान्तं गहने वने । तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् । अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् । मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् । ददर्श नागराजानं शयानं कुण्डलीकृतम् । स नागः प्राञ्जलिर्भूत्वा वेपमानो नलन्तदा । उवाच विद्धि मां नाम्ना नागं कर्कोटकं नृप ! । मया प्रलब्धो महर्षिर्नारदः सुमहातपाः । तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ! । तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् । इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् । तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् । उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् । सखा च ते भविष्यामि मत्समो नास्ति पन्नगः । लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् । एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः । तं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् । आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना । उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् । पदानि गणयन् गच्छ स्वानि नैषध ! कानिचित् । तत्र तेऽहं महाबाहो ! श्रेयो धास्यामि यत् परम् । ततः सङ्ख्यातुमारब्धमदशद्दशमे पदे । तस्य दष्टस्य रूपं तत् क्षिप्रमन्तरधीयत । स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः । स्वरूपधारिणं नागं ददर्श स महीपतिः । ततः कर्कोटको नागः सान्त्वयन् नलमब्रवीत् । मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति । यत्कृते चासि निकृतो दुःखेन महता नल ! । विषेण स मदीयेन दुःखं त्वयि निवत्स्यति । विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति । तावत्त्वयि महाराज ! दुःखं वै स निवत्स्यति । अनागा येन निकृतस्त्वमनर्हो जनाधिप ! । क्रोधादसूययित्वा तं रक्षा मे भवतः कृता । न ते भयं नरव्याघ्र ! दंष्ट्रिभ्यः शत्रुतोऽपि वा । ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ! । राजन् ! विषनिमित्ता च न ते पीड़ा भविष्यति । संग्रामेषु च राजेन्द्र ! शश्वज्जयमवाप्स्यसि । गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् । समीपमृतुपर्णस्य स हि वैवाक्षनैपुणः । अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर ! । स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै । इक्ष्वाकुकुलजः श्रीमान् मित्रञ्चैव भविष्यति । भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा । समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः । राज्येन तनयाभ्याञ्च सत्यमेतद्ब्रवीमि ते । स्वं रूपञ्च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ! । संस्मर्त्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः । अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे । इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा । एवं नलं समादिश्य वासो दत्त्वा च कौरव ! । नागराजस्ततो राजंस्तत्रैवान्तरधीयत" ।

७२अ० "तस्याथाक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः । कर्कोटकविषं तीक्ष्णं मुखात् सततमुद्वमन्" । ७८अ० । "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्" संज्ञायां कन् २बिल्ववृक्षे पु० राजनि० । ३फलवल्लीभेदे (काँकुड) गौरा० ङीष् । "कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् । दैवहिङ्गुमरिचैः परिपूर्णगर्भं तैलेन दग्धितसुसैन्धवपाकयोगम् । बाह्लीकयुक्तपयसा निहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तदत्यम्" । वैद्यके तद्गुणपाकादि । ४पीतघोषालके स्त्री राजनि० । स्वार्थे कन् अत इत्त्वम् । कर्कोटिका (काँकरोल) इत्थे (काँकुड) ५कुष्माण्डभेदे स्त्री राजनि० ।

**कर्कोटवापी** स्त्री कर्कोटनागवासेन ख्याता वापी । काशीस्थे

ती भेदे। "कर्कटशाख्या रेशाने मरीचेः कुणकुत्तमम्" काशीख०।

**कर्क्यादि** पु० प्रस्थेपरे षष्ठपूर्व्वपदस्य आद्युदात्ततापर्य्युदासविषये पाणिन्युक्ते शब्दगणभेदे स च "कर्की मश्ली मकरी कर्कन्धु करीर कन्दुक कवल बदरी" कर्कीप्रस्थः।

**कर्च्चरिका** स्त्री पूरिकाभेदे (कचुरी) पाकराजेश्वरः। तत्पाकप्रकारः भावप्र० उक्तो यथा "माषाणां पिष्टिका पूर्णा लवणार्द्रकहिङ्गुभिः। तया पिष्टिकया पूर्णा समिता कृतपोलिका। ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः। रुच्या स्वाद्वी गुरुः स्निग्धा बल्या पित्तास्रदूषिका। चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी। तथैव घृतपक्वापि चक्षुष्या रक्तपित्तहृत्"।

**कर्च्चरी** स्त्री कं जलं चुर्य्यतेऽत्र चुर-घञर्थे क गौरा० ङीष्। जलशून्ये शुष्ककलखण्डे (कचुरी) पाश्चात्यभाषाप्रसिद्धे द्रव्ये "क्षीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता। अरोचकादिरोगाणां कर्च्चरी कण्ठकर्त्तरी। कर्च्चरी रुचिकृद्बल्या सुस्वादुरतिदीपनी। उष्णा पित्तकरी प्रोक्ता कफहृत् वातिका स्मृता" भावप्र०।

**कर्च्चूर** न० कर्च्च जर+घञर्थे०। १स्वर्णे। २कर्च्चूरवर्णे ३तद्वति त्रि० अमरटीका (कचूर)प्रसिद्धे ४गन्धसारे शठ्याम् पु० भावप्र०। तद्गुणादि "कर्च्चूरो वेधमुख्यश्च द्राविडः कल्पकः शठी। कर्च्चूरो दीपनो रुच्यः कटुकस्तिक्त एव च। सुगन्धिः कटुपाकः स्यात् कुष्ठार्शोव्रणकासनुत्। उष्णो लघुर्हरेच्छ्वासं गुल्मवातकफक्रिमीन्" ५हरिताले न० वैद्य०। "रराज कर्च्चूरपिशङ्गवाससः" माघः। "कर्च्चुरः हरितालम्" मल्लि०।

**कर्च्चूरक** पु० कर्च्चूर+स्वार्थे कन् स इव कायति कै-क वा। (काँचा) १हरिद्रायाम् क्षीरस्वा०। तस्याः शट्याकृतित्वात् तथात्वम्। २कर्च्चूरशब्दार्थे च। [चकर्ज्ज प्रनिकर्ज्जति।

**कर्ज्ज** पीडायाम् भ्वा० पर० सक० सेट्। कर्जति अकर्जीत्।

**कर्ण** भेदने अदन्तचुरादि० उभ० सक० सेट्। कर्णयति ते अचकर्णत् त। कर्णयाम्-बभूव आस चकार चक्रे। कर्णयिता कर्णयिष्यति। कर्णनम् कर्णः कर्णितः कर्णयितुम्। कर्णयन् कर्णयमानः। कर्णयित्वा आकर्ण्य कर्णी। कर्ण्यते अकर्णि अकर्णिषाताम् अकर्णयिषाताम् आ+कर्ण-श्रवणे। "आकर्णयत्युत्सुकहंसनादान्" भट्टिः। "मिथस्तदाकर्णनसक्तकर्णया" देशाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलम्। "यदस्तदाऽकर्णि फलाढ्यजीवितम्" इति च नैष०। "आकर्ण्य हन्मति रतं चरणायुधानाम्" सा०द०।

**कर्ण** पु०। कर्ण्यते आकर्ण्यतेऽनेन कर्ण करणे अप्। कीर्य्यन्ते शब्दा वायुनाऽत्र कॄ-नन् वा। १श्रोत्रे शब्दज्ञानसाधने इन्द्रियभेदे तदाधारे २गोलके च। श्रोत्रञ्च कर्णशष्कुल्यवच्छिन्ननभोरूपमिति नैयायिकादयः। तात्त्विकाकाशस्यच्छायां इति वेदान्तिनः सांख्यादयश्च स्वीचक्रुः। तत्राद्यमते शब्दोत्पत्तिदेशे श्रोत्रस्य गमनाभावेन अन्यत्रोत्पन्नशब्दग्रहणासम्भवः। तथा हि आकाशस्यैकत्वेऽपि उपाधिभेदेन भेदात् यदीयकर्णशष्कुलीप्रदेशे शब्दसमवायस्तस्यैव श्रावणम् नान्यस्य, तत्र वीचितरङ्गन्यायेन कदम्बकोरकन्यायेन वा शब्दोत्पत्तावपि शब्दोत्पत्तिदेशस्य श्रोत्रस्य विभिन्नदेशस्यतया न शब्दोपलब्धिः स्यात्। अतस्तत्देशस्य शीघ्रं धावमानस्य वायोः संयोगविभागादयः श्रोतुः शब्दाभिव्यञ्जकाः। तदेतत् शब्दापूर्व्वकम् मीमांसाभाष्ये समर्थितम् यथा।

"यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति न कुर्व्वन्ति, आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, य एवापरस्य श्रोत्राकाशः, स एव देशान्तरेष्वपीति सुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत?। यस्य पुनः कुर्व्वन्ति, तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुमेव करिष्यन्ति। यथा, तन्तवः तन्तुष्वेव पटं, तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, सुघ्नस्थत्वात्तेषाम्। यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः, दूरे सन्तः कर्णशष्कुल्याः अनुपकारकाः संयोगविभागाः। तेन दूरे यच्छ्रोत्रं तेन नोपलभ्यते" इति। नैतदेवं, अप्राप्याश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् न च युगपदुपलभेते। तस्मात्प्राप्ताः उपकुर्व्वन्ति, न चेदुपकुर्व्वन्ति, तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागौ इति"। नैतदेवं, अभिघातेन हि प्रेरिताः वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्व्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते। ते च (संयोगविभागाः) वायोरप्रत्यक्षत्वात् नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु। अतो न दोषः। अत एव चानुवातं दूरादुपलभ्यते शब्दः"। वेदान्त्यादिमते शब्दस्य पञ्चभूतगुणतया शब्दाधारं वायुना झटिति कर्णदेशे यथावेगं धावमानेन कर्णप्रापणसम्भव-

कर्णेन शब्दोपलम्भः । तन्मते श्रवणेन्द्रियस्य प्राप्यकारित्वोक्तिरप्येतत्परेति बोध्यम् ।

कर्णस्याविशालदेशस्य दिक् इति तदधिकरणशब्दे उक्तम् । कर्णपाशाय शष्कुल्यादिदर्शनाच "कर्णं रतं कनकपत्रमनालपन्त्या" चौरप०। "नियमितादालकं नमस्कलकण्ठ्या" नैष० "तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः" रघुः श्रवणेन्द्रियस्य सूक्ष्मत्वेऽपि तदाधाराभिप्रायेण "अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नोतत" नैष० वाक्यम् । २सुवर्णालोवृत्ते मेदि० । ३त्रिकोणादिक्षेत्रे ४भुजकोटिसंयोजकरेखाभेदे तद्रेखामानज्ञानोपायश्च लीला० उक्तः यथा "इष्टाद्बाहोर्यः स्यात्तत्स्पर्धिन्यां दिशीतरो बाहुः । त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्तिता तज्ज्ञैः । तत्कृत्योर्योगपदं कर्णो, दोःकर्णवर्गयोर्विवरात् । मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात् पदं बाहुः" इति उदा० "दिङ्मात्रमत्रोच्यते भुजः ४ कोटिः ३ अनयोर्वर्गौ १६, ९, तयोर्योगः २५ तस्य मूलम् ५ तदात्र चतुरस्रबाहुके त्रिभुजकोटिके क्षेत्रे कर्णमानम् पञ्च हस्ताः । अधिकं क्षेत्रव्यवहारशब्दे वक्ष्यते । अस्य च भुजकोटिभेदनात् कृतिद्वारा तयोर्निष्पादनाच्च कर्णत्वम् । ५कुटिले च "व्याधारयत् प्राणभृतः कर्णसहिताः" काव्या० १७,६,०। "कर्णेन ऋजुतया सहिताः" स०प०व्या० "ऋजुया कौटिल्येन" इति काव्या० ५,४,११,वृ०व्या० कर्णः । कुन्त्याः कन्यावस्थायां सूर्यात् जाते स्वनामख्याते ६वसुषेणे तदुत्पत्तिकथा यथा "शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् । तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि । पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् । अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा । अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया । अददत् कुन्तिभोजाय स तां दुहितरं तदा । सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने । उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् । निगूढनिश्चयं धर्मे यन्तं दुर्वाससं विदुः । तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् । तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि । उवाच चैनां भगवान् प्रीतोऽस्मि सुभगे तव । यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि । तस्य तस्य प्रसादात्त्वं देवि! पुत्रान् जनिष्यसि । एवमुक्ता च सा बाला तदा कौतूहलान्विता । कन्या सती देवमर्कमाजुहाव यशस्विनी । प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा । अजीजनत् सुतं तस्यां सर्वशस्त्रभृतां वरम् । सतकुण्डलं सकवचं देवगर्भं श्रियान्वितम् । दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम् । निगूहमाना जातं वै बन्धुपक्षभयात्तदा । उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् । तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः । राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा । चक्रतुर्नामधेयञ्च तस्य बालस्य तावुभौ । दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम् । स वर्द्धमानो बलवान् सर्वास्त्रेषूद्यतोऽभवत् । वेदाङ्गानि च सर्वाणि जजाप जयतां वरः । यस्मिन् काले जपन्नास्ते धीमान् सत्यपराक्रमः । नादेयं ब्राह्मणेष्वासीत्तस्मिन् काले महात्मनः । तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः । ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजम् । उत्कृत्य कर्णो ह्यददत् कवचं कुण्डले तथा । शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत् । देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् । यस्मिन् क्षेप्स्यसि दुर्द्धर्षे स एकोन भविष्यति । पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ । ततो वैकर्त्तनः कर्णः कर्मणा तेन सोऽभवत् । आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः । स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः । स तु सूतकुले वीरो ववृधे राजसत्तम । कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम् । दुर्योधनस्य सचिवं मित्रं शत्रुविनाशनम् । दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम्" । तस्याङ्गदेशाधिपत्यप्राप्तिः अङ्गाधिपशब्दे उक्ता। कर्णोऽस्त्यस्य प्राशस्त्येन कर्ण+अच् ।७लम्बकर्णे त्रि०। "अदनीर्वैश्वदेवाः कर्णाः कर्णानिर्दिशः" यजु०२४,४०। "कर्णौ लम्बकर्णौ" वेददी०। ८नाविके च पु० कर्णः "शोकसरित्स्रोतसि" दुर्ग०। कर्णधारः। "हतकर्णेव नौर्जले" रामा०।

**कर्णक** पु० कर्णयति विभिद्य जायते कर्ण–ण्वुल् । इक्ष्वादीनां पत्रशाखादौ तेषां दारुस्फोटनेन जायमानत्वेन तथात्वम् । "कर्णोदुम्बराभादधाति ऊर्ग्वा उदुम्बर ऊर्जैवैनमेतद्रसेन प्रीणाति कर्णकवती भवति यशो वै कर्णकाः" "यदि कर्णकवतीं न विन्देत् दधिद्रप्समपहत्याद्ध्यात्" शत०ब्रा० ६,२,१,३०। "कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते"भा०। अङ्कुराद्य कर्णकशब्दवाच्यत्वञ्च पत्रशाखादिना पुष्टिमत्त्वात् इत्यपि तत्त्वबोधम् पत्राणाञ्च कर्णाकारत्वादपि कर्णकत्वमित्यपि बोध्यम् २कर्णिकायां दारस्फोटे ३रोगे च । "प्रत्यक् सहस्रा मकर्णका" काव्या० १८,४,६।"कर्णकोदारस्फोटो रोगस्तद्वती कोदम्बरी" स०प०। "कर्णकाभावे दधिद्रप्साः"काव्या० १८,४,७। ततः तारादि० इतच् । कर्णकितजातपत्रादौ त्रि० ।

**कर्णकण्डू** स्त्री कर्म० । कर्णगतरोगभेदे कर्णगतरोगशब्दे विवृतिः ।

**कर्णकीटी** स्त्री कर्णं यति भिनत्ति शच् स्वल्पः कीटः अल्पार्थे ङीप् कीटी कर्म०। शतपद्याम् (काणकोटारू)। हेमच०। [ङ्गमकर्णकोऽप्यत्र ।

**कर्णक्रिमि** पु० कर्णगतरोगशब्दे सुश्रुतोक्ते कर्णरोगभेदे

**कर्णक्ष्वेड़** पु० ७त० सुश्रुतोक्ते कर्णगतरोगभेदे कर्णगतरोगशब्दे विवृतिः।

**कर्णगतरोग** पु० कर्णे गतोरोगः। सुश्रुतोक्ते कर्णगते रोगभेदे तद्भेदनिदानादि तत्रैवोक्तं यथा।

"अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। १कर्णशूलं २प्रणादश्च ३बाधिर्य्यं ४क्ष्वेड एव च। कर्णस्रावः ५कर्णकण्डूः ६कर्णगूथ ७स्तथैव च। क्रिमि८कर्णप्रतीनाहौ विद्रधि १०र्द्विविध ११स्तथा। कर्णपाकः १२पूतिकर्ण १३स्तथैवार्शश्चतुर्विधम् १४,१५,१६,१७। तथार्बुदं सप्तविधं १८,२४, शोथश्चापि चतुर्विधः २५,२८। एते कर्णगतारोगा अष्टाविंशतिरीरिताः। समीरणः श्रोत्रगतोऽन्यथाचरः समन्ततः शूलमतीव कर्णयोः। करोति दोषैश्च यथास्वमावृतः स कर्णशूलः १कथितो दुराचरः। यदा तु नाडीषु विमार्गमागतः स एव शब्दाभिवहासु तिष्ठति। शृणोति शब्दान् विविधांस्तदा नरः प्रणाद २मेनं कथयन्ति चामयम्। स एव शब्दाभिवहा यदा सिराः कफानुयातो ह्यनुसृत्य तिष्ठति। तदा नरस्याप्रतिकारसेविनो भवेत्तु बाधिर्य्यमसंशयं खलु। श्रमात् क्षयाद्रूक्षकषायभोजनात् समीरणः शब्दपथे व्यवस्थितः। विरिक्तशीर्षस्य च शीतसेविनः करोति हि क्ष्वेड४मतीव कर्णयोः। शिरोऽभिघातादथ वा निमज्जतो जले प्रपाकादथवापि विद्रधेः। स्रवेत्तु पूयं श्रवणोऽनिलावृतः स कर्णसंस्राव५ इति प्रकीर्त्तितः। कफेन कण्डूः प्रचितेऽथ कर्णयो र्भृशं भवेत् स्रोतसि कर्णसंज्ञिते। विशोषिते श्लेष्मणि पित्ततेजसा नृणां भवेत् स्रोतसि कर्णगूथकः६। स कर्णगूथो द्रवतां यदागतो विलायितो घ्राणमुखं प्रपद्यते। तदा स कर्णप्रतिनाहसंज्ञितो ७भवेद्विकारः शिरसोऽतितापनः। यदा तु मूर्च्छन्त्यथ वापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः। तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः क्रिमिकर्णकस्तु ८ सः। क्षताभिघातप्रभवस्तु विद्रधि१०र्भवेत्तथा दोषकृतोऽपरः पुनः। स रक्तपीतारुणमस्रमास्रवेत् प्रतोदधूमायनदाहचोषवान्। भवेत्प्रपाकः ११खलु पित्तकोपतो विकोथविक्लेदकरश्च कर्णयोः।

स्थिते कफे स्रोतसि पित्ततेजसा विलाय्यमाने भृशमप्रतापनात्। अवेदनो वाप्यथवा सवेदनो घनं स्रवेत्पूति सपूतिकर्णकः १२। प्रदिष्टलिङ्गान्यर्शांसि १४,१५,१६,१७ तत्त्वतस्तथैव शोथा१८—२४र्बुद२५—२८लिङ्ग, मीरितम्। मया पुरस्तात्प्रसमीक्ष्य योजयेदिहैव तानि प्रयतो भिषग्वरः"। [२रोगभेदे च।

**कर्णगूथ** न० ६त०। १कर्णमले कर्णगतरोगशब्दे सुश्रुतोक्ते

**कर्णगोचर** पु० कर्णस्य कर्णव्यापारजन्यबोधस्य गोचरः विषयः। श्रवणयोग्ये विषये।

**कर्णग्राह** पु० कर्णमरित्रं गृह्णाति ग्रह—अण् उप०स०। कर्णधारे नाविके। तस्यापत्यं रेवत्या० ठक्। कार्णग्राहिक तदपत्ये पुंस्त्री०।

**कर्णच्छिद्र** न०६त०। कर्णरन्ध्रे "कर्णच्छिद्रे वर्त्तमानं कीटं क्लेदमलादि वा। स्नेहस्वेदहरेद्धीमानथवापि शलाकया" सुश्रु०।

**कर्ण(कर्णे)जप** त्रि० कर्णे जपति वा सप्तम्या अलुक्। खले सूचके। "कर्णेजपैराहितराजभावा" भट्टिः। अच् कर्णजापोऽप्यत्र।

**कर्णजलूका** स्त्री कर्णे जलूकेव। शतपद्याम् (कानकोटारू) कर्णजलौकस् इत्यप्यत्र शब्दरत्ना०। कर्णजलौकाऽप्यत्र अमरः। कर्णजलौकस् इत्यपि तदर्थे भरतः।

**कर्णजाह** न० कर्णस्य मूलम् कर्ण+जाह। कर्णमूले "कर्णजाहविलोचनेति" भट्टिः।

**कर्णजित्** पु० कर्णं जितवान् जि—भूते क्विप्। अर्ज्जुने तस्य तज्जयकथा भा०क० ९१ अ०। तयोर्युद्धकथा "ततोऽर्ज्जुनस्तस्य शिरो जहार, वृत्रस्य वज्रेण यथा महेन्द्रः। शरोत्तमेनाञ्जलिकेन राजन्! तदा महास्त्रप्रतिमन्त्रितेन"। कर्णहाप्यदयोऽप्यत्र।

**कर्णताल(ड)** पु०६त० तस्य च वा। कर्णताडने। "अन्तत्यत स्फुटतरकर्णतालया" माघः। [डुका) त्रिका०।

**कर्णदर्पण** पु० कर्णे दर्पण इव। कर्णभूषणभेदे (कानत-

**कर्णदुन्दुभि** पु० कर्णे दुन्दुभिरिव तत्तुल्यध्वनिहेतुत्वात्। शतपद्याम्। (कानकोटारू) शब्दमा० तस्याः कर्णप्रवेशे हि दुन्दुभिवद्ध्वानजननात्तस्यास्तथात्वम्।

**कर्णधार** पु० कर्णमरित्रं धारयति धृ—अण् उप०स०। १नाविके (मांझी) अमरः। "अकर्णधारा जलधौ विप्लवेतेह नौरिव" हितो०। "साहित्यार्णवकर्णधारेति" सा०द०। २दुःखादिनिवारके त्रि०। "अकर्णधारा

दूर्गवो न्वन्येव प्रतिभाति मे । गते दशरथे स्वर्गं रामे च रण्यमाश्रिते" रामा० ।

कर्णनाद पु० कर्णे अङ्गुल्यापिहितकर्णे नादः ध्वनिभेदः । अङ्गुल्यापिहितकर्णे (भों भों) इत्याकारे मध्यमाशब्दरूपे ध्वनिभेदे । "मध्यमा श्रुतिगोचरा" इत्युक्तेस्तस्याश्रयात्वम् ।

कर्णपत्रक पु० पत्रमिव कायति कै—क कर्णे पत्रक इव । कर्णपाल्याम् । "कर्णानिके चाक्षिकूटे शष्कुली कर्णपत्रकौ । कर्णौ शङ्खौ भ्रुवौ दन्तावेष्टावोष्ठौ ककुन्दरे" याज्ञ० । "कर्णपत्रकौ कर्णपाल्यौ" मिता० ।

कर्णपथ पु० कर्ण एव पन्थाः अच् समा० । कर्णरन्ध्ररूपे शब्दप्रवेशनयोग्ये मार्गे ।

कर्णपरम्परा स्त्री ६त० । श्रवणपरम्परायाम् । (काणाकाणि) "तेनैव च क्रमेणैव गतः कर्णपरम्पराम् । प्रवादोबहुलीभावं सर्वत्रापि पुरे ययौ" कथासरित्सा० । एकस्य सकाशादन्येन श्रुत्वाऽन्यस्मै कथने तेनापि पुनरन्यस्मै कथने एवं परम्परया श्रवणे अस्य वृत्तिः ।

कर्णपराक्रम पु० अपभ्रंशयोग्यबहुछन्दोयुक्ते काव्यभेदे ।

कर्णपर्वन् न० भारतान्तर्गते अष्टमे पर्वणि । तत्पर्वणि कथासंग्रहश्च भा० आ० १अ० यथा

"अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम् । सारथ्ये विनियोगश्च मद्रराजस्य धीमतः । आख्यानं यत्र पौराणां त्रिपुरस्य निपातनम् । प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः । हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् । वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना । दण्डसेनस्य च ततो दण्डस्य च वधस्तथा । द्वैरथे यत्र कर्णेन धर्मराजो युधिष्ठिरः । संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् । अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः । तत्रैवानुनयः प्रोक्तो माधवेनार्जुनस्य हि । प्रतिज्ञापूर्वकञ्चापि वक्षो दुःशासनस्य च । भित्त्वा वृकोदरो रक्तं पीतवानत्र संयुगे । द्वैरथे यत्र पार्थेन हतः कर्णो महारथः । अष्टमं पर्व निर्दिष्टमेतद्भारतचिन्तकैः । एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि । चत्वार्येव सहस्राणि नवश्लोकशतानि च । चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः" । "कर्णपर्वण्यपि तथा भोजनं सार्व्वकामिकम् । विप्रेभ्यः संस्कृतं सम्यग्दद्यात् संयतमानसः" भा० स्वर्गा० ६अ० ।

कर्णपाक पु० सुश्रुतोक्ते कर्णरोगभेदे कर्णगतरोगमध्ये विवृतिः

कर्णपालि(ली) स्त्री ६त० । कर्णपालके कर्णाङ्गभेदे । (काणेरपाता) तदवयवश्च मांसपेशीभेदः यथाह भावप्र० मांसपेशीसंख्याविभागे "यवार्द्धमूर्द्धायां युक्तोवायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । मांसपेश्यः समाख्यातास्तासां पञ्च शतानि च" इत्युपक्रम्य "गण्डयोश्चतस्रः कर्णयोर्द्वे" इत्युक्तम् । "कर्णशोथोभवेत् पाल्याम्" "कुर्वन्ति पाडिकां पाल्याम्" "विद्यात् स यवकुल्मीन् पाल्येः" । कर्णरोगे भावप्र० "विद्यात् निर्मांसीकुर्य्यात्" भावप्र० । कर्णं पालयति पाल+अण् उप० स० गौरा० ङीष् । (काणबाला) २कर्णालङ्कारभेदे हारा०

कर्णपाल्यामय पु० ७त० । कर्णव्यधदोषजे सुश्रुतोक्ते कर्णपालिरोगभेदे स च सुश्रुते सोपद्रवो दर्शितः यथा "अथैषाल्यामयान्नृणां पुनर्वक्ष्यामि सुश्रुत ! । कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः । द्विधा वाप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः । विस्फोटः स्तब्धता शोथः पाल्यां दोषे तु वातिके । दाहविस्फोटजननं शोथः पाकश्च पैत्तिके । कण्डूः सश्वयथुः स्तम्भो गुरुत्वञ्च कफात्मके । यथादोषञ्च संशोध्य कुर्यात्तेषां चिकित्सितम् । स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः । मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा । य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति । अत ऊर्द्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् । उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् । अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा । स्रावी च दाहवांश्चैव इत्युक्ताः क्रमशः क्रियाम्" ।

कर्णपिशाची स्त्री देवीभेदे । तन्त्रसारे मूलं दृश्यम् ।

कर्णपुर न० ६त० अच् समा० । चम्पानगर्याम् हेमच० ।

कर्णपुष्प पु० कर्ण इव पुष्पं यस्य । मोरटालतायाम् राजनि० ।

कर्णपूर पु० कर्णं पूरयति पूर-अण् । १कर्णाभरणे, २नीलोत्पले, ३शिरीषवृक्षे मेदिनिः । ४अशोकवृक्षे राजनि० । एतेषां पुष्पैः स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् । "वक्षाबोरंशुकुरनिकरः कर्णपूरोमयूरः" प्रसन्नरा० । "प्रवालनवीजाङ्कुरकर्णपूरः" "विलम्बिनीवारतृणकर्णपूरा" रघुः ।

कर्णपूरक पु० कर्णं पूरयति पूर—ण्वुल् । १कदम्बवृक्षे राजनि० । स्वार्थे कन् । २कर्णाभरणे ३नीलोत्पले, ४शिरीषवृक्षे ५अशोकवृक्षे च राजनि० । एतेषां पुष्पैः स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् ।

कर्णपूरण न० ६त० । सुश्रुतोक्ते तैलादिना कर्णस्य पूरणे

काश्यवद्धा न सिद्धिमुपयान्ति । भवन्ति चात्र । यस्य पालिद्वयमपि कर्णस्य न भवेदिह । कर्णपीठं समे मध्ये तस्य विद्धा विवर्द्धयेत् । बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् । आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः । एकैव तु भवेत्पालिः स्थूला पृथ्वी स्थिरा च या । तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् । गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता । कर्णपालिमपालेस्तु कुर्य्यान्निर्लिख्य शास्त्रवित् । अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसम्भारं विशेषतश्चात्रोपहरेत् सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति । ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य्य छेद्यभेद्यवेध्यव्यधनैरुपपन्नमुपपाद्य कर्णशोणितमवेक्षेत शुद्धमशुद्धं वेति । तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां, पित्तदुष्टे शीतोदकपयोभ्यां, श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात् । ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेद्द्विव्रणीयोक्तेन विधानेनोपचरेत् । भवतश्चात्र । विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम् । व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्ज्जयेत् । आमतैलपरोषेकं त्रिरात्रमवचारयेत् । ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम् । न चासंशुद्धरक्तमतिप्रवृत्तरक्तं वा सन्दध्यात् । स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान् । क्षीणोऽल्पमांसो न वृद्धिमुपैति । स यदा रूढो निरुपद्रवः सवर्णो भवति तदैनं शनैःशनैरभिवर्द्धयेत् । अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा । अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः । तद्यथा गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयःसर्पिस्तैलं गौरसर्षपजञ्च यथालाभं सम्भृत्यार्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गप्रतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् । स्वेदितोन्मर्दितं कर्णं स्नेहेनानेन योजयेत् । अथानुपद्रवः सम्यक् बलवांश्च विवर्द्धते । यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् । यतावर्कद्वगन्धाभ्यां पयस्यैरण्डजीवनैः । तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्द्धनम् । ये तु कर्णा न वर्द्धन्ते विधिनानेन योजिताः । तेषामपाङ्गदेशे तु कुर्य्यात् प्रच्छानमेव तु । बाह्यच्छेदं न कुर्वीत व्यापदस्तु ततो ध्रुवाः । वर्द्धमानन्तु यः कर्णं सहसैवाभिवर्द्धयेत् । आमकोशीसमाध्मातः क्षिप्रमेव विमुच्यते । जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः । सुरूढोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः । अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह । यो यथा सुविशिष्टः स्यात्तं तथा विनियोजयेत्" । एवं वेधप्रकाराभिज्ञेनैव भिषजा कर्णवेधः कारयितव्यः

**कर्णशष्कुली** स्त्री कर्णस्य शष्कुलीव । कर्णगोलके, "अवलम्बितकर्णशष्कुलीकलशीकं रचयन्नवोचत" नैष० । "कर्णशष्कुलवच्छिन्नं नभः श्रोत्रम्" सुश्रु० तन्मध्याकाशे च ।

**कर्णशूल** न० ६त० । कर्णरोगभेदे । कर्णगतरोगशब्दे विवृतिः

**कर्णशोभन** त्रि० कर्णं शोभयति शुभ-णिच्-ल्यु । कर्णाभरणे "उत नः कर्णशोभना पुरूणि" ऋ० ८,७८,१,

**कर्णश्रव** त्रि० श्रूयते श्रवः शब्दः कर्णेन श्रवः श्रवणयोग्यः शब्दोयत्र । श्रवणयोग्यशब्दधारे वय्वादौ "कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने" मनुः ।

**कर्णसंस्राव** पु० कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः ।

**कर्णसू** स्त्री कर्णं सूते सू-क्विप् । पृथायां कुन्त्याम् तत्प्रसवकथा कर्णशब्दे उक्ता । कर्णजनन्यादयोऽप्यत्र ।

**कर्णस्फोटा** स्त्री कर्णं स्फोटो विदारकं यस्याः । (काणफाटा) लताभेदे राजनि० । "कर्णस्फोटा कटुस्तिक्ता हिमा च परिकीर्त्तिता । सर्वभूतविषदोषव्याधिविनाशिनी" राजनि०

**कर्णस्रोतस्** न० कर्णस्य स्रोत इव । कर्णमले

**कर्णस्रोतोभव** पु० कर्णस्रोतसो विष्णुकर्णमलाद्भवति भूअप्,भवत्यस्मात् अपादाने अप् कर्णस्रोतो भवोयस्य वा । विष्णुकर्णमलोद्भूते मधुनामके कैटभनामके चासुरे । "कर्णस्रोतो भवञ्चापि मधुं नाम महासुरम् । तस्यैव कर्मणस्तस्यां बुद्धिं समास्थितम् । ब्रह्मणोऽपचितिं कुर्वन् जघान पुरुषोत्तमः" भा० अनु० १६६अ० यथाचास्य विष्णुकर्णोद्भवः तथा कैटभशब्दे वक्ष्यते ।

**कर्णहीन** त्रि० ३त० । १बधिरे बाधिर्य्यप्राप्तिश्च पापविशेषजन्या यथाह शाता०स० । "काकघातो कर्णहीनो दद्याद्ब्राह्मणतर्पणम्" । २सर्पे च पुंस्त्री चक्षुःश्रवस्त्वात्तस्य तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

चातकर्तृत्वखण्डनम् काव्य० "धातुर्बोधानुकूलत्वेति" चतुर्थचरणे पाठः। तेन घटानां कर्तृत्वखण्डनम्। स च प्रकारान्तरेण त्रिविधः "त्रिधैव जायते कर्त्ता विशेषेण क्रियां प्रति। योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः" भट्टका०। अस्यार्थः क्रियां प्रति प्रकारत्रयेण कर्त्ता विधीयते तस्य विवरणम् "स्वाध्यायोऽध्येतव्यः" इत्यत्र योग्यत्वेन अध्ययनस्त्रैवर्णिकः, १। "अहरहर्दद्यात् दीक्षितो न ददाति इत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरःपरः २। "स्वर्गकामो यजेत" इत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता जायते ३,। स च प्रकारान्तरेण त्रिविधः सात्त्विकादिभेदात् यथाह गीता "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" "रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः" "अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते"। कर्तृपदस्य क्रियान्वये कृत्यान्वये वा मतभेदेन रूढं न तु यौगिकमित्येतत् शब्दचि० भट्टमतदर्शनप्रस्तावे दर्शितं यथा

"अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतत्वव्यवहारानुपपत्त्या तु पच-कर्तृपदस्य कृत्याश्रयत्वबोधकत्वाच्च कृतौ यत्नार्थत्वं, क्रियामात्रार्थत्वे कृञः, क्रियाश्रयः कर्तृपदार्थः स्यात्। तथा च कारकमात्रेऽतिप्रसङ्गः एवञ्च कृञो यत्नार्थत्वेन आख्यातविवरणात् तस्यापि यत्नोऽर्थः। तदुच्यते। "कृताकृतविभागेन कर्तृरूपव्यवस्थया। यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना" सैवाख्यातार्थो भावनेति चेत्। बीजेनाङ्कुरः कृतः स्वर्गादिना सुखं कृतं बीजमङ्कुरं करोतीति यत्नं विनापि व्यवहारात्" "कर्तृपदञ्च न यौगिकं तथा हि कृञो यत्नार्थत्वे तिङः कृत्यर्थत्वे वा धातुप्रत्ययार्थयोः कृतिकृत्योर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य वाऽभावात् कृतेर्विशिष्टस्य कृतिनिराकाङ्क्षत्वादिति। एवं कृञः क्रियार्थत्वे तृचश्च क्रियाश्रयवाचकत्वे तयोः परस्परमन्वय एवेति उभयदर्शने कर्तृपदं कर्मादिपदवद्रूढमेव। रूढिश्च कृत्यान्वये क्रियान्वये वेत्यन्यदेतत् तथा च कृताकृतविभागेन च कर्तृरूपव्यवस्थया च न कृञो यत्नार्थत्वमिति किञ्चाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य चाऽप्रतीतेः प्रकृतिप्रत्ययार्थयोश्च साम्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्रैव विश्रान्तत्वाद्दोषाच्च" इत्यादिकम् भट्टमतम्। स्वमते तु कृञः यत्नार्थत्वमिति भेदः तच्च कृधातुशब्दे दर्शयिष्यते। शब्द०प्र०कर्तृपदं यौगिकमिति व्यवस्थाप्य तल्लक्षणमुक्तं यथा

"तिङा विकरणाक्तस्य धातोरर्थस्तु चाश्रयः। स्वार्थवाहपि योऽयस्तत्कर्तृत्वं तदिहोच्यते। यदिकार्येण यद्धातुनोपस्थाप्योयाश्रयार्थस्तदुत्तरतिङा स्वोपस्थाप्ययाश्रयार्थोऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकमित्यर्थः। कर्मण्यादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणाक्तेनेति न तत्र प्रसङ्गः। पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकयत्नादेरन्वयः यथाद्युत्तरतिङा बोध्यतदृति पाकस्य यत्नवत्त्वं, ज्ञानस्याश्रयत्वमेवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिबिम्बतदत्र अनात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्तृत्वम्। कर्तृशब्दस्तु आश्रयवाचित्वेऽपि कृत्यान्वये यौगिकएव न तु शक्यार्थकः प्रकारान्तराश्रयस्यैव शक्यत्वात् निरूढलक्षणया यत्नैव प्राश्रयत्वस्य तथा प्रत्यायनात्। घटस्य कर्त्तृत्वादौ चाहकूलत्वं यद्यर्थः फलस्य प्रायशः कृतिविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात् अतोन घटादिभोक्तृत्वकर्तृत्वप्रसङ्गः। क्रियान्वये कर्तृशब्दोऽकुरत्वेन रथादेर्गत्यादिकर्तृत्वमपि तत्त्वमेवेति तु न युक्तम्। क्रिया हि नाश स्पन्दत्वेनतस्य पाककर्तृत्वानुपपत्तेः भक्तु तण्डुलादेरेव तथात्वापत्तेः नापि धात्वर्थमात्रम् अतएव नापि स्पन्दनानुकूलव्यापारः चलनानुकूलव्यापारवतः कारकमात्रस्य चलनकर्तृत्वापत्तेः। अपि तु जुहोतीत्यादावप्यदादेरुत्तरं जुप्रत्ययैव विकरणस्य प्रतिसन्धाने भोजनकर्तृत्वादेरवगमदति। तदप्रतिसन्धानेऽपीति मतेनाह। यत्नभिन्नधात्वर्थवत्तया योऽनुभाव्यते। घटः स्वार्थः स धात्वर्थः कर्तृतया निगद्यते। यत्नभिन्नधातूपस्थाप्याश्रयार्थप्रकारकदर्थधर्मिकान्वयबोधं प्रति घटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्तृत्वम् पच्यते इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं घटानुभाव्यमपि न यत्नभिन्नस्य, पच्यते तण्डुल इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्मत्वमनुभाव्यते न तद्विशेषेण घटेति तद्व्युदासः। अपादानत्वादिभेदेन षड्विधत्वमित्युक्तानुकूलत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदुक्तो न्यूनत्वमत आह। धात्वर्थस्य

धर्मितया तिङाद्यैरनुभाव्यते। यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत्। धात्वर्थस्य विशेषणतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वं नतु धातुवाकाङ्क्षप्रत्ययस्याभिधेयत्वमात्रमुक्तं तथात्वे पचति इत्यादावपि कर्मत्वादेरुक्तत्वापत्तेः। पचति पच्यत- इत्यादौ तिङा, पाचकः पच्यमानइत्यादौ च कृता, कर्त्तृत्वं कर्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठं, दानीयो द्विजः, भीमोगजः, शयनं स्थण्डिलमित्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि कर्त्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। केचित् साम्प्रतं निर्गुणः परत्वाग्नदिपि "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्"इत्यादौ निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम्। धातुभेदेन कर्मत्वकारकस्योक्ततायां नियममाह। दुहादिभ्यः प्रत्ययेन मुख्यकर्मत्वमुच्यते। णिजन्तेभ्यः कर्त्तृताख्या तदन्यत्वेऽन्यकर्मता। दुहाद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते तेन गौः पयो दुह्यते दुग्धा चेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात्। वह्निप्रभृतेर्गत्यवच्छिन्नव्यापारः। तथैव गत्यवच्छिन्नविकर्षो वा च्यमतः साक्षात् तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकसंयोगादि। तथाच 'भारोमवनं नीयते' इत्यादौ ग्रामं ग्रामं लभ्यते'इत्यादौ च यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यवच्छिन्नविकर्षकर्मताश्रयः गा वेत्याकारकबोधयोरुत्पत्त्यैव सम्यतौ दुहादेर्गौणकर्मत्वं, नीवहादेः प्रधानत्वमित्याद्युक्तिभेदेन विविदयं शाब्दिकानामनादेयम्। णिजन्तोत्तरं कर्मतायाचिप्रत्ययस्तत्रे तु मूलधातोः कर्त्तृतायाकर्मतातिदेशस्तस्माच्च तादृगमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते यथा चैत्रोग्रामं गम्यते गमितो- चेत्यादौ ग्रामकर्मकव्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्मत्वमेव तद्धर्मविशेष्यतया तैरुच्यते यथा 'ओदनः पाच्यते खाद्यते वा भृत्येन भर्त्रा'इत्यादौ तत्र भर्तृकर्त्तृकव्यापारजन्यस्य स्वतन्त्रकर्त्तृकपाकादेः कर्मतयौदनादिरेव बोध्यते 'मैत्रेण पूगं खाद्यमानवंत्तोभजतीत्यादौ' कर्मणि शानजादिप्रत्ययः प्राक् परिष्कृतः" ।

न्यायादिमते कृतिमानेव कर्त्तृशब्दवाच्यः इत्यतः कर्त्तृत्वमात्मधर्मः। सांख्यमते बुद्धेरेव कर्त्तृत्वाभिनिवेशस्तदुपरागादकर्त्तुः पुरुषस्यापि तदभिमानः। तदेतत् सां० प्र० सू० भाष्ययोर्दर्शितम् यथा

"उपरागात् कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्" सू०। "अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्। एतदुभयमप्यास्तवमित्यर्थः। यथाग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः" भा०।

पुरुषस्य यथाऽकर्त्तृता तथा सां० कौ० व्यवस्थापितं यथा "तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्त्तृभावश्च" का०। "तस्माच्चेति चः पुरुषबहुत्वेन सह धर्मान्तराणि समुच्चिनोति विपर्यासादव्यक्तादिरुक्तो त्रैगुण्यविपर्ययादित्यनन्तरोक्तं सम्बध्येत अतस्तन्निरासाय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमोविषयो विप्रकृष्टञ्च तद इति विप्रकृष्टं त्रिगुणमविवेक्यादि सम्बध्यते। तस्मात् त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनोहि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयोभवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनो विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाचेतनोविषयो वा शक्योविषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अत्रैगुण्याच्चास्य कैवल्यम् आत्यन्तिको दुःखत्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात् सुखदुःखमोहरहितत्वात्सिद्धम्। अतएवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखो हि दुःखं द्विषन् मध्यस्थो- भवति तदुभयरहितस्तु मध्यस्थ उदासीन इति चाख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाकर्त्तेति सिद्धम्। स्यादेतत् प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्मते व्याहतमिति चेतनस्याकर्त्तृत्वात्कर्त्तुश्चाचैतन्यादित्यत आह कौ० "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीनः" का०।

"यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भ्रान्तिरियमित्यर्थः। लिङ्गं महदादिसूक्ष्मपर्यन्तं श्रुति भ्रान्तिबीजं तत्संयोगमाविद्यानम् अविरोधितार्थमन्यत्" कौ०। तदेतन्मतञ्च न्यायमुक्तावल्यां निराकृतं यथा "एतेन प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्यकारणयोरभेदात् कार्यनाशे कार्यरूपतया नाशः स्यादित्यकारणत्वं तस्य बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्। बुद्धिश्च प्रकृतेः प्रथमः परिणामः, सैव महत्तत्त्वमन्तःकरणमुच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिबिम्बाद्वास्तविको दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा। कर्तव्यमिति व्यापारावेशः। तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परिणामित्वादिति सांख्यमतमपास्तम् कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च चेतनोऽहं करोमीति प्रतीतेः। बुद्धेः परिणामित्वाच्चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे तत्पूर्वमसंसारापत्तिः। अचेतनायाः प्रकृतेः कार्यत्वात् न बुद्धेश्चैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्तुर्जन्यत्वे मानाभावात् वीतरागजन्मादर्शनादनादित्वम्। अनादेर्नाशस्याभावान्नित्यत्वम्" मुक्ता०। वेदान्तिमते आविद्यिकजीवस्यैवौपाधिकं कर्तृत्वं शा०सू० भा० व्यवस्थापितम् यथा।

"कर्त्ता शास्त्रार्थवत्त्वात्"। तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्त्ता चायं जीवः स्यात् कस्मात् शास्त्रार्थवत्त्वात् एवञ्च यजेत जुहुयात् दद्यादित्येवंविधं विधिशास्त्रमर्थवद्भवति अन्यथा तदनर्थकं स्यात्। तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति न चासति कर्तृत्वे तदुपपद्यते। तथेदमपि शास्त्रमर्थवद्भवति "एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष" इति भा०। 'विहारोपदेशात्' सू०। "इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति "स ईयतेऽमृतो यत्रकाममिति" "स्वे शरीरे यथाकामं परिवर्त्तते" इति च भा०। "उपादानात्" सू०। "इतश्चास्य कर्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्त्तयति। "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। "प्राणान् गृहीत्वेति च" भा०। "व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः" सू०। "इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिश्यते "विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चेति"। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यतेति नेत्युच्यते जीवस्यैवैष निर्देशो न बुद्धेः न चेज्जीवस्य स्यात् निर्देशविपर्य्ययः स्यात् विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। इह तु "विज्ञानं यज्ञं तनुत" इति कर्तृसामानाधिकरण्यनिर्देशात् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्त्ता स्यात् स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन सम्पादयेत् न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यते इति अत उत्तरं पठति" भा०। "उपलब्धिवदनियमः" सू०। यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्च उपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति। उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेन्न विषयप्रकल्पनमात्रप्रयोजनत्वादुपलब्धिहेतूनाम् उपलब्धौ त्वनन्यापेक्षत्वमात्मनः चैतन्ययोगात्। अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देशकालनिमित्तविशेषापेक्षत्वात्। न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्त्तते। भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्। सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते" भा०। "शक्तिविपर्य्ययात्" सू०। "इतश्च विज्ञानव्यतिरिक्तो जीवः कर्त्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्य्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत। सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात् अहं गच्छाम्यहं भुञ्जेऽहं

विप्नोति च तस्माच्च कर्तृशक्तियुक्तायाः सर्वार्थका- रिण्याः सर्वार्थकारि करणमन्यत् कल्पयितव्यं शक्तोऽपि हि सन् कर्त्ता करणमुपादाय क्रियासु प्रवर्त्तमानो दृश्यत इति । ततश्च संज्ञामात्रे विसंवादः स्यात् न च वस्तुभेदः कश्चित् करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्" भा० "समाध्यभावाच्च" सू०। "योऽप्ययमौपनिषदात्मप्रतिपत्ति प्रयोजनः समाधिरुपदिष्टो वेदान्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "ओमित्येवं ध्यायेत आत्मानम्" इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्तृत्वेनोपपद्येत,तस्मादप्यस्य कर्तृत्वसिद्धिः" भा० । "यथा च तक्षोभयथा" सू० "एवं तावत् शास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते । तत्र तैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम् अपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः । न स्वाभाविकं कर्तृत्वमात्मनः सम्भवति अनिर्मोक्षप्रसङ्गात् । कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति अग्नेरिवौष्ण्यात् । न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः कर्तृत्वस्य दुःखरूपत्वात् । ननुस्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात् पुरुषार्थः सेत्स्यति तत्परिहारश्च निमित्तपरिहारात् यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावस्तद्वत् न, निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात् । ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति न साधनायत्तस्यानित्यत्वात् । अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता तादृगात्मप्रतिपादनञ्च न स्वाभाविके कर्तृत्वेऽवकल्पते । तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम् । तथा च श्रुतिः "ध्यायतीव लेलायतीव" इति । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति चोपाधि संयुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । न हि विवेकिनां परस्मादन्यो जीवोनाम कर्त्ता भोक्ता वा विद्यते "नान्योऽतोऽस्ति द्रष्टेत्यादि" श्रवणात् । पर एव तर्हि संसारी कर्त्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेच्चितिमान् बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात् न अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः । तथा च शास्त्रं "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति" अविद्यावस्थायां कर्तृ[illegible]त्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदिति" । तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तर"मित्यारभ्य "एषास्य परमा गतिरेषास्य परमा संपत् एषोऽस्य परमो लोक एषोऽस्य परमानन्दः" इत्युपसंहारात् । तदेतदाहाचार्यः "यथा च तक्षोभयथेति"। त्वर्थे चायञ्चः पठितः । नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वम् अग्नेरिवौष्ण्यमिति । यथा च लोके तक्षा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवति एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वमात्मानं परं प्रविश्य मुक्तकार्यकरणसंघातोऽकर्त्ता सुखी भवति संप्रसादावस्थायां, तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी भवति । तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्त्ता भवति स्वशरीरेण त्वकर्त्ता, एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्त्ता भवति स्वात्मना त्वकर्त्तेति नत्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तथा मनआदीनि करणान्यात्मोपाददीत न्यसेद्वा । यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति तन्न विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्त्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति । न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम । तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्त्स्यते । कर्त्ता विज्ञानात्मा पुरुष इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति । एतेन विहारोपादाने परिहृते तयोरप्यनुवादरूपत्वात् । ननु सन्ध्ये स्थाने प्रसुप्तेषु करणेषु "स्वे शरीरे यथाकामं परिवर्त्तते" इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृभाव इति, तथोपादानेऽपि "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति" करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मनः कर्तृभावं गमयत इति । अत्रोच्यते न तावत् सन्ध्ये स्थाने

उपलम्भात्मनः करणविरमणमस्ति "सधीः स्वप्नो भूत्वेमं लोकमतिक्रामतीति" तथापि धीसम्बन्धश्रवणात् । तथा च स्मरन्ति "इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनमिति" । कामाद्यश्च मनसोऽवृत्तय इति श्रुतिः ताश्च स्वप्ने दृश्यन्ते तस्मात् समना एव स्वप्ने विहरति । विहारोऽपि तत्रत्यो वासनामय एव न पारमार्थिकोऽस्ति । तथा च श्रुतिरिवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति "उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्निति" । लौकिका अपि तथैव स्वप्नं कथयन्ति 'आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति । तथोपादाने यद्यपि करणेषु कर्म्मकरणविभक्तिनिर्देशस्तथापि तत्संप्रयुक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यं केवले कर्तृत्वासम्भवस्य दर्शितत्वात् । भवति च लोकेऽनेकप्रकारा विवक्षा 'योधा युध्यन्ते' 'योधै राजा युध्यते' इति च । अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात् । यस्त्वयं व्यपदेशो दर्शितः "विज्ञानं यज्ञं तनुते" इति स बुद्धेरेव कर्तृत्वं प्रापयति विज्ञानशब्दस्य तत्र प्रसिद्धत्वात् मनोऽनन्तरपाठाच्च "तस्य श्रद्धैव शिरः" इति विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात् श्रद्धादीनाञ्च बुद्धिधर्म्मत्वप्रसिद्धेः "विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते" इति च वाक्यशेषात् ज्येष्ठत्वस्य बुद्धौ प्रसिद्धत्वात् "स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः" इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात् । न च बुद्धेः शक्तिविपर्य्ययः करणानां कर्तृत्वाभ्युपगमे भवति सर्वकारकाणामेव स्वव्यापारेषु कर्तृत्वस्यावश्यम्भावित्वात् । उपलब्ध्यपेक्षं त्वेषां करणत्वं सा चात्मनः । न च तस्यामप्यस्य कर्तृत्वमस्ति नित्योपलब्धिस्वरूपत्वात् । अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यत्वात् । न चैवं सति करणान्तरकल्पनाप्रसङ्गः बुद्धेः करणत्वाभ्युपगमात् । समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः । यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात् । तस्मात् कर्तृत्वमप्यात्मन उपाधिनिबन्धनमेवेति स्थितम्" भा० । "अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इति गीतया कर्तृत्वस्याहङ्काराधीनतयौपाधिकत्वं सूचितमिति द्रष्टव्यम्" ।

तथा चान्तःकरणोपहितचैतन्यमेव जीवः स एव वेदान्तिमते कर्त्तेति तत्त्वम् । तस्य च ईश्वराधीनत्वेन कर्तृत्वं तदपि "परात्तु तच्छ्रुतेः" इत्यादिना सू० भाष्ययोर्व्यवस्थापितं तच्च ईश्वरशब्दे दर्शितमिति । स्त्रियां ङीप् कर्त्री । "कर्त्तरि कृत्" "कर्तृकरणयोस्तृतीया" "अकर्त्तरि च कारके" "कर्त्तुरीप्सिततमं कर्म्म" "कर्त्तुरुपमानादाचारे क्यङ्" "शेषात् कर्त्तरि परस्मैपदम्" पा० "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्" हरिः २तत्प्रयोजके "तत्प्रयोजको हेतुश्च" पा० "अकर्त्तर्य्यृणे" पा० । कर्त्तृभावः त्व कर्त्तृत्व न० तल् कर्त्तृता स्त्री कृत्याश्रयत्वे क्रियाश्रयत्वे च । तत्र नैयायिकमते आख्यातस्य कृतौ शक्तिः वैयाकरणमते कर्त्तरि शक्तिः "कर्त्तरि कृत्" "लः कर्म्मणि च भावे चाकर्म्मकेभ्यः" पा० सूत्राभ्यां तथैव प्रतिपादनात् "कर्त्तरि कृत्" इत्यतः कर्त्तृपदस्यैव परस्मिन्ननुवृत्तेः लकारस्यापि तदर्थकत्वेनैवाकरे स्थितम् । अधिकमाख्यातशब्दे उक्तम् । "न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः" गीता । ३परमेश्वरे पु० तस्य सर्वकर्तृत्वात् "एतेषां पुरुषाणां स कर्त्ता यस्य वैतत् कर्म्म स वै वेदितव्यः" इति श्रुतेस्तस्य तथात्वम् यथा च तस्य सर्वकर्तृत्वं तथा ईश्वरशब्दे दर्शितम् । "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णु स० । कृत-तृच् । ४छेदके त्रि० स्त्रियां ङीप् "क्रोधहा क्रोधकृत्कर्त्ता" विष्णु स० । "क्रोधकृतां दैत्यानां कर्त्ता छेदकः इत्येकं नामेति" भा० (कात) ५क्षुद्रखड्गे न० । तस्य कर्त्तनहेतुत्वात् तथात्वम् "चतुर्भुजां खड्गाढ्यौ तु दक्षेण कर्तृखर्परौ" ताराध्यानम् । ईषल्लिकायां स्त्री ङीप् । "कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम्" ताराध्यानम् । उभयमपि उग्रताराशब्दे दर्शितम् । (कातारी) ७कर्त्तर्य्याम् शब्दरत्ना० । स्वार्थे क । कर्तृकापि क्षुद्रखड्गे स्त्री "हास्ययुक्तां त्रिनेत्राञ्च कपालकर्तृकाकराम्" तन्त्रसा० श्यामाध्यानम् । किरति विक्षिपति कायम् कृ-विक्षेपे तृच् । स्वरादिच्छेदके इदादौ । ततोऽस्त्यर्थे मतुप् कर्तृमत् कर्तृयुक्ते त्रि० स्त्रियां ङीप् । "ह्रस्वनुड्भ्यां मतुप्" पा० अस्य उदात्तत्वम् । कर्तृशब्दे उपपदे दिवाविभेत्यादिना कृञः टः । कर्तृकर कर्तृकारके तत्प्रयोजके । स्त्रियां ङीप् । इष्ठे ईयसि च तृचो लोपः करिष्ठः करीयान् । तृचस्तु न लुक् । इष्ठने कर्त्तिष्ठः कर्त्तीयानिति भेदः ।

कर्त्त शैथिल्यकरणे अद० चुरा० उभ० सक० सेट् । कर्त्तयति ते कर्त्तापयति ते अचकर्त्तत् त । कर्त्तयाम्-

बभूव चाक्षचकार चक्रे । कर्त्तार्ते चकर्त्ति—चकर्त्तिषा-ताम्–चकर्त्त विषाताम् । प्रतिकर्त्तयति । प्र कर्त्तितः ।

**कर्त्रभिप्राय** पु॰ कर्त्तारमभिप्रैति संबध्नाति अभि+प्र+इण–अच् उप॰स॰।कर्त्तृसम्बन्धिनि ।“स्वरितञितः कर्त्त्रभिप्राये क्रियाफले” पा॰ । अत्र क्रियाफलस्वरूप-व्याख्याभिःशब्दार्थरत्ने निरूपितं यथा ।

“स्वरितञिदादुक्तरतङः कर्त्तृगामिन्येव सति क्रियाफले कर्त्तृवाचकत्वं नान्यथा तत्र फलञ्च न धातूपस्थाप्यं ज्ञानाख्यादीनां ज्ञानरूपफलस्य समवायेन कर्त्तृनिष्ठतया मनर्द्दैवं जानीते इत्येव प्रयोगापत्तेः ज्ञानातीत्यादेरप्रयोगापत्तेश्च नेष्यते तु तथा शास्त्रकारैः । नापि क्रियाजन्यत्वेतनदीत्वयादिरूपलाभादि गौणं फलमिह विवक्षितं तथा सति सूदादेर्लाभफलवत्त्वेन सूदः पचते ऋत्विजो-यजन्ते इत्यादिप्रयोगापत्तेः । किन्तु फलतीतिव्युत्पत्त्या प्रयोजनापरनामकक्रियाजन्यस्वर्गादिरूपमेव मुख्यं फलं ग्राह्यं यथोक्तं हरिणा “यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति”। प्रसिद्ध्यर्थं निष्पत्त्यर्थं पचादयः पाकादयस्तासां पचादीनां प्रधानं फलं तदित्यर्थः फलस्य प्राधान्यञ्चेतरापेक्षया बोध्यं तेन इतरेच्छानधीनेच्छाविषयत्वस्य तस्य सुखादिष्वेव सत्त्वेऽपि क्वचित् साक्षात्सुखादिरूपप्रयोजनालाभे तत्साधनरूपेतरफलस्यापि पक्षत्वमिति द्रष्टव्यम् तेन “अपाद्दः”पा॰इत्यादिसूत्रविहिततङः सुखादिरूपमुख्यप्रयोजनाभावेऽपि कर्त्तृवाचकत्वम्” ।

कर्त्तुरभिप्रायो यत्र । २कर्त्तुरभिप्रायविषये त्रि॰ उक्त पाणिनिसूत्रस्य “आत्मनेपदमपि कर्त्त्रभिप्रेतक्रिया फलमात्रजनकत्वेनेति”शब्दचि॰ व्याख्यानात्तदर्थता अत एव पा॰ सूत्रस्योभयार्थता । तदेतच्छब्द॰ प्र॰विवृतं यथा “अस्योभयपदिधातूनां यत्र क्रियाफलं कर्त्तृनिष्ठं तत्रात्मनेपदं यत्र च कर्त्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु “स्वरितञितः कर्त्त्रभिप्राये क्रियाफले”इति सूत्रेण कर्त्तारमभिप्रैति सम्बध्नातीति व्युत्पत्त्या कर्त्तृसम्बद्धे क्रियाफले एवात्मनेपदस्य विधानात् । अतएव “स्वरितञित्यजन्तधातूनां कर्त्तृनिष्ठे क्रियाफले । आत्मनेपदमुद्दिष्टं तदनिष्ठे परात्मकम्”इत्यपि प्राचीनाः पठन्ति । तदनुसृत्यैव दानादिस्वगते फले ददे इत्येवं, परगते तु ददातीत्येव वाक्यं प्रयुञ्जते बुधाः ।“स्वर्गकामो यजेत”इत्यादौ च सामान्यतः स्वतःअपि फलं कर्त्तृनिष्ठमेव “मास्तदेयितं फलमनुधावतीति”

मीमांसयोक्तगतकथा करणमादिति प्राहुः । चिन्तामणिकृतस्तु यत्र क्रियाफले कर्त्तुरभिप्रायइच्छा तत्रात्मनेपदमिति सूत्रार्थस्तेन याजकादर्दक्षिणादिलाभेच्छयैव यागादिकरणे यजन्ति याजकाः पठन्ति पाठकाः इति परस्मैपदम् । परगतस्वामि याग दिफलेच्छया तत्करणे तु यजन्ते याजकाइत्यादिकः साधुरेव प्रयोगोऽतएव “पितृस्वर्गकामः पुष्करिण्या यजेत” इत्यादावप्यात्मनेपदम् “धनकामोऽग्न्यपतिं हविकामोऽहं वेदहरिम्” इत्यादौ च परस्मैपदं प्रयुज्यते” इत्याहुः । [चकर्द्दीत् चकर्द प्रतिकर्द्दति ।

**कर्द** कुत्सितरवे उदरशब्दे च भ्वा॰पर॰अक॰सेट् । कर्द्दति

**कर्द** पु॰ कर्द–अच् । कर्दमे । शब्दर॰ ।

**कर्दट** पु॰ कर्द कर्दमं कारणत्वेनाटति प्राप्नोति अट–अच् ईत॰ यत॰ । १करहाटे पद्मकन्दे २कर्द्दमगन्धादि त्रि॰ । मेदि॰ । कर्द–अटन् । ३पङ्के पु॰मेदि॰।

**कर्दन** न॰ कर्द–भावे ल्युट् । उदरशब्दे हेमच॰ ।

**कर्दम** पु॰ कर्द–अम । (कादा) १पङ्के अमरः । “सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्”रघुः । करणे अम । २पापे उणादिकोषः । तस्य कुत्सितशब्दहेतुत्वात्तथात्वम् । ३मांसे न॰ शब्दचि॰ । तत्सेवने हि उदरशब्दोजायते इति तस्य तथात्वम् । कर्दमच्छाया कारणत्वेनास्त्यस्य अर्श॰ अच् । ब्रह्मणश्छायाजाते ४प्रजापतिभेदे । “छायायाः कर्दमोजज्ञे देवहूत्याः पतिः प्रभुः” भाग॰ ३,१२,१४,“प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः। सरस्वत्यां तपस्तेपे सहस्राणां समा दश । ततः समाधियोगेन क्रियायोगेन कर्दमः । संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम्” भाग॰३,२१ अध्यायोक्तादौ। ततः कपिलस्य प्रादुर्भावोवर्णितः । तस्यामनिरुक्तिः” ब्रह्मवै॰ पु॰प्र॰ख॰ दर्शिता यथा । “वेदेषु कर्दमः शब्दश्छायायां वर्त्तते स्फुटम् । बभूव कर्दमाख्याकः कर्दमस्तेन कीर्त्तितः”। तेन ५छायायामपि । ततः अश्मादि॰ चतुरर्थ्यां र । कर्दमर पङ्कसन्निकृष्टदेशादौ त्रि॰ कर्दमोजातोऽस्य तारका॰ इतच् । कर्दमित जातकर्दमे त्रि॰ । अर्श॰ मत्वर्थे अच् । कर्दम ६कर्दमयुक्ते त्रि॰। काश्या॰ चतुरर्थ्यां ठञ् ञिठौ कार्दमिक कर्दमसन्निकृष्टदेशादौ त्रि॰ ठञि स्त्रियां ङीप् । मत्वर्थे इनि कर्दमिन् पु॰तद्युक्ते त्रि॰ तृतदने पु॰ वैद्य॰ तस्य कर्दमसमीपजातत्वात्तथात्वम् । पृषो॰ कर्द्दमीत्यपि तत्रार्थे ।

**कर्दमक** पु॰ कर्दमे कायति प्रकाशते कै–क । शालिभेदे,

तस्य पङ्के एव हि प्ररोह इति तस्य तथात्वम्। "र-क्तशालिशलिकमद्रकमुकन्दकशालि कपोतकप्रमोदककाल-कायनकपुष्पकमर्दनकशकनाड़ूरसुगन्धककमनीवारकोद्र-वोद्दालकश्यामाकगोधूमवेणुयवादयः" सुश्रु०।

कर्द्दमाटक पु० कर्द्दमे इव आटोमतिरत्र कप्। विष्ठा-दिमलिनस्थाने शब्दरत्ना०। [प्रचुरकर्दमयुक्तदेशे।

कर्द्दमिनी स्त्री कर्द्दमानां देशः पुष्करा० देशे इनि।

कर्पट पुंन० कु-कर्म्मणि विच्-कर्-पटः कर्म्म०। १जीर्णे वस्त्रखण्डे (लाताकानि), २मलिनवस्त्रे। करस्थः पटः शाक०। वस्त्रादिमार्ज्जनार्थे हस्तन्यस्ते। ४वस्त्रमात्रे। ५कषायरक्ते वस्त्रे च। "नीलशैलस्य पूर्वस्मिन् स्वरूपं प्रतिपादितम्। नाभिमण्डलपूर्वस्यां भस्मकूटस्य दक्षिणे। पूर्वस्यां कर्पटो नाम पर्वतोऽयमरूपश्च" कालिका ८१ अ० उक्ते ६पर्वतभेदे पु०। [कादी शब्दरत्ना०।

कर्पटिक त्रि० कर्पट-अस्त्यर्थे ठन्। कर्पटयुक्ते भिक्षु-

कर्पण पु० कृप-ल्युट् पृषो० नलाभावः। आयसे शस्त्रभेदे। "प्रासशक्तिपर्पणकर्पणासनपट्टिशभुशुण्डीतोमरादि-महस्त्रजालसमायुक्तान्" दशकु०।

कर्पर पु० कृप्-अरन् नलाभावः। १कपाले घटावयवे २शीर्षास्थिनि, अमरः (माथार खुलि), ३शस्त्रभेदे (कात) ४कटाहे च मेदिनी ५उडुम्बरे वृक्षे शब्दच०।

कर्परांश पु० ६त०। कपालांशे (खापरा) शब्दचि०।

कर्पराल पु० कर्पर इवालति अल-अच्। पर्वतपीलुभेदे। (आखरोट) शब्दार्थे रमानाथः।

कर्पराशिन् पु० कर्परेऽश्नाति अश-भोजने णिनि। वटुक-भेदे। "श्मशानवासी मांसाशी कर्पराशी मखान्तकृत्" वटुकस्तवः। [त्थम्। कर्परोद्भवे तुत्थे हेम०।

कर्परिकातुत्थ कर्पर्य्येव स्वार्थे कन् कर्परिका सैव तु-

कर्परी स्त्री कृप-अरन्-नलाभावः गौ० ङीष्। १दारुहरिद्रा-सारभवे द्रव्ये(खर्परे) अम०। २रसके भावप्र० खर्परीति वा पाठः। रसकश्चोपरसभेदः उपरसभेदाश्च उपरसशब्दे उक्ताः भावप्र० तद्गुणाद्युक्तं यथा "कर्परीतुत्थकं तद्वाद्-न्यतद्रसकं स्मृतम्। ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः"। तुत्थसामान्यं तु नोपरस इति भेदः।

कर्पास पुंन० कृ-पास। १वदरे तूलवयोनौ (कापास) वृक्षभेदे अमरः। गौरा० ङीष्। तत्रैव स्त्री भावप्र०। "कर्पासी तुण्डकेरी च समुद्रान्ता च कथ्यते। कर्पासिका लघुः कोष्णा मधुरा वातनाशिनी। तत्पलाशं समीरघ्नं रक्तकृन्मूत्र-वर्द्धनम्। तत्कर्णं पिडकानाशि पूयस्रावविनाशनम्। तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु" इति तद्गुणोक्तिः।

कर्पासफल न० ६त०। (माकाटो) कर्पासबीजे।

कर्पूर पुंन० कृप्-ऊर नलाभावः। स्वनामख्याते गन्ध-द्रव्ये, तद्गुणाः भावप्र० उक्ताः, यथा "कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः। सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः। दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः। कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः। पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम्। (अथ चिनिया कर्पूर) "चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः। कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः। कर्पूरो नूतनस्तिक्तः स्निग्धशोध्याकहृद्दहः। चिरस्थो-दाहशोषघ्नः स भौतः सुभक्तस्तु परः"। तस्य च "पोतासः भीमसेनः शितकरः शङ्कराबालुकश्च पांशुः पिञ्जः अब्द-सारः हिमवालुकः जूतिका तुषारः हिमशीतलः पत्रिका-ख्यभेदात् द्वादश भेदा राजनि०। ततः काशा० चतुरर्थ्याम् इञ्। कार्पूरिक तत्सन्निकृष्टदेशादौ त्रि०। सु-भ्रादिपाठात् तन्नामके। २नरभेदे तस्यापत्यं शुभ्रा० ढक्। कार्पूरेय तदपत्ये पुंस्त्री। [ कर्पूरे शब्दच०।

कर्पूरक पु० कर्पूर इव कायति कै-क। (कचुर) नामद्रव्ये

कर्पूरतिलका स्त्री जयाख्यसखीभेदे विजयायाम् शब्दमाला।

कर्पूरतैल न० कर्पूरस्य तैलमिव स्नेहः। कर्पूरस्नेहरूपे हिमतैले तैलभेदे राजनि०। "कटूष्णं हिमतैलं स्यात् कफवातामयापहम्। दन्तदार्ढ्यकरं पित्तकारकं परि-कीर्त्तितम्" राजनि०।

कर्पूरनालिका स्त्री "दलाढ्यया समितया कृत्वा कणापुटं ततः। लवङ्गोल्बककर्पूरयुतया सितयाऽन्वितम्। पचेदाज्येन सिद्धेषा ज्ञेया कर्पूरनालिका। संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका" भावप्र० उक्ते पाकभेदसिद्धे भक्ष्यभेदे।

कर्पूरमणि पु० कर्पूरवर्णो मणिः। रत्नभेदे, "कर्पूरम-णिनामायं गुरुश्च वातादिदोषनुत्" राजनि०। कर्पूरा-श्मादयोऽप्यत्र पु०।

कर्पूररस पु० कर्पूर इव श्वेतोरसः पारदः। पाकविशेषेण कर्पूरवत्कृते पारदे रसकर्पूरे तत्पाकप्रकारः भावप्र० उक्तो यथा—

"अथ कर्पूररसस्य विधिः तत्र पारदस्य संक्षिप्तं शोधनं कर्त्तव्यम्। शुद्धसूतसमं कुर्यात् प्रत्येकं गैरिकं सुधीः। इष्ट-कां खटिकां तद्वत्स्फटिकां सिन्धुजन्म च। वल्मीकं क्षार-लवणं भाण्डरञ्जकमृत्तिकाम्। सर्वाण्येतानि सञ्चूर्ण्य वास-

वा चापि योधयेत् । खटिका(खरी)(स्फटिका)(फट्किरी) सिन्धुजन्म मंस्थम् । वल्मीकम् (वल्मीकमाटी) चारलवणम् (खा'रिलोण)भाण्डरक्तकपर्त्तिका(कावित)। एभिस्तूल्यैर्युतं सूतं यावद्यामं विमर्दयेत् । तच्चूर्णसहितं सूतं स्थाली-मध्ये परिक्षिपेत् । तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत् समाम् । मत्स्यकर्पटितमृदा रुद्धयेदनयोर्मुखम् । संशोष्य रुद्धयेद्भूयो भूयः संशोष्य रुद्धयेत् । सम्यक् संशोष्य चुल्ल्यां तां स्थालीं तु स्थां विधारयेत् । वह्निं निरन्तरं दद्याद्याम-द्विनचतुष्टयम् । स्थाल्योपरि तदूर्ध्वं रक्षेद्यत्नादहर्निशम् । शनैरुद्घाटयेदन्त्यमूर्द्ध्वस्थालीगतं रसम् । कर्पूरवत् सुविमलं स्फटीकाद्गुणवत्तरम् । तदेव कुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम् । खादन् हरति फिरङ्गव्याधिं सोपद्रवं सपदि । विन्दति वह्निदीप्तिं पुष्टिं वीर्य्यं बलं विपुलम् । रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम्" ।

कर्पूरस्तव पु॰ कर्पूरपदघटितः स्तवः । "कर्पूरं मध्यमान्त्य-स्वरपरिरहितम्" इत्यादिके तन्त्रोक्ते श्यामास्तवभेदे ।

कर्पूरा स्त्री कर्प-खर्जू॰ ऊर-वत्याभावः । हरिद्राभेदे । "दार्वी मेदासगन्धा च सुरभी दारुदारु च । कर्पूरा पद्मपत्रा स्यात् सुरीमत् सुरतावकाः" भावप्र॰ तत्पर्य्यायः । मदनपाले तु हरिद्रायाः पञ्चधा विभागस्तत्र तद्धा उक्ताः, यथा "दार्वी दारुहरिद्रा स्यात् पीतदारु च पञ्चधा । कटङ्कटेरी पीतद्रुः स्वर्णवर्णा कटङ्कटी । दार्वी तद्विशेषात्तु मूलकर्पूरीमनुत्" ।

कर्पूरिन् त्रि॰ कर्पूरोऽस्त्यस्य इनि । कर्पूरयुक्ते ततः सुवास्ता॰ चतुरर्थ्याम् अण् । कार्पूर तत्सादूरभवदेशादौ त्रि॰ ।

कर्फर पु॰ कीर्य्यते विच् फल्यते फलः प्रतिबिम्बः कः कीर्य्यमाणः फलः प्रतिबिम्बं यत्र यस्य रः । दर्पणे अटाधरः तत्र हि प्रतिबिम्बस्य पतनात् तस्य तथात्वम् ।

कर्ब गतौ भ्वा॰पर॰सक॰सेट् । कर्बति अकर्बीत् । चकर्ब ।

कर्बु पु॰ कर्ब-उ । १चित्रवर्णे २तद्वति त्रि॰ "चन्त्रा रजस्वलस्य दीपवद्युः स्थितो हृदि । सिताचिताः कर्बुनीलाः कपि-लाः पीतलोहिताः" याज्ञ॰ । स्वार्थे कन् तत्रार्थे

कर्बुदार पु॰ कर्बुः सन् दारयति मनं ह-णिच्-अच् कर्म्म॰ । १कोविदारवृक्षे २श्वेतकाञ्चने च रत्नमा॰ ३नीलझिण्ट्यां शब्दच॰ । "कोविदारकर्बुदारादिरिति त्यादि" सुश्रु॰ । तस्य तैलन्तु मधुरम् । "पियालकर्बुदारस्वर्णवल्लीलप्रलम्बरक कलोरप्रागाद्यप्रभृतीनां तैलानि मधुराणि" सुश्रु॰ । "पञ्चयूषयेत्याद्युपक्रमे कर्बुदारकोविदारप्रभृतीनि "कषायस्वादुतिक्तानि रक्तपित्तहराणि च । कफघ्न्य-निलं कुर्य्युः संग्राहीणि बहूनि च" इति सुश्रुतेन कोवि-दारादस्य भेदस्य निर्द्देशात् ततोऽस्य भेदः इति बोध्यम् ।

कर्बुदारक पु॰ कर्बुः सन् दारयति कफं ह-णिच्-ण्वुल् । श्लेष्मान्तकवृक्षे राजनि॰ ।

कर्बुर पु॰ कर्ब-गतौ मद्गुरा॰ उरच् । १चित्रवर्णे गमने इतरवर्णेन सह संपर्कोदस्य तथात्वम् । २तद्वति त्रि॰ "पर्मर्भेच्छ कपोत-कर्बुरम्" कुमा॰ । शोणमध्योऽप्ययं चयोरभेदात् दन्त्यमध्यो-ऽपीति शब्दचि॰ । ३पापे नरकादिगतिहेतुत्वात्तस्य तथा-त्वम् । ४धान्यविशेषे (?) राजनि॰ कर्बुरवर्णत्वा-त्तस्य तथात्वम् । ५जले न॰ मेदि॰ नीचगतित्वात्तस्य तथात्वम् । कर्ब-दर्पे, मद्गुरा॰ उरच् दन्त्यमध्यः । ६स्वर्णे न॰ मेदि॰ इतरधातुभ्यस्तस्योत्कर्षेण दर्पयोगात्तथात्वम् । तन्नामनामके ७धुस्तूरे च चम॰ । ८शठ्याम् अमरटीका ९राक्षसे पु॰ अमरे पाठान्तरम् दर्पयुक्तत्वात्तस्य तथात्वम् । १०कण्टकायां (पारुल) स्त्री टाप् मेदि॰ । ११वर्वरायां (गाङ्गुर तुलसी) स्त्री जटा॰ गौरा॰ ङीष् कर्बुरी । १२दुर्गायां स्त्री त्रिका॰ ।

कर्बुरफल पु॰ कर्बुरं फलमस्य । धाककणकवृक्षे राजनि॰

कर्बू(र्बू)र पु॰ कर्ब-गतौ कर्ब-दर्पे वा खर्जूरा॰ ऊर । १रा-क्षसे उणा॰ । २शठ्यां च अमरः ३कर्बूरे (काचा) ह-रिद्रायाम् शब्दर॰ । भावप्र॰ कर्बूर इत्येव पाठः । ४स्व-र्णे ५हरिताले न॰ शब्दचि॰ वैजयन्त्याम् कर्बूरमिति पाठः कर्बूरगन्धे उदा॰ । ६चित्रवर्णे पु॰ ७तद्वति त्रि॰ अमरटीका स्वार्थे कः । कर्बूरकस्तत्रार्थेषु ।

कर्म्मकर त्रि॰ कर्म करोति भृत्यः कृ-ट । वेतनेन कर्मकारके स्त्रियां ङीप् । "प्रोषुः प्राह्लवयः स्त्रियः वयं कर्मकरी-स्तुभ्यम्" भाग॰ २,२२,२६ । जनः स्थाने यम् धातोः । ताच्छील्ये ट । २दासे कर्मकरपर्य्याये "चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ । लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ?" भा॰ व॰१२४ अ॰ । "नाभुञ्जति नास्नाते नासंविष्टे च भर्त्तरि । न संविशामि ना-श्नामि सदा कर्मकरेष्वपि" भा॰व॰२३२ । स्त्रियां ङीप् । कृ-हिंसायां शत् कर्म हिंसां करोति हेत्वादौ ट । ३यमे पु॰ मेदि॰ । सर्वप्राणिहिंसायां तस्याधिकृततया च तस्य तथात्वम् । ४मूर्वालतायाम् स्त्री मेदि॰ । कर्मकरस्य दासभेदस्तस्य भेदकर्मादिकं मिता॰नारदेनोक्तं यथा । "शुश्रूषकः पञ्चविधः शास्त्रे दृष्टोमनीषिभिः । चतुर्विध-

कर्मकरस्तेषां दासास्त्रिपञ्चकाः। शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः। सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः। जातिकर्मकरस्तूक्तो विशेषोवृत्तिरेव च। कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्। गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्। अशुभङ्कर्म विज्ञेयं शुभमन्यदतः परम्" इति—"तत्र शिष्योवेदविद्यार्थी। अन्तेवासी शिल्पादिषु। मूल्येन यः कर्म करोति स भृतकः। कर्मकुर्वतामधिष्ठाता अधिकर्मकृत्। अशुचिस्थानम् उच्छिष्टप्रक्षेपणार्थं गर्त्तादिकम्। अवस्करः गृहमार्जितपांश्वादिनिचयस्थानम्। उज्झनं त्यागः। भृतकश्च त्रिविधः। तदुक्तम् "उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीबलः। अधमोभारवाही स्यादित्येवन्त्रिविधोभृतः" इति।

कर्म्मकर्त्तृ पु० कर्म्मैव कर्त्ता। व्याकरणोक्ते कर्मणः कर्तृत्वविवक्षया प्राप्तकर्तृत्वभावे कर्मणि। "क्रियमाणन्तु यत् कर्म स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्त्तेति तद्विदुः" व्या० का०। कर्मकर्त्तरि च कार्य्यभेदातिदेशमाह "कर्मवत् कर्मणा तुल्यक्रियः" पा०। सि० कौ० विवृतमेतत् यथा

"कर्त्तरि तु कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत्स्यात्। कार्य्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्त्तुरभिहितत्वात्प्रथमा। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्त्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न लकारवाच्य एव कर्त्ता कर्मवत्। लिङ्याशिष्यङिति द्विलकारकात् इत्यनुवृत्तेः भावे प्रत्यये च कर्त्तुर्लकारेणानुपस्थितेः। अतएव कृत्यक्तखलर्थाः कर्मकर्त्तरि न भवन्ति किन्तु भावे एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनञ्च। भेदादीनां कर्तृस्था न तु तत्तुल्या? सत्यम्। कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किन्तु—कर्तृस्थक्रियेभ्यो मा भूत्, गच्छति ग्रामः, आरोहति हस्ती, अधिगच्छति शास्त्रार्थः, स्मरति श्रद्दधाति वा। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते, यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया, नेतरत्र। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था, तेन कारिष्यते घट इत्यादि। यत्नार्थत्वे तु नैतत्सिध्येत्। ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् एतेन अनुव्याख्यमानेऽस्य इति व्याख्यातम् इदमस्माभिः सरलायां व्याख्यातम् यथा—"उत्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः" इति वाक्यमनुसन्धानः कर्तृत्वकर्मत्वादिकं व्याख्याय कार्य्यविशेषाय कर्मातिदेशकसूत्रमवतारयति कर्त्तरि त्विति। कर्मस्थया कर्ममात्रस्थया क्रियया फलेन "फलव्यापारयोर्धातुः" इत्युक्तेः "धातोरर्थः क्रियोच्यते" इत्युक्तेश्चेत्यर्थः। तुल्यक्रियः समानाधिकरणक्रिय इत्यर्थः। किन्तु कर्मस्थभावकएव कार्य्यातिदेशार्थं कर्मणेति पदम् "कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत्। कर्तृस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्तृवत्" इत्युक्तेः "कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः" इत्युक्तेः भिदादयः कर्ममात्रस्थाः। गमनादयस्तु कर्तृस्थाः "कर्तृस्थो बुध्यतेर्भावः कर्तृस्थाश्च गमादयः" इत्युक्तेः। "च्लयोर्लुङ्लिङोःसिच्सिङिति" उभयोः सन्निजातद्विलकारमध्ये एकलकारस्यानुवृत्तेरित्यर्थः। कृत्यक्तखलर्थाश्चेत्यत्र क्तग्रहणं प्रायिकं सिनोग्रासइत्यादौ कर्मकर्त्तरि क्तस्य दर्शनादिति बोध्यम्। वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह कर्मत्वकर्तृत्वावस्थेति तथा चावस्थाभेदेन क्रियाभेदात् कर्तुः कर्मस्थक्रियया तुल्यक्रियत्वमिति भावः। नेतरत्रेति। "निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते। न तु प्राप्ये कर्मणीति सिद्धान्तोऽयं व्यवस्थितः" इति हर्य्युक्तेः क्रियाकृतविशेषवतोरेव निर्वर्त्त्यविकार्य्ययोः कर्मवद्भावो न तु तद्रहिते प्राप्य इति सिद्धान्तो द्योतित इति भावः" अत्र च यथा सौधाधिकं तथा मञ्ज० म० उक्तं यथा

"कथं भिद्यते अभेदि कुसूलः स्वयमित्यादौ भिदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्तृत्वस्य कथं कुसूलादावन्वयः भिदादेः परस्मैपदित्वेन तदर्थधर्म्मितया कर्तृत्वबोधने पदान्तरस्यासामर्थ्यात् यगिणोर्द्विगुणत्वाच्चेयत आह। एकक्रियाधर्म्मितया कर्तृता कर्मतोभयोः। बोधने कर्मताकाङ्क्षापेक्ष्योक्तगतोभवेत्। कर्मताकाङ्क्षा कर्मताश्रयस्यैवानुकूला आत्मनेपदयगादिसमभिव्याहाररूपाकाङ्क्षा व्युत्पत्तिवैचित्र्यादपेक्षणीया न तु कर्तृत्वाश्रयस्य परस्मैपदविकरणादिसन्दंशरूपा यद्येवं तण्डुलपर्णौ पच्येते इत्यपि प्रयोगः

तपसा नाशकेन" इति श्रुत्यैव कर्म्मणां विविदिषाहेतुतोक्तेः विविदिषायामेव कर्म्मणामुपयोग इत्याकरे स्थितम् ।

**कर्म्मकार** त्रि॰ कर्म्म करोति अभृत्या अण् उप॰ स॰ । विना वेतनेन १कर्म्मकारके (वेगार) (बाभाट) इति प्रसिद्धे शूद्रबीजजातिभेदे जातिशब्दे विवृतिः । "हरिणाक्षि ! कटाक्षेण आत्मानमवलोकय । नहि खड्गो विजानाति कर्म्मकारं स्वकारणम्" उद्भटः ।

**कर्म्मकारिन्** त्रि॰ कर्म्म करोति कृ–णिनि स्त्रियां ङीप् । कर्म्मकारके "तान् विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः" मनुः

**कर्म्मकीलक** पु॰ कर्म्मणा कीलक इव । रजके जातिभेदे । त्रिका॰ । [कर्म्मक्षम देह आत्मीयधर्म्म इवाश्रितः" रघुः ।

**कर्म्मक्षम** त्रि॰ कर्म्मणि क्षमः ७त॰ । कर्म्मकरणसमर्थे "आत्म-

**कर्म्मक्षेत्र** न॰ कर्म्मणां क्रियानुष्ठानानां क्षेत्रम् । जम्बुद्वीपान्तर्गते नवसु वर्षेषु अनुष्ठानदेशे भारते वर्षे । नववर्षोक्तावुक्ता "अत्रापि भारतमेव वर्षं कर्म्मक्षेत्रम् । अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमस्वर्गपदानि व्यपदिशन्ति" भाग॰ ५, १७, १२, १२, कर्म्मभूमिरप्यत्र स्त्री । "उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" इत्युपक्रम्य "कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छति" । "अत्र संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च । तिर्य्यक्त्वं नारकित्वञ्च मध्यं चात्र गम्यते । न खल्वन्यत्र मर्त्यानां कर्म्मभूमौ विधीयते" विष्णु पु॰ पराशरवाक्यम् ।

**कर्म्मग्रन्थि** पु॰ कर्म्मणां ग्रन्थिर्बन्धनमस्मात् । अज्ञानजन्यवासनारूपे दोषे तस्यैव सकलप्रवृत्तिहेतुत्वात्तस्य कर्म्मबन्धनहेतुत्वात्तथात्वम् ।

**कर्म्मचण्डाल** पु॰ कर्म्मणा चण्डाल इव । "असूयकः पिशुनश्च कृतघ्नो दीर्घरोषकः । चत्वारः कर्म्मचण्डाला जन्मतश्चापि पञ्चमः" इत्युक्तेषु असूयकादिषु चतुर्षु । २राहौ च । "उत्तिष्ठ गम्यतां राहो ! त्यज्यतां चन्द्रमण्डलः । कर्म्मचण्डाल ! योगोऽयं मम पापक्षयं कुरु" ग्रहणमुक्तिस्नानमन्त्रः । राहोश्च असूयकत्वाद्दीर्घदोषवत्त्वाच्च तथात्वम् ।

**कर्म्मचित्** त्रि॰ चितवान् चि–भूते क्विप् ६त॰ । १कृतकर्म्मणि । कर्म्मणि क्विप् ६त॰ । २कर्म्मणा चीयमाने च "कर्म्मणा तु कर्म्मचितस्ते फलशेषाधीयन्ते कर्म्मणा चीयन्ते" शत॰ ब्रा॰ । १०, ५, २, ६ ।

**कर्म्मचित** त्रि॰ कर्म्मणा चितः चि–क्त । कर्म्मजन्यादौ "तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितः" वेदप॰ श्रुतिः

**कर्म्मचेष्टा** स्त्री कर्म्मणि क्रियायै चेष्टा । क्रियानुष्ठानार्थं चेष्टायाम् "आत्मजन्या भवेदिच्छा, इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टा, चेष्टाजन्या क्रिया भवेत्" इत्युक्तेः चेष्टायाः क्रियाहेतुत्वेन तथात्वम् "कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी" मनुः ।

**कर्म्मचोदना** स्त्री कर्म्मणि कर्म्मावबोधने चोदना विधिः । कर्म्मविषये प्रेरणारूपे विधौ "कर्म्मावबोधनं चोदना क्रियायाः प्रवर्त्तकं वचनमिति" मीमा॰ भा॰ । चोद्यते प्रवर्त्त्यतेऽनया णि॰ करणे ल्युट् ६त॰ । २कर्म्मप्रवृत्तिहेतौ ज्ञानज्ञेयज्ञातृरूपेऽर्थे च । "ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना" गीता । "ज्ञानमिष्टसाधनमितिबोधः, ज्ञेयमिष्टसाधनं कर्म्म, परिज्ञाता तज्ज्ञानाश्रयः त्रिविधा कर्म्मचोदना चोद्यते प्रवर्त्त्यतेऽनयेति चोदना ज्ञानादित्रितयं कर्म्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनेति विधिरुच्यते तदुक्तं भट्टैः—"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इति ततश्चायमर्थः—उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमपेक्ष्य कर्म्मविधिः प्रवर्त्तते इति" श्रीधरः ।

**कर्म्मज** त्रि॰ कर्म्मणो कर्म्मजन्यादृष्टात् जायते जन–ड । कर्म्महेतुके रोगादौ । रोगादिव्याधयो हि नानाविधाः यथोक्तं भावप्र॰—

"तेषु स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः । तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः । क्षुत्पिपासा सुषुप्ता च जरामृत्युप्रभृतयः । अथवा स्वभावादुत्पन्ने जाता स्वाभाविकाः सहजा इति यावत् । ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथवा जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथ शोकादापस्मारभूतोन्मादमोहतमःसंन्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः । कर्म्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्म्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः । तत्र कर्म्मजाः व्याधयः यत्प्राक्तनदुष्कर्म्मफलं तत्फलभोगनाशकृत् प्रायश्चित्तनाशं वा ततो जाताः न तु दुष्टवातादिदोषेण जनिताः । यथाशास्त्रन्तु निर्णीतो यथाव्याधिचिकित्सितः । न शमं

याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः । दोषजाः मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव । ततो दोषजेष्वपि प्राक्तनं दुष्कर्मैव कारणम् तत् कथं दोषजा इत्युच्यन्ते ? । दोषजेष्वपि वस्तुतः आदिकारणं दुष्कर्म वर्त्तत एव किन्तु तत्र मिथ्याहारविहारदूषिता दोषा हेतवो दृश्यन्त इति दोषजा इत्युच्यन्त इति समाधिः । कर्मदोषोद्भवाः । स्वल्पदोषा गरीयांसो ज्ञेयाः कर्मदोषजाः। अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधिगरीयस्त्वम् तत्कर्मक्षयादेव क्षीणं भवति। दोषाः स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त एवेति दोषाणां कारणतां मन्यन्त इति । कर्मक्षयात् कर्मजाः दोषजाः स्वस्वभेषजैः । कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् । दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणम् दुष्कर्म तद्भेषजौषध्यक्वथादिजनित दुःखभोगेन कटुतिक्तकषायाद्युपभक्षणादिजनितदुःखभोगेन च क्षयं यान्ति । शेषा दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः । २कायिकवाचिकमानसकर्मभवे स्थावरादिजन्मनि "शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मजा गतयो नृणामुत्तमाधममध्यमाः" ३कर्मजातमात्रे पापादिदोषे च "तथा दहति वेदज्ञः कर्मजं दोषमात्मनः" मनुः। क्रियाजन्ये ४संयोगे ५विभागे च। "अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्त्तितस्त्रिविधस्त्वेष आद्यो ऽन्यतरकर्मजः । तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः । मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः। तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः । अभिघातो नोदनञ्च शब्दहेतुरिहादिमः । शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः । विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्" भाषा० ६वेगाख्यसंस्कारे च "मूर्त्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित्" भाषा० ७वटवृक्षे पु० जटा० । ८कलियुगे पु० शब्दर० । क्रियाजकर्मभवादयोऽप्यत्रार्थे । ९धर्माधर्मरूपे गुणभेदे अदृष्टे वेदान्तिमते कर्मणः सूक्ष्मावस्थापन्ने १०संस्कारभेदे ११स्वर्गे १२नरके च अदृष्टद्वारा तयोः कर्मजन्यत्वात्तथात्वम् ।

कर्म्मजित् पु० जरासन्धवंश्ये मागधे नृपभेदे "अथ मागधराजानो भाविनो ये वदामि ते" भविता सहदेवस्य (जरासन्धपुत्रस्य) मार्ज्जारिर्यच्छ्रुतश्रवाः । ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः । सुनक्षत्रः सुनक्षत्रात् बृहत्सेनोऽथ कर्म्मजित्" भाग० ९,२२,२० ।

कर्म्मठ त्रि० कर्मणि घटते कर्म्मन्+अठच् । कर्म्मनिष्पादनार्थं घटमाने । "स कर्मठः कर्म्म सुतादृतोऽस्थ" भट्टिः ।

कर्म्मणि स्त्री कर्म्म नयति समाप्तिम् नी–बा०डि णत्वम् । कर्म्मसमाप्तौ कर्त्तव्यायां प्रायश्चित्तेष्टौ । "कर्म्मणिरेव तत्र प्रायश्चित्तिः" शत० ६,६,४,८ ।

कर्म्मण्य त्रि० कर्म्मणा सम्पादि यत् । १कर्म्मणा सम्पद्ये भोज्ये सि०कौ० । कर्मणि साधु यत् । २कर्मकुशले त्रि०कौ० । "यतो वीरः कर्मण्यः सुदक्षः" ऋ० २,४,८ । "अकर्मण्यं निष्फलं विद्यादेकादशीं विना" ति०त० । ३वेतने स्त्री क्षीरस्वामी । वेतनेन हि कर्मसाधनात् तस्य तथात्वम् ।

कर्मण्यभुज् त्रि० कर्मण्यां वेतनं भुङ्क्ते भुज–क्विप् ६त० ङ्यापोरिति ह्रस्वः । वेतनेन कर्मकारके भरण्यभुगित्यमरपाठान्तरमिति क्षीर० ।

कर्मदेव पु० कर्मणा देवः प्राप्तदेवभावः । १त्रयस्त्रिंशद्देवभेदे । "स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपि यन्ति श्रोत्रियस्य चाकामहतस्य ते, ये शतं कर्मदेवानामानन्दाः" तै०उ० । "कर्मदेवा ये वैदिकेनाग्निहोत्रादिना केवलेन देवानपि यन्ति, देवा इति त्रयस्त्रिंशद्धविर्भुजः। इन्द्रस्तेषां स्वामी तस्याचार्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिस्वरूपः संसारमण्डलव्यापी" शाङ्कर भा० । त्रयस्त्रिंशच्च देवाः आनन्दगिरिणा दर्शिताः । "अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः इन्द्रः प्रजापतिश्चेति" २कर्मणा देवलोकं गते च । "स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः" शत० ब्रा० १४,७,१,३५ । "ये अग्निहोत्रादिश्रौतकर्मणा देवलोकं प्राप्नुवन्ति ते कर्मदेवाः" भा० ।
कर्मदेवताऽप्यत्र स्त्री । "ज्योतिष्टोमादिना स्वर्गं प्राप्ताः स्युः कर्मदेवताः" मल्लचि० । "अस्मिन् कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम् । अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः" इति मल्लचि० धृ० ।

कर्म्मदोष पु० कर्मैव दोषः, कर्म्मणि दोषः, कर्महेतुर्दोषो वा । १दुष्टे पापजनके हिंसादौ कर्म्मणि । "संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्" शरीरजैः कर्मदोषैर्याति

स्थावरतां नरः" मनुः। २कर्मजन्ये पापादौ "मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते" मनुः। "कर्मदोषैः पापैः" कुल्लू०। विहिताकरणाविहिताचरणरूपे ३कर्मविषयदोषे च। "यान्त्येत गतीर्यां कर्मदोषसमुद्भवाः" मनुः। "विहिताकरणाविहिताचरणरूपकर्मदोषजन्या गतीः" कुल्लू०। ६सकलकर्महेतौ मिथ्याज्ञानजन्यवासनारूपे दोषे च। "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम्" इत्यादि० गौत०सू०मिथ्याज्ञानजन्यवासनारूपदोषस्य सकलप्रवृत्तिरूपकर्महेतुत्वोक्तेस्तस्य तथात्वम्।

कर्म्मधारय पु० व्याकरणोक्ते समानाधिकरणपदघटिते समासाधीनलक्षणाक्रान्ते समासभेदे "समानाधिकरणस्तत्पुरुषः कर्मधारयः" पा०। तल्लक्षणादिकं शब्द०प०उक्तं यथा "क्रमिकं यन्नामद्वयमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन, अभेदेन समासः कर्मधारयः। क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशं नामद्वयं कर्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः, तथा पुरुषसिंह इत्यादावपि पुरुषादावुत्तरपदार्थस्य सिंहादिसदृशस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानैरिति कर्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थकस्य उपकुम्भादिर्न तादात्म्येनान्वयबोधकः, प्रबलमपद्रव्यमित्यादेः संप्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि लक्ष्याभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं विभक्त्या व्यवधानात्। यदि च तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतोऽत्र तत्राभेदसम्बन्धेन नीलादेरन्वयः, परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्यएवाधेयत्वेन, नीलघटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येकद्वन्द्वात्मकनाम्नैवोपस्थापिते घटे पटे च नीलस्य तादात्म्येनान्वयान्न व्यभिचारः। स्तोकं पचति धान्येन धनं, मत्वा पटुरित्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्यएवाधेयत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव। राजपुरुष इत्यादिकस्तु तत्पुरुषेण पूर्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकस्यापि पदद्वयोस्तुल्यार्थकत्वहान्यापत्तेः, परन्तु राजन्व्यवस्थैव। अतएव राजपुरुष इत्यादौ पूर्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृदुक्तमपि सङ्गच्छते।

यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते। किञ्चिद्विशिष्टस्वपर्यायानवच्छिन्नस्यैव वा तादात्म्येनान्वयबोधकत्वस्य क्रमिकोक्तौ निवेश्यम्। नचैवमपि पञ्चपुरुष्यादिद्विगौ द्विगाव्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगाव्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। अत्र च मानुषब्राह्मणो ब्राह्मणमानुष इत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्मधारयः साधुः प्रमेयधूम इत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुषएवेति वृद्धाः। चन्दनतरुर्विन्ध्यगिरिर्वसन्तसमय इत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं कर्मधारये तन्त्रं न तु विशेषणस्यापि तद्व्यभिचारित्वम्। पुरुषोत्तम इत्यत्र चोत्तमत्वं न नित्यज्ञानादिमत्त्वं किन्तु भ्रमविधुरत्वम्। अतएव तत्र पुरुषस्येव, पुरुषेऽपि तस्य व्यभिचारसत्त्वादुत्तमपुरुष इत्यपि कर्मधारयः साधुरिति तु नव्याः। तदाद्युत्तरपदकः कर्मधारयः प्रायशोनेष्यते नीलतदित्यादितोऽनात्वपि नीलोत्पलादेरसित्वाद्यप्रतीतेः। "पङ्कयद्भोजनं रम्यमामतद्भक्तं यथा। नीलयद्रसवाक्याद्यः कटुतद्रूपमीष्यते" इत्यादिप्रयोगात् क्वचिदिष्यतेऽपि। प्रयुक्तश्च जुमरनन्दिना परमः स इत्याद्यर्थे परमसः परमतावित्यादि। तत्पुरुषोऽप्येतेन व्याख्यातः। ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमात्रं प्रत्येव नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं नतु तादात्म्यसम्बन्धानवच्छिन्नतत्प्रकारताकबुद्धिं प्रति गौरवादतोनामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्मधारयादिकः समासोन यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे रूढएव तदुक्तं भर्त्तृहरिणा "अबुधान् प्रत्युपायाश्च विचित्राः प्रतिपत्तये। शब्दान्तरत्वादत्यन्तं भेदोवाक्यसमासयोः" इति वैयाकरणाः, तन्मन्दं नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादिप्रत्येकपदोपस्थितया तयोस्तादात्म्येनान्वयबोधस्यानुभवसिद्धत्वेन गौरवस्य प्रामाणिकत्वादन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नामोत्तरनामोपस्थाप्यत्वं तन्त्रमुरीकृत्य नीलमानयेत्यादौ नामार्थद्वयवर्णयोर्नान्वयबोधः, परन्तु समस्तभागस्य नीलविशिष्टकर्मत्वादौ रूढिरेवेत्यत्रापि किन्न रोचदेः?। नच समासस्यागमकत्वे नीलोद्रव्यञ्च घट इत्यादाविव नीलघटोद्रव्यमित्यादावपि घटे धर्मिण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयापत्तिरिति वाच्यम्,

नामार्थस्य मुख्यविशेष्यताक इव तादात्म्यावच्छिन्नविधेयता-कोऽपि बोधे नाम्नः प्रथमान्तस्य तन्त्रत्वात्। विधेयत्वन्तु विषयतावच्छेदकतान्यप्रकारत्वं प्रकारताप्रभेदो वेत्यन्य-देतत् घटमित्यादौ तु घटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः। ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे नीलपीतोत्पलं सरइत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थे नीलपीतोत्पलं पुष्पमित्या-दिकः कर्म्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्या-मवच्छिन्नोत्पलनिष्ठधर्म्मिताकधीजनकः कथं न स्यात्? इति चेन्न "बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास इत्यनु-शिष्टत्वेन बहुव्रीहेरेव स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वया-वच्छिन्नतादृशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतु-त्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात्। नील-पीतोत्पले स्तः पीतनीलोत्पलाश्रितमित्यादौ तु नीलो-त्पलं पीतोत्पलञ्च स्त इत्याकारक एव बोधः नतु नीलं पीतञ्च यदुत्पलं तद्द्वयमित्याकारः। अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धस्य सूचनार्थं नीलपीते च ते उत्पले चेत्यादि-क्रमेण तत्र विग्रहं वर्णयन्ति न तु नीलं पीतञ्च तदुत्पल-ञ्चेत्यादिकम्। घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकस्तु मध्यपदप्रधानतत्पुरुषेण बहुनामगर्भो नत्रैकत्र द्वयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः"।

अत्र समासे विशिष्टार्थे न शक्तिर्न वा लक्षणेति शब्दचि० स्थितौ यथा।

"कर्म्मधारये तु न शक्तिर्नवा लक्षणा ताभ्यां विनापि विवक्षितार्थान्वयबोधोपपत्तेः ननु नीलघटयोः सामाना-धिकरण्यप्रतीतिरत्र लक्षणैव अन्वयप्रकारत्वादिना तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथास्तु अत्र ब्रूमः—कर्म्मधारये सामानाधिकरण्यं नामार्थयोर-भेदो वा गुणगुणिनोः समवायो वानुभूयते सचान्वय-एव नत्वन्वयप्रतियोगी अतोऽन्वयप्रतियोगिनोरुपस्थि-तिर्नामपदादाकाङ्क्षयेति न तदर्थं लक्षणा। राजपुरुष इत्यत्र तु राजसम्बन्धिपुरुषयोरन्वयोऽनुभूयते। राज-सम्बन्धिनश्चान्वयप्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थ-लक्षणां विना, राज्ञः पुरुषं राजसम्बन्धिनं पुरुषं राजपुरुषमानयेत्यादौ पर्य्यायत्वाद्राजसम्बन्धिनः पुरुषे-ऽन्वयो भासते राजसम्बन्धो ह्यन्वयप्रतियोगित्वेन। एवञ्च बहुव्रीहौ सर्वत्रान्यपदस्य षष्ठीतत्पुरुषे पूर्व्वपदस्या-परपरतया लाक्षणिकत्वात् ताभ्यां कर्म्मधारयो बलवान् सर्वेषां पदानां स्वार्थपरतया मुख्यत्वात्। अतएव "एत-येष्ट्या निषादस्थपतिं याजयेत्" इत्यत्र कर्म्मधारय एव मुख्यत्वे शब्दस्वरसात् षष्ठीतत्पुरुषे च षष्ठ्यर्थे लक्षणा-पत्तेः"। वैयाकरणास्तु समासमात्रे विशिष्टेऽतिरिक्तां शक्तिं कल्पयन्तस्तदस्वीकारे दोषं दर्शयन्ति यथा वैया०भू० "अपि च समासे विशिष्टशक्त्यस्वीकारे राजपुरुषचित्रगुः नीलोत्पलमित्यादौ सर्व्वत्रानन्वयप्रसङ्गः। राजपदादेः सम्बन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ कर्म-त्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्राति-पदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात् पुरुषादेस्तदभावात्। तण्डुलः शुभ्र इत्यादौ च प्रातिपदिकार्थकत्वमात्रे तण्डुलादेस्तस्य च शुक्ले अभेदेनैवान्वयः। शुभ्रेण तण्डुलेनेत्यादौ च विशे-षणविभक्तिरभेदार्था पार्ष्णिकोऽन्वय इति नातिप्रसङ्गः। तथा च समासे परस्परमन्वयासम्भवादावश्यकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः"। "तन्मतुरीत्या सर्वत्र समासे शक्तिरस्तु च तथाविधस्थलेष्वपि षष्ठीतत्पुरुषकर्म्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तविहतिर्न स्यात् इत्यत आह। "पर्य्यासस्याच्छाब्दबोधाविदूरप्राक्समुपस्थिते। शक्तिपक्षेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्"।

"पर्य्यवसन्नशाब्दबोधस्य तस्मादविदूरवर्त्ती प्राक्कालश्च तदानीन्तनलाघवगौरवाद्वाधिकरणविरोध इत्यर्थः। अयं भावः—निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे निषादानाञ्च स्थपतौ निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थकम्। तथा च "नानार्थे तात्पर्य्या-द्विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वये पूर्वोप-स्थितार्थे शक्त्युपस्थित्यादिलाघवात् तत्कल्पनमिति। परे-षामपि सति तात्पर्य्ये षष्ठीः प्रवेशयेत्यत्र लक्षणायादुर्व्वा-रत्वात्तात्पर्य्यमेव कल्प्यकोटौ अवशिष्यत इति दिक्"। "पुंवत्कर्म्मधारयजातीयदेशीयेषु" "तत्पुरुषः समानाधिकरणः कर्म्म-धारयः" पा०। "द्वन्द्वोद्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः। तत् पुरुष! कर्म्म धारय येन स्यां मम बहुव्रीहिः" उद्भटः।

कर्म्मन् पुं न० कृ—कर्म्मणि मनिन् अर्द्धर्चादि० पा० अकरे तु न०। व्याकरणपरिभाषिते कर्त्तुः क्रियाफलाश्रयतयाभी-प्सिततमे पदार्थे "कर्त्तुरीप्सिततमं कर्म्म" पा०। व्या-ख्यातञ्चैतत् सि०कौ० यथा—

"कर्त्तुः क्रियया आप्तुमिष्टतमङ्कर्म्मसंज्ञं स्यात्। कर्त्तुः किम्? माषेष्वश्वं बध्नाति। कर्म्मण ईप्सिता माषा न तु कर्त्तुः। तमब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते। कर्म्मेत्यनुवृत्तौ पुनः कर्म्मग्रहणमाधारनिवृत्त्यर्थम्, अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्"। विवृतञ्चैतदस्माभिः सरलायां यथा कर्त्तुरित्यादि। कर्त्राप्तुमिष्यमाणं कर्म्मेत्यर्थः।"धातूपात्तव्यापाराश्रयः कर्त्ता" इति वक्ष्यते। आप्तिश्च सम्बन्धः, स च कर्त्तृविशेषणीभूतक्रियारूपव्यापारद्वारकएवात्रोपस्थितकल्पने मानाभावात्, एवञ्च कर्त्रा स्वनिष्ठक्रियारूपव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणं कर्म्मेत्यर्थः, तदेतदाह कर्त्तुः क्रियया आप्तुमिति। क्रियया धातूपात्तव्यापारेण, आप्तुं धातूपात्तफलद्वारा सम्बन्धुम्। फलव्यापारयोर्धातूपात्तत्वन्तु "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः" इत्यनेन सिद्धम्। तच्च कर्म्म सप्तविधम्, यथोक्तं हरिणा "निर्वर्त्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्। तत्रेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्। औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम्। संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्" इति। तत्र निर्वर्त्त्यादीनां लक्षणादिकमपि तेनैवोक्तं यथा—"सदसज्जायते सद्वा जन्मना यत्प्रकाश्यते। प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत्। क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते" इति, "सती वा विद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते" इति च। तदयं लक्षणनिष्कर्षः—प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्त्यत्वम् यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वान्निर्वर्त्त्यत्वम्। प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम्, यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्वरूपविशिष्टासत्त्वफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम्। क्रियाकृताधारधर्म्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वम्, प्राप्यत्वं यथा ग्रामं गच्छतीत्यादौ ग्रामादेः कर्त्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाकृतक्षमादिरूपासाधारणविशेषफलस्यानाधारत्वेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम्। निर्वर्त्त्यविकार्य्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्म्ममात्रनिष्ठतया असाधारणत्वेन तद्व्याप्त्यातिप्रसङ्ग इति बोध्यम्। कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम्, औदासीन्य प्राप्तं यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीनकर्म्मता। द्विष्टसाधनत्वे सति क्रियाफलवत्त्वं द्वेष्यं यथा विषं बुभुक्षुर्विषं भुङ्क्ते इत्यादौ विषस्य तथात्वम्। कारकविशेषसंज्ञान्तरैरविवक्षितत्वे सति कर्म्मोपकारकत्वम्, संज्ञान्तरैरनाख्यातत्वम् यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अविवक्षया दुग्धोपयोगितया कर्म्मत्वम्। व्यक्तीभविष्यति चेदमुपरिष्टात्। कारकान्तरसंज्ञापूर्व्वकत्वं यथा 'जलधिमधिशेते' इत्यादौ जलधेराधारसंज्ञकतया प्राप्तत्वेऽपि "अधिशीङ्स्थासां कर्म्म" पा० इत्यादिना कर्म्मसंज्ञया कर्म्मत्वम्। पयसेति भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वविवक्षायां तस्येप्सिततमत्वात् पयः पिबतीति स्यादेव। इह तु तथा विवक्षाविरहेणान्नभोजनं प्रति तस्याङ्गतया करणत्वमात्रं विवक्षितमिति न ओदनस्य कर्म्मत्वम्। सहार्थे तृतीयेति च न्याय्यम्, तस्याप्रधानत्वात्तथा बोधयितुमशक्यत्वात्" ।

कर्म्मताबोधनप्रकारलक्षणादिकं शब्द०प्र०अन्यथोक्तं यथा "गमनधातोरर्थोयल्लिङ्गा स्यार्थेऽनुभाव्यते। यत्रासौ कर्म्मता नाम कारकं कर्त्तृतेतरः"। गमनस्य यद्धातोर्लकारस्य तिङा यत्र स्वार्थे तदीयोयात्मोऽर्थोऽनुभावयितुं शक्यते, तद्धातूपस्थाप्यतादृशक्रियायां स तिङर्थः कर्त्तृताभिन्नः कर्म्मत्वं नाम कारकमित्यर्थः। ग्रामो गम्यत इत्यत्र गमधातूपस्थाप्यायाः संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसम्बन्धेन तिङ्पदोपस्थाप्ये संयोगे एवान्वयो न तु त्यज्यत इत्यादाविव विभागादौ धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्म्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वादतः संयोगस्यैव तत्र गतिक्रियाकर्म्मत्वं नतु विभागादेः, तेन तरोस्त्यागिनि खगे तरुं गच्छतीत्यादिकोन प्रयोगः। गम्यते रथः स्वयमेवेत्यादौ (गम्यते इति त्वनुशासनविरुद्धं कर्त्तृस्वभावकतया कर्म्मवत् क्रियाया अप्रसक्तेः)। कर्म्मत्वमितरानुकूलव्यापारवत्त्वलक्षणं कर्त्तृत्वं धात्वर्थस्य धर्म्मोऽपि न तत्कर्त्तृताभिन्नमिति तदुद्व्युदासः। ननु चैत्रकर्त्तृकगमनजन्यसंयोगस्य ग्रामइव चैत्रेऽपि सत्त्वाच्चैत्रो गम्यते चैत्रेणेत्यपि प्रयोगः स्यात्, तिङर्थसंयोगस्य जन्यत्वस्वाश्रयप्रतियोगिकत्वोभयसम्बन्धेन धात्वर्थगतेः साकाङ्क्षत्वेन चैत्रकर्त्तृकगत्याश्रयप्रतियोगिकत्वविशिष्टस्य संयोगस्य चैत्रे बाधितत्वात्। अतएव चैत्रो ग्रामं गच्छति

इतिवत् चैत्रश्चैत्रं गच्छतीत्यपि न प्रयोगः, तत्रापि द्वितीयार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसम्बन्धेनैव साकाङ्क्षतया द्वितीयान्तस्थलस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगाश्रयवृत्तिगतेश्चैत्रे बाधितत्वात्। यत्तु फलमिव क्रियायामन्वितं परसमवेतत्वमपि कर्मतावाचिप्रत्ययस्यार्थः, परत्वञ्च तिङा स्वार्थकर्त्रन्वयिप्रतियोगिकं, द्वितीयादिसुपा तु प्रकृत्यर्थप्रतियोगिकं प्रत्याय्यते तथा च चैत्रकर्तृकस्य चैत्रान्यसमवेतगमनस्याप्रसिद्धत्वेन चैत्रे तज्जन्यसंयोगस्यासम्भवाच्चैत्रेण गम्यते चैत्र इत्यादिकोन प्रयोगः। एवं चैत्रान्यसमवेतस्य चैत्रे बाधाच्चैत्रश्चैत्रं गच्छतीत्यादिरपि। चैत्रेण गम्यते ग्राम इत्यादौ तु चैत्रकर्तृकस्य ग्रामभिन्नसमवेतस्य गमनस्य जन्योयः संयोगस्तद्वान् ग्राम इत्यन्वयबोधनेन किञ्चिद्बाधकमिति प्राच्यैरुक्तं तन्न युक्तम्, संख्याकालातिरिक्तस्य तिङर्थस्य धात्वर्थविशेष्यत्वनियमेन तिङर्थस्य परसमवेतत्वादेर्धात्वर्थगत्यादावन्वयायोगात् प्रथमान्तोपस्थाप्यग्रामादेर्भेदान्वयसम्बन्धेनान्यत्र प्रत्ययार्थे तिङर्थे वान्वयस्यादृष्टचरत्वेनाव्युत्पन्नत्वात्, चैत्रेण गम्यते द्रव्यं, द्रव्यं गच्छति चैत्र इत्यादौ द्रव्यान्यसमवेतस्य गत्यादेरप्रसिद्धत्वेनायोग्यतापत्तेश्च। तथास्तु फलमिव भेदोऽपि कर्मत्वाख्यप्रत्ययस्यार्थस्तथा च चैत्रेण गम्यते ग्राम इत्यत्र तिङर्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थविशेष्यत्वात् प्रतियोगित्वसम्बन्धेन प्रथमान्तार्थे ग्रामादौ विशेषणत्वाच्च व्युत्पत्तिविरोधो नवातिप्रसङ्गः चैत्रकर्तृकगमनाश्रयवृत्तिभेदप्रतियोगित्वस्य चैत्रे विरहात् चैत्रं गच्छतीत्यादावपि प्रतियोगित्वसम्बन्धेन चैत्रान्वितस्य द्वितीयार्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थगतावन्वयात्तादृशगतेश्चैत्रे बाधाच्चैत्रं गच्छति चैत्र इत्यादिकोन प्रयोगः। प्रतियोगित्वञ्च उभयावृत्तिधर्मानवच्छिन्नं धर्मद्वयानवच्छिन्नं वा ग्राह्यमतो द्रव्यं गच्छतीत्यादौ गतौ द्रव्यभेदसामानाधिकरण्यविरहेऽपि न क्षतिरिति प्राञ्चस्तच्चिन्त्यम्। इत्थं तरुं त्यजतीत्यादौ विभागावच्छिन्नक्रिया त्यजेरर्थः द्वितीयायास्तु विभागस्तेन तर्ववधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान् खग इत्याकारस्तत्र बोधः। तर्ववधिकविभागस्य च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायां प्राग्वन्मतः खगाद्यवधिकविभागस्य खगादावसत्त्वात् खगं त्यजति खग इत्यादिकोन प्रयोगः। खगेन त्यज्यते खग इत्यपि प्रयोगः प्रागुक्तरीत्या निरसनीयः। प्राञ्चस्तु ग्रामं गच्छति त्यजतीत्यादौ सर्वत्र क्रियामात्रं धात्वर्थस्तत्यजिगम्योः पर्यायत्वेऽपि न क्षतिः, गम्यर्थक्रियायां संयोगस्यैव त्यज्यर्थक्रियायाञ्च विभागस्यैव बोधकतायाः कर्मप्रत्ययेषु स्वभावत्वात् तरुं त्यजतीत्यादौ संयोगस्य तरुं गच्छतीत्यादौ च विभागस्य द्वितीयादितो नावगमः परैरपि समभिव्याहृतधात्वर्थतावच्छेदकफलस्यैव द्वितीयादिबोध्यताव्युत्पत्तेरभ्युपेतव्यत्वात् अन्यथातिप्रसङ्गात्। नचैवं स्पन्दोन स्पन्दत इत्यादेरिव त्यागोन गतिरित्यादेरपि वाक्यस्य निराकाङ्क्षतापत्तिस्तत्र त्यजिगम्योर्विभागाद्यवच्छिन्नक्रियावाचकत्वेनैवान्वययोग्यत्वासम्भवात्। द्वितीयासाकाङ्क्षत्वमत्र धातुत्वप्रयुक्तमेव च धातूनां सकर्मकत्वव्यवहारोऽपि तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः ... व्याप्तत्वात्। स्पन्दार्थधातूनां कर्मणि षष्ठ्या इव द्वितीयाया अपि साधुत्वात्। एवञ्च ग्रामं गच्छति तरुं त्यजतीत्यादौ ग्रामसंयोगजनकक्रियायां तरुविभागजनकक्रियावानित्याकारक एव बोधो न तु ग्रामसंयोगजनकसंयोगावच्छिन्नक्रियावांस्तरुविभागजनकविभागावच्छिन्नक्रियावानित्याकारकः, संयोगविभागयोरुभयथाभानस्य नीलघटजनकदण्डवानित्यादौ घटादेरिव निराकाङ्क्षत्वेनासम्भवादनुभवबाधितत्वाच्चेत्याहुः। परे तु संयोगः क्रिया च द्वयमेव प्रत्येकं गमिशक्यं तयोर्जन्यजनकभावस्तु वाक्यार्थमर्यादया भासते एवार्थयोरन्वयोऽवच्छेद्यावच्छेदकयोरिव, गम्यर्थयोः संयोगक्रिययोर्मिथश्च साकाङ्क्षत्वाच्च नैकमात्रे गमिप्रयोगः। पुष्पवत्पदे चन्द्रत्वसूर्यत्वाभ्यामिव विभिन्नरूपाभ्यां प्रकृतेऽपि संयोगत्वक्रियात्वाभ्यां गमधातोरेकशक्तिस्वीकारेऽपि न क्षतिः। इयांस्तु विशेषो यत्तत्र परस्परविरोधिनोर्मिथोनान्वयः प्रकृते तु संयोगक्रिययोस्तथेति तथा च ग्रामं गच्छतीत्यत्र द्वितीयाया आधेयत्वं प्रतियोगित्वं वार्थस्तेन तदन्वितस्य संयोगस्य क्रियायामन्वयात् ग्रामवृत्तित्वप्रतियोगिकोवा यः संयोगस्तद्विशिष्टक्रियावानित्याकारकस्तत्र बोधः, तरुं त्यजतीत्यत्राप्याधेयत्वमवधित्वं वा द्वितीयार्थस्तेन तदन्वितस्य धात्वर्थविभागस्य धात्वर्थान्तरे क्रियायामन्वयात्तद्वृत्तितदवधिकोवा योविभागस्तद्विशिष्टक्रियावानित्याकारकोबोधः संयोगादेर्विशेष्यस्य जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव प्रागिव प्राग्वन्मतो नातिप्रसङ्गः। सकर्मकत्वमपि धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वं आनातीत्यादौ सकर्मकत्वव्यवहा-

रोभाक्त इत्याहुः। (फलव्यापारयोर्धातुरित्यनुसारिणः)

तण्डुलं पचतीत्यत्र रूपादिपरावृत्तिफलकतेजःसंयोगावच्छिन्नक्रिया पचेरर्थः, तन्निविष्टे च विलक्षणतेजःसंयोगे तण्डुलस्याधेयत्वेनान्वयः परमाणुं पचतीत्यपि प्रयुज्यत एव अतएव "स्वतन्त्राः परमाणवः पच्यन्ते" इति किरणावल्यामाचार्य्याः। ओदनं पचतीत्यादौ तु तण्डुलादावोदनादिपदस्य लक्षणा तत्र क्रियायामन्वितमनुकूलत्वं द्वितीयार्थ इत्यपि कश्चित्। एवं छिनत्तीत्यादावारम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया छिदेरर्थस्तन्निविष्टे च संयोगे विभागे वा स्वाश्रयवृत्तित्वसम्बन्धेन वृक्षादेरन्वयः। घृतेन विष्णुं यजतीत्यत्र प्रीत्यवच्छिन्नप्रसन्नकरद्रव्यत्यागो यजेरर्थः, प्रीतौ विष्णोराधेयत्वेन द्रव्ये च घृतादेरभेदेनान्वयस्तेन विष्णुनिष्ठप्रीतिहेतुर्योमन्त्रकरणकः घृताभिन्नद्रव्यत्यागस्तद्वान् इत्याकारकस्तत्र बोधः, स्वत्वध्वंसजनकेच्छापर्य्यवसन्नस्य त्यागस्यैकदेशे स्वत्व एव वा घृतादेराधेयत्वेन तत्रान्वयस्तेन द्रव्येण विष्णुं यजतीत्यादौ द्रव्यस्य द्रव्याभिन्नत्वेन साकाङ्क्षत्वेऽपि न क्षतिः। पितरमाराधयति उपास्ते पूजयतीत्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया धात्वर्थस्तन्निविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाधेयत्वाभ्यां पित्रादेरन्वयस्तेन पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वानित्येवं तत्र बुद्धिः। गौरवं गुरुताराध्यत्वावगाही ज्ञानप्रभेदो येयं भक्तिरित्युच्यते। पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावान्न तत्र पितरं यजतीत्यादिकः प्रयोगः। परमात्मानमुपास्ते इत्यादौ तु गौरवप्रयुक्तक्रियामात्रं धात्वर्थस्तथा नातः परमेशितुः प्रीतिविरहादयोग्यतापत्तिः। एवं जुहोतीत्यादौ वह्न्यादिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया हुधात्वर्थः, प्रोक्ते च पतने घृतस्याधेयत्वेनान्वयस्तेनाग्न्यधिकरणकस्य घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रियावानित्येवं तत्र बोधस्तादृशी च क्रिया घृतस्य करादेः प्रसारणन्युब्जीकरणादिरेव। अतएव घृतादेः परित्यागित्वविरहादात्यागादेर्न यष्टृत्वं किन्तु होतृत्वमेव। वह्नौ जुहोतीत्यत्र सप्तम्यन्तस्यार्थेन धात्वर्थनिविष्टे पतनेऽन्वयेति वह्निवृत्तित्वविशिष्टपतने तद्वृत्तित्वस्यान्वये निराकाङ्क्षतापत्तेः परन्तु तदवच्छिन्नक्रियायामेव। प्रतिमादौ घृतादिक्षेपणं मन्त्रकरणकमपि नाग्न्यधिकरणकं वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकपतनानुकूलमपि न मन्त्रकरणकमतस्तदुभयं न होमः।

मानसादपि होमे मानस एव मन्त्रः करणम्। यद्वा वह्निसंयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रियैव जुहोत्यर्थस्तेन घृतं जुहोतीत्यत्र वह्निसंयोगजनकं यद् घृतस्य पतनं तदनुकूलमन्त्रकरणकक्रियाविशेषवानित्याकारको बोधः। न चैवं हुधात्वर्थतावच्छेदकीभूतसंयोगात्मकफलशालित्वेन वह्न्यादेस्तदर्थकर्मतया वह्निं जुहोतीत्यादिकप्रयोगापत्तिः साक्षाद्धात्वर्थतावच्छेदकीभूतस्यैव फलस्याश्रयिणः कर्मत्वादन्यथा गगने लोष्टमुत्क्षिपतीत्यादौ गगनादेरुत्क्षेपणादिकर्मतायादुर्वारतापत्तेः ऊर्द्धसंयोगफलकक्रियावच्छिन्नव्यापारस्यैवोत्क्षेपणत्वात्। न चोत्क्षेपणत्वादिकं जातिरेव तत्र धात्वर्थतावच्छेदकम्, गमनत्वादिना सङ्करेण तस्य जातित्वायोगात् लोष्टादेस्तत्कर्मत्वाप्रसङ्गाच्च। अतएव परम्परया दुहाद्यर्थतावच्छेदकीभूतबहिःक्षरणशालित्वेन पयःप्रभृतेस्तत्कर्मत्वसम्भवेऽपि "अकथितञ्च" इति सूत्रान्तरस्य प्रणयनमपि पाणिनेः सङ्गच्छते। धनं प्रतिगृह्णातीत्यत्र पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः प्रतिग्रह इति फलीभूतस्वत्ववत्तया धनस्य कर्मत्वं, विक्रयादेर्दानविशेषत्वेऽपि न तस्य पुण्यजनकत्वमतस्तज्जन्यस्य स्वीकारोन प्रतिग्रहः। धान्यं क्रीणातीत्यत्र मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः, स्वत्वजनकं मूल्यदानमेव वा क्रयस्तत्फले च स्वत्वे धान्यस्याधेयत्वेनान्वयस्तेन धान्यनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान्, धान्यनिष्ठं यत्स्वत्वं तदनुकूलमूल्यदाता वेति तत्र बोधः। धान्यं विक्रीणातीत्यत्र मूल्यग्रहणजन्यस्य परस्वत्वस्य जनकमूल्यग्रहणमेव वा विक्रयस्तेन धान्यनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलो यो धान्यस्य त्यागस्तद्वान्, धान्यनिष्ठं यत् परस्वत्वं तदनुकूलमूल्यग्रहणवानिति वा तत्र बोधः। मूल्यञ्च पणपुराणादिकमेव राजनिर्दिष्टं नतु द्रव्यमात्रं तेन तिलादीन् दत्त्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाश इत्युक्तमेव। नरकं पततीत्यत्र भोगावच्छिन्नं पातित्यमेव पतेरर्थस्तेन नरकभोगानुकूलपातित्यवानित्याकारकस्तत्र बोधः। नरकपतित इति द्वितीयातत्पुरुषोदाहरणमपि वृत्तिकारस्य, एतदभिप्रायकमेव पतनक्रियायास्तथात्वे तु नरके पततीत्यादिरेव युक्तः प्रयोगः। स्वर्गं गच्छतीत्यादौ स्वर्गादिपदस्येव प्रकृते नरकपदस्यापि तद्देशपरत्वात्। धनं लभते प्राप्नोतीत्यादौ स्वत्वावच्छिन्नो व्यापारो धात्वर्थः, तन्निविष्टे च स्वत्वे धनादेराधेयतेनान्वयः। नतु गमनधात्वर्थविशेष्यतापन्नस्य कर्षोर्वादि

कर्मत्वं तदा दुहादेर्द्विकर्मकत्वव्याप्तिः। गोपेन गौः पयो दुह्यत इत्यादौ गोपकर्तृकव्यापारजन्यं यत् पयःकर्मकमोचनं तद्वती गौरित्यन्वये मोचनबहिःक्षरणयोर्द्वयोरेव दुहधात्वर्थतावच्छेदकफलत्वेऽपि गौणं बहिःक्षरणरूपं तस्य। कर्मणस्तिङाद्यैर्बोधनात् "गौणं कर्म दुहादिष्वस्ति-ङाद्यैरभिधीयते" इति व्युत्पत्तेरतः प्रकारान्तरेण कर्मत्वं निर्वक्ति। यस्य धातोर्यदर्थे यः प्रकारीभूय भासते। द्वितीयया स्मारितोऽर्थस्तदा तत्कर्मतोच्यते। यद्धातोर्यदर्थे द्वितीयया स्मारितः स्वार्थोऽनुभाव्यते तद्धात्वर्थक्रियायां तत्कर्मत्वम्। तेन गां दोग्धि पय इत्यादिप्रयोगात् पयःप्रभृतेरप्युक्तम्। पाकं कुरुते इत्यादौ यत्नप्रकारीभूतमपि विषयत्वं न यतेरर्थे। भजते ग्राममित्यादौ भूधात्वर्थे प्राप्तौ तथाभूतमपि संयोगत्वादिकं न तदर्थोत्पत्तौ प्रकारः। चौरं रुजन् पयः परिपूर्णं चित्वादावेव रुजादिधात्वर्थहिंसादेर्द्वितीयार्थकर्मतायां विशेष्यत्वं सुलभं गङ्गावगाहनादेर्निर्वाहादिगणान्तर्गतत्वेन तदन्यधातोः कर्मणि षष्ठ्याः प्रतिषिद्धत्वात्। दिवः करणस्य कर्मत्वोपदेशात् अक्षान् दीव्यतीत्यत्र द्वितीयार्थः करणत्वमपि गौणकर्मत्वमेव, अतएवाक्षा दीव्यन्ते द्यूतकारैरित्यादौ क्रीडाकरणतायामेव विहितात्मनेपदादिकर्मप्रत्ययाः। दुहादयस्तु फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्मकास्तेन गां पयो दोग्धि गोप इत्यत्र दुहेर्मोचनानुकूलव्यापारोऽर्थ इति तत्रत्यमोचने गोराधेयत्वेन पयसः कर्मत्वेनान्वयात् पयःकर्मताकं यद्गोवृत्तिमोचनं तदनुकूलव्यापारवान् इत्याकारकबोधस्तत्र बहिःक्षरणावच्छिन्नव्यापारो मोचनं तदनुकूलव्यापारो दोहनमतो धात्वर्थतावच्छेदकीभूतं बहिःक्षरणरूपं फलमादाय पयसो मोचनात्मकञ्च तदादाय गोः कर्मत्वमवसेयम्। एवं शिष्यं धर्मं वदति, ब्रूते, उपदिशत्याचष्टे, इत्यादौ प्रतिपत्त्यवच्छिन्नव्यापारो वदप्रभृतिधात्वर्थ इति तद्विशिष्टायां प्रतिपत्तौ शिष्यस्याधेयत्वेन धर्मस्य च विषयत्वेनान्वयाद्धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापारवान् इत्याकारको बोधस्तादृशव्यापारश्च धर्मः सेव्यतामित्यादिकोच्चारणाद्यभिलापः। मल्लं शतानि जयतीत्यत्र ग्रहणावच्छिन्नपराभवो जयतेरर्थः तथा च मल्लस्य ग्रहणानुकूलो यः मल्लकर्मकपराभवस्तत्कर्त्तेत्येवं तत्र बोधः। पराभवश्च तिरस्कारः। प्रजाः शतं दण्डयतीत्यत्र ग्रहणावच्छिन्नशासनं दण्डयतेरर्थस्तथा च शतग्रहणानुकूलं यत् प्रजानां शासनं तत्कर्त्तेत्येवं तत्र बोधः। शासनं नियन्त्रणम्। सुधां क्षीरोदं मथ्नातीत्यत्र उत्थानावच्छिन्नोन्मन्थनं धात्वर्थस्तेन सुधोत्थानानुकूलं यत् क्षीरोदस्योन्मन्थनं तत्कर्त्तेत्यर्थः। उन्मन्थनमालोडनम्। पान्थं पन्थानं पृच्छतीत्यत्र अभिधानावच्छिन्नव्यापारः पृच्छा, तथा च पान्थनिष्ठं यत्पथोऽभिधानं तदनुकूलव्यापारवानित्येवं तत्र बोधः। अभिधानमभिलापस्तदनुकूलव्यापारश्च केन पथा गन्तव्यमित्यादिप्रश्नः। नृपमर्थं प्रार्थयते याचते भिक्षते इत्यादौ दानाय प्रेरणं धात्वर्थस्तथा च नृपनिष्ठं यदर्थस्य दानं तत्प्रेरणावानित्यर्थः। प्रेरणा प्रवर्त्तना, सा च दीयतामित्याद्यभिलापरूपा। ग्राममजां वहति नयतीत्यादौ गत्यवच्छिन्नव्यापारो वहिप्रभृतेरर्थस्तेन ग्रामकर्मकं यदजादिनिष्ठं गमनं तदनुकूलव्यापारवानित्येवं तत्र बोधस्तादृशव्यापारः प्रकृते गलरज्ज्वाकर्षणादिः। पुत्रं धर्ममनुशास्तीत्यादावनुशासनं देशनया प्रवर्त्तना, तथा च पुत्रनिष्ठस्य देशनया प्रवर्त्तनस्यानुकूलव्यापारवानित्यर्थः तथाविधो व्यापारः सन्ध्यां विधेहि समिधमाधेहीत्याद्युपदेशरूपः। शाखां ग्राममाकर्षतीत्यत्र गतिहेतुकर्षणं धात्वर्थस्तेन ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवानित्यर्थः। विकर्षणं नम्रीकरणम्। गामवरुणद्धि व्रजमित्यत्र गतिप्रतिरोधहेत्वावरणमवरुधेरर्थस्तेन गोगतिप्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयधीः। वृक्षं फलान्यवचिनोति इत्यत्र विदाहेतुर्विघट्टनं चिनोतेरर्थस्तथा च फलकर्मकविच्छेदानुकूलं यद्वृक्षस्य विघट्टनं चालनं तद्वानित्येवं तत्र बोधः। उत्क्षिपत्यादिकस्तु धातुः सफलक्रियाहेतुव्यापारवाच्यपि न दुहादिः। यदुक्तमभियुक्तैः "दुहिर्वदत्यर्थजिदर्थदण्डमन्थिप्रच्छार्थनार्थौ नयनार्थशासु। कर्षीरुधिविञ् च तथार्थवृत्तौ द्विकर्मकोऽयं कथितो दुहादिः"। तथार्थवृत्तौ निरुक्ततत्तदर्थवृत्तौ। "गतिभोजनधीप्राप्तिशब्दार्थध्रौव्यधातुषु। कर्तृत्वं हेतुविहितप्रत्यये त्वेतेषु कर्मतेति" शाब्दिकास्ततः, गोपान् गमयति, द्विजान् गमयति, द्विजान् भोजयति, गुरूननुज्ञापयति, शिष्यान् पाठयति, सुतान् स्नापयतीत्यादौ मूलधात्वर्थस्य कर्तृत्वलक्षणं गौणमेव कर्मत्वं द्वितीयार्थः। तथा च गोपकर्तृकगत्यनुकूलव्यापारवानित्याकारस्तत्र बोधः। पुत्रान् प्रीतिम् प्रापयतीत्यादौ च प्राप्तिर्न गतिः चैत्रो ग्रामं भावयते, ग्रामस्य भावक

निर्वपं स्वापदेचित्तशान्तिः । शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् । क्रिमिभिश्च हते दद्याद्गोधूमाद्यं द्विजातये । शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् । मर्कटेन हते दद्यादश्वं सोपस्करान्वितम् । अशुपाते हते चैव प्रदद्याद्धान्यपर्व्वतम् । अग्निना निहते दद्यादुपानहं स्वशक्तितः । दवेन निहते चैव कर्त्तव्या सदने सभा । सर्पेण निहते दद्यात्कपिलां दक्षिणान्विताम् । व्याघ्रेण निहते दद्यात् सवत्सां गां पयस्विनीम् । विषेण च हते दद्यान्मेदिनीं शैलसंयुताम् । उद्बन्धनहते चापि प्रदद्याद्गां पयस्विनीम् । हते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् । हतं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम् । अतीसारमृते लक्षं गायत्र्याः संयतो जपेत् । शाकिन्यादिमृते चैव जपेद्रुद्रं यथोचितम् । विद्युता निहते चैव विद्यादानं समाचरेत् । अस्पर्शे च हते कार्य्यं वेदपारायणं तथा । सच्छास्त्रपुस्तकं दद्याद्दालमान्धिव संस्थिते । पातित्येन हते कुर्य्यात् प्राजापत्यानि षोडश । हते चागलरङ्किते कृच्छ्राणां नवतिश्चरेत् । निष्कत्रयमितं स्वर्णं दद्यादश्वं हयाहते । कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् । विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् । तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले मृते । केशरोगमृते चापि षष्टौ कृच्छ्रान् समाचरेत् । एवं कृते विधाने तु विद्यात्सदौर्द्ध्वदेहिकम् । ततः प्रेतत्वनिर्म्मुक्ताः पितरस्तर्पितास्तथा । दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः" इत्या० ।

अगुभारतसंवादे रोगादिरूपकर्म्मविशेषविपाक उक्तो यथा-
१सर्व्वशेषः "वातपित्तादिभिर्दोषैर्यद्दुःखं प्रशाम्यति । अगदेन तुर्व्वद्यो न कर्म्मजं नोपशाम्यति । तस्मात् कर्म परिज्ञाय प्रायश्चित्तं करोति यः । स तु दोषैर्विनिर्मुक्तो भोगीव कञ्चुकोज्झितः । भवतोऽह पवित्रोऽपि मनुजो निरुपद्रवः । निशम्य तस्य तद्वाक्यं प्रणम्य स महामतिः । कृतकर्म्मोपशमनं विस्तरेण महामते ! । वदस्व मुनिशार्दूल ! नान्यो वक्ता त्वया विना । मुनिरुवाच । धर्म्माधर्म्मसमायुक्ता लोभमोहसमावृताः । भवन्ति मानवाः सर्व्वे विष्णुमायावगुण्ठिताः । स्वकर्म्मवशमासाद्य पतन्ति निरये नराः । ततो जन्म समासाद्य व्याधिं कर्म्मानुरूपतः । अवाप्य परितप्यन्ति पीडामरमाः समन्ततः । देवद्रव्यविनाशेन गुरुद्रोहादिकर्म्मभिः । तस्मात् सर्व्वेषु पच्यन्ते नरकेषु महीक्षयात् । महापातकिनश्चापि सर्व्वेषु नरकेष्विह । आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्वधैः । उपपातकिनश्चापि तदर्द्धमिह मानवाः । शेषैः पापैस्तदर्द्धञ्च कालं प्राप्य विशेषतः । अथाधःपतनं पुंसामधर्म्मः परिकीर्त्तितः । नरकाब्धौ महाघोरे पतनात् पापमुच्यते । तस्मात् पापेषु दुःखानि तीव्राणि सुबहून्यपि । तस्मात् पापं न कर्त्तव्यमात्मपीडाकरं यतः । कर्म्मानुसारि नरकं भुक्त्वाशेषं व्रजन्ति वै । भूमौ हस्तिवृक्षलतागुल्मपशुपक्षिमृगादिभिः । प्रत्यक्षं नरकं भुक्त्वा मानुषत्वं प्रपद्य च । तद्व्याधिलक्षणं सर्व्वं संप्राप्य परितप्यते । पूर्व्वजन्मकृतं पापं व्याधिरूपेण बाधते । तस्योपशमनं कार्य्यं मन्त्रदानार्च्चनादिभिः । प्रायश्चित्तमकृत्वा तु न कुर्य्यात् कर्म किञ्चन । अनिस्तीर्णमघं नित्यं वर्द्धते द्विगुणं पुनः । देवद्रव्यं द्विजप्राप्तं ब्रह्मस्वं मातृपक्षिणः । द्रोहमेषां न कर्त्तव्यमस्तभोगनिभयात् सदा । स्वर्णस्तेयी गुरोः शय्याशायी मद्यस्य भोजकः । ब्रह्महापि च तेषां वै संसर्गी चापि पञ्चमः । गर्भपातकरः षष्ठः कन्यादूषी च सप्तमः । स्त्रीबालघातकश्चापि नवमो न्यासहृत्तथा । विश्वासघातकश्चैव दशमः परिकीर्त्तितः । एते दशविधा घोरास्तदन्य उपपातकाः । यत् पापं ब्रह्महत्याया द्विगुणं गर्भपातने । प्रायश्चित्तं न तस्यास्ति देहत्यागो विधीयते । कृतदोषसहस्राणां योषिद्द्विजतपस्विनाम् । न वधो भाङ्गविच्छेदो देशत्यागो विधीयते । नैते दण्ड्या महीभर्त्तुर्यमस्य विषयक्षताः । दण्डयन् दोषमाप्नोति तस्माद्राजा परित्यजेत् । यथापराधतो राजा शास्ता भवति शास्त्रतः । न तस्य कुरुते शान्तिं यमोऽप्यत्रैव शासिता । अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं वदन्ति ये । प्रायश्चित्तं भवेत्तेषां महापातकिनश्च ते । तस्माद्विमृश्य वक्तव्यं धर्म्मशास्त्रानुसारतः । ये विप्रान्नमन्ति नैव च गुरुं ये चाप कर्म्मोज्झिताः, ये शास्त्रोक्तविवर्जिता जनपदानां तापकाः पापिनः । ये वैद्यान् गणकान् महांश्च सुहृदः सन्मार्गगान् ये सदा, निन्दन्त्येव महापदं गदमयं विन्दन्ति ते दुःखिताः । ये नमन्ति द्विजतीर्थमादरादौषधञ्च भिषजः प्रति[illegible]म् । इष्टमन्त्रमखदानजं फलं ते भवन्ति निरुजो निरापदः । व्याधेर्यदा गदविनाशनभेषजाद्यैर्दोषो न याति शमनं

सुकृतप्रयोगैः। तं पूर्व्वजन्मजनितं तु विज्ञाय सम्यक् कार्य्या क्षमा तदुपदिष्टयथोक्तशान्तिः”। कः०।

२ नपुंसकता “साध्वी यौवनसम्पन्ना त्यक्ता दोषैर्व्विवर्जिता। तेन दोषेण राजेन्द्र! नपुंस्त्वमनुगच्छति। मुष्कच्छेदनकृद्यस्तु सोऽपि षण्डत्वमश्नुते। रजस्वलाम् स्थितां भार्य्यां सन्निधौ यो न गच्छति। षण्डत्वन्तु भवेत् तस्य जन्म चासाद्य भूपते!”।

३ अल्पायुःप्रजता “शृणु विप्र! पुरा स्नातुं गतस्त्वं सरितस्तटम्। गावः कतिपयास्तत्र तृषार्त्ता वारितास्त्वया। तस्य विप्रस्य पाकोऽयं जायन्तेऽल्पायुषः प्रजाः”।

४ अकिञ्चनता “अदाता निष्ठुरो जातः स च धर्म्मस्य निन्दकः। महाधनो न देवाग्निं ब्राह्मणं तोषयन् पुरा। आयुःशेषे क्षतिं प्राप्य गृहीतो यमकिङ्करैः। बद्ध्वा पाशेन संनीतो यत्रास्ते धर्म्मराड्विभुः। चित्रगुप्तेन तत्पापं विख्यातञ्च यमाज्ञया। तेन मर्त्त्ये महाघोरम् कृतं दत्तं न किञ्चन। लोलाख्यस्य नरकस्य विपदेऽयं द्विजो भवेत्। आज्ञप्तः किङ्करैर्नीतो निःक्षिप्तो नरकार्णवे। लोलाख्यनरके घोरे सर्व्वप्राणिभयङ्करे। लोलाख्यनरकस्येह लक्षणं त्वमतः शृणु। सर्व्वत्र दर्शयेत् सर्व्वं भक्ष्यपानादि सर्व्वतः। मृगतृष्णाजलाकारं दृश्यते न तु लभ्यते। नैराश्यं प्राप्य विवशः क्षुत्पिपासासमाकुलः। बहुकालन्तु विविधं भुक्त्वा जन्म प्रपद्य च। अकिञ्चनत्वमासाद्य महाक्लेशञ्च विन्दति। अन्नं कदन्नं भुङ्क्ते कदन्नमपि दुर्लभम्। स तु भिक्षाटनेनापि जीर्णाम्बरधरः सदा”

५ वियोगः “अयं दुष्टोदुराचारं दुष्टबुद्ध्या चकार यत्। स्नेहभेदकरोयस्मात्तस्माद्दण्ड्यो यमस्य हि। इत्युक्त्वा शृङ्खलैर्बद्ध्वा ताडयित्वा भृशं बहु। नीत्वा नियोगिनस्तत्र यत्रास्ते दण्डनायकः। दृष्ट्वा तं चित्रगुप्तेन तत्पापं प्रकटीकृतम्। व्यामोहके तु नरके पातितो दुर्म्मतिर्नृप!। व्यामोहकस्य यच्चिह्नं मानं यच्चास्य सेवतः। व्यायामः सप्ततिस्तस्य योजनं दुर्व्विषहं परम्। कुम्भाकारं निराकारं धूमौघव्याप्तमन्तरम्। वायोर्गतिर्न तत्रास्ति न च रश्मिर्विभावसोः। सूदस्य पतनं तत्र यच मैत्रीविभेदकः। ज्ञात्वा मन्त्रस्य निष्पाद्यं विमन्त्रं यो विधास्यति। सोऽपि मृत्युवशं प्राप्य मोहकाख्यञ्च गच्छति। मिथ्यापवादमन्येषां यः करोति वृथामतिः। तस्य मिथ्याभिशंसेन मोहकाख्ये गतिर्भवेत्। यानि मिथ्याभिशंसेन पतन्त्यश्रूणि रोदनात्। तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम्। मोहकाख्ये महाघोरे पतन्त्य ते दुराशयाः। पूर्व्वापरपरिज्ञानविहीनः परिखञ्ज च। एवमेतत् सहस्राणि वर्षाणि च चतुर्द्दश। भुक्त्वा मृगतनुं प्राप्य मृगोद्वेगसमाकुलः। व्यापादितोऽन्त्यगर्भेण मत्वशोकसमाहतः। मृगयूथपरित्यक्तस्त्वेकाकी तिष्ठते पुनः। सोऽपि मृत्युवशं प्राप्य मनुष्ययोनौ प्रजायते। ततोमानुष्यमासाद्य वियोगे परितप्यते”।

६ नेत्रामयः। “पुरा विप्र! गृहस्थस्य दीपस्य हरणं कृतम्। तत्र पुत्रेण भो विप्र! तेन कान्यत्वमस्य वै। कोटरोस्य प्रपक्ष्मेभ्यः सर्व्वां वापि पराङ्गनाम्। सकामः कामतो मोहाद्रतिभावञ्च पश्यति। सोऽपि नेत्रामयं प्राप्य सीदतीह स्वकर्म्मतः। अन्धं निरयं घोरं संप्राप्य कदन्नं बहु। भुक्त्वा जन्म समासाद्य दुष्टकर्म्मसमुद्भवाम्। मानुषीन्तु तनुं प्राप्य निष्कृतिं न करोति यः। पुनर्जन्म समासाद्य प्राप्तं कर्म न मुञ्चति”।

७ कुब्जत्वम्। “देवताप्रतिमां दृष्ट्वा यत्तां नैवाभिवादयेत्। ब्राह्मणञ्च गुरुं श्रेष्ठं ब्रह्मचारितपस्विनम्। श्मशाने जायते वृक्षः काकगृध्रोपसेवितः। भुक्त्वा कालमशेषन्तु मानुषत्वमवाप्य सः। कुब्जत्वमश्नुते तस्मात् कर्म्मणो मानुषो ध्रुवम्”।

८ खञ्जत्वम् छिन्नपादत्वञ्च “उपानहं हरेद् यस्तु तथैव काष्ठपादुकाम्। तप्तबालुकदुर्भेद्यमक्षं प्राप्य च सीदति। स नीतोयमदूतैश्च ताड्यमानो भृशं मुहुः। प्रवेश्य दक्षिणं द्वारं बद्ध्वा पादद्वये दृढम्। हाहाकारस्तु सर्व्वत्र श्रूयते यत्र भीषणः। नीत्वा यमाज्ञया दूतैं रौरवे च निवेशितः। रौरवस्य च यन्मानं तन्मे निगदतः शृणु। अष्टयोजनविस्तीर्णं गभीरं स्यादुद्विगाहतम्। दह्यमानस्तु तत्रैव पतितः पुनरुत्थितः। पुनः पतति तत्रैव क्रन्दमानो मुहुर्मुहुः। अनेककालमासाद्य पारं प्राप्य सुदुःखितः। मानुषीं योनिमासाद्य खञ्जपादो भवेन्नरः। श्लीपदी(छिन्नपादता)व्याधिसंयुक्तो भवेज्जन्मनि जन्मनि”।

९ छिन्नघ्राणता “श्रुतिस्मृतिकथायान्तु यस्तत्र विघ्नमाचरेत्। देवद्विजातिधर्म्मस्य सदा यो देवनिन्दकः। सोऽपि मृत्युवशं प्राप्य यत्र याति च तत् शृणु। मेर्व्वं ते पश्चिमे भागे पिङ्गला नाम या पुरी। पिशाचा यत्र तिष्ठन्ति सोऽपि तत्र स्वकर्म्मतः। यमाज्ञया तत्र नीतो रक्षितस्तत्र दुर्म्मतिः। तत्र दुःखं महाघोरं भुक्त्वा कल्पा-

न्तरे पुनः । मानुषत्वमनुप्राप्य छिन्नघ्राणोष्ठशोभनः । स निन्द्यः सतृसभामध्ये न प्रवेश्योभवेद्धि सः” ।

१० छिन्नहस्तता छिन्नपादता च “अतः परं छिन्नहस्तोयतो भवति मानुषः। शृणुष्व तत् प्रवक्ष्येऽहं स्वकर्म्मवशतश्च सः। पिता माता गुरुर्वृद्धः क्रोधाविष्टेन ताडितः । विनाऽपराधतो जन्तुं योवा हन्यादिमोहितः । यमलोके वसेत् सोऽपि छिन्नहस्तो भवेदिह । करेण ताडनाच्छिन्नपाणिर्भवति पामरः । पादेन छिन्नपादस्तु सर्व्वदै जायते ध्रुवम्” ।

११ छिन्नकर्णता । “मिथ्यापवादइष्टं तं येन तापः परोभवेत् । मानुषस्य, ततोदूताः नाययन्ति महीपतिम् । ते क्रूराच्छिन्नकर्णाश्च जायन्ते पृथिवीतले” ।

१२ कराङ्घ्रिहीनता । “सैन्ययोरुभयोर्यत्र संग्रामे चातिदारुणे । स्वामिनं सङ्कटे त्यक्त्वा ये भग्नाः पापबुद्धयः । स मृतो दह्यते दूतैर्भीषणैर्विकटाननैः । पूतिगन्धद्रतैः पाशैर्नीयते यमसादनम् । तञ्चमानः शरैः खड्गैः कूटमुद्गरपाणिभिः । यमाज्ञाकारिभिस्तैस्तु पात्यते नरके शृणु । असिपत्रवनं घोरं नरकं शतयोजनम् । योजनायुतगम्भीरं ज्वलत्खड्गसमाकुलम् । पात्यन्ते तत्र तैः खड्गैः शितधारसमाहितैः । ये भग्नाः स्वामिनं त्यक्त्वा मित्रं प्राप्य च मानुषाः । क्रन्दमानाश्च तिष्ठन्ति यावदाभूतसंप्लवम् । कर्म्मावसाने जायन्ते मानुषत्वमतः परम् । कराङ्घ्रिभ्यां विहीनस्तु दुष्टजीवः प्रवर्त्तते । नान्यस्य कर्म्म संप्रोक्तं येन मुक्तो भवेन्नरः । जन्मजन्मनि जायन्ते छिन्नाङ्घ्रिकरवेदनाः ।

१३ प्रसङ्गात् युद्धकर्म्मविपाकः “अतःपरन्तु ये शूराणां माहात्म्यमुत्तमम् । लोकमात्मगतस्मात् शृणुष्व गदतोमम । विद्रुतेषु च सैन्येषु सङ्कटेषु समन्ततः । स्वयं प्रति यदा गच्छेत् सा यात्रा क्रतुभिः समा । ललाटदेशे रुधिरं स्रवद्यस्यापि वक्त्रे पततीह किञ्चित् । तत् सोमपानेन हि तस्य तुल्यं संग्रामयज्ञे भवताऽभ्युवाच । शूरत्वे यस्य गात्राणि शरखड्गादितोमरैः । भिन्दन्ति न यमः शक्तोपहीडं पुण्यभाजनम् । अक्षोपरि च यः शूरः प्राणांस्त्यजति घातितः । तिस्रः कोट्योऽर्द्धकोटी च त्रिगुणं कालतस्तु सः । अप्सरोभिः सेव्यमानोदिव्यलोकमवस्थितः । तमेव पुरुषं प्राप्य दृष्ट्वा सर्व्वाः सुराङ्गनाः । विमानस्थाः समन्ताच्च गायमानाः परस्परम् । परित्यज्य सुरान् यान्ति स्वामिनं प्राप्य हर्षिताः” ।

१४ पक्षरोगः “अपक्षः पुरुषो येन सपक्षेण हतो रणे । तत्कर्म्मणः परित्राणं विस्तरेण शृणुष्व मे । महापक्षहत्यादोषेण यमस्य पुरुषैर्भृशम् । आयुःशेषेऽथ संग्रह्य यमदूतैर्भयानकैः । तस्मिन् मार्गे दुराधर्षे नीयमानस्तथाऽऽशाभिर्यमस्य च । तत्रनाम्नि महाघोरे निरये च वसेद्धि सः । प्रक्षिप्तश्चिरकालन्तु महादुःखेन पच्यते । ततो रासभयोनौ स जायते वै स्वयं नरः । ततो व्यगन्ततो व्याघ्रुतः पक्षेण हन्यते । सारमेयत्वमासाद्य मनुष्ययोनौ प्रजायते । तस्माद्वै मानुषीं प्राप्य पक्षरोगेण दह्यते” ।

१५ वैधव्यम् “विरूपं स्वामिनं दृष्ट्वा यौवनेनातिगर्व्विता । दिवानिन्दति दुर्व्वाक्यैः शय्यां न भजते निशि । तेन दोषेण भो देवि ! वैधव्यं समुपाश्रिता । कामार्त्ता रमणी या च स्वामिनं भजते न हि । सा वैधव्यमवाप्नोति दरिद्रं यावमन्यते । तस्य दोषस्य पाकोऽयं देवि ! वैधव्यमागता” ।

१६ वन्ध्यता “पयःपानमना पक्षस्त्वया पूर्व्वं निवारितः । पुरुषो वन्ध्यतां याति वीर्य्यविक्रमदोषतः । अदत्त्विषं व्रतं कृत्वा वन्ध्यत्वमनयोर्भवेत् । अदैवतं मिष्टफलं यो भुङ्क्ते प्राप्यलोभतः । सोऽपि वन्ध्यत्वमाप्नोति कथयामि ततः शृणु । दृष्ट्वा तु मैथुनीभावं विघ्नं तु कुरुते च यः । सोऽपि वन्ध्यत्वमाप्नोति सर्व्वजन्मनि जन्मनि ।

१७ गर्भस्रावः “त्रेतायुगस्य मध्ये तु सञ्जयोनाम भूपतिः। तस्य भार्य्याद्वयं जातं सुमित्रा नन्दिनी तथा । नन्दिनी सुभगा तस्य सुमित्रा या यशस्विनी । प्रसूता सा सुपुत्रेण तेन पत्या सुमानिता । सापत्न्यपक्षाविष्टा नन्दिनी नीतिवर्जिता। शून्यालये च सहसा कृष्णनाऽऽनीय तं सुतम् । शतधा खण्डकं कृत्वा तैलपाके विनिक्षिपे । सामेन विधिना राजन् ! दुष्टमत्या निजेच्छया । चकार दारुणं कर्म्म तत्फलं शृणु भूपते ! । सा कालवशमासाद्य बालघाताभिदोषतः। गृहीत्वा निष्ठुरैर्दूतैः पाशेन यमकिङ्करैः । नीता निरयमध्ये तु सा प्रक्षिप्ता दुराशया । कल्पान्ते कोकिला नाम वैश्यस्य च सुताऽभवत् । भूयोपि विश्वावसुना परिणीता स्वकाश्रमे । सर्व्वद्रव्यसमायुक्ते दासदासीसमाकुले । सा पुनः पञ्चमे मासि तृतीये वा चतुर्थके गर्भस्रावोऽभवत् तस्यान्तेन दुःखेन दुःखिता” ।

१८ मृतभार्य्यता “अतिक्रम्य त्वया ज्येष्ठं भ्रातरं चात्मनः कृतः । इहा परिणयस्तेन मृतभार्य्यत्वमागतः । सप्रस्यां यः स्पृशेत्तेन कोवा भार्य्यास्य नश्यति” ।

१९ वस्त्रहीनता अधनता च “गर्व्वितस्त्वात् हि दृष्टत्वा यस्तु द्रव्यं हरेत् पुनः शृणु तस्य यथा पापं कथयामि तवाग्रतः ।

निर्जने दुर्वहे घोरे छिन्नताडेऽ मरुस्थले । कृमिर्भूत्वा वसेत्तत्र क्षुत्पिपासासमाकुलः । मन्वन्तरत्रयं तत्र ततोनीहारसंज्ञके । घोर्यमानस्तु निर्वेदः शीतवातार्दितो भृशम् । कल्पमानन्तु दुःखेन मानुषोजायते मृतः । सङ्कुचन्तो भवेत् सोऽपि सुखं न लभते क्वचित् ।

२०दौर्भाग्यम् "तृतीयासु च सर्वासु तैलस्पर्शस्त्वया कृतः । दुर्भगत्वञ्च ते जातं न तापं कुरु सुन्दरि !" ।

२१सापत्न्यम् । "शृणु देवि ! प्रवक्ष्यामि यत्तु सापत्न्यसम्भवम् । दुःखं सुन्दरं स्त्रीणां स्वकर्मवशतः खलु । मिथ्यावाक्यप्रवादेन विवादं कुरुते तु या । अन्योन्यस्नेहवैषम्यं कारयित्वा व्रजेदधः । तत्रानुयायिनी भूत्वा जीवेद्वर्षचतुष्टयम् । ततः पुनरसौ दीना दैवाद्भवति मानुषी । सापत्न्यं प्राप्य सन्तप्ता चित्तपीडासमन्विता । भवतीति न सन्देहस्तस्य दानमतः शृणु" ।

२२जात्यन्तरम् "शृणु देव ! प्रवक्ष्यामि येन जात्यन्तरं गतः । मनुष्यो दुःखमाप्नोति भवेद् गर्हितो जनः । पुरा राजकुले जातो चित्रसेनेति नामतः । एकदा ब्राह्मणी रम्या यौवनस्था तपस्विनी । पुष्पार्थिनी पुष्पवनं गता दृष्टाच तेन सा । कामबाणार्दितेनाथ बलात्कारेण धर्षिता । हृद्रोगेणाभिसंतप्ता ततः स्वभवनं गता । अत्रान्तरे गृहं तस्या भिक्षुरेकः समागतः । धर्षिता सापि तन्मह्यो भिक्षवेऽन्नं ददौ मुदा । इदं कृतं तदा पापं शृणु तस्य फलं तथा । तत्कर्मवशमासाद्य यमस्य विषयङ्गता । पुनर्जन्म समासाद्याऽभवन्म्लेच्छकुलोद्भवा । म्लेच्छयोनिं परित्यज्य ततः कैवर्त्तयोनिजा । एवं बहुविधां योनिं समासाद्य द्विजाङ्गना । अमेध्यान्नञ्च यतये दत्त्वा प्राप गतिं नृप ! । मनुष्योदुःखमाप्नोति स भवेद्दुर्गर्हितोजनः"

२३मूकत्वम् "पुरा देवापतो राजन् ! गायमानो द्विजः कश्चित् । नृत्यंश्च प्रहसन् वाक्यैर्हास्ययुक्तैश्च निन्दितः । तस्य विप्रस्य पापोऽयं न वाक् प्रसरते मुखात् । कल्पमानन्तु देवापे गायमानं प्रहस्य च । नोपहासं प्रकुर्वीत महादोषो भवेद्यतः" ।

२४गद्गदवचनता "अतःपरं महाभाग ! गद्गदत्वेन दूषिताः । भवन्ति मानवा मर्त्त्ये तच्छृणुष्व वदामि ते । जिगीषाकृष्टहृदयोविवादं प्रकरोति यः । गुरोर्निन्दाञ्च मूर्खत्वादस्य पापमतः शृणु । यमलोके तु तस्यैव कृह्यते निशितैः शरैः । जिह्वापि किङ्करैः क्रुद्धैरजस्रं तस्य दोषतः । अमेषकालपर्य्यन्तं दुःखं प्राप्य महत्तरम् । मानुषत्वमनुप्राप्य गद्गदो जायते नरः । ततो गद्गदया वाक्या मर्त्यः सीदति सर्वदा" ।

२५मुखरोगः । "पितृदेवगुरोर्निन्दां ये वै मिथ्या वदन्ति च । अभक्ष्यभक्षका ये च ते वै मुखगदार्दिताः । भवन्ति नरकस्यान्ते मानुषास्तस्य निष्कृतिम् शृणु वक्ष्यामि भूपाल !" ।

२६कर्णरोगः । "अमस्यस्तु यच्छ्रुतं किं पापमन्तर्गतन्तु यत् । समाकर्ण्यापि मनुजः कर्णरोगी भवेत् सदा । कर्णमूलं भवेदेवं पूयशोणितसम्भवम् । कर्णरोगमिति ख्यातमवाप्य परितप्यते" ।

२७दुर्गन्धगात्रता । "चोरयित्वा तु गन्धाढ्यं द्रव्यं लोभपरायणः । पच्यते नरके घोरे मूत्रविड्भाषमाकुले । अप्रतिष्ठेऽतिदुर्गन्धे दिव्यवर्षायुतत्रयम् । मर्त्ये तु शशको भूत्वा जीवेद्वर्षचतुष्टयम् । ततोमृगस्तु सौगन्धो भूत्वा यत्नेन हन्यते । दुर्गन्धेन समायुक्तो मानुषत्वमवाप्य सः । स्वकर्मवशतो राजन् ! दुर्गन्धं गात्रमश्नुते" ।

२८दारिद्र्यं विरूपता च । "पुरा महत्स्कन्दपतेरमात्येनासतां शृणु । दानविघ्नः कृतस्तेन पापोऽयं नान्यथाऽभवत् । मा ददस्वेति यो ब्रूयाद्देवाग्निब्राह्मणेषु च । स नरकस्य पाकेन दरिद्रत्वेन स्पृश्यते । दरिद्रः कुरुते पापं पापाद्याति यमालयम् । पुनरावृत्य पापेन दारिद्र्येणाभिस्पृश्यते । न क्षयोऽस्ति च पापस्य तस्मात् पापं त्यजेत् सुधीः । अदाता च भवेत् सोऽपि विरूपश्चापि दुर्विधः । तस्मात् कर्म परित्याज्य दानं दद्यात् स्वशक्तितः" ।

२९सस्वेदपाणिपादता "चोरयित्वा तु लवणं मृतः क्षाराब्धिसंज्ञके । नरके पच्यते यावन्मन्वन्तरमवाप्य सः । तस्य कर्मभवं चिह्नं जायते हस्तपादयोः । सस्वेदं सर्वदा तस्य निष्कृतिं त्वमतः शृणु ।

३०दाहज्वरः "पुरा येन गृहं पापः क्षेत्रं दग्धन्तु वह्निना । स मृतो रौरवं प्राप्य पीड्यमानः स्वकर्मणा । खदिराङ्गारवह्नीप्रख्यालामालावगुण्ठिते । पतितस्तिष्ठते तत्र वर्षायुतशतत्रयम् । कर्मान्ते मानुषीं योनिमवाप्य परिदह्यते । ज्वरदाहेन घोरेण येन शाम्यति तच्छृणु" ।

३१अग्निमान्द्यम् "कल्मषं नाम नरकं पूयशोणितसंश्रुतम् । विस्तारबहुयोजनं महामोहसमाकुलम् । तिष्ठन्ति पापिनस्तत्र द्विजपाकस्य विद्रवात् । ततो मानुषतां प्राप्य भुक्त्वा पापं सुदुष्करम् । अग्निमान्द्यं भवेत्तस्य निष्कृतिं कथयामि ते ।

२२ अजीर्णरोगः "त्वया कृतं पुरा कर्म यद्युक्तञ्च तच्छृणु । हत्वा पाकञ्च पाकाग्निं शमयित्वा जलेन च । भोजनञ्च कृतं तस्मादजीर्णत्वमुपागतः"।

२३ अतीसारः "अतीसारी राजेन्द्र ! जायते येन कर्म्मणा । देहिनां दोषदुष्टेन्तः प्रशाम्यति यतः शृणु । अत्यन्तमुग्रं पापिष्ठं भिक्षाशकनामकम् । सोपद्रवञ्च नरकं विषमोपद्रवाकुलम् । निर्वातमुग्रया युक्तं दंशकादिपरिवृतम् । पच्यन्ते पापिनस्तत्र वर्षलक्षायुतत्रयम् । वर्णाग्निदूषका ये च ये च दानविलोपकाः । परस्वानां चौर्य्येण यातयन्तीह तेऽधमाः । नरकान्ते मनुष्ययोनौ भूत्वा वर्षत्रयं पुनः । मानुषत्वमनुप्राप्य चातीसारेण रुह्यते"।

२४ पङ्गित्वो "अन्यायं संपदं ये च कुर्वन्ति धनलुब्धकाः । न ददन्ति न चाश्नन्ति द्रव्यं कस्यच किञ्चन । तथा गोभूमिहर्त्तारो निष्ठुरा ये च स्वभकाः । अदुष्टामपतितां भार्य्यां यौवने यः परित्यजेत् । स मृतः पच्यते राजन् ! स्वकर्म्मवशतः शृणु । नरकञ्च पूतीवाख्यं पूयवानसपीडितम् । कल्पकोटियतं तत्र दह्यन्ते पापदेहिनः । नरकान्ते गजयोनिं व्रियते प्राप्य बन्धनात् । तस्मात्तु मानुषीं योनिं ततः प्राप्यावसीदति । पङ्गूरोगवान् भूत्वा पशुद्रव्यधनादिकम् । प्राप्यते विविधैर्दुःखैस्तस्य पञ्चापि निष्कृतिम्"।

२५ पाण्डुरोगः "शृणु राजन् ! प्रवक्ष्यामि पाण्डुरोगोद्भवो यतः । परभार्य्यारतोयश्च नरके यान्यजारतः । स मृतः किङ्करैर्याम्यैर्बद्धः शृङ्खलया दृढम् । निष्ठुरैस्ताड्यमानस्तु क्रन्दमानो मुहुर्मुहुः । शोचमानः स्वकं कर्म्म प्रपञ्च पदे पदे । संयमन्यां प्रवेश्यैनं दर्शयद्दारिभीषणे । यमनाम्नं समानीय परभार्य्याभिमर्दकम् । ततोऽस्य यमदूतोऽपि दृढं बद्धा निरन्तरम् । तं दृष्ट्वा चित्रगुप्तेन पापकर्म्मानुसारतः । प्रत्यक्षञ्चावदत् सर्व्वं दुर्वृत्तादिकमस्य वै । कथितोऽयं दुराचारः परस्त्रीरमणप्रियः । नयस्व नरकं भीमं ज्वलन्तीमायसीं प्रियाम् । अयमालिङ्गनञ्चास्य कारयन्ति यमाज्ञया । वर्षायुतसहस्रे द्वे घरं तापञ्च विन्दति । पुनः स्वकर्म्मपाकेन ज्वलदग्निमये ह्रदे । विक्षिप्तो दह्यते तत्र वेष्टमानः स्वकर्म्मणा । वर्षलक्षसहस्राणि नव सप्तायुतानि च । तस्माद्विमुच्य गत्वा मानुषत्वमवाप्य च । पाण्डुरोगमनुप्राप्य शोचचेताः प्रपद्यते"।

२६ कामला "भक्ष्यादीनान्तु चौरा ये गतिं तेषां ततः शृणु । आयुःशेषे तु ते याम्यैर्गणैर्नीता यमाज्ञया । घोरा पुरीति विख्याता पिङ्गला नाम दुस्तरा । पिशाचास्तत्र तिष्ठन्ति स्वकर्म्मवशपीडिताः । यत्र संवर्द्धते नित्यं क्षुत्पिपासामहोद्धता । भक्ष्यचोरान् जनांस्तत्र प्रवेश्य यमकिङ्करैः । प्रयान्ति सदनं याम्यं चित्रगुप्तोऽस्ति यत्र वै । स तत्र भक्ष्यचौरश्च पिशाचत्वमेदितः । भक्ष्यसंख्याप्रमाणेन वसति तत्र कर्म्मतः । कर्म्मान्ते वायसीं योनिं प्राप्य दुःखञ्च विन्दति । काकोऽष्टादश वर्षाणि तस्मात् कङ्कः प्रजायते । सोऽपि द्वादशकं जीवेत्ततो भवति मानुषः । कामलारोगवान् भूत्वा तद्दोषजनितेन च"।

२७ कासः "कासः पञ्चविधो राजन् ! जायते येन कर्म्मणा । तदहं विस्तराद्वच्मि भूप ! कर्म्मवशादुद्यतः । येन दम्भोजनो नित्यं मिथ्यावाक्यैः सुदारुणैः । पित्तप्रबलकं कासं प्राप्य कासेन सीदति । ब्राह्मणस्थानविध्वंसी बालकाशाहितोभवेत् । रुद्धते श्लेष्मकासेन जलाशयस्य विघ्नतः । ब्रह्मविष्णुशिवं यस्तु भिन्नभावं प्रपश्यति । सन्निपातोत्थकासेन रुद्धते स्वमतः शृणु । अयज्ञेन पशुं हत्वा भुङ्क्ते मांसन्तु योनरः । वर्द्दोषोत्थकासेन रुद्धते शृणु भूपते ! । इति कासपरिज्ञानं कथितञ्च मया शृणु । पुनस्ते कथयिष्यामि यत्ते मनसि वर्त्तते । राजोवाच । श्रुतं कासपरिज्ञानं कर्म्मणा येन जायते । नरकं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ! । ऋषिरुवाच । स तु कर्म्म समासाद्य पच्यते यत्र तच्छृणु । चिन्तयन् स्वानि कर्म्माणि रोदमानो निरन्तरम् । करम्भवालुकानामनरकं योजनायुतम् । कूपाकारं महद्दीप्तं वालुकाङ्गारकण्टकैः । दह्यते भिद्यते तत्र वर्षलक्षत्रयावधि । नरकाज्जायते दुर्गे जले कुम्भीरसंज्ञकः । कुम्भीराच्छूकरोभूत्वा जीवेद्वर्षचतुष्टयम् । तस्माद्दुःखसमासाद्य महाभागस्ततोभवेत् । तदन्ते मानुषीं योनिं संप्राप्य परिदह्यते । पञ्चाख्यकासरोगेण तप्यमानोऽवसीदति"।

२८ श्वासकासः । "श्वासकासो महाकष्टो भवेद्देहाभिघातकः । उद्भवेत् कर्म्मणा येन तन्मे निगदतः शृणु । महोर्द्ध्वच्छिन्नतमकक्षुद्रभेदाच्च पञ्चधा । श्वासः सञ्जायते नृणां पृथक्कर्म्मवशानुगः । यस्तु पशुमसाद्य पशुश्वासं निरुध्य च । हन्ति, खादति वा मोहात् महाश्वासेन रुद्धते । पौराणिककथामध्ये यस्तु वाचाऽन्यथा वदेत् । ऊर्द्ध्वश्वासं समासाद्य दुर्मोच्यहरवर्षकम् । निषिद्धदान-

पद्भ्याञ्चिन्नपादेन स्पृश्यते । मर्त्यः पाद्मार्थनिर्व्विप्नं बालं यो दूषयत्यपि । पीड्यते तमकश्वासैः ४ कुष्ठैः ५ पाकस्य विषतः । परत्र कर्म्मणा तेषां नरकेषु विपच्यते । नरकान्ते व्याघ्रयोनिं व्याघ्रीं शौकर वायसीम् । पृथक्कर्म्मवशाद्योनिं गत्वा स परितप्यते । मानुषत्वमनुप्राप्य पूर्व्वोक्तेनोपसृज्यते" ।

३८ यक्ष्मरोगः । "यक्ष्मरोगस्य विज्ञानं दुर्वृत्तं सर्व्वरोगतः । महत्वांस्तस्य वै राजन् ! कथयामि तवाग्रतः । सेनापतिः क्षयगदस्य च पाण्डुरोगोदाहज्वरोऽप्यमरएव बलाश्वमात्यम् । कुलाशकः कामलकः सहायो यो श्वासकासावपि मन्त्रिणौ च । स तुल्यैवंविधं घोरं यक्ष्मरोगं सुदारुणम् । प्रणम्याह मुनिश्रेष्ठं त्रिकालज्ञेदर्शिनम् । राजोवाच । अस्य रोगस्य चोत्पत्तिर्जायते येन कर्म्मणा । केन दानेन विप्रेन्द्र ! परत्रापि न वर्द्धते । तत्सर्व्वं विस्तराद्ब्रूहि श्रोतुमिच्छामि यत्नतः । अगुरुवाच । पुरा येन कृतो विप्रोन्यासापहरणं कृतम् । वृत्तिच्छेदः कृतो येन मधुविघ्नकरश्च यः । सर्व्वस्वेन प्रजापीडा कृता येन स्वकर्म्मणा । स मृतो दृश्यते याम्यैर्दूतैरेव भयङ्करैः । निवेश्यान्यतमे मार्गे दक्षिणद्वारिमोक्षणे । ततो नीत्वा यमस्याग्रे कम्पमानञ्च पापिनम् । संयमन्यां यमस्याग्रे नीत्वा तं पापकारिणम् । कृष्टपुष्टाश्च ते दूताश्चित्रगुप्तान्तिकं ययुः । चित्रगुप्तश्च तं दृष्ट्वा क्रोधाद्रक्तितलोचनः । चित्रगुप्त उवाच । इमं पापं दुराचारं नरकं नय दुःसहम् । रौरवनामां गतं सर्व्वं कुम्भीपाकं सुदारुणम् । ताम्रताम्रमये दीप्ते वालुकाङ्गारसंहते । एवंविधे तु दुर्वृत्तः विप्रस्तत्र स्वकर्म्मतः । दह्यमानोऽतिदुःखेन यावदाभूतसंप्लवम् । कालान्ते स पुनः पापी क्रमियोनौ च जायताम् । तत्र जीवति वर्षाणि दशपञ्च च भूपते ! दुष्कृतस्य क्षयं कृत्वा ततो भवति मानुषः । यक्ष्मपक्षयरोगेण पीड्यमानस्तु दृश्यते" ।

४० रक्तपित्तम् । "शृणु राजन् ! पुरा वृत्तं यस्येदं कदनं महत् । कर्णाटकारख्यसंस्थाने सुव्रतो नाम वै द्विजः । तस्य पुत्रो दुराचारः सर्व्वधर्म्मबहिष्कृतः । परद्रव्याभिकामी च परभार्य्यारतिप्रियः । एकदा कामतस्तेन पितृव्यस्य वधूर्बलात् । धर्षिता तेन दोषेण यमस्य विषयङ्गतः । नरकान्ते कुले जातस्तस्य कर्म्मसमुद्भवम् । रक्तपित्तगदं भुङ्क्ते स्वकर्म्मार्जितदोषतः" ।

४१ गुल्मरोगः "अतःपरं प्रवक्ष्येऽहं गुल्मरोगं सुदारुणम् । यस्मादुत्पद्यते पुंसो मृतो वा याति यत्र वै । कर्म्मतो याति तां योनिं देवोपगमनं भवेत् । काकोलनाम नरकं क्रमिपूयपरिप्लुतम् । क्षिप्यते तत्र दुष्टात्मा एकाकी मिष्टभोजनः । अन्त्यजागमनेनापि नरकं नाम दुर्गमम् । तस्मात् पिपीलिका भूत्वा जीवेद्वर्षचतुष्टयम् । दुष्कृतस्य क्षयं कृत्वा जायते तत्र मानवः । गुल्मरोगं समासाद्य वेदनैः परितप्यते । अगदैर्भ शमं याति तदा ज्ञेयं तु कर्म्मजम्" ।

४२ शूलरोगः "शृणुष्व कथयिष्येऽहं तव स्नेहान्महीपते ! । मृढा निरपराधेन ये लोकदनप्रदाः । घ्नन्ति शूलेन शस्त्रेण वाक्यदोषोद्गमेन च । तानेव निष्ठुरा दूता यमस्याज्ञाकराश्च ये । महाप्रेताख्यनिरये दीप्तशूलसमाहते । भेदयन्तीव तत्रैव दम्पत्योर्भेदकानपि । भुक्त्वा तु कदनं घोरं मन्वन्तरचतुष्टयम् । नरकान्ते ततो मर्त्ये जायते पक्षियोनिषु । पक्षी भूत्वा वियोगी स्यात् जीवेद्वर्षचतुष्टयम् । मानुषत्वमवाप्यैव शूलरोगातुरो भवेत्" ।

४३ अर्शोरोगः । "शृणुष्व तव पुत्रेण पुरा जन्मान्तरे कृतम् । साध्वीमृतुमतीं स्नातां सविधिं नागतश्च सः । एतत्कर्म्म कृतं तेन स्पृष्टितपार्श्वा च सः । आत्महा भ्रूणहा यस्तु कृतो येन च गोवधः । ते पार्थिवा च संप्रान्ते भुक्त्वा कष्टं सुदुःसहम् । पञ्चविंशत् समाः कोट्यो वत्साश्चामृतविंशतिः । तामिस्राख्यं महाघोरं गाढान्धतमसावृतम् । सर्पादिना समाकीर्णं दुष्प्रेक्ष्यं जीववर्जितम् । स तिष्ठेद्विवशो दीनो येनेदं दुष्कृतं कृतम् । कर्म्मक्षयमनुप्राप्य पश्चाद्भवति मानुषः । सोऽर्शोगदवान् भूत्वा दुःखेन पीडितो भवेत्" ।

४४ भगन्दररोगः । "गुदस्य दक्षिणे पार्श्वे पित्तरक्तोदकाकृतिः । प्रभवेद्दिकटाकारो दुर्व्वणो मर्म्मभेदकः । स वै भगन्दरो ज्ञेयः कर्म्मजो नोपशाम्यति । आचार्य्यभार्य्यागमनं ये कुर्व्वन्ति नराधमाः । पक्षपातमधर्म्मेण बालहद्बधनापहाः । ते पतन्ति महाघोरे नरके च सुदारुणे । यः केशमूत्रकृन्तन्त्योंशाहनं भद्रपीठकम् । चीरयेद्यस्तु दुर्बुद्धिस्तक्रोदात् क्षीधनं च यः । स मृतस्तु विष्णुलाख्यं नरकं प्राप्य सीदति । स्थक्षवस्याश्मनोमासुमत्र्यमाद्योऽतिदुःखितः । भुक्त्वादुतमहस्रञ्च नवसंख्यं क्षपेत् पुनः । सोऽप्यनेनैव रोगेण जन्मादावपि स्पृश्यते" ।

४५ छर्द्दिः "शृणुष्व नृपशार्दूल ! कथयामि तवाग्रतः । गवा

चरणं संपदं भवत्यतीसारेण तौन्द्रिकः”।

५६अम्लपित्तम् “यथाम्लपित्तोपचयो भवेद्येन वदामि तत्। जिह्वास्वादवशाविष्टो मानवोऽयो निषेवते। विषिद्रुमविकल्पेन स मृतः प्राप्य वायसीम्। व्यग्रस्य सारमेयीञ्च योनिमासाद्य कर्मतः। पश्चात् संजायते देही विदग्धावं प्रकुप्य च। हृत्कण्ठज्वालाम्लपित्तेन दह्यमानोऽतिदूषितः”।

५७शोथोदरम् “लोभान्मोहाद्भयाद्द्वेषात् कृत्वाऽधर्मं वदेत् यः। स भुङ्क्ते नरकं घोरं पश्चाच्छोथोदरी भवेत्”।

५८जलोदरम् “ब्रह्मविष्णुमहेशेषु भिन्नभावं करोति यः। स्पृश्यते स तु दुरात्मा जलोदररुजा ततः”।

५९शोकः “पुत्रश्च शोकवान् जातः स्वकर्मार्जितदोषतः। कर्त्ता भुङ्क्तेऽन्यथा कापि कर्त्तव्या परिदेवना। विनापराधेन यतो वत्सा ताडिताः पुरा। कथयेऽवगतं मया तेन शोकार्हितस्तु सः। तत्पातकसमाविष्टो जातस्तव गृहे शृणु। तेन शोकार्हितः पुत्रो हया चिन्तापरः प्रभो!”

६०मूत्रकृच्छ्रम् “मूत्रकृच्छ्रं भवेत् भूप! कर्मणा येन दारुणम्। देहिनो देहनाशार्थं तन्मे निगदतः शृणु। विधवागमनं येन कृतं वा मद्यभोजनम्। मूत्रकृच्छ्री भवेत् सोऽपि भुङ्क्ते च नरकं शृणु। अकृत्वा त्रिगुणं कर्म तत्कर्म च वर्त्तते”।

६१मूत्राघातः “मूत्राघातो भवेद्येन तन्मे निगदतः शृणु। दम्पत्योर्मैथुने यस्तु महाविघ्नं समाचरेत्। मूत्राघातो भवेत्तस्य दुर्वहं कदनप्रदम्”।

६२अश्मरी “यथाश्मरी भवेद्येन तन्मे निगदतः शृणु। ऋतुस्नातां स्त्रियं यस्तु सन्निधौ नोपगच्छति। अप्रीत्या क्रोधभावाद्वा स याति नरकं नरः। पूयशोणितसंभिन्ने नरके पच्यते भृशम्। मानुषत्वमनुप्राप्य शर्कराश्मरिरोगवान्। भूप! विन्दत्यनुदिनं कदनं मूत्ररोधतः। आर्त्तवस्य विपर्य्यासं यः करोति नराधमः। तस्मात् सर्वप्रयत्नेन नरो नार्य्यामृतावियात्”।

६३मेहः। “मेहाश्च विंशतिः ख्याताः पृथक्कर्मप्रभावजाः। तेषां नामान्यहं वक्ष्ये क्रमादुत्पद्यते यतः। मधुमेहः सान्द्रमेहः सुराप्लोदकस्तथा। इक्षुः सिकतयोश्च सितमेहस्तथैव च। फेनः क्षीरश्च नीलश्च हारिद्रः कालसंज्ञकः। तथा रक्तश्च माञ्जिष्ठोमज्जा क्षारस्तथा गजः। सद्वैद्योपदेशेन ज्ञात्वा मेहान् पृथक् पृथक्। नामानुसारतः पूर्वं कर्म ज्ञात्वा विधिवच्चरेत्। पूर्वं मैथुनकृद्यस्तु शौकरीं योनिमाव्रजेत्। तस्मान्ते मानुषीं प्राप्य जलमेहार्दितो भवेत्। मातृगामी बलान्मोहान्मधुमेही भवेन्नरः। रजस्वलागमनाच्चैव क्षारमेही प्रजायते। सतीविपर्य्ययं कृत्वा सान्द्रमेहान्वितो भवेत्। रोगिणीगमनान्मर्त्यो भवेन्माञ्जिष्ठमेहवान्। मित्रस्त्री धर्षिता येन स भवेदिक्षुमेहवान्। चतुष्पदाभिगमने भवेत् सिकतमेहवान्। सर्वहर्त्ता क्षीरमेही सितमेही सुरारतः। कालमेही भवेत् सोऽपि पुष्पवत्याश्च धर्षणात्। रजस्वलायां रतिकृद्रक्तमेहार्दितो भवेत्। मज्जमेहयुतः सोऽपि योऽन्त्यजागमनञ्चरेत्। हस्तिमेह्यतिदुष्टस्त्रीविधवागतिदोषतः। ब्राह्मणीगमनाद्द्वेषी फेनमेहेन मेहति। व्रतस्थागमनाद्यश्च हरिद्राभञ्च मेहति। मातरं येऽभिगच्छन्ति भगिनीञ्चात्मनः सुताम्। श्वश्रूं चाप्यतः-रक्षां भ्रातृभार्य्याञ्च मातुलीम्। गुरुपत्नीं राजपत्नीञ्च मित्रस्त्रीं वा कुटुम्बिनीम्। मृता वैवस्वतपुरीं यान्ति भूतैः प्रपीडिताः। तावन्तं तत्र दुर्वृत्ता मत्तः शृणु वदामि ते। अङ्गारराशौ प्रक्षिप्य तान् दहन्ति यमाज्ञया। दूतास्तु महतीं घोरां ज्वलन्तीमायसीं शिलाम्। खादयन्ति च तान् पश्चात् नरके च क्षिपन्ति वै। नरकान्ते पुनस्तेऽपि मृताः स्युः शूकरा भृशम्। शूकराः षड्वर्षाणि द्वयवर्षाणि कुक्कुटाः। पिपीलिकास्त्रयोमासान् वृश्चिकाश्चाब्दमात्रकम्। भूत्वा प्रयान्ति गोयोनौ रुग्जा विकलेन्द्रियाः। तत्राधर्मचयं कृत्वा ततो मानुषयोनिषु। प्रमेहगदवन्तः स्युः प्राप्नुवन्ति मनोव्यथाम्”।

६४पुंस्त्वविनाशः “धर्मपत्नीं परित्यज्य योऽन्यस्त्रीमैथुने रतः। स स्त्रीविरक्तो भवति पुंस्त्वं तस्य विनश्यति”।

६५अण्डवृद्धिः “मत्स्यं हत्वा लुब्धकेन विप्रो वेदविवर्जितः। सदैव गहनं याति स्वर्गं हन्ति निषादवत्। पक्षिपोतान् बहून् सोऽपि नित्यं खादितवांस्तदा। आयुःशेषे स वै दूतैर्यात्यमीतो यमाज्ञया। निःक्षिप्तो नरके घोरे तस्मान्ते त्वत्कुले द्विज!। जातः सर्वगुणोत्पन्नः स्वकर्मवशतः शृणु। मुष्करोगेण सन्तप्तः शोषरेताः सुदुःखितः”

६६उन्मादः “ब्राह्मणं वैष्णवं तीर्थं पितरं मातरं द्विजम्। नार्चयेन्निन्दयेद्वापि पुरा स नरकं व्रजेत्। पुरीषाख्ये महाघोरे निरये शुक्रभोजने। अधःशिरा भवेत् पापी नानादुःखप्रपीडितः। कर्मान्ते स पुनर्योनिं मानुषीं प्राप्य कर्मभिः। उन्मादरोगवान् मर्त्यो जायते यदुनन्दन!। स्मृतिभ्रमकरं द्रव्यं यद्दत्तं ब्राह्मणे गुरौ। दस्याचारं

चरेद्यस्तु भवेदुन्मादरोगवान्" उन्मादभेदाः सुश्रुतोक्ता ज्ञेयाः

६७अपस्मारः "ये कोपवशतः पूर्वं न जानन्त्युपकारिणम् । ब्राह्मणस्यापराधेच यैः कृतोमानसाधमैः । गोवधं दग्धनिर्वद्धं ते स्युर्निरयगामिनः । नरकान्ते व्याघ्रयोनिं वैडालीमपि शौकरीम् । ततो मानुषयोनौ स ह्यपस्मारयुतो भवेत्" ।

६८अश्मरीमूत्रघातादिः "अज्ञात्वा तिलधेनुञ्च लौहधर्म्मतिलाजिनम् । गजोभयमुखीधेनुसालूकस्यापि संचयम् । चौर्य्यं तैलस्य लवणं महादानस्य वा प्रदम् । यः करोत्यन्यथा योनौ मैथुनं कामभोहितः । नरेषु गवि यो रेतःसेकं वा कुरुते क्वचित् । ब्रह्मस्वं स्वपतिद्रव्यं योहरेद्दुष्टभावतः । यस्त्यजेच्छरणं प्राप्तं तथा भार्य्यां विवाहिताम् । दन्तिदन्तुनखिव्याघ्रसिंहगवादिभिर्हतः । स मृतः स्वात्मरहिते स्थाने च स विषीदति । असंख्यकालं तस्यान्ते मानुषत्वमवाप्य सः । अश्मिमूत्रादिभी रोगैर्गृहीतस्तप्यते सदा" ।

६९मूत्रकृच्छ्रः "अन्नये प्रविमेदाख्यं मन्त्रहीनं विमोहितः । स मृतः पर्व्वताङ्गैः पात्यतेऽधः पुनः पुनः । सर्वाङ्गव्याधिदिग्धः स क्रन्दमानो यमाज्ञया । भुक्त्वा कष्टं चिरादुग्रं मानुषत्वमवाप्य सः । मूत्रकृच्छ्रार्द्दितं गात्रं प्राप्य सहाति निर्भरम्" ।

७०विद्रधिः "कलापहरणं येन कृतं चौर्य्येण वै पुरा । स मृतो यमदूतैश्च ताड्यमानो यमाज्ञया । संदशन्त्यां पीडितोऽपि दर्विषहारि केवलम् । शोषयित्वा स्वयं कर्म्म क्रन्दमानः पदेपदे । प्रक्षिप्तो नरके घोरे स वै सीदति पापकृत् । ततोवानरयोनौ च जन्मासाद्य स दुष्टधीः । तस्यैषैव मानुषत्वेऽपि स वै विद्रधिमान् भवेत्" ।

७१अश्मरी वातग्रन्थिश्च "लङ्गमध्ये वहवो यस्य धर्क्टीफलवन्धिनाः । भवन्ति ग्रन्थयस्तस्य नाम स्यादश्मरीगदम् । वहिर्हृत्पुष्कलाकारं वर्द्धते च दिनं प्रति । वातग्रन्थीति सा ज्ञेया जायते देहिदेहतः । इदं गदद्वयं भूप ! जायते येन तच्छृणु । कथयामि तव स्नेहाद्धर्म्मज्ञोऽसि महीपते ! ॥ ह स्वयंकृतकर्मजं पर्व्वतञ्च नदीतटम् । वल्मीकाख्यं गवां गोष्ठं गोपालं देवतालयम् । समासाद्य चरेन् मूत्रं तथा निष्ठीवनादिकम् । स कामं कुरुते यस्तु स प्राप्नोति ततः स्वयम् । याम्यदासस्य दुर्भेद्यं पापिनानां भयप्रदम् । कृमिपूयवसाविष्ठाशोणितेनापि पिच्छिलम् । पापिनस्तत्र गच्छन्ति दूतैर्वद्धाः सुनिष्ठुरैः । शोचन्तः स्वानि कर्म्माणि क्रन्दमानाः पदेपदे । यमाज्ञया च निरये घोरे दूयपरिस्रुते । क्षिप्रास्तिष्ठन्ति तत्रैव यैरेवं दुष्कृतं कृतम् । तस्यान्ते मानुषीं योनिं प्राप्य तद्व्याधिमान् भवेत्" ।

७२शिरोरोगः "संप्राप्य तीर्थं ये मर्त्त्या नाचरन्तीह चोत्तमम् । ब्राह्मणस्य गुरुं वा न नमन्ति कुबुद्धयः । तत्कर्म्मपाशबद्धास्ते स्वर्जोत्या यमकिङ्करैः । पुरीं कृष्णवर्तीं नीत्वा पिशाचकुलसेविताम् । तास्तान्ते विविधैर्यन्त्रैर्घोरैः पापिभयावहैः । अनेककालं तत्रापि स्थित्वा भल्लूकयोनिषु । जायन्ते तत्र तिष्ठन्ति वर्षाणि दशसंख्यया । मेषयोनिं ततोयान्ति विरुद्धं तत्र संस्थिताः । भुक्त्वा कर्म्मवशात् कष्टं मानुष्यं यान्ति ते पुनः । मानुषीं योनिमासाद्य शिरोरोगयुतास्तु ते ।

७३नेत्रहीनता "पुरा सकामतो येन वीक्षिता च पराङ्गना । हृता नेत्राभिघातो वा गोः कृतो ब्राह्मणस्य वा । स एव कर्म्मवशगः कुपितैर्यमकिङ्करैः । काकोले नरके क्षिप्तो महत्तिष्ठति सङ्कटैः । पञ्चत्वमापन्नः काकैस्तस्य नेत्रस्य कृन्तनम् । क्रियतेऽवद्यतं यावत् उत्पन्नोत्पन्न निश्चयः । शोचते स्वानि कर्म्माणि क्रन्दमानोऽतिदुःखितः । उत्पन्ननरकात् पश्चात् उलूकोजायते हि सः । सदा कोटरमार्गैश्च दिवान्धः काकमर्द्दितः । निवत्यब्दाष्टकं यावन्मानुषत्वमवाप्य सः । नेत्रहीनोभवेद्दुःखी भवेत् कर्म्मगौरवः । यस्मिन् वयसि यत् कर्म सुकृतं वापि दुष्कृतम् । तस्मिन् सहायोभवति तद्वयसैव जन्मतः । जीवन्तद्यथा मर्त्त्यो नेत्रहीनस्य देहिनः । विद्यमाने शरीरेऽपि नेत्रहीनो निरर्थकः । मायागारमिदं देहं बोद्धव्यं प्राणवर्जितम् । तद्वन्नेत्रविहीनो हि तथा स्यान्मरणं वरम्" ।

७४रात्र्यन्धता "पुरा परस्त्री खलु कामबुद्ध्या विलोकिता वस्त्रविवर्जितापि । गोविप्रहिंसासु नितान्तहर्षैर्विलोकिता नेत्रविहीनतायै । नक्तान्ध्यमन्दत्वमथान्यरोगः दिवान्धता चार्बुदमप्यजा मे । देशादुपेता कुरु दूरमाशु तां मेऽद्य देवेश ! हरे ! प्रसीद" ।

७५नेत्ररोगः "मन्दहष्टिर्भवेद्द येन मनुष्यस्तमतः शृणु । परयानमवेक्षायां भाद्रं भाद्रं मध्यन्दिने नरः । ईक्षते कामतो योऽपि मन्दहष्टिः स वै भवेत् । यथाशुचिशरीरः सन् वीक्षते दिवसेश्वरम् । नक्तं पञ्चतारस्य हिजं वह्निञ्च गां दिवम् । सोऽन्यजन्म समासाद्य नेत्रव्याधियुतो भवेत् । अनेन पटलच्छन्नतिमिरार्त्तियुतोभवेत् । दम्पतिभ्यां प्रवृत्तं यो नरः पश्यति मैथुनम् । सोऽन्यजन्म समासाद्य नेत्रपूयगदार्त्तिमान् । दम्पत्योः सुरतासक्तचित्तयोः सुर-

तैजसम् । यः करोति स वै नेत्रशूलरोगयुतो भवेत् । मृत्वा कष्टमवाप्नोति पिचटादिकृतोद्भवैः । विहायात्मपतिं या स्त्री पुत्रमाप्नोति जारतः । सान्यजन्मनि भूपाल ! विरूपाक्षी भवेद्ध्रुवम् । कुलटाया प्रपद्येद्यः पुरुषो-ऽन्यस्य योषितम् । क्रोधाविष्टेन मनसा या वा चेडं पतिं द्विजम् । सान्यजन्म समासाद्य विषमाक्षी भवेद्ध्रुवम्" ।

७६ गलगण्डः गण्डमाला च "पुरा येन कृतं मोहाद्गुरुस्त्री-कण्ठदर्शनम् । स मृतः प्रान्तरे देशे निर्जले च यमाज्ञया । पात्यते किङ्करैर्घोरैर्दिव्यवर्षायुतत्रयम् । पुनर्जन्म समासाद्य स्वकर्मवशतश्च सः । गलगण्डयुतो नित्यं गण्डमालाकुलो-ऽपि सन् । पापी सीदति दुःखेष्टः चिरं कर्मयथावधि" ।

७७ नासारोगः "ब्राह्मकर्म्मणि भ्रष्टो मन्मथाविष्टचेतनः । सुगन्धि-कुसुमादीनि यानि द्रव्याणि तानि च । त्वया सतत-माघ्रातं प्राप्तं दत्तं न कस्यचित् । ब्राह्मणेभ्यो न देवेभ्यो दत्तं तेनेदमीदृशम् । नासिकादेशमासाद्य कर्म चाश्रित्य तिष्ठति । किन्तु वेश्याङ्गनासक्ते यौवनं विफलीकृतम् । वेश्याश्च रमिता येन तेनास्तृप्ता द्विजातयः" ।

७८ क्षीरहीनस्तनता "याचमानं पयो या स्त्री न ददाति परा-र्भकं । सा मृता सर्पिणी भूत्वा जीवेद्वर्षचतुष्टयम् । तस्मात् कच्छपिकायोनौ प्रविश्याब्दचतुष्टयम् । प्रत्यक्षं नरकं भुक्त्वा मानुषी तु भवेच्च सा । शृणु भूप ! प्रसूता स्त्री क्षीणक्षी-रस्तनी भवेत् । क्षीरं न स्रवते यस्याः स्तनात् सन्तप्यते हि सा । बालकपालनेऽशक्ता भूत्वा कष्टञ्च विन्दति" ।

७९ स्तनविस्फोटरोगः "स्तनपाकी भवेद्येन कर्म्म तच्चतः शृणु । दृष्ट्वान्यपुरुषं या स्त्री स्तनं दर्शयते स्वकम् । सकामा-कामवशगा वा दुष्टयौवनगर्विता । दूतैर्यमाज्ञया सापि पात्यते च निरन्तरम् । भुक्त्वा स्वकर्म्मजं दुःखं पुनर्भूत्वा च मानुषी । स्तनविस्फोटरोगाढ्या विकृता सुखवर्जिता"

८० वेश्यात्वम् "मृते भर्त्तरि या नारी परस्याभ्यभिलाषिणी । सा मृता किङ्करैर्घोरैर्दण्डपाशादिताडिता । नीत्वा यमा-ज्ञया सा च विसृष्टार्थं ततः शृणु । आयसं पुरुषं तप्तं स्फुरद्बहुकरोज्ज्वलम् । आलिङ्गनमतिक्रूराः कारयन्ति नरं भगम् । वर्षायुतसहस्रान्ते ततो मर्त्ये च शौकरीम् । सारमेयीञ्च मार्जारीं योनिमाविश्य कर्म्मतः । मृत्वा च मानुषी पश्चाद्दारस्त्रीत्वमवाप्य सा । अनेकपुरुषैः सा च रम्यमाणा यथेच्छया । मर्त्ये मोहवशात् सा च सुखं प्राप्य सुदर्पिता । न भवेद्या चान्यनारी यत्नपण्यजीविका । यस्याः सा च भवेद्वेश्या जन्मजन्मान्यथा न हि" ।

८१ बाधिर्य्यम् "पुरा यस्तु महीपाल ! धर्मचिन्तापराङ्मुखः । निन्दकः पितृमातॄणां द्विजतीर्थसुरस्य च । मृते बाधिर्य्य-रोगेण स एव परिपीड्यते" ।

८२ श्लेष्मरोगः "नित्यक्रियाबहिर्यस्तु भूत्वा भुङ्क्ते स दुर्म्मतिः । मृतः भूमिपथं प्राप्य शुष्ककाष्ठोपजीवकः । वायसत्वमनु-प्राप्य स्वप्नकुक्कुटन्नरः । भूत्वा च मानुषत्वे स श्लेष्म-रोगी सदा भवेत्" ।

८३ हस्तशूलम् "द्विजः सन्ध्याविहीनो यः स शूद्रादधमः स्मृतः । स मृतः पात्यते याम्यैर्वैवस्वतपुरोगमैः । काष्ठीं पारावतीं योनिं गत्वा तिष्ठति वत्सरम् । ततो मानुषतां प्राप्य हस्तशूलार्दितो भवेत्" ।

८४ योनिरोगः "रममाणं पतिं या स्त्री तोषयेन्न यथेच्छया । उष्ट्री सा च मृता वै स्यात् जीवेद्वर्षचतुर्दश । तस्माद्वै मानुषीं प्राप्य योनिं व्याध्यादियोगिनीम् गत्वा सन्तप्यमाना सा योनिरोगेण निर्भरम् । किञ्च चौर्य्यप्रकारेण या करत्यन्यभोजनम् । सा तद्रोगेण सततं पीड्यते नात्र संशयः" ।

८५ असृग्दरम् प्रदरम् "अथासृग्दरमत्युग्रं प्रदरं योनिदोषजम् । कर्म्मणा येन राजेन्द्र ! तन्मे निगदतः शृणु । कृत्वा रन्ध-नमादौ या योषिद्भुङ्क्ते बुभुक्षया । बुभुक्षितं पतिं त्यक्त्वा हृदा पशुवधेन च । प्रयाति नरकं घोरं यत् प्रोक्तं मद्यभक्षणे । प्रत्यक्षं नरकं भुक्त्वा ततो भवति वायसी । वायसी दश वर्षाणि शुकी भवति सा पुनः । मानुषी तु भवेत् पश्चादसृग्दररुगार्दिता । श्वेतप्रदरयुक्ता सा भवेद्वा मन्त्रवैरिणी" ।

८६ शूद्रीसुतोत्पादनम् परकान्तासुतोत्पादनञ्च । "महामना महादाता तीर्थकृत् पुण्यकृच्छुचिः । नगरीं भ्रमता तेन काचिदेका मनोहरा । दृष्टा व्यलोकि सौन्दर्यलीलारस-विलासभूः । तां दृष्ट्वा मोहितो राजा सम्यक्संजातकौतुकः । तामादाय बलात् क्षिप्रं ययौ निजगृहं प्रति । विहाय महि-षीरन्या नारीः पितृवंशदाः । अत्यनुरागवान् राजा क्षणं ताञ्च न मुञ्चति । तस्या गर्भे सुतं राजा जनया-मास सुन्दरम् । दैवादपि महीपाल आयुःशेषे यमा-ज्ञया । नीतो यमान्तिकं दूतैर्घोरैश्च भयदारुणैः । धर्म्मराजपुरे तस्य चित्रगुप्तेन घोषिता । एतत् श्रुत्वा यमः क्रुद्धोऽवदद्दूतान् सुनिष्ठुरान् । एवं क्रूरं दुरा-चारं परयोषित्प्रियं सदा । रौरवं नरकं नीत्वा ताडयध्वं निरन्तरम् । तस्याः शूद्रीभूतायास्तूत्पन्नस्य सुतस्य

च। एतस्य पितृलोकानामाहारार्थं प्रदास्यथ। रौरवेऽव्दगतं दुष्टं स्थापयित्वा च योनिगम्। ततः शूकरयोनौ च पातोऽस्य भविता पुनः। यावत्तिष्ठति भूलोके इयक्षीगर्भजः सुतः। तावत्कालं पितृणाञ्च नरकेऽस्य स्थितिर्भवेत्”।

श्राद्धग्रन्थे यथा पाठोऽधिगतस्तथैव लिखितः। पुस्तकान्तरसंवादेन न्यूनतान्न याऽस्ति सा परिहरणीया अत्रोक्तरोगादीनामकाराद्यक्षरविन्यासातिक्रमेणोपन्यासस्तु तत्तत्क्रमानुरोधेन। तेन तत्तत्क्रमानुसारेण निदर्शितरोगादीनामुपशमार्थदानादिकपरिज्ञानं सुकरं भवति। तत्तद्दानादिकं विस्तरभयान्नोक्तम् तत एवावगन्तव्यम्।

शातातपस्मृत्युभारतसंवादयोरेकत्र विषये विरोधप्रसक्ते रोगाल्पत्वमहत्त्वाभ्यां व्यवस्थोन्नेया। एवं दानादिभेदोऽपि। मार्कण्डेयपुराणाद्युक्तकर्मविपाकभेदो विस्तरभयान्नोद्धृतः, तत्तद्ग्रन्थेभ्योऽवधेयः।

**कर्म्मव्यतिहार** पु० वि–अति हृ–घञ् कर्मणा व्यतिहारः ३त०। परस्परैकजातीयक्रियाकरणे, क्रियाविनिमये। यथा यः कश्चित् येन कर्मणा इतरं कर्म्मत्वादिना संबध्नाति, इतरोऽपि तज्जातीयेनैव कर्मणा तं कर्मत्वादिना संबध्नाति, तयोः कर्मविनिमयो भवति। यथा अन्योन्यं ताडयत इत्यादौ। अत्र अन्योन्ययोरेकजातीयताडनक्रियायां कर्मत्वेन सम्बन्धात्तथात्वम्। ‘कर्त्तरि कर्मव्यतिहारे’ ‘कर्मव्यतिहारे णच् स्त्रियाम्’ “न कर्मव्यतिहारे”पा०। क्रियाव्यतिहारोऽप्यत्र

**कर्म्मशाला** स्त्री कर्मणः शिल्पादेः शाला। शिल्पादेः शालायाम्। “गत्वा तु तां भार्गवकर्मशालाम्”। “जगाम भार्गवकर्म्मशालाम्” भा०आ०१८,१०।

**कर्म्मशील** त्रि० कर्म शीलयति शील–अण्। कर्मकरणार्थशीलयुक्ते अमरः। [ऽनाफलोद्देशं २कर्म्मकारिणि च।

**कर्म्मशूर** पु० कर्म्मणि शूरः। प्रयत्नेन १प्रारब्धकर्म्मसमापके,

**कर्म्मश्रेष्ठ** पु०। १पुलहसुतभेदे “पुलहस्य गतिर्भार्य्या त्रीनसूत सती सुतान्। कर्म्मश्रेष्ठं वरीयांसं सहिष्णुञ्च महामते!” भाग० ४,१,२१। कर्म्मणा श्रेष्ठः। २कर्मकार्य्यकरणेन वरिष्ठे त्रि०।

**कर्म्मसंन्यास** पु० कर्मणः स्वरूपतः फलतो वा संन्यासस्त्यागः। फलाभिसन्धिराहित्येन १तत्फलत्यागे २स्वरूपतः कर्मत्यागे च। वा परस्मैवर्णे कर्म्मसंन्न्यासोऽप्यत्र। आश्रमशब्दे ८८० पृ० संन्यासविवरणम्।

**कर्म्मसंन्यासिक** पु० कर्मणां संन्यासोऽस्त्यस्य ठन्। प्रव्रज्यान्विते भिक्षुके हलायुधः। वा परस्मैवर्णे कर्म्मसन्न्यासिकोऽप्यत्र।

**कर्म्मसंन्यासिन्** पु० कर्मसंन्यासोऽस्त्यस्य इनि। विधानेन १कर्म्मत्यागिनि भिक्षुके २कर्मफलत्यागिनि च। “द्विविधः कर्मसन्न्यासः फलसाधनभेदतः। फलाय स्वानिनस्त्यागो जिज्ञासोर्ज्ञाननिष्ठये” इत्युक्तदिशा ज्ञानार्थं कर्मफलत्यागः, मोक्षार्थं स्वरूपतः कर्मत्यागश्च कर्मसंन्यासः। “आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते”इति गीतोक्तेः “अविशुद्धधियः कर्मण्यधिकारो विशुद्धधीः। सत्यां विविदिषोत्पत्तौ तदर्थं कर्म संत्यजेत्” इत्युक्तेश्च विविदिषायामेव कर्मणोहेतुत्वावगमात् तदुत्पत्तौ तत्त्याज्यत्वावगमाच्च तथात्वम्। वा परस्मैवर्णे कर्मसंन्न्यासीत्यप्यत्र।

**कर्म्मसङ्ग** पु० कर्मणि सङ्ग आसक्तिः सन्ज–घञ् ७त०। इदमहं करोमि अनेनैतत्फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे।

**कर्म्मसचिव** पु० कर्मसु सचिवः ७त०। राज्ञां मन्त्रव्यतिरिक्तकर्मसु सहाये अमरः।

**कर्म्मसाक्षिन्** पु० साक्षात् पश्यति नि० साक्षी ६त०। “सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्मणो नव साक्षिणः” इत्युक्तेषु सूर्य्यादिषु नवसु। ६त०। क्रियासाक्षात्कर्त्तृमात्रे त्रि०। “योऽयस्तत्कर्मसाक्षी समभुजवलयुतोऽयच यस्य प्रतीपः” वेणी०

**कर्म्मसिद्धि** स्त्री ६त०। इष्टानिष्टफलप्राप्तौ “स्वकर्मसिद्धिं पुनराशशंसे” इति कुमा०।

**कर्म्मस्थान** न० कर्मणः व्यापारविज्ञानस्य स्थानम्। ज्योतिषोक्ते लग्नावधिदशमस्थाने। आजीवशब्दे विवृतिः। “लग्नेन्दुभ्यां वीर्य्यभाजः खमं स्यात् कर्मस्थानं खेचरेष्टं युतं सत्। सत्खेटैर्वा युक्तदृष्टं शुभत्वं पापैर्दृष्टं वा युतं दुष्टतत्त्वं। कर्मास्थोऽशुः स्वोच्चे चेत् कुजशुक्रविभिर्युतः। दृष्टो वा इतिहानिभ्यां युतोवित्तकरोमतः। कर्मभे शुभखगाभिवीक्षिताः क्रूराख्यदा न रिपुनीचगृहे चेत्। धर्मधान्य सुखवृद्धिकराश्च स्वायुषः स्थिरधनस्य च दद्युः। नीचारिसंस्था अपि पापदृष्टाः पापाश्च कर्मण्यशुभप्रदाःस्युः। क्रूरा अपि स्वभवने शुभाः स्युर्विशेषतः सद्ग्रहवीक्षिताश्चेत्। शुभदृष्टाः शुभादेवाः कर्मभे सद्ग्रहेऽद्भुताः। अशुभाः प्रायशः प्रोक्ताः कलकेटनिरोधनात्। चिकित्सकाः शास्त्रविवादकाश्च पुरोहिता यज्ञनतत्परा वा। नरा भवेयुः शुभगाः खगैस्तु

जपेन सुरार्चनम् । दानमेव कलौ मुख्यं, काशी दानेन प्राप्यते । कलिकालेन बाधेत कालकाय जिघांसति । एनांसि तीव्र बाधन्ते ते न काश्यां समाश्रिताः । कलि-कलुषं कर्म त्रिकण्टकमितीरितम् । एतत्त्रयं न प्रभवेद्वाराणस्यां निवासिनाम्”

अथ गङ्गामाहात्म्यमाह तु काशीखण्डभविष्य-पुराणे “कृते सर्व्वत्र तीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् । ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे तद्द्वयं यज्ञाः कलौ गङ्गैव केवलम्” । विष्णुधर्म्मोत्तरे “पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं, कलौ गङ्गां समाश्रयेत्” । स्कन्दपुराणे “भुक्ति-मुक्तिफलमेप्सुरल्पायासेन चेन्नरः । तीर्थान्येवाश्रयेद्विद्वान् कलौ गङ्गां विशेषतः” । नारदीये कलौ तत्परमब्रह्मप्राप्तये सत्वरं नृणाम् । गङ्गाभजनमेवाहुर्मोक्षोपायं महर्षयः । तत्रैव “कृते युगे पुष्कराणि त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत्” कामिकसंहितायाम् “न भवेद्द्रव्यमन्त्राणां संशुद्धिः शुद्धिवर्जितैः । मन्त्रैर्विना न सिध्यन्ति यज्ञाः, शुद्धिः सुदुर्लभा । काले कलौ विशेषेण शुद्धं वस्तु न लभ्यते । कलौ युगे हि तमसा नष्टधर्म्मे भयङ्करे । अनेकच्छिद्रसन्तानो धर्म्मतन्तुर्हि जाह्नवी । विना गङ्गां धर्म्ममयीं कथं स्याच्च गतिः कलौ । निरक्तः कर्त्तनं तस्य पापत्यागोऽपि वा नरः । समर्थस्तु कलौ काले गङ्गां यो नाभिगच्छति” भविष्यपुराणे “कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् । विधिहीनक्रियाणाञ्च गतिर्गङ्गां विना नहि । अनाश्रित्य तु गङ्गां हि मुक्तिमिच्छति यः कलौ । स्वर्णं दृष्ट्वा मिच्छेद्युक्तो जात्यन्धनरस्तु सः । वृथा कुलं, वृथा विद्या, वृथा यज्ञा, वृथा तपः । वृथा दानानि तस्येह कलौ गङ्गां न याति यः” कूर्म्मपु० “गङ्गामेव निषेवेत प्रयागे तु विशेषतः । नान्यत् कलियुगोद्भूतं मलं हन्ति सुदुस्तरम्” ।

अथ कलियुगे दानस्य श्रेष्ठत्वम् अतएव मनुः “अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे नॄणां युगह्रासानुरूपतः” इति युगभेदेन धर्म्मभेदमाह च । मनुपाराशरौ “तपः परं कृतयुगे त्रेतायां ज्ञान-मुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे” । महाभारते “तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः” बृहस्पतिः “तपोधर्म्मः कृतयुगे, ज्ञानं त्रेतायुगे स्मृतम् । द्वापरे चाध्वरः प्रोक्तः, कलौ दानं दया दमः” । लिङ्गपुराणे “ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते । प्रवृत्तं द्वापरे यज्ञ, दानमेकं कलौ युगे” । अग्निपुराणे “देवताप्रति-मूर्त्यादिनगराणि कलौ युगे । कर्त्तव्यानि महीपालैः स्वर्गलोकममीप्सुभिः”

इत्येवं कलौ विशेषधर्म्माः सेव्या इति दर्शितम् ।

सामान्यतः कलौ सेव्यधर्म्मानाह च पराशरः । “अस्मिन्मन्वन्तरे धर्म्माः कृतत्रेतादिके युगे । सर्व्वे धर्म्माः कृते जाताः सर्व्वे नष्टाः कलौ युगे । चातु-र्व्वर्ण्यसमाचारं किञ्चित् साधारणं वद । व्यासवा-क्यावसाने तु मुनिमुख्यः पराशरः । धर्म्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् । शृणु पुत्र ! प्रवक्ष्ये-ऽहं शृण्वन्तु मुनयस्तथा । कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः । श्रुतिः स्मृतिः सदाचारो निर्णेत-व्यश्च सर्व्वदा । न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतु-र्मुखः । तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे । अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलि-युगे नॄणां युगरूपानुसारतः । तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमित्यूचुर्दानमेकं कलौ युगे । कृते तु मानवो धर्म्मस्त्रेतायां गौतमः स्मृतः । द्वापरे शङ्खलिखितः कलौ पाराशरः स्मृतः । त्यजेद्देशं कृतयुगे, त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे । कृते सम्भाषणात् पापं, त्रेतायाञ्चैव दर्शनात् । द्वापरे चान्नमादाय, कलौ पतति कर्म्मणा । कृते तु तत्क्षणाच्छापस्त्रेतायां दश-भिर्द्दिनैः । द्वापरे मासमात्रेण, कलौ संवत्सरेण तु । अभि-गम्य कृते दानं, त्रेतास्वाहूय दीयते । द्वापरे याचमानाय, सेवया दीयते कलौ । अभिगम्योत्तमं दानमाहूतञ्चैव मध्य-मम् । अधमं याच्यमानं स्यात्, सेवादानन्तु निष्फलम् । कृते चास्थिगताः प्राणास्त्रेतायां मांससंस्थिताः । द्वापरे रुधिरं यावत्, कलावन्नादिषु स्थिताः । धर्म्मो जितोऽह्यधर्म्मेण, जितः सत्योऽनृतेन च । जिताश्चौरैस्तु राजानः, स्त्रीभिश्च पुरुषा जिताः । सीदन्ति चाग्निहोत्राणि, गुरुपूजा प्रण-श्यति । कुमार्य्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा । युगे युगे च ये धर्म्मास्तत्र तत्र च ये द्विजाः । तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः । युगे युगे च सामर्थ्यं शेषं मुनिभिर्भाषितम् । पराशरेण

चाबक्तं प्रायश्चित्तं प्रदीयते । अहमद्यैव तत्प्रेमतुष्टये ब्रवीमि वः । चातुर्वर्ण्यसमाचारं स्वधाख्यं मुनिपुङ्गवाः । परात्परतरं गुह्यं पवित्रं पापनाशनम्” इत्यारभ्य कलियुगे कर्त्तव्याकर्त्तव्यास्तलोकाचारो च तत्र एतावन्तः । कलिस्वभावस्तु नैगमोक्तबोधनात् कलौ कार्य्येति महानिर्वाणतन्त्रे निरूपितं यथा

“आयाते पापिनि कलौ सर्व्वधर्म्मविलोपिनि । दुराचारे दुष्प्रपञ्चे दुष्टकर्म्मप्रवर्त्तके । न वेदाः प्रभवस्तत्र स्मृतीनां स्मरणं कुतः । नानेतिहासयुक्तानां नानामार्गप्रदर्शिनाम् । बहूनाञ्च पुराणानां विनाशो भविता विभो ! । तदा लोका भविष्यन्ति धर्म्मकर्म्मबहिर्मुखाः । उच्छृङ्खला मदोन्मत्ताः पापकर्म्मरताः सदा । कामुका लोलुपाः क्रूरा निष्ठुरा दुर्मुखाः शठाः । स्वल्पायुर्मन्दमतयो रोगशोकसमाकुलाः । निःश्रीका निर्ब्बला नीचा नीचाचारपरायणाः । नीचसंसर्गनिरताः परवित्तापहारकाः । परनिन्दापरद्रोहपरीवादपराः खलाः । परस्त्रीहरणे पापशङ्काभयविवर्जिताः । निर्धना मलिना दीना दरिद्राश्चिररोगिणः । विप्राः शूद्रसमाचाराः सन्ध्यावन्दनवर्जिताः । अयाज्ययाजका लुब्धा दुर्वृत्ताः पापकारिणः । असत्यभाषिणो मूर्खा दाम्भिका दुष्प्रवञ्चकाः । कन्याविक्रयिणो व्रात्यास्तपोव्रतपराङ्मुखाः । लोकप्रतारणार्थाय जपपूजापरायणाः । पाषण्डाः पण्डितम्मन्याः श्रद्धाभक्तिविवर्जिताः । कदाहाराः कदाचारा भृतकाः शूद्रसेवकाः । शूद्रान्नभोजिनः क्रूरा वृषलीरतिकामुकाः । दास्यन्ति धनलोभेन स्वदारान्नीचजातिषु । ब्राह्मण्यचिह्नमेतावत् केवलं सूत्रधारणम् । नैव पानादिनियमो भक्ष्याभक्ष्यविवेचनम् । धर्म्मशास्त्रे सदा निन्दा साधुद्रोहो निरन्तरम् । सत्कथालापमात्रञ्च न तेषां मनसि क्वचित् । त्वया कृतानि तन्त्राणि जीवोद्धारणहेतवे । निगमागमजातानि भुक्तिमुक्तिकराणि च । देवीनां यत्र देवानां मन्त्रयन्त्रादिसाधनम् । कथिता बहवो न्यासाः सृष्टिस्थित्यादिलक्षणाः । बद्धपद्मासनादीनि गदितान्यपि भूरिशः । पशुवीरदिव्यभावा देवतामन्त्रसिद्धिदाः । शवासनं चितारोहो मुण्डसाधनमेव च । लतासाधनकर्म्माणि त्वयोक्तानि सहस्रशः । पशुभावदिव्यभावौ स्वयमेव निवारितौ । कलौ न पशुभावोऽस्ति दिव्यभावः कुतो भवेत् । पत्रं पुष्पं फलं तोयं स्वयमेव हरेत् पशुः । न शूद्रदर्शनं कुर्य्यान्मनसा न स्त्रियं स्मरेत् । दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा । द्वन्द्वातीतो वीतरागः सर्व्वभूतसमः क्षमी । कलिकल्मषयुक्तानां सर्व्वदाऽस्थिरचेतसाम् । निद्रालस्यप्रसक्तानां भावशुद्धिः कथं भवेत् ? । वीरसाधनकर्म्माणि पञ्चतत्त्वानि यानि तु । मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । एतानि पञ्च तत्त्वानि त्वया प्रोक्तानि शङ्कर ! । कलिजा मानवा लुब्धाः शिश्नोदरपरायणाः । लोभात् तत्र पतिष्यन्ति न करिष्यन्ति साधनम् । इन्द्रियाणां सुखार्थाय पीत्वा च बहुलं मधु । भविष्यन्ति मदोन्मत्ता हिताहितविवर्जिताः । परस्त्रीधर्षकाः केचिद्दस्यवो बहवो भुवि । न करिष्यन्ति ते मत्ताः पापयोनिविचारणम् । अतिपानादिदोषेण रोगिणो बहवः क्षितौ । शक्तिहीना बुद्धिहीना भूत्वा च विकलेन्द्रियाः । ह्रदे गर्त्ते प्रान्तरे च प्रासादात् पर्व्वतादपि । पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः । केचिद्विवादयिष्यन्ति गुरुभिः स्वजनैरपि । केचिन्मौना मृतप्राया अपरे बहुजल्पकाः । अकार्य्यकारिणः क्रूरा धर्म्ममार्गविलोपकाः । हिताय यानि कर्म्माणि कथितानि त्वया प्रभो ! । मन्ये तानि महादेव ! विपरीतानि मानवे । के वा योगं करिष्यन्ति न्यासजातानि केऽपि वा । स्तोत्रपाठं यन्त्रलिपिं पुरश्चर्य्यां जगत्पते ! । युगधर्म्मप्रभावेन स्वभावेन कलौ नराः । भविष्यन्त्यतिदुर्वृत्ताः सर्व्वथा पापकारिणः । तेषामुपायं दीनेश ! कृपया कथय प्रभो ! । आयुरारोग्यवर्च्चस्यं बलवीर्य्यविवर्द्धनम् । विद्याबुद्धिप्रदं नॄणामप्रयत्नशुभङ्करम् । येन लोका भविष्यन्ति महाबलपराक्रमाः । शुद्धचित्ताः परहिताः मातापित्रोः प्रियङ्कराः । स्वदारनिरताः पुरुषाः परस्त्रीषु पराङ्मुखाः । देवतागुरुभक्ताश्च पुत्रस्वजनपोषकाः । ब्रह्मज्ञा ब्रह्मविद्याश्च ब्रह्मचिन्तनमानसाः । सिद्ध्यर्थं लोकयात्रायाः कथयस्व हिताय यत् । कर्त्तव्यं यदकर्त्तव्यं वर्णाश्रमविभेदतः । विना त्वां सर्व्वलोकानां कस्त्राता भुवनत्रये” ॥ इति देवीप्रश्नः

“इति देव्या वचः श्रुत्वा शङ्करो लोकशङ्करः । कथयामास तत्त्वेन महाकारुण्यवारिधिः । सदाशिव उवाच । साधु पृष्टं महाभागे ! जगतां हितकारिणि ! । एतादृशः शुभः प्रश्नो न केनापि कृतः पुरा । धन्यासि सुकृतज्ञासि हितासि कलिजन्मनाम् । यद् यदुक्तं त्वया भद्रे ! सत्यं सत्यं यथार्थतः । सर्व्वज्ञा त्वं त्रिकालज्ञा धर्म्मज्ञा परमेश्वरि ! । भूतभव्यविभज्ञं धर्म्मज्ञं त्वया प्रिये ! । यथातथ्यं

यथान्यायं यथायोग्यं न संशयः । कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि ! । मेध्यामेध्याविचाराणां न शुद्धिः श्रौतकर्म्मणाम् । न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् । सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते । विनाह्यागममार्गेण कलौ नास्ति गतिः प्रिये ! । श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे ! । आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः । कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः । सर्व्वैर्वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः । प्रतिपाद्योऽस्मि नान्योऽस्मि प्रभुर्जगति मां विना । आमनन्ति च ते सर्व्वे मत्पदं लोकपावनम् । मन्मार्गविमुखा लोकाः पाषण्डा ब्रह्मघातिनः । अतो मन्मतमुत्सृज्य यो यत् कर्म्म समाचरेत् । निष्फलं तद्भवेद्देवि ! कर्त्तापि नारकी भवेत् । मूढो मन्मतमुत्सृज्य योऽन्यमतमुपाश्रयेत् । ब्रह्महा पितृहा स्त्रीघ्नः स भवेन्नात्र संशयः । कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः । शस्ताः कर्म्मसु सर्व्वेषु जपयज्ञक्रियादिषु । निर्व्वीर्य्याः श्रौतजातीया विषहीनोरगा इव । सत्यादौ सफला आसन् कलौ ते मृतका इव । पाञ्चालिका यथा भित्तौ सर्व्वेन्द्रियसमन्विताः । अमूरशक्ताः कार्य्येषु तथाऽन्ये मन्त्रराशयः । अन्यमन्त्रैः कृतं कर्म्म बन्ध्यास्त्रीसङ्गमो यथा । न तत्र फलसिद्धिः स्यात् श्रम एव हि केवलम् । कलावन्योदितैर्मार्गैः सिद्धिमिच्छति यो नरः । तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः । मदुक्तादुदितं धर्म्मं हित्वान्यधर्म्ममीहते । अमृतं स्वगृहे त्यक्त्वा क्षीरमार्कं स वाञ्छति । नान्यः पन्था मुक्तिहेतुरिहामुत्र सुखाप्तये । यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च । तन्त्राणि बहुभेदानि नानाख्यानान्वितानि च । सिद्धानां साधकानाञ्च विधानानि च भूरिशः । अधिकारिविभेदेन पशुवाञ्छयतः प्रिये ! कुलाचारोदितं धर्म्मं शुश्रूषुं कथितं क्वचित् । जीवप्रवृत्तिकारीणि कानिचित् कथितान्यपि । देवा नानाविधाः प्रोक्ता देव्योऽपि बहुधा प्रिये ! । भैरवाश्चैव वेताला बटुका नायिका गणाः । शाक्ताः शैवा वैष्णवाश्च सौरा गाणपतादयः । नानामन्त्राश्च यन्त्राणि सिद्ध्युपायाह्यनेकशः । भूरिप्रयाससाध्यानि यथोक्तफलदानि च । यथा यथा कृताः प्रश्ना येन येन यदा यदा । तदा तल्लोकोपकाराय तथैवोक्तं मया प्रिये ! । सर्व्वलोकोपकाराय सर्व्वप्राणिहिताय च । युगधर्म्मानुसारेण याथातथ्येन पार्व्वति ! । त्वया यादृक्कृतः प्रश्नो न केनापि पुरा कृतः । तव स्नेहेन वक्ष्यामि सारात् सारं परात् परम् । वेदानामागमानाञ्च तन्त्राणाञ्च विशेषतः । सारमुद्धृत्य देवेशि ! तवाग्रे कथ्यते मया । यथा नरेषु तन्त्रज्ञाः सरितां जाह्नवी यथा । यथाहं त्रिदिवेशानामागमानामिदं तथा । किं वेदैः किं पुराणैश्च किं शास्त्रैर्बहुभिः शिवे ! । विज्ञातेऽस्मिन् महातन्त्रे सर्व्वसिद्धीश्वरो भवेत् । यतो जगद्धितायाहं त्वयाहं विनियोजितः । अतस्ते कथयिष्यामि यद्विश्वहितकृद्भवेत्" २ उल्ला० ।

"कलौ पापयुगे घोरे तपोहीनेऽतिदुस्तरे । निस्तारबीजमेतावद्‌ब्रह्ममन्त्रस्य साधनम् । साधनानि बहुक्तानि नानातन्त्रागमादिषु । कलौ दुर्व्वलजीवानामसाध्यानि महेश्वरि ! । अल्पायुषः स्वल्पसत्त्वा अन्नाधीनासवः प्रिये ! लुब्धा धनार्ज्जने व्यग्राः सदा चञ्चलमानसाः । समाधावक्षमधियो योगक्लेशासहिष्णवः । तेषां हिताय मोक्षाय ब्रह्ममार्गोऽयमीरितः । कलौ नास्त्येव नास्त्येव सत्यं सत्यं मयोच्यते । ब्रह्मदीक्षां विना देवि ! कैवल्याय सुखाय च । यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा । न स्थास्यति वरारोहे ! तदैव प्रबलः कलिः । यदा तु पुण्यपापानां परीक्षा वेदसम्भवा । न स्थास्यति शिवे ! शान्ते ! तदैव प्रबलः कलिः । क्वचिच्छिन्ना क्वचिद्भिन्ना यदा सुरतरङ्गिणी । भविष्यति कुलेशानि ! तदैव प्रबलः कलिः । यदा तु म्लेच्छजातीया राजानो धनलोलुपाः । भविष्यन्ति महाप्राज्ञे ! तदैव प्रबलः कलिः । यदा स्त्रियोऽतिदुर्द्दान्ताः कर्कशाः कलहे रताः । गर्हिष्यन्ति स्वभर्त्तॄन् तदैव प्रबलः कलिः । यदा तु मानवा भूमौ स्त्रीजिताः कामकिङ्कराः । द्रुह्यन्ति गुरुमित्रादीन् तदैव प्रबलः कलिः । यदा क्षौणी स्वल्पफला तोयदाः स्तोकवर्षिणः । असम्यक्फलिनो वृक्षास्तदैव प्रबलः कलिः । भ्रातरः स्वजनामात्या यदा धनकणेच्छया । मिथः सम्प्रहरिष्यन्ति तदैव प्रबलः कलिः । प्रकटे मद्यमांसादौ निन्दादण्डविवर्ज्जिते । गुह्यपानं चरिष्यन्ति तदैव प्रबलः कलिः" ३ उल्ला०, इत्युपक्रम्य ब्रह्मसाधनप्रकारस्तत्र दर्शितः स च तत्र द्रष्टव्यः । उपासनायां विशेषः । कुब्जिकातन्त्रे ३ पटले । "श्रुतिस्मृतिविधानेन पूजा कार्य्या युगत्रये । आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः । न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः" । पुरश्चरणोल्लासतन्त्रे ३ पटलेऽपि । "तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ । वेदोक्तञ्चैव स्मृत्युक्तं पुराणोक्तं वरानने ! ।

न शक्तं वक्तुमायाति ! कदाचिद्भारते कलाविति"। "श्रौतोधर्म्मः कृतयुगे त्रेतायां स्मार्त्त एव तु। द्वापरे च पुराणोक्तः कलावागमसम्मतः" पठन्ति। अत्रेदमभिदध्महे। वेदेषु काण्डत्रयमस्ति कर्म्मोपासना ब्रह्मरूपप्रतिपाद्यभेदात्। तत्र कर्म्मकाण्डमधिकृत्य जैमिनिप्रभृतिभिः सम्यक्तया कर्त्तव्यतादि विवेचितम् उपासनाकाण्डमधिकृत्य शाण्डिल्यनारदादिभिः, ब्रह्मकाण्डमधिकृत्य च व्यासादिभिः प्रपञ्चो दर्शितः। तत्र उपासनाकाण्डमधिकृत्यागमशास्त्रप्रवृत्तिः तन्मूलञ्च रामतापनीयनृसिंहतापनीयप्रभृति। इत्यागमशास्त्रस्य प्रामाण्यम्। अनुपलभ्यमानमूलकागमस्यापि स्मृतिवत् श्रुतिकल्पकत्वेन प्रामाण्यम्। तत्र कर्म्मकाण्डे सर्व्वेऽप्यधिकारिणः इत्युक्तोरपि तत्त्वज्ञानपर्य्यन्तं चित्तशुद्ध्यर्थं प्रत्यवायपरिहारार्थं च कर्म्मकर्त्तव्यविधानात् "तमेतमात्मानं विविदिषन्ति वेदानुवचनेन यज्ञेन तपसा नाशकेनेति" श्रुत्या तथोक्तेः। उपासनाकाण्डेऽपि तथैव सर्व्वेषामधिकारः "तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते" इति स्मृतेः। तत्र सति कामे कर्म्मकाण्डविहितकर्म्माचरणे स्वर्गः फलम्। कामनाऽभावे मोक्ष एव फलम्। एवमुपासनायामपि। तत्रापि सत्यां कामनायां स्वर्गादिनानाफलम् असत्यान्तु तस्यां ममुक्तिः फलम्। ब्रह्मकाण्डे तु मुमुक्षोरेवाधिकारः। इत्थेवं विषयविभागे स्थिते श्रौतपौराणिकस्मार्त्ततान्त्रिकोपासनासु मध्ये कलौ आगमोक्तोपासनादृत्त्येति प्रदर्शितागमशास्त्रेभ्यो निर्णीयते। अन्यत्र च "हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" "कलौ जागर्त्ति गोपालः कलौ जागर्त्ति कालिका" पठन्ति।

अथ कलियुगे राजविशेषोत्पत्तिः कलेरन्ते कल्किरूपभगवदवतारप्रादुर्भावश्च भाग० १२।१,२ अ० उक्तो यथा- "योऽन्त्यः पुरञ्जयोनाम भविष्यो वारहद्रथः। तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम्। प्रद्योतसंज्ञं राजानं कर्त्ता यत् पालकः सुतः। विशाखयूपस्तत्पुत्रो भविता राजकस्ततः। नन्दिवर्द्धनस्तत्पुत्रः पञ्च प्रद्योतनाइमे। अष्टत्रिंशोत्तरशतं १३८ भोक्ष्यन्ति पृथिवीं नृपाः! शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः। क्षेमधर्म्मा तस्य पुत्रः क्षेत्रज्ञः क्षेमधर्म्मजः। विधिसारः सुतस्तस्य अजातशत्रुर्भविष्यति। दर्भकस्तत्सुतो भाव्यो दर्भकस्याजयः स्मृतः। नन्दिवर्द्धन आजेयो महानन्दिस्तु तत्सुतः। शैशुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ३६०। समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ! कलौ नृपाः। महानन्दिसुतो राजन्! शूद्रागर्भोद्भवो बली। महापद्मपतिः कश्चित् नन्दः क्षत्रविनाशकृत्। ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्म्मिकाः। स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः। शासिष्यति महापद्मो द्वितीय इव भार्गवः। तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः। य इमां भोक्ष्यन्ति महीं राजानश्च शतं समाः १००। नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ। स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति। तत्सुतो वारिसारस्तु ततश्चाशोकवर्द्धनः। सुयशा भविता तस्य सङ्गतः सुयशः सुतः। शालिशूकस्ततस्तस्य सोमशर्म्मा भविष्यति। शतधन्वा सुतस्तस्य भविता तद्बृहद्रथः। मौर्य्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् १३७। समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह!। अग्निमित्रस्ततस्तस्मात् सुज्येष्ठो भविता ततः। वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः। ततो घोषसुतस्तस्माद्वज्रमित्रो भविष्यति। ततो भागवतस्तस्माद्देवभूतिः कुरूद्वह!। शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ११२। ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप!। शुङ्गं हत्वा देवभूतिं काण्वोऽमात्यस्तु कामिनम्। स्वयं करिष्यते राज्यं वासुदेवो महामतिः। तस्य पुत्रस्तु भूमित्रस्ततो नारायणः सुतः। काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च। शतानि त्रीणि ३४५ भोक्ष्यन्ति वर्षाणाञ्च कलौ युगे। हत्वा काण्वं सुशर्म्माणं तद्भृत्यो वृषलो बली। गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित् कालमसत्तमः। कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः। श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः। लम्बोदरस्तु तत्पुत्रस्तस्माच्चिविलकोऽन्नृपः। मेघस्वातिः चिविलकात् अटमानस्तु तत्सुतः। अनिष्टकर्म्मा हालेयस्तलकस्तस्य चात्मजः। पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः। चकोरो वटको यत्र शिवस्वातिररिन्दमः। तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः। मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः। विजयस्तत्सुतो भाव्यश्चन्द्रबीजः सलोमधिः। एते त्रिंशन्नृपतयश्चत्वार्य्यब्दशतानि च। षट्पञ्चाशच्च ४५६ पृथिवीं भोक्ष्यन्ति कुरुनन्दन!। सप्ताभीरा आवभृत्या दश गर्द्दभिनो नृपाः। कङ्काः षोडश भूपाला भविष्यन्त्य-

तिलोलुपाः। ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः। भूयो दश गुरुण्डाश्च मौना एकादशैव तु। एते भोक्ष्यन्ति पृथिवीं दश वर्षशतानि च। नवाधिकाञ्च नवतिं १०९९ मौना एकादश क्षितिम्। भोक्ष्यन्त्यब्दशतान्यङ्ग! त्रीणि ३०० तैः संस्थिते ततः। किलकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरः। शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः। भोक्ष्यन्त्येते वर्षशतं भविष्यन्त्यधिकानि षट् १०६। तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः। पुष्पमित्रोऽथ राजन्यो दुर्म्मित्रोऽस्य तथैव च। एककाला इमे भूपाः सप्तान्ध्राः सप्त कौशलाः। वैदूरपतयो भाव्या नैषधास्तत एव हि। मागधानान्तु भविता विश्वस्फूर्जिः पुरञ्जयात्। करिष्यत्यपरान् वर्णान् पुलिन्दयदुमद्रकान्। प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्म्मतिः। वीर्य्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि। अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम्। सौराष्ट्रावन्त्याभीराश्च शूरा अर्व्वुदमालवाः। व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः। सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम्। भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्च्चसः। तुल्यकाला इमे राजन्! म्लेच्छप्रायाश्च भूभृतः। एतेऽधर्म्मानृतपराः फल्गुदास्तीव्रमन्यवः। स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः। उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः। असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः। प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः। तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः। अन्योऽन्यतो राजभिश्च क्षयं यास्यन्ति पीड़िताः" इत्या० ।

"ततश्चानुदिनं धर्म्मः सत्यं शौचं क्षमा दया। कालेन बलिना राजन्! नङ्क्ष्यत्यायुर्ब्बलं स्मृतिः। वित्तमेव कलौ नॄणां जन्माचारगुणोदयः। धर्म्मन्यायव्यवस्थायां कारणं बलमेव हि। दाम्पत्येऽभिरुचिर्हेतुर्म्मायैव व्यावहारिके। स्त्रीत्वे पुंस्त्वे च हि रतिर्व्विप्रत्वे सूत्रमेव हि। लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम्। अवृत्त्या न्यायदौर्ब्बल्यं, पाण्डित्ये चापलं वचः। अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव च। स्वीकार एव चोद्वाहे, स्नानमेव प्रसाधनम्। दूरे वार्य्ययनं तीर्थं लावण्ये केशधारणम्। उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि। दाक्ष्यं कुटुम्बभरणं, यशोऽर्थे धर्म्मसेवनम्। एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले। ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः। प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्म्मभिः। आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्। शाकमूलामिषक्षौद्रफलपुष्पाष्टि (ष्ठि) भोजनाः। अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीड़िताः। शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः। क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया। त्रिंशद्विंशति वर्षाणि परमायुः कलौ नृणाम्। क्षीयमाणेषु देहेषु देहिनां कलिदोषतः। वर्णाश्रमवतां धर्म्मे नष्टे वेदपथे नृणाम्। पाषण्डप्रचुरेऽधर्म्मे दस्युप्रायेषु राजसु। चौर्य्यानृतवृथाहिंसानानावृत्तिषु वै नृषु। शूद्रप्रायेषु वर्णेषु च्छागप्रायासु धेनुषु। गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु। अणुप्रायेष्वोषधीषु शमीप्रायेषु स्थास्नुषु। विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु। इत्थं कलौ गतप्राये जनेषु खरधर्म्मिषु। धर्म्मत्राणाय सत्त्वेन भगवानवतरिष्यति। चराचरगुरोर्व्विष्णोरीश्वरस्याखिलात्मनः। धर्म्मत्राणाय साधूनां जन्म कर्म्मापनुत्तये। शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः। भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति। अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः। असिनाऽसाधुदमनमष्टैश्वर्य्यगुणान्वितः। विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः। नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति। अथ तेषां भविष्यन्ति मनांसि विशदानि वै। वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम्। पौरजानपदानां वै हतेष्वखिलदस्युषु। तेषां प्रजा विसर्गश्च स्थविष्ठः सम्भविष्यति। वासुदेवे भगवति सत्त्वमूर्त्तौ हृदि स्थिते। यदाऽवतीर्णो भगवान् कल्किर्धर्म्मपतिर्हरिः। कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी। यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यो बृहस्पती। एकराशौ समेष्यन्ति भविष्यति तदा कृतम्। येऽतीता वर्त्तमाना ये भविष्यन्ति च पार्थिवाः। ते त उद्देशतः प्रोक्ता वंशजाः सोमसूर्य्ययोः। आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्। एतद्वर्षसहस्रन्तु शतं पञ्चदशोत्तरम्" "यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्। तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः"। अनुपदमधिकृतम्। अधिकं कलिस्वभावादिकं कल्किशब्दे वक्ष्यते।

कलियुगे च शककर्त्तारः षट् यथोक्तं ज्योतिर्व्विदाभरणे "युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनन्दनः। इमेऽनु नागार्ज्जुनमेदिनीपतिर्बलिः क्रमात् षट् शककारकाः कलौ"। तेषां शककालश्च शकशब्दे वक्ष्यते।

कलौ वर्ज्यधर्म्माः निर्णयसिन्धावुक्ता यथा—

"वृहन्नारदीये । "समुद्रयातुः स्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयमस्तथा । देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा । दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ । महाप्रस्थानगमनं गोमेधश्च तथा मखः । इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः" । कमण्डलुः "सोदकस्य कमण्डलुम्" इत्युक्तः स्मृत्यर्थो वा । दत्ता ऊढा । "ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुमिति" हेमाद्रौ वचनात् । "ऊढा पुरुषसंयोगात् स्रुते देयेति केचन" इत्यादिभिर्विवाह्यतोक्ता । हेमाद्रौ ब्राह्मे "गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा । नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः" । गोत्रात् गोत्रजायाः पितृस्वसुः, मातुः सपिण्डात् मातुलात्, तत्कन्याया विवाहः कलौ न कार्य्यः । तेन यानि तद्विधायकानि, तानि युगान्तरविषयाणि । तथा च व्यासः । "तृतीयां मातृतः कन्यां, तृतीयां पितृतस्तथा । शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः" इति कलौ निन्दामाह । मातृतस्तृतीयां मातुलकन्यामित्यर्थः । उक्तञ्चैतत् प्राक् । मद्यं "सौत्रामण्यां सुराग्रहणम्" इत्यादिना विहितमपि वर्ज्यम्" हेमाद्रौ आदित्यपुराणे "विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् । बालायाः क्षतयोन्याश्च वरेणान्येन संस्कृतिः । कन्यानामसवर्णानां विवाहश्च द्विजातिभिः । आततायिद्विजाग्र्याणां धर्म्मयुद्धेन हिंसनम् । द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः । महाप्रस्थानगमनं, गोसंज्ञप्तिश्च गोसवे । सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः । अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः । वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा । प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् । संसर्गदोषस्तेयान्यमहापातकिनिष्कृतिः । वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि । अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः । परोद्देशात्मसंत्याग उच्छिष्टस्यापि वर्ज्जनम् । प्रतिमाभ्यर्चनार्थाय, संकल्पश्च सधर्मकः । अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शनमेव च । शामित्रं चैव विप्राणां सोमविक्रयस्तथा । षड्भक्तानशने चान्नहरणं हीनकर्म्मणः । शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् । भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः । शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा । प्रजार्थं तु द्विजाग्र्याणां परजायापरिग्रहः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया । बलात्कारादिदुष्टस्त्रीसंग्रहो विधिनोदितः । यतेश्च सर्व्ववर्णेषु भिक्षाचर्य्या विधानतः । नवोदके दशाहञ्च दक्षिणा गुरुचोदिता । ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च । भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा । गोतृप्तिशिष्टपयसि शिष्टैराचमनक्रिया । पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् । यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्त्तितानि विद्वद्भिर्व्यवस्थापूर्व्वकं बुधैः" । सुराग्रहणस्य तत्कर्त्तुः संग्रहो व्यवहारः । न च मद्यं चेति सामान्येन निषेधेनास्योपसंहार इति वाच्यम् । निषेधस्य निवृत्तिफलत्वेन विशेषानपेक्षत्वात्, मा हिंस्यादित्यस्य न ब्राह्मणं हन्यादित्यनेनोपसंहारे हिंसान्तरस्यादोषापत्तेश्च । निरूपितं चैतद्धेमाद्रिणान्यत्रेत्युपरम्यते । "एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः" इत्युक्तेः अघस्य अघौघस्य सङ्कोचः "न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते" इत्युक्तस्य प्रायश्चित्तस्य विधानम् उपदेशः । "कलौ कर्त्तैव लिप्यते" इति व्यासोक्तेः पतितसंसर्गदोषे सत्यपि पातित्यं नेत्यर्थः-इति केचिदाहुः । ते मूर्खाः मानाभावात् । तेनायमर्थः । तत्संसर्गी तु पञ्चमः स्तेयञ्च इति तदन्यानि महापातकानि ब्रह्मवधसुरापानगुरुतल्पाभिगमनानि त्रीणि, तेषां कामकृतानां प्रायश्चित्तं कलौ न, तेषु कामतोऽमरणान्तस्यैवोक्तेः । तत्स्थाने द्वादशाब्दं, द्वैगुण्ये ब्राह्मणो ब्रह्मवधनिमित्ते च चतुर्विंशत्यब्दमिति चतुर्गुणं वदादमाल्लापत्तेस्तस्य च "चतुर्थे नास्ति निष्कृतिरिति" निषेधात् धर्मिणो ब्रह्मचैवोक्तेः । "स्तेये च राज्ञो वधकर्त्त्वात्मब्रह्मवधापत्तिः । अतो द्वैगुण्यं युक्तोऽधिकारः । न च विधित्वं, निषेधबाधात् । आत्मवधेऽपवादेऽपि ब्रह्मवधाभावात् युगान्तरदोषसाम्येऽपि कलौ दोषाधिक्यात् । एतद्विप्रपरम् । अन्यवर्णान्या कन्या क्षत्रियादिस्तया दुष्टैः । अयोनौ विध्यादौ । "स्त्रियः परित्याज्याः विप्रागुरुगाश्च याः" इत्युक्तेस्त्यागः । परोद्देशेन ब्राह्मणाद्यर्थे आत्मत्यागः । यद्वा परो-

द्देशात्मत्यागो दानं मनसा पात्रमुद्दिश्येत्युक्तम् । उद्दिष्टस्य त्यक्तस्य वर्ज्जनम् प्रतिग्रहसमर्थोऽपीत्युक्तम् । चेतनग्रहणेन प्रतिमापूजा । "स्वाशौचकालादिर्ध्येयं स्पर्शनन्तु विभागतः" इत्युक्तः स्पर्शः । वर्ज्जति "उपोषितस्त्र्यहं स्थित्वा धान्यमन्नाद्यथाहरेत्" इत्युक्तमन्नचौर्य्यम् । आपदि ब्रह्मादिवृत्तिः, सुखेनैव धमेदग्निमित्युक्तं धमनम् । "दशाहेनैव शुध्येत भूमिष्ठं च नवोदकम्" इत्युक्तो दशाहः । "गुरवे तु वरं दत्त्वा" इत्युक्ता दक्षिणा । शूद्रेषु दासगोपालेति । "कन्दुपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम् । एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्" इत्यपरार्के सुमन्तूक्ता शूद्रस्य पाकक्रिया । "पितापुत्रविवादे तु साक्षिणां त्रिपणो दमः" इत्युक्तः । सायंगृहत्वम् "विधूमे सन्नमुसले" इत्युक्तम् । भृग्वी चन्द्रेण तु । "अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च । अनिकेता निराहारा ये तु सायंगृहास्तु ते" इति पुराणोक्तो निषिद्धः, तेनाज्ञातगोत्रपात्रादेः श्राद्धादौ विनियोगो न कार्य्यः । कलौ एतानि वर्ज्यानीत्यर्थः । निगमः । "अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" । अग्निहोत्रं तदर्थमाधानम् । एतच्च सर्वाधानपरम् । "अर्द्धाधानं स्मृतं श्रौतं स्मार्त्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रितेति" लौगाक्षिवचनादिति स्मृतिचन्द्रिकायाम् एतेन "चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानतेति" व्यासवचनं व्याख्यातम् । सर्वाधानेऽपि विशेषमाह देवलः "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते । संन्यासञ्चाग्निहोत्रञ्च तावत्कुर्यात् कलौ युगे" इति । संन्यासस्त्रिदण्डः केचित्" ।

दत्तौरसेतरेषान्त्वित्यत्र दत्तपदं कृत्रिमस्याप्युपलक्षणम् "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" कलिधर्म्मे पराशरस्मरणात् इति दत्तकमीमांसादिमतम् । दत्तकचन्द्रिकामतं वक्ष्यते । समुद्रयात्रास्वीकारोऽप्यत्र तीर्थयात्रारूपधर्म्मपरः तथा हि ।

"शोधितस्यापीत्यनेन कृतप्रायश्चित्तस्यैव संव्यवहार्य्यतानिषेधेन यत्र विषये समुद्रनौयानं निषिद्धं तत्रैव विषये कृतप्रायश्चित्तस्याप्यसंग्रह इति प्रतिपादितम् । यत्र शोधितत्वोक्त्यैव प्रायश्चित्तनिमित्तीभूतपापनिश्चय आक्षिप्यते तद्विषयश्च पापावेदकशास्त्रादेव, समुद्रगमनमात्रे च कुत्रापि शास्त्रे प्रायश्चित्ताद्यदर्शनात् न तस्य निषिद्धता, किन्तु तद्गमनकाले म्लेच्छादिस्पृष्टान्नाद्यशनम् एव, तत्पापापनोदनाय तु कृतेऽपि प्रायश्चित्ते न तद्यातुः संग्रह इत्येव कल्पयितुमुचितम् शोधितस्यापीति पदस्वारस्यात् । अन्यथा समुद्रनौगमनमात्रे संग्रह इत्येवाभिदध्यात् । न च तथाभिहितम् । न च "समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । इत्युपक्रम्य "इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः" इति बृहन्नारदीयवचने समुद्रयात्रास्वीकारस्य कलौ निषिद्धतयोक्तेः निषिद्धातिक्रमे च "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति या॰स्मृतौ कर्मणस्तथाचरणे पातित्यप्रतिपादनात् तद्विषय एव प्रायश्चित्ताचरणसम्भवेन तत्रैव शोधितस्यापीत्यस्यावकाश इति वाच्यम् बृहन्नारदीयवचने उपसंहारे "इमान् धर्मान्" इत्युक्तेः धर्म्मरूपसमुद्रयात्रास्वीकारस्यैव कलौ निषेधात् वाणिज्यराजाज्ञादिनिमित्तकस्य तस्य निषेधाभावेन तद्विषयकत्वासम्भवात् । स्मर्य्यते च ब्रह्महत्यादिपापापनोदनार्थं समुद्रगमनं पराशरेण,— प्रायश्चित्तप्रकरणे "शतयोजनविस्तीर्णं शतयोजनमायतम् । रामचन्द्र-समादिष्ट-नल-सञ्चय-सञ्चितम् । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति" इत्यनेन । न चात्र समुद्रसेतुदर्शनस्यैव ब्रह्महत्यानाशकत्वं सङ्गतं, समुद्रयानस्वीकारं विना शतयोजनायतस्य सेतोर्दर्शनासम्भवेन आक्षेपेणैव तद्गमनलाभात् । अन्यथा सेतोर्यत्किञ्चिदंशमात्रस्य तथात्वे "शतयोजनमायतम्" इति विशेषणमनर्थकं स्यात्, तथा च शतयोजनविस्तारायतसेतुसम्यग्दर्शनस्यैव प्रकृतब्रह्महत्यापापनाशकत्वं न तु यत्किञ्चिन्मात्रदर्शनस्य, पापप्राबल्येन परिश्रमप्राबल्यस्यापेक्षितत्वात् किन्तु एकादश्यादिव्रतस्येव यत्किञ्चिन्मात्रदर्शनस्यातिदिष्टब्रह्महत्यानाशकत्वम् युक्तम् । अतएव "यो भूय आरभते तस्य फले विशेषः" इति जैमिनिना सम्यगायासे फलबाहुल्यं निर्णीतम्, निर्णीतञ्च ऋग्वेदभाष्ये माधवाचार्य्येण सम्यगायाभ्यासादिना अनुष्ठिताश्वमेधाद्यपेक्षया तत्तद्यज्ञविद्याबोधकवेदाध्यायिनोऽतिदिष्टब्रह्मवधादिनाशकत्वम् । एवञ्च प्रकृतब्रह्महत्यायाः अपनोदनार्थं शतयोजनदीर्घविस्तारसेतुदर्शनं स्मृतौ विहितम् । तेनैव च समुद्रनौगमनमर्थापत्तिलभ्यम् एवं द्वारवत्यादितीर्थयात्राङ्गमपि समुद्रयान-

गमनमर्थापत्तिप्रमाणलभ्यम् । एवञ्च दैवमसमुद्रयानस्यैव धर्मरूपतया विहितस्य कलौ निषेधः वृहन्नारदीयवचने कमण्डलुविधारणादिभिः पुण्यापरपर्य्यायधर्मसाधनत्वेन धर्मरूपैः समभिव्याहारेण पठितत्वात् धर्मरूपस्यैव समुद्रयानस्य निषिद्धत्वौचित्यात् “प्रायेण समानरूपाः सहचरा भवन्ति” इति न्यायात् । एतेन वृहन्नारदीये “समुद्रयात्रास्वीकार” इति पाठे रघुनन्दनमाधवाचार्य्यादिवहुनिबन्धकारसम्मते स्थिते निर्णयसिन्धौ समुद्रयातुः स्वीकार इति क्वाचित्कपाठस्तु अनाकरोऽनुचितश्च, तथा सति समुद्रयातुर्जनस्य स्वीकाररूपव्यवहारस्य धर्मरूपत्वाभावेन “इमान् धर्मान्” इत्यभिधानस्यायुक्तत्वापत्तेः । ततश्च धर्मार्थ-समुद्रयात्रा-स्वीकारस्यैव निषिद्धतया वाणिज्यराजाज्ञादिनिमित्तकस्य तस्य कुत्रापि निषेधात् तद्गमने म्लेच्छादिगुरुतरसंसर्गे सन्ध्यावन्दनादित्यागे च तत्पापापनोदनार्थं बोधितस्यापि (कृतप्रायश्चित्तस्य) न संपर्क इत्यत्रैव आदित्यपुराणवचनतात्पर्य्यम् । यथा च “कामतोऽव्यवहार्य्यस्तु वचनादिह जायते” इति याज्ञवल्क्येन पातकविषये प्रायश्चित्ताचरणेऽपि अव्यवहार्य्यताऽभिहिता, तत्समानन्यायादत्रापि प्रायश्चित्ताचरणेऽपि न व्यवहार्य्यतेति युक्तमुत्पश्यामः । एवञ्च समुद्रनौगमनकाले सन्ध्यादिकर्म्म । म्लेच्छादिभिर्गुरुतरं संसर्गमकुर्वतश्च प्रायश्चित्तज्ञापकशास्त्राभावात् न अव्यवहार्य्यता नापि प्रायश्चित्ताचरणम् । ततश्च “उषित्वा यत्र कुत्रापि स्वधर्म्मं प्रतिपालयन् । षट्कर्म्माणि प्रकुर्वीतेत्थमिति धर्म्मस्य निश्चयः” इति स्मृतौ यत्र कुत्रापि वासेऽपि स्वधर्म्मानुष्ठाने पापशून्यत्वमुक्तं सुपपन्नम् । अतएव कलौ वाणिज्याद्यर्थसमुद्रयाने शिष्टाचारोऽपि दृश्यते । तथा हि कलियुगनृपवत्सराजामात्ययोर्यौगन्धरायणवाभ्रव्ययोर्युद्धार्थं वत्सराजाज्ञया समुद्रयानं रत्नावलीनाटके वर्णितम्, वर्णितञ्च भाषाचण्डीपुस्तके श्रीमन्ताभिधवणिजस्तत्पितुश्च इतो वङ्गदेशात् सिंहलगमनम् । न च तद्गमनं तदा केनापि विगीतम् । यदि तद्विगीतं स्यात् तदा ते हि शिष्टाः कथं तत् कुर्युः । इदानीन्तनानां विगानन्तु म्लेच्छभूरिसंसर्गाद्धर्यवेति एतन्मूलकमेव इदानीमपि अन्यैर्दाक्षिणात्यशिष्टैर्वाणिज्याद्यर्थं सिंहलादिगमनमनुष्ठीयते । अतः समुद्रयानगमनमात्रं निषिद्धमिति तु रिक्तं वचः । ततश्च धर्मार्थसमुद्रयानगमनमेव कलौ निषिद्धमित्यायातम् । तद्गमनकाले च यदा म्लेच्छादिभिर्गुरुतरसंसर्गः सन्ध्यादित्यागश्च तदैव प्रायश्चित्ताचरणेऽपि द्विजानामव्यवहार्य्यता शूद्राणान्तु प्रायश्चित्ताचरणे व्यवहार्य्यतैव द्विजपदस्वारस्यात् अन्यथा लोकस्याव्यौ तद्विरोधाभिदध्यात् । इत्येव द्विजेभ्यः शूद्राणां विशेष इति दिङ्मात्रमुपदर्शितम्” २ कलिकालाधिष्ठातृदेवभेदे च तस्योत्पत्तिर्यथा “प्रलयान्ते जगत्स्रष्टा ब्रह्मा लोकपितामहः ससर्ज्ज घोरं मलिनं पृष्ठदेशात् स पातकम् । स चाधर्म्म इति ख्यातस्तस्य वंशानुकीर्त्तनात् । श्रवणात् स्मरणाल्लोकः सर्व्वपापैः प्रमुच्यते । अधर्म्मस्य प्रिया रम्या मिथ्या मार्ज्जारलोचना । तस्याः पुत्त्रोऽतितेजस्वी दम्भः परमकोपनः । स मायायां भगिन्यान्तु लोभं पुत्त्रञ्च कन्यकाम् । निकृतिं जनयामास तयोः क्रोधः सुतोऽभवत् । स हिंसायां भगिन्यान्तु जनयामास तं कलिम् । वामहस्तधृतोपस्थं तैलाभ्यक्ताञ्जनप्रभम् । काकोदरं करालास्यं लोलजिह्वं भयानकम् । पूतिगन्धिं द्यूतमद्यस्त्रीसुवर्णकृताश्रयम् । भगिन्यान्तु दुरुक्त्यां स भयं पुत्त्रञ्च कन्यकाम् । मृत्युं संजनयामास तयोस्तु निरयोऽभवत् । यातनायां भगिन्यान्तु लोभपुत्त्रायुतायुतम् । इत्थं कलिकुले जाता बहवो धर्म्मनिन्दकाः” इति कल्किपुराणे १ अ० ।

तस्य नलं प्रति द्वेषभावस्तच्छरीरे प्रवेशश्च भा० व० ५८,५९ अ० वर्णितः । यथा

“ततोऽब्रवीत् कलिः शक्रं दमयन्त्याः स्वयंवरम् । गत्वा हि वरयिष्ये तां मनो हि मम तां गतम् । तमब्रवीत् प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः । वृतस्तया नलो राजा पतिरस्मत्समीपतः । एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः । देवानामन्त्र्य तान् सर्व्वानुवाचेदं वचस्तदा । देवानां मानुषं मध्ये यत् सा पतिमविन्दत । तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् । एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः । अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः । का च सर्व्वगुणोपेतं नाश्रयेत नलं नृपम् । यो वेद धर्म्मानखिलान् यथावच्चरितव्रतः । योऽधीते चतुरो वेदान् सर्व्वानाख्यानपञ्चमान् । नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्म्मतः । अहिंसानिरतो यश्च सत्यवादी दृढव्रतः । यस्मिन् सत्यं धृतिर्ज्ञानं तपः शौचं दमः शमः । ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे । एवं रूपं नलं यो वै कामयेच्छपितुं कले ! । आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना । एवंगुणं नलं यो वै कामयेच्छपितुं कले ! । कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे । एवमुक्त्वा कलिं देवा

द्वापरश्च दिवं ययुः । ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् । संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ! । भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते । त्वमप्यक्षान् समाविश्य साहाय्यं कर्त्तुमर्हसि” ५८ ।

“एवं स समयं कृत्वा द्वापरेण कलिः सह । आजगाम ततस्तत्र यत्र राजा स नैषधः। स नित्यमन्तरं प्रेप्सुर्निषधेष्ववसच्चिरम् । अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् । कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः । अकृत्वा पादयोः शौचं, तत्रैनं कलिराविशत् । स समाविश्य च नलं समीपं पुष्करस्य च । गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै । अक्षद्यूते नलं जेता भवान् हि सहितो मया । निषधान् प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् । एवमुक्तस्तु कलिना पुष्करो नलमभ्यगात् । कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्यगात् । आसाद्य तु नलं वीरं पुष्करः परवीरहा । दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः । न चक्षमे ततो राजा समाह्वानं महामनाः । वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत । हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् । आविष्टः कलिना द्यूते जीयते स्म नलस्तदा” ५९ । अधिकं कर्कोटकशब्दे उक्तम् “कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्” । भा०व० । २विभीतकवृक्षे (वयड़ा) तस्य नलप्रधर्षणार्थं कलिनाश्रितत्वात्तथात्वम् । “विभीतकमधिष्ठाय यथा भूतेन तिष्ठता । तेन भीमसुतो भीरुः सं राजर्षिरधर्षि न । तमाश्रयनमासाद्य वैदर्भीनिषधेशयोः । कलुषं कलिरन्वियत्नवान् मोहकरान् बहून्” नैष० । ४कलहे । “मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् । वसतिमुपगतेन धाम्नि तस्याः शठ ! कलिरेष महांस्त्वयाद्य दत्तः” माघः । ५शूरे वैशुद्धे च हेमच० । द्यूतविषये ७एकाङ्कयुक्तपार्श्वकपाशके । यस्मिन् अक्षपार्श्वे एकाङ्कचिह्नमस्ति तस्मिन् अक्षभागे । कलिना दृष्टं साम कलेरपत्यादि वा ढक् । कालेय तद्दृष्टे सामनि तदपत्यादौ । ७कोरके स्त्री अमरटीका वा ङीप् ।

**कलिक** पुंस्त्री कल+मत्वर्थे ठन् । पक्षिभेदे (कोँचवक्) भावप्र० स्त्रियां जातित्वात् ङीष् ।

**कलिका** स्त्री कलिरेव स्वार्थे कन् । १कोरके (कँड़ि) अस्फुटितपुष्पे अमरः । “वितरसि नः कलिकां किमर्थमेनाम्” “नवबकुलकलिकाकुलीकृतानि स्तवकनिकोचितकार्मिकेसराणाम्” माघः । “सुखामजातरजसं कलिकामवाले” सा० द० । “चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः” शकु० । “सकलिका कलिकामजितामपि” रघुः । कलो ध्वनिभेदः साध्यतयाऽस्त्यस्य ठन् । वीणामूले हेमच० तस्य कलसाधनत्वात् तथात्वम् । कलैव स्वार्थे कन् । ३कलाशब्दार्थे । “तन्वन्ते कलिका यथा क्रमात्कलाभिर्व्ययः कृताः” सि०शि० । कलिकापूर्वम् । “प्रथममपरचरणसमुत्थं भवति स यदि वक्त्र। इतरदितरमदितमपि यदि च तुर्थम् । चरणयुगलकमविरतमपरमिति कलिका सा” वृत्तर० उक्ते ४छन्दोभेदे च । ५पदसन्ततियुक्तरचनाभेदे सा च गोविन्दवीरुदावलीतद्भाष्ययोर्दर्शिता यथा “सुमेदाकलिकारम्भे श्लोकस्तु युगशः स्मृता । अन्यासां कलिकानान्तु भवन्त्येकैकयोऽपि ते । पूर्वौ द्वौ कलिकाभिस्तु वीरुदस्तुल्यसंख्यकाः । कला नाम भवेत्तालनियता पदसन्ततिः । कलाभिः कलिका प्रोक्ता तद्भेदाः षट् समीरिताः । कलिका चण्डवृत्ताख्या द्विगादिगणवृत्तका । तथा त्रिभङ्गी वृत्ताख्या मध्या मिश्रा च केवलेति” । चण्डवृत्ते दशधा संयुक्तवर्णाः । अत्र संयुक्तवर्णानां नियमो दशधा च ते । मधुर शिटशिलिटशिथिलत्वादिनक्षभौ । भिद्यन्ते वृत्तदोषाभ्यां ते दर्श्यन्ते स्फुटं यथा । सुश्लानुमधरसंयोगाः मधुरा मधुरकिङ्कराः । तस्मात्तु श्लिष्टसंयुक्तादर्धकर्परसर्पवत् । ततो विश्लिष्टसंयुक्ता भङ्गकल्यादयस्त्रयः । तथा शिथिलसंयुक्ताः पश्यकश्यपवश्यवत् । प्रोक्ता ह्रादियुता सहंग्रसहंग्रगुहा नक्षत्रवत् । शर्हादीन् ह्रादिसंयुक्तभेदान् केचित् समूचिरे । दीर्घात्तुङ्गाङ्ककापीसं वाल्यं वैश्यम बाहुकमिति” । कलापरिमाणमुक्तम् । “अधिकाश्चतुःषष्टेर्न्यूना द्वादशतः कलाः । एताभ्यो नाधिकाः कार्य्या न्यूनाश्चापि न पण्डितैरिति” । तत्र तावच्चण्डवृत्तकलिका द्विविधा नक्षोविशिखश्चेति भेदात् तत्र रथादिविंशतिभेदस्य नक्षस्येह वर्द्धितादयोनव भेदाः स्मृताः “वर्द्धितं वीरभद्रञ्च समयोऽप्युत्पलम् । तुरङ्गं चीरुघरतिस्तथा मातङ्गखेलितम् । तिलकश्चेति कलिकानक्षभेदोदिता नव वृत्ताः । अथ विशिखः पद्मकुन्दचम्पकवकुलवकुलभेदात् पञ्चविधः तेष्वादिमं पद्मं पङ्केरुहसितकञ्जमाण्डूतु पतेन्दीवरारुणाम्भोरुहकह्लारभेदात् षड्विधम् अन्तिमं वकुलन्तु भासुरमङ्गलभेदात् द्विविधमित्येकादशभेदो विशिखः पङ्केरुहं सितकञ्जं तथा पाण्डूत्पलं परम्” इन्दी-

पराङ्गणाम्भोजे कह्लारश्चेति षड्विधम्। देवद्वेदेन कथितं पद्मेव मनीषिभिः। चम्पकं बकुलं कुन्दं बकुलं द्विविधं तथा। इति पञ्चविधस्यापि त्रिंशत्संख्यकाः" इत्युक्तेः एवं चतुरुत्तरकलिकात्रिंशत्तिधा गृहीताः अथ पञ्चधा हि-मादिगणयुक्तका कलिका मञ्जर्य्यभिहिता क्रमात् कोरक गुच्छकसंफुल्लकुसुमगन्धाख्या तस्यायाम कोरकगुच्छकु-सुमानि गृहीतानि" कोरको गुच्छकुसुमे मञ्जरी त्रिविधात तु" इत्युक्तेः। त्रिभङ्गी कलिका तु शिखरिण्यादिपूर्व्वा षोढा तस्याथाम दण्डकपूर्व्वा विदग्धपूर्व्वा च गृहीता "दण्डकाख्या विदग्धाख्या त्रिभङ्गीह द्विधा मता" इत्युक्तेः अथ मिश्र-कलिका 'कलिका गद्यसंदृष्टा सप्तविभक्तिका वा अक्षरमयी सर्व्वलघ्वी चेति द्विभेदा केवला चेत्यष्टौ तदेवं षड्भ्योमङ्गा-कलिकाभ्यः षष्टाविंशतिरिह कलिका गृहीताः। एषाद्य एकादश नवभेदाः संफुल्लगन्धौ मञ्जरीभेदौ शिखरिण्या-दयः त्रिभङ्गीभेदा मध्यकलिका च तत्प्रकाशाधिक्य-विरहात्" ।

**कलिकापूर्व्व** न० कलिकया अंशेन जन्यमपूर्व्वम्। परमापूर्व्वजनके यज्ञजन्यापूर्व्वभेदे। तत्साधने युक्तिः तत्त्व-चिन्तामणिमाथुर्य्योर्द्दर्शिता यथा—

"नन्वेवमाग्नेयादीनां प्रत्यक्षं क्षणिकत्वात् योग्यतानव-गतौ परमापूर्व्वकारणत्वानवगमे कथमपूर्व्वकल्पनम्? इति चेत् काम्येऽपूर्व्ववाच्यत्वस्थितावाग्नेयादौ तद्द्वारासा-धनत्वस्य योग्यत्वसम्भवात् न तु प्रथमम्" तत्त्वचि०। व्याकृतं चैतत् मथुरानाथेन यथा—

"ननु फलसाधनतान्वये फलसमयस्थायित्वतादृशव्यापा-रोपधायकत्वान्यतरत्वस्य योग्यतात्वे आग्नेयाष्टाकपाल-यागैन्द्रदधियागैन्द्रपयोयागात्मकयागत्रयरूपस्य दर्शस्य, आग्नेयाष्टाकपालोपांशुयाजाग्नीषोमीयैकादशकपालयागा-त्मकयागत्रयरूपस्य पौर्णमासस्य चावान्तरकलिका-पूर्व्वत्रयं विना षडन्यैकपरमापूर्व्वजनकत्वमनुपपन्नं युगपदाग्नेयादीनां षड्नामसम्भवादतः "दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः" इत्यादि प्रधानविधिबोधितपरमापूर्व्व-साधनत्वान्यथानुपपत्त्या तत्र परमापूर्व्वनाम्नं कलिका-पूर्व्वषट्कं कल्प्यते इति तत्र सिद्धान्तो व्याहतः योग्यता-ज्ञानाभावेन प्रधानविधिवाक्यात् प्रथमं परमापूर्व्व-साधनत्वान्वयबोधसम्भवादित्याशङ्कते नन्वेवमिति। एवं-साधनत्वान्वये निरुक्तान्यतरत्वस्य योग्यतात्वे। क्षणिकत्वा-दिति आशुविनाशित्वादित्यर्थः। परम्पराघटकानुपस्थितेश्चेति शेषः। कथमिति। कथं प्रधानविधिबोधितपरमापूर्व्वसा-धनतान्यथानुपपत्तेः कलिकापूर्व्वकल्पनम्? इत्यर्थः। यदि च निरुक्तयोग्यताज्ञानं विनापि परमापूर्व्वसाधनत्वा-वगमस्तदा परमापूर्व्वज्ञानं विना स्वर्गसाधनत्वस्यापि ज्ञानसम्भवात् किं परमापूर्व्वस्यापि वाच्यतया? इति भावः। न च तदापि प्रधानविधिबोधितपरमापूर्व्व-साधनत्वान्यथानुपपत्त्या कलिकापूर्व्वाणि न कल्प्यन्ते अपि तु आग्नेयादिबोधकप्रत्येकवाक्यात् कलिका-पूर्व्वोपस्थितौ प्रधानविधिवाक्यात् परमापूर्व्वसाधन-त्वावगमः प्रथमन्तु प्रधानविधिवाक्यं मूकमेवेति वाच्यम् अपसिद्धान्तात् "आग्नेयाष्टाकपालोभवत्यमा-वस्यायाम्" इत्यादिप्रत्येकबोधकवाक्यानां दर्शपौर्ण-मासाबोधकतया कलिकापूर्व्वाबोधकत्वाच्चेति निष्कर्षः। आशुविनाशित्वेन प्रतिसंहितकर्म्मणि यद्रूपेण फलस्य कालान्तरभावित्वप्रतिसन्धानं तद्रूपावच्छिन्नफलसाधन-त्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वं योग्यता प्रकृते च प्रधानविधिना कार्य्यत्वरूपेण परमा-पूर्व्वं बोध्यते, तथाच कार्य्यत्वरूपेण तज्जनकता दर्शादीनां ग्राह्या, तत्र च परमापूर्व्वत्वरूपेण कालान्तरभावित्वप्रतिसन्धानेऽपि न कार्य्यत्वरूपेण कालान्तरभावित्वप्रतिसन्धानं, कार्य्यत्वावच्छिन्नस्य दर्शाद्य-व्यवहितक्षणेऽपि सम्भवादतःपरमापूर्व्वसमयस्थायिव्यापारो-पधायकत्वज्ञानं विनापि प्रथमं कार्य्यत्वरूपेण सामा-न्यतस्तत्साधनत्वग्रहः, उत्तरकालन्तु स्वर्गसमयस्थायिकार्य्या-न्तराजनकस्य तादृशकार्य्यजनकत्वं परमापूर्व्वजनकत्वएव पर्य्यवस्यति, तच्च साक्षान्न सम्भवति आग्नेयादेराशुविनाशि-त्वादतः परम्परया जनकत्वं,तच्चावान्तरव्यापारं विनाऽनुप-पन्नमित्यनुपपत्तिज्ञानात् कलिकापूर्व्वाणि कल्प्यन्ते,स्वर्गस्य च देहान्तरभोग्यत्वेन कालान्तरभावित्वप्रतिसन्धानात्तत्पर्य्य-न्तस्थायिव्यापारोपधायकत्वज्ञानं विना सामान्यतोऽपि न तत्साधनत्वग्रहसम्भव इति गूढाभिसन्धिना समाधत्ते काम्य इति "दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः" इति काम्य-विधावित्यर्थः। अपूर्व्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण परमापूर्व्ववाच्यत्वस्थितावित्यर्थः, तद्द्वारा साधनत्वस्येति परमापूर्व्वद्वारा साधनत्वस्येत्यर्थः, सामान्यतः स्वर्गसाधन-त्वरूपेणान्वये इति शेषः। योग्यतासम्भवात् योग्यता-ज्ञानसम्भवात्, न तु प्रथममिति। न तु परमापूर्व्व-वाच्यत्वे इत्यर्थः। स्वर्गस्य देहान्तरभोग्यत्वेन काला-

न्तरभावित्वप्रतिसन्धानात् तत्साधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वस्य योग्यतात्वात् कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वान्वये च न तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानमपेक्षितं कार्य्यत्वावच्छिन्नस्य देहान्तरभावित्वप्रतिसन्धानादित्यभिसन्धिः। एतच्चापाततः स्वर्गस्य कालान्तरभावित्वाप्रतिसन्धाने क्रियायाः क्षणिकत्वाप्रतिसन्धाने वा स्वर्गसाधनत्वान्वयेऽप्यपूर्व्वोपस्थितिं विना योग्यताज्ञानसम्भवात्। केचित्तु "दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः" इत्यत्र विधिप्रत्ययस्य कार्य्यत्वरूपेणापूर्व्वसामान्य एव शक्तत्वात् प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमस्ततः कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वावगमः, न तु प्रथममेव परमापूर्व्वसाधनत्वावगमः। न च प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमेऽपि तत्र परमापूर्व्वपर्य्यन्तस्थायित्वं न गृहीतमिति वाच्यं द्वितीयबोधे परमापूर्व्वस्वर्गपर्य्यन्तस्थायित्ववत् प्रथमबोधे कलिकापूर्व्वस्य स्वर्गपर्य्यन्तस्थायिव्यापारमयस्थायित्वभाने बाधकाभावादिति समाधत्ते काव्य इति। "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम" इति काम्यविधावित्यर्थः। अपूर्व्ववाच्यत्वस्थितावित्ति कार्य्यत्वरूपेण कलिकापूर्व्वस्यापि वाच्यत्वस्थितावित्यर्थः, तद्द्वारा साधनत्वस्येति कलिकापूर्व्वद्वारा परमापूर्व्वसाधनत्वस्येत्यर्थः, अन्वय इति शेषः। योग्यतासम्भवात् प्रथमं योग्यताज्ञानसम्भवात्, न तु प्रथममिति परमापूर्व्वसाधनत्वावगम इति शेषः। न चैवं प्रतीतपरमापूर्व्वसाधनत्वानुपपत्त्या कलिकापूर्व्वाणां कल्प्यत्वमिति सिद्धान्तव्याघात इति वाच्यं प्रधानविधिवाक्यात् परमापूर्व्वसाधनत्वान्वयानुपपत्त्या कलिकापूर्व्वाणामेव प्रथमान्वयबोधविषयत्वम् इत्येव तदर्थात् इति भावः" इत्याहुः। ननु एकस्यैव परमापूर्व्वं स्वर्गं च दर्शपौर्णमासयोः केन रूपेण जनकत्वमिति चेदुच्यते दर्शपौर्णमासोभयसाधारणेन दर्शपौर्णमासत्वव्यापकीभूतेन वैजात्यविशेषेण विजातीयापूर्व्वं विजातीयस्वर्गञ्च प्रति जनकत्वं, विजातीयापूर्व्वजनकतावच्छेदकतयैव तद्वैजात्यसिद्धिः, न च दण्डचक्रन्यायेन दर्शपौर्णमासत्वाभ्यामेव जनकत्वमस्तु केवलदर्शात् केवलपौर्णमासाद्वा फलानुत्पादस्य परस्परव्यतिरेकादेवोपपत्तेरिति वाच्यं कार्य्यकारणभावद्वयकल्पने गौरवात् दर्शत्वादेर्जनकतावच्छेदकतापर्य्यन्तस्य विध्यर्थत्वाभावात्। न च तथापि दर्शत्वादिमत्त्वैकधर्म्ममादाय विनिगमनाविरहात् कार्य्यकारणभावद्वयमावश्यकमिति वाच्यम्, केवलदर्शात् केवलपौर्णमासाच्च फलोत्पादस्य वारणाय कार्य्यकारणभावद्वयस्यावश्यकत्वेन गौरवस्यैव विनिगमकत्वात्, यदि च पौर्णमासं विना कृते दर्शे दर्शत्वस्य, दर्शं विना कृते च पौर्णमासे पौर्णमासत्वस्य प्रत्यक्षसिद्धत्वं नाभ्युपेयते किन्तु दर्शपूर्व्वकृते पौर्णमास एव पौर्णमासत्वं, पौर्णमासोत्तरकृत एव दर्शे दर्शत्वमुपेयते, तदा तु प्रत्येकं दर्शत्वपौर्णमासत्वाभ्यामेव जनकत्वं, न व्यापकजात्या, अतिरिक्तकल्पने गौरवात् अतिरिक्तजातिकल्पनेऽपि दर्शत्वादिकमादाय विनिगमनाविरहेण कार्य्यकारणभावद्वयस्यावश्यकत्वात्। अथ यदि पौर्णमासोत्तरकृते दर्श एव दर्शत्वं, तदा दर्शत्वेनैव हेतुतास्तु किं पौर्णमासत्वेन हेतुतया? न च विनिगमनाविरहात् पौर्णमासत्वेनापि हेतुत्वमिति वाच्यं केवलपौर्णमासत्वेन हेतुत्वे पौर्णमासानन्तरं दर्शोत्पादप्राक्काल एव परमापूर्व्वोत्पत्त्यापत्तेरेव विनिगमकत्वादिति चेन्न "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम" इति श्रुत्या पौर्णमासस्यापि हेतुत्वबोधनात् पौर्णमासत्वेनापि हेतुत्वस्यावश्यकत्वात् दर्शत्वस्य पौर्णमासाघटितत्वात्। एतेन पयोयागात्मकदर्शचरमयागस्यैव पयोयागत्वेन हेतुत्वमस्त्वित्यपि निरस्तम्। दर्शपौर्णमासत्वाक्रान्तानामन्येषामपि हेतुत्वस्य वेदबोधितत्वात्। अथोभयसाधारणवैजात्येन हेतुतापक्षे जातेरव्याप्यवृत्तितया आग्नेयादियागषट्कस्थल एव आग्नेयादिवत् किञ्चिद्यागानन्तरं परमापूर्व्वोत्पत्त्यापत्तिः कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसत्त्वात् एवं दर्शत्वपौर्णमासत्वादिना प्रत्येकहेतुत्वपक्षेऽपि पौर्णमासानन्तरं दर्शान्तर्गतयत्किञ्चिद्यागे कृत एव परमापूर्व्वोत्पत्त्यापत्तिरिति चेन्न परमापूर्व्वव्यापारीभूतानां कलिकापूर्व्वषट्कानामपि तत्तद्रूपेण दण्डचक्रवत् हेतुतया कलिकापूर्व्वषट्कानां सम्भूयतया वा तदभावादेव तत्र परमापूर्व्वानुत्पादात्। ननु तथापि दर्शपौर्णमासस्थले कियन्त्यपूर्व्वाणीति चेदत्र प्राहुः—प्रथमतः पौर्णमासत्रयेण प्रत्येकं कलिकापूर्व्वत्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते एवं दर्शत्रयेणापि प्रत्येकं कलिकापूर्व्वत्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते, ताभ्यां परमापूर्व्वाभ्यां चरमं परमापूर्व्वान्तरं जन्यते इति नवापूर्व्वाणीत्याहुः। नव्यास्तु मध्यमपरमापूर्व्वद्वये मानाभावात्

षड्भिः कलिकापूर्व्वैरेव चरमं परमापूर्व्वं जन्यते इति सम्प्रापूर्व्वाणि। न च पूर्व्वपूर्व्वक्रियाभिर्जनितैः पञ्चभिः कलिकापूर्व्वैः सह चोत्तरक्रियैव चरमं परमापूर्व्वं जनयतु किं चरमक्रियाजन्यकलिकापूर्व्वेणेति वाच्यं तथा अपि स्वोत्तराङ्गदक्षिणादानादिव्यवधानेनैव परमापूर्व्वजनकत्वोपगमेन तावत्कालानवस्थित्या चरमकलिकापूर्व्वस्वीकारात्, दक्षिणादानाद्युत्तराङ्गस्य साक्षादेव परमापूर्व्वहेतुत्वेन तत्र द्वारापेक्षेति प्राहुः। उच्छृङ्खलास्तु षड्भ्यः कलिकापूर्व्वेभ्य एव स्वर्गोत्पत्तेः परमापूर्व्वे मानाभावः। न च स्वर्गं प्रति षण्णामपूर्व्वाणां षडपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वे गौरवमिति वाच्यं, तथापि परमापूर्व्वं प्रति षडपूर्व्वाणां षडपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वेन तुल्यत्वात् षडपूर्व्वाणां सम्बन्धत्वन्तु मतद्वय एव। यदि षडपूर्व्वाणामपि पृथक् हेतुत्वं तदाऽपूर्व्वत्वेनैव। इत्थं षट्कत्वेनेत्यन्यदेतदित्याहुः। (अपूर्व्वमङ्गे परमापूर्व्वं चाङ्गजनमेतच्चानुसारेणैवोक्तमिति सर्त्तव्यम्)तदसत्, परमापूर्व्वानभ्युपगमे दक्षिणादानादेश्चरमाङ्गस्य स्वर्गोपयोगित्वानुपपत्तेः न हि दक्षिणादानं साक्षात् स्वर्गहेतुः, अङ्गत्वात् आशुविनाशित्वाच्च तज्जन्यस्य पृथगपूर्व्वस्य स्वीकारे किमपराद्धं परमापूर्व्वेण ?। परमापूर्व्वं प्रति च दक्षिणादानादेश्चरमाङ्गस्य साक्षादेव हेतुत्वम् इत्युक्तमेव। न च परमापूर्व्वाभ्युपगमे तत्र षडपूर्व्वाणां दक्षिणादानस्य च कारणत्वं कल्पनीयमतो गौरवमिति वाच्यं, तथापि षडपूर्व्वाणां दक्षिणादानादिजन्यादृष्टस्य च स्वर्गं प्रति हेतुत्वेन तुल्यत्वात् मम तु कलिकापूर्व्वषट्कं परमापूर्व्वजननद्वारं तत्र स्वर्गहेतुः, मानाभावात् यागस्य हेतुत्वे च श्रुतिरेव मानमिति न किञ्चिदेतत्। ननु तथापि नवाहत्यादिस्थले दशपार्थिवशिवपूजादिस्थले च केन रूपेण परमापूर्व्वविशेषे स्वर्गविशेषे च हेतुत्वं, तत्र नवाहुतित्वादेर्जातित्वाभावात् न च तत्रापि अपेक्षाबुद्धिविशेषविषयत्वरूपनवत्वादिविशिष्टाहुतित्वादिनैव हेतुत्वम्। अपेक्षाबुद्धिश्च प्रत्येकमङ्गुल्यपूर्व्वकनवाहुत्यादिव्यापृता ग्राह्या इति वाच्यं प्रत्येकनवाहुत्यादिमात्रस्यापेक्षाबुद्धेः कारणतावच्छेदकत्वेऽननुगमात् सकलनवाहुत्यादिष्वप्यपेक्षाबुद्धेः कारणतावच्छेदकत्वेऽसम्भवात् अत्र चण्डीपाठाहुतित्वत्तन्नवत्वेतरनवत्वादिना नवत्वादिकमनुगतीकृत्य तद्विशिष्टत्वेन हेतुत्वं वाच्यं "कारणतावच्छेदकसम्बन्धश्च स्वर्गं प्रति परमापूर्व्वत्वमेव परमापूर्व्वं प्रति तु परमापूर्व्वेतरापूर्व्वसामान्यमेव दर्शादिस्थानवदत्रापि प्रत्येकाहुतिजन्यकलिकापूर्व्वनवकादिद्वारैव परमापूर्व्वजननात् प्रत्येकमङ्गुल्यपूर्व्वकप्रत्येकाहुतिजन्यापूर्व्वतो नवाहुत्यादिस्थलीयप्रत्येकाहुतिजन्यकलिकापूर्व्वस्य न वैलक्षण्यमतः कलिकापूर्व्वं प्रति चण्डीपाठत्वादिनैव हेतुत्वं कार्य्यतावच्छेदकञ्च चण्डीपाठसामान्यजन्यतावच्छेदकतया सिद्धो नवाहुत्यादिजन्यतावच्छेदकजातिव्याप्यको जातिविशेष एव। यारावाहिकपरमापूर्व्वं इत्यादिकारणाय परमापूर्व्वेतरेति। नवत्वादेः प्रत्येकापरिसमाप्तत्वादेकस्माच्च परमापूर्व्वोत्पाद इति चेत्, निखिलापेक्षाबुद्धिसाधारणस्य नवत्वस्य एकस्यानुगतस्याभावेन तेन रूपेणाननुगमासम्भवात् इति, मैवं नवाहुतित्वादेरपि नवप्रणाडादिविषयकमानसज्ञानविशेषप्रतिमानसत्वव्याप्यजातित्वात् "नवकृत्वः पठेत्" "दश पार्थिवशिवलिङ्गानि पूजयेत्" इत्यादावपि तादृशज्ञानविशेष एव धात्वर्थः तादृशज्ञानविशेषश्च परमापूर्व्वं प्रति साक्षादेव हेतुरिति संक्षेपः"।

**कलिकार** पुंस्त्री कलिं कलहं करोति कृ—अण् कलिमृच्छति ऋ—अण् वा उप॰ स॰। पीतमस्तके १धूम्याटे पक्षिणि (फिङ्गे)। तस्य मस्तके कलिकाकरपीतचिह्नवत्त्वात् तथात्वम्। स्त्रियां जातित्वात् ङीष्। २पूतिकरञ्जे (काँटाकरमूचा)पु॰ मेदि॰। ३विषलाङ्गल्याम् राजनि॰ गौरा॰ ङीष्। ४कलहकारके ५कलिकामार्द्दरि च त्रि॰। ६नारदे पु॰।

**कलिकारक** पु॰ कलिकामृच्छति ऋ—कलिं करोति कृ—वा ण्वुल्। १पूतिकरञ्जे (काँटाकरमूचा)२कलहकारके त्रि॰। ३नारदे पु॰ हेमच॰।

**कलिङ्ग** पुंस्त्री के मूर्द्ध्नि लिङ्गमस्य। १धूम्याटे पक्षिणि (फिङ्गे) अमरः तस्य मस्तके पीतचिह्नवत्त्वात्तथात्वम्। स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। कलिं गच्छति वा॰ खच् डित् मुम् च। १पूतिकरञ्जे (काँटाकरमचा) हेमच॰ २कुटजे (कुड़ची) तस्य फलम् अण् तस्य लुप्। ३इन्द्रयवे न॰। ४शिरीषवृक्षे ५प्लक्षवृक्षे च मेदि॰। "जगन्नाथात् समारभ्य कृष्णातीरान्तगं प्रिये !। कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः" इति तन्त्रोक्ते ६देशभेदे ब॰व॰मेदि॰ "उत्कलादर्शितपथः कलिङ्गाभिमुखं ययौ" रघुः। स च देशः इहत्स॰कूर्म्मविभागे

चन्द्रभागाद्या हिमवत्पादनिःसृताः। आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः। तास्विमे कुरुपञ्चालमध्यदेशादयो जनाः। पूर्वदेशादिकाश्चैव कामरूपनिवासिनः। ओड्राः कलिङ्गमगधा दाक्षिणात्याश्च सर्वशः। तथाऽपरान्ताः सौराष्ट्राः शूद्राभीरास्तथार्बुदाः। मारुकामालवाश्चैव पारियात्रनिवासिनः। सौवीराः सैन्धवा हूणाःसाल्वाः शाकलवासिनः। मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा। आसां पिबन्ति सलिलं वसन्ति सहिताः सदा। चत्वारि भारते वर्षे युगान्यत्र महामुने!। कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित्। तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः। दानानि चात्र दीयन्ते परलोकार्थमादरात्। पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते। तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने!। यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः। अत्र जन्मसहस्राणां सहस्रैरपि सत्तम!। कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्। गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात्। कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे। अवाप्य तां कर्ममहीमनन्ते तस्मिंल्लयं ये त्वमलाः प्रयान्ति। जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम्। प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते चेन्द्रियसङ्गहीनाः। नववर्षन्तु मैत्रेय! जम्बूद्वीपमिदं मया। लक्षयोजनविस्तारं संक्षेपात् कथितं मया" ४तृणग्रन्थि पुंन० स्त्री० स्वार्थे कन्। तृणास्थिभेदे स्त्री अमरः। तृणकन्देऽपि स्त्री रत्नमाला "कशेरुकद्वातिशुक्रं संग्राहकं यथाह सुश्रुतः। दिवास्वप्ने स्वाद्युपक्रमे "कशेरुकशृङ्गाटकमधुकबलोफलसमशनाध्यशनप्रभृतिभिः श्लेष्मा कोपमापद्यते"। एतद्वच कृशचरमांसभोजनेऽनुपानम् यथाह अनुपानवर्गे सुश्रुतः "कृशचराणां शृङ्गाटककशेरुकासवः"। इदञ्च सुश्रुते मधुरवर्गे उक्तम्। तद्वाक्यं मधुरवर्गे द्रष्टव्यम्। एतस्य श्लेष्मपित्तप्रकोपकत्वेन क्रिमिकारित्वमुक्तम् सुश्रु० "माषपिष्टान्नविदलबिसशालूककशेरुकैश्च पक्वे "श्लेष्मा पित्तं च कुप्यति। क्रिमीन् बहुविधाकारान् करोति विविधाश्रयान्"।

कशेरुमत् पु० यवनराजभेदे। "इन्द्रद्युम्नोहतः कोपाद् यवनश्च कशेरुमान्" हरिवं० १६ अ०। भा० स० १२अ०।

कशोक त्रि० कश-ताडने वा० ओक। हिंसके राक्षसादौ "मा त्वा दभन् दूरे वासः कशोकाः" अथ० ५,२,४।

कश्चन अव्य० कः+चिदर्थे चन इति मुग्ध०। पाणिन्यमरमते पृथक् पदमिति भेदः। (केचो) इत्यर्थे "दमघोषसुतेन कश्चन प्रतिषिद्धः प्रतिशासनादभाव" माघः। चित्। कश्चिदप्यत्र अव्ययैकपदं द्विपदं चेति भेदः। "कश्चित् कान्ताविरहगुरुणा स्वाधिकारे प्रमत्तः" मेघ०।

कश्मल न० कश-कल मुट् च। १मूर्च्छायां, २मोहे, "कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्" गीता। "मा राजन्! कश्मलं घोरं प्राविशो बुद्धिनाशनम्" भा० व० ३४ अ०। वेदे पृषो० लस्य शः। कश्मश तत्रार्थे "विद्वेष कश्मशं भयमनिश्रेषु निदध्मसि" अथ० ३पापे च शब्दमा० ४मलिने त्रि० हेम०।

कश्मीर पु० कश-ईरन् मुट् च। स्वनामख्याते देशभेदे। ततो भवादौ कच्छा० अण्। काश्मीर तद्देशभवे त्रि०। कश्मीरोऽभिजनोऽस्य तक्षशिला० अञ्। काश्मीर पितादिक्रमेण तद्देशवासिनि त्रि० स्त्रियामपत्ये ङीप्। तस्य राजन्यपि तथा। बहुषु तु तस्य लुक्। कश्मीराः। स्त्रियां अवन्त्यादि० न लुक्। काश्मीरी। "अत ऊर्द्ध्वं जनपदान् निबोध गदतो मम" इत्युपक्रमे "कश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा" भा० भी० ९अ० जम्बुखण्डविभागे देशकीर्त्तने। तद्देशसीमादि शक्तिसङ्गमतन्त्रे ७पटले उक्तं यथा—"शारदामठमारभ्य कुङ्कुमाद्रितटान्तकः। तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः"।

कश्मीरजन्मन् न० कश्मीरदेशे जन्म यस्य। कुङ्कुमभेदे। कश्मीरजादयोऽप्यत्र। तद्भेदगुणादि भावप्र० उक्तं यथा—"कुङ्कुमं मसृणं रक्तं काश्मीरं पीतकं वरम्। सङ्कोचं पिशुनं धीरं वाह्लीकं शोणिताभिधम्। कश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्। वाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरमतम्। केतकीगन्धयुक्तन्तत् मध्यमं सूक्ष्मकेशरम्। कुङ्कुमम्पारसीके यत् मधुगन्धि तदीरितम्। ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम्। कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित्। तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम्"

कश्य न० कशत्यनेन कश-शब्दे वा० करणे यत्। १मद्ये वैज०। मद्यपानेन यथेष्टशब्दकरणात् तथात्वम्। कशामर्हति दण्डा० यत्। २कशाघातयोग्ये अश्वमध्यभागे त्रि० अमरः।

कश्यप पु० कश्यं पिबति पा—क उप० स०। ब्रह्मणो मानसपुत्रस्य मरीचेः पुत्रे ऋषिभेदे तस्य तन्नामनिरुक्ति-

वंश्या—"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यपः" मार्कण्डे० पु०। तस्य वंशादिकथा "ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत!। एतासां वीर्यसम्पन्नं पुत्रपौत्रमनन्तकम्" भा० आ० ६५ अ०। एतासामपत्यभेदास्तत्तच्छब्दे दृश्याः। "कश्यपाय त्रयोदश" मनुः।

तस्य च वंशादिकथा भाग० अन्यथैवोक्ता यथा—"पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पौर्णमासं च ययोरापूरितं जगत्" भाग० ४,१,१३ श्लो०। तत्र तत्पत्नीनां दक्षप्रजापतिकन्यानां नामभेदः नामान्तरेण तार्क्ष्यनामकस्य तस्य च अन्या अपि चतस्रः दक्षकन्याः पत्न्य आसन् इति ६स्क० उक्तं यथा-"ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा। षष्टिं सञ्जनयामास दुहितॄः पितृवत्सलाः। दश धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान्। भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः" "नामधेयान्यमूषां त्वं सापत्यानाञ्च मे शृणु" इत्युपक्रमे (काय कश्यपाय द्विषट् षड्द्विगुणाः द्वादश त्रयोदशत्वार्थः श्रीधरः) उत्तरत्रादित्यादीनां त्रयोदशानां वंशकीर्त्तनस्यार्थः। "तार्क्ष्याय नामान्तरं प्राप्ताय कश्यपायैव अपरा अवशिष्टाश्चतस्रः इति" श्रीधरः) "तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनीत्यपि। पतङ्ग्यसूत पतगान् यामिनी शलभानथ। सुपर्णाऽसूत (विनता) गरुडं साक्षाद् यज्ञेशवाहनम्। सूर्य्यसूतमनूरुञ्च कद्रूर्नागाननेकशः" इति। तार्क्ष्यनामककश्यपस्य पत्नीचतुष्टयं प्रसिद्धनामककश्यपस्य पत्नीपुत्रनामादिकन्तु यथा तत्रैव

"अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्। अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला। मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः। तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः। सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप!। ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः। दन्दशूकादयः सर्पा राजन्! क्रोधवशात्मजाः। इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः। अरिष्टायास्तु गन्धर्वाः काष्ठाया द्विशफेतराः। सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु। द्विमूर्द्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः। अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः। पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः। धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः। स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल। वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली। वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः। उपदानवी हयशिरा पुलोमा कालका तथा। उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप। पुलोमां कालकाञ्च द्वे वैश्वानरसुते तु कः। उपयेमेऽथ भगवान् कश्यपो ब्रह्मचोदितः। पौलमाः कालकेयाश्च दानवा युद्धशालिनः। तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता (अर्जुनः)। जघान स्वर्गतो राजन्नेक इन्द्रप्रियङ्करः। विप्रचित्तिः सिंहिकायां शतञ्चैकमजीजनत्। राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः। अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः। यत्र नारायणो देवः स्वांशेनावतरद्विभुः। विवस्वानर्य्यमा पूषा त्वष्टाऽथ सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः। विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम्। मिथुनञ्च महाभागा यमं च यमुनां तथा। सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि। छाया शनैश्चरं लेभे सावर्णिञ्च मनुं ततः। कन्याञ्च तपतीं या वै वव्रे संवरणं पतिम्। अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः। यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता। पूषानपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा। योऽसौ दक्षाय कुपितं जहास विवृतद्विजः। त्वष्टुर्दैत्यात्मजा भार्य्या रचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान्। तं वव्रिरे सुरगणाः स्वस्रीयं द्विषतामपि। विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत्" भाग० ६,६ अ०। कश्यपस्यैव तत्पत्नीनामपि नामान्तरकल्पनया विरोधः परिहरणीयः।

तस्य हविष्याः प्रतिग्रहरूपेण प्राप्तिकथादि भा० हरिवं० ५२। यथा"भार्गवेण पितुः श्राद्धे कश्यपाय निवेदिता। मांसमेदोऽस्थिदुर्गन्धा दिग्धा क्षत्रियशोणितैः। रजस्वलेव युवतिः कश्यपं समुपस्थिता। स मां ब्रह्मर्षिरप्याह किसवि! त्वमवाङ्मुखी। वीरपत्नीव्रतमिदं धारयन्ती विषीदसि। ततोऽहं विप्रलपितवती कश्यपं लोकभावनम्। पतयो मे हता ब्रह्मन्! भार्गवेण महात्मना। साहं विहीना

विक्रान्तैः क्षत्रियैः शक्तुहस्तिभिः। विधवा शून्यनगरा न धारयितुमुत्सहे । तन्मह्यं दीयतां भर्त्ता भगवंस्त्वत्समो नृपः । रक्षेत् सग्रामनगरां यो मां सागरमालिनीम् । स श्रुत्वा भगवान् वाक्यं वाढमित्यब्रवीत् प्रभुः। ततो मां मानवेन्द्राय मनवे संप्रदत्तवान् । सा मनुप्रभवं पुण्यं प्राप्येक्ष्वाकुकुलं महत् । विपुले नास्मि कालेन पार्थिवात् पार्थिवं गता । एवं दत्तास्मि मनवे मानवेन्द्राय धीमते । भुक्ता राजसहस्रैस्तु महर्षिकुलसम्भवैः। बहवः क्षत्रियाः शूरा मां जित्वा दिवमाश्रिताः" । अयं च गोत्रप्रवर्त्तकः। आर्षशब्दे गोत्रशब्दे च विवृतिः। "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु० ३,६२ । "कश्यपस्यैतन्नामकस्य प्रजापतेः" वेददी० । तस्यापत्यानि विदा० अञ्, बहुषु लुक् । कश्यपाः तद्गोत्रापत्येषु "कश्यपानां काश्यपावत्सारासितेति" । "कश्यपासितदेवलेति वा" ८ । "शाण्डिल्यानां कश्यपशाण्डिल्ययोः" आ० श्रौ० १२,१४,७ । "एते कश्यपाः । एतेषां परस्परमविवाहः" नारा०।

काश्यपिर्गरुड़ाग्रजः इत्यत्र तु मत्वार्थे इञ् ।

१मृगभेदे २मत्स्यभेदे च मेदि० स्त्रियां जातित्वात् ङीष् । ३कच्छपे "कृपाद्भ्यो मासां कश्यपः" यजु० २४,३७ । "कश्यपः कच्छपः" वेददी० । ४श्यावदन्ते त्रि० । "प्रसृप्रेभ्यश्चान्यत् कलककश्यपश्यावमानवर्ज्जम्" कात्या० १०,२,३१ । "कश्यपशब्दं बधिरं मन्यन्ते कश्यपश्च श्यावदन्तमिति केचित्" कर्कः ।

**काश्यपनन्दन** पु० ६त० । गरुडे हेमच० । कश्यपसुतादयोऽप्यत्र

**कष** वधे भ्वा० पर० सक० सेट् वधोऽत्र निष्पीड़नं घर्षणञ्च । कषति अकषीत्–अकाषीत् । चकाष प्रनिकषति । "अदृश्येन कषन्निवाकमत् कषपाषाणनिभे नभस्तले" नैष० । अस्य परस्मैपदिषु पा०ग०पाठात् शब्दकल्पद्रुमे च तथा पाठात् आ० उक्तिर्भ्रान्तिमूला । 'पाषाणं कषमाणम्' इत्यादिप्रयोगस्तु ताच्छीलिकचानशोपपत्तेः । "निमूलसमूलयोः कषः" "कषादिषु यथाविध्यनुप्रयोगः" पा० णमुल् अनुप्रयोगश्च । निमूलकाषं कषति समूलकाषं कषति समूलं निमूलं वा कषतीत्यर्थः सि० कौ० "समूलकाषं चकषुरदन्तः" भट्टिः । "सर्व्वकूलाभ्रकरीषेषु कषः" पा० कर्म्मरूपेषु उपपदेषु खच् । सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः"

**कष** पु० कष–अच् । स्वर्णवर्णरूपज्ञानार्थे (कष्टी) पाषाणभेदे इतरपदस्तरस्य स्वर्णेन घर्षणात्तस्य तथात्वम् । अन्वादेरलोकरणसाधने शाणाख्ये पदार्थे अमरः । "कषपाषाणनिभे नभस्तले" नैष० "सुवर्णरेखेव कषे निवेशिता" मृच्छ० ।

**कषण** त्रि० कष्यते कष–कर्मणि ल्युट् । १अपक्वे यवादौ शब्दच० । भावे ल्युट् । २घर्षणे ३चालने न० । "कषणकम्पनिरस्तमहाहिभिः" माघः । "कषणेन कम्पनेन" मल्लि०

**कषा** स्त्री कष्यते ताड्यतेऽनया कष–बा० करणे अच् । अश्वादेस्ताड़नसाधने चर्म्मादिनिर्म्मिते पदार्थे (चाबुक) रत्नमाला । "कश्येव पृष्ठे कषया च ताडितः" भाग० ३,३०,२२ ।

**कषाकु** पु० कष–आकु । अग्नौ सूर्य्ये च उणादिको० ।

**कषाय** पु०न० कषति कण्ठम्, कष–आय–अर्द्धर्चादि । (कषा) १रसभेदे २तद्वति त्रि० । तस्य कारणगुणादि सुश्रुते उक्तं यथा—"तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणोवायुस्तस्य समानयोनिः कषायो रसः सोऽस्य शैत्यात् शैत्यं वर्द्धयति, रौक्ष्यात् रौक्ष्यं, लाघवात् लाघवं, वैशद्यात् वैशद्यं, वैष्टम्भ्यात् वैष्टम्भ्यमिति" "योवक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कषति पीडयति च स कषायः" । "कषायः संग्राहकोरोपणः स्तम्भनः शोधनालेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति । स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानः पीड़ास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जनयति" इति च । कषायवर्गश्च । "न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादीरोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रवकुलतिन्दुकफलानि कतककशाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि नीवारकादयोमुद्गादयश्च समासेन कषायोवर्गः" सुश्रु० । अस्योत्पत्तिकारणमपि तत्रोक्तं यथा—"तस्मादाप्योरसः परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम् । स खल्वाप्योरसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते" इत्युपक्रम्य । "पृथिव्यनिलगुणबाहुल्यात् कषायः" इति । तत्र तस्य च पित्तकफघ्नत्वमपि तत्रैवोक्तम् "मधुरतिक्तकषायाः पित्तघ्नाः; कटुतिक्तकषायाः श्लेष्मघ्नाः" इति । "केचिदाहुरग्नीषोमीयत्वाज्जगतो रसाः द्विविधाः सौम्या आग्नेयाश्च, तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः मधुराम्ललवणाः स्निग्धाः गुर-

च कटुतिक्तकषाया रूक्षा लघवश्च । सौम्याः शीता आग्नेयाश्चोष्णाः" इति सुश्रुते अन्यमतेनोक्ता तच्च दूषयित्वा पूर्वदर्शितमतमादृतम् भावप्र० तद्वेतद्दर्शितम् यथा– "कषायो रोपणो ग्राही स्तम्भनः शोधनस्तथा । लेखनः पीडनः शोष्यः शोषणो वातकोपनः । कफशोणितपित्तघ्नो रूक्षः शीतो लघुर्मतः । त्वक्प्रसादनमास्यस्य स्तम्भनो विषदो मतः । जिह्वाया जाड्यकृत् कण्ठस्रोतसाञ्च विबन्धकृत्" । रोपणः व्रणस्य, स्तम्भनो गात्राणां, शोधनो व्रणस्य, लेखनो व्रणाद्युत्सन्नमांसस्य, शोषणोव्रणमज्जादीनाम् । पीडनो हृदयस्य वातकारित्वात्, शौष्यः शोषाद्युत्पन्नः" । कषातियुक्तस्य कषायस्य गुणास्तत्रोक्ताः "सोऽतियुक्तो गुदाध्मानहृत्पीडाक्षेपकादिकृत्" । अभयावामन विशेषः । "प्रायशः स्तम्भनं प्रोक्तं कषायमभयां विना" । २रागद्वेषादिदोषे । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति" छा० उ० । "तस्मै मृदितकषायाय वार्क्षारादिरिव कषायो रागद्वेषादिदोषः, सत्त्वस्य रञ्जनरूपत्वात् ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितोच्छेदितो विनाशितो यस्य नारदस्य तस्मै" भा० । "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते" वेदा० प० कर्मणां रागद्वेषादिदोषरूपकषायनाशकत्वमुक्तम् । "लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः" इति वेदान्तसारोक्तलक्षणे ४निर्विकल्पकसमाधिविघ्नभेदे "सकषायं विजानीयात् समप्राप्तं न चालयेत्" । "सकषायं कलुषितं मे चित्तमिति, विचार्य शमेऽहितो वात्मनि निवेशयेत्" विद्वन्म० । ५रक्ते अनुरागान्विते ६सुरभौ ७अपटौ च केशवः । "चूताङ्कुरास्वादकषायकण्ठः" कुमा० । "कषायः रक्तः" मल्लि० । "निद्राकषायितविपाटलकोचनेषु" माघः "कषायितान्यपटूकृतानि" मल्लि० । ८रागे ९क्वाथभेदे १० निर्यासे च "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" हैम० । कषायः जातोऽस्य तार० इतच्, तत्करोतीति णिच्–कर्मणि क्त वा । कषायित जातकषाये कषायीकृते च त्रि० "अमुनैव कषायितस्तनी" कुमा० "कषायितः रञ्जितः" मल्लि० । ११विलेपने १२अङ्गरागे च विश्वः । "कर्णार्पितो लोध्रकषायरूक्षे" कुमा० "कषायेण विलेपनेन" मल्लि० ।

कषायस्य स्वरसादिकः पञ्चविधः भावप्र०दर्शितो यथा । "स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ । ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" तेषां पञ्चानां लक्षणानि तु तत्तच्छब्दे दृश्यानि । १३श्योनाकवृक्षे पु० जटाधरः । १४कलियुगे अमरटीका रागदोषहेतुत्वात्तस्य तथात्वम् १५लोहितवर्णयुक्ते त्रि० मेदि० १६रक्तपीतमिश्रितवर्णे अमरटीका । १७धववृक्षे पु० राजनि० १८क्षुद्रदुरालभायां स्त्री राजनि० । देशे गव्ये अपात् पानयज्ञस्य फलम् । कषायपाणोदेशभेदः ।

कषायपाक पु० सुश्रुतोक्ते द्रव्यविशेषाणां क्वाथभेदे । तत्प्रकारो यथा "केचिदाहुस्त्वक्पत्रमूलादीनां भागमष्टगुणजलमावाप्य,चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः" इति परमतमुक्त्वा "एतत्तु न सम्यक्" इति तन्मतं दूषयित्वा द्रव्यपरिमाणभेदं दर्शयित्वा च "तत्रान्यतमपरिमाणसम्मितानां यथायोगं त्वक्पत्रमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा, भेद्यानि अणुशोभेदयित्वाऽष्टगुणेन षोडशगुणेन वा जलेनाभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्वाथयित्वाऽपहरेदित्येष कषायपाककल्पः" इति स्वमतेनोक्तम् । पक्षान्तरमप्युक्तम् "अथ वा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः" इति, । अयञ्च कल्पो विशेषानुक्तविषये विशेषनिर्देशे तु तथैव ग्राह्यः" यथाह तत्रैव "स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम् । तत्रायं विधिराख्येयो निर्दिष्टे तत्तदेव तु । अनुक्तद्रव्यकार्ये तु सर्वत्र सलिलं मतम् । कल्कक्वाथावनिर्देशे गणात्तस्मात् विनिर्दिशेत्" । [भेदे राजनि० ।

कषाययावनाल पु० नित्यकर्म० । तुवरयावनाले धान्य-

कषायवासिक पु० सुश्रुतोक्ते कीटभेदे । "कणभोमुषः कृष्णगोधा यश्च कषायवासिकः" इत्युपक्रमे "त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः इति विभज्य–तेषां सौम्यत्वं श्लेष्मप्रकोपकत्वञ्चोक्तम् "तत्र सकम्पविषलक्षणमुक्तं यथा "पिपिटपिष्टककषायवासिकवर्णकतोटकवर्चःकीटकौण्डिन्यकाः श्लेष्मविषाः" ।

कषायित त्रि० कषायो रक्तपीतवर्णादिर्जातोऽस्य तार० इतच् । जातकषाये तत्करोतीति णिच्– कर्मणि क्त । कषायीकृते च "अमुनैव कषायितस्तनी" इति कुमा० ।

कषायिन् पु० कषायो निर्यासोऽस्त्यस्य इनि । १शालवृक्षे जटा० २खर्जूरवृक्षे ३लकुचवृक्षे च राजनि० । ४कषाययुक्ते त्रि० ।

**कषि** त्रि० कष–हिंसायां इन्। हिंसाकारके उणादिकोषः।

**कषीका** स्त्री कष–हिंसने “कषिदूषिभ्यामीकन्” उणा० कर्मणि ईकन्। १पक्षिजातौ उज्ज्वल०। शब्दकल्पद्रुमे ह्रस्वमध्यपाठः प्रामादिकः उणादिसूत्रे ईकनो दीर्घतया निर्देशात्। इत उत्तरत्र फणीकादयश्चत्वादौ सर्वत्र दीर्घादेरेवानुवृत्तेः दीर्घादेरेवोचितत्वात्। कषत्यनया करणे ईकन्। २खनित्रे स्त्री शब्दचि०।

**कषेरुका** स्त्री कशेरुकावत्। (केशुर) तृणकन्दे रायमुकुटः।

**कष्कष** पु० कषिमव्यक्तं शब्दमव्याप्य कषति कष–हिंसने अच्। कृमिभेदे। “येरायासः कष्कषास एजत्काः शिपवित्नुकाः। दृष्टश्च हन्यतां कृमिरुतादृष्टश्च हन्यताम्” अथ० ५,२३,७।

**कष्ट** न० कष–क्त “कृच्छ्रगहनयोः कषः” पा० नेट्। १पीडायाम् व्यथायाम्, ‘कष्टं युद्धे दश शेषाः सुता मे” भा०आ०२श्लो०।“एतस्य कष्टस्य न यावदन्तम्”पञ्चत०। २पीडायुक्ते ३गहने ४पीडाकारके च त्रि० “बन्धनानि च कष्टानि परप्रेष्यत्वमेव च”मनुः। “मोहादभूत् कष्टतमः प्रबोधः”रघु०।“शीतातपादिकष्टानि सहतेऽन्यानि सेवकः” पञ्चत०“ततः कष्टतरं नु किम्” गीता। “एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे”। “क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं बुधाः” मनुः। ५कष्टसाध्ये बहूपायेन साध्ये रिपुरोगादौ। ‘स हि कष्टतमो रिपुः” “कृतज्ञं धृतिमन्तं च कष्टमाहुररिं बुधाः”मनुः। रोगाणां कष्टता च बह्वायाससाध्यता यथोक्तं सुश्रुते“केवलः समदेहाग्नेः सुखसाध्यतमो गदः। अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः। गुणालाभेऽपि सपदि यदि सैव क्रिया हिता। कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि”। तथा च रोगः त्रिविधः साध्यः असाध्यः याप्यश्च। तत्र साध्योऽपि द्विविधः अल्पायाससाध्योबह्वायाससाध्यश्च बह्वायाससाध्यस्यैव कष्टता। कष्टसाध्याश्च रोगाः सुश्रुते तत्तत्स्थाने उक्तास्तत एवावसेयाः। ६कष्टसाधने पापे च। “कष्टाय क्रमणे” पा० क्यङ् “कष्टायते कष्टं पापं कर्त्तुमुत्सहते इत्यर्थः” सि० कौ०। अलङ्कारोक्ते ७दोषभेदे यत्र सन्ध्यादिना अर्थस्य दुर्बोधत्वं तत्र कष्टत्वम् ‘कष्टं तदर्थावगमोदुरायत्तोभवेद् यदि” इत्युक्तलक्षणात् तच्च सन्धिकृतम् अतएव सा० दर्पणे “धम्मो विद्वे मोश्रीलवटताः”इत्युक्तोदाहृतम्“उर्व्यसावत्र चार्वङ्गि! मर्त्ये चार्वञ्चितिः” इदन्तु वाक्यगतम्। क्लिष्टत्वमस्यैव नामान्तरं “अर्थावकत्वं क्लिष्टत्वमिति” सा० द० पदगतदोषे उक्तं “क्षीरोदजावसतिजन्मभुवः प्रसन्नाः” इति अत्र अर्थप्रतीतेर्व्यवहितत्वमिति तत् लक्षयित्वा क्षीरोदजालक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि” अर्थावबोधे व्यवधानं दर्शितम्। [त्रिका०। २पीडाकारके त्रि०।

**कष्टकार** पु०कष्टं करोति कृ–अण् उप०स०। १संसारे

**कष्टरिपु** पु०कर्म०। कष्टसाध्ये रिपौ स च मनुनोक्तलक्षणो यथा“प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च। कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः” इति।

**कष्टस्थान** न० कष्टस्य स्थानम्। दुःखदस्थाने हारा०।

**कस** गतौ भ्वा० पर० सक० सेट्। कसति अकसीत्–अकासीत्। चकास–अकसादित्वात् कर्त्तरि वा ण। कासः। यङ् चनीकस्यते यङ् लुक् चनीकसीति–कंस्ति। प्रनिकसति

उद्+कस गतौ “उत्कसन्तु हृदयान्यूर्ध्वं प्राण उदीषतु” अथ० ११,८,२१”।

निस्+निर्+अपगतौ निष्कसति। णिचि निष्कासयति “निरकासयद्रविमपेतवसुम्” माघः।

वि+प्रकाशे। विकसति पङ्कजकलिका “फुल्लश्चैते विकसिते” अमरः “स प्रीतियोगात् विकसन्मुखश्रीः” कुमा०। “अथ दृष्टिपातविकसद्वदनाम्” माघः। “विकसद्भिरास्यकमलैः कमलैः प्रमदाः” माघः “मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्” मालतीमा०। णिचि विकासयति व्यचीकसत्। “पवनेन चोपकुसुमं व्यचीकसत्” माघः। “वौ कषल सेस्र०” पा० इनि विकासी। वरच्। विकस्वरः “सदा रमन्ते कमला विकस्वरैः” माघः।

अनु+वि+अनुरूपविकासे “अन्तर्जलेऽनुविकसन्मधुमाधवीनाम्” भाग० ३,१५,१७।

प्रवि+प्रकर्षविकासे प्रविकसति “चिरायद्योतिताशेषलोके”माघः

सम्+सम्यग्गतौ सङ्कसुकः।

**कस** शातने गतौ च अदा० इदित् आत्म० सक० सेट्। शातनमिह नाशनम्। कंस्ते अकंसिष्ट। चकंसे। प्रनिकंस्ते। कर्मणि कंस्यते। अकंसि।

**कस** शातने गतौ च सक० अदा० आत्म० सेट्। शातनमत्र नाशनम्। कस्ते अकसिष्ट। चकसे प्रनिकस्ते।

**कस** पु० कस–अच्। (कसटीपाथर) कषपाषाणे भरतः।

**कासन** पु॰ कसति हिनस्ति कस-ल्यु । १कासरोगे २लूता-भेदे स्त्री ।"कासमूत्रविषा कृष्णा कसना चाष्टमी स्मृता" सुश्रु॰ लूताभेदकथने । "पिच्छिला कसनादंशात् रुधिरं शीतलं स्रवेत्" सुश्रु॰ ।

**कासनोत्पाटन** पु॰ कसनं कासरोगम् उत्पाटयति उत्-पाटि-ल्यु । वासकवृक्षे, शब्दच॰ । "येन तेन प्रकारेण वासकः कासनाशकः" इति वैद्योक्तेस्तस्य तथात्वम् ।

**कासर्णीर** पु॰ सर्पभेदे । "एतं कसर्णीरः काद्रवेयो मन्त्र-मपश्यत्" तैत्ति॰ सं॰ १,५,४,१ । रस्य लत्वमपि "पैद्वो हन्ति कसर्णीलम् पेद्वः श्वित्रमुतासितम्" अथ॰ १०,४,५ । विषनाशकस्ते ।

**कासाम्बु** न॰ पितृभ्यः कव्यदानकाले देये जले । "उपा-सते पितरः स्वधाभिः" इत्युपक्रमे "इदं कसाम्बु चयनेन चितं तत्सजाता अवपश्यतेत" अथ॰ १८,४,३७ ।

**कासिपु** पु॰ कशिपुवत् । अन्ने जटाधरः ।

**कासेरु** पु॰ कस-उ एरुगागमः । १कशेरौ, (केशुर) शूकरस्य प्रिये २जलकन्दभेदे च ।२कशेरुशब्दार्थे च राजनि॰।

**कासेरुका** स्त्री कशेरुकावत् । १पुत्रदास्त्री राजनि॰ ।

**कास्कादि** पु॰पाणिन्युक्ते विसर्जनीयस्य सत्वनिमित्ते शब्दगणे स च गणः "कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुन-स्कर्णः सद्यस्कालः सद्यस्क्रीः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालं बर्हिष्पलं यजुष्पात्रं अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः आकृतिगणः"

**कास्तम्भी** स्त्री कं शिरोऽग्रभागं स्तभ्नाति स्तम्भ-अण् गौरा॰ ङीष् सुग्ध॰ षष्ठ्यर्थे । शकटस्याधःपतनवार-णार्थं सोपादस्त्राप्योत्तम्भनार्थायां मेधौ "अथ शल्यसंग्ने कस्तम्भीम्"शत॰ब्रा॰ १,१, २,९ । "शकटस्याधःपतनं वारयितुमीषादण्डायोत्तम्भनार्था मेधिः कस्तम्भी" भा॰।

**क(का)स्तीर** न॰ ईषत्तीरमत्र कुगति॰ समा॰ कोः कादेशः "कास्तीराजस्तुन्दे नगरे"पा॰सूट् ।१नगरविशेषे२तज्जाते रङ्गे हेम॰ । हेमचन्द्रे कस्तीरमिति ह्रस्वपाठः प्रामा-दिकः पा॰ सूत्रे कास्तीरे दीर्घपाठदर्शनात् ।

**कास्तूरी** स्त्री कसति गन्धोऽस्याः दूरतः कस-ऊर-बा॰ तुट् च । मृगमदे मृगनाभिजाते गन्धद्रव्यभेदे स्वार्थे कन् । कस्तूरिका तत्रैव "तद्गुणपर्य्यायादि भावप्र॰उक्तं यथा—"मृगनाभिर्मृगमदः कथितस्तु सहस्रभित् । कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता । काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता । कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् । कामरूपोद्भवा कृष्णा नैपाली नीलवर्ण-युक् । काश्मीरदेशसम्भूता कस्तूरी त्वधमा मता । कस्तू-रिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः। कफवातविष-च्छर्दिशीतदौर्गन्ध्यशोषहृत्" । "मत्स्यं हिमाद्रेर्मृगनाभि-गन्धि"कुमा॰ श्लोकव्या॰ मल्लिनाथेन "मृगनाभिःकस्तूरी तद्गन्धि कस्तूरीमृगाधिष्ठानादित्युक्तं तेन हिमाद्रावपि तन्मृगस्य सञ्चारोऽस्तीति गम्यते । "कस्तूरीतिलकं ललाटपटले" विष्णुमूर्त्तिवर्णने ।"कस्तूरिकाजननशक्तिभृता मृगेण किं सेव्यते सुमनसां मनसापि गन्धः" रसग॰ । "कस्तूरिकामृगविमर्दसुगन्धिरेति"माघः । कस्तूरिकाहेतु-र्मृगः कस्तूरिकामृगः ।

**कास्तूरी(म)वल्लिका** स्त्री कस्तूरीगन्धयुक्ता म(व)ल्लिका । (मुसकदाना) लताभेदे राजनि॰यमध्यपाठः भावप्र॰सम्मतः। तद्गुणा भावप्र॰उक्ता यथा । "लता कस्तूरिका तिक्ता स्वादी वृष्या हिमा लघुः । चक्षुष्या भेदिनी श्लेष्मतृष्णा वस्त्यास्यरोगहृत्" अत्र लतेति विशेष्यपदोक्तेः कस्तूरिका वल्लिकेत्येवेत्युचितम् ।

**कास्मल** न॰ कश्मलवत् । पापाद्यर्थे रायमुकुटः ।

**कास्वर** त्रि॰ कस-गतौ शातने च वरच् ।१गन्तरि २हिंसके च

**काहय** पु॰ कस्य सूर्य्यस्य हयः । सूर्य्याश्वे तस्यापत्यम् शिवा॰ अण् । काहय तदपत्ये पुंस्त्री । पाणिनिगणे कह्वेति पाठः साधुः ।

**काह्नय** पु॰ह्वे-क्यप् हूयः कः सूर्य्यो हूयो यस्य । सूर्य्यह्वायके ऋषिभेदे । तस्यापत्यं शिवा॰अण् । काहूय तदपत्ये पुंस्त्री ।

**काहोड** पु॰ ऋषिभेदे स च उद्दालकर्षिशिष्यः अष्टावक्रस्य पिता । "उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्" भा॰ व॰ १३२अ॰ । अधिकमष्टा-वक्रशब्दे दृश्यम् । वा डस्य लः कहोलोऽप्यत्र । ततः अनुकम्पायां नीतौ च वा ठक् द्वितीयाजादेः सन्ध्यक्षरस्य च लुक् । कहिक अनुकम्पितकहोडे । वा इल । कहिल । च । कहिय इत्यादिरपि तत्रार्थे ।

**काह्लार** न॰ के जले ह्लादते ह्लाद-अच् पृषो॰ दस्य रः । श्वेतोत्पले । "आह्लादिकह्लारसमीरणाहिते" माघः । "नववकुलकह्लारचन्द्रोत्पलपद्मकैः" सुश्रु॰ । तस्य गुणादि उत्पलशब्दे उक्तम् ।

**काह्व** पु॰कं जलं ह्वयति स्पर्द्धते शुक्लरूपत्वात् ह्वे-क । बके अमरः। अस्यैव शिवादिगणे पाठमते अपत्ये अण् । काह्व तदपत्ये पुंस्त्री ।

**कांशि** पु० कंस भवार्थे बा० इञ् वेदे पृषो० सस्य शः। कंसनिर्मिते पात्रे "त्रींस्त्रीन् कंसींस्त्रिरात्रं, द्वौ द्वौ त्रिरात्रं चैकैकं षडात्रम्" कौषी०सू०।

**कांस** त्रि० कंसोदेशभेदोऽभिजनोऽस्य तक्षशिला० अण्। कंसाख्यितभोजदेशाभिजने नरादौ।

**कांस्य** न० कंसाय पानपात्राय हितं कंसीयं तस्य विकारः अण् छलोपः। ताम्ररङ्गजधातुभेदे कंसशब्दे विवृतिः। "न पादौ धावयेत् कांस्ये कदाचिदपि भाजने" मनुः। अस्य शोधनविधिर्भावप्र० उक्तो यथा—"पत्त्रीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत्। निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा। एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते"। मारणविधिस्तत्रैव "अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत्। समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः। ततो मूषापुटे धृत्वा पचेद् गजपुटेन च। एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम्" तस्य गुणाः यथा—"कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम्। गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्" भावप्र०। "कांस्यमुपहितधरोलसापतत्" माघः।

**कांस्यकार** पु० स्त्री कांस्यं तत्पात्रं करोति कृ-अण् उप०स०। (काँसारि)। जातिभेदे जातित्वात् स्त्रियां ङीष्। कंसकारशब्दे विवृतिः।

**कांस्यनील** पु०। कांस्येन तत्र नीलः। (काँसकाजल) अञ्जन- [भेदे हेमच०।

**काक** पुंस्त्री कै-शब्दे कन्। स्वनामख्याते विहगभेदे स्त्रियां जातित्वात् ङीष् अपाङ्क्तयाजकयोः परतः ईत० पुंवत् काकापाङ्क्तः काकयाजकः। "काकाश्चौत्रं यस्मात् श्रौत्यम्" स्मृतिः "काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्" उद्भटः "काकः काकः पिकः पिकः" नीतिमा०। "काकाली कामसधुरा कागोलवाहिनी गङ्गा। कंसं जघान कृष्णः कम्बलवन्तं न बाधते शीतम्" विदग्धमु०। तन्मांसगुणा मदनपालेनोक्ता यथा—"काकमाससमं मांसं चक्षुष्यं दीपनं लघु। आयुष्यं बृंहणं बल्यं वातदोषत्रयापहम्" काकजङ्घायां काकतिक्तत्वोक्तेः तन्नाम्नस्य तिक्तत्वमपि बोध्यम्। राजनि० काकाङ्गेति काकजङ्घापर्यायोक्तेः २काकजङ्घायां पु० "काकजङ्घा तन्नग्राकारत्वात्तथात्वम्। कुत्सितमकति अक-अच् कोः कादेशः। ३पीठसर्पिणि(खोड़े)४काकप्रधाने द्वीपभेदे। कस्य शिरसः आक सेचनम् अक-घञ् ६त०। ५शिरोऽवक्षालने ६काकपदतुल्याकारे ७तिलकभेदे काकपक्षतुल्यात् स्थिते च शब्दरत्ना०। काकानाम् संघः अण्। ८काकसमूहे काकपदरूपे १०सुरतबन्धभेदे च न० मेदि०। काकपदशब्दे तल्लक्षणं दृश्यम्। ईषत् कं कोः। कादेशः। ११ईषज्जले। बहु० १२ईषज्जलयुक्ते त्रि०। काकसरा।

**काककङ्गु** पु० काकप्रियः कङ्गुः ईषज्जलयुक्तो वा कङ्गुः। (चीना) धान्यभेदे हेमच०।

**काककला** स्त्री काकस्य कला अवयवो जङ्घेवावयवो यस्याः। [काकजङ्घायाम् जटाध०।

**काकघ्नी** स्त्री काकं हन्ति ट टित्वात् ङीप्। १महाकरञ्जे राजनि०। तत्फलसेवने हि काकस्य नाशः।

**काकचिञ्चा** स्त्री कामवर्णा चञ्चा प्रान्तभागः फले यस्याः। पृषो०। गुञ्जायाम् अमरः। पृषो० काकचिञ्चिः, काकचिञ्ची, काकचञ्चाप्यत्र शब्दरत्ना०।

**काकच्छद** पुंस्त्री काकस्य च्छदः पक्ष इव छदः पक्षत्वात् यस्य। खञ्जनविशेषे स्त्रियां जातित्वात् ङीष्। बा० इच् समा०। काकच्छदिरप्यत्र त्रिका०।

**काकजङ्घा** स्त्री काकस्य जङ्घेवावयवो यस्याः। (केओयाठेङ्गा) ख्याते वृक्षभेदे। "काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा। पारावतपदी दासी काकाङ्गापि प्रकीर्त्तिता। काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित्। निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रमीन्" भावप्र० तत्पर्यायगुणाद्युक्तम्।

**काकजम्बु** स्त्री काकवर्णा जम्बुः। भूमिजम्ब्वाम् शब्दमा०। [(बडजाम) स्वार्थे कन् तत्रार्थे।

**काकजम्बू** स्त्री कं जलमकति उत्पत्तिस्थानत्वेन अक-अण् उप०स० काका काकवर्णा वा जम्बूः कर्म०। जलजातजम्बूभेदे राजनि०। तस्याः काकनीलेति जलजम्बुकेति पर्य्यायतोक्तेः तस्याः कृष्णवर्णफलकत्वाज्जलजातत्वाच्च तथात्वम् "क्षुद्रजम्बूः सूक्ष्मपत्रा नादेयी जलजम्बुका। जम्बूः संग्राहिणी रूक्षा कफपित्तास्रदाहजित्"। भावप्र० तत्पर्यायगुणाद्युक्तम्।

**काकण** न० सुश्रुतोक्ते महाकुष्ठभेदे। "महाकुष्ठान्यौदुम्बरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति" विभज्य। "काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकम्" इति लक्षितम्। अत्र स्वार्थे कन्। "सर्वैर्दोषैर्लक्षणैः प्राहुः काकणकं बुधाः" भावप्र० तन्निदानमुक्तम् "यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम्। त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति" काकणन्तिका गुञ्जा गुञ्जावर्णत्वेन मध्ये कृष्णम्, अन्ते रक्तम् अथवा मध्ये रक्तम् अन्ते

ञ्जनम्। अपाकं स्वभावात्, त्रिदोषजिद्गुण् सर्वेषां कुष्ठानां त्रिदोषजत्वेऽपि उत्कटदोषक्षयत्विद्गम्” भावप्र० वचितम्। अतएव पूर्ववाक्ये उल्वणदोषैरित्युक्तम्।

**काकणन्ती** स्त्री ईषत् कणन्ती निमीलन्ती कण–निमीलने शतृ ङीप कुगतिस० कोः कादेशः। गुञ्जायाम् शब्द०। तस्याः फलकोरस्य चक्षिमीलनात्तथात्वम्। “कोऽ मया चोभयत् यस्य रक्तं, तद्वाधनात् काकणन्तीदकान्यम्” शब्द० स्वार्थे कन्। काकणन्तिकाप्यत्र रत्नमा०। काकणशब्दे उदा०। “रक्तानि न्यग्रोधपरोहविद्रुमकाकणन्तिकाफलसदृशानि” सुश्रु०।

**काकतालीय** न० अवितर्कितसम्भवतुल्ये वाहच्छिकन्याये तद् गुणत्वादिर्यया “समासाच्च तद्विषयादिति” पा० छ। अथवादेव तापकादिवार्थे, सह सुपेति वा समासः। द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालम् काकतालमिव काकतालीयम् इत्तिवियदे काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ तत्र काकागमनं देवदत्तागमनस्योपमानम् तालपतनं दस्युनिपातस्य, तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानम् इति वधादिः काकतालीयादिशब्दवाच्यः सम्पद्यते। काकतालसमागमसदृशयोरसमागम इति समासार्थः तत्प्रयुक्तकाकमरणसदृशस्तु देवदत्तवधादिः छप्रत्ययार्थः। “यत्तया मेलनं तत्र लाभो मे यच तद्रते। तदेतत् काकतालीयमवितर्कितसम्भवम्” चन्द्रालोकः। “फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति” नैषी०।

**काकतिक्ता** स्त्री काकमांसवत् तिक्ता। काकजङ्घायां भावप्र० काकजङ्घाशब्दे विवृतिः। (कुँच) २गुञ्जायां रत्नमा०। तयोः काकमांसतुल्यतिक्तत्वात्तथात्वम्।

**काकतिन्दुक** पु० काकैरेवत्वलक्षात्नन्दुतिकेन्दुकः, काकप्रियो वा तिन्दुकः काकप्रियो वा तिन्दुकः। (कुँचिलिया) (माकड़ातेंदु) इति च प्रसिद्धे कुपीलौ भावप्र०। तत्पर्यायगुणादि तत्रोक्तं यथा “तिन्दुको यस्तु कथितो जलजो दीर्घपत्रकः। कुपीलुः कुलकः काकतिन्दुकः काकपीलुकः। कुपीलु शीतलं तिक्तं वातलं मदकृल्लघु। पादव्यथाहरं ग्राहि कफपित्तास्रनाशनम्” तत्र फलपरत्वात् न०। [ हेमच० ]

**काकतुण्ड** पु० काकतुण्डस्य वर्णोऽस्त्यस्य अच्। कालागुरुणि

**काकतुण्डफला** स्त्री काकतुण्डमिव फलमस्याः। काकनासायाम्” भावप्र०। काकनासाशब्दे विवृतिः।

**काकतुण्डिका** स्त्री काकतुण्डस्य वर्णः अर्हफलेऽस्याः ठन्। गुञ्जायाम् शब्दा०।

**काकतुण्डी** स्त्री काकम् ईषदर्कं ईषद्दुःखं तुण्डते तुड़ि क–बधे अण् उप०स०पा० गौरा०ङीष्, मुग्ध० पर् ईष् इति भेदः। १राजरीतो स्वपर्याय्ये पित्तले (गिलटीकरापितल) तस्य स्वर्णरूपतया दर्शनात् दुःखदायकत्वात् तथात्वम्। काकतुण्ड इवाकारोऽस्याः अच् गौरा०ङीष्। (केओयाठोटा) २काकनासाद्रव्ये च।

**काकदन्तगवेषण** पु० काकस्य दन्ताः सन्ति न वेति संशये तत्र वर्णभेदस्य संख्याविशेषस्य च गवेषणमिव अनर्थकः प्रयत्नो यत्र। निष्प्रयोजनान्वेषणयुक्ते न्यायभेदे।

**काकध्वज** पु० काकमोपज्जलं वाग्रं ध्वजवत्यस्य। बाड़वाग्नौ त्रिका०। तस्य समुद्रादुद्दनन्त्या ज्वालया जातत्वाद्यस्य तत्केतनतुल्यत्वात् तस्य तथात्वम्।

**काकनामन्** पु० काकेनापि नाम्यतेऽसौ नम–णिच्–कर्मणि कनिप्। वकवृक्षे रत्नमाला तस्य बहुशाखत्वेन काकारोहणेनापि नामित्वात् तथात्वम्।

**काकनास** पु० काकस्य नासा तदर्थः फलेऽस्य। विकङ्कतवृक्षे (बँइचि) राजनि०। तस्य फलस्य काकनासाकृतुल्यत्वात्तथात्वम्।

**काकनासा** स्त्री काकस्य नासेव फलमस्याः। काकजङ्घायाम् (केओठेङ्गा)। भावप्र० तद्पर्यायगुणाद्युक्तं यथा– “काकनासा कषायोष्णा कटुका रसपाकयोः। कफघ्नी वमनी तिक्ता शोथार्शःश्वित्रकुष्ठनुत्”।स्वार्थे कन्। काकनासिका तत्रार्थे अमरः। सा च त्रिवृति राजनि०।

**काकनीला** स्त्री काक इव नीला। जम्बूभेदे। राजनि०।

**काकन्दि(न्दी)** स्त्री देशभेदे। वा ङीप्। तत्र भवार्थे दीर्घान्तात् वुञ्। कादन्दक तत्र भवे त्रि०। २शब्दे यथा चित्रपचारात् तेचायुधजीविनः। संघपरत्वे ततः दामन्यादि० स्वार्थे छ। काकन्दीय तद्देशवासिनि आयुधजीविसंघे।

**काकपक्ष** पु० काकस्य पक्षः तदाकारोऽस्त्यस्य अच्। (काकपाटा) काकजुलपी) प्रसिद्धे शिरोऽधःकर्णधार्ये केशभेदे। “स दृसचूलचलकाकपक्षकैः” “काकपक्षधरमेत्य याचितः” “तौ प्रमाणदलकाकपक्षकौ” “काकपक्षधरेऽपि राघवे” इति च रघुः “काकपक्षधरो युवा” पद्मपु० रामवाक्यम्।

**काकपद** पु० “पादौ द्वौ स्कन्धयुग्मस्थौ क्षिप्रा लिङ्गं भगे तथा। कामयेत् कामुकां कामी बन्धः काकपदो मतः”

रतिमञ्जर्य्युक्ते १रतिबन्धभेदे । काकस्य पदं पदमानम् । २काकपदतुल्यपरिमाणे न० । तत्परिमाणेन शिरसि शिखास्थापनं स्मृतौ विहितम् । काकस्य पदाकारो ऽस्त्यस्य अच् । ३काकपदतुल्याकारे ग्रन्थलेखनकाले जातु भ्रमोपरिच्छिन्नपङ्क्तिलेखने पतितग्रन्थत्रुटिसूचके ४रेखाविशेषे । लेखकसम्प्रदायप्रसिद्धिः ।

काकपर्णी स्त्री काक इव कृष्णं पर्णमस्याः काकमाचीव पर्णोऽस्या वा गौरा० ङीष् । सूर्य्यपर्ण्यां भावप्र० तस्याः काककृष्णपर्णत्वात् दैवज्ञतुल्यपत्रत्वाच्च तथात्वम् ।

काकपीलु पु० काकप्रियः पीलुः । (कुचिला) कुपीलौ । राजनि० संज्ञायां कन् । तदर्थे भावप्रकाशोक्ततद्गुणादि काकतिन्दुकशब्दे उक्तम् ।

काकपुच्छ पुंस्त्री काकस्येव पुच्छो यस्य । कोकिले शब्दरत्ना० । स्त्रियां जातित्वेऽपि संयोगोपधत्वान्न ङीष् । किन्तु "पुच्छाच्चेति" वार्त्ति० वा ङीष् ।

काकपुष्ट पु० काकेन पुष्टः । कोकिले त्रिका० । कोकिलया हि स्वाण्डस्फोटनाक्षमतया काकाण्डं नीडात् निष्काश्य स्वाण्डं तत्र स्थापयित्वा काकद्वारा स्वाण्डजपोषणात् कोकिलस्य तथात्वम् ।

काकपुष्प न० काकवर्णं पुष्पमस्य । गन्धपर्णे राजनि० ।

काकपेय त्रि० काकैरनतकन्धरैः पीयते पा—यत् "कृत्यैरधिकार्थवचने" पा० ३त० । पूर्णोदकत्वेन प्रयत्ने काकैः पेये नद्यादौ । "काकपेया नदी" सि० कौ० ।

काकफल पु० काकप्रियं फलमस्य । निम्बवृक्षे राजनि० । तस्य तिक्तत्वेऽपि काकस्य तत्फलप्रियत्वात्तथात्वम् ।

काकवन्ध्या स्त्री काकीव वन्ध्या पुंवत् । काकीवत् एकमात्रप्रसवजननेन वन्ध्यात्वप्राप्तायां स्त्रियाम् काकस्य सकृत्प्रजनस्य काकवत्शब्दोक्तप्रमाणादवसेयम् । "काकवन्ध्या च या नारी मृतापत्या च या भवेत् । बह्वपत्या जीववत्सा सा भवेन्नात्र संशयः" मत्स्यपु० रामकवचम् ।

काकबलि पु० ४त० । काकेभ्योदेयेबलौ काकवत्शब्दे विवृतिः

काकभाण्डी स्त्री काकस्य दैवज्ञस्य सुखनिवासहेतुकस्य भाण्डी शुभभाण्डमिव । महाकरञ्जे राजनि० । तत्फलसेवनात् सुखात् दैवज्ञस्य वासात्तस्यास्तथात्वम् ।

काकभीरु पु० ५त० । पेचके त्रिका० ।

काकमद्गु पु० काक इव कृष्णो मद्गुः दात्यूहे खगे त्रिका० "वनं हृत्वा तु दुर्बुद्धिः काकमद्गुः प्रजायते" भा० अनु० ५५२० श्लो० ।

काकमर्द पु० काकं मृद्नाति मृद-अण् उप० स० । (माकाल-ग्रया) इति ख्याते महाकालवृक्षे राजनि० । कन् । काकमर्दकोऽप्यत्र रत्नमाला ।

काकमाची स्त्री काकान् मचते मचि—अण् पृषो० नलोपः षा० गौरा० ङीष्, कृष्ण० मच ङीप् । कटुफललतायाम् । (कटेया गुड्काभाइ) इति ख्याते वृक्षे भावप्र० । तत्पर्य्यायगुणाद्युक्तं तत्रैव यथा—"काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी । काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा । तिक्ता रसायनी शोथकुष्ठार्शो ज्वररोगजित् । कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी" "काकमाचिजनितं मधुपाकं वेसवारमिलितं शुभवासम् । तप्ततैलतलनेन सुपाकं कैरवास्य न कृतं सुखवासम्" इत्यत्र वैद्यके ह्रस्वतायामपि "ङ्यापोरिति" पा० ह्रस्वः इति बोध्यम् । स्वार्थे कन् काकमाचिकाऽप्यत्र ।

काकमाता स्त्री काकस्य मातेव पोषिका तस्य तत्फलप्रियत्वात् । काकमाच्याम् । राजनि० ।

काकमुद्गा स्त्री काकेन दैवज्ञेन मुदं गच्छति गम—ड । मुद्गपर्ण्याम् अमरः ।

काकयव पु० काकभीतिजनकस्य तादृशो यव इव नीरसत्वात् । (आगड़ा) इति ख्याते पदार्थे "यथाऽफलाः षण्डतिलाः यथा चर्ममया मृगाः । तथैव पाण्डवाः सर्वे यथा काकयवा इव" भा० १७५ अ० । "काकयवा निष्फलत्वधान्यानि" नीलकण्ठः ।

काकरुत न० काकस्य रुतम् । काकशब्दे । काकादिरवादेः भाविशुभाशुभसूचकतया शकुनत्वं यथाह वृ० सं० ९५ अ० । "प्राच्यानां दक्षिणतः शुभदः काकः करालको वामे । विपरीतमन्यदेशेष्ववधिर्लोकप्रसिद्धैव । वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता । निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे । नीडः प्राक्शाखायां शरदि भवेत्प्रवरवृष्टिरपरस्याम् । याम्योत्तरयोर्मध्या प्रधानवृष्टिस्तरोरुपरि । शिखिदिशि मण्डलवृष्टिर्नैरृत्यां शारदस्य निष्पत्तिः । परिशेषयोः सुभिक्षं मूषकसम्पत् वायव्ये । शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु । शून्यो भवति स देशश्चौराऽनावृष्टिरोगार्त्तः । द्वित्रिचतुःशावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम् । अण्डावकिरणमेकाण्डताप्रसूतिश्च न शिवाय । चौरकवर्णैश्चौरा चित्रैर्मृत्युः सितैश्च वह्निभयम् । विकलैर्दुर्भिक्षभयं काकानां निर्द्दिशेच्छिशुभिः । अनिमित्तसंहतैर्ग्राममध्यगैः क्षु-

ध्रुवं प्रयायद्भिः । दोषस्वकाकारैरभिघातो वर्गवर्गैस्तैः । अभयाय तथाऽपरैस्तरचविघातैर्जनानभिभवन्तः । कुर्वन्ति यत्नवृद्धिं निशि विचरन्तो जनविनाशम् । कन्ये न खे भ्रमद्भिः स्वभयं, विपरीतमथुतैव परात् । चलाकुलं भ्रमद्भिर्वातोद्भ्रमो भवति काकैः । ऊर्ध्वं तृणाद्यवयवाः यदि भयदाः शुक्लाय धान्यक्षयः । सेनाकृत्या युद्धं परिमोषं चान्यभूतपदाः । भक्ष्यास्थिकेशपलाशि विक्षिपन् प्रतिवधाय शय्यायाम् । मणिकुसुमाद्यर्पणेन सुतस्य जन्माङ्गनायाश्च । पूर्णानिवेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः । भयदो जनसंबाधाद् यदि भाण्डान्यपनयेत्काकः । वाहनशय्योपानच्छत्रच्छायाङ्गकुट्टने मरणम् । तत्पूजायां पूजा विषाकरणेऽस्त्रशस्त्राप्तिः । यद् व्यसुपनयेत्तस्य लब्धिरपहरति चेत्प्रणाशः स्यात् । पीतद्रव्ये कनकं, वस्त्रं कार्पासिके, सिते रूप्यम् । क्षीरार्णवस्थकुसुदयमुखिनगा स्वस्त्य । प्रावृषि वृष्टिं वृद्धिं नयन्तौ स्नाताय पांशुजालैः । दारुघनादस्थिकीटदोषगो वायसो महाभयदः । सलिलमवलोक्य विरुवन् दुर्भिक्षदोऽन्द्रातुरावी वा । दीप्तोद्विग्नो विटपे विकुट्टयन् वह्निविधिस्तपदः । दग्धद्रव्यं दग्धं तृणकाष्ठं वा मुखे विदधत् । ऐन्द्रादिदिगवलोकी स्थ्याभिमुखो रुवन् मुखे लब्धिषः । राजभयचौरबन्धनकलहाः स्युः पशुभयं चेति । शान्तामैन्द्रीमवलोकयन् रुयाद्राजपुरुषमित्राप्तिः । भवति च सुवर्णलब्धिः शाल्यन्नगुडादनाप्तिश्च । आग्नेय्यामनलजोधिकयुवतिप्रवरधातुलाभश्च । याम्ये माषकुलत्थभोज्यं गान्धर्विकैर्योगः । नैर्ऋत्यां दूताश्वोपकरणदधितैलपललभोज्याप्तिः । वारुण्यां मांससुराश्वधान्यसमुद्ररत्नाप्तिः । वायव्यां शस्त्रायुधवरोक्षवल्लीफलायनाप्तिश्च । सौम्यायां परमान्नायनतुरङ्गाम्बराप्तिः । ऐशान्यां सम्प्राप्तिर्घृतपूर्णानां भवेदनडुहश्च । एवं फलं ऽहपतेर्मर्दृष्टस्थमाश्रिते भवति । गमने कर्णसमचेत् क्षेमाय न कार्यसिद्धये भवति । अभिमुखमुपैति यातुर्विरुवन्निवर्त्तयेद्यात्राम् । वामे वाशित्वादौ दक्षिणपार्श्वेऽनुयायते यातुः । अर्थोपहारकारी तद्विपरीतोऽर्थसिद्धिकरः । यदि वाम एव विरुयान् सहस्त्वर्थायिनोऽनुलोमगतिः । अर्थस्य भवति सिद्धिः प्राच्यानां दक्षिणचैवम् । वामः प्रतिलोमगतिर्वायन् गमनस्य विघ्नकृद्भवति । तद्वत्स्यैव फलं कथयति यद्वाञ्छितं गमने । दक्षिणविरुतं कृत्वा वामे विरुयाद्वाञ्छितावाप्तिः । प्रतिशाख पुरो यायाद् द्रुतमथोऽर्थागमोऽतिमहान् । प्रतिशाख पृष्ठतो दक्षिणेन यायाद् द्रुतं जनजकर्षा । एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः । इहार्कमेकपादस्तुण्डेन लिखेद्यदा सपिच्छानि । परतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् । सक्षीरे वृक्षे विरुवति यान्ते सवसमूलब्धिः । आकुलचेष्टो विरुवन् सीमान्ते क्लेशकृद्यातुः । स्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु । क्षीरान्नवृक्षस्थितमनोज्ञवृक्षेषु चार्थकरः । निजपक्षवसगाढभवनप्रासादहर्म्यहरितेषु । धान्योच्छ्रयमङ्गल्येषु चैव विरुवन् धनागमदः । गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजङ्गस्य । शद्वलस्थो महिषगो विरुवति गुल्मे फलं स्वल्पम् । कार्यस्य व्याघातस्तृणकूटे भग्नेऽस्थिसंस्थे वा । ज्वलिताग्निकूटेऽथनिहते च काके वधो भवति । कण्टकिमिश्रे सौम्ये सिद्धिः कार्यस्य भवति कलहश्च । कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः । छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे । पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः । क्षतसुरधाम्नावस्थितोऽभिवायन् करोति कुलभयम् । भग्नस्थे च चञ्च्वा यदि वामतस्थितमहाय । रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति । भुजगदर्दुरिकच्छरशस्त्राग्निभयान्यनुक्रमशः । सितकुसुमाशुचिमांसाननेऽर्थसिद्धिर्वेदिता यातुः । रुवन् पश्चाद्ध्वानने च विघ्नं शङ्कः कथयति । यदि मृद्धुलां वरन्त्रां वल्लीं पादाय वायते बन्धः । पाषाणस्थे च भयं छिद्रापूर्वाधिकयुतिश्च । धान्योऽस्वभक्ष्यसंयुक्तमानने तुष्टिसमा भवति । विज्ञेयः स्त्रीलाभो दम्पत्योर्वायतोयुगपत् । प्रमदाशिरउपगतपूर्णकुम्भसंस्थेऽङ्गनार्थसम्प्राप्तिः । घटकुट्टने सुतविपद् घटोपदहनेऽम्भसम्प्राप्तिः । स्कन्धावारादीनां निवेशसमये रुवंश्चलपक्षः । सूचयतिऽन्यस्थानं निश्चलपक्षस्तु भयमात्मम् । प्रविशद्भिः सैन्यादीन् सम्भ्रमकर्दविनामिषं ध्वाङ्क्षैः । अविरुद्धैः प्रीतिर्हिंषतां युद्धं विरुद्धैर्बन्धः। शूकरसंस्थे पङ्कान्ते शूकरे द्विकेऽर्थाप्तिः । क्षेमं खरोष्ट्रसंस्थे केचित्प्राहुर्वधं तु खरे । वाहनलाभोऽश्वगते,विरुवत्यनुयायिनि जनजपातः । अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः । हानिं यत्नविभक्ते दिक्चक्रे यद्यथा समुद्दिष्टम् । तत्तत्तथाऽभिधेयं शुभदोषफलं धियाखिलानाम् । का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम् । करदति पात्रमीत्वै

क इति रुते स्निग्धमित्राप्तिः । कट इति कलहं कुरुकुरु, कर्णमथ कटकटेति दधिभक्ष्यम् । केके विरुतं कुरु वा धनलाभं यायिनः प्राह । खरे खरे पथिकागमसाह कथाखेति यायिनो मरणम् । गमनप्रतिषेधकमावरवाव सद्योऽभिदर्शाय । काकेति विघातं काकटोति चाहारदूषणं प्राह । प्रीत्यास्पदं कलकलेति बन्धमेवं कलाकुरिति । करकौ विरुते वर्षं गुडुवस्त्रालाभाय, कडिति वस्त्राप्तिः । कलयेति च संयोगः स्नेहस्य बाह्यर्थैः साकम् । फडिति फलाप्तिः फलशाखिदर्शनं टड्डिति प्रहाराः स्युः । खोखाभः खोति रुते गडिति गर्त्तं, घुडिति युद्धाध्वाम् । घुहाय टाकुटाकिति गुरु वह्निभयं कटेकटे कलहः । टाकुलि चिखिटिचि केकेकेति हरन्तीति दोषाय । काकद्वयस्यापि समानमेतत् फलं यदुक्तं रुतचेष्टिताद्यम् । पतत्त्रिणो ऽन्ये ऽपि यथैव काको ग्राह्याः स्वरस्त्रोपरिदर्शिणो ये । स्वच सलिलचराणां व्याहृतौ मेघकाले मधुरमनिलवृष्ट्यै ग्रीष्मकाले भयाय । मधु भवननिलीनं तस्करोत्यासु शून्यं मरणमपि निलीनाम् छिका मूर्ध्नि नीता । पिपिलिपन्थः सलिले ऽण्डकानि पिपीलिका दृष्टिनिरोधभाजः । तरुस्थलं वापि नयन्ति निम्नाद् यदा तदा ताः कथयन्ति वृष्टिम् । कार्यं तु मूषककुले ऽन्तरजे तदन्ते विन्द्यात् फलं नियतमेवमिमे विचिन्त्याः । मारस्थयानसमनेषु तथा प्रवेशे ग्राह्यं क्षुतं न शुभदं कचिदप्यवन्ति । शुभं दयापाकमविघ्नसिद्धिं सुताभिरक्षामथ वा सहायान् । दृष्टस्य संसिद्धिमनामयत्वं वदन्ति तैमान्यविहस्थपस्य । क्रोशाद्दूर्ध्वं शकुनिविरुतं निष्फलं प्राहुरेके तत्राभिष्टे प्रथमशकुने मानयेत्पञ्च षट् च । प्राणायामानृपतिरशुभे षोडशैव द्वितीये प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः” ।

काकस्य वर्णादिभेदेन विप्रादिभेदकथनपूर्व्वकं कालभेदेन तद्वाशितफलमुक्तं वसन्तराजशाकुने यथा

“अथोच्यते काकरुतं रुतानां मूर्द्धि स्थितं शाकुनभाषितानाम् । अचिन्तितावेदितकार्य्यसिद्धिः पूर्व्वादिकाशाप्रहरक्रमेण । ये ब्राह्मणक्षत्रियवैश्यशूद्राः काका भवन्त्यन्त्यजपञ्चमास्ते । वर्णाकृतिभ्यां अभिभाषिताभ्यां सदाभियुक्तैरुपलक्षणीयाः । बृहत्प्रमाणो गुरुदीर्घतुण्डो दृढस्वरः कृष्णतनुः स विप्रः । स्निग्धाच्छनीलाच्छविमिश्रवर्णः स्यात् क्षत्रियस्तीव्ररवोऽतिशूरः । यः पाण्डुनीलः सितनीलचञ्चुर्नात्यर्थरूढो रटितश्च वैश्यः । भस्मच्छविर्भूरिकठोरशब्दः शूद्रः कृशाङ्गश्चपलो निकृष्टः । विकृतलक्षणालसतनुर्विशिष्टो यः कन्दरादोग्ररवं बिभर्त्ति । स्थिरारवः स्थैर्य्यसमेतबुद्धिः काकोऽन्त्यजातिः खलु पञ्चमोऽसौ । द्रोणाभिधः कृष्णवपुर्द्विजो यो ग्राह्यः स काकः खलु सूक्ष्मदृष्ट्या । तथाहते ब्रह्मगतो निरोग्रः श्वेतश्च निन्द्योऽङ्ग तदर्शनेऽसौ । विप्रः स्फुटं जल्पति पृच्छ्यमानो न्यूनं ततः क्षत्रियजातिराह । व्याख्याति वैश्यस्त्वभिवाचनेन ब्रवीति शूद्रो बलिदानलोभात् । प्रश्नं कृतं जल्पति कृष्णवर्णः सदा समस्तं विहगोऽन्त्यजातिः । सद्यश्चिमप्राह्णदशाह्नपर्व्वैः पञ्चापि काकाः फलदाः क्रमेण । शान्ते प्रदीप्ते च रटन् विहङ्गः शुभप्रदो दीप्तपराङ्मुखः सन् । न कापि रौद्रो रटितः प्रयत्नः सर्व्वत्र शस्तो मधुरश्च रक्तः । दीप्तस्थितो यः परुषस्वरेण विरौति दीप्ताभिमुखः स कार्य्यम् । निष्पाद्य निर्णाययते च सम्यग्दीप्तोन्मुखः शान्तरवो हि सिद्धैः । शान्तप्रदीप्ताभिमुखो विधाय शब्दं प्रविश्याथ पुनः प्रदीप्ताम् । यो रौति काको मधुरस्वरेण कृत्वा विरुद्धं स ददाति सिद्धिम् । विधाय दीप्ताभिमुखो विरावं ततः प्रशान्ताभिमुखो विरौति । यो वायसोऽसौ विनिहन्त्यसम्यक् कार्य्याणि सर्व्वाणि पुनः करोति” । विप्रादिग॰

सूर्य्योदये पूर्व्वदिशि प्रशस्तस्थाने स्थितो यो ऽभिमुखं विरौति । नाशं रिपोश्चिन्तितकार्य्यसिद्धिं स्त्रीरत्नलाभं स करोति काकः । ध्वाङ्क्षः प्रभाते यदि वह्निभागे विरौति तिष्ठन् रमणीयदेशे । शत्रून् प्रणष्टश्चिरात् प्रियर्क्षः प्रयाति योषित् समवाप्यते तत् । रुवन् प्रभाते दिशि दक्षिणस्यां काकः समावेदयतेऽतिदुःखम् । रोगार्त्तिमृत्यू परुषस्वरेण रम्येण चेष्टागमयोपिदाप्तिम् । नैरृत्यभागे यदि च प्रभाते करोति काकः सहसा विरावम् । क्रूरं ततः कर्म्म समभ्युपैति द्रुतागमो मध्यमिका च सिद्धिः । प्रातः प्रतीच्यां यदि रौति काको ध्रुवं तदा वर्षति वारिवाहः । स्त्रीवस्त्रभूभृत्प्रकृतागमश्च कृषिः कलत्रेण समं तदा स्यात् । ध्वाङ्क्षस्य शब्दे पवनाश्रयस्थे वस्त्राद्ययानाभिमतागमाः स्युः । पान्थागमः प्राक्तनवस्तुनाशः स्यादन्यदेशे गमनं स्वदेशात् । दिश्युत्तरस्यां सुरवः प्रभाते निरीक्षमाणो बलिभुङ् नराणाम् । ददाति दुःखं भुजगाच्च भीतिं दरिद्रतां नष्टधनेप्सुलाभम् । दिशीश्वरस्थां यदि रौति काक आगच्छतश्चाद्गतितान्यजाती । व्याधेर्निमित्तं

प्रियवस्तुलाभो भवेत्तदा रोगवतोऽवसानम् । ब्रह्मप्रदेशे स्थितवायसस्य प्रभातकाले मधुरस्वरेण । अभीप्सितार्थागमनं ध्रुवं स्यात् स्वामिप्रसादो द्रविणस्य लाभः” । इति सूर्य्योदये काकशकुनम् । “पूर्व्वत्र यामे प्रथमे सशब्दः काको भवेद्वाञ्छितकार्य्यसिद्ध्यै । अभीष्टलोकागमनं तथा स्यादर्थलाभो नियतं नराणाम् । आग्नेयभागे यदि चाद्ययामे स्त्रीलाभवित्ते विभवौ भवेताम् । कृतान्तभागे वलिभुग्विरावैः स्त्रीलाभसौख्यप्रियसङ्गकारी । नैर्ऋत्यकोणे प्रिययोषिदाप्तिर्मिष्टाशनं सिद्ध्यति चिन्तितोऽर्थः । दिशि प्रतीच्यां विरुते भवेतामभ्यर्थनीयागमनाम्बुवृष्टी । वायव्यकोणे करटः शुभः स्यात् नृपप्रसादोऽश्वगदर्शनं च । सौम्ये च भीतस्करयोकवार्त्ता सौम्या च वार्त्ता धनलाभवार्त्ता । ईशानदेशेऽभिमतेन सङ्गस्त्वामो कृतायाद्वढलोकसङ्गः । ब्रह्मप्रदेशे सुखकामभोगः सम्मानसम्पद्गुहविशेषसिद्धिः”। इति प्रथमप्रहरे शकु० । “प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित् पथिकोऽभ्युपैति । चौराद्भयं व्याकुलता च सङ्गो जायेत कार्य्यक्षतो च सङ्गा । कृतान्तदेशे नियतं कलिः स्यात् प्रियागमः कार्य्यनयोषिदाप्तिः । याम्ये तु वृष्टिर्महती च भीतिः प्रियस्य चेष्टस्य समागमः स्यात् । रक्षोदिशि प्राणभयं तदा स्युः स्त्रीभोज्यलाभाखिलवस्तुप्रणाशाः । भवेत् प्रतीच्यां सकला कलाप्रियोषागमो वृष्टिसुवर्षणं च । समीरभागे ध्वजचौरसङ्गो दूतागमश्ची पिशिताञ्चलाभः । सौम्ये गवेष्टागमनं जयं च रम्ये रवे चौरभयं त्वयाख्ये । महेश्वराशाविरुतस्य काकचौराग्निसंत्रासविरुद्धवार्त्ताः । ब्रवीति रुद्वं रटनैरदुष्टैः सदार्थ्यगुर्व्वागमनं जयं च । ब्रह्मप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम् । मिष्टान्नभोज्यं च ददाति दुःखं करोत्यसौ चौरभयं कुशब्दः”। इति द्वितीयप्रहर श० । “ऐन्द्र्यां विरुतः प्रहरे तृतीये वृष्टिं तथा चौरभयं ब्रवीति । अग्न्यस्तु राजागमनं जयं च करोति यात्रां शुभकार्य्यसिद्धिम् । यम्ये विभागेऽग्निभयं कलिश्च विरुद्धवार्त्ता विफला च यात्रा । भवेद्विरुद्धैर्वलिभुग्विरावैर्जयादिवार्त्ता च भवेद्विशुद्धैः । ककुभ्यवाच्यां कुरुतेऽतितृष्णं रोगं तथाप्यागमनं विरुद्धः । क्षुद्राणि कार्य्याणि च यान्ति सिद्धिं सर्व्वाणि तस्य स्वतया नराणाम् । क्रव्याददेशे जलदागमः स्यात्किष्टान्नलाभो विपत्तो न सन्ति । न्द्रागमः स्वामिविरुद्धवार्त्ता भवन्ति यात्रासु च कार्य्यनाशः । स्यात् पश्चिमे नष्टधनस्य लाभो दूराध्वयानं सुहृदागमश्च । योषागमोऽभीष्टजयादिवार्त्ता यात्रासु रम्ये रटितेऽर्थसिद्धिः । वाताशये दुर्द्दिनमेव वार्त्ता चौराभिनष्टार्थसमागमश्च । सन्तोषवार्त्ता वरयोषिदाप्तिर्यात्रा रवे स्यान्मधुरे प्रयत्ता । यामे तृतीये विरुतस्य दीच्यां कार्य्यार्थलाभो नृपलेखकानाम् । भोज्यप्रवृद्धिः शुभदा च वार्त्ता प्रयाणकं वैश्यसमागमश्च । दिग्यन्त्रकारैः कुरुते सुशब्दो भोज्यं जयं हानि करी कुशब्दः । ब्रह्मप्रदेशे तिलतण्डुलाभ्यां भोज्यं च ताम्बूलयुतं ददाति”। इति तृतीयप्रहरशकु० । “ऐन्द्र्यां तुरीयप्रहरेऽर्थलाभो भूमीशपूजा भयवृद्धिरोगाः । वह्निविभागे भयरोगमृत्युः शिष्टागमो वायसभाषितेन । याम्ये रवे तस्करवैरिभीती स्यातां त्रिशिष्टागमरोगमृत्युः । स्यात् यातुधान्यां महती प्रवृद्धिरभीष्टसिद्धिः पथि चौरयुद्धम् । दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः । आयाति योषिद्विजयाम्बुवृष्टिः सिद्धिः प्रवासे न्पतेर्वरच । वायव्यभागे करटस्य शब्दैरायाति योषित् प्रियमानिनी या । ध्रुवं प्रवासो दिनसप्तकेन शीघ्रागमः स्यात् गमने कृते च । कुबेरभागे पथिको ऽभ्युपैति ताम्बूललाभः कुशलस्य वार्त्ता । वैश्याङ्गनाप्तिस्तुरगादिरूढा यात्रा विरुद्धे म्रियते च रोगी । स्वाशौ स्थितः स्याद्वलिभुग्विरावैः सुवर्णवार्त्ता सहजो विनाशः । ब्रह्मप्रदेशे प्रहरे चतुर्थे वार्त्ता भवेन्नाध्वमिका च सिद्धिः” । इति चतुर्थप्रहरशकु० । “यद्भाषितं शाकुनिकैर्विमिश्रं शुभाशुभं दिक्प्रहरक्रमेण । तत्राशुभं यच्छति दीप्तशब्दः श्रेयस्करः शान्तरवश्च काकः । रम्यं रवं दीप्तदिशि प्रकुर्व्वन् शान्तां दिशं भूरि फलं ददाति । तदेव तुच्छं वितरत्यसौ वै दीप्ताश्रितः पश्यति दीप्तकाष्ठाम् । यथोपदिष्टं फलमत्र दुष्टं तथैव तद्दीप्तदिशि स्थितः सन् । शान्तोऽभिरुद्धो विरुवन् करोति निरीक्षमाणः ककुभं प्रदीप्ताम् । काकः प्रशान्ताभिमुखोऽतितुच्छं दीप्ताश्रितो दुष्टफलं ददाति । शान्ताश्रितः शान्तदिगीक्षणेन कथारवो ऽलं कथयत्यनिष्टम् । शान्तस्वरः शान्तककुप्प्रदेशे तिष्ठन् प्रदीप्तां ककुभञ्च पश्यन् । ददात्यभीष्टं फलमेवमल्पं दीप्तां स पश्यंस्तु तदेव तूर्णम् । आकारचेष्टारवभागवित्ताश्चत्वारि काष्ठादिनयोः क्रमेण । सदाभियुक्ताश्च निरूपयन्ति सत्याश्च ते काकरुतं मनुष्याः”। इति काकरुते दिक्चक्रभेद शकु० । “अथकालमधिकृत्य किञ्चन प्रोच्यते वलिभजो

यथाक्रमम् । आलयशाखाविचारसुन्दरं शाकुनं सकलशाकुनोत्तमम् । वैशाखमासे निरुपद्रवेषु द्रुमेषु काकस्य शुभाय नीड़म् । निन्द्येषु शुष्केषु सकण्टकेषु द्रुमेषु दुर्भिक्षमलाभभीतिः । प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतः कुलायः । तद्वृष्टिरिष्टा शकुनप्रमोदो नीरोगता स्याद्विजयश्च राज्ञः । आग्नेयशाखारचिते च नीड़े स्याद् वृष्टिरोधाग्निभयं कलिश्च । दुर्भिक्षशस्त्रोपद्रवदेशभङ्गो भवन्ति रोगाश्च चतुष्पदानाम् । याम्यासु शाखासु च वायसेन नीड़े कृतेऽल्पं जलपातमाहुः । व्याधिप्रकोपं मरणं समन्ताद्भयं यत्र विरोधितां च । नैर्ऋत्यशाखारचिते च नीड़े तस्माद्घनैर्वर्षति वर्षकाले । पीड़ा नृणां विग्रहचौरभीतिदुर्भिक्षदुःखानि भवन्त्यजस्रम् । नीड़े कृते पश्चिमदिक्शाखामाश्रित्य काकैः कथिता च वृष्टिः । नीरोगता क्षेमसुभिक्षवृद्धिः सम्यक्प्रमोदाश्च भवन्ति लोके । वायव्यशाखासु कृते च नीड़े प्रभूतवाताम्बुजलाश्च मेघाः । सुभूमिकोपद्रवशस्यनाशपक्षद्वयोद्वेगमहारिरोधाः । कौबेरशाखामधिरुह्य नीड़े कृते भवेत् प्रावृषि वृष्टिरिष्टा । भवन्ति च क्षेमसुभिक्षसौख्यनीरोगताऽऽवृद्धिसुहृद्गणोऽपि । ऐशानशाखासु च वृष्टिरल्पा वैरं प्रजानामुरगर्गदोषः । शाखान्वितानां कलहप्रवृत्तिः सैंख्यादया क्षीयत एष लोकः । ह्रस्वोपनीड़े स्तितवर्षकाले मध्ये पुनर्मध्यमतोयपातः । तुच्छापि वृष्टिर्भवत्यधस्तात् स्फुटं द्विपौकं न द्विपः स्फुटत्वम् । अवृष्टिरोगादिभयादिवृद्धिं विद्याच्च भूमौ बलिभुक् कुलाये । शुष्के च वृक्षे डमरादिनाशौ प्राकाररन्ध्रे च भयं प्रसूतम् । निम्नप्रदेशे तरुकोटरे वा वल्मीकरन्ध्रे प्रतिश्रयोऽपि । काकस्य नीड़े स्वगृहादिदोषैर्भवन्ति नृणां नियमेन देशाः" । इति काकनीड़शकुनम् । अथ काकाण्डशकुनम् । "एकं भवेद्वारुणमण्डमंशं द्वितीयकं मारुतकं तृतीयम् । ऐन्द्रं तथा नाम चतुर्थमेव अण्डानि काक्याः परिकीर्त्तितानि । काक्या भवेद्वारुणमण्डकं चेत् पृथ्वी तदा नन्दति सर्वशस्यैः । मन्दप्रवर्षोऽनलसंज्ञके ऽण्डे नोप्तस्य बीजस्य भवेत् प्ररोहः । जातानि शस्यानि समीरणेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः । क्षेमं सुभिक्षं सुखिता धरित्री स्यादैन्द्रदेऽण्डेऽभिमता च सिद्धिः" । इति काकाण्डश० । "यात्रानिमित्तानि च कीर्त्तयामः सकृत्प्रजानां शकुनानि यानि । विधाय तानि प्रजहात्यनर्थांश्च सर्वान् कुरुतेऽध्वनीनः ।

भुङ्क्ते बलिं यश्च मन्त्रपूतं त्वं प्राशिषु प्राशिषि वर्द्धनम् । शुभेन च स्त्रीं भजसे नमोऽस्तु तुभ्यं खगेन्द्राय सकृत्प्रजाय । विलोक्य काकं विनिवेद्य तस्मै मन्त्रेण पूजां दधिभक्तयुक्ताम् । उदीर्य कार्यं निजमध्वगेन विलोकनीयं शकुनं तदर्थम् । वामेन शब्दं मधुरं विकुर्वन् व्रजन्तं स्वगामिन करोति काकः । सर्वार्थसिद्धिं पुनरागमञ्च । शुभप्रदेशे तु तदन्यरूपम् । प्रदक्षिणं संप्रविधाय मार्गे वामेन काको विनिवर्त्ततेऽसौ । यात्रुः करोतीप्सितकार्यसिद्धिं क्षेमञ्च शीघ्रं पुनरागमञ्च । वामे कलं रौत्यनुलोमयायी यो वायसोऽसौ सकलार्थसिद्ध्यै । स्यातां क्रमाद्दक्षिणवामशब्दौ सिद्ध्यै, विरुद्धौ विपरीतभूतौ । पृष्ठे विरावं मधुरं विमुञ्चन् व्रजं चापि गतो हिताय । प्रावेश वातारमनुव्रजन्तः सर्वेऽपि काकैः कथिता विरुद्धाः । कृत्वा रवं यः पुरतः प्रयाति उपस्थितो यो मुदमादधाति । कण्डूयते यः स्वशिरोऽङ्घ्रिणाऽसौ पुंसां तदाभीष्टफलं ददाति । स्तम्भे गजानां नियतं गजाप्तिं गजेऽधिरूढः पृथिवीपतित्वम् । तुरङ्गमे वाहनभूमिलाभं करोति काको विजयं ध्वजे च । प्रनष्टलाभं विजयं च कूपे, त्रिपं नदीरोधसि कार्यसिद्धिम् । पूर्णे घटेऽङ्घ्रिश्च धनाप्तिवृद्धिं ध्वाङ्क्षोऽधिरूढः कुरुते सशब्दः । प्रासादधान्योच्चयहर्म्यपृष्ठनिषण्णशाखावनिमाह्लादौ । ध्वाङ्क्षोऽधिरूढो धनसाधनाय रौति श्रियं यच्छति गुम्फरावः । पृष्ठे पुरो वा यदि गोमयस्थो तथा वटाद्येषु तरुष्वपीह । स्थितो रुवन् भोजनपानमिष्टं विज्ञं च कुर्वन् वितरत्यवश्यम् । धान्यादिविष्टाफलमूलपुष्पमत्स्यादिभिः पूर्णमुखः सदैव । संदृश्यमानोऽभिमतार्थसिद्ध्यै मिष्टान्नभोज्याय सदैव काकः । नारीशिरःपूर्णघटस्थितस्य काकस्य शब्दैर्वनिताधनाप्तिः । शय्याधिरूढस्य च तस्य शब्दैः समागमः स्यात् स्वजनेन सार्द्धम् । गोपृष्ठदूर्वातृणगोमयेषु तुण्डानि धर्म्यावलोकितायः । आहारमन्यस्य तथा ददानो ददाति भोज्यं बलिभिर्विचित्रम् । धान्यं यवं वा दधि वापि चान्यं किरोति पथ्यावधिलाभकारी । करोति लाभं पुरतः स दृष्टो यस्यास्ति वक्त्रे तृणमप्यशुष्कम् । वृक्षेषु रम्याङ्कुरपत्रपुष्पच्छायाफलाढ्येषु सकृत्प्रजस्य । शब्देन सिध्यन्त्यशक्तधराणां सदैव सर्वाणि समीहितानि । प्रयाणनादः शिखरे तरूणां क्षीरद्रुमौल्यं करटोऽभिधत्ते । धान्यादिकूटेषु तथान्नलाभो गोष्ठगो गोवनिताधनाप्तिम् ।

वृक्षस्य पीते, रजतस्य शुक्ले, चेलस्य कार्पाससमे भवेताम्। प्रश्ने कृते रोगविनाशबुद्ध्या कुर्व्वन् रुतं रोगं हरत्यः प्रदीप्ते। शान्ते प्रदेशे करटस्थिरेण स्वच्छारवो रोगमपाकरोति। प्रश्ने शुभे शान्तदिगाश्रयस्थः शान्तस्वरो यः शुभमादधाति। यो वायसस्तं शुभदं वदन्ति तद्रात्रये व्ययहेतुरुक्तः। विरौति कुम्भे मणिकेऽथ वा यः स गर्भवत्याः सुतजन्महेतुः। उड्डीयते कण्टकिनीश्च शाखामादाय राजागमनाय काकः। कन्यादिविवादिविमितादिभिर्यः पूर्णाननोऽभीष्टफलप्रदोऽसौ। मन्त्रादिसिद्धौ वणिजादिलाभे यशो विवाहार्थादिविधौ च काकः। इष्टार्थदोऽस्थ्यादिकवाहनस्थश्चक्रादिसंस्थश्च दवाप्रकारी। बन्ध्वागमं जल्पति तोरणस्थो वृक्षाग्रदो वृक्षतलस्थितश्च। वायसः कुलकुलध्वनिं यदा व्याहरेद्धनस्य सुखं तदा। अभ्युपैति पथिकस्तदा ध्वनिं सर्व्वकार्य्यशुभदं वदत्यसौ। इदं त्रिहोत्पातयुगं पृथिव्यां महाभयं शाकुनिका वदन्ति। यदा यदासौ मैथुनसन्निविष्टो दृश्येत यद्वा धवलः कदाचित्। उद्वेगविद्वेषभयप्रवासधनक्षयव्याधिभयप्रकाराः। बुद्धिप्रणाशाकुलताप्रवादा नृणां भवन्त्यत्र तदर्शनेन। शमाय तत् स्वचितदुःखराशेः स्नानं वहिस्तत्क्षणमेव कुर्य्यात्। आत्मीयशक्त्या च सदक्षिणानि द्विजाय दद्यात् वसनानि तानि। नयेदहःप्रेमपुण्यकाम्या शयीत भूमावकृतान्नभक्षः। हविष्यभोजी न भजेच्च नारीं दिनानि सप्त त्रिगुणानि यावत्। अकाकघातव्रतमादधीत बलिं च दद्याद्बलिभोजनेभ्यः। स्नात्वा प्रभाते विदधीत शान्तिं दद्यात् स्वशक्त्या द्रविणं सुधीभ्यः। देशे तु यत्राद्भुतमेतदुपलोक्यते तत्र समापतन्ति। अवृष्टिदुर्भिक्षभयोपसर्गचौराग्निशत्रुध्वनधर्म्मनाशाः। कर्म्मापि तस्योपशमाय राजा प्रवर्त्तयेत् शान्तिकपौष्टिकानि। अन्नाद्यगोभूमिवसूनि दद्यात् सुखं विदध्याच्च च यावदब्दम्"। इति स्थानविशेषस्थितकाकचेष्टा शकु०। अथ काकध्वनिभेदश्च। "कवामिति क्षेमविधौ विरावः केकामितीष्टागमनाय हेतुः। करोति कुं कुमिति चार्थनाशं, कं कं ध्वनिः काञ्चनलाभमाह। केकेमिति क्षीवरयोर्विदार्थ्यं भोगाय कांकामिति शब्दतः स्यात्। अपत्यलाभः कुरु इत्यनेन शत्रुः फलं केकव इत्यनेन। कौं कौमितीदं शुभलाभकारि कुं कु तिनादः प्रियसङ्गमाय। क्रां क्रमिति क्रामिति च त्रयोऽमी क्रां क्रामिति द्वौ च रवौ रणाय। क्रा क्रामिति क्रीमिति च द्विरुक्तं क्रूं क्रूमिति क्रौ कुकु इतीदम्। रुतं मदिष्टं मरणाय नृणां शत्रुः प्रणामं कुरुते सशल्यः। कौं कौमितीदं त्वर्थविनाशनाय ज्वलज्ज्वलेत्यग्निभयाय शब्दः। कीकीति कोकाविति यः कथञ्चिद्भङ्ग भङ्गः स्यात् स मतो वधाय। स्यात् का इतीदं विफलं सदैव भिक्षाप्रदे स्यात् क इतीदमत्र। काका इतीदं तु विघातकारि करोति काको वदति स्वतश्चेत्। आहारदोषाय च काकटीति स्यादाकुलं कुकुनिभं रणाय। केके ध्वनिः काकुटि कि टिकीति त्रयं त्विदं स्यात् पुरदूषणाय। यत् का इति त्रिस्वदनुस्वरेण शब्दद्वयं स्यान्महते रणाय। कामित्ययं वाहननाशनञ्च ददाति दूर्षं कुकुकुञ्चितीदम्। यत्का इतीदं विकृतं सुदीर्घकृतस्वरेणोच्चरितम् प्रमादात्। उत्साहहीनः समदैन्ययुक्तः स वायसः कार्य्यविनाशनाय। सामिषं वकवकेति भोजयेद्दारयेत् कलिकलीति वायसम्। अभ्युपैति खरकूचभाषिते प्रोषितः शवशवारवे शवः। स्यात् कलिः कनकनध्वनौ नृणां जायते कपकपाध्वनौ रणः। आनजेत् कुलकुलध्वनौ प्रियः सौदनं कटकटध्वनौ दधि। एवंप्रकारा बहवोऽपरेऽपि प्रशान्तदीप्ता बलिभोजनानाम्। भवन्ति शब्दाः खलु तेषु केचिदभ्यानिरुक्ताः खलु लक्षणीयाः। इति काकध्वनिभेदप्रकरणम्। "हितं नरेभ्यो मुनिभिः पुरार्थैर्यदुक्तं बलिपिण्डयुक्त्या। तदुच्यते सम्प्रति येन काका वदन्ति नित्यं बलिलाभतुष्टाः। अदक्षिणस्यां दिशि यत्र काकैर्युतो भवेत् क्षीरतरुः प्रभूतः। गत्वा निहन्ते ऽहनि तत्र काका निमन्त्रणीया बलिपिण्डभोक्त्रे। प्रातस्ततः क्षीरतरोरधस्ताद्विशोध्य लिम्पेत च गोमयेन। भूमिप्रदेशे चतुरस्रमस्य मध्ये ऽर्च्चयेत् ब्रह्ममुरारिभानून्। इन्द्राग्निवैवस्वतयातुधानजलेशवायुद्रविणेशशम्भून्। अभ्यर्च्चयेदष्टसु दिक्षु भक्त्या क्रमेण चाष्टावपि लोकपालान्। नमोयुतैः स्वप्रणवैश्च सर्व्वान्निजाभिधानैः प्रयतो मनुष्यः। अर्घासनालेपनपुष्पधूपनैवेद्यदीपाक्षतदक्षिणाभिः। आवाह्य काकांस्तस्वनिविहानाध्याय तत्प्राक्तनमन्त्रमुक्त्वा। तत्र स्वदर्श बलिमात्म्यशक्त्या मन्त्रेण दद्यात् दधिपिण्डयुक्तम्। "उदीच्यै कार्य्यं समयानस्त्य ततः प्रदेशे करटस्य चेष्टाः।

काकेन लूयते लू-छिदि कर्मणि क्विप् लस्य रः संज्ञायां कन्। १पेचके पुंस्त्री हेमच०। तस्य काकच्छेदात्तथात्वम्। स्त्रियां जातित्वात् ङीप्।

**काकल** न०ईषत् कलो यस्मात् कोः कादेशः।१ग्रीवास्थे उन्नतप्रदेशे (टुँटि)त्रिका०। ततो वा कप्। तदर्थे पु०हेमच०।"एकः काकलके नासावास्तु" इति शरीरस्थसन्धिकथने "एकैका काकलकगलयोः" इति पेशीसंख्यानोक्तौ च सुश्रु० केति कलो यस्य। २द्रोणकाके पुंस्त्री शब्दर०स्त्रियां ङीप्। ईषत् कं जलं लाति ला-क संज्ञायां कन्। षष्टिकधान्यभेदे तस्य पञ्जलनिष्पन्नत्वात्तथात्वम्। "षष्टिककङ्गु वस्तुकन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारकप्रभृतयः षष्टिकाः" सुश्रु०। "गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः"। भावप्रका० षष्टिकलक्षणसङ्ख्या तद्गुणा दर्शिता यथा— "षष्टिकाः मधुराः शीताः लघवो बद्धवर्चसः। वातपित्तप्रशमनाः शालिभिः सदृशा गुणैः" इति एवं सुश्रुतेऽपि।

**काकलि(ली)** स्त्री कल-इन् ईषत् कलिः कोः कादेशः। कृदिकारान्तत्वात् वा ङीप्। सूक्ष्ममधुरास्फुटध्वनौ अमरः "सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकलकण्ठानां काकलीकलकलेन" दशकु०। "उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः" सा० द०। काकलं गलस्योन्नतप्रदेशाकारः अस्त्यस्य अच् गौरा०ङीप्। काकलाकारे २स्तेयसाधने पदार्थे "फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरनकप्रभृत्यनेकोपकरणयुक्तोऽगत्या कस्यचिद्धं शरस्य गृहे सन्धिं छित्त्वा" दशकु०। काकं काकवर्णमधःफले लाति ला-क गौरा० ङीष्। ३गुञ्जायाम्। "काकलीमूलं गुञ्जामूलम्" ज्यो०त० रघु०।

**काकलीद्राक्षा** स्त्री काकल्या इव सूक्ष्मा द्राक्षा। अबीजायाम् क्षुद्रद्राक्षायाम्(किस्मिस्)राजनि०।"अबीजान्या स्वल्पतरा गोस्तनीसदृशैर्गुणैः" भावप्र०। गोस्तनीशब्दे तद्गुणा दृश्याः

**काकलीरव** पुंस्त्री काकली मधुराव्यक्तो रवो यस्य। १कोकिले राजनि० स्त्रियां जातित्वात् ङीप्। कर्म०। २काकलीरूपे रवे पु०। काकलीकलादयोऽप्यत्र।

**काकवल्लभा** स्त्री ६त०। काकजम्बुके राजनि०। [राजनि०

**काकवल्लरी** स्त्री काकप्रिया वल्लरी शाक०त०। स्वर्णवल्ल्याम्

**काकशिम्बी** स्त्री काकप्रिया शिम्बी। काकतुण्ड्याम् राजनि०

**काकशीर्ष** पु० काकः शीर्षेऽपेऽस्याः। वकवृक्षे जटाधरः। काकस्य तदग्रे वासयोग्यत्वात्तस्य तथात्वम्।

**काकस्ती** च० काकस्य स्त्रीव नाम्नत्वात्। वकवृक्षे शब्दचि०।

**काकस्फूर्ज** पु० काकः स्फूर्जत्यत्र स्फूर्ज-आधारे घञ्। कार्कतिन्दुके राजनि०।

**काका** स्त्री ईषत् कं जलमत्र, काकः काकाकारोऽस्त्यस्य अच् वा। १काकनासावृक्षे २काकोल्यां ३काकजङ्घायाम् ४गुञ्जायां ५मलपूाम् (काकोडुम्बरिकायाम्) ६काकमाच्याञ्च मेदि०।

**काकाक्षिगोलकन्याय** पु० काकस्याक्षिगोलकमिव न्यायः। काकस्य एकं चक्षुर्यथा उभयगोलके पर्यायेण चक्षुःकार्य्यकारकमेवमेकस्योभयसंबन्धज्ञापके न्याये।

**काकाङ्गी** स्त्री काकस्याङ्गं जङ्घेवाकारोऽस्याः वा ङीप्। काकजङ्घावृक्षे अमरः। पक्षे टाप् काकाङ्गा तदर्थे रमानाथः।

**काकाञ्ची** स्त्री काकं तज्जङ्घाकारमञ्चति गच्छति अनुचगतौ क्विप् गौरा०ङीप्, पा०, सुप०पञ्च् ईप्। काकजङ्घावृक्षे शब्दरत्ना०।

**काकाण्ड** पु० काक्या अण्ड इव फलं यस्याः पुंवत्। १महानिम्बे तस्य गुणादि सुश्रुतेनोक्तं यथा"माषैः समानं फलमात्मगुप्तकस्य काकाण्डफलं तथैव"। २कोलशिम्ब्याम् स्त्री गौरा०ङीप् तदन्तः ३महाज्योतिष्मत्यां राजनि०। ६त०। ४काक्याअण्डे पुं न०।

**काकाण्डोला** स्त्री काकाण्डस्य तुला उपमा फले यत्र पृषो० तलोपः। कोलशिम्ब्याम् राजनि०।

**काकादनी** स्त्री काकैरद्यतेऽसौ अद-कर्मणि ल्युट् ६त० ङीप् १गुञ्जायाम् शब्दर०। २श्वेतगुञ्जायाम् राजनि० ३कुलिकवृक्षे (कुलियाखाड़ा) वृक्षे रत्नमा०।"मद्येनाश्वमारकगुञ्जाकाकादनीमूलकल्कं पाययेत्" सुश्रु० इयञ्च सुश्रुते"कालेयकागुरुतिलपर्ण्याद्युपक्रमे"सुमनः काकादनीलाङ्गल्याादिना" "समासेन श्लेष्मसंशमनो वर्गः" इति श्लेष्मशमनतयोक्ता।

**काकायु** पु० काकस्यायुर्यस्मात्। स्वर्णवल्लीवृक्षे शब्दचि०।

**काकार** त्रि०कं जलमाकिरति आ+कॄ-अण्। जलसारिणि। स्त्रियां टाप् सुग्ध० पक्ष ईप् इति भेदः।

**काकारि** पु० काकोऽरिरस्य। पेचके। हेमच०।

**काकाल** पुंस्त्री केति शब्दं कलते रौति कल-अण्। द्रोणकाके शब्दरत्नमा० स्त्रियां जातित्वात् ङीष्।

**काकि** पुंस्त्री काकस्यापत्यम् वा इञ्। काकापत्ये स्त्रियां ङीप्। पक्षे काकिना० फिञ् कुक् च। काककायनि तदर्थे पुंस्त्री। स्त्रियां ङीप्।

**काकिणी** स्त्री "काकिणी च चतुर्भागो माषकस्य पणस्य च" शु०त० नारदोक्ते १माषकचतुर्थभागे २पणचतुर्थभागे च। "वराटकानां दशकद्वयं यत् सा काकिनी(णी) ताश्च पणश्चतस्रः" इति लीला०। "तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा। प्रदद्यात् दक्षिणां यज्ञे यथा स सफलो भवेत्" शु०त० छन्दो०। स्वार्थे कन्। काकिणिका तत्रार्थे "कश्चित्किलिपण्यव्यवहारेण यत्किञ्चिद्धनमनेभ्यो वा काकिणिकामात्रम्" भाग०१,१४,२।

**काकिनी** स्त्री १पणपादे २मानपादे ३वराटके च मेदि०। मानपादः निवर्त्तनपाद इति केचित् (चारिकाठा) माषपाद इत्येवः पाठो न्याय्यः काकिणीशब्ददर्शितनारदवाक्यैकवाक्यत्वात्

**काकिल** पु० ईषत् किरति कृ–क कोः कादेशः रस्य लः। गलस्योच्चतदेशे (टुंटि) शब्दमा०।

**काकी** स्त्री काक+जातित्वात् स्त्रियां ङीष्। १काकयोषिति काकवर्णत्वात् २वायसोलतायाम् ३काकोल्याञ्च शब्दचि०

**काकु** स्त्री कक–उण्। १शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कारप्रसिद्धे २विकृतार्थकल्पके नञादौ शब्दे च। "कामेकान्ते सा रसिका काकुवतेन" सा०द०। "प्रणिजगदुरकाकुश्रावकाः स्निग्धकण्ठाः" माघः। सा० द० "वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः। प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च। वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा" इति व्यञ्जनाहेतून् निर्दिश्य "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" काकुं लक्षयित्वा उदा० "गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्। अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ" नैष्यति अपि तु नैष्यत्येवेति काका व्यज्यते" इत्युक्तम्।

**काकुत्स्थ** पुंस्त्री ककुत्स्थस्य नृपस्यापत्यं शिवा०अण्। ककुत्स्थवंश्ये स्त्रियां ङीप्। ककुत्स्थशब्दे विवृतिः "काकुत्स्थमालोकयतां नृपाणाम्" "तं विनिक्षिप्य काकुत्स्थो पुरा दूषयति स्वलोम्" "अनन्यजेन काकुत्स्थः प्रयुक्तमथ दूषणम्" रघुः। "काकुत्स्थ ईषत्स्मयमान आस्त" भट्टिः

**काकुद** न० काकुं ददाति दा–क उप०स०। तालुनि अमरः तालुना काकूच्चारणात् तस्य तथात्वम् "उद्विग्नां काकुदस्य" प्रा० बहु० अस्यान्त्यलोपः "उत्काकुत्, विकाकुत्" सि० कौ० "पूर्णाद्विभाषा" पा० बहुव्रीहौ वाऽन्त्यलोपः। पूर्णकाकुत् पूर्णकाकुदः।

**काकुभ** त्रि० ककुभ इदं उत्सा० अञ्। १ककुप्छन्दस्के प्रगाथादौ। २दिक्सम्बन्धिनि च स्त्रियां ङीप्। ककुभोऽपत्यम् शिवा० अण्। तदपत्ये पुंस्त्री स्त्रियां ङीप्।

**काकेक्षु** पु० काकमीषज्जलमत्र कोः कादेशः कर्म्मधा०। (नलखागड़ा) १तृणभेदे त्रिका० २काशभेदे राजनि०।

**काकेन्दु** पु० काकस्य इन्दुरिवाह्लादकत्वात् काकस्य प्रियः इन्दुः पृषो०वा। (माकड़ाकेन्दु) कुलकवृक्षे अमरः।

**काकेष्ट** पु० ईत०। निम्बवृक्षे राजनि०।

**काकोचिक** पु० ईषत् कोची सङ्कोची कुच–णिनि स्वार्थे कन् (कुँचे) मत्स्यभेदे कनभावे काकोचिन् इत्यपि तत्र हारा० पु०। हारावल्यां "काकोचिकस्तु काकोचीत्यत्र पुंसाहचर्यात् पुंस्त्वमेव न्याय्यम्। ईकारान्तत्वभ्रमेण शब्दकल्पद्रुमे स्त्रीत्वोक्तिः प्रामादिकी।

**काकोडु(दु)म्बर** पु०काकमीषज्जलमत्र कर्म्म०काकस्य प्रियः उडु(दु)म्बरो वा। (कोटाडुमर) उडु(दु)म्बरभेदे शब्दरत्ना०। स्वार्थे कन् अत इत्वम् स्वार्थिकप्रत्ययस्य प्रकृतिलिङ्गव्यतिक्रमः। काकोडु(दु)म्बरिकाप्यत्र स्त्री अमरः। "तत्र दद्यात् प्रतीवापं काकोडु(दु)म्बरिकारसम्" "काकोडु(दु)म्बरिकागोजीपत्रैर्विस्रावयेद्रक्तं" सुश्रु०। काकोडु(दु)म्बरिका फल्गुर्मलपूर्जघनेफला" मलपूरलघ्नकत् तिक्ता शीतला तुवरा जयेत्। कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शःकामलाः" इति भावप्र० तद्गुणपर्य्यायोक्तिः।

**काकोदर** पुंस्त्री कुत्सितं कुटिलमकति अक–वक्रगतौ अच् कोः कादेशः काकमुदरं यस्य। १सर्पे अमरः स्त्रियां जातित्वात् ङीप् तस्य उरसा कुटिलगामित्वात्तथात्वम् "काकोदरोदरेण विनीतदर्पः" राघवपाण्डवीयम्।

**काकोल** पु० काकयति लोलयति कक–लौल्ये णिच् वा० ओल काकेन उल्लाय अद्यतेऽत्र उद्+ला–अदनार्थे आधारे क पृषो०वा। १नरकभेदे "महानरककाकोलम् संजीवनमहापथम्" नरकभेदकीर्त्तने मनुः, काकोलं यत्र काकैर्भक्ष्यते" प्रा० वि०। कं जलमाकोलति आ+कुल–संस्त्याने अण् उप० स०। २कुम्भकारे तस्य घटनिर्म्माणेन जलसंस्त्यानकरणात् तथात्वम्। कक–लौल्ये स्वार्थे णिच् वा० ओल। ३द्रोणकाके पुंस्त्री मेदि० स्त्रियां जातित्वात्

क्लीव्। "बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम्" अभक्ष्यमांसोक्तौ मनुः। "कलविङ्कं सकाकोलं कुररं रज्जुदालकम्" अभक्ष्यमांसोक्तौ याज्ञ०। ईषत् कोलति कुल–स्त्याने कर्त्तरि अच् कोः कादेशः। "काकोलकलपतेजः स्यात् कृष्णाऽपि महाविषम्" वैद्यकोक्तलक्षणे ४विषभेदे अमरः ५सर्पे ६शूकरभेदे पुंस्त्री शब्दरत्ना० स्त्रियां जातित्वात् ङीष्। काकोलीनामौषधौ पु० शब्दा०।

**काकोली** स्त्री काकोल+गौरा० ङीष्। "जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः" इति भावप्रकाशोक्ताष्टवर्गान्तर्गते लताभेदे तद्भेदलक्षणगुणादिकं भावप्र० उक्तं यथा "जायते क्षीरकाकोली महामेदोद्भवस्थले। यत्र स्यात् क्षीरकाकोली काकोली तत्र जायते। पीवरीसदृशः कन्दः क्षीरं स्रवति गन्धवान्। सा प्रोक्ता क्षीरकाकोली काकोल्यपि तथा भवेत्। एषा किञ्चिद्भवेत् कृष्णा भेदोऽयमुभयोरपि। काकोली वायसोली च वीरा कायस्थिका तथा। सा शुक्ला क्षीरकाकोली वयस्था क्षीरवल्लिका। कथिता क्षीरिणी धीरा क्षीरशुक्ला पयस्विनी। काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु बृंहणं वातदाहास्रपित्तशोषज्वरापहम्"। "सोमामृताश्मन्तक काकोल्यादौ गणे तथा। क्षीरिद्रोह्येष्वपि च वर्ग्यो रोपणाः स्मृताः"। "समङ्गा सोमसरला सोमवल्का सचन्दना। काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे"। "पृश्निपर्ण्यंशुमती च हरिद्रे मालती सिता। काकोल्यादिश्च योज्यः स्यात् प्रशस्तो रोपणे घृते" इति च सुश्रु०।

**काकोलूक** न० काकश्च उलूकश्च शाश्वतिकविरोधित्वात् समाहारद्वन्द्वः। काकोलूकसमाहारे ततः वैरे वुञ्। काकोलूकिका तयोर्वैरे स्त्री। काकोलूकमधिकृत्य कृतो ग्रन्थः "द्वन्द्वाच्छः" पा० काकोलूकीय तयोराख्याने तच्च भा० सौ० १अ० स्थितं यथा—

"सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः। सोऽपश्यत् सहसायान्तमुलूकं घोरदर्शनम्। महास्वनं महाकायं हर्य्यक्षं बभ्रुपिङ्गलम्। सुदीर्घघोणानखरं सुपर्णमिव वेगितम्। सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः। न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत!। संनिपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः। सुप्तान् जघान सुबहून् वायसान् वायसान्तकः। केषाञ्चिदच्छिनत् पक्षान् शिरांसि च चकर्त्त ह। चरणांश्चैव केषाञ्चिद्बभञ्ज चरणायुधः। क्षणेनाहन्यत् बलवान् येऽस्य दृष्टिपथे स्थिताः। तेषां शरीरावयवैः शरीरैश्च विशाम्पते!। न्यग्रोधमण्डलं सर्वं सञ्छन्नं सर्वतोऽभवत्। तांस्तु हत्वा ततः काकान् कौशिको मुदितोऽभवत्। प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः"।

**काकोल्यादि** पु० सुश्रुतोक्ते काकोलीप्रभृतौ औषधिगणे स च गणः "काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति" "काकोल्यादिरयं पित्तशोणितानिलनाशनः जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा"।

**काकोष्ठक** पु० काकस्योष्ठ इव कायति कै–क। सुश्रुतोक्ते कर्णबन्धाकृतिभेदे "तत्र समासेन पञ्चदश कर्णबन्धाकृतयः" इत्युपक्रमे। नेमिसन्धानक इत्यादिना "यष्टिकर्णं काकोष्ठक" इत्यन्तेन विभज्य "निर्मांसः संक्षिप्ताल्पशोणितपालिः काकोष्ठकपालिरिति" सुश्रु०लक्षितम्।

**काक्ष** काङ्क्षणे इदित् भ्वा० सक० सेट्। काङ्क्षति अकाङ्क्षीत् चकाङ्क्ष काङ्क्षा प्रनिकाङ्क्षति। "न शोचति न काङ्क्षति" गीता "काङ्क्षन् गतिमनुत्तमाम्" मनुः। अस्यात्मनेपदित्वमिच्छन्ति। "न काङ्क्षे विजयं कृष्ण!" गीता "काङ्क्षावहे द्वारपतेस्तवागमम्" भा०व०१०६२२। "नाहं भूयो वरं काङ्क्षे" भा०अनु०७३६८ भा०स०२१३५।
अनु+आनुलोम्येन प्रार्थने। "अतः प्रियं चेदनुकाङ्क्षसे त्वम्"
अभि+आभिमुख्येन प्रार्थने "अत्यर्थमभिकाङ्क्षामि मृगयां सरयूवने" रामा०।
आ+सम्यक्प्रार्थने "रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयं रवेः" रामा०। "धीरेव कन्या पितुराचकाङ्क्ष" रघुः। "आकाङ्क्षेयं तनुगुरुतया नैव गन्तुं समर्था" पदाङ्कदूतम्।
प्रति+प्रत्याशायाम्। "इहैव कालमासीनः प्रत्याकाङ्क्षन् सर्वगम्" भा० शा० ४८७।
प्रति+प्रतिरूपतयाभिलाषे। "त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः" रामा०।

**काक्ष** पु० कुत्सितमक्षमत्र "का पथ्यक्षयोः" पा० कोः कादेशः। कटाक्षे त्रिका०। "आशाखाभोन्मुखो दूरात् काक्षेणादरेक्षितः" भट्टिः।

**का(क्खो)क्षी** स्त्री कक्षे(क्षे) भवः अण् ङीप्। १तुवरिकायाम् (अरहर) २सौराष्ट्रमृत्तिकायाञ्च मेदि०। ३कच्छ(क्ष)भवमात्रे त्रि०।

काक्षीव पु० ईषत् क्षीवयति क्षीव–णिच्–अच् कोः कादेशः। १शोभाञ्जनवृक्षे अमरः २गौतमात् शूद्रायामौशीनर्य्यां जाते पुत्रभेदे। "शूद्रायां गौतमो यत्र महात्मा संशितव्रतः। औशीनर्य्यामजनयत् काक्षीवाद्यान् सुतान् मुनिः" भा० स० २० अ० मगधदेशवर्णने। स्वार्थे कन्। काक्षीवकोऽपि शोभाञ्जनवृक्षे पु० शब्दच०।

काक्षीवत् पु० दीर्घतमस ऋषेः शूद्रायामुत्पन्ने पुत्रभेदे तदुत्पत्तिकथा "गौतमादिभिः पुत्रैर्बद्धा उडुपेन गङ्गाम्भसि निःक्षिप्तं दीर्घतमसमधिकृत्य" भा० आ० १०४ अ० उक्ता यथा "तन्तु राजा बलिर्नाम सर्व्वधर्म्मविशारदः। अपश्यन्मज्जनगतः स्रोतसाभ्याशमागतम्। जग्राह चैनं धर्म्मात्मा बलिः सत्यपराक्रमः। ज्ञात्वा चैनं स वव्रेऽथ पुत्रार्थे भरतर्षभ!। सन्तानार्थं महाभाग! भार्य्यासु मम मानद!। पुत्रान् धर्म्मार्थकुशलानुत्पादयितुमर्हसि। एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः। तस्मै स राजा स्वां भार्य्यां सुदेष्णां प्राहिणोत्तदा। अन्धं वृद्धञ्च तं मत्वा न सा देवी जगाम ह। स्वान्तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा। तस्यां काक्षीवदादीन् स शूद्रयोनावृषिर्वशी। जनयामास धर्म्मात्मा पुत्रानेकादशैव तु। काक्षीवदादीन् पुत्रांस्तान् दृष्ट्वा सर्व्वानधीयतः। उवाच तमृषिं राजा ममैव इति भारत!। नेत्युवाच महर्षिस्तं ममैव इति चाब्रवीत्। शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः। अन्धं वृद्धञ्च मां दृष्ट्वा सुदेष्णा महिषी तव। अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम"। ३चण्डकौशिकपितरि गौतमे मुनिभेदे। "अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः। शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम्" भा० स० १६अ०। "काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः" ४अ०। अत्र पृथग्निर्द्देशात् काक्षीवतोऽन्य एव गौतमः "ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप!। उपस्पृश्य ततस्तत्र काक्षीवानिव मोदते" भा० व० ८४अ०। "काक्षीवान् गौतमोऽत्रिश्च" भाग० १,९,५। ४राजभेदे च। "शृणोति रन्तिदेवञ्च काक्षीवन्तं महाद्युतिम्" भा० आ० १अ० चतुर्विंशतिविख्यातनृपकथने।

काक्षीवत पुंस्त्री कक्षीवतोमुनेरपत्यम् अण् तस्येदमित्यण् वा १कक्षीवदपत्ये २तत्सम्बन्धिनि च स्त्रियां ङीप्। सा च व्युषिताश्वस्य भद्राख्यायां भार्य्यायां तद्दितिवृत्तं भा० आ० १२१ अ० यथा—"आसीत् काक्षीवती चास्य भार्य्या परमसम्मता। भद्रा नाम मनुष्येन्द्र! रूपेणासदृशी भुवि। कामयामासतुस्तौ च परस्परमिति श्रुतम्। स तस्यां कामसम्मत्तो यक्ष्मणा समपद्यत। तेनाचिरेण कालेन जगामास्तमिवांशुमान्। तस्मिन् प्रेते मनुष्येन्द्रे भार्य्यास्य भृशदुःखिता। अपुत्रा पुरुषव्याघ्र! विललापेति नः श्रुतम्। भद्रा परमदुःखार्त्ता तन्निबोध जनाधिप!। भद्रोवाच। नारी परमधर्म्मज्ञ! सर्व्वा भर्त्तृविनाकृता। पतिं विना जीवति या न सा जीवति दुःखिता। पतिं विना मृतं श्रेयो नार्य्याः क्षत्रियपुङ्गव!। त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम्। त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे। प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम्। पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च। त्वामहं नरशार्द्दूल! गच्छन्तमनिवर्त्तिनम्। छायेवानुगता राजन्! सततं वशवर्त्तिनी। भविष्यामि नरव्याघ्र! नित्यं प्रियहिते रता। अद्यप्रभृति मां राजन्! कष्टा हृदयशोषणाः। आधयोऽभिभविष्यन्ति त्वामृते पुष्करेक्षण!। अभाग्यया मया नूनं वियुक्ताः सहचारिणः। तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह। विप्रयुक्ता तु या पत्या मुहूर्त्तमपि जीवति। दुःखं जीवति सा पापा नरकस्थेव पार्थिव!। संयुक्ता विप्रयुक्ताश्च पूर्व्वदेहे कृता मया। तदिदं कर्म्मभिः पापैः पूर्व्वदेहेषु सञ्चितम्। दुःखं मामनुसम्प्राप्तं राजंस्त्वद्विप्रयोगजम्। अद्यप्रभृत्यहं राजन्! कुशसंस्तरशायिनी। भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा। दर्शयस्व नरव्याघ्र! साधु मामसुखान्विताम्। कृपणां नाथ! कृपणं विलपन्तीं नरेश्वर!। कुन्त्युवाच। एवं बहुविधं तस्यां विलपन्त्यां पुनः पुनः। तं शवं संपरिष्वज्य वाक्किलान्तर्हिताऽब्रवीत्। उत्तिष्ठ भद्रे! गच्छ त्वं ददानीह वरं तव। जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि!। आत्मकीये वरारोहे! शयनीये चतुर्द्दशीम्। अष्टमीं वाप्यृतौ स्नाता संविशेथा मया सह। एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता। यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा। सा तेन सुषुवे देवी शवेन भरतर्षभ!। त्रीन् शाल्वांश्चतुरो मद्रान् सुतान् भरतसत्तम!" [स्त्रियां जातित्वात् ङीप्।

काग पुंस्त्री केति शब्दं गायति गै–क। काके जटा०।

कागद न० कागःकाकवर्णोमस्यादिर्दीयतेऽत्र दा–घञर्थे क काकेन काकवर्णेन मस्यादिना दायति शुध्यति वा दै–शोधे

च वा। लेखनाधारे पत्रभेदे तस्य लग्नवर्णमस्यादिदाना-धारत्वात् तेन गुह्यत्वाच्च तथात्वम्। "भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके। कागदे पाडगब्धेन पञ्चगव्येन वा पुनः। त्रिगव्येनैकगव्येन विलिख्य धारयेन्नरः" मन्त्रकल्पद्रुमे हनुमत्कवचम्।

काग्नि पु० ईषदग्निः कोः कादेशः। ईषदग्नौ मुग्ध०।

काङ्क्षा स्त्री काक्षि–भावे अ। अभिलाषे "उद्गारशुद्धावपि भक्तकाङ्क्षा" सुश्रु०।

काङ्क्षिन् त्रि० काक्षि–णिनि। अभिलाषिणि "देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः" गीता स्त्रियां ङीप्। "तदा-श्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी" रामा०।

काङ्गा स्त्री कुत्सितमङ्गमस्याः। शटादिकायाम् शब्दच०।

काच दीप्तौ भ्वा० बन्धने सक० इदित् भ्वा० आत्म० सेट्। काञ्चते अकाञ्चिष्ट चकाञ्चे प्रतिकाञ्चते।

काच न० कच्यतेऽनेन कच बन्धने करणे घञ् न कुत्वम्। (मोम) सिक्थे तस्य बन्धहेतुत्वात्तथात्वम्। काचः क्षार-मृत्तिकाऽवयवाकरत्वेन अच्। क्षारमृत्तिकोद्भवे २लवणभेदे (काचलोन)। राजनि०। ३तत्साधने मृत्तिकाभेदे पु०। (क्षारीमाटी) अमरः। ४शिक्ये (शिका) ५मणिभेदे (काँच) मेदि०। "आकरे पद्मरागाणां जन्म काचमणेः कुतः" काचः काचः मणिर्मणिः" उद्भटः। काचश्च सुश्रुते अनुशस्त्रतयोक्तो यथा–

"अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्नि-क्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलयः" इति। "शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्। स्फटिकादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्" इति तदुपयोगविषयस्तत्रैवोक्तः। "पानीयं पानकं मद्यं मृन्मयेषु प्रदापयेत्। काचस्फटिकपात्रेषु शीतलेषु शुभेषु च" "काचाक्षकोशान् पटलांश्च घोरान् पुष्पस्य हन्त्यञ्जनमस्य योगः" सुश्रु०। ६नेत्ररोगभेदे तल्ल-क्षणादि सुश्रुते उक्तं यथा–

"तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः। रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित्। अस्मिन्नपि तमो-भूते नातिरूढे महागदे। चन्द्रादित्यौ सनक्षत्रौ अन्त-रिक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति। स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः" व्याकृतमेतत् भावप्र०यथा "यो दोषो नेत्ररोगः चतुर्थं पटलं प्राप्तं पटलं गतः स तिमिराख्यः तिमिरदर्शनेन तिमिर-मस्यास्तीति तिमिरः अर्शआदित्वात् अच्। तस्य लक्षणमाह रुणद्धीत्यादि सर्वतः सर्वत्र। लिङ्गनाश इति क्वचित् तन्त्रान्तरे लिङ्गनाशसंज्ञः। तस्य निरुक्तिश्च। लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं दृष्टितेजः तस्य नाशोऽस्मिन्निति लिङ्गनाशः। अस्मिन्नपि तिमिरेऽपि तमोभूते तमस्तुल्ये अत्र भूतशब्दस्तुल्यार्थः "भूतं प्राप्तसमे" इत्यमरात् नातिरूढे अप्रौढे गदे, चन्द्रादित्यौ नक्षत्राणि च पश्यति अन्तरिक्षे अन्तरिक्षस्य प्रकाशमयत्वेन तमो-ऽभिभवात् तेजांसि खद्योतादेः भ्राजिष्णूनि रत्न-सुवर्णादीनि। अस्मिन् प्रौढे चिरजे चन्द्रादीन्यपि न पश्यतीत्याशयः। नीलिकाकाचसंज्ञितः नीलिका काचेति नामान्तराभ्यां युक्तः"। तच्चिदानादि दृष्टिरोगशब्दे वक्ष्यते। स्वार्थे कन् काचकोऽप्यत्रार्थे।

काचन न० कच–बन्धने स्वार्थे णिच्–भावे ल्युट्। १पुस्तकादिबन्धने त्रिका०। स्वार्थे कन्। काचनक तत्रार्थे हारा०। का+चन शब्द०। २असाकल्यान्वितायां किंशब्दार्थस्त्रियाम् अव्य०। "दृष्टा काचन कन्यका खलु मया तेनास्मि तापाधिकः" प्रबोधच०

काचनकिन् पु० काचनकमस्त्यस्य इनि। लेख्यपत्रे जटा० तस्य काचनकरूपबन्धनवत्त्वात् तथात्वम्। [पात्रे त्रिका०।

काचभाजन न० काचमयं भाजनम्। (काचेरबासन) काच-

काचमल न० काचस्य क्षारमृत्तिकायाः मल इव। काच-भवे सौवर्चले लवणभेदे राजनि०।

काचलवण न० काचः काचहेतुकं लवणम्। (काचलोन) सौवर्चले लवणभेदे राजनि० तस्य क्षारमृत्तिकोद्भव-त्वात्तथात्वम्। तद्गुणाद्युक्तं सुश्रु०। "लघु सौवर्चलं पाके वीर्य्योष्णं विशदं कटु। गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम्"।

काचसम्भव न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् काचः क्षारमृत्तिका सम्भवोऽस्य। काचलवणे सौवर्चले राजनि०। काचोद्भवमप्यत्र न०।

काचसौवर्चल न० काचस्थानिकं सौवर्चलम् शा०त०। (काचलोन) लवणभेदे। राजनि०।

काचस्थाली स्त्री काचस्य क्षारस्य स्थालीव। (पारुलगाछ) १पाटलावृक्षे अमरः। ईन०। २काचपात्रे च।

काचाक्ष पुंस्त्री काच इवाक्षि अस्य षच् समा०। बकभेदे स्त्रियां जातित्वेऽपि संयोगोपधत्वात् न ङीष् किन्तु षित्त्वात् ङीष् इति भेदः। अयञ्च पुनः संचारी च

सुश्रुतेनोक्तः यथा हंससारसेत्याद्युपक्रमे काचाक्ष-मल्लिकाक्षेत्यादीनुक्त्वा "प्लवाः संघचारिणश्च" ।

काचिघ पु० कच-दीप्तौ बा० इघ् काचिं कान्तिं हन्ति गच्छति हन-गतौ बा० ड पृषो० हस्य घः । १काञ्चने । २केशमडे (केमडा) ३स्तबके च मेदि० । [दीपिते अमरः ।

काचित त्रि० कच-बन्धने णिच् कर्मणि क्त । शिक्या-

काचित् अव्य० का+चित् कुत्व० पार्थिव्यादिमते द्विपदम् । अस्मात्काव्यान्विते कार्य्यार्थे । "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पद्याङ्कदूतम् । चयनं चित् चि-भावे क्विप्-ईषत् चित् कोः कादेशः । ईषच्चयने । "प्रियं काचित्करं हविः" ऋ० १०।८६।१२ । "काचित्करम् ईषच्चयनकरम्" । [भङ्गकदले त्रिका० ।

काचिम पु० कच-बन्धे णिच्-इमनु । देवकुलोद्भवे

काचूक पुंस्त्री कच-दीप्तौ बा० ऊकञ् । १कृकवाकौ ताम्रचूडे पीतमस्तके खगे २कोके चक्रवाके च मेदि० स्त्रियां जातित्वात् ङीष् ।

काजल न० कुत्सितं जलम् कोः कादेशः । कुत्सितजले मुग्ध०

काञ्चन न० काचि-दीप्तौ भावे ल्युट् । १दीप्तौ । काचि-दीप्तौ ल्यु । २स्वर्णे अमरः । "अमितादपि सद्वृत्तममेध्यादपि काञ्चनम्" "वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम्" "गोभोजकाञ्चनैर्दैश्यं न्यूद्रं सर्वैस्तु घातकैः" मनुः । ३पद्मकेशरे मेदि० । ४नागकेशरपुष्पे ५धने राजनि० । ६चम्पके ७नागकेशरवृक्षे ८उडुम्बरे ९धुस्तूरे १०स्वनामख्याते वृक्षे च पु० मेदि० । स्वार्थे कन् । काञ्चनवृक्षे । काञ्चनदलश्च सुश्रुते वातशमनतयोक्तः । भद्रदार्व्वाद्युपक्रमे "काञ्चनकभार्ग्यादिना "समासेन वातसंशमनो-वर्गः" इति । "काञ्चनारः काञ्चनको गण्डारिः शोण-पुष्पकः । कोविदारश्च मरिचः कुद्दालो युग्मपत्रकः । कुण्डली ताम्रपुष्पश्चाश्मन्तकः स्वल्पकोरकः । काञ्चनारो हिमग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंश गण्डमालाव्रणापहः । कोविदारोऽपि तद्वत् स्यात् तयोः पुष्पं लघु स्मृतम् । रूक्षं संग्राहि पित्तास्रप्रदर-क्षयकासनुत्" भावप्र० तत्पर्य्यायभेदगुणाद्युक्तम् । काञ्चनमिव कायति कै-क । हरिताले न० राजनि० शालिभेदे सुश्रु० "लोहितकशालिकलमेत्याद्युपक्रमे" दीर्घ-शूककाञ्चनकेत्यादि "महाद्रूषकप्रभृतयः शालयः" इत्यु-क्तम् । काञ्चनस्य विकारः अण् । ११काञ्चनविकारे त्रि० । "स काञ्चने यत्र मुनेरनुज्ञया" माघः । "निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" मनुः । स्त्रियां ङीप् । "तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः" मेघ० । किमः द्वितीयान्तात् स्त्रियां चन सुप्च० । १२काञ्चिदित्यर्थे अव्य० । "न च काञ्चन काञ्चनसञ्चितिम्" भट्टिः । "न काञ्चन परिहरेत्" छा० उ० । द्विपदमिति बहवः । काचि बन्धने भावे ल्युट् । १२बन्धने न० ।

काञ्चनकदली स्त्री काञ्चनवर्णा कदली । स्वर्णकदल्याम् (चाँपाकला) राजनि० ।

काञ्चनकारिणी स्त्री काञ्चनं बन्धनं करोति कृ-णिनि ङीप् । शतमूल्यां शब्दच० । तस्याः बहुमूलत्वेन बन्धन-कारित्वात् तथात्वम् । [क्षीरिणीलतायाम् राजनि० ।

काञ्चनक्षीरी स्त्री काञ्चनमिव क्षीरमस्याः गौरा० ङीष् ।

काञ्चनगिरि पु० काञ्चनमयस्तत्प्रधानो वा गिरिः शाक० त० । १सुमेरुपर्वते हेमच० । २दानार्थकल्पितस्वर्णाचले च । काञ्चनाचलस्वर्णाचलादयोऽप्यत्र ।

काञ्चनपुष्पक न० काञ्चनमिव पीतं पुष्पमस्य कप् । आढल्य-वृक्षे राजनि० आढल्यशब्दे ८०५ पृ० दृश्यम् ।

काञ्चनपुष्पी स्त्री काञ्चनमिव पुष्पमस्य ङीप् । गणिकारी वृक्षे राजनि० ।

काञ्चनप्रभ पु० ऐलवंश्ये नृपभेदे । ऐलपुत्रवंशोपक्रमे "अमावसोस्तु दायादो भीमोराजाथ जन्मजित् । श्रीमान् भीमस्य दायादो राजासीत् काञ्चनप्रभः" हरिवं० २७अ० ।

काञ्चनाक्ष पु० दानवभेदे । "काञ्चनाक्षः कपिस्कन्धो व्याघ्राक्षः क्षितिकम्पनः" हरिवं० २४० अ० ।

काञ्चनार पु० काञ्चनं तद्वर्णमृच्छति पुष्पेण ऋ-अण् उप० स० । पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे भावप्र० ।

काञ्चनाल पु० काञ्चनं तद्वर्णमलति अल-अण् उप० स० । पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे शब्दर० ।

काञ्चनी स्त्री काञ्चते दीप्यतेऽनया काचि-दीप्तौ करणे ल्युट् ङीप् । १हरिद्रायाम् मेदि० २गोरोचनायाम् । काञ्चनं तद्वर्णः क्षीरेऽस्याः ङीष् । ३स्वर्णक्षीरिणीवृक्षे च राजनि० ।

काञ्चनीया स्त्री काञ्चनाय दीप्तौ हिता छ । १गोरोचनायाम् राजनि० काञ्चनखेदम् हृद्यत्वात् च । २काञ्चनसम्बन्धिनि त्रि० । "काञ्चनीयाऽपि माला या न सा दुष्यति कर्हि-चित्" भा० अनु० १०४ अ० ।

काञ्चि(ञ्ची) स्त्री काचि-बन्धने कर्मणि इन् । रशनायाम् (चन्द्रहार गोट) इत्यादौ कटिबन्धदामभेदे । "सकराव-बन्धनविलग्नगलत्कचकाञ्चि काञ्चिदरपत्तरथः" माघः ।

काचि–दीप्तौ कर्त्तरि इन्। २मोक्षदसप्तपुर्य्यन्तर्गतपुरीभेदे च "अयोध्या मथुरा माया काशी काञ्चिरवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" काञ्चिरभिजनोऽस्य अण् तस्य बहुषु लुक्। ३पित्रादिक्रमेण तत्र वासिषु जनेषु पु० ब० व०। "नृपतयाऽसृजत् काञ्चीं अरमांश्च पार्थिवः" भा०आ०१७५अ०। कृदिकारान्तत्वात् वा ङीप् उक्तार्थे। "शारिकोमात्तरितविहगनूर्वे चिकाञ्चीगुणायाः" मेघ०। "पुनः पुनः कोयरदामकाञ्चीम्" "काञ्चीगुणस्थानमनिन्दितायाः" कुमा०। "माञ्जिष्ठतोवर्णनितम्बकाञ्चीम्" रघुः। मुक्तिस्थानाभान्यकथनोपक्रमे "काञ्ची च त्र्यम्बकं चापि सप्तगोदावरीतटम्" काशी०६अ०। "जगाम नगरीं काञ्चीं कान्तां त्रिभुवनादपि। लक्ष्मीकान्तः स्वयं साक्षात्कान्त्या तत्र निवासिनः। श्रीकान्तानेव कुरुते परत्रेह च निश्चितम्। दृष्ट्वा काञ्चीं कान्तिमतीं कान्तिमद्भिर्निषेविताम्। कान्तिमानभवत् सोऽपि नाकान्तिस्तत्र कश्चित्" काशीख०। इयञ्च द्विविधा शिवकाञ्ची विष्णुकाञ्ची च पु०प्रसिद्धा। काञ्चीपुरी च दक्षिणस्यां इ०स०कूर्म्मविभागे उक्ता। अथ दक्षिणेन लङ्केत्युपक्रमे काञ्ची "मरुचीपट्टन चेर्य्यार्य्यकलिङ्गला ऋषभाः" इति। काञ्चीशब्दस्य प्रस्थशब्दे परे आद्युदात्तता। मेखलाभेदश्च "एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोडश ज्ञेया कलापः पञ्चविंशकः" इत्युक्तलक्षणः। अभेदोपचारादन्ययष्टिकायामपि वृत्तिरिति बोध्यम्। [हेमच०।

काञ्चिक न० काचि–बन्धने इन् संज्ञायां कन्। काञ्जिके

काञ्चि(ञ्ची)पद न० ६त०। जघने। हेमच०।

काञ्जिक न० अनुज–धात्वर्थनिर्देशे ण्वुल् कुत्सिता अञ्जिका व्यक्तिर्यस्य। आरनाले (काँजि) हेमच०।

तस्य गुणादि भाव०प्र०उक्तं यथा "काञ्जिकं रोचनं रुच्यं पाचनं वह्निदीपनम्। शूलाजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम्" अन्यत्र वैद्यके च "संहितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः। काञ्जिकम्भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु, दाहज्वरहरं स्पर्शात् पामावातकफापहम्। माषादिवटकैर्यत्तु क्रियते तद्गुणाधिकम्। लघु वातहरं तत्तु रोचनं पाचनम्परम्। शूलाजीर्णविबन्धानां नाशनं वस्तिशोधनम्। धान्याम्लमच्छतरमोामनिवारि हारि शुण्ठीरजीरलवणोरकसंस्कृतं यत्। आवासितं सुरभि हिङ्गुकयेन यत्नात् तेनाशुशुक्तिकयोऽधिकतां प्रयाति। एतामहीषधविभावितमाषिमन्यं संसिद्धमामलकभेदकाञ्जिकं यत्। मन्दं विवर्द्धयति जाठरदीप्तिहोत्रं निर्वाणदीपमिव गन्धकचूर्णयोगः। काञ्जिकं दधिवद् हृद्यं सरकमग्निकरं परम्। वातहृद्वद्धे च गुर्वाहारस्य पाचकम्"। अन्यत्र च "काञ्जिकं दधितैलन्तु वनोपान्तितनाशनम्। गात्रगौरवस्य दाहाय मर्द्दनाच्च च भक्षणात्"। भावप्र० तद्भेदतद्विधानाद्युक्तं यथा–"कुल्माषधान्यमण्डेन संहितं काञ्जिकं भवेत्। यत्नस्त्रादि शुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते। तुषाम्बु संहितम् ज्ञेयमामैर्विदलितैर्यवैः। यवैस्तु निस्तुषैः पक्वैः सौवीरं साधितं भवेत्। आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैर्वा संहितं तत्तु सौवीरसदृशं गुणैः। कुल्माषधान्यमण्डादि संहितं काञ्जिकं विदुः। शिण्डाकी संहिता ज्ञेया मूलकैः सर्षपादिभिः"।

काञ्जिकवटक पु०(काँजिवडा) प्रसिद्धे भावप्रकाशोक्ते वटकभेदे तद्विधानगुणादि तत्रोक्तं यथा "मन्थनी नूतना धार्य्या कटुतैलेन लेपिता। निर्म्मलेनाम्बुनापूर्य्य तस्यां चूर्णं विनिःक्षिपेत्। राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतान्। निःक्षिपेद्वटकांस्तत्र भाण्डस्यास्य मुद्रयेत्। ततोदिनत्रयादूर्द्ध्वमम्लाः स्युर्वटका ध्रुवम्। काञ्जिकी वटकोरुच्यो वातघ्नः श्लेष्मकारकः"। शीतोदाहं शूलमजीर्णं हरते हगामयेऽस्यहितः"।

काञ्जिका स्त्री ईषदञ्जिका अनुज–ण्वुल् अत इत्त्वम् कोः कादेशः। १जीवन्तीलतायां २पलाशीलतायां राजनि०। वैद्यकोक्ते सार्षपकल्केन कृते व्यञ्जनभेदे तल्लक्षणं यथा "सार्षपीकल्कतो रुच्या खण्डिता स्निग्धभाजने। स्थापिता मत्स्यसंहिता तत्र वा तण्डुलोदके। सप्तरात्रात् परं चुक्रं ततः सम्यक् प्रजायते। तस्मादेव समाहृत्य तत्क्षेहाप्रलेहयेत्। काञ्जिकेति समाख्याता सूदधर्म्मोपजीवकैः। सार्षपस्य गुणा ये हि ते चास्या अपि कीर्त्तिताः"।

काञ्जी स्त्री कं जलमनक्ति अनुज–अण् उप०स० गौरा० ङीष् पा०, सुग्ध० मते ईप्। महाद्रोणोवृक्षे राजनि०

काट पु० कं जलमपत्ते प्राप्यतेऽत्र अट–आधारे घञ्। १कूपे निरु०। "इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाल्हः" ऋ०१,१०६,६, "कूटवाल्ह संगीर्य्यन्ते सोमया काटमर्हति" अथ०१२,४,३, २विषममार्गे वेददी०।

काटुक न० कटुकस्य भावः युवा० अण्। कटुत्वे।

काट्य त्रि० काटे विषममार्गे कूपे वा भवः यत् । १विषममार्गभवे २कूपभवे च ३रुद्रभेदे पु० । "नमः काट्याय च नीप्याय च" यजु० १६,३७, नमः काट्याय च गह्वरेष्ठाय च"। "काटे कूपे विषममार्गे वा भवः" वेददी० ।

काठ पु० कथ्यते तद्भूते कठ-तङ्कने कर्म्मणि घञ् । १पाषाणे त्रिका० । कठस्येदम् अण् । २कठसंबन्धिनि त्रि० स्त्रियां ङीप् ।

काठक न० कठानां धर्म्म आम्नायः समूहो वा वुञ् । १कठशाखाध्यायिधर्म्मे २तदाम्नाये ३तत्समूहे च "देवसुम्नयोर्य्यजुषि काठके" पा० कठयज्ञे व्याकृतमेतत् । "यद्रोदीत्तद्रुद्रस्य रुद्रत्वमिति काठकम्" निरु० ।

काठिन्यफल पु० काठिन्यं फलेऽस्य । कपित्थे राजनि० ।

काठेरणि पु० ऋषिभेदे । तस्येदं तत्रभवो वा गहा० छ । काठेरणीय तत्सम्बन्धिनि तत्रभवे वा त्रि० ।

काण पुंस्त्री कण-निमीलने संज्ञायां कर्त्तरि घञ् । १काके मेदि० स्त्रियां जातित्वात् ङीष् । २एकचक्षुर्युक्ते त्रि० । काणत्वञ्च चक्षुरिन्द्रियशून्यैकगोलकवत्त्वम् । "पौनर्भवश्च काणश्च यस्योपपतिरेव हि" "वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु" अपाङ्क्तेयकथने मनुः । "खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्" "काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणं वरम्" मनुः । अस्य निरुक्ते ६ अ० "अक्षाणिकाणो विकटे" इत्यृचमधिकृत्य अन्याऽपि निरुक्तिर्दर्शिता यथा—"अक्षाणिनि काणे विकटे विक्रान्तदर्शने इत्यौपमन्यवः । कणतेर्वा स्यादणूभावकर्मणः । कणतिः शब्दाणूभावे भाष्यतेऽनुक्वणतीति मात्राणूभावात् कणादर्शनाणूभावात् काणः" इति "परोपद्रावकृत् काणो गां दद्यात् स सनीलिकाम्" शाता० परोपद्रावकर्मविपाकः काणत्वमुक्तम् । मनुना तु दीपनिर्वापककर्मविपाकत्वमुक्तम् । "दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्" ।

काणभूति पु० वररुचिनामकात्यायनेन वृहत्कथाख्यापकोद्देश्ये पिशाचत्वमाप्ते यक्षभेदे । "विन्ध्याटव्यां कुबेरस्य शापात् प्राप्तः पिशाचताम् । सुप्रतीकाभिधो यक्षः काणभूत्याख्यया स्थितः" "इत्याख्याय कथामेष विन्ध्यान्तः काणभूतये । पुनर्वररुचिस्तस्मै प्रस्तुतार्थमवर्णयत्" इति च वृहत्क० तद्वितिवृत्तं तत्रैव दृश्यम् ।

काणुक त्रि० कण-दीप्तौ वा० उकञ् । १कान्ते २क्रान्ते ३पूर्णीकृते च । "इन्द्रः सोमस्य काणुका" ऋ० ८,७७,४ । "काणुका कान्तानि क्रान्तानि सोमेन, कृतानि वा सोमपूर्णानि" भा० । निरुक्ते तु इमामृचमधिकृत्य ५,११, उक्तं यथा—"काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा इन्द्रः सोमस्य कान्त इति वा कणेघात इति वा कणेहतः कान्तिहत इति" । तत्र दुर्गा० सर्व्वत्र साधु ।

काणूक पुंस्त्री कणति कण-ऊकण् । वायसे उज्ज्व० । स्त्रियां जातित्वात् ङीष् ।

काणेय पुंस्त्री काणायाः अपत्यम् "स्त्रीभ्यो ढक्" पा० ढक् । काणाया अपत्ये पक्षे "क्षुद्राभ्यो वा" पा० ढ्रक् । काणेरः तत्रार्थे पुंस्त्री "क्षुद्राश्च अङ्गहीनाः शीलहीनाश्च" सि० कौ० । काणेयानां विषयो देशः ऐषुकार्या० विधल् । काणेयविध तद्विषये देशे ।

काणेली स्त्री १अनूढायां कन्यायाम् २असत्यां स्त्रियाञ्च । "काणेलीमातः ! वामतस्तस्य सार्थवाहस्य गृहम्" मृच्छ० ।

काण्टकमर्द्दनिक त्रि० कण्टकमर्द्दनेन निर्वृत्तम् अक्षद्यूता० ठक् । कण्टकमर्द्दनेन निर्वृत्ते स्वास्थ्यादौ ।

काण्ठेविद्धि पुंस्त्री कण्ठे विद्धः ७त० सप्तम्याः अलुक् कण्ठेविद्धऋषिभेदस्तस्यापत्यम् इञ् । कण्ठेविद्धस्यापत्ये स्त्रियां तु गोत्रप्रत्ययान्तत्वात् वा ष्यङ् पक्षे ङीप् । काण्ठेविद्ध्या काण्ठेविद्धी वा ।

काण्ड पुंन० कनी-दीप्तौ ड तस्य नेत्त्वं किच्च दीर्घः । १दण्डे २वाणे ३पर्व्वणि कुत्सिते ४वर्गे ५अवसरे ६जले च अम० । ७नाले (डाँटा) ८वृक्षस्कन्धे (गुँडि) ९स्तम्बे (गुल्मभेदे) १०निर्ज्जने धरणिः ११नाडीवृन्दे १२वृक्षभेदे (घरट्ट) मेदि० । १३श्लाघायां हेमच० । दण्डवाल षोडशहस्तमितः वंशः वंशादिखण्डश्च "काण्डान्तात् क्षेत्रे" पा० क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि सति द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । "प्रमाणे द्वयसजिति" पा० विहितस्य मात्रचः "प्रमाणे लोद्विगोर्नित्यमिति" वार्त्ति० लुक् । क्षेत्रे किं द्विकाण्डी रज्जुः" सि०कौ० । "पृषता पत्त्राकाण्डेनाहनि" कात्या० ८,७,२० । पत्राकाण्डेन वंशदण्डेन"कर्कः । वाणे "सविषं काण्डमादाय मृगयामास वै मृगम्" भा०अनु०२६५श्लो० । वर्गे "दयातपस्काण्डमखीलसं नमः" माघः । "वृक्षकाण्डमितो भाति" रामा० । "दूर्व्वाकाण्डमिव

स्यामा” भट्टिः । वर्गे च एकजातीयसङ्घातः “क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह !” भाग० ४, २४, ८। “अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा” भाग० ८, ४, २१ । उपचारात् १४तत्प्रतिपादकग्रन्थे च ब्रह्मकाण्डं कर्म्मकाण्डम् अवसरश्चात्र योग्यकालः प्रस्तावश्च तत्र योग्यकाले अकाण्डशब्दे ५ २८ उदा०। प्रस्तावे अयोध्याकाण्डं लङ्काकाण्डमित्यादि । नालमत्र लतादीनां प्रताधारदण्डः (डाँटा) नालाकृपक्ष। तत्र नाले “काण्डमूलपत्रपुष्पफलप्ररोहरसगन्धानां साहश्चेन प्रतिनिधिं कुर्यात् सर्वाभावे यवः प्रतिनिधिः” श्रा० त० पैठी० । “काण्डं नालम्” रघु०। “पुष्पकाण्डाद्विनिर्येऽस्यनि” कात्या० २५, ६, ५ । पुच्छं काण्डमिव नालाकृपत्वात् । स्कन्धे “काण्डात् काण्डात् प्ररोहन्ती” यजु० १३, १४ । “सङ्गतः पञ्चमूलस्य काण्डमष्टाङ्गुलम्” सुश्रु० । स्कन्धे “रज्जुकाण्डानि वा लब्धसर्पेण दंशयित्वा भक्षयेत्” “दूर्वेन्दीवरनिस्त्रिंशाद्रीरिष्टशरकाण्डानामन्यतमवर्णः” सुश्रु० “उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः” “बीजकाण्डरुहाण्येव प्रतानावल्ल्य एव च” मनुः ।१५ग्रन्थपरिच्छेदे । मधुकाण्डं श्राद्धकाण्डम् १६सन्धिविश्लिष्टैकखण्डास्थ्नि न०।“भग्नं समासात् द्विविधं हुताशकाण्डे च सन्धौ च हि तत्र सन्धौ । उत्पिष्टविश्लिष्टविवर्त्तितञ्च तिर्य्यग्गतं क्षिप्तमधश्च षट् च” । रोगनिश्चयः । “सन्धिविश्लिष्टमेकखण्डमस्थि काण्डम्” तट्टीका काण्डस्यावयवो विकारो वा बिल्वा० अण् । १७काण्डावयवे १८तद्विकारे च त्रि० १९अङ्कोटवृक्षे पु० शब्दचि० ।

**काण्डकटुक** पु० काण्डे स्कन्धेऽपि कटुकः । कारवेल्ले, (करेला) राजनि० । [स्वार्थे कप् । काण्डक्षे राजनि० ।

**काण्डकाण्डक** पु० काण्डस्य शरदण्डस्य काण्डमिव काण्ड-

**काण्डकार** पु० काण्डं किरति विक्षेपतया कृ–खल् । १गुवाकवृक्षे शब्दमा०। कृ–ण्वुल् । २वाणकारके त्रि० ।

**काण्डकीलक** पु० काण्डे कीलमिव यस्य कप् समा० । लोध्रवृक्षे राजनि० । तस्मिन् हि कीटसम्बन्धात् कीलमिव स्कन्धे जायते । [दीर्घकाण्डे गुण्डनामतृणे राजनि०।

**काण्डगुण्ड** पु० काण्डेन गुण्डयति गुडि–वेष्टने अण् ।

**काण्डगोचर** पु० काण्डस्य बाणस्य गोचर इव गोचरोऽस्य । लोहमये नाराचाख्ये अस्त्रभेदे त्रिका० ।

**काण्डतिक्त** पु० काण्डे तिक्तः । भूनिम्बे (चिराता) राजनि० । स्वार्थे कन् । काण्डतिक्तक तत्रैव ।

**काण्डधार** पु० काण्डं धारयत्यत्र धृ–णिच् आधारे अच् । १देशभेदे । स अभिजनोऽस्य तक्षशिला० अञ् । २काण्डधार पित्रादिक्रमेण तत्रवासिनि त्रि० । [राजनि० ।

**काण्डनील** न० काण्डे नीलः कीटाकलितत्वात् । लोध्रवृक्षे

**काण्डपट** पु० काण्ड इव पटः । (कानात) पटभेदे, हेमच० । तस्य हि संकोचे काण्डरूपता भवति । “ततः स्वमेवागारभागीय काण्डपटपरिक्षिप्ते विविक्तोद्देशे” दशकु० स्वार्थे कन् । काण्डपटक तत्रैव । “उत्क्षिप्तकाण्डपटकान्तरलीयमानः” माघः । [शरपुङ्खाख्ये राजनि० ।

**काण्डपुङ्खा** स्त्री काण्डस्य शरस्य पुङ्खो यस्याः ५ त० ।

**काण्डपुष्पा** स्त्री काण्डात् पुष्पमस्याः “काण्डप्रान्तशतैकेभ्यः पुष्पात्” पा० टाप् । द्रोणवृक्षे शब्दच० पुष्पे न० ।

**काण्डपृष्ठ** न० काण्डं दण्ड इवास्थिदत्त स्थूलं पृष्ठमस्य । १स्थूलपृष्ठे धनुरादौ । काण्डः पृष्ठेऽस्य । २शस्त्राजीविनि पु० । “स्त्रीपूर्व्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ! अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम्” भा० अनु० २३अ० । “अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च” भा० अनु० १०अ० अपाङ्क्तेयकथने । “चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः” भा० अनु० १२५अ० अभोज्यान्नकथने । पापिनां तिर्य्यग्योनितः काण्डपृष्ठताप्राप्तिश्च क्रमशो यथा भवति तथा भा० अनु० २८अ० निरूपितं यथा “तिर्य्यग्योनिगतः सर्व्वो मानुष्यं यदि गच्छति । स जायते पुक्कसो वा चण्डालो वाऽप्यसंशयः । पुक्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते । स तस्यामेव सुचिरं मातङ्ग परिवर्त्तते । ततोदशशते काले लभते शूद्रयोनिताम् । शूद्रयोनावपि ततो बहुशः परिवर्त्तते । ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि । वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते । ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् । ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु द्विशते काले लभते काण्डपृष्ठताम् । काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु त्रिशते काले लभते जडतामपि । तान्तु प्राप्य चिरं कालं तत्रैव परिवर्त्तते । ततश्चतुःशते काले श्रोत्रियो नाम जायते” । “स्वकुलं पृष्ठतः कृत्वा योवै परकुलं व्रजेत् । तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः” शूद्रकमलाकरोक्तकर्म्मविपाकः काण्डपृष्ठता । ३वैश्यापतौ शब्दकल्पद्रुमः तन्मूलं मृग्यम् ।

**काण्डरुहा** स्त्री काण्डात् रोहति रुह–क । (कटकी)

१कटुक्याम् रत्नमाला। २काण्डरुहमात्रे त्रि०। "बीज-काण्डरुहाश्चैव" मनुः।

**काण्डर्षि** पु० काण्डस्य वेदभागभेदस्य ऋषिः तदधिकारेण विचारकः। वेदभागभेदमीमांसके जैमिन्यादौ त्रिका०। तत्र कर्म्मकाण्डमीमांसको जैमिनिः तेन हि 'अथातो धर्म्मजिज्ञासा' इत्यादिसूत्रजातेन कर्म्मकाण्डस्य विचारः कृतः। ब्रह्मकाण्डस्य विचारको वेदव्यासः तेन हि "अथातो ब्रह्मजिज्ञासा" इत्यादिसूत्रजाते ब्रह्मकाण्डस्य विचारः कृतः। एवं भक्तिकाण्डस्य विचारकः शाण्डिल्य इति बोध्यम्

**काण्डवत्** पु० काण्डोऽस्त्यस्य प्रहरणत्वेन मतुप् मस्य वः। शरधारिणि (तीरन्दाज) अमरः।

**काण्डवारिणी** स्त्री काण्डान् रिपुबाणान् वारयति स्मरणेन वृ-णिच्-णिनि। दुर्गायाम् "महागजघटाटोपसंयुगे नरवाजिनाम्। स्मरणात् वारयेत् बाणान् तेन सा काण्डवारिणी" देवीपु०४५अ० देवीनामभेदनिरुक्तौ।

**काण्डलाव** त्रि० काण्डं लुनाति लू-अण् उप० स०। १वृक्षस्कन्धच्छेदके काण्डं लवितुम् "अण् कर्म्मणि च" पा०। क्रियार्थायां क्रियायां कर्म्मण्युपपदेऽण्। २काण्डं छेत्तुमित्यर्थे। काण्डलावो व्रजति" सि०कौ० काण्डं छेत्तुं व्रजतीत्यर्थः।

**काण्डवीणा** स्त्री काण्ड इव स्थूला वीणा। १स्थूलवीणायां चाण्डालवीणायाम्। काण्डस्य शरस्य विकारः शिला० अण्। काण्डी वीणा कर्म०। २शरमय्यां वीणायाम् २'गोधावीणाः काण्डवीणाश्च पत्नीवादयन्त्युपगायन्ति" कात्या०१३, २,१७। "शरकाण्डमय्यो वीणाः काण्डवीणाः" कर्कः।

**काण्डसन्धि** पु० ६त०। ग्रन्थौ पर्व्वणि (पाब्)(गाँट) राजनि०

**काण्डस्पृष्ट** पु० स्पृष्टं गृहीतं काण्डं येन निष्ठान्तत्वात् परनि०। शस्त्राजीवे अमरः।

**काण्डहीन** न० काण्डेन हीनम् ३त०। भद्रमुस्तके शब्दच०।

**काण्डिका** स्त्री काण्डोऽस्त्यस्याः प्राशस्त्येन ठन्। १लङ्कानामकधान्यभेदे २वालुकानामकर्कटीभेदे च राजनि०।

**काण्डिन्** त्रि० काण्डः गुल्मोऽस्त्यस्य प्राशस्त्येन इनि। प्रशस्तगुल्मयुक्ते स्त्रियां ङीप्। "अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुधः" अथ० ८,७,४।

**काण्डीर** पु० काण्डो बाणोऽस्त्यस्य इत्यर्थे "काण्डाण्डादीरन्नीरचौ पा०" इत्यनेन ईरन् ईरच् वा। १बाणास्त्रधारिणि (तीरन्दाज) अमरः "काण्डीरः शार्ङ्गिकः शार्ङ्गी" भट्टिः बाणाकारशिखावत्त्वात् २अपामार्गे काण्डवेल इति ख्याते ३लताभेदे च राजनि० ४मञ्जिष्ठायां स्त्री रत्नमाला स्वार्थे गौरादित्वात् ङीष्। [तृणभेदे राजनि०।

**काण्डेक्षु** पु० काण्डे इक्षुरिव (ताल्माखना) इति ख्याते काश-

**काण्डेरी** स्त्री काण्डं बाणाकारं हस्तिदन्तमिव पुष्पम् ईर्त्ते ईरक्-गतौ अण् गौरादेराकृतिगणत्वात् ङीष् पा०, मुग्ध० अण् ईप्। नागदन्तीवृक्षे रत्नमाला।

**काण्डेरुहा** स्त्री काण्डे रोहति रुह-क ७त० अलुक् स०। (कट्की) कटुकीवृक्षे रत्नमा०। [अमरे पाठान्तरम्।

**काण्डोल** पु० कण्डोल+प्रज्ञा० स्वार्थे अण्। कण्डोलशब्दार्थे

**काण्व** पु० काण्वस्य कण्वगोत्रापत्यस्य छात्रः कण्वादि० अण् यलोपः। १कण्वगोत्रापत्यस्य छात्रे 'यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः। जगृहुर्वाजसंन्यस्ताः काण्वमाध्यन्दिनादयः' भाग०१२,६,७७। २तदधीतशाखायां स्त्री ङीप्। कण्वस्यापत्यं शिवा० अण्। ३कण्वापत्ये पुंस्त्री "याभिः काण्वस्योप बर्हिः" ऋ०८,१,८। "इत्था धीमन्तमद्रिवः काण्वं मेध्यातिथिम्" ८,२,४०। "काण्वं कण्वस्य पुत्रम्" भा०। गोत्रापत्ये तु गर्गा० यञ्। काण्व्य तद्गोत्रापत्ये बहुषु तस्य लुक्। स्त्रियां गोत्रान्तत्वात् ङीप् यलोपश्च। काण्वी तद्गोत्रापत्यस्त्रियाम्। "काण्वीपुत्रात् काण्वीपुत्रः" इ० श०वेदवंशवर्णने। ततः स्त्रियां लोहिता० ष्फक्। काण्व्यायनी। ततो युन्यपत्ये तु "यञिञोश्च ४।१।१०१" पा० फक्। काण्व्यायन तदीययुवापत्ये पुंस्त्री। कण्वेन दृष्टं साम अण्। ४कण्वदृष्टे सामभेदे। "कौत्सं भवति काण्वं भवति" श्रुतिः। तच्च साम गेय(वे)गाने १६प्रपाठके दृश्यम्।

**कात्** अव्य० कुत्सितसततत्वेन अत-आधारे क्विप् कोः कादेशः। तिरस्कारे तिरस्कारस्य कुत्सितप्राप्तिहेतुत्वात् तथात्वम्। "यन्मयैश्वर्य्यमत्तेन गुरुः सदसि कात्कृतः" भाग० ६,७,९। "कात्कृतस्तिरस्कृतः" श्रीधरः।

**कातन्त्र** न० ईषत् तन्त्रमस्य कोः कादेशः। कालापव्याकरणे तच्च कार्त्तिकेयप्रसादेन सर्व्ववर्म्मणा कृतं यथोक्तं वृहत्कथासारे सर्व्ववर्म्माभ्युपगतेल्यपक्रमे "ततोऽन्तःप्रविश्य तेन स्कन्देन मम दर्शनम्। दत्तं तत प्रविष्टा मे मुखे मूर्त्ता सरस्वती। अथासौ भगवान् साक्षात् षड्भिराननपङ्कजैः। "सिद्धो वर्णसमाम्नायः" इति सूत्रमुदैरयत्। तच्छ्रुत्वैव मनुष्यत्वसुलभाज्ञानतात् परम्। उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम्। अथाब्रवीत् स देवो मां नावदिष्यः स्वयं यदि। अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम्। अधुना स्वल्पतन्त्रत्वात्

कातन्त्राख्यं भविष्यति । महाहमकलापस्य नाम्ना कालापकं तथा । इत्युक्त्वा शब्दशास्त्रं तत्प्रकाश्याभिनवं लघु । साक्षाद्देव स मां देवः पुनरेवमभाषत"

**कातर** त्रि॰ ईषत्तरति स्वकार्य्यसमाप्तिं गच्छति तृ—अच् कोः कादेशः । १अधीरे, व्यसनाकुले अमरः २भीते, ३विवशे, ४चञ्चले च । "सेना तदध्यासितकातराक्षी" रघुः । "तयोः समापत्तिषु कातराणि" कुमा॰ । "कातरोऽपि यदि मोहतार्च्चिषा" रघुः । "मद्वेश्मन्याः प्रिय इति सखे ! चेतसा कातरेण" मेघ॰ । "विद्धा मृगी व्याधशिलीमुखेन मृगोऽपि तत्कातरशीलपेन" उद्भटः । के जले आतरति प्लवते न तु विशेषतो मज्जति । ५उडुपे । (कातला) ६मत्स्यभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष् । ७ऋषिभेदे पु॰ ततः गोत्रे नडा॰ फक् । कातरायण तद्गोत्रापत्ये पुंस्त्री । भावे ष्यञ् । कातर्य्य व्याकुलतायां न॰ "कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम्" रघुः । तल् कातरता स्त्री, त्व कातरत्व न॰ तदर्थे ।

**कातल** पु॰ कस्य जलस्य न तलमस्ति स्पृश्यत्वेनास्य अच् । (कातला) १मत्स्यभेदे राजनि॰ । स्त्रियां जातित्वात् ङीष् । "कातलो मधुरस्निग्धो गुरुपाकी त्रिदोषकृत्" वैद्य॰ । २ऋषिभेदे च ततः गोत्रापत्ये नडा॰ फक् । कातलायन तदपत्ये पुंस्त्री स्त्रियां गोत्रत्वात् ङीष् ।

**काति** स्त्री कै—शब्दे क्तिन् । स्वे ऋषकातिशब्दे उदा॰ ।

**कातीय** त्रि॰ कात्यायनस्य छात्रः तस्येदं वा "वृद्धाच्छः" पा॰ छ तत्र फको वा लुक् । १कात्यायनच्छात्रे २तत्सम्बन्धिनि च त्रि॰ । कातीयं श्रौतसूत्रं गृह्यसूत्रमित्यादि पक्षे न लुक् । कात्यायनीय तदर्थे त्रि॰ । कातीयश्रौतसूत्रप्रतिपाद्यविषयाश्च कात्यायनशब्दे दृश्याः ।

**कातु** पु॰ कं जलमतति सातत्येन गच्छति अत—उण् इत॰ । कूपे निरु॰ तस्य शोषे निःशेषेण शोषणाभावात् तथात्वम्

**कात्यक्य** पु॰ कत्थ-श्लाघायाम् ण्वुल् कत्थकः स्वार्थे ष्यञ् अग्निभेदे निरु॰ । "यद्यैष्म इति कात्यक्योऽग्निरिति" शाकपूणिः । "नाराशंसो यज्ञ इति कात्यक्यः नरा अस्मिन्नासीनाः शंसन्ति अग्निरिति शाकपूणिः । इति च निरु॰ ८,५,६, [पत्ये ।

**कात्य** पुंस्त्री कतस्यर्षेः गोत्रापत्यम् गर्गा॰ यञ् । कतर्षिगोत्रा-

**कात्यायन** पु॰ कतस्य गोत्रापत्यं युवा गर्गा॰ यञ् यञन्तत्वात् यनि फक् । कतस्य युवगोत्रापत्ये ऋषिभेदे । स च त्रिविधः विश्वामित्रवंश्यः, गोभिलपुत्रः, कतवंश्यसोमदत्त द्विजपुत्रः वसुदत्तागर्भजः वररुचिनाम्ना ख्यातश्च । तत्र विश्वामित्रगोत्रोत्पन्नः हरिवं २८३॰ उक्तोयथा । "विश्वामित्रस्य च सुता देवरातादयः स्मृताः। विख्यातास्त्रिषु लोकेषु तेषां गोत्राणि मे शृणु । देवश्रवाः कतश्चैव यतः कात्यायनाः स्मृताः" इति ।

अयन्तु गोभिलपुत्रकात्यायनात् भिन्नः । गोभिलपुत्रकात्यायनेन च कर्मप्रदीपाख्यं छन्दोगपरिशिष्टरूपं शास्त्रं प्रणीतं तस्येदमादिमं वचनम् । "अथातो गोभिलोक्तानामन्येषाञ्चैव कर्म्मणाम् । अस्पष्टानां तथा सम्यग्दर्शयिष्ये प्रदीपवत्" । तत्र १प्रपाठके १०खण्डाः तत्र १ख॰ यज्ञोपवीतादिपरिभाषा । २ख॰ आचमनादि परिभाषा । ३ख॰ अक्रियादित्रैविध्यादिकथनपूर्वकं श्राद्धविधिनिरूपणम् । ४ख॰ पिण्डदानविधानम् । ५ख॰ नान्दीमुखश्राद्धादिकर्त्तव्यताविधानानि । ६ख॰ अग्न्याधानादिकालाधिकारिधर्मविधानम् । ७ख॰ अरणीनिर्माणप्रकारादि । ८ख॰ अग्न्युद्धारप्रकारादि । ९ख॰ अग्निहोत्रकालादितद्विधानादि । १०ख॰ दन्तधावनस्नानादिविधानम् उपाकर्म्मोत्सर्गादिस्नानादिविधानञ्च ।

२प्रपाठके नव खण्डाः । तत्र १ख॰ सन्ध्योपासनकालादितद्विधानानि । २ख॰ तर्पणप्रकारादि । ३ख॰ पञ्चयज्ञविधानप्रकारादि । ४ख॰ वैश्वदेवविधानप्रकारः । ५ख॰ दक्षिणादानादिप्रकारः । ६ख॰ अमावास्यादिश्राद्धकालव्यवस्था तद्विधानप्रकारश्च । ७ख॰ कर्षूनिर्माणप्रकारः श्राद्धविधानप्रकारश्च । ८ख॰ दर्शपौर्णमासविधानप्रकारः । ९ख॰ प्रवासगमनकाले साग्निकस्य कर्त्तव्यविशेषकथनम् ।

तृतीयप्रपाठके ।।खण्डाः । तत्र १ख॰ साग्निकस्य पत्नीमरणे कर्त्तव्यविशेषविधानम् । २ख॰ साग्नेर्दाहप्रकारः । ३ख॰ शवस्पर्शिकर्त्तव्यभेदविधानम् साग्निकस्य विदेशमरणे दाहविधानञ्च । ४ख॰ सूतके सन्ध्यादित्यागेऽपि श्रौतकर्म्मणामनुष्ठानविधानम् । ५ख॰ पुंसवनादिक्रियाङ्गहोमाङ्गतिलकाविशेषकथनं गुरुपतिव्रताब्रह्मबन्धुशब्दाट्टपञ्चकपुष्पिकाकुम्भकरूपरादिशब्दपरिभाषा ब्रह्मचारिकर्त्तव्यविधानञ्च । ६ख॰ समयनीयचरुकर्त्तव्यताविषयोपदर्शनम् नवयज्ञकालकथनञ्च । ७ख॰ विहितकर्मातिक्रमे प्रायश्चित्तविशेषविधानम्, अन्वष्टकहृदयंवरशब्दपरिभाषा । ८ख॰ वर्णभेदेन दण्डप्रमाणकथनम्, शाद्धदर्भनिरूपणञ्च । दक्षिणायां गोः प्रवर-

तोक्तिः उपाकर्म्मप्रकारश्च । ८ ख० यज्ञपात्रादिशब्दानां पारिभाषिकार्थकथनम् । वेदोत्सर्गकथनं तत्र बलिप्रकारः स्नातकादिना तदकरणे आपद्दायप्रिकक्तत्र्व्यताविधानम् तत्र बलिदानवर्ज्जनञ्च । तं यज्ञकमण्डलगोलकचीवरशब्द-परिभाषा । अनुमन्त्रणप्रकारः । १० ख० । पशुसं-स्कारस्थानविशेषकथनम् । पशुदाने एकादशस्थान-कथनम् । पश्वभावे पायसपिण्डैः होमविधानम् श्राद्धे पिण्डदानप्राधान्यं गयादौ पिण्डमात्रदानदर्शनादिति परमतमुक्त्वा अन्नदानस्य प्राधान्यमिति स्वमतकथनम् । आमश्राद्धविधाने पिण्डाभाव इत्युक्तिः । दीपार्घ्यमधु-पर्कादिशब्दपरिभाषा” ।

अनेनैव धर्म्मसंहिता कृता । “मन्वत्रिविष्णुहारीत-याज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्बसंवर्त्ताः कात्यायन-बृहस्पती” इत्युपक्रमे “धर्मशास्त्रप्रयोजकाः” याज्ञ० । तत्र च प्रादेशाद्यादशविशादनिर्णयः । कातीयश्रौत-स्मार्त्तसूत्रसर्वानुक्रमणिकादिकमनेनैव कृतम् । वररुचि-नामकात्यायनस्य पुष्पदन्तावतारत्वात्कथा च बृहत्-कथायाम् । सुप्रतीकयक्षावतारकाणभूतये स्वजन्मादि आत्मस्वरूपशापान्तमुपवर्ण्य स्वजन्मकथादि तत्रोक्तं यथा । “ततः स मर्त्त्यवपुषा पुष्पदन्तः परिभ्रमन् । नाम्ना वररुचिः किन्तु कात्यायन इति श्रुतः । पारं संप्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम् । खिन्नः समाययौ द्रष्टुं कदाचित् विन्ध्यवासिनीम्” इत्युपक्रम्य तस्य काणभूतिना सह मेलने जाते काणभूतिना निजशापा-दिवृत्तान्ते उक्ते । “इत्थं मे शापदोषोऽयं पुष्पदन्तागमा-वधिः । इत्युक्त्वा विरते तस्मिन् काणभूतौ च तत्-क्षणम् । स्मृत्वा वररुचिर्जातिं सुप्रोत्थित इवावदत् । स एव पुष्पदन्तोऽहं मत्तस्तान्तु कथां शृणु । इत्युक्त्वा पञ्च-लक्षेण सप्त सप्त महाकथाः । कात्यायनेन कथिताः काणभूतिस्ततोऽब्रवीत्” इत्युपक्रम्य ‘तद्ब्रूहि निजवृत्तान्तं जन्मनः प्रभृति प्रभो !’ इति काणभूतिप्रश्ने “ततो वररुचिस्तस्य प्रणतस्यानुरोधतः । सर्वमाजन्मवृत्तान्तं विस्तरादब्रवीदिदम् । कौशाम्ब्यां सोमदत्ताख्यो नाम्ना ग्निशिख इत्यपि । द्विजोऽभूत् तस्य भार्य्या च वसुदत्ताभि-धाऽभवत् । तस्यां तस्मात् द्विजवरात् एष जातोऽस्मि-शापतः” इति स्वजन्मभूम्यादिकमुक्तम् । पश्चाच्च व्याडि-समीपे तन्मात्रा तस्य जन्मवृत्तान्तो यथा वर्णितस्तदप्यु-क्तं तत्रैव “तया हि पूर्वं जातेऽस्मिन्नेकपुत्रे मम स्फुटा । गगनाद्देववृत्तदभूदशरीरा सरस्वती । एकश्रुतिधरो जातो विद्यां वर्षादवाप्स्यति । किञ्च व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति । नाम्ना वररुचिश्चायं तत्तदस्मै हि रोचते । यद्यद्वरं भवेत् किञ्चिदित्युक्त्वा वागुपारमत्” इत्थं तज्जन्मकथान्ते व्याडीन्द्रदत्ताभ्यां तन्मातुः सकाशादभ्यर्थ्य तं गृहीत्वा तेन सह वर्षसमीपं गतमित्युक्तं तत्रैव यथा “व्याडीन्द्रदत्तौ तरसा निर्गतौ नगरात्ततः । अथ क्रमेण वर्षस्य गृहं प्राप्ता वयं गुरोः” इत्युपक्रमे “अध्यापयितुमस्मांश्च प्रवृत्तोऽभूदसौ ततः । सकृच्छ्रुतं मया तत्र, द्विःश्रुतं व्याडिना तथा । त्रिःश्रुतञ्चेन्द्र-दत्तेन गुरुणोक्तमगृह्यत” इति तस्य वर्षसमीपेऽध्ययनं वर्णितम् । ‘अथ कालेन वर्षस्य शिष्यवर्गो महा-नभूत् । तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् । स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्य्यया । अगच्छत् तपसे खिन्नो विद्याकामो हिमालयम् । तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् । सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् । ततश्चागत्य मां वादे प्रयाताः सप्त वासराः । अष्ट-मेऽह्नि मया तस्मिन् जिते तत्समनन्तरम् । नभःस्थेन महाघोरो हुङ्कारः शम्भुना कृतः । तेन प्रनष्टमैन्द्रं तदस्मद्व्याकरणं भुवि । जिताः पाणिनिना सर्वे मूर्खी-भूता वयं पुनः” । “अन्तान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः । आराधितो मया देवो वरदः पार्व्वतीपतिः । तदेव तेन शास्त्रं मे पाणिनीयं प्रकाशितम् । तदिच्छानु-ग्रहादेव मया पूर्णीकृतं च तत्” ।

अनेनैव पाणिनिव्याकरणतात्पर्य्यप्रकाशकः परिशिष्टरूपो वार्त्तिकपाठोऽभिरचितः स च “सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शब्देन धर्म्मनियमः” इत्या-दिकः अष्टाध्याय्यात्मकः । बृहत्कथायाम् “तदैवानीय दत्ता मे योगनन्देन मन्त्रिता” इत्यनेन वररुचेस्तन्मन्त्रि-ताकरणं वर्णितम् । तेन पाणिनेर्वररुचिनामकात्यायनस्य च योगनन्दसमकालता प्रतीयते । बृहत्कथाया इदा-नीमप्राप्यत्वेऽपि तत्कथासारसाधनोपलम्भात् तत्र च यथावर्णितकालताऽवगम्यते बृहत्कथासारस्य चाप्रामाण्यं नाशङ्कनीयं तत्कथासारे “यथामूलं तथैवैतन्न मनाग-प्यतिक्रमः । ग्रन्थविस्तरसंक्षेपमात्रभाषा च भिद्यते” इत्युक्त्या बृहत्कथामूलकतायास्तत्कथासारस्योक्तेः । स च कतगोत्रापत्यत्वात् कात्यायनः । अतएव हरिवं० “ततः कात्यायनाः स्मृताः” इति बहुत्वनिर्देशात् अन्य-

स्यापि तद्गोत्रभवयुवापत्यस्य कात्यायनत्वमिति भूतस्य भविष्यतो वा स्यादिति सूचितम्” इति । ततः प्राचीनेन कात्यायनेन शुक्लयजुर्वेदविहितकर्म्मणामनुष्ठानज्ञापकं षड्विंशत्यध्यायात्मकं कातीयं श्रौतसूत्रं गृह्याख्यं सूत्रञ्च प्रणीतम् । तत्र श्रौतसूत्रे १अध्याये १कण्डिकायां २१सूत्राणि । तत्र अन्वाध्यानादिषु अधीतसाङ्गवेदानां द्विजानां सपत्नीकानाम् रथकारस्य चाधिकारः । अङ्गहीनक्लीबपतितशूद्राणामनधिकारः । निषादस्थपतेर्गावेधुके चरावधिकारः । अवकीर्णिनश्च प्रायश्चित्तरूपगर्द्दभेज्यायाम् । तत्र गावेधुकचरवकीर्णिगर्द्दभेज्या च लौकिकेऽग्नौ कार्य्या । गर्द्दभेज्यायां पुरोडाशश्रपणं भूमावेव न कपाले कार्य्यम् । तत्र अवदानहोम उदके एव नाग्नौ, अन्यदाधारादि अग्नावेव । प्राशित्रं गर्द्दभस्य शिश्नादवदेयम् । श्रौतं कर्म्म वैतानिकेषु विहारार्थेषु गार्हपत्याहवनीयदक्षिणाग्निषु कर्त्तव्यम् । स्मार्त्तन्तु आवसथ्येऽग्नौ कर्त्तव्यम् । स्वहारम्भे मांसपाकनिषेधः ।

२क० २२सू० । तत्र देवतोद्देशेन द्रव्यत्यागो याग इति यागलक्षणम् दर्शपौर्णमासादियज्ञशब्दार्थस्यागविशेषः । तस्य च प्राधान्यं, तत्प्रकरणपठिताग्न्यन्वाधानादिब्राह्मणदक्षिणान्तस्य कर्म्मजातस्याङ्गत्वम् । एवं प्रयाजादयः पूर्व्वाघारादिहोमाश्च तदङ्गानि । स्थिता होमः वषट्कारप्रदानः यजतिशब्दार्थः तत्र याज्यापुरोऽनुवाक्ये च । उपविष्टेन स्वाहाकारप्रदानो होमः जुहोतिशब्दार्थः । सर्व्वकर्म्मसु ब्राह्मणा एव ऋत्विजः, न क्षत्रियवैश्याः तेषां हविःशेषभक्षणनिषेधात् । फलेच्छाभावे काम्यकर्म्माणि कर्त्तव्यानि नावश्यम् । नित्यानि तु अग्निहोत्रादीन्यवश्यं कर्त्तव्यानि अकरणे दोषश्रवणात् । दीक्षितेन सत्यवचनाधःशयनब्रह्मचर्य्यादिनियमाः अवश्यं कार्य्याः । गृहदाहादिनिमित्तं धनहानिनिमित्तं च प्रायश्चित्तमवश्यं कार्य्यं न तस्य इच्छयानुष्ठानम् । नित्यानि यथाशक्त्यङ्गयुक्तान्यपि कार्य्याणि । काम्यानि तु सर्व्वाङ्गोपेतान्येव । कामनासत्त्वेऽपि यदा यथाश्रुताङ्गानि कर्त्तुं शक्नुयात् तदैव काम्यं कार्य्यं नान्यदा ।

३क०४२सू० । तत्र ऋग्यजुःसामधर्म्मभेदेन मन्त्रास्त्रिविधाः । ऋगादिलक्षणम् (ऋग्वेदशब्दे उक्तम्) । यजुषां यावति पदसमूहे उच्चरिते पदसमूहो निराकाङ्क्षो भवति । तावत्परिमितमेकं वाक्यं कर्म्मकाले प्रयोक्तव्यम् । यत्र तु मध्ये पठितैः पदैर्यजुर्निराकाङ्क्षं न भवति तत्र पदान्तरं योग्यमध्याहृत्य पूर्व्वपठितं वाक्यमेव निराकाङ्क्षीकृत्य प्रयोक्तव्यम् । प्रयोगे मन्त्राः कर्म्मारम्भे प्रयोक्तव्याः । यजुर्व्वेदमन्त्राश्च उपांशु प्रयोक्तव्याः ऋग्वेदसामवेदयोस्तु मन्त्रा उच्चैःप्रयोक्तव्याः । याजुषा अपि प्रैषा उच्चैःप्रयोक्तव्याः । कुशजातिमात्रं बर्हिःशब्दार्थः । अन्वाधारादौ बर्हिर्धाराहोमादौ च विशेषसंख्यानुक्तौ यावता कार्य्यसिद्धिस्तावत्संख्या ग्राह्या । इध्माबर्हिर्बन्धनार्थानि संनहनानि त्रिवृत्संख्यत्वगादिकृतानीति । संनहने भेदस्तु प्रागग्रे संनहने उदग्रं बर्हिर्निधाय संनहनेन दृढं बद्ध्वा बर्हिर्मूलभागे ग्रन्थिमुपगूहेत्, उदगग्रे संनहने तु प्रागग्रमिध्मभागं निधायेध्ममूले ग्रन्थिमुपगूहेत् इति । अष्टादशसंख्यारत्निमात्रकाष्ठकः तथाभूतैकविंशतिकाष्ठको वा पालाशस्तदभावे वैकङ्कतः इध्मः कार्य्यः । तदभावे श्रीपर्ण्युद्भवः वैल्वः औदुम्बरःखादिरो वा तत्तदभावे इध्मस्तथाभूतः कार्य्यः । इध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानं कुर्य्यात् । सामिधेनीवृद्धौ चेध्मकाष्ठवृद्धिः पित्र्यादौ सामिधेनीह्रासेऽपि नेध्मसंख्याह्रासः । अग्निप्रणयनार्थं इध्म उक्तसंख्याधिककाष्ठकोऽपि भवति । इष्टकापशौ अष्टाविंशतिप्रभृतिभिस्तथाभूतकाष्ठैः इध्मः कार्य्यः । एव त्रिभिः संहननैर्मूलभागे बद्धः कल्प्यः । दर्शपौर्णमास एव वेदकरणम् । सूत्रे आङ्शब्दार्थोऽभिविधिरिति प्रतिज्ञा । सर्व्वकर्म्मस्वनुक्तमपि गार्हपत्यात् आहवनीयदक्षिणाग्न्योरुद्धरणं कार्य्यम् । अन्यकर्म्मार्थमुद्धृतयोस्तयोरागन्तुकान्यकार्य्योपाते तत्करणं नोद्धरणान्तरम् । यथा दर्शार्थमुद्धृतयोस्तयोः प्राप्तकालाग्निहोत्रहोमः । तत्कर्म्मार्थमुद्धृतौ तौ तत्समाप्तौ लौकिकावेव भवतः । तत्र उद्धृतत्वात् आहवनीयादिविहितं कर्म्म न कार्य्यं तयोः लौकिकत्वोपदेशात् । तेन यत्र पौर्णमासादौ पृथक्तन्त्रा बह्व्यः इष्टयः सन्ति तत्र प्रत्येष्टि पृथगग्न्युद्धरणेन ताः कार्य्याः । तथा च न सकृदुद्धृतयोः सर्व्वत्रोपयोगः । खादिरस्रुवादीनां क्वचिदनुक्तौ प्रकृतिवत् विकृतावपि कार्य्यता । स्रुवस्फ्यस्रुग्जुहूप्रभृतिहोमसाधनपदार्थानां लक्षणम् । तानि च तद्भाष्ये विवृतानि यथा (खादिरः स्रुवोऽङ्गुष्ठपर्व्ववृत्तपुष्करो नासिकावत्पर्य्यावृतो भवति । स्फ्यश्च खादिरः खड्गाकृतिररत्निमात्रः स्रुचो बाहुमात्र्यो मूलदण्डाग्रविवर्जिता हंससुखसदृशैकप्रणालिकायुक्ताः पा-

त्रिमात्रपुष्करास्त्वावत्खातयुक्ताश्च कार्य्याः। पालाशी जुहूः। उपभृदाश्वत्थी, वैकङ्कती ध्रुवा, एतेषां वृक्षाणामेकस्य वा सर्व्वाः स्रुचः कारयेत्। अग्निहोत्रहवणी वैकङ्कती, अग्निहोत्रस्रुवो वैकङ्कतः। यैः पात्रैर्होमो न क्रियते तानि सर्व्वाणि वारणानि भवन्ति तानि चोलूखलमुषलकूर्च्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याकृष्णाजिनावदानाभ्युपवेषान्तर्द्धानकटप्राशित्रहरणषडवत्तमन्थासनादीनि। तत्रोलूखलमुषलौ लोकप्रसिद्धौ। कूर्च्चो बाहुमात्रः पीठाकारः। इडापात्री पिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते। पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलवृत्तखातवती। शम्या प्रादेशद्वादशाङ्गुला। प्राशित्रहरणं हस्तमादर्शाकारं चतुरस्रं चमसाकारं वा तथैव द्वितीयमपिधानपात्रम्। षडवत्तं चोभयत्र खातवत्। आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि। सर्व्वेषु पात्रेषु मूलाभिज्ञानार्थं मूलानि कार्य्याणि। अनादृते सोमसाधनपात्राणि वैकङ्कतानि कार्य्याणि। षोडशिनः पात्रं खादिरं चतुरस्रम्। अंशदाभ्यपात्रमौदुम्बरम्। वाजपेये सप्तदशपशुपात्राणि वरवृक्षमयानि। सुरापशुपात्राण्यपि। मृण्मयानि वा"। इति प्रणीतोत्करावन्तरेण सर्व्वेषां गमनागमनार्थो मार्गः, सोत्तरवेदिकेषु कर्मसु चात्वालोत्करयोरन्तरालेन मार्गः।

४क० १८सू०। तत्र विहितद्रव्याभावे काम्यं कर्म नारब्धव्यम्। नित्यन्तु मुख्यद्रव्याभावे प्रतिनिधिनाप्यारब्धव्यम्। काम्येऽङ्गसद्भावं ज्ञात्वाऽऽरम्भोत्तरम् मुख्यद्रव्यापचारे प्रतिनिधिद्रव्येण समापनम्। न तु असमाप्तस्य त्यागः। नित्ये तु आरब्धे ऽनारब्धे वा प्रतिनिध्युपादानमिति भेदः। काम्यस्यावश्यकार्य्यत्वाभावात् प्रतिनिधिना नारम्भः। आरब्धे चावश्यसमापनीयत्वात् समाप्त्यर्थं प्रतिनिधिर्भवति। दीक्षितस्य पयआदिके व्रतेऽपि प्रतिनिधिरस्ति। प्रतिनिधिना करणपक्षे मुख्यद्रव्यवाचकपदघटितमन्त्रे ऊहो न कार्य्यः। यत्र जात्यन्तरं विहितं तत्र ऊहः। विकल्पस्थले अन्यतरद्रव्यारब्धे कर्मणि दैवात्तस्य दोषे विनाशे वा तत्प्रतिनिधिद्रव्यान्तरेणैव समाप्यं न तु वैकल्पिकद्रव्येण यथा व्रीह्यारब्धे कर्मणि व्रीहिनाशदोषयोः व्रीहिसदृशनीवारादिना समापनं न तु यवेन, एवमन्यत्र। व्रीह्यभावे नीवारैः प्रयोगे आरब्धे नीवारेषु विनष्टेषु कथञ्चिद्व्रीहिप्राप्तौ व्रीहिभिरेव, अप्राप्तौ व्रीहिसदृशैरेव कर्मसमापनम् न नीवारसदृशैः नापि वैकल्पिकैर्यवैः। मुख्यद्रव्येण सर्व्वप्रयोजनासिद्धौ तत्समर्थप्रतिनिधिनैव कर्म कार्य्यम्। यत्र कृष्णाः व्रीहयो विहितास्तत्र कृष्णव्रीह्यलाभे शुक्लव्रीहिभिः कर्म कार्य्यं न तु कृष्णनीवारैः गुणस्य द्रव्यापेक्षया दुर्ब्बलत्वात्। पुंवत्सत्वलक्षणं गुणं हित्वा स्त्रीवत्सायाश्चपि गोः पयसा होमो न तु पुंवत्सायाः मेष्याः पयसा। एवमार्द्रत्वगुणालाभे शुष्कपलाशैरपि कर्म कार्य्यं न तु आर्द्रसमिदन्तरेण एवं सर्व्वत्र। एवं प्राशित्रादिसर्व्वकर्मसु पर्य्याप्तव्रीह्यलाभेऽपि अवदानद्वयपर्य्याप्तपुरोडाशनिष्पत्तिसमर्था व्रीहय एव ग्राह्या न तु प्राशित्रादिसर्व्वकार्य्यपर्य्याप्ता नीवारा इति ५क० १७सू०। तत्र श्रुतिपाठमन्त्रपाठार्थसिद्धिक्रमेण पदार्थानुष्ठानम्। यत्र च पाठक्रमार्थसिद्धिक्रमयोर्विरोधः तत्र पाठक्रममनादृत्यार्थसिद्धिक्रमो ग्राह्यः। यथा "स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्ति" इत्यत्र पाठक्रममनादृत्य पूर्व्वं छेदनं ततोऽपाकरणम्। यत्र तु श्रुतिपाठक्रमयोर्विरोधः "संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति" श्रुतिः संस्थिते यज्ञे ब्रह्मतर्पणं विदधाति पाठक्रमस्तु प्राशित्रावदानात् पूर्व्वम्। तत्र श्रुतिक्रमेण संस्थितएव कार्य्यम् न पाठक्रमेण। यत्र च श्रुतिपाठमन्त्रपाठयोर्विरोधः तत्र श्रुतिपाठक्रममनादृत्य मन्त्रपाठक्रमेण कार्य्यम्। यथा सोऽसावाज्यमधिश्रयतीत्यधिश्रयणं विधाय, तदनन्तरमेवोद्वासनं विहितम् मन्त्रक्रमस्तु पत्नीसंहननान्ते इति विरोधः तत्र मन्त्रपाठक्रमेणैवाज्योद्वासनम्। यत्र बहूनां प्रधानानां सह प्रयोगस्तदा सन्निपत्योपकारकाः पदार्थाः सर्व्वेषां प्रधानानां पृथक् पृथक् सदृशपदार्थानुसमये कार्य्याः यथा सप्तदशसु प्राजापत्येषु पशुषु सर्व्वेषां प्रथममुपाकरणं ततः सर्व्वेषां नियोजनम् ततः सर्व्वेषां प्रोक्षणमित्यादि। आरादुपकारकास्तु तन्त्रेण कार्य्या न तेषु क्रमचिन्ता। यथा दर्शादौ प्रयाजादय आरादुपकारकास्तन्त्रेण कार्य्याः। चतुर्द्दशैकनिर्वापः एकादशादिकपालोपधानञ्च एकैकस्य कार्य्यम्। सोमे चैकैकस्य ग्रहस्यासादनान्तं ग्रहणं कार्य्यम्। सर्व्वत्र हविषोऽवदानं प्रदानान्तं कार्य्यम्। देवताऽभेदे हविर्मात्रभेदे देवतागुणे वा उपांश्वादिकेऽभिन्ने प्रदानान्तमवदानं न भवति किन्तु क्रमेण सर्व्वाणि हवींष्यवदाय प्रदा-

न्तेभ्यः प्रदानं कार्य्यम् । सप्तदशसु प्राजापत्यपशुषु उपाकरणरूपे प्रथमपदार्थे कृते द्वितीयपदार्थादौ उपाकरणक्रम एवादर्त्तव्यः न क्रमान्तरम् । अयं प्रावृत्तिकः क्रमः । प्रधानानामाग्नेयादीनां पाठक्रमेण तदङ्गानां निर्व्वापादिक्रमः । यथा प्रथमपठितस्याग्नेयस्य प्रथमं निर्व्वापादि । पश्चात् पठितस्याग्नीषोमीयस्य पश्चात् इत्ययं क्रमो मुख्यः । अनेकाहसाध्यदर्शादौ क्रियमाणे मध्ये नित्यस्याग्निहोत्रादेः काले प्राप्ते काम्यमध्येऽपि तत् कार्य्यमेव न तु दर्शाद्यनुरोधेन नित्याग्निहोत्रादिकालातिक्रमः कार्य्यः । सौत्रामण्यादिविकृतिमध्य एवामावास्यायां दक्षिणाग्नौ पिण्डपितृयज्ञः कार्य्यः । षोड़शातिरात्रादौ च षोडशिनोऽनियतकालत्वेऽपि दैवादुक्थ्योत्कर्षे तदनन्तरमेव षोडशियागः कार्य्यः न तु कालानुरोधात् ततः पूर्व्वम् । अग्निष्टोमादिसत्रपर्य्यन्तानां प्रधानानामनुष्ठाने क्रमाभावः । यदा यत्र यस्येच्छा तदा तदनुष्ठेयम् । अध्ययनार्थ एवैषां पाठक्रमः नानुष्ठानार्थः ।

६क० २६सूत्राणि । तत्र अयस्तहविर्नाशेऽन्यहविः कार्य्यं न स्विष्टकृदादिप्रतिपत्तिरहितः यागः कार्य्यः । तथा पुनः शेषादवदेयम् । अग्न्यादिदेवतानां, मन्त्राणां, प्रयाजानुयाजादिक्रियाणाञ्च न प्रतिनिधिरस्ति । हवनीयानां तु क्रियाणामवघातादीनां प्रतिनिधिरस्ति । प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि न प्रतिनिधेयम् । यथा मौद्गे चरौ माषादि । त्यागादौ वपनादौ संस्कारकर्म्मणि च यजमानस्य प्रतिनिधिर्नास्ति । गुणकर्म्मसु पात्रासादनाज्यावेक्षणाग्न्याधानव्यूहनवेदस्तरणादिषु यजमानस्यापि प्रतिनिधिरस्ति । पत्न्यभावेऽप्याज्यावेक्षणान्वारम्भोपाञ्जनादौ गुणकर्म्मणि प्रतिनिधिरस्ति । सत्रेषु यजमानस्य प्रतिनिधिरस्ति । यजमानकर्म्मणा सम्बन्धात् यजमानधर्म्मा अपि दीक्षणादयः प्रतिनिहितस्य भवन्ति सत्रेषु यजमानानामृत्विक्पदार्थकर्तृत्वविधानात् । ब्राह्मणस्यैव सत्रेषु अधिकारो न क्षात्रवैश्यानाम् । ब्राह्मणानामप्येककल्पानां न भिन्नकल्पानाम् । वंश्यनानियमयोर्द्व्युपहितत्वेऽपि सत्रेषु नाधिकारः । सहस्रसंवत्सरसत्रं मनुष्याणामपि भवति तत्र संवत्सरशब्दस्य अहःसु लक्षणा यतस्तत्र सहस्रसंवत्सरे सहस्रं सौत्यान्यहानि तानि च दिनसहस्रे सम्भवन्तीति ।

७क० २८सूत्राणि । यत्र एकफलार्थं बहूनि प्रधानानि एकवाक्येन विधीयन्ते । तत्र तेषां सह प्रयोगः । देशकालफलकर्त्रादिसाम्ये सति प्रधानानामारादुपकारीणि आघारप्रयाजाज्यभागादीनि सकृदेव कार्य्याणि । न प्रतिप्रधानं पृथक् पृथक् कार्य्याणि । देशभेदे कालभेदे च तन्त्रभेद एव भवति न सहक्रिया । यथा दर्शपौर्णमासयोः कालभेदे । वरुणप्रघासेषु च मारुत्या देशभेदे । अहर्गणे सुब्रह्मण्यानिगदे द्वादशाहे सुत्यामुपगच्छेदित्यत्र कालसंयुक्तं कर्म्म तन्त्रेणैव सकृत् प्रयोक्तव्यम् । एकद्रव्ये कर्म्मावृत्तौ सर्व्वां मन्त्रवचनं सकृदेव कार्य्यम् न प्रतिक्रियम् । यथा स्फ्येन पदं त्रिः परिलिखेदस्मे रक्षसोत्यत्र एकवारं मन्त्रेण, द्विस्तूष्णीमिति । हविर्ग्रहणे बर्हिर्लवने तस्य सरणे आज्यग्रहणे च प्रतिक्रियं मन्त्रावृत्तिः न सकृत् । आज्यग्रहणे तु वचनात् त्रिधा मन्त्रेण ग्रहणम् शेषं तूष्णीं हविर्ग्रहणे चतुर्थं तूष्णीम् । वचनादुत्तमे मुष्टौ मन्त्रनिवृत्तिः । दीक्षितस्यानेकदुःस्वप्नदर्शने सकृदेव मन्त्रपाठः । एकनद्या अनेकप्रवाहतरणेऽनुमन्त्रणं सकृदेव । अवर्षणे अनेकवृष्टिधारासंयोगेऽपि अनुमन्त्रणं सकृदेव । युगपदनेकामेध्यदर्शने सूर्य्योपस्थापनं सकृदेव । यानीवाहने (विश्रम्य विश्रम्य पुनः पुनः प्रयाणे) अमेध्यदर्शने मन्त्रपाठः सकृदेव । एकरात्रिमध्ये पुनःपुनःस्वापादौ अमेध्यदर्शनादिषु च कालभेदे भेदेनैवानुमन्त्रणं न सकृत् । अप्रधानकालीनमङ्गं सकृदेव, न प्रतिप्रधानमावर्त्तते । यथाऽग्नीषोमीयसवनीयानूबन्ध्यापशूनां साधारण एव स्वरुरपि यूपवत् सर्व्वपशुसाधारण एव । आधानादिकर्म्मसु पुरुषा एव कर्त्तारो न स्वयं केवलं यजमानः । तत्रायं भेदः देवतोद्देशेन द्रव्यत्यागात्मककर्म्माणि यजमानः स्वयं कुर्य्यात् । पुरुषयोगिमन्त्रान् यजमानः स्वयं जपेत् वपनाभ्यञ्जनादयो यजमानस्यैव संस्काराः । सति विशेषवचने ऋत्विजामपि ते संस्काराः यथा "हिरण्यमालिनोवाजपेयेन चरन्ति" । सति वचने उक्तादन्यदपि यजमानस्य भवति । यथा यजमानोवसोर्धारां जुहोति । यजमानः पात्राण्यासादयतीत्यादि । शेषं कर्म्म यथासमाख्यमृत्विगादयः कुर्युः । यथा अध्वर्युराध्वर्य्यवं, होता हौत्रम्, उद्गाता औद्गात्रमित्यादि । सर्व्वाणि कर्म्माणि यज्ञोपवीतिनः कुर्य्युः तानि च प्राक्संस्थानि उदक्संस्थानि वा कुर्य्युः । परिस्तरणपर्य्युक्षणादौ प्रदक्षिणं कार्य्यम् । पित्र्येऽपसव्यम् । दैवे यथावृत्तिः पैत्रे तत्र सकृत् । दक्षिणा च दिक् पित्र्ये । यद्दैवे प्राक्संस्थादि पैत्रे तद्दक्षिणसंस्थं कार्य्यम् । प्रधान-

द्रव्यविनाशे यत्किञ्चित्पत्न्योपकारकाङ्गरहितस्यैव तस्याहुतिः नाराद्युपकाररहितस्य ।

८कं० ४७सू० । विकल्पस्थले एकेनैव कार्य्यकरणम् । अदृष्टार्थेषु बहुषु विहितेषु समुच्चयः यथा होत्रमन्त्राणामग्निमन्थनीयादीनाम् अग्निस्थापनमन्त्राणाञ्च । होतृमन्त्रत्वेऽपि याज्यानुवाक्ययोर्न समुच्चयः । तथा च याज्या पुरोऽनुवाक्या च एकस्मिन् यागे एकैकैव । एकनिमित्तकप्रायश्चित्तानां समुच्चयः । यज्ञकाले मन्त्राणामेकश्रुत्या प्रयोगः, न संहितास्वरेण, नापि ब्राह्मणस्वरेण । सुब्रह्मण्यासामजपन्यूङ्खयाजमानानां मन्त्राणां संहितावदेव स्वरेण प्रयोगेन त्वेकश्रुतिस्वरेण । आधाने विहितदक्षिणाभेदस्य विकल्पः, न समुच्चयः । अनेकसाधनके कर्म्मणि जपध्यादीनां समुच्चयः । सर्व्वपशूनां तानि कार्य्याणि । सोमक्रये विहितगवादिद्रव्यदशकस्य दृष्टार्थत्वात् न समुच्चयः । सर्व्वत्र गार्हपत्याहवनीययोः प्रदक्षिणीकृत्यापसव्याहुतिः अपसव्यीकृत्य च प्रदक्षिणाहुतिः कार्य्या । विहारोत्तरतः सर्व्वकर्म्म कार्य्यम् । विहारस्य दक्षिणतः ब्रह्मयजमानयोरासने कार्य्ये । तयोर्मध्ये यजमानस्य वेदिं स्पृष्ट्वा (वेदिमध्ये पादाग्रं निधाय) उपवेशनम् । पश्चात् ब्रह्मोपवेशनम् । अनादेशेऽध्वर्युः यजुर्विहितं कर्म्म कुर्य्यात् आदेशे तु अन्योऽपि । विरोधे तु अन्योऽपि कर्त्ता यथा पेषणेऽध्वर्य्योर्व्यापृतत्वेन विरोधात् कपालोपधानमन्योऽपि कुर्य्यात् । हविष्पात्रस्थाल्यादिनामेकत्र समावेशे यद्यत् पूर्व्वं तत्तदन्तरं, यद्युत्तरं तद्बहिर्भवति । हविषामपि मध्ये पूर्व्वं पूर्व्वं हविरन्तरं कार्य्यं उत्तरमुत्तरं बहिः । प्रतापनाद्याज्यसाध्यसंस्कारा गार्हपत्याग्नौ कार्य्याः । सर्व्वकर्म्मसु हविःश्रपणं गार्हपत्ये आहवनीये वा कार्य्यम् । संस्काररहितं घृतमात्रमाज्यशब्दार्थोपाद्यः । एतं च गव्यमेव ग्राह्यम् । द्रव्यविशेषानुक्तौ सर्व्वत्र घृतेन होमः कार्य्यः विशेषवचने तेनैव । चात्वालात् बहिस्थं पुरीषं निवपेत् । आहवनीये यजतयः, आज्यभागोपांशुयाजादयः आज्यहविष्का प्रयाजाः आज्यं स्रुचिहोत्वा चतुरवदाय कार्य्याः । दार्भिकाघारानग्नेः प्रयातः कुर्व्वन्ति । आघारौ प्राञ्चौ विदिशौ वा होतव्यौ उभयपक्षेऽपि ऋजू दीर्घौ सन्ततौ च तौ कार्य्यौ । अनादेशेऽत्र होमा आहवनीये एव कार्य्याः । आदेशे तु यथादेश मन्त्रमाध्वौ । आदेशाभावे सर्व्वत्र सकृद्गृहीतमेव होतव्यम् आदेशविशेषेऽन्यथा ।

८कं० २१सू० । सर्व्वत्र व्रीहयो यवा वा हवींषि भवन्ति । व्रीह्याग्रयणानन्तरं यवाग्रयणात्प्राक् व्रीहिभिरेव दर्शपौर्णमासौ कार्य्यौ यवाग्रयणानन्तरं च प्राग्व्रीह्याग्रयणात् यवैरेव तौ कार्य्यौ । आपस्तम्बमते सर्व्वदा व्रीहिभिरेवेति भेदः । दर्शपौर्णमासयोरेवायं द्रव्यनियमः न विकृतौ । द्विरवदानविधाने पुरोडाशचर्व्वादेर्मध्यदेशादेक अङ्गुष्ठपर्व्वमात्रं तिरश्चीनम् आद्यमवदानम् । द्वितीयं तु हविःपूर्व्वभागात् तथावदानम् । तच्चावदानयोर्मर्य्यादाभङ्गाभावेनैव कार्य्यम् । पञ्चार्षेयाणां जमदग्नीनां जमदग्निप्रवराणाञ्च हविस्त्रिरवदानम् । तत्राद्यं मध्यात्, द्वितीयं पूर्व्वभागात्, तृतीयम् पश्चाद्भागात् । यत्र आज्यभागपत्नीसंयाजोपांशुयाजाग्निहोत्रहोमादौ चतुरवदानं विहितं तत्र जमदग्नीनां पञ्चयोऽवदानम् । दधिपयसोरपि स्रुवेणावदानपञ्चकम् । तदप्यङ्गुष्ठपर्व्वमात्रमेव कार्य्यम् ।

पुरोडाशादिहविषोऽवदानात् प्रथममाज्यं सकृदवदाय ततोऽन्यद्धविरवदेयम् । पुनरप्यन्ते आज्यं सकृदवदेयम् । स्विष्टकृद्धोमे तु प्रधानावदानादेकोनं हविषोऽवदानम् । तथा च येषां प्रधानयागेऽवदानद्वयं विहितं तेषां स्विष्टकृद्धोमे सकृदवदानं, येषां प्रधानेऽवदानत्रयं तेषां हविष उत्तरार्द्धादेव स्विष्टकृति अवदानद्वयम् । एवं चतुःपञ्चयोरवदाने त्रिः चतुर्वाऽवदानम् । उपस्तारः सकृत् । उपर्य्यभिघारणं तु द्विवारं भवति । हविषोऽवदेयावदानयोः प्रत्यभिघारणम् । स्विष्टकृदवदानानन्तरम् हविषो न प्रत्यभिघारणम् । एककपालः पुरोडाशः सर्व्वहुतः कार्य्यः । चतुर्थ्यन्तेन देवतापदेनानुवचनप्रैषा कार्य्या यथा अग्नयेऽनुब्रूहीत्येवंरूपा । आश्रावणानन्तरं यत्र मैत्रावरुणः प्रैष्यति तत्रापि चतुर्थ्यन्तं देवतापदं प्रयोज्यम् । अग्नये प्रेष्य, सोमाय प्रेष्येत्येवम् । आश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र द्वितीयान्तं देवतापदं प्रयोज्यम् । अग्निं यज सोमं यजेत्येवम् । प्रैषसम्प्रैष्यन्यनुवाचने द्रूयात् षष्ठी भवति यथा इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति । यथा धाना सोमेभ्यः इति प्रैषद्वये तु न षष्ठी । यत्रासौ यजेति विहितं यथा नामधाकं यजेति प्रयाजादीन् प्रति । तत्र देवतापदं न प्रयोज्यम् । प्रयाजार्थेन पोतर्यजेत्येवं प्रयोज्यम् । यत्र यत्र मन्त्रे असाविति पदं श्रूयते तत्र तत्र असाविति पदमपनीय तस्य स्थाने तत्पदवाच्यस्य मैत्रादेर्नामो-

र्थायं यथा इममस्य पुत्रमिच्छादौ देवदत्तस्य पुत्रमिच्छादि। सवषट्कारास्वाहुतिषु वेदेर्दक्षिणभागे उदक्प्राङ् हवनीयाभिमुखस्तिष्ठन् वषट्कारानन्तरं वषट्कारेण सह वा जुहुयात्। यत्राज्यमिश्रं हविर्विहितं, तत्र पूर्व्वमाज्यं हुत्वा ततो मध्ये हविर्हुत्वा पुनरुपर्य्याज्यं जुहुयात्। अथ वा सहैव सर्व्वमाज्यं हविश्च जुहुयादिति पक्षद्वयम्।

१०क० १४सू०। तत्र आग्नेयोऽष्टाकपालो भवतीत्यादौ लटः लिङर्थत्वकल्पनया विधिपरत्वम्। कर्म्मसु कर्त्तव्येषु तदुपकरणद्रव्यसमुदायानामादौ उपकल्पनं तानि चानीय कर्म्मदेशस्थाने स्थापयेत्। धर्म्माश्च तत्रोक्तानि प्राग्भवीयाणि सर्व्वत्राचरणीयानि। हविषां मध्ये यत् पश्चात् पठितं तद्देशतः कालतश्चोत्तरं कार्य्यम्। ग्रहणादिकं पूर्व्वपठितस्य पूर्व्वम् उत्तरपठितस्योत्तरम् कार्य्यम्। एवम् अभिघारणाद्यपि पूर्व्वपठितस्य दक्षिणतः पश्चात्पठितस्योत्तरत इति। एकद्रव्ये स्थाल्याद्युपात्ते माख्ये दक्षहस्तेन गृहीते सति वामेन वेदस्योपग्रहणं कार्य्यम्। एकद्रव्यस्रुचोः उपस्तरादौ द्वितीयद्रव्ये सति वेदोपग्रहणाभावः। आज्यादन्यद्रव्येण द्रव्यवति यागे उपस्तरणादौ च स्रुवेणोपग्रहणं कार्य्यम्। असत्सु वेदवत्त्वाद्वितीयद्रव्येषु कुशैरुपग्रहणम्। यथा स्रुवेऽन्यकर्म्मव्यापृते होमे ग्रहहोमादौ द्वितीयद्रव्याभावे च कुशोपग्रहणम्। स्रुचोरादानकाले आसादितौ स्रुचं जुहूञ्च पाणिभ्यां परिगृह्य उपभृतस्तदुपरि निदध्यात्। तत्र च परस्परसंसर्गजशब्दो न कार्य्यः। विश्वजिन्न्यायेन सर्व्वत्र स्वर्गः फलत्वेन कल्प्यते। एकस्मिन् कर्म्मणि वैकल्पिकानामङ्गानां यथाश्रुतस्य विहितानां मध्ये अधिकाङ्गानुष्ठानपक्षे सर्व्वत्र फलाधिक्यम्। यथा पौर्णमासादौ वैकल्पिकवैश्वधान्याधिकाङ्गानुष्ठाने। एवमन्वाहार्य्यादिदक्षिणादाने षड्दक्षिणापक्षतोद्वादशचतुर्विंशतिदक्षिणापक्षयोः फलतारतम्यम्। दानान्वारम्भवरणव्रतप्रमाणानि यजमानसम्बन्धीनि ग्राह्याणि। तथा च यानि दानादीनि प्रमाणानि विहितानि च तानि याजमानान्येव। व्रतञ्च मध्यन्दनाधःशयनपयोव्रतादिकं यजमानस्यैव। प्रमाणं चाग्निचयवेदिमानादौ स्फ्यादिमानं यजमानहस्तमानेनैव कार्य्यम्। यूपावटोदरवादौ खाते, माने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु पिष्टेषु तण्डुलानादिषु, दुग्धे पयसि, दग्धेषु महावीरेष्टकादिषु तदव-यवलक्षणया क्रियादिसम्भवः। रौद्रमन्त्रं रक्षोदैवतम् असुरदैवतं पैत्र्यं मन्त्रमुच्चार्य्य तत्तद्देवताकं कर्म्म च कृत्वा आत्मानमुपस्पृश्यापां स्पर्शनं कुर्य्यात्। इति सर्व्वकार्य्योपयोगिविधानानि प्रथमाध्याये उक्तानि। एतेषां सर्व्वकर्म्मोपयोगित्वात् विस्तरेणोक्तिः। अन्यान्याध्यायार्थाः संक्षेपेणोच्यन्ते।

२ अध्याये अष्टौ कण्डिकाः। तत्र १क० पौर्णमासेष्टिकाले तत्राग्न्यन्वाधानेऽध्वर्युयजमानयोरधिकारः। तद्विधानप्रकारः। दीक्षापक्षे दीक्षितधर्म्माः। दिवामैथुनमांसवर्ज्जनम् श्मश्रुकेशादिवापनम्। अपराह्णे पत्नीयजमानयोरश्नाप्रा हविषा सह व्रतकालयोश्च माषमांसलवणवर्ज्जं हविष्यं भोज्यम्। तत्र व्रतयोग्यं भोज्यं भाष्ये दर्शितं यथा पुराणः "सकृत् पर्व्वणि सर्पिष्मत् हविष्यं लघु भोजनम्। न मायं नोपवासः स्यात् तैलामिषविवर्ज्जितम्" बौधा० "सर्व्वमेवैतदहः, कोशीधान्यं विवर्ज्जयेदन्यत्र तिलेभ्यः"। परिशिष्टे च "शाकं मांसं मसूरं च चणकं कोरदूषकम्। माषान् मधु पराह्न्नं वर्ज्जयेदौपवस्तके"। कर्म्मप्रदीपे "लवणं मधु मांसञ्च क्षारान् श्रोत्रेन हूयते। उपवासे न भुञ्जीत नोषरात्रौ न किञ्चन"। "तिलमुद्गादृते शैम्बं शस्यं गोधूमकोद्रवौ। चणकं देवधान्यञ्च सर्व्वं शाकं तथैवमम् (शुक्तम्)। सर्व्वक्षारं यवक्षारं टङ्कणक्षारमेव च। क्रतुस्थो वर्ज्जयेन्नित्यं शाकद्रं लवणं तथा"। शाकद्विशेषणात् सैन्धवमानसयोर्न निषेधः। "सैन्धवं लवणं यच्च यच्च मानससम्भवम्। पवित्रं लवणं ह्येते प्रत्यक्षे अपि सर्व्वतः इति स्मृतेः"। मध्यन्दनस्तान्न कर्म्मार्थम् उपनयनोत्तरविहितं तु पुरुषार्थः अतः प्रायश्चित्तभेदः। रात्रौ तस्मिन्नेव विहारेऽग्निहोत्रहोमः। सायमशनेच्छायां होमानन्तरमारण्यौषधीनां नीवारादीनामद्दम् आरण्यफलादीनां च फलमन्तिरात्रौ भुञ्जीत। आहवनीयस्य दक्षे गार्हपत्यस्य दक्षे वाऽधः शयनं तत्राप्याकरणनिषेधः, ब्रह्मचर्य्यञ्च। एष नियमः सपत्नीकयजमानस्यैव। पौर्णमासे अन्वाधानादिकर्म्मापवर्गान्ते द्व्यहे एकाहे वा कार्य्यभेदोक्तिः तच्च प्रातरेव कार्य्यम्। २क०। अग्निहोत्रानन्तरं ब्रह्मवरणं तत्प्रकारः। ३क० ८क०पर्य्यन्ते ब्रह्मसदनादेः आरभ्य शंयु-पर्य्यन्तस्य कर्म्मकलापस्यानुष्ठानप्रकारमन्त्रादिकीर्त्तनम्।

३ अध्याये अष्टौ कण्डिकाः। तत्र होतृसदनादिपौर्णमाससमाप्तिपर्य्यन्तकर्त्तव्यकार्य्यकलापस्यानुष्ठानप्रकारमन्त्रादि।

१२क० । अग्निहोत्राङ्गस्य गार्हपत्योपस्थानप्रकारः ।

१३।१४।१५क०। अग्निहोत्रकालद्रव्यदेवताविधानमन्त्रादि । तत्र कामनाभेदेनावस्थाभेदयुक्ते वह्नौ होमः कार्यः यथा प्रजाभ्योऽवलेनान्नादिकं जिहीर्षुणा समिद्धे धूमबिन्दौऽग्नौ होमः कार्यः । प्रजाउपरुध्य ताभ्योऽन्नं जिहीर्षुणा अतिप्रज्वल्यालाङ्गुक्ते, श्रीकामः यशस्कामैर्ग्रामण्यादिभिः प्रदीप्ते, मित्रभावेन प्रजाभ्योऽन्नं जिघृक्षुणा राज्ञा ज्वालापसरणे जाते, ब्रह्मवर्चसकामेन देदीप्यमानेष्वङ्गारेषु सतसु वह्नौ होमः । कामनाभेदे होम्यद्रव्यभेदाः । यथा स्वर्गकामः पशुकामो वा पयसाऽग्निहोत्रं जुहुयात् । एवं ग्रामकामो यवाग्वा, बलकामः ब्रीहिश्यामाकनीवारयवगोधूमयावोनां तण्डुलैः, यावनालैः प्रियङ्गुभिश् । इन्द्रियकामो दध्ना, तेजस्कामो घृतेन । एतस्मात्द्रव्याणां प्रत्यहं संवत्सरहोमे तत्तत्फलसिद्धिः । अग्निहोत्रहोमे सर्वास्विष्टिषु च गार्हपत्यागारस्य दक्षिणद्वारेण प्रवेशनम् । सर्वदा यजमानः स्वयं होमः कार्यः, कार्यवशात् तन्नियुक्तेन अध्वर्युणा वा । किन्तु दर्शे पौर्णमास्याञ्च सदा स्वयं होमः कार्यः । प्रवासे सूतकादौ च विशेषः ।

५अध्याये । १३कण्डिकाः तत्र । १।२क०। चातुर्मास्ययज्ञवैश्वदेवपर्वकालद्रव्यदेवताप्रयोगादि ।

३, ४, ५, क० वरुणप्रघासरूपतदीयपर्वकालद्रव्यदेवतामन्त्रविधानादि । [मन्त्रादि ।

६क० । साकमेधरूपतदीयपर्वकालविधानद्रव्यदेवता-

७क० तत्र द्विहविष्कक्रौडिनीयेष्टिकालविधानद्रव्यदेवतामन्त्रादिकथनम् ।

८,९,क० तत्र पितृयज्ञेष्टिकालद्रव्यदेवतामन्त्रादिकथनम् ।

१०क० तत्र त्र्यम्बकहोमकालविधानद्रव्यदेवतामन्त्रादि

११ क० चातुर्मास्यपर्वभेदशुनासीरीयकालद्रव्यदेवतामन्त्रादिकथनम् । तत्रायं विशेषः । कृतवैश्वदेवपर्वण एव वरुणप्रघासशाकमेधादिपर्वत्रयस्य नियतकालत्वात् वरुणप्रघासादि कर्त्तव्यमेव । कृते पौर्णमासे दर्शेष्टिवत् । चातुर्मास्यानां पुनःप्रारम्भः सूतकादावपि कार्य एव । चातुर्मास्यानि त्रिविधानि ऐष्टिकानि, पाशुकानि सौमिकानि चेति तेषां द्रव्यदेवतामन्त्रविधानादि ।

१२,१३,क० मित्रविन्देष्टिद्रव्यदेवता मन्त्रविधानकथनम् ।

६अ० दशभिः कण्डिकाभिः निरूढपशुबन्धयागकालद्रव्यदेवतामन्त्रविधानादिकथनम् ।

७अ० ९क० । तत्र ज्योतिष्टोमकालद्रव्यदेवतामन्त्रादि विधानादि । तत्र सोमयागरूपप्रधानस्य स्वरूप द्रव्यदेवतादि विधानादि । [कथनम् ।

८अ०९क० । तत्र १,२,क०आतिथ्यकर्मद्रव्यदेवतामन्त्रादि

३क० औपवसथ्यकालद्रव्यदेवतामन्त्रादिकथनम् ।

४,५,६,७,८,९,क० । आनु—

९अ०१४ कण्डिकात्मके १कण्डिकायाम् सौत्यकर्म-कालद्रव्यदेवतामन्त्रविधानादिकथनम् । अध्यायशेषे समाप्तिपर्यन्ते प्रातःसवनद्रव्यदेवतामन्त्रविधानोक्तिः ।

१०अ० ९क० । तत्र किञ्चिदूनाध्यायसमाप्तिपर्यन्ते माध्यन्दिनसवनतृतीयसवनयोर्द्रव्यदेवतामन्त्रविधानकथनम् । अन्ते ज्योतिष्टोमे सोमोत्तरकर्त्तव्यानाम् 'अग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्रः आप्तोर्याम इत्येवं रूपाणां षण्णां सोमसंहितानां सप्तानां यागानां ज्योतिष्टोमत्वमुक्तं तत्र च ज्योतिष्टोमस्याध्वर्यवविधानप्रकारः ।

११अ०१कण्डिका । तत्रज्योतिष्टोमाङ्गब्रह्मत्वविधानादि ।

१२अ० ६क० । तत्र द्वादशाहयागविधानम् । तत्र एकादशाहादियागे च ज्योतिष्टोमधर्मातिदेशः । तत्राग्निष्टुतो धर्मातिदेशः इत्येकस्य मतम् । द्वादशाहो द्विविधः सत्ररूपः अहीनरूपश्च । तत्रोभयरूपयोर्लिङ्गप्रदर्शनम् । यथा यज्ञान्तयोः अतिरात्रयागस्तृतत्वं, यत्र तु अन्त एव अतिरात्रो यागः सः अहीन इति तयोर्लिङ्गोक्तिः । सत्रेषु यजमानसहितानां षोडशर्त्विजां कर्तृत्वात् सर्वेषां यजमानत्वम् तेन तत्र दक्षिणाभावः सर्वेषां स्वामित्वयोगात् फलवत्त्वाच्च यजमानत्वातिदेशेन सप्तदशानामेव यजमानधर्मदीक्षणादि । अन्वारम्भस्तु गृहपतेरेव । ऋतुनिष्पत्त्यर्थं पात्रासादनादौ कर्मणि एकस्यैवकर्त्तृत्वं तेनैव कृते सर्व्वकृतत्वम् । गृहपत्यध्वर्य्वोर्यव एव अङ्गारप्राशनम् । अध्यायसमाप्तिपर्यन्ते तदीयद्रव्यदेवतामन्त्रदीक्षाकालविधानादि ।

१३अ०४क० । तत्र १क०गवामयनसत्रप्रकारः तत्र द्वादशाहधर्मातिदेशः । २,३,४क०तत्रद्रव्यदेवतामन्त्रविधानादि

१४अ० ३क० । तत्र ज्योतिष्टोमसंस्थाभेदवाजपेयकालद्रव्यदेवतामन्त्रविधानादि ।

१५अ० १०क० । तत्र राजसूययाग उक्तः तत्र क्षत्रियजातेरेवाधिकारः वाजपेयेनेष्ट्वा न राजसूयः कार्यः । तत्र द्रव्यदेवतामन्त्रविधानादि

१६अ० ८क० । तत्र १क०पशुचितिकस्थलविशेषस्याग्निविधानप्रकारः चयनरूपाङ्गकाम्नैः सोमाङ्गत्वोक्तिः

तत्र च इच्छयाऽधिकारः तत्रायं भेदः महाव्रतसंज्ञकज्योतिष्टोमसोमयागे एव पञ्चचितिकस्थलस्य नियमः अन्यत्र इच्छया विकल्पः । ४क० पर्य्यन्ते उखानिर्माणप्रकारादि । उखायन्त्रे तद्विधिविशेषः [मन्त्रादिकथनम् । ४कण्डिकान्ते ५क० च अग्निचयनप्रकारस्तत्रत्यदेवता-
६क० अग्निविशेषपक्षकचयनप्रकारः
७क० तत्रत्यप्रायश्चित्तहोमविधानम् [तामन्त्रादि ।
८क० अग्निचयनस्य पूर्व्वोक्तस्य प्रकारभेदतत्कालद्रव्यदेव-
१७अ०१२क० । तत्र प्रायश्चित्तान्तकर्म्मेतरकर्त्तव्यविधानभेदद्रव्यदेवतामन्त्रादिकथनम् ।

१८अ० ६क० तासु शतरुद्रियहोमः तदङ्गकर्म्मद्रव्यदेवतामन्त्रादिकथनम् । ६क० शेषे अग्निचितोनियमा उक्ता यथा अग्निचिद्वर्षति न धावेत् । पक्षिमांसाभोजनम् । प्रथमचयने द्विजातिभार्य्यामेव गच्छेत् न शूद्राम् । द्वितीयचयने सवर्णामेवोपगच्छेत् नान्यवर्णां क्षत्रियां वैश्यां वा । तृतीये न काञ्चन स्त्रियं गच्छेत् । ब्रह्मचार्य्येव भूयात् । यावज्जीवमिदं व्रतं कुर्य्यात् । संवत्सरं वेति पक्षान्तरम् । चित्यागन्तौ सोमेष्ट्यायां अथ सात्वतगविश्वज्योतिष्कृत्यानामन्यतमानामिष्टकानामुपधानम् । पुनश्चयनमचयनं वेति पक्षान्तरोक्तिः ।

१९अ० । ७क० । तत्र सौत्रामणीयागोविहितः । तत्र ऋद्धिकामस्य ब्राह्मणस्यैवाधिकारः । स च अग्निमता सोमयाजिना सोमयागान्ते कार्य्यः । सोमातिपूतस्य(यस्य मुखातिरिक्तनासाकर्णगुह्यादिच्छिद्रेभ्यः पीतः सोमः स्रवति स सोमातिपूतः) सोमवामिनश्च (मुखेन यः पीतसोमं वमति स सोमवामी) तस्याऽस्याधिकारः । स्वराज्यात् रिपुभिः प्रच्यावितस्य राज्ञोऽपि स्वराज्यप्राप्त्यर्थमधिकारः । पशुमाभियोग्यस्यापि अग्राम्यपशोः पशुकामनया वैश्यस्याऽप्यत्राधिकारः । अयं चतूरात्रसाध्यः । तदङ्गसुरासन्धानप्रकारादि । तत्र द्रव्यदेवतामन्त्रादि ।

२०अ० ८क० । तत्राश्वमेधयागोविहितः तत्र अभिषेकवतः क्षत्रियजातेः राज्ञोऽधिकारः न विप्रवैश्ययोः । स च त्रिरात्रसाध्यः सर्व्वकामाप्तिफलकः । तत्र कालद्रव्यदेवतामन्त्रादि । अश्वमेधयज्ञेऽस्य विहृतिः ।

२१अ० ४क० । तत्र १क० पुरुषमेधयागोविहितः सर्व्वभूतेभ्योऽतिष्ठोत्कर्षकामस्यात्राधिकारः । स च पञ्चरात्रसाध्यः एकविंशतिदीक्षः ब्राह्मणक्षत्रिययोरत्राधिकारः न वैश्यस्य । तदीयद्रव्यदेवतामन्त्रादि । २क० सर्व्वकामस्य सर्व्वमेधयागोविहितः स च दशरात्रसाध्यः । ३ । ४क० । तत्र पुरुषः अश्वः गौः मेषः अजः इति पञ्चपश्वालम्भनं तद्विधानादि प्रोषितस्य मृतस्य वा संवत्सरात्यये पितृमेधो यज्ञो विहितः तत्र नक्षत्रादिकालद्रव्यदेवतामन्त्रविधानादिकथनम् ।

२२अ०११क० । तत्र १क० यजुर्वेदोक्ताधानादिपितृमेधान्तकर्म्माण्युक्त्वा सामवेदविहिता एकाहसाध्ययागा विहिताः । तत्र परिभाषा । संस्थान्तरानुक्तौ अग्निष्टोमसंस्थएव क्रतुर्भवति । भूर्नामैकाहः १ धेनुमात्रदक्षिणः । ज्योतिर्नामैकाहः २ । तौ च विशेषानुक्तौ अग्निष्टोमसंस्थौ । गोसंज्ञकः ३ आयुःसंज्ञकश्च ४ एतावेकाहौ उक्थ्यसंस्थौ अभिजिद्विश्वजितौ५, ६ एतौ अग्निष्टोमकल्पौ । तत्राभिजिति गोसहस्रं शताश्वं वा सदुदितं वा दक्षिणा । विश्वजिति सहस्रं सर्व्वस्वं वा समुदितं वा दक्षिणा । तत्र ज्येष्ठपुत्रस्य विभागयोग्यद्रव्यभिन्नं भूमिदासवर्ज्जं सर्व्वस्वपदार्थः । यतो भूमेः धारणकृत्क्रमद्वारेण उपयोगात् दासस्य शुश्रूषार्थमुपयोगात् तद्भिन्नं हिरण्यादिकं सर्व्वस्वपदार्थः इत्येकमतम् । अमते पुरुषमेधे गर्भदासदानदर्शनात् भूम्येकदेशपरित्यागे धारणसम्भवात् तद्व्यतिरिक्तं सर्व्वस्वं देयमिति । अवभृथस्नाने वत्सत्वचं परिदधातीतिश्रुतेः, तद्व्यतिरिक्तविषयं सर्व्वस्वम् । एवं दीक्षोपयोगिद्रव्यव्यतिरिक्तविषयमपि । सहस्रादधिकं सर्व्वस्वं दक्षिणा देयेति फलितम् । विश्वजिति द्वादशरात्रादिनियमभेदः । अभिजिति कृते विश्वजितोऽनुष्ठानम् अभिजिद्विश्वजितोर्युगपदनुष्ठानं वा । तयोर्युगपत्करणे देवयजनस्थानविशेषोक्तिः तत्र हतषोडशर्त्विजां बाहुल्यात् अन्यतमेनान्यत्र कर्म्म सम्पाद्यम् । तत्र बहिर्वेदिकानि कर्म्माणि समानानि । अन्तर्वेदिकान्येव विभिन्नानि । युगपत्करणपक्षेऽपि अभिजित एव पूर्व्वं पूर्व्वमङ्गं कृत्वा विश्वजितः उत्तरतन्त्रं कार्य्यम् । सर्व्वजिन्नामा ७ एकाहः स च महाव्रतसंज्ञकासत्रसाध्यः तद्विधानादि तत्र संवत्सरं दीक्षा सप्ताहाभिषवः । तत्र तिस्रः षड् वा उपसदः । तथा च संवत्सरं दीक्षां कृत्वा तदूर्द्ध्वं सप्ताहे अभिषवं कृत्वा सप्ताहे चतीति सुत्या भवति तत्र च तिस्रः षड् वा उपसदः कार्य्याः । तत्र संवत्सरं दीक्षा-अग्निचयनवद्वा दीक्षा कार्य्या । स च अग्निष्टोमसंस्थ एव । २क० सर्व्वजिति दक्षिणाभेदतद्विधानादि । अयञ्च एकाहकल्पः । उक्तानामभिजिदादीनां संस्थान्तरम् ।

तत्र अभिजितो ज्योतिःसंज्ञा विश्वजितः विश्वज्योतिःसंज्ञा । सर्व्वजितः सर्व्वज्योतिःसंज्ञा । तद्दक्षिणाभेदविधानादि । उक्थ्यसंस्थस्त्रिवृत्त्रिरात्रमध्यमसंज्ञः । साद्यस्क्रसंज्ञाः ८,९,१०,११,१२,१३ षट् क्रतवो विहिताः । ते च क्रमेणोत्तरत्र दर्शिताः । तत्राद्ये ८ स्वर्गकामपशुकामभ्रातृव्यवतामेवाधिकारः । द्वितीये साद्यस्क्रे ९ दीर्घव्याधिप्रतिष्ठाद्यकामानामधिकारः । अनुक्रीनाम साद्यस्क्रः तृतीयः १० तत्र कर्म्मादिना हीनस्य तन्निर्दोषिकामस्याधिकारः । विश्वजिच्छिल्पाख्यः ११ चतुर्थः । तस्मिन् दक्षिणाभेदः तत्र सर्व्वस्वपतिनिषिद्धेति दक्षिणोक्ता सर्व्वस्वपतिनिषिद्धव्यापतेष्वकानि यथा धेन्वनडुत्क्षीरधान्यपञ्चादिमानार्हस्वर्णरूप्यादिदासदासीमिथुनलोपकरणमहानसहर्व्याद्यारोहणवर्द्धणया । तेन सर्व्वं स्वदेनैषामेव ग्रहणम् । वैरनिर्यातनकामस्य श्येनो नाम १२ पञ्चमः साद्यस्क्रः । तत्र दक्षिणाऽनुष्ठानमन्त्रदेवतादि । एकत्रिकनामा षष्ठः १३ साद्यस्क्रः । सर्व्वेषामेषां दीक्षायाः सद्यःक्रियमाणत्वात् साद्यस्क्रसंज्ञा । व्रात्यस्तोमाश्चत्वार एकाहाः १४।१५।१६।१७विहिताः । इह त्रिपुरुषं पतितसावित्रीका व्रात्याश्चाहोषयान्ति एते कार्य्यास्तत्र लौकिकोऽग्नौ होमः । तेषां प्रथमे १४ व्रात्यस्तोमे गाननर्त्तनकारिणां व्रात्यानामधिकारः । ब्रह्मत्वेन निन्दितस्य द्वितीये उक्थ्यसंस्थे १५ अधिकारः । कनिष्ठस्य तृतीये १६ । तथा च कनिष्ठं गृहपतिं कृत्वा स कार्य्यः । ज्येष्ठस्य अल्पप्रजनस्य स्थविरस्य चतुर्थे १७ अधिकारः तादृशं गृहपतिं कृत्वा गार्हपत्ये स कार्य्यः । तद्दोक्ताविधानादि । ततव्रात्यस्तोमस्य व्यवहार्य्यता भवति । अन्ते ब्रह्मवर्च्चसदीर्घायुरायुःप्रतिष्ठाकामस्य आत्मनोऽपूतत्वनिवृत्तिकामस्य च कर्त्तव्यः अग्निष्टोमसंस्थः अग्निष्टुन्नामैकाहः १८ ।

५क० । तत्र द्रव्यदेवतामन्त्रविधानाद्युक्तम् । त्रिवृत्स्तोमका अग्निष्टोमसंस्थाः चत्वारः क्रतवो विहिताः । तत्र अग्निष्टुत्प्रातःसवनः प्रथमः १९ । तस्य इन्द्रस्तुत् इति संज्ञा । हिरण्यादिकामस्य ग्रामकामस्य चात्राधिकारः । तत्र द्रव्यदेवतामन्त्रविधानादि । इन्द्रस्तुत् द्वितीयः २० । राज्ञा सहिता ब्राह्मणाः यं ब्राह्मणं धर्म्मस्यापकत्वेनाङ्गीकुर्य्युस्तस्यात्राधिकारः । इषुसंज्ञः २१ तृतीयः । स च श्येनवत्कार्य्यः किन्तु न सद्य इति भेदः । स च मारणकामकर्त्तव्यः । ६क० सर्व्वस्वारश्चतुर्थः २२ एकाहः क्रतुः जीविहुकामस्य मर्त्तुकामस्य वात्राधिकारः । तत्रदिष्टान्नदक्षिणा । तस्य द्रव्यदेवताविधानादि । अतिमोक्षनीयाख्यः २३,२४,२५ क्रतवो विहिताः । तेषु आद्यः सर्व्वस्तोमः २३ । द्वादशाहिकछन्दोमत्रयमध्ये उक्थ्यसंस्थे उत्तमे अहनी पृथक् कृत्वा द्वितीयतृतीयौ २४,२५, अतिमोक्षनीयौ कार्य्यौ । पावस्तोमाश्चत्वारः २६,२७,२८,२९ । छान्दोग्ये चैषां विशेषः । अन्ते त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः षट् ३०,३१,३२,३३,३४,३५, पृष्ठ्यस्तोमाः एकाहविशेषा विहिताः ।

७क० । तेषां विधानप्रकारमन्त्रदेवतादिकथनम् । अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपौर्णमासदाक्षायणायणसंज्ञाः ३६,३७,३८,३९,४०,४१, षट् प्रतिकर्म्मसोमाः क्रतवो विहिताः । तद्विधानादि ।

८क० । सप्तदशस्तोमकाः ४२,४३,४४,४५,४६, पञ्च क्रतवो विहिताः तत्र ग्रामकामस्य उपहव्यनामा ४२ अनिरुक्तः । मिथ्याभिशस्तस्यापि तत्राधिकारः । तद्दक्षिणाविधानादि । स्वर्गकामस्य ऋतपेयः ४३ । तद्विधानप्रकारदेवतामन्त्रकथनम् ।

९क० पशुरैश्वर्य्यकामयोर्वैश्यस्तोमः ४४ । तद्विधानादि । तीव्रसुन्नामकः ४५ उक्थ्यसंस्थः क्रतुः । तीव्रसुति सोमातिरेकेऽपि विशेषविधानम् । तत्र सोमातिपूतस्य स्वराज्यात् प्रच्यावितस्य राज्ञः, दीर्घव्याधिग्रस्तग्रामप्रजापशुकामानाञ्चाधिकारः । तद्विधानादि ।

१०क० राज्यकामस्य राजन्यस्य राट्संज्ञकः क्रतुः ४६ तद्विधानादि । सचाग्निष्टोमसंस्थः । महेन्द्रपरियज्ञः अग्रभवत्कार्य्यः । विराडाख्यः ४७ क्रतुः अन्नाद्यकामस्य कर्त्तव्यः महेन्द्रपरियज्ञवत् आद्यन्तयोः आग्नेयपशुः कार्य्यः । औपशदनामा ४८ एकाहः प्रजातिकामस्य विहितः । तद्विधानादि । पुनस्तोमनामा ४९ एकाहः उक्थ्यसंस्थः । तत्र प्रतिग्रहदोषशान्तिकामस्याधिकारः तद्विधानादि । पशुकामस्य चतुष्टोमनामकौ ५०,५१ उद्भिद्बलभिदौ च एकाहौ ५२,५३ दर्शपौर्णमासवत् संहतावेव तौ फलसाधकौ । दृपुरिदिः ५४ तद्विधानादि । उद्भिदा यष्टा तत एव दिनादारभ्यार्द्धमासं मासं संवत्सरं वा प्रत्यहं दृपुरिदिर्विधेया । तद्विधानादि । पूजाकामस्य अपचितिनामकौ ५५,५६, द्वौ यज्ञौ विहितौ । तत्र राष्ट्रैश्वर्य्यिकस्य चाधिकारः । तद्वि-

धानादि। तत्र पूर्व्वस्य पञ्चोतिसंज्ञा ५५ उत्तरस्य ज्योतिः संज्ञा ५६ । तौ च साग्निचित्यौ सर्व्वजिद्वद्दीक्षायुक्तौ च ११क० तयोर्द्दक्षिणा । अयनगोपती ५७, ५८, द्वौ क्रतू विहितौ तत्र अग्निष्टोमसंस्थे प्रथमे राज्ञोऽधिकारः तद्दक्षिणाभेदश्च । गोषव उक्थ्यसंस्थः गवायुतदक्षिणः तत्र वैश्यस्यान्येषां वा अधिकार इति मतद्वयम् । तद्विधानादि । मरुत्स्तोमनामा ५९ यज्ञः तत्र भ्रातृणां सखीनां वा गणभूतानामधिकारः । वैश्यस्तोमोक्तदक्षिणा । ऐन्द्राग्नकुलायोनाम ६० क्रतुः प्रजाकामपशुकामयोस्तत्राधिकारः । गोकुलदक्षिणा । तत्र च द्वयोर्भ्रात्रोः सख्योर्वाऽधिकारः न गणानाम् । राजकर्त्तव्यः उक्थ्यसंस्थ इन्द्रस्तोमो ६१ विहितः । पुरोधाकामस्य इन्द्राग्निस्तोमः ६२ क्रतुः विहितः । सायुज्यकामयोः राजपुरोहितयोरत्राधिकारः । तयोः पृथक् वा सह वाधिकार इति विकल्पः । पशुकामस्य अग्निष्टोमसंस्थौ विघनौ ६३, ६४ नाम यज्ञौ विहितौ । अभिचारकामस्य पशुकामस्य वा तयोरधिकारः तत्र पशुकामस्य सम्पन्ना दक्षिणा, अभिचारकामस्य त्रिंशद्गावोदक्षिणेति भेदः । अभिचारकामस्य संदंशवज्रौ ६५, ६६ द्वौ यज्ञौ विहितौ, तौ च श्येनसोमौ कर्त्तव्यौ, तत्र वज्रः षोडशिसंस्थः कर्त्तव्यः तत्र विशेषोक्तिः । संदंशेन राजानमेवाभिचरेत् न जनपदम् । वज्रेण जनपदमेवाभिचरेत् न राजानम् । वैपरीत्येन वेति मतान्तरम् । अभिचारेण राज्याद्युपगमं कृत्वा मारयित्वा वा आत्मशुद्ध्यर्थं ज्योतिष्टोमेन यजेतेति । इति सामवेदविहिता एकाहाः दर्शिताः ।

२३अ० ५क० । तत्र १क० । अहीनसंज्ञकयागानां द्वादश उपसदः, मासमभ्यस्तञ्च । सुत्योपसद्विशेषोपदेशः दीक्षाभेदश्च च विहितः । तथा च सौत्यानि उपसदाश्च दिनानि परिगणय्य दीक्षा । द्विरात्रावधिद्वादशाहपर्य्यन्तसाध्या यागाः अहीना इत्युच्यते । तत्र पाठात् अतिरात्रस्याप्यहीनसंज्ञत्वम् इत्येकीयमतम् । द्व्यहादिषु दशरात्रादिकादिष्वहर्तिर्गौण्या इत्युक्तिः । द्वादशाहकर्त्तव्यदशरात्रस्य द्व्यहादिषु कर्त्तव्यतोक्तिः । द्विरात्रादिषु सहस्रदक्षिणा चतूरात्रादिष्वधिका दक्षिणा । तत्र दक्षिणादाने प्रत्यहं समभागेन देयतोक्तिः । अन्त्येऽवशिष्टदानम् । १३त्रयोदश अतिरात्राः विहिताः । यथा तत्र षोडशिग्रहरहिताश्चत्वारः प्रथमा अतिरात्राः । तत्र प्रजातिकामस्य नवसप्तदशसंज्ञः १ ज्येष्ठभ्रातृमत्याः स्त्रियाः ज्येष्ठपुत्रस्य कर्त्तव्यः विषुवन्नामातिरात्रः २ । भ्रातृव्यवतः गौर्नामातिरात्रः ३ । स्वर्गकामस्यारोग्यकामस्य वा आयुर्नामातिरात्रः ४ । इति प्रथमाः चत्वारः । अर्हिकामस्य ज्योतिष्टोमनामा ५ । पशुकामस्य विश्वजिन्नामा ६ । ब्रह्मवर्चसकामस्य विष्टन्नामा ७ । वीर्य्यकामस्य पञ्चदशनामा ८ । अन्नाद्यकामस्य सप्तदशनामा ९ । प्रतिष्ठाकामस्य एकविंशनामा १० इति षट् अतिरात्रा विहिताः । प्राप्तस्याप्राप्तस्य पशोर्भ्रंशे तल्लाभकामस्य आप्तोर्यामोऽतिरात्रः ११ । भ्रातृव्यवतोऽभिजिन्नामातिरात्रः १२ । भूतिमिच्छोः सर्व्वस्तोमोऽतिरात्रः १३ । इति त्रयोदश अतिरात्राः । २क० । द्विरात्रास्त्रयः अहीनाः । तत्र द्वितीयतृतीययोः षोडशिग्रहरहितौ द्वौ अतिरात्रौ । आङ्गिरसचैत्ररथकापिवना इति तेषां संज्ञाः । द्वितीयं द्विरात्रमुक्थ्यपूर्व्वकमेके इच्छन्ति । पार्ष्टिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्व्वन्ति । संस्थान्यत्वमात्रं धर्म्मास्तु तदीया एव । मुख्यार्होऽपि यः मुख्यहीन इव स्यात् तस्य आङ्गिरसद्विरात्रेऽधिकारः । १ । प्रजाकामस्य चैत्ररथे २ । स्वर्गकामस्य पशुकामस्य वा कापिवनेऽधिकारः ३ । त्रिरात्रा अहीनाः गर्गवैदच्छन्दोमान्तर्व्वसुपराकाख्याः पञ्च क्रतवः । तत्र वैदे त्रिरात्रे १ त्रिवृत्स्तोमयुक्ताः सर्व्वे अतिरात्राः तत्संस्थान्यत्वमात्रम् । तत्र राज्यकामस्याधिकारः । पशुकामस्य अन्तर्व्वसौ २ । स्वर्गकामस्य पराके ३ इति भेदः । अत्रिचतुर्वीरजामदग्न्यवशिष्ठसंसर्पविश्वामित्राख्याश्चत्वारः चतूरात्रसाध्याः क्रतवो विहिताः । तत्र जामदग्न्ये, चतूरात्रे पुष्टिकामोऽधिकारी । तत्र विंशतिदीक्षाः । सर्व्वेषु उपसदः पुरोडाशवत्यः स्युः । ३क० तेषां विधानादि ।

४क० । पञ्चाहसाध्याः त्रयः अहीनाः । तत्र प्रथमः देवपञ्चाहसंज्ञकः पञ्चशारदीयः द्वितीयः तद्विधानादि व्रतवत् संज्ञकस्तृतीयः पञ्चाहः । तत्र ज्योतिर्गौर्भिश्चाप्ततं गौरायुः इत्येतन्नामका पञ्च एकाहाः । सर्व्वजितश्चात्र दीक्षा भवति । तद्विधानादि । ५क० । षडहा अहीनास्त्रयः । ऋतुषडहः १ पृष्ठ्यावलम्बाख्यः २ त्रिककुभः ३ इति तेषां नाम । तेषु स्तोमविधानादि । सप्त सप्ताहा अहीना विहिताः । तत्र चतुर्थं सप्ताहमुत्तमं भवति । चतुर्थं मध्ये तृतीयः पशुकामस्य भवति । इन्द्रसप्ताहसंज्ञः पञ्चमः । तत्र पञ्चमे सप्ताहे द्वितीयादेकाहादारभ्य षडेकाहाः तुल्याहानि भवन्ति । तत्र ज्योतिर्गौः आयुः अभिजित् विश्वजित् सर्व्वजित् इत्येते षट् प्रत्येकं सप्ताहगताः

कार्य्यः। एतच्च महाव्रतं सर्व्वेषु भवति। सर्व्वस्तोमश्चतमः ष्टेवाहे ज्योतिर्गौरायुरभिजित् विश्वजित् सर्व्वजित् महाव्रतं सर्व्वस्तोमोऽतिरात्रः। जनकसप्तरात्रः षट्: सप्ताहः। तद्विधानादि। उत्तमे सप्तमे सप्ताहे बृहद्रथन्तरसामयुक्तपृष्ठ्यः ते च पृष्ठ्यस्तोमाख्याः इत्येवं सप्त सप्ताहा अहीना उक्ताः। तत्र विधानादि। अष्टसु अहीने पार्श्विकात् षड़हादवसितात् महाव्रतम् भवति। नवरात्रे त्रिकद्रुका ज्योतिः गौः आयुः इत्येतन्नामकाः। नवरात्रे षड़हादूर्द्ध्वं ज्योतिः गौः आयुरित्येते एकाहा भवन्ति। तस्यैव प्रकारान्तरम्। तद्विधानादि। दशरात्राश्चत्वारः। त्रिककुप् प्रथमः प्रतिष्ठाकामस्य। तद्विधानादि। कौसुरुविन्दो नाम द्वितीयः अभिचर्य्यमाणस्य। पूर्द्दशरात्रनामा तृतीयो दशरात्रः। तद्विधानादि। पशुकामस्य छन्दोमनामा चतुर्थो दशरात्रः। पौण्डरीकनामा एकादशरात्र; तद्विधानादि। २३अ० ७कण्डिकाः। तत्र १क०। द्वादशरात्रादीनि एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि उक्तानि। तत्र च येन क्रमेण यान्यहानि उपदिष्टानि तानि तथैवावगन्तव्यानि। तत्र आवापिकानामन्यः क्रमः औपदेशिकानान्तु उपदेशक्रमएव ग्राह्यः। तत्रोपदिष्टाहर्व्यतिरिक्तानामह्नां आवापक्रमोक्तिः। यथा अपूर्व्वमावे सत्रे दशरात्रावापो नवति स च भवन् पर एव भवति न पूर्व्वः। षट् पार्श्विकानि अहानि, चत्वारि छन्दोमानि अहानीति दशरात्रः। पृष्ठ्यः षड़हः त्रयश्छन्दोमा अविवाक्योदशम इत्ययं वा दशरात्रो भवति। अयञ्च सर्व्वेषामह्नामन्ते परोभवति। प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे भवति। एकाहं विना सत्रसंख्यापूरणे दशरात्रात् परं महाव्रतं भवतीत्यर्थः। महाव्रतादन्यत् आवापान्तरं दशरात्रात् पूर्व्वं भवति। यत्र षड्भिरहोभिर्व्विना न पूर्य्यते सत्रसंख्या तत्राभिप्लवः षड़हार्थे पूरणोभवति। अभिप्लवस्यादितः पञ्चाहानि। पञ्चाहार्थे (पञ्चाहेन विना संख्याऽपूरणे)। त्र्यहार्थे (त्र्यहेन विना सत्रसंख्याऽपूरणे) ज्योतिर्गौरायुः। ज्योतिरादीनां त्रिकद्रुका इति संज्ञा। चतुरहार्थे (चतुरहं विना सत्रसंख्याऽपूरणे)। ज्योतिरादित्रिकम् महाव्रतञ्च। एतच्चतुष्कं पूरणं भवति। द्व्यहार्थे (द्व्यहं विना सत्रसंख्याऽपूरणे) गौरायुश्च पूरणं भवति। सत्रस्याद्यन्तयोरतिरात्रः कार्य्यः प्रायणीयोदयनीययोरन्तराले आवापस्थानम्। यथा-वापः क्रियते तत्र तयोरतिरात्रयोर्मध्ये करणं विहितम्। आवापानां समवायेन यत्र सत्रं पूर्य्यते तत्र यद्यदल्पं तत्तत्पूर्व्वं भवति। यथा एकोऽभिप्लवः षड़हः अपरस्तत्रैव पञ्चाहः चतुरहस्त्र्यहो द्व्यहो वा तत्र पञ्चाहादेः पूर्व्वमावापः। इति सत्रावापोपयोगिनी परिभाषा। द्वे त्रयोदशरात्रसत्रे। तत्र पृष्ठ्यादवसितात् सर्व्वस्तोमसंज्ञोऽतिरात्रो भवति। अयं भावः-सर्व्वेषु सत्रेषु द्वादशाहधर्म्मविहिता अतस्त्रयोदशरात्रे सत्रे एकस्तोऽपि द्वादशाहो भवति, एकमहरवशिष्यते। तत्र पृष्ठ्यात् परः सर्व्वस्तोमोऽतिरात्रः कार्य्यः। तथाच १ प्रथमदिने प्रायणीयातिरात्रः, ततो द्वितीयादिषु षट्सु दिनेषु सप्ताहान्तेषु पृष्ठ्यः षड़हः, अष्टमे सर्व्वस्तोमोऽतिरात्रः, नवमादिषु चतुर्षु छन्दोमाश्चत्वारः, त्रयोदशे उदयनीयातिरात्र इत्येवं क्रमः, एवमन्यत्रापि। द्वितीये त्रयोदशरात्रे तु दशरात्रादुत्तरं महाव्रतमिति भेदः। सम्भार्य्यतृतीयत्रयोदशरात्रस्य गवामयनवत् सम्भरणप्रकारः। चतुर्द्दशरात्राणि त्रीणि सत्राणि। तेषां विधानादि। तत्रान्तिमे विवाहोदकतत्त्वसंशयितानामधिकारः। पञ्चदशरात्राणि चत्वारि। तद्विधानादि सप्तदशरात्रे अष्टादशरात्रे एकोनविंशरात्रे विंशतिरात्रे च एवमेवावापनपूर्त्तिः। २क० षोड़शरात्रादिषु चतुर्षु आवापप्रकारः। तत्र षोड़शरात्रे प्रायणीयात् त्रिकद्रुकाः दशरात्रोत्तरं व्रतञ्च। सप्तदशरात्रे प्रायणीयात् पञ्चाहः। अष्टादशरात्रे प्रायणीयात् षड़हः, एकोनविंशरात्रे प्रायणीयात् षड़होदशरात्रोत्तरं व्रतञ्च। इत्येवमावापोक्ता विधानप्रकारः। एकविंशतिरात्रौ अभीकृशिको द्वौ अतिरात्रौ। तत्रावापप्रकारः। तद्विधानादि। अन्नाद्यकामस्य द्वाविंशतिरात्रो विहितः। तद्विधानादि। प्रतिष्ठाकामस्य त्रयोविंशतिरात्रोविहितः। प्रजाकामस्य पशुकामस्य च चतुर्व्विंशतिरात्रोविहितः। तस्य द्विविधं तत्र प्रथमस्य विधानादि। द्वितीयस्य संसदसंज्ञा। तत् विधानादि। अन्नाद्यकामस्य पञ्चविंशतिरात्रं, प्रतिष्ठाकामस्य षड्विंशतिरात्रम्, ऋद्धिकामस्य सप्तविंशतिरात्रम्, प्रजाकामस्य पशुकामस्य वा अष्टाविंशतिरात्रम्, द्वात्रिंशद्रात्रञ्च विहितम्। तेषां क्रमशो विधानानि। एकोनत्रिंशद्रात्रस्य त्रिंशद्रात्रस्य एकत्रिंशद्रात्रस्य द्वात्रिंशद्रात्रस्य च विधानादि। त्रयस्त्रिंशद्रात्रस्य त्रयो भेदास्तेषां विधानादि। चतुस्त्रिंशद्रात्रमारभ्य आ चत्वारिंशद्रात्रात् सप्तानि सत्राणि आवापक्रमेण पूर्य्याणि। तत्र च विशेषः

कल्याणकामस्य चतुस्त्रिंशद्रात्रम्, प्रतिष्ठाकामस्य षट्त्रिंशद्रात्रम् समृद्धिकामस्य सप्तत्रिंशद्रात्रं प्रजाकामस्य पशुकामस्य वा अष्टात्रिंशद्रात्रं चत्वारिंशद्रात्रञ्च सत्रं विहितम्। एकाद्यपञ्चाशद्रात्राणि सप्त सत्राणि विहितानि। तत्र प्रथमस्य विघृतिसंज्ञा। तद्विधानादि। द्वितीयस्य यथा तिरात्रसंज्ञा तद्विधानादि। अञ्जनाभ्यञ्जनीयम् तृतीयं, विशस्य मध्ये आत्मानं विख्यापयितुकामस्यात्राधिकारः। तद्विधानादि। संवत्सरमितं नाम चतुर्थं तद्विधानादि।

३क०। प्रजातिकामस्य विहितस्य एकषष्टिरात्रस्य एतत् समानतया विधानादिप्रकरणाद्वृत्तम्। सवितुः ककुभः पञ्चमः तद्विधानादि। तत्र प्रजातिकामस्याधिकारः। षडश्वमयोः सामान्यतोविधानादि। शतरात्रस्य विधानादि। तत्र विधाने विकल्पः।

४क०। तत्र सवनसत्यादिहोमविधानादि। संवत्सरप्रभृतिसत्रे गवामयनधर्मातिदेशः। आदित्यानामयनसंज्ञकसत्रस्य विधानादि। आदित्यानामयनवत् अङ्गिरसामयनं कार्यं तत्र विशेषः। दृतिवातवतोरयनसंज्ञसत्रस्य विधानादि। कुण्डपायिनामयनसंज्ञसत्रस्य कालविधानादि। तत्र कुत्रास्थानेषु सोमोपनहनादिविशेषः। सर्पसत्रसंज्ञस्य सत्रस्य भेदविधानादि तत्र गवामयनधर्मातिदेशः।

५क०। तापश्चितनामसत्रस्य विधानादि। महातापश्चितनामसत्रस्य विधानादि। क्षुल्लकतापश्चितनामसत्रस्य, सहस्रसाव्याग्निसत्रस्य च विधानादि। त्रिसंवत्सरसत्रस्य विधानादि। महासत्रसंज्ञसत्रस्य विधानादि। प्रजापतिसत्रसंज्ञस्य द्वादशसंवत्सरसाध्यस्य विधानादि। षट्त्रिंशद्वत्सरसाध्यस्य शाक्त्यानामयनसंज्ञसत्रस्य विधानादि। शतसंवत्सरसाध्यस्य साध्यानामयनसंज्ञसत्रस्य विधानादि। सहस्रसंवत्सरसाध्यस्य विश्वसृजामयननामकसत्रस्य विधानादि। तस्य च गौणता हत्वा सहस्रदिनसाध्यता तेन सहस्राहस्त्वमेतत् सत्रमित्युच्येयम्। सारस्वतसत्राणां विधानादि। यात्सत्रनाम सत्रम्। अधर्मेणाधिकं गर्भिणीनां वत्सतरीणां दशगर्भिणीनां शतं सहस्रपूरणायारण्ये उत्सृजेत् तासां सहस्रपूरणे इदं सत्रं समाप्यते औषधानां दोहनाभावेऽपि वर्द्धमानानां तासां सहस्रपूरणं सम्पद्यते इत्युक्तिः। सारस्वतस्य दीक्षाप्रदेशादि यथा चेत्युक्तमस्याम् सरस्वतीविनशने स्थाने दीक्षा। सरस्वती नाम प्रत्यक्स्रोता नदी प्रवहति। तस्याः प्राक्पश्चाद्भागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागः भूम्यन्तर्निमग्नः प्रवहति नासौ केनचिद्दृश्यते तत्स्थानं विनशनमुच्यते तच्च प्रभासस्थानमिति माधवाचार्य्यः। तत्र दीक्षाविधानादिप्रकारः।

६क०। तद्दीक्षाङ्गविधानादि। सरस्वतीदृषद्वत्योः सङ्गमे तद्विधानादि। प्लक्षप्रास्रवणे (सरस्वत्या उत्पत्तिस्थाने) अवभृथे कामायेष्टिर्विहिता तत्र कारपचदेशभेदे यजमानावभृथस्नानम्। उदयनीया इष्टिरान्ते कार्य्या। उदयनीयरहितानि सारस्वतानि त्रीणि सत्राणीत्युक्तिः। पूर्वोक्तसहस्रापूरणे गृहपतिमरणे सर्वासां गवां हानौ वा एतत् सत्रं समाप्यते इत्युक्तिः। तत्र पञ्चमासैरतिरात्रैरिष्टा सत्रं समाप्यमित्युक्तिः। तत्र सहस्रपूरणे तदेव दत्त्वा सत्रसमाप्तिः। गृहपतिमरणे आयुःसंज्ञातिरात्रं कृत्वा, सर्वहानौ तु विश्वजित्सत्रं कृत्वा समापयेत् इति भेदः। उभयथाऽपि ज्योतिष्टोमं कृत्वा वेति पक्षान्तरम्। इति प्रथमसारस्वतम्। द्वितीयं दृतिवातवतोरयनवत् कार्यं तद्विधानादि। तत्र तिथिक्षयवृद्ध्योरयनविशेषविधानम्। शुक्लकृष्णयोर्विशेषविधानादि। तृतीये सारस्वते विश्वजिदभिजितोर्विधानादि। अतिजाऽऽचार्य्येण वा तत्र दार्षद्वतं नाम सत्रं कार्य्यम्। तत्र करपचे उत्सृष्टगावः संवत्सरं, द्वितीयसंवत्सरं विगतोदके स्थाने रक्षणीयाः। सरस्वतीतीरे नैतन्धवानाम पुराणा ग्रामाः सन्ति, तत्राग्न्याधानमारम्भणीयं, कुरुक्षेत्रे परीणत्स्थले अन्वारम्भणीयम्। ततस्तृतीयवत्सरे परीणत्स्थले दर्शपौर्णमासान्तं कुर्य्यात्। अवशिष्टविधानादि। दृषद्वतीतीरेष्वागत्य यमुनायामवभृथस्नानम् तत्र स्थाने मन्त्रपाठे विशेषः।

७क०। चैत्रस्य वैशाखस्य वा शुक्लपक्षस्य तुरायणनाम सारस्वतं सत्रं कार्य्यम्। तस्य दीक्षाविधानादि। तच्चैकपर्वसाध्यं तत्र सर्वपर्वसु कर्त्तव्योपदेशः। दार्षद्वतवद्विनशनोदकेऽवभृथस्नानम्। भरतद्वादशाहादिः द्वादशाहभेदः तद्विधानादि। उत्सर्गिणां गवामयनविकल्पाभिधानम्।

२५अ०।१क०। तत्र अङ्गवैगुण्यदोषोपशमार्थं प्रायश्चित्तविधानम्। तत्र प्रायश्चित्तशब्दार्थस्तु अपूर्वकार्य्यतेभावे क्तः प्रायो विनाशः स च विध्यतिक्रमदोषः तस्य चित्तं सन्धानं चितधातोर्भावे क्तः चित धातूनामनेकार्थत्वात् सन्धानमित्युच्यते। प्रायस्य विध्यतिक्रमदोषस्य चित्तं सन्धानम् "प्रायस्य चित्तिचित्तयोः" इति "पारस्करप्रभृतीनीति" पा० ४१० सुट्। तच्च विनाशकालएव कार्य्यमिति पूर्व्वपक्षे "आगन्तुकानामन्ते निवेशः" इति न्यायेन सर्व्वकार्य्यान्ते कार्य्यमिति सिद्धान्तो

गौणः। निमित्तकाले एव कर्त्तव्यतेति सम्भवितान्तः तत्-कालाकरणेऽन्ते करणमिति तस्य गौणकालताव्यवस्थापनम्। अनादेशे सर्व्वत्र प्रायश्चित्तं महाव्याहृतिहोमः। आदेश विशेषे तु यथादिष्टं करणीयम्। यथा "प्रणीताः स्रवा अभिमृशेदिति" यजु॰५,२८, प्रणीताभिमर्शनमेव प्रायश्चित्तम्। महाव्याहृतिहोमेऽयं विशेषः। हौत्रिके (ऋग्वेदोदिते) कर्म्मणि उपघाते गार्हपत्येऽग्नौ भूःस्वाहेति प्रा॰ होमः अयमग्निदैवतः। स च अनादिष्टकर्त्तृकत्वात् ब्रह्मणा कार्य्यः। ब्रह्मवरणात् प्राक् निमित्ते जाते ब्रह्मवरणात् प्राक् व्याहृतिहोमाय ब्रह्मान्तरं वृत्वा तेन कारयितव्यम्। अब्रह्मवरणकेऽग्निहोत्रादौ तु स्वयं कार्य्यः। सोमे तु व्याहृतिभिरस्य समुच्चयः। यजुर्वेदोक्तकर्म्मोपघाते दक्षिणाग्नौ भुवःस्वाहेति प्रा॰ होमः कार्य्यः स च पूर्व्ववत् ब्रह्मणैव कार्य्यः। सोमे तु तत्रापि आग्नीध्रीये भुवः स्वाहेति होम इति भेदः। तस्य वायुर्देवता। सामवेदविहितकर्म्मोपघाते आहवनीयेऽग्नौ स्वःस्वाहेति प्रा॰ होमः स च सूर्य्यदैवतः। बहुत्वहोतानि सर्व्वत्र। सर्व्ववेदोक्तकर्म्मोपघाते व्यस्ताभिः समस्तेन भूर्भुवः स्वःस्वाहेत्येकेनेति चतुर्वारहोमः कार्य्यः। अयाश्चाग्ने इत्याद्याभिः पञ्चभिः मन्त्रैः आहवनीये पञ्चाहुतिरूपः सर्व्वप्रायश्चित्तसंज्ञकोहोमः। अविज्ञाते स्मार्त्तादौ कर्म्मणि व्यस्तसमस्तमहाव्याहृतिहोमाश्चत्वारः कार्य्याः। तथा हि यत्र ऋग्वेदोक्तत्वादिना विशेषहोमास्ति अथ च स्मृतिरुपलभ्यते। यथा यज्ञोपवीतिना प्रदक्षिणेन दक्षिणपाणिना पवित्रपाणिना कर्म कर्त्तव्यमित्यादि स्मृतिविहितं यज्ञोपवीतधारणादि। तस्य कथञ्चिदुपघाते व्यस्तसमस्तमहाव्याहृतिहोमचतुष्टयं प्रायश्चित्तं कार्य्यम्। तदन्ते च याजुषैः प्रागुक्तं सर्व्वप्रायश्चित्तसंज्ञकं पञ्चाहुतिरूपं सर्व्वत्र ज्ञातेऽविज्ञाते निमित्ते वा करणीयम्। अत्रायं सम्प्रदायभेदः। भूरिति गार्हपत्ये, भुव इति दक्षिणाग्नौ, स्वरिति आहवनीये भूर्भुवः स्वरिति, सर्व्वप्रायश्चित्तसंज्ञकपञ्चाहुतिहोमश्च आहवनीये इति याज्ञिक वासुदेव भट्टाः। भूरित्याद्याहुतिचतुष्कमाहवनीय एवेति सम्प्रदायकारिकाकारौ। महापितृयज्ञे, दक्षिणाग्नौ अवभृथेऽप्स्वेव, यतश्छिद्रे परिषिञ्चतु। त्र्यम्बकाश्च च चतुष्पथाग्नौ" इति कर्कः। अथ कर्म्मविशेषेषु प्रायश्चित्तभेदाः ७क॰ ८ख॰ पर्य्यन्तेषु उक्ताः। ७क॰ ८खण्डादौ कर्म्मसमाप्तितः पूर्व्वं यजमाने मृते तदैव कर्म्मसमाप्तिर्भवत्येकः पक्षः ऋत्विगादिभिः शेषं समाप्यमित्यपरः पक्षः। तत् कर्म्मसमाप्तावपि उत्तरक्रियाविशेषो विहितः। ८क॰ उपकृतपशुपलायनादौ प्रायश्चित्तभेदः। ततोऽन्ये विपत्तयः। ९क॰। अग्निचयनप्रकारादि। १०क॰। सत्रविशेषकरणार्थं कृते उद्यमे दैवात्तदकरणे विश्वजिन्नामकेनातिरात्रेण यजेत्। सत्राद्यर्थं कृतदीक्षायां यदि दैवान्मानुषाद्वा निमित्तात् यामिकृते दीक्षाभावकृते वा सत्रे स्वामिनः सत्रं न समापयामीति बुद्धिर्जायते तदा सोमेनोपलक्षितं साधारणं धान्यवस्त्रादिकं पुत्रादिभ्यः पृथगात्मीयं कृत्वा सर्व्ववेदसदक्षिणेन विश्वजिताऽतिरात्रेण यजेत्। स च सोमे क्रीतएव भवति नाक्रीते इति ताण्ड्ये स्थितम्। क्रीतेऽक्रीते वा सोमे विश्वजिद्भवतीति स्वमतम्। अध्वर्य्युप्रभृतीनां दैवात् स्वस्वकार्य्याकरणे अदक्षिणं कर्म समाप्य पुनरन्यवरणपूर्व्वकं यागारम्भः। तत्र दिनभेदे विशेषः। दीक्षितस्य पत्नी चेत् रजस्वला तदा दीक्षारूपाणि मेखलादीनि निधाय सिकतासु त्र्या रक्षस्थयात् आसीत। तस्यास्तु वर्त्तमानास्तु सिकतास्वपविशेत्। प्रातःसायञ्च वेदिसमीपे सिकतास्वेव तिष्ठेत्। चतुर्थेऽहनि गोमूत्रमिश्रोदकेन आर्त्तं स्नानं विधाय वासो धृत्वा सान्निपातिकं कुर्य्यात् नारादुपकारकम्। आरादुपकारकं च दीक्षणीयमभ्यञ्जनादि। प्रसूतायास्तु दशरात्रादूर्द्ध्वं स्नानादि। गर्भिण्यौ न दीक्षयेदिति तद्दीक्षानिषेधः इति मतान्तरम्। "अयज्ञियाः गर्भा" इति श्रुतेः अनुबन्ध्यामकरणीयत्वात् निषेधस्य तद्विषयत्वेन गर्भवत्या अपि दीक्षाधिकारः इति स्वमतमुक्तम्। दीक्षितस्य दुःस्वप्नादिदर्शनादिप्रायश्चित्तविशेषः। चमसस्य पीतापीतत्वविषये प्रायश्चित्तम्। सोमस्योपरि मेघवर्षणे भक्षाभक्षनिर्णयपूर्व्वकं तत् प्रायश्चित्तम्। चमसदोषे द्रोणकलशदोषे च प्रायश्चित्तम्। अग्निभेदने होमभेदः प्रायश्चित्तम्।

सोमापहरणे अव्यक्तरागपुष्पाणि तृणानि सोमकार्य्ये निधाय अभिषवं कुर्य्यात्। बहुकालोषधादिरूपस्य वल्लीरूपा अङ्कुरा जायमाना श्वेतफूतिमित्युच्यते तत्, श्यामकान्, सोमसदृशान् लताविशेषान् पूतीकान्, अरुणदूर्व्वा अव्यक्तरागा दूर्व्वा हरितकुशान् अपुष्पान् दर्भान् वा पूर्व्वपूर्व्वाभावे उत्तरोत्तरान् प्रतिनिधायाभिषुणुयात्। तत्र गोदानं प्रायश्चित्तं कृत्वा उक्तद्रव्येण यागसमापनम्। तत्र च अवभृथान्ते पुनः यज्ञः करणीयः, सोमकलशभेदे ब्रह्मणस

धाठः प्रायश्चित्तम् इति विकल्पः । अभिषवणचर्मणि प्रक्ष-ल्यादिमात्रसोमरक्षाभे अजादिना तस्य वर्द्धनेन कलसमा-पूर्य्य द्रोणकलशपूरणं सम्पाद्यम् । सोमेऽनुलभ्यमाने यत्किञ्चि-द्विभक्तमानीय पुनः यज्ञः । तत्र गोदानं प्रायश्चित्तम् ।

१२क०। सोमातिरेके आग्रयणादिग्रहभेदे प्रायश्चित्तभेदः । दीक्षितस्य रोगे द्रोणकलशे उग्रानां शुक्रोपिमन्थ्यादीनां मध्ये येन येन स्पृशेत् तेन भिषक् चिकित्सेत् मान्त्रेण । तस्य विधानादि । ज्वरितस्यापि रोगशान्तिं यावत् प्राग्विहितदेश एव वासो नान्यत्र । प्रातःसवने च तस्य मन्त्रविशेषेणाभि-षेकप्रकारः । एवं दीक्षितं सर्वे ऋत्विजः सवनान्तेषु स्पृशे-युः । तत्र यजमानस्य मन्त्रभेदेन स्पर्शः । तत्र मरणे तस्य दाहविशेषं कृत्वा दीक्षितस्यास्थीनि कृष्णाजिने बद्ध्वा स्नातश्चैव पत्न्यपि स्वकर्म पतिकर्म च कुर्य्यात् । पत्नी-मरणेऽप्येवम् इति मतान्तरम् । तस्य भ्रात्रादिकं नेदि-ष्ठिनं दीक्षयित्वा यज्ञस्य समापनम् इति मतान्तरम् । असमाप्ते मरणे एव कर्मसमाप्तिः । उभयपक्षेऽपि । तत्र प्रायश्चित्तविधानादि ।

१३क० । उत्थामरणदिने यजमानमरणे विशेषविधान-प्रायश्चित्तानि । सत्रदीक्षामध्ये मरणेऽपि उक्तसोमादि-कर्मान्तकरणाय दीक्षितस्य तत्कर्मफलं भवति दीक्षि-तस्य भ्रात्रादेरेव प्रकृतक्रतुफलप्राप्तिरिति मतान्तरम् । आग्निना नेदिष्ठिना पुत्रादिना सकोशेष्वग्निषु सकोशेन कृष्णेणानुष्ठितस्य आग्निचित्यादिकक्रतोः नेदिष्ठिनएव फलं प्रकृतक्रतुफलं तु मृतयजमानस्येति समतम् । तत्र उपदीक्षी स्वेष्वग्निषु सर्वनिक्षन्तनावधि द्वादशान्तं सांवि-धातिकं कुर्य्यात् । यद्यनाहिताग्निर्नेदिष्ठी तदा मतिश्या-मेवाग्निषु करणं तत्र च वैश्वानरनिर्वापः प्रायश्चित्तम् ।

एकराजकयोरपर्य्यन्तान्तरेऽनद्यन्तरे समानदेशे यजमानयोः यज्ञकरणे सोमसंसवो भवति । तथाच द्वौ यजमानौ चेत् मिथो वैरिणौ समकाले एकस्मिन् देशे, गिरि-नद्यादिव्यवधानं विना यागार्थं सोमसेककाले सुनुतः तदा समेत सवनात् संसव इत्युच्यते । तत्र सर्व्वं कर्म सत्वरं कार्य्यम् । परयज्ञापेक्षया स्वयज्ञे संस्थाधिक्य-मिच्छन् सत्वरं सर्वं कार्य्यं कुर्य्यात् । तद्विधानादि । भिन्न-देशकालादौ पर्व्वताद्यन्तरे मैत्रौ च न संसव इति भेदः । संसवविषयएव होत्रादिमिश्रमरणकाले कर्त्तव्यकर्मविशेषविधानम् । यथा होता होतुः कार्य्य-मुध्वाऽध्वर्य्योः यजमानेन यजमानस्तोत्रादिकमेव मरण-मिच्छता तत्कर्म कार्य्यम् । अयञ्च यज्ञः एकदिनरथ-गम्यदेशे परस्परदेशे भवति अन्यतरस्य देशाभावे उक्तदेशतो-दूरत्वेन न सम्भवति । उक्तानामेकतरेण तथानुष्ठिते एक-तरस्य मरणे । स्वयज्ञान्तर्गता अध्वर्य्यादयः तदीयकर्म-शेषं अरणपूर्व्वकं कुर्य्युः न वरणान्तरमपेक्षते । सोमादि-दाहे प्रतिनिधिना कर्म समापयेयुः । पशुगोदानं दत्त्वा यज्ञसमापनम् । द्वादश्या रात्रेः प्राक् तथाभूते दोषे पुनर्यज्ञारम्भः उत्तरन्तु पशुगोदानमात्रदक्षिणा प्राय-श्चित्तमिति मतान्तरम् । मन्त्रपाठएव विहितकर्माधिकारात् अनादेशे सर्व्वत्र प्रायश्चित्तहोमे तस्यैवाधिकारः । अमन्त्रके तु अग्निहोत्रादौ यजमानाधिकारः इत्युक्तं प्राक् ।

२६ अ० १क० कण्डिकाः प्रवर्ग्योपयोगिमहावीरसम्भार-कर्मप्रतिपादिकाः । यथा मृत्पिण्डमक्षयं वल्मीकलोष्टं सूकरोत्खातां मृत्तिकां पूतिकालताविशेषं गवेधुकाः (जलचिह्नितमहावनजानि तृणानि फलानि) इत्येतान् सम्भारान् प्राक्संस्थान् उदक्संस्थान् वा कृत्वा कृष्णा-जिनम् वक्ष्यमाणलक्षणम्, अभ्रिम् (कुद्दालम्) उत्तरतोनिद-ध्यात् । तेषामादानविधानादिमन्त्राः । मृद्भाग अति-रिक्तया मायूरादिनिर्माणयोग्या कुम्भकारस्य कृतैव गृह्यते । तथाभूतमृदः कृष्णाजिने उत्तरतोनिधानम् । दक्षिण-तश्च कृष्णाजिने वल्मीकलोष्टस्य । कृष्णाजिनं परिस्तृ पश्चात्त्रिपमाणं समचतुरस्रं भूभागं प्राग्द्वारं कृत्वा तत्र भूसंस्कारान् कृत्वा सिकतोपकिरणे परिश्रिते उक्त-स्थाने कृष्णाजिनस्थान् सम्भारान् निदध्यात् । उक्त-स्थाने जलैरभ्युक्षणे सम्भारैः संसर्गे च मन्त्राः । ततो-ऽध्वर्युः गवेधुका अजापयश्च पृथक् निधाय वल्मीक-लोष्टादिभिः सह मृत्पिण्डं मिश्रयेत् । ततो महा-वीरं कार्य्यम् । तत्स्वरूपं प्रादेशमात्रमूर्द्धमासेचनवन्तं (गर्त्तवन्तम्) मध्यदेशे सङ्कुचितदेशकम् (उलूखलवत् कटिप्रदेशयोग्यम्) । मेखलाया ऊर्द्ध्वं त्र्यङ्गुलम् (प्रादेशमात्रस्योपरिभागे त्र्यङ्गुलम्) परित्यज्य ततो-ऽधस्तात् मेखला कार्य्या । "मखस्य शिर" इति मन्त्रेण निष्पन्नमहावीरस्पर्शनम् । अनेनैव मन्त्रेण तदादान-मपीक्षते । एवमितरौ महावीरौ कुर्य्यात् । अभिमर्श-नानन्तरं सर्वेषां भूमौ निधानम् । शङ्कुमुखाकृतौ पिन्वने (दोहनपात्रे) रौहिणकपाले वक्ष्यमाणपुरोडाशकपाले वर्त्तते सर्व्वसमीपे भूमौ निधाय । उपयामाम् (तदर्थमिष्टां मृदम्) प्रायश्चित्तार्थं निदध्यात् । "मखाय त्वेति मन्त्रेण"

षम् । कृष्णाजिनखण्डनिर्म्मितैर्व्यजनैर्दण्डवद्भिस्त्रिभिः महावीरं परितः प्रकोप्यानङ्गारान् दीपनाय उपवीजयेयुः । तेषु व्यजनेषु एकं प्रतिप्रस्थाता, अपरमाग्नीध्रः, त्रितयमध्वर्युर्वा गृहीत्वा धूनयद्भिः सव्यापसव्याभिः प्रदक्षिणं कार्यम् । तत्र सव्यावृत्तौ व्यजनधूननम् दक्षिणावृत्तौ व्यजनाभ्यन्तः कार्येति भेदः । धूननेन प्रदीप्तत्वात् जाते अर्च्चिषि सुवर्णशतमानं निधायाज्येन स्रुवेण महावीरं सिञ्चेत् । एतच्च सुवर्णशतमानं महावीरादन्यत्र शुभ्रे देशे स्थापयित्वा कार्यम् । अध्वर्यौ महावीरसेके व्यापृततया प्रतिप्रस्थाता लौकिकपिष्टानां व्रीहीणां यवानां रौहिणौ पुरोडाशौ पचेत् । रौहिणपुरोडाशयोरन्यपुरोडाशधर्म्मत्वं तेन कपालयोः संस्कारादि कार्यम् । "ईडे द्यावापृथिवी" इति मन्त्रेण परिधीन् परिधाय रौहिणौ पुरोडाशौ पात्रीस्थानीययोरुपयोर्मयोः रौहिणहवन्योः स्रुचोरुद्वास्य तत्स्थानेव आहवनीयदक्षिणोत्तरयोः एकं दक्षिणतोऽपरमुत्तरतश्च स्थापयेत् । "घर्म्मस्य तन्वौ गायेति" प्रस्तोतृप्रेषणम् । यजमानसहितानामृत्विजां परिक्रमणम् । प्रस्तोतृव्यतिरिक्ताः पञ्चर्त्विजः उपतिष्ठेयुः । छन्दोगानां मते तत्सहिताः षट् परिक्रमेयुः । "गर्भो देवानामिति" मन्त्रं, त्रिस्तूष्णीं परिक्रमेयुः । पत्नी शिरोऽपगताच्छादनं कृत्वा महावीरमीक्षमाणा पत्नी "त्वष्टृमन्त" इत्येतं मन्त्रं वाचयेयुः । प्रातः "अहः केतुनेति" मन्त्रेण दक्षिणं रौहिणं, सायं "रात्रिरिति" मन्त्रेण उत्तरं रौहिणं जुहुयात् । ५ क० । घर्म्मधुग्बन्धनार्था पाशवती रज्जुः तस्याएव पश्चात्पादबन्धनार्थं सन्दानं तदुभयमादाय "इडएहीति" मन्त्रेण उपांशु, नाम्ना च त्रिरुच्चैः गार्हपत्यं गच्छन् तामाह्वयेत् । "धेनुं गायेति" प्रस्तोतृप्रेषणम् । "अदित्यै रास्नासीति" मन्त्रेण समागतां गां पाशेन प्रतिमुच्य (तस्याः रज्जुपाशं शृङ्गयोः प्रोतं कृत्वा स्थूणायां बद्धा) "पूषासीति" मन्त्रेण धेनुं पश्चात्पादयोः सन्दानेन (नियमनेन) बद्धा "घर्म्माय दीष्वेति" वत्सं ततोऽपाकुर्य्यात् । (स्तनपानात् निवर्त्तयेत्) "अश्विभ्यां पिन्वस्वेति" मन्त्रेण पिन्वने (पात्रभेदे) दुहेत् । "आइन्द्रवदिति" मन्त्रेण पिन्वने पतिताविप्रुषोऽभिमन्त्रयेत् । "यस्ते स्तन" इति स्तनाभ्यञ्जनम् । प्रतिप्रस्थाता अजामेवं मयूखे तूष्णीं बद्धा दुहेत् । "पयोगायेति प्रतिप्रस्थातृप्रेषणम् । "उत्तिष्ठ ब्रह्मणस्पते" इति मन्त्रे होत्रोच्यमाने अध्वर्युः गोः समीपादुत्तिष्ठेत् । "उपद्रव पयसेति" मन्त्रे होत्रोच्चार्यमाणे गार्हपत्यं प्रति अध्वर्युगतिः । "गायत्रं छन्दोऽसीति" प्रतिमन्त्रं परीशासावादद्यात् । "वर्षिष्ठयष्टौ गायेति" प्रस्तोतृप्रेषणम् । "द्यावापृथिवीभ्यां त्वा परिगृह्णामीति" मन्त्रेण परीशासाभ्यां महावीरग्रहणम् परीशासाभ्यां महावीरमुत्क्षिप्य कुशवेदेनोपस्पृश्य उपयमन्या अन्तरिक्षेणोपयच्छामीति गृह्णीयात् । उपयमनीं च दुग्धस्थपयसस्य अधस्तात् स्थापयेत् । उपयमन्या गृहीतं महावीरमवनयसासेकेन गाले महावीरे "प्रैतु ब्रह्मणस्पते इति" वाक्ये होत्रोच्यमाने "इन्द्राश्विनेति" गोः पयोऽपनयेत् ।

६ क० आहवनीयं गच्छन् "समुद्राय त्वेति" मन्त्रेण वातनाम जपेत् । उपयमन्यां पतितं पयोऽपरं वा घर्म्मे (दुग्धे) "स्वाहा घर्म्मायेति" आसिञ्चेत् । "स्वाहा घर्म्मः पित्रे" इति जपित्वाऽतिक्रम्याश्राव्य प्रस्तोतारं घर्म्मस्य यजेति प्रेषयेत् । वषट्कारेण "विश्वाआशा इति" मन्त्रेण होमः । "दिवि धा इति" मन्त्रेण महावीरं निरुत्कम्पयेत् । "स्वाहाऽग्नये इति" मन्त्रेण वषट्कारयोजितेन होमः । हुतावशिष्टद्रव्यस्य "अश्विनो घर्म्ममिति" ब्रह्मानुमन्त्रणम् । "अपातामिति" मन्त्रेण घर्म्मस्य यजमानानुमन्त्रणम् । अतिप्रत्वात् पात्रमध्ये सर्व्वतः इतस्तत उच्छ्रलन्तो ये घर्म्मलेशास्तेषाम् "इषे पिन्वस्वेति" मन्त्रेणानुमन्त्रणम् । "घर्म्मादिति" मन्त्रेण ऐशान्यामध्वर्युरुद्गच्छन् "अमेन्यस्मे" इति मन्त्रेण महावीरं सिकतासु निदध्यात् । तच्च परीशासगृहीतमेव स्थापयेत् । नीर्षेर्व्वर्मध्ये शकलं प्रवेश्य तत्स्थंभाज्येन विकङ्कतशकलम् अक्त्वा "स्वाहा पूष्णे शरस" इति मन्त्रेण तदेव जुहुयात् हुत्वा हुत्वा च प्रथमपरिधौ विकङ्कतशकलान् निदध्यात् । एवं त्रिधा हुत्वा चतुर्थमक्तं तच्छकलमीक्षमाणो दक्षिणतो बर्हिषि उपगूहेत् (प्रवेशयेत्) । अक्तं सप्तमं च विकङ्कतशकलम् दक्षिणेवमाणः सर्व्वैषामाक्तं (महावीरस्थघृतलेपेनाक्तम्) मूलाग्रपर्य्यन्तं प्रतिप्रस्थात्रे दद्यात् । प्रतिस्थाता तं शकलमुदञ्चं नियच्छेत् । घर्म्मसक्तस्थित नवनीतादि "स्वाहा सं ज्योतिषा" इति मन्त्रेण परीशासाभ्यामुत्पाद्य उपयमन्यां स्रुच्यासिञ्चति (स्रुक्स्थस्योपरि अधोमुखं करोतीत्यर्थः) ततो द्वितीयरौहिणहोमः । मध्यमपरिधौ निहितानि पञ्च वैकङ्कतशकलानि आहवनीये जुहुयात् । उपयमन्यां

स्थितं घर्मांशुमग्निहोत्रविधानेन हुत्वा "मधु हुतमिति" मन्त्रेण सर्वे ऋत्विगादयो वाजिनवत् भक्षयेयुः । उच्छिष्टखरे प्रक्षाल्य उपयमनीं निदध्यात् । अत्र काले उपस्थितानां पशुयजमानानामाहवनीये प्रहरणम् । अध्वर्युर्होत्रा संसाद्यमानाय महावीरायानुब्रूहीति अनुवाचयेत् । ततो धेनवे तृणोदके दद्यात् । सर्वं पात्रजातमनाशाय आसन्द्यां कुर्यात् । "अनीममिति" मन्त्रेण महावीरमासन्द्यां स्थापयेत् । इतराणि तु पात्राणि तूष्णीमिति भेदः । ततः शान्तिपाठः द्वारोद्घाटनञ्च । खरस्थूणामयूखकृष्णाजिनाभ्र्युपयमासन्दीनां बद्धाच्छादनमोचने । आराडुपकारकत्वात् प्रथमे प्रवर्ग्यचरणे एव आच्छादनमोचने इत्येकपक्षः । अपरन्तु, "प्रतिप्रधानं गुणा वर्त्तेरन्निति" न्यायात् इति पक्षान्तरम् । ७क० । उपसदन्ते प्रवर्ग्योत्सादनप्रकारः । यथा शालामध्यात् दक्षिणेन द्वारेण घर्मसम्बन्धि द्रव्यं निष्काश्य अन्तःपात्यसमीपे आसादितपात्रेभ्यो दक्षिणतएव निदध्यात् । आहवनीये त्रीन् शालाकान् प्रदीप्य प्रदीप्य आग्नीध्रो धारयेत् यजमान वक्षेषु स्तनमात्रनाभिमात्रजानुमात्रप्रमाणेषु तान् प्रदीप्तान् शालाकान् निदध्यात् । अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा तेषां प्रदीप्तानां शालाकानामुपरि "याते घर्म! दिव्या शुगिति" प्रतिमन्त्रं जुहुयात् । एकमेव चतुर्गृहीतं गृहीत्वा त्रिष्वपि शालाकेषु जुहुयात् । तथाच शलाकानां समूहः शालाकः तेन त्रिभिः शलाकाभिः एकः शालाकः । तादृशान् त्रीन् शालाकान् हस्ते गृहीत्वा तेषामेकं शालाकं शालाहार्यं प्रदीप्याग्नीध्रोयजमानस्तनमात्रे आहवनीयस्योपरि धारयेत् । अध्वर्युश्चतुर्गृहीतं तृतीयांशं तस्मिन्शालाके प्रदीप्ते जुहुयात् । ततस्तं शालाकमाहवनीयमध्यएव क्षिपेत् । ततोद्वितीयं शालाकं प्रदीप्याग्नीध्रो यजमानस्य नाभिदघ्ने आहवनीयस्योपरि धारयेत् अध्वर्युस्तथैव जुहुयात् । तृतीयन्तु अग्नीधा प्रदीप्य यजमानजानुमात्रे धृतमध्वर्युराहवनीये निक्षिप्य तत उपविश्य सर्वं चतुर्गृहीतं शेषं जुहुयात् । अत्र उपविश्य स्थितैः पूर्वयोः तिष्ठता होमौ कार्यौ । ततोऽध्वर्युः पुरस्तात् पत्नीमपि तया "नमस्त इति" मन्त्रेण शालाया निष्क्रमेत् । अस्मिन्नवसरे अध्वर्युणा प्रस्तोतुः सामगानार्थं प्रेषणम् । अयश्चयमत् देवगतिः निधनञ्च । सामगानात् परं सर्वे उत्सादनदेशं गच्छेयुः । (उत्सादनदेशश्च महावीरादि पात्रादीनां परित्यागदेशः "परिष्यन्दोवा अन्योवा देशः" इति शत० ब्रा० १४,३,१,१४, विहितदेशः) । तत्र अग्निचित्यारहिते यज्ञे उत्तरवेदिं प्रति सर्वे गच्छेयुः । अग्निचित्यायुक्ते यज्ञे तु परिष्यन्दं (जलपरिवृतं द्वीपम्) (निर्जनस्थलं वा) प्रत्येव गमनम् । तत्रोत्सादनदेशगम् उत्तरवेदिं वा "अविकदिति" त्रिः परिषिच्य उत्तरकार्यं कार्यम् । अध्वर्युरुत्तरवेदौ उत्सादनपक्षे प्रथमं महावीरं नाभिस्पृष्टं "चतुःस्रक्तिरिति" निदध्यात् । इतरौ महावीरौ प्राक्संस्थौ प्राच्यां मन्त्रावृत्त्या निदध्यात् । उपयमाम् (महावीरघटनावसरे परिशेषितां मृदम्) तत्रैव तूष्णीं निदध्यात् । महावीरादिकमभितः परीशासौ निदध्यात् । अवकटे (नीचे भाण्डे) रौहिणहवन्यौ स्रुचौ निदध्यात् । रौहिणहवन्योरुत्तरतः अभ्रिनिधानम् । तयोरेव दक्षिणतः आसन्दीम्, अभ्रेरुत्तरतः सर्व्वधवित्राणि च निदध्यात् । तथा च दक्षिणतः, पश्चात्, उत्तरतश्चैकैकं धवित्रं निदध्यात् । परिषीनपि निहितद्रव्याण्यभितो निदध्यात् । निहितपात्रगणस्य पश्चात् उपयमनीं स्रुचं प्रागग्रां निधाय रज्जुसंदानं वेदञ्च तन्मध्ये निदध्यात् । पिन्वने (दोहनपात्रे) उपयमन्युत्तरस्य पश्चात् अभितोदण्डं निदध्यात् । पिन्वनयोः पश्चात् दक्षिणतः स्थूणाम्, उत्तरतो मयूखं, निदध्यात् स्थूणामयूखयोः पश्चात् रौहिणकपाले निदध्यात् । तयोरेव पश्चात् धृष्टी ( उपवेषौ ) निदध्यात् । घर्मोपयुक्तं स्रुवमौदुम्बरादि आसादितपात्राणां मध्ये निदध्यात् । सर्वपात्राणामुत्तरतः प्रचरणीयौ खरौ निदध्यात् । मार्जालीयस्थानस्य दक्षिणतो वेदेर्बहिर्भागे उच्छिष्टखरं निदध्यात् । एतानि सप्त पात्राणि (महावीरत्रयं द्वे पिन्वने उपयमनी स्रुवञ्च) एतानि "घर्मैतत्ते" इति प्रतिमन्त्रं पयसा पूरयेत् । एतमिद्धं पयःशेषं पूर्व्वमहः चेत् सान्निके सोमे प्रागेव सकलं देयमिति विधानात् । घर्मोहारेष्टाहोतृीय सामगानार्थं प्रस्तोतुरध्वर्युणा प्रेषणम् । सपत्नीकाः सर्वे "सुमित्रिया न इति" मन्त्रेण आत्मानं मार्जयेयुः । ऐशानीं प्रति "उद्वयमिति" मन्त्रेण यजमान उपतिष्ठेत् । प्रादेशमात्रामेकां समिधं हस्तेन "अनपेक्षमेधोऽसीति" मन्त्रेणादाय "समिदसीति" मन्त्रेण आहवनीये दद्यात् । गार्हपत्ये तु तादृशीं समिधं तूष्णीं दद्यात् । यजमानः रजतसुवर्णशतमाने ब्रह्मणे दद्यात् । यजमानव्रतदुघां रूपां घर्मदुघां यजमानः अध्वर्यवे दद्यात् । पत्नीव्रतदुघां गाऽवहाते दद्यात् । अजामग्नीधे दद्यात् । घर्मस्य महा

वीरस्य भेदने यथाकालं प्रायश्चित्तं कुर्यात् । तत्प्रायश्चित्तप्रकारादि । अथगन्तेन द्वितीयतृतीययोर्मध्ये द्वयेनान्यतरेण वा प्रवर्ग्यं चरेत् । तत्र पूर्णाहुतिहोमप्रकारः । संभ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता । निष्टिताभिमर्शनादारभ्य अजापयोऽवमेचनान्तकाले महावीरभेदने प्रायश्चित्तभेदः । तत्र प्रथमदिने भेदने प्रा० सविता देवता । द्वितीयेऽहनि भेदे अग्निर्देवता तृतीयदिने भेदने वायुर्देवता ।

अथ प्रवर्ग्याधिकारिणः । अग्निष्टोमस्याद्यसंस्थातिरात्रस्य प्रथमे प्रयोगे न प्रवर्ग्यचरणम् इत्येकः पक्षः । विकल्पेन तत्रापि प्रवर्ग्यचरणमिति शाखान्तरम् । समवर्ग्ये यज्ञे दधिघर्मसम्बन्धिनीतिकर्त्तव्यता । अपरिज्ञायामग्निहोत्रहवन्यां दधिघर्मपात्रं कुर्यात् । तस्य यथाकथञ्चित् स्यालीहस्तेनैव स्रुचि निनयेत् । प्रचरणाभिचारणे अग्न्यत्र न । हुतशेषस्य "मयि त्वदिति" मन्त्रेण भक्षणम् । तस्य महाव्रतीयेऽह्नि कर्त्तव्यम् । दधिभक्षानन्तरं चात्वाले मार्ज्जनम् । प्रवर्ग्यचरणस्यादौ अन्ते च शान्तिकाध्यायपाठः । (शान्तिकाध्यायश्च अयं शाचमित्याद्यध्यायः) । शान्तिकरणद्वयमध्ये द्वारपिधानोत्तरकाले आदिमम् । पात्राणामासन्द्यां निधानानन्तरमन्तिमम् इति भेदः ।

कातीयश्रौतसूत्रप्रतिपाद्यविषयाश्च विस्तरभयान्नात्रोक्तास्तत एवाप्येयाः । कात्यायनसर्व्वानुक्रमणिकाप्रतिपाद्यविषयाश्च सर्व्वानुक्रमणिकाशब्दे वक्ष्यन्ते ।

**कात्यायनी** स्त्री कतस्य गोत्रापत्यं स्त्री गर्गा० यञ् लोहितकतन्ता०ष्फः षित्वात् ङीष् । १ कतगोत्रापत्यस्त्रियाम् । पत्न्यां ङीष् । २ कात्यायनर्षेः पत्न्याम् ३ तत्तुल्यकषायादिवस्त्रधारिण्यामर्द्धवृद्धायां विधवायां स्त्रियां ४कल्पभेदे कतगोत्रोत्पन्नायां दुर्गायां ५ याज्ञवल्क्यर्षिपत्नीभेदे च । "याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः मैत्रेयी कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी" वृ० उ० । [ यके शिवपत्नीति तन्त्रभेदे ।

**कात्यायनीतन्त्र** न० ६ त० । कात्यायनीपूजामन्त्रादिविधायके तन्त्रभेदे ।

**कात्यायनीपुत्र** पु० ६ त० । कार्त्तिकेये ।

**काथक्य** पु० स्त्री कथकस्य गोत्रापत्यं गर्गा० यञ् । कथकर्षेर्गोत्रापत्ये यूनि तु यञन्तत्वात् फक् । काथक्यायन तदीय युवगोत्रापत्ये । स्त्रियां लोहितकतान्तादि० ष्फः षित्वात् ङीष् । काथक्यायनी तद्गोत्रापत्यस्त्रियाम् ।

**काथञ्चित्क** न० कथञ्चित्+विनयादि० स्वार्थे ठक् तान्तत्वात् ठस्य कः । कथञ्चिदित्यर्थे ।

**काथिक** त्रि० कथायां साधु कथादि० ठक् । कथारचनासमर्थे

**कादम्ब** पु०स्त्री की०कदि-णिच्-अम्बच् । (वालिहाँस) १हंसभेदे स्त्रियां जातित्वेऽपि संयोगोपधत्वान्न ङीष् किन्तु टाप् । तस्य च नीलवर्णत्वम् "क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः" सितासितगङ्गायमुनासंगमवर्णने रघुः । तद्व्या० "कादम्बसंसर्गवती नीलहंससंसृष्टा" मल्लि० । सुश्रुते हंसप्रकारेत्युपक्रमे कादम्बस्य प्लवत्वं संघचारित्वञ्चोक्तं "रक्तपित्तहरा: शीताः स्निग्धा वृष्या मरुज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः" इति तेषां मांसगुणा उक्ताः । २इक्षौ पु० विश्वः । ३वाणे मेदि० । "कादम्बानामिकपातैरसीव्यत्" माघ: । कदम्बे समूहे भवः अण् । ५ समूहभवे त्रि० । कदम्बस्येदम् अण् । ६कदम्बसम्बन्धिनि त्रि० "कादम्बमर्द्धोद्गतकेसरञ्च" रघुः । "कादम्बं नीपकुसुम"मिति मल्लि० । वस्तुतः कदम्बशब्दस्य पुष्पपरत्वे कदम्बमित्येव ह्रस्वपाठः स्यात् दीर्घपाठे तु कदम्बानां कुसुमानां समूह इत्यर्थेऽण् । इति तस्य कदम्बसमूहपरतेति बोध्यम् । कदम्ब एव स्वार्थेऽण् । ७कदम्बवृक्षे पु० "वेत्रकादम्बवञ्जकरञ्जमङ्गाकरञ्जाः षड्न पुष्पविषाणि" स्थावरविषकीर्त्तने सुश्रु० । स्वार्थे कन् वाणे हारा० ।

**कादम्बर** न०कादम्बं वाति प्रशस्तत्वेन वा-क तस्य रः । १ऐक्षवे गुडादौ, तस्य २विकारे मद्ये च । "निषेव्य मधु माधवाः सरसमत्र कादम्बरम्" माघः । तद्व्याख्यायां मल्लिनाथेनोक्ता व्युत्पत्तिरुक्ता । कादम्बं कदम्बोद्भवं रसं राति रा-क । तत्त्वयुक्ते ३दधिसरे पु० मेदि० ।

**कादम्बरी** स्त्री कुत्सितं मलिनमम्बरं यस्य कोः कदादेशः कदम्बरो लोहाम्बरो बलभद्रस्तस्य प्रिया अण् । हलिप्रियायाम्, मदिरायाम् । अस्यास्तद्भक्तिर्बलभद्रप्रियता च हरि० ९८ अ० दर्शिता यथा "अथ सङ्कर्षणः श्रीमान् विना कृष्णेन वीर्य्यवान् । चचार तस्य शिखरे नगस्य नगसन्निभः । प्रफुल्लस्य कदम्बस्य प्रच्छाये निषसाद ह । वायुना मदगन्धेन वीज्यमानः सुखेन वै । तस्य तेनानिलौघेन वीज्यमानस्य तत्र वै । मदसंस्पर्शजो गन्धः संस्पृशन् घ्राणमागतः । तथा चैनं विवेशाशु वारुणीप्रभवा तदा । शुशोष च मुखं तस्य मत्तस्येवापरेऽहनि । स्मारितः स पुरावृत्तमस्तमागतं

स्वान्तं कान्तं मनोज्ञं वा रसम् ऋच्छति ऋ-अण् उप० स०। (काजलिया) १इक्षुभेदे भावप्र०। तल तद्गुणाद्युक्तम् “कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो बृंहणः सरः। २कोविदारवृक्षे ३वंशे च राजनि०। कस्य सुखस्यान्तमन्तोऽत्र अत–आधारे घञ्। ४वने०। दुर्गमे पथि ५महारण्ये च पु० न० अमर० ६छिद्रे मेदि०। स्वार्थे कन् इक्षुभेदे अमरः।

**कान्तारपथिक** त्रि० कान्तारपथेनाहृतम् ठञ्। कान्तारपथेनाहृते।

**कान्तारी** स्त्री कान्तार+गौ० ङीष्। कान्तारेक्षौ राजनि०।

**कान्ति** स्त्री कम–कामे कन–दीप्तौ वा भावे क्तिन्। १दीप्तौ २शोभायाम् ३इच्छायाम् ४स्त्रीणां स्वस्वारजे सौन्दर्यं गुणभेदे च। कान्तौ कारणं च सुश्रुते दर्शितं यथा “तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं रसादूर्ध्वं स्त्रीणां विशेषतो भवति तेन मार्दवसौकुमार्य्यमृद्वल्परोमतातुष्टोत्साहदृष्टिस्थितिपक्तिकान्ति दीप्तयो भवन्ति”। एतस्य तैजसत्वेन कान्तिदत्वम् यथोक्तं तत्रैव “एतत्तु” इत्युपक्रम्य “स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरम्”। शोभाकान्तिदीप्तिद्युतीनां भेदस्तु सा०द० उक्तः “रूपयौवनलालित्यं भोगाद्यैरङ्गभूषणम्। शोभा प्रोक्ता, सैव कान्तिर्मन्मथाप्यायिता द्युतिः। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते”। इति भेदेन लक्षयित्वा मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते इति व्याख्यातम्। तेषां च नायिकागततेव नायकगततापि। चन्द्रादौ तु शोभादीप्तिकान्तिद्युतीनामभेद एव। “कला च सा कान्तिमती कलावतः” कुमा०। “बभ्रा इवाध्वंसितवर्णकान्तेः” माघः। चन्द्रकलासु मध्ये ७कलाभेदे। “शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना” शा०ति०। कलाशब्दे विवृतिः। ८लक्ष्म्या अनुचरदेवीभेदे “एवमुक्ता तु सा देवी लक्ष्मीर्दैत्यवरं बलिम्। प्रविष्टा” इत्युपक्रमे “श्रिदाश्च देव्यः प्रवरा ह्रीः कीर्त्तिर्द्युतिरेव च” इत्याद्युक्त्वा “धृतिः प्रीतिरिड़ा कान्तिः” इत्यादिकमभिधाय “उपतस्थुर्महाभागं बलिमिन्द्रं महारथम्” इत्युक्तम् हरि० २५६ अ०। ९शशिनः प्रियाभेदे च “तिस्रस्त्विदग्धनार्य्यस्तम्” इत्युपक्रमे “मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया” हरि० ८८ अ०। १०दुर्गायां “स्मृतिः सिद्धिरिति ख्याता श्रिया संश्रयणाच्च या। लक्ष्मीर्या ललना वापि कामात् सा कान्तिरुच्यते” देवीपु० ४५अ०। ११कामशक्तिभेदे। “तथा कान्तिः कनकशाठी कृशोदरी” शा० ति० राघवभट्टः। कामशक्तिशब्दे विवृतिः।

**कान्तिद** न० कान्तिं ददाति दा–क। १पित्ते धातौ शब्द च० तस्य तैजसत्वात् तथात्वम्। तैजसत्व यथा श्यामिकरत्वं तथा कान्तिशब्दे उदाहृतसुश्रुतवाक्ये दर्शितम्। २घृते च। ३शोभादायकमात्रे त्रि० कान्तिकरादयोऽप्यत्र। ४सोमराज्यां स्त्री राजनि०।

**कान्तिदायक** न० कान्तिं ददाति दा-ण्वुल्। कालीयके गन्धद्रव्यभेदे जटाधरः। तस्य सेवनेन कान्तिपोषणात् तस्य तथात्वम्। २कान्तिदातरि त्रि०।

**कान्तिनगरी** स्त्री काञ्चिनगर्य्यां काशी० मोक्षपुरीभेदकाञ्चीनगरीवर्णने कान्तिपुरीति पाठान्तरम् काञ्चीशब्दे च तद्वाक्यमुक्तम्।

**कान्तिभृत्** त्रि० कान्तिं बिभर्त्ति भृ-क्विप्। १कान्तिधारके २चन्द्रे पु० तस्य कान्तिनामककलाधारित्वात् विशिष्टकान्तिधारित्वात् कान्तिनामदेवीभेदपतित्वाच्च तथात्वम्। कान्तिशब्दे च कान्तिशब्दस्य कलाचन्द्रपत्नीवाचकत्वं दर्शितम्।

**कान्तिमत्** कान्तिरस्त्यस्य मतुप्। १कान्तियुक्ते। “उपमानमभूत् विलासिनां करणं यत्तव कान्तिमत्तया” कुमा०। “शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम्” मेघदू०। स्त्रियां ङीप् “कला च सा कान्तिमती कलावतः” कुमा०। २ अप्सरोभेदे स्त्री “वसुमती कान्तिमती लीलावत्युत्पलावती” काशी० अप्सरोनामकथने। ३चन्द्रे पु० कान्तिनामकलावत्त्वात् तस्य तथात्वम्। ४कामदेवभेदे राघवभ०।

**कान्यक** त्रि० “वर्णुसमीपस्था कन्था ततो जातादौ वर्णौ वुक्” पा० वुक्। वर्णुनदसमीपस्थकन्थाजातादौ। “वर्णाश्च जातं हिमवत्सु कान्यकम्” सि०कौ०

**कान्यक्य** पु० स्त्री कन्यकर्षिभेदस्य गोत्रापत्यं गर्गा० यञ्। कन्यकर्षिगोत्रापत्ये। यून्यपत्ये यञन्तत्वात् फक्। कान्यक्यायनः बहुषु तस्य लुक्। कन्यकाः। स्त्रियान्तु लोहिता० षफः षित्वात् ङीष्। कान्यक्यायनी।

**कान्यिक** त्रि० कन्यायां जातादि ठक्। कन्याभवे।

**कान्द** त्रि० कन्दस्येदं तत्र भवो वा अण्। १ तत्सम्बन्धिनि २कन्दभवे विषादौ च। ततः अश्मादि० चतुरर्थ्यां र। कान्दर तन्निर्वृत्तादौ त्रि०।

**कान्दर्प** पुंस्त्री कन्दर्पस्यापत्यं बिदादौ किन्दर्भस्यत्र कन्दर्पेति पाठान्तरे अञ्। कन्दर्पापत्ये तस्येदमण्। २ कन्दर्पसम्बन्धिनि त्रि०।

कान्दर्पिक न॰ कन्दर्पस्य वृद्धिः प्रयोजनमस्य ठक् । कन्दर्पवृद्धिसाधने व॰म॰ उक्ते विधानभेदे । तद्विधानं च तत्र कान्दर्पिकनामकषट्सप्ततितमेऽध्याये उक्तं यथा । “रक्तेऽधिके स्त्री, पुरुषस्तु शुक्रे, नपुंसकं शोणितशुक्रसाम्ये । यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि । हृद्यैः पुष्पफलैर्नानारक्तवर्णैः सोत्पलं मधु मदालसा प्रिया । वल्लकी चारकथा रहः स्रजो वर्ग एष मदनस्य वागुरा । माक्षीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गघृतानि योऽद्यात् । सैकानि विंशतिरहानि जरान्वितोऽपि सोऽशीतिकोऽपि रमयत्यबलां युवेव । क्षीरं घृतं यः कपिकच्छुमूलैः पिबेत् क्षयं स्त्रीषु न सोऽभ्युपैति । माषान् पयःसर्पिषि वा विपक्वान् षट्पलमात्रांश्च पयोऽनुपानान् । विदारिकायाः स्वरसेन चूर्णं सुबहुशो भावितशोषितं च । घृतेन दुग्धेन सशर्करेण पिबेत्स यस्य प्रमदाः प्रभूताः । धात्रीफलानां स्वरसेन चूर्णं सुभावितं क्षौद्रसिताज्ययुक्तम् । लीढ्वानुपायाच्च पयो ऽग्निशक्त्या कामं निकामं पुरुषो निषेवेत् । क्षीरेण यस्ताम्रयुजा घृतेन समुद्धृत्य कामो बहुशस्तिलान् यः । सुशोषितानत्ति पिबेत्पयश्च तस्मायतः किं चटकः करोति । माषस्वपसहितेन सर्पिषा षष्टिकौदनमदन्ति ये नराः । क्षीरमप्यनुपिबन्ति तासु ते शर्वरीषु मदनेन शेरते । तिलाश्वगन्धाकपिकच्छुमूलैर्विदारिकाषष्टिकपिष्टयोगः । आजेन पिष्टा पयसा घृतेन पक्वा भवेच्छष्कुलिकाऽतिवृष्या । क्षीरेण वा गोक्षुरकोपयोगं विदारिकाकन्दकभक्षणं वा । कुर्वन्न सीदेद्यदि जीर्यतेऽस्य मन्दाग्निता चेदिदमत्र चूर्णम् । साजमोदवचया हरीतकी शृङ्गवेरसहिता च पिप्पली । मद्यतक्रतरलोष्णवारिभिश्चूर्णपानमुदराग्निदीपनम् । अत्यन्ततिक्तलवणानि कटूनि यानि सक्षारशाकबहुलानि च भोजनानि । दृक्शुक्रवीर्यरहितः स करोत्यनेकान् व्याधीन् जरत्विव सुशाप्यबलामवाप्य” । भावप्र॰ तदुपायविधानाद्युक्तं यथा । “अथ वाजीकरणाधिकारः । तत्र वाजीकरणस्य लक्षणमाह । यद्द्रव्यं पुरुषं कुर्याद्वाजीव सुरतक्षमम् । तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः । अत्र प्रसङ्गात् क्लैव्यस्य लक्षणं संख्यां निदानं चाह । क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते । तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते । तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पततो नृणां क्लैव्यं समुपजायते । द्वेष्य-

स्त्रीसंप्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् । तैस्तैर्भावैः—भयशोकक्रोधादिभिः,—अहृद्यैः—हृदयाहितैः—दुःखत्वात् क्षते पीड़िते अस्वस्थीकृते इति यावत् । ध्वजः—शिश्नः । पतति नम्रत्वमेति संप्रयोगोमैथुनम् । “कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः । पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात्प्रजायते । कटुकादिनातिमात्रेण प्रवृद्धेन पित्तेन शुक्रस्य दग्धत्वात् क्लैव्यं भवति पित्तजमिति द्वितीयम् । अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकः । शुक्रक्षयेण तृतीयम् । ‘महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत् । वीर्यवाहिशिराच्छेदान्मेहनानुन्नतिर्भवेत् । बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः । षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् । बलिनः पुरुषस्य क्षुब्धमनसः कामात् चलतः मनसो, ब्रह्मचर्यम् अमैथुनं तस्मान्निरोधात् शुक्रस्य, क्लैव्यं भवति । जन्मप्रभृति यत्क्लैव्यं सहजं तद्धि सप्तमम् । असाध्यं क्लैव्यमाह । असाध्यं सहजं क्लैव्यं मर्मच्छेदाच्च यद्भवेत् । मर्मच्छेदाद्वीर्यवाहिशिराच्छेदात् अथ क्लैव्यस्य चिकित्सा । क्लैव्यानामिह साध्यानां कार्यो हेतुविपर्ययः । मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम् । अथ क्लैव्यस्य चिकित्सायां वाजीकरणविधिमाह । नरो वाजीकरान् योगान् सम्यक् शुद्धो निरामयः । सप्तत्यन्तं प्रकुर्वीत वर्षादूर्द्धन्तु षोड़शात् । न च वै षोड़शादर्वाक् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति । अयक्ष्मापदंशाद्या रोगाश्चातोऽत्र दुर्ज्जयाः । अकालमरणञ्च स्याद्भजते स्त्रियमन्यथा । विलासिनामर्थवतां रूपयौवनशालिनाम् । नराणां बहुभार्य्याणां विधिर्वाजीकरो हितः । स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् । योषित्प्रसङ्गात् क्षीणानां क्लीबानामल्परेतसाम् । हिता वाजीकरा योगाः प्रीणयन्त्यबलाः सदा । एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया । वाजीकरणान्याह । भोजनानि विचित्राणि पानानि विविधानि च । गीतं श्रोत्राभिरामाश्च वाचः स्पर्शसुखास्तथा । यामिनी चान्द्रतिलका कामिनी नवयौवना । गीतं श्रोत्रमनोज्ञञ्च ताम्बूलं मदिराः स्रजः । गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च । मनसश्चाप्रतीघातं वाजी कुर्व्वन्ति मानवम् । माक्षीकधातुमधुपारदलोहचूर्णम् पथ्याशिलाजतुविडङ्गघृतानि लिह्यात् । एकान्नविंश-

तद्दिनानि मदार्दितोऽपि कार्श्यातिक्षोऽपि रमयेत्प्रमदां शुकेव"। तन्नौषधभेदास्तु तत्र एवावसेयाः।

**कान्दव** न० कन्दौ संस्कृतं भक्ष्यम् अण्। कन्दुसंस्कृते भक्ष्ये

**कान्दविक** त्रि० कान्दवं पण्यमस्य ठक्। कन्दुसंस्कृतभक्ष्यद्रव्यविक्रेतरि मिष्टान्नपण्यके।

**कान्दिगभूत** त्रि० कां दिशं यामीत्याकुलतां भूतः प्राप्तः भू—प्राप्तौ कर्त्तरि क्त २त०पृषो०। कां दिशं यामीत्याकुलत्वं प्राप्ते। "स कथञ्चिद्भयात्तस्मादितस्ततो ब्राह्मणस्तदा। कान्दिगभूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम्" भा०शा०प० १६८अ०। "कां दिशं यामीत्याकुलः कान्दिग्भूतः" नीलक०। "कान्दिग्भूतं बिहगानां विसंज्ञं दुर्योधनो द्रक्ष्यति सर्व्वसैन्यम्" भा० उद्यो० ४७अ०।

**कान्दिशीक** त्रि० कां दिशं यामीत्याह 'तदाहेति माशब्दादिभ्यः" उपसंख्यानात् ठक् पृषो० मयू० आकृतिगणत्वात् समासः। कदि-वैक्लव्ये भावे इन् कन्दिः वैक्लव्यम्। शीक-सेचने चरणार्थत्वादश्रुपातार्थकता भावे घञ् कन्दिशीकः अश्रुपातश्च विद्येते अस्य वा० अण् रायमुकुटः। भयद्रुते पलायिते अमरः। "बहूनां प्रत्ययोजातः कान्दिशीकमभूज्जगत्" काशी०।

**कान्यकुब्ज** पु० देशभेदे कन्यकुब्जशब्दे विवरणम्। "कान्यकुब्जे महानासीत् पार्थिवोभरतर्षभ!। गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः" भा०व० १७४अ०।

**कान्यजा** स्त्री कात् जलादन्यस्मिन् जायते जन—ड। नखी नामगन्धद्रव्ये शब्दच०।

**कापटव** पुंस्त्री कापटोर्गोत्रापत्यम् अण्। १कापटुगोत्रापत्ये स्त्रियां तु गोत्रप्रत्ययान्तत्वेन जातित्वेऽपि न ङीष्। किन्तु शार्ङ्गरवादि० ङीन् स्वरे भेदः। कापटवी। गोत्रान्तत्वात् तत्र आगतेऽर्थे वुञ्। कापटवक तत आगते। कुत्सितः पटुः कापटुस्तस्य भावः कर्म वा अण्। कापटव २ निन्दितपटुतायां न०।

**कापटिक** त्रि० कपटेन चरति ठक्। १कपटव्यवहारिणि "कृत्स्नं चाष्टविधं कर्म पञ्चवर्गञ्च तत्त्वतः" इति ७।१५४ श्लोकव्या० "कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गं पञ्चवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत् तत्र परमर्म्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात् कापटिकस्तं वृत्त्यर्थिनमर्थमानाभ्यामुपगृह्य राजा ब्रूयात् यस्य दुष्टं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति" कुल्लू०। उक्ते राज्ञः पञ्चवर्गान्तर्गते २छात्ररूपे चारभेदे पु०।

**कापथ** पु० कुत्सितः पन्थाः अच् समा० कादेशः। १ निन्दितवर्त्मनि अमरः। "आस्थाय कापथं दुष्टं विषमं बहुकण्टकम्" रामा०। दुष्टपथवर्त्तिनि २ दानवभेदे च पु०। "शरभः शलभश्चैव कुपथः कापथः क्रथः" इति हरि० २६२अ० दानवनामकथने। ३ उशीरे न० मेदि०। कापथजातत्वात्तस्य तथात्वम्।

**कापा** स्त्री कम् सुखमाप्यतेऽनया आप—करणे घञ् इत०। प्रातःप्रबोधकवन्दिवाक्याम्। "प्रातर्जरेदे जरथेव कापया" ऋ० १०।४०।३। प्रातःप्रबोधकस्य वन्दिनो वाणी कापा तया" भा०।

**कापाटिक** न० कपाटिकैव शर्करा० स्वार्थे अण् स्वार्थिकस्यापि क्वचिल्लिङ्गातिक्रमोक्तेः क्लीवता। चुरकपाटे।

**कापाल** न० कपालमेव तस्येदं वा अण्। १ कपालरूपाकारे कुष्ठभेदे कपालशब्दे दृश्य०। २ कपालसम्बन्धिनि तन्निर्मिते भूषणादौ च। "त्रिशूलमस्त्रं घोरञ्च कापालमथ कङ्कणम्" विश्वा०। (कालियाखड़ा) ३ कर्कटाह्वे पु० रत्नमा०। गौरा० ङीष्। ४ विडङ्गायां स्त्री राजनि०।

**कापालिक** त्रि० कपालेन स्वकपालेन चरति अभ्यवहारादिकं करोति ठक्। १ शैवाचारभेदयुक्ते सिद्धान्तिभेदे तेषामाचारश्च। "नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः"। "पश्यामि योगाञ्जनशुद्धदर्शनो जगन्मिथोभिन्नमभिन्नमीश्वरात्"। तस्य धर्मभेदः प्रबोधच० दर्शितो यथा। "मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा। सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैरर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः" इति। "अथ तीर्थकराग्रगोः प्रतस्थे बहुकापालिकजालकं विजेतुम्" शङ्करदिग्विजयः। २ अन्त्यजजातिभेदे (कपालि) पु० स्त्री०। स्त्रियां ङीष्। अन्त्यजशब्दे कपालिन्शब्दे च विवृतिः। कपालिकैव शर्करा० अण्। ३ चुरकपाटे न०।

**कापालिन्** पु० कापालं कपालं ब्रह्मकपालं व्रते धार्य्यत्वेनास्त्यस्य इनि। ब्रह्मशिरोहरणजपापापनुत्तये व्रतार्थं ब्रह्मकपालधारिणि १शिवे। "अक्षैकपादः कापाली त्रिशङ्कुरजितः शिवः" भा०अनु० १७अ० शिवसहस्रनामकथने। वासुदेवस्य २पुत्रभेदे। "कौशिक्यां सुतसोमायां यौधिष्ठिर्यां युधिष्ठिर!। कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ" हरि० १६२अ०। (कपालि) ३जातिसङ्करे अन्त्यजभेदे पुंस्त्री। स्त्रियां ङीप्। "नटी कापालिनी वेश्या कुलटा नापि-

वादिचिकीर्षायां तत्प्रकारकज्ञानस्य हेतुत्वेऽन्यथाख्यात्यापत्तेः। तथा च दुःखादिविसंवादिचिकीर्षायामतिव्याप्तिवारणाय तद्विशेषणस्यावश्यकत्वात् इत्याहुः। पाकमिति पाकं कृत्वा साधयामीत्याकारिकायां तस्यां तदनुभवात् कृतिसाध्यत्वप्रकारकत्वस्यानुभवसिद्धत्वादित्यर्थः कृतिसाध्यत्वेन पाकं भक्षामीति तदनुव्यवसायसत्त्वादिति भावः। इच्छाया इत्यादि। इच्छायाः स्वप्रकारकसंवादीच्छायाः तत्प्रकारकसंवादीच्छायास्तत्प्रकारकधीसाध्यत्वनियमादिति फलितार्थः। गुरुनये रजतादिप्रकारकविसंवादीच्छायां रजतादिप्रकारकज्ञानाजन्यायां व्यभिचारवारणाय संवादित्वोपादानं कूटलिङ्गस्थलेऽप्यनायत्या तदिच्छाया विषयान्तरविषयकत्वकल्पनेन विसंवादः कल्प्यते। न चैवं संवादिचिकीर्षायां तज्जन्यप्रवृत्तौ च कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वेऽपि चिकीर्षासामान्ये च कृतिसाध्यत्वज्ञानस्य न हेतुत्वसिद्धिरिति वाच्यं संवादिचिकीर्षादौ कृतिसाध्यताप्रकारकज्ञानस्य हेतुत्वे सिद्धे यद्विशेषयोरिति (यद्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोरपीति) न्यायात् चिकीर्षादिमात्रं प्रत्येव कृतिसाध्यताविषयकज्ञानस्य हेतुत्वसिद्धेरिति भावः एवमग्रेऽपि। केचित्तु या यत्प्रकारिकेच्छा सा तद्विषयकज्ञानसाध्येति नियमः न तु प्रकारतापर्य्यन्तप्रवेशः स्वेऽपि स्वप्रकारकेच्छायाः स्वविषयकेत्यर्थः एवञ्च रजतादिविसंवादीच्छायां न व्यभिचारः तत्र तद्वत्ते इच्छाविशेष्यविशेषणकरजतप्रकारकज्ञानस्याहेतुत्वेऽपि ज्ञानत्वेन रजतोपस्थितेरवश्यं हेतुत्वात्। न च तद्वत्ते विसंवादीच्छायामुपस्थितेष्टतावच्छेदकासंसर्गावच्छिन्नैव हेतुतया रजतज्ञानं तत्र कारणतावच्छेदकमेव न तु कारणमिति व्यभिचारो दुर्वार एवेति वाच्यं कारणकारणतावच्छेदकसाधारणप्रयोज्यत्वघटकस्य साध्यत्वस्य नियमघटकत्वात्। नचैवं प्रकृतेऽपि कृतिसाध्यताज्ञानस्यैककालावच्छिन्नैककालवृत्तित्वसम्बन्धेन इष्टसाधनताज्ञाननिष्ठकारणतावच्छेदकत्वमेवायात् कुतः कारणत्वम्? इति वाच्यं स्वप्रमाणकमेव तद्वत्ते इष्टसाधनत्वज्ञानस्येच्छाविरोधितया इष्टसाधनताज्ञानस्य चिकीर्षाहेतुत्वासम्भवात् परिशेषेण जन्यतारूपस्यैव कृतिसाध्यताज्ञानप्रयोज्यत्वस्य चिकीर्षायां सिद्धेः। नचेष्टसाधनताज्ञानस्याजनकत्वेऽपि बलवदनिष्टाननुबन्धित्वज्ञाननिष्ठजनकतावच्छेदकत्वमेवायातमिति वाच्यं बलवद्द्वेषस्येच्छाविरोधितया तज्ज्ञानस्यापि चिकीर्षाहेतुत्वासिद्धेः।

वस्तुतस्तु विशेष्यविशेषणभावे विनिगमकाभावादुपस्थितेष्टतावच्छेदकासंसर्गावच्छिन्नप्रतियोगितासंसर्गकेष्टतावच्छेदकोपस्थितेरपि विसंवादीच्छाजनकतया जन्यत्वरूपसाध्यत्वमेव नियमघटकमिति न कोऽपि दोष इति प्राहुः। अत एवेति चिकीर्षायाः स्वकृतिसाध्यताज्ञानसाध्यत्वादेवेत्यर्थः। स्वकृतिसाध्य- स्वकृतिसाध्यत्वेन ज्ञाते। इदञ्चापाततः वस्तुतो लाघवात्पाको मत्कृतिमान् भवत्वित्याकारिका साध्यतासंसर्गेण कृतिप्रकारिका इच्छैव व्यापारो न तु कृतिसाध्यत्वप्रकारिका गौरवादतएव ज्ञानमपि साध्यतासंसर्गेण कृतिप्रकारकमेव हेतुरिति तत्त्वम्। यद्यप्युक्तनयबलेन कृतिसाध्यताज्ञानस्य हेतुत्वं साधितमेव तथापि युक्त्यन्तरदानाय पुनरनुवदति न हीति इष्टसाधनताज्ञानसाध्या- कृतिसाध्यताज्ञानं विनापि इष्टसाधनताज्ञानसाध्या यथाश्रुतेऽपि सहेत्वसङ्गतेः। स्वकृतसाध्ये—स्वकृत्यसाध्यत्वेन निश्चिते स्वकृत्यसाध्यताज्ञानमिति स्वकृत्यसाध्यतानिश्चय इत्यर्थः कृतिसाध्यतासंशयेऽपि प्रवृत्तेरनुभवाद्यथाश्रुतासङ्गतेः। न च कृतिसाध्यतासंशये दृढसंस्कारे बहुविनव्ययायासाधेऽपि प्रवृत्त्यापत्तिरिति वाच्यं बलवदनिष्टानुबन्धित्वज्ञानस्य विरोधित्वादेव तत्रेच्छाप्रवृत्त्योरभावादिति ध्येयम्। तदभावकारणत्व इति कृतिसाध्यताज्ञानत्वेन कारणत्वमपेक्ष्य कृत्यसाध्यतानिश्चयाभावत्वेन कारणत्वे गौरवात् इत्यर्थः। नचाप्रामाण्यनिश्चयानास्कन्दितकृतिसाध्यताज्ञानत्वापेक्षयाऽप्रामाण्यज्ञानानास्कन्दितकृत्यसाध्यतानिश्चयाभावत्वमेव लघ्विति वाच्यं कृतिसाध्यताज्ञानस्याप्रामाण्यनिश्चये बलवदनिष्टानुबन्धिताज्ञानोदयादेव प्रवृत्त्यभावसम्भवात्तत्र तदनास्कन्दितत्वस्याप्रवेशात् स्वकृत्यसाध्यतानिश्चयवत्तदभावव्याप्यादिनिश्चयस्यापि प्रतिबन्धकत्वावश्यकतया बहुतरकार्य्यकारणभावकल्पनागौरवाच्चेति भावः। किञ्च मनूक्तनियमबलादस्तु कृतिसाध्यताज्ञानं हेतुस्तथापि कृतिसाध्यताज्ञानत्वेन तस्य न हेतुता किन्तु इष्टसाधनताज्ञानत्वेन सर्वत्रेष्टसाधनताकृतिसाध्यतोभयविषयकसमूहालम्बनादेव चिकीर्षेत्यत आह न हीष्टसाधनताज्ञानसाध्येति न हीष्टसाधनताज्ञानत्वावच्छिन्नकृतिसाध्यताज्ञानकारणतेत्यर्थः। स्वकृत्यसाध्ये स्वकृत्यसाध्यत्वेन निश्चिते। चिकीर्षापत्तेः—केवलेष्टसाधनताज्ञानाच्चिकीर्षापत्तेः कारणतावच्छिन्नत्वादित्यापत्तौ प्रोक्तनियमभङ्गादिति भावः। तदभावकारणत्वे गौरवादिति। इदमुपलक्षणं कृत्य-

साध्यतानिश्चयस्य प्रतिबन्धकत्वेऽपि यत्र कारणान्तराभावादिष्टसाधनताज्ञाने कृतिसाध्यत्वस्य न भानं तत्र केवलेष्टसाधनताज्ञानाच्चिकीर्षापत्तेर्दुर्वारत्वाच्च इत्यपि बोध्यम् । उक्तनियमसत्त्वे च तटस्थः प्रवृत्ते करोतीति । अभावः—कृतिसाध्यतानिश्चयाभावः । उभयसिद्धः—चिकीर्षापूर्व्वमुभयसिद्धः, असिद्धा—चिकीर्षापूर्व्वमुभयासिद्धा । न बाधावसरः इति कृतिसाध्यताज्ञानत्वस्य यद्यपि बाधत्वं न कारणतावच्छेदकतायां विनिगमकम् इत्यर्थः लघु गुरुधर्म्मद्वयावच्छिन्नं यदि फलपूर्व्वमुभयवादिसिद्धं तदेव लाघवस्य कारणतावच्छेदकतायां विनिगमकत्वादिति भावः । द्वेषात् प्रतिबन्धकत्विरहात् । सा—चिकीर्षापूर्व्वं कृतिसाध्यताधीः । लाघवावतारादिति कृतिसाध्यताज्ञानत्वरूपलघुधर्म्मावच्छिन्नस्य चिकीर्षापूर्व्वमुभयमते सत्त्वादित्यर्थः । इच्छाया इति तत्प्रकारकसंवादीच्छायास्तत्प्रकारकज्ञानजन्यतानियमेनेत्यर्थः । आवश्यकत्वात्—चिकीर्षाहेतुतावश्यकत्वात् अपि च कृतिसाध्यताज्ञानप्रतिबन्धकतान्यथानुपपत्त्या कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुतासिद्धिरित्याह जनकज्ञानमिति । तज्जनकीभूतज्ञानविघटकस्यैव ज्ञानस्य विधिप्रतिबन्धकत्वादित्यर्थः । अत्र व्याप्तौ दृष्टान्तमाह व्याप्तिज्ञानविघटनद्वारेति अनुमितिजनकव्याप्तिज्ञानविघटनेनेत्यर्थः । तथा च यत् यत्प्रतिबन्धकं ज्ञानं भवति तत्तज्जनकज्ञानविघटकं यथा व्यभिचारज्ञानमनुमितिप्रतिबन्धकं ज्ञानं भवत् अनुमितिजनकव्याप्तिज्ञानविघटकमपि भवति इति सामान्यतोव्याप्त्या कृतसाध्यतानिश्चयस्य चिकीर्षाप्रतिबन्धकज्ञानत्वेन हेतुना चिकीर्षाजनकज्ञानविघटकत्वसाधने पक्षधर्म्मताबलात्कृतिसाध्यताज्ञानस्यैव चिकीर्षाजनकत्वसिद्धिरिति भावः । न च जनकज्ञानविघटकत्वे नाऽन्यथासिद्धतया तदभावस्याहेतुत्वात् स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च इति वाच्यं प्रतिबन्धकत्वं हि न कारणीभूताभावप्रतियोगित्वम् किन्तु प्रयोजकीभूताभावप्रतियोगित्वम् । प्रयोजकत्वं च कारणकारणव्यावृत्तान्यथासिद्धिचतुष्टयराहित्ये सति नियतपूर्ववर्त्तित्वम्—कारणतत्कारणसाधारणम् । हेतौ ज्ञानपदोपादानादेव च विषयान्तरसञ्चारादौ न व्यभिचारः । साध्ये च ज्ञानपदं स्वरूपकथनम् । विघटकत्वञ्च प्रतिबन्धकत्वमेव तच्च एकावच्छेदेन तदधिकरणावृत्तित्वरूपविरोधित्वं गुरुनयेऽधिकरणज्ञानरूपतया कृतिसाध्यताज्ञानस्यापि कृतसाध्यताज्ञानाभावस्य ज्ञानात्मकस्य विरोधितया सिद्धसाधनापत्तेः । नचासाधुत्वज्ञाने साधुत्वज्ञानाजन्यशाब्दधीप्रतिबन्धके व्यभिचार इति वाच्यम् निराकाङ्क्षत्वरूपासाधुत्वज्ञाने आकाङ्क्षाज्ञानमादाय साध्यस्यापि सत्त्वात् असाधुत्वज्ञानस्य च प्रतिबन्धकत्वे मानाभावात् । न च तथापि सिद्धौ व्यभिचार इति वाच्यम् गुरुनये सिद्धेरप्रतिबन्धकत्वात् तद्ग्राहकत्वप्रतिबन्धकताया वा हेतौ निवेशात् । अतएवासिद्धत्वज्ञानाजन्येच्छाप्रतिबन्धकसिद्धत्वज्ञानेऽपि न व्यभिचारः तद्ग्राहकप्रतिबन्धकताया एव हेतौ निवेशात् असिद्धत्वनिश्चयस्यापि इच्छाहेतुत्वाद्वा । अथ तथापि बाधकप्रतिपत्त्यादौ व्यभिचारः । न च तद्ग्राह्यत्वाऽपि प्रतिबन्धकता हेतौ निवेशनीयेति वाच्यम् कृतसाध्यताज्ञानाभावव्यभिचारज्ञानाभावयोरपि बाधाभावतयैव चिकीर्षानुमित्योः प्रयोजकतया स्वरूपासिद्धिदृष्टान्तासिद्ध्योरापत्तेः । न च साक्षाद्विरोधित्वं सतीत्यन्तेन हेतुविशेषणीय इति वाच्यम् साक्षाद्विरोधित्वं हि न स्वाभावतद्व्याप्याद्यनवगाहित्वं, प्रकृतेऽपि तदसिद्धेः कृतसाध्यताज्ञानस्य चिकीर्षासंस्कारीभूतकृतिसाध्यत्वाभावावगाहित्वात् अतएव न कारणीभूताभावप्रतियोगित्वमपि, प्रकृतेऽपि तदसिद्धेः पूर्वपक्षिणा कृतसाध्यताधियः साक्षादेव प्रतिबन्धकत्वाभ्युपगमात् न च हेतौ प्रतिबन्धकज्ञानत्वपदेन ज्ञानत्वावच्छिन्नप्रतिबन्धकताश्रयत्वं विवक्षितं बाधकप्रतिपत्त्यादेश्च निश्चयत्वेन प्रतिबन्धकत्वमिति वाच्यम् प्रकृते तदसिद्धेः उक्तयुक्त्या कृतसाध्यतानिश्चयस्यैव पूर्वपक्षिमते प्रतिबन्धकत्वादिति चेन्न हेतौ स्वप्राज्ञाविरोधावगाहिज्ञानभिन्नत्वेन यत्पदार्थविशेषणात् । स्वपदं प्रतिबन्धकज्ञानपरं चिकीर्षायाञ्च ज्ञानभिन्नत्वादेव संग्रहः स्वप्राज्ञाविरोधावगाहित्वन्तु स्वं यत्र यदभावतद्व्याप्यतदवच्छेदकाद्यन्यतमदवगाहते तत्र तदवगाहित्वं संवादित्वेनापि हेतौ यत्पदार्थो विशेषणीयः तेन इष्टभेदपक्षे प्रवृत्त्यादिप्रतिबन्धके तद्वये न व्यभिचारः । संवादिप्रवृत्तौ विशिष्टज्ञानमेव हेतुरिति साधनसत्त्वादेव न तमादाय व्यभिचारः । न च तथापि कूटस्थपरामर्शलिङ्गस्थले लिङ्गसंसर्गाग्रहेण लैङ्गिकासंसर्गाग्रहाधीनसंवादीच्छाप्रवृत्तिप्रतिबन्धकेष्टभेदपक्षे जनकीभूतविशिष्टज्ञानविघटकत्वाभावाद्व्यभिचार इति वाच्यम् विशिष्टज्ञानस्य संवादीच्छाप्रवृत्तिहेतुत्वे मानाभावात् तत्रापीच्छाप्रवृत्त्योर्विषयान्तरविषयकत्वकल्पनेन विसंवादित्वस्य तैः स्वीकारादिति दिक् । अन्यथा—एतादृशव्याप्त्यनङ्गीकारे । उपेक्षणीयत्वम्-

**कार्य्यशब्दिक** त्रि॰ कार्य्यः शब्द इत्याह ठक्। कार्य्यः शब्द इति कथके नैयायिके तेन शब्दस्यानित्यत्वस्य स्वीकाराङ्गस्य तथात्वम्।

**कार्य्यसिद्धि** स्त्री कार्य्यस्याभीष्टस्य सिद्धिः। १अभीष्टसिद्धौ “चित्तं प्रह्लादि कार्य्यसिद्धिरतुला शक्ते कृतार्थे भयम्” ति॰ त॰ खञ्जनप्रकाने। २कर्त्तव्यकर्म्मनिष्पत्तौ नील॰ ताजकोक्ते २सहमभेदे च तत्र हि “पुण्यं गुरुज्ञानयशोऽथ मित्रम्” इत्युपक्रमे “स्यादन्यकर्म्मसबणिक् स्थ कार्य्यसिद्धिः” इत्यादिना पञ्चाशत् सहमानि विभज्य “स्यात् कर्म्मसिद्धिः सततं (दिवानिशोः) विलोध्य मन्दं सितात् स्याच्च विवाहसद्म” इत्यनेन तदानयनप्रकारोदर्शितः तथा च वर्षलग्नकालिकस्फुट शनिं शुक्रस्फुटात् त्यक्त्वा लग्नयोगे तत्सहमस्फुटं भवति इयांस्तु भेदः शोध्यमन्दशुद्धाश्रय शुक्रयोर्मध्ये यदि लग्नस्फुटं न भवेत्तदा राशौ एकाङ्क योगः कार्य्य इति। तत्फलं च तत्रैवोक्तं यथा “कार्य्यसिद्धिसहमं शुतं शुभैर्दृष्टयुक्तमपगम् जयप्रदम्। सङ्कटेऽथ शुभपापदृष्टियुक् क्लेशतोजय उदीरितो बुधैः”

**कार्य्या** स्त्री क-ण्यत्। कारोहके राजनि॰।

**कार्य्याधिप** पु॰ ६त॰। ज्योतिषोक्ते १व्यापाररूपकार्य्यस्थानाधिपे लग्नाद्दशमस्थानाधीश्वरे। २कार्य्याध्यक्षे च। कार्य्याधीशादयोऽप्यत्र।

**कार्य्यान्वित** त्रि॰ कार्य्येण कर्त्तव्येनान्वितः। १कार्य्ययुक्ते २कार्य्यताबोधकपदप्रतिपाद्यार्थान्विते च। मीमांसकमते कार्य्यान्विते एव शब्दस्य यथा शक्तिस्तथा पूर्व्वपक्षविधया शब्दचि॰ निर्णीतं यथा

“नन्वर्थवादानां सिद्धार्थतया न प्रामाण्यं कार्य्यान्वित एव पदानां शक्त्यवधारणात् वृद्धव्यवहारादेव हि सर्व्वेषामाद्या व्युत्पत्तिः उपायान्तरस्य शब्दव्युत्पत्त्यधीनत्वात्। तथाहि प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यस्य वृद्धस्य प्रवृत्तिमुपलभमानो बालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयव्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यवृद्धप्रवृत्तिमेव प्रयोजनमवधारयति नचाकिञ्चित् कुर्व्वतस्तादर्थ्यं सम्भवतीति च तत्कार्य्यं प्रवृत्त्यनुकूलं कार्य्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ तेन कार्य्यताज्ञानस्य हेतुत्वावधारणात् नान्यतः प्रवृत्तेः कार्य्यताज्ञानावरुद्धत्वात्, नचैवं शब्दस्य स्वार्थज्ञानद्वारा प्रवृत्तिहेतुत्वम्। स्वप्रवृत्तौ वाचेन शब्दाहितविशेषस्य कार्य्यताज्ञानस्य हेतुत्वेनानवधारणात्। ज्ञाने च सत्त्वादिज्ञाने प्रायकत्वदर्शनात् शब्दोऽपि कार्य्यताज्ञानहेतुरित्यवधार्य्य तत्रैव शक्तिं कल्पयति उपस्थितत्वात्। पश्चादावापोद्वारेण क्रियाकारकपदानां कार्य्यान्विततत्तदर्थेषु शक्तिं गृह्णाति प्रथमगृहीतसामान्यशक्त्यनुरोधात्। अथ यद्यपि वृद्धव्यवहारादौ कार्य्यान्वितधीरनुमिता तथाप्यन्वितमात्रशक्त्यैव कार्य्यवाचकपदसमभिव्याहारादाकाङ्क्षादिमहिम्ना कार्य्यत्वधीसम्भवान्न कार्य्यांशेऽपि शक्तिः परम्परयापि शब्दस्य कार्य्यान्वितज्ञानानुकूलत्वादर्थापत्त्यन्यथोपपत्तिरपि। अन्यस्याकाङ्क्षादेः कारणत्वं कार्य्यांशग्रहावपि। तद्व्यतिरेकादन्विताभिधानव्यतिरेकनियमात् सति चाकाङ्क्षादौ कार्य्यत्वव्यतिरेकदर्शनादन्विताभिधानव्यतिरेको न काप्यस्ति। अन्यथा गवादिपदानां व्यक्तावपि शक्तिः स्यात्। संस्कारादेव व्यक्तिलाभदर्शनात्तत्रेति यदि, तदा कार्य्यवाचकपदादेव कार्य्यान्वितलाभ इति किं शक्त्या वृद्धव्यवहारे नियमतः कार्य्यान्वितज्ञानं दृष्टमिति तत्र शक्तिकल्पने वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छब्दसन्निधेरप्यन्वयहेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याह्रियेत। क्वचिदसंपूर्णवाक्ये वृद्धव्यवहाराद्व्युत्पत्तेः शब्दसन्निधिं व्यभिचरतीति चेत् तर्हि सिद्धार्थेऽप्यन्वयप्रतीतिदर्शनात् कार्य्यत्वमपि व्यभिचारि। न च तत्र लक्षणा, बाधकाभावात्। शक्तिकल्पनभियाऽन्यत्र लक्षणा मता। इह तु लघीयस्या उभयसाधारणपदार्थमात्रशक्त्या सर्व्वस्योचितत्वात्। किञ्च कार्य्यवाचिलिङादीनामाकाङ्क्षादिमत्पदार्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यम् अतोऽविशेषात् पदान्तराणामपि तथात्वमस्तु लाघवादिति? मैवं, व्यवहारहेतुतयानुमिते हि कार्य्यान्वितज्ञानेऽन्वयव्यतिरेकाभ्यां शब्दस्य साक्षात्कारणत्वमवधारयति न परम्परया, साक्षात्त्वस्यौत्सर्गिकत्वेन तत्सम्भवे परम्पराया अन्याय्यत्वादिति तत्रैव शक्तिं कल्पयति नान्वितज्ञाने, पदार्थज्ञाने वाऽप्रवर्त्तकतया प्रवृत्त्या स्वकारणत्वेन तयोरनुपस्थापनात्। न चान्वितज्ञानशक्तावपि परम्परया कार्य्यत्वधीः सम्भवतीत्यर्थापत्त्या नैव कल्प्यतां, लाघवात्, न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वादिति वाच्यम् अर्थापत्तेः साक्षादुपपादकमात्रविषयत्वेन न्यूनाधिकाग्राहकत्वात्। साक्षादुपपादककार्य्यान्वितज्ञाने शक्तिः कल्प्यते लिङादीनां शक्तेरकल्पनादन्यलभ्यत्वज्ञानाभावात्। आद्यव्युत्पत्तेर्विचार्य्यत्वात्। किञ्च प्रवृत्तिकारणतयोपस्थितं कार्य्यान्वितज्ञानमपहायानुपस्थितान्वितज्ञानमात्रे

शक्तिकल्पनमयुक्तं हेत्वभावात् उपस्थितान्तरे गौरवात्। अथ कार्य्यान्वितज्ञानोपस्थितावाद्यान्वितज्ञानमप्युपस्थितमिति लाघवात् कार्य्यांशमपहायान्विते शक्तिरस्त्वित्यामिति चेत् न ज्ञाने हि पदानां शक्तिः शक्यत्वात्, नार्थे। अन्यच्च कार्य्यान्विते ज्ञानमन्यदन्वितज्ञानं विषयभेदेन ज्ञानभेदात्। तदुक्तमभाववादे, "अन्यद्भूतलज्ञानं अन्यच्च घटवद्भूतलज्ञानमिति" अन्वितज्ञानमुपस्थाप्य तत्र शक्तिग्रह इति गौरवमेव लघुनि शक्ये सम्भवत्यन्यलभ्यं गुरु न, युगपदुपस्थितौ तथात्वात्। न च तस्याप्यनुपस्थितिः पुरुषविशेषदोषात् सर्व्वैरेवाद्यप्रवृत्तौ तथावगमात्। तथापि न कार्य्यान्विते शक्तिः कार्य्यवाचिलिङादीनां व्यभिचारादिति चेत् न सर्व्वपदानां कार्य्यत्वविशिष्टधीजनकत्वात् तच्च कार्य्यान्वितस्वार्थप्रतिपादकतयेतरान्वितस्वार्थकार्य्यप्रतिपादकतया वेति। एवं कार्य्यान्वितव्युत्पत्तौ सत्यामनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादेरुपाधित्वम्। तयोश्चोपजीव्यप्रथमभाविकार्य्यान्वितव्युत्पत्त्यनुरोधेन सिद्धार्थेऽपि कार्य्याध्याहारः। कचिद्यथा कचिदसंसर्गाग्रह इति सिद्धार्थेऽन्वयप्रतीतिदर्शनादुत्तरकालमन्वितमात्रे शक्तिरेव कल्प्यतां प्राचीनकार्य्यान्वितज्ञानं बाध्यतामित्यपास्तमेव निरस्तं पूर्व्वकल्पनातः कल्पनान्तरप्रसङ्गाच्च। उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेरनन्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् उपजीव्यव्याघाताच्च। अथ सिद्धार्थेऽपि व्युत्पत्तिः सम्भवति तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्तातदेशेनैव वार्त्ताहारेण चैत्रसमीपं गतः-चैत्र! पुत्रस्ते जात इति वार्त्ताहारवाक्यं शृण्वन् चैत्रस्य मुखप्रसादं पश्यन् श्रोतुर्हर्षमनुमिनोति। हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति उपस्थितत्वात् उपपादकत्वात् अन्योपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवादिति चेत् न हर्षहेतूनां बहूनां सम्भवात् हर्षेण लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परिशेषयितुमशक्यत्वात्। अथ पुत्रजन्मज्ञानाव्यभिचारि वृद्धिश्राद्धादिक्रियाविशेषदर्शनात् पुत्रजन्मज्ञानानुमानमिति चेत् तर्हि पुत्रस्ते जात इति वाक्यं तत्तत्क्रियाकर्त्तव्यतापरमेवेति कार्य्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो गृह्यते तदुत्तरकालं पुत्रजन्मज्ञानानुमानमिति न व्युत्पत्तिः कार्य्यं जहाति। यत्रापीह सहकारतरौ पिकोरौतीति प्रसिद्धार्थकपदसामानाधिकरण्यादिभिर्व्युत्पत्तिस्तत्रापि व्यवहाराधीनव्युत्पत्तिपूर्व्विका कार्य्यान्वित एव युक्ता पिकपदशक्तिः। पूर्व्वं नावष्टेति चेत् तत्रापि पिकमानयेत्यादौ कस्यचित् कार्य्यान्वित एव व्युत्पत्तेः उपजीव्यजातीयतया च तस्यावश्यकत्वम्। किञ्चेदमपि पदं कार्य्यान्वितज्ञानशक्तम् पदत्वादिति सामान्यतोऽवगतः विशेषः स्वार्थः परं नाधिगतः स इदानीं सुहृदुपदेशादिभिरवगम्यते। अतः सिद्धप्रवृत्तिपराणां शब्दानां प्रवर्त्तकज्ञानजनकता तच्च कचित् साक्षात् कचित् परम्परया, कार्य्यान्वयात् कार्य्यान्वितस्वार्थबोधकमिति। यत्र पुराणभारतादिपाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधिशेषीभूतत्वेन प्रवृत्तिपरत्वेन तेषामिति परम्परया कार्य्यान्वयात् कार्य्यान्वितस्वार्थबोधकत्वं स्वरूपाख्यानपराणान्तु काव्यनाटकादीनां पदार्थासंसर्गाग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति"।

तदेतन्मतं पूर्व्वपक्षत्वेनोक्ता मणिकृता निराकृतं यथा– "उत्तोल्यते घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य घटानयनगोचरप्रवृत्त्या घटानयनकार्य्यताज्ञानमनुमितं बालेन, नतु कार्य्यान्वितज्ञानं प्रवृत्तिविशेषे तस्याऽहेतुत्वात् विषयादिपदशक्तिपक्षे तस्यानुपयोगाच्च तत्र च ज्ञानविशेषे घटमानयेति वाक्यविशेषस्यानाकलितपदविभागस्य हेतुत्वमवधार्य घटपदद्वितीयाधातुविधिप्रत्ययानां प्रक्षेपावापोद्धारेण घटकर्म्मत्वानयनकार्य्यत्वज्ञानेषु प्रत्येकं कारणत्वमवगम्य शक्तिं कल्पयति। पश्चात्प्रवृत्तिसामान्येनानुमितकार्य्यतान्वितज्ञाने वाक्यमात्रस्यानन्यलभ्यत्वेन कार्य्यांशमपहायान्वितज्ञानमात्रे शक्तिं कल्पयति नतु प्रथमं वाक्यमात्रस्य कार्य्यान्वितज्ञानमात्रहेतुत्वकल्पनम्।

अथ घटानयनक्रियायाः प्रथमं क्रियात्वज्ञानात्प्रवृत्तिमात्रानुमानं न तु कार्य्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शक्तिं कल्पयति तदुत्तरं विशेषयोः कार्य्यकारणभाव इति चेत् न प्रथमं प्रवृत्तिमात्रकार्य्यान्वितज्ञानमात्रयोरनुमानं बालस्य क्रमशो भवतीत्यत्र मानाभावात् घटादिपदशक्तिग्रहस्य तेन विनापि सम्भवात्, न च तदनुमाननामर्थो तदा वृत्तेति वाच्यम् तदा व्याप्त्यादिस्मृतौ मानाभावात् सामान्ययोः कार्य्यकारणभावग्रहो विशेषयोस्तथात्वग्रहे हेतुरिति चेत् न विशेषयोरन्वयव्यतिरेकाभ्यामेव तद्ग्रहात् यथा धूमवह्निविशेषयोः कार्य्यकारणभावग्रहे तत्सामान्ययोरपि हेतुहेतुमद्भावो भासते अन्यथा न सकृद्दर्शनगम्यः व्याप्तिः

शक्तिर्न स्यादेव प्रयोज्यज्ञानहेतूनां बहुत्वात्। अनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वात् अन्वयिज्ञानस्याज्ञानाच्च ज्ञानेऽपि वा तदुपस्थितिनियमे मानाभावात् सन्देहमात्रोपपत्तेः लिङ्गाभासजन्यकार्य्यतालोचनसम्भवम्वादानुमितिरप्युभयैव लिङ्गेन पुत्रजन्मज्ञानानुमानसम्भवाच्च। नचाभासत्वेनानुमितेर्भ्रमत्वे तद्धेतुशक्तिग्रहो भ्रमः, विषयस्य तथाभावेन तयोर्यथार्थत्वात्। यथा कश्चित् सुवर्णस्वाराधिष्ठितं दारुपुत्रकं घटमानयेति नियुङ्क्ते स च तमानयति तदा चेतनव्यवहारादिवत् तद्गतो-व्यापारो व्युत्पद्यते—इयं क्रिया, कृतिजन्या, सा ज्ञानजन्या, ज्ञानं तद्वाक्यजन्यमित्यनुमितिपरम्परायाः भ्रमत्वेऽपि तद्धेतुशक्तिग्रहः तज्जन्यशाब्दबोधश्च यथार्थ एव विषयस्य तथाभावादिति सिद्धः सिद्धार्थे शक्तिग्रह इति। अतएव "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्" इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः"।

कार्य्यिन् त्रि॰ कार्य्यमस्त्यस्य इनि। १कार्य्ययुक्ते २कार्य्यार्थिनि (उम्मेदार) व्याकरणोक्ते ३आदेशस्थानिनि च "कार्य्यमनुभवन् हि कार्य्यी निमित्ततया नाश्रीयते" परिभा॰। अत्र कार्य्यीति निर्द्देशात् "एकाक्षरात् कृतो जातेः सप्तम्याश्च न तौ (इनिठनौ) स्मृतौ" इत्युक्तिरपनित्या। ततः मतुप् मस्य वः। कार्य्यवत्। ठन् कार्य्यिकतत्रार्थे त्रि॰। तत्र इनौ मतुपि च स्त्रियां ङीप्।

कार्शकेय पुंस्त्री कशकस्यापत्यं वा॰ ढक्। कशकस्यापत्ये ऋषिभेदे स्त्रियां ङीप् "कार्शकेयीपुत्रात् कार्शकेयोपुत्रः" शत॰ ब्रा॰ १४,९,४,३२, वेद वंशवर्णने।

कार्शाश्वीय त्रि॰ कशाश्वेन निर्वृत्तादि कशाश्वा॰ चतुरर्थ्यां छण्। कशाश्वनिर्वृत्तादौ।

कार्श्मरी स्त्री कश—स्वार्थे णिच्-भावे मनिन् कार्श्म तत् राति रा-क गौरा॰ ङीष्। श्रीपर्ण्यां इति रत्नकोषः २गाम्भारीवृक्षे भरतः।

कार्श्य न॰ कृशस्य भावः ष्यञ्। १कृशत्वे "निर्वृत्तमज्जातकृपार्द्रं कार्श्यम्" रघुः। स्वार्थे ष्यञ्। २कृशे ३पालाशे, ४शाके (ठेवो) इत्ये ५कर्च्चूरे च पु॰ राजनि॰।

कार्ष त्रि॰ कृषि: शीलमस्य छत्रा॰ णः। कृषिशीले कृषीवले भरतः।

कार्षापण पुंन॰ कर्षस्येदम् स्वार्थे वा अण्। तेन आपण्यते आ+पण-कर्म्मणि घ। १अशीतिरत्तिके ताम्रिके कर्षे "कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः" मनुः। २षोडशपणात्मके पुराणे (काहन) इति ख्याते मानभेदे। "माषः षोडशभागस्तु ज्ञेयः कार्षापणस्य तु। काकिणी (कड़ि) तु चतुर्भागो माषस्य परिकीर्त्तिता। पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी। कार्षापणप्रमाणन्तु तन्निबद्धम् (परिभाषितम्) इहैव तत्" काल्या॰ स्मृ॰षोडशोन्तत हैमादौ विंशतीति पाठः। अतएव "द्वात्रिंशत्पणिकाः गावो वत्सः पौराणिकोभवेत्" काल्या॰ स्मृतौ पुराणद्वयात्मकद्वात्रिंशत्पणानां गोमूल्यत्वेनाभिधानम्। "अशीतिभिर्वराटकैः पण इत्यभिधीयते। ते षोडशः पुराणं स्यात् रजतं सप्तभिस्तु तैः" भविष्यपु॰। "कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" प्रा॰त॰। "कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतोजनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा" "समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यात्" मनुः। "कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते। पणोनिबद्धः पूर्व्वस्यां षोडशैव पणाः पणम्। इति नारदोक्ते ३दक्षिणदेशप्रसिद्धे पूर्व्वदेशप्रसिद्धपण परिमाणे च। कार्षापणेन क्रीतः टिठन् वा प्रतिरादेशश्च इदुङ्कारणादेः कार्षापणिक पक्षे प्रतिक तत्क्रीते त्रि॰ स्त्रियां ङीप्। कार्षापणिकी प्रतिकी अध्यर्द्धपूर्व्वात् द्विगोश्च तस्य वा लुक्। अध्यर्द्धकार्षापण अध्यर्द्धकार्षापणिकं सार्द्धकार्षापणक्रीते एवं द्विकार्षापण द्विकार्षापणिकं कार्षापणद्वयक्रीते त्रि॰। पर्ष्यादिपाठात् स्वार्थेऽण्। कार्षापण कार्षापणसंबन्धोपि त्रि॰ स॰द॰।

कार्षि त्रि॰ कर्षतीति कर्षः तत स्वार्थे बा॰ इञ्। १कर्षणशीले २अन्तर्गतमलापनेतरि। "कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि" यजु॰६,२८। कर्षतिलोपगीलः कार्षिः अन्तर्गतमलापनेतासि" वेददी॰ "कार्षिरसो त्याह शमलमेवासामपप्लावयति" तैत्ति॰।

कार्षिक त्रि॰ कर्षं नित्यमर्हति छेदा॰ ठञ्। १नित्यकर्षणार्हे कर्षेण क्रीतः ठञ्। २कर्षेण क्रीते। तत्परिमाणमस्य ठक्। ३कर्षपरिमाणयुक्ते। कर्षः कर्षणं शीलमस्य ठक्। ४३सके हेमच॰। स्वार्थे ठक्। ५कर्षपरिमाणे। "ताम्रिकः कार्षिकः पणः" मनुः।

कार्ष्ण न॰ कृष्णस्य भावः दृढा॰ ष्यञ्। कृष्णत्वे पक्षे इमनिच् कृष्णिमन् तत्रार्थे पु॰। षित्त्वात् स्त्रियां ङीप्कृष्णोपी।

कार्ष्ण त्रि॰कृष्णस्येदम् अण्। १कृष्णमृगसम्बन्धिनि। "कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः" मनुः। २कृष्णद्वैपायनसम्बन्धिनि च। "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा॰आ॰प॰६२अ॰। कृष्णोदेवतास्य अण्। ३कृष्णाख्य-

विष्णु देवताके हविरादौ त्रि०। "कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्" रघुः। ४शतावर्य्यां स्त्री राजनि०

**कार्ष्णाजिनि** पु० कृष्णाजिनस्यर्षेरपत्यम् इञ्। कृष्णाजिनर्षेरपत्ये "कुशकलिमिति कार्ष्णाजिनिः" कात्या०श्रौ०१,६,२२

**कार्ष्णायन** पु० कृष्णस्य व्यासस्य गोत्रापत्यम् नडा० ब्राह्मणे वाशिष्ठे च त्रियां फक्। कृष्णस्य व्यासस्य गोत्रापत्ये १ब्राह्मणे २वाशिष्ठे च।

**कार्ष्णायस** न० कृष्णस्यायसोविकारः अण्। कृष्णायसस्य विकारे "कार्ष्णायसमलङ्कारः परिभक्ता च नित्यशः" मनुः। स्त्रियां ङीप्। "काष्ठं कार्ष्णायसीं दद्यात्" मनुः।

**कार्ष्णि** पुंस्त्री कृष्णस्यापत्यं बाह्वा० इञ्। कृष्णस्य व्यासस्यापत्ये शुकदेवे। "द्वैपायनः कार्ष्णिरन्द्रिष्टिविन्तरथस्तथा" भा० आ० १२२अ० ऋषिकीर्त्तने। २श्रीकृष्णपुत्रे कामदेवे च। "सा च तं वर्द्धयामास कार्ष्णिं कमललोचनम्" हरि० १६२ अ०। अस्योत्पत्तिकथा कामशब्दे उक्ता।

**कार्ष्ण्य** न० कृष्णस्य भावः दृढादि० ष्यञ् वा। १कृष्णत्वे कृष्णस्य गोत्रापत्यम् गर्गा० यञ्। ब्राह्मणवाशिष्ठे कृष्णस्य व्यासस्य गोत्रापत्ये पुंस्त्री स्त्रियां ङीप् तस्य छात्रः कण्वा०अण्। कार्ष्ण कृष्णगोत्रापत्यच्छात्रे स्त्रियां ङीप्।

**कार्ष्मन्** न० कर्षत्यत्र कृष-स्वार्थे णिच्—आधारे मनिन्। १युद्धे तत्र हीतरेतरं योधाः कर्षन्तीति तस्य तथात्वम्। "कार्ष्मन् वाजी न्यक्रमीत्" ऋ०९।३६।१ "कार्ष्मन् कार्ष्म युद्धम्" भा०। ततः भावे मनिन्। २कर्षणे च।

**कार्ष्मरी** स्त्री कृष-णिच्—मनिन् कार्ष्म कर्षणं राति ददाति रा-क गौरा० ङीष्। श्रीपर्णीवृक्षे तस्याः विकारः यत्। कार्ष्मर्य्य श्रीपर्णीवृक्षावयवे। "पालाशवैकङ्कतकार्ष्मर्य्यं वैल्वान्" कात्या० श्रौ० २,८,१। कर्कभाष्ये कार्ष्मर्य्येति पाठस्यापि दर्शनात् तालव्यमध्योऽपि तदर्थे।

**कार्ष्य** पु०कृश्यतेऽसौ कृष—घञ् स्वार्थे ष्यञ्। शालवृक्षे अमरः।

**काल** कालोपदेशे (इयत्तया कालनिरूपणोपदेशे) अद० चु० उभ० सक० सेट्। कालयति ते अचकालत्-त, कलयाम्-बभूव-आस-चकार-चक्रे। कालयिष्यति-ते

**काल** पु० ईषदलति अल—अच् कोः का। १कृष्णवर्णे तस्य वर्णेषु ईषद्भूषकत्वात् तथात्वम्। अस्त्यर्थे अर्श आद्यच्। २तद्वर्णयुक्ते त्रि०। ३लौहे न० वाचस्पतिः। कालत्व तस्य कृष्णत्वात् तथात्वम्। ४कक्कोले न० राजनि०। ५कालीयके गन्धद्रव्यभेदे न०शब्दच०। तयोर्गन्धद्रव्येषु कृष्णत्वात्तथात्वम्। ६कोकिले पुंस्त्री० राजनि०। तस्य पक्षिषु कृष्णत्वात्तथात्वम् स्त्रियां ङीष्। ७रक्तचित्रके ८कासमर्दे (कालक-सेन्दा) इति च पु० राजनि०। १०शनिग्रहे मेदि० कृष्णत्वात्तस्य तथात्वम्। कलयति सर्वं पु०कल—अच् "कालसमयवेलासुतुमुन्" पा० निर्द्देशात् नि० उपधादीर्घः। ११यमराजे १२महाकाले शिवे मेदि०। १३परमेश्वरे "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" "कालः कलयतामहम्" इति च गीता "कालः कलनः कालः परमेष्ठी परिग्रहः विष्णुस०। "त्रयीमयोऽयं भगवान् कालात्मा कालकृद्विभुः" सू०सि०। स्वनामख्याते परत्वापरत्वधीहेतौ न्यायादिमतसिद्धे १४द्रव्यभेदे। तल्लिङ्गकथनं कणादसूत्रे उपस्कारवृत्तौ च यथा

"अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि" क०सू०।

"इतिशब्दो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते तथाचापरमिति प्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः। अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यं, तेनायमर्थः-बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा ऽपरत्वमुत्पद्यते तच्चापरत्वमसमवायिकारणसापेक्षम्, न च रूपाद्यसमवायिकारणं व्यभिचारात् तयाचां गन्धादीनां वायौ परत्वाद्यनुत्पादकत्वात् स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारात् न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात् तपनपरिस्पन्दानान्तु व्यधिकरणत्वात् तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात् आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्य्यभिघातात् सर्वभेरीषु शब्दोत्पत्तिप्रसङ्गः। तथाच कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगोऽपरत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायकः आत्मनश्च द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षित्वात् अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात्। कालस्य तु तत्स्वभावतयैव कल्पनाददयमदोषः। कालेनापि रागसंक्रमः कथं न इति चेत् नियतक्रियोपनायकत्वेनैव तत्सिद्धेः एवं स्थविरमवधिं कृत्वा यूनि परत्वोत्पत्तिर्निरूपणीया। युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत् कुर्व्वन्ति इत्यादि-प्रत्ययानान्तु एकस्मिन् काले एकस्यां सूर्य्यगतौ एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः, न चात्मा एव

सूर्य्यगतयो विशेषणतामनुभवन्ति। न च प्रत्युत्पन्नप्रत्ययावसा-यभाः। तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषण-साधकं यद् द्रव्यं स कालः" उपस्कारवृत्तिः।

"ननु नित्यस्तु कालः, स तु नित्यो द्रव्यं चेति न प्रमाणमत आह"।

"द्रव्यत्वनित्यत्वे वायुना व्याख्याते" क०सू०।

"यथा वायुपरमाणोर्गुणवत्त्वाद्द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः" उप०।

"तथापि सन्तु बहवः काला इत्यत आह"।

"तत्त्वम्भावेन" क०सू०।

व्याख्यातमिति विपरिणतेनान्वयः। चिरादिप्रत्ययानां कालनिङ्गानां सर्व्वत्राविशेषादेकत्वेऽप्यात्मनामिव विशेष-लिङ्गाभावात् सत्तावदेकत्वं कालस्येत्यर्थः। ननु क्षणलव-मुहूर्त्तयामदिवसाहोरात्रपक्षमासर्त्त्वयनसंवत्सरादिभेदेन भूयांसः कालास्तत् कथमेकः इति चेन्न भेदभानस्य उपा-धिनिबन्धनत्वात् यथा एक एव स्फटिकमणिर्जपाता-पिञ्छाद्युपाध्युपरागेण भिन्न इव भासते तथैक एव कालः सूर्य्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्य्यावच्छेदकभेदेन च भिन्न इव भासते इत्युपपन्नम् तथाच कालोपाध्यवच्छापकः कालो-पाधिः, स्वाधेयकादाचित्काभावप्रतियोग्यनाधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेत-द्द्रष्टव्यमेवम्। क्षणद्वयन्तु लवः इत्याद्यागमप्रसिद्धम्। ननु तथाप्यतीतानागतवर्त्तमानभेदेन कालत्रयमस्तु, श्रूयते हि "त्रैकाल्यमुपावर्त्तते" "त्रैकाल्यसिद्धिः" इत्यादीति चेन्न त्रैकालव्यवहारात् येन हि वस्तुना यः कालोऽवच्छि-द्यते स तस्य वर्त्तमानः यत्प्रागभावेन यः कालोऽवच्छि-द्यते स तस्य भविष्यत्कालः यद्ध्वंसेन यः कालोऽवच्छि-द्यते स तस्यातीतकालः तथाचावच्छेदकत्रित्वाधीनः काल-त्रित्वव्यवहारः" उपस्कारवृत्तिः।

"इदानीं सर्व्वोत्पत्तिमतां कालः कारणमित्याह"।

"नित्येष्वभावादनित्येषु भावात् कारणे कालाख्ये-ति" क०सू०।

इतिशब्दो हेतौ इतिहेतोः कारणे—सर्व्वोत्पत्तिमत्कारणे कालः इत्याख्या। हेतुमाह नित्येष्वभावात् अनित्येषु भावादिति नित्येषु आकाशादिषु युगपज्जातः चिरजातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जात इत्यादिप्रत्ययस्याभावात् अनित्येषु घटपटादिषु यौगपद्या-दिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः। न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्वो-त्पत्तिमन्निमित्तकारणत्वम् अपि तु पुष्पफलादीनां हैमन्ति-कत्वा निकदाचिद्धेमन्तादिषु भाव एव तदधीनत्वमेव" उप०। भाषापरिच्छेदे श्लोकेन तल्लक्षणं यथा

"जन्यानां जनकः कालो जगतामाश्रयो मतः।"

"परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः" भाषा।

"कालं निरूपयति जन्यानामिति तत्र प्रमाणं दर्श-यितुमाह जगतामिति तथाहि इदानीं घट इत्यादिप्रतीतिः सूर्य्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरि-स्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न सम्भवतीति कालएव तत्सम्बन्धघटकः कल्प्यते इत्थञ्च तस्याश्रयत्वमपि सम्यक्। प्रमाणान्तरं दर्शयति परापर-त्वेति परत्वापरत्वबुद्धेरसाधारणं निमित्तं कालएव पर-त्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदि-नमासवर्षादिसमयभेदो न स्यादत आह क्षणादिरिति काल-स्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः। उपा-धिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म, पूर्वसंयो-गावच्छिन्नविभागो वा पूर्वसंयोगावच्छिन्नोत्तरसंयोगप्राग-भावो वा उत्तरसंयोगावच्छिन्नं कर्म्म वा। न चोत्तर-संयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं कर्म्मा-न्तरसत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यपि, तदा-ऽभावस्य ध्वंसेनोपपादनीयः। दिनादिव्यवहारस्तु तत्त-त्क्षणकूटैरेवेति" मुक्तावली।

तार्किकशिरोमणिना रघुनाथशिरोमणिना च पदार्थ-निरूपणप्रकरणे "तत्र दिक्कालौ नेश्वरादतिरिच्येते" इति वदता विभुरूपस्यैकस्य कालस्य खण्डनं कृतम्। रघुदेवरामभद्राभ्यां तद्विवृतं ततः संक्षिप्य पदार्थतत्त्वसारे च जयनारायणतर्कपञ्चाननेन दर्शितं यथा

"दिक्कालौ नेश्वरादतिरिक्तौ, प्राच्यां घट इदानीं घटः इत्यादिव्यवहारस्य ईश्वरात्मकविभुविषयकत्वेनैवोपपत्तेः, न च तयोर्भिन्नविषयकत्वमनुभवसिद्धमिति वाच्यं तथा सति प्राच्यां घटः प्रतीच्यां घटः इदानीं घटः तदानीं घट इत्यादेरपि भिन्नभिन्नविषयकत्वानुभवात् कालादिगोरपि बहुत्वाङ्गीकारप्रसङ्गात्, तथा च उपाधिभेदादेकया दिशा एकेन कालेन च यथा भवतां बहूनां व्यवहाराणामुपपत्ति-स्तथाऽस्माकमपि एकेनेश्वरेणागमानुमानाभ्यां सिद्धेन सर्व्वेषामेव तादृशव्यवहाराणामुपाधिभेदादुपपत्तिः सम्भवति,

नीचदिगेश्वराणां देवप्रतिष्ठामपि कर्णवेधम्। हित्वाद्य शुभकर्माणि कुर्यात् तमोऽभिनि। विवाहं मेखलाबन्धं यात्राञ्च परिवर्जयेत्"। अत्र यात्राञ्चेति चकारः पूर्ववचनोपात्तसन्न्यस्तरोक्तप्रतिष्ठाकर्णवेधकर्माणां च समुच्चिनोति। "बाले शुक्रे, वृद्धे शुक्रे, नष्टे शुक्रे, जीवे नष्टे। बाले जीवे, जीवे सिंहे, सिंहादित्ये जीवादित्ये। तथा मलिम्लुचे मासि सुराचार्येऽतिचारगे। वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्'। एवञ्च कालाशुद्धौ विद्यारम्भं न कुर्यात् तद्विधानञ्च विष्णुधर्मोत्तरे। 'संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्। रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनन्तथा। एवं सुनिश्चिते काले विद्यारम्भः प्रशस्यते" देवलः "बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्"। अन्तक इति शेषः। राजमार्त्तण्डे "सिंहे गुरौ परिणीता पतिनाशनमात्मजान् हन्ति। क्रमशस्त्वेषु पितादिषु षष्ठिवनगार्दयः प्राहुः"। पितादिषु—सिंहघटकमघा पूर्वफाल्गुन्युत्तरफाल्गुनीप्रथमपादेषु। प्रतिप्रसवमाह शातातपः "माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम्"। तत्रैव हेमाद्रिधृतमाण्डव्यवचनम् "श्रुतिवेधजातकान्नप्राशनचूडादिकः सर्वः। रविभवनस्थे जीवे कार्योऽकार्योविवाहस्तु'। माघ्यां मघायोगे तु अप्रवेशमन्दिरगताविल्यादिना सर्वकर्मनिषेधात्। अपवादं विवाहोऽपि श्रूयते तथाच राजमार्त्तण्डे दक्षः "गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखामुनीन्द्राः। यदा न माघी मघसंयुता स्यात् तदा च कन्योद्वहनं वदन्ति"। इत्थञ्च माघ्यां मघायोगाभावेऽपि श्रुतिवेधादि, मघास्थेऽपि गुरौ भवति विवाहस्तु गुरोर्मघापरित्यागादेव तथाच माण्डव्यः "मघाभुक्तं परित्यज्य यदा सिंहे गुरुर्भवेत्। तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत्"। वात्स्यायनः "बालोद्वाहव्रतप्रतिष्ठादिष्टहचूड़ामतादिकम्। यत्नतो वर्जयेन्नैव जीवे वक्रातिचारगे। कीर्त्तिभङ्गः प्रतिष्ठायां, भयं चौरात्तथाऽध्वनि। चूड़ोद्वाहे भवेन्मृत्युर्व्रते हानि,र्भयं गृहे। अतिचारे त्रिपक्षः स्यात् वक्रे पक्षचतुष्टयम्। न कुर्यात्तत्र यात्रादि गुरोर्वक्रातिचारयोः" गर्गः "गुरोर्वक्रातिचारे च वर्जयेत्तदनन्तरम्। यज्ञव्रतविवाहादावष्टाविंशतिवासरान्"। माण्डव्यः "यदा वक्रातिचाराभ्यां राशिं गच्छति वाक्पतिः। दिनानि सप्तविंशानि त्यक्त्वा कर्म समाचरेत्"। अत्रापि पूर्वः पूर्वः पक्षः श्रेयान्। राशिं—राश्यन्तरम् अन्यथा व्यर्थं स्यात्। अतएव न्यायरत्नेनापि पूर्वराशिगमनमप्राप्यातिचारिगुरुकेऽप्युक्तम्। बृहद्राजमार्त्तण्डे "वक्रातिचारोपगताः कुजाद्या यद्यन्यराशौ,परिवर्जनीयाः। यथाक्रमस्थाः स्वगृहस्थिता वा न वर्जनीया यवना वदन्ति"। व्यवहारसमुच्चये हलचिन्तामणौ च हारीतः "हत्वाऽतिचारं यदि पूर्वराशिं नायाति मन्त्री त्रिदशाधिपानाम्। यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम्। अतिचारं गते जीवे वृषे वृश्चिककुम्भयोः। यज्ञोद्वाहादिकं कुर्य्यात्तत्र कालो न दुष्यते"। समयकल्पलतायां वाचस्पतिमिश्रैः 'पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः। लुप्तःकालः स विज्ञेयः परगेहं गतो यदा। मीने मेषे वृषे चैव तथा मिथुनकन्ययोः। अतिचाराच्च दोषः स्यान्नियतं काललोपजः"। द्वैतनिर्णये 'कन्यावृश्चिकमेषेषु मन्मथे च चापे वृषे। अतिचारेषु कर्त्तव्यं विवाहादि बुधैः सदा"इति अमूलकमित्युक्तम्। पराशरसंहितायाम् "अतिचारं गतोजीवस्तत्रैव कुरुते स्थितिम्। तदा महातिचारः स्यात् लुप्तसंवत्सरक्रियः। अतिचारेण योराशिसंक्रान्तोदेवमन्त्रिणा। तदाद्यो वत्सरोलुप्तोयोऽन्त्यः सर्वकर्मसु"। तत्र सर्वं कर्मलोपत्वात् वत्सरोलुप्त इति तदाह योऽन्त्य इति। शुजवलभीमादिनिबन्धेषु 'शुभं भवनमासाद्य यदातिक्रमते गुरुः। अत्र संवर्द्धिता कन्या सुखं भर्त्तुः प्रमोदते" दीपिकायाम् 'त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयाति। यदा,तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः"। त्रिकोणं नवपञ्चमम्। जाया-सप्तमं, धनं-द्वितीयं, लाभ-एकादशमस्थानम्। रत्नकोषे "पञ्चोदशाहानि तथा त्रिपक्षौ मासत्रिभागः खलु षट् च मासाः। एषोऽतिचारः कथितोग्रहाणां भौमादिकानां परतस्तु चारः"। प्रतिष्ठाकाण्डे कल्पतरौ देवीपुराणम् "यथा जीवे स्थिते सिंहे तथैव मकरस्थिते। देवारामतडागादिपुरोद्यानगृहाणि च। विवाहादि महाभागा भयदानि विनिर्दिशेत्। यदा द्वादशगे जीवे अष्टमे वाथ भास्करे। प्रतिष्ठा कारिता दिव्योर्महाभयकरी मता"। हलचिन्तामणौ देवीपुराणम् "सिंहस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत्। आरब्धञ्च न सिद्ध्येत महा-

भयकरं भवेत् । कूपारामतड़ागेषु सुरोद्यानध्वजेषु च । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् । कारकोऽब्जगते नाशं सन्तानः क्षीयतेऽचिरात्” । गुर्व्विसर्व्वस्वे मकरस्थगुरौ प्रवर्त्तकं नरसिंहपुराणम् “विवाहोनैव कर्त्तव्यः सिंहसंस्थे गुरौ सदा । मकरस्थे च तत्कार्य्यं कल्याणं सर्व्वतोमुखैः । तथा देवीपुराणम् “मकरस्थो यदा जीवो वर्ज्जयेत् पञ्चमांशकम् । शेषेष्वपि च भागेषु विवाहः शोभनो मतः” । एतद्वाक्यं व्यवहारापरिस्फुटीतमिति कालचिन्तामणिः । एतेनैतदनाकरं न भवति किन्तु मैथिलानामनाचारः इति स्मरणोऽवगम्यते । अतएव रत्नावल्यादिषु नीचस्थगुरावेव दोष उक्तः । गुरोर्नीचस्थत्वमपि त्रिंशांशमकरराशेः पञ्चमांशं यावदिति ज्योतिस्तत्त्वे ज्ञेयम् । रत्नावल्याम् ‘नीचस्थः सिंहगोवा यदि भवति गुरुः सूर्य्यरश्मौ च लीनः संयुक्तो वा यदि स्यात् दशमतदथिना क्षीणरूपोऽथ बालः । बालाशेषं विवाहोव्रतममरगृहं यच्चूड़ादि सर्व्वं वापी चोद्यानकूपम् न भवति शुभदं यच्चादिदञ्च लोके” । श्रीपतिरत्नमालायां कालचिन्तामणौ च वाक्यं “शाखाधिपे बलिनि केन्द्रगतेऽथ वाऽस्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम् । नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगौ व्रतविधौ स्मृतिकर्म्महीनः” । अत्र शाखाधिपस्य । तेन सामगानां कुजवारेऽप्युपनयनम् “सामवेदाधिपो भौमः” इत्युक्तत्वात् । कामरूपीयनिबन्धे स्मृतिसागरे देवीपुराणम् ‘मकरस्थो यदा जीवस्तदा त्रिंशद्दिनं त्यजेत् । त्यक्ता तु षष्टिदिवसं कुर्य्यात् कर्म्माणि मानवः” । रायमुकुटज्योतिःकालकौमुद्याम् यत्तु ‘मकरस्थं गुरुं यत्नात् सिंहवत् परिवर्जयेत् । देवारामतड़ागेषु सुरोद्यानध्वजेषु च” इत्यादि देवलवचनं तदपि सिंहवत् परिवर्जयेदित्यनेन यथा सिंहस्थस्य गुरोस्त्याज्यता तथा मकरस्थस्यापीति गम्यते । सिंहस्थगुरोर्मघायुक्तभाव्यां सत्यामेव त्याज्यता अतो मकरस्थस्यापि गुरोस्तस्यामेव त्याज्यता इत्यवगम्यते । अतएव देवीपुराणम् ‘यथा जीवस्थिते सिंहे तथैव मकरस्थिते” इत्यत्र यथातथोपादानम् । तदपि देशविशेष एव दूषणम् तथाहि “गङ्गाया उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्” । अतएवान्यदेशाभिप्रायेण श्रीमद्राजेन ‘वापीकूपतड़ागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्कार्य्यं न दोषः कालजोपजः । कार्य्यं मकरगे जीवे विवाहाद्यखिलं बुधैः । न तु सिंहगते जीवे कुर्य्याद्दिजः कथञ्चन” । अत्र पूर्व्वोक्तनरसिंहपुराणवचने मकरस्थमात्रे विवाह उक्तः । अतएव तत्सारभूतं व्यवहारमात्रं विवेचितं श्रीपतिनाप्युद्देशोप्रति प्रतिज्ञाय-समयाशुद्धौ मकरस्थवृहस्पतिदोषमनभिधाय केवलमुपनयने नीचस्थवृहस्पतिर्निषिद्धः । एतेन द्वैतनिर्णये श्रीपतिसंहितायां व्यवहारोपबृंहितमेव वचनं नच व्यवहारविरुद्धमिति । एतेन यत् मकरस्थगुर्व्वादौ विवाहादिविधायकं वचनं तदाचारविरहादनादरणीयम् इति वाचस्पतिमिश्रोक्तं हेयम् मकरस्थगुरौ प्रतिज्ञाव्यतिरिक्तकर्म्मनिषेधकश्रीपतिग्रन्थविरहात् । अथ तन्निषेधकमुनिवचनानि प्रामाणिकान्तरधृतत्वादुपादेयानीति चेत् तर्हि प्रतिप्रसववचनान्यपि तथा । एवञ्चातिचारे विवाहादिनिषेधकवचनानि श्रीपतिना लिखितानि नतु तदपवादकानीति तेन तान्यप्रामाणिकानीति यदुक्तं तदपि हेयम् प्रकृते पूर्व्वोक्तयुक्तेरौल्यात् भुजबलभीमे ‘जीवोऽक्रिय युतः करोति मरणं बालासुतो भागुरिः नक्तमैकगतो वदन्ति यवनाः पादस्थितो देवलः । माण्डव्यगर्गपराशरादिमुनयो नेच्छन्ति चाक्रांगते तस्मादक्रमिते सुरेन्द्रसचिवे नेष्टं विवाहादिकम्” श्रीपतिरत्नमालायाम् ‘प्रागुद्गतः शिशुरहस्त्रितयम् सितः स्यात् पश्चादुदग्भितपञ्चदिनानि वृद्धः । प्राक् पक्षमेव कथितोऽस्तमिषणगर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः” । वृद्धशिशुत्वमस्तीति क्वचित्पाठः । सितः शुक्रः । इह—पक्षाहिणि । राजमार्त्तण्डे ‘भवेत् कम्प्यागतः पश्चात् अस्तमेष्यत् दिनत्रयम् । दिनानि पञ्च पूर्व्वेण, तत्काले कर्म्म वर्जयेत् । बाले वृद्धे च सम्प्राप्ते चतुःपञ्चत्रिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् । बाले वृद्धे च सन्ध्यायां नष्टे च भृगुनन्दने । दुर्भगा चाकृती वन्ध्या मृत्युयुक्ता फलं क्रमात् । बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् । नष्टे च मृत्युमाप्नोति सर्व्वमेवं गुरावपि” । वृद्धे पञ्चदिनत्वकीर्त्तनमप्यापद्विषयं ज्योतिःपराशरेण भक्तोः पादाद्योऽपि दशाहविधानात् । एवं गुरावपि । रत्नमालायां पक्षविधानात् तयोर्मते न कल्याया: पृथङ्निर्देशोऽपि पृथुत्वेनैव तदुपलक्षणात् । दीपिकायाम् “गुर्व्वादित्ये, गुरौ सिंहे, नष्टे शुक्रे मलिम्लुचे । वाम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेत् ।

तत्रैव "नो शुक्रास्ते ऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ, विष्टौ, मासे मलाख्ये, कुजशनिदिवसे, जन्मताराञ्च वाय । नाडीनक्षत्रहीने, गुरुरविरजनीनाथताराादिशुद्धौ, प्रातः कार्य्या परीक्षा हितनुधरस्थशंभोदये शस्तलग्ने' । ज्योतिषे 'सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा । सिंहस्थे तु रवौ नैव परीक्षा शस्यते बुधैः' । गर्गः 'दाहे दिशाञ्चैव धराप्रकम्पे, वज्रप्रपाते ऽथ विदारणे वा । धूमे, तथा पांशुकरप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम् । उल्कापाते च निर्घाते तथैवाकालवर्षणे । छिद्रे सूर्य्ये विनिर्द्दिष्टे न कुर्य्यान्मङ्गलक्रियाम् । धूमकेतौ समुत्पन्ने, ग्रहणे चन्द्रसूर्य्ययोः । ग्रहाणां सङ्गरे चैव न कुर्य्यान्मङ्गलक्रियाम् । द्विसूर्य्यं वा त्रिसूर्य्यं वा दृष्टा गगनमण्डलम् । रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत् । दिग्दाहे दिनमेकन्तु षष्ठे सप्त दिनानि च । भूमिकम्पे च सम्भूते त्र्यहाणि परिवर्जयेत् । उल्कापाते च त्रितयं, धूमे पञ्च दिनानि च । वज्रपाते दिनमेकं वर्जयेत् सर्व्वकर्म्मसु" । भोजराजः "ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्" । ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाहमशुद्धम् किञ्चिदूनतत्समाहारे दशाहम् । ग्रहणाद्येकैकदोषे त्र्यहमिति वाचस्पतिमिश्राः । अत्र स्मृतिसागरधृतसारसंग्रहे "राज्यादिकमहाभिषेके व्रतदानतपःसु च । होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम् । लक्षहोमे महादाने वर्जयेत् सोमके मखे । तपःस्वाध्याययोश्चैव चिरारम्भे त्रयोदश" इति व्यवस्था अन्यत्र "उल्कापाते भुवः कम्पे अकालवर्षगर्ज्जिते । वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः । प्रयाणन्तु त्यजेत् क्षत्रः सप्तरात्रमतः परम् । ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म्म त्रिरात्रकम् । शूद्रस्त्वष्टा चैकरात्रं सर्व्वकर्म समाचरेत्' । पराशरः 'प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने । एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे" । भृगुः 'कम्पे रात्रिं त्र्यहं प्राहुर्ब्राह्मणानां त्र्यहन्तथा । शूद्रस्यार्द्धदिनं प्रोक्तं सर्व्वकार्य्येषु वै भृगुः' । शूद्रस्यापद्विषयम् । कम्पस्तूपलक्षणम् । ग्रहणादावप्येवमेवास्त्वैकत्र पठितत्वात् । भोजदेवव्यवहारसमुच्चये "सर्व्वं कार्य्यं न कुर्व्वीत गुरौ सिंहे ऽस्तगेऽपि च । ग्रस्तदोषे न कुर्व्वीत तमोयुक्ते बृहस्पतौ" । तमोयुक्ते राहुयुक्ते । ग्रस्तदोषे इति निष्टेतरकर्म्मोपलक्षणम् । तथाच स्मृतिसागरसारे ज्योतिषम् 'एकराशौ स्थितौ स्यातां यदि राहुबृहस्पती । विवाहव्रतयज्ञादि सर्व्वन्तत्र विवर्जयेत्' । मलमासाद्युपक्रमे उदिष्टे 'न भेदेऽप्येकराशौ सम्पर्कौ यदि वाऽनयोः । गुरोराहोरपि तथा त्यजेद्विद्वान् संशयः' । अत्र गुरोर्वर्ज्जनत्वं हेतुः । तदुक्तं "यत्र तत्र स्थितो जीवस्तमोयोगेन वर्ज्यते । उपहासाय किं न स्यादसद्भूतो मनीषिणाम्" इति । "अनिष्टे त्रिविधोत्पाते सिंहिकासुतदर्शने । सप्तरात्रं न कुर्व्वीत यात्रोद्वाहादिमङ्गलम्" । इति दीपिकायामनिष्टत्वाभिधानात् अनिष्टजनकोत्पात एव सर्व्वकर्म्मानधिकारः । पूर्व्वलिखितभोजराजवचनेऽपि "केतूद्गमोल्कापतनादिदोषे, इति दोषजनक एव तयोपरागे ग्रहस्वतः शुभेऽपि यात्रानिषेधाय सिंहिकासुत इति पृथगुपादानम् । अत्र विवाहादावपि सप्तरात्रनिषेधात् पराशरोक्तस्तत्कालनिषेध आर्षादिविषयः । तेनानिष्टाजनके भूमिकम्पादौ न दोषः । अतएव बृहत्संहितायां वराहेण उत्पातप्रकरणे प्रायःपदमभिहितम् तथा च" यः प्रकृतिविपर्य्यासः प्रायः संक्षेपतः स उत्पातः । क्षितिव्योमदिव्यजातोयथोत्तरं गुरुतरो भवति" प्रायइति कल्यादिप्रयुक्तविपर्य्यासव्यावृत्त्यर्थं यदाह तत्रैव "ये च न दोषं जनयन्त्युत्पातास्तान् ऋतुस्वभावकृतान् । ऋषिपुत्रैः कृतैः श्लोकैर्विद्यादेतैः समासोक्तैः" मनुनापि "निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने । एतानाकालिकान् विद्यादनध्यायानृतावपि" । अत्रानध्ययनार्थमृतावपीत्युक्तम् । उत्पाते दोषभङ्गमाह श्रीपतिव्यवहारनिबन्धे "अथ दिवसत्रयमध्ये मृदुजलपतनं यदा स्यात् । तदोत्पातदोषं शमयेदित्याहुराचार्य्याः" वार्हस्पत्ये "शमयन्त्यावमाहात् कम्पादिकृतं निमित्तमाश्वेव । अतिवर्षणोपघातप्रवृत्तदोषाजयहवनानि" । विष्णुधर्म्मोत्तरे 'प्रेतेऽत्र चतुरो मासान् यावत्स्वपिति कार्त्तिकः । विहिता न प्रवर्त्तन्ते तदा यज्ञादिकाः क्रियाः । नाभिषेच्यो नृपस्तत्र नाधिमासे कदाचन । न हुमे च तथा कृष्णे विशेषात् प्रावृषि द्विज !" । भविष्योत्तरे "सुप्ते मयि जगन्नाथे केशवे गरुड़ध्वजे । निवर्त्तन्ते क्रियाः सर्व्वाश्चातुर्व्वर्ण्यस्य भारत ! । विवाहव्रतबन्धादि चूड़ासंस्कारदीक्षणम् । यज्ञगृहप्रवेशादिदानार्घनप्रतिष्ठनम् । पुण्यानि यानि कर्म्माणि वर्जयेद्धरिशायने" । सर्व्वत्रोक्तवाक्यगर्भितताः

पूर्वमाभिव्यक्तोक्ताः एवं पुण्यानीति अन्यथा विशेषवचनवैयर्थ्यादिति वदन्ति। भोजराजः 'वापीतडागदेवगृहगोपुरदेवग्रहप्रासादवारिमठकूपविवाहचैत्यात्। कर्तुं यथागमविधानविधिं विधाता मोक्षस्यैव कथयामि मतामतोऽहम्। कुम्भे हरौ प्रकटशेषफणोपधाने लक्ष्मीकराब्जपरिमार्जितपादपद्मे। मीने रवौ धनुषि चास्तमिते तथैव्ये वास्तुक्रियाविधिरसौ मुनिभिर्निषिद्धः'' । इत्युक्तोगुरुः। नारदः 'वापीकूपतडागादिप्रतिष्ठायज्ञकर्म च। न कुर्य्यान्मलमासे च महादानव्रतानि च''। दानपदं सामान्यदानपरमिति वदन्ति। तथाच स्मृतिः 'अस्ते वत्स्यग्रागते बाले भगौ नास्ति मलिम्लुचे। देवतादर्शनं दानं महादानं विवर्जयेत्'। लघुहारीतः ''अगास्ते गुरौ सिंहे गुर्व्वादित्ये मलिम्लुचे। त्यजेत् दानं महादानं व्रतं देवविलोकनम्''। एतद्वचनद्वयं कालविवेकेऽपि। अत्र दानमहादानयोरुपादानात्'' म० त०। चतुर्वर्गचिन्तामणिपीयूषधारादौ विशेष उक्तो विस्तरभयान्नोक्त आकरएवावसेयः।

**कालिक** पुंस्त्री काले वर्षाकाले चरति ठञ्, के जले अलति अल–वा० इकन् उत० वा। १ क्रौञ्चे वके शब्दरत्ना० स्त्रियां ङीष्। कालोवर्णोऽस्त्यस्य ठन् कालात् वर्णे वाचित्वे जानपदा० नि० ङीष् ततः स्वार्थे क ह्रस्वः इति वा। कालिका २ देवीमूर्त्तिभेदे "तस्यां विनिर्गतायां तु कृष्णाऽभूत् साऽपि पार्व्वती" देवीमा० तस्याः कृष्णवर्णतयाविर्भावात्तथात्वम् विवृतिः कालिकापुराणे ६०अ०यथा "सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा हिमाचलम्। गङ्गावतारनिकटे महामायां प्रतुष्टुवुः। अनेकसंस्तुता देवी तदा सर्व्वैरतोत्करैः। मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत। युष्माभिरमरैरत्र स्तूयते का च भाविनी। किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति। एवं ब्रुवत्या मातङ्ग्यास्तस्यास्तु कायकोषतः। समुद्भूताऽब्रवीद्देवी मां स्तुवन्ति सुरा इति। शुम्भो निशुम्भो ह्यसुरौ बाधेते सकलान् सुरान्। तस्मात्तयोर्वधार्थं स्तूयेऽद्य सकलैः सुरैः। विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा। भिन्नाञ्जननिभा कृष्णा साऽभूत् गौरी क्षणादपि। कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया"। ३ वृश्चिकपत्रवृक्षे ४ क्रमदेयवस्तुमूल्ये ५ भूषण्याम् ६ जटामांस्यां ७ काक्यां ८ पटोलशाखायां ९ रोमावल्यां १० शिवायाम् ११ मेघावल्यां स्त्री मेदि०। १२चीरकीटे हारा० १३ मस्यां शब्दरत्ना० १४ काकोल्यां १५श्यामापक्षिणि स्त्री राजनि०। १६ हिमाचलभवायां शिशिरायां हरीतक्याम् स्त्री मेदि०। १७चतुर्वर्षे कुमारीभेदे रुद्रयामलम्: कालकुमारीशब्दे विवृतिः। कालस्य भावः वा० वा वुञ्। १८ कृष्णवर्णे स्त्री। १९ स्वर्णदोषे जटाधरः वह्निना दाहे यद्दोषात् स्वर्णस्य कृष्णता भवति सा च ताम्रादिधातुयोगैः। "हेम्नः संजायते हम्मी विशुद्धिः ग्रासिकाऽपि वा" इत्यौ अन्यायेव कालिकाप्रान-श्लोके तस्यैव तथात्वम्। काय जलाय अलति पर्य्याप्नोति अल–पर्य्याप्तौ ण्वुल् टाप् अतइत्त्वम्। २०कुज्झटिकायां भरतः २१ नवमेघे स्त्री मेदि०। काले दीयते ठञ्। २२ प्रतिमासदेयवृद्धौ (सूद)"प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता" नारदः। कं जलमलति भूषयति अल–भूषणे ण्वुल् टाप् अतइत्त्वम्। २३ सुरायां स्त्री हेमच०। कालोवर्णोऽस्त्यस्य ठन्। २४कालीयके कृष्णचन्दने न० शब्दच०। प्रकृष्टः दीर्घःकालोऽस्य प्रकृष्टे ठञ्। २५ वैरे न० तस्य दीर्घकालस्थायित्वात्तथात्वम्। "वर्णे चानित्ये" इत्यधिकारे "कालाच्च" पा० कन्। कालक स्त्रियां टाप् अत इत्त्वम्। २६ कालिका अनित्यकृष्णवर्णयुक्त शाखादौ स्त्री "कालिका शाटी" सि० कौ०। कालेन निर्वृत्तः ठञ्। कालिक २७ कालनिर्वृत्ते कालकृते त्रि०। "विशेषः कालिकोऽवस्था" अमरः। काले भवः ठञ्। २८ कालभवे त्रि०। उभयत्र स्त्रियां ङीष् इति भेदः।

**कालिकापुराण** न० कालिकाया माहात्म्यादिप्रतिपादकं पुराणम्। उपपुराणभेदे उपपुराणशब्दे दृ०। तस्य तथात्वसूचकं तत्प्रतिपाद्यविषयाश्च

१अ० ब्रह्मणोनारदादिक्रमेण तत्पुराणप्रवर्त्तनम्। ऋषिप्रश्ने मार्कण्डेयोक्तिः। प्रजासृष्टिः–ब्रह्ममनसः सन्ध्यासृष्टिः कन्दर्पसृष्टिः। तस्य ब्रह्मणा स्त्रीपुरुषयोर्मोहनाय निदेशः। २अ०तस्य मन्मथनामादिनिरुक्तिः। तस्य हर्षणरोचनद्रावणशोषणमारणाख्यपञ्चवाणोक्तिः। सन्ध्यां दृष्ट्वा ब्रह्मणो मनोविकारः सन्ध्यादर्शनेन जातसात्त्विकधर्म्मात् अग्निष्वात्तादीनामुत्पत्तिः। तां दृष्ट्वा विकारान्वितदक्षधर्म्मतः रतिनामककन्योत्पत्तिः।

३अ० ब्रह्मणः कामदेवशापः। रत्याः कामेन विवाहः। ४अ० शिवमोहनाय ब्रह्मणा कामस्य नियोगः। शिवमोहनाय ब्रह्मणा विष्णुमायायाः स्तुतिः। दक्षकन्यात्वस्वीकारेण तस्याः प्रादुर्भावप्रार्थनः दक्षेण महामायायाः स्तुतिः। ५अ०

विष्णुमायाया दक्षात् वरदानम् । ६अ० मन्मथोत्पत्तिः । तस्य ब्रह्मणा कामस्य नियोजनम् । तेन सह मारादिगणस्य प्रेरणम् । ७अ० कालेन हरमोहनप्रकारोक्तिः । ८अ० दक्षकृतमहामायास्तवः । सतीरूपतनुपालनप्रकारः तन्नामनिरुक्तिः । नारदेन सत्या हरकृतवरप्राप्त्युक्तिः । ९अ० सतीकृतशिवव्रतम् । ब्रह्मणः शिवसमीपे दारपरिग्रहप्रार्थनम् । तदङ्गीकारे तत्परिणययोग्यतया दक्षकन्यायाः कथनम् । १०अ० सत्या नन्दोव्रतसमाप्तौ शिवेन तस्यै स्वस्य भार्याभवनरूपवरदानम् । दक्षसमीपे स्वेन सतीविवाहार्थं शिवेन ब्रह्मणः प्रेरणम् । ब्रह्मणो दक्षं प्रति तत्प्रार्थने तेन तदङ्गीकारः । सतीविवाहार्थं ब्रह्मादिभिः सह शिवस्य दक्षनगरगतिः । ११अ० विवाहकाले सतीरूपं दृष्ट्वा ब्रह्मणो मनोविकारः । ततः संवर्त्तादिमेघादीनामुत्पत्तिः । ततो दक्षवाक्येन ब्रह्माणं प्रति शिवस्य कोपः । विष्णुना सान्त्वनम् । १२अ० अविमर्षे ब्रह्मविष्णुशिवानामभेदोक्तिः । १३अ० शिवाय विष्णुना ब्रह्माण्डसंस्थानस्य दर्शनम् । तथा रूपदर्शनेन तेषामेकत्वोक्त्या ब्रह्माणं प्रति तस्य कोपनिवृत्तिः । १४अ० शिवसतीविहारवर्णनम् । १६अ० दक्षयज्ञारम्भः । तत्र शिवसतीनिमन्त्रणाभावे सत्याः पितरं प्रति कोपः । तत्र दक्षकोपेन सत्या देहत्यागः । १७तेन क्रुद्धशिवेन वीरभद्रं रुद्रांश्च प्रति दक्षयज्ञनाशनायादेशः । तेन तद्यज्ञस्य नाशनम् । सतीविरहे शिवविलापः । १८अ० शिवस्य सतीविरहवर्णनम् । शिवरोदनाम्बुनो भूमौ पतने तन्नाशाशङ्कया देवानां शनिं प्रति तद्धारणप्रार्थने तेन तस्याङ्गीकारः । तद्धाम्नेव वैतरणीनदीप्रादुर्भावः । सतीहृतदेहस्कन्धपूर्व्वकं शिवस्य भ्रमणम् । शनिना सतीमृतदेहावयवानां क्रमशः खण्डने अङ्गभेदेन तत्तत्स्थानानां पीठत्वप्राप्तिः । क्रमशः सर्व्वसतीदेहपतने शिवस्य लिङ्गत्वप्राप्तिः । ब्रह्मणा तस्य सान्त्वनम् । १९ चन्द्रभागान्तिके शिप्रकरः शिप्रानदीसमुत्पत्तिः । चन्द्रभागानद्युत्पत्तिः । चन्द्रभागानामनिरुक्तिः । सप्तविंशतौ अश्विन्यादिषु स्त्रीषु रोहिण्यामिन्दोरनुरागे अश्विन्यादीनां चन्द्रेण विवादः । तत्र २ ३ ८ १० १२ १६ २१ २६ भरण्यादिभिर्नवभिश्चन्द्रस्य भर्त्सने सति चन्द्रस्य ताः प्रति यात्रायां सर्व्वसौहृतारूपवरदानम् । सर्व्वासां दक्षसमीपे गतिः ताभिः चन्द्रदोषाग्रहकथने दक्षेण चन्द्रं प्रति सर्व्वासु तत्समत्वोपदेशेऽपि चन्द्रेण तथानाचरणे दक्षेण राजयक्ष्माणं प्रदत्तमादौ चन्द्राभिसरणाय तस्य नियोगः । तस्य प्रवेशेन चन्द्रस्य क्षयः । चन्द्रक्षये ओषधीनामवृद्धौ यज्ञाभावात् वृष्ट्यभावेन प्रजाक्षयोक्तिः । २१ तदालोक्य दक्षसमीपे देवानां गमने तदुपदेशेन राजयक्ष्मणा शीर्णकलानां ज्योत्स्नादीनाञ्च निष्कासनम् । वृहल्लोहितानदीस्नानात् चन्द्रयक्ष्ममोक्षः । राजयक्ष्मस्थितिस्थानकथनम् । तत्पत्नीकथनम् । दक्षवाक्यानुसारेण चन्द्रमसो मासार्द्धं ह्रासवृद्धिप्रकारकथनम् । सूर्य्यबिम्बेन चन्द्रवृद्धिकथनम् । शिवेन चन्द्रस्यैककलाधारणं तत्पर ज्योत्स्नायाः क्षीणचन्द्रे प्रवेशेन चन्द्रवृद्धिकथनम् । सीतानदीप्रादुर्भावः । चन्द्रभागानामप्राप्तिवर्णनम् । निर्विण्णां सन्ध्यां प्रति विष्णुप्रसादनार्थं वशिष्ठोपदेशः । सन्ध्यां प्रति विष्णोः प्रसादे तया तस्य स्तुतिः । तस्यै तेन वरस्य दानम् । विष्णोरुपदेशात् मेधातिथियज्ञाग्नौ तस्या देहत्यागः तच्छरीरस्य विष्णोराज्ञया सूर्य्यमण्डले नयनम् । सूर्य्येण तस्य द्विधाकरणेन सन्ध्याद्वयकल्पनम् । मेधातिथियज्ञाग्नेः अरुन्धतीसमुत्थानं तन्नामनिरुक्तिः । २३अ० चन्द्रभागानदीमाहात्म्यम् अरुन्धत्या वशिष्ठेन सह विवाहः । २४अ० ब्रह्मादिभिः शिववैकल्यवारणार्थं योगनिद्रायाः स्तुतिः । विष्णुना शिवस्य सान्त्वनम् । निमेषादिपरार्द्धपर्य्यन्तकालमानोक्तिः । मन्वन्तरोक्तिः । प्रलयप्रकारः । सृष्टिप्रकारः । २५अ० सृष्टेर्विवृतिः । ब्रह्माण्डादिसंस्थानम् । २६अ० वराहकल्पे प्रतिसर्गः । २७अ० यज्ञवराहेण पृथ्वीधारणप्रकारः । २८अ० जगतोऽनित्यत्वोक्त्या तत्त्वज्ञानेन मोक्षोपदेशः । २९ शिवकथाना सत्युपत्त्यादि । ३० यज्ञवराहस्य वराहरूपया धरया सह क्रीडनेन तदनुरागात् तद्देहत्यागेऽनिच्छा । तद्देहत्यागार्थं देवैर्विष्णोः स्तवः । वराहदेहनाशार्थं शिवस्य शरभमूर्त्तिधारणम् तेन तस्य युद्धे पृथिव्या मदमादाशङ्कया रोहितमत्स्यरूपेण विष्णोराविर्भावः । तेन पृथिवीवेदमन्त्रादीनां धारणम् । शिवेन नानाविधगणानां सृष्टिः । वराहमूर्त्तेः शरभेण सह युद्धे तस्यां गतौ नरनारायणयोरुत्पत्तिः । शिवेन वराहस्य वधः । शिवगणानां स्वरूपमुक्तादि । ३१अ० मृतवराहदेहावयवेभ्यो ज्योतिष्टोमादियज्ञकल्पनम् । वराहपुत्रत्रयस्य तेनात्मरूपेणोत्पत्तिः । ३२अ० स्वायम्भुवमनुं प्रति कपिलशापः । मनोर्विष्णुदासत्वम् । तत्समीपे विष्णोर्मत्स्यरूपेणागत्य वासस्थानप्रार्थनं कुण्डपात्रादिषु तच्छरीरपर्य्यन्ते क्रमशो वर्द्धमानस्य मत्स्यदेहस्याधारस्याभावोक्तिः । ३३अ० मकुनाद्रौ तदा तेन

तदुपासनास्थानकथनम्। तत्रादौ ताराख्यायाः मुख्यत्वमुक्ता अन्यानि कामरूपादीनि तीर्थानि तत्स्थानत्वेन कथितानि शिवोपासनाप्रकारः तदुपदेशानुसारेण ताभ्यां सज्जनकस्य शिवस्याराधनम्। ताभ्यां तथाचरणे शिवेन तद्देहेन मायापत्यपदलाभवरदानम्। ५२अ० कालीपूजनार्थे शिवेन तयोर्नियोगः। ५३, ५४, ५५, ५६, ५७,अ० कालीपूजा तत्पूजास्थानविशेषोक्तिः।५८अ०कामाख्यादेः विशेषफलोक्तिः। ५९अ०तस्यास्तत्रमन्त्रादि। महिषमर्द्दिनीध्यानपूजादि। तस्याः पूजाविधिः। महिषासुरवृत्तान्तकथनम्।६०अ०देव्याः समीपे हननकाले महिषासुरवरप्रार्थना। महिषस्य पूर्व्वसृष्टौ उग्रचण्डामूर्त्त्या, पश्चात् कालीमूर्त्त्या, एतत्कल्पे दुर्गामूर्त्त्या च विनाशनोक्तिः। शिववरात् रम्भासुरात् महिष्यां महिषासुरोत्पत्तिः। शिवाराधितशिववरेण तस्यैश्वर्य्यप्राप्तिः। ६१अ० अष्टादशभुजोग्रचण्डायाः प्रादुर्भावः। तस्या एव उग्रताराख्यत्वम्। तस्याध्यानपूजापीठयन्त्रादि। कौशिकीप्रादुर्भावः तद्रूपमन्त्रादि। शिवदूतीप्रादुर्भावः तद्रूपमन्त्रपूजादि। ६२अ०कामाख्यानामनिरुक्तिः। मधुकैटभोत्पत्तितन्नामनिरुक्ती। विष्णुना तयोर्वधप्रकारः। तन्मेदसोऽलेपनेन पृथिव्याद्दृढ़ताकरणात् मेदिनीति नाम प्राप्तिः। कामाख्यातीर्थोत्पत्तिः। नीलादिपर्व्वतोत्पत्तिः। शिलारूपेण ब्रह्मादीनां तत्र स्थितिः। तत्रत्यकालकुण्डादिनानातीर्थकथनम्। ६३अ० कामाख्यामन्त्रपूजाविधिः। तत्र जयन्त्याद्येकादशमूर्त्तिपूजा-उग्रचण्डादिनवशक्तिपूजाविधा। त्रिपुराध्यानपूजाप्रकारः। ६४अ० कामेश्वरीमूर्त्तिध्यानपूजाविधा। ६५अ०शारदीयापूजाविशेषविधिः।६६अ०कामाख्याङ्गन्यासादिविधा।६७अ०बलिच्छेदनप्रकारनिरूपणम्। देव्यै दत्तबलेस्तद्गणत्वप्राप्तिः। काष्ठखड्गादीनां बलिदाने निषेधः। ६८अ० षोडशोपचाराः। तत्रासनादिषु वस्त्राभरणेषु गन्धपुष्पादौ विशेषः। ७०अ०नैवेद्यद्रव्यादि। ७१अ०प्रदक्षिणप्रणामप्रकारः। ७२अ०कामाख्याकवचम्। ७३अ०मातृकान्यासविधा।७४अ०अष्टधा योनिमुद्रास्वरूपाणि तद्दर्शनफलञ्च। मन्त्ररहस्यम्। तद्यन्त्रधारणविधा। बालात्रिपुरामन्त्ररूपपूजाविधा। त्रिपुरभैरव्याः पूजादि। ७५अ० त्रिपुरभैरव्याः पुरश्चरणहोमादिविधा। ७६अ० मन्त्रशोधनप्रकारः। तत्र सिद्धसाध्यादिचक्रयन्त्रचक्रादिकथनम्। एवं शिवोपदेशं प्राप्यवेतालभैरवयोर्वशिष्ठोपदेशेन कामाख्यातीर्थमनिलत्र पुरश्चरणादिसमाप्तौ देव्याः प्रसादे तयोर्भौतिकदेहत्यागेन देवत्वप्राप्तिः। शिवाशिवयोः सेवकत्वप्राप्तिश्च।७७अ०कामरूपस्थनन्दिकुण्डादिनानातीर्थमाहात्म्यम्। तत्र जलोदकानदीनामनिरुक्तिः। लवणोयानदीनामनिरुक्तिः अगदनदमाहात्म्यादि। जल्पीशनामनिरुक्तिमाहात्म्यादि। ७८अ० तत्रत्यशङ्करीकानदी माहात्म्यादि। ललिताख्यगिरिचन्द्रिकानदीफेनिलास्वमदनानदीमाहात्म्यादि। भद्रानदीसुभद्रानदीमानसभैरटगिरिभैरवीनदी पर्णाशानदीमाहात्म्यादि। त्रिस्रोतःकपोतकुण्डनारायणकुण्डतत्त्वाचलमाहात्म्यादि। सुरनदीक्षीरोदानीलानदीचण्डिकाचन्द्रिकानदीमाहात्म्यादि। अलराजकुण्डब्रह्मकुण्डपीठमणिकूटगिरिलौहित्यब्रह्मपुत्रादिमाहात्म्यादि। भद्रकामाचलकामहरलिङ्गपुनर्भवकुण्डहयग्रीवशिलागोकर्णशिवलिङ्गकेदारलिङ्गकमललिङ्गमाहात्म्यादि। हयग्रीवमन्त्रादि। ७९अ० तत्र मदनपर्णशरीरहरदर्पणनद्याग्निमानगिरिवरुणकुण्डकंसकरवाराहकूटाचलचन्द्रकूटाचलसोमकुण्डनन्दनाचलमत्स्यकूटाचलोर्व्वशीकुण्डमदामृतकुण्डमणिकूटमणिकर्णलिङ्गसमुद्रस्नानदीमत्स्यध्वजकुलाचलस्कन्दतानदीकामधरसरःशुक्रान्नाचलरक्षःकूटाचलपाण्डुनाथभैरवपाण्डुनाथाचलशृङ्गकुण्डनीलकूटाचलोग्रतारास्थानमाहात्म्यपूजादि। कर्णटाचलचित्राचलगजलाचलशङ्खाचलकपिलभङ्गिकानदीदमनानदीदक्षाचलाकाशगङ्गास्थावरसरोदक्षयाचलसोमकाचलकान्तानदीदिव्यकुण्डपुष्करिणीदेवलिङ्गसन्ध्याचलललितानदीमाहात्म्यादि ८० अ० दीपवतीनदीसङ्कटगिरिसिद्धलिङ्गौतोनदीवटेश्वरीदिकाभट्टारिकानदीनाटकाचलस्वरसःमरिचपादिकूर्करिकानदीवृद्धगङ्गास्वर्णनदीधीनदीविश्वनाथलिङ्गचण्डिदेवीमूर्त्तिमाहात्म्यादि। लौभाग्नानदी सितगङ्गाललितकान्ताशिलिङ्गोत्कान्ताख्योग्रतारामूर्त्तिपूजामाहात्म्यादि। ललितकान्ताविङ्गमङ्गलचण्डिकापूजाविधा तत्र स्वविष्णुमूर्त्तिभेदतत्पूजाप्रकारादि। ८१अ० कामरूपस्थतीर्थसेवनेन सर्व्वेषां निर्व्वाणादिप्राप्तौ यमेन स्वकार्य्याभावाकलने ब्रह्मादिसमीपगमनेन तन्निवारणोपायचिन्तनम्। ब्रह्मार्थितेन शिवेन कामरूपस्थतीर्थेभ्यः सर्व्वलोकोत्सारणार्थं गणैः सह उग्रताराया नियोजनम्। उग्रतारया च तत्रस्थवशिष्ठोत्सारणे कृते वशिष्ठेन तां प्रति म्लेच्छाद्युपास्यतावामभावोपास्यतादिरूपशापदानम्; कामरूपस्य म्लेच्छाक्रान्तत्वशापदानम् कामाख्यातारागमयोश्च विरलत्वादिशापदानम्। तेन शापेन उग्रतारा वशिष्ठागतागमाश्च

म्लेच्छतां माया वस्ततारोऽपि तदवधि यामनामेरता शिवस्य म्लेच्छतातिलदवधि जाता पश्चिमायाश्च तत्तस्थम्लेतीर्थगुप्तिः लौहित्यनामस्य तत्तमाहात्म्यप्रसिद्धिः। ८२अ० लौहित्योत्पत्तितन्माहात्म्यादि। जामदग्न्योपाख्यानम्। ८३अ० तत्कृतमातृवधपापनिर्मोचनेन लौहित्यप्रशंसा। पूर्वकल्पेऽनुजकथायाहरयोर्भृङ्गिमहाकालरूपगणत्वप्राप्तिकथा। ८४अ० राजनीतिकथनम् दुर्गादिकरणप्रकारः ८५अ०। प्रजासु राजाहत्तिप्रकारः। नृपकर्त्तव्यदुर्गापूजादिविशेषकालाः। तत्पूजाप्रकारः नीराजनप्रकारः।८६ अ० पुष्याभिषेकप्रकारः ८७अ० शक्रध्वजोत्थानविधिः। ८८ दशहरायां विष्णोरिष्टिप्रकारः। श्रीपञ्चम्यां लक्ष्मीपूजाविधिः वृद्धश्रद्धकाचारविशेषाः। द्वादशविधपुत्रविधिः। दत्तकादीनां पञ्चीवा संस्कारकरणे पुत्रत्वप्राप्तिः। पितृगोत्रेण संस्कारे स्वकीयः पुत्रत्वाभावः। पञ्चीश्गोत्रेण चूडादिसंस्काराभावे दासत्वम्, पञ्चमवर्षादूर्द्धं ग्रहणे न पुत्रत्वसिद्धिः। पञ्चमवर्षे ग्रहणे तत्र पुत्रेष्टिविधानम्। दाक्षीपत्ये विशेषः। शूद्रायां पुराणादिवाचनेऽनधिकारः। वर्ज्यपुरोहितलक्षणम्। विविध नृपकर्त्तव्याचारभेदः। आयुष्कामस्य कर्त्तव्याचारः ८९अ०। अपुत्रस्य गतिर्नास्तीति नन्दिनउपदेशात् वेतालभैरवयोः पुत्रोत्पादनाभिलाषे जाते भैरवस्य उर्वश्याः सङ्गमे सुरेशनामपुत्रोत्पत्तिः। तपसा तस्य विद्याधराधिपत्यप्राप्तिः। तस्य घृतराष्ट्रकन्यायां देवसेननामपुत्रोत्पत्तिः। ततः देवसेनादिवंशवर्णनम्। तद्वंश्यविजयेन काममहानस्य निर्म्माणम्। अर्ज्जुनेन वह्निप्रीत्यर्थं तस्य दाहनम्। ९०अ० वेतालस्य कामधेनौ वृषभरूपपुत्रोत्पादनम्। तस्य भङ्गनाम्ना भृङ्गिणेन शिववाहनताप्राप्तिः। तस्य वंशवर्णनम्। वेतालवंशोद्भवा इव सर्वे गावः। उक्तिः ततउपसंहारः"। इत्येते प्रधानभूताः पदार्थास्तत्रत्याः प्रसङ्गागतास्त्वन्येऽपि पदार्था अभिधेयाः सन्ति विस्तरभयान्नोक्ताः

अत्रेदं चिन्त्यते ८९,९०अ०वेतालभैरवयोर्विभिन्नवंशकथने स्थिते दत्तकचन्द्रिकादौ भैरवपुत्रस्यैव वेतालेन ग्रहणप्रायणपुत्रकरणप्रतिपादकवाक्यानि यान्युद्धृतानि तानि निर्मूलानीत्यवगम्यते। पितृगोत्रेणेत्यादिवचनानां तत्र या निर्मूलत्वाशङ्का कृता सापि कालिकापुराणादर्शनमूलिकैव ८८अ० तद्वचनानां प्रत्यक्षत उपलभ्यमानत्वात् इति। कालीपुराणमपत्र न०।

**कालिकाव्रत** न० कालिकायाः प्रीत्यर्थं व्रतम्। पुराणोक्ते व्रतभेदे

"शच्युवाच। "विधानं चास्य मे ब्रूहि कालिकाया व्रतस्य च। यथोपदिष्टतामेव तद्व्रतञ्च करोम्यहम्। तस्मात्तद्वचनं श्रुत्वा प्रत्युवाचाथ सा तदा। शुक्लादौ समारभ्य कृष्णपक्षे चतुर्द्दशीम्। संकल्प्य विधिना पूर्वं समापास्यां व्रतं चरेत्। समारभ्य तृतीयेन द्विगुणं परिशोधयेत्। न रात्रौ भोजनं कार्यं यामहस्ते भुजिक्रिया। सिद्धमन्नं रात्रिकाले दग्धमीनञ्च सर्वदा। वर्ज्जयेत् पिष्टकं किञ्चित् रक्तशाकञ्च चाम्लकम्। हिण्टिकां विप्रजायाञ्च सधवां भोजयेत्ततः। एवं क्रमेण कृत्वा तु कतिकालं नयेद्व्रतम्। ततः शुद्धदिने प्राप्ते भौमाहे मन्दवासरे। यथाशक्त्युपचारैश्च पूजां कुर्य्याद्विधानतः। तथापराह्णकाले तु सन्ध्योपसमये तथा। रात्रौ तु कदलीकाण्डे स्वच्छं निर्माय प्राङ्गणे। तस्य मध्ये समारोप्य कालिकां पूजयेत् सदा। पाद्यार्घ्याचमनीयैश्च गन्धपुष्पादिभिस्तथा। धूपैर्दीपैश्च नैवेद्यैर्विविधैस्तथा। पिष्टकं चैव मिष्टान्नं व्यञ्जनं दग्धमीनकम्। निवेद्य सकलं देवैत्र बलिं दत्त्वा प्रणम्य च। तदर्द्धं व्यञ्जनं सर्वं नैवेद्यादि बलिं तथा। महारण्ये प्रदातव्यं कर्त्तव्यं व्रतमुत्तमम्। वैशाखे कदलीमूले वा कुर्यात् कालिकाव्रतम्। कार्य्यसिद्धिर्भवेत् तस्य भविता गतिरुत्तमा"।

**कालिकाश्रम** न० इत०। भारतवर्षस्थे विपाशानदीतीरस्थे तीर्थभेदे "कालिकाश्रममासाद्य विपाशायां कृतोदकः। ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात्" भा०आनु० २५अ०।

**कालिङ्ग** न० केन जलेनालिङ्ग्यते आ+लिगि—कर्मणि घञ् इत०। (तरमुज) मध्यस्थजलके फलभेदे। "कालिन्दं कृष्णबीजं स्यात् कालिङ्गं च सुवर्त्तुलम्। कालिङ्गं ग्राहि हृत्पित्तशुक्रघ्नं शीतलं गुरु। पक्वं तु सौम्यं सक्षारं पित्तलं कफवातजित्" भावप्र० तत्पर्य्यायस्वरूपगुणादिकमुक्तम्। "कलिङ्गे भवः अण्। २कलिङ्गदेशोद्भवे त्रि० स्त्रियां ङीप्। तद्देशानां राजा अण्। ३कलिङ्गदेशनृपे। "प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः" रघुः। "दौरात्म्याद्यैः क्रूरपक्षपीडितैः क्रमेण नृपाः। पाकलोमागधिकः कालिङ्गश्च चयं यान्ति" वृहत्सं०। "निर्जित्य कालिङ्गं गान्धाराधिपतिं तथा" हरि०

पद्यमितस्य "अस्त्युत्तरस्याम्" इत्यादि सप्तदशसर्गात्मकं कुमारसम्भवाख्यं महाकाव्यम्, कश्चिदिति द्वितीयं पदमितस्य "कश्चित् कान्ताविरहगुरुणा" इत्यादिकं मेघदूताख्यं खण्डकाव्यम्, "वाग्विशेषः" इति तृतीये पदे तदेकदेशं वागिति पदमितस्य "वागर्थाविव संपृक्तौ" इत्यादिकमूनविंशतिसर्गात्मकं रघुवंशाख्यं महाकाव्यञ्च तेन क्रमशो रचितम्। तद्रचनया च कालिदासः सर्वत्र प्रथितसुकवितया प्रख्यातिमुपलभ्य क्रमेण विक्रमादित्यस्य सभासद्ताम् आससादेति।

मालविकाग्निमित्रस्य तत्कृतत्वविषये केचित् सन्दिहाना एवमाहुः। कालिदासाह्वयास्त्रयः कवय आसन् तत्र एको विक्रमादित्यसभ्यः, अपरो भोजदेवसभ्यः अपरो भामिनीविलासकर्त्ता जगन्नाथमिश्रः अभिनवकालिदासाख्यः। तेषां मध्ये प्राचीनकालिदासस्य नैषा कृतिः शाकुन्तलस्येव तत्र वागर्थदर्शी विरहादिलक्ष्यस्यैवा कृतिरिति। तत्र मालविकाग्निमित्रस्य प्राचीनकालिदासकृतित्वाभावे तदीयसन्दर्भस्य भोजदेवपितृव्यसभासद्धनिकेन दशरूपके कथनतो मालविकाग्निमित्रनामत्वेन समुद्धारः सङ्गच्छते। भोजदेवात्तस्य प्राचीनत्वे एव तदुद्धारः सङ्गच्छते नान्यथा भोजदेवेन च सरस्वतीकण्ठाभरणे ग्रन्थनामादत्त्वैव मालविकाग्निमित्रनाटकपद्यस्य समुद्धाराच्च तद्ग्रन्थस्य ततः प्राचीनकालिदासकृतित्वम् नान्यकृतितेति निर्णेतव्यम्। किञ्च श्रीहर्षदेवनृपतेः सभ्यस्य रत्नावल्यादिकारकस्य धावकस्यैव ततः प्राचीननाटककर्त्तृत्वेन तद्ग्रन्थोपोद्घाते तस्य नामोक्तेः स्यात् प्राचीनस्यैव कालिदासस्य तत्कर्त्तृत्वं युक्तम्। भोजदेवसभ्यकालिदासस्य तत्कर्त्तृत्वे ततः प्राचीनानितानयकुलत्वादिकर्त्तृनामकीर्त्तनस्यैवोचितत्वेन किञ्चिति तदुपेक्षातिविप्रकृष्टधावकादिनामोत्कीर्त्तनम्? सन्निकृष्टं परित्यज्य विप्रकृष्टग्रहणस्यान्याय्यत्वात्। प्राचीनकालिदासस्य मालविकाग्निग्रन्थकर्त्तृत्वे तथा प्राचीनत्वेन प्रथितयशस्त्वेन च तन्नामोक्तेः सर्वथोचितत्वात्। भोजदेवसभ्यकालिदासश्च भोजदेवकालिकः तदेतत् भोजप्रबन्धे वर्णितं यथा "भवद्धाम्ना कान्तराणि सौभाग्यालङ्कृतानि कस्य वा देशस्य सर्वहिरङ्गः सुजनान् बाधत इति। ततः कविर्लिखति राजीहस्ते कालिदास इति राजा वाचयित्वा पादयोः पतति ततस्तत्वासीनयोः कालिदासभोजराजयोरासीत् सख्या"। "यस्याश्चोरश्चिकुरनिकरः कालिदासो विलासः" प्रसन्नरा०। "उपमा कालिदासस्य भारवेरर्थगौरवम्। नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः"। "कालिदासकविता नवं वयः" इति च उद्भटः। स्वार्थे क तत्रैव।

**कालिन्** पु० कालः कालरूपः खड्गोऽस्त्यस्य इनि। परानन्दमतसिद्धे परमेश्वरे "कालिन्! कलिमलध्वंसिन्! ध्वंसयाशु मदापदः" इति तन्त्रे ईश्वरप्रार्थनम्। कालयति कल—नोदने णिनि। २ प्रेरके त्रि० स्त्रियां ङीप्।

**कालिनी** स्त्री कालः शिवः अधिष्ठातृत्वेनास्त्यस्याः कालः पुरुषाकारः गगनस्थः पुरुषः अस्त्यस्याः सन्निकटत्वेन वा, इनि ङीप्। आर्द्रानक्षत्रे हेमच० तस्याः तद्देवतत्वं च अश्लेषाशब्दे ४९८पृ० दर्शितम् कालरूपस्य मृगशिरो मूर्द्धदेशस्थितनक्षत्रस्थानत्वात्तस्यास्तथात्वम्

**कालिन्द** न० कालिं जलराशिं ददाति दा—क पृषो० मुम्। (तरमुज) ख्याते जलप्रधानफलके वृक्षे भावप्र० कालिङ्गशब्दे विवृतिः। स्वार्थे क। कालिन्दक तत्रार्थे न० राजनि०। कलिन्दे भवः अण्। कलिन्दपर्व्वतभवे त्रि० स्त्रियां ङीप्

**कालिन्दी** स्त्री कलिन्दे पर्व्वते तत्सन्निकृष्टदेशे वा भवः अण् ङीप्। यमुनानद्याम् अमरः। "कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी" रसगङ्गाधरे तस्याः कलिन्दपर्व्वतसुतत्वोक्तेस्तथात्वम्। "कालिन्दीजलजनितश्रियं श्रयन्ते" माघः। २रक्तत्रिवृति (लालतेओडी) वृक्षे राजनि०।

**कालिन्दीकर्षण** न० कालिन्दीं यमुनां कर्षति कृष—ल्यु ६त०। बलदेवे तत्कर्षणकथा च हरि०१०२अ० यथा "स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः। गैरिकीतुलियामास यथा खेदालयः शशी। रामस्तु यमुनामाह स्नातुमिच्छे महानदि!। एहि मामभिगच्छ त्वं रूपिणी सागराङ्गने। सङ्कर्षणस्य मत्तोक्तां भारतीं परिभूय सा। नाभ्यवर्त्तत तं देशं स्त्रीस्वभावेन मोहिता। ततश्चुक्रोध हलभृद्रामो मदसमीरितः। चकार स हलं हस्ते कर्षणावोन्मुखं बली। तस्याश्चोपरि मेदिन्यां पेतुस्तामरसस्रजः। सुस्रुवुः पुष्पकोषैश्च पुष्करेष्वरवं जलम्। स हलेनानताग्रेण कूले गृह्य महानदीम्। चकर्ष यमुनां रामो व्युत्थितां वनितामिव। सा विह्वलजलस्रोता ह्रदप्रस्थितसञ्चया। व्यावर्त्तत नदी भीता हलमार्गानुसारिणी। लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी। सङ्कर्षणभयत्रस्ता योषेवाकुलतां गता। पुलिनश्रोणिबिम्बौष्ठी मर्द्दितस्तोयताडितैः। फेनमेखलसूत्रैश्च छिन्नैस्तीरानुसारिणी। तरङ्गविषमापीडा चक्रवाकोन्मुखस्तनी।

वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा। सितहंसेक्षणापाङ्गी फेनक्षौमाञ्चिताम्बरा। तीरजोद्धृतकेशान्ता जलस्खलितगामिनी। लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागराङ्गना। मत्तेव कुटिलापाङ्गी राजमार्गेण गच्छति। कृष्यते सा स वेगेन स्रोतःस्खलितगामिनी। उन्मार्गानीतमार्गा सा येन वृन्दावनं वनम्। वृन्दावनस्य मध्येन सा नीता यमुना नदी। रोरूयमाणेव खरैरन्विता तोयवासिभिः। सा यदा समनुक्रान्ता नदी वृन्दावनं वनम्। तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत्। प्रसीद नाथ! भीताऽस्मि प्रतिलोमेन कर्म्मणा। विपरीतमिदं रूपं तोयस्य मम जायते। असत्याहं नदीमध्ये रौहिणेय! त्वया कृता। कर्षणेन महाबाहो! स्वमार्गव्यभिचारिणी। प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्व्विताः। फेनहासैर्हसिष्यन्ति तोयव्याहत्तगामिनीम्। प्रसादं कुरु मे वीर! याचे त्वां कृष्णपूर्व्वज!। सुप्रसन्नमना नित्यं भवस्व त्वं सुरोत्तम!। कर्षणायुधकृष्टाऽस्मि रोषोऽयं विनिवर्त्त्यताम्। गच्छामि चरणौ मूर्द्ध्ना तवाहं लाङ्गलायुध!। मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज!"। "प्रणामावनतां दृष्ट्वा यमुनां लाङ्गलायुधः। प्रत्युवाचार्णववधूं मदक्लान्तमिदं वचः। लाङ्गलादिष्टमार्गा त्वमिमं मे प्रियदर्शने!। देशमम्बुप्रदानेन प्लावयस्वाखिलं शुभे!। एष ते सुभ्रु! सन्देशः कथितः सागराङ्गने!। शान्तिं व्रज महाभागे! गम्यतां च यथासुखम्। लोका हि यावत् स्थास्यन्ति तावत् तिष्ठतु मे यशः। यमुनाकर्षणं दृष्ट्वा सर्व्वे ते व्रजवासिनः"। कालिन्दीं भिनत्ति भिद–ल्यु ६त०। कालिन्दीभेदनोऽप्यत्र अमरः। [सूर्य्यपत्न्यां संज्ञायाम्।

**कालिन्दीसू** स्त्री कालिन्दीं यमुनां सूते सू–क्विप् ६त०।

**कालिन्दीसोदर** ६त०। यमे हेमच० तत्कथा अर-णात्मजशब्दे २१८९० दृश्या

**कालिमन्** पु० कालस्य भावः इमनिच्। कृष्णवर्णे "म्लानमानमतिकालिमालया" माघः।

**कालिम्मन्या** स्त्री आत्मानं कालीं मन्यते मन्–खश्–मुम् ह्रस्वः। आत्मानं कृष्णतया मन्यमानायाम् स्त्रियाम्।

**कालिय** पु० के जले आलीयते आ+ली–मूलविभुजा० क। नागभेदे कालियदमनशब्दे विवृतिः। "तस्तेन तार्क्ष्यात् किल कालियेन मणिं विसृष्टं यमुनौकसा यः" रघुः। "बोधासि कालियकुला यमस्येव स्वसा स्वयम्" माघः "कालियं तक्षकञ्चैव पिङ्गलं मणिभद्रकम्" ति० त०गरु० पु०। गरुडभिया यमुनाह्रदजले निलीनत्वात्तस्य तथात्वम्।

**कालियदमन** पु० कालियं दमयति दम–णिच्–ल्यु। वासुदेवे कृष्णे तत्कथा भाग० १०,१६ अ० यथा "कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना। श्रप्यमाणपया, यस्मिन् पतन्त्युपरिगाः खगाः। विप्रुष्मता विषोदोर्म्मिमारुतेनाभिमर्षिताः। म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः। तं चण्डवेगविषवीर्य्यमवेक्ष्य तेन दुष्टां नदीञ्च खलसंयमनावतारः। कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गादास्फोट्य गाढरशनो न्यपतद्विषोदे। सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः। पर्य्यक् प्लुतो विषकषायितभीषणोर्म्मिर्धावन्! धनुःशतमनन्तबलस्य किन्तु। तस्मिन् ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग! वरवारणविक्रमस्य। आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः। तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम्। क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं संदश्य मर्म्मसु रुषा भुजगश्चछाद। तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः। कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः। गावो वृषा वत्सतर्य्यः क्रन्दमानाः सुदुःखिताः। कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे" इत्थं गोपादीनामाकुलतामुपवर्ण्य "इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः। आज्ञाय मर्त्यपदवीमनुवर्त्तमानः स्थित्वा मुहूर्त्तमुदतिष्ठदुरङ्गबन्धात्। तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः। तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः। तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम्। क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः। एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वधिरूढ आद्यः। तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त्त। तं नर्त्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्व्वसिद्धमुनिचारणदेववध्वः। प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः। यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द्द खरदण्डधरोऽङ्घ्रिपातैः।

क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो वमन् परमकश्मलमाप नागः । तस्याक्षिभिर्गरलमुद्वमतः शिरःसु यद्यत् समुन्नमति निःश्वसतो रुषोच्चैः । नृत्यन् पदानुनमयन् दमयाम्बभूव पुष्पैः प्रपूजित इवेह पुमान् पुराणः" कालियदमनादयोऽप्यत्र भावे ल्युट् ६त०। कालियस्य २मर्द्दने न०

**कालियह्रद** पु० ६त० । कालियनागाधिष्ठिते वृन्दावनस्य यमुनान्तर्गते ह्रदभेदे कालियदमनशब्दे विवृतिः । तस्य कालियस्य तत्रावस्थानकथा भाग० १०, १७ अ० यथा "नागालयं रमणकं कथं तत्याज कालियः । कृतं वा किं सुपर्णस्य तेनैकेनासमञ्जसम् । बादरायणिरुवाच । उपहार्य्यैः सर्पजनैर्मासि मासीह यो बलिः । वानस्पत्यो महाबाहो! नागानां प्राङ्निरूपितः । स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि । गोपीथायात्मनः सर्वे सुपर्णाय महात्मने । विषवीर्य्यमदाविष्टः काद्रवेयस्तु कालियः । कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् । तत् श्रुत्वा कुपितो राजन्! भगवान् भगवत्प्रियः । विजिघांसुर्महावेगः कालियं समुपाद्रवत् । तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः । दद्भिः सुपर्णं व्यदशद्दद्‌आयुधः करालजिह्वोच्छ्वसितोग्रलोचनः । तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनः । पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रोः सुतमुग्रविक्रमः । सुपर्णपक्षाभिहतः कालियोऽतीवविह्वलः । ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् । तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् । निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् । मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ हते । कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् । अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति । सद्यः प्राणैर्वियुज्येत सत्यमेतद्‌ब्रवीम्यहम् । तत् कालियः परं वेद नान्यः कश्चन लेलिहः । अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः" ।

**काली** स्त्री कालस्य शिवस्य पत्नी ङीष् । १ शिवपत्न्याम् । "ऊर्द्ध्वरेता भवः कालः इति" भाग० ३,८,२ शिवस्य कालनामतोक्तेस्तस्यास्तथात्वम् । कालवर्णा स्त्री "कालाद्वर्णे चेत्" वार्त्ति० ङीप् । २कृष्णवर्णायां स्त्रियाम् "का काली का मधुरा" विदग्धमु० ३हिमालयदुहितरि उमायां तस्याश्च जन्मतः नीलाञ्जननिभवर्णतया तथात्वम् । "सुतामनुज्ञामाप्य गतां कालीं हरात्मजम्" । "तां तत्र कालीं तनयाम् भयशोकाकुलाशयाम्" कालि० पु० ४० अ० । "कालि! भिन्नाञ्जनश्यामे! शर्वस्याद्यप्ररोमणि:" । "गौरत्वाशादनत्वैव कालिकायास्तथा श्रुतम्" इति च तत्र तस्यागौरत्वप्राप्तिकथनम् । ४दुर्गामूर्त्तिभेदे "काली करालवदना विनिष्क्रान्तासिपाशिनी । विचित्रखट्वाङ्गधरा नरमालाविभूषणा । द्वीपिचर्म्मपरीधाना शुष्कमांसातिभैरवा" इत्यादि देवीमा० तदाविर्भाव उक्तः । सा च बहुविधा सिद्धकाली महाकाली गुह्यकाली दक्षिणाकाली भद्रकाली श्मशानकाली रक्षाकाली तिभेदात् तथा अन्येऽपि तद्भेदा भैरवत० दर्शिता यथा "काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी । विप्रचित्ता तथोग्रोग्रप्रभा नीलघनत्विषः । नीला घना बलाका च मात्रा मुद्रा मिता तथा । एताः सर्वाः खड्गधरा मुण्डमालाविभूषिताः" । "कालि! कालि महाकालि! सीधुमांसपशुप्रिये" भा० वि० ४,अ० । ५ मातृभेदे "काली कपालाभरणा चकासे" कुमा० ६ भीमसेनस्य पत्नीभेदे । "युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः । भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः" भाग० ९,२२,२४ । भा०आ०९५अ० तु "भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्य्यशुल्कां, तस्यां पुत्रं सर्वगमुत्पादयामास" इत्युक्तं तदैकवाक्यात् काश्यामित्येव पाठः समुचितः गन्धकालीशब्दे पूर्वपदलोपः । काली० दासकन्यायां गन्धकाल्यां सत्यवत्याम् शान्तनुपत्न्याम् । "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् गन्धकालीमिति यामाहुः" भा० आ० ९५अ० । ७कल-नोदने अच् गौरा० ङीष् । [illegible] १०रात्रौ । ११कालाञ्जन्याम् राजनि० १२नद्याः कृष्णत्वात्तथात्वम् अग्निशिखाभेदे जटाधरः । अग्निजिह्वाशब्दे दर्शितशारदातिलकवाक्ये एतस्याः तन्त्रोक्तत्वात् तान्त्रिकीर इति चिन्त्यम् । १३वृश्चिकाली (बिछाति) रत्नमाला । १४कालरात्रौ यमभगिन्याम् तन्त्रोक्तासु दशमहाविद्यासु आद्यायां १५महाविद्यायाम् ताश्च "काली तारा महाविद्या षोडशी भुवनेश्वरी, भैरवी छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः" तन्त्रसा० "कालीपूजा श्रुता नाथ! भावाश्च विविधाः प्रभो!" भैरवत० "तारायाश्चैव काल्याश्च त्रिपुरायाश्च विशेषतः । जनने मरणे चैव न त्यजेयुर्जपार्च्चने" तन्त्र०

**कालीक** पुंस्त्री० के जलेऽलीकरूप मनुष्यघातक निर्ये-

त्वात्। क्रौञ्चे पक्षे शब्दरत्ना० स्त्रियां ङीष्।

**कालीची** स्त्री काल्या यमभगिन्या चीयते उप-चो-आ० आधारे ड गौरा० ङीष्। यमविचारभूमौ त्रिका०।

**कालीतनय** पुंस्त्री० कालीमितः प्राप्तोनयः प्रापणं यस्य। महिषे हेमच० स्त्रियां ङीष्। महिषस्य काल्यै बलिदानार्थं नीयमानत्वात्तथात्वम्। [चन्दने शब्दच०।

**कालीय** न० कालस्थाने भवम् "वृद्धाच्छः" पा० छ। कृष्ण-

**कालीयक** न० कालीयमिव कायति-कै-क। कालानुसार्य्ये सुगन्धिकाष्ठे (कलम्बक) अमरः।

**कालेय** पु०कालयाअपत्यम् ढक्। १दैत्यभेदे, कालकेये, कलायै १७८६पृ०दर्शितरक्तधारिण्यै हितं ढक्। २यकृति कं सुखमालेयमादेयं यस्मात्। ३कालचन्दने न०"आग्यानकालेयकृताङ्गरागाम्" कुमा०। कलिना दृष्टं साम ढक्। ४कलिदृष्टे सामभेदे तञ्च माध्यन्दिनसवने सप्तमं सूक्तमभिव्याप्य गेयम्। तत्प्रकार ऊहगाने दृश्यः

**कालेयक** पुंस्त्री० कलये विरोधाय साधु कलि+ढक् संज्ञायां क। १कुक्कुरे तस्यान्योन्यविरोधित्वात् तथात्वम् स्त्रियां ङीष्। कालेय+स्वार्थे संज्ञायां वा क। २कालीयचन्दने "मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु" काद०। ३हरिद्रायां पु० ४दारुहरिद्रायां न०राजनि०। तत्रार्थे पु० शब्दर०।

**कालेश** पु० ६त०। १सूर्ये तस्य स्वगत्या कालप्रवर्त्तकत्वात् तथात्वम्। २शिवे च। ३मकारवर्णे। "विष्णुरोगस्ततोहान्तः कालेशः दण्डी ततः" वीजविद्यामन्त्रोद्धारे "कालेशोमकारः" तन्त्रसा०। कालेश्वरादयोऽप्यत्र।

**कालोदक** न० भारतप्रसिद्धे तीर्थभेदे। "कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम्" भा० आनु०२५अ०।

**काल्प** पु० कल्पे विधौ भवः अण्। (काँचाहलुद) कर्चुरे शब्दर०। स्वार्थे क। तत्रार्थे अमरः।

**काल्पनिक** त्रि०कल्पनायाः आगतः ठञ्। कल्पनाभवे १कल्पिते, २ आरोपिते, च। स्त्रियां ङीप्। "इति व्युत्पत्तिस्तु काल्पनिकी" त्रि०त०।

**काल्पसूत्र** त्रि० कल्पसूत्रं वेत्त्यधीते वा सूत्रान्तत्वात् ठकि प्राप्ते "अकल्पादेः" इत्युक्तेः अण्। १कल्पसूत्राभिज्ञे २तदध्येतरि च स्त्रियां ङीप्। [सिद्धान्तकौ०।

**काल्पिक** त्रि० कल्पग्रन्थे उक्तः ठञ्। वेदाङ्गकल्पग्रन्थोक्ते

**काल्य** न० कल्यमेव स्वार्थे ष्यञ्। १प्रत्यूषे हेमच०। कालः-प्राप्तोऽस्य यत्। २प्राप्तकाले गीतादौ त्रि०। काले भवः दिगा० यत्। ३कालभवे त्रि० तदन्तसमासे कर्म्मधारये उत्तरपदस्य आद्युदात्तता। तर्गानह्रा० पाठान्तरे गोत्रे फक्। काल्यायन काल्यगोत्रापत्ये पु० स्त्री। [शब्दर०।

**काल्यक** न० काले साधु यत् स्वार्थे क। कर्चुरे(काँचाहलुद)

**काल्या** स्त्री कालः गर्भग्रहणकालः प्राप्तोऽस्याः यत्। प्राप्तगर्भग्रहणयोग्यकालायाम् ऋतुमत्याम् अमरः "उपसर्य्या काल्याप्रजने" पा०। [भावे।

**काल्याणक** न० कल्याणस्य भावः मनोज्ञा० वुञ्। कल्याण-

**काव** न० कविर्देवताऽस्य अण्। कविदेवताके सामभेदे। तच्च तृतीयसवने गेयार्भवपवमानान्तर्गतम्। "आभीप्रिया-णीति" सूक्ते गेयम्। तत्प्रकारश्च ऊहगाने दर्शितः।

**कावचिक** न० कवचिनां समूहः "ठञ् कवचिनश्च" पा० ठञ् 'इनोलोपः। वर्म्मधारिणां समूहे।

**कावट** पु० कर्वट+पृषो०। कर्वटे हला०।

**कावषेय** पु० यजुर्वेदवंशान्तर्गते तुराख्ये ऋषिभेदे। "कावषेयात्तु कावषेयः" शत० १०,६,५,९, तुरोह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकीर्ष" तत्रैव ९.५.२,१५.

**कावाद** पु० कुत्सितईषद्वा वादः कोः का। वाक्कलहे शब्दाच०। [शैवाले तृणादिस्थले त्रिका०।

**कावार** न० कं जलमावृणोति आ+वृ-अण् उप०स०।

**कावी** स्त्री कवेरियं ष्यञ् ततः शार्ङ्गर० स्त्रियां ङीप् यलोपः। कविसम्बन्धिन्याम् स्त्रियाम्।

**कावृक** पुंस्त्री कुत्सितः ईषद्वा वृक इव। १ कुक्कुटे २चक्रवाके ३पीतवर्णमस्तकपक्षिभेदे च मेदि०तेषां वृकवत्स्वेच्छादिकयुक्तत्वात् तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**कावेर** न० कस्य सूर्य्यस्येव ईषत्वेरमङ्गमस्य। १ कुङ्कुमे जटा०। तस्य शिखाभिः सूर्य्यतुल्यरक्तत्वात् तथात्वम्।

**कावेरी** स्त्री कस्य जलस्य वेरं शरीरं तस्येदमित्यण् ङीप्। १सरिद्भेदे। कुत्सितमपवित्रं वेरं यस्याः स्वाङ्गत्वात् ङीप्। २वेश्यायाम् शब्द०। ३ हरिद्रायाम्। "दृषद्वती च कावेरी वङ्क्षुर्मन्दाकिनी तथा" भा०आनु०१६५अ०। "भारतीसुप्रतोया च कावेरी कुर्म्मुरा तथा" भा०प०२२१। "चन्द्रवसा ताम्रपर्णी अवटोदा कृतमाला-वैहायसी कावेरी वेणीत्यादि भाग० ५.१९.१८. भारतवर्षनदीकथने। सा च सह्याद्रेः मलयाद्रेश्च सानुप्रविष्टस्था तदेतत् रघौ वर्णितम् यथा

"गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः। श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम्। ततो वेलातटेनैव फल-

यज्ञांस्ततः पश्च विश्वनाथं ततोव्रजेत्। ततो मौनं विसृज्याथ मन्त्रमेतमुदीरयेत्। अन्तर्गृहस्य यात्रेयं यथावद्या कृता मया। न्यूनातिरिक्तया शम्भुः प्रीयतामनया विभुः। इमं मन्त्रं समुच्चार्य्य क्षणं वै मुक्तिमण्डपे। विश्रम्य यायाद्भवनं निष्पापः पुण्यवान्नरः। संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्व्वतः। काश्यां यात्रा प्रयत्नेन महापुण्यसमृद्धये। नवम्यां पञ्चदश्यां च कुलस्तम्भं समर्च्चयेत्। दुःखरूपिशाचत्वे न लभेद्यस्य पूजनात्। अद्यापूर्व्वमियं यात्रा कर्त्तव्या तीर्थवासिभिः। सर्व्वस्यापि विशेषेण काश्यां यात्रा च सर्व्वतः। न वन्ध्यं दिवसं कुर्य्याद्विना यात्रां कश्चित् कृती। यात्राद्वयं प्रयत्नेन कर्त्तव्यं प्रतिवासरम्। आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुः स्वयम्। यस्य वन्ध्यं दिनं यातं काश्यां निवसतः सतः। निराशाः पितरस्तस्य तस्मिन्नेव दिनेऽभवन्। स दष्टः कालसर्पेण स दृष्टो मृत्युनास्फुटम्। स मुष्टस्तद्दिवसे विश्वेशो यत्र नेक्षितः। सर्व्वतीर्थेषु सस्नौ स सर्व्वयात्रां व्यधात् स च। मणिकर्ण्यां तु यः स्नातो यो विश्वेशं निरैक्षत। सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः। इयग्रीविश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका"।

**काशीरहस्य** न० काश्या रहस्यम्। १काशीस्थैः कर्त्तव्याचारभेदे २तन्माहात्म्यप्रकाशने तत्र काशीख० दर्शितं यथा "येषां हृदि सदैवास्ते काशी त्वाशीविषाङ्गदः (शिवः) संसाराशीविषविषं न तेषां प्रभवेत् क्वचित्। गर्भरक्षामणिर्म्मन्त्रः काशीवर्ण्णद्वयात्मकः। यस्य कण्ठे सदा तिष्ठेत्तस्याकुशलभीः कुतः। सुधां पिबति योनित्यं काशीवर्णद्वयात्मिकाम्। स नैर्ज्जरीं दशां हित्वा सुधैव परिजायते। श्रुतं कर्णामृतं येन काशीत्यक्षरयुग्मकम्। न समाकर्णयत्येव स पुनर्गर्भजां कथाम्। काशीरजोऽपि यन्मूर्द्ध्नि पतेदनिलाहृतम्। चन्द्रशेखरतन्मूर्द्धा भवेच्चन्द्रकलाङ्कितः। प्रसङ्गतोऽपि यैर्वीक्षपथमानन्दकाननम्। यातं, तेऽत्र न जायन्ते नेक्षेरन् पितृकाननम्। गच्छता तिष्ठता वापि स्वपता जाग्रता च वा। काशीत्येष महामन्त्रो येन जप्तः स निर्भयः। येन बीजाक्षरयुगं काशीति हृदि धारितम्। अबीजानि भवन्त्येव कर्म्मबीजानि तस्य वै। काशी काशीति काशीति जपतोवस्य संस्थितिः। अन्यत्रापि सतस्तस्य पुरो मुक्तिः प्रकाशते। क्षेममूर्त्तिरियं काशी क्षेममूर्त्तिमयो भवः। क्षेममूर्त्तिस्त्रिपथगा नान्यत् क्षेमत्रयं क्वचित्। ब्राह्मणानामिति वचः क्षेत्रभक्तिविवृंहितम्। निशम्य गिरिजाकान्तस्तुतोष नितरां हरः। प्रोवाच च प्रसन्नात्मा धन्या यूयं द्विजर्षभाः!। येषामिदृशी भक्तिर्मम क्षेत्रेऽतिपावने। जाने सत्वमया जाताः क्षेत्रस्यास्य निषेवणात्। नीरजस्का वितमसः संसारार्णवपारगाः। वाराणस्यास्तु ये भक्तास्ते भक्ता मम निश्चितम्। जीवन्मुक्ता हि ते नूनं मोक्षलक्ष्म्या कटाक्षिताः। येन काशीस्थितो जन्तुरल्पकोऽपि विरोधितः। तेन विश्वम्भरा सर्व्वा मया सह विरोधिता। वाराणस्यास्तु नामापि यो निशम्यानुमोदते। अपि ब्रह्माण्डमखिलं ध्रुवन्तेनानुमोदितम्। निवसन्ति हि ये मर्त्या अविमुक्तानन्दकानने। ममान्तःकरणे ते वै निवसेयुरकल्मषाः। निवसन्ति मम क्षेत्रे मम भक्तिं न-कुर्व्वते। मम लिङ्गधरा ये नो, न तानुपदिशाम्यहम्। काशी निर्व्वाणनगरी येषां चित्ते प्रकाशते। ते मत्पुरः प्रकाशन्ते निःश्रेयस्या श्रिया वृताः। मोक्षलक्ष्मीरियं काशी न येभ्यः परिरोचते। स्वर्गलक्ष्मीकाङ्क्षमाणेभ्यः पतितास्ते न संशयः। काश्यां संकाङ्क्षमाणानां पुरुषार्थचतुष्टयम्। पुरः किङ्करवत्तिष्ठेत्क्रमानुपहतो द्विजाः!। आनन्दकानने ह्यत्र ज्वलन्दावानलोऽस्म्यहम्। कर्म्मबीजानि जन्तूनां ज्वालये, न प्ररोहये। वस्तव्यं सततं काश्यां यष्टव्योऽहं प्रयत्नतः। जेतव्यौ कलिकालौ च लब्धव्या मुक्तिरङ्गना। प्राप्यापि काशीं दुर्बुद्धिर्यो न मां परिषेवते। तस्य हस्तगताप्याशु सैव स्वश्रीः प्रयास्यति। धन्या मद्भक्तिलक्षाणो ब्राह्मणाः काशिवासिनः। यूयं, यच्चेतसो वृत्तौ न दूरेऽहं न काशिका। दातव्यो वो वरः कोऽत्र व्रियतां स यथारुचि। प्रेयांसो मे यतो यूयं क्षेत्रसन्न्यासकारिणः। इति पीत्वा महेशाननक्षीराब्धिजां सुधाम्। परितृप्ता द्विजाः सर्व्वे वव्रुर्व्वरमनुत्तमम्। ब्राह्मणा ऊचुः। उमापते महेशान! सर्व्वज्ञ! वर एष नः। काशी कदापि न त्याज्या भवता भवतापहृत्!। वचनाद्ब्राह्मणानान्तु शापो मा प्रभवत्विह। कदाचिदपि केषांचित् काश्यां मोक्षोऽन्तरायकः। तव पादाम्बुजद्वन्द्वे निर्द्वन्द्वा भक्तिरस्तु नः। आदेहपतनात्तत्र काशीवासोऽस्तु नोऽनिशम्। किमन्येन वरेणेश देय एष वरो हि नः। अवधेहि मखध्वंसिन्! वरमन्यं वृणीमहे। तव प्रतिनिधीकृत्यास्माभिस्त्वद्भक्तिभावितैः। प्रतिष्ठितेषु लिङ्गेषु सान्निध्यं भवतोऽस्त्विह। श्रुत्वेति तेषां वाक्यानि तथास्त्विति पिनाकिना। प्रोचेऽन्योऽपि-

वरो दत्तो ज्ञानं यत्र भविष्यति। पुनः प्रोवाच देवेशो निशामयत भो द्विजाः!। हितं वः कथयाम्यत्र तदनुष्ठीयतां ध्रुवम्। सेव्योत्तरवहा नित्यं लिङ्गमच्यं प्रयत्नतः। दमोदानं दया नित्यं कर्त्तव्यं मुक्तिकाङ्क्षिभिः। इदमेव रहस्यञ्च कथितं, चैलवासिना। मतिः परहिते कार्य्या वाच्यं नोद्वेगकद्वचः। मनसाऽपि न कर्त्तव्यमेनोऽत्र विजीगीषुणा। अत्यर्थमक्षयं यस्मात् सुकृतं दुष्कृतेतरत्। अन्यत्र यत् कृतं पापं तत् काश्यां परिनश्यति। वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति। अन्तर्गेहे कृतं पापं पैशाच्यनरकावहम्। पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि। न कल्पकोटिभिः काश्यां कृतं कर्म प्रभुज्यते। किन्तु रुद्रपिशाचत्वं जायतेऽब्दायुतत्रयम्। वाराणस्यां स्थितो यो वै पातकेष्वारतः सदा। योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम्। पुनरत्रैव निवसन् ज्ञानं प्राप्स्यत्यनुत्तमम्। तेन ज्ञानेन संप्राप्ते मोक्षमाप्स्यत्यनुत्तमम्। दुष्कृतानि विधायेह बहिः पञ्चत्वमागताः। तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः!। याम्याख्या मे गणाः सन्ति घोरा विकृतमूर्त्तयः। मूर्धायां ते धमन्त्यादौ चैत्यदुष्कृतकारिणः। नयन्त्यनूपप्रायाञ्च ततः प्राचीं दुरासदाम्। वर्षाकाले दुराचारान् पातयन्ति महाजले। जलौकाभिः सपक्षाभिर्दन्दशूकैर्जलोद्भवैः। दुर्निवारैश्च मशकैर्दंश्यन्ते ते दिवानिशम्। ततो याम्यैर्हिमर्त्तौ ते नीयन्तेऽद्रौ हिमालये। अशनावरणैर्हीनाः क्लेश्यन्ते ते दिवानिशम्। मरुस्थले ततो ग्रीष्मे वारिवृक्षविवर्जिते। दिवाकरकरैस्तीव्रैः स्थाप्यन्ते ते पिपासिताः। क्लेशितास्ते गणैरुग्रैर्यातनाभिः समन्ततः। इत्थं कालमसङ्ख्यातमानीयन्ते ततस्त्विह। निवेदयन्ति ते याम्याः कालराजान्तिकं ततः। कालराजोऽपि तान् दृष्ट्वा कर्म्मसंस्मार्य्य दुष्कृतम्। विवस्त्रान् क्षुत्तृषार्त्तांश्च दम्नष्टोदरत्वचः। अन्यैरुद्रपिशाचैश्च सह संयोजयत्यपि। ततो रुद्रपिशाचास्ते भैरवानुचराः सदा। सहन्ते क्रममत्यर्थं क्षुत्तृड्जन्यमसम्भवम्। आहारं रुधिरोन्मिश्रं ते लभन्ते कदाचन। एवं त्वयुतसंख्यातं कालं तत्रापि दुःखिताः। श्मशानस्तम्भलभितो नीयन्ते कष्टवाधिताः। पिपासिता अपि न तेऽम्बु स्पर्शमपि चाप्नुयुः। अथ संक्षीणपापास्ते कालभैरवदर्शनात्। इहैव देहिनो भूत्वा मुच्यन्ते ते ममाज्ञया। तस्मात्र कामदेदत

वाङ्मनःकर्म्मणाप्यघम्। शुचौ पथि सदा स्थेयं महालाभमपीप्सुभिः। नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी। ममानुग्रहमासाद्य गच्छत्येव परां गतिम्। अनशनं यः कुरुते मद्भक्त इह सुव्रतः। न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि। अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम्। अविमुक्तं सदा सेव्यं संसारभयमोचकम्। नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम्। सर्वपापप्रशमनीं प्रायश्चित्तं कलौ युगे। जन्मान्तरसहस्रेषु यत्पापं समुपार्जितम्। अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम्। जन्मान्तरसहस्रेषु युञ्जन् योगं यदाप्नुयात्। तदिहैव परो मोक्षो मरणादधिगम्यते। तिर्यग्योनिगताः सत्त्वा येऽविमुक्ते कृतालयाः। कालेन निधनं प्राप्तास्ते यान्ति परमां गतिम्। अविमुक्तं न सेवन्ते ये मूढात्मतमा हताः। विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः। अविमुक्तं समासाद्य यो लिङ्गं स्थापयेत् सुधीः। कल्पकोटिशतैर्वापि नास्ति तस्य पुनर्भवः। ग्रहनक्षत्रताराणां कालेन पतनं ध्रुवम्। अविमुक्तमृतानान्तु पतनं नैव विद्यते। ब्रह्महत्यां नरः कृत्वा पश्चात् संयतमानसः। प्राणांस्त्यजति यः काश्यां स मुक्तो नात्र संशयः। स्त्रियः पतिव्रता याश्च मम भक्तिसमाहिताः। अविमुक्ते मृता विप्रा! यान्ति ताः परमां गतिम्। अन्तोत्क्रमणकालेऽहं स्वयमेव द्विजोत्तमाः!। दिशामि तारकं ब्रह्म, देही स्यात्येन तन्मयः। मन्मना मम भक्तश्च मयि सर्व्वार्पितक्रियः। यथा मोक्षमिहाप्नोति न तथाऽन्यत्र कुत्रचित्। मरणं निश्चितं ज्ञात्वा गतिञ्चासुखदायिनीम्। चलमागन्तुकं सर्वं, ततः काशीं समाश्रयेत्। काशी समाश्रिता यैस्तु मनोवाक्कायकर्मभिः। तानत्र निर्म्मलधियो निर्वाणश्रीः। समाश्रयेत् काशीस्थितेष्वपि यः प्रीणयेन्न्यायजैर्धनैः। तेन त्रैलोक्यमखिलं प्रीणितं तु मया सह। यः प्रीणयति पुण्यात्मा निर्वाणनगरीश्वरम्। प्रणयेन स्थितो नित्यं ब्राह्मणाः! प्रीणयामि तम्। दिवोदासोऽपि राजर्षिः काशीं धर्मेण पालयन्। सदेहो मत्पदं प्राप्तो यतो न पुनरागतिः। अत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना। अतो विमुक्तमासाद्य नान्यद्गच्छेत्तपोवनम्। मोक्षं सुदुर्लभं ज्ञात्वा संसारञ्चातिभीषणम्। अश्मना चरणौ हत्वा कालमत्र प्रतीक्षयेत्। अविमुक्तं परित्यज्य यदा यान्ति दुर्धियः। हसिष्यन्ति तदा भूतान्यन्तरीक्षचरता-

कुलैः। प्राप्य वाराणसीं पुण्यां सिद्धिक्षेत्रमनुत्तमम्। परिनिष्क्रान्तुमन्यत्र कस्य जन्तोर्मतिर्भवेत्। महादानेन चान्यत्र यत् फलं लभ्यते नरैः। अविमुक्ते तु काकिन्यां दत्तायां तदवाप्यते। एकः समग्रयेल्लिङ्गं तपस्यपेत चापरः। तयोर्मध्ये तु स श्रेष्ठो यो लिङ्गं पूजयेदिह। तीर्थान्तरे गवां कोटिं विधिवद्यः प्रयच्छति। एकाहं यो वसेत् काश्यां काशीवासी तयोर्वरः। अन्यत्र ब्राह्मणानां तु कोटिं संभोज्य यत् फलम्। वाराणस्यां तदेकेन भोजितेन तदाप्यते। सन्निहित्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे। तुलापुरुषदानेन काश्यां भिक्षा समा भवेत्। यदेतत् परमं ज्योतिरापातालादवस्थितम्। अतीत्य सत्यलोकादीननन्तलिङ्गरूपधृक्। पृथिव्यन्तःस्थितं लिङ्गमविमुक्तं स्मरन्ति ये। कल्पैके विनश्यन्ते महद्भिरिति निश्चितम्। अस्मिन् क्षेत्रे तु येनाहं हरः स्मृतः समर्चितः। सम्प्राप्य तारकं ज्ञानं न स भूयोऽभिजायते। यो मामिह समभ्यर्च्य विश्रुतेऽन्यत्र कुत्रचित्। जन्मान्तरेऽपि मां प्राप्य स विमुक्तो भविष्यति। इत्युक्त्वा क्षेत्रमाहात्म्यं द्विजानामग्रतो हरः। पश्यतामेव तेषान्तु तत्रैवान्तर्हितोऽभवत्"।

**काशीसेतु** पु॰ त्रिस्थलीसेत्वन्तर्गते काशीमाहात्म्ययात्रादिविधायके ग्रन्थभेदे।

**काशेय** पु॰ काश्यां भवः ढञ् काशेर्नृपस्यापत्यं वा ढक्। काश्यां भवे स्त्रियां ङीप्। "भरतः खलु काशेयीमुपयेमे सार्वसेनीं सुनन्दां नाम तस्यां जज्ञे भुमन्युर्नाम"। भा॰ आ॰ ९५।

**काशीश(स)** न॰ काशिं प्रकाशमीष्टे ईश–क। (हीराकस) ख्याते उपधातुभेदे "काशीशं(सं)धातुकाशीशं (सं)पांशुकाशीश(स)मित्यपि। तदेव किञ्चित्पीतं तु पुष्पकाशीश(स)मुच्यते। काशीश(स)मम्लमुष्णञ्च तिक्तञ्च तुवरं तथा। वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत्। मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम्" भावप्र॰ काशीं दीप्तिं श्यति सो–क। दन्त्यान्तोऽप्यत्र भावप्र॰।

**काशू(सू)** स्त्री॰ कश(स)–ऊ णिच्च उज्ज्वलदत्तीये तालव्यमध्यपाठः पा॰ मते दन्त्यमध्यपाठः। १शक्तिरूपास्त्रे २विकलवाचि च मेदि॰ ३बुद्धौ रोगे शब्दचि॰।

**काशू(सू)कार** पु॰ काशूं(सूं)विकलवाचं करोति कृ–अण् उप–स॰। गुवाकेन तुष्टे॰ तत्फलसेवने हि जिह्वाजाड्यात् वाचो वैकल्यं जायते इति तस्य तथात्वम्।

**काशू(सू)तरी** स्त्री॰ ह्रस्वा काशूः (सूः) ह्रस्वार्थे ष्टरच् ङीप्। ह्रस्वे काशूनामास्त्रभेदे।

**काश्म(श्व)री** स्त्री काश–वनिप् वनोरच नस्यान्तादेशः पृषो॰ वा वस्य मः। गाम्भार्य्याम् अमरः, फलेऽपि हरीत॰ अणोलुपि स्त्री। "बिल्वात् कपित्थात् जम्बूश्च काश्मरीबदरीस्तथा" भा॰अ॰ १५८अ॰।

**काश्मर्य्य** पु॰ काश्मरी+स्वार्थे ष्यञ्। गाम्भार्य्याम् अमरः "बदरेङ्गुदकाश्मर्य्यभल्लातकफलानि च" भा॰आनु॰ ९१॰। अयञ्च मधुरवर्गे पियालबीजकाश्मर्य्येत्याद्युपक्रमे "इमासेन मधुरोवर्गः" सुश्रुते उक्तः।

**काश्मीर** न॰ काश्मीरे भवः कच्छा॰ अण्। १पुष्करमूले अम॰। २टङ्के ३कुङ्कुमभेदे मेदि॰ "काश्मीरदेशजे क्षेत्रे कुङ्कुमं यत् भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्" भावप्र॰ तत्स्वरूपाद्युक्तम्। काश्मीरद्रवसान्द्रदिग्धवपुषः" भर्त्तृ॰। "काश्मीरागुरुकस्तूरीलिलहरीकाशीपुराधीश्वरी" अन्नदास्त॰। ४काश्मीरदेशभवे त्रि॰ स्त्रियां ङीप्। "तेन तेनैवमापन्ना काश्मीरीव तुरङ्गमी" भा॰वि॰८अ॰। सा च ५गाम्भार्य्यां भावप्र॰। काश्मीरदेशानां राजा अण्। ६तद्देशराजे। "काश्मीराश्च कुमाराश्च घोरका हंसकायनाः। शिविशिगर्त्तयौधेयाः राजन्या मद्रकेकयाः" भा॰ स॰ ५२। काश्मीरोऽभिजनोऽस्य सिन्ध्वा॰ अण्। पित्रादिक्रमेण ७तद्देशवासिनि त्रि॰ "काश्मीराः सिन्धुसौवीरा गान्धारादर्शकास्तथा" भा॰ भी॰९अ॰। "शूद्राभीराश्च दरदाः काश्मीराः पत्तिभिः सह" तत्रैव। "शारदामठमारभ्य कुङ्कुमाद्रितटान्तकः। तावत्काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः" इत्युक्ते ८देशभेदे च। "काश्मीरेषु सरो दिव्यं नाम्ना कुद्कमानसम्" सुश्रु॰। काश्मीरमण्डलतीर्थादिकथा भा॰व॰१३०अ॰ यथा "एषा रम्या विपाशा च नदी परमपावनी। अत्र वै पुत्रशोकेन वशिष्ठो भगवानृषिः। बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः। काश्मीरमण्डलञ्चैतत् सर्वपुण्यमरिन्दम!। महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह। यत्रोत्तराणां सर्वेषामृषीणां नाहुषस्य च। अग्नेश्चैवात्र संवादः काश्यपस्य च भारत!। एतद्द्वारं महाराज! मानसस्य प्रकाशते। वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम्। एष वातिकषण्डो वै प्रख्यातः सत्यविक्रम!। नात्यवर्त्तत यद्द्वारं विदेहादुत्तरश्च यः। इदमाश्चर्य्यमपरं देशेऽस्मिन् पुरुषर्षभ!। क्षीणे युगे तु कौन्तेय! शर्व्वस्य

सह पार्षदैः। सक्षोनया च भवति दर्शनं कामरूपिणः। अस्मिन् सरसि सद्वैव चैत्रे मासि पिनाकिनम्। यजन्ते याजकाः सम्यक् परिवारशुभार्थिनः। अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः। क्षीणपापः शुभान् लोकान् प्राप्नुते नात्र संशयः"।

"काश्मीरमण्डले नद्यो याः पतन्ति महानदम्। ताः नदीः सिन्धुमासाद्य शीलवान् स्वर्गमाप्नुयात्" भा० आनु०२५अ०। काश्मीरदेशजत्पत्तिस्थानत्वेनास्त्यस्याः अच् टाप्। ७कपिलद्राक्षायां स्त्री राजनि०। ८ अतिविषायां स्त्री मेदि०।

**काश्मीरक** त्रि० काश्मीरे भवः मनुष्यस्तत्स्थो वा वुञ्। काश्मीरदेशोद्भवे १मनुष्ये २तत्स्थे च। "ततः काश्मीरकान् वीरान् क्षत्रियान् क्षत्रियर्षभः" भा०स० २६अ०।

**काश्मीरज** न० काश्मीरे जायते जन–ड ७त०। १कुष्ठे (कुड़)२कुङ्कुमभेदे च मेदि०। ३पुष्करमूले विश्वः।

**काश्मीरजन्मन्** न० काश्मीरे जन्म अस्य। कुङ्कुमभेदे अमरः।

**काश्मीर्य** त्रि० काश्मीरेण निर्वृत्तादि सङ्काशा०चतुरर्थ्यां ण्य। १काश्मीरनिर्वृत्तादौ २कुङ्कुमभेदे न०

**काश्य** न० कं जलमाश्यं यत्र कुत्सितं वा आश्यं अश–ण्यत् काश्य+स्वार्थे ष्यञ् वा। १मद्ये हेमच०। काश्यां भवः यत्। २काशिराजे पु०। स्वार्थे क। तत्रैव। "शलात्मजश्चार्ष्टिषेण स्तनयस्तस्य काश्यकः। काश्यस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा" हरिवं० २९अ०।

**काश्यप** न०काश्यं मद्यं पिबत्यत्र पा–घञर्थे क। १मांसे हेमच०। मांसस्य मद्यपानाव्यभिचारात्तथात्वम्। काश्यं राजभेदं पाति नरकात् पा–क। काश्यस्य नृपस्य २पुत्रभेदे काश्यपशब्दे उदा०। कश्यपस्य गोत्रापत्यम् विदा० अञ्। ३कश्यपगोत्रापत्ये पुंस्त्री। ४कणादे मुनौ पु० त्रिका०। ५मृगभेदे पुंस्त्री मेदि०। स्त्रियां जातित्वात् ङीष्। कश्यपस्येदम् अण्। ६कश्यपसम्बन्धिनि त्रि० "एष एव दितेर्गर्भ ओजः काश्यपमर्पितम्"भाग०३,१५, ११श्लो०। स्त्रियां ङीप्। सा च ७पृथिव्याम् स्त्री तस्याः तत्सम्बन्धितया तत्सुतत्वकथा भा० आनु०१५४अ०उक्ता यथा "इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा। अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ। धारिणीं सर्वभूतानामयं प्राप्य वरो नृपः। कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम्। साऽहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम्। अयं सराष्ट्रो नृपतिर्मा भूदिति ततोऽगमत्। ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तथा। प्रविवेश महीं सद्यो मुक्त्वात्मानं समाहितः। ऋद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता। धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप!। एवं वर्षसहस्राणि दिव्यानि सततं नृप!। त्रिंशतः कश्यपो राजन्! भूमिरासीदतन्द्रिता। अथागम्य महाराज! नमस्कृत्य च कश्यपम्। पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः"। ८तद्गोत्रापत्यस्त्रियां स्त्री ङीप् "काश्यपीबालाक्यमाठरी पुत्रात् काश्यपीबालाक्यमाठरीपुत्रः" शत०ब्रा०१४,९,४,३१ ९कश्यपपत्न्यां स्त्री काश्यपेयः। कश्यपगोत्रोत्पन्ने विषचिकित्साभिज्ञे १०ऋषिभेदे पु० तत्कथा भा०आ० ४२अ० यथा

"काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम्। श्रुतं हि तेन तदभूद्यथा तं राजसत्तमम्। तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम्। तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम्। तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन्। तं ददर्श च नागेन्द्रस्तक्षकः काश्यपं पथि। गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः। तमब्रवीत् पन्नगेन्द्रः काश्यपं मुनिपुङ्गवम्। क्व भवांस्त्वरितो याति किञ्च कार्य्यं चिकीर्षति। काश्यप उवाच। नृपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमम्! तक्षकः पन्नगश्रेष्ठस्तेजसाद्य प्रधक्ष्यति। तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा। पाण्डवानां कुलकरं राजानममितौजसम्। गच्छामि त्वरितं सौम्य! सद्यः कर्त्तुमपज्वरम्। तक्षक उवाच। अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम्। निवर्त्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम्। काश्यप उवाच। अहं तं नृपतिं गत्वा त्वया दष्टमपज्वरम्। करिष्यामीति मे बुद्धिर्विद्याबलसमन्विता।

तक्षक उवाच। यदि दष्टं मयेह त्वं शक्तः किञ्चिच्चिकित्सितुम्। ततो वृक्षं मया दष्टमिमं जीवय काश्यप!। परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च। न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम!। काश्यप उवाच। दश नागेन्द्र! वृक्षं त्वं यद्येतदभिमन्यसे। अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम!। सौतिरुवाच। एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना। अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः। स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना। आशीविषविषोपेतः प्रजज्वाल समन्ततः। तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत्। कुरु यत्नं द्विजश्रेष्ठ!

जीवयैनं वनस्पतिम्। सौतिरुवाच। भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा। भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत्। विद्याबलं पन्नगेन्द्र! पश्य मेऽस्य वनस्पतौ। अहं सञ्जीवयाम्येनं पश्यतस्ते भुजङ्गम!। ततः स भगवान् विद्वान् काश्यपो द्विजसत्तमः। भस्मराशीकृतं वृक्षं विद्यया समजीवयत्। अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम्। पलाशिनं शाखिनञ्च तथा विटपिनं पुनः। तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना। उवाच तक्षको ब्रह्मन्नैतदत्यद्भुतं त्वयि। द्विजेन्द्र! यद्विषं हन्या मम वा मद्विधस्य वा। कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन!। यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात्। अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम्। विप्रशापाभिभूते च क्षीणायुषि नराधिपे। घटमानस्य ते विप्र! सिद्धिः संशयिता भवेत्। ततो यशः प्रदीप्तन्ते त्रिषु लोकेषु विश्रुतम्। निरंशुरिव घर्मांशुरन्तर्धानमितो व्रजेत्। काश्यप उवाच। धनार्थी याम्यहं तत्र तन्मे देहि भुजङ्गम!। ततोऽहं विनिवर्त्तिष्ये स्वापतेयं प्रगृह्य वै। तक्षक उवाच। यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम्। अहमेव प्रदास्यामि निवर्त्तस्व द्विजोत्तम!। सौतिरुवाच। तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः। प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान्। दिव्यज्ञानात् स तेजस्वी ज्ञात्वा तं नृपतिं तदा। क्षीणायुषं पाण्डवेयमपावर्त्तत काश्यपः"।

**काश्यपनन्दन** पु० कश्यपस्यायम् अण् कर्म०। १गरुडे २अरुणे ३देवमात्रे च। "ददानि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः!। यस्मिन् देशे करिष्यध्वं यज्ञान् काश्यपनन्दनाः" भा०आनु०६६अ०। "मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश" इत्युपक्रम्य "अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः" इत्युक्त्वा सर्वेषां सुरासुरादीनां तत उत्पत्त्युक्तेः ४असुरादिषु च। कश्यपशब्दे १८२०पृ० विवृतिः [कश्यपगोत्रापत्ये

**काश्यपायन** पुंस्त्री० कश्यपस्य गोत्रापत्यं नडा० फक्।

**काश्यपि** पु० कश्यपे भवः इञ्। १अरुणे २गरुडे च। तयोः कश्यपेन विनतायामुत्पत्तिकथा च भा० आ० ३१अ० यथा "एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा। विनता नाम कल्याणी पुत्रकामा यशस्विनी। तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः। उपचक्राम भर्त्तारं, तामुवाचाथ काश्यपः। आरम्भः सफलो देवि! भविता यत्त्वयेप्सितः। जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ। तपसा वालखिल्यानां मम सङ्कल्पजौ तथा। भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ। उवाच चैनां भगवान् कश्यपः पुनरेव ह। धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः। एतौ सर्व्वपतत्रिणामिन्द्रत्वं कारयिष्यतः। लोकसम्भाविती वीरौ कामरूपविहङ्गमौ। शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः। त्वत्सहायौ महावीर्य्यौ भ्रातरौ ते भविष्यतः। नैताभ्यां भविता दोषः सकाशात्ते पुरन्दर!। व्येतु ते शक्र! सन्तापस्त्वमेवेन्द्रो भविष्यसि। न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः। न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः। एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम्। विनता चापि सिद्धार्था बभूव मुदिता तथा। जनयामास पुत्रौ द्वावरुणं गरुडं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः। पतत्रिणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत"।

**काश्यपिन्** पु० भूम्नि। काश्यपेन प्रोक्तमधीयते णिनि। काश्यपप्रोक्तशाखाध्येतृषु।

**काश्यपेय** पु० कश्यपस्येयम् अण् काश्यपी कश्यपभार्य्या तत्र भवः ढक्। १कश्यपपत्नीजाते सुरासुरादौ। "इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिताः" भा०आनु०१५०अ०गरुडे च "नागाश्च गरुडश्चैव काश्यपेयो महाबलः" भा०आ०२१अ०। "काश्यपेयोऽस्तताक्ष्र्यः" ग्रहपूजामन्त्रः।

**काश्यादि** पु० छञ्ठिठोः प्रत्यययोः प्रकृतिभूते पाणिन्युक्ते शब्दगणे स च गणः काशि वेदि (चेदि इति वा) सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिन्दम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र सधमित्र (आपदादिपूर्वपदात्कालान्तात्) आपद् ऊर्द्ध तत्"। तात्कालिकः।

**काश्यायन** पुंस्त्री० काश्यस्य काशिराजस्य गोत्रापत्यम् नडा० फक्। काशिराजगोत्रापत्ये

**काष** पु० कष्यतेऽनेन कष-करणे घञ्। १कषपाषाणे (कष्टीपाथर) ख्याते प्रस्तरभेदे शब्दचि०। २ऋषिभेदे च

**काषाय** त्रि० कषायेण रक्तः अण्। कषायेण रक्ते १वस्त्रादौ "यदि वासांसि ददीरन् रक्तानि ददीरन् काषायं ब्राह्म-

घो, माञ्जिष्ठं क्षत्रियो, हारिद्रं वैश्यः” आश्व॰श्रौ॰ १,१९,८। “काषायमर्थमरुणा या काषायवसनाऽथवा” अमरः। स्त्रियां ङीप्। तदन्तस्य रक्तार्थवाचकत्वात् एकार्थविशेष्यस्त्रीलिङ्गे शब्दे परे पुंवत्। काषा यो कन्या यस्य काषायकन्यः

**काषायण** पु॰ अश्वा॰ गणे कामे त्वत्र काषेति पाठे गोत्रापत्ये फञ्। १काषगोत्रापत्ये शुक्लयजुर्वेदवंशान्तर्गते ऋषिभेदे। “काषायणात् काषायणः” शत ब्रा॰१२,७,२,२७।

**काषायवासिक** पुंस्त्री काषाये वस्त्रे वासोऽस्यस्य ठन्। कीटभेदे स्त्रियां ङीप्। “सूचीमुखः कृष्णगोधा यश्च काषायवासिकः” सुश्रु॰। कीटशब्दे विवृतिः।

**काषायिन्** पु॰ भूम्नि। कषायेण प्रोक्तमधीयते णिनि। कषायर्षिप्रोक्तशाखाध्यायिषु।

**काष्ठ** न॰ काशत्यनेन काश–क्थन् नेट् शस्य ष। १अनलादेरिन्धनार्थे दारुणि “सकारमतिशुष्कं यत् सन्दिमध्ये समेष्यति। तत् काष्ठं काष्ठमित्याहुः खदिरादिसमुद्भवम्” इत्युक्तलक्षणयुक्ते २दारुभेदे च। “काष्ठेन वा नखेन वा कण्डूयेत” शत॰ब्रा॰,२,२,१, “यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ। समेत्य च व्यपेयातां तद्वद्भूतसमागमः” भा॰,शा॰,८६४ श्लो॰“तथाऽज्ञानसमुत्थकाष्ठञ्च सर्वं दिव्याद्रे स्वां प्रकृतिं भजन्ति” भा॰,आ॰,८६अ॰।

**काष्ठक** त्रि॰ काष्ठं विद्यतेऽस्य नड़ादि॰ छ कुक् च बिल्वादि॰ समासस्य लुक्। काष्ठयुक्ते। २अगुरुचन्दने न यज्ञभा॰ तस्य प्रशस्तकाष्ठवत्त्वात् तथात्वम्।

**काष्ठकदली** स्त्री काष्ठमिव कठिना कदली। (काठकला कदलीभेदे राजनि॰। [ङीप्।

**काष्ठकीट** पुं स्त्री काष्ठे कीटः। घुणाख्ये कीटे हेम॰स्त्रियां

**काष्ठकुट्ट** पुं स्त्री॰ काष्ठं कुट्टति कुट्ट–अण् उप॰ स॰। (काठठोकरा)पक्षिभेदे त्रिका॰ स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। [काष्ठमये कुद्दाले अव्ययी अमरः।

**काष्ठकुद्दाल** पु॰ काष्ठमयः कुद्दालः। नौकास्थमलघर्षणार्थे

**काष्ठजम्बू** स्त्री काष्ठप्रधाना जम्बूः। भूमिजम्बूवृक्षे राजनि॰

**काष्ठतक्ष** पु॰ काष्ठं तक्षति तक्ष–क्विप्। (छुतार)इतिप्रसिद्धे जातिभेदे। एवुल्। काष्ठतक्षकोऽप्यत्र स्त्रियां जातित्वात् ङीप्। काष्ठतक्षणकर्त्तृ मात्रे त्रि॰। स्त्रियां टाप् इति भेदः। [कृमिभेदे हारा॰।

**काष्ठतन्तु** पु॰ काष्ठे तन्तुरिव दीर्घत्वेनावस्थितत्वात्। काष्ठस्थे

**काष्ठदारु** पु॰ काष्ठप्रधानो दारुः। देवदारुवृक्षे राजनि॰।

तस्य शाखाकाण्डस्कन्धयोगेन काष्ठप्रधानत्वात् तथात्वम्।

**काष्ठद्रु** पु॰ काष्ठप्रधानो द्रुर्वृक्षः। पलाशवृक्षे राजनि॰ तस्य काष्ठतोऽपि पुष्पोद्गमात्तत्प्राधान्यात्तथात्वम्।

**काष्ठधात्रीफल** न॰ काष्ठमिव शुष्कं धात्रीफलम्। आमलके राजनि॰तत्फलाभ्यन्तरे अष्टेः काष्ठस्येव शुष्कत्वात्तस्य तथात्वम्। [त्वायाम् राजनि॰।

**काष्ठपाटला** स्त्री काष्ठमिव कठिना पाटला। सितपाट-

**काष्ठमठी** स्त्री क्षुद्रो मठः मठी काष्ठेन निर्म्मिता मठीव। चितायाम् त्रिका॰। तस्याः काष्ठनिर्म्मितक्षुद्रमठाकारत्वात् तथात्वम्।

**काष्ठमय** त्रि॰काष्ठात्मकं मयट्। १काष्ठात्मके २काष्ठतुल्यकठिन हृदये निर्दये च। “दृष्ट्वा यः केचिदात्मानि नराः काष्ठमया इव” । भा॰,रा॰,२४४,। [हारा॰

**काष्ठमल्ल** पुं काष्ठं मल्ल इव यत्र। शवनिर्हारणे यानभेदे

**काष्ठमौन** न॰ काष्ठमिव मौनम्। इङ्गितेनापि स्वाभिप्रायाप्रकाशनरूपे मौने गरुड़षि॰

**काष्ठलेखक** पु॰ काष्ठं लिखति ण्वुल्। घुणाख्ये कीटे।

**काष्ठलोहिन्** पु॰ काष्ठञ्च लौहञ्च स्तोऽस्य। लौहवद्धे काष्ठमये लगुडे त्रिका॰

**काष्ठवल्लिका** स्त्री काष्ठमिव शुष्का वल्लिका। कटुकायां (कटकी) ख्याते वल्लीभेदे वैद्यकम् [शारिवाभेदे राजनि॰

**काष्ठशारिवा** स्त्री काष्ठमिव शुष्का शारिवा। (अनन्तमूल)

**काष्ठा** स्त्री काश–क्थन् नेट् शस्य षः। १दिशि। “स राजपत्नीवदनं श्रान्त्यां स्नात्वा स्थितौ दशः। आननं भाषः पितृभिः काष्ठाभिरिव सोऽन्वहम्”। २अष्टादशनिमेषात्मके २काले “त्वं मुहूर्त्तस्थितिस्त्वं च लवस्त्वं पुनः क्षणः“शुक्लस्त्वं बहुलस्त्वं च कला काष्ठा त्रुटिस्तथा”भा॰ आ॰२५अ॰। “कलाकाष्ठादिरूपेण परिणाम प्रदायिनि!” देवीमा॰। ३सीमायाम् “परा हि काष्ठा तपसस्त्वा पुनः” कुमा॰। ४स्थितौ “काष्ठां भगवतोध्यायेत् स्वनासाग्रावलोकनः” भाग॰ १,१,२१, श्लो॰। ५उत्कर्षे च अमरः: “काष्ठागतस्नेहरसानुविद्धम्” कुमारः। काष्ठं प्राधान्येनास्त्यस्याम् अच्। ६दारुहरिद्रायां मेदि॰। ७कश्यपपत्नीभेदे। “अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्। अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला। मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः” इत्युपक्रम्य “अरिष्टायास्तु गन्धर्व्वाः काष्ठाया द्विशफेतराः” भाग॰ ६,६,२६ उक्तम्

वातिकस्य रूपमाह हृच्छङ्खमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः। प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव। शङ्खौ ललाटैकदेशः, शुष्कं श्लेष्मादिरहितम्। पैत्तिकस्य रूपमाह उरोविदाहज्वरवक्त्रशोषैरभ्यर्द्दितस्तिक्तमुखस्तृषार्त्तः। पित्तेन पीतानि वमेत् कटूनि कासेत् सपाण्डुः परिदह्यमानः। सपाण्डुः, पाण्डुरोगयुक्तः। श्लैष्मिकस्य रूपमाह प्रलिप्यमानेन मुखेन सीदेत् शिरोरुजार्त्तः कफपूर्णदेहः। अभक्तरुग्गौरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन। प्रलिप्यमानेन मुखेन श्लेष्मलिप्तेन मुखेनोपलक्षितः। अभक्तरुक् न भक्ते रुक् रुचिर्यस्य सः। कण्डूः कण्ठ एव। क्षतकासस्य निदानपूर्व्विकां सम्प्राप्तिमाह अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहैः। रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत्। अश्वगजयोर्निग्रहो दमनम्। लक्षणमाह स पूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्। कण्ठेन रुजताऽत्यर्थं विभग्नेनेव चोरसा। सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना। दुःखस्पर्शेन शूलेन भेदपीडाभितापिना। पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीड़ितः। पारावत इवाकूजन् कासवेगात् क्षतोद्भवात्। कण्ठेनेत्युपलक्षणे तृतीया एवमुरसेति। क्षयकासस्य निदानपूर्व्विकां सम्प्राप्तिमाह विषमाऽसात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्। घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः। कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम्। घृणिनां विचिकित्सायुक्तानाम्। लक्षणमाह सशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत् स कासी। शुष्कं विनिष्ठीवति दुर्ब्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्। तं सर्व्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति। असाध्यसाध्ययाप्यत्वमाह इत्येष क्षयजः कासः क्षीणानां देहनाशनः। साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः। एवं क्षतोत्थितः क्षीणानामसाध्यः। बलवतां साध्यो याप्यो वा स्यात्। न वा कदाचित् सिध्येतामपि पादगुणान्वितौ सिध्येतां क्षतक्षयजौ सद्वैद्यः सद्भेषजः सदुपरिचारकयुक्तस्य सदातुरस्य जातौ। स्थविराणां जराकासः सर्व्वो याप्यः प्रकीर्त्तितः। स्थविराणां जराकासः वृद्धानां यः कासो भवति स जराकाससंज्ञः स सर्व्व एव वातजादिरपि याप्यः। त्रीन् पूर्व्वान् साधयेत् साध्यान् पथ्यैर्याप्यांस्तु यापयेत्। एषोऽपि कास उपेक्षणीयो न भवति। किन्तु शीघ्रं प्रतिकरणीय इत्याह ज्वरारोचकहृद्रोगस्वरभेदक्षयादयः। भवन्त्युपेक्षया यस्मात्तस्मात्त्वरया जयेत्” ।

कासरोगभेदस्य हेतुपापादि कर्म्मविपाकशब्दे १७६४, पृ० उक्तम्। कं जलमस्यतेऽनेन अस—क्षेपणे करणे घञ् इत०। १शोभाञ्जनवृक्षे पु० शब्दच०। तदञ्जनसेवने नेत्राज्जलनिःसारणात्तस्य तथात्वम्।

**कासकन्द** पु० कासहेतुः कन्दः। कासालौ राजनि०

**कासघ्न** त्रि० कासं हन्ति हन—हेत्वादौ टक्। कासहरे सुश्रुतोक्ते १विधानभेदे। “प्रायोगिकः स्नैहिको वैरेचनः कासघ्नः वामनीयश्च” इत्युपक्रमे “बृहतीकण्टकारिकात्रिकटुकाश्वमर्द्दनेङ्गुदीवङ्गनःशिलाश्चिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने” (धूमे)। स्त्रियां ङीप्। सा च २कण्टकार्य्यां स्त्री शब्दच०। “हरीतकी कणा शुण्ठी मरिचं गौड़संयुतम्। कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः” भावप्र०उक्ते ३मोदकभेदे पु०। कासनाशककासहरादयोऽपि। कासरोगनिवारके त्रि० “येन तेन प्रकारेण यामकः कासनाशकः” वैद्यकम् कासहरैश्चेति सुश्रुतः

**कासजित्** स्त्री कासं जयति जि—क्विप्। १भार्ग्याम् (बामनहाटी) राजनि०। २कासनाशके त्रि०।

**कासनाशिनी** स्त्री कासं नाशयति नश—णिच्—णिनि ङीप्। कर्कटशृङ्ग्यां रत्नमा०।

**कासन्दीवटिका** स्त्री वेशवारभेदे राजवल्लभः।

**कासमर्द्द** पु० कासं मृद्नाति मृद—अण् उप०स०। (कास-कालिन्दा) इति ख्याते तद्गुणाद्युक्तं भावप्र० यथा “कासमर्द्दोऽरिमर्द्दश्च कासारिः कर्कशस्तथा। कासमर्द्ददलं रुच्यं वृष्यं कासविषास्रनुत्। मधुरं कफवातघ्नं पाचनं कण्ठशोधनम्। विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु”। सुश्रुतेऽयं सुरसादिगणे पठितः सुरसादिशब्दे विवृतिः। तस्य जलप्राचीनक्षेपेण मृद्यतेऽसौ मृद—कर्म्मणि घञ्। वेशवारभेदे स च पिष्टकमिश्रितकासमर्द्दतैलवेशवारः इति पाकराजेश्वरः।

**कासमर्द्दन** पु० कासं मृद्नाति मृद—ल्यु इत०। पटोले हारा०

**कासर** पुंस्त्री० के जले आसरति आ+सृ—अच् ७त०। महिषे अमरः तस्य जले सदाऽऽसरणात्तथात्वं स्त्रियां ङीष्।

**कासहन्** पु० कासं हन्ति हन—क्विप्। “कण्टकारीकृतः क्वाथः सकणः सर्व्वकासहा” इत्युक्ते कासनाशके १क्वाथभेदे

तस्य कासनाशकत्वात् तथात्वम् २कासनाशकमात्रे त्रि०

**कासार** पु०कस्य जलस्यासारोऽत्र । १सरोवरे विंशत्या रगणै-
रचिते २दण्डकच्छन्दोभेदे च वृत्त० टी० । ३पक्वान्नभेदे
न० भावप्र०
"घृते तप्ते विनिःक्षिप्य कटाहे पाचयेत्क्रमात् ।
ततस्तान विनिःक्षिप्य खण्डं भागसमं पचेत् । ततश्चाक्षिप्य
तत् पात्रे क्षिप्त्वा सम्यक् सुचिक्कणे । चतुरस्त्रीकृतं हि तत्
भवेत् कासारसंज्ञकम् । कासारं रुचिदं मेध्यं नातिरूक्षं
नपिच्छिलम् । कुष्ठाश्मकफपित्तघ्नं पित्तघ्नौ रुचिकारकम् ।
मण्डेन मापाम्बुश्टाटकसेरूणां पृथक् पृथक् । शालूकस्य
च कर्त्तव्यं कासारं खण्डसर्पिषा" । [ विवृतिः ।

**कासारि** पु० ६त० । कासमर्द्दवृक्षे भावप्र० कासमर्द्दशब्दे

**कासालु** पु० कासकारी आलुः । कोङ्कणदेशप्रसिद्धे आलुक-
भेदे राजनि०

**कासीस** न० कासीं क्षुद्रकासं स्यति सो–क । (हिराकष)
उपधातुभेदे तल्लक्षणादिकमित्यादि कासीसशब्दे विवृतिः ।
"कासीसं लिहता दन्तौ हरितालं हराङ्घ्रिजा" सुश्रु० ।

**कासृति** स्त्री० कुत्सिता सृतिः सरणम् । कुत्सितगतौ
"न कासृत्या ग्रामं प्रविशेत्"गोभि०

**कास्तीर** न० ईषत्तीरमस्यास्ति कोःका नि० सुट् । ईषत्तीर-
युक्ते नगरभेदे सि०कौ० ।

**काश्मर्य्य** पु० काश्मर्य्य+पृषो० शस्य सः । गाम्भार्य्याम्

**काह्वका** स्त्री काह्वका+पृषो० वस्य कः । काह्वावादो द्वि-
रूपकोषः ।

**काहल** पुंस्त्री कुत्सितं हलति विलखति हल–अच्, कोः का ।
१विड़ाले २कुक्कुटे, स्त्रियां ङीष् ३शब्दमात्रे पु०४महाढ-
क्कायाम्, स्त्री टाप्मेदि० ५धुस्तूराकारे वाद्ययन्त्रभेदे
६अप्सरोभेदे स्त्री शब्दच० ७कव्यक्तवाक्ये न० हेमच० ।
८शुष्के ९भृशे, १०खले च त्रि० मेदि० ।

**काहलापुष्प** पु० काहलेव पुष्पमस्य । धुस्तूरे शब्दमा०

**काहलि** पु० कं सुखमाहलति ददाति का+हल+इन् ६त० ।
१शिवे "कल्योऽसख्यस्य देहस्य काहलिः सर्वकामदः
भा० आनु०१७अ० २तरुण्यां युवत्यां स्त्री ङीष् मेदि० ।

**काही** स्त्री ईषदाहन्ति आ+हन–ड गौरा० ङीष् । कुटज-
वृक्षे राजनि०

**कि** ज्ञाने जुहो० पर० सक० अनिट् । चिकेति अकैषीत् ।
चिकाय । वैदिकोऽयं धातुः

**किंयु** त्रि० किमिच्छति मान्यत्वेन निषेधेऽपि वेदे क्यच् ततः
छन्दसि उ । किमिच्छौ "किंयुर्विप्रोनद्योजोहवीति"
ऋ० १,२१,४, "किंयुः किमिच्छुः" भा०

**किंराजन्** पु० कःकुत्सितो राजा क्षेपार्थत्वात् न टच्शब्दमा०।
कुत्सिते राजनि । किमः प्रश्नार्थकत्वे तु टच् । किं राज-
इत्येव अ०व०। किंराजन् निन्दितनृपयुक्ते देशादौ त्रि०

**किंवत्** त्रि० किं विद्यतेऽस्य मतुप् मान्तत्वात् मस्य वः । किं-
विशिष्टे स्त्रियां ङीप् । कस्येव कश्चिच्चिन्न वा वति ।
किंतुल्यार्थे प्रश्नार्थे सम्भावनार्थे च अव्य० ।

**किंवदन्ति(न्ती)** स्त्री किम्+वद्–झिच् वा ङीप् । जनश्रुतौ
सत्ये असत्ये वा लोकप्रवादे अमरः । "इति व्याधानां
मुखात् किंवदन्ती श्रूयते" हितो० । "अस्ति किलैषा
किंवदन्ती–अस्माकं कुले कालरात्रिकल्पा विद्या नाम
राक्षसी समुत्पत्स्यते" प्रबोधच०

**किंवा** अव्य० किञ्च वा च द्वन्द्वः । १वितर्के २सम्भावनायां
३पक्षान्तरद्योतने च मेदि० पदद्वयमित्यन्ये

**किंशारु** पु० कुत्सितं शृणाति किम्+शॄ–ञुण् । १धान्या-
द्यग्रभागे, अम० "शूर्पशोभितकणकिंशारुकांशाधकुम्भान-
मकदद्भिः प्रचात्म्य" दशकु०२धान्ये, ३कङ्कपक्षिणि च मेदि०
"किञ्जरयोः श्रिणः" उणा० सू० "शॄ हिंसायाम् इत्यु-
ज्ज्वलदत्तोक्तेः मान्तमध्योऽयं शब्दः० दन्तमध्यपाठः
मात्रादिकमपि । गतिकारकोपपदत्वेन तत्पु० प्रकृतिस्वरः ।

**किंशुक** पु० किञ्चित् शुकइव शुकतुण्डाभपुष्पत्वात् ।
१पलाशे अमरः "कलकलस्वानविदीर्णरागिहृदिस्र-
क्कुङ्कुमाक्तकिंशुकाशुगाम्" नैष० "किंशुकाम्भोजबकु-
लचूताशोकादिपुष्पितैः" सुश्रुतः "ते (दैत्या) हेमनिष्का-
भरणाः कुण्डलाङ्गदधारिणः । निहता बह्वशोभन्त
पुष्पिता इव किंशुकाः" भा०व०१५अ०" । अस्य च निर्ग-
न्धत्वम् "विद्याहीना न शोभन्ते निर्गन्धाइव किंशुकाः"
चाणक्यः । फलहीनत्वञ्च"अविज्ञाय फलं योहि कर्म्म-
त्वेवानुधावति । स शोचेत् फलवेलायां यथा किंशुकसे-
चकः" रामा० २नन्दिवृक्षे राजनि०

**किंशुलक** पु० किंशुक+किंशुलुकादीनाम्" पा०नि०लमध्यता ।
पलाशवृक्षे शब्दर० । अस्य गिरिशब्दे परे दीर्घः । किं-
शुलुकागिरिः (पलाशप्रधानपर्व्वतः)

**किंशुलुकादि** पु० गिरौ परे दीर्घनिमित्ते पा०उक्ते शब्दगणे
स च गणः किंशुलुक शाव नड़ अञ्जन भञ्जन लोहित
कुक्कुट ।

**किंस** त्रि० किं स्यति सो–क वनादि० पूर्व्वपदस्यनिमित्तात्

न स्यात् । कुत्सितक्षेपे तु तद्वारो किमेति पाठान्तरम् पृषो० अनुस्वारलोपः । तदर्थे

**किंसखि** पु०कः कुत्सितः सखा किमःक्षेपार्थत्वात् न टच्समा० । कुत्सिते सख्यौ "स किंसखा साधु न शास्ति योऽधि-पम्" किरा० प्रश्नार्थे किमः टच्समा० । किंसखइत्येव ।

**किंस्वित्** अव्य० द्वन्द्वः । वितर्के शब्दर० स्थाणुरयं किंस्वित् पुरुषः । स्थाणुत्वपुरुषत्वाभ्यां वितर्कोऽत्र गम्यते ।

**किकि** पु० कक इन् पृषो० इत्वम् । १नारिकेले राजनि० । किकीतिशब्दकारके २चाषपक्षिणि (स्वर्ण चातक) शब्दमा० ।

**किकिदिव** पु० किकीत्यव्यक्तशब्देन दीव्यति दिव–क । चाषपक्षिणि । इन् । किकिदिविरप्यत्र शब्दमा० ।

**किकिन्** पु० किकीतिशब्दोऽस्त्यस्य वीह्या० इनि । चाषपक्षिणि किकीदिविरिति पदद्वयम् अमरव्याख्याने चीरस्वामी ।

**किकिर** त्रि० कृ–पचार्थे कर्मणि क वेदे पृषो० आदौ आगमः । कीर्णे "आविष्ट किकिरा कृणु पत्नीनाम्" ऋ० ६'५३'७' "किकिरा कीर्णानि" भा० सुपां सुलु गित्यादि ना आच् । एतेन किकिराशब्दकल्पनं चिन्त्यम् ।

**किकीदि(दी)वि** पु० किकीतिशब्देन दीव्यति दिव–इन् उणा०सू० किकीदिवीति निर्देशात् नि०दीर्घः । चाषे सि० कौ० अत्र पूर्वोत्तरपदयोर्ह्रस्वदीर्घविनिमये किकिदीविरि त्यपि तत्रैव सि० कौ० । "साकं यक्ष्म प्रपत चाषेण किकिदीविना" ऋ० १०,९७,१३ ।

**किक्किट** त्रि० कुत्सिते । "किक्किटाकारेण यान्याः पशयो-भवन्ति" तैत्ति० स०

**किक्किश** पु० सुश्रुतोक्ते दैहिके क्रमिभेदे । "केशरोमनखादाश्च दन्तादाः किक्किशास्तथा" क्रमिशब्दे विवृतिः

**किक्किसाद** पु० "राजिमन्तस्तु" इत्युपक्रमे "गोधूमकः किक्किसाद इति सुश्रुतोक्ते सर्पभेदे । सर्पशब्दे विवृतिः

**किखि** पु०स्त्री० (खाँक शेयालि) शृगालभेदे त्रिका०

**किङ्कणी** स्त्री किञ्चित्कणति कण–शब्दे इन् ङीप् । क्षुद्रघण्टिकायां हेमच०

**किङ्कर** त्रि० किञ्चित् करोति अच् । १दासे सेवके स्त्रियान्तु टाप् । किङ्करस्य पत्नी ङीष् । २किङ्करी दासपत्न्याम् स्त्री "अवेहि मां किङ्करमष्टमूर्त्तेः" रघुः । "निम्नस्य किङ्करो भूपो वैश्योभूपस्य भूमिप ! । सर्वेषां किङ्करः शूद्रो ब्राह्मणस्य विशेषतः" पुरा० । किङ्करस्य गोत्रापत्यं नडा० फक् । कैङ्करायण तद्गोत्रापत्ये पुंस्त्री ।

**किङ्कल** पु० सात्वतवंश्ये न्यपभेदे । "भजमानस्य निम्लोचिः किङ्कणी-हृदिरेव च" भाग० ९,२४,५, नकादौ किङ्कणेति वा पाठः ततो गोत्रापत्ये फक् । काङ्कलायन तद्गोत्रापत्ये पुंस्त्री०

**किङ्किणी** स्त्री किङ्किणी+पृषो० इत्वम् । १क्षुद्रघण्टिकायाम् अम० । तदाकारफले २विकङ्कतवृक्षे राजनि० "रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि । वैयाघ्रपरियुक्तेन किङ्किणीजालमालिना" भा० आ० २२० अ० "सौभाग्यं मन्द-दात्रोति किङ्किणी मददद्वरैः" विष्णु ध० पु० "भग्नं भीमेन मरुता भवतोरथकेतनम् । पातितं किङ्किणीजालम्" वेणी० । ३अम्लरसायां द्राक्षायां "वृद्रधरः जलजम्बु इक्षे फलायुधः "कटुम्लं किङ्किणी द्राक्षा वक्त्रं शोषमेव च" हारी० । किंशब्दः किम इव यस्यां स्तुतौ गौरा० ङीष् । तन्त्रसारोक्ते ५देवीस्तुतिभेदे सा च "किं किं दुःखं सकलजननि ! क्षीयते न स्मृतायाम्" इत्यादिका स्तुतिः ।

**किङ्किणीका** स्त्री कण–शब्दे ईकन् प्रकृतेः किङ्किणादेशः । क्षुद्रघण्टिकायाम् । "तनुवाहु वाहः सगद्गदाभीर किङ्किणीकः" कुमा० । अभूमिपालान् भोजान् स्वाना-तिष्ठत् किङ्किणीकिनः हरिव० ३८ । अस्य पुंस्त्वमपि "किङ्किणीकविभूषितान्"

**किङ्किणीकाश्रम** पुं न० भा० प्रसिद्धे तीर्थभेदे । "वैमानिक उप्य यत्र किङ्किणीकाश्रमे तथा निवासेऽप्सरसां दिव्ये कामचारी महीयते" भा० अनु० २५ अ० ।

**किङ्किर** पुंस्त्री किञ्चित् किरति वियोगिनं रागाय वा कृ–क । १भ्रमरे २कोकिले ३अश्वे च शारस्वतः स्त्रियां जातित्वात् ङीष् । ३कामे पु० ४गजकुम्भे न० ५रक्तवर्णे पु० ६तद्वति त्रि०

**किङ्किरात** पु० किङ्किरं रक्तवर्णमतति अत–अच् । अशोक-वृक्षे जटा० भरतमितशिरः "शेखरैः किङ्किरातैः" रत्ना० ।

**किङ्किराल** पु० किङ्किराय रक्तताये अलति काम्यीति अल–अच् शब्द० । बर्बुरे वैद्य० तस्य निर्यासयोगेन रक्तवर्णस्थिरत्वकरणात् तस्य तथात्वम् ।

**किङ्किरिन्** पु० किङ्कर+इनि । (वइचि) विकङ्कतवृक्षे जटा०

**किङ्किल** अव्य० किम्+किल+द्वन्द्वः । "किङ्किलेति कोपा-श्रद्धयोः" शब्दरत्नोक्ते १कोपे २अश्रद्धायाञ्च । "न सर्वये न श्रद्दधे किङ्किल भवान् वृषलं याजयेत्" भवत्कर्त्तृकं शूद्रयाजनं कोपविषयः अश्रद्धाविषयश्च । तदर्थक किङ्किलशब्दयोगे लिङ् ।

**किञ्च** अव्य० किञ्च च द्व० । १आरम्भे, २समुच्चये, ३वाकल्ये, ४सम्भावनायाञ्च मेदि० ५अवान्तरे जटा०

**किञ्चन** अव्य० किम्+चन द्वन्द्व० पदद्वयमित्यन्ये । १अवाकल्ये,

२अल्पे च किम्+चन—अच्। ३हस्तिकर्णपलाशे पु० शब्दरत्ना० “असाकल्ये तु चिच्चन” इत्यम-रोक्तेः चनेति भिन्नं पदम् अतएव मधू० अकिञ्चनशब्दो-निपातितः।

किञ्चित् अव्य०किम्+चित् द्वि चिच्च समा० वा। १असाकल्ये, २अल्पे च राजनि०। अस्य पदद्वयत्वमते १अकिञ्चित्कर इत्यादौ सह सुपेति समास इति बोध्यम्। इदन्तया नि-र्देष्टुमशक्यत्वेन किञ्चित्त्वम्। “कम्पेन किञ्चित् प्रति-गृह्य मूर्ध्नः” रघुः “किञ्चित् प्रकाशस्तिमितोग्रतारैः”। “आवर्जिता किञ्चिदिव स्तनाभ्याम्” कुमा०।

किञ्चुलक पु० किञ्चित् चुलुम्पति सीतः चुलुम्प-ड संज्ञायां कन्। (केंचो) महीलताख्ये कीटभेदे अम० पृषो० किञ्चिलिकोऽप्यत्र अमरटी०। [किन्दानशब्दे दृश्यम्।

किञ्जप्य न० किञ्चिज्जप्यं यत्र। भा० प्रसिद्धे तीर्थभेदे

किञ्जल न० किञ्चित् जलमत्र। पद्मादेः केशरे शब्दर० पृषो० ललोपे” किञ्जलमप्यत्र राजनि०।

किञ्जल्क पु०किञ्चित् जलति जल-अपवारणे क तस्य नेत्त्वम्। पुष्पादेः १केशरे,२पुष्परेणौ,३नागकेशरे च मेदि० पद्मनध्य-स्थे केशाकारे पदार्थे।“केचित् किञ्जल्कसङ्काशाः केचित् पीताः पयोधराः”भा०व०१८८अ०। “पद्मोदरच्युतरजः किञ्जल्कादपरां गतैः” भा०व०१५८अ०। “किञ्जल्कनीं ददौ चार्घ्यं नानाम्लानपङ्कजाम्” देवीमा० अमरे पुंस्त्व-जटाधरे क्लीवत्वमप्यभिहितम्। तद्गुणादिकं भावप्र० उक्तं “किञ्जल्कः शीतलो रूक्षः कषायो ग्राह-कोऽपि सः। कफपित्ततृषादाहरक्तार्शोविषशोथजित्” तत्र पुष्पकेशरे “हिरण्मयरजोगर्भश्रेणुः पद्मकिञ्जल्काः गतकरा होतः”अ०श्रौ० ८,३,५“यज्ञैः कृतकिञ्जल्काः कृतकेशरा” होतुः स्रजःकार्याः नारा०

किट गतौ सक० भये अक० भ्वा०पर० सेट्। केटति अकेटीत् किकेट पनिकटति।

किटकिटाय किटकिटे अव्यक्तशब्दकरणे डाच् क्यष्-नामधातुः किटकिटायते अकिटकिटायीत् “दन्तान् किटकिटायते उद्गताक्षोऽजिह्वां खादति” सुश्रुतः

किटि पु० किट—गतौ इन् किच्च। शूकरे अमरः स्त्रियां सिद्धत्वात् वा ङीप्

किटिभ पु० किटिरिव भाति कृष्णत्वात् भा—क। १केशकीटे (उकुण) हेम०। २सर्पदंशनोपद्रवभेदे न० सुश्रु०। “दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च। तैर्भवन्तीह द-द्रूणां यथास्वञ्चाप्युपद्रवाः”।“पिडकोपचयशोषाः विसर्पाः किटिभानि च। पर्व्वभेदोरुजश्शोथोज्वरोमूर्च्छा च दा-रुणाः। दौर्वल्यमर्शश्वासोवमथुर्लोमहर्षणम्। “दष्ट-रूपं समासोक्तमेतच्च व्यासतः शृणु” सुश्रु०। तल्लक्षणं तत्रोक्तं यथा। “यत् स्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं किटिभं वदन्ति”

किट्ट न० किट-क्त नि० इडभावः। १धातूनां मले, २तैलादा-धोभागस्थे मले च“पृथक् किट्टं पृथङ्मलम्” योगार्णवः। “आहारस्य रसः सारः सारहीनो मलद्रवः। शिराभि स्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात्। शेषं किट्टं च यत्तस्य तत्पुरीषं निगद्यते” भावप्र०।

किट्टवर्ज्जित न० ३त०। शुक्रे चरमधातौ यथा च तस्य पाके किञ्चित् मलशून्यत्वं तथोक्तं भावप्र० तच्च अहङ्कारशब्दे ५६०पृ०उक्तम्।

किट्टाल पु० किट्टमालाति आ+ला—क। १ताम्रकलसे किट्ट-रूपेण अलति पर्य्याप्नोति अल—अच्। २लौहमले मेदि०

किण पु० कण गतौ अच् पृषो० अत इत्त्वम्। (घेंटा)। (कड़ा)१शुष्कव्रणे, २मांसग्रन्थौ, ३घर्षणजे चिह्ने च। “ज्याघातरेखाकिणलाञ्छनेन” रघुः “कराभ्यां किणजा-ताभ्यां शनकैः संववाहतुः” भा०व० १४४अ०। [शब्दर०

किणि स्त्री किणाय तच्छेदाय प्रभवति वा० इन्। अपामार्गे

किणिही स्त्री किण—अस्त्यर्थे इनि किणिनो व्रणान् हन्ति हन—ड गौ० ङीप्। अपामार्गे अमरः। “इङ्गुदी-कि-णिही-दन्ती-सरला-देवदारुभिः” सुश्रु०

किण्व न० उल्वादि० नि०। १सुराबीजे २ पापे च मेदि० सुराबीजद्रव्यभेदश्च नानाविधः सौत्रामणीशब्दे वक्ष्यते. भावप्र० “सुराबीजन्तु किण्वकम्”इति परिभाष्य“सुराबीजं यवगोधूमतण्डुलादि” इति व्याख्यातं सुश्रुते तु तस्य तण्डुलादितो भिन्नत्वेन निर्द्देशः कृतः यथा “दैत्यनिकृन्तनं काये माषान् सुभावितान्। दधीतां-स्तत्कषायेण शालीनाञ्चापि तण्डुलान्। अवचूर्ण्य ततः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान्। शालितण्डुल चूर्णञ्च तत्कषायेण साधितम्। तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान्। मण्डोदकार्थे क्वाथञ्च दद्यात्तत्र सर्वं सेचतः। निदध्यात्कलशे तान्तु सुरां जातरसां पिबेत्” “किण्वादिभ्योमदशक्तिवत्” सां०सू०। अयं शब्द पु० न० इति भरतः। तत्र कृतम् अपूपा० यत् छ वा किण्व्य किण्वीय तत्साधने द्रव्ये त्रि०

**कित** संशये रोगापनयने च भ्वा०पर०सक० सेट् एतदर्थे स्वार्थे सन् । चिकित्सति अचिकित्सीत् चिकित्सा चिकित्सितुम् चिकित्सितः । यदि अक० न सन् इच्छायां सक० न सन् । केतति अकेतीत् । केतनं केतः

**कित** ज्ञाने जुहो०पर०सक० सेट् वैदिकोऽयम् । चिकित्ति अकेतीत् । "यं नोकिचिकेत् चित्रभानो" ऋ०१०.५१,२०

**कित** पु० कित–क । १ ऋषिभेदे तस्य गोत्रापत्यम् अश्वादि० फञ् । कैतायन तद्गोत्रापत्ये पुं स्त्री०

**कितव** पु० कि–भावे–क्त कितेन वाति वा–क । १द्यूतकारके २धुस्तूरवृक्षे अमरः ३वञ्चके, ४खले,च त्रि० मेदि० ५चोरनामकगन्धद्रव्ये, पु० शब्दरत्ना० । "यन्ता पितेव कितवं शशास" ऋ० २,२९,५ । द्यूतकारके "कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म" ऋ० ५,८५,८ । "कितवा ये वधकाश्च ये । अमात्याश्च ते दृष्टाः सेषु सत्यं न विद्यते" नारदः । "कितवाद्यूतकराः" रघु० । द्यूते विशेषः या०मिता० दर्शितो यथा "द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि" या० "द्यूतव्यवहाराणां द्रष्टारस्त एव कितवा एव राज्ञा नियोक्तव्याः न पुनःश्रुताध्ययनसम्पन्ना इत्यादि नियमोऽस्ति । साक्षिणश्च द्यूते द्यूतकारा एव कार्य्याः न तत्र स्त्रीबालकितवेत्यादिनिषेधोऽस्ति । कश्चित् द्यूतविषेशुन्दश्यमाह" मि० "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः" या० "कूटैरक्षादिभिरुपधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत् । नारदेन निर्वासने विशेष उक्तः "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् । कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृत" इति । यानि च मनुवचनानि द्यूतनिषेधपराणि "द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा । तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः" इत्यादीनि तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षरहितद्यूतविषयतया च योज्यानि" मि० किञ्च "द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्" या० । "यत् प्रोक्तं द्यूतं तदेकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्य्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः तस्करज्ञानकारणात् तस्करज्ञानरूपप्रयोजनोऽत्र प्रायशः चौर्य्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्य्यम्" मिता० । "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् । गृह्णीयाद्धूर्त्तकितवात् इतराद्दशकं शतम्" या० । "द्यूतास्त्वोघं यासमां तत्र राशिं समासीनस्तत्रो मन्दबुद्धिः" भा० आ०१अ० । कितवस्य गोत्रापत्यम् अश्वा०फञ् । कैतवायन तद्गोत्रापत्ये पुंस्त्री । उत्करा० चतुरर्थ्यां छ । कितवीय तत्सन्निकृष्टादौ अनन्तरापत्ये तिका० फिञ् । कैतवायनि तदपत्ये पुंस्त्री० तैकायनि शब्दे न इत्वे फिञो लुक्, बहुत्वे । तैकायनयः कैतवायनयश्च तिककितवाः । अस्य व्याघ्रादि०उपमितसमासः । कितवधूर्त्तः । शौण्डा०७त०; अक्षकितवः । वञ्चके "तव कितव ! किमाहितैर्वृथा नः" माघः ६रोचननामगन्धद्रव्ये राजनि० । [ कीटभेदे त्रिका०

**किन्तनु** पु० का कुत्सिता तनुरस्य । (माकड़सा) ख्याते

**किन्तमाम्** अव्य० कुत्सितार्थे किम्+बहूनां मध्ये एकस्यातिशये तमप् आमु । बहूनां मध्ये प्रकृष्टे कुत्सिते

**किन्तराम्** अव्य० कुत्सितार्थे किम्+द्वयोर्मध्ये एकस्यातिशये तरप् आमु । द्वयोर्मध्ये प्रकृष्टे कुत्सिते ।

**किन्तु** अव्य० किञ्च तु च द्व० । १पूर्व्ववाक्यसङ्कोचसम्पादने, २प्रागुक्तविरुद्धार्थे, ३किंपुनरित्यर्थे च मेदि० ।

**किन्तुघ्न** पु० तिथ्यर्द्धरूपकरणभेदे करणशब्दे विवृतिः

**किन्दत** पु० भारतप्रसिद्धे कूपभेदरूपे तीर्थे "किन्दतं कूपमासाद्य तिलप्रस्थं प्रदाय च । गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह !" भा०व०८३०अ० ।

**किन्दम** पु० ऋषिभेदे स हि मृगरूपेण मृगीरूपधारिण्या स्त्रिया सह सङ्गमकाले पाण्डुना मृगबुद्ध्या हतः । तत्कथा भा० आ० ११८अ० यथा "राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते । चरन् मैथुनधर्म्मस्थं ददर्श मृगयुग्मकम् । ततस्तां च मृगीं तञ्च रुक्मपुङ्खैः स पत्रिभिः । निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः । स च राजन् ! महातेजा ऋषिपुत्रस्तपोधनः । भार्य्यया सह तेजस्वी मृगरूपेण सङ्गतः" इत्युपक्रम्य पाण्डुं प्रति तत्कृतविवरस्य तस्य शापदानमुक्तं तत्रैव यथा "मृग उवाच । नाहं घ्नन्तं मृगान् राजन् ! विगर्हे चात्मकारणात् । मैथुनन्तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंसतः । सर्व्वभूतहिते काले सर्व्वभूतेप्सिते तथा । को हि विद्वान् मृगं हन्याच्चरन्तं मैथुनं वने । अस्यां मृग्याञ्च राजेन्द्र ! हर्षान्मैथुनमाचरम् । पुरुषार्थफलं कर्त्तुं तत्त्वया विफलीकृतम् । पौरवाणां महाराज ! तेषामक्लिष्टकर्म्मणाम् । वंशे जातस्य कौरव्य ! नानुरूपमिदन्तव । नृशंसं कर्म्म सुमहत् सर्व्वलोकविगर्हितम् । अस्वर्ग्यमयशस्यञ्चाप्यधर्म्मिष्ठञ्च

भारत!। स्त्रीभोगानां विशेषज्ञः शास्त्रधर्म्मार्थतत्त्ववित्। नार्हस्त्वं सुरसङ्काश! कर्त्तुमस्वर्ग्यमीदृशम्। त्वया नृशंसकर्त्तारः पापाचाराश्च मानवाः। निग्राह्याः पार्थिवश्रेष्ठ! त्रिवर्गपरिवर्ज्जिताः। किं कृतं ते नरश्रेष्ठ! मामिहानागसं घ्नता। मुनिं मूलफलाहारं मृगवेशधरं नृप!। वसमानमरण्येषु नित्यं शमपरायणम्। त्वयाहं हिंसितो यस्मात्तस्मात्त्वामप्यहं शपे। द्वयोर्न्नृशंसकर्त्तारमवशं काममोहितम्। जीवितान्तकरो भाव एवमेवागमिष्यति। अहं किन्दमो नाम तपसा भावितो मुनिः। व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम्। मृगो भूत्वा मृगैः सार्द्धं चरामि गहने वने। न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः। मृगरूपधरं हत्वा मामेवं काममोहितम्। अस्य तु त्वं फलं मूढ! प्राप्स्यसीदृशमेव हि। प्रियया सह संवासं प्राप्य कामविमोहितः। त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि। अन्तकाले हि संवासं यया गन्तासि कान्तया। प्रेतराजपुरं प्राप्तं सर्व्वभूतदुरत्ययम्। भक्त्या मतिमतां श्रेष्ठ! सैव त्वामनुगमिष्यति। वर्त्तमानः सुखे दुःखं यथाहं प्रापितस्त्वया। तथा त्वाञ्च सुखं प्राप्तं दुःखमभ्यागमिष्यति"। [तदपत्ये पुंस्त्री०

**किन्दर्भ** पु० ऋषिभेदे तस्यापत्यम् विदा० अञ्। कैन्दर्भ

**किन्दान** न० किञ्चिदपि दानमावश्यकं यत्र। भारतप्रसिद्धे सरकतीर्थस्थे तीर्थभेदे सरकमुपक्रम्य "किन्दाने च नरः स्नात्वा किञ्जप्ये च महीपते!। अप्रमेयमवाप्नोति दानं जप्यञ्च भारत!" भा०,व०,८३अ०।

**किन्दास** पुं कः कुत्सितोदासः। निन्दिते दासे ततः अनार्षत्वात् अपत्ये विदा० अञ्। कैन्दास तदपत्ये पुंस्त्री०।

**किन्धिन्** पुं कुत्सिता धीरस्यस्य व्रीह्या०इनि। अश्वे त्रिका० स्त्रियां ङीप्।

**किन्नर** पुंस्त्री कः कुत्सितो नरः तुरङ्गवदनत्वात्। देवयोनिभेदे स च पुलस्त्यर्षिपुत्रभेदः। "राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा। यक्षाश्च मनुजव्याघ्र! पुत्रास्तस्य च धीमतः" भा० आ० ६६अ०। "किन्नरान् वानरान् मत्स्यान् विविधांश्च विहङ्गमान्" मनुः स्त्रियां ङीप्। "ऋक्षीषु च तथा जाता वानराः किन्नरीषु च" रामा०। "किञ्चित्कणत्किन्नरमध्युवास" "उद्गास्यतामिच्छति किन्नराणाम्" कुमा०। "किमिदं किन्नरकण्ठि! सुप्यते" रघुः। २वर्षभेदे च किम्पुरुषशब्दे विवृतिः ३अर्हदुपासकभेदे हेम०।

**किन्नरेश** पुं ६त०। कुवेरे तस्य तदधिपत्यकथा काशी० ख० १२अ० यथा "वरं ददामि ते वत्स! तपसाऽनेन तोषितः। निधीनामधिनाथस्त्वं गुह्यकानामपीश्वरः। यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत!। पतिः पुण्यजनानाञ्च सर्व्वेषां धनदो भव" किन्नरेश्वरादयोऽप्यत्र

**किन्नु** अव्य० किञ्च नु च द्व०। १प्रश्ने, २वितर्के ३सादृश्ये ४स्थाने च जटाधरः पदद्वयमित्येके।

**किप्य** पु० सुश्रुतोक्ते पुरीषजे कृमिभेदे। "अयवा वियवाः किप्याश्चिप्या गण्डूपदास्तथा। चुरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः" सुश्रु०।

**किम्** कि+कु-शब्दे बा०डिमु। १कुत्सिते २जिज्ञासिते ३वितर्कविषये। ४कुत्सायां ५गर्हणे ६वितर्के ७प्रश्ने ८सादृश्ये, (प्रकारे) ९करणे च अव्य० जटा० १०ईषदर्थे ११अतिशये शब्दरत्नम्। तत्र त्रिलिङ्गस्य सर्व्वनामता के कस्मै इत्यादि "के यूयं स्थल एव संप्रति वयं प्रश्नो विशेषाश्रयः" सा०द०। "कस्मै नाथ! समर्प्य कैरवकुलं व्योमान्तमालम्बसे" उद्भटः। "केषां नैषा भवति कविता कामिनी कौतुकाय" प्रसन्नरा०। "कस्मिंश्चिद्विहङ्गोद्देशे भासुरकोनाम सिंहः प्रतिवसति" पञ्चतन्त्रम्। "कस्मिंस्तु खलु विज्ञाते सर्व्वं विज्ञातं भवति" मुण्डकश्रुतिः। निन्दितार्थे किंराजा किङ्गौः इत्यादि। "किंराजा यो न रक्षति" "स किंसखा साधु न शास्ति योऽधिपम्" किरा० इत्यादि तत्र ईषदर्थे न किमप्यस्ति। किञ्चिदपि नास्तीत्यर्थः अतिशये किमप्येव प्रगल्भसे अतिशयितं प्रगल्भसे इत्यर्थः अव्ययस्य प्रश्ने "किमिदं किन्नरकण्ठि सुप्यते" रघुः

तत्र किंशब्दशक्तिबोधादिप्रकारो गदाधरेण शक्तिवादे दर्शितो यथा।

"किंपदस्य जिज्ञासिते शक्तिः एतदेव स्वीयजिज्ञासाज्ञापनाय किंपदघटितप्रश्नवाक्यं प्रयुज्यते। तत्रोद्देश्यवाचकिंपदस्य समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तं उपस्थाप्यतावच्छेदकत्वान्तुपलक्षणतयाऽनुगमकं शाब्दबोधे तदभानात्। एवञ्च कः पचतीत्यतः पाककर्तृत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्म्मस्तद्वान् पचतीत्याकारोऽन्वयबोधः प्रतिपाद्यते किञ्चिद्धर्म्मावच्छिन्नोद्देश्यतानिरूपितपाककर्तृत्वावच्छिन्नविधेयताशालिज्ञानं भवतित्याकारिकाया जिज्ञासायास्तादृशबोधविषयकतया

र्जुनशिरोवर्त्तिंशयासनराजरङ्गेन्द्रहस्तिन्द्रकमोमकल्कवे-तकार्जुनप्रभृतीनां कुलप्रमाथो इत्यमपन्विभवेत् । यस्तु समाख्यः परशुः स ययाकामं प्रयोक्तव्यः ।

कुशपलक्षणं तु कुशपशब्दे दृश्यं । २वृक्षे पु० शब्द-रत्ना० । तस्येदम् शिवा० अण् । कौठार तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् । अल्पार्थे क । कुठारक क्षुद्रकुठारे पुंस्त्री० स्त्रियां कुठारिका । [ कारे पु० शब्दरत्ना० ।

कुठारु पु० कुठ—आरु । १वृक्षे २वानरे पुंस्त्री०मेदि०। ३अस्त्र-

कुठि पु०कुठि—इन् किच्च । १पर्वते २वृक्षे च उणा० को० ।

कुठिक पु० कुठ—इकन् किच्च । (कुड़) कुष्ठे हारा० ।

कुठेर पु०कुठि—एरन् बा०नुमभावः । १पर्णासे उज्ज्व० २वह्नौ शब्दमा० । ३श्वेततुलस्याम् (बाबुइतुलसी) राजनि० ।

कुठेरक पु०कुठेर इव कायति कै—क । नान्दोवृक्षे राजनि० । स्वार्थे क । ३श्वेततुलस्यां (बाबुइतुलसी) शब्दच० ।

कुठेरज पु० कुठेरइव जायते जन—ड "सह कृपा" पा०स० । श्वेततुलस्याम् शब्दरत्ना० ।

कुठेरु पु० कुठ—एरुक् । चामरवाते त्रिका० ।

कुड वैकल्ये भ्वा० इदित् पर० अक० सेट्। कुण्डति अकुण्डीत् प्रनिकुण्डति कुण्डः । [ प्रनिकुण्डते । कुण्डम् ।

कुड दाहे भ्वा० इदित् आत्म० सक० सेट् । कुण्डते अकुण्डिष्ट

कुड रक्षणे चुरा० इदित् उभ० सक० सेट् । कुण्डयति ते अचुकुण्डत् त । प्रनिकुण्डयति ते ।

कुड अदने सक० बाल्ये अक० तुदा० पर० सेट् कुटादि । कुडति अकुडीत् चुकोड़ । प्रनिकुडति कुडपः कुडवः

कुडप (व) पु० कुड—कपन् (कवन्) वा । प्रस्थचतुर्थांशरूपे परिमाणभेदे अमरः अर्द्धचादि । कर्षशब्दे विवृतिः क्षीरस्वामिमते पानः । "द्रोणस्तु खार्य्याः खलु षोड़शोंऽशः स्यादाढकोद्रोणचतुर्थभागः । प्रस्थश्चतुर्थांश इहाढकस्य प्रस्थाङ्घ्रिराद्यैः कुडवः प्रदिष्टः" "लीला० तेन षोड़शकर्षमितः कुडवः आर्द्रद्रव्याणां तु द्वात्रिंशत्कर्षमित इत्याह सुश्रुतः

"पलकुडवादीनामतो मानन्तु व्याख्यास्यामः । तत्र द्वादशधान्यमाषा मध्यमाः सुवर्णमाषकः । ते षोडश सुवर्णम् । अथ मध्यमनिष्पावा वा एकोनविंशतिर्द्धरणम् । तान्यर्द्धतृतीयानि कर्षः । ततोर्द्धं चतुर्गुणमभिवर्द्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते तुला पलशतं तानि विंशतिर्भारः शुष्काणामिदं मानमार्द्रद्रव्याणाञ्च द्विगुणमिति" ।

"अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयन् । यवप्रस्थं तु तं सक्तूनकुर्व्वन्त तपस्विनः । कृतजप्याह्निकास्ते तु हुत्वा वह्निं यथाविधि । कुडवं कुडवं सर्व्वे (चत्वारः) व्यभजन्त तपस्विनः" "इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः" भा० आश्व० ६०, ।

कुडि पु० कुण्ड्यते दह्यते कुडि—दाहे इन् नलोपश्च । देहे सि० कौ० "कुठिकम्प्योर्नलोपश्चेति" उणा० उज्ज्वलदत्तेन कुठि प्रतिघाते इति व्याख्यातम् कौमुदीकृता तु कुडि—दाहे इति व्याख्यातम् । अतः मतभेदेन उणादिसूत्रे पाठद्वयम् ।

कुडिश पुंस्त्री० कुड्यते कुड—अदने बा० श इट् । (कुडची) ख्याते मत्स्यभेदे राजनि० । "कुडिशो मधुरोवल्यः कषायो वह्निदीपनः । लघुः स्निग्धो वातरोगे पथ्यश्च रोचनस्तथा । बलकारी कोष्ठबद्धकारी च भिषजां मतः" राजनि० ।

कुडिहुञ्ची स्त्री० क्षुद्रकाञ्चनेक्षुवृक्षे(छोट कञ्चिया) राजनि० ।

कुड्मल कुड—बाल्ये बा० क्मलच् । १मुकुले विकाशोन्मुखे कुसुमे सि०कौ० । २नरकभेदे न० कुट्मलशब्दे उदाहृत मनुवचने कुड्मलमिति वा पाठः "दलितकोमलपाटल कुड्मले" माघः तारका०इतच् । कुड्मलित जातमुकुले त्रि० ।

कुड्य न० कुडङ्क दाहे ग्रे यत् कौतेरप्र० यक् डुगागमश्च इत्युज्ज्वलदत्तः । १भित्तौ(भित) अमरः २विलेपने मेदि० ३कौतूहले शब्दरत्ना० । "वेद्यां सभाप्रमाणोऽङ्गं कुड्यमास्तरणानि वा । "चन्दनरसैरपलिप्तकुड्य" सुश्रु० । "वैदूर्य्यकुड्येषु शशिद्युतिभ्यः" माघः । स्वार्थे क । भित्तौ शब्दर० ।

कुड्यच्छेदिन् पु० छिद—णिनि ६त० । चौरभेदे येन गृहभित्तिं विदार्य्य चौर्य्यं क्रियते तत्र शब्दरत्ना० ।

कुड्यच्छेद्य पु० कुड्यं च्छेद्यं यस्य । १खनके । कुड्यस्य तन्निर्म्माणाय तदर्थं च्छेद्यम् चतुर्थ्यर्थे ६त० । भित्तिनिर्म्माणाय खाते २गर्त्ते त्रिका० ।

कुड्यमत्स्य पुंस्त्री०कुड्ये मत्स्य इव । स्थूलगोधिकायां हेम० जातित्वात् स्त्रियां ङीष् यलोपः । कुड्यमत्सी तत्रैव शब्दर० । [कुणयति ते अचुकुणत् त । प्रनिकुणयति

कुण आभाषणे, मन्त्रणे च अद० चु० उभ० सक० सेट् ।

कुण उपकरणे शब्दे च तुदा०पर०सक० सेट् । कुणति अकोणीत् । प्रनिकुणति उपकरणं दानादिना पोषणम् ।

कुणक पु० कुण्यते उपक्रियते कुण—कर्म्मणि बकर्थे क ततः

वा। वेदास्राण्येव तानि स्युर्वर्त्तुलान्यथ वा क्वचित्। वेदास्राणि, चतुरस्राणि। आम्नायरहस्ये "कुण्डानि चतुरस्राणि वृत्तमात्राकृतीनि वा। नव पञ्चाथ वा चैकं कर्त्तव्यं लक्षणान्वितम्। नवकुण्डविधाने तु दिक्षु कुण्डाष्टके स्थिते। नवमं कारयेत् कुण्डं पूर्वेशानदिगन्तरे। विधाने पञ्च कुण्डानामीशाने पञ्चमं भवेत्"। ज्ञानरत्नावल्याम् "दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरे"। नारदीयेऽपि "यत्रोपदिश्यते कुण्डचतुष्कन्तत्र कर्म्मणि। वेदास्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभं तथा। कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः। कुण्डवेद्यन्तरञ्चैव सपादकरसम्मितम्। पीठवत्तु यत्कुण्डं सुप्रमाणं सुगर्त्तकम्"। वह्न्यर्चाविधौ "भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः। सदा होमे तथा शान्तौ वृत्तं वरुणदिग्गतम्"। कामिके तु तत्तद्दिक्षु तत्तत्फलार्थं कुण्डोक्तिर्यथा "ऐन्द्र्यां—स्तम्भे चतुष्कोणमग्नौ भागे भगाकृति। चन्द्रार्द्धं मारणे याम्ये, नैर्ऋते हि त्रिकोणकम्। वारुण्यां शान्तिके वृत्तं, षडस्रमुच्चाटनेऽनिले। उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रसन्निभम्"। सर्वेषु चैतेषु होमानुसारेण हस्तादिमानं होमसंख्यानुकल्पनीयम्। तदुक्तं भविष्यपुराणे "मुष्टिमानं शतार्द्धे तु शते चारत्निमात्रिकम्। सहस्रे त्वथ होतव्ये कुर्यात्कुण्डं करात्मकम्। द्विहस्तमयुते तत्र लक्षहोमे चतुःकरम्। अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम्"। मुष्टिमानमिति, बद्धमुष्टिकरमात्रमित्यर्थः। इदानीं चतुरस्रादिकुण्डानामाकारक्रमोऽभिधीयते। चतुरस्रं तावदाह विश्वकर्म्मा "कृत्वा प्राक्सूत्रमर्द्धाङ्कं दक्षिणोत्तरमत्स्ययोः। न्यस्य सूत्रं ततः कोणैरङ्कितैश्चतुरस्रकम्"। पूर्वोक्तेनाभ्युपायेन प्राचीं निश्चित्य प्राक्पश्चिमायतां रेखामालिख्य तामर्द्धभागे लाञ्छयित्वा दक्षिणोत्तरदिशोर्मत्स्यद्वयं कुर्यात् सूत्रोपरि सूत्रान्तरनिपातनात् स्वस्तिकमध्याकृतिः भिन्नयाकृतिषु मत्स्य उच्यते। मत्स्यद्वयनिष्पत्तिश्चैवं कार्य्या। पूर्वोक्तरेखापरिमितस्य सूत्रस्यार्द्धं तस्या एव रेखाया मूले निधाय तत्सूत्रान्तरं परिभ्राम्य वृत्तं रचयेत् तस्या एव रेखाया अपरप्रान्ते तस्यैव सूत्रस्यार्द्धं निधाय तत्सूत्रान्तं परिभ्राम्य द्वितीयान्तं कुर्यात् एवं वृत्तद्वये कृते दक्षिणोत्तरदिशोर्मत्स्यद्वयं निष्पद्यते अथ मत्स्यद्वये पूर्वोक्तरेखालाञ्छने चैकं सूत्रं निपात्य दक्षिणोत्तरायतां रेखां लिखेत्। एवं दिशः साधितास्तु विदिक्साधनार्थं कोणान् लाञ्छयेत्। तत्रायं प्रकारः—पूर्वनिष्पन्नरेखाप्रान्तचतुष्टयस्य प्रत्येकं पार्श्वद्वये चिकीर्षितपरिमाणस्यार्द्धमर्द्धं निधाय तत्सन्धौ कोणलाञ्छनानि कुर्यात् ततः कोणलाञ्छनेषु सूत्रचतुष्टयनिपातनात् पूर्वदिश्युदङ्मुखयोनिकं चतुरस्रं कुण्डं कुर्यात्। योन्याकारादीनाञ्चतुरस्रप्रकृतिकस्तु कामिकशास्त्रात् "पञ्चमांशं पुरोन्यस्य मध्ये वेदांशमानतः। भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमुच्यते"। क्षेत्रस्य पञ्चमभागं पुरःप्राच्यां दिशि विन्यस्य मध्ये कोणसूत्रस्येति शेषः। वेदांशः, तुरीयांशः। भ्रमात्, सूत्रान्तपरिभ्रमणेन अश्वत्थपत्राकारं कुण्डमाग्नेयदिशि कुर्यादिति। तत्रायं निर्म्माणप्रकारः पूर्वोक्तन्यायेन सम्पन्नचतुरस्रीकृतस्य क्षेत्रस्य पश्चिमरेखामध्यात् पूर्वरेखामध्यभेदिनीं क्षेत्रसूत्रपञ्चमांशाधिकां गर्भरेखामालिख्य नैर्ऋतदेशे कोणसूत्रस्य तुरीयांशे लाञ्छयित्वा तल्लाञ्छनोपरि विन्यस्तादेः सूत्रस्य पूर्वोक्तगर्भरेखामूलविन्यस्तं प्रान्तं परिभ्राम्य वहिर्वृत्तार्द्धं निष्पाद्य वायव्यकोणेऽप्येवमेव वृत्तार्द्धं रचयेत्। ततो गर्भरेखाप्रान्तात् वृत्तद्वयप्रान्तस्पर्शि सूत्रद्वयं निपात्य पिप्पलपत्राकारमाग्नेयदिश्युदङ्मुखयोनिकं योनिकुण्डं विदध्यात्। "चतुरस्रे षडंशभक्ते त्यक्त्वाद्यन्तौ तदंशकौ। मध्यसप्तांशमाने तु कुण्डं खण्डेन्दुवत् क्रमात्"। चतुरस्रे क्षेत्रे षड्भिर्नवभिर्विभक्ते आद्यन्तौ त्यक्त्वा अवशिष्टसप्तांशमानेन सूत्रभ्रामणात् खण्डेन्दुसदृशं कुण्डं कुर्यात्। अस्यैवं कृतिः—चतुरस्रं क्षेत्रं नवधा विभज्य तत्र प्रथमोऽन्त्यश्चेति भागद्वयं परित्यज्य अवशिष्टसप्तभागादिमरेखाग्रभेदे सूत्रादिं निधाय तत्रैव भागसप्तकस्यान्तिमरेखाग्रभेदे सूत्रान्तं निवेश्य तत्सूत्रपरिभ्रमणेन प्रथमरेखातुल्यं विस्तारप्रान्तवृत्तार्द्धं विरचयेत्। अथ प्रथमरेखाप्रान्तद्वयमपि वृत्तार्द्धे संयोज्य दक्षिणदिगवस्थितमुत्तराभिमुखयोनिकं कुण्डं चन्द्रखण्डं विदध्यात्। "त्रिभागवर्द्धितो मत्स्यैस्त्रिभिर्नैर्ऋतचरं भवेत्"। स्थानत्रये तृतीयांशत्रयं दत्त्वा मत्स्यत्रयेण नैर्ऋतचरं नैर्ऋतदिक्सम्बन्धि कुण्डं कुर्यात्। इत्यस्य सम्प्रदायः। पूर्ववत्सम्पन्नचतुरस्रं क्षेत्रं निर्माय तत्तिरश्चीनपश्चिमरेखामध्यात् तिर्य्यगवस्थितपूर्वरेखामध्यभेदिनीं क्षेत्रसूत्रतृतीयभागाधिकां गर्भरेखामालिख्य पूर्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्यात् ततो गर्भरेखाप्रान्तात् पूर्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्यात्।

ततो गर्भरेखाप्रान्तात् पूर्व्वोक्तपश्चिमरेखाप्रान्तद्वयस्पर्शिसूत्रद्वयं निपात्य नैरृत्यादिशि पूर्व्वाभिमुखयोनिकं त्रिकोणं कुण्डमुत्पादयेत्। एवञ्च विधीयमाने स्थानत्रये तृतीयांशत्रयवर्द्धितत्वेन मत्स्यत्रयमपि निष्पद्यत इति। "कर्णार्द्धाष्टांशसन्न्यासाद्वृत्तं कुण्डमिहोदितम्। कर्णसूत्रार्द्धस्य योऽष्टमांशस्तस्य संन्यासात् सम्यक् न्यासात् वृत्तं कुण्डं स्यादिति। अस्यैवं रचनाप्रकारः चतुरस्रे क्षेत्रे कोणात् कोणान्तरगामिनः सूत्रस्यार्द्धं कोणार्द्धशब्दवाच्यमष्टधा विभज्य यावानष्टमो भागस्तावन्तं भागं चतुर्द्दिक्षु बहिर्विन्यसेत्। ततः क्षेत्रगर्भदेशे सूत्रादिं निधाय बहिःस्थिताष्टमभागविन्यस्तं तस्यैव सूत्रस्य मान्तं सर्व्वतः परिभ्राम्य पश्चिमदिशि पूर्व्वाभिमुखयोनिकं वृत्तकुण्डं कुर्य्यात्।"षड्भागवर्द्धितो मत्स्यैश्चतुर्भिः स्यात् षडस्रकम्" क्षेत्रपार्श्वयोः प्रत्येकं षड्भागद्वयं कृत्वा अवशिष्टदिशोर्मत्स्यचतुष्टयमुत्पाद्य सूत्रषट्कपातात् षडस्रकुण्डनिष्पत्तिरिति। अस्यैवं सम्प्रदायः—समचतुरस्रं क्षेत्रं षोढा विभज्य यावान् षष्ठोभागस्तावता मानेन क्षेत्रस्य दक्षिणोत्तरपार्श्वे समन्ताद्वर्द्धयित्वा तद्देव क्षेत्रमायतचतुरस्रं सम्पादयेत्। अथानन्तरोक्तपार्श्वद्वयरेखास्पर्शिनीं दक्षिणोत्तरायतां गर्भरेखां रचयेत्। ततः क्षेत्रमध्यादुत्तरपार्श्वरेखामध्याच्च पूर्व्वोक्तगर्भरेखार्द्धपरिमितमेकैकं सूत्रं निपात्य पूर्व्वैशानदिशोरन्तराले मत्स्यमुत्पाद्य तेनैव प्रकारेण पश्चिमवायव्ययोरन्तराले मत्स्यं कुर्य्यात्। अथ भूयोऽपि क्षेत्रमध्याद्दक्षिणपार्श्वरेखामध्याच्च प्रागुक्तगर्भरेखाप्रान्तद्वयात् लाञ्छनचतुष्टयस्पर्शिसूत्रचतुष्टयं निपातयेत्। एवं लाञ्छनान्तरालस्थितसूत्रद्वयेन सह सूत्रषट्कयोगाद्वायव्यदिशि प्राङ्मुखयोनिकं षट्कोणकुण्डं कुर्य्यात्।"चतुरस्राष्टभागेन कर्णिका स्याद्विभागतः। तद्बहिस्त्वेकभागेन केशराणि प्रकल्पयेत्। तृतीये दलमध्यानि तुरीये दलकोटयः। भ्रामणात् पद्मदलं स्याद्दलाग्रं दर्शयेद्बहिः"। चतुरस्रस्य अष्टधा विभक्तस्य मध्ये अष्टमभागेन कर्णिका स्यात् कर्णिकाया बहिः परिधिस्थे द्वितीये अष्टमभागे विन्यासे केशराणि स्युः। केशराद्बहिः परिधिस्थिते तृतीये अष्टमभागे विन्यासे दलमध्यानि कल्पयित्वा चतुर्थे दलकोटीं विधाय चतुरस्राद्बहिर्द्दलाग्राणि दर्शयेत्। अत्राप्यष्टमभागेनेति सम्बध्यते। विभागतः विभागे विभागे सर्व्वदिग्भागेष्वित्यर्थः। भ्रामणात्,-सूत्रस्येति शेषः एतच्च पद्मदलं सर्व्वत्र योजनीयम्।

अयमर्थः—चतुरस्रं क्षेत्रं प्रागग्राभिरुदगग्राभिश्च रेखाभिरष्टधा विभज्य मध्यदेशे लाञ्छयित्वा क्षेत्राद्बहिश्चतुर्द्दिक्षु समन्तादपरमष्टभागं विन्यसेत् तस्यैवं लाञ्छनात् परितः प्रतिदिशं पञ्चपञ्चाष्टमभागावधिरेखा भवन्ति। ततः पूर्व्वोक्तलाञ्छनोपरि विन्यस्तादेकस्मात् सूत्राविच्छिन्नमानस्य च सूत्रस्य परिभ्रामणात् पञ्च वृत्तानि सम्पाद्य वृत्तातिरिक्तरेखाः परिमार्ज्जयेत्। ततः प्रथमे वृत्ते कर्णिका द्वितीये केशराणि तृतीये दलमध्यानि चतुर्थे दलकोटयः पञ्चमे दलाग्राणीति कृत्वा अष्टदलं पूर्व्वाभिमुखयोनिकं पद्मकुण्डमुत्तरदिशि कुर्य्यात्। इदानीमेतदेव कुण्डं प्रकारान्तरेणोच्यते "वृत्तकुण्डं समं चान्यदथवान्यप्रकारतः। वृत्तकुण्डं पुरा कृत्वा चतुर्द्धा ऽऽमेखलं भजेत्। वह्निधस्त्र तथा कृत्वा कर्णिका सार्द्धका भवेत्। अवशिष्टं दलं वेद्दलमष्टदलन्तु वा" यथा प्रतीच्यां दिशि वृत्तकुण्डमभिहितमिहापि तथैव कृत्वा तन्मध्ये यथाविभागं पद्मकुण्डं कुर्य्यादिति। अथवेत्यादिना तृतीयः प्रकार उच्यते पूर्व्वं वृत्तकुण्डमेव आमेखलं मेखलामवधीकृत्य चतुर्द्धा भजेत्। वृत्तकुण्डमध्ये अन्यस्यापि समभागस्य वृत्तत्रयस्य करणाच्चतुर्थः क्षेत्रविभागः कार्य्य इत्यर्थः। ततः क्षेत्रमध्ये सार्द्धभागेन विस्तृता कर्णिका विधेया। उक्तेधस्त्र तथा कृत्वेति, कर्णिकाया उच्छ्रयमपि सार्द्धभागेन कुर्य्यादित्यर्थः। अवशिष्टेन सार्द्धभागद्वयेन केशरव्यतिरिक्तानि दलान्येव कुर्य्यात्। एवन्तद्द्वादशमष्टदलं वा पद्मकुण्डं कुर्य्यात्। "क्षेत्रात् द्वादशमं भागं चतुर्द्दिक्षु तदन्तरे। विन्यस्य तत्प्रमाणेन तुर्य्यांशमपरं नयेत्। तस्य कर्णप्रमाणेन तद्वृत्तान्यपि लाञ्छयेत्। तत्राष्टसूत्रयोगाद्दष्टास्रं कुण्डमुच्यते"। द्वादशधा विभक्तस्य क्षेत्रस्य यावान् द्वादशो भागस्तावन्तं भागं चतुर्द्दिक्षु विन्यस्य, तदन्तरे, तस्य क्षेत्रस्य अन्तरे बहिःप्रदेशे "अन्तरं बहिर्योगोपसंव्यानयोरिति" ज्ञापकादन्तरशब्दोऽत्र बहिर्वचनः। तत्प्रमाणेनेति तस्य बहिर्विन्यस्तद्वादशभागस्य परिमाणेन अपरं द्वितीयं तुर्य्यांशं चतुरस्रं नयेत् प्रापयेत् कुर्य्यात् इति यावत्। तुर्य्यांशमिति, स्वार्थिकोऽत्र पूरणप्रत्ययः। तस्य कर्णप्रमाणेनेति। कोणात् कोणान्तरस्पर्शिसूत्रे शिल्पशास्त्रेषु कर्ण इति प्रसिद्धम्। इह तु क्षेत्रगर्भादारभ्य चतुष्कोणगामिनः पृथगेव चत्वारः कर्णा इत्यभिप्रायेण कर्णार्द्धमपि कर्णशब्देनोक्तम्। तेनायमर्थः। बाह्यस्थितचतुर-

षडङ्गुलत्वम्। कण्ठमानमुक्तं कालोत्तरे "खाताद्बाह्येऽङ्गुलः कण्ठः सर्व्वकुण्डेष्वयं विधिः"। खातमेखलयोरन्तराले यङ्गुलमानेन कण्ठमोष्ठापरपर्य्यायं कुर्य्यात्। सारसङ्ग्रहे "खाताद्बाह्यादङ्गुलः कण्ठस्तद्बाह्येऽत्र मेखला क्रमात्। मेखलालक्षणमुक्तं कामिके" "वेदार्कांशेन तदौष्ठः स्यात्तद्वेदभागतः। मेखलावसुतोच्छ्रायः कुण्डाकारा तु मेखला। सर्व्वेषान्तु प्रकर्त्तव्या मेखलैकात्र साधकात्"। वेदस्य अर्कांशेन—द्वादशांशेन कुण्डस्यौष्ठः कण्ठपर्य्यायः स्यात् तद्वेदभागतः कुण्डचतुर्थांशतो मेखलायाः पृथुता विस्तारः। तथा वसुभागतः अष्टभागेन मेखलोच्छ्रायः कार्य्यः। पिङ्गलामतेऽपि "खातादेकाङ्गुलं त्यक्त्वा मेखलानां स्थितिर्भवेत्। मेखलैकाथवा तिस्रो भूतसंख्याथवा प्रिये"। भूतसंख्याः—पञ्चसंख्याः। उक्तञ्च तत्रैव "कण्ठाङ्गुलाद्बहिः कार्य्या मेखलैका षडङ्गुला। चतुस्त्र्यङ्गुला यद्वा तिस्रः सर्व्वत्र शोभनाः"। यदा एका मेखला तदा सा विस्तारोत्सेधाभ्यां षडङ्गुला विधेया "एका षडङ्गुलोत्सेधविस्तारा मेखला मतेति" पिङ्गलोक्तेः। यदा तु मेखलात्रयपञ्चकन्तदा क्रमेण चतुस्त्रिद्व्यङ्गुलमानाः कर्त्तव्याः। मोहचूडोत्तरे "मेखलात्रितयं कार्य्यं कोणरामकमाङ्गुलैः। कोणाः—चत्वारः। रामाः—त्रयः। पक्षौ—द्वौ। तत्र सर्व्वान्तिमा, द्व्यङ्गुला। मध्यस्था त्र्यङ्गुला। कुण्डकण्ठसन्निहिता चतुरङ्गुला इति। सत्येवं प्रथममेखलायाः कुण्डकण्ठादारभ्य नवाङ्गुल उत्सेधः स्यात्। लक्षणसंग्रहेऽपि "प्रथमाष्टाङ्गुला व्यासादुन्नता सा नवाङ्गुलैः। मध्या तु त्र्यङ्गुला वाह्येऽत्र तृतीया तु यमाङ्गुला। मेखलाः पञ्च वा कार्य्याः षट्पञ्चाब्धित्रिपक्षकैः" प्रथमा कुण्डसन्निहिता खातोत्सेधनवाङ्गुला वाह्ये तु चतुरङ्गुलैव। अब्ध्यङ्गुला—चतुरङ्गुला। अब्धयः—चत्वारः। पक्षौ—द्वौ। योनिलक्षणमुक्तं स्वायम्भुवे "मेखलामध्यतो योनिः कुण्डार्द्धा त्र्यंशविस्तृता। अङ्गुष्ठमानोच्चकण्ठा कार्य्याश्वत्थदलाकृतिः। प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखा। पूर्व्वमुखाः स्मृताः-शेषा यथाशोभं समन्विताः। मेखलाया गर्भदेशे कुण्डार्द्धदीर्घा कुण्डतृतीयांशविस्तृता योनिः कार्य्या। अश्वत्थशब्देन योन्युपलक्ष्यते। कण्ठशब्देन च योनिमेखला अङ्गुष्ठशब्दः, अङ्गुलपर्य्यायः। एकाङ्गुलपरिमाणेन योनेरग्रं मेखलाञ्च कुर्य्यादित्यर्थः "विस्तारोऽष्टाङ्गुलो योनेरग्रमङ्गुलस्य मितमिति" पिङ्गलोक्तेः। नारदीये "कुण्डस्य त्र्यंशविस्तारा योनिरुच्छ्रयताङ्गुलम्। कुण्डार्द्धेन तु दीर्घा स्यात् कुण्डौष्ठी बोधिपत्रवत्"। कुण्डौष्ठीति यथा कुण्डे द्वादशांशेन ओष्ठो विहित एवं योनेरपि द्वादशभागेन ओष्ठः कार्य्य इत्यर्थः। तथा कुण्डे प्रविष्टोष्ठो यस्या इति। बोधिपत्रम्, अश्वत्थपत्रम्। त्रैलोक्यसारे "दीर्घात् सूर्य्याङ्गुला नाभिस्त्र्यंशोना विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा। कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्नता। अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यस्थितिक्षमा। दक्षस्था पूर्व्वयाम्येषु तु वामस्था पश्चिमोत्तरे। नवमस्यापि कुण्डस्य योनिर्दक्षदलस्थिता"। सूर्य्याङ्गुला—द्वादशाङ्गुला। त्र्यंशोनेति—दैर्घ्यतृतीयांशन्यूनविस्तारा। एकेनाङ्गुलेनोच्छ्रिता तथा, एकेनाङ्गुलेन कुण्डमध्ये प्रविष्टा। कुम्भद्वयसमायुक्तेति—पूर्व्वोक्ताग्नेयकुण्डस्य तुल्याकृतेर्योनेर्मूलदेशस्थितं वस्तुद्वयमेव गजकुम्भाकृतित्वात् कुम्भशब्देनोक्तम्। तेनात्र कुण्डस्याकृतिर्वृत्तद्वयं स्तनपिण्डद्वयं वा स्यादिति तद्व्याख्यम्। अङ्गुष्ठमेखलेति, एकाङ्गुलमानया मेखलया परिवेष्टितेत्यर्थः। मध्ये स्थिति, यथा स्रुचि घृतधारणाय बिलं क्रियते तथा योनिमध्येऽपि बिलं कर्त्तव्यमित्यभिप्रायः। दक्षस्थेति, पूर्व्वाग्नेययाम्यकुण्डेषु दक्षिणभागे उत्तराभिमुखा योनिः कार्य्या नैर्ऋत्यादिकुण्डेषु तु पश्चिमभागे प्राङ्मुखा विधेया। नवम इति, अष्टदिक्षु कुण्डाष्टकं विधाय पूर्व्वेशानदिशोरन्तराले यन्नवमं कुण्डं चतुर्दिक्षु वा कुण्डचतुष्टयं कृत्वा ऐशानदिशि यत् पञ्चमं कुण्डं तयोरपि दक्षिणभागेऽपि योनिः कार्य्येत्यर्थः"।

तत्र विशेषतो नवकादिकुण्डोद्देशे उक्तं यथा "शारदातिलके "अष्टास्वाशासु रम्याणि कुण्डान्येतान्यनुक्रमात्। चतुरस्रं योनिरर्द्धचन्द्रं त्र्यस्रञ्च वर्त्तुलम्। षडस्रं पङ्कजाकारमष्टास्रन्तानि नामतः। आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरिति" सिद्धान्तशेखरे "पुरन्दरेशयोर्मध्ये वृत्तं वा चतुरस्रकम्। तदाचार्य्यं विनिर्द्दिष्टमिति" अयमुत्तमः पक्षः। अथ पञ्चकुण्डैककुण्डनिवेशनं यथा "आग्नेयकुण्डैरिह पञ्चकुण्डी चैकं यदा पश्चिमसोमयोर्वे। वेद्याः सपादेन करेण यद्वा पादान्तरेषाखिलकुण्डसंस्था" आशा—दिक्। तत्र कुण्डानि चतुरस्रत्र्यर्द्धवृत्तपद्मानि ऐशादिशि कुण्डं चतुरस्रं वृत्तं वा तैः पञ्चकुण्डीनिवेशनं स्यात् यदा चैकमेव कुण्डं

यथास्तत्क्रमैर्विशेषै ह्रस्वानि। अथैकहस्तादुदशहस्तान्तं यावत्कुण्डेषु भुजकोटिमानम् "वेदाश्वोऽग्नि युगाम्बुधयःशशियुगाब्धिदाश्वयक्षोऽक्षयोऽष्टाष्टाक्षिरसारसाङ्कमिता वेदपर्वतोऽक्षराः। चाङ्गुल्यो, ऽथ यवाः खमश्वामिषवः खं पञ्चषट् सागराः सप्ताब्धं भुजवक्तमी निगदिता वेदाकर्के बाहवः"। एकहस्ते कुण्डे चतुर्विंशत्यङ्गुलान्यायामविस्तारौ, द्विहस्ते चतुस्त्रिंशदङ्गुलानि। इमानि यादीन त्रिशाच्चतुष्टयन्यूनानि अल्पान्तरत्वात् पूर्णान्येव कृतानि। त्रिहस्ते एकचत्वारिंशदङ्गुलानि। चतुर्हस्ते अष्टचत्वारिंशदङ्गुलानि। पञ्चहस्ते पञ्चयवाधिकानि त्रिपञ्चाशदङ्गुलानि। षड्हस्ते त्रिपदोनैकोनषष्टिः, सप्तहस्ते सार्द्धत्रिषष्टिः। अष्टहस्ते यवोना सप्तषष्टिः। नवहस्ते द्विसप्ततिः दशहस्ते यवोना षट्सप्ततिरिति षोडशहस्ते पञ्चषतिः चतुर्भुजे कुण्डे भुजाङ्गुला इति व्याख्या। अत्रोपपत्तिः एकहस्तस्य चतुर्विंशत्यङ्गुलात्मकस्य भुजकोटिघातः क्षेत्रफलं तच्च षट्सप्तत्यधिकपञ्चशती५७६। एतत्पदमेकहस्तक्षेत्राङ्गुलानि चतुर्विंशतिः। एवं क्षेत्रफलस्य द्व्यादिगुणस्य मूलं चतुस्त्रिंशदाद्यङ्गुलानि भवन्ति। अथयोनिनिर्देशनम् "कुण्डलयी दक्षिणयोनिरैन्द्र्याः सौम्यपदा स्यादितराणि पञ्च। पश्चाङ्गमानीन्द्रदिगग्रकाणि योनिर्न कोणे न च योनिकुण्डे" "ऐन्द्र्याः प्राच्या आरभ्य कुण्डलयो चतुरस्रयोनिवृत्तार्द्धरूपा दक्षिणयोनिः स्यात् उत्तराग्रा अर्द्धाङ्गोता उदङ्मुखः। इतराणि पञ्च कुण्डानि त्र्यस्रवृत्तषडस्रपद्माष्टाश्राणि पश्चाद्योनीनि प्रागग्राणि अर्द्धाङ्गोता प्राङ्मुखः। नवममपि कुण्डं दक्षिणयोन्युदगग्रम्। योनिः कोणे योनिकुण्डे च न कार्येति व्याख्या। स्वायम्भुवे "प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी। पूर्वानना स्थिताः शेषाः यथायोगं व्यवस्थिताः" इति। त्रैलोक्यसागरे "नवमस्यापि कुण्डस्य योनिर्दक्षदले स्थितेति" अन्यत्र "नार्पयेत् कुण्डकोणेषु योनिं तान्त्रिकसत्तमः" इति "योनिकुण्डे तथा योनिं, पद्मे नाभिं विवर्जयेदिति"। अथ सर्वेषां कुण्डानां प्रकृतिभूतं चतुरस्रमाह "दिग्व्यासतन्तूर्ध्वचिह्नं सपाशं सूत्रं शङ्कौ पश्चिमे पूर्वगेऽपि। इत्थाकर्षेत् कोणयोः पाशतुर्यं स्यादेवं वा वेदकोणे समानम्"। हस्तव्यासात् द्विगुणितं व्यासं चतुर्थांशकृतचिह्नं सपाशं सूत्रं पूर्वपश्चिमस्थयोः शङ्कोर्दत्त्वा दक्षिणोत्तरसूत्रमध्ये यथामध्यचिह्नं भवति तथा कोणयोः पाशाङ्कतुर्यांशे आकर्षेत् एवमन्यत्रापि। एवं कृते समचतुरस्रं स्यात् इदमेव सर्वेषां कुण्डानां मूलमिति व्याख्या। उक्तं च "चतुरस्रमिदं प्रोक्तं सर्वकुण्डेषु कारणमिति" अत्र "समभुजौ तुल्य चतुर्भुजे च तथाऽऽयते तद्भुजकोटिघातः" क्षेत्रफलं षट्सप्तत्यधिकपञ्चशती ५७६ एतावदेव योन्यादिकुण्डेषु एकहस्तेषु यथा क्षेत्रफलं सम्पद्यते तथा यतितव्यमिति। अथ योनिकुण्डमाह "क्षेत्रे जिनांशे तु पुरःशरांशान् संवर्द्ध्य च स्त्रीयरदांश२२ युक्तान्। कर्णार्द्धमानेन तिकेन्दुखण्डे मध्यकपुरोऽश्वाद् भगोभगाभम्"। चतुरस्रक्षेत्रे चतुर्विंशतिधा भक्ते सति पञ्चांशान् स्त्रीयद्वाविंशदंशयुक्तान् अग्रे संवर्द्ध्य तत्पश्चार्धे विभक्तस्य क्षेत्रस्य पश्चिमचतुरस्रद्वयमध्याद्वान् कर्णसूत्रस्य चतुर्थांशेन मध्यक्पश्चिमभागे इन्दुखण्डे वृत्तार्द्धद्वयं विदन्। त्रिष। ततः पूर्वाग्राद्दक्षिणोत्तरसंलग्नं वृत्तार्द्धं यावद्वर्द्धमानगुणाद्वयतो भगाकारं योनिकुण्डं स्यादिति व्याख्या। अथ क्षेत्रफलानयनम् अत्र क्षेत्रत्रयं पूर्वाग्राद्दक्षिणोत्तरसूत्राग्रं यावद्वर्द्धमानसूत्रद्वयं त्रिकोणमेकं, तथा दक्षिणोत्तरसूत्राग्रात् दीर्घरसूत्रान्तं यावद्वर्द्धमानसूत्रद्वयादपरं त्रिकोणम् उभयवृत्तार्द्धं मिलित्वा एकं वृत्तमिति तृतीयं, क्षेत्रत्रयफलयोगे पूर्णफलम् तत्र प्रथमस्य क्षेत्रफलं यथा अत्र लम्बः अङ्गुलानि १७ यवाः१ यूकाः२। भूः२४ "लम्बेननिघ्नं कुभुवैक्यखण्डमिति"। अत्र कुभ्वभावात् भूमध्यमेव लम्बेन गुणितं सञ्जातं प्रथमं क्षेत्रफलम् अङ्गुलानि२०५ यवाः ७। अथापरस्य लम्बः १२ भूः सैव अत्रापि तथैव रीत्या क्षेत्रफलं १४४। अथ वृत्तार्द्धयोरेकं वृत्तं तत्फलं यथा तत्र वृत्तव्यासः१६,७,४,१ "व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इति व्यासवर्गः २८८ ०।०।०। भनवाग्निनि३९२७ निघ्नः पञ्चसहस्र ५०००भक्तोजातं क्षेत्रफलं वृत्तस्य २२६।१।४।५। त्रयाणां योगे क्षेत्रफलं पूर्णं ५७६।०।४।५। अत्र किञ्चा पञ्चकं यूकाचतुष्टयञ्चाधिकम् अल्पान्तरत्वाददोषः। ध्वजादिकविधानमप्युक्तम्। "स्थापने सर्वकुण्डानां ध्वजादः करविक्रिदः। अतोऽधिकाधिकं हीनं ह्रस्वदृष्टौ न दूषयेत्। न्यायदोषविशुद्ध्यर्थं क्रियते शास्त्रकोविदैरिति"। एतत्त्रैलोक्यसागरवचनात् उदीचीप्राचीवहस्तपङ्क्तिभ्या एवमन्ययोरपि। पदार्थादर्शे "चतुर्विंशतिधा सक्षत्रकं भक्त्वा पुरोन्यसेत्। पञ्चांशान् वैककस्य त्रीन्विंशांशान् कोणपादतः। वृत्तार्द्धं स्मो मध्यतिर्यक् सूत्रान्तस्य ततोऽर्पयेत्। पुरो दद्यात् तत्सूत्रान्तं, सूत्रे द्वे स्याद्भगाकृतिरिति"

यस्याःसा पद्मनालाकारत्वात्तथोक्तिः। कलमध्ये अधोगर्त्तः स्रुचि घृतधारणार्थं यद्वत्तेन रुचिरा सुन्दरा वा अश्वत्थपत्राकृतिः स्यादिति व्याख्या। वायवीये "मेखलां मध्यतः कुर्यात् पश्चिमे दक्षिणेऽपि वा। शोभनां मध्यतः किञ्चिच्छिन्नामनुमीलितां शनैरिति" योनिमिति शेषः। त्रैलोक्यसारे "दीर्घा सूर्याङ्गुला योनिश्च शोभा विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा। कुम्भद्वयार्द्धसंयुक्ता साश्वत्थदलवनुमता। अङ्गुष्ठमेखलायुक्ता मध्ये चाज्यधृतसार्वेति" पञ्चरात्रे "अर्काङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम्" तावद्दीर्घाम् एकाङ्गुलोच्छ्रिता दलस्य विस्तरणम् अङ्गुष्ठमेखलायुक्तेत्यत्र अङ्गुष्ठस्य उच्छ्रायः कुत्रचिदुक्तः अङ्गुष्ठं परिधिरिति द्वादशाङ्गुलोच्छ्रायः अयं न प्रायोवृद्धसंमतः अतोऽत्रदुक्त एकाङ्गुलोच्छ्रायपक्षो वृद्धसंमतः कार्यः। शारदायाम् "मूलादारभ्य नालं स्यादोष्ठान्ता मध्ये सरन्ध्रकमिति" द्वादशाङ्गुलमेखलापक्षे योनिलक्षणमाह "अश्वार्काङ्गुलयते तु मेखलानान्द्व्यङ्गुलैः। विस्तृता तिथिभिर्दीर्घाङ्गुलिभिर्निरिच्यते" मेखलानां दशाङ्गुलैर्विस्तृता तिथ्यङ्गुलैर्दीर्घा योनिः स्यादिति व्याख्या। प्रयोगसारे "स्थितां प्रतीच्यामायामे सम्यक् पञ्चदशाङ्गुलाम्। द्विषडङ्गुलविस्तारां षट् चतुर्द्व्यङ्गुलाः क्रमात्। त्रयोदशाङ्गुलोत्सेधां योनिं कुण्डस्य कारयेत्"। केचित् योनिक्षेत्रस्य दीर्घचतुरस्रस्य यत्फलं तस्य मूलमानीय तावत्समचतुरस्रं संशोध्य योनिकुण्डवद्योनिं साधयेदित्याहुः"। अधिकं कुण्डार्कादौ दृश्यम्।

"रसं पिबेत् कुमारोऽयं त्वत्प्रसादात् महाबलः। बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम्। यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम्"। "एकोच्छ्वासात्तत कुण्डं पिबति स्म महाबलः। एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः" भा०आ० १२८अ०। "शाम्भिर्निहितं कर्म्म चण्डालस्य विशीयते। तस्मात् गोरजसा ध्वस्तमपां कुण्डे निषिञ्चति" भा० अनु० १०१अ०। कण्डते कुलमनेन कुडि—दाहे करणे घञ्। अमृते भर्त्तरि ५जारजाते स्त्रियां टाप्। "परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः। तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च। दत्तानि हव्यकव्यानि नाशयेते प्रदा-विनाम्" मनुः। "ब्राह्मणा एव संपूज्या पुत्रसर्गसमीप्सता। श्राद्धकाले तु यत्नेन भोक्तव्याश्च गुरुप्सता। दुर्जनाः कुनखी कुष्ठी मायावी कुण्डगोलकौ। वर्ज्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः" भा० ह० १८९अ०। "द्विजात् द्विजातिभार्य्यायां सवर्णायामुत्पन्नकुण्डगोलकयोः संस्कारार्हता यथाह "प्रयोगपारिजाते ब्राह्मे "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः। तस्मात् षण्ढबधिरकुब्जवामनपङ्गुषु। जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु। मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये। ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्। मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते। कर्म्मस्वनधिकारात्तु पातित्यं नास्ति चैतयोः। तदपत्यञ्च संस्कार्यमपरे त्वाहुरन्यथा। संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु। उपनेयाश्च विधिवदाचार्यस्य समीपतः। आनीयाग्निसमीपं वा सावित्रीं स्पृष्ट्वा वाचयेत्। कन्याखीकरणादन्यत् सर्वं विप्रेण कारयेत्। एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ" अतश्चास्य ब्राह्मणत्वेऽपि श्राद्धेऽन्नदाननिषेध इति विशेषः। अत्रेदं बोध्यम्। "अप्रत्तोपहृतायां तु पिण्डदा वोढुरेव ते" इत्युक्तेः शुल्कदानं विना उपगतपरस्त्रियां जातस्य वोढुरेव पुत्रत्वं शुल्कदाने तु उत्पादयितुरेवेति। अतएव "यन्मे माता प्रलुलोभ रेतः" इत्यादि श्रुत्या क्षेत्रिणएव पिण्डदत्वं मनुप्रोक्तम्। अस्य पत्येन सह समासे आद्युदात्तता। तेन निर्वृत्ताद्यर्थे चतुरर्थ्यां अश्मा० र। कुण्डर तन्निर्वृत्तादौ त्रि० कुडि—दाहे भावे क। ६दाहे स्त्री।

**कुण्डक** पु० धृतराष्ट्रसुतभेदे। "कुण्डकश्चित्रसेनश्च सुवर्च्चाः कनकध्वजः" भा०आ०१८६अ०. कुण्ड+स्वार्थे क। २कुण्डार्थे.

**कुण्डकीट** पुं० कुण्डे योनिकुण्डे कीट इव विचारशून्यत्वात्। १पतितब्राह्मणपुत्रे २जारजातब्राह्मणपुत्रे ३दासीकामुके ४चार्वाकवचनाभिज्ञे पुरुषे च मेदि०।

**कुण्डगोलक** न० कुण्डे गोलं गोलाकारं कं जलमत्र। १काञ्जिके हेमच०। स०द्वन्द्वः। २कुण्डगोलकयोः समाहारे च।

**कुण्डग** पु० कुण्डं तदाकारं गच्छति गम—बा०ड डिच्। निकुञ्जिकाख्ये हेम० तस्य लतादिनाऽपिधानेन कुण्डाकारत्वात्तथात्वम् [ "च शताधिका" भा० व० ६७अ०।

**कुण्डज** पु० धृतराष्ट्रपुत्रभेदे "कुण्डजश्चित्रकश्चैव दुःसहा

**कुण्डजठर** पुं० कुण्डमिव जठरमस्य। १कुण्डाकारोदरे २ऋ-

विभेदे पु० "आत्रेयः कुण्डजठरोद्दिजः कालघटस्तथा" भा०आ० ५३अ०,

कुण्डधार त्रि० कुण्डं कुण्डाकारं धारयति धारि—अण् उप० स०। नागभेदे, "मणिमान् कुण्डधारश्च कर्कोटकधनञ्जयौ" भा० स० ८अ०,

कुण्डपायिन् पु० भूम्नि कुण्डेन कुण्डाकारचमसेन पिबन्ति सोमम् पा–णिनि। कुण्डेन सोमपायिषु यजमान षोडशर्त्विक्साध्यसत्रभेदकारिषु

कुण्डपायिनामयन न० ६त०अलुक् स०। सत्रभेदे तद्दिति-कर्त्तव्यतादिकम् आश्व०श्रौ०।१२।४।१—सूत्रादौ उक्तं यथा "कुण्डपायिनामयनम्"सू०। "एतन्नामकमिदं सत्रमधिकृतं वेदितव्यम्"वृ०। "मासन्दीक्षिता भवन्ति" सू०। "अयं मासयज्ञ एकाद्यविंशतिरात्रे उपचरितः, एकाद्यविंशतिरात्रादिकं यावनवङ्गवतीत्यर्थः" वृ०। "ते मासि सोमं क्रीणन्ति" सू०। "अयमप्युपचार एव दीक्षाकाले। मासातीते दीक्षिताः सोमं क्रीणन्तीत्यर्थः" वृ०। "तेषां द्वादशोपसदो भवन्ति"सू०। "सात्त्विकाचान्दीक्षाणामपवादो दीक्षाविधिः, तथा सात्त्विकाणामुपसदामपवादोऽयमुपसद्विधिः"वृ०। "सोमसुपनह्य प्रवर्ग्यं पात्राण्युत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति"सू०। "उपतमस्ततीतासु प्रवर्ग्य पात्राण्युत्साद्योपनह्य वा तानि तानि, ते एकं मासम् अग्निहोत्रं जुह्वति सायं प्रातः"वृ०। "प्रातरुपक्रमः सायमपवर्गः"सू० "प्रातःकालस्य प्रथमप्राप्त्यात् उपसत्काले द्वादशाहेऽतीतेऽग्निहोत्रस्य प्रातरारम्भान्नैमित्तिकादग्निहोत्रात् कर्म्मान्तरमेतदिति न्यायविदो प्रसिद्धम्"वृ०। "मासं दर्शपूर्णमासाभ्यां यजन्ते" सू०। "अग्निहोत्रमासेऽतीते ततः अनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते"वृ०। "कृष्णपक्षेऽहरहः पौर्णमास्या, शुक्लपक्षेऽहरहरमावास्यया, मित्रावरुणयोरयने तथा दृष्टत्वात्" सू०। "एवमत्र सम्पादनीयम्—यथा कृष्णपक्षादौ पौर्णमास्याऽहः सम्भवति, तत्र दीक्षारम्भः कर्त्तव्य इति" वृ०। "मासं वैश्वदेवेन" सू०। "अहरहरनेन यष्टव्यम्। वैश्वानरपार्जन्या तु न भवति आरम्भार्थत्वात्तयोः, स चारम्भःसत्रे न प्रसक्त इति"वृ०। "मासं वरुणप्रघासैः मासं शाकमेधैः एतैरहरहर्यजेरन्"सू०"एकाहेनापहत्य प्रकृतेर्द्व्यहसाध्यनीयत्वाद्व्यहेन वा कुर्य्यात्। आग्नेर्यु(?)प्रत्ययात्तथापरर्मिति स्थितिः"वृ०।"मासं शुनासीरीयेण" सू०। "अनेनाप्यहरहरेव" वृ०। "अहरहर्मासः पूर्णे तदहरिष्टिं समाप्याग्निप्रणयनादिप्रवर्ग्योत्सादनादि चौपवसथिकं कर्म कृत्वा सौभूते प्रसुनुयुः"सू०। "अग्निहोत्रादिमासः पूर्णे तस्मिन्नहनि शुनासीरीयेष्टिं समाप्य तदनन्तरं यदि पूर्वमेव प्रवर्ग्यपात्राण्युत्सादितानि तदाग्निप्रणयनाद्यौपवसथिकं कर्म कृत्वा सुत्यारम्भः"वृ०। "तत्रैक उपसद्भ्य ऊर्ध्वानन्तरं कुर्वन्ति तथादृष्टत्वात् सौत्यान्मासानग्निहोत्रादीन् वदन्तः"सू०। "तदिदमग्निप्रणयनाद्यौपवसथिकं कर्म कुण्डपायिनामयने अग्निहोत्रादिमासेभ्यः कर्त्तव्यमित्युक्तम् तत्रैक आहुः तत्कर्माग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्योऽनन्तरं कर्त्तव्यमिति। तत्र हेतुमाहुः प्रकृतौ तथादृष्टत्वादिति। न ह्यग्निहोत्रादिमासेभ्य उपरिष्टात्, क्रियमाणे वा औपवसथिके सुत्यानन्तरस्य विद्यमानत्वादिति। तथादृष्टत्वात्साधारणमिति, तत्परिहारार्थमग्निहोत्रादिमासान् सौत्यानिति। कथम्? अस्य सत्रस्य गवामयनप्रकृतिकत्वात्तस्य सांवत्सरिकत्वात् कुण्डपायिनामयने त्रिवृदादयः षण्मासा एकः पक्षः, अग्निहोत्रादयः षण्मासा अपरः पक्ष इति मन्यमानाः। एवं च उपसदाम् अन्ते सुत्ये औपवसथिकस्य कृतत्वान्न कश्चिद्दोष इति वदन्तोऽग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्यः ऊर्ध्वमौपवसथिकं कुर्वन्ति। एतदुक्तम् भवति। अग्निहोत्रादिमासान् सुत्यानिति मन्यमानाः तेभ्यः पुरस्तादुपसद्भ्य ऊर्ध्वं औपवसथिकं कर्म केचित् कुर्वन्ति प्रकृतौ तथादृष्टत्वादिति। यदेतदग्निहोत्रादिमासान् सौत्यानिति वदन्ति तदनुपपन्नम्। कुतः? सोमयागस्वरूपत्वात् सुत्यानाम् अग्निहोत्रादीनां तु हविर्यज्ञस्वरूपत्वादसुत्यत्वमिति। यत्पुनरिदमुक्तं गवामयनप्रकृतिकत्वादग्निहोत्रादिमासैः पूर्वपक्षनिर्वृत्तिरिति। तदयुक्तम् सोमयागानामेव गवामयनप्रकृतिकत्वं पूर्वपक्षत्वमुत्तरपक्षत्वञ्चेति। अग्निहोत्रादयोऽस्मिन् सत्रे अप्राकृता आगन्तवः कर्मविशेषाः अतस्तेषामन्तत्वमादित्वमपि न सम्भवति। अतस्तेषां सुत्यात्वञ्च सम्भवति। सुत्यात्वासम्भवे तथादृष्टत्वादित्यस्य हेतोः साधारणत्वादसाधकत्वादित्यनेनाभिप्रायेणोक्तं भगवताचार्येण 'तदनुपपन्नम् इति" वृ० "पश्वर्थं ह्यग्निप्रणयनमस्य च सुत्यानिमित्तम्"सू०। "परोक्तस्य हेतोरसाधकत्वमुक्त्वा स्वपक्षं समर्थयति। औपवसथ्येषु कर्मसु यः पशुभागः स सुत्यानिमित्तमिति प्रत्यक्षं श्रूयते 'अग्नीषोमाभ्यामिन्द्रो वृत्रमहन्यावेनमवृताम्' इत्यादिना। अतो वचनात् पशोः सुत्यानन्तर्यमेव स-

एतत्? जुहोतिशब्दात् "मासमग्निहोत्रं जुहोतीति" जुहोतिशब्दोऽत्र भवति न चासौ सोमयागेषु प्रसिद्धः तस्माच्च सोमा इति" संव्या०। "काममितरे" सू०। "इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः न हि तत्र जुहोतिशब्द इति नैवुच्यते दर्शपूर्णमासादयः शब्दा निरुपपदा एव दर्शपौर्णमासादीन् सोमान् प्रत्याययन्ति सोमोपपदाः निरुपपदाश्चैते मासं दर्शपौर्णमासाभ्यामिति तस्माद्दर्शपौर्णमासादयोऽपि न सोमा एते" संव्या०। दर्शपौर्णमासादयः कामं सोमा भवन्तु यतस्तत्र जुहोतिशब्दो नास्ति परमार्थतस्तु तेऽप्यत्र सोमा न भवन्ति यतो दर्शपूर्णमासादयः शब्दा निरुपपदा अत्र श्रूयन्ते न चात्र कार्यसोमा दर्शपूर्णमाससोमा इत्येवं सोमोपपदाः अतस्तेऽपि न सोमा इति सिद्धान्तः। एवं प्रथमाः परिपूर्णाः मासयात्र सर्वत्र सावर्तन्ते गृहिनात्मकः अन्योत्तरेषु षट्सु मासेष्वहान्याह" कर्कः। "दृतिवातवतोरयनपूर्वपक्षेण प्रथमामात्" सू०। "दृतिवातवतोरयनस्य पूर्वपूर्वपक्षेण प्रथमामात् भवेयुः। तत्र विशेषमाह" कर्कः "उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम्" सू०। "उत्तमे द्वादशे मासे एतान्यहानि भवन्ति" संव्या०। "उपरिष्टादतिरात्रं भवति" सू०। "अनुपहश्रुतेः यदन्यतरतोऽतिरात्रस्य नाहीन इति" देव० "अन्ते एक उदयनीयातिरात्र एव भवति न प्रायणीय इत्यर्थः" कर्कः। "उभयतो वा" सू० "अतिरात्रो भवति सत्रत्वात् अनुपहश्रुतिस्तु अहीनत्वेन संक्रोति तत्कथम्? हविर्यज्ञैर्व्यवहितत्वात्" देव० "अथवोभयतोऽतिरात्रं भवति प्रायणीयश्चोदयनीयश्चात्र द्वावपि भवत इत्यर्थः" संव्या०। "हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात्" सू० "हविर्यज्ञेभ्योऽवसितेभ्यः एके प्रायणीयमतिरात्रमिच्छन्ति एवं सोमानन्तर्यं भवति एके तत्रेच्छन्ति अग्नीषोमीयोत्तरकालता हि तस्य प्रकृतौ दृष्टा इहापि तद्देव तस्मात् प्रागेव हविर्यज्ञेभ्यः प्रायणीयः" कर्कः उभयतोऽतिरात्रपक्षे प्रायणीयमतिरात्रमेके आचार्याः "हविर्यज्ञेभ्योऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपर्वभ्यः परं कुर्वन्ति एवं हि सर्वेषां सोमयागानामानन्तर्यमव्यवधानं कृतं भवति इतरथा हविर्यज्ञैर्व्यवधानं स्यात् एके पुनश्चाच्छन्ति इतः प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा इहापि च तद्देशानुष्ठानं युक्तम् तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयो भवति। अन्येभ्यः सर्वेभ्योऽत्र विशेषमाह" संव्या०। "अनूसरकाः कुण्डप्रतिरूपाश्चमसाः" सू०। अनूसरकाः अहन्तकाः कुण्डप्रतिरूपाः इत्याकाराः कर्कः। "अत्र अनूसरकाः अहन्ताः मूलच्छापकचिह्नदण्डरहिताः कुण्डप्रतिरूपाः कुण्डाकारा इत्ताश्च भवन्ति" संव्या०। "पञ्चविंशत्सोऽपि लौकिकानि कर्माणि कुर्युः" सू०। "अत्र कुण्डपायिनामयने वक्ष्यमाणाः पञ्चविंशत्यौत्विजीनि कर्माणि कुर्वन्ति तथाप्येतयात्विजां कर्माणि एकैकः करोति" संव्या० "होताध्वर्युपोतीयि च" सू०। "चशब्दाद्धोत्रं च" कर्कः। "उद्गाता नेष्टाच्छावाकीये" सू०। "मैत्रावरुणो ब्रह्मत्वप्रतिहर्त्रे"। "प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये" सू०। "सर्वत्र प्रथमान्तः कर्ता" संव्या० "प्रतिप्रस्थाताग्नीध्रीये" सू०। "चकारः स्वैवानुवर्त्तते" कर्कः। "सुब्रह्मण्येभ्योऽनुषंगमितराणि" सू०। "आसनशब्दः स्थानवाची कुण्डस्थानेभ्यः अनु स्वम्-स्वम् परकीयानि कर्माणि कुर्युः स्वकर्मकर्तृकस्य चरितार्थत्वात्" कर्कः।

**कुण्डपायिनामयनन्याय** पु० जैमिन्युक्ते कुण्डपायिनामयननामकसत्रे ऽग्निहोत्रपदस्य प्रकृताग्निहोत्रात् कर्मान्तरत्वप्रतिपादके न्यायभेदे स च न्यायो जै०सू० दर्शितो यथा "प्रकरणान्तरे प्रयोजनान्यत्वम्" जै०सू०। "कुण्डपायिनामयने श्रूयते—मासम् अग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते" इत्येवमादि। तत्र सन्देहः—किं विहिते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः? अथ किं नियताग्निहोत्रात् नियताभ्याञ्च दर्शपूर्णमासाभ्यां कर्मान्तरविधानम्?—इति। किं तावत् प्राप्तं?—नियतेषु कालविधिः इति कुतः? कालविधिरूप एव शब्दो मासमिति। कथं कालविधिरूपता?। यत् अग्निहोत्रं जुहोति—इति विहितं, मासमित्यविहितम्। एवं च अग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च न कर्मान्तरवचनीभविष्यतः तस्मात् कालविधिः। ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यतां, वाक्यं हि बलवत्तरम्। एवं प्राप्ते ब्रूमः,—प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः। न,—इत्युच्यते। कथम्?। उपसद्भिश्चरित्वेति हुत्वा इदमभिधीयते, न च, उपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मात् कुशब्दः तत्र मासविधिः 'अथ उच्येत,—उपसदोऽपि विधीयन्ते'—इति। तथा गुणविधानार्थेऽस्मिन् वाक्ये अनेकगुणविधानात् वाक्यम् भिद्येत! अस्मिन् पक्षे पुनरनन्यम् अग्निहोत्रशब्दो न

कर्म विधेयमिति तेन वाक्यभेदो न भविष्यति । तस्मात् कर्म्मान्तरम् इति सिद्धम्" भाष्यम् ।

तत्त्वबोधिन्यां विवृतमेतत् यथा

"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति दर्शपौर्णमासाभ्यां मासं यजेतेति" श्रूयते । उपसदश्च ज्योतिष्टोमयागे दीक्षादिवसादूर्द्ध्वं सोमाभिषवदिवसात् पूर्व्वं कर्त्तव्या होमविशेषा इति माधवाचार्य्यप्रभृतियाज्ञिकमीमांसकाः तत्परिपाटी च (डावका) इत्याख्ये शमसिद्धजलपात्रसदृशाकारकम्बुग्रीवादिवदनेकरेखाविशिष्टाधोभागमहावीराख्यपात्रविशेषः तत्संस्थानं यथा तस्मिन् पात्रे यवागूमिश्रितं दधि कृत्वा संदंशाकारकाष्ठद्वयेन तस्य ग्रीवां धृत्वा दक्षिणावर्त्तेन परावृत्त्य एकवारं तत्र स्थितं प्रतप्तं यवागूदधि जुहोति वामावर्त्तेनापरवारमिति वारद्वयहोमेनैकोपसच्चरतीति याज्ञिकप्रसिद्धिः । उपसद्भिरित्यभेदे तृतीयाश्वमेधेनेत्यादिवत् तथाच उपसद्यागाचरणं कृत्वेत्यर्थः एतेन "उपसत्कथ्यते तत्र सतिलैर्व्रीहिभिश्चरुरिति मीमांसानभिज्ञस्य कल्पनं निरस्तं मीमांसाग्रन्थे केनापि तथानभिधानात् । अत्र "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुतिप्राप्ताग्निहोत्रमनूद्य उपसदानन्तर्य्यं माससाध्यत्वञ्चेति गुणद्वयं विधीयते किं वा विशिष्टकर्म्मान्तरमिति संशये नायं कर्म्मान्तरविधिर्गौरवात् किन्तु कॢप्ताग्निहोत्रे गुणद्वयविधिर्लाघवात् न च प्रकरणान्तरपठितत्वेनाग्निहोत्रपदात्तस्योपस्थितिरिति वाच्यम् अग्निहोत्रशब्दस्य तत्रैव शक्तेर्नानार्थत्वाभावाच्च प्रकरणान्तरेऽप्युपस्थितिसम्भवात् न च कथं तर्ह्यग्निहोत्रपदशक्तिः कौण्डपायिनामयनेऽपि तच्छक्तिसम्भवादिति वाच्यं "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्युक्ताग्निहोत्रस्य "यदग्नये च प्रजापतये च सायं प्रातर्जुहोतीति" श्रुत्या देवताकाङ्क्षानिरासेनाग्निहोत्रपदस्य यागनामपरत्वेन तत्र रूढत्वात् इह तु देवताकाङ्क्षानिरासार्थम् अग्नौ होत्रमिति व्युत्पत्तिकल्पनेनाग्निदेवताकत्वरूपोपाधिहोत्रगुणयोगाद्गौणत्वस्यापि ज्ञापितत्वात् नानार्थशक्तिकल्पने गौरवादिति प्राप्ते उच्यते प्राप्ते कर्म्मणि गुणद्वयविधाने वाक्यभेदापत्तेः तथाहि किं मास एव विधीयते उतोपसद्भिश्चरित्वेति उपसदपि, नाद्यः नित्याग्निहोत्रे उपसदोऽप्राप्तत्वेन तस्यापि विधातव्यत्वादित्युभयगुणविधौ वाक्यभेदापत्तेः प्रधानानुवादेन गुणद्वयविधाने प्रधानापूर्व्वस्य प्राप्तत्वेन गुणानां फलोपकारकाङ्क्षतया एकगुणविधानेनाकाङ्क्षानिवृत्तौ विध्यन्तरं प्रति आकाङ्क्षामुत्थाप्य वाक्यान्तरकल्पनेनाग्निहोत्रं मासं कुर्य्यात् अग्निहोत्रमुपसदनन्तरं कुर्य्यादिति विधिद्वये पर्य्यवसानात् अपूर्व्वद्वयं विधेयं स्यात् तत्र प्रत्येकगुणानुष्ठाने प्रत्येकमपूर्व्वमित्यपूर्व्वद्वयं मिलितानुष्ठाने च प्रत्येकजन्यापूर्व्वद्वयम् उभाभ्यां विलक्षणमपूर्व्वं वा जन्यत इति गौरवं विशिष्टैककर्म्मविधाने गुणानां प्रधानस्वरूपनिर्व्वाहकाङ्क्षतया साङ्गप्रधानजन्यमेकमेवापूर्व्वं विधेयं स्यादित्यपूर्व्वैक्यादेकार्थविधिः । अतएवोक्तं "प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" । विध्यन्तरप्राप्ते प्रधाने अनेकगुणो विधातुं न शक्यते वाक्यभेदापत्तेरिति शेषः अप्राप्ते तु प्रधाने बहवोऽपि गुणा एकयत्नत एकवाक्यात् विधीयन्ते नानागुणविशिष्टैकप्रधानविधिसम्भवेनापूर्व्वैक्यादित्यर्थः । न चैकगुणविशिष्टापरगुणो विधेयः यथाग्निहोत्रमुपसदनन्तरं मासं कुर्य्यादिति न वाक्यभेद इति वाच्यम् गुणानां परस्परं विशेषणविशिष्यभावेनान्वयबोधे निराकाङ्क्षत्वात् तथाच जैमिनिसूत्रं "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्" । गुणानां विशेषणानां अङ्गानाञ्च परस्परमसम्बन्धः विशेष्यविशेषणभावेन नान्वयः परार्थत्वात् द्वयोरपि विशेष्यान्वयित्वात् तथासत्येव कथं नान्वयस्तत्राह समत्वात् द्वयोरेव परत्राकाङ्क्षतया तुल्यरूपत्वात् न परस्परं गुणप्रधानभावः । यत्तु परस्परवैशिष्ट्येन गुणद्वयैकविधित्वे विनिगमकाभावादुभयोरपि विशेष्यत्वेन विशेषणत्वेन च विधेयत्वेन वाक्यभेद इति, तन्न विनिगमकाभावेन वाक्यस्य द्वैविध्येऽपि नापूर्व्वभेदकल्पना किन्तु कारणतावच्छेदकभेदेन कारणभेदमात्रम् अन्यथा दृष्टवाक्यभेदस्य विशिष्टैकप्रधानविधिपक्षेऽपि सम्भवात् । किञ्चोपसदानन्तर्य्यविशिष्टे माससाध्यत्ववैशिष्ट्यं माससाध्यत्वविशिष्टे वा उपसदानन्तर्य्यवैशिष्ट्यमिति विनिगमकाभावात् । न चैकत्र द्वयमिति न्यायेन विशेष्ये युगपद्विशेषणद्वयमिति वाच्यं वेदे विशिष्टवैशिष्ट्यबोधस्यौत्सर्गिकत्वात् । किञ्च विशेष्यविशेषणभावस्य द्वैविध्येऽपि विशिष्टस्यानतिरिक्ततया कारणैक्यात् कार्य्यैक्याच्च न कार्य्यकारणभावभेदोऽपि एकाङ्गापूर्व्वं प्रत्येव परस्परसापेक्षतया उभयोर्हेतुत्वादिति वाक्यार्थैक्यान्नोक्तभेदरूपवाक्यभेदो दोषाय कारणतावच्छेदकगौरवञ्च । विशिष्टविधिपक्षेऽपि तुल्यमित्यास्तां विस्तरः" ।

तथाचैतादृशलाघवार्हं द्वितकौण्डपायिनामयनप्रकरणपाठ एव कर्म्मान्तरत्वे प्रमाणं तथाच सिद्धान्तसूत्रम् "प्रकरणान्तरे प्रयोजनान्यत्वमिति" अतएव प्रकरणाद्वाक्यस्य बलीयस्त्वात् गत्या निर्व्वाग्निहोत्रस्योपस्थित्या गुणविधिरित्यपि निरस्तं तस्योक्तगौरवपराहतत्वात्। एवञ्च गौण्याग्निहोत्रपदप्रयोगस्तद्धर्म्मातिदेशार्थः अतएव "द्वैतशास्त्रादौ चाग्निहोत्रो गौणस्तद्धर्म्मप्राप्त्यर्थः कौण्डपायिनामयन इवाग्निहोत्रशब्द इति" श्राद्धविवेकः।

**कुण्डपाय्य** पु० कुण्डेन कुण्डाकारेण चमसेन पीयते सोमोऽत्र आधारे यत्–पा० युगागमश्च। कुण्डपायिनामयनयननामके सत्रभेदे "यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः" ऋ० ८,१७,१२

**कुण्डभेदिन्** पु० धृतराष्ट्रपुत्रभेदे, "अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः" भा०आ० ६७अ०

**कुण्डल** पुंन० अर्द्धर्चा०। कुण्डते कुण्ड्यते कुडि–दाहे कुडिरक्षायां वा कर्त्तरि कर्म्मणि वा इषा०कलच्, कुण्डं कुण्डाकारं लाति ला–क कुण्डस्तदाकारोऽस्त्यस्य सिध्मादित्वात् लच् वा। १कर्णभूषणभेदे "कनककुण्डलवान् किरीटी" विष्णुध्या० २वलये ३वेष्टने मेदि० "मण्डलानि पताकाश्च मरीचीः कुण्डलानि च" सुश्रु० "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगमित्यादि" आश्व० गृ० कुण्डले आबध्नीत" तत्रैव" ते च सौवर्णे एव यथाह मनुः "यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" "ताडङ्काचलकपालकुण्डला" रघुः

**कुण्डलना** स्त्री कुण्डलं वेष्टनं करोति कुण्डल+णिच्–भावे युच्। वेष्टनकरणे (वेड़ा देओया) "फणिभाषितभाष्यफक्किका विषमां कुण्डलनामवापिता" नैष०।

**कुण्डलिका** स्त्री मात्रावृत्तभेदे तल्लक्षणं यथा "कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र। योलाचरणचतुष्टयं प्रभवति विमलं तत्र। प्रभवति विमलं तत्र पदयतिसुललितयमकम्। अष्टपदी सा भवति विमलकविकौशलगमकम्। अष्टपदी सा भवति सुखितपन्नितनण्डलिका कुण्डलिनायकभणिता विबुधकण्ठे कुण्डलिकेति"

**कुण्डलिन्** पुंस्त्री कुण्डलं पाशाकारं वेष्टनं वा अस्त्यस्य इनि। १सर्पे स्त्रियां ङीप् २वरुणे तस्य पाशास्त्रवत्त्वात् तथात्वम्। ३मयूरे पुंस्त्री मेदि० ४चित्रमृगे ५वेष्टनयुक्ते त्रि० स्त्रियां ङीप्। सा च (जिलेपी) इतिख्याते पक्वान्नभेदे भावप्र० तत्पाकप्रकारो दर्शितो यथा "नूतनं घटमानीय तस्यान्तः कुशलो जनः। प्रस्थार्द्धं परिमाणेन दध्नाऽम्लेन प्रलेपयेत्। द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम्। घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत्। आतपे स्थापयेत्तावद्यावद्याति तदम्लताम्। ततस्तत्तु क्षिपेत्पात्रे सच्छिद्रे भाजने तु तत्। परिभ्राम्य परिभ्राम्य तत् सन्तप्ते घृते क्षिपेत्। पुनः पुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम्। तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे। कर्पूरादिसुगन्धेन स्नपयित्वोद्धरेत्ततः। एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा। धातुवृद्धिकरी वृष्या रुच्या च क्षिप्रतर्पणी"।

तन्त्रसारप्रसिद्धे मूलाधारस्थिते षट्चक्रमध्यवर्त्तिन्यं देवीभेदे यथा "ध्यायेत् कुण्डलिनीं सूक्ष्मां मूलाधार निवासिनीम्। तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम्। कोटिसौदामनीभासां स्वयम्भूलिङ्गवेष्टिनीम्। तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः। उद्यद्दिनकरोद्द्योतां यावच्छ्वासं हृदासनः। अनेनाप्रमयान्यं समाहितमनाश्चिरम्। तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत्" इति

**कुण्डशायिन्** पु० धृतराष्ट्रस्य पुत्रभेदे "अपराजितः कुण्डशायी विशालाक्षो दुराधरः" भा० आ०११७अ०

**कुण्डाशिन्** पु० धृतराष्ट्रस्य पुत्रभेदे। "कुण्डाशी विरजाश्चैव दुःशला च शताधिका" भा० आ० ११७अ०। "अमृते जारजः कुण्डोमृते भर्त्तरि गोलकः। यस्तयो रन्नमश्नाति स कुण्डाशीति कथ्यते"देवलोक्ते २कुण्डगोलयोरन्नभक्षके त्रि० स्त्रियां ङीप् "अगारदाही गरदः कुण्डाशी सोमविक्रयी" मनुः "अव्रती वृषलीभर्त्ता कुण्डाशी सोमविक्रयी" भा० आनु०१४२अ०

**कुण्डिक** पु० कौरवे राजभेदे। "धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः। हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः" भा० आ० ९४" अयञ्च धृतराष्ट्रः दुर्य्योधनपितुर्भिन्नः कुरुवंश्यः तत्रैव विस्तरः।

**कुण्डिका** स्त्री कुडि–ण्वुल्। १कमण्डलौ हेमच०। २ पिठरे (कुँड़ि) शब्दच०।

**कुण्डिन्** त्रि० कुडि–णिनि–कुण्ड+अस्त्यर्थे इनिर्वा। १कुण्डयुक्ते स्त्रियां ङीप् "रावणस्तु यतिर्भूत्वा मुण्डः-कुण्डी त्रिदण्डधृक्" भा० व० २७७अ० "दण्डी छत्री च कुण्डी च द्विजानां भारवाहका"भा०व०१४अ० इत्युक्ते २शिवे पु० "रत्नभाण्डभेदे स्त्री "सन्ति निष्कसह-

स्तापि कुण्डिन्यो भरिताः शुभाः” भा०स०५६अ०”कुण्डि-न्यः पालभेदाः “भार्गाडन्य इति वा पाठः” नीलक०। कुण्डिन इति पाठस्तु प्रामादिकः

**कुण्डिन** पु० कुरुवंश्ये नृपभेदे। १कुण्डिकशब्दे उदा० २भो-जदेशस्थे पुरभेदे न०“कुण्डिने पुण्डरीकाक्ष! भोजपुत्रस्य शासनात्” हरिवं० १०४ अ० तच्च दक्षिणदेशस्थम्। “राजर्षेर्यादवस्यासीद्विदर्भो नाम वै सुतः। विन्ध्यस्य दक्षिणे पार्श्वे विदर्भां यो न्यवेशयत्। क्रथकौशिकसु-ख्याश्च पुत्रास्तस्य महात्मनः। बभूवुर्वीर्यसम्पन्नाः पृथग्वंशकरा नृपाः। तस्यान्ववाये भीमस्य जज्ञिरे शृणुयो नृप!। क्रथस्य त्वंशुमान् वंशे कैशिकस्य तु भीष्मकः। हिरण्यरोमेत्याहुर्यं दाक्षिणात्येश्वरं जनाः। अगस्त्यगुप्तामाशां यः कुण्डिनस्थोऽन्वशान्नृपः”। “विनाशिनः कुण्डिनमण्डनायितम्” नैष०। “तस्माद् पावर्त्तत कुण्डिनेश्वरः” रघुः ३ऋषिभेदे पु०। तस्य गोत्रा-पत्यम् गर्गा० यञ्। कौण्डिन्य तद्गोत्रापत्ये पुंस्त्री “ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रम्। बहुषु तस्य लुक्। कुण्डिनास्तद्गोत्रापत्येषु भूम्नि। “कुण्डि-नानां वासिष्ठमैत्रावरुणकौण्डिन्येति” आश्व० श्रौ०१२, १५.०२.

**कुण्डीर** पुं कुडि-ईरन्। १मनुष्ये २बलवति त्रि० धरणी।

**कुण्डृणाची** स्त्री कुटिलगतौ। “पताति कुण्डृणाच्या” ऋ०१।२९।६० “कुण्डृणाच्या—वक्रया गत्या” भा०।

**कुण्डोद्** पु० भारतप्रसिद्धे पर्व्वतभेदे “कुण्डोदःपर्व्वतोरम्यो बहुमूलफलोदकः नैषधस्तृषितोयत्र जलं शर्म्म च लब्ध-वान्” भा०व० ८७अ०।

**कुण्डोदर** पु० कुण्ड इव उदरमस्य। १नागभेदे। कर्क्करा-कर्क्करो नागौ कुण्डोदरमहोदरौ” भा०आ० ३५अ०। २कुण्डसमोदरयुक्ते त्रि०। ततःक्षेपे “उदराश्वेषु” पा० परेषु पूर्व्वमन्तोदात्तम्।

**कुत** आस्तरणे सौ०प०सक०सेट्। कोतति अकोतीत्। चुकोत।

**कुतनु** पुं कुत्सिता तनुरस्य। १कुवेरे त्रिका० कुवेरशब्दे व्युत्पत्तिः २कुत्सितदेहान्विते त्रि०। कुगतिस०। ३कुत्सि-तदेहे स्त्री।

**कुतन्त्री** स्त्री कुगतिस०। कुत्सितायां वीणायाम्। मेद०। २क्षुद्रदण्डे स्त्री। “स ददर्श समांसस्य कुतन्त्रीं विततां मुनिः” (विश्वामित्रः) भा०शा०१४१अ०“कुतन्त्रीं दण्डिकाम्” नीलकण्ठः।

**कुतप** पु०कुत्सितं पापं तपति कुं भूमिं तपति—तप—अच् कुत-कपत् वा। १सूर्य्ये २अग्नौ ३अतिथौ ४गवि ५भागिनेये ६द्विजातौ च ७दौहित्रे ८वाद्यभेदे ९नेपालकम्बले १०कुश-तृणे च न०मेदि०। पञ्चदशधा विभक्तदिनस्याष्टमे ११भागे अमरः अर्द्धरा०दि “मध्याह्नः खड्गपात्रञ्च तथा नेपाल-कम्बलम्। रौप्यं दर्भास्तिलाः गावः दौहित्रश्चाष्टमः स्मृतः” इति स्मृत्युक्तेषु अष्टसु पदार्थेषु। “कुत्सितं पाप-मित्याहुस्तस्य सन्तापकारिणः। अष्टावेतेयतस्तस्मात् कुतपा इति विश्रुताः” इति स्मृत्युक्तेस्तेषां तथात्वम्। “अह्नो-मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा। तत्राष्टमो मुहूर्त्तोयः स कालः कुतपःस्मृतः” स्मृतिः। स च एकोद्दिष्टश्राद्धारम्भकालः “कुतपप्रथमे भागे एको-द्दिष्टमुपक्रमेत्। आवर्त्तनसमीपे वा तत्रैव नियतात्म-वान्” कालमा० व्यासोक्तेः। “आवर्त्तनं पश्चिमदिगव-स्थितच्छायायाः पूर्व्वपदिग्गतिकालः कुतपशेषपदस्तु इत्यर्थः” रघु०। “आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घ-येत्” गौतमः। “दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपोज्ञेयः पितॄणां दत्तमक्षयम्” मत्०पु०“त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः” मनूक्तौ दौहित्रतिलानां पृथगभिधानात् कालपरता। तथाच तत्रैव व्याख्यातम् दौहित्रादौ परिभाषि-कत्वमिति विवेकः। ज्योत्स्नादि० मत्वर्थ्याम् अण्। कौतप तद्विशिष्टकालादौ त्रि०।

**कुतस्** अव्य० कस्मात् किम्+तसिल् किमः कुः। १कस्मादि-तिहेतुविषये १प्रश्ने २निश्चये च मेदि०। ३आक्षेपविषये हेतौ “मदमूढबुद्धिषु विवेकिता कुतः?” माघः “कुतस्त्वा कश्म-लमिदं विषमे समुपस्थितम्” गीता। “कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत” श्रुतिः। ततः आक्षे-पातिशयार्थे तरप् तमप् वा आमु०च० कुतस्तराम् कुतस्त-माम् आक्षेपविषयहेत्वतिशये अव्य० ततोभवार्थे त्यप्। कुतस्त्य कुतोभवे त्रि०। “कुतस्त्यं भीरु! यत्तेभ्यो द्रुह्य-द्भ्योऽपि नमामहे” भट्टिः।

**कुतुक** न० कुत वा० उकङ्। १कौतूहले फलनिरपेक्षतया कर्त्तुमौत्सुक्ये अमरः। “क्रमविगलितपुच्छैरभिमत-मास्तां वधेन किं शिखिनः। कुतुकिनि! पुनर्न लाभो वि-धुरविकम्बं वनं भविता” टट्टुटः। ततो युवा० स्वार्थे अण्। कौतुक कौतूहले न०।

कुतुप पुं न० कुतू+डुप्। १पञ्चदशधा विभक्तदिवसस्याष्टमांशे शब्दरत्ना०। कुत्वाः ह्रस्वा डुपच्। (कोटकुपा) चर्म्ममये ह्रस्वे २स्नेहपात्रे पु० अमरः।

कुतुम्बुरु न० कुत्सितम्०। कुत्सिततिन्दुकीफले शब्दचि०

कुतू स्त्री कुत–बा० ऊ। चर्म्ममये स्नेहपात्रे (कुपो) अमरः

कुतू(कू)णक पु० "कुतू(कू)णकः क्षीरदोषाच्छिशूनामेव वर्त्मनि। जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः। शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षणम्। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः" इति माधवनिदानोक्ते बालानां नेत्रवर्त्मरोगभेदे (कुथा)

कुतूहल न० कुतं चर्म्ममयं स्नेहपात्रमिव हृदयं हलति हल–अच्। अपूर्व्वदर्शनादिजन्यातिशयजन्ये चेष्टाभेदे फलनिरपेक्षतया चिकीर्षिते १कौतुके अमरः "प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्" नैष०। "कुतूहलाधारगिरोपवेशम्" भट्टिः। "अयस्ति मे शकुन्तलादर्शनं प्रति कुतूहलम्" शकु० २प्रशस्ते २अद्भुते च त्रि०हेमच०। "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" सा० द० उक्ते ४नायकयोर्भावभेदे न०। तारका० इतच्। कुतूहलित जातकौतुके त्रि०। स्वार्थे युवा० अण्। कौतूहल कौतुके न० अमरः।

कुतृण न०। कुत्सितम्०। (पाना) कुम्भराम् शब्दर०।

कुतोनिमित्त त्रि० कुतः किं निमित्तं यस्य किम्+प्रथमार्थे तसिल् ब०व्री०। किन्निमित्ते किंहेतुके। "कुतोनिमित्तः शोकस्ते" रामा०।

कुत्र अव्य०किम्+सप्तम्याः त्रल् किमः कुः। कस्मिन्नित्यर्थे प्रश्नविषये आक्षेपविषये च अधिकरणे "हा सीता केन नीता मम हृदयगता केन वा कुत्र दृष्टा" महानाट० "कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः" भाग०७।६।२५। ततो भवार्थे त्यप्। कुत्रत्य कुत्रभवे त्रि०"कस्यापि कुत्रत्य इहापि कस्मात्" भाग० ५।१०।२०।

कुत्रचित् अव्य० कुत्र+चित् द्वन्द्व०। क्वचिदित्यर्थे अस्माकस्येन कस्मिन् देशे काले वेत्यर्थे। "असुरेभ्योभयं नास्ति युष्माकं कुत्रचित् क्वचित्"भा० व०१४२अ०। कुत्रचित् देशे कस्मिंश्चित् काले इत्यर्थः। पा० अमरमते पदद्वयमिति भेदः। "विधिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव तु कुत्रचित्" मनुः। चन। कुत्रचन तदर्थे अव्य०।

कुत्स निन्दने चुरा० आत्म० सक० सेट्। कुत्सयते अचुकुत्सत कुत्सयाम् बभूव आस चक्रे। कुत्सयमानः कुत्सयित्वा सं कुत्स्य। कुत्स्यः कुत्सितः कुत्सनं कुत्सा कुत्सः। कुत्सना। कर्म्मणि कुत्स्यते अकुत्सि अकुत्सिषाताम्-अकुत्सयिषाताम् "यत्कुत्सभाज्जनेन शतक्रतुः" ऋ० १।६३।२। कुत्सायशुष्णमश्रुषम्" ऋ० ४।१६।१२ "कुत्सितानि कुत्सनैः" पा०। कुत्सकः। "परिवित्तिः परिवेत्ता यज्ञमोयश कुत्सकः" भा०शा०२४०अ०। "यदाऽस्यैव कर्म्म मासाद्य सक्तं नावधीतुर्भीमं कुत्सयित्वा वचोभिः" भा० व्रो० अ० "नास्तिक्यम् वेदनिन्दाश्च देवतानाञ्च कुत्सनम्" मनुः। "नेतच्छक्यं त्वया वेत्तुं लक्ष्यनित्येन कुत्सयन्" भा०आ० ५२८६श्लो०। अत्र परस्मैपदमार्षम्

कुत्स प० कुत्सयते संसारं कुत्स–अच्। १ऋषिभेदे तस्यापत्यम् ऋष्यण्। कौत्स तदपत्ये पुंस्त्री "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघुः। बहुषु तस्य "अत्रिभृगु कुत्सेति" पा० लुक्। कुत्साः तदपत्येषु। क–बा० स प्रत्य०। २कुर्वति त्रि०। "कुत्साएते हर्य्यश्वाय" ऋ० ७।२५।५। "कुत्साः कुर्व्वाणाः। करोतेः कुत्सशब्दनिष्पत्तिः" भा०। ततः चत्वा०चतुरर्थ्यां फक्। कौत्सायन तद्भिर्व्वृत्तादौ त्रि०।

कुत्सकुशिकिका स्त्री कुत्सानां कुशिकानां च मैथुनम् "द्वन्द्वाद् वुन्वैरमैथुनयोः" पा० मैथुने वुन्। कुत्सगोत्राणां कुशिकगोत्राणाञ्च स्त्रीपुंसां मैथुने।

कुत्सन न० कुत्स–भावे ल्युट्। १निन्दने "देवतानाञ्च कुत्सनम्"मनुः। कुत्स्यते ऽनेन करणे ल्युट्। २निन्दाकारणधर्म्मे उपचारात् ३तद्युक्ते त्रि०। "कुत्सितानि कुत्सनैः"पा०। वैयाकरणखसूचिः। प्रश्नविस्मरणार्थखसूचित्वेन धर्म्मेण वैयाकरणस्य निन्दनात् तादृशधर्म्मस्य कुत्सनत्वम् तद्वत्त्वाञ्च खसूचकस्य तथात्वम्।

कुत्सला स्त्री कुत्स–कर्म्मणि बा० कलच् कुत्सं निन्दां लाति ला–क वा। नीलीवृक्षे शब्दच०। तस्य क्रयविक्रययोः निन्दितत्वात् तथात्वम् नीलीशब्दे विवृतिः।

कुत्सा स्त्री कुत्स–भावे अ। निन्दायाम् अमरः। "गुरुकुत्सामतिश्च या" भा०अनु०६५८८ श्लोकः।

कुत्सित न० कुत्स–कर्म्मणि क्त। १कुष्ठनामौषधौ (कुड़) राजनि० २निन्दिते त्रि०"कुत्सितानि कुत्सनैः" पा०। भावे क्त ३निन्दायाम् न० [ अकुन्थीत् चुकुन्थ कुन्थ्यात्

कुथ क्लेशे (कोँ थपाड़ा)इदित् भ्वादि०अक०सेट्। कुन्थति

कुथ पूतिगन्धे दिवा० पर० अक०प०सेट्। कुथ्यति अकोथीत्। प्रतिकुथ्यति णिचि कोथयति (पौँ था) निष्कमने। तस्य

पूतिभावस्याभनत्वात्तथात्वम्। "अप्रकाशे देशे कोथयेत्" सुश्रुतः।

**कुथ** पुंस्त्री० कुथ—पूतीभावे क कुन्थ—निष्कर्षे—क नलोपोवा। "कुथा १कन्था समाख्याता कुथः स्यात् २कारिकम्बलम्। कुथः ३कुशः कुथः ४कीटः ५प्रातःस्नायी द्विजः कुथः, इत्युक्तेष्वर्थभेदेषु लिङ्गभेदस्तु रूपभेदादुदर्कवः। "कुथेन नागेन्द्रमिवेन्द्रवाहनम्"। "आश्लिष्टभूतलकुथसैन्यगजच्छलेन" माघः। "गतयश्च कुथांस्तत्र भित्त्वा सकुपाहरन्" भा० स० ५१अ०। हस्तिकम्बले पुंस्त्री अमरः। "महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया" रामा०। "तत्र कुथे "शाद्वलेषु यदाशिश्ये वनान्ते वनगोचरा। कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः" रामा०।

**कुथुम** पु०सामवेदशाखाभेदे। तं वेत्ति इनि। कुथुमिन् अण् वा। कौथुम तच्छाखाध्यायिनि। सामवेदशब्दे विवृतिः। कुथुमिना प्रोक्तमधीयते अण् नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिसमाधिकुथुमीत्यादि" वा०टिलोपः। कौथुम तत्प्रोक्ताध्यायिषु भूम्नि लि०।

**कुथोदरी** स्त्री कुम्भकर्णपौत्र्यां निकुम्भदुहितरि। सा च कल्किना हता यथाह कल्किपु० १६अ०

"मुनय ऊचुः। शृणु विष्णुयशःपुत्र! कुम्भकर्णात्मजात्मजा। कुथोदरीति विख्याता गगनार्द्धसमुत्थिता॥ कीलकञ्चस्य महिषी निकञ्जजननी च सा। हिमालये शिरः कृत्वा पादौ च निषधाचले॥ शेते स्तनं पाययन्ती निकञ्जं प्रस्नुतस्तनी। तस्या निश्वासवातेन विवशा वयमागताः॥ दैवेनैव समानीताः प्राप्तास्तव पदाम्बुजम्। मुनयो रक्षणीयास्ते रक्षःसु च विपत्सु च॥ इति तेषां वचः श्रुत्वा कल्किः परपुरञ्जयः। सेनागणैः परिवृतो जगाम हिमवद्गिरिम्"।

इत्युपक्रम्य तया सह युद्धे ससैन्यकल्केस्तदुदरवेशमुपवर्ण्य "कल्किः कमलपत्राक्षः सुरारातिनिसूदनः। वाणाग्निचेलचर्मभ्यां कम्बलैर्योनदारुभिः। प्रज्वाल्योदरमध्येन करवालं समाददे॥ तेन खड्गेन महता कुक्षिं निर्भिद्य बन्धुभिः। बलिभिर्भ्रातृभि र्वीरैर्वृतः शस्त्रास्त्रपाणिभिः। बहिर्बभूव सर्वेशः कल्किः कल्कविनाशनः। सहस्राक्षो यथा वृत्रकुक्षिं दम्भोलिनेमिना॥ योनिरन्ध्राद्गजरथास्तुरगाश्चाभवन् बहिः। नासिकाकर्णविवरात् केऽपि तस्या विनिर्गताः। ते निर्गता सानुचराः सैनिका रुधिरोक्षिताः। तां विव्यधुर्निः-क्षिपन्तीं तरसा चरणौ करौ॥ ममार सा भिन्नदेहा भिन्नकुक्षिशिरोधरा"। [कुदत्। धातुपाठः।

**कुद्द** मिथ्योक्तौ चु० सक० उभ० सेट्। कोद्दयति ते। अचू-

**कुद्दाल** पु० कुं भूमिं दलति दल—भेदने अण् उप०स०। कुद्दाले (कोदाल) रमानाथः।

**कुदिन** न० कोः पृथिव्याः भ्रमणेन दिनम्। १सावनदिने। तदुक्तं सू० सि०। "उदयादुदयं भानोः सावनं तत् प्रकीर्त्तितम्। सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः" 'सूर्यस्योदयादुदयकालमारभ्याव्यवहितोदयकालपर्यन्तं यत् कालात्मकं तत् सावनं मानमीरितम्। एतेनोदयद्वयान्तरात्मककालस्य गणनया सावनानि वसुद्व्यष्टाद्रीत्यादिना मध्यमाधिकारोक्तानि भवन्ति। तदुपयोगप्रकारमाह। यज्ञकालविधिरिति यज्ञस्य यः कालस्तस्य गणना तैः सावनैः। तुकारोऽन्यमाननिरासार्थकैवकारपरः" रङ्गना०। निरुपपदसावनदिनस्य सूर्यसम्बन्धिसावनदिनपरत्वं युगे तत्संख्या च तत्रैव दर्शिता यथा

"उदयादुदयं भानोर्भूमिसावनवासराः" ॥

"ननु भोदया भगणैरित्यादिना पूर्वं सर्वेषां सावनदिवसा उक्ता इत्यत कस्य पाह्या इत्यतः सूर्यसावनस्वरूपकथनच्छलेनोत्तरमाह। उदयादिति। सूर्यस्योदयकालमारभ्याव्यवहिततदुदयकालपर्यन्तं यः कालः स एको दिवसः। इति ये दिवसास्ते भूमिसावनवासराः। भूदिवसा उदयस्य भूसम्बन्धेनावगमात् सावनदिवसा इत्यर्थः। तथा च निरुपपदसावनभूमिशब्दाभ्यां सूर्यस्य वासरा एव नान्येषां सोपपदत्वाभावादिति भावः" रङ्गना०। ते कियन्त इत्यतस्तत्प्रमाणमाह "वसुद्व्यष्टाद्रिरूपाङ्क सप्ताद्रितिथयो युगे" सू०सि०। "अष्टाश्विगजरूपभूगोनगसप्तपञ्चभूमिता १५७७९१७८२८ युगे सूर्यसावनदिवसाः" रङ्गना०। सि०शि०अन्ययोक्तं यथा "भूदिनानि शरवेदभूपगोसप्तसप्ततिथयोऽयुताहताः १५७७९१६४५०००० । भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा" सि०शि०।

"एषामुपपत्तिः प्रागेवोक्ता। एकस्मिन् रविवर्षे यावन्तो भभ्रमाः स्युस्तावन्त एवैकोना रविसावनदिवसा भवन्ति। यतो रविः प्राग्गत्या एकं पर्यायं गतः। अतो भगणभं स्वयोना भभ्रमाः कुहा भवन्ति। एवमन्येषामपि यहाणां कुदिनानि स्युरित्युपपन्नम्" प्रमि०।

"इनोदयद्वयान्तरं तदर्कसावनं दिनम्। तदेव मेदिनी-

दिनं भवासरस्तु मध्यमः” इति सिद्धान्तशिरोमणिः। “इनोदयद्वयान्तरमिति। अर्कोदययोरन्तरं यत् तदर्कसावनं दिनम्। तदेव कुदिनसंज्ञं ज्ञेयम्। अतोऽपि पूर्वत्रकालवर्षादिकल्पना। कलार्कग्रहणमुपलक्षणं तेनान्येषामपि ग्रहाणां तदुदयद्वयान्तरं तत्सावनमिति” प्रमि०।

तद्दिवसस्य कार्यविशेषे व्यादर्त्तव्यतामाह सू०सि०— “सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिश्च सावनेनैव गृह्यते”।

“सूतकं जन्ममरणसम्बन्धि। आदिपदग्राह्यं चिकित्सितचान्द्रायणादि तस्य परिच्छेदो निर्णयः। दिनानियमाश्चेद्धरवर्षेश्वराः। तथा—मध्यमे। ग्रहाणां गतिर्मध्यमा। तुकारात् स्फुटगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धस्याभावात्। एतेन स्फुटगत्या स्फुटग्रहस्य चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन। एवकारादन्यमाननिरासः” प्रमि०।

“प्रायश्चित्तं सूतकादौ चिकित्सा यज्ञाद्यैवं कर्म वारादिकं च। शास्त्रे क्वचित् खेचराणां च चारा विज्ञातव्याः सावनात् भास्करीयात्” श्रीपतिः॥

कुत्सितभूमिदिनादयोऽप्यत्र। २ज्योतिषनिषिद्धे दिने च

कुदृष्टि स्त्री कुत्सिता दृष्टिः ज्ञानम्। वेदवाह्यतार्किककल्पनायाम्। “या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः” मनुः।

कुदेह पु० कुत्सितो देहोऽस्य। १कवेरे २कुत्सितदेहयुक्ते त्रि०। कुगतिस० ३कुत्सिते देहे पु०। कुदेहमानाहिविदष्टदृष्टेः” भाग०५।१३।१।

कुद्दार पु० कुं पृथ्वीं दारयति दृ—विदारे अण् पृषो०। १कुद्दाले भूमिविदारणास्त्रे २कोविदारवृक्षे अमरटीका।

कुद्दाल पु० कुं भूमिं दलति दल—अण् उप०स०पृषो०। १कोविदारे वृक्षे अमरटी० २भूमिदारणास्त्रे (कोदाल) मेदि०। “अमाभाद्य बिलं तस्याखनन् सागरात्मजाः। कुद्दालैर्हुद्धकैश्चैव समुद्रं यत्नमास्थिताः” भा०व० १०७अ०। “कुद्दालं दालपिटकं प्रकोष्ठं कांस्यभाजनम्” भा०शा० २२८अ०। हस्त्यादि० बहुव्रीहौ एतत्पूर्वस्य पादस्य नान्त्यलोपः कुद्दालपादः। स्वार्थे क। कुद्दालक तदार्थे।

कुद्मल न०कुड्मल+पृषो०। विकाशोन्मुखे पुष्पमुकुले अमरटी०

कुद्य न कुद—क्यप्। भित्तौ अमरटीका।

कुद्र मिथ्योक्तौ इदित् चु०उभ०सक०सेट्। कुन्द्रयति अचुकुन्द्रत्। प्रतिकुन्द्रयति नोपधकरणेनैव इसिद्धौ इदित्करणं स्वरार्थम्।

कुद्रङ्क पु०कुत्सितः रङ्कुविङ्गमस्य पृषो०। मञ्चोपरिस्थे मण्डपे त्रिका०।

कुद्रङ्ग पु०कुत्सितोरङ्गोयत्र पृषो०। मञ्चकोपरिस्थे मण्डपे हारा०

कुद्रव पु०कुं भूमिं द्रवति द्रावयति द्रु—अन्तर्भूतण्यर्थे—अच्। कोद्रवे धान्यभेदे (कोदो) भरतः। [पुंस्त्री०।

कुद्रि पु० ऋषिभेदे तस्यापत्यं स्त्र्याद्या० ढञ्। कौद्रेय तदपत्ये

कुधान्य न० कुत्सितं धान्यं कुगतिस०। कुत्सिते धान्यभेदे स च सुश्रुते गुणसहितोदर्शितोयथा “कोरदूषकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखकुरुविन्दगवेधुकावरुकतोलपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः”॥ उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः। श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः। कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः। कोद्रवश्च नीवारःश्यामाकश्च शान्तनुः। कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः। यथोत्तरं प्रधानाः स्युः रूक्षाः कफहराः स्मृताः। मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा। विशोषी तत्र भूयिष्ठं वरकः समुकुन्दकः। रूक्षा वेणुयवा ज्ञेया वीर्योष्णाः कटुपाकिनः। बद्धमूत्राः कफहराः कषाया वातकोपनाः”

कुध्र पु० कुं पृथिवीं धारयति धृ—मूलविभुजादि० क हृत०। महीध्रे पर्वते हेमा०।

कुनक पुंस्त्री करटे स्त्रियां जातित्वात् ङीष्।

कुनख पु० कुत्सितो नखोऽत्र। सुश्रुतोक्ते रोगभेदे (कुनि) तल्लक्षणं तत्रैवोक्तं यथा। “अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः। भवेत् कुनखं विद्यात् कुलीनमिति संज्ञितम्”। कुनखे शिविरप्येष” सुश्रु०। ६ब०। कुत्सितनखयुक्ते त्रि०स्त्रियां स्वाङ्गत्वात् वा ङीष्।

कुनखिन् त्रि० कुनखो रोगोऽस्त्यस्य इनि। कुनखरोगयुक्ते स च रोगो मुक्ताविशिष्टसुवर्णस्तेयरूपजन्मान्तरीय महापातकचिह्नं यथाह विष्णुः “अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी गुरुतल्पगो दुश्चर्मा”। “कुनखी श्यावदन्तश्च द्वादशरात्रं चरित्वा तद्धनं त्यावदुरेयाताम्” विष्णुः। स्त्रियां ङीप्। स च रोगः गर्भावस्थायां मातुर्दोषभेदाज्जायते तदुक्तं सुश्रुते “दिवास्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनात् विकृतदृष्टिः स्नानानुलेपनात् दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखा-

वकर्त्तनात् कुनखीत्यादि। कुनखी च श्राद्धकाले वर्ज्जनीयः यथाह मनुः "वर्ज्याःस्युर्हव्यकव्ययोः। प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः"। "दुश्चर्म्मा कुनखी कुष्ठी मायावी कुण्डगोलकौ, वर्ज्जनीयाः प्रयत्नेन" भा०अ० १६८। श्राद्धे वर्ज्जनीयोक्तौ।

कुनट पु० कुत्सितं नटति–नट–अच्। १श्योनाकभेदे राजनि० गौरा०ङीष्। कुनटी २मनःशिलायाम् अमरः ३धन्याके राजनि०। कुत्सितोनटः कुग०स०। ४कुत्सिते नटे पु०।

कुनन्निन् पु० ईषत् नन्नोऽस्त्यस्य इनि। मरुबके त्रिका०। तस्य फलेषु ईषन्नन्नाकारत्वात्तथात्वम्।

कुनह(ट) पु० कूर्म्मविभागे बृह०सं० ऐशान्यामुक्ते १देशभेदे "ऐशान्यां मेरुकनष्टराज्ये" त्युपक्रमे "भल्लोपमीलजटासुरकुनह(ट)खसकुचिकाख्याः" इति तत्रोक्तत्वात्। कु+नह–अच्। २कुत्सितबन्धके त्रि०।

कुनाथ पु० कुत्सितोनाथः। १कुत्सितपालके। "कुनाथस्याजितात्मनो यथा सार्थस्य" भाग० ५।१४।४। "इत्याग्रहं कुनाथेन कथं सा वीरमानिना" भाग० ६।१४।४। कुपालकत्वाद्वोऽप्यत्र। कौनाथ्यः। २महीनाथे राजनि पु०।

कुनाभि पु० ईषत् नाभिरिव आवर्त्तवत्त्वात्। १वातमण्डल्याम् (घूर्णिवाताश) त्रिका०। २निधिभेदे हेमच०।

कुनामन् त्रि० कुत्सितं प्रातरस्मरणीयं नामास्य। अति-[illegible] स्त्रियां वा डाप् ङीप्। तस्यापत्यं बाह्वा० इञ्। कौनामि तदपत्ये पुंस्त्री०। तस्येदम् काश्या० ठञ्ञिठौ। कौनामिक तत्सम्बन्धिनि त्रि० ठञि स्त्रियां ङीप् ञिठि टाप् इदुच्चारणार्थः इति भेदः।

कुनाशक पु० ईषत् नाशयति स्पर्शनात् नश–णिच्–ण्वुल्। दुरालभायाम् यवासे (श्रालकुशी) अमरः।

कुनिषज्ञ पु० दशममनोः पुत्रभेदे। "दशमे त्वथ पर्य्याये द्वितीयस्यान्तरे मनोः" इत्युपक्रमे "मनोः सुतौ समाजाय कुनिषज्ञश्च वीर्य्यवान्" हरिवं० ७अ०।

कुन्च वक्रणे अनादरे च भ्वा० पर० सक० सेट्। कुञ्चति अकुञ्चीत् चुकुञ्च चुकुच(ञ्च)तुः। कुञ्चनम् आ+सङ्कोचने आकुञ्चति संकोचयति। वि प्रसारणे। विकुञ्चति प्रसारयति सङ्कुचितः णिच् आकुञ्चितः "आकुञ्चितसव्यपादम्" भट्टिः।

कुन्त पु० कुं भूमिमप्युनत्ति उन्द–बा० न शकन्धा०। गवेधुकायां (गड़गड़े) १धान्यभेदे। २प्रासास्त्रे च मेदि०। ३क्षुद्रकीटभेदे (उकुन्) कुन्तलः। ४चण्डभावे त्रिकः। कुन्तास्त्रलक्षणं हेमा० परिश० लक्षणसमुच्चये उक्तं यथा "उक्ता कुन्तोत्पत्तिरनन्तरं कुन्तद्रव्यं वक्ष्यते वेणुर्वंशं विल्वचन्दनौ वर्द्धनं शिंशपा खदिरोदेवदारुर्घण्टारोहश्चेति कुन्तस्य दण्डद्रव्याणि तत्र सप्तकरप्रमाणः श्रेष्ठः। षड्भिर्हस्तैर्मध्यमः। पञ्चकरश्च निकृष्टो भवति लोहस्याकारौ द्वौ भवतः एकं पुष्कलावर्त्तकं द्वितीयं चीनोद्भवं तत्तु तीक्ष्णं, यत्तु पुष्कलावर्त्तकं तल्लोहं मृदु। तयोश्चेयं परीक्षा यत्ताडितं नदति तत्तीक्ष्णं यन्निःशब्दं तन्मृदु, निपाते यच्छिद्यते तत्तीक्ष्णं, यन्नमति तत्पुष्कलावर्त्तं मृदु। तत्र चीनोद्भवं भवत्यप्रशस्तं पुष्कलावर्त्तकमेव प्रशस्यते। कुन्तस्य फलं च मृदुना लोहेन कर्त्तव्यं तीक्ष्णेन लोहेन धारा कार्य्या तयोरलाभे शेषाणि लोहानि शोधयित्वा कुन्तफलं तैः कारयेत्। तत्र सप्तपर्णशाकखर्ज्जूरीबिल्वकरवीरवेणूनां तालफलकयोः केतक्याः कुड्मा या पत्राकारः कुशाग्रस्य सन्निभश्च। तथा कर्णसंस्थानं वा कर्त्तव्यं तस्य निर्माणं मनोऽदृष्टिकरं तीक्ष्णं शुभञ्च श्रेष्ठं षोड़शाङ्गुलायामं, मध्यं चतुर्दशाङ्गुलायाममधमं द्वादशाङ्गुलं भवति। अङ्गुलविस्तारं सार्द्धाङ्गुलविस्तारं द्व्यङ्गुलविस्तारञ्च क्रमाद्भवति। द्वियववैपुल्यं सार्द्धैकयववैपुल्यमेकयववैपुल्यञ्च। तत्र श्लोकाः। वेण्वादिद्रुमजातीनां कार्य्यो दण्डः सप्त त्रिधा। सप्तषट्पञ्चहस्तश्च उत्तमो मध्यमोऽधमः। लोहस्याकारौ च द्वौ स्यातां चीनं पुष्कलं तथा। तत्रैकं तीक्ष्णं लोहस्य द्वितीयं मृदुनस्तथा। तत् फलं मृदुलोहेन धारा तीक्ष्णेन कारयेत्। सप्तपर्ण्यादिपत्राणां समाकारं फलं भवेत्। षोड़शाङ्गुलमायामोद्व्यङ्गुलश्चापि विस्तृतम्। यवद्वितयवैपुल्यं श्रेष्ठं कुन्तफलं भवेत्। मध्यमाधमयोर्हीनिर्द्व्यङ्गुलार्द्धाङ्गुलं क्रमात्। आयामे विस्तृते त्वत्र वैपुल्ये च यथाक्रमम्। सुशब्दत्वं मृदुगन्धत्वं सुपीनत्वं दर्शनीयत्वमिति फलगुणाः। चम्पकोत्पलचन्दनागुरुपद्मोशीरपत्ररसानां सुगन्धिदानाम् भवति फलस्य गन्धसंपत्। तथा युक्तं फलमतिक्रम्यापि रूपं पूजितं भवति वसागन्धि मत्स्यगन्धि गोमूत्रगन्धि दुर्गन्धि च निन्दितं भवति। मधुरं यद्यदयाम्लं यत्कषायं भवति तच्छ्रीप्रवर्द्धनं. यल्लवणं कटुकं तिक्तं चापि रूक्षं भयावहं तन्निर्दिशेत्। शब्दस्तु किरणस्यालोशब्दवत् घण्टाशब्दवच्च प्रशस्तो, भर्भरीभिन्नपात्रशब्दरूक्षो

मन्दवश शङ्को निन्दितो भवति। वैदूर्य्यनिभं चन्द्रसमान वर्णं कमलनीलोत्पलसदृशवर्णं निर्मलाकाशसवर्णमतसी पुष्पनिभं वा कुन्तफलं श्रियं भर्त्तुर्ददाति, मधुकोषसमानवर्णं श्यामलोहवर्णं मक्षिकासवर्णं निन्दितं भवति। हंसशुकमयूरताम्रचूडघटनन्द्यावर्त्तकूर्मसत्स्यकरितुरगा अन्ये च मङ्गलसंशिनः पदार्थाः कुन्तफलेषु यदि दृश्यन्ते तदा ते धर्म्मकामार्थसाधकाविनिर्दिष्टाः। गृध्रकोलूकपादपवायसकवन्धभुजङ्गकनिगडसकलाबाधेन्वेवं निन्दिताः पदार्था दृश्यन्ते ग्रन्थेषु ते दृष्टाः श्रियमपहरन्ति वसुधेति अयवक्तव्यम्। छाया वक्ष्यते ध्वजपताकाचामरच्छत्रतोरणशिविकावेश्माङ्कुशवर्द्धमानभद्रासनजलरङ्गावलिन् कुन्तफले दृश्यन्ते पीतच्छायास्मरगतास्ते कुन्तपुष्पलतोन लभन्ते नकुलचित्रकसूकरमहिषवायसोलूकपक्षीकादयो ये निन्दितायदि कुन्ते स्युर्लीनयन्ते तदा स कुन्तः श्रियं भुञ्जमानामपि विनाशयेद्यतस्तत्कुन्तं विफलवत्। स यथं वध्यं सद्योलभेत तस्य महिषी वा। चूलिकयोर्थ्यावितलस्य रङ्गानि चूर्णानि समभागानि कारयेत्। तत् चूर्णितं कृत्वा तेन चूर्णेन फले घर्षोवघर्षितं कुन्तफलं निर्मलं भवति दुर्गन्धं न भवेत्तथा मलेन न लिप्यते। तत्र वर्मकोष्ठसमन्वितं समाच्छितं कारयेन्नालिकावन्नियद्यं सुदृढ़ायामेन वानुपत्वेन सुश्लिष्टैस्तादृशैर्वलयकैः सुवर्णमये रजतमये वा सर्वेषां रत्नालङ्कृतैर्नलिका स्थिता कर्त्तव्या। कुन्ते दृढ़परिगृहस्य तथाचोक्तं कुन्तस्य कर्त्तव्यं नलिकाकुड़लं वा। नलिका चाल प्रमाणतः स्थिता कार्य्या हरीतकीकदम्बनालफलसमानं बिल्वफलाकारं ककुभकपित्थफलसदृशं वा हस्तसदृशं वा कलशामलकाकारं वा भवति सर्वैरपक्षरान्वितं कुन्तायुधं षष्टिपलं श्रेष्ठपञ्चाशत्पलं मध्यमं चत्वारिंशत्पलं निकृष्टमिति प्रबलरिपुविनाशकं क्रियान्वितञ्च कुन्तं कारयेन्नत्र यमसाध्यादधिनीरवं, यो हि कायशारस्य वक्रमविदित्वा कुन्तमायुधमाददेत् सादिकस्तस्याजीर्णमजानतः पुरुषस्येवाति भुक्तमन्नं कुन्तायुधं विषीभवति। इत्यौशनसे कुन्तलक्षणम्" कुन्ताः प्रविशन्तीत्यत्र कुन्तधारिषि लक्षणेत्यालङ्कारिकाः। "शक्तिकुन्तध्वजरथावाजिवारणयोधनाः" हरिवं०। "शक्तिकुन्ताद्यायुधानीति" सुश्रुतः।

कुन्तल पु० कुन्तं कुत्सितं (ठकुष) लाति ला-क। १केशे "नापि कुन्तलसंव्यानवदमश्वादेशतः। काञ्चनूल-

-सतो नाभिपङ्कजं दर्शयेत् स्फुटम्" मा० द०। तदाधकारत्वात् २ह्रीवेरे च अमरः। कुन्तलाकारं केशाप्राकारं लाति ला-क। ३यवे ४चषके पानपात्रे ५लाङ्गले च विश्वः। ६ध्रुवकभेदे "वर्णैः षोड़शभिः कार्य्यः कुन्तलो लघुभिस्वरैः। शृङ्गारे च रसे प्रोक्त आनन्दफलदायकः" इति संगीतदामो०। "कामगिरिं समारभ्य द्वारकान्तं महेश्वरि!। श्रीकुन्तलाभिधो देशः कथितः पूर्व्वसूरिभिः" शक्तिसङ्गमतन्त्रोक्ते ७देशभेदे पु० भूम्नि "ज्ञाता तिष्ठति कुन्तलेश्वरसुता याराेऽङ्गराजस्वसुः" सा०द०। "अथापरे जनपदा दक्षिणा भरतर्षभ" इत्युपक्रमे "जिल्लिकाः कुन्तलाश्चैव सौहृदा नलकाननाः" भा०भी०९अ० दक्षिणात्यजनपदोक्तौ। तेषां राजा अण्। कौन्तल तद्देशनृपे। बहुषु तस्य लुक्। क्वचित् एकत्वेऽपि लुक्। "आकर्षः कुन्तलश्चैव मालवाद्यान्ध्रकास्तथा। द्राविड़ाः सिंहलाश्चैव राजा काश्मीरकस्तथा" भा०स०३अ०। ते अभिजनोऽस्य अण्। कौन्तल पित्रादिक्रमेण तद्देशवासिनि। बहुषु तस्य लुक्।

कुन्तलवर्द्धन पु० कुन्तलान् वर्द्धयति वृध-णिच्-ल्यु। भृङ्गराजे (भीमराज) राजनि०। तद्रसलेपनेन हि केशवृद्धिरिति वैद्यकप्रसिद्धिः।

कुन्तलिका स्त्री कुन्तलस्याकारो विद्यतेऽस्याः ठन् अत इत्वम्। दध्यादिच्छेदन्यां १क्षुरिकाभेदे पालिकायाम् त्रिका०। २वालानामौषधौ (वाला) स्त्री हस्तः। यथा "कुन्तलिकाकुरयिष्टकाभ्रतानील्युपक्रमे "स्वादुपाकरसाःशीताः कफघ्नायातिपित्तलाः। लघवाह्रेरसाकृत्याः सक्षाराः वातलाः सराः। स्वादुतिक्ता कुन्तलिका" [राजनि०।

कुन्तलोशीर न० कुन्तल इवोशीरम्। (वाला) नामौषधौ

कुन्ताप पु०। वैदिके ऋचां पाठप्रकारभेदे तत्प्रकारः आश्व० श्रौ० ८।३।७।८।९। सू० दर्शितोयथा "तस्मादूर्ध्वं कुन्तापम्" सू० "तस्माद् पाकपेरूर्ध्वं कुन्तापं शंसेत्। तस्मादूर्ध्वमिति वचनात् माध्यन्दिने स्त्राकर्षौ प्रविष्टे तदनन्तरं कुन्तापः स्यादसति प्रवेशे तृतीयसवनेऽपि तस्य प्रवेशो नास्तीति गम्यते" नारा०वृ०। "तस्यादितस्तद्देषविस्पाक् निनर्द शंसेत" सू०। "तस्य कुन्तापस्यादितश्चतुर्दश ऋचो विस्पष्ट निनर्दोऽयमपूर्व इति तस्याः स्वरूपनिदर्शनमाह"वृ०। "तृतीयेषु पादेषूदात्तमनुदात्तपरं यत् प्रथमं तन्निनर्देत्" सू०

संप्राप्तः कुरुजाङ्गलान्" भाग० १,४,७, कुरवो जाङ्गलाश्च देशभेदाः "श्रीधरः" । कुरवश्च जाङ्गलश्च "विशिष्टलिङ्गो नदीदेशोऽग्रामतः" पा०सूत्र० एकवद्भावे कुरुजाङ्गलम् । १तत्समाहारे न० [ परकशाके राजनि० ।

कुरुकट पु० कुत्सितं रोटति रुट—दीप्तिप्रतिघाते क । सिता-

कुरुण्ट पु० कुत्सितं रुण्टति रुटि—स्तेये अच् । पीतझि-ण्ट्याम् पीताम्लाने मेदि० । स्वार्थे क । तत्रार्थे अमरः

कुरुण्टी स्त्री कु+रुटि—स्तेये अच् गौरा० ङीष् । १दारु पुत्तलिकायां मेदि० । २ब्राह्मयष्टां जटा०

कुरुत पु० कुर—बा०उतच् । वंशनिर्म्मिते हस्तदाकारे पात्रभेदे यद्य पादोऽस्य हस्ता० तालव्यलोपः । कुरुतपादइत्येव ।

कुरुतीर्थ न० भारतप्रसिद्धे तीर्थभेदे तत्र तीर्थं "यत्र म-हादिभिर्द्देवैश्च विभिन्न तपोधनैः । सेनापत्येन देवाना-मभिषिक्तो गुहस्तदा । तैजसस्य च पूर्व्वेण कुरुतीर्थं कुरूद्वह ! कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । सर्व्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते" भा० व०६८अ० उक्तम् । [ छायामल्लायां नद्याम् ।

कुरुनदिका स्त्री यवक्षिका नदी कुरुनदिकेत्युच्यते हल्यु-

कुरुपिशङ्गिला स्त्री कुरु इत्यनुकरणशब्दकरणेन सूत्राव-यवभक्षिकायां गोधायाम् "कदंसटे पिशङ्गिला कदं कुरु-पिशङ्गिला" इति मन्त्रे "अजारे पिशङ्गिला श्वावित् कुरुपिशङ्गिला" यजु० २३।५५।५६। उत्तरम् "श्वावित् गोधा कुरुपिशङ्गिला । कुरुशब्दोऽनुकरणे पिश—अवयवे इति धातोरिगुपधेति कप्रत्ययः कुरु इति शब्दानुकुर्व्वाणा पिशान् सूत्राद्यवयवान् गिलति । पिशङ्गिला सूत्रा-नि यत्तं कृत्वा स्थापयति यतश्च भक्षयतीति गोधायाः स्वभावः" वेददीपः ।

कुरुम्ब न० कुर—बा० उम्बच् । (कमलालेबु) १कुलपालके जम्बीरभेदे शब्दच० । २द्रोणपुष्प्यां स्त्री० टाप् राजनि० गौरा० ङीष् । ३रक्तलोध्रे राजनि० स्वार्थे क तत्रार्थे

कुरुराज् पु० कुरुषु राजते राज—क्विप् । दुर्य्योधने त्रिका० कुरूणां राजा टच्समा० । कुरुराजोऽप्यत्र

कुरुल पु०कुर+उलच् । ललाटस्थे चूर्णकुन्तले हेमच०

कुरुवक पु० कु+रु—क—कुत्सितं रवोऽभ्रमरो यत्र कप् । १रक्तझिण्ट्याम् अमरः २पीतझिण्ट्यां हेम०

कुरुवर्ष न० कुरुसंज्ञकं वर्षम् । जम्बुद्वीपस्थे उत्तरकुरु-संज्ञके वर्षभेदे उत्तरकुरुशब्दे १०८४पृ० विवृतिः

कुरुविन्द पु० कुरून् सूत्रकारणत्वेन विन्दति विद—श सचा०

म्म् । १मुस्तायाम् अमरः २माषे राजनि० ३ काचलवणे ४माणिक्यरत्ने न० राजनि० । ५कुरुविन्दरत्ने ६कुल्माषे व्रीहिभेदे मेदि० ७दर्पणे दक्षिणावर्त्ते च न० शब्दच०

कुरुविल्व पु० कुरुषु विल्वइव । १पद्मरागमणौ त्रिका० संज्ञायां क । कुरुविल्वक कुल्माषे (बनकुरथि) रत्नमा०

कुरुविस्त पु० कुरुषु विख्यातः विस्तः । स्वर्णपले अमरः

कुरुवृद्ध पु० कुरूणां जनपदानां राजानः तद्राजस्य तद्वितस्य बहुषु लुक् तेषु कुरुषु वृद्धः । भीष्मे । "तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः" गीता ।

कुरुश्रवण त्रि० कुरवः यज्ञकर्त्तारः तेषां श्रवणः स्तोतॄणां श्रोता श्रु—नन्द्या ल्यु । ऋत्विजां स्तुतिश्रोतरि "कुरुश्रवण माहवि राजानं त्रासदस्यवम्" ऋ०१०,३३५० "कुरुश्रवण ! ददतो मघानि" ऋ० १०।३३।६ । हे कुरुश्रवण ! कुरवः ऋत्विजः तेषां स्तुतीनां श्रोतः !" भा०

कुरूटिनी स्त्री किरीटिनी+वेदे पृषो० । किरीटयुक्तायां से-नायाम् "वाहिनी विश्वरूपा कुरूटिनी अथ० १०.१,१५

कुरूप्य न० ईषत् रूप्यं शुभ्रत्वेन साहश्यात् । १रङ्गनामके धातौ राजनि० कोः पृथिव्याः कुस्थानात् वा आगतं रूप्यप् । पृथिव्याः कुस्थानाद्वा २आगते त्रि०

कुर्कुट पुंस्त्री०कुरित्यव्यक्तं शब्दं कुटति कुट—क । कुक्कुटे हारा० "श्वानः कुर्कुटचाण्डालाः समस्पर्शाः प्रकीर्त्तिताः । रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत्" पद्मत० स्त्रियां जातित्वात् ङीष् [ भे अग्नौ स्त्रियां ङीष्

कुर्कुटाहि पु० कुर्कुटतुल्यमहति अह—इन् । कुर्कुटा

कुर्कुर पुंस्त्री० कुरित्यव्यक्तं शब्दं कोरति कुर—क । कुक्कुरे रायमुकुटः "कुर्कुराविव कूजन्तौ" अथ०७,६५,२, "उपकुर्कुरमपि प्राप्य नितःस्व सम्मानि कुर्कुरम्" पद्मत० ।

कुर्चिका स्त्री कूर्चिका पृषो० । कूर्चिकाशब्दार्थे अमरटीका

कुर्सज पु० कुलञ्जनदृशे गन्धमूले राजनि० ।

कु(कू)र्द्द क्रीडायां भ्वा० आत्म० अक० सेट् । कु(कू)र्द्दते अकु(कू)र्द्दिष्ट चुकु(कू)र्द्दे । अर्थवत्परिभाषया न-कारदरामिति निषेधाप्रवृत्तावपि दीर्घमध्यान्तरपाठसाम-र्थ्यात् रेफे परे न दीर्घः इति सूचितम् । तेन कर्द्द-नमित्यादौ न दोषः । [ अमरः ।

कु(कू)र्द्दन न० कु(कू)र्द्द—भावे ल्युट् । क्रीडायाम् (कोदा)

कु(कू)र्पर पु०कुर—क्विप् कुः पिपर्त्ति अच् परः कर्म्म० । १जा-नुनि, २कफोणौ च । मेदि० दीर्घमध्यपाठान्तरे नि०दीर्घः

कु(कू)र्पास पुंन० कूर्परे आस्ते आसे वा अच् पृ०। स्त्रीणां

कञ्चुलिकायां (कांचुली) स्वार्थे क। तत्रैवार्थे। "प्रस्वेदवारिलवसिक्तनिबिडवपुर्ज्वभङ्गे कु(कू)र्पासकं श्लथनखक्षतकृत्-विपत्ती" माघः। "मनोज्ञकु(कू)र्पासकपीडितस्तना" रत्ना॰ [ २कर्त्तरि त्रि॰। स्त्रियां ङीप्।

कुर्वत् पुंस्त्री कृ—शतृ। १चर्म्मकारे २भल्ले त्रि॰ विश्वः

कुर्वद्रूप पु॰ कुर्वद् फलोन्मुखं रूपं यस्य। बौद्धमतसिद्धे फलजननाय योग्ये धान्यादौ बीजे। स च बौद्धमते अतिशयात्मा सहकारिभिराधीयते इति स्थितम् यथा "अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयते इत्यभ्युपगम्यते तर्हि प्राचीनभावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति" सर्व्वदर्शनसं॰। क्षणिकशब्दे बौद्धशब्दे च विवृतिः।

कुर्वाण त्रि॰ कृ—शानच्। १भृत्ये २कारके च शब्दचि॰।

कुर्व्वादि पु॰ अपत्ये ण्यप्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे "स च गणः कुरु गर्गर मङ्गुष अजमार रथकार वावदूक (सम्राजः क्षत्रिये) कवि विमति कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रजाली एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शलाका मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी (वेणा छन्दसि) शूर्पणाय श्यावनाय श्यावरथ श्यावपुत्र सत्यङ्कार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाकम् शाकिन् शालीन कर्त्तृ हर्त्तृ इन पिण्डी (वामरथस्य कण्वादिवत् स्वरवर्जम्) कौरव्य

कुल बन्धे संहतौ च भ्वा॰पर॰सक॰ सेट्। कोलति अकोलीत् चकोल। कूलम्। बंगेऽप्यस्य प्रयोग इति वदन् दुर्गादासः आकुलः सङ्कुलत्यादिप्रयोगमपश्यन् परास्तः। आ+व्यग्रतायाम् चञ्चलतायाम्। आकोलति "किमेतदित्याकुलमीक्षितं जनैः" माघः "उद्वतहिरण्याकुललोचनैः" भट्टिः।

सम्+सङ्कीर्णतायाम् सङ्कुल युद्धम् भा॰द्रो॰प॰। "अलिकुलसंकुलकुसुमनिराकुलेत्यादि" जयदेवः। "शब्दकुलाकुलेन" माघः।

कुल न॰ कुल—क, कुङ् शब्दे कर्म्मणि वा॰ लक्. कुं भूमिं लाति ला—क, कौ भूमौ लीयते "अन्येष्वोऽपि" पा॰ड॰ यथायथम् व्युत्पत्तिः। १जनपदे देशे। मध्यमहलद्वयेन यावती भूमिः कृष्यते तावत्यां २भूमौ "दश कुलन्तु भुञ्जीत" मनुः। "अष्टागवं धर्म्महलं षड्गवं जीवितार्थिनाम्। चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनाम्" हारीतस्मरणात् "षड्गवं मध्यमं स्मर्तमिति तथाविधहलद्वयेन यावती भूमिः कृष्यते तावद्भूमिः कुलमित्युच्यते कुल्लू॰। ३गोत्रे ४वंशे। ५सजातिगणे विप्रकुलम् पक्षिकुलम्। अगकुलाय कुलायनिलायिताम् माघः तत्र सत्कुलधर्म्माश्च "आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम्। निष्ठा वृत्तिस्तपोदानं नवधा कुललक्षणम्"। अभियुक्तोक्ताः तस्य नाशकधर्म्माश्च कूर्म्म पु॰१५अ॰उक्ता यथा "गोभिश्च घोटकैर्विप्र! कृष्या राजोपसेवया। कुलान्यकुलतां यान्ति यानि हीनानि सत्ततः। कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च। कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण वै। अनृतात् पारदार्य्याच्च तथाऽभक्ष्यस्य भक्षणात्। अश्रौतधर्म्माचरणात् क्षिप्रं नश्यति वै कुलम्। अश्रोत्रियेषु वेदानां वृषलेषु तथैव च। विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम्"।

मनुना तु कुलनाशवृद्ध्योः कारणमुक्तं यथा "शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम्। न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा। जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः। तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च। सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्। यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्। अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते। स्त्रियान्तु रोचमानायां सर्वं तद्रोचते कुलम्। तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते। कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च। कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च। शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः। गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया। अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम्। कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः। मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि। कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद् यशः"।

कुलस्यार्थविवाह विषये त्याज्यकुलानि मनुनोक्तानि यथा "महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः। स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत्। हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम्। क्षय्यामयाव्यपस्मारिश्वित्रि कुष्ठिकुलानि च"। ६गृहे ७देहे च ८श्रेष्ठे त्रि॰ मेदि॰। "जीवप्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजो वायवश्च कुलमित्यभिधीयते" तन्त्रोक्तेषु ९जीवादिषु १०कु-

लिङ्के शिल्पिकुलप्रधाने पु० भरतः। कुले भवः यत् कुल्य त्रि। कुलीन-ढकञ्। कौलेयक कुलोद्भवे त्रि० अश्वादि० चतुरर्थ्यां वः। कुल्य कुलसन्निकृष्टदेशादौ त्रि० बलादि० देशे मतुप् मस्य वः। कुलवत् कुलयुक्ते त्रि० स्त्रियां ङीप् कुलवती तत्र सजातीयसंघे "यस्यावलद्वारिविवारिवीचिच्छटोच्छलत्कुलाकुलैः" माघः अलिकुलसङ्कुलेत्यादि जयदेवः पृथिव्याधारे मूलाधारे लीयते-ली+ड। ११कुलकुण्डल्यां स्त्री उच्चारात् तद्रूपाधके तन्त्रोक्ते १२आचारविशेषयुक्ते कुलाचाराधिकारेणैव कुलचन्द्रिका कुलक्रमदीपिका कुलचूडामणिकुलार्णवादयस्तन्त्रग्रन्थाः १३भूमिलग्ने च त्रि०। १४तन्त्रोक्ते तिथिनक्षत्रवारभेदे त्रि० कुलतिथिकुलनक्षत्रकुलवारशब्दे कुलाचारशब्दे च विवृतिः।

कुलक न० कुल-क कौ लीयते ली-ड वा ततः संज्ञायां कन्। १पटोलस्तायां २परस्परसंबद्धश्लोकपञ्चके च मेदि० "कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्" सा० द०। ३काकेन्दौ पु० अमरः ४वल्मीके पु० ५कुलश्रेष्ठे त्रि० मेदि० ६मरुवकद्रुमे पु० रत्नमा०। ७हरितसर्पे पुंस्त्री० राजनि०। ८कुपीलौ पु० भावप्र०। ९शिल्पिकुलप्रधाने त्रि० भरतः।

कुलकर्कटी स्त्री नित्यकर्म०। चीनकर्कट्यां राजनि०।

कुलकुण्डलिनी स्त्री कौ पृथिवीतत्त्वाधारे मूलाधारे लीयते ली-ड कर्म०। तन्त्रोक्ते मूलाधारे सर्पीवद्वलस्थिते शिवशक्तिभेदे कुलकुण्डलीत्यत्र स्त्री। तत्स्वरूपादिकं शारदायामुक्तम् यथा "तत्रचैतन्यरूपा सा सर्वगा विश्वरूपिणी। शिवसन्निधिमासाद्य नित्यानन्दगुणोदया। दिक्कालाद्यनवच्छिन्ना सर्ववेदार्थगा शुभा। परापरविभागेन परशक्तिरियं स्मृता। योगिनां हृदयाम्भोजे नृत्यन्ती नित्यमञ्जसा। आधारे सर्वभूतानां स्फुरन्ती विद्युदाकृतिः। शङ्खावर्त्तक्रमाद्देवी सर्वमावृत्य तिष्ठति। कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी। गुम्फिता सर्वगात्रेषु कुण्डली परदेवता। विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत्। सर्वदेवमयी देवी सर्वमन्त्रमयी शिवा। सर्वतत्त्वमयी साक्षात् सूक्ष्मात् सूक्ष्मतरा विभुः। त्रिधामजननी देवी क्षोभस्तूर्याङ्गरूपिणी। त्रिभेदत्रिगुणा कर्त्री शब्दब्रह्मस्वरूपिणी। द्विचत्वारिंशद्वर्णा सा पञ्चाशद्वर्णरूपिणी"। विवृतमेतत् पदार्थादर्शे राघवभट्टेन यथा "कुण्डलिनीतत्पर्य्यायाह तत्र चैतन्येति। तदुक्तं "मूलाधारात् प्रथममुदितो यस्तु शब्दः पराख्यः पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुग् मध्यमाख्यः। वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्नाबद्धस्तस्माद्भवति पवनप्रेरितो वर्णसंघः"। ततः शरीरोत्पत्त्यनन्तरं चैतन्यरूपा अतएव शब्दब्रह्ममयी सा देवी कुण्डली परदेवता सर्वगात्रेषु गुम्फिता अतएव विश्वात्मना सर्वात्मना प्रबुद्धा जातप्रबोधा मन्त्रमयं जगत् सूत इति दूरेण सम्बन्धः। तत्र मूलाधारे कुण्डलीभूतसर्पवच्छरीरवर्त्तते तन्मध्ये वायुवशादस्याः सङ्कुचनमेव गुम्फनम्। चैतन्यरूपेति स्वरूपाख्यानं सा प्रसिद्धा सर्वगात्रेषु तिष्ठतीत्यनेन कर्तृव्याप्तिर्दर्शिता विश्वरूपिणीत्यनेन विषयव्याप्तिः। शिवसन्निधिमासाद्य स्थितेति शेषः अनेन शैवसिद्धान्ते शक्तिशब्दवाच्येयमित्युक्तं सन्निधिशब्दोऽप्यौपचारिकः तन्मते शिवशक्त्योरभेदात् तदुक्तमभिनवगुप्तपादाचार्य्यैः "शक्तेश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति। तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव"। यद्वा सम्यक्सुष्ठु सन्निधिस्वरूपं शिवस्वरूपं प्राप्येत्यर्थः वक्ष्यति च "पिण्डरूपेण कुण्डलिनी शिवात्मेति" गुणानां सत्त्वरजस्तमसामुदयो यस्याः सा नित्यानन्दा चासौ गुणोदया च सा नित्यानन्दगुणोदया तेन कुण्डलिनीस्वरूपमुक्तं गुणोदयत्वेन साङ्ख्यमते प्रकृतिवाच्येयमित्युक्तं यदाहुः "प्रधानमिति यामाहुर्या शक्तिरिति कथ्यते" इति इदानीमध्यात्माधिभूताधिदैवादि विषयादिव्याप्तिप्रकारेण तस्या व्याप्तिमाह दिक्कालेति सर्वदेहानुगेति देहव्याप्तिः परापरविभागेन काचन परा शक्तिः काचनापरा तद्विभागेनाशेषं परशक्तिरेव यदाहुः "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् जीवभूतां महाबाहो। ययेदं धार्य्यते जगत्" (गीता)। यद्वा परः स्थूलः अपरः महास्थूलः महदादिः तद्विभागेन परशक्तिः स्थूला शक्तिः स्थूलात्स्थूलेत्युक्तेः। अनेन महदादिव्याप्तिः यद्वा सर्वदेहानुगेत्यनेन प्राकृतशब्दतोऽर्थ तत्र पुंस्त्रीनपुंसकलिङ्गव्याप्तिर्दर्शिता शक्तौ यथा शिव इत्युच्यते कुण्डलिनी प्रोच्यते प्रधानमिति एवंभूतापि सा स्त्रीत्वेनैव निर्दिश्यत इत्याह परापरेति परा पुंप्रकृतिः अपरं नपुंसकप्रकृतिस्तद्विभागेन इयं परशक्तिःस्मृता अयमर्थः यद्यपि त्रिलिङ्गशब्दवाच्या तथापि तूर्णमेव समस्तशक्तिभारपरिपालनसमस्तजनसमस्ताकाङ्क्षाकल्पवल्ली परशक्तिपदवाच्येति। अत एव शुभा रमणीया यदाहुराचार्य्याः" पुंनपुंसकयोस्तुल्यापच्छन्नायां वि-

शिवन" इति निरुक्तितन्त्रादेऽपि "सर्व्वत्रावस्थिताप्येषा कामिनीषु विशेषतः । प्रकाशते ततस्तासाम् तद्वृत्तिं न कारयेदिति" अरूपा तत्त्वेन योगिनां हृदयाम्भोजे नृत्यन्ती यस्य तैरेव गुरूपदेशेन ज्ञायते इत्यर्थः । "इयन्त्रा तैरेव सा देवी सदा देवकदेवैरित्युक्तेः सर्व्वभूतानाम् आधारे मूलाधारचक्रे स्फुरन्ती अनेन स्थाननिर्देशः विद्युदाकृतिरित्यनेन ध्यानमुक्तं यदाहुः "तडित्कोटिप्रख्यां स्वरुचिजितकालानलरुचिमिति" अथ वानेन अनेकब्रह्माण्डोत्पत्तिहेतुत्वेनानेकधा भवतीत्युक्तं शङ्खमध्ये य आवर्त्तः स यथा शङ्खमध्यमाहत्य तिष्ठति तद्वदियमपि देवीत्यर्थः । इदमथान्तरवाक्यं भिन्नमेव शङ्खेति कुण्डलीत्यनयोर्हेतुहेतुमद्भावेन योजना । कुण्डलीभूता कुण्डलाकारतां प्राप्ता ये सर्पा तथाभूता । केचन कुण्डलीति भिन्नं पदं वर्णयन्ति भूतानि सर्पाश्च ते यथा कुटिलगतयस्तद्वदियं सर्पीत्यर्थः इति तत्र कुण्डली परदेवतेत्यनेन पुनरुक्तिः । सर्व्वदेवमयीति देवव्याप्तिः दीव्यतीति देवी तेजोरूपेत्यर्थः अनेन तेजोव्याप्तिः । सर्व्वमन्त्रमयीति मन्त्रव्याप्तिः । शिवा शिवरूपेत्यर्थः यद्वा शिवा कल्याणरूपा । साक्षात् सर्व्वतत्त्वमयीति तत्त्वव्याप्तिः । सूक्ष्मा सूक्ष्मतरा विभुरिति विरोधः परिहारस्तु सूक्ष्मा स्वरूपतः सूक्ष्मतरा दुर्ज्ञाना यद्वा सूक्ष्मात् त्रसरेणोरपि सूक्ष्मतरा अणुतरा अनेनाण्वादिव्याप्तिर्दर्शिता तदुक्तं "बालाग्रस्य शतधा विदलितस्यैकेन भागेन या सूक्ष्मत्वात् सर्व्वगा त्रिलोकजननीति" विभुः इयत्तया ज्ञातुमशक्या । त्रिधामेति सूर्य्यसोमाग्निरूपा । यद्वा त्रिधामेति स्थानत्रयं पातालभूस्वर्गरूपा अनेन स्थानव्याप्तिर्दर्शिता द्विचत्वारिंशद्वर्णात्मा भूतलिपिमन्त्रमयी पञ्चाशद्वर्णरूपिणीति मातृकामयी" ।

तस्या ध्यानादिकमुक्तं प्रयोगसारे यथा

"मूलाधारे कुण्डलिनीं ध्यात्वा संपूजयेन्नरः । ध्यानं तस्याः प्रवक्ष्यामि येन योगी प्रजायते । प्रसुप्तभुजगाकारां स्वयम्भूलिङ्गमाश्रिताम् । विद्युत्कोटिप्रभां देवीं विचित्रवसनान्विताम् । शृङ्गारादिरसोल्लासां सर्व्वदा कारणप्रियाम् । एवं ध्यात्वा कुण्डलिनीं ततो यत्नेन समाहितः । मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत् । ततोऽपि तोषयेत्तान्तु स्तवेनानेन साधकः । "रुद्रयामले" च प्रातः समुत्थाय पयुरुक्तमपण्डितः । गुरूणां चरणाम्भोजं सहस्रं शीर्षपङ्कजे । विभाव्य पुनरेवं हि श्रीपदं भावयेद्धृदि । पूजयित्वा च विविधैरुपचारैर्नमेत् स्तवैः । त्रैलोक्यं तेजसा व्याप्तां सगुणस्थां ...समाम् । तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम् । सार्द्धत्रिवलयाकारां स्वयम्भूलिङ्गवेष्टिताम् । उत्थापयेन्महादेवीं महाशक्तिं मनोन्मनीम् । श्वासोच्छ्वासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम् । योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम् । चतुर्व्वर्गस्वरूपां तां वकारादिसकारकाम् । कोटिकोटिसहस्रार्ककिरणोज्ज्वलमोहिनीम् । महासूक्ष्मपथपान्तरन्तरान्तरगामिनीम् । वैतालिकरचितां वाक्यदेवतां शब्दरूपिणीम् । महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम् । महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम् । कालरूपां ब्रह्मरूपां सर्व्वत्र सर्व्वचिन्मयीम् । ध्यात्वा पुनःपुनः शीर्षे सुधाब्धौ विनिवेशिताम् । सुधापानं कारयित्वा पुनःस्थाने समानयेत् । समानयनकाले तु सुषुम्नामध्यमध्यके । अमृताभिप्लुतां कृत्वा पुनःस्थानेषु पूजयेत् । ऊर्द्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत् । प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम् । कुलकुण्डलिनीं देवीं अमृतानन्दविग्रहाम् । ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्व्वसिद्धीश्वरो भवेत् । तस्मिन् स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम् । अमृतानन्दमूर्त्तिं तां पूजयित्वा शुभां सुदा । मानसोच्चारबीजेन मायां वा कामबीजकम् । पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमतस्तथा । विलोमेन पुनर्जप्त्वेति"

कुलक पुं० कु+लक—आप्तौ भावे घञ् । करताल्याम् हारा० ।

कुलक्षया स्त्री कुलस्य क्षयोयस्याः । १शूकशिम्ब्यां शब्दचि० ६त० । २कुलनाशे पुं० । "कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्" । "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः" गीता ।

कुलघ्न त्रि० कुलं हन्ति हन—टक् । वंशघातके । "सङ्करो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः । दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः । उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः । उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! । नरके नियतं वासो भवतीत्यनुशुश्रुम" गीता । तत्र यथोत्तरं कार्य्यमुक्तं तत्रैव "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः । धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत । अधर्म्माभिभवात् कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः । सङ्करो नरकायैव कुलघ्नानां कुलस्य च" एतदुत्तरं कुलक्षयशब्दे दर्शितम्

**कुलज** त्रि० कुले सत्कुले जायते जन–ड । १सत्कुलोद्भवे । २कुलपालिकायां स्त्री टाप् शब्दरत्ना०

**कुलञ्ज** पु० कुं पृथिवीं रञ्जयति रञ्ज–णिच् अण् रस्य लः । कुलञ्जनशब्दे राजनि०नन्दग्रा०स्तु । कुलञ्जनोऽप्यत्र "कुलञ्जनः कटुस्तिक्तः उष्णश्च दीपनस्तथा । मूलदोषविनाशी च" राजनि० तद्गुणा उक्ताः

**कुलटा** स्त्री० कुलात् कुलान्तरं व्यभिचारार्थमटति अट–अच् शक० । व्यभिचारिण्यां स्त्रियाम् । या तु भिक्षार्थं कुलमटति सा कुलाटा इति तत्र न शक० । इति भेदः

**कुलटी** स्त्री कुत्सितं रट्यते रट–भावे घञर्थे क गौरा० ङीष् रस्य लः । मनःशिलायां रत्नमा०

**कुलतन्तु** पु० कुलस्य तन्तुरिव । कुलप्रवर्त्तके "मया च सत्यया च कृष्णेन च महात्मना । समवस्थापितं भूयो युष्माकं कुलतन्तुषु" भा०शा० ११०अ०

**कुलतिथि** स्त्री द्वितीयाषष्ठीदशमीभिन्नासु समतिथिषु चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु यथोक्तं तन्त्रसा० "द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् । विषमाश्चाकुलाः सर्वाः शेषाश्च तिथयः कुलाः"

**कुलत्थ** पु०कुलं भूतलं सत् तिष्ठति स्था–क पृषो० । १कलायभेदे (कुलत्थकलाइ) २वनकुलत्थे स्त्री टाप् रत्नमा० । तत्पर्य्यायादि भावप्र० उक्तं
"कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ । कुलत्थः कटुकः पाके कषायः रक्तपित्तकृत् । लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् । हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् । स्वेदसंग्राहको मेदोज्वरकृमिहरः परः ।" भावप्र० कुलत्थिकेति निर्द्देशात् स्त्रीत्वमपि सा च उपचारात् ३तुल्याञ्जने ४वनकुलत्थायां च स्त्री राजनि० "कुलाली लोचनहिता चक्षुष्या कुम्भकारिका कुलत्थिकेति" राजनि० वनकुलत्थापर्य्याये उक्तेः । स्वार्थे क । तत्रैवार्थे राजनि० कुलत्थे भावप्र० संज्ञायां कन् । कुलत्थाञ्जनाकारप्रस्तरभेदे अमरः ।

**कुलत्थाञ्जन** न० कुलत्थया कृतमञ्जनम् । अञ्जनभेदे "मलापहारि चक्षुष्यं कषायं कटुकं हिमम् । विषविस्फोटककण्डूनां नाशकं व्रणदोषहृत्" राजनि० तद्गुणा उक्ताः

**कुलदीप** पु० कुले कुलाचारे विहितोदीपः तन्त्रसारोक्ते कुलाचाराङ्गे १दीपभेदे "अर्केन्दुशिवसाढ्यग्राशतल निर्म्मितवर्त्तिकम् । प्रदीपं तत्र संस्थाप्य चक्रकाले प्रज्वलेत् । इते तस्मिन् कुलदीपे विघ्नैश्च परिभूयते । तदन्तराख्यमन्त्रेण निखनेत् कुलदीपकम्" कुलं दीपयति अण् उप०स० । २कुलप्रकाशके कुलश्रेष्ठे त्रि०

**कुलदेवता** स्त्री० कुले पूज्या देवता । १कुलक्रमेणोपास्य देवतायाम् गौर्य्यादिषु षोडशसु मातृषु मध्ये ३मातृभेदे च । तास्य ब्रह्मपरिशिष्टे उक्ता यथा "गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह । आदौ विनायकः पूज्यो अन्ते च कुलदेवता"

**कुलदेवी** स्त्री कुलैः कुलाचारैरुपास्या देवी । १तन्त्रोक्ते देवीभेदे कुलदेवताश्च तन्त्ररा० उक्ता यथा
"त्रिपुरा त्रिपुरेशी च सुन्दरी पुरसुन्दरी । श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी । प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा । सम्प्रदायाकुला कौला रहस्यातिरहस्यगा । परम्परहस्या च तथा कामेश्वरी शुभा । भगमाली नित्यक्लिन्ना भैरवी वह्निसुन्दरी । महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी । नित्या नीलपताका च विजया सर्वमङ्गला । ज्वालांशुमालिनी चित्रा वशिनी शुभगाकुला । पूर्णाख्या च तथा यत्ना कामिनी मोहिनी तथा । विमला वरुणा देवी जयिनी कुलभैरवी । सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी । सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्द्दिनी । शताक्षी शूलिनी च मातङ्गी सुरसुन्दरी । महाकाली महोग्रा च छिन्नरूपा महोदरी । प्राणविद्या तथैकाक्षी चैकपादा महाङ्कुशा । वामा शिवा तथा ज्येष्ठा इत्या चारुहासिनी । त्रिखण्डा त्रिशिरा गौरी विन्ध्याचलनिवासिनी । क्षोभिणी मोहिनी भद्रा ललिता बहुरूपिका । सर्वसम्पत्करी तारा भवानी विघ्नहारिणी । कुलेश्वरी महाविद्या कथिता तव भैरव !" । कुलैः कुलजैरुपास्या देवी २वंशपरम्परया उपास्ये देवीभेदे च

**कुलद्रुम** पु० "श्लेष्मातकः करञ्जश्च बिल्वाश्वत्थकदम्बकाः । निम्बो वटोडुम्बरौ च धात्री चिञ्चा दश स्मृताः" इत्युक्तेषु श्लेष्मातकादिषु दशसु [ वंशरक्षके पुंसि त्रिका०

**कुलधारक** पु० कुलं धारयति स्थिरीकरोति धृ–णिच्–ण्वुल् ।

**कुलधुर्य्य** त्रि० कुलेषु धुर्य्यः अग्रगः । वयस्थे

**कुलनक्षत्र** न० "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि चाकुलानि वै" तन्त्रसा० उक्तेषु साभिजिदष्टाविंशतिनक्षत्रमध्ये आर्द्राभिन्नसमसंख्यकेषु नक्षत्रेषु तदुक्तसतां तत्रैव "त्रिविधानि च

नवकं अकुले स्थायिनोभयम् । कुलाख्ये अयिनी नित्यम् साम्यञ्चैव कुलाकुले"

**कुलनायिका** स्त्री॰तन्त्रोक्ते कुलैः सेव्ये नायिकाभेदे । शक्तिसाधनतन्त्रे १पटले तद्भेदादिकमुक्तं यथा "नटी कापालिकी वेश्या रजकी नापिताङ्गना । ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका । मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः । विशेषवैदग्ध्ययुताः सर्व्वा एव कुलाङ्गनाः । रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी । पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवा" । अत्र विशेषः इति निरुत्तरतन्त्रे १४पटले । "नटी कापालिकी वेश्या रजकी नापिताङ्गना । योगिनी श्वपची शुण्डी भूमीन्द्रतनया तथा । गोपिनी मालाकारस्य कन्या कार्य्यविभेदतः । चतुर्व्वर्णोद्भवा रम्या कापाली सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य वेशाचरणमिच्छति । चतुर्व्वर्णोद्भवा रम्या सा वेश्या परिकीर्त्तिता । पूजाद्रव्यं समालोक्य रजोऽवस्थां प्रकाशयेत् । सर्व्ववर्णोद्भवा रम्या रजकी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य कुलजा वीरमाश्रयेत् । संत्यज्य पशुभर्त्तारं कर्म्म चाण्डालिनी स्मृता । विपरीतरता पत्यौ पात्रं या परिमुञ्चति । सर्व्ववर्णोद्भवा रम्या सा शौण्डी परिकीर्त्तिता । सर्व्वदा यन्त्रसंस्कारो यस्याः परिजायते । भूमीन्द्रजा तु रम्याऽसौ सर्व्ववर्णोद्भवा शिवे ! । आत्मानं गोपयेद्या च सर्व्वदा पशुसङ्कटे । सर्व्ववर्णोद्भवा रम्या गोपिनी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य या मालां परिकीर्त्तयेत् । सर्व्ववर्णोद्भवा रम्या मालिनी सा प्रकीर्त्तिता" । वेश्यायाविशेषस्तु तत्रैवोक्तः । "गुप्तवेश्या महावेश्या कुलवेश्या महोदया । राजवेश्या देववेश्या ब्रह्मवेश्या च सप्तधा । कुलजा गुप्तवेश्या स्यात् निर्लज्जा मदनातुरा । पशुभर्त्राश्रिता लोके गुप्तवेश्या प्रकीर्त्तिता । कुलजा कुलवेश्या स्यात् महावेश्या प्रकीर्त्तिता । भगलिङ्गकलाभिश्च चुम्बयेच्च पुनः पुनः । एवंविधा कुलीना चेत् ब्रह्मवेश्या प्रकीर्त्तिता । दिव्यशक्तिर्व्वीरशक्तिस्तासां सङ्घे प्रकीर्त्तिता । चतुर्व्वर्णोद्भवानाञ्च सङ्गिताः परिभाषिताः । वेश्यायद्भुतमते यस्मात् तस्माद्वेश्या प्रकीर्त्तिता । वर्णसङ्करतो जाता सर्व्ववेश्या प्रकीर्त्तिता" । कुलकामिन्यादयोऽप्यत्र

**कुलनाश** पुं॰ ६त॰ । १कुलध्वंसे तत्कारणं कुलशब्दे उक्तम् तदभावकारणञ्च "यावच्च वेदधर्म्माः स्युर्यावत् स्याच्छूद्रराद्दनम् । यावत् स्याच्छुचि तत्सर्व्वं तावच्च कुलनाशनम् । कुलं मूलमन्नं नाशयति न+नश+अच् इष् कुषेति समासः । २उष्ट्रे पुंस्त्री॰ हेमच॰ तस्योच्चतकन्धरतया उन्नतप्रदेशस्थकण्टकादेर्भक्षणात् कुम्भादेरभक्षणेन तथात्वम् स्त्रियां जातित्वात् ङीष् ।

**कुलनाशन** न॰ कुलं नाशयत्यनेन नश–णिच्–करणे ल्युट् । वंशध्वंससाधने । "मुषलं कुलनाशनम् । यथा च मुषलेन वृष्णिप्रभृतिकुलनाशनं तथा भा॰मौ॰१अ॰उक्तं यथा "विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनम् । सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् । ते तान् शाम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा । अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः । इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यति । इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः । प्रत्यब्रुवंस्तान् मुनयो यत्तच्छृणु नराधिप ! । वृष्ण्यन्धकविनाशाय मुषलं घोरमायसम् । वासुदेवस्य दायादः शाम्बोऽयं जनयिष्यति । येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः । उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्द्दनौ । समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः । जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति । इत्यब्रुवंस्ततो राजन् ! प्रलब्धास्तैर्दुरात्मभिः । मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् । तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः । अथाब्रवीत्तदा वृष्णीन् श्रुत्वैवं मधुसूदनः । अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् । एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा । कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः । श्वोभूतेऽथ ततः शाम्बो मुषलं तदसूत वै । येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः । वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् । प्रसूत शापजं घोरं तच्च राज्ञे न्यवेदयन् । विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् । तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप !"

चूर्णीकृतस्य तस्य मुषलस्य एरकाभावमुक्त्वा एरकाभूतेन मुषलेन ३अ॰ परस्परनाशोवर्णितः यथा "ते तु पानमदाविष्टाश्चोदिताः कालधर्म्मणा । युयुधानमथाभ्यघ्नन् छित्त्वा भोजैस्तदा । हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः । तदनन्तरमागच्छन्मोक्षयिष्यन् शिनेः सुतम् । स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह । व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ । बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः । हतं दृष्ट्वा तु शैनेयं पुत्रञ्च यदुनन्दनः । एरकाणां तदा मुष्टिं

कोपाज्जग्राह केशवः। तदभून्मुषलं घोरं वज्रकल्पमयोमयम्। जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन्। ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा। जघ्नुरन्योन्यमाक्रन्दे मुषलैः कालचोदिताः। यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप!। वज्रभूतेव सा राजन्नदृश्यत तदा विभो। तृणञ्च मुषलीभूतमपि तत्र व्यदृश्यत। ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव!। आविध्याविध्य ते राजन्! प्रक्षिपन्ति स्म यत्तृणम्। तद्वज्रभूतं मुषलं व्यदृश्यत तदा दृढम्। अवधीत् पितरं पुत्रः पिता पुत्रञ्च भारत!। मत्ताः परिपतन्ति स्म योधयन्तः परस्परम्। पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः। नासीत् पलायने बुद्धिर्वध्यमानस्य कस्यचित्। तत्रापश्यन्महाबाहुर्जानन् कालस्य पर्य्ययम्। मुषलं समवष्टभ्य तस्थौ स मधुसूदनः। शाम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च साम्प्रतम्। प्रद्युम्नञ्चानिरुद्धञ्च ततश्चुक्रोध माधवः। गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वितः। स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः। तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः। दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत्। भगवन्निहताः सर्वे त्वया भूयिष्ठशो नराः। रामस्य पदमन्विच्छ तत्र गच्छाम यत्र नः।" भावे ल्युट्। २वंशनाशने च।

कुलन्धर पु० कुलं वंशं धारयति धृ—णि० खच् मुम् च। वंशधरे "युधिष्ठिरोऽलब्धराज्योऽद्य पौत्रं कुलन्धरम्" भा० १.१२.१४.

कुलपति पु० "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः" पुराणोक्तलक्षणे १मुनिभेदे। "लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये। शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे" भा० आ० १ अ० १ श्लो०। "ततोऽब्रवीत् कुलपतिं पादौ संस्पृश्य भारत!" भा० आनु० ८ अ० २२०। २वंशश्रेष्ठे च कुलनायकादयोऽप्यत्र। अश्वपत्या० अपत्यादिषु प्राग्दीव्यतीयेषु अर्थेषु अण्। कौलपत तदपत्यादयर्थेषु।

कुलपत्र(क) पु० कुलं भूमिलग्नं पत्रमस्य। दमनकवृक्षे राजनि०। वा कप्। तत्रार्थे। भावप्र० कुलपुत्रक इति क्वचित्पाठे दृश्यो०।

कुलपर्वत "पु० माहेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः" विष्णुपु० उक्तेषु जम्बुद्वीपस्थवर्षसीमाकारकेषु माहेन्द्रादिषु सप्तसु वर्षाचलेषु पर्वतेषु। एतेषां यथा वर्षमर्यादाकारित्वं तथा कुलाचलशब्दे ८८८पृ० शि० सि० वाक्ये नोक्तम्। प्लक्षादिद्वीपेषु कुलाचलाश्च विष्णुपु० दर्शिता यथा तत्र २प्लक्षद्वीपे "मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम!। गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा। सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः" शाल्मले। ३"वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघ!। तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः। रत्नाभिव्यञ्जकास्तेषु तथा सप्तैव निम्नगाः। कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः। द्रोणोऽयत्र महौषध्यः स चतुर्थो महीधरः। कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा। ककुद्मान् पर्वतवरः"। ४कुशद्वीपे "विद्रुमाश्चैव हेमश्च द्युतिमान् पुष्पवांस्तथा। कुशेशयो हरिश्चैव सप्तमो मन्दराचलः। वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने"। ५क्रौञ्चद्वीपे "तत्रापि देवगन्धर्वसेविताः सुमनोहराः। वर्षाचला महाबुद्धे! तेषां नामानि मे शृणु। क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः। चतुर्थो रत्नशैलश्च स्वभाभिर्भासितस्वभः। देवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान्। ६शाकद्वीपे। "तत्रापि पर्वताः सप्त वर्षविच्छेदकारकाः। पूर्वस्तत्रोदयगिरिर्जलाधारस्तथापरः। तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विजः!। आम्बिकेयस्तथा रम्यः केशरी पर्वतोत्तमः"। तत्तद्द्वीपस्थेषु उक्तेष्वपि सप्तसु वर्षाचलेषु ७पुष्करद्वीपे तु एकएव मानसोत्तरशैलस्तादृक् यथोक्तं भा० ५,२०,२१, तद्द्वीपमध्ये एक एवार्वाचीनवर्षयोर्मर्य्यादाकारकोऽयुतयोजनोच्छ्रायायामः"। विष्णुपु० भागवतयोस्तेषां नामभेदः कल्पभेदादविरुद्धः। कुलगिरिकुलाचलवर्षाचलादयोऽप्यत्र। "माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः। सह्याः सविन्ध्य इह सप्त कुलाचलाख्याः" शि० शि० इह जम्बुद्वीपे।

कुलपालक त्रि० कुलं पालयति पालि—ण्वुल् (कमलानेबु) १कुलम्बे पु० शब्दच० २वंशपालके त्रि० स्त्रियां टाप् अतइत्त्वम्। सा च कुलस्त्रियाञ्च [स्त्रियां वा ङीप्।

कुलपालि स्त्री कुलं पालयति पालि—इन्। कुलवस्त्रां-

कुलपुत्र पु० कुलरक्षकः पुत्रः। वंशधरे पुत्रे ततः भावे कर्म्मणि च मनोज्ञा० वुञ्। कौलपुत्रक तद्भावे तत्कर्म्मणि च न०

कुलप्रसूत त्रि० कुले सत्कुले प्रसूतः। सत्कुलजाते

कुलवधू स्त्री कुले गेहे एव स्थिता वधूः। स्वगृहमात्रस्थितायां योषिति। "नूते नूतां नवकुलवधूः कापि साध्वी

समाप्ते" उक्तैः कुलयोषिदादयोऽप्यत्र "असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्" मनुः

**कुलभृत्या** स्त्री कुलैः वंशभवैः भृत्या भरणम् भृ—भावे क्यप् तुक्च। गर्भिण्या दोहदादिदानरूपायां परिचर्य्यायाम् त्रिका०। कुलस्य भृत्या। २वंशभरणे च।

**कुलम्पुन** न० कुलं पुनाति पू—बा० खश् मुम् च। भारतोक्ते तीर्थभेदे "कुलम्पुने नरः स्नात्वा पुनाति स्वकुलानि च भा०व० ८३ अ०

**कुलभर(ल)** पु० कौ भूमौ रन्ध्रे खनित्रकरणादिव्यापारे लीयते आसक्तः ली—बा० ड लस्य रः कलस्य हुतं वा रः। चौरे हारा०। [ देशादौ।

**कुलर** त्रि० कुल+अश्मादि० चतुरर्थ्यां र। कुलसन्निकृष्ट

**कुलवत्** त्रि० कुलं प्रशस्तकुलमस्त्यस्य वा० मतुप् मस्य वः। प्रशस्तकुलजे स्त्रियां ङीप्। सा च कुलस्त्रियां स्वकुलाचारस्थितायां स्त्रियाम्।

**कुलवर्णा** स्त्री० कुलैः वैद्यकुलैः वर्णो गुणोत्कीर्त्तनं यस्याः वर्ण—भावे घञ् २त०। रक्तत्रिवृति (लालतेओडि) राजनि०।

**कुलवार** पु० "रविचन्द्रौ गुरुः सौरिश्चत्वारश्चाकुला इमे। "भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः" तन्त्रसा० उक्तयोः कुजशुक्रवारयोः।

**कुलविद्या** स्त्री कुलक्रमागता विद्या। १वंशक्रमागतविद्यायाम्। कुलैः स्वकुलैः शिक्षणीया विद्या। "२आन्वीक्षिकीत्रयीप्रभृतिविद्यायाम् "तमादौ कुलविद्यानामर्थमर्थविदां वरः" रघुः [ वीरस्वामी कुलपुरोहितादयोऽप्यत्र

**कुलविप्र** पु० कुलक्रमागतः विप्रः। वंशक्रमागते पुरोहिते

**कुलव्रत** न० कुले चर्य्यं व्रतम्। कुलक्रमेण कर्त्तव्ये व्रते "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" रघुः।

**कुलश्रेष्ठिन्** त्रि० कुलेषु श्रेष्ठी। शिल्पकुलप्रधाने अमरः

**कुलसंख्या** स्त्री कुले संख्या कीर्त्तिः। वंशमध्ये गणनायाम् वंशश्रेष्ठतायाम् "मन्त्रतस्तु समृद्धानि कुलान्यल्पधनानि च। कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः" मनुः

**कुलसत्र** न० कुलैः कुलजैरनुष्ठेयं सत्रम्। पित्रादिक्रमेणानुष्ठेये सहस्रवर्षसाध्ये कार्ष्णाजिनिमतसिद्धे सत्रभेदे तच्च कात्या०श्रौ० १,६,२२, दर्शितं यथा "कुलसत्रमिति कार्ष्णाजिनिः" सू०। "कार्ष्णाजिनि र्मुनिरिमाङ एवं कथयति यत् कुलसत्रमेतत् सहस्रसंवत्सरं भवति कुलस्य पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादिरूपस्य वंशस्यैतत्भवति न त्वेकस्य कस्यचित् असम्भवात्। मनुष्याधिकारं चैतत् प्रारब्धं यावत्र समापनीयं न चैकः शक्नोति समापयितुमिति यथा शक्यते तथा समापनीयमिति गम्यमाने ये बहवस्ते शक्नुवन्ति तेन तत्कुलीनाः क्रमेण कैश्चिदारब्धं कैश्चिन्मध्येऽनुष्ठितं कैश्चित् समापयिष्यन्तीत्येवं कुलसत्रं कार्ष्णाजिनिर्मन्यते" कर्कः वर्षशब्दस्य दिनपरत्व कल्पनेन कात्यायनेनेदं दूषितम्।

**कुलसम्भव** कुलं सम्भवोऽस्य। बीज्ये कुलजाते अमरः।

**कुलसाधक** त्रि० कुलेन कुलाचारेण साधकः। तन्त्रोक्ते कुलाचारेण साधकभेदेषु तेच तन्त्रसारे दर्शिताः यथा "उपासकाञ्छृणु देवि ! शृणु चैकमनाः स्वयम्। मनुश्चन्द्रः कुबेरश्च मन्मथश्चदनन्तरम्। लोपामुद्रामुनिर्नन्दी शक्रः स्कन्दः शिवस्तथा। क्रोधभट्टो हरश्चैव षण्मुखश्च प्रकीर्त्तितः। दुर्वासा व्यासमूर्त्ती च वशिष्ठश्च पराशरः। और्व्वोवह्निर्यमश्चैव निर्ऋतीश्वरस्तथा। वायुर्विष्णुः स्वयम्भूश्च भैरवो दानवस्तथा। अनिरुद्धो भरद्वाजो दक्षिणामूर्त्तिरेव च। गणपाः कुलपाश्चैव लक्ष्मीर्गङ्गा सरस्वती। रामादयः प्रमत्तश्च उन्मत्तः कुलभैरवः। क्षेत्रपालो हनूमांश्च दत्तो गरुड एव च। काश्यपः कौशकुत्सौ च जमदग्निर्भृगुस्तथा। बृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः। अर्जुनो भीमसेनश्च द्रोणाचार्य्यो वृषाकपिः। दुर्य्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा। सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा। प्रद्युम्नो महाबाहो वाणः कालश्च मन्दरः। कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा। नारदश्च महावीराः ख्याता वीरसाधकाः। महाविद्याप्रसादेन सर्वकर्म्मसमन्विताः। एतेषां वत्स ! नामानि विद्या विद्योपसेविनाम्। प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतात्मवान्। पूजायां वा शुचिर्भूत्वा प्रसीदामि कुलान्वये। अशुचिर्वानिरालम्बप्रावल्यञ्च कुलान्तिके। नित्यपूजाफलं तस्य ददामि वरमीप्सितम्।"

कुलवीरकुलोपासकादयोऽप्यत्र

**कुलसौरभ** न० कुलं श्रेष्ठं सौरभमस्य। मरुवकवृक्षे शब्दचा०

**कुलस्त्री** स्त्री कुले स्वगृहे स्थिता स्त्री। कुलपालिकायाम् अमरः

**कुलहुण्डक** पु० कुलाय संघाय हुण्डते हुडि—संघे ण्वुल्। आवर्त्ते हारा० कुलहुण्डकोऽप्यत्र त्रि० पृषो०।

**कुलाकुल** त्रि० तन्त्रोक्तेषु तत्संज्ञकतिथिवारनक्षत्रेषु। कुलाचारशब्दे विवृतिः

**कुलाकुलचक्र** न० कुलञ्च अकुलञ्च कुलाकुलम् तदर्थं विचारार्थं चक्रम्। तन्त्रोक्ते ग्राह्यमन्त्रस्य शुभाशुभताज्ञानार्थं चक्रभेदे तद्विवृतिः तन्त्रसारे
"कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह"। इत्युक्त्वा निबन्धे "वाय्वग्निभूजलाकाशपञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः (यादयः)। कादयः पञ्चशः पलक्षसहान्ताः समीरिताः"। अ आ एकघटतपयषा मारुताः। इ ई ऐ ख ङ ठ थ फ रक्षा आग्नेयाः। उ ऊ ओ ग ञ ड द बललाः पार्थिवाः। ऋ ॠ औ घ झ ढ ध भ वक्षा वारुणाः। ऌ ॡ अं ङ ञ ण नमशहा नाभसाः। "साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्। यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत्। भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्। मारुतं पार्थिवानाञ्च शत्रुराग्नेयमस्सताम्"। चकारादाग्नेयं पार्थिवानां शत्रुः। तथाच रुद्रयामले "पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितः। ऐन्द्रवारुणयोः शत्रुर्मारुतं स प्रकीर्त्तितः। नाभसं सर्वमित्रं स्यात् विरुद्धं नैव शीलयेत्। मित्रं सिद्धिः समाख्याता उदासीने न किञ्चन। स्वस्य व्याधिरमित्रे च स्वकुले सिद्धिरुत्तमा"।

**कुलाङ्गार** न० कुलस्याङ्गारमिव उपमितस०। कुलाधमे वंशदूषके "धक्ष्यति स कुलाङ्गारं चोदितो मे ततद्रुहम्" भाग० १। १४। २७।

**कुलाचार** पु० ६त०। कुलोचिते धर्म्मे "जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्तो धर्म्मकामार्थमोक्षदः" इत्युक्तकर्मणि तत्र ब्रह्मदर्शिसाधके २ ज्ञानभेदे तन्त्रोक्ते ३ आचारभेदे च तन्त्रसारे तदाचारप्रकारो दर्शितो यथा
"कालीतन्त्रे "वामाचारं प्रवक्ष्यामि यत्कृतेऽमृतमश्नुते। सर्व्वभूतहिते युक्तः सम्यगाचारपालकः। अनित्यकर्म्मसंत्यागी नित्यानुष्ठानतत्परः। मन्त्राराधनभावेन शिवभावेन तत्परः। परस्मान्देवतायान्तु सर्व्वकर्म्मनिवेदकः। अन्यमन्त्रार्च्चनरता अन्यमन्त्रप्रपूजनम्। कुलस्त्रीवीरनिन्दाञ्च तद्द्रव्यस्यापहारणम्। स्त्रीषु रोषं प्रहारञ्च वर्ज्जयेन्मतिमान् सदा। स्त्रीमयञ्च जगत् सर्व्वं स्वयंभूतास् तथा भवेत्। मैथुनं तथा भोज्यं भक्ष्यं पेयं स्वच्छं शुभम्। सर्व्वञ्च युवतीरूपं भावयेन्मतिमान् सदा। कुलजां युवतीं वीक्ष्य नमस्कुर्य्यात् समाहितः। यदि भाग्यवशाद्देवि! कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्"। तासां भगादिदेवीनाम्। तास्तु "भगिनीं भगजिह्वाञ्च भगाख्यां भगमालिनीम्। भगदत्तां भगाङ्गाञ्च भगकर्णीं भगलयाम्। भगनाशां भगस्तनीं भगस्थां भगसर्पिणीम्। संपूज्य ताभ्योगन्धाद्यैर्गन्धैर्दन्तैव च। नमस्कृत्य पुमानेवं क्षमस्वेति ततः सुधीः। बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा। कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत्। तासां प्रहारं निन्दाञ्च कौटिल्यमप्रियन्तथा। सर्व्वथा न च कुर्व्वीत चान्यथा सिद्धिरोधकृत्। स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम्। स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रिया अपि। विपरीतरता सा तु भविता हृदयोपरि। तत्कारार्चितं पुष्पं तत्कारार्चितं जलम्। तत्कारार्चितं द्रव्यं देवताभ्यो निवेदयेत्। स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं महत्। जपस्थाने महाशङ्खं निवेश्योर्द्ध्वं जपञ्चरेत्। स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात् कुलजां शुभाम्। भक्ष्यं ताम्बूलमन्यच्च भक्षद्रव्यं यथारुचि। भक्त्वाग्न्यशेषभक्ष्याणि भुक्त्वा शेषं जपञ्चरेत्"। कालीतन्त्रे "दिक्कालनियमो नात्र स्थित्यादिनियमो न च। जपे न कालनियमो नार्च्चादिष्वपि बलिष्वपि। स्वेच्छानियम उक्तश्च महामन्त्रस्य साधने। वस्त्रासनस्थानदेहागारस्पृश्यादिवारिणः। शुद्धिं नाचरेत्तत्र निर्विकल्पं मनश्चरेत्"। कुलार्णवे "कुलाचारस्य हन्त्वा भक्त्या पापविशुद्धये। साधयेद्यस्तु कौलं तदभावे जलं पिबेत्। कुलाचारेण यद्दत्तं तत्त्वा पात्रेण भक्षितः। नमस्कृत्य च यद्भक्तोऽन्यथा नरकं व्रजेत्"। अन्यत्रापि "न वृथा गमयेत् कालं द्यूतक्रीडादिना सुधीः। गमयेद्देवतापूजाजपयागस्तवादिना। वीराणां जपयज्ञस्तु सर्व्वकाले प्रशस्यते। सर्व्वदेशे सर्व्वपीठे कर्त्तव्यो नात्र संशयः"। शिवागमे "शक्तिः शिवः शिवः शक्तिः शक्तिर्ब्रह्मा जनार्द्दनः। शक्तिरिन्द्रो रविः शक्तिः शक्तिश्चन्द्रो ग्रहा ध्रुवम्। शक्तिरूपं जगत् सर्व्वं यो न जानाति नारकी"। वीरतन्त्रे "स्नानादि मानसं शौचं मानसं प्रवरो जपः। मानसं पूजनं दिव्यं मानसं तर्पणादिकम्। सर्व्व एव शुभः कालो नाशुभो विद्यते क्वचित्। न विशेषो दिवा रात्रौ न सन्ध्यायां महानिशि। सर्व्वदा पूज-

वेदे वीरस्नातः कृतभोजनः । महानिशाशुचौ देशे बलिं मन्त्रेण दापयेत्" । यत्तु "रात्रावेव महापूजा कर्त्तव्या वीरवन्दिते ! । न दिवे सर्व्वथा कार्य्या शासनात्मम शङ्करे" । तत् पुनः कुलदेवताविषये । महानिशा तु तत्रैव "अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव च । सा महारात्रिरुद्दिष्टा तद्दत्तमक्षयन्तु वै" शास्त्रार्थे, "पृथ्वीमिन्दुमतीं वीक्ष्य मङ्गलं यदि निर्व्रजः । तदा वादी स्वसिद्धान्तकृतः चिन्तितं विशेत्" । "पश्येत्ते कुलमारोप्य निर्भयोपतमानसः । कविता लभते सोऽपि अमृतत्वञ्च गच्छति" । अत्रापि मङ्गलमिति सम्बन्धः । पृथ्वी स्त्रियं, निर्व्रज इति षोड़शादिनं यावत् । पश्येत् स्तनम् । अन्यच्च नीलतन्त्रे "पद्मं दृष्ट्वा तथा बिम्बं खञ्जनं शिखरन्तथा । चामरं रविबिम्बञ्च तिलपुष्पं सरोरुहम् । त्रिशूलं वीक्ष्य जप्त्वा च सततः शुद्धभावतः । सुमुखं प्रसादं सुखं सुलोचनं सुहासकम् । सुवेशं सुगतिं गन्धं सुगन्धं सुखमेव च । लभते च यथासंख्यं शृणु पार्व्वति ! सादरम्" । पद्मं मुखं, बिम्बमधरं, खञ्जनञ्चक्षुः, शिखरं मस्तकं, चामरं केशं, रविबिम्बं सिन्दूरं, तिलपुष्पं नासिकां, सरोरुहं नाभिं, त्रिशूलं त्रिवेणीम्, सादृश्यत्वात् । भावचूड़ामणौ "एकाकी निर्ज्जने देशे श्मशाने विजने वने । शून्यागारे नदीतीरे निःशङ्कोविहरेत् सदा । महाचीनद्रुमे देवीं ध्यात्वा तत्र प्रपूजयेत् । तद्द्रुमोद्भवपुष्पेण पूजयेद्भक्तिभावतः । स भवेत् कुलदेवस्य कुलद्रुमगतः शुचिः । मद्यतरोर्म्महापीठे देवीं ध्यात्वा यथाविधि । तत्तद्भारसवारेण तर्प्पयेत्का दशाननम् । महाचीनद्रुमतलावेष्टितः साधकोत्तमः । रात्रौ यदि जपेन्मन्त्रं सर्व्वकल्पद्रुमो भवेत् । तिथिक्रमेण संख्याभिस्ताभिर्व्वेष्टितो यदि । तदा मासेन सिद्धिः स्यात् मङ्गलजपमानतः । अष्टम्याञ्च चतुर्द्दश्यां द्विगुणं यदि दृश्यते । तत्रैव महती सिद्धिर्द्देवतानां सुदुर्लभा" । कुलचूड़ामणौ "शृणु पुत्र ! रहस्यं मे समयाचारसम्भवम् । येन हीना न सिध्यन्ति जन्मकोटिसहस्रतः । मानवः कुलशास्त्राणां कुलधर्म्मानुचारिणाम् । उदारचित्तः सर्व्वत्र वैष्णवाचारतत्परः । परनिन्दासहिष्णुः स्यादुपकाररतः सदा । पर्व्वते विपिने वापि निर्ज्जने शून्यमण्डपे । चतुष्पथे कला(स्त्री)मध्ये यदि दैवाद्गतिर्भवेत् । तत्र स्थित्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम् । शवं वीक्ष्य महाकालीं नमस्कुर्य्यादलक्षितम् । क्षेमङ्करीं तथा वीक्ष्य जम्बुकीं यमदूतिकाम् । कुक्कुरञ्चैव भूकाकीं कृष्णमार्ज्जारमेव च" । दृष्ट्वा नमस्कुर्य्यादिति शेषः । मन्त्रस्तु "कृशोदरि ! महाचण्डे ! मुक्तकेशि ! बलिप्रिये ! । कुलाचारप्रसन्नास्ये ! नमस्ते शङ्करप्रिये ! । श्मशानञ्च शवं दृष्ट्वा प्रदक्षिणमनुव्रजन् । प्रणम्यानेन मनुना मन्त्री सुखमवाप्नुयात् । घोरदंष्ट्रे ! करालास्ये ! किटिशब्दनिनादिनि ! । घोरघोररवास्फाले ! नमस्ते चितिवासिनि ! । रक्तवस्त्रं तथा पुष्पं विलोक्य त्रिपुरां तथा । प्रणमेद्दण्डवद्भूमौ इमं मन्त्रं पठेन्नरः । बन्धूककुसुमसङ्काशे त्रिपुरे ! भयनाशिनि ! । भाग्योदयसमुत्पन्ने ! नमस्ते वरवर्णिनि ! । कृष्णवर्णं तथा पुष्पं राजानं राजपूरुषम् । कृष्णवर्णपशूंश्चापि फलकान् वीरपूरुषान् । महिषं कुलदेवञ्च दृष्ट्वा महिषमर्द्दिनीम् । प्रणम्य जयदुर्गां वा स च विघ्नैर्न लिप्यते । जय ! देवि ! जगद्धात्रि ! त्रिपुराद्ये ! त्रिदैवते ! भक्तेभ्योवरदे ! देवि ! महिषघ्नि ! नमोऽस्तु ते । मद्यभाण्डं समालोक्य मत्स्यं मांसं वराङ्गनाम् । दृष्ट्वा च भैरवीं देवीं प्रणम्य विन्यसेन्मनुम् । घोरविघ्नविनाशाय कुलाचारसमुद्भवे ! । नमामि ! वरदे ! देवि ! मुण्डमालाविभूषिते ! । रक्तधारासमाकीर्णवदने ! त्वां नमाम्यहम् । सर्व्वविघ्नहरे ! देवि ! नमस्ते हरवल्लभे ! । एतेषां दर्शने चैव यदि नैवं प्रकुर्व्वते । भक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते" तथा कुलचूड़ामणौ "कुलवारे कुलाष्टम्यां चतुर्द्दश्यां विशेषतः । योगिनीपूजनं तत्र प्रधानं कुलपूजनम् । यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छितप्रदः । तथा कुलतिथौ दुर्गा पूजिता वरदायिनी । कुलवारादिनियमोयामले "रविचन्द्रौ गुरुः सौरिश्चत्वारश्चाकुलाः स्मृताः । भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः । द्वितीया द्वादशी षष्ठी कुलाकुलमुदाहृतम् । विषमा चाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः" विषमाः प्रतिपत् तृतीया पञ्चमी सप्तमी नवमी एकादशी त्रयोदशी पञ्चदशी चाकुलाख्या तद्भिन्नाः सर्व्वाः शेषाश्च तिथयः कुलाः । "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि च कुलानि च । तत्फलमाह तत्रैव "निजवारे च नक्षत्रे चाकुले स्थायिनो जयम् । कुलाख्ये जयिनो नित्यं साम्यञ्चैव कुलाकुले" । एवं कुलवारादिकं ज्ञात्वा साधकः कर्म्म कुर्य्यात्" । विस्तरस्तु आगमे द्रष्टव्यः ।

कुलाचार्य्यः पुं० कुलक्रमागतः आचार्य्यः । (कुलगुरौ कुलस्य

वंशस्य व्याख्यायामाचार्य्यः । आधुनिककुलस्थापके विप्रभेदे । (घटक) [भेदे शब्दमा० स्त्रियां जातित्वात् ङीष्
**कुलाट** पुंस्त्री कुलेन संघेनाटति अट--अच् २त० । क्षुद्रमत्स्य
**कुलाय** पु० कुलं पक्षिसंघातोऽयतेऽत्र अय--घञ् । १पक्षिनिलये नीडे, अमरः "खगकुलाय कुलायनिलायिताम्" माघः वेदे तस्य क्लीवत्वमपि कुलायिनीशब्दे ता--ब्रा० वाक्ये उदा० दृश्यम् । २स्थानमात्रे मेदि० को वायोभतिरस्यात् । २ देहे न० ।
**कुलायस्थ** पुंस्त्री कुलाये नीडे तिष्ठति स्था--क ७त० । नीडस्थे पक्षिमात्रे शब्दच० स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप् । कुलायवासीत्यादयोऽप्यत्र स्त्रियां ङीप्
**कुलायिका** स्त्री कुलायः पक्षिवासस्थानं विद्यतेऽस्याम् ठन् । पक्षिशालायां ( चिड़ियाखाना )। त्रिका० ।
**कुलायिनी** स्त्री व्युत्पत्तिः ता०भाष्योक्ता । त्रिवृत्स्तोमस्य विष्टुतिभेदे तत्प्रकारादिकं ताण्ड्य० ब्रा०२अ० दर्शितं यथा । "अथ कुलायिनीं विष्टुतिन्दर्शयति" माधवभाष्यम् "तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा, तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः" ब्रा० "परिवर्त्तिन्याख्य प्रथमः पर्य्यायः पराचीभिः । द्वितीये पर्य्याये तृचस्य या मध्यमा ऋक् सा प्रथमा कार्य्या । योत्तमा सा मध्यमा कार्य्या । या प्रथमा सोत्तमा कार्य्या । तृतीयः पर्य्यायः निगदसिद्धः । कुलायिनी कुलायो नीडं पक्षिणां निवासस्थानं तद्वत् व्यस्ततृणादिनिर्म्मितम् एवं व्यत्यासयुक्ता ऋचः कुलायवत्संहतानी कुलायिनी एतत्संज्ञा त्रिवृत्स्तोमस्य विष्टुतिरियम्" "अस्यां विष्टुतौ कोऽधिकारीत्यत आह" भा० "प्रजाकामो वा पशुकामो वा कुर्वीत प्रजा वै कुलायम् पशवः कुलायङ्कुलायमेव भवति" ब्रा० "प्रजानाम्पशूनाञ्च कुलायवदवस्थितिहेतुत्वात् कुलायत्वेन स्तुतिः । कुलायिन्या स्तुवानोऽपि प्रजानां पशूनाञ्च कुलायमेव आश्रयभूतो भवत्येव" । "पुनरप्यधिकारिविशेषं दर्शयति" भा० "एतामेवानुजावराय कुर्य्यादेव तासामेषाम् परियतीनां प्रजानामपश्रयत्येति" ब्रा०

"यत् पश्चाज्जायत इत्यनुजः कनीयान् अत एव निकृष्टः तस्मादप्यवरो निकृष्टः अनुजावरस्तादृशाय यजमानायेति । अयं परियतीनां लोके याः प्रजाः अयं वयोगुणादिभिः श्रेष्ठपदं परियन्ति परितो गच्छन्ति एतासामेव श्रैष्ठ्यं परिगच्छन्तीनां प्रजानाम्मध्ये स यजमानः अपं श्रेष्ठं पदं पर्य्येति परिगच्छति सर्व्वोत्कृष्टो भवतीत्यर्थः" "सत्रेष्वहीनेषु च बहूनां यजमानानां फलसाम्यात् कुलायिनीं विधत्ते" भा० "एतामेव बहुभ्यो यजमानेभ्यः कुर्य्यात् यत्सर्वा अपिया भवन्ति सर्वा मध्या सर्वा उत्तमाः । सर्व्वानेवैनान् समावद्भाजः करोति नान्योन्यमपव्रते सर्वे समावदिन्द्रिया भवन्ति" ब्रा० "एतामेव कुलायिनीन्त्रिवृतो विष्टुतिं बहुभ्यो यजमानेभ्य उद्गाता कुर्य्यात् यत् यस्मादेतोः तृचगताः सर्वा ऋचः अपिया सख्याः प्रथमा भवन्ति सर्वास्तु मध्ये वर्त्तमाना भवन्ति सर्वाश्चोत्तमा भवन्ति तद्यथा प्रथमे पर्य्याये प्रथमैव प्रथमा भवति । मध्यमे तु मध्यमा प्रथमा भवति । उत्तरे उत्तमा प्रथमा भवति । एवं सर्वासां प्राथम्यं जातम् । तथा प्रथमपर्य्याये मध्यमैव मध्यमा द्वितीये पर्य्याये उत्तमैव मध्यमा तृतीये पर्य्याये प्रथमैव मध्यमा । एवं सति तिस्रोऽपि मध्यमाः सम्पन्नाः । तथा प्रथमे पर्य्याये उत्तमोत्तमा भवति । द्वितीये पर्य्याये प्रथमैवोत्तमा भवति । तृतीये पर्य्याये मध्यमैवोत्तमा भवति । एवं सर्वा अप्युत्तमाः सम्पन्नाः । यस्मादेताः सर्वा ऋचः समानरूपाः ततो हेतोरनया विष्टुत्या सर्व्वानेवैनान् यजमानानुद्गाता समावद्भाजः समावच्छब्दः समपर्य्यायः समं फलं भजन्त इति समावद्भाजः साम्येन फलभाजः करोति । अतएव नान्योन्यमपव्रते परस्परस्य हिंसन्ति । तथा सर्वे यजमानाः समावदिन्द्रियाः समावद्वीर्य्याः समानसामर्थ्या भवन्ति" । "फलान्तरमाह" भा० "यद्वैकः पर्ज्जन्यो भवतीमे हि लोकाः पङ्क्ताः हिङ्कारेण व्यतिषजति" ब्रा० "लोकस्थानीयानां तिसृणामृचामादौ प्रयुक्तेनैकेनैव हिङ्कारेण व्यतिषञ्जनात् संयोजनात् त्रयाणां लोकानां परस्परमुपकार्य्योपकारकभावो न बाधित इति पर्ज्जन्यो वर्षणशीलो भवतीत्यर्थः" ।

"अस्यामपि विष्टुतौ बहुदोषाः सम्भवन्तीत्याह" भा०
"पापवसीयसन्तु भवति" ब्रा०
"तुशब्दः फलवैलक्षण्यद्योतनार्थः। पापं प्रशस्तं वसीयः पुण्यं तदुभयमेकाश्रयं भवति। इतरत् उद्यतीवाक्यगतवत् व्याख्येयम्। नञः भावोत्र विशेषः। इमं विष्टुतयस्तिस्रो विहिताः, तिसृष्वपि तासु फलविशेषस्याचिह्नादर्शनात् समानफलत्वात्सर्वा नित्याः, यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते ततोऽन्यः नित्यः। प्रयोगे चाद्याभिरेताभिरेव स्तुतिभिः सोमसम्पादनं कार्य्यं, तदाह सूत्रकृत्। "प्रथमाभिर्विष्टुतिभिः सोमविधानमनादेशे ताः पक्षाः सर्वाभिप्रायाश्चेति"। पुनरपि यथाशिवं वा विदध्यादित्यादिना कल्पकेषेव बहवः पक्षाः छन्दसतोपन्यस्ताः ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात् कथमासां नित्यत्वम्। नैष दोषः, उद्यत्यामापत् यो दोष उक्तः स्वर्घुकः पर्ज्जन्यो भवतीति, स कुलायिनीपरिपक्षे परिह्रियते। यत्र हि स्वर्घुकः पर्ज्जन्यो भवतीत्याम्नातम्। यत्तु कुलायिन्यां दोषदर्शनं पापवसीयसन्तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण विहृतं तत्र हि पापवसीयसो विष्टुतिरिति या श्रूयते सत्येव तु पापवसीयसन्तु भवति"।

"अधरोत्तरमपावगतो दृश्यतेथगच्छत्यपरद्धः पापीयान् श्रेयांसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रज्ञा आददते न यथा क्षेत्रं कल्पन्ते" ब्रा०

"प्रथमाया मध्यमायायान्ते प्रयोग इति यदस्ति तदेतदधरोत्तरमनुष्ठानं यस्मिन् देशे क्रियते तत्र वा ईश्वरा पर्ज्जन्यो वर्षितोः इति परिवर्त्तिन्यां यदवगुत्रकथ दोषदर्शनं तदुद्यत्यां परिहृतं भवति। एषा वै प्रतिष्ठिता विष्टुतिरिति, तत्र हि वाक्यशेषः प्रजापशुसमृद्ध्या हि प्रतिष्ठितो भवतीति"।

एतत्सामयोनिः सूक्तविशेषः। तत्पाठप्रकारः साम संहिताभाष्ये उक्तो यथा "सामगानाछन्दरापन्दे तृचात्मकानि सूक्तान्याम्नातानि यथा "उपास्मै गायता नर" इत्याद्यं सूक्तं "दविद्युतत्या रुचा" इति द्वितीयं "पवमानस्य ते कव" इति तृतीयम्" तत्र उद्यतीशब्दे ११०२पृ० दर्शितम्। एवमुद्यती विष्टुतिरुक्ता "एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती भवतः "इति इत्युक्ता परिवर्त्तिन्या विष्टुतेः प्रकारउक्ता कुलायिन्याः प्रकारकथनाय प्रागुक्तं ता० ब्रा० वाक्यमुदाहृत्य व्याख्यातम्। अत्र प्रथमसूक्ते "पराचीभिः अनुक्रमेणाम्नाताभिः। तेन पाठक्रमएव। द्वितीये पर्य्याये मध्यमोत्तमप्रथमाः। तृतीयेत्तुत्तमाद्यतामध्यमा इत्येवं व्यत्यासेन" मन्त्राः (पूर्वोक्ताः) बोध्याः

२कुलाययुक्ते त्रि० "अस्तीर्वन्तं प्रथमः सीद योनिम्। कुलायिनं घृतवन्तम् सवित्रे" ऋ० ६।१५।१६। "कुलायिनं गुग्गुल्वादिसंभरणोपेतम् तथा च श्रूयते "कुलायमिव ह्येतद्यज्ञे क्रियते यत् पैतदारवाः परिधयो गुग्गुल्बूर्णास्तुकासुगन्धितेजनानि" ऐत०ब्रा०" भा०।

**कुलाल** पुंस्त्री कुल–कालन्, कुलमलति अल–अण्,कुलमाचाति आ+ला–क–वा। १कुम्भकारे, (कुमार) अमरः "कुलालजनकोऽपरः भाग० "नमः कुलालेभ्यः कर्म्मारेभ्यश्च" यजु० १६।२७। २कुक्कुभपक्षिणि मेदि० जातित्वात् स्त्रियां ङीप्। ततः तेन कृतमित्यर्थे संज्ञायां कुलाला० वुञ्। कौलालक तत्कृते शरावादौ त्रि०

**कुलालादि** पु० संज्ञायां तेन कृतमित्यर्थे वुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे स च गणः "कुलाल वरुड चण्डाल निषाद कर्म्मार सेना सिरिन्ध्र सैरन्ध्र देवराज परिषत् वधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक" कौलालकं वारुडकम् इत्यादि

**कुलाली** स्त्री कुलमलति अल–अण् ङीप्। १नीलोपलभेदे, कपित्थाञ्जनप्रस्तरभेदे, अमरः २वारमुख्यकुलत्थिकायाम्, राजनि० ३कुम्भकारभार्य्यायाञ्च। स्वार्थे क कुलः। कुलालिकाप्यत्र हेमच०

**कुलाह** पुंस्त्री० कुलमाहन्ति आ+हन–ड। ईषत्पीतवर्णे कृष्णजानौ अश्वे हेमच० ततः संज्ञायां कन्। २तककाशे, (राङ्गाकुडेमाड़ा) इति ख्याते २शाकभेदे शब्दमाला। "आमवातरक्तवातरोगनाशी कुलाहकः" राजवल्लभः [ वृक्षभेदे रत्नमाला

**कुलाहल** पु० कुलमाहलति स्पर्द्धते अच्। (कुकुरसोङ्गा)

**कुलि** पु० कुल–इन् किच्च। १हस्ते त्रिका०। २कण्टकारिकायां स्त्री शब्दरत्ना० कृदिकारान्तत्वात् वा ङीप्।

**कुलिक** त्रि०कुलमर्हति त्वेन प्राधान्येन वास्त्यस्य ठन्। १कुलश्रेष्ठे मेदि०२शिल्पिकुल,प्रधाने अमरः। (कुलेखाड़ा)इति प्रसिद्धे ३शाकभेदे पु० मेदि० महानागान्तर्गते ४नागभेदे पु० "शेषः पद्मो महापाद्मः कुलिकः शङ्खपालकः। वासुकिस्तक्षकश्चैव नागयोनिषु मङ्गलः। ऐरावतो धृतराष्ट्रः

कर्कोटकधनञ्जयौ” त्रिपित० पु० “ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति” भाग० ५।२४।२।
“कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः” हेमा० तद्रूपमुक्तम्। तन्त्रे तु तस्य पाटलतोक्ता। उपतारागब्दे १०५६पृ० तद्वाक्यमुक्तम्:
“भुजेषु नागः कुलिकोऽङ्कदोषतः”। तस्य उपताराकुद्भूपयत्वमुक्तम्। रव्यादिवारेषु दिवारात्र्योः ५दुष्टमुहूर्त्तभेदे यथाह मुहू० चि०
“शक्रार्कदिग्वसुरसाब्धुदस्त्रिया: कुलिका रवेः। रात्रौ निरेकास्तिथ्यंशाः शनौ चान्त्योऽपि निन्दितः”। रविमारभ्य सर्ववारेषु क्रमादुक्तसंख्यास्तिथ्यंशा मुहूर्त्ता: कुलिकाः स्युः। यथा रवौ दिने १४,मुहूर्त्तः चन्द्रे १२, मङ्गले १०, बुधे ८, गुरौ ६, शुक्रे ४, शनौ २कुलिकः रात्रावेते निरेकाः कार्याः। यथा रवौ १३, चन्द्रे ११, भौमे ९,बुधे ७,गुरौ ५,शुक्रे ३,शनौ १,शनौ तु अन्त्यः पञ्चदशमुहूर्त्तोऽपि कुलिकः। एते निन्दिताः। अस्यापवादमाह गुरुः “वारेशे सबले चापि बलाढ्ये लग्नगे शुभे। कुलिकोद्भवदोषस्तु विनश्यति न संशयः। शुभे केन्द्रगते चन्द्रे शुभांशे वा शुभेक्षिते। लग्नगे सबले वापि कुलिकस्तु विलीयते” अन्यत्र दोषमाह वशिष्ठः “निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके। कुलिके सर्वनाशः स्यात् रात्रावेते न दोषदाः” रात्रावेते न दोषदा इत्यस्यापवादो रत्नकोषे “तमस्विनीगम्यमपीह वारदोषास्तथा पश्चिमनाड्यपन्तः। अल्पं समासाद्य विलासिनीनां कटाक्षपाताद्व निष्फलाः स्युः”न वारदोषाः प्रभवन्ति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम्। दिवा शशाङ्कार्कजभूसुतानां सर्वत्र निन्द्यो बुध० वारदोषः”। शुभकर्मणामावश्यकत्वे देशभेदेनापवादमाह गर्गः। “विन्ध्यस्योत्तरकूले तु यावदातुहिनाचलम्। यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते। मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत्। काश्मीरे कुलिकं दुष्टमर्द्धयामस्तु सर्वतः”। कुलिकस्य विशेषप्रयोजनन्तु “जपित्वा मितशुक्लानां कुहकं कुलिकोदये” शारदायाम् नवदुर्गाभिचारकर्माङ्गतयोक्तम्। तट्टीकायां राघवभट्टेन च “सप्तार्कदिग्वसुबुबेदपक्षैकोक्तमुहूर्त्तैः कुलिका भवन्ति। दिवा निरेकैस्तु यामिनीषु ते गर्हिताः कर्मसु शोभनेषु” इत्युक्तम् निरेकैः पूर्वोक्तसप्तादिसङ्ख्यैरेकोनैरित्यर्थः” “स्वगाधिपास्तकुलिकमहरार्द्धं पातदिक्शूलयुक्तघटिकालयमेव पर्ज्ज्यम्” मुहू० चि० तत्र सर्वकर्माणि वर्ज्जनीयतामाह

**कुलिङ्ग** पु० कौ पृथिव्यां लिङ्गति चरणार्थं गच्छति अच्। १चटके, शब्दचि० २धूम्याटे, (फिङ्गा) अमरः भूमिपन्नाशबलतया धान्यादिभक्षकारिणि ३खगमात्रे च। ४कुत्सितलिङ्गे न०। ब०। ५तद्वति त्रि०। ६कर्कटशृङ्ग्याम् स्त्री गौरा० ङीष्। स्वार्थे क। कुलिङ्गक चटके हेमच०

**कुलिङ्गाक्षी** स्त्री० कुलिङ्ग कुत्सितलिङ्गमक्षी यफलमस्याः षच् समा० ङीष्। (पेटारी) पटिकाख्ये रत्नमाला

**कुलिज** त्रि० कुलौ हस्ते कण्टकारिकायां वा जायते जन–ड ७त०। १हस्तजाते नखादौ “कुलिजकड़े दधिमतोऽग्न्यम्भारमाहरति” स्मृतम् २कण्टकारीजाते च ततः “कुलजात् लुक्खौ च” पा० तदन्तात् द्विगोः सम्भवति अवहरति पचति वेत्यर्थेषु ठञ् तस्य लुक् वा ख्ञ च वा। द्विकुलज द्वैकुलजिक द्विकुलजिक द्विकुलजीन। तत्र सम्भवति, (कुलिजं स्वस्मिन् समावेशयति) तदपहारके तत्पाचके च त्रि०। ठञि स्त्रियां ङीप् अन्यतः टाप्।

**कुलिन्** पु० कुल+अस्त्यर्थे मत्वा० पक्षे इनि। १पर्व्वते शब्दचि०। २तद्वति त्रि० स्त्रियां ङीप्।

**कुलिन्द** पु० भूम्नि १देशभेदे “कुलिन्दाः कालदाश्चैव कुण्डकाः करटाकथा” भा०भी० ९अ० जनपदकथने। २तद्राजेषु च “शूरसेनाः भद्रकारा बोधाः शाल्वाः पटच्चराः। सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह” भा०स० ३०अ०। “पूर्वं कुलिन्दविषये वशेचक्रे महीपतीन्। धनञ्जयो महाबाहुर्नातितीव्रेण कर्म्मणा”। “आनर्त्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः” भा०स० १२।२५अ० अयञ्च देशः दृक्कं० कूर्मविभागे १४अ० ऐशान्यामुक्तः “वनराजकिरातचीनकौलिन्दाः” कुलिन्द+स्वार्थे अण् कौलिन्दः। [मिथादिषु २चतुर्थे राशौ च

**कुलिर** पु० कुल–बा० इरन्+किञ्च। १कर्कटे शब्दरत्ना०।

**कुलिश** पु०न० कुलौ हस्ते शेते शी–ड, कुलिनः पर्वतान् श्यति शो–ड वा ईषत् लिशति कु+लिश–क–कौ लिशति लिश–क वा यथायथं व्युत्पत्तिः। १इन्द्रायुधे वज्रे अमरनिघण्टे ५७४पृ० तदुत्पत्त्यादिकमुक्तं तत्स्वरूपादिकं हेमा० परि० ख० कवचधारणप्रश्ने कौशनसधनुर्वेदोक्तमुक्तं तत्र तत्रैव द्रष्टव्यम् विस्तरभयान्नोक्तम् “अशयः शक्तिकुलिशपाशादिकश्यपाः शराः” भा०व०२०अ०।

श्रोतुमिच्छामि कारणम्। अतीव ह्यत्र मुह्यामि चिन्तयानो भृगूद्वह!। न चैवास्याधिगच्छामि सर्वस्यास्य विनिश्चयम्। एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन! च्यवन उवाच। शृणु सर्वमशेषेण यदिदं येन हेतुना। न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव!। पितामहस्य वदतः पुरा देवसमागमे। श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु। ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः। पौत्रस्ते भविता राजंस्तेजोवीर्य्यसमन्वितः। ततस्ते कुलनाशार्थमहं त्वां समुपागतः। चिकीर्षन् कुशिकोच्छेदं सन्दिधक्षुः कुलं तव। ततोऽहमागम्य पुरे त्वामवोचं महीपते!। नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति। न च ते दुष्कृतं किञ्चिदहमासादयं गृहे। तेन जीवसि राजर्षे! न भवेथास्त्वमन्यथा। एवं बुद्धिं समास्थाय दिवसानेकविंशतिम्। सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव!। यदा त्वया सभार्य्येण संसुप्तो न प्रबोधितः। अहन्तदैव ते प्रीतो मनसा राजसत्तम!। उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते!। पृच्छेः क्व यास्यसीति त्वां शपेयमिति प्रभो!। अन्तर्हितः पुनश्चास्मि पुनरेव च ते गृहे। योगमास्थाय संसुप्तो दिवसानेकविंशतिम्। क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप!। एवं बुद्धिं समास्थाय कर्शितौ वां क्षुधा मया। न च तेऽभूत् सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव!। सभार्य्यस्य नरश्रेष्ठ! तेन ते प्रीतिमानहम्। भोजनञ्च समानाय्य यत्तदा दीपितं मया। क्रुध्येथा यदि मात्सर्य्यादिति तन्मर्षितं च मे। ततोऽहं रथमारुह्य त्वामवोचं नराधिप!। सभार्य्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा। अविशङ्को नरपते! प्रीतोऽहञ्चापि तेन ह। धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयेत्। ततः प्रीतेन ते राजन्! पुनरेतत् कृतं तव। सभार्य्यस्य वनं भूयस्तद्विद्धि मनुजाधिप!। प्रीत्यर्थं तव चैतन्मे स्वर्गसन्दर्शनं कृतम्। यत्ते वनेऽस्मिन् नृपते! दृष्टं दिव्यं निदर्शनम्। स्वर्गोद्देशस्त्वया राजन्! सशरीरेण पार्थिव!। मुहूर्त्तमनुभूतोऽसौ सभार्य्येण नृपोत्तम!। निदर्शनार्थं तपसो धर्म्मस्य च नराधिप!। तत्र याऽऽसीत् स्पृहा राजंस्तच्चापि विदितं मया। ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते!। अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं नराधिप!। एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात! दुर्लभम्। ब्राह्मण्ये सति चर्षित्वं ऋषित्वे च तपस्विता। भविष्यत्येव ते कामः कौशिकात् कौशिको द्विजः। तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति। वंशस्ते पार्थिवश्रेष्ठ! भृगूणामेव तेजसा। पौत्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः। यः स देवमनुष्याणां भयमुत्पादयिष्यति। त्रयाणामेव लोकानां सत्यमेतद्ब्रवीमि ते। वरं गृहाण राजर्षे! यस्ते मनसि वर्त्तते। तीर्थयात्रां गमिष्यामि पुरा कालोऽभिवर्त्तते।

कुशिक उवाच। एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने!। भवत्वेतत् यथात्थ त्वं भवेत् पौत्रो ममानघ!। ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः। पुनश्चाख्यातुमिच्छामि भगवन्! विस्तरेण वै। कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन। कश्चासौ भविता बन्धुर्मम कश्चापि सम्मतः। ५५ अ०

च्यवन उवाच। अवश्यं कथनीयं मे तवैतन्मनुजर्षभ!। यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप!। भृगूणां क्षत्रिया याज्या नित्यमेतज्जनाधिप!। ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना। क्षत्रियाश्च भृगून् सर्वान् वधिष्यन्ति नराधिप!। आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः। तत उत्पत्स्यतेऽस्माकं कुलं गोत्रविवर्द्धनः। और्वो नाम महातेजा ज्वलनार्कसमद्युतिः। स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति। महीं सपर्वतवनां यः करिष्यति भस्मसात्। कञ्चित् कालन्तु वह्निं च स एव शमयिष्यति। समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः। पुत्रं तस्य महाराज! ऋचीकं भृगुनन्दनम्। साक्षात् कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ!। क्षत्रियाणामभावाय दैवयुक्तेन हेतुना। स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति। जमदग्नौ महाभागे तपसा भावितात्मनि। स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति। कुलात्तु तव धर्म्मात्मन् कन्यां सोऽधिगमिष्यति। उद्भावनार्थं भवतो वंशस्य भरतर्षभ!। गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः। ब्राह्मणं क्षत्रधर्म्माणं पुत्रमुत्पादयिष्यति। क्षत्रियं विप्रकर्म्माणं बृहस्पतिमिवौजसा। विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्म्मिकम्। तपसा महता युक्तं प्रदास्यति महाद्युते!। स्त्रियौ तु कारणं तत्र परिवर्त्ते भविष्यतः। पितामहनियोगाद्वै नान्यथैतद्भविष्यति। तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति"।

"भीष्म उवाच॥ कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः। श्रुत्वा हृष्टोऽभवद्राजा वाक्यञ्चेदमुवाच ह।

एवमस्त्विति धर्म्मात्मा तदा भरतसत्तम ! । च्यवनस्तु महातेजाः पुनरेव नराधिपम् । वरार्थं नोदयामास तमुवाच स पार्थिवः । बाढमेवं करिष्यामि कामं त्वत्तो महामुने ! । ब्रह्मभूतं कुलं मेऽस्तु धर्म्मे चास्य मनो भवेत् । एवमस्त्विति तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः । अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा । एतत्ते कथितं सर्व्वमशेषेण मया नृप ! । भृगूणां कुशिकानाञ्च अभिसम्बन्धकारणम् । यथोक्तमृषिणा चापि तदा तदभवन्नृप !" ५६अ० । कुशिकस्यापत्यम् अण् । कौशिक तदपत्ये पुंस्त्री० स्त्रियां ङीप् हेमच० मुनिभेदार्थतामालोच्य जमदग्निपत्न्येकतोक्तिः कल्पद्रुमे तन्मूलान्वेषोक्तिश्च चिन्त्या । २सर्जवृक्षे हेमच०। ३विभीतकवृक्षे पु० त्रिका० ४केकरे त्रि० ५अश्वकर्णवृक्षे राजनि० ६तैलभेदे पु० शब्दमा० कुशी+स्वार्थे क । कुशिका ७फाले स्त्री

कुशित त्रि० कुश–इतच् । जलमिश्रिते उज्ज्व०

कुशिन् त्रि० कुशोऽस्त्यस्य इनि । कुशयुक्ते "दिनेऽष्टमे तु विप्रेन्द्र दीक्षितोऽहं यथाविधि । दण्डी दण्डी कुशी चीरी एताश्चोभेक्षलीकृतः" भा०आनु०१४अ० २वाल्मीकिमुनौ हेमच० ।

कुशिम्बि(म्बी) स्त्री कुत्सिता शिम्बी पृषो० वा ह्रस्वः । शिम्बीभेदे सुश्रु० । "कुहादयं सूलकनाय शिम्बा कुशिम्बिवल्लीप्रभवाश्च शिम्बाः । ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिवर्हणाश्च सुश्रु० । [फाले मेदि० ।

कुशी स्त्री कुश–ययोविकारेऽर्थे ङीप् नि० । लौहविकारे

कुशो(सो)द न० कु+सद–ग पृषो० वा सस्य शः । वृद्धार्थं धनप्रयोगे अमरः "कुशो(सो)ददृद्धिं गृह्णाति नात्येति सकृदाहृता" या० स्मृतिः । २रक्तचन्दने तत्त्वसा० । "आदाय कुशो(सो)दसिन्दूरं गोमयञ्च करीषकम् । विलोड्य गुटिकां कृत्वा जपसंख्याञ्च कारयेत्"

कुशो(सो)रक पु०कुत्सितः शी(सी)रोऽस्य कर्षणे वा कप् । कर्षणेन कर्षितक्षेत्रवत्वे शेमादौ । ततः चतुरर्थ्यां सख्या० ढञ् । कौशी(सी)रकेय तत्सन्निकृष्टदेशादौ त्रि० ।

कुशीलव पु० कुत्सितं शीलं कुशील०अस्त्यर्थे व. कुशीलं वाति वा–क–वा । १कीर्त्तिसञ्चारके नटे,२चारणे,३गायके च । कुशीलवशब्दत्वर्थं माग्यप्रचारकत्वात् ४वाल्मीकौ मुनौ । शब्दचि० ५नटमात्रे अमरः । "यज्ञात्वयस्तु नःपूर्व्वं रङ्गविघ्नोपशान्तये" कुशीलवाः प्रकुर्व्वन्ति शान्द० । कुशश्च लवश्च पृषो०। ६कुशलवयोः द्वि० हेमच० । "कभिष्य महात्मानावुभौ रामः कुशीलवौ" रामा० उ० १०७अ० । त्रिकाण्डशेषे कुशीलवः इति पाठश्रीकण्ठे पाठः लिपिकरप्रमादकृतः ।

कुशुम्भ पु० कु+शुम्भ अच् । कुसुम्भशब्दार्थे हारा०

कुशूल पु० कुश–ऊलच् । १तुषाग्नौ, जटाधरः २कुशकोष्ठके, इष्टकादिनिर्म्मिते धान्यादिस्थापनार्थे ३स्थाने च । हेमच० "कुशूलपूरणाढकैः" स्मृतिः

कुशूलधान्यक पु० कुशूलपरिमितं धान्यं यस्य । यावता धान्येन वर्षत्रयं स्वस्य सकुटुम्बस्य सहायस्य निर्वाहो भवति तावन्मात्रसञ्चितधान्ये २विप्रे । कुम्भीधान्यशब्दे विवृतिः ।

कुशेशय न० कुशे जले शेते शी–अच् अलुक् स० । १पद्मे, "कुशेशयैरत्र जलाशयोषिताम्" माघः । २सारसपक्षिणि, अमरः । ३कर्णिकारवृक्षे शब्दचिन्ता० । कुशद्वीपस्थे ४पर्व्वतभेदे पु० कुशशब्दे विवृतिः [जले

कुशोदक न० कुशसंसृष्टमुदकम् शाकत०। दानार्थं कुशसंस्कृते

कुष निष्कर्षे क्र्यादि० पर० सक० सेट् । कुष्णाति अकोषीत् । निरस्तु वेट् निरकोषीत् निरकुक्षत् । चुकोष । निष्कर्षश्च हृदयतापरिच्छेदः, मध्यस्थितस्य वस्तुनो बहिर्निःसारणञ्च । "शिवाः कुष्णन्ति मांसानि" "ततोऽकुष्णात् दशग्रीवः क्रुद्धः मासान् वनौकसाम्" भट्टिः । क्त्वा सेट् कित् । "कुषित्वा जगतां सारम्" भट्टिः कर्म्मकर्त्तरि सार्वधातुके श्यन् वा प० । कुष्यति ते.वा पाठः । आर्द्धधातुके तु न परस्मैपदम् श्यन्चिणोर्व्विधिष्टत्वात् कोषिषीष्ट पाठः ।

अनु+सादृश्येन बहिःसारणे तद्वेनानुकुष्णाति

अभि+आभिमुख्येन निःसारणे "न वालकर्णनासाक्षोतो दशनच्छिद्राण्यभिकुष्णीयात्" सुश्रुतः

अव+अधोनिःसारणे तद्वैरवकुष्णाति सि०कौ० ।

निर्+निष्कासने । निरकुक्षत् निरकोषीत् "निष्कोष्टा निष्कोषिता । "निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात् । आदाय परिघं तस्थौ वलान्निष्कुषितद्रुमः" भट्टिः "कीटनिष्कुषितं धनुः" भट्टिः "उपान्तयोर्निष्कुषितं विहङ्गैः" रघुः । आर्षे तु गणव्यत्ययोऽपि क्वचित् दृश्यते "यमपुरुषा श्वयसैरग्नितप्तैः संदंशैस्त्वचि निष्कुषन्ति" भाग० ५।२६।१८।

कुषल त्रि० कुष–बा० कलच् । दक्षे पटौ भरतः [कोष

कुषाकु पु० कुष–आकु । १अग्नौ २वह्नौ ३सूर्य्ये च उज्ज्वा०

कुषित् अव्य॰ कुविद्+पृषो॰। १बाहुल्ये २प्रशंसायाञ्च मनोरमा
कुषित त्रि॰ कुष–क्त। जलमिश्रिते उणादि॰।
कुषीद न॰ कु+सद–श पृषो॰ अत्वम्। द्रव्यार्थं धनप्रयोगे भरतः
कुषीतक पु॰ ऋषिभेदे। तस्यापत्यम् काश्यपः ठञ्। कौषीतकेय तदपत्ये काश्यपे। अन्यत्रार्थे अत इञ्। कौषीतकि तदपत्येऽकाश्यपे। ततः उपकादि॰ द्वन्द्वेऽद्वन्द्वे च गोत्रप्रत्ययस्य लुक्।
कुषुभ चेपे कण्ड्वा॰प॰सक॰सेट्। कुषुभ्यति अकुषु(भी)भीत्। "भिनद्मि ते कुषुम्भं यस्ते विषधानः" अथ॰ २।३२।६।
कुषुम्भक पुं स्त्री कुषुभ–क्वुन् वेदे पृषो॰ मुम् वलोपश्च। नकुले "कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्त्तमानकः" अथ॰ १८।११।६। "कुषुम्भकोनकुलः" भा॰
कुष्ठ पुं न॰ कुष्णाति रोगम् कुष–क्थन्। (कुड) प्रसिद्धे द्रव्यभेदे "कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु। हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान्" भावप्र॰। तच्च द्वादशधोक्तं यथा "उक्तं पुष्करमूलं तु पौष्करं पुष्करं च तत्। पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः"। अयञ्च सुश्रुते एलादिकगणे एलातगरकुष्ठेत्यादिना, मुस्तकादिकगणे च मुस्ताहरिद्रेत्युपक्रमे विभीतककुष्ठेत्यादिना उक्तः। रोगभेदे तत्स्वरूपनिदानभेदादि भावप्र॰ दर्शितं यथा "विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च। भजतामागतांश्छर्दिं वेगांश्चान्यान् प्रतिघ्नताम्। व्यायाममतिसन्तापमत्यशनमुक्ता निषेविणाम्। शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम्। घर्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम्। अजीर्णाध्याशिनां चापि पञ्च कर्मापचारिणाम्। नवान्नदधिमत्स्यादिलवणाम्लनिषेविणाम्। माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम्। व्यवायं चाप्यजीर्णेऽन्ने दिवा निद्रानिषेविणाम्। विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम्। वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमम्बु च। दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः। अतः कुष्ठानि जायन्ते सप्तचैकादशैव च"। विरोधीन्यन्नपानानि क्षीरमत्स्यादीनि व्यायाममित्यादि। अतिभुक्त्वा व्यायामम्, अग्निसन्तापम् अग्निरूपकतापं सूर्यादिसन्तापञ्च निषेविणामिति। कृदन्तस्य योगे षष्ठी प्राप्ता द्वितीया तु ऋषिवचनात्। एवमग्रेऽपि "शीतोष्णं लङ्घनाहारानित्यादिष्वपि द्वितीया। क्रमं–विधिं, घर्मेत्यादि। घर्मार्त्ते सति द्रुतमविश्रम्य पाने स्नाने शीताम्बुसेविनाम्। अजीर्णाध्याशिनां भुक्तेऽजीर्णे भुञ्जताम्। पञ्चकर्मापचारिणां पञ्चकर्माणि वमनविरेकवस्त्यनिरूहानुवासनानि तेषु कृतेषु अपचारिणाम्। नवान्नदधिमत्स्यादि आहारादि सेविनाम्। व्यवायमित्यादि। अन्ने अजीर्णे विदग्धादिरूपे सति। व्यवायं मैथुनं निषेविणाम्। दिवानिद्रानिषेविणामिति भिन्नो हेतुः। धर्षयताम् अभिभवताम्। दोषदूष्यसंग्रहमाह। वातादय इत्यादिग्रन्थेन त्रिष्वपि मतेषु अय इति पदं सर्वेषु कुष्ठेषु त्रयाणामपि वातादीनां दुष्टत्वबोधनार्थम्। त्वक्, रक्त, अम्बु, लसीका। अथ संख्यामाह। अतः कुष्ठानीत्यादि। अतः पूर्वोक्तदोषदूष्यसमुदायात्। सप्तचैकादशचेति संख्याविच्छेदपाठेन सप्तानां महाकुष्ठत्वमेकादशानां क्षुद्रकुष्ठत्वं बोधयति। तत्र महाकुष्ठान्याह "पूर्वं त्रिकं तथा सिध्मं ततः काकणकं तथा। पुण्डरीकर्क्षजिह्वाख्ये महाकुष्ठानि सप्त च"। पूर्वत्रिकं कपालौदुम्बरमण्डलाख्यम्। सिध्मशब्दोऽकारान्तो नपुंसकः। ननु कथं सिध्मस्य महाकुष्ठेषु गणना सुश्रुतेन क्षुद्रकुष्ठेषु उक्तत्वात् यातुमविष्ट सिध्मं तु स्यान्महाकुष्ठमेव च। एवंविधस्य सिध्मस्य चरकेण महाकुष्ठेषु दर्शितत्वात्। एषां महाकुष्ठत्वञ्च शीघ्रतरोत्तरधात्ववगाहनात् उल्वणदोषजन्यत्वात् चिकित्साबाहुल्याच्च। अथ क्षुद्रकुष्ठान्याह "एककुष्ठं च तं पूर्वं गजचर्म ततः स्मृतम्। ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका। विपादिकाभिधा सैव पामाकच्छू ततः परम्। दद्रु विस्फोटकिटिभालसकानि च वेदितम्। क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः"। ननु दद्रुः कथं क्षुद्रकुष्ठेषु गणिता? सुश्रुतेन महाकुष्ठेषूक्तत्वात्। उच्यते असितावगाढमूला दद्रुः सुश्रुतेन महाकुष्ठेषु उक्ता। असितेतराऽनवगाढमूला दद्रुः क्षुद्रकुष्ठमेव। एवं विधाया दद्रुवाश्चरकेण क्षुद्रकुष्ठेषु दर्शितत्वात्। कुष्ठानां त्रिदोषजत्वेनैकत्वेऽपि दोषस्योल्वणतया सप्तधात्वमाह। "कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः। सर्वेषु च त्रिदोषेषु व्यपदेशोऽधिकस्ततः"। सर्वेष्वपि त्रिदोषेषु व्यपदेशः कपालादिसंज्ञाख्यो नामरूपं यदधिकत्वं ततः कुष्ठानि सप्तधा, दोषैः कथंभूतैः पृथग्द्वन्द्वैः समागतैःसङ्गतैः संमिलितैरिति यावत्। अस्यायमर्थः। किमपि कुष्ठं वातोल्वणं, किमपि पित्तोल्वणं, किमपि कफोल्वणं, किमपि वातश्लेष्मोल्वणं, किमपि पित्तश्लेष्मोल्वणम्, किमपि वातपित्तोल्वणं, किमपि

त्रिदोषोल्वणमिति। पूर्वरूपमाह“अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदविवर्णता। दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः। व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः। रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम्। रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्”। अतिश्लक्ष्णः अतिमसृणः। अथवा घर्मादिप्रसङ्गेऽपि स्वेदाभावः। त्वचि स्वापः स्पर्शाज्ञता। शीघ्रोत्पत्तिः व्रणानाम्। “दूषयन्ति श्लथीभूय निपतन्त्यादितस्ततः। त्वचः कुर्वन्ति वैवर्ण्यं दोषाः कुष्ठमुशन्ति तम्”। येनोल्वणेन यत्कुष्ठमुत्पद्यते तदाह। “वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात्। मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्ततः। चर्मैककुष्ठकिटिभं सिध्मालसविपादिकाः। वातश्लेष्मोद्भवाः पित्तकफाद्दद्रुशतारुषी। सपुण्डरीकविस्फोटपामाचर्मदलं तथा। सर्वैरेवोल्वणैर्दोषैरेवाहुः काकणं बुधाः”। विचर्ची च कफादित्यन्वयः। पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा पित्तकफादित्यन्वयः। अथ महाकुष्ठानां मध्ये कपालस्य लक्षणमाह। “कृष्णारुणं कपालाभं यद्रूक्षं परुषं तनु। कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम्”। किञ्चित्कृष्णाः किञ्चिदरुणाः ये कपालाः स्फुटितमृत्पात्रखण्डाः‘खपरा’इति यावत् तद्वर्णं, परुषं खरस्पर्शम्। तनु तनुत्वक् कपालम् कपालवत्, विषमं दुश्चिकित्स्यम्। औदुम्बरमाह “उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्। रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम्”। औदुम्बरफलाकारम्। मण्डलमाह “श्वेतरक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम्। कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते। श्वेतरक्तं किञ्चिच्छ्वेतं किञ्चिद्रक्तम्। स्थिरं चिकित्सां विना अविनाशि. स्त्यानम् आर्द्रं, स्निग्धं सस्वेदम्। उत्सन्नमण्डलम् उन्नतमण्डलम्। कृच्छ्रं कष्टसाध्यम्। अन्योन्यसंसक्तं परस्परमिलितम्। अथ सिध्ममाह “श्वेतताम्रं तनु यत् रजो घृष्टं विमुञ्चति। प्रायेणोरसि तत् सिध्ममलाबूप्रसूनोपमम्”। श्वेतताम्रं श्वेतं ताम्रम्। तनु तनुत्वक्। प्रायेणोरसि प्रायशब्दादन्यत्रापि बोद्धव्यम् काकणमाह “रक्ताकणन्तिकावर्णमपाकं तीव्रवेदनम्। त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति। काकणन्तिका गुञ्जा। गुञ्जावर्णत्वेन मध्ये कृष्णमन्ते रक्तम्। अथवा मध्ये रक्तं मध्यान्ते कृष्णम्। अपाकं स्वभावात्। त्रिदोषलिङ्गम्–सर्वेषां कुष्ठानां त्रिदोषजत्वेऽपि उल्वणदोषत्रयलिङ्गम्। पुण्डरीकमाह “सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम्। सरागञ्च सोत्सेधं पुण्डरीकं कफोल्बणम्” पुण्डरीकदलोपमं पुण्डरीकं श्वेतकमलं तत्पत्रोपमम् सरागञ्चैव। अत एव श्वेतं, रक्तपर्य्यन्तं अन्ते रक्तम्। सरागमिति अन्ते लोहित्याधिक्यबोधनार्थम्। सोत्सेधम् उन्नतम्। ऋष्यजिह्वकमाह “कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम्। यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते”। रक्तपर्य्यन्तं अन्ते रक्तम् अन्तःश्यावं मध्ये धूम्रवर्णम्। ऋष्यजिह्वासंस्थानम् ऋष्यो भल्लूकस्तस्य जिह्वाकृति। अथ क्षुद्रकुष्ठानां मध्ये एककुष्ठगजचर्म्मणोर्लक्षणमाह “अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम्। तदेककुष्ठं चर्माख्यं बहलं हस्तिचर्म्मवत्”। महावास्तु महास्थानम्। मत्स्यशकलोपमम् अत्र शकलशब्देन लक्षणया त्वगुच्यते। तेन चक्राकारमत्स्यशकलसदृशं भवति। एककुष्ठमिति क्षुद्रकुष्ठेषु मुख्यत्वात्। चर्माख्यं गजचर्माख्यम् बहलं स्थूलम् गजचर्म्मवत् रूक्षं कृष्णं च। अथ चर्मदलमाह “रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि। तच्चर्मदलमाख्यातं स्पर्शाक्षमतनुश्च यत्”। दलयत्यपि विदारयत्यपि चर्मेति शेषः। विचर्चिकामाह “सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका”। पिडका क्षुद्रपिडका। ननु क्षुद्रकुष्ठानां कथमेकादशत्वं विपादिकाया द्वादशत्वसम्भवात् उच्यते। विचर्चिकैव पादयोर्भवन्ती विपादिका तेन संख्यातिरेकः। अतएव भोजः “दाल्यते त्वक् यत्र हस्तपाण्योर्ज्ञेया विचर्चिका। पादे विपादिका ज्ञेया स्थानभेदाद्विचर्चिका”। दाल्यते विदार्य्यते। केचिद्विचर्चिकातो विपादिकां भिन्नामाहुः। विपादिकामाह“वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम्”। पाणिपादस्फुटनं पाण्योः पादयोश्च स्फुटनं विदारणं येन तत्। पामामाह “सूक्ष्मा बह्व्यः स्राववन्त्यः सदाहाः पामेत्युक्ताः पिडकाः कण्डुमत्यः”। पिडकाः पीडयन्तीति पिडका इति क्षिपकादित्वात् निपात्यते। कच्छुमाह “सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च”। सैव पामा स्फोटैः महद्भिः. स्फिचौ-पोंदौ। दद्रुमाह “सकण्डुरागपिडकं दद्रुमण्डलमुद्गतम्”। दद्रुमण्डलरूपेणोत्पत्तिमत्, उद्गतम् उच्छूनम्। विस्फोटमाह “स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः”। किटिभमाह “श्यावं किणखरस्पर्शं परुषं किटिभं स्मृतम्।

किणखरस्पर्शम् किणः शुष्कव्रणस्थानं तद्वत् कर्कशस्पर्शम्। परुषं रूक्षम्। अलसकमाह "कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम्" गण्डैः महापिडकाभिः चितं वेष्टितम्। शताररुमाह "रक्तश्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम्"। अथ सप्तधातुगतानां कुष्ठानां लक्षणान्याह तत्र रसगतस्य लक्षणमाह "त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते। त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्"। त्वक्शब्देनात्र रस उच्यते धातुप्रस्तावात्। त्वक्स्थत्वाच्च त्वक्स्वापः स्पर्शाज्ञत्वम्। त्वक्स्वाप इत्यादिकं केचिद्रक्तगतस्य लिङ्गं मन्यन्ते। रुधिरगतमाह "कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रये"। विपूयकः विशेषेण पूयः। अथ मांसगतमाह "बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः। तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते"। बाहुल्यं कुष्ठस्य वृद्धिः। पिडकोद्गमः क्षुद्रपिडकोद्गमः स्फोटः बृहत्पिडका। स्थिरत्वम् असञ्चारित्वम्। मेदोगतमाह "कौण्यङ्गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्। क्षतप्रसारो लिङ्गानि पूर्वोक्तानि यानि च। मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च"। कौण्यं हस्तनाशः। अङ्गानां सम्भेदः अङ्गभङ्गः, क्षतसर्पणं क्षतप्रसरणं, पूर्वोक्तानि रक्तमांसगतलिङ्गानि। अस्थिमज्जागतमाह "नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः। स्वरोपघातः पीडा च भवेत् कुष्ठेऽस्थिमज्जगे"। शुक्रगतमाह "दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्"। ननु शुद्धशोणितशुक्रयोरेव दम्पत्योर्गर्भसम्भवः दुष्टशोणितशुक्रयोः कथम् अपत्योत्पत्तिः? अत आह सुश्रुतः "कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः। गर्भः सञ्जायते नार्य्याः स जातो बाल उच्यते"। अथान्यच्च "वातादिदुष्टेतदोऽपत्योत्पादनेऽसमर्थाः" इति। उच्यते। गर्भोऽत्र शुद्धो बोद्धव्यः। अशुद्धगर्भोऽपि दुष्टशोणितशुक्रयोरपि भवति गतकर्णाक्षबधिरादीनां सम्भवात्। शोणितमार्त्तवम्। कुष्ठितं कुष्ठं सञ्जातमस्येति तारकादित्वादितच्। शुक्रार्त्तवगतं कुष्ठमपत्येन व्यज्यते इति तात्पर्य्यम्। कुष्ठेषु उल्वणवातादिदोषलिङ्गमाह "खरं श्यावारुणं रूक्षं वातात् कुष्ठं सवेदनम्। पित्तात् प्रकुपितं दाहरागस्रावान्वितं मतम्। कफात् क्लेदं घनं स्निग्धं सकण्डूशैत्यगौरवम्। द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम्"। खरं कर्कशम्। श्यावारुणं श्यावं वा अरुणं वा। प्रकुपितं पूतिक्लेदबहुलम्। क्लेदम् आर्द्रतायुक्तम् घनं गुरुम्। साध्यत्वादिकमाह "साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत्। मेदोगं द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम्। क्रिमितृड्दाहमन्दाग्निसंयुक्तं यत् त्रिदोषजम्"। वातश्लेष्माधिकञ्च यत् एतेन सिध्मैककुष्ठगजचर्म्मविपादिकाकिटिभालसकानि साध्यानि। मज्जागतं शुक्रगतमप्यसाध्यम्। क्रिमिदाहोऽपि वर्ज्य इत्यन्वयः। अथारिष्टमाह "प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्। पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्"। प्रभिन्नं विदीर्णम्। हतस्वरं घर्घरस्वरम्। पञ्चकर्म्मगुणातीतम् असञ्जातवमनादिपञ्चकर्म्मगुणम्। अथ त्वग्दुष्टिसाम्यात् कुष्ठभेदत्वाच्चैव श्वित्रमाह "कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत्। निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्"। कुष्ठैकसम्भवं कुष्ठेन सहैकः समानः सम्भवो निदानं यस्य तत्। अथ श्वित्रस्य भेदमाह किलासञ्चारुणं भवेत्। श्वित्रमेव रक्तमांसाश्रयात्किलासमरुणञ्च भवेदित्यर्थः। ननु कुष्ठस्य श्वित्रस्य च को भेद इत्यत आह निर्द्दिष्टमपरिस्रावीति श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि अयञ्च त्रिधातूद्भवसंश्रयमिति। त्रयो धातवो वातपित्तकफास्तेभ्यः उद्भवभूतेभ्य उद्भवो यस्य तत् श्वित्रम्। अथ वा त्रयो धातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत्। कुष्ठन्तु सान्निपातिकं सर्वधातुगतं भवतीति भेदः। दोषभेदेन लक्षणभेदानाह "वाताद्रूक्षारुणं, पित्तात् ताम्रं कमलपत्रवत्। सदाहं रोमविध्वंसि, कफात् श्वेतं घनं गुरु। सकण्डु च क्रमाद्रक्तमांसमेदःसु चादिशेत्। वर्णेनैवेदृगुभयं कुष्ठं तच्चोत्तरोत्तरम्"। अरुणमीषल्लोहितम्। कमलपत्रवदित्यनेन मध्ये श्वेतमन्ते लोहितं बोधयति। घनं गुरुम्। क्रमाद्रक्तमांसमेदःसु चादिशेत्। तथा च चरकः "अरुणं रक्तमेवान्ते ताम्रं पित्ते प्रकुप्यते। श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कुष्ठं यथापरमिति" उभयं द्विविधमपि श्वित्रं वर्णेनैवेदृगेव। अरुणं ताम्रं श्वेतञ्च दोषभेदात्। द्विविधं दोषजं व्रणजं च। तथा च भोजः "श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथेति"। श्वित्रं साध्यमसाध्यञ्चाह "अशुक्लरोमबहुलमसंसृष्टमथो नवम्। अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा"। अबहुलं तनु। अन्यच्च "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्

नम् । वर्ज्जनीयं विशेषेण किलासं श्वित्रिमिच्छता" । गुह्यं लेहनम् भगस्य तन्मध्यपदतत्त्वं, तत्र जातं कुष्ठते-नान्तं जातमिति सामान्यतो निर्द्दिष्टत्वात् । अर्थचिरन्तनम् नवमपि । कुष्ठस्य संसर्गजत्वप्रसङ्गेनान्यानपि संसर्गजान् रोगानाह "प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात् सह भोजनात्" । प्रसङ्गो मैथुनम् । "एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् । कण्डू कुष्ठोपदंशश्च भूतोन्मादव्रणज्वराः । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् । म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत् । अतो निन्दितरोगोऽयं कुष्ठं कष्टं प्रकीर्त्तितम्" । एतावता कुष्ठिनां कुष्ठं सर्व्वथा प्रतीकरणीयं न तु उपेक्षणीयम्" ।

एतेषां मध्ये केषाञ्चित् महापातकचिह्नत्वं केषाञ्चिदतिपातकचिह्नत्वं केषाञ्चिदुपपातकचिह्नत्वं स्मृत्यादौ प्रसिद्धम् । अष्टादशानां मध्ये अष्टानामेव पापरोगतया ख्यातौ तद्युक्तत्वादाद्यत्वादिकमुक्तं तच्च शु०त०निर्ण्णीतं यथा भविष्यपुराणीयमध्यतन्त्रस्य षष्ठाध्याये "शृणु कुष्ठगणं विप्र! उत्तरोत्तरतोगुरुम् । विचर्च्चिका तु प्रथमा चर्म्मरीयस्तृतीयकः । विकर्च्चुर्म्मं चतुर्थौ च कथ्यते तथाष्टकम् । एषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु । प्रयदत् सर्व्वगात्रेषु गच्छे भाले तथा नसि" । तथा 'कृते च प्रोपदेसीर्थे वनमा तरमूलके । न पिण्डं नोदकं कुर्य्याच्च दाहक्रियाश्चरेत् । पञ्चगव्यीयक्रियमाणीयोक्तः कुष्ठी कदाचन । यदि स्वेच्छावशेनाहं यतिचान्द्रायणं चरेत्" । यतिचान्द्रायणस्थाने पादोनधेनुचतुष्टयं देयम् । अतिपातकशेषफलत्वादयं वं युक्तं यथाह विष्णुः "अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुषेषु लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, स्वर्णहारी कुनखी, गुरुतल्पगो दुश्चर्म्मा, इत्यादि । श्यावदन्तकः स्वभावतः कृष्णदन्तकः प्रधानदन्तद्वयमध्यवर्त्ति क्षुद्रदन्तः । प्रधानदन्तोपरि दन्तान्तरमिति केचित् । कुनखी कृतुचितनखः, दुश्चर्म्मा स्वभावतः चर्म्माहतमेढ्रः । अत एव महारोगिणोयाज्ञवल्क्यश्च उचमाह कूर्म्मपुराणम् "क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्" । क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः । मूर्खस्य गायत्रीरहितस्य । सार्थगायत्रीरहितस्येति रुद्रधरः । महारोगिणः पापरोगाष्टकान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । यथेष्टाचारस्य दूरतवेशग्राह्याधक्षस्य । एतच्च भविष्यपुराणोक्तं यतिचान्द्रायणप्रायश्चित्तमकृतप्रायश्चित्तानां कुष्ठ्यादीनां दाहे बोद्धव्यम् अन्यथैषां प्रायश्चित्तोपदेशोविफलः स्यात् । यथाह विष्णुः 'कुनखी श्यावदन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वोद्धरेयातां तद्दन्तनखौ' इति अत्र द्वादशरात्रं पराकरूपं तत्र पञ्च धेनवः नतु प्राजापत्यं तद्वाहकर्त्तुर्यतिचान्द्रायणेन विषमशिष्टत्वात् अत्र बहूनामेकधर्म्मावाप्तिमिति वचनादाकाङ्क्षितत्वाच्च कुष्ठ्यादीनामपि प्रायश्चित्तम् । अतएव प्रायश्चित्तविवेकेऽप्युक्तमेवं दुश्चर्म्मादिष्वप्यूह्यमिति । महापातकादतिपातकस्य गुरुत्वात् तच्चिह्नेऽपि प्रायश्चित्तं द्विगुणम् । कर्म्मविपाके शातातपः "महापातकजं चिह्नं सप्तजन्मसु जायते । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः । कुष्ठञ्च राजयक्ष्मा च प्रमेहोग्रहणी तथा" । अत्र कुष्ठपदमस्तकुष्ठपरमिति पूर्व्वेणाविरोधः" ।

**कुष्ठकेतु** पु० कुष्ठं तन्नाशनः केतुश्चिह्नं यस्य । मार्कण्डिकायां (भूँइकुमड़ा) क्षुपे राजनि०

**कुष्ठगण** पु० इत० । शु०त०टीकायां कुष्ठशब्दे दर्शिते अष्टादशादि प्रयोजके कुष्ठभेदसमूहे स च कुष्ठशब्दे भावप्र० अष्टादशविधो वर्णितः स च कुष्ठशब्दे दर्शितः [राजनि०

**कुष्ठगन्धि** न० कुष्ठस्येव गन्धोऽस्य इच् समा० । एलवालुके

**कुष्ठगन्धिनी** स्त्री० कुष्ठस्येव गन्धोऽस्याः इनि ङीप् । अश्वगन्धायां शब्दच०

**कुष्ठघ्न** त्रि० कुष्ठं हन्ति हन–टक् । कुष्ठनाशके औषधे "मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता" सुश्रु० । २हितावल्यां पु० राजनि० ३काकोदुम्बरिकायां ४वाकुच्यां च स्त्री ङीप् राजनि०

**कुष्ठनाशन** पु० कुष्ठं नाशयति नश–णिच्–ल्यु । १वाराहीकन्दे २ श्वेतसर्षपे च राजनि० ३गौरीसर्षपे रत्नमा० ४कुष्ठनाशके औषधादौ त्रि०

**कुष्ठनाशिन्** त्रि० कुष्ठं नाशयति नश–णिच्–णिनि । कुष्ठनाशके स्त्रियां ङीप् । सा च २सोमराज्यां रत्नमा०

**कुष्ठल** न० कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम् । कुत्सितस्थले

**कुष्ठविद्** स्त्री कुष्ठस्य तत्स्वरूपादेः विद् विद्या विद–सम्प० भावे क्विप् । कुष्ठस्वरूपादिविद्यायां तत्र साधुः कथादि० ठक् । कौष्ठविदिक तत्र साधौ त्रि०कुष्ठं वेत्ति कर्त्तरि क्विप् । २कुष्ठस्वरूपवेत्तरि त्रि० । [राजनि०। २कुष्ठनाशके त्रि०

**कुष्ठसूदन** पु०कुष्ठं सूदयति सूदि–ल्यु । १आरग्वधे(सोन्दाल)

**कुष्ठहन्तृ** पु० कुष्ठं हन्ति हन–तृच्। १हस्तिकन्दे (हातिकान्दा) राजनि० २कुष्ठनाशके त्रि० ३शाकुच्यां स्त्री० ङीप् राजनि० [त्रिका० २कुष्ठनाशके त्रि०

**कुष्ठहृत्** पु० कुष्ठं हरति हृ–क्विप् तुक् च। १विट्खदिरे

**कुष्ठारि** पु० ६त०। १विट्खदिरे शब्दच०। २पटोले ३आदित्यपत्रे ४खदिरमात्रे ५गन्धके च राजनि० ६कुष्ठनाशके

**कुष्ठिका** स्त्री कुष्ठीव कायति कै–क। पादावयवभेदे "यास्ते अङ्गुः याः कुष्ठिका अच्छरा ये च ते शफाः" अथ०१०।९।२२

**कुष्ठिन्** त्रि० कुष्ठ+अस्त्यर्थे इनि। कुष्ठरोगयुक्ते। कुष्ठशब्दे उदा० स्त्रियां ङीप्

**कुष्ठित** त्रि० कुष्ठं जातमस्य तार० इतच्। जातकुष्ठे "स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः। यदपत्यं तयो जातं ज्ञेयं तदपि कुष्ठितम्" सुश्रुतः [उणा०

**कुष्मल** न० कुष–क्मलन्। १छेदने २स्फाटने ३विकसिते च

**कुष्माण्ड** पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु बीजेषु यस्य शक०। (कुमड़ा) ख्याते १वृक्षे, २शिवस्य पारिषद्भेदे च तस्य कुष्माण्डाकृतित्वात्तथात्वम् जातित्वात् स्त्रियां ङीप् कुष्माण्डोऽप्यत्र ३लताभेदे स्त्री भावप्र० ऋग्वेदादिप्रसिद्धेषु ४ऋग्विशेषेषु स्त्री ५यद्देवा देवहेडनमित्यादिमन्त्रपञ्चकात्मकेऽनुवाके पु० "कृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत्। साधितां रेवतीमिष्टिं कुष्माण्डमघमर्षणम्" भा० आनु० १२६अ० व्याख्याने नीलकण्ठः। यद्देवा इत्याद्यनुवाकश्च यजु० २०।१४।१७॥ यथा "यद्देवा देवहेडनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" यजु० २०।१४। यदि दिवा यदि नक्तमेनांसि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः"१५। यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम्। सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" १६। यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये। यच्छूद्रे यदर्ये यदेनश्चकृमा वयम्। यदेकस्याधि धर्मणि तस्यावयजनमसि" १७। यदापो अघ्न्या इति वरुणेति नो मुञ्चत्वंहसः" १७॥ "इति सार्द्धचतुष्टयमन्त्रात्मकोऽनुवाकः तत्राद्यास्त्रिकः कुष्माण्डीसंज्ञा यथाह वेददी० "इत उत्तरमवभृथः मागरकुम्भं प्रापयति यद्देवा इति" का० ११।५।१२। अवभृथेष्टिं कृत्वा यद्देवा इत्यादिना यद्वो नो मुञ्चत्वित्यन्तेन सार्द्धकण्डिकाचतुष्कात्मकेन मन्त्रेण मागरकुम्भं जले तारयति। अग्निवायुसूर्यदेवत्यास्त्रिकोऽनुष्टुभः कुष्माण्डीसंज्ञाः" इति। तेनार्वाक्शब्दार्द्धमन्त्रसहितोऽनुवाकः कुष्माण्डसंज्ञक इति विवेच्यम् प्रागुक्तभारतव्याख्याने नीलकण्ठेन मन्त्रपञ्चात्मकस्य तथात्वोक्तिः अर्द्धमन्त्रस्य मन्त्रत्वकल्पनयेति बोध्यम्। स्वार्थे क कुष्माण्डकोऽपि (कुमड़ा) वृक्षे ओषधिभेदे, उमायां, (भसिना) कर्कटी च। कुष्माण्डस्य गुणपाकप्रकारादि भावप्र० उक्तं "कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातहृत्। बालं पित्तापहं शीतं मध्यमं कफकारकम्। वृद्धं नातिहितं स्वादु सक्षारं दीपनं लघु। वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित्। अस्य पाकप्रकाराः यथा "घृते तप्ते विनिःक्षिप्य खण्डान् कुष्माण्डसम्भवान्। वार्त्ताकुविधिना कुर्यात् प्रलेहतलनादिकम्। वेसवारान्वितञ्चैव घृते तलनपूर्वकम्। कुष्माण्डकं फलं शिष्टं विदुः सुस्वादु सुन्दरम्"। "घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान्। रञ्जितान् क्षीरमरिचैरिमान् सुगुप्तिकां विदुः" "चतुरस्रायतान् स्थूलान् स्विन्नान् क्षीरेण चोदितान्। सुपाच्यान् खण्डमरिचैर्मरिचैलादिवासितान्"। "कुष्माण्डखण्डानि ससैन्धवानि तनूनि सम्यग्दधिपिष्टितानि। जम्बीरनीरान्वितशृङ्गवेरैर्भवन्ति वक्त्रैरपि पोष्णाय"। "कुष्माण्डसम्भवाः खण्डाः सुस्विन्नाश्चणकान्विताः। वेसवारयुते तैले तद्वदेव प्रलेहयेत्। खण्डं कलिङ्गकाकारं कौष्माण्डं स्वेद्य पिण्डितम्। राजिकादिभिरभ्यूह्य सिञ्चितं काम्बूरीयकम्। एवं बहुविधाः कार्याः कौष्माण्डा हि विचक्षणैः। प्रलेहतलनस्वादुचारनव्यानराजिकाः"। "अमृतं पक्वकुष्माण्डं कुष्माण्डं तरुणं विषम्" वैद्य० "कुष्माण्डे चार्थहानिः स्यात्" तिथित०। "अन्नानु चैव कुष्माण्डं कार्त्तिके परिवर्जयेत्, कार्त्तिकव्रते पुरा०। ६ यागक्रियाविशेषे शब्दरत्ना० तन्त्रं स्मृत्यन्

**कुष्माण्डकरसायन** न० चक्रदत्तोक्ते कुष्माण्डस्य द्रव्यान्तरमिश्रितस्य पाकविशेषेण जाते औषधभेदे यथा "कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्। पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे। यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्। पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च। त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम्। न्यसेच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेन्मुहुः। तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्। तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी। कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः। वृष्यं पुनर्भवकरं बलवर्णप्रसादनम्।

कम् । लिङ्गद्वारत्र विप्राणां कृषिं कृत्वा न दोषभाक्” । वृद्धिभेदः चक्रवृद्धिशब्दे १४१८ पृ० उक्तः । २तद्वति त्रि० तस्य पत्नी ङीप् ऐङ्च मुग्धबोधः । कुसीदायी वृद्ध्याजीविपत्न्याम् । पाणिन्यादिमते कुसितकुसिदशब्दाभ्यां ह्रस्वमध्याभ्यामेव ङीप् ऐश्च इति भेदः । कुसीदवृद्ध्यर्थद्रव्यं प्रयच्छति ठन् ठची । कुसीदिक वृद्ध्यर्थधनदायिनि त्रि० स्त्रियामुभयत्र षित्वात् ङीप् । स्वार्थे क । कुसीदक, तदर्थे अस्त्यर्थे इनि । कुसीदिन् वृद्ध्यर्थं धनप्रयोक्तरि उत्तमर्णे त्रि० स्त्रियां ङीप्

**कुसीदवृद्धि** स्त्री कुसीदरूपा वृद्धिः । कुसीदरूपायां वृद्धौ (सुद) “कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता” या० स्मृतिः । ब०व्री० । कुसीदरूपवृद्धियुक्ते त्रि०

**कुसुम** न० कुस–उम नि० गुणाभावः । १पुष्पे, “कुसुममन्नतिकलतमङ्घ्रिभिः” माघः । “कुसुमायोजितकार्मुकोमधुः” कुमा० । “विपिनविहारे कुसुमविचित्रा” छन्दोम० । २फले, ३स्त्रीरजसि, “यदा नार्य्याः पितुर्गेहे कुसुमस्नानसम्भवः” ज्यो० ४नेत्ररोगभेदे च मेदिनिः । पञ्चमात्रप्रस्तारे । ऽ ॥ ष्टे ५प्रभेदे । फलकुसुमविशेषाणां द्रव्यान्तरसुलभत्वादिसूचकत्वं वृ० स० २९अ० दर्शितं यथा

“फलकुसुमसम्प्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् । सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् । शालेन कलमशाली रक्ताशोकेन रक्तशालिश्च । पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः । न्यग्रोधेन तु यवकस्तिन्दुकवृद्ध्या च षष्टिको भवति । अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् । जम्बूभिस्तिलमाषाः शिरीषवृद्ध्या च कङ्गुनिष्पत्तिः । गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन । अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदशनैः । बदरीभिश्च कुलत्थांश्चिरविल्वेनादिशेन्मुद्गान् । अतसी वेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः । तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणः । करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन । गावश्च पाटलाभिः कदलीभिरजाविकं भवति । चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन । कुरवकवृद्ध्या वज्रं वैदूर्यं नन्दिकावर्तैः । विन्द्याच्च सिन्धुवारेण मौक्तिकं कुङ्कुमं कुसुम्भेन । रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः । श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः । सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः । आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्त्वथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः । पिचुमर्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन । निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन । दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण । श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति” ।

कुसुमविशेषप्रकाशने दोहदभेदः । “प्रमदानां चरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् । बकुलो मुखसीधुसिक्तः । आलोकितः कुरबकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति” कुमा० टी० मल्लि० । तदस्य संजातं तार० इतच् । कुसुमित संजातकुसुमे त्रि० ।

**कुसुमकार्म्मुक** पु० कुसुमं कार्मुकमस्य । कन्दर्पे “कुसुमकार्मुककार्मुकसंहितेत्यादि माघः । कुसुमचापादयोऽप्यत्र” पु० । “कुसुमचापमतेजयदंशुभिः” माघः ।

**कुसुमपञ्चक** न० कुसुमानां पञ्चकम् । कामदेवबाणरूपे अरविन्दादिपञ्चके “मनसिशयमहास्त्र मन्यथाऽसौ न कुसुमपञ्चकमप्यलं विसोढुम्” माघः । कुसुमबाणशब्दे विवृतिः ।

**कुसुमपुर** न०(पाटना) इति ख्याते पाटलिपुत्रे नगरे “ततः पिटकपरिवाराद्दपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ” “चाणक्यहतकेन आहूयाभिहिताः कुसुम पुरवासिनः” इति च मुद्राराक्ष० । कुसुमनगर पुष्पपुरादयोऽप्यत्र न० । अन्तलोपे कुसुमप्यत्र ।

**कुसुममध्य** पु० कुसुमं मध्ये फलमध्ये यस्य । (चालता) वृक्षभेदे । शब्दच०

**कुसुममय** त्रि० कुसुमात्मकं कुसुमप्रचुरं वा कुसुम+मयट् । १पुष्पमये २पुष्पप्रचुरे च स्त्रियां ङीप् ।

**कुसुमबाण** पु० कुसुमानि अरविन्दादीनि पञ्च पुष्पाणि बाणाः यस्य । कन्दर्पे । “अरविन्दमशोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः” माघव्या० मल्लि० धृतवाक्यम् कुसुमशरादयोऽप्यत्र पु० ।

**कुसुमविचित्रा** स्त्री “नयसहितौ न्यौ कुसुमविचित्रा” वृ०र० उक्ते १द्वादशाक्षरपादके वर्णवृत्तभेदे । कुसुमैन विचित्रः । २पुष्पैर्विचित्रे त्रि० । “विपिनविहारे कुसुमविचित्रा” (मुरारिमूर्त्तिः) छन्दोमञ्जरी ।

**कुसुमाकर** पु०६त० । वसन्ते ऋतौ । “मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः” गीता । पुष्पाकरादयोऽप्यत्र पु० ।

**कुसुमागम** पु० कुसुमानामागमोऽत्र । वसन्ते ऋतौ

**कुसुमाञ्जन** न० कुसुमाकारमञ्जनं शाक० । पैत्तलमलजाते पुष्पाकारे अञ्जनभेदे अमरः ।

**कुसुमाञ्जलि** पु० कुसुमपूर्णोऽञ्जलिः। १पुष्पपूर्णेऽञ्जलौ कुसुमानामञ्जलिरिव। उदयनाचार्य्यप्रणीते पञ्चस्तवकात्मके परमात्मनिरूपके ग्रन्थभेदे "इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्रीः" इति तद्ग्रन्थोपसंहारे न्यायप्रसूनाञ्जलिरित्युपक्रमे च कीर्त्तनात् तस्य न्यायकुसुमाञ्जलिनामत्वेऽपि देवदत्तस्य पूर्वपदलोपे दत्त पदवाच्यतावत् पूर्वपदलोपेन तन्नामता लोकप्रसिद्धेति। पुष्पाञ्जल्यादयोऽप्यत्र पु०

**कुसुमात्मक** न० कुसुममिवात्मा स्वरूपं यस्य कप्। १कुङ्कुमे हारा० तस्य सर्वाङ्गेनैव पुष्पाकारत्वात्तथात्वम्।

**कुसुमाधिप** पु० कुसुमेषु कुसुमप्रधानेषु वृक्षेषु अधिपः श्रेष्ठः सुगन्धित्वात्। चम्पकवृक्षे शब्दर०।

**कुसुमाधिराज्** पु० कुसुमेषु अधिराजते सुगन्धित्वात् राज–क्विप्। चम्पके त्रिका०।

**कुसुमायुध** पु० कुसुमानि आयुधान्यस्य। कामदेवे "कुसुमायुधपत्नि! दुर्लभः" "तव प्रसादात् कुसुमायुधोऽपि" कुमा० पुष्पास्त्रकुसुमास्त्रादयोऽप्यत्र पु०

**कुसुमाल** पु० कोः पृथिव्याः सुमालः खन्यनभेदोऽस्य। चौरे हारा०। तस्य भूमिखनिकारित्वेन तत्सम्बन्धित्वात् तथात्वम्।

**कुसुमासव** न० कुसुमस्य तद्रसस्यासवम्। १ पौष्पे मधुनि, शब्दमाले० २ मद्ये च राजनि०। आसवशब्दे विवृतिः।

**कुसुमेषु** पु० कुसुमानि इषवोऽस्य। कामदेवे अमरः कुसुमशरशब्दे विवृतिः।

**कुसुमोच्चय** पु० कुसुमानामुच्चयः समूहो यत्र। १ स्तवके। [इत०। २ पुष्पसमूहे।

**कुसुम्भ** पु० कुस–उम्भ नि० गुणाभावः। (कुसुम) पुष्पप्रधाने वृक्षे अमरः। पुष्पादिरूपावयवपरत्वे न०। "कुसुम्भं मालिकाशाकं हल्लाकं पूतिकां तथा। भक्षयन् पतितस्तु स्यादपि वेदान्तगोऽद्विजः" लिखित० उशनाः। "कुसुम्भं वातलं कृच्छ्रं रक्तपित्तकफापहम्" भावप्र०। "कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः" सुश्रु०। तस्य तैलगुणाः "कुसुम्भतैलमुष्णं गुरु स्वादु विदाहि च। चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम्" भावप्र०। सुश्रुते तु तत्तैलगुणाः सामान्यत उक्ता यथा "निम्बातसीकुसुम्भमूलकजीमूतकवत्सककृतवेधनार्ककम्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सरान्यनिलकफकृमिकुष्ठप्रमेहशिरोरोगहराणि चेति"। "कुसुम्भशाकस्य सएव" (लिफलासवः) सुश्रुते तच्छाकगुणाद्युक्तम्। २कमण्डलौ अमरः। "छत्रकेशककुशः पाणौ दण्डी कुसुम्भवान्" मनुः। ३ स्वर्णे न० मेदि०।

**कुसुम्भराग** पु० इत०। कुसुम्भस्य तत्पुष्पस्य रागः, कुसुम्भस्येव राग इति वा। कुसुम्भपुष्पस्य १काषायरागे २दम्पत्योः रागभेदे च। स च सा०द०दर्शितः यथा "नीलीकुसुम्भमञ्जिष्ठाः पूर्वरागोऽपि च त्रिधा। न चातिशोभते यन्नापैति प्रेम मनोगतम्। तन्नीलीरागमाख्याति यथा श्रीरामसीतयोः। कुसुम्भरागं तत् प्राहुर्यदपैति च शोभते। मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते"।

**कुसुम्भबीज** न० इत०। (वरडा) पाश्चात्यभाषाप्रसिद्धे वरटाख्ये बीजे। यस्य तैलं कुसुम्भतैलम्।

**कुसुरुविन्द** पु० ऋषिभेदे येन "आजिघ्र कलशम्" इत्यादि मन्त्रो दृष्टः। यजु० ८।४२ वेददी० दृश्यः।

**कुसू** पु० कुस–कू। गण्डूपदे (केँचो) हेमच०।

**कुसूल** पु० कुस वा० ऊलच्। कुशूलशब्दार्थे भरतः।

**कुसृति** स्त्री कुत्सिता सृतिः सृ–गतौ भावे क्तिन्। १शाठ्ये अमरः २ इन्द्रजाले हेमच०। कुत्सिता सृतिराचारोऽस्य। ३दुर्वृत्ते त्रि० "कामादयो कुसृतयःखलयोनयश्च" भाग० ८।२३।६

**कुस्तुभ** पु० कुं पृथिवीं स्तुभ्नाति कु+स्तुभ मूल० क। १विष्णौ भरतः। २समुद्रे च शब्दचि०। तस्येदम् अण्। कौस्तुभ मणिभेदे तस्य विष्णुसम्बन्धित्वात् समुद्रोत्पन्नत्वाच्च तथात्वम्। कौस्तुभशब्दे विवृतिः।

**कुसुन्दरी** स्त्री० कुत्सिता सुन्दरी प्रा०स०। धन्याके भरतः

**कुस्तुम्बुरु** न० कुत्सितं तुम्बरु तुबि–अर्दने बा० उरु। जातित्वे ङीष्। धन्याके सि० कौ०।

**कुस्त्री** स्त्री कुगतिस०। कुत्सितायां स्त्रियां। तस्या भावः कर्म वा युवा० अण्। कौस्त्र तद्भावे तत्कर्म्मणि च न०।

**कुस्म** बुद्धिपूर्वकदर्थने चुरा० आत्म० सक० देवहासे अक० सेट्। कुस्मयते अचुकुस्मत नुड्व्यवधान इत्येके।

**कुह** विस्मापने अद० आत्म० सक०सेट्। कुहयते अचुकुहत, कुहयां बभूव आस चक्रे कुहकः कुहनम्।

**कुह** अव्य० किम्+अन्दर्थे ह किमः कुः। कस्मिन्नित्यर्थे "स्मा पृच्छन्ति कुह सेति घोरम्" ऋ० २।१२।५। "क्व वह्निं कुह चित्सवः" ऋ० १।४६।८।छन्दसो-

नास्य प्रयोगः न लोके। कुहयति विस्माययति ऐश्वर्य्येण कुह– अच्। २कुवेरे पु० हेमच०। ३विस्मापके त्रि०।

**कुहक** न० कुह–वा० कुन्। १इन्द्रजाले असद्वस्तुनः सत्त्वेन बोधके व्यापारभेदे। “हैमैरपचैरहितैश्च तस्य मिथ्यास नित्यं कुहकोद्यतैश्च” भा० व० २२२अ०। “धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि” भाग० १,१,१, २वञ्चनायां स्त्री त्रिपका० नेत्त्वम्। इन्द्रजालं च माया व कुहका वापि भीषणा” भा०उ० ५४६१ श्लो०। ३नागभेदे पु०। “ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशोनाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवन्तः” भाग० ५।२४। २९। “द्विजोपसृष्टः कुहकस्तक्षको वा (मां) दशत्वलं गायत विष्णुगाथाः” भाग० १।१९।१४। परीक्षिदुक्तिः

**कुहकस्वन** पुंस्त्री० कुहकः विस्मापकः स्वनोऽस्य। कुक्कुटविहगे हेमच० स्त्रियां ङीष्। [ ङीष्।

**कुहकास्वर** पुंस्त्री कुहकस्वनवत्। कुक्कुटे हारा० स्त्रियां

**कुहक्क** पु० “द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहक्कसंज्ञके” इति सङ्गीतदामोदरोक्ते तालभेदे।

**कुहन** न० ईषत् प्रयत्नेन हन्यते हन–कर्म्मणि वा अप्। १मृद्भाण्डे २काचपात्रे च मेदि० तयोरीषत्प्रयत्नेन हन्यमानत्वात्तथात्वम् कुत्सितमाचारेण हन्ति हन–अच्। ३ईर्षालौ त्रि० मेदि०। कुं पृथ्वीं हन्ति हन–अच्। ४मूषिके ५सर्पे च पुंस्त्री स्त्रियां ङीप्।

**कुहना** स्त्री कुह–युच्। १दम्भचर्य्यायां मेदि० २लोभात् मिथ्येर्य्यापथकल्पनायाम् अमरः (दम्भेन व्रतध्यानमौनादौ भानुदीक्षितः) भावे ल्युट् विस्मायने न० स्वार्थे क अत इत्त्वम्। कुहनिका तत्रार्थे शब्दरत्ना०।

**कुहर** पु० कुं हरति हृ–अच् कुह–विस्मायने क तं राति रा–क वा। १नागभेदे मेदि०। २गह्वरे ३छिद्रे न० मेदि० “तैः किं मत्तकरीन्द्रकुम्भकुहरे नारोपणीयाः कराः” प्रसन्नरा०। ४कर्णे ५कण्ठशब्दे ६गले ७समीपे च न० अजयपालः।

**कुहरित** न० कुहरयति कण्ठशब्दं करोति कुहर+करोत्यर्थे णिच्–भावे क्त। १पिकालापे मेदि०२रतध्वनौ च मेदि० ३शब्दमात्रे विश्वः

**कुहलि** पु० कु+हलि–इन्। १पूगपुष्पिकायां (पान) त्रिका०

**कुहा** स्त्री कुह–क। १कुत्भटिकायाम् २कटुक्यां च (कट्की) शब्दच०।

**कुहु** स्त्री कुह–बा० कु। कुहूशब्दार्थे हेमच०। “कोकिलानां कुहुरवैः सुखैः श्रुतिमनोहरैः” भा० आश्व० ७२४ श्लो०। कुहुकुहायते कुहूशब्दे वक्ष्यमाण भारतवाक्यम् कुहु+डाच् द्वित्व कुहुकुहायते।

**कुहू** स्त्री कुह–कू। नष्टेन्दुकलायामावास्यायाम्। “द्वे ह या अमावास्ये या पूर्व्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूरिति” श्रुतिः। व्यक्तमाह कालमा० व्यासः “दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता” अन्यत्रापि “तिथिक्षये सिनीवाली नष्टचन्द्रा कुहूर्मता। चाङ्गल्येऽपि कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः”। तत्र श्राद्धाधिकारिभेदमाह तत्रैव जावालिः “अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये। आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता”। आदिशब्दात् स्त्रीशूद्रयोरपि ग्रहणम् यथाह तत्रैव लोगाक्षिः “सिनीवाली द्विजैः कार्य्या साग्निकैः पितृकर्मणि। स्त्रीभिः शूद्रैः कुहूः कार्य्या तथा चानग्निकैर्द्विजैः”। अत्र विशेषादिःकालमाधवीयादौ ज्ञेयः। २तदधिष्ठात्र्यां देवपत्न्याम् “सिनीवाली कुहूरिति देवपत्न्याविति” नैरुक्ताः। सा च अङ्गिरसः सुता यथाह भाग० ४,१,२९। “श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः। सिनीवाली कुहूराका चतुर्थ्यनुमतिस्तथा” भा०व०११७अ० तु अन्या अपि तत्कन्या आह यथा “देवी भानुमती नाम प्रथमाङ्गिरसः सुता। भूतानामेव सर्व्वेषां यस्यां रागस्तदाऽभवत्। रागाद्रागेति यामाहुर्द्वितीयाङ्गिरसः सुता। यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः। तनुत्वात् सा सिनीवाली तृतीयाङ्गिरसः सुता। पश्यत्यर्चिष्मती भाभिर्हविर्भिश्च हविष्मती। षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्महिष्मतीम्। महामखेष्वाङ्गिरसोदीप्तिमत्सु महामती। महामतीति विख्याता सप्तमी कथ्यते सुता। यां तु दृष्ट्वा भगवतीं जनः कुहुकुहायते। एकानंशेति यामाहुः कुहूमङ्गिरसः सुताम्।” विवृतमेतत् नीलकण्ठेन

“भानुमती सूर्य्ययुक्ता दिवसाभिमानिनीत्यर्थः। रात्रिमाह भूतानामिति सुषुप्तिकालत्वेन अमनायकत्वात्तस्यां रागोऽभवत् रागात् रागहेतुत्वात् सन्ध्याद्ये रागोपेतत्वाद्वा। कपर्दिनो रुद्रस्य सुतामिव सुतां चन्द्रकलां ललाटे धृतत्वात् दृश्यादृश्यरूपां तत्र हेतुः तनुत्वादिति तेन सूक्ष्मचन्द्रयुक्तत्वं लक्ष्यते चतुर्दशीयुक्तामावास्या सिनीवाली “या पूर्व्वामावास्या सा सिनीवाली योत्तरा

चत्वारोपद्रवयुक्ताः। भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यत्रेति। भवन्ति चात्र। वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्। आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसम्भवः। स मर्म्मोपहिते देशे सिरास्नाय्वस्थिवर्जिते। विकारो योऽनुपशेते तदसाध्यस्य लक्षणम्। क्रमेणोपचयं प्राप्य धातूननुगतः शनैः। न शक्यउन्मूलयितुं वृद्धो वृक्ष इवामयः। स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च। निहन्त्योषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा। अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते। अवद्धमूलः क्षुपको यद्वदुत्पाटने सुखः। त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकीसमः। अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते। कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः। स्थिराश्चिपिटिकावन्तो रोहन्तीति तमादिशेत्। रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम्। त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्द्दिशेत्। दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः। हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढोऽपि दीर्य्यति"।

**कृत्यादूषणी** स्त्री कृत्या दूष्यतेऽनया दूषि–ल्युट् ङीप्। १ओषधिभेदे। "अदो यन्नावनामनाः कृत्यादूषणीश यास्त्वा इहायान्त्वोषधीः" अथ० ८,७,१०, "अनयाऽहमोषध्या सर्व्वाः कृत्या अदूदुषम्" १०,१,४,। आङ्गिरसे २जङ्गिडे ऋषिभेदे पु०। "अङ्गिरा असि जङ्गिड! रक्षितासि जङ्गिड!" इत्युपक्रमे "कृत्याकृत्यास्रिपस्राभीः शतं कृत्याकृतश्च ये। सर्व्वान् विनष्टतेजसोऽरसां जङ्गिडस्करत्" इत्याद्युक्त्वा "कृत्यादूषण एवायमतो अरातिदूषणः" इत्युक्तम्। अथ० १८,२४,१,

**कृत्यादूषि** पु० कृत्यां परकृताभिचारक्रियां दूषयति दूषि–इन्। कृत्यानाशके जङ्गिडे मणिभेदे। "अरणादन्य आभृतः कृत्या अन्योरसेभ्यः। कृत्यादूषिरयं मणिरथो अरातिदूषिः" अथ० २,४,५,६,

**कृत्रिम** न० कृ–क्त्रि मप् च। १विड्लवणे, मेदि० २काचलवणे, ३तुरुष्कनामगन्धद्रव्ये, ४रसाञ्जने च राजनि०। ५सिह्लके पु० मेदि० ७क्रियया निष्पन्नमात्रे त्रि०। "सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यतः" "चित्रं मया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतानाम्। मार्ज्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने" माघः। "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः" व्या०प०। द्वादशपुत्रमध्ये स्वयंकृते "सदृशं तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणोपेतं स विज्ञेयश्च कृत्रिमः" इति मनूक्ते ८पुत्रभेदे पु०। सदृशं सजातीयं "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" उपसंहारात्। "कृत्रिमः स्यात् स्वयं कृतः" या०"। "कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिलोभनेनैव पुत्रीकृतः मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात्" मिता०। कलौ तु "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इति आदित्यपु० दत्तौरसभिन्नानां पुत्रताकरणनिषेधात् न तस्य कर्त्तव्यता एवञ्च "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" कलिधर्म्मप्रतिपादकपराशरवचने क्षेत्रजपदस्य औरसविशेषणत्वं कृत्रिमपदपदस्य च दत्तकविशेषणत्वं कल्पनीयमिति दत्तचन्द्रिका गौडदेशीयानां तथाचारश्च। पराशरवचनस्थकृत्रिमपदं न यौगिकं किन्तु परिभाषिकस्वयंकृतविषयमेव अन्यथा दत्तकस्य कृत्रिमत्वविशेषणं व्यर्थं स्यात् अतः आदित्यपुराणवचनस्थदत्तपदस्य कृत्रिमोपलक्षणपरता युक्तेति कलौ कृत्रिमपुत्रस्यापि ग्राह्यतेति दत्तकमीमांसादयः। पाश्चात्त्यादिदक्षदेशेषस्य प्रचारः। अनयोर्युक्तत्वायुक्तत्वशङ्कावेऽपि आचारस्य बलवत्त्वाद्व्यवस्था। अयञ्च "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादावान्धवाश्च षट्" मनुना बन्धुदायहरत्वेनोक्तः। स्वार्थे क। तत्रार्थे। ९सिह्लके पु० जटाधरः,। तुरुष्कनामगन्धद्रव्ये राजनि०।

**कृत्रिमधूप** पु० कर्म्म०। नानासुगन्धिद्रव्यसंयोगजाते दशाङ्गयोडशाङ्गादौ धूपे अमरः।

**कृत्रिमपुत्र** पु० कर्म्म०। १कृत्रिमे पुत्रभेदे। कृत्रिमसुतादयोऽप्यत्र। स्वार्थे क। तत्रार्थे वस्त्रादिरचितपुत्तलिकायाञ्च। "सा कन्दुकैः कृत्रिमपुत्रकैश्च" कुमा०

**कृत्वन्** त्रि० कृ–क्वनिप् तुक् च। कर्त्तरि। "तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने" ऋ०८,२५,२४, स्त्रियां ङीप् रश्चान्तादेशः। "महासिसेम्नः सहकृत्वरी बहुम्–यशःपटं तद्भटचातुरीतुरी" नैष०।

**कृत्वा** अव्य०कृ–कृतौ हिंसायां वा क्त्वा। १विधायेत्यर्थे "कृत्वा वधार्थं रचितं पुरस्तात्" भट्टिः। २हिंसित्वेत्यर्थे च।

**कृत्वी** स्त्री व्यासपुत्रशुकदेवस्य १कन्यायाम्। "पराशरकुलोद्भूतः शुकोनाम महातपाः। भविष्यति युगे तस्मिन् (द्वापरे) महायोगी द्विजर्षभः। व्यासादरण्यां सम्भूतो

विधूमोऽग्निरिव ज्वलन्। स तस्यां पितृकन्यायां (उत्तथ्यकन्यायाम्) पीवर्य्यां जनयिष्यति। कन्यां पुत्रांश्च चतुरो योगधर्मांन् महाबलान्। कृष्णं गौरं प्रभुं शम्भुं कृत्वीं कन्यां तथैव च। ब्रह्मदत्तस्य जननीं महिषीं त्वणुहस्य च" हरिवं० १८अ०। "अणुहोनाम तस्यासीत् पुत्रः परमधार्म्मिकः। प्रादात् कन्यां शुक स्तस्मै कृत्वीं पूजितलक्षणाम्। सत्यशीलगुणोपेतां योगधर्म्मरतां सदा" हरिवं० २३अ०

वेदे स्नात्वादि० आत्तद्स्त्यम्। २कर्त्तव्यार्थे च। "अपाग्रूहन्नमृतां मर्त्येभ्यः कृत्वी" ऋ० १०।१७।२। "कृत्वी कृत्वा" भा० "जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी" १०।१५।१२। ३कर्म्मणि क्ती० "निरु० "अभरत् वः कृत्व्रं मसि" ऋ० १।१६।१२। "कृत्व्रा कर्त्तव्या एमसि एम" भा०

**कृत्व्र** त्रि० कर्त्तुं कर्म्म अर्हति यत्। कर्म्मार्हे कर्म्मकारके "अश्वमेऽन्ने राजी न कृत्व्रः" ऋ० ६।२।८ "कृत्व्रः हविर्वहनादीनां कर्म्मणां कर्त्ता" भा०

**कृत्स** न० कृन्तति कृणत्ति वा कृत–छेदने वेष्टने वा सः किच्च। १जले२समुदाये ३पापे पु० सि० कौ०

**कृत्स्न** न० कृत–क्स्न। १सकले २जले ३कुक्षौ पु०। ४व्याप्ये त्रि० मेदि० "तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्" गीता। कृत्स्नस्य भावः ष्यञ्। कार्त्स्न्य न० तल्। कृत्स्नता स्त्री त्व कृत्स्नत्व। न० साकल्ये। "कार्त्स्न्यप्राप्त्योः सम्पद्यमाने साति:। जलसात् सम्पद्यते

**कृदर** पु० कृ–अरन् "कृदरादयश्च" उणा० नि०। कुशूले धान्यकोष्ठे उज्ज्वल०। २दिग्वस्त्रे च न० निरु०। ३स्तेहे पु० निरु०।

**कृधु** त्रि० कृत–उन् धा० किन् पृषो०। ह्रस्वे निरु०। "यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत्" यजु०२३,२८, "प्रतीत्येन कृधुना तृपासः" ऋ०४,५,१४, कृधुना ह्रस्वेन" भा० "मम स्वनात् कृधुकर्णो भयाते" ऋ०१०,२७,१३ स्वार्थे क। तत्रार्थे। ततः अतिशायने इष्ठन् ऋतोरः। क्रधिष्ठ। ईयसुन्। क्रधीयस् अतिशयेनह्रस्वे त्रि० ईयसुनि स्त्रियां ङीप्। भावे इमनिच् क्रधिमन् पु० ष्यञ् कार्ध्य न० ह्रस्वत्वे

**कृन्तत्र** न० कृत–कत्रन् मुम् च। लाङ्गले सि०कौ०।

**कृन्तन** न० कृत–ल्युट् वा० मुम् च। १छेदने कर्त्तने "कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः। गावाभौचे न कर्त्तव्यं पठनं पाठनं तथा" नारदः। कर्त्तरि ल्यु मुम् च। २छेदके त्रि० करणे ल्युट्। वा० मुम् च। ३छेदनसाधने "नातः परं कर्म्मनिबन्धकृन्तनम्" भाग० ६,२,४, स्त्रियां ङीप्। नखनिकृन्तनी

**कृन्तविचक्षणा** स्त्री कृत (छिन्धि) विचक्षण। इत्युच्यते यस्यां क्रियायां मयू० स०। विचक्षणसम्बोधनकच्छेदनार्थनिर्देशक्रियायाम्।

**कृप** कल्पने(सम्पत्तौ) भ्वा०आत्म०लुङि लुटि लृटि लृङि च उभ० इतादि अक० वेट्। अस्य ऋतः रकारस्थाने लः। कल्पते। अकल्पत्–अकल्पिष्ट–अक्लृप्त। कल्प्तासि कल्पितासे कल्प्स्यति कल्प्स्यते–कल्पिष्यते। कल्पितव्यः–कल्प्तव्यः कल्पनम् कल्पः। क्लृप्तः क्लृप्तिः। णिचि। कल्पयति ते अचकल्पत् त–अचीक्लृपत् त। कल्पितः कल्पना कल्पयिता। "क्लृपि सम्पद्यमाने" वार्त्ति०। एतद्योगे सम्पद्यमाने कर्त्तरि चतुर्थी। भक्तिर्ज्ञानाय कल्पते। "कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्" "क्लृप्तेन सोपानपथेन" रघुः। "रचितमक्लृप्तम्" भट्टिः "प्रजापतिकल्पितयज्ञभागम्" कुमा०। छेदने च सक० "क्लृप्तकेशनखश्मश्रुः" मनुः "कल्पनं छेदनम्" कुल्लू०।

अनु+प्रथमविधानप्रतिनिधीकरणे सक० "प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते" स्मृतिः।

अव+अवधारणे "अनवक्लृप्तावेयः" सि० कौ०।

आ+भूषणे सक० आकल्पः भूषा

वि+ कल्पि–संशये विकल्पयति संशेते इत्यर्थः।

सम्–कल्पि इदं करिष्यामीत्येवंरूपे मानसव्यापारभेदे। "कामः संकल्पोविचिकित्सेत्यादि" श्रुतिः "मनसा संकल्पयति वाचाऽभिलपति" श्रुतिः। मानसकर्म्माभिलापने "संकल्पेन विना राजन्! यत्किञ्चित् कुरुते नरः" ति०त०।

**कृप** दौर्बल्ये कद्० चुरा० उभ० अक० सेट्। कृपयति ते अचिकृपत्[त]यति ते कल्पति अचकल्पत्अचीक्लृपत्–त अकल्पीत्।

**कृप** स्तुतौ चित्रीकरणे वा चुरा० पक्षे भ्वा० पर० सेट्। क–

**कृप** पु० कृ०कृप–अच्। राजर्षिभेदे "यथा रुशमं श्यावकं कृपमिन्द्र! प्राव:" ऋ० ८,३,१२, "रुशमं श्यावकं कृपं चैतन्नामकांस्त्रीन् ईराजर्षीन्" यथा प्राव:" भा०। कृपा अस्यस्य पालनसाधनत्वेन अर्श० अच्। शरद्वतो गौतमस्य २पुत्रे ३तत्सुतायां स्त्री ङीप्। यथा च तयोरुत्पत्तिकथाप्रथा च तथा भा०आ०१२०अ०उक्ता यथा "तपस्यापि मम ब्रह्मन्! श्रुतं वक्तुमर्हसि। शरस्तम्बात् कथं जज्ञे कृपः साऽस्मात्थयामप्यान्। वैशम्पायन

उवाच । महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः । पुत्रः किल महाराज ! जातः सह शरैर्विभो ! । न तस्य वेदाध्ययने तथा बुद्धिरजायत । यथाऽस्य बुद्धिरभवद्धनुर्वेदे परन्तप ! । अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः । तथा स तपसोपेतः सर्वाण्यस्त्राण्यवाप ह । धनुर्वेदपरत्वाच्च तपसा विपुलेन च । भृशं सन्तापयामास देवराजं स गौतमः । ततो जानपदीं नाम देवकन्यां सुरेश्वरः । प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ! । सा हि गत्वाश्रमं तस्य रमणीयं शरद्वतः । धनुर्वाणधरं बाला लोभयामास गौतमम् । तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने । लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत् । धनुश्च शरास्तस्य कराभ्यामपतद्भुवि । वेपथुश्चापि तां दृष्ट्वा शरीरे समजायत । स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात् । अवतस्थे महाप्राज्ञो धैर्येण परमेण ह । यस्तस्य सहसा राजन् ! विकारः समदृश्यत । तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत । धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च । स विहायाश्रमन्तञ्च ताञ्चैवाप्सरसं मुनिः । जगाम रेतस्तत्तस्य शरस्तम्बे पपात च । शरस्तम्बे च पतितं द्विधा तदभवन्नृप ! । तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः । मृगयाञ्चरतो राज्ञः शान्तनोस्तु यदृच्छया । कश्चित् सेनाचरोऽरण्ये मिथुनं तदपश्यत । धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च । ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य ह । स राज्ञे दर्शयामास मिथुनं सशरं धनुः । स तदादाय मिथुनं राजा च कृपयान्वितः । आजगाम गृहानेव मम पुत्राविति ब्रुवन् । ततः संवर्द्धयामास संस्कारैश्चाप्ययोजयत् । प्रातीपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत् । गौतमोऽपि ततोऽभ्येत्य धनुर्वेदपरोऽभवत् । कृपया यन्मया बालाविमौ संवर्द्धिताविति । तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः । गोपितौ गौतमस्तत्र तपसा समविन्दत । आगत्य तस्मै गोत्रादि सर्वमाख्यातवांस्तदा । चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च । निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा । सोऽचिरेणैव कालेन परमाचार्यतां गतः । ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः । धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः । वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः" ।

"अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् । तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः । शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल । शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् । तद्दृष्ट्वा कृपयाऽगृह्णाच्छान्तनुर्मृगयां चरन् । कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी" भाग० ९,२१, । स च रुद्रांशसम्भूतः यथाह "यस्तु राजन् ! कृपोनाम ब्रह्मर्षिरभवत् क्षितौ । रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषम्" भा० आ० ६७अ० । स च चिरजीवी । "अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः" पुरा० । "ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् । प्रह्लादञ्च हनूमन्तं विभीषणमथार्चयेत्" ति० त० गर्गः । ४कर्म्मणि च "यमासा कृपनीडं भासा केतुम् वर्द्धयन्ति" ऋ० १०,२०,२, "कृपनीडं कर्म्मस्थानम्" भा० ।

कृपण त्रि० कृप–क्युन् न लत्वम् । अदातरि कदर्य्ये अमरः "कृपणेन समोदाता न कश्चिद्भुवि विद्यते । अनश्नन्नेव वित्तानि यत् परेभ्यः प्रयच्छति" व्यासः । "दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति" व्यासः । २मन्दे त्रि०मेदि० "कृपणाः फलहेतवः" गीता । ३महाव्यसनप्राप्ते दीने । "महद्धा व्यसनं प्राप्तोदीनः कृपण उच्यते" । रामा० । श्रेण्या०अभूततद्भावेऽर्थेऽस्य कृतादिभिः स० । कृपणकृतः । कृपणस्य भावः ष्यञ् । कार्पण्य दीनतायां न० "कार्पण्यदोषोपहतस्वभावः" गीता । तल् । कृपणता स्त्री, त्व कृपणत्व न० तत्रार्थे । ४दैन्ये न० । "वक्तुं न स्पृहयामहे सकृपणं देहीति दीनं वचः" शान्तिश० । सुखा० वेदनायाम् क्यङ् । कृपणायते दैन्यमनुभवतीत्यर्थः । सुखा० अस्त्यर्थे इनि । कृपणिन् दैन्ययुक्ते त्रि० स्त्रियां ङीप् । ५क्रिमौ पु० मेदि० । कृतः पणोयस्य वेदे नि० तलोपः । ६कृतपणे पणक्रीते दासादौ "एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः" वृ०उ० । "कृपणः पणक्रीत इव दासादिः" । भा०

कृपा स्त्री कृप–भिदा० अङ् "कृपेः संप्रसारणञ्च" गणसू० संप्र० । अनुपेक्षायां प्रत्युपकारानपेक्षया परदुःखप्रहरणेच्छायाम् अमरः "मिथुने कृपावती" कुमा० ।

कृपाण पु० कृपां नुदति नुद–ड संज्ञायां णत्वम् । १खड्गे अमरः । गौरा० ङीष् । २कर्त्तर्याम् स्त्री अमरः । ३छुरिकायाम् स्त्री मेदि० । स्वार्थे क । कृपाणक । खड्गे पु० टाप् अत इत्वम् । कृपाणिका छुरिकायां स्त्री हेमच०

कृपाद्वैत पु० बौद्धभेदे हेम० । [कृपायुक्ते अमरः ।

कृपालु त्रि० कृपां लाति ला–आदाने मित० डु । दयालौ

**कूपीट** न० कूप–कीटन्। १उदरे २जले च मेदि०। ३वने ४स्वने च शब्दरत्ना०। कूपीटयोनिः।

**कूपीटपाल** पु० कूपीटं पालयति पालि–अण् उप०स०। १स-मुद्रे। २कर्णपाते नौकाङ्गे काष्ठभेदे च मेदि० ३वायौ शब्दरत्ना० तस्य उदरजलयोःपालकत्वात् तथात्वम्।

**कूपीटयोनि** पु०कूपीटस्य जलस्य योनिः कूपीटं काष्ठं योनि रस्य वा। वह्नौ अमरः"अग्नेरापः इति श्रुतेस्तस्य जल हेतुत्वात् काष्ठोद्भूतत्वाच्च तथात्वम्।तत्पुरुषे स्त्री इति भेदः

**कृपीपति** पु० ६त०। द्रोणाचार्य्ये शब्दमाला। तस्या-स्तत्पतित्वकथा कृपशब्दे दृश्या। [ कृपीतनयादयोऽप्यत्र

**कृपीसुत** पु० ६त०। भारतप्रसिद्धे अश्वत्थाम्नि त्रिका०

**कृ(क्रि)मि** पु० क्रम–इन् अतइत्वम्"भ्रमेः सम्प्रसारणञ्च" उ० इत्यतः सम्प्रसारणानुवृत्तौ सम्प्रसा। १क्षुद्रजन्तुभेदे उज्ज्व-ल०। "लुम्पन्ति कीटकृमयः परितश्चरन्ति" नागार्ज्जनीये अकारयुक्तपाठः। २लाक्षायां ३कृमियुक्ते ४खरे गर्द्दभे च मेदि०। ५रोगभेदे पु०। तन्निदानादि सुश्रुते उक्तं यथा "अथातः कृमिरोगप्रतिषेधमध्यायं व्याख्यास्यामः। अजीर्णाध्यश-नासात्म्यविरुद्धमलिनाशनैः। अव्यायामदिवास्वप्नगुर्व्व-तिस्निग्धशीतलैः। माषपिष्टान्नविदलविसशालूककशेरुकैः। पर्णशाकसुरासूक्तदधिक्षीरगुडेक्षुभिः। पललानूपपिशित-पिण्याकपृथुकादिभिः। स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति। कृमीन् बहुविधाकारान् करोति विविधाश्रयान्। आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः। विंशतेः कृमि-जातीनां त्रिविधः सम्भवः स्मृतः। पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम्। अथवा त्रिविधाः शिष्या विंशतिगण्डू-पदाकृतयः। चूरवो द्विरुखाश्चैव सप्तैवैते पुरीषजाः। श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च। तेषामेवापरे पुच्छैः पृ-थवश्च भवन्ति हि। शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलस-क्षयाः। प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः। रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः। शूलाटोपशकृ-द्भेदपक्तिनाशकराश्च ते। दर्भपुष्पाः१ महापुष्पाः२ प्रलूनाः३ चिपिटाः४स्तथा। पिपीलिकाः५ दारुणाश्च६ कफकोपसमु-द्भवाः। रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः। मूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा। मज्जादा१ नेत्रलेढार२स्तालुश्रोत्रभुजश्च३स्तथा। शिरोहृद्रोगवमथुप्रति-श्यायकराश्च ते। केशरोमनखादाश्च४ दन्तादाः५ किक्कि-शाः६स्तथा। कुष्ठजाश्च परीसर्पा७ ज्ञेयाः शोणितसम्भ-वाः। ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा। रक्ता-धिष्ठानजान् प्रायोविकारान् जनयन्ति ते। माषपिष्टान्न-लवणगुडशाकैः पुरीषजाः। मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः। विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि। ज्वरो विवर्णता शूलं हृद्रोगः सदसंभ्रमः। भक्तद्वेषोऽतिसारश्च सञ्जातकृमिलक्षणम्। इत्युक्तास्त्रयो-दशाद्यास्तु कृमीणां परिकीर्त्तिताः। केशादाद्यास्त्व-दृश्यास्ते द्वावाद्यौ परिवर्जयेत्। एषामन्यतमं ज्ञात्वा जिघांसुः श्लेष्ममातरम्"। "गुदन्त्यामन्यं दंशा मश-कामत्कुणादयः। रुदन्तं विगतज्ञानं क्रिमयः क्रिमिकं यथा" भाग०,३,३१,२८, स्वार्थे क तत्रार्थे "ततो भक्षयतस्तस्य फलात् कृमिरभू-दणुः। सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम्"। "एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य तम्। कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः" भा० आ० ४३अ०।

**कृमिकण्टक** न० कृमौ कृमिरोगे कण्टकमिव तन्नाशक त्वात्। १विडङ्गे २चित्राङ्गे (चिता) ३उदुम्बरे च मेदि० तेषां तन्नाशकत्वात् तथात्वम्।

**कृमिकर** पु० कृमिं करोति कृ–ताच्छील्यादौ टच। कीट-भेदे "कोठागारी कृ(क्रि)मिकरोयश्च मण्डलपुच्छकः" सुश्रु० शासनाशनकीटोक्तौ

**कृमिकर्ण(क)** पु० कृमियुक्तः कर्णोऽत्र वा कप्। सुश्रुतोक्ते कर्णरोगभेदे। "यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः। तदञ्जनत्वात् श्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णकस्तु सः"। "कृमि-कर्णप्रतीकारो विद्रधिर्हि विधिस्तथा"। "कृमिकर्णक-नाशार्थं कृमिघ्नं योजयेद्विधिम्" इति च सुश्रु०।

**कृमिकोषोत्थ** न० कृमेः कोषादुत्तिष्ठति उद्+स्था–क ५त०। कौषेये (रेशमी कापड) वस्त्रे अमरः।

**कृमिग्रन्थि** पु० सुश्रुतोक्ते सन्धिगतरोगभेदे। तद्विवृतिर्यथा "अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः पूयालसः सोपनाहः स्रावः पर्वणिकालजी। क्रि(कृ)मि ग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नवेति" विभज्य क्रि (कृ)मिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः कृमयः सन्धि जाताः"। सुश्रु०

**कृमिघ्न** पु० कृमिं हन्ति हन–ताच्छील्यादौ टक् "हन्तेरत्-पूर्व्वस्य" पा०नियमात् न त्वम्। १विडङ्गे अमरः २प-लाण्डौ (पेयाज) ३कोलकन्दे ५पारिभद्रे (पालिदामां दार) ६भल्लातके (भेला) च राजनि० तेषां कृमिघाति-

तथा तथात्वम् ७हरिद्रायां स्त्री० भावप्र० अजा० टाप्। ८विडङ्गे स्त्री० ङीप् राजनि०

कृमिज न० कृमिभिर्जन्यते कृमेर्जायते वा जन–ड। १अगुरुणि अमरः। २कृमिजातमात्रे त्रि० ३लाक्षायां स्त्री० राजनि०

कृमिजग्ध न० कृमिभिर्जग्धम्। उपचारात् तज्जाते अगुरुचन्दने राजनि०

कृमिजलज पु० कृमिरिव जलजः। कृमिशङ्खे राजनि०

कृमिण त्रि० कृमिरस्त्यस्य पामा० न णत्वम्। कृमियुक्ते

कृमिदन्तक पु० कृमियुक्तो दन्तोऽत्र। दन्तरोगभेदे "कृष्णश्छिद्रश्चलः स्रावी ससंरम्भो महारुजः। अनिमित्तरुजो वातात् स ज्ञेयः कृमिदन्तकः" तल्लक्षणम् "शौषिरो गलशालूकं कण्टका कृमिदन्तकः" क्षुद्ररोगगणनायाम् सुश्रु०

कृमिफल पु० कृमयः फलेऽस्य। उडुम्बरे शब्दचिन्ता०

कृमिभोजन पु० कृमिभिर्भुज्यतेऽत्र भुज–आधारे ल्युट् ६त०। नरकभेदे तामिस्रान्धतामिस्राद्युपक्रमे "अन्धकूपकृमिभोजन इत्यादिना विभज्य भाग० ५।२६।२४ तत्स्वरूपादुक्तं यथा
"यस्त्विह वा असंविभज्याश्नाति यत् किञ्चनोपनमत निर्मितपञ्चयज्ञोवायसंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति। तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते"।
कृमिभक्षादयोऽप्यत्र विष्णु पु० तन्नामतयैव कीर्त्तनात्

कृमिमत् त्रि० कृमि+अस्त्यर्थे मतुप् मोपधत्वेऽपि यवादि० न मस्य वः। कृमियुक्ते स्त्रियां ङीप्।

कृमिरिपु ६त०। विडङ्गे शब्दरत्ना०। कृमिशत्रुप्रभृतयोऽप्यत्र

कृमिल त्रि० कृमिं लाति ला–क। कृमियुक्ते बहुप्रसवायां स्त्रियां स्त्री० हेमच०

कृमिलाश्व पु० आजमीढवंश्ये नृपभेदे "आजमीढात्तु नीलिन्यां सुशान्तिरुदपद्यत। पुरुजातिः सुशान्तेश्च बाह्याश्वः पुरुजातितः। बाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः। मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा। यवीनरश्च विक्रान्तः कृमिलाश्वश्च पञ्चमः" हरिवं० ३२अ०

कृमिलोदर त्रि० कृमिं लाति ला–क तादृशमुदरमस्य। कृमियुक्तोदररोगभेदयुक्ते। "मृद्भाऽसृक्संश्लेषसंयोजायते कृमिलोदरः" शाता०।

कृमिवारिरुह पु० कृमिरिव वारिरुहः। कृमिशङ्खे राजनि०

कृमिवृक्ष पु० कृमिप्रधानो वृक्षः। कोशाम्रे भावप्रकाशः।

कृमिशङ्ख पु० कृमिरिव शङ्खः। शङ्खभेदे राजनि०

कृमिशुक्ति स्त्री कृमिरिव शुक्तिः। जलशुक्तौ राजनि०

कृमिशैल पु० कृमीणां शैल इव। वल्मीके। कृमिपर्व्वतादयोऽप्यत्र पु० [कमसुद्गे राजनि०।

कृमीलक पु० कृमीन् ईरयति जनयति ईर–ण्वुल् रस्य लः।

कृमुक पु० क्रमुक+पृषो०। गुवाकवृक्षे तस्योत्पत्तिकथा शत० ब्रा० ६।६।२।११
"स कार्मुकी स्यात्। देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त ते देवा अग्निमनीकं कृत्वा असुरानभ्यायंस्तस्यार्चिषः प्रगृहीतस्यासुरा अपं प्राहरंस्तद्रपां प्रत्यतवत् स कृमुकोऽभवत्तस्मात् मधुरः रसोऽपि तस्मादु लोहितो ऽर्चिर्हि स एषोऽग्निरेव यत् कृमुकोऽग्निमेवास्मिन्नेतत् सम्भृतिं दधाति"। कृमुकस्येयम् अण् ङीप्। कार्मुकी कृमुकसम्बन्धिन्यां समिधि स्त्री

कृव कृवी हिंसे करणे च इदित् स्वा० प० सक० सेट्। ओ त इत्यादेशः। कृणोति–अकृणोत् अकृणीत्। इदित्त्वात् कृण्व्यते इत्यत्र न नलोपः। [(तात) सि०कौ०।

कृवि पु० करोत्यनेन कृ–वि किच्च। तन्तुवयनसाधनद्रव्ये तन्त्रे

कृश तनूकरणे दिवा० पर० सक० सेट्। कृश्यति इरित् अकृशत् अकर्शीत्। णिचि कर्शयति ते अचीकृशत्–त अचकर्शत्–त। कर्शयाम् बभूव आस चकार चक्रे। कृशः।

कृश त्रि० कृश–क्त नि०। १अल्पे, २सूक्ष्मे च। "आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः" इत्यायासकृशं तन्तु" "सर्व्वत्र्यस्यैव सर्व्वत्र ब्राह्मणं वा बहुश्रुतम्। नावमन्येत वै भूयः कृशानपि कदाचन" मनुः "ब्राह्मणस्य हरन्तेह! कृशवृत्तेः कदाचन" भा० आनु० ६२अ०। ३सूक्ष्मे कृशोदरी। कृशस्य भावः इमनिच् ऋविभत् तद्भावे पु०। ष्यञ्। कार्श्य न०। तल्। कृशता स्त्री, त्व कृशत्व न० तद्भावे "त्वयैवं कृशता कृता" भा० द्रो०। अतिशयेन कृशः इष्ठन् क्रशिष्ठ ईयसुन् क्रशीयस्। अतिशयकृशे त्रि० ईयसौ स्त्रियां ङीप्।

कृशर पु० कृशमल्पमात्रां राति रा–क। "तिलतण्डुलसंमिश्रः कृशरः परिकीर्त्तितः" स्मृत्युक्ते १पक्वान्नभेदे हेमच०। (खिचड़ी) ख्याते २पक्वान्नभेदे स्त्री टाप् भावप्र० कृतान्नशब्दे लक्षणादि दृश्यम्। कृशरश्च शनैश्चराय ग्रहयज्ञे बलित्वेन देयः यथाह मत्स्यपुरा० "गुडौदनं रवेर्दद्यात् सोमाय घृतपायसम्। संयावकं कुजे दद्यात्

नश्यैव मण्डूकिकाऽज्वरादिभिः। भ्रामवेष्टं सुतुल्यं पाशे गोविन्नशान्तये। गवामङ्गे तदा दद्यात् कार्त्तिकप्रथमे दिने। तैलं हरिद्रया युक्तं मिलित्वा कुङ्कुमैः सह। तत्रलोष्ट्रादिकं तत्र गवामङ्गे प्रदापयेत्। छेदनञ्च प्रकुर्वीत लाङ्गूले कचकर्णयोः। सर्वा गोजातयः हृष्टा भवन्त्येतेन तद्गृहे। नानाव्याधिनिर्म्मुक्ता वर्षमेकं न संशयः"।

अथ गवां यात्राप्रवेशकालादि। पूर्वात्रयं धनिष्ठा च इन्द्राग्निसौम्यशाक्रकाः। एते शुभप्रदा नित्यं गवां यात्राप्रवेशयोः। उत्तरात्रयरोहिण्यां सिनीवाली चतुर्द्दशी। पुष्यश्रवणहस्तेषु चित्रायामष्टमीषु च। गवां यात्रां न कुर्वीत प्रस्थानं वा प्रवेशनम्। पशवस्तत्र नश्यन्ति ये चान्ये तृणचारिणः। अर्कार्किकुजवारेषु गवां यात्राप्रवेशयोः। गमने गोविनाशः स्यात् प्रवेशे स्वामिनो वधः"।

अथ गोमयकूटोद्धारः "माघे गोमयकूटन्तु संपूज्य श्रद्धयान्वितः। सारं शुभदिने प्राप्य कुद्दालैरुत्खनेत्ततः। रौद्रे संशोष्य तत् सर्वं कृत्वा गुण्डकरूपकम्। फाल्गुने प्रतिकेदारे गर्त्तं कृत्वा निधापयेत्। ततो वपनकाले तु कुर्य्यात् सारविमोचनम्। विना सारेण यद्धान्यं वर्द्धते न फलत्यपि"।

अथ हलसामग्रीकथनम् "ईषा युगो हलस्थाणुर्निर्योलस्तस्य पाशिका। अड्डचल्लश्च शौलश्च पच्चनी च हलाष्टकम्। पञ्चहस्ता भवेदीषा स्थाणुः पञ्चवितस्तिकः। सार्द्धहस्तस्तु निर्योलो युगः कर्णसमानकः। निर्योलपाशिका चैव अड्डचल्लस्तथैव च। द्वादशाङ्गुलमानो हि शौलोऽरत्निप्रमाणकः। सार्द्धद्वादशमुष्टिर्वा कार्य्या वा नवमुष्टिका। दृढ़ा पञ्चनिका ज्ञेया लौहाग्रा वंशसम्भवा। बन्धो मण्डलाकारः सततः पञ्चदशाङ्गुलः। योत्रं हस्तचतुष्कञ्च रज्जुः पञ्चकरात्मिका। पञ्चाङ्गुलाधिको हस्तो हस्तो वा फालकः स्मृतः। अर्द्धस्य पञ्चाशी पाशिका च नवाङ्गुला। एकविंशतिशल्यस्तु विद्धकः परिकीर्त्तितः। नवहस्ता तु मदिका(मइ)प्रशस्ता कृषिकर्म्मसु। इयं हि हलसामग्री पराशरमुनेर्म्मता। सुदृढ़ा कर्षकैः कार्य्या शुभदा कृषिकर्म्मणि। असुदृढ़ा युज्यमाना सा सामग्री वाहनस्य च। विघ्नं पदे पदे कुर्य्यात् कर्षकाले न संशयः"।

अथ हलप्रसारणकालादि "अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ। पुष्याश्रवणहस्तेषु कुर्य्याद्धलप्रसारणम्। हलप्रसारणं कार्य्यं कर्षकैः शस्यवृद्धये। शुक्रेन्दुजीववारेषु शशिजस्य विशेषतः। भौमार्कदिवसे चैव तथैव शनिवासरे। कृषिकर्म्मसमारम्भो राज्योपद्रवमादिशेत्। दशम्येकादशी चैव द्वितीया पञ्चमी तथा। त्रयोदशी तृतीया च सप्तमी च शुभावहा। शस्यच्छेदः प्रतिपदि द्वादश्यां वधबन्धनम्। बहुविघ्नकरी षष्ठी कृष्णः कृषकनाशिनी। हन्त्यष्टमी बलीवर्द्दान् नवमी शस्यघातिनी। चतुर्थी कीटजननी सर्वं हन्ति चतुर्द्दशी। वृषे मीने च कन्यायां युग्मे धनुषि वृश्चिके। एतेषु शुभलग्नेषु कुर्य्याद्धलप्रसारणम्। मेषलग्ने पशुं हन्यात् कर्कटे जलजात् भयम्। सिंहे चौरभयञ्चैव कुम्भे सर्पभयं तथा। मकरे शस्यनाशः स्यात् तुलायां प्राणसंशयः। तस्माल्लग्नं प्रयत्नेन कृष्यारम्भे विचारयेत्। शुभेऽर्के चन्द्रसंयुक्ते शुक्लयुग्मेन वाससा। शुक्लपुष्पैश्च गन्धैश्च पूजयित्वा यथाविधि। पृथिवीं हलसंयुक्तां पृथुञ्चैव प्रजापतिम्। अग्नेः प्रदक्षिणं कृत्वा भूरि दत्त्वा च दक्षिणाम्। फालाग्रं स्वर्णसंयुक्तं कृत्वा च मधुलेपनम्। अग्नेः क्रोड़े वामपार्श्वे कुर्य्याद्धलप्रसारणम्। कर्त्तव्यो वासवो व्यासः पृथुरामः पराशरः। सम्पूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रसारणम्। कृष्णौ वृषौ वृषे श्याम्यौ रक्तौ वा कृष्णलोहितौ। स्वर्णपार्श्वौ तयोः श्याम्यौ नवन्या च घृतेन च। उत्तराभिमुखो भूत्वा इन्द्रायार्घ्यं निवेदयेत्। शुक्लपुष्पसमायुक्तं दधिक्षीरसमन्वितम्। सुवृष्टिं कुरु देवेश ! गृहाणार्घ्यं शचीपते !। निविष्टो विष्टरे भक्तः संस्थाप्य जानुनी क्षितौ। प्रणमेद्वासवं देवं मन्त्रेणानेन कर्षकः। वृषो मधुकटिर्वर्ज्य्यश्छिन्नलाङ्गूलकर्षकः। सर्वशुक्लतया वर्ज्यः कृषकैर्हलकर्म्मणि। हलप्रसारणं कार्य्यं नीरुग्भिर्वृषकर्षकैः। छिद्ररेखा न कर्त्तव्या यथा प्राह पराशरः। एका तिस्रस्तथा पञ्च हलरेखाः प्रकीर्त्तिताः। एका जयकरी रेखा तृतीया सार्थसिद्धिदा। पञ्चमाख्या तु या रेखा बहुशस्यप्रदायिनी। हलप्रवाहकाले तु कूर्म्म उत्पाटयेद्यदि। स्वामिनी म्रियते तस्य तथा चाग्निभयं भवेत्। फालोत्पाटे च भङ्गे च देशत्यागो भवेद्ध्रुवम्। शाङ्गलो भिद्यते यापि प्रभुस्तस्य विनश्यति। ईषाभङ्गो भवेद्वापि कृषको जीवनाशनः। भ्रातृनाशो युगे भग्ने शौले च म्रियते वृषः। योत्रच्छेदे च रोगः स्यात् शस्यहानिश्च जायते। निपाते कर्षकस्यापि कष्टं स्यात् राजमन्दिरे। हलप्रवाहकाले तु गौरेकः प्रपतेद्यदि। ज्वरातिसाररोगेण मानुषो

म्रियते तदा । हले प्रवहमाने तु हयो धावन् यदि व्रजेत् । कृषिभङ्गो भवेत्तस्य पीड़ा चापि शरीरजा । हलप्रवाहमात्रन्तु शीरेको नर्द्दते यदि । नाशालीढ़ं प्रपद्येत तदा शस्यं चतुर्गुणम् । प्रवाहान्मुक्तमात्रन्तु शीरेकः स्वनते यदि । कन्यस्य लेखनं कुर्य्यात् तदा शस्यं चतुर्गुणम् । हले प्रवहमाने तु शकन्मूत्रं यदा स्रवेत् । शस्यवृद्धिः शकृत्पाते मूत्रे वन्ध्या प्रजायते । हलप्रसारणं येन न कृतं मृगकुम्भयोः । कुतस्तस्य कृषाणस्य फलाशा कृषिकर्म्मणि । हलप्रसारणं नैवं कृत्वा यः कर्षणं चरेत् । केवलं बलदर्पेण स करोति कृषिं वृथा । स्यात् सुवर्णसमा माघे कुम्भे रजतसन्निभा । चैत्रे ताम्रसमा ख्याता धान्यतुल्या च माधवे । ज्यैष्ठे मृदेव विज्ञेया आषाढ़े कर्द्दमाह्वया । निष्फला कर्कटे चैव हलैरुत्पाटिता तु या"। तथाच पराशरः ।"हेमन्ते कृष्यते हेम । वसन्ते ताम्ररौप्यकम् । धान्यं निदाघकाले तु दारिद्र्यन्तु घनागमे" ।

अथ बीजस्थापनविधिः "माघे वा फाल्गुने वापि सर्व्वबीजमत्र सङ्ग्रहः । शोषयेदातपे सम्यक् नीहारे विनिधापयेत् । बीजस्य पुटिकां कृत्वा निधानं तत्र शोधयेत् । बीजं निधानसंमिश्रं फलहानिकरं परम् । एकरूपन्तु यद्बीजं फलं फलति निर्भरम् । एकरूपं प्रयत्नेन तस्माद्बीजं समाहरेत् । सुदृढं पुटकं बद्ध्वा तृणं छिन्द्यात् विनिर्गतम् । यच्छिन्नतृणके ह्यस्मिन् कृषिः स्यात्तृणपूरिता । न वल्मीके न गोस्थाने न प्रसूतानिकेतने । न च वन्ध्यायति गेहे बीजस्थापनमाचरेत् । नोच्छिष्टः संस्पृशेद्बीजं न च नारी रजस्वला । न वन्ध्या गुर्व्विणी चैव न च सद्यःप्रसूतिका । घृतं तैलञ्च तक्रञ्च प्रदीपं लवणं तथा । बीजोपरि भ्रमेणापि कृषको नैव कारयेत्" । तथाच गार्ग्यः "दीपाग्निधूमसंस्पृष्टं दृष्ट्या चोपहतञ्च यत् । वर्जनीयं सदा बीजं यद्गर्त्तेषु निर्वापितम् । शोधितं बीजसंमिश्रं भ्रान्त्या न निर्वपेत् क्वचित् । निधानं गुच्छसंमिश्रं तद्बीजं वन्ध्यतां व्रजेत् । तथाश्वकार केदारश्यामाङ्कुरकादयः । सर्व्वे ते वन्ध्यतां यान्ति बीजे वन्ध्यत्वमागते । तिलधान्ययवादीनां विधिरेष प्रकीर्त्तितः । बीजे यत्नमतः कुर्य्यात् बीजमूलाः फलादयः" ।

अथ बीजवपनविधिः "वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम् । आषाढे चाधमं प्राहुः श्रावणे चाधमाधमम् । रोपणार्थन्तु बीजानां शुचौ वपनमुत्तमम् । श्रावणे चाधमं प्रोक्तं भाद्रे चैवाधमाधमम् । उत्तरात्रयमूलेन्द्रमैत्रपैत्र्येन्दुवायुषु । हस्तायामथ रेवत्यां बीजवापनमुत्तमम् । विष्णुपूर्व्वविशाखासु यमरौद्रानिलाहिषु । बीजानां वपनं कृत्वा बीजं प्राप्नोति मानवः । वपने रोपणे चैव पारयुग्मं विवर्जयेत् । मूषिकाणां भयं भौमे मन्दे शलभकीटयोः । न वापयेत्कृषी रिक्ते क्षीणे सोमे विशेषतः । एवं सम्यक् प्रयुञ्जानः शस्यवृद्धिमवाप्नुयात् । ज्यैष्ठान्ते त्रिदिनं हार्द्दमाषाढादौ तथैव च । वपनं सर्व्वशस्यानां फलार्थी कृषकस्त्यजेत्" । तथाच वराहः "वृषान्ते मिथुनादौ च त्रीण्यहानि रजस्वला । बीजं न वापयेत्तत्र जनः पापाद्विनश्यति । मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची भवति ऋतुमती क्ष्मा भास्करे त्रीण्यहानि । यदि वपति कृषाणः क्षेत्रमासाद्य बीजं न भवति फललाभो दारुणश्चात्र कालः । हेमेन वारिणा सिक्तं बीजं शान्तमनाः शुचिः । इन्द्रं चित्ते समाधाय स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्यस्य पुण्याहं कृषका हृष्टमानसाः । प्राङ्मुखाः कलसं कृत्वा पठेयुर्म्मन्त्रमुत्तमम् । ओं वसुधे ! हेमगर्भासि वसुशस्यफलप्रदे ! । वसुन्धरे ! नमस्तुभ्यं वसुदृष्टास्तु मे कृषिः । रोपयिष्यामि धान्यानां हवबीजानि माधवि । सुस्था भवन्तु कृषका धनधान्यसमृद्धिभिः । वासवो नित्यवर्षी स्यात् स्वल्पवर्षास्तु तोयदाः । शस्यसम्पत्तयः सर्व्वाः सफलाः सन्तु नीरुजः । इति प्रणम्य वसुधां कृषकान् घृतपायसैः । भोजयित्वा गृही भूरि निर्व्विघ्नां कुरुते कृषिम्" ।

अथ मदिकादानम् । "बीजस्य वपनं कृत्वा मदिकां तत्र दापयेत् । विना मदि(मइ)प्रदानेन शस्यजन्म न जायते" ।

अथ धान्यरोपणविधिः "वपनं रोपणञ्चैव बीजं स्याद्द्वयात्मकम् । वपनं शदनिर्म्मुक्तं रोपणं सशदं विदुः । न ह्रस्वरूपधान्यानां बीजाकर्षणमाचरेत् । न फलन्ति हृदबीजा ह्रस्वाः केदारसंस्थिताः । हस्तान्तरं कर्कटे च सिंहे हस्तार्द्धमेव च । रोपणं सर्व्वधान्यानां कन्यायां चतुरङ्गुलम्" ।

अथ धान्यकर्त्तनम् "आषाढे श्रावणे चैव धान्यमाकर्षयेद्बुधः । घनाकृष्टन्तु यद्धान्यं यथा बीजं तथैव हि । भाद्रे च कर्षयेद्धान्यमष्टौ कृषितत्परः । भाद्रे चार्द्धफलप्राप्तिः फलाशा नैव चाश्विने । न बिलभूमौ धा-

न्यानां कुर्य्यात् कद्दनरोपणे । न च सारप्रदानन्तु कृष-मात्रन्तु शोधयेत्" ।

अथ धान्यनिस्तृणीकरणम् "निष्पन्नमपि यद्धान्यमकृता तृणवर्जितम् । न सम्यक् फलमाप्नोति तृणक्षीणा कृषिर्भवेत् । कुलीरभाद्रयोर्मध्ये यद्धान्यं निस्तृणं भवेत् । तृणैरपि तु सम्पूर्णं तद्धान्यं द्विगुणं भवेत् । द्विधारमाश्विने मासि कृत्वा धान्यन्तु निस्तृणम् । अथ पाकविहीनं हि धान्यं फलति मापवत् । तस्मात् सर्व्वप्रयत्नेन निस्तृणां कारयेत् कृषिम् । निस्तृणा हि कृषाणानां कृषिः कामदुघा भवेत्" ।

अथ भाद्रे जलमोचनम् "सैंह्यार्के हि धान्यानां जलं भाद्रे विमोचयेत् । मूलमात्रन्तु संस्थाप्य कारयेज्जलमोक्षणम् । भाद्रे च जलसम्पूर्णं धान्यं विविधबाधकैः । प्रपीडितं कृषाणानां न धत्ते फलमुत्तमम्" ।

अथ धान्यव्याधिखण्डनमन्त्रः "ओं सिद्धिः, गुरुपादेभ्यो नमः । स्वस्ति, हिमगिरिशिखरात् मङ्गकुन्देन्दुधवलशिखरतटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादा विजयिनं समुद्रतटार्थस्थितनानादेशागतयानरकोटिसहायमगण्यं खरतरनखराजितीक्ष्णकलगुर्द्धलाङ्गूलं लीलागमनसमुद्गतवातवेगाववूतपर्व्वतशतं परचक्रमथनं पवनसुतं श्रीहनूमन्तमाज्ञापयन्ति अमुकग्रामे अमुकगोत्रस्य श्रीमतोऽमुकस्य क्षेत्रखण्डेषु राता भोम्मा उद्रा गान्धिया भोम्भी गान्धी ढोडी पाण्डरशुखी मण्डियाकुण्डी धूलिङ्गङ्का मण्डूका इत्यादयः तालजङ्घाः चटकशुकसूकरमृगमहिषमूषिकवराहपतङ्गादयः सर्व्वे शस्योपघातिनो यदि मदीयवचनेन न त्यजन्ति तदा तान् वज्रलाङ्गूलेन ताडयिष्यसीति । ओं यां ह्रीं ह्रीं नमः" ।

मतान्तरे धान्यव्याधिखण्डनमन्त्रः "ओं सिद्धिः, गुरुपादेभ्यो नमः । श्रीरामचन्द्रचरणेभ्यो नमः । स्वस्ति, हिमगिरिशिखरात् मङ्गकुन्देन्दुधवलशिलातटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटार्थस्थितनानादेशागतयानरकोटिसहायमगण्यं खरतरनखराजितीक्ष्णकलगुर्द्धलाङ्गूलं लीलागमनसमुद्गतवातवेगावधूतपर्व्वतशतं परचक्रमथनं पवनसुतं श्रीमन्तं हनूमन्तमाज्ञापयन्ति अमुकग्रामे अमुकगोत्रस्य श्री अमुकस्य क्षेत्रखण्डेषु भोम्मा-भोम्भी-पाण्डरशुखी-गान्धी-धूलिङ्गङ्कादिरोग-स्थलेन त्रिपुटी नाम राक्षसी मम प्रसादादत्र विविधविघ्नं समाचरन्त्यवतिष्ठते, इदं मदीयशासनमिवत्वमयमत्र तां पापराक्षसीं सपुत्रबान्धवां वज्रदण्डाधिकलाङ्गूलदण्डैः खरतरनखरैश्च विदार्य्य दक्षिणसमुद्रे लवणाम्बुधौ समाहृतः प्रक्षिपेति, यद्यत्र त्वया क्षणमपि विलम्ब्यते तर्हि त्वं केशरिणा पित्रा पवनेन मात्रा चाञ्जनया शप्तोऽसीत्यन्यथा नाहं प्रभुर्न त्वं भृत्य इति ओं ह्रां ह्रीं फः" ।

इमं मन्त्रं बिल्वकण्टकेन भैतकीदले लिखित्वा इक्षुकेशेनादिक्षपारे चेयस्त्रैशान्यां शस्यमध्ये मञ्जरीषु बन्धयेत् । पाठान्तरन्तु लिखित्वाऽलक्तकेनैतन्मन्त्रं शस्ये तु बन्धयेत् । न व्याधिकीटकीटाणां भयं तत्र भवेत् क्वचित्" ।

अथ जलरक्षणम् । आश्विने कार्त्तिके चैव धान्यस्य जलरक्षणम् । न कृतं येन मूर्खेण तस्य का शस्यवासना । यथा कुलार्थी कुरुते कुलस्त्रीपरिरक्षणम् । तथा संरक्षयेत् वारि शरत्काले समागते ।

अथ कार्त्तिकसंक्रान्त्यां नलरोपणम् "घटप्रवेशसंक्रान्त्यां रोपयेत्तु नलं तथा । केदारैशानकोणे च स्नातः कृषकः शुचिः । गन्धैः पुष्पैश्च धूपैश्च शुक्लवस्त्रैर्विशेषतः । पूजयित्वा नलं तत्र पूजयेद्धान्यरक्षकान् । दधिभक्तञ्च नैवेद्यं पायसञ्च विशेषतः । ततो दद्यात् प्रयत्नेन तालादिपत्रमेव च" । तत्र मन्त्रः । "बालकालिकृता वृक्षाः सन्ति ये धान्यहन्तकाः । ब्रह्मणापि कनिष्ठा वा सगदा निर्गदाश्च ये । आज्ञया भीमसेनस्य रामस्य च पृथ्वीपरि । ताडिता नलदण्डेन सर्व्वे यान्तु समप्रुषिताः । समप्रुष्यत्वमायान्तु फलन्त्वायु च निर्भरम् । इत्या भवन्तु कृषका धनधान्यसमन्विताः । रोपयित्वा नलं क्षेत्रे मन्त्रेणानेन च क्रमात् । धान्यवृद्धिं परां प्राप्य नन्दन्ति कृषका जनाः । नलन्तु घटसंक्रान्त्यां क्षेत्रे नारोपयन्ति ये । विघ्ना बध्नन्तुपघ्नाय तेषां शस्यान्यजानतः" ।

अथ मार्गे खलिपद्दणम् । "ततो मार्गे तु सम्प्राप्ते केदारे शुभवासरे । धान्यस्य लवनं कुर्य्यात् खाईखलिहत्यं शुचिः । गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैर्धान्यरक्षकान् । पूजयित्वा दद्यान्न्यायमीशाने लवनं चरेत् । ततश्चान्यस्तके कृत्वा कृष्णं शीर्षकान्वितम् । न स्पृशा कस्यापि क्वापि व्रजेत् स्वीयं मन्दिरम् । सप्तपद्यां ततः पादं दत्त्वा कुम्भनिकेतने । प्रविश्य स्थापयेत्तत्तु पुष्पगन्धादिपूजितम् । न खलिय-कर्मं कुर्य्यात् कदाचिदष्टपौषयोः । कोष्ठे खलिपक्षो

र्थं गमिष्यन् हितमात्मनश्च । कार्यो दृष्टो वा हलकृन्मिनो वो अन्येऽपि सर्वे पथगो द्विजेन्द्राः । याम्यानुक्ता नैव तु उत्तरादिकपुरुषांसकाले खलु वक्ष्यनीयाः । भालामवेशे हलमोपमूलां राजापि सत्ताह्वयकुञ्जराणाम् । कोनश्च मन्त्रार्थिधनात्मयुक्तं कुर्य्याद्विधिज्ञो द्विजपूजनञ्च । लाङ्गलं तत् प्रवक्ष्यामि यत्काष्ठं तत्प्रमाणतः । हलीषाया-स्तथा मानं प्रतोदस्य युगस्य च । चत्वारिंशत्तथाष्टा-दशाङ्गुलानि कुडः (फलः) स्मृतः । अथ शम्योऽङ्गुलैर्मा-न्यो हलीषावेधतश्च यः । षोडशैव तु तस्याधः षड्विंशति रथोपरि । वेधस्तथा च कर्त्तव्यः प्रमाणेन षडङ्गुलः । षष्टाङ्गुलतुरङ्गस्य वेधादूर्द्ध्वं प्रकल्पयेत् । षीषा दशा-ङ्गुला चोर्द्ध्वं हलपाड़ो ततः स्मृतः । अङ्गुलैश्चाष्ट-भिस्तत् स्याद्वेधः स्यात् प्रतिहारकः । तस्यावस्था-दाष्टन्यारि स वेधश्चतुरङ्गुलः । प्रतिहारी शुभा कार्य्या तद्वैषम्यङ्गुलो भवेत् । पञ्चाङ्गुलतुरङ्गस्याः सी-रस्येति विभाजनम् । युगन्तं शिरलोधार्य्यं हस्ततल-प्रमाणकम् । कङ्कुणानि तथा चाष्टौ उरसः युक्ता स्मृता । मन्ध हस्तः प्रतीहारी षड्विंशदङ्गुला भवेत् । सुतीक्ष्णा लौहफालस्य उक्ता दामादिदारतः । न सीरं कीरवृक्षस्य न बिल्वपिचुमर्दयोः । इत्यादीनां हि कुर्य्याणो न नन्दति चिरं गृही । मात्रुला कन्तकता तु हलीषा विदुषां मता । तस्याः(ईषायाः)वेधः समर्पायाः कार्य्यो नव-वितस्तिभिः । प्रथाचार्य्योनं तक्कुर्य्यात्कोतिक्षौ तौ प्रकी-र्त्तितौ । प्रमादतस्तु ताः कुर्वन् समस्तो नश्यते गृही । मौचोक्तप्रमाणेन तज्ज्ञाः प्रवदन्ति हि । चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् । मेषशङ्कवः कद-म्बस्य मालयवृक्षस्य च । सन्धा (सापि)वेधाद्बहिः कार्य्या दशाङ्गुलप्रमाणिका । तन्माने च प्रवाली च तदन्तरदशा-ङ्गुलम् । प्रतोदविषमस्यान्ते वैणवस्य चतुःकरः । तदग्रे तु प्रकर्त्तव्या यथाकारा तु लौहवत् । हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः । कुर्य्यादनड्वां दैन्या-दैन्याचरणं व्रजेत् । यथाऽभीष्टं यथाशोभं वाहकस्य प्रमाणतः । भूमेश्च कर्षणायालं तज्ज्ञाः सर्वं वदन्ति हि । योजनं तु फलस्याथ प्रवक्ष्यामि यथा तथा । स्वैनचालसंयुक्ते पुण्येऽह्नि तद्विधीयते । यत्र दिने तु युध्येत तत्र कार्य्यं विजानता । यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत् । तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्विधीयते । मातृश्राद्धं द्विजः कृत्वा यथो-

क्तविधिना गृही । द्रव्यकालानुसारेण कुर्व्वतो धर्म्म-तः कृषिम् । मौक्तिकम् मण्डलं पुष्पधूपदीपैः समर्चयेत् । इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विजः । कुर्य्या-द्बलिकृतिं विद्वान् उदकसङ्ग्रथाय च । तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम् । नमः स्वाहेति मन्त्रेण संवाच्च चाक्षतः शुभम् । दधिगन्धाक्षतैः पुष्पैः शमीपत्रै-स्तिलैस्तथा । दद्यादाहुतिं हयाणाञ्च तथाऽक्षप्राशनं ततः । संधृत्य सीरफालाग्रे हेम्ना वा राजतेन वा । प्रलिप्य मधुसर्पिर्भ्यां कुर्य्याद्वैव प्रदक्षिणम् । अनन्तश्रीर्मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम् । पुष्पं लाङ्गलकल्पाय कल्याणाय नमोऽस्त्विति । सीतायाः स्थापनं कुर्य्यात् पाराशरस्मृतिं स्मरन् । सीतां युञ्जत इत्यादीर्मन्त्रैः सीरं प्रवाहयेत् । दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्पदैः । सीतां पूज्य शमी भक्तैरक्षतैर्विधायके । अथ धा-न्यानि चादाय मौनी पूर्व्वमुखो हली । तानि दक्षो-त्तरः क्षेत्रे किरन् भूमौ कर्षेद्द्विजः । न यवैर्न तिलैर्हीनं द्विजः कुर्य्याच्च कर्षणम् । तद्विहीनन्तु कुर्य्याणं न प्रशंसन्ति देवताः । तिलमात्रञ्च तं तोयं दक्षिणस्याम्पतेर्दिशि । तेन तृप्यन्ति पितरो या-वच्च तिलविक्रयः । विक्रीणीते तिलान् यस्तु तर्पे दे-वर्षिदेवताः । विसृज्य पितरस्तान्तु प्रयान्तीव तिलैः सह । कणाजलं यवस्तम्बपत्रेभ्यो भूतले पतत् । पयो-दधिहताद्यैस्तु तर्पयेत् सर्व्वदेवताः । देवपर्जन्यभू-सीरयोगात् कृषिः प्रजायते । व्यापारात् पुरुषस्यापि तस्मात्कालोद्यतो भवेत् । शालीन् कणककार्पासं याच्ची-कुम्भतीनि च । वापयेत्सर्व्वबीजानि कर्षणार्थी न सी-दति । चन्द्रक्षये प्रतिविंशो यो युनक्ति हयान् क्वचित् । तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम् । चन्द्रक्षये द्विजो विद्वान् यो भुङ्क्ते तु पराशनम् । भोक्तुर्मासा-र्जितं पुण्यं भवेदशनस्य तत् । चन्द्रार्कयोस्तु संयोगे कुर्य्याद्यः स्त्रीनिषेवणम् । सर्व्वतोभोजिनस्तस्य षण्मासं पितरोऽर्हिताः । चन्द्रक्षये च यः कुर्य्याद्वरकाष्ठनिकृन्त-नम् । तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः । वनस्पतिगते सोमे योऽध्वध्यानं व्रजेत्नरः । प्रभ्रष्टद्विज-कर्म्माणं तं त्यजन्त्यमरादयः । मासान्तेऽन्दुप्रयाणे यो रजकश्यामतिः चिपेत् । पिबन्ति पितरस्तस्य मासं व-स्त्रजलन्तु तत् । सोमक्षये द्विजो याति यत्कालस्तु कृता-शनम् । तदेव पितृशापाग्निदग्धो नरकमाविशेत् ।

अष्टमी कामभोगेन, षष्ठी तैलोपभोगतः । कुङ्कुमं दन्तकाष्ठेन छिन्नस्याभ्रसमं कुलम् । चन्द्रापतीतैः पुरुषस्तु दैवाद्यादगल्या यदि दन्तकाष्ठम् । नराधिराजैः सोऽङ्गतस्तु तेन घातः क्षतः स्यात्पितृदेवतानाम् । तताश्च विप्राणानि गावश्चैव इवाक्षया । चरणाय ईशमुत्थाने आगताञ्छिशि भोजयेत् । य उत्पाद्येह शस्यानि सर्वाणि तृणचारिणः । जगत्सर्व्वं हृतं यैस्तु पूज्यास्ते किन्नु ते वृषाः । येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत् । यद्रूपेण स्थितो धर्म्मः पूज्यास्ते किन्न ते वृषाः । पाल्या हि यत्नतस्ते वै वाहनीया यथाविधि । स याति नरकं घोरं यो वाहयत्यपालयन् । नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः । वाहनीयो हि न्यूद्रेण वाहयन् जयमाप्नुयात् । वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः । पाल्या वै यत्नतः सर्व्वे पालयन् शुभमाप्नुयात् । अश्वार्थमेवानुयायः कक्षे परमेश्वरः । अन्नेनाप्यायते सर्व्वं त्रैलोक्यं सचराचरम् । अग्निर्ज्वलति चाकाशं याति चाकाय मारुतः । गृह्णाति चाम्भसां सूर्य्यो रसानन्नाय रश्मिभिः । अन्नं प्राणो बलं चान्नमन्नाज्जीवितमुच्यते । अन्नं कर्म्मस्य चाधारः सर्व्वमन्ने प्रतिष्ठितम् । सुरादीनां हि सर्व्वेषामन्नं बीजं परं स्थितम् । तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति । द्यौः पुमान् धरणी नारी, कृषौ बीजं द्विविधं स्मृतम् । द्युधात्रीतोयसंयोगादन्नादीनां हि सम्भवः । आपो मूलं हि सर्व्वस्य सर्व्वमप्सु प्रतिष्ठितम् । अतोऽमृततमा ह्यापः आपः शुक्रं बलं महः । सर्व्वस्य बीजभावो वै सर्व्वमद्भिः समावृतम् । सद्य आप्यायना ह्यापः आपो ज्योततरा ह्युतः । किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः । न जीवन्ति विना तास्तु तस्मादापोऽमृतं स्मृतम् । दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत् । तयाद्येन प्रदत्तेन सर्वं दत्तं भवेदिह । अतोऽन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः । यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम् । सीते ! सौम्ये ! कुमारि ! त्वं देवि ! देवार्चिते ! शिवे ! यन्त्रकृता हि यथा सिद्धा यथा मे सिद्धिदा भव । मरुत्सूनोर्विना नाम्ना सीतायाः स्थापनं विना । विनाम्बुपचरत्वार्थं सर्वं हरति राक्षसः । वापने लवने क्षेत्रे खले गन्धोपवाहने । एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने । देवतायतनोद्यानविपानस्थानसीमजाम् । सीमासंस्थानभूमिञ्च ऊष-

रात्याचितिं तथा । भूमिं निपानकूपाश्च श्वयनस्थानमेव च । अन्यामपि हि वाराङ्गां न कर्षेत् कण्टकां धराम् । गोचरां वाहयेद्भूमिं वल्मीकककर्केटिहताम् । वाहयन्नप्रमत्तश्च न नदीं तिर्यक् तथा । यद्यसौ वाहयेल्लोभात् देवाद्दापि हि मानवः । क्षीयते सोऽचिरात्सद्यपात् सपुत्रपशुबान्धवः । नरकं घोरतामिस्रं पापीयान् याति चैनसा । परकीयां योऽपहृत्य कृषिकर्म्म करेद्धराम् । स भूमिस्थेन पापेन द्रुतमन्तनरकं व्रजेत् । न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा । वाहयन् पथि क्षेत्रं वाहयन् दुःखभाग् भवेत् । क्षेत्रे क्षेत्रं वृत्तिं कुर्य्यात् यावत्तो नावलोकयेत् । न लङ्घयेत्पशुर्यां वा नाभीयाद्याश्च शूकरः । अश्वश्च यत्नतः कार्य्यो मृगशूलाकनाय च । कलाप्युपद्रवं राजतस्करादिसमुद्भवम् । संरक्षेत्सततो यत्नाद्यत्नात् स्वल्पाल्पको करात् । कण्टकन्यानयश्चैवं मत्वा धर्म्मं कृषेर्ध्रुवम् । अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम् । निम्नां हि वाहयेद्भूमिं यत्र विश्वसते जलम् । वाहयेत् जलाभ्यर्णे पुटे समेकमभवे । शारदस्य कंस्याने कलम्बं वापयेद्बली । यवोन्मकाश्च वार्त्तेण तदन्यत्र तु हैमनम् । यवजवीरुकालीयमप्सु स्निग्धेषु तद्विदः । केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः । इत्याकशाकमूलानि कन्दानि च जलान्तिके । इष्टिविष्कापानीयक्षेत्रेषु च यवादिकान् । गोधूमांश्च मसूरांश्च चणकान् खलु कुलत्थकाः । समस्निग्धेषु चोप्यानि भूमीजीवान् विजानता । तिला बहुविधाश्चोप्या अतसीशणमेव च । यदम्बुजं जगत्सर्वं वापयेत्कृषिकृन्नरः । संपश्येद्दूरतः सर्वान् गोधूमादीन् सयत्नतः । चिन्तयेत्सर्वमाख्यानं स्वयमेव कृषिं व्रजेत् । प्रथमं कृषिवार्यान्न्यं द्वितीयं योनिपोषणम् । तृतीयं विक्रयः प्रोक्तश्चतुर्थं राजसेवनम् । नखविलिखने यस्याः ब्रूयुर्दोषं मनीषिणः । तस्याः सीरविदारैश्च किन्नु पापं क्षितेर्भवेत् । तृणैकच्छेदमात्रेण प्रोच्यते जयमाप्नुयः । अङ्कुरकन्दनिर्मोसादङ्कुराणामभेदनम् । यत्सेवनात् कीटवधा मर्द्दनादपि । अंहः कुक्कुटिकानाञ्च तदंहः कृषिजीविनाम् । वञ्चकानाञ्च यत्पापं यत्पापं मृगयोरपि । कदर्य्याणाञ्च तत्पापं तत्पापं कृषिजीविनाम् । पर्णानाञ्च स्थाण्डिलानां कृष्युपजीविनाम् । तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः । द्वादशो नवमो वापि

भावार्थोऽपि "मूर्ध्नि त्रीणि गले त्रयञ्च जठरे धिष्ण्यानि च द्वादश स्यात्पुच्छे च चतुष्टयं बहिरतोभानां स्थितं पञ्चकम्। एवं कज्जलसदृशविरचिका निःसन्दिग्धत्वं क्रमात् स्यादीतिभयं भयञ्च फणिभाद्बीजोप्तिकाले स्फुटम्"। अत्र केचित्। फणिभात् सूर्यनक्षत्रादितिव्याचक्षते तत्र युक्तिः "सूर्यभादुरगःस्थाप्यः" इति स्वरोदयवाक्यैकवाक्यत्वात्, तन्न नारदवाक्ये राश्याद्राहुभादित्युक्तत्वात् "राहोर्धिष्ण्यात्रयमारभ्य धिष्ण्यत्रयन्तु निष्फलमिति" कश्यपोक्तेश्च। "सूर्यभादुरगः स्थाप्यः" इति तु स्वरोदयवचनं बीजरोपणविषयम्। तत्र लग्नशुद्धिमाह वशिष्ठः "भपरिघमकरस्थे पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः। कथितेषु च धिष्ण्येष्वपि शुभलग्ने बीजवापनं कार्यमिति" अथ हलप्रवहणे चक्रमुच्यते हलेऽति हले हलचक्रेऽर्कोज्झितात्सूर्यभुक्तानक्षत्रात्क्रमेण त्रीणि नक्षत्राणि सन्ति अशुभफलानि। ततोऽष्ट भानि सन्ति शुभफलदानि ततो नव भान्यसन्ति ततोऽष्टौ भानि सन्ति यथा सूर्ये आर्द्रायां भुक्तभं मृगः तत आरभ्य त्रीणि मृगार्द्रापुनर्वसुभान्यशुभानि। ततः पुष्याश्लेषामघापूर्वफाल्गुनीहस्तचित्रास्वातीनक्षत्राणि शुभानि। ततो विशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभिजिच्छ्रवणधनिष्ठानक्षत्राणि अशुभानि। ततः शततारकापूर्वभाद्रपदोत्तरभाद्रपदारेवत्यश्विनीभरणीकृत्तिकारोहिणीनक्षत्राणि शुभानि। एवमष्टाविंशतिर्भानि भवन्ति यदाह वशिष्ठः "अर्कगतागतसंस्थभत्रितयं नेष्टमुभयतस्त्विष्टम्। षोडश धिष्ण्यं त्रयकं शिष्टमनिष्टं च लाङ्गले चक्रे" इति। अर्केण गतं भुक्तम् आगतं भोग्यं संस्थमाक्रान्तम् एतद्भत्रितयं नेष्टं तत उभयतःषोडशधिष्ण्यं त्विष्टं यथा सूर्यभुक्तभात् प्राक्तनान्यष्टौ शुभानि सूर्यभोग्यभादग्रेतनानि शुभानि स्युरित्यर्थः। शिष्टमुर्वरितं मध्यगतनक्षत्रनवकमनिष्टम् एवमष्टाविंशतिर्भानि। नारदोऽपि "हलादौ वृषनाशाय भत्रयं सूर्यभुक्तभात्। अग्रे भत्रितयं लक्ष्म्यै सौख्यं पार्श्वस्थपञ्चकम्। शूलत्रयेऽपि नवकं मरणायान्यपञ्चकम्। श्रियै पुच्छे त्रयं श्रेष्ठं स्यादित्थं लाङ्गले शुभम्" इति। अस्यार्थः हलप्रवहणसमये सूर्यभुक्तनक्षत्रान्नक्षत्रत्रयं वृषनाशाय स्यात्। तदग्रे नक्षत्रत्रयं लक्ष्म्यै स्यात् तदग्रे पार्श्वनक्षत्रपञ्चकं सौख्याय स्यात् तदग्रे शूलत्रयगतं नक्षत्रनवकं मरणाय स्यात् तदग्रेऽन्यत् पार्श्वस्थपञ्चकं श्रियै स्यात् तदग्रे पुच्छगतं नक्षत्रत्रयं श्रेष्ठं शुभफलमिति। अनेनापि प्रकारेण मृगादीनि त्रीण्यशुभानि शुभानि सम्भवन्ति। तत्र हलचक्राकृतिर्लिख्यते तत्र कश्यपः "त्रिषट्सु नवर्क्षेषु सप्तस्वर्कविमुक्तभात्। हानिर्वृद्धिः कर्तृमृत्युर्लक्ष्मीश्चैव यथाक्रममिति, हलनक्षत्रोक्तमन्तरमुक्तवान् अस्यायमर्थः अर्कविमुक्तभात्त्रिषु भेषु हानिः ततोऽष्टसु भेषु वृद्धिः ततो नवसु भेषु कर्तुर्नाशः, ततः सप्तसु भेषु लक्ष्मीप्राप्तिरिति यथाक्रमं फलं ज्ञेयम्। अत्र सप्तविंशतिनक्षत्रोक्तेरभिजिद्गणना नास्ति। नन्वत्र षड्नक्षत्रत्यागे कोहेतुरित्यत आह तदन्तरगत इति तच्छब्देन हलोर्ध्वदण्डशूलोर्द्धदण्डावुच्येते तयोरन्तरगते मध्ये विद्यमाने षट्कपङ्क्तौ श्रियै स्थाप्ये नक्षत्रदशकमिति यावत् तत्रान्यद्भत्रिकं हलदण्डोर्ध्वभागे शुभफलदं ज्ञेयम्" पी॰धा॰

अत्र विशेषः ज्यो॰ त॰ तत्र

कूर्मचक्रशब्दे दर्शितात् ज्यो॰त॰ वाक्यात् परम्परो यथा "कूर्माङ्गस्थदेशानाह। "मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः। पञ्चालशाल्वमाण्डव्यहस्तिनगजाङ्गयाः। सत्नैमिषविन्ध्याद्रिपाण्ड्यघोषाः सदाहुनाः। काशयोध्या प्रयागश्च गयावैदेहकादयः। प्राच्यां मागधगौडौ च वारेन्द्रो गौडराढकाः। वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः। आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः। कलिङ्गोड्रान्ध्रकिष्किन्ध्याविदर्भशबरादयः। दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूककाः। चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः। कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः। नैर्ऋते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः। यवनः पह्लवः सिन्धुः पारसिकादयो मताः। पश्चिमे हैहयास्ताद्रिश्चाश्मशकादयः। वायव्ये गुर्ज्जराटश्च नाटजाम्बरादयः। उत्तरे चीननेपालहूनकैकयमन्द्रराः। गान्धारहिमवत्क्रौञ्चगन्धमादनमालवाः। कैलासमद्रकाश्मीरगन्धर्वदेशाः खशादयः। ऐशाने स्वर्णभौमश्च गङ्गाद्वारश्च टङ्कनः। काश्मीरमञ्जुरकिरातदरदादयः"। देवलः। "सिन्धुसौवीरसौराष्ट्राश्च तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गोड्रान् गत्वा संस्कारमर्हति" तीर्थयात्रामृतेऽधेति द्रष्टव्यमिति मिताक्षरा। व्यासः "उषरा बहुला भूमिः पन्थानस्तस्कराहृताः। सर्वे वाणिजकाश्चैव भविष्यन्ति कलौ युगे। शस्यानिष्पत्तिरफला तरवो हृद्रिशालिनः। भविष्यन्त्यफलोद्दर्थः क्रोधश्च सफलोऽर्थवताम्। इत्याद्युक्तं बहुलीकं

तद्वृषगानस्य लक्षणम्"। तत्र ग्रामादिषु स्वनामफलम्। ज्योतिषे "अवर्गोऽष्टाविषः के च,षट् चे, वेदाः टवर्गके। एवं ते सप्त, पे वर्गे, ये द्वयं, शे च वह्नयः। इत्यमष्टसु वर्गेषु याः संख्याः कथिताः क्रमात्। नाम्नि वर्गात् स्वराश्चैव प्रत्येकं तां प्रकल्पयेत्। एकीकृत्याष्टभिर्भक्ते शेषसंख्या ध्वजादयः। ध्वजो धूम्रश्च सिंहः श्वा वृषभो रासभो गजः। ध्वाङ्क्षश्च क्रमतो ज्ञेयः फलं तत्र बलक्रमात्। ध्वाङ्क्षधूम्रश्ववृषभा गजः सिंहो ध्वजः खरः। यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः। ग्रामे योधे पुरे देशे मित्रनारीस्वदेहेषु च। बलात् प्रायो भवेल्लाभो न लाभो बलवर्ज्जितात्। अ गरुडः क मार्जारश्च सिंहः ट शुनीसुतः। त भुजङ्गः प आखुः स्यात् य वर्गे भः, श मेषकः। नामादिवर्णतो येषां वर्णाः क्रमादमी। यद्वर्गभक्ष्यो यः प्रोक्तस्तत्कालस्य भवेत् जयः। ग्रामवर्गस्य ये भक्ष्यास्तज्ज्यास्तद्ग्रामवासिनः। एवं दुर्गे रणे त्यक्त्वा न कर्त्तव्या गडाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशां क्रमात्। स्ववर्गात् पञ्चमे स्थाने स्वामिभङ्गश्च जायते"। व्यासः "धनिनः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्"। मत्स्यपुराणे "फालकृष्टे तथा देशे सर्व्वबीजानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठा मध्या कनिष्ठा भूर्वर्ज्जनीयेतरा मता"।

अथ लाङ्गलचक्रं स्वरोदये "लाङ्गलं दण्डिकारूपं योक्त्रद्वयसमन्वितम्। दण्डिकादित्रिभेष्वाङ्गानि दिनेशाक्रान्तभादितः। दण्डिकाहलयूपानां द्विद्विस्थाने त्रिकं त्रिकम्। योक्त्रयोश्च त्रिकश्चैव मध्ये पञ्चात्मके द्वयम्। दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनो भयम्। लक्ष्मीर्लाङ्गलयोक्त्रादौ चेलारम्भादिनर्क्षके"।

अथ बीजोप्तिचक्रम्। "सूर्य्यभाद्रुरगः स्थाप्यस्त्रिनाडीकालरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे। पुच्छे चतुर्ष्वहिः पञ्च दिनभाङ्ग फलं वदेत्। वदने चोषकं विद्यात् गलेऽङ्गारकलद्य। उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्। ईतिरोगभयं राज्ये चक्रे बीजोप्तिसम्भवे"। सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात् त्रिनाड्येकान्तरक्रमादिति (यद्वाश्विन्यां रविस्तदा तामारभ्य गणयेत्।) त्रिनाडीषु अश्विनीभरणीकृत्तिका दत्वा रोहिणी बहिः कार्य्या मृगार्द्रापुनर्व्वसुभानि त्रिनाडीषु दत्वा पुष्यो बहिः कार्य्यः एवं क्रमेणान्या लेख्याः। चोषकं शस्यशून्यताम्। ईतयः। "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः" बीजोप्तिः सम्भवः कारणमस्येति व्युत्पत्तिमाश्रित्य बीजारोपविषयमिति पी०धा० स्थितम्।

"वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्व्वकम्। मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम्। त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम्। हलप्रवाहबीजोप्तिप्रारम्भादिदिनर्क्षकम्। यदङ्गेषु स्थितं तस्मादङ्गे सर्व्वं शुभाशुभम्। आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा। शीर्षे धृतिक्षया शृङ्गे सौख्यं स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं वृषचक्रफलं बुधैः"।

दीपिकायाम् "पूर्व्वात्रिमद्यास्वफणिपित्र्यमित्रान्त्यभेषु त्रिकाष्टमीनिकतचन्द्रतिथिं विहाय। द्वन्द्वाङ्गालिगोमृगदये विकुजार्किवारे शक्रेन्दुयोगकरणेषु हलप्रवाहः। हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः। चित्रायाञ्च शुभे केन्द्रे स्थिरत्वमनुजादये'। भीमपराक्रमे 'वामे हल्यां बलीवर्द्दं दक्षिणे योजितं न्यसेत्। उत्तराभिमुखो भूत्वा कर्षकः कर्षमारभेत्। हले तु योजिते यत्र चेत्ते यामं करोति गौः। तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम्"। कृषिचिन्तामणौ बलभद्रः "शुभदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटकप्रदा। पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी धान्यदा भोग्या हर्षं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्व्वसिद्धा त्रयोदशी। चतुर्द्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमीं षष्ठीं रिक्तां च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुतिष्येषु पित्र्यकरोत्तरेषु च। अश्विनीमातपौष्णेषु मूलादितीन्दुभे तथा। वारे भानुजशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनयुग्मे च कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत्। गावहारोहणधरः स्रग्भिश्च पूजितं हलम्। दध्याज्यमधुभिः श्वेतं फालाग्रञ्च प्रलेपितम्। कर्षं प्रवर्त्तयेत् प्राङ्मुखेनैव हू-

षेन च । हस्ताश्विनिश्रवन्द्रेषु प्राजेन्द्रविष्णुवारुणे । वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च । वारे जीवज्ञशुक्रे च सौम्ये दिनकरे तथा । शुभे शुक्लतिथौ मीने शस्तं स्याद्बीजवापनम्" । राजमार्त्तण्डे "प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनीपौष्णानुराधमरीचयः शततारकाः स्वातिर्विशाखा तथा । जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति भवने शस्ते तिथौ रोपणे" । देवलः "गुरुसोमसूर्य्यशुक्राःसौम्याः सम्पत्कराः शुभाः । बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः । हन्ति मेषः पशून् सर्व्वान् स्वभावेनाथ वृश्चिकः । कर्कटे न भवेत् सौख्यं तुलायां न प्ररोहति । केशरी शस्यघाती स्यात् पार्थिवोपद्रवं धनुः । मकरे चैव कुम्भे च भयमेव विनिर्द्दिशेत् । गोस्त्रीमिथुनमीनेषु शस्यं सम्पद्यते महत् । प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा । स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः । इन्द्राञ्च मरुत्संयुक्तां पूजयित्वा प्रजापतिम् । अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा । कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा । सुखपार्श्वे तयोर्लिप्यात् फालाग्रं कनकैः स्पृशेत् । उत्तराभिमुखोभूत्वा क्षीरेणार्घ्यं प्रदापयेत् । ततः शुभकरः श्रीमान् कृषिकर्म्म समाचरेत् । वर्जयेद्भग्नशृङ्गञ्च तुरभग्नञ्च वर्जयेत् । विकलं विकलाङ्गूलं कपिलं वृषभं तथा । हलप्रवाहणं कार्य्यं नीरुग्भिः कृषिकर्म्मकैः । हलादिभिर्द्दृढैः क्षेमं कुद्दर्नैः शुभं वदेत् । वृषभा यदि सुहन्ति तत्र विघ्नप्रदा भवेत्" । कृषिरिति शेषः । "तस्मात् सर्व्वप्रयत्नेन निर्व्विघ्नं कारयेत् सदा । रेखा जयकरी रेखा तृतीया चार्थदायिका । पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा । अतऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततोभवेत् । संपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम् । हेमनिकृष्टं फालाग्रं छिन्नरेखां न कारयेत् । कर्त्तव्या वसवश्चेन्द्रः पृथुरामः सचन्द्रमाः । पराशरोबलभद्रः सर्व्वविघ्नप्रशान्तये । हले प्रवाहमाणे तु कूर्म्म उत्पद्यते यदि । गृहिणी म्रियते तस्य ततोऽन्यैश्च भयं भवेत् । लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति । ईशाभङ्गोयदा कर्त्तुः संशयो जीवितस्य च । युतनाशीयुगाभङ्गे समीने म्रियते सुतः" । समीने योक्त्रग्रन्थनकाष्ठद्वये । "योक्त्रच्छेदे तु व्याप्तः शस्यहानिश्च जायते । हले प्रवाहमाणे तु गौरेकः प्रपतेद्यदि । प्रपतेन्मृतमात्रस्तु बन्धनं स प्रपद्यते । ज्वरातिसाररोगेण कृषिभङ्गं विनिर्द्दिशेत् । प्रवाहणक्षणमात्रस्तु ततो गौः प्रपतेद् यदि । वत्सरार्द्धेन नर्द्देत् तदा शस्यं चतुर्गुणम् । हेमकारिविनिर्म्मुक्तबीजस्योद्यतः शुचिः । इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् । कृत्वा चान्योन्यसौतमाङ्गं कर्षकोहृष्टमानसः । प्राङ्मुखः कलसं स्पृष्ट्वा इमं मन्त्रमुदीरयेत् । त्वं वै वसुन्धरे सीते ! बहुपुष्पफलप्रदे ! । नमस्ते मे शुभं नित्यं कृषिं मेघाशुभे ! कुरु । रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु । कर्षकास्तु भवन्त्यग्र्या धान्येन च धनेन च स्वाहा" । कृत्यरत्नाकरे ब्रह्मपुराणम् "चैत्रे च कृष्णपञ्चम्यां काश्मीरा च रजस्वला । नित्यं भवति तस्यात्तां कृत्वा शैलमयीं स्त्रियम् । अभ्यङ्गस्नाननैवेद्यैः पूजयेद्दिनत्रयम् । पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च" । काश्मीरा पृथ्वी । "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहे गृहे । सुस्नाताभिः प्रहृष्टाभिर्नीपस्त्रीभिरेव च । अनन्तरं द्विजैः स्नाप्य सर्व्वौषधियुतैर्जलैः । गन्धैर्म्माल्यैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा । स्नापयित्वा च तां देवीं गन्धमाल्यैश्च पूजयेत् । तद्धिवेदितशिष्टन्तु प्राशितव्यं गृहे गृहे । अतःपरं स्नाता गर्भं गृह्णाति वसुमेदिनी" । तथा "ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभी गृहे । इन्द्रः प्रचेताः पर्ज्जन्यः शेषचन्द्रार्कवह्नयः । बलदेवो हलं भूमिर्द्धर्म्मो रामलक्ष्मणौ । रथौकौ जानकी सीता युगं गगनमेव च" सीता लाङ्गलपद्धतिः । युगं युगकाष्ठम् । "एते द्वाविंशतिः प्रोक्ता प्रजानां पतयः शुभाः । गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे । अर्घैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक्पृथक् । हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः" । तथा । "उप्त्वा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह" । बीजवपनं प्राजापत्यतीर्थेन यथाह हारीतः "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति । होमतर्पणे लाजहोमसनकादितर्पणे । राजमार्त्तण्डे पराशरः "नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम् । नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्" । "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ । अतःपरञ्चाधमं न जातु श्रावणे शुभम्" । ज्योतिषे "पूर्व्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी । विशाखा शतभिषा वा धा-

न्यानां रोपणे वरा। यदोषा रजनी नीली पुष्पवितैर्वियुज्यते। स्वयं जाते पुनस्ते हे पालयन्त्येव दुष्यति। आरामे गृहमध्ये वा मोहात् सर्पमनावपन्। पराभवं रिपोर्याति यशोधनधनक्षयम्। निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र नैते निघ्नन्ति मङ्गलम्"। निशा हरिद्रा। कोविदारः काञ्चनः। "हेमाम्भसा दुग्धबीजं स्नातोमन्त्रेण रोपयेत्। वसुधेति सुशीतेति पुण्यदेति धरेति च। नमस्ते शुभगे! नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागबकुलाश्च प्रियङ्गवः। माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीणि च केशराणि। तालाष्टकं श्रीफलसप्तकञ्च पञ्चाम्ररोपी नरकं न पश्येत्"। दानरत्नाकरे देवीपुराणम् "ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः। तेऽवीच्यादिनरके पच्यन्ते ब्रह्मणो दिनम्। सुतास्ते जीव्यमानास्तु ब्रह्मघ्नाः कीर्त्तिता भुवि। तस्मिन् देशे भयं नित्यं राजानोन चिरायुषः। नच नन्दन्त्ययं लोको यत्र श्रीफलभेदिनः। श्रीतरुर्बिल्वः। "लिखित्वा कङ्कणेनापि मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्। "सिद्धिः प्रचलतरङ्गतरलितमदुतरगभीरपवनोद्देशे श्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटे नानायतसहस्रवानराणां मध्ये चरमचरपत्थाईलाङ्गूलं पवनसुतं वायुवेगं परचक्रप्रमथनं श्रीमद्धनूमन्तमाज्ञापयन्ति अमुकसग्रामखण्डक्षेत्रे वाताभोग्भोगाग्नीरतीपाण्डरगण्डीभूलीखङ्गारनस्राकृपरागतारफड़िङ्गलावानरागरड़ामड़कमहिषादिरोगम् खण्डयत क्षणमपि विलम्बं मा चरत यदि विलम्बं कारयत तदा युष्मान् यतखण्डं कारयामीति। ह्रां ह्रीं ह्रौं श्रीरामाय नमः"। इति मन्त्रं शु बन्धयेत्" "कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः" पु०त०पु०। वा ङीप् कृषीत्यप्यत्र। स्वार्थे क कृषिकाप्यत्र स्त्री। आधारे क्ति। भुवि २। "कृषिर्भूवाचकः शब्द" भा०। कृष्णशब्दे दृश्यम्

कृषिक पु० कृष-किकन्। फाले अम० कर्षके त्रि०।

कृषिजीविन् त्रि० कृषा जीवति जीव-णिनि। स्वयमस्वयं वा कृतया कृषिवृत्त्या जीविनि स्त्रियां ङीप्।

कृषिपराशर पु० कृषिकर्त्तव्यतादिविधायकपराशरमतानुसारिनिबन्धभेदे।

कृषीवल त्रि० कृषिरस्त्यस्य वलच् दीर्घः। कर्षके कृषिजीविनि। "कच्चित्तुष्टाः कृषीवलाः" भा० स०५अ०

कृष्कार पु० अव्युत्पन्नं प्रातिपदिकम्। शिवे शिवसहस्रनाम

कृष्ट त्रि० कृष-कर्म्मणि क्त। १कृतकर्षणे क्षेत्रादौ "कृष्टजानामोषधीनां जातानां च स्वयं वने" मनुः कृष्टपच्यः भावे क्त। २कर्षणे न० "न प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्" या०। ततः दृढा० भावे इमनिच् ऋतोरः। क्रष्टिमन् कृष्टत्वे कर्षणे पु०

कृष्टपच्य त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच-कर्म्मकर्त्तरि क्यप्। कृष्टक्षेत्रे-स्वयमेव पच्यमाने धान्यादौ "न कृष्टपच्यमश्नीयादकृष्टञ्चाप्यकालतः" भाग० ७।१२।१७। वानप्रस्थधर्म्मोक्तौ। शुद्रकर्म्मणि तु यदेव "कृष्टपाक्य इति" सि० कौ०

कृष्टि पु० कृष-कर्त्तरि क्तिच् भावे क्तिन् वा। १पण्डिते अमरः २जनमात्रे निरु० "मानुषीणामेकः कृष्टीनामभवत् महात्मा" ऋ० ६।१८।२ "विश्वानमत्र कृष्टयः" ऋ० ८।६।४। "कृष्टयः प्रजाः" भा० "कृष्टीनां विचर्षणिः" ऋ०६।४५।१६ ३कर्षणे स्त्री० सिद्धा० ४आकर्षणे च

कृष्टोप्त त्रि० कृष्टे क्षेत्रे उप्तः। कृतकर्षणक्षेत्रे-कृतवपने ओषध्यादौ "अन्या ग्राम्याश्च तथा कृष्टोप्ताः पर्वताश्रयाः। अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः" भा० आ० ६८अ०।

कृष्ण पु० कृष-नक्। भगवतोऽवतारभेदे वासुदेवे १देवकीनन्दने। "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्युक्ते २परब्रह्मणि, ३वेदव्यासे, ४अर्ज्जुने मध्यमपाण्डवे च। कृष्णवर्णत्वात् ५कोकिले, विश्वः ६काके, मेदि० करमर्द्दके (करमचा) ७दक्षे, शब्दर० ८नीले, वर्णे ९तद्वति त्रि० अमरः १०कालागुरुणि राजनि०। ११अशुभकर्म्मणि च न०। कृष्णकर्ता अमरः १२द्रौपद्यां, १३नीलीवृक्षे, १४पिप्पल्यां, १५द्राक्षायां, स्त्री मेदि० १६नीलपुनर्नवायाम्, १७कृष्णजीरके, १८गाम्भार्य्यां १९कटुकायाम्, २०शारिवाभेदे २१राजसर्षपे, राजनि० २२दर्पदार, भावप्र०। २३काकोल्यां, २४रोमराज्याञ्च स्त्री टाप् जटा० कृष्णवर्णत्वाच्च तासां तथात्वम् २५वनभेदे न० कृष्णवनशब्दे विवृतिः। २६नीलाञ्जने, २७लौहे, २८मरिचे च पु० जटाधरः। तत्र भगवदवतारविशेषः "अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जातः कृष्णोऽसौ देव-

कौतुतः'' ब्रह्मपु० । वसुदेवदेवक्यौ च कश्यपादिती । तौ च वरुणस्य गोहरणात् ब्रह्मणः शापेन गोपालत्वमापतुः । यथाह हरिवं० ५६ अ०

"इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत ! । गवां कारणतत्त्वज्ञः कश्यपे शापमुत्सृजम् । येनांशेन हृता गावः कश्यपेन महात्मना । स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति । या च सा सुरभिर्नाम अदितिश्च सुरारणी । उभे ते तस्य वै भार्य्ये सह तेनैव यास्यतः । ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते । तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले । गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः । तत्रासौ गोष्वभिरतः कंसस्य करदायकः । तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा । देवकी रोहिणी चैव वसुदेवस्य धीमतः । तत्रावतर लोकानां भवाय मधुसूदन ! । जयाशीर्वचनैस्त्वेते वर्द्धयन्ति दिवौकसः । आत्मानमात्मना हि त्वमवतार्य्य महीतले । देवकीं रोहिणीञ्चैव गर्भाभ्यां परितोषय । तत्र त्वं शिशुरेवादौ गोपालकृतलक्षणः । वर्द्धयस्व महाबाहो ! पुरा त्रैविक्रमे यथा ॥ छादयित्वात्मनात्मानं मायया गोपरूपया । गोपकन्यासहस्राणि रमयंश्चर मेदिनीम् । गावस्ते रक्षिता विष्णो ! वनानि परिधावतः । वनमालापरिक्षिप्तं धन्या द्रक्ष्यन्ति ते वपुः । विष्णो ! पद्मपलाशाक्ष ! गोपालवसतिङ्गते । बाले त्वयि महाबाहो ! लोको बालत्वमेष्यति । त्वद्भक्ताः पुण्डरीकाक्ष ! तव चित्तवशानुगाः । गोषु गोपा भविष्यन्ति सहायाः सततन्तव । वने चारयतो गास्तु गोष्ठेषु परिधावतः । मज्जतो यमुनायान्तु रतिमाप्स्यन्ति ते भृशम् । जीवितं वसुदेवस्य भविष्यति सुजीवितम् । यस्त्वया तात इत्युक्तः स पुत्र इति वक्ष्यति । अथ वा कस्य पुत्रत्वं गच्छेथाः कश्यपादृते । का वा धारयितुं शक्ता विष्णो ! त्वामदितिं विना । योगेनात्मसमुत्थेन गच्छ त्वं विजयाय वै'' इति विष्णुं प्रति ब्रह्मोक्तिः । ताभ्यां तस्योत्पत्तिकथा च तत्र ६० अ० यथा

"यद्वं सप्त ते गर्भाः कंसेन विनिपातिताः । तन्तु गर्भं प्रयत्नेन ररक्षुस्तस्य रक्षिणः । स तत्र गर्भवसतौ वसत्यात्मेच्छया हरिः । समधत्त यशोदाऽपि गर्भं तदहरेव तु । विष्णोः शरीरजां निद्रां विष्णोर्निर्द्देशकारिणीम् । गर्भकाले त्वसंपूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा । यामेव रजनीं विष्णुर्जज्ञे वृष्णिकुले प्रभुः । तामेव रजनीं कन्या यशोदाऽप्यजायत । नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा । तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा । देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम् । मुहूर्त्तेऽभिजिति प्राप्ते सार्द्धरात्रे विभूषिते । सागराः समकम्पन्त चेलुश्च धरणीधराः । जज्वलुश्चाग्नयः शान्ता जायमाने जनार्द्दने । शिवाः संप्रववुर्वाताः प्रशान्तमभवद्रजः । ज्योतींषि व्यत्यकाशन्त जायमाने जनार्द्दने । अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्व्वरी । मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः । अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः । जायते भगवांस्तत्र नयनैर्मोहयन् जगत्'' । ततोऽनतिदूरे

"वसुदेवस्तु तं रात्रौ जातं पुत्त्रमधोक्षजम् । श्रीवत्सलक्षणं दृष्ट्वा युतं दिव्यैश्च लक्षणैः । उवाच वसुदेवस्तं रूपं संहर वै प्रभो ! । भीतोऽहं देव ! कंसस्य तस्मादेवं ब्रवीम्यहम् । मम पुत्त्रा हतास्तेन तव ज्येष्ठाऽम्बुजेक्षण ! । वैशम्पायन उवाच । वसुदेववचः श्रुत्वा रूपं संहरदच्युतः । अनुज्ञाप्य पितृत्वेन नन्दगोपगृहं नय । वसुदेवस्तु संगृह्य दारकं क्षिप्रमेव च । यशोदाया गृहं रात्रौ विवेश सुतवत्सलः । यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकम् । गृहीत्वा दारिकां तां च देवकीशयने न्यसत् । परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः । वसुदेवः कृतार्थो वै निर्जगाम निवेशनात्'' ।

यथा रूपेण तस्याविर्भावकथा रूपं भाग० १० स्क० वर्णितम्

"देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः । तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् । महार्हवैदूर्य्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत । स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा । कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्'' । इत्याविर्भावं वर्णयित्वा

"जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ! । समुद्विजे भवद्धेतोः कंसादहमधीरधीः । उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् । विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् । बिभर्त्ति, सोऽयं मम गर्भगोऽभू

दृष्टो मर्त्त्यलोकस्य विडम्बनं तत्" । इत्थं देवक्याः प्रार्थने तां सान्त्वयित्वा तस्य प्राकृतरूपधारणं तत्रैवोक्तं यथा "इत्युक्त्वा तां हरिस्तूष्णीं भगवानात्ममायया । पित्रोः संपश्यतोरेव बभूव प्राकृतः शिशुः ।" एवञ्च चतुर्भुजरूपेणोत्पन्नत्वेऽपि प्राकृतरूपत्वोक्त्या तस्मादनन्तरं द्विभुजत्वमिति वैष्णवा मन्यन्ते । गीतायान्तु "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो ! भव विश्वमूर्त्ते !" इति भारतयुद्धकाले तस्य चतुर्भुजत्वकीर्त्तनात् चतुर्भुजत्वमेवासीत् शङ्खचक्राद्यायुधशून्यत्वेन प्राकृतत्वमिति तु युक्तमुत्पश्यामः । तस्येदानीं जन्मसमयोनिरूप्यते प्रागुक्तमत्स्यपु० कलौ जातत्वाभिधानात् कलियुगएवास्य प्रादुर्भावः । यदि च एकैकमन्वन्तरे बहवः कलयः सम्भवन्ति तथापि वर्त्तमानवैवस्वतमन्वन्तरे अष्टाविंशतितमे महायुगे यः कलिस्तत्रैवाविर्भूतः। तत्रापि ज्योतिर्निबन्धे "उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषोलाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनोराहवः । नैशीथः समयोऽष्टमी बुधदिनं ब्राह्मर्क्षमत्र क्षणे श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परं ब्रह्म तत्" ग्रहाणां विशेषराश्यवस्थानकाले तस्याविर्भावोक्तेः तादृशसमयस्य च कलेः ६४७वर्षेषु गतेषु सम्भवः कलौ ततः पूर्वं तादृशसमयासम्भवात् । राजतरङ्गिण्यां च "शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणाम भवन् कुरुपाण्डवाः" इत्यनेन कलेः ६५३ वर्षेषु गतेषु तत्समकालीनयोः कुरुपाण्डवयोरुत्पत्तिरुक्ता अतस्तस्यापि तत्कालोत्पत्तिकत्वम् ।

तदवतारचरितं च हरिवं० ४२अ० वर्णितं यथा

"अपरः केशवस्यायं प्रादुर्भावो महात्मनः । विख्यातो माथुरे कल्पे सर्वलोकहिताय वै । यत्र शाल्वश्च मैन्दश्च कंसं द्विविदमेव च । अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकाम् । नागं कुवलयापीडं चाणूरं मुष्टिकं तथा । दैत्यान्मानुषदेहस्थान् सूदयामास वीर्यवान् । छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्मणः । नरकश्च हतः सङ्ख्ये यवनश्च महाबलः । हृतानि च महीपानां सर्वरत्नानि तेजसा । दुराचाराश्च निहताः पार्थिवा ये महीतले" ।

तस्य च कृष्णनामता गर्गेण तथा नामकरणात् यथाह भाग०१०।८।८ "आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लोरक्तस्तथापीत इदानीं कृष्णतां गतः" इति अपीतः श्याम इत्यर्थः भाग० ११स्क० युगावतारे द्वापरे श्याममूर्त्तित्वोक्तेः यथा "कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः । कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू । त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः । हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः । द्वापरे भगवान् श्यामः पीतवासा निजायुधः । श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः । नानातन्त्रविधानेन कलावपि यथा शृणु । कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदः । यज्ञैः संकीर्त्तनप्रायैर्यजन्तीह सुमेधसः" । अस्य तन्नामनिर्वचनं च भा० उ० ६८अ०

"कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णोभवति सात्वतः"

कल्पभेदेऽपि वैवस्वतमनोरष्टाविंशतितमे युगे युगे तस्याविर्भावः अतएव छा०उ०कल्पभेदादिप्रायेणैव "तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इत्युक्तम् । वस्तुतस्तस्य भगवदवतारात् भिन्नत्वमेव तस्य घोराङ्गिरसशिष्यत्वोक्तेः परमेश्वरस्य तथात्वासम्भवात् । अतस्तन्नाम्नि २८अपरस्मिन्नेव कृष्णशब्दस्य वृत्तिः । "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते । भस्मीभवन्ति राजेन्द्र! महापातककोटयः" पुरा० । अर्ज्जुनस्य तन्नामनिर्वचनं भा० वि०४४अ० । "कृष्ण इत्येव दशमं नाम चक्रे पिता मम । कृष्णावदातस्य सतः प्रियत्वात् बालकस्य" च । व्यासस्य कार्ष्ण्यप्राप्तत्वात् "योव्यस्य वेदांश्चतुरस्तपसा भगवानृषिः । लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च" भा० आ०१०५अ० । कृष्णस्येदम् अण् कार्ष्ण तत्सम्बन्धिनि त्रि० "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा०आ०१अ०उक्ते । अपत्ये तु इञ् । कार्ष्णि तदपत्ये पुंस्त्री । चन्द्रस्याकरप्रथमादिषड्दशकलाक्रियारूपे प्रतिपदादिदर्शान्तात्मकपञ्चदशतिथ्यात्मके १०कालभेदे अर्द्धमासे "चन्द्रक्षयकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" ति०त०षट्त्रि० । इन्दुकलाक्षयप्रकारः इन्दुशब्दे ६११पृ० उक्तः । तदुपलक्षिते ११पितृयाने "शुक्लकृष्णे गती ह्येते जगतां शाश्वते मते । एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः" गीता । पितृयाने च यथा कृष्णपक्षसंबन्धस्तथा आतिवाहिकशब्दे ६५१पृ० दर्शितम् । "धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" गीता । कृष्णपक्षाभिमानिनि पितृयानस्थे कर्म्मि आतिवाहिके ईश्वरनियोजिते १२देवभेदे आतिवाहिकशब्द

विवृतिः। २२द्यूतादुपार्जिते धने न० कृष्णधनशब्दे अर्थशब्दे च विवृतिः। कृष्णस्य भावः ष्यञ्। कार्ष्ण्य तद्भावे न० "कार्ष्ण्यात् कृष्णत्वमेव च" भा०आ० १०१ अ०। इमनिच्। कृष्णिमन् तद्भावे पु० "कृष्णिमानं दधानेन"। तल्, कृष्णता स्त्री,त्व कृष्णत्व, न०, कृष्णत्वे।"कृष्णोऽपि शुद्धेरधिकं विधाद्भिः" माघः। "अभिहत्य महच्छलाद् कृष्णमेघशिरोदृषे" रघुः। २४नेत्रगतेऽशभेदे अक्षिशब्दे विवृतिः। २५कृष्णसारमृगे पुंस्त्री० "एषः कृष्णः स कीर्त्तितः" छन्दो०द०। कृष्णाजिनम्

कृष्णक पु० कृष्णप्रकारः स्थूला० कन्। १कृष्णसर्पे अनुकम्पितं कृष्णाजिनम् कन् अजिनान्तत्वादुत्तरपदलोपः। अनुकम्पिते २कृष्णाजिने न०

कृष्णकन्द न० कृष्णः कन्दोऽस्य। रक्तोत्पले त्रिका०

कृष्णकर्कटक पुंस्त्री नित्यकर्म०। कर्कटभेदे सुश्रुतः। "कूर्म्मकुम्भीरकर्कटकृष्णकर्कटशिशुमारप्रभृतयः पादिनः" सुश्रुते पादिजलचरोक्तौ

कृष्णकर्मन् न० कर्म०। १हिंसादिनिषिद्धकर्म्मणि। व०स०। २तद्युक्ते पापाचारिणि त्रि० अमरः ३व्रणस्य कृष्णताप्रसादके क्रियाभेदे स च सुश्रुतेन दर्शितो यथा "अथ व्रणस्योपक्रमा भवन्तीत्युपक्रमे "दारुणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म" इत्याद्युक्ता। "दुष्टत्वात्तु शुक्लानां कृष्णकर्म्म हितं पुनः इति" तस्योपयोगो दर्शितः। कृष्णेऽर्पितं कृष्णार्पितं कर्म्म०। ३परमेश्वरार्पिते कर्म्मणि न०।व०स०। ४तद्युक्ते त्रि० स्त्रियां वा डाप्।

कृष्णकलि पु० कृष्ण इव शुद्धात्मा कलिः कलिकाऽस्य। सनामख्याते पुष्पप्रधाने वृक्षे। [स्त्रियां जातित्वात् ङीप्।

कृष्णकाक पुंस्त्री नित्यकर्म०। (दाँडकाक) काकभेदे हारा०

कृष्णकापोती स्त्री ओषधिभेदे सुश्रु०। "अथौषधीव्याख्यास्यामः" इत्युपक्रमे "श्वेतकापोती कृष्णकापोती" इत्यादिना विभज्य तदुपयोगप्रकारोदर्शितो यथा। "गोनसाजगरीकृष्णकापोतीनां सनखशिष्ट खण्डयित्वा क्षीरेण विपाच्याभिषूय" इत्याद्युक्तं सुश्रु० तच्च सोमौषधिशब्दे १५६३ पृ० उक्तम्।

कृष्णकाय पुंस्त्री कृष्णःकायोऽस्य महिषे शब्दचि०। जातित्वेऽपि योपधत्वात् स्त्रियां न ङीप् किन्तु टाप्।

कृष्णकाष्ठ न० कृष्णं काष्ठमस्य। कालागुरुणि राजनि०

कृष्णकोहल पु० कृष्णस्य कृष्णकर्म्मणः स्वं वितर्कं वाति वा–क। द्यूतकारिणि त्रिका०।

कृष्णगङ्गा स्त्री नित्य०। कृष्णवेणायां नदीभेदे राजनि०।

कृष्णगतरोग पु० नेत्रावयवभेदकृष्णगतरोगभेदे। तद्विज्ञानादि सुश्रुते उक्तं यथा।

"अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। यत्सव्रणं शुक्लमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव। चत्वार एतेऽभिहिताः विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात्। निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै। स्रावं स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्लमुदाहरन्ति। दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि। अवेदनावन्न च युग्मशुक्लं तत्सिद्धिमाप्नोति कदाचिदेव। स्थितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रु शुक्लम्। विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति। गम्भीरजातं बहलञ्च शुक्लं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम्। विच्छिन्नमध्यं पिशितावृतं वा चलं सिरासक्तमदृष्टिकृच्च। द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम्। उष्णाश्रुपातः पिडका च कृष्णे यस्मिन् भवेन्मुद्गनिभञ्च शुक्लम्। तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम्। संछाद्यते श्वेतनिभेन सर्व्वदोषेण यस्यासितमण्डलन्तु। अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः। विदार्य्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत्"।

कृष्णगति पु० कृष्णा गतिर्गतिस्थानमस्य। कृष्णवर्त्मनि वह्नौ तस्य गमनस्थानस्य दग्ध्वा कृष्णतापादनेन तथात्वम्। "वहवे स तदा गर्भः कक्षे कृष्णगतिर्यथा" भा० आनु० ८५ अ०।

कृष्णगन्ध पु०कृष्ण इयो गन्धोऽस्य। शोभाञ्जनवृक्षे राजनि०

कृष्णगर्भ पु० कृष्णवर्णो गर्भोऽस्य। कट्फले राजनि०।

कृष्णगिरि पु० नित्यकर्म०। नीलगिरौ

कृष्णगोधा कृष्णः गोधेव। कीटभेदे। "सर्षपिकः कृष्णगोधा यश्च काषायवासिकः" सुश्रु० कीटशब्दे विवृतिः।

कृष्णग्रीव त्रि० कृष्णा ग्रीवा यस्य। कृष्णवर्णगलेऽजादौ "कृष्णग्रीवआग्नेयः"यजु० २४,२, "कृष्णग्रीवः सितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः" इत्यादि अश्वमेधीयपशुविशेषोक्तौ। "श्वेतलोहितपर्य्यन्तः कृष्णग्रीवस्तडिद्द्युतः। स्निग्धपरिशोभातः सन्ध्यारागमथाद्यौत्" हरि० १७५ अ०। २नीलकण्ठे महादेवे पु०।

कृष्णचञ्चुक पु० कृष्णा चञ्चूरस्य कप्। चणके राजनि०।

**कृष्णचन्दन** न० कृष्णमिव चन्दनम् शा० त०। हरिचन्दने श्वेतचन्दने शब्दचि० [माहात्म्यात्तथात्वम्।

**कृष्णचन्द्र** पु० कृष्णचन्द्र इव। वासुदेवे तस्य चन्द्रवत् भक्ताना

**कृष्णचर** पु० कृष्णस्य भूतपूर्व्वः चरट्। भूतपूर्व्वकृष्णसम्बन्धिनि गवादौ

**कृष्णचूड़ा** स्त्री कृष्णस्य चूड़ा इव चूड़ाऽस्य। स्वनामख्याते पुष्पवृक्षे। स्वार्थे क अत इत्त्वम्। तत्रार्थे राजनि०।

**कृष्णचूडिका** स्त्री कृष्णा चूडाऽग्रं यस्याः कप् अत इत्त्वम्। गुञ्जायां राजनि०। [राजनि०।

**कृष्णचूर्ण** न०कृष्णं तद्वर्णं चूर्णम्। लौहमले (लोहार गु)

**कृष्णजटा** स्त्री कृष्णा जटा यस्याः। जटामांस्याम् रत्नमा०

**कृष्णजीरक** पु० नित्यकर्म्म०। कालवर्णे जीरके (कालजीरे) अमरः "कटूष्णः कफशोथघ्नो जीर्णज्वरविनाशनः। चक्षुष्यो रुचिकृद्ग्राही कृष्णजीरक ईरितः" राजनि०

**कृष्णतण्डुला** स्त्री कृष्णस्तण्डुलोऽस्याः। कर्णस्फोटलतायां राजनि०। [शब्दमा०।

**कृष्णताम्र** न० "पर्य्योर्वर्णेन" पा० कर्म्म०। गोशीर्षचन्दने

**कृष्णतार** पुंस्त्री कृष्णतारोऽस्त्यस्य अच्—अण् उप०स०। १कृष्णसारमृगे २हरिणमात्रे च राजनि०। स्त्रियां जातित्वात् ङीष्।

**कृष्णत्रिवृता** स्त्री नित्य कर्म्म०। (कालतेवोड़ी) त्रिवृताभेदे जटा०। [मसूरीवृक्षे स्त्री राजनि० टाप्।

**कृष्णदन्त** त्रि० कृष्णा दन्तायस्य। १कालवर्णदन्तयुक्ते २का-

**कृष्णदेह** पुंस्त्री कृष्णो देहोऽस्य। १भ्रमरे शब्दार्थत० स्त्रियां ङीष् २कालवर्णदेहान्विते त्रि०। कर्म्म०। कालवर्णे ३देहे पु०

**कृष्णद्वैपायन** पु० द्वीपे यमुनाद्वीपे भवः फक् द्वीपोऽयनं जन्मभूमिर्वास्य प्रज्ञाद्यण् कर्म्म०। वेदव्यासे तस्य यमुनाद्वीपोत्पत्तिकथा भा०आ० १०५अ०।

"धर्म्मयुक्तस्य धर्म्मार्थं पितुरासीत्तरी मम। सा कदाचिदहं तत्र गता प्रथमयौवना। अथ धर्म्मविदां श्रेष्ठः परमर्षिः पराशरः। आजगाम तरीं धीमांस्तरिष्यन् यमुनां नदीम्। स तार्य्यमाणो यमुनां मामुपेत्याब्रवीत्तदा। सान्त्वपूर्व्वं मुनिश्रेष्ठः कामार्त्तो मधुरं वचः। तमहं शापभीता च पितुर्भीता च भारत!। वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे। अभिभूय स मां बालां तेजसा वशमानयत्। तमसा (कुज्झटिकया) लोकमावृत्य नौगतामेव भारत!। मत्स्यगन्धो महानासीत् पुरा मम जुगुप्सितः। तमपास्य शुभं गन्धमिमं प्रादात् स मे मुनिः। ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम्। द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि। पाराशर्यो महायोगी स बभूव महानृषिः। कन्यापुत्रो मम पुरा द्वैपायन इति श्रुतः। योव्यस्य वेदांश्चतुरस्तपसा भगवानृषिः। लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च। सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः। सद्योत्पन्नः स तु महान् सह पित्रा ततो गतः"। "श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम्। अभ्यगच्छदृषिर्विद्वान् कृष्णद्वैपायनस्तदा। जनयामास यं काली शक्तेः पुत्रात्पराशरात्। कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम्। जातमात्रश्च यः सद्य इष्टं देहमवीवृधत्। वेदांश्चाधिजगे साङ्गान् सेतिहासान्महायशाः। यन्नेति तपसा कश्चिन्न वेदाध्ययनेन च। न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना। विव्यासैकं चतुर्द्धा यो वेदं वेदविदांवरः। पराशरात्मजो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः। यः पाण्डुं धृतराष्ट्रञ्च विदुरं चाप्यजीजनत्। शान्तनोः सन्ततिं तन्वन् पुण्यकीर्त्तिर्महायशाः"।

"मातुर्नियोगाद्धर्म्मात्मा गाङ्गेयस्य च धीमतः। क्षेत्रे विचित्रवीर्य्यस्य कृष्णद्वैपायनः पुरा। त्रीनग्नीनिव कौरव्यान् जनयामास वीर्य्यवान्। उत्पाद्य धृतराष्ट्रञ्च पाण्डुं विदुरमेव च। जगाम तपसे धीमान् पुनरेवाश्रमं प्रति"। "कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः। विचित्रवीर्य्यक्षेत्रे च पाण्डुश्चैव महाबलः। धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः। विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि"। भारते नानास्थाने

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम्। कोह्यन्यः पुण्डरीकाक्षात् महाभारतकृत् भवेत्" विष्णुपु०। तस्य विष्णोरवतारत्वकथा भाग० "ततः सप्तदशे जातः सत्यवत्यां पराशरात्। चक्रे वेदतरोः शाखा द्वापरे सोऽल्पमेधसः"। अवतारशब्दे ४२२पृ० विवृतिः। कृष्णेति द्वैपायनेति च तस्य नामद्वयम् कर्म्म० क्वचिदेकनामताऽपि। "द्वैपायनेन कृष्णेन नगरे वारणावते" भा०स०७१अ०। "कार्ष्ण्यात् कृष्णत्वमेव च" "कार्ष्णं वेदमिमं मया" इति च व्यस्तप्रयोगः। "तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे" वेणीसं०। प्रागुक्तभारते च समस्तप्रयोगः

**कृष्णधत्तू(धूस्तू)र** पु० कर्म्म०। (कालधुतुरा) वृक्षभेदे। "सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः। सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात्" राजनि०। धत्तूरशब्दे तत्सामान्यगुणा भावप्र०उक्तास्ते

"धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत्। कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः। उष्णो गुरुर्व्रणश्लेष्म कण्डूकृमि विषापहः"।

**कृष्णधन** न० कर्म०। द्यूतादिभिरर्ज्जिते धने। अर्थशब्दे ३६७पृ० विवृतिः। "पार्श्विकद्यूतचौर्य्याप्तं प्रतिरूपकसाहसैः। छलेनोपार्ज्जितं यच्च तत्कृष्णं समुदाहृतम्" विष्णुसं०।"पार्श्विकः अपायस्य पालनाख्यापनम्"मा० वि०

**कृष्णपक्ष** पु० कर्म०। चन्द्रस्य कलाह्रासकरे प्रतिपदादिदर्शान्ते पञ्चदशतिथ्यात्मके काले। तत्र (चान्द्रे) पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः। पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः। दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके" ति०त० षट्त्रिंशन्मतम्। "रावणेन हृता सीता कृष्णपक्षे सिताष्टमी" महाना०

**कृष्णपदी** स्त्री कृष्णौ पादौ यस्याः कुम्भप० ङीप् अन्त्यलोपः पद्भावश्च। कालपादयुक्तायां स्त्रियाम्। [रत्नमा०

**कृष्णपर्णी** स्त्री कृष्णं पर्णमस्याः। कालतुलस्याम्।

**कृष्णपवि** पु० पूयते पू-शोधे इन् पविः पन्थाः "पन्था वातेन शुध्यति" इत्युक्तेः पथोवातभिन्नशुद्धिहेतुत्वनपेक्षणात् तथात्वम् कृष्णः पन्था यस्य। वह्नौ "पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे" ऋ० ७,८,२। "कृष्णपविः कृष्णवर्त्मोर्ज्मि: भा० [फलमस्य। करमर्द्दे रत्ना०

**कृष्णपाक** पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाकः

**कृष्णपाकफल** पु० कृष्णपाकरूपं फलमस्य। करमर्द्दे अमरः

**कृष्णपिङ्गल** त्रि०"वर्णो वर्णेन"पा० कर्म०। कालपिङ्गलवर्णयुक्ते "ऋतं सत्यं परं ब्रह्म पुरुषं कालपिङ्गलम्" इत्युपस्थानमन्त्रः। तस्यापत्यम् इञ्। कार्ष्णपिङ्गलि तदपत्ये बहुत्वे उपका०कृष्णशब्देन द्वन्द्वे अद्वन्द्वे च वा तस्य लुक्। कृष्णपिङ्गलास्तदपत्येषु। २दुर्गायां स्त्री० त्रिका०

**कृष्णपिण्डीतक** पु० नित्यकर्म०। कृष्णपिण्डीरभेदे रत्नमाला कृष्णपिण्डीरोऽप्यत्र।

**कृष्णपिपीली** स्त्री नित्यकर्म०। पिपीलिकाभेदे कृष्णरोहिपिपीलिकायां (काठपिपड़ा) राजनि०

**कृष्णपुष्प** पु० कृष्णं पुष्पमस्य। १कृष्णधत्तूरे राजनि० २प्रियङ्गुवृक्षे स्त्री ङीप् शब्दच०

**कृष्णफल** पु०कृष्णं फलमस्य।१करमर्द्दे(करमचा)इत्वे २सोमराज्यां स्त्री टाप् अमरटीकायांभरतः [द्विरूपको०

**कृष्णफलपाक** पु० कृष्णः फलरूपः पाकोयस्य। करमर्द्दे

**कृष्ण(व)वलक्ष** पु० "वर्णो वर्णेन" पा०स०। १कालश्वेतवर्णे २तद्युक्ते त्रि० "अजिने पार्श्वमहिते कृष्णव(ब)लक्षे आर्षिके" कात्या० २२,४,१७, कृष्णधवलादयोऽप्यत्र।

**कृष्णभूम** पु० कृष्णा भूमिर्यत्र अच् समा०। कालवर्णमृत्तिकायुक्ते देशे हेम०

**कृष्णभूमिज** त्रि० कृष्णाया भूमेर्जायते जन-ड १कालवर्णमृत्तिकात उत्पन्ने २गोधूमविशेषे स्त्री राजनि०

**कृष्णभेदा(दी)** स्त्री कृष्णोवर्णेन भेद। अस्त्यस्याः ङीप् कटुकायां (कट्की) इत्वे राजनि० वा गौरा० ङीप्। तत्रार्थे अमरः

**कृष्णमण्डल** न० कर्म०। "नेत्रावयवभेदे। नेत्रायामत्रिभागात्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तमभागं तु दृष्टिं दृष्टिविशारदाः" सुश्रु०। भीमसेनादिवत् उत्तरपदलोपे कृष्णमप्यत्र तदभिप्रायेणैव कृष्णादिति सुश्रुतोक्तिः

**कृष्णमल्लिका** स्त्री कृष्णा कृष्णप्रिया मल्लिकेव। कृष्णार्ज्जके (कालतुलसी) इत्वे राजनि०।

**कृष्णमत्स्य** पुंस्त्री नित्यकर्म० (कालमाछ) इति ख्याते मत्स्यभेदे "पाठीनपाटलाराजीवकर्म्मि गोमत्स्यकृष्णमत्स्य वागुञ्जारमुरल सहस्र दंष्ट्र प्रभृतयो नादेयाः"सुश्रुतः स्त्रियां ङीप्

**कृष्णमुख** त्रि० कृष्णं मुखमास्यमग्रंश यस्य स्त्रियां वा ङीप् १कृष्णवर्णमुखयुक्ते २कालाग्ने च"स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा" गर्भलक्षणे सुश्रुतः ३वानरभेदे पुंस्त्री० स्त्रियां जातित्वात् ङीप्। ४दानवभेदे "मङ्कणपात् कृष्णमुखः कृष्णश्चैव महोदरः" हरिवं० २४०अ० दानवोक्तौ। कृष्णवदनादयोऽपि पूर्वोक्तार्थे त्रि०

**कृष्णमुद्ग** पु० नित्यकर्म०। मुद्गभेदे तद्भेदगुणादि भावप्र० उक्तं यथा

"मुद्गमकुष्ठयोराध्मानाकारित्वमन्यवैदलापेक्षया मत सर्वथा एतयोरपि किञ्चिदाध्मानकारित्वात् तत्र मुद्गस्य गुणाः मुद्गोरूक्षो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुरल्पानिलो नेत्रप्यो ज्वरघ्नो वनजस्तथा। मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा। श्वेतो रक्तश्च तेषान्तु पूर्वः पूर्वो लघुः स्मृतः। सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः। चरकादिभिरप्युक्त एव एव गुणाधिकः"।

माधववाणकतुराष्ट्रजेति राजनि०तस्य पर्य्यायदर्शनात् वसन्तकाले चैत्रमासे तुराष्ट्रदेशेऽस्योत्पत्तिरवसेया ततोदेशादानीयान्यत्र देशेऽपि तस्योत्पादना एवमन्यत्र कालेऽपि।

**कृष्णमूली** स्त्री०कृष्णं मूलमस्याः ङीप्। शारिवाभेदे। राजनि०

कृष्णमृग पुंस्त्री नित्यकर्म० । (कालसार) कृष्णसारमृगे "हन्तुं कृष्णमृगांश्चैव मेध्यान्वन्यान् वनेचरान्" भा० व० ५३८० । स्त्रियां जातित्वात् ङीष् कृष्णहरिणा- दयोऽप्यत्र पुंस्त्री०

कृष्णमृत् स्त्री० कर्म० । कृष्णवर्णे मृत्तिकाभेदे कृष्णभूमौ हेमच० । "कृष्णमृत् क्षतदाहास्रप्रदरघ्नी च पित्तनुत्" राजनि० कृष्णमृत्तिकाप्यत्र । ष० त० । २तद्युक्ते त्रि० हेमच०

कृष्णयजुर्वेद पु० तैत्तिरीयशाखायजुर्वेदभेदे । तस्य कृष्णत्वञ्च तस्य पाठे प्रतिपद्युक्तपूर्णिमायामाडाच्च तु । यजुर्वेदस्य द्वौ भेदौ शुक्लकृष्णभेदात् तदवान्तरभेदाश्च चरणव्यूहभाष्ये दर्शिताः यथा

"यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदा भवन्ति "चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वार्त्तान्तवीयाः श्वेताश्वतरा औपमन्यवः पाताण्डिनीया मैत्रायणीयाश्चेति । मैत्रायणीयानाम सप्तभेदा भवन्ति मानवा मैत्रायणीया दुन्दुभाश्चैकेया वाराहा हारिद्रवेयाः श्यामाः श्यामायनीयाश्चेति । तेषामध्ययनमष्टशतं यजुःसहस्राण्यधीत्य शाखापारो भवति तान्येव द्विगुणान्यधीत्य पदपारो भवति तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति षडङ्गान्यधीत्य षडङ्गविद्भवति शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि भवन्ति तत्र प्राच्य उदीच्यां, नैरृत्यां दिशि व्यवस्थित वाजसनेयानां सप्तदश भेदा भवन्ति काण्वा माध्यन्दिनाः शापीयाः श्यामायनीयाः कापोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशर्याः वैधेया वैनेया औधेया गालवा बैजवाः कात्यायनीयाश्चेति प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायतर्क इत्युपाङ्गानि उपज्योतिषं शाङ्कलक्षणं प्रतिज्ञानुवाक्यः परिसंख्या चरणव्यूहः श्राद्धकल्पः प्रवराध्यायश्च शुक्लक्रतुसंख्यानुगमलक्षणान्यपि हौत्रिकमाग्नेयोक्थानि कूर्मलक्षणम् इत्यष्टादश परिशिष्टानि भवन्ति । द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके । इत्युक्तमेतत्सकलं स शुक्रियस्तु कीर्त्तितम् । ग्रन्थाश्च परिसंख्याता ब्राह्मणस्य चतुर्गुणम् । तत्र तैत्तिरीयकानाम द्विभेदा भवन्ति । औख्याः काण्डिकेयाश्चेति । काण्डिकेयानाम पञ्चभेदा भवन्ति । आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति तत्र कठानां तु प्रष्टाचत्वारिंशदुपग्रन्थाः मन्त्रब्राह्मणयोर्वेदश्चतुर्गुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेयोऽन्ये शाखान्तराः स्मृताः । तेषामध्ययनं प्रवचनीयाश्चेति" सू० । विवृतमेतद्भाष्ये यथा "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति" अत्र शाखाभेदा ग्राह्याः । षडुत्तराशीतिभेदा इत्यर्थः । "तत्र चरका नाम द्वादशभेदा भवन्ति" इति स्पष्टार्थः । ते के भेदा इत्याह चरका इत्यादि मैत्रायणीयानाम सप्तभेदा भवन्ति । मैत्रायणीयाः मानवा इत्यादि । मैत्रायणीयशाखागण इत्यर्थः । मैत्रायणीयस्तु शाखमनीयभेदाध्यायी । मानवं कल्पसूत्रम् । तेषामध्ययनमष्टोत्तरशतं यजुःसहस्राण्यधीत्य शाखापारो भवति तेषामध्ययने द्विचत्वारिंशदध्यायाः अष्टशताधिकसहस्रमन्त्रा इत्यर्थः । तान्येव द्विगुणान्यधीत्य पदपारो भवति द्विवारपठनात्पदपारायणफलं भवति इत्यर्थः । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति त्रिवारपठनात् क्रमपारायणफलं भवतीत्यर्थः । पदक्रमाध्ययनफलं भवतीत्यर्थः । तत्र प्राच्य उदीच्यां, नैरृत्यां निरुक्तस्थित वाजसनेयानां सप्तदश भेदा भवन्ति प्राच्य उदीच्यनैरृत्य इति तिसृषु दिक्षु । वाजसनेयवेदोत्पत्तिमध्ये शाखाः इतरदेशेषु वेदशाखयोर्विभाग उच्यते तच्च महार्णवे उक्तम् "पृथिव्यामध्यरेखायां नर्मदा परिकीर्त्तिता । दक्षिणोत्तरयोर्भागे शाखावेदश्च उच्यते । नर्मदादक्षिणे भागे आपस्तम्बाश्वलायनी । राणायनी पिप्पला च यज्ञकन्याविभागिनः । माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा नर्मदोत्तरभागे च यज्ञकन्याविभागिनः । तुङ्गकृष्णा तथा गोदा सह्याद्रिशिखरावधि । आश्वलायनदेशपर्यन्तम् तत्र चाश्वलायनी । उत्तरे गुर्जरे देशे वेदो बह्वृच ईरितः । कौषीतकिब्राह्मणं च शाखा शाङ्खायनी स्थिता । आन्ध्रादिदक्षिणाग्नेय्यां गोदासागरकावधि । यजुर्वेदस्य तैत्तिर्या आपस्तम्बी प्रतिष्ठिता । सह्याद्रिपर्वतादारादिशाम् नैरृत्यसागरात् । हिरण्यकेशी शाखा च परशुरामस्य सन्निधौ । मयूरपर्वताच्चैव यावद्गुर्जरदेशतः । व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता । अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा । वाजसनेयी शाखा च माध्यन्दिनी प्रतिष्ठिता । ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता । वाजसनेयवेदस्य प्रथमा काण्वसंज्ञका" इति व्यासशिष्यो वैशम्पायनो निगदाख्ययजुर्वेदम्पठित्वा शिष्यान् चकार । तथाह भागवते १२।६ अ० "वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् । याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् ! कियत् । चरितेनाल्पसाराणां च-

अकारिषाम् चकार चकरतुः चकरिथ। करीता। क(रि)रीष्यति करी(रि)तव्यः कार्यः। कर्म्मणि कीर्य्यते अकारि अकारिषाताम् अकारि(क(रि)री) षाताम् किरन् कीर्य्यमाणः। कीर्णः कीर्णिः करी(रि)तुम्

अनु+पश्चात् क्षेपे अनुकिरति अनुकीर्णः

अप+हर्षगासभक्ष्यार्थतया खनने तत्र चतुष्पाज्जन्तु-पक्षि कर्त्तृके आ॰ सुट् च। अपस्किरते वृषो हृष्टः भक्षार्थी कुक्कुटः वासार्थी श्वा वा। हर्षाभावे तु न सुट् न वा तङ्। अपकिरति कुसुमम्।

अव+अधःक्षेपणे दूरतःप्रक्षेपे च सक॰ अवकिरति भक्षार्थं सुट् अवस्करः। व्रतात् पतने अक॰। अवकीर्णी

आ+समन्तात् क्षेपणे विस्तारे च सक॰ "आकीर्णमृषिपत्नीना मुटजद्वाररोधिभिः" रघुः

उद्+उत्खनने (गाड़ा) उत्कीर्णशब्दे उदा॰ [त्कीर्णे"रघुः

सम्+उद्+छेदने विदारणे हिंसायां च सक॰"मणौ वज्रसमु-

उप+छेदने सुट् च। उपस्किरति

परा+सम्यक् क्षेपे व्याप्तौ च सक॰ पराकीर्णः

प्र+प्रक्षेपे सक॰ नानाजातीयैर्मेलने। प्रकीर्णम्

प्रति+हिंसायाम् सुट् च।"उरोविदारं प्रतिचस्करे नखैः"माघः

वि+विक्षेपे सक॰ "व्यकीर्य्यत त्र्यम्बकपादमूले: कुमा॰

सम्+मिश्रणे। सङ्करः सङ्कीर्णः

कॄ हिंसने क्र्यादि॰ उभ॰ सक॰ सेट्। कृणाति अकारीत्। चकार चकरे करीता करी(रि)ष्यति ते। कीर्णः कीर्णिः

कॄ विज्ञाने चुरा॰ आत्म॰ सक॰ सेट्। कारयते अचीकरत।

कॄत संशब्दे चु॰ उभ॰ सक॰ सेट्। कीर्त्तयति-ते अचकीर्त्तत्-त कविकल्पद्रुमः।

कॢप्त त्रि॰ कृप-क्त। १रचिते, २नियते, 'कॢप्तेन सोपानपथे-नेति" रघुः। ३छिन्ने च। "कॢप्तकेशनखश्मश्रुः" मनुः

कॢप्तकील स्त्री कॢप्तं कीलयति कीलि-अण्। व्यवस्थालिपौ त्रिका॰

कॢप्तधूप पु॰ कॢप्तोधूपोयेन। सिह्लके जटा॰

कॢप्ति स्त्री कृप-भावे क्तिन्। १कल्पने २अवधारणे ३नैयत्ये च। "तेषां कॢप्तिरन्यतरे कल्पन्ते" शत॰ ब्रा॰ १२।१।१।७ "संज्ञामूर्त्तिकॢप्तिस्तु त्रिवृत्कुर्व्वतः" भा॰ स्क॰

कॢप्तिक त्रि॰ कॢप्तं मूल्यदानेन स्वत्वं देशत्वेनास्त्यस्य ठन् ततः आगतः कन् वा। २क्रीते हेमा॰ तस्य मूल्यदा-नेन स्वत्वनैयत्यापादकतया तथात्वम्।

केकय पु॰ ब॰ व॰ देशभेदे। "अतऊर्द्धं जनपदान्निबोध गदतो मम" इत्युपक्रमे "उपावृत्तास्तथावर्त्ताः सुराष्ट्राः केकयास्तथा" भा॰ उ॰ ८अ॰। "उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ" रा॰अ॰ ६७अ॰ "केकयांस्ते गमिष्यन्तोऽश्वयानारूढा सत्वरात्" रामा॰ अ॰ ६॰अ॰ "तथा केकयराजानं वृद्धं परमधार्म्मिकम्। श्वशुरं राज-सिंहस्य सपुत्रं तमिहानय" रामा॰ आ॰१२।१४ "अयं केकयराजस्य पुत्रोवसति पुत्रक! त्वां नेतुमागतो वीरो युधाजित् मातुलस्तव" रामा॰१।।१६।

स च देशः वृ॰स॰ कूर्म्मविभागे उत्तरस्यामुक्तः। "उत्त-रतः कैलासः इत्युपक्रमे "केकयवसातियामुनभोग प्रस्थार्जुनायनाग्नीध्राः" इति। केकयानां राजा अण् यादेरियादेशः। कैकेय तद्देशनृपे। बहुषु तस्य लुक्। केक-याः तद्देशनृपेषु ब॰व॰। सोऽभिजनोऽस्य अण्। कैकेय तद्देशवासिनि बहुषु तस्य लुक्। उपचारात् २केकयनृपे पु॰ "सत्कृत्य कैकयीपुत्रं केकयोधनमादिशत्" "सत्कृत्य केकयो राजा भरतस्य ददौ धनम्"रा॰ अ॰ ७।२।।१८। तस्यापत्यम् अण्। तदपत्ये पुंस्त्री॰ स्त्रियां तु भर्गा॰ न लुक्। कैकेयी"गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया" रामा॰अ॰७०।।७।केकयात् तन्दजनकभावरूपपुंयोगे ङीप् केकयी। ३केकयनृपकन्यायाम् स्त्री द्वापरयुगीये ४नृप-भेदे पु॰ "यदा तु पञ्चालपतिर्न्नेताला सकेकयश्चेदिपति-र्वयश्च" भा॰भी॰ १२०अ॰ युधिष्ठिरं प्रति श्रीकृष्णोक्तिः

केकर त्रि॰के मूर्द्ध्नि करोति नेत्रतारां शीलमस्य कृ-अच् अलुक् स॰। निम्नोन्नतादियुक्ते १पुरुषे (टेरा) अमरः "पित्रा-विवदमानश्च केकरो मद्यपस्तथा"मनुः पाठान्तरे। उपचा-रात्२तथाचक्षुषि न॰ "तरचौ निकृते चैव जायते केक-रेक्षणः" शाता॰। तद्धेतुतया तरक्षुवधोक्तः "चतु-र्वर्षं तु केकरः" विश्वसारतन्त्रोक्ते चतुवर्णात्मके ३मन्त्रे पु॰ कुमारशब्दे २१०६पृ॰ विवृतिः

केका स्त्री के मूर्द्ध्नि कायते कर्म्मणि ड अलुक्स॰। मयूर-रवे अमरः "षड्जसंवादिनीः केकाः" रघुः। ततः अस्त्यर्थे इनिठनौ। केकिन् केकिक तद्युक्ते मयूरे पुंस्त्री इनौ स्त्रियां ङीप् ठनि टाप्

केकावल पुंस्त्री॰ केकां रवभेदं वहते सृणाति वल-अच् केका+वा॰ अस्त्यर्थे वलच् वा। मयूरे शब्दच॰ स्त्रियां जातित्वात् ङीप्

केचन अव्य॰ किमः+पुंसि जसिरूपं ततश्च सुग्ध॰। केचि-दित्यर्थे एवं चित्-केचिदित्यत्र। "ये नाम केचिदिह

नः प्रथयन्त्यवश्याम्” मालतीमा० । पाणिनिमते द्विपदम् अतएव चिह्नगन्ध्रघटितमन्त्रान् पदकाराः द्विपदतया पेठुः

केचक न० कचु+स्वार्थे क पृषो० । कचुपदार्थे त्रिका० ।

केणिका स्त्री के मूर्द्ध्नि कुत्सितः अणकः स्तोत्वं लोकात् । पटकुट्याम् (ताम्बु) पटमण्डपे हेमच० ।

केत मन्त्रणे निःश्रावणे (यथोचितभाषणे) च अद० चु० उ० सक० सेट् । केतयति ते अचिकेतत् त केतयाम् बभूव आस चकार चक्रे । केतितः सङ्केतः “सत्यधर्म्मार्य्यवृत्तेषु मथाजी केतयेत् कुलजं द्विजम्” भा० आनु० १५८५ “केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः” मनुः । सम्+इच्छाभेदे शब्दस्यार्थबोधकव्यापारे । “सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च” काव्यप्र० “साक्षात् सङ्केतितं योऽर्थम्” सा० द० अभिप्रायसूचके चेष्टाभेदे (इसारा) सक० “भामगृहीतं कृतसङ्केतम्” जय० “कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका” अमरः

केत पु० कित–आवासे घञ् । १निवासे “अवलकुलिशाङ्कुश केतुकेतैः” भाग० १, १६, २६, भावे घञ् । २वासे च “यथाऽऽह्नुताः पक्षिगणाः विशन्ति केतार्थमिवाशु वृक्षम्” भा० क० ४३२८ । ३प्रज्ञायां निरुक्त० ४संकल्पे “देवासो अनु केतमायन्” ऋ० ४, २६, २, । “केतं संकल्पम्” भा० । ५मन्त्रणे च । “आविष्टना पैजवनस्य केतम्” ऋ० ७, १८, २५, “केतं मन्त्रणम्” भा० ६ज्ञातरि त्रि० । “प्रकेतोऽसि रुद्रेभ्यः” ताण्ड्य० ब्रा० १, १८, १०, प्रकेतः प्रकृष्टं ज्ञातासि” भा० । ७ध्वजे पु०

केतक पु० कित–निवासे ण्वुल् । “केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः” इत्युक्तलक्षणे १वृक्षे । २तत्पुष्पे न० । “स्फुरितभृङ्गमृगच्छवि केतकम्” माघः । गौरादि० ङीष् । ३केतक्यपि तद्वृक्षे स्त्री । “सुवर्णकेतकी तुल्या लघुपुष्पा सुगन्धिनी” भावप्र० । “केतकः कटुकः स्वादुर्लघुस्तिक्तः कफापहः” भावप्र० । केतक्याः पुष्पम् अण् तस्य बहुलं लुक् लुकि स्त्रीप्रत्ययस्यापि लुक् । केतक ४तत्पुष्पे न० । बहुलग्रहणात् पाटलादिवत् स्त्रीप्रत्ययस्य क्वचित् न लुक् । “केतकीपत्रगर्भां” नैष० “इति नुहन्तौ” “न केतक्या सदाशिवम्” नैष० टी० मल्लिनाथधृतवाक्यम् । आ० त० शिवपूजनाधिकारे भविष्यपु० “केतकी चाति मत्तश्च कुन्दो यूथी मदन्तिका । शिरीषसर्ज्जबन्धूककुसुमानि विवर्ज्जयेत्” । एवं शिवपूजने तत्पुष्पस्य निषेधात् राजनि० शिवद्विष्टेति तत्पर्याये उक्तम् । अतएव नैषधे “विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् । दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम्” नैष० वर्णितम् वर्णितञ्च तस्याः क्रकचाकारपत्राढ्यत्वादि यथा “वियोगभाजां हृदि कण्टकैः कटुर्निधीयसे कर्णिशरः स्मरेण यत् । ततो दुराकर्षतया तदन्तकृद्विगीयसे मन्मथदेहदाहिना । त्वदग्रसूचीसचिवः स कामिनो मनोभवः सीव्यति दुर्यशःपटौ । स्फुटञ्च पत्रैः करपत्रमूर्त्तिभिर्वियोगिहृद्दारणि दारुणायसे । धनुर्म्मधुस्विन्नकरोऽपि भीमजापरं परागैस्तव धूलिहस्तयन् । प्रसूनधन्वा शरसात्करोति मामिति क्रुधाऽऽक्रुशत्तत्र तेन केतकम्” । केतकमित्यत्र अणो न लुक् । पुष्पफलभिन्ने तु नाणो लुक् । “अगमत् कैतकं रजः” रघुः । केत+स्वार्थे क । ५ध्वजे पु० । “सारोहायुधकेतकान्” भा० क० २४ अ० यत्र बहुव्रीहौ–कप् इति तु ज्यायः

केतन न० कित-भावाधिकरणकर्म्मकरणेषु यथायथं ल्युट् । १निमन्त्रणे, २ध्वजे, ३अम० । ४चिह्ने, ५कृत्ये हेमच० । ६स्थाने शब्दरत्ना० । ७कार्य्ये मेदि० । तत्र निमन्त्रणे “प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनम्” मनुः । “याचन्तः पतिताश्चैव सर्वतोऽन्वसाक्षयैव च । दैवे वाप्यथ वा पित्र्ये तावच्चा हन्ति केतनम्” । मनुः वासे “न तत्र छत्रच्छाया वा पानीयं केतनानि च” भा० व० १२२६८ । ध्वजे । “भग्नं भीमेन महता भवतो रथकेतनम्” वेणी० “समालम्बे ह्यराजकेतनः” कुमा० “व्यद्रवन्त रणे भीता विकीर्णायुधकेतनाः” भा० द्रो० १४३०० ।

केतु पु० चाय–तु कादेशः । १पताकायां निरु० २राहोरर्द्धदेहात्मके ग्रहभेदे ज्यो० ३दीप्तौ हेमच० ४पताकायां चिह्ने ५ज्योतिषे प्रसिद्धे ६उत्पातभेदे च या व० स० मेदि० तद्भेदश्च वृ० सं० ११ अ० उक्तो यथा “गार्गीयं शिखिचारं पाराशरमसितदेवलकृतं च । अन्यांश्च बहून् दृष्ट्वा क्रियतेऽयमनाकुलश्चारः । दर्शनमस्तमयो वा न गणितविधिनाऽस्य शक्यते ज्ञातुम् । दिव्यान्तरिक्षभौमास्त्रिविधाः स्युः केतवो यस्मात् । अहुताशेऽनलरूपं यस्मिंस्तत् केतुरूपमेवोक्तम् । खद्योतपिशाचालयमणिरत्नादीन् परित्यज्य । ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरिक्षास्ते । दिव्या नक्षत्रस्था भौमाः स्युरतोऽन्यथा शिखिनः । शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् । बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम् । यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम् ।

उदयास्तमयैः स्थानैः स्पर्शैराधूमनैर्वधैः । यावन्त्यहानि दृश्यो मासास्तावन्त एव फलपाकाः । मासैरब्दांश्च वदेत् प्रथमात्पक्षत्रयात् परतः । ह्रस्वतनुः प्रसन्नः स्निग्धस्त्वृजुरचिरसंस्थितः शुक्लः । उदितो वाऽप्यभिदृष्टः सुभिक्षसौख्यावहः केतुः । उक्तविपरीतरूपो न शुभकरो धूमकेतुरुत्पन्नः । इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो वा । हारमणिहेमरूपाः किरणाख्याः पञ्चविंशतिः सशिखाः । प्रागपरदिशोर्दृश्या नृपतिविरोधावहा रविजाः । शुकदहनबन्धुजीवकलाक्षाक्षतजोपमा हुताशसुताः । आग्नेय्यां दृश्यन्ते तावन्तस्तेऽपि शिखिभयदाः । वक्रशिखा मृत्युसुता रूक्षा कृष्णाश्च तेऽपि तावन्तः । दृश्यन्ते याम्यायां जनमरकावेदिनस्ते च । दर्पणवृत्ताकारा विशिखाः किरणान्विता धरातनयाः । क्षुद्भयदा द्वाविंशतिरैशान्यामम्बुतैलनिभाः । शशिकिरणरजतहिमकुमुदकुन्दकुसुमोपमाः सुताः शशिनः । उत्तरतो दृश्यन्ते त्रयः सुभिक्षावहाः शिखिनः । ब्रह्मसुत एक एव त्रिशिखो वर्णैस्त्रिभिर्युगान्तकरः । अनियतदिक्सम्भवो विज्ञेयो ब्रह्मदण्डाख्यः । शतमभिहितमेकसमेतमेतदेकेन विरहितान्यस्मात् । कथयिष्ये केतूनां शतानि नव लक्षणैः स्पष्टैः । सौम्यैशान्योरुदयं शुक्रसुता यान्ति चतुरशीत्याख्याः । विपुलसिततारकास्ते स्निग्धाश्च भवन्ति तीव्रफलाः । स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः शनैश्चराङ्गभवाः । अतिकष्टफला दृश्याः सर्वत्रैते कनकसंज्ञाः । विकचा नाम गुरुसुताः सितैकताराः शिखापरित्यक्ताः । षष्टिः पञ्चभिरधिका स्निग्धा याम्याश्रिताः पापाः । नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला यथेष्टदिक्प्रभवाः । बुधजास्तस्करसंज्ञाः पापफलास्त्वेकपञ्चाशत् । क्षतजानलानुरूपास्त्रिचूलताराः कुजात्मजाः षष्टिः । नाम्ना च कौङ्कुमास्ते सौम्याशासंस्थिताः पापाः । त्रिंशत्त्र्यधिका राहोस्ते तामसकीलका इति ख्याताः । रविशशिगा दृश्यन्ते तेषां फलमर्कचारोक्तम् । विंशत्यधिकमन्यच्छतमग्नेर्विश्वरूपसंज्ञानाम् । तीव्रानलभयदानां ज्वालामालाकुलतनूनाम् । श्यामारुणा वितारा चामररूपा विकीर्णदीधितयः । अरुणाख्या वायोः सप्तसप्ततिः पापदाः परुषाः । तारापुञ्जनिकाशा गणका नाम प्रजापतेरष्टौ । द्वे च शते चतुरधिके चतुरस्रा ब्रह्मसन्तानाः । कङ्का नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थानाः । शशिवत् प्रभासमेताः तीव्रफलाः केतवः प्रोक्ताः ।

पञ्चशतिः कालसुताः कबन्धसंज्ञाः कबन्धसंस्थानाः । पुण्ड्रा भयप्रदाः स्युर्विरूपताराश्च ते शिखिनः । शुक्लविपुलैकतारा नव विदिशां केतवः समुत्पन्नाः । एवं केतुसहस्रं विशेषमेषामतो वक्ष्ये । उदगायतो महान् स्निग्धमूर्तिरपरोदयी वसाकेतुः । सद्यः करोति मरकं सुभिक्षमप्युत्तमं कुरुते । तल्लक्षणोऽस्थिकेतुः स तु रूक्षः क्षुद्भयावहः प्रोक्तः । स्निग्धस्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय । दर्शेऽमावास्यायां कपालकेतुः सधूम्ररश्मिशिखः । प्राङ्नभसोऽर्धविचारी क्षुन्मरकावृष्टिरोगकरः । प्राग्वैश्वानरमार्गे शूलाग्रः श्यावरूक्षताम्रार्चिः । नभसस्त्रिभागगामी रौद्र इति कपालतुल्यफलः । अपरस्यां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्यथा यथोदक् तथा तथा दैर्घ्यमायाति । सप्त मुनीन् संस्पृश्य ध्रुवमभिजितमेव च प्रतिनिवृत्तः । नभसोऽर्धमात्रमित्वा याम्येनास्तं समुपयाति । हन्यात् प्रयागकूलाद्यावदवन्तीं च पुष्करारण्यम् । उदगपि च देविकामपि भूयिष्ठं मध्यदेशाख्यम् । अन्यानपि च स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षैः । दश मासान् फलपाकोऽस्य कैश्चिदष्टादश प्रोक्तः । प्रागर्धरात्रदृश्यो याम्याग्रः श्वेतकेतुरन्यश्च । क इति युगाकृतिरपरे युगपत्तौ सप्तदिनदृश्यौ । स्निग्धौ सुभिक्षशिवदावथाधिको दृश्यते कनामा यः । दश वर्षाण्युपतापं जनयति शस्त्रप्रकोपकृतम् । श्वेत इति जटाकारो रूक्षः श्यावो वियत्त्रिभागगतः । विनिवर्ततेऽपसव्यं त्रिभागशेषाः प्रजाः कुरुते । आधूम्रया तु शिखया दर्शनमायाति कृत्तिकासंस्थः । ज्ञेयः स रश्मिकेतुः श्वेतसमानं फलं धत्ते । ध्रुवकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक् । दिव्यान्तरिक्षभौमो भवत्ययं स्निग्ध इष्टफलः । सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम् । गृहिणामुपस्करेषु च विनाशिनां दर्शनं याति । कुमुद इति कुमुदकान्तिर्वारुण्यां प्राक्शिखो निशामेकाम् । दृष्टः सुभिक्षमतुलं दश किल दशाब्दांश्च स करोति । सकृदेकयामदृश्यः सुसूक्ष्मतारोऽपरेण मणिकेतुः । ऋज्वी शिखास्य शुक्ला स्तनोद्गता क्षीरधारेव । उदयन्नेव सुभिक्षं चतुरो मासान् करोत्यसौ सार्धान् । प्रादुर्भावं प्रायः करोति च क्षुद्रजन्तूनाम् । जलकेतुरपि च पश्चात् स्निग्धः शिखयाऽपरेण चोन्नतया । नव मासान् स सुभिक्षं करोति शान्तिं च लोकस्य । भवकेतुरेकरात्रं

ह्रस्वः प्राक् सूक्ष्मताकरः स्निग्धः। हरिताङ्गुलोपमया मद्रक्षिणावर्त्तया शिखया। यावत एव मुहूर्त्तान् दर्शनमायाति निर्द्दिशेन्मासान्। तावदतुलं सुभिक्षं कुर्य्यात् प्राणान्तिकान् रोगान्। अपरेण पद्मकेतुर्मृणालगौरो भवेन्निशामेकाम्। सप्त करोति सुभिक्षं वर्षाण्यतिहर्षयुक्तानि। आवर्त्त इति निशार्द्धे सव्यशिखोऽरुणनिभोऽपरे स्निग्धः। यावत्क्षणान् स दृश्यस्तावन्मासान् सुभिक्षकरः। पश्चात् सन्ध्याकाले संवर्त्तो नाम धूम्रताम्रशिखः। आक्रम्य वियत्त्र्यंशं शूलाग्रावस्थितो रौद्रः। यावत एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति तावन्ति। भूपान् शस्त्रनिपातैरुदयर्क्षं चापि पीडयति। ये शस्तास्तान् हित्वा केतुभिराधूमिते ऽथवा स्पृष्टे। नक्षत्रे भवति वधो येषां राज्ञां प्रवक्ष्ये तान्। अश्विन्यामश्मकपं भरण्यामपि किरातपार्थिवं हन्यात्। बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनपतिम्। औशीनरमपि सौम्ये ५ जलजाजीवाधिपं तथार्द्रासु। आदित्ये ७ऽश्मकनाथं पुष्ये मगधाधिपं हन्ति। असिकेशं भौजङ्गे ९पित्र्ये १०ऽङ्गं पाण्ड्यनाथमपि भाग्ये ११। औज्जयनिकमार्य्यम्णे १२ सावित्रे १३दण्डकाधिपतिम्। चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत् तज्ज्ञः। काश्मीरककाम्बोजौ नृपती प्राभञ्जने १५न स्तः। इक्ष्वाकुरलकनाथो हन्येते यदि भवेद्विशाखासु। मैत्रे १७पुण्ड्राधिपतिर्ज्येष्ठासु च सार्वभौमवधः। मूलेऽन्ध्रमद्रकपती जलदेवे २०काशिपो मरणमेति। यौधेयकार्जुनायनशिबिचैद्यान् वैश्वदेवे २१ च। नैमिषक्षयं २२हन्यात् कैकयनाथं २३पाञ्चनदम्२४। सिंहलाधिपं२५ वाङ्गम् २६ किरातं २७श्रवणादिषु षट्स्विमान् क्रमशः। उल्काभिताडितशिखः शिवः शिवतरो ऽभिवृष्टो यः। अशुभः स एव चोलावगाणसितहूणचीनानाम्। यस्या यतः शिखिशिखाभिहता यतो वा धूमं च यत् स्पृशति तत्क्षयिताद् देशान्। दिव्यप्रभावनिहतान् स यथा गरुत्मान् भुङ्क्ते गतो नरपतिः परभोगिभोगान्"।

केतुविशेषाणां कालविशेषादनन्तरसदयः पराशरवाक्यादिषु उक्तानि यथा

कपालकेतुः "अथादित्यजानां, कपालकेतुरुदयते अमावास्यायां पूर्व्वस्यां दिशि सधूम्रार्द्धशिखो नभसो त्रिभागचरो दृश्यते। पञ्चविंशवर्षशतं प्रोष्य लौह पश्चात् वर्त्तिकेश्च कुमुदकेतोश्चारान्ते स दृश्यते। दुर्भिक्षानावृष्ट्याधिभयं प्रत्युपद्रवान् सृजति। यावतो दिवसान् दृश्यते तावन्मासान्कालैः संवत्सरान् पञ्चदश धान्यक्षयं कृत्वा प्रजानामेकशेषयुक्तं" परा०।

कालकेतुः "अथ दक्षिणस्यां रुद्रक्रोधोद्भवः कालकेतुस्त्रीणि वर्षशतानि नव च मासान् प्रोष्य उदयते। पूर्व्वेण वैश्वानरमार्गे दक्षिणस्याः मणिकेतोश्चारान्ते यमानव ताम्रारुणां शूलाकारसदृशीं शिखां कृत्वा नभसस्त्रिभागचारी स शस्त्रभयरोगदुर्भिक्षावृष्टिमरकैः यावन्मासान् दृश्यते तावद्वर्षाणि त्रिभागशेषां प्रजां कृत्वा शारदधान्यस्याढकमर्घं कृत्वा शान्तं व्रजति" परा०। तथा च वृद्धगर्गः "आश्लेषा मूलमनुराधा या वीथी संप्रकीर्त्तिता। तां तु वीथीं समारुह्य केतुर्यत्र क्रीडते भयम्। दक्षिणाभिनतां कृत्वा शिखां घोरां भयङ्कराम्। शूलाग्रसदृशीं तीक्ष्णां ताम्रारुणप्रभाम्। पूर्व्वेण उदित एव नक्षत्राण्युपधूपयेत्। घोरं प्रजासु सृजति फलं मासे त्रयोदशे। त्रिभागं नभसो गत्वा ततो गच्छत्यदर्शनम्। यावतो दिवसांस्तिष्ठेत् तावद्वर्षाणि तद्भयम्। शस्त्राग्निभयरोगैश्च दुर्भिक्षमरकैर्हताः। घूर्णमानाः प्रजाः सर्व्वा विद्रवन्ति दिशो दश"।

चलकेतुः "अथ पैतामहश्चलकेतुः पञ्चदशवर्षशतं प्रोष्य उदितः पश्चिमेनाङ्गुलिपर्व्वमात्रां शिखां दक्षिणाभिनतां कृत्वा कालकेतोश्चारान्ते नभसस्त्रिभागमनुचरन् यथा यथोत्तरां व्रजति तथा तथा शूलाग्राकारां शिखां दर्शयन् ब्राह्मं नक्षत्रमुपस्पृश्य मनाक् ध्रुवं व्रजन् राशिं सप्तर्षीन् संस्पृशन् नभसोऽर्द्धमात्रं दक्षिणमनु परिक्रम्य अस्तं व्रजति। स स्वर्गं दारुणकर्म्मा स्वर्गप्राप्तिप्रादेशं मध्यदेशमभिनिहन्ति लोकमपि च। भूमिं कम्पयित्वा दश मासान् मध्यदेशे भूयिष्ठं जनपदमशेषं कुरुते। तेष्वपि च कश्चित् कश्चित् शस्त्रदुर्भिक्षमरकव्याधिभयैः क्लिश्यन्नष्टादशमासानिति" परा०। तथा गर्गः। "क्षुच्छस्त्रमरकव्याधिभयैः संपीडयेत् प्रजाः। मासान् दश तथाष्टौ च चलकेतुः सुदारुणः"।

उद्दालकश्वेतकेतुः श्वेतकेतुश्च "अथोद्दालकः श्वेतकेतुर्दशोत्तरं वर्षशतं प्रोष्य मध्यकेतोश्चारान्ते पूर्व्वस्यां दक्षिणाभिनतशिखोऽर्द्धरात्रकाले दृश्यते नैव सह द्वितीयः कः प्रजापतिपुत्रः पश्चिमकेन श्वेतकेतुर्युगसंस्थायी युगपद्दृश्येत। तावुभौ सप्तरात्रदृश्यौ दशवर्षाणि प्रजाः पीडयेते। कः प्रजापतिपुत्रो यदाधिकं दृश्यते तदा दारुणतरं प्रजानां शस्त्रकोपं

सामर्थ्यादिति चेन्न अमावास्यायां प्रतिपदि वोत्पन्नस्य लग्नादिदुष्टस्थानस्थितचन्द्रस्यारिष्टमशुभफलजनकं भवन्मते निरर्थकमापद्येत। ननु "षष्ठेऽष्टमे चन्द्रः सद्योमरणाय पापसंदृष्टः। अष्टाभिः शुभदृष्टोमिश्रैर्वर्षैः स्वदर्शनेति" वराहोक्तेर्भविष्यतीति चेत् इहापि "स्वच्छन्दत्वं कदशनरतिर्वङ्गमत्वं विशीलं व्याधिः शश्वीर्भीतिरयं सुखं गर्भपातप्रवृत्तिः। द्यूतासक्तिर्भवति रविजे वैभवे वक्त्ररोगः स्वर्भानौ वाग्वध शिखिनि वा लग्नभावादिसंस्थे" इति वसिष्ठपद्ये शनिवद्राहुकेत्वोः शुभाशुभफलदातृत्ववचनं किं वायसैर्भक्षितम्। भारावल्याञ्च "राहुश्चतुष्टयस्थो निधनाय निरीक्षितो भवति पापैः। वर्षैर्द्वाभ्यां दशभिः षोडशभिः केचिदाचार्याः। अजवृषकर्कटलग्ने रक्षति राहुः समस्तपीडाभ्यः। पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषमिति" राहोः शुभाशुभफलाभिधानमस्ति। ननु वराहेण राहोः फलं कुत्रापि नोक्तमिति चेन्न "होरायुक्ते शशाङ्के सक्रूरे लग्नगे कुजेऽष्टमगे। माता सार्द्धं म्रियते चन्द्रवदर्केऽपि शस्त्रेणेति" वराहपद्येऽपि राहुकेत्वोरन्यतराभिधानमस्ति। तथा हि क्वचित् चन्द्रग्रहणं राहुसान्निध्यकृतमुत केतुसान्निध्यकृतमिति तत्र पक्षद्वयं, चन्द्रे लग्नगे सक्रूरे क्रूरसान्निध्यमभिहितम् क्रूरास्तु सूर्यभौमशनय एव विवक्षिता इति चेत् सूर्यस्य तावद्योगाभावश्चन्द्रग्रहणे हि सप्तमराशिस्थत्वात्। भौमस्यापि योगः, कुजेऽष्टमग इत्युक्तेर्नास्ति। पारिशेष्याच्छनैरेव योगोवाच्यः। तत्र स्पष्टत्वार्थं शनिग्रहणमेव कर्त्तव्यमासीत्। अतः सामान्यवाचिनः क्रूरशब्दस्य प्रयोगाद्राहुकेत्वोरन्यतरयोगोऽपि विवक्षितोऽपरस्य (सूर्यस्य) सप्तमराशिस्थत्वात्। योग एकराशिस्थत्वे स्यान्न तु भिन्नराशिस्थत्वे इति। एवं षड्गमसन्धिलग्नस्थसूर्यारिष्टेऽपि राहुकेत्वोरन्यतरयोगो व्याख्येयः। अतएव "राहुस्तमोऽसुरश्च शिखीति केतुरिति पर्यायाभिधानं कृतम्। विवाहपटलेऽपि "मरणं नता राहोः कार्यविनाशं भृगोर्वदन्तीति" कश्यपतो राहुलत्ताप्युक्ता। तस्माद्वराहमतेऽपि राहुकेतुयोगो विवक्षित एव। एवं सति जातके यथा राहोः शुभाशुभफलदातृत्वं वचनाद्बोध्यते। तथा विवाहेऽपि प्रागुक्तवसिष्ठवाक्यादपि तत्र तुल्यन्यायत्वात् कर्त्तरीदोषे कथमवज्ञापते फलदातृता त्वयापि वक्तव्यैव।

ननु "पापयोः कर्त्तरीकर्त्रोः शकुनीचन्द्रहस्थयोः। यदा स्वल्पगयोर्वापि कर्त्तरी नैव दोषदेति" कश्यपाद्युक्तेरस्फुटत्वेन राहुकेत्वोः कर्त्तरीदोषो नास्तीति चेन्न भ्रान्तोऽसि त्वम्। "सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदिति" न्यायादस्फुटत्वविशेषणं भौमस्य क्रूरशुक्रस्य शनेर्वेति त्वयाप्येव सम्भवति न सम्भवति च। सूर्यस्तु नित्योदित एव राहुकेतू नित्यास्तमिताविति व्यभिचाराभावात्त्वयापि व्यर्थमेव विशेषणम्। किञ्च विमस्तगत्वं क्षितिजसन्निधिकृतमुत सूर्यसान्निध्यकृतं चेति। तत्र क्षितिजसन्निधिकृतं यत्तत् सूर्यादिसकलग्रहसाधारणम्। तथा सत्यस्तगतत्वविशेषणवैयर्थ्यं प्रागुक्तन्यायात्। राहोस्तु नारदादिवाक्याच्छिरोरूपमण्डलावगतेः "इन्दर्कमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने" इति वराहोक्तेस्तमोरूपत्वात्ताहक्स्वरूपानुपलब्धेरगोचरत्वपरम्। स्थानमयस्य चन्द्रबिम्बमण्डलान्तिमखण्डलक्षितत्वे, यदाह केशवार्कः "वेद्य चास्य यश्चद्विमण्डलप्रान्तिमखण्डलमितस्तु:पथः" इति। अतएव न विद्यन्ते गावः किरणा यस्येत्यगुरन्वर्थताप्यमीयते। अथ यदि सूर्यसन्निधिकृतमित्युच्येतेति चेन्न इतरपक्षवद्राहोरप्युदयास्तसन्निधभावात्। किञ्च कालांशानभिधानात् कदोदितः कदास्तमितश्चेति निर्णेतुमशक्यत्वात्। एवं केतोरप्येतत् द्रष्टव्यम्। ननु केतूदयोत्पातादौ प्रत्यक्षतोदृश्यत इति चेन्न तस्यानियतदिक्प्रभवत्वात् अनियतनक्षत्रप्रभवत्वाच्च। किञ्च केतूत्पातो हि लोके दुरदृष्टसूचकः अनियतेन बहुना स्वल्पेनापि वा कालेन भवेत्। सूर्यसान्निध्यकृतोदयास्तौ तु नियतकालावेवेति तयोः केत्वोर्भेदः स्वीकर्त्तव्यः"

केतुचैत्रादिकं ज्यो० त० उक्तम् "सिंहत्रिकोणं धनुरश्वमेषं मीनोऽष्टहं शुक्रशनी विपक्षौ। सूर्यारिचन्द्राः सुहृदः समानौ जीवेन्दुजौ षट् शिखिनः परांशाः"। तद्यानवर्षगोलदेशादि महयत्तशब्दे वक्ष्यते। विंशोत्तरीयदशायां तद्दशामानं ७वर्षाः, तच्च दशाशब्दे वक्ष्यते। तस्य राशिभोगकालश्च १८मासाः। "केतुपतङ्गभौममन्दगताश्च षष्ठे तृतीये शुभाः" ज्यो० त०। उद्दालकभेदे पु० केतुवीर्य्यशब्दे उदा० दृश्यम्

केतुकुण्डली स्त्री पञ्चस्वरोक्ते जन्मनक्षत्रभेदवशेन लग्नादध्येकैकवर्षे एकैकग्रहविशेषस्याभिव्यापके चक्रभेदे सा च तत्रैव दर्शिता यथा

"अर्कों बुधः कुजो जीवः सोमः शुक्रस्तथैव च । राहुः शनैश्चरश्चैव ज्ञातव्या केतुकृष्णकौ । अर्कसौम्यान्तरे केतुः कुजजीवान्तरेऽपि च । सोमशुक्रान्तरे केतू राहुसौरान्तरे तथा । दद्यादुत्तरभाद्रादि अष्टाविंशतिऋक्षकम् । त्रीणि त्रीणि च रव्यादौ एकैकम् केतुषु स्मृतम् । जन्मर्क्षात् प्रतिनक्षत्रं जन्माब्दादौ प्रकीर्त्तिताः" । अयमर्थः यदि २६।२७।१ नक्षत्रेषु जन्म तदा सूर्य्यः प्रथमं वर्षेशः । तदुत्तरं केतुप्रभृतयः शन्यन्ताः२। भरण्यां जन्मनि केतुः प्रथमं वर्षेशस्ततः बुधादयः सूर्य्यान्ताः ।३।४।५ ऋक्षेषु बुधः प्रथमवर्षेशः ततः कुजादयः केत्वन्ताः ।६।७।८। कुजः प्रथमं ततः केत्वादयः बुधान्ताः । ९ऋक्षे केतुः ततो जीवादयः कुजान्ताः १०।११।१२ऋक्षेषु जीवः ततः सोमादयः केत्वन्ताः । १३।१४।१५। सोमः ततः केत्वादयः जीवान्ताः । १६ऋक्षे केतुः ततः शुक्रादयः सोमान्ताः । १७।१८।१९।ऋक्षेषु शुक्रः ततः राहुप्रभृतयः केत्वन्ताः। २०।२१।०।२२ ऋक्षेषु राहुः ततः केत्वादयः शुक्रान्ताः २३केतुः ततः शन्यादयःराह्वन्ताः।२४।२५।२६ऋक्षेषु शनिः ततः सूर्य्यादयः केत्वन्ताः । सर्व्वत्र आरोहक्रमावन्तरमवरोहक्रमो ग्राह्यः । एवं द्वादशसु वर्षेषु तेषु पुनः सूर्य्यादीनां वर्षाः । यहाणां फलविशेषस्तु केतुपताकाचक्रोक्तदिशो ज्ञेयः । अत्र च बहुषु स्थानेषु केतोरवस्थानेन केतुप्राधान्यात् केतुकृष्णकौ लम् ।

**केतुधर्म्मन्** पु० त्रिगर्त्तेश्वरस्य वर्म्मानुजे नृपभेदे "केतुधर्म्मा तु तेजस्वी तस्यैवावरजोयुवा । युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना" भा० आश्व० ७४अ०

**केतुपताका** केतोः पताकेव । जन्मनक्षत्रभेदेन जन्माद्यब्दे केकेवर्षेशपङ्क्तिविशेषज्ञापके चक्रभेदे सा च पद्मस्वरादौ दर्शिता यथा

"अर्केन्दू कुजसौम्यार्किगुरवः शुक्रदारकम् । राहुः शनी भृगुश्चेति पताकाप्रभवा ग्रहाः । धामं केतुपताकायां कृत्तिकादिपरिभ्रमात् । जन्मर्क्षं खेचरे यत्र जन्माद्यब्दास्ततः क्रमात् । आदित्यसौरयोर्वर्षे वेधश्चन्द्रगुरोस्तयोः । कुजराह्वोश्च भृग्वोश्च केतुः किञ्चिद्विशिष्यति" फलमाह । "रवेरब्दे मनुष्याणां भवेत् सर्व्वत्र निष्फलम् । शिरःशूलं ज्वरोगश्चदाहो विप्रः पदेपदे" । र०।"चन्द्रस्याब्दे लभेद्दौम्यं वस्त्राभरणानि च०। लक्ष्मीः फलवती सिद्धिः सर्व्वकार्य्येषु युज्यते" च० । "संसारे मरीजस्य कालादिव बिभेति च । स्वहृदाक्रोशसंवासनिय भैरवो रा-

नतोऽपि वा" म० । "बुधस्याब्दे सुगन्धः स्नानादेवाधिपो भवेत् । बु० स्वर्णरौप्यधनं दानं पुण्यकर्म्मणि कानकम्" बु० । "मन्दस्याब्दे भवेद्दाहो बन्धनादि प्रपीडनम् । धनहानिः महारव कलिः स्वजनबन्धुभिः" श० । "नाकनाथगुरोरब्दे बह्वीनृपतिसम्पदः । अप्यलोहितकर्मेण स्तुतो भवति भूतले" । ह० । राहुकेत्वोः कदा बन्धो नौका विझ्वते जले । व्रणं कृत्ते पदे देहे स्थानं कर्त्तुं क्षेमेण च" । रा०के० । "दानवेन्द्रगुरोरब्दे मङ्गलैर्विभवैर्द्दतः । गजाश्वशाक्नैर्युक्त उत्साहश्च दिने दिने" शु०। अन्ये तु पठन्ति "रविर्भ्रमयते देशं नरं दुःखसमन्वितम् । सन्तापरोगं शोकञ्च करोति क्षयतां तनोः" र० "बहुवित्तसुखं नित्यं बन्धुमित्रसमागमम् । सम्पत्साम्यदर्शं पूर्णं चन्द्रः कुर्य्यात् दिनेदिने" च०। "मङ्गलोहनि सद्भावं क्रूरकर्म्मणि योजयेत् । व्यथां रोगञ्च दुःखञ्च सन्तापञ्च छद्मभुक्" म०। "अर्थलाभं जयं सौख्यं राजपूजाञ्च सम्पदम् । ददाति विपुलां लक्ष्मीं बुधो विद्यां यशश्रियम्" । बु०। "रोगश्चार्थविनाशश्च कलहं भुजगाद्भयम् । स्थानत्यागं शनिः कुर्य्यात् कुजीवनं प्रति संशयम्" श०। "सुवर्णमणिमाणिक्यरत्नादिविपुलं धनम् । कल्याणसमायोगं गुरुः कुर्य्याद् दिने दिने" ह० । "राहुःशोषितसंस्थायं रोगशोकादिसंकुलम् । विदेशगमनं कुर्य्यात् शत्रुचौरभयान्वितम्" रा०। "विपक्षं बन्धुभिः सार्द्धं रोगशोकादिसङ्कुलम् । व्याधिपीडां करोत्युग्रः केतुर्वित्तविनाशनः" के० । "गजाश्वदाक्षभैर्युक्तं महद्भिर्विभवैर्द्दतम् । वराङ्गनासमायुक्तं भृगुः कुर्य्याद्दिने दिने" शु०। "अयुग्मं२० सुख्यशाणो५०च मनुयुग्मञ्च २८ षट्शरौ ५६। रामाम्भो ४३रामषट्के ६३। च विंशञ्च षष्ठिकापा । विंशमिते इन्तर्दिवसाः केत्वर्कादिषु क्रमात् । शुभानां शोभना ज्ञेया अशुभानामशोभना । शुभानामशुभानाञ्च यत् फलं वत्सरे कृतम् । तत्फलं निर्द्दिशेत् सर्वं नेषामन्तर्द्दिनेष्वपि । वर्षे वर्षे रवेः स्वीयं प्रथमं दिनविंशकम् । ततश्चन्द्रस्य पञ्चाशदेवं शुक्रान्तमादिशेत् । विधोर्वर्षे विधोः स्वीयं प्रथमं वत्सरे दिनम् । ततो भौमस्य वर्षाच्च एवं रव्यन्तमादिशेत् । कुजस्याब्दे कुजस्यान्तरत्रिंशं निजं दिनम् । ततो बुधस्य षट्पञ्चाशदेवं चन्द्रान्तमादिशेत् । बुधादीनाञ्च सर्व्वेषामेवमेव क्रमेण तु । कुर्य्यादन्तर्दशाभागं प्रोक्तया दिनसंख्यया" । ज्योति० तत्त्वे खनमकारो दर्शितो यथा

"रविचन्द्रः कुजः सौम्यः शनिर्जीवस्तमोऽभृगुः । इन्द्रे-याद्याऽश्विषाष्ठ मध्ये केतुरिमेऽष्टपाः । कृत्तिकादि शिरा हस्तिकेशा केतौ मघा भवेत्" यथा १र०।३च०।५म०।६बु०। ७गु०।८ह०।८रा०।१०केतुः । ११सू०। १२र०। १३च०।१४म० १५बु० १६गु० १७ह० १८रा० १६केतुः २०सू०। २१र० २२च० २३म० २४बु०२५गु०२६ह० २७रा० १केतुः २सू०। एवं जन्मनक्षत्रानुसारेण मघमादिवर्षेशा रव्यादयः शुक्रान्ता दशमादिषु पुनः रव्यादयः शुक्रान्ताः। एवं चन्द्रस्य मघ-माद्दशाधीशत्वे रव्यन्ताः एवं क्रमेण सर्व्वत्र योज्यम्

"पताका कुण्डली केतोः कुण्डली च बृहस्पतेः । सर्व्वत्र पापसंयोगे संशयो जायते महान्" मञ्जूषा

केतुमत् त्रि०केतुरस्त्यस्य मतुप् । १चिह्नादियुक्ते २प्रज्ञानयुक्ते "केतुमद् दुम्भिर्वदतीति" ऋ०६,४७,२०,"केतुमत् प्रज्ञानवत्" भा० स्त्रियां ङीप् । ३काशीराजदिवोदासवंश्ये नृपभेदे पु० । "क्षेमस्य केतुमान् पुत्रः सुकेतुरस्य चात्मजः" हरिवं० २९अ० दिवोदासवंशोक्तौ । वासुदेवमहिष्याः सुनन्दाया विशाखरूपे ४प्रासादभेदे पु० "सुनन्दाया निवासोऽसौ प्रथमः सर्व्वदैवतैः । महिष्या वासुदेवस्य केतुमानिति विश्रुतः" हरिवं० १५७अ० ५धन्वन्तरिपुत्रभेदे "धन्वन्तरिर्दीर्घतमस आयुर्वेद प्रवर्तकः । यज्ञभुग्वासुदेवांशः स्मृतिमात्रार्त्तिनाशकः । तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्तथा" भाग० ८।१७।५ ६दानवभेदे । "तथा गगनमूर्द्धा च वेगवान् केतुमांश्च यः" भा०आ०७दानवोक्तौ । सुमालिनो राक्षसस्य भार्य्यायां स्त्री "सुमालिनोऽपि भार्य्यासीत् पूर्णचन्द्रनिभानना । नाम्ना केतुमती राम !" रामा० उ० ४स० । "असमे सजौ सगुरुयुक्ता केतुमती समे भरनगाद्गः" इ० र० उक्तलक्षणे द्विषमवृत्ते छन्दोभेदे स्त्री ।

केतुमाल पु० । १आग्नीध्रस्य पुत्रभेदे २तन्नामके जम्बुद्वीपस्थे वर्षभेदे । तद्विवृतिः उत्तरकुरुशब्दे १०८४पृ० । कुरुशब्दे च २१२१पृ०दृश्यम् । "मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते ! । जम्बुखण्डे च तत्रैव महाजनपदो नृप!" भा० भी० ६अ० । ३उत्तरदिशस्थे नदीभेदे स्त्री "उत्तरेषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशः" इत्युपक्रमे "केतुमाला च मेध्या च गङ्गाहारश्च भूमिप !" भा० व० ८६ अ० ।

केतुमालि(लिन्) पु० शम्बरदैत्यस्य सेनाधिपभेदे । "दुर्द्धरः केतुमाली च शत्रुहन्ता प्रमर्द्दनः" इत्युपक्रमे "एतैः परिवृतो योधैः शम्बरः प्रययौ तदा" । "तेनैव तस्य चिच्छेद केतुमालेः शिरस्तदा" हरिवं० १६४अ० ।

केतुरत्न न० केतोः रत्नम् । वैदूर्य्यमणौ (लशुनिया) राजनि० तस्य तत्स्वामिकत्वात् तथात्वम् ।

केतुवीर्य्य पु० दानवभेदे । "विक्षोभणश्च केतुश्च केतुवीर्य्यः शतह्रदः" हरिवं० ३अ० दानवोक्तौ ।

केतुवृक्ष पु० केतुभूतो वृक्षः । मेरोश्चतुर्द्दिक्षु वर्त्तमानविष्कम्भपर्वतमन्दरादीनां चिह्नरूपे वृक्षभेदे । "विष्कम्भशैलाः किल मन्दरोऽस्य (मेरोः) सुगन्धशैलः (गन्धमादनः) विपुलः सुपार्श्वः । तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्ब जम्बूवटपिप्पलाख्याः" सि० शि० । "विष्कम्भा रचिता मेरोर्योजनायतमुच्छ्रिताः । पूर्व्वेण मन्दरोनाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः । कदम्बस्तेषु जम्बूश्च पिप्पलोवट एव च । एकादशशतायामाः पादपाः गिरिकेतवः" विष्णु पु०

केतुशृङ्ग पु० पौरवे नृपभेदे । "वत्सबन्धुर्निरामर्द्दः केतुशृङ्गो बृहद्बलः" भा०आ० १अ०

केदर पु०के शयाति शी—अच् कैर्नीर्दीर्य्यते दृ—अप् वा । १धान्यभेदे अमरटीकायां भानुदीक्षितः । २टेरके केकरे शब्दचि०

केदार पु०के शिरसि दारोऽस्य केन जलेन दारोऽस्य वा नि० एत्वम् । हिमालयस्थे पर्व्वतभेदे तत्स्थे २शिवलिङ्गभेदे न० तन्माहात्म्यादि स्कन्दपु० केदारखण्डे दृश्यं तस्यैव काशीक्षेत्रे आविर्भावात् काशीस्थे ३लिङ्गभेदे च न० तत्कथा काशीख० ७७अ० यथा

"श्रीपार्व्वत्युवाच। "नमस्ते देवदेवेश ! प्रणतत्करुणानिधे ! । वद केदारमाहात्म्यं भक्तानामनुकम्पया । तस्मिन् लिङ्गे सदा प्रीतिस्तव चाख्यामनुत्तमा । तद्भक्ताश्च जना नित्यं देवदेव ! महाधियः । श्रीदेवदेव उवाच । शृणवपर्णे ! प्रभिधास्यामि केदारेश्वरसंकथाम् । यमाकर्ण्यापि यो पापोऽप्यपापोजायते क्षणात् । केदारं यातुकामस्य पुंसोनिश्चितचेतसः । आजन्मसञ्चितं पापं तत्क्षणादेव नश्यति । गृहाद्विनिर्गते पुंसि केदारगतिनिश्चिते । जन्मद्वयार्जितं पापं शरीरादपि निर्व्रजेत् । मध्यमार्गं प्रपन्नस्य त्रिजन्मजनितं त्वघम् । गेहाद्विनिःसृतस्यापि निराशं याति निश्चयात् । सायं केदारकेदार केदारेति निरुद्धन् । गेहेऽपि निवसन्नूनं यात्राफलमवाप्नुयात् । दृष्ट्वा केदारशिखरं पीत्वा तत्तोयमम्बु च । जन्मजन्मकृतात् पापान्मुच्यते नात्र संशयः । हरस्याप

सैव वर्णानामाश्रमाणां च धर्म्मिणाम्। तस्मात्तद्विसर्गेण मोक्षं दास्यामि नान्यथा। ततस्तदुपरोधेन तथेति च मयोदितम्। तदारभ्य महादेवि! स्नानात्, केदारकुण्डतः। समर्च्चनाच्च भक्त्या वै मम नामजपादपि। नैःश्रेयसीं श्रियं दद्यामन्यत्रापि तनुत्यजाम्। केदारतीर्थे यः स्नात्वा पिण्डान् दास्यति चापरः। एकोत्तरशतं वंशान् तस्य तीर्णा भवाम्बुधेः। भौमवारे यदा दर्शस्तदा यः श्राद्धदो नरः। केदारकुण्डमासाद्य गयाश्राद्धेन किं ततः। केदारं गन्तुकामस्य बुद्धिर्दत्ता नरैरियम्। काश्यां स्मृत्वा त्वं केदारं कृतकृत्यो भविष्यसि। चैत्रकृष्णचतुर्दश्यामुपवासं विधाय च। त्रिगण्डूषीं पिबन् मर्त्त-ल्लिङ्गमधितिष्ठति। केदारोदकपाने तु यथा तत्र फलं भवेत्। तथात्र जायते पुंसां स्त्रीणां चापि न संशयः। केदारभक्तं संपूज्य वासोऽन्नद्रविणादिभिः। आजन्मजनितं पापं त्यक्त्वा याति ममालयम्। आयामास त्रिकालं यः केदारेशं नमस्यति। तं नमस्यन्ति सततं लोकपाला यमादयः। कलौ केदारमाहात्म्यं योऽपि कोऽपि न वेत्स्यति। यो वेत्स्यति च पुण्यात्मा सर्वं वेत्स्यति स ध्रुवम्। केदारेशं सकृद् दृष्ट्वा देवि! मेऽनुचरो भवेत्। तस्मात् काश्यां प्रयत्नेन केदारेशं विलोकयेत्। चित्राङ्गदेश्वरं लिङ्गं केदारादुत्तरे शुभम्। तस्यार्चनान्नरो नित्यं स्वर्गभोगानुपाश्नुते। केदाराद्दक्षिणे भागे नीलकण्ठविलोकनात्। संसारोरगदष्टस्य तस्य नास्ति विषाद्भयम्। तद्वायव्येऽम्बरीषेशो नरस्तदवलोकनात्। गर्भवासं न चाप्नोति संसारे दुःखसङ्कुले। इन्द्रद्युम्नेश्वरं लिङ्गं तत्समीपे समर्च्य च। तेजोमयेन यानेन स्वर्गभुवि मोदते। तद्दक्षिणे नरो दृष्ट्वा लिङ्गं कालञ्जरेश्वरम्। जराकालं विनिर्जित्य मम लोके वसेच्चिरम्। दृष्ट्वा क्षेमेश्वरं लिङ्गं तदुदक् चित्राङ्गदेश्वरात्। सर्वत्र क्षेममाप्नोति लोकेऽत्र च परं दिवि। श्रीस्कन्द उवाच। देवदेवेन! विन्ध्यारे! केदारमहिमा महान्। इत्याख्यापि पुराऽस्यायै मया तेऽपि निरूपितः। केदारेश्वरलिङ्गस्य शृण्वोत्पत्तिं कृती नरः। शिवलोकमवाप्नोति निष्पापो जायते ततः"। लिङ्गरूपत्वे न० केदारं यत्केदारेश्वरादयोऽप्यत्र पु०। बदर्याश्रमस्याऽन्तिकस्थे ३शैलभेदे "केदाराख्ये महालये देवी सा मार्गदायिनी" देवीगीता ४भूमिदेशभेदे च भार०; "मतङ्गस्य च केदारस्तत्रैव कुरुनन्दन!" भा०व० ८४अ०। "केदारे चैव राजेन्द्र! कपिलस्य महात्मनः" भा०८३अ०। जलनिवारणार्थं चतुःपार्श्वे सेतुसम्बद्धे ५क्षेत्रे ६आलवाले च मेदि० "यथा "तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति" वेदा० प०। "भूमावप्येककेदारे कालोप्तानि कृषीवलैः। नानारूपाणि जायन्ते बीजानीह स्वभावतः" मनुः "स्थानच्छेदस्य केदारमाहुः शल्यवतो मृगः" मनुः। केदाराणां समूहः "केदाराद्यञ् च" "ठञ् कवचिनश्च" पा० यञ् वुञ् ठञ् च। कैदार्य्य कैदारक कैदारिक तत् समूहे न० "कैदारिकाणामभितः समाकुलाः" माघः। अत्र कैदारादीनि निर्देशात् नि० एत्वम्। तस्येदमण्। कैदार तत्सम्बन्धिजलतण्डुलादौ त्रि० तद्गुणाः "कैदारं चैवमुद्दिष्टं कैदारं तज्जलं स्मृतम्। कैदारं वार्य्यभिष्यन्दि मधुरं गुरु दोषकृत्" भावप्र०। "कैदारा वातपित्तघ्नाः गुरवः कफशुक्रलाः। कषाया अल्पवर्च्चस्काः मेध्याश्चैव बलावहाः" भावप्र० कैदारशाल्यादिगुणा उक्ताः

**केदारक** पु० केदारे भवः कन्। क्षुद्रक्षेत्रजाते व्रीहिभेदे षष्टिककङ्गुकोद्रवप्रक्रमे "कुरवककेदारकमञ्चनयः षष्टिकाः" सुश्रुतः। केदारशब्दे गुणा उक्ताः

**केदारकटुका** स्त्री केदारस्य कटुकेव। कटुकाभेदे राजनि०

**केदारखण्ड** पु० व्यासप्रणीते स्कन्दपुराणान्तर्गते अवन्तिखण्डस्थकेदारमाहात्म्यप्रतिपादके ग्रन्थभेदे।

**केदारज** त्रि० केदारात् जायते जन–ड। १क्षेत्रभूमिजाते व्रीहिभेदे केदारशब्दे तद्गुणा उक्ताः। २पद्मकाष्ठे न० राजनि० कैदारजातादयोऽप्यत्र

**केन** न० केनेत्युपक्रम्य प्रवृत्तम्। तलवकारोपनिषद्भेदे केनेषितमित्यादिके उपनिषद्भेदे "ईशा केन कठ प्रश्न मुण्डमाण्डूक्यतित्तिरिः" मुक्तिको० उपनिषच्छब्दे विवृतिः

**केनती** स्त्री के सुखार्थं नतिः वा० ङीप् अलुक्स०। कामदेवपत्न्यां त्रिका०।

**केनार** पु० के मूर्द्धि नारः नृ–घञ् अलुक्स०। १कुम्भीनामनरके हेम०। २शिरसि ३कपोले ४सन्धौ च मेदि०।

**केनिप** पु० के सुखे निपतति नि+पत–ड अलुक्स०। मेधाविनि निघण्टुः "यथा केनिपानामिनो वृधे" ऋ०१०,४४,४। "केनिपानां मेधाविनाम्" भा०। निघण्टौ अकेनिप इति वा पाठः। तदर्थे।

**केनिपात** पु० के जले निपात्यते नि+पत–णिच्–कर्म्मणि घञ्। (हाल)नौकाचालने काष्ठनिर्म्मिते पदार्थे अरित्रे

शब्दमा० तं हि जले पातयित्वा चालनेन नौकां चालतीति तस्य तथात्वम्। स्वार्थे क। तत्रार्थे अमरः।

कैन्दु पु० ईषत् इन्दुरिव कोः कादेशः। १तिन्दुकवृक्षे शब्दरत्ना०। संज्ञायां कन्। (गाव) गावबृक्षे। "लघुद्वयं विरामान्तं ताले केन्दुकसंज्ञके" इति संगी०दा० उक्ते २तालभेदे पु०

कैन्दुवाल पु० के जले इन्दोरिव अर्द्धेन्दोरिव वालचलनमस्य। अरित्रे (हाल) इति ख्याते नौकाचालने काष्ठभेदे। "अरित्रशब्दः केन्दुवालवाचकः" यजुर्वेददीपः

कैन्दुविल्व पु० गीतगोविन्दग्रन्थकारकजयदेवनिवासे ग्रामभेदे (केन्दुली) "केन्दुविल्वसमुद्रसम्भवरोहिणीरमणेन" (जयदेवेन) गीतगो०।

केन्द्र न० "वृत्तस्य मध्यं किल केन्द्रमुक्तम्। केन्द्रं यदुच्चान्तरमुच्यतेऽतः। यतोऽन्तरे तावति तुङ्गदेशान्नीचोच्चवृत्तस्य सदैव केन्द्रम्" शि०सि०गोलाध्यायोक्ते १वृत्तस्य मध्यस्थाने २ग्रहाणामुच्चस्थानान्तरे च। तदानयनप्रकारः तस्य समविषमादिसंज्ञाभेदौ च सू०सि० रङ्गनाथाभ्यां दर्शितौ यथा

"ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्राद्विशोध्य च। शेषं केन्द्रपदं तस्माद्भुजज्या कोटिरेव च" सू०। "ग्रहं राश्यादिकं मन्दोच्चात् प्रागानीतस्वकीयराश्यादिकं मन्दोच्चभागात् संशोध्योनीकृत्य शीघ्रात् प्रागानीतराश्यादि शीघ्रोच्चात्, चः समुच्चये ऊनीकृत्य शेषं राश्यात्मकं तथोच्चसम्बन्धेन केन्द्रं मन्दोच्चहीनो ग्रहो मन्दकेन्द्रम्। शीघ्रोच्चहीनो ग्रहः शीघ्रकेन्द्रं भवतीत्यर्थः। तस्मात् केन्द्रात् पदं राशित्रयात्मकं विषमं समं पदं ज्ञेयम्। त्रिराश्यन्तर्गतं चेत् प्रथमं विषमं पदम्। ततःषड्राश्यन्तर्गतं चेत् न्यूनं केन्द्रं द्वितीयं समं पदम्। ततो नवराश्यन्तर्गतं चेत् षड्ूनं तृतीयं विषमं पदम्। ततो नवोनं चतुर्थं पदं सममित्यर्थः। तस्मात् पदाद्भुजस्य ज्या कोटिः कोटेर्ज्या। चः समुच्चये। एवकारात्तदाकारद्वयं माध्यमित्यर्थः। अत्रोपपत्तिः। उच्चस्थानाभिमुखग्रहदैवतैर्ग्रहाणामाकर्षणोक्तेरुच्चाद्ग्रहः कियदन्तरेणेति ज्ञानार्थमुच्चहीनो ग्रहः केन्द्रमुच्चग्रहान्तरवशात् तदाख्यम्। तत्र भगवता स्वेच्छया ग्रहादुच्चं यदन्तरेण तत् केन्द्रं कृतम्। उभयथा भुजकोट्योस्तुल्यत्वात्। द्वादशराश्यङ्किते वृत्ते उच्चस्थानाच्चतुर्विभागात्मक एकैको भागो राशित्रयात्मकः पदसंज्ञः। अथोच्चस्थानाद्ग्रहः कस्मिन् पदेऽस्तीति ज्ञानविषयत्वेन केन्द्रं कृतं, ज्ञानं पदान्तर्गतत्वात्। ग्रहाधिष्ठितपदाद्भुजज्याकोटिज्ययोर्ज्ञानम्। तच्च ग्रहाणां राश्यंशकलाविकलादिस्थितिज्ञानार्थं स्फुटताकरणसाधनं तत्रैव प्रसिद्धम्" रङ्ग०।

एतत्साम्यात् लग्नादिद्वादशराशिषु त्रिराश्यन्तरस्थानरूपे लग्नचतुर्थसप्तमदशमस्थानरूपे ३स्थानचतुष्के। "लग्नाम्बुद्यूनकर्माणि केन्द्रमुक्तञ्च कण्टकम्। चतुष्टयञ्चात्र खेटो बली लग्ने विशेषतः" ज्यो० त०। केन्द्रगतग्रहबलस्य बलवत्त्वं यथाते। केन्द्रगतग्रहवशादायुस्तु केन्द्रायुरित्यभिधीयते तत्प्रकारे दृश्यम्। "काकोष्ठ्रमगते चन्द्रे केन्द्रस्थे सुरपूजिते। योगः केन्द्र इति ख्यातो यातुरिष्टार्थसिद्धिदः" ज्योतिषोक्ते ४यात्राशुभयोगभेदे पु०।
केन्द्रं स्थानत्वेनाऽस्त्यस्य इनि। केन्द्रिन् तत्स्थे ग्रहे

केप चालने भ्वा० आत्म० सक० सेट्। केपते अकेपिष्ट। ऋदित् केपयति ते अचकेपत्-त। प्रनिकेपते

केपि त्रि० कु+पू–इन् पृषो०। "पुनाति कर्म्म कुत्सितं दुष्कृतं भवतीति" निरुक्तोक्ते निन्दितकर्म्मणि। "न ते भोक्तुर्येभ्रियां नापसाच्छमीभिर्न ते न्यविशन्त केपयः" ऋ० १०,४४,६, "केपयः कुत्सितपूयकर्म्माणः" भा०।

केमद्रुम पु० ज्योतिषोक्ते योगभेदे। स च योगः जातकपद्धतौ फलभङ्गाभ्यां सहितोदर्शितोयथा। "शीतांशोर्व्ययगैर्धनगैर्विहि सुनफा रिपुफस्थितैः चाऽनफा। दुरुधरोभयवर्जितैर्दुरुधरा केमद्रुमोऽतोऽन्यथा"। तत्फलम् "नृपतेर्वंशजातोऽपि केमद्रुमभवो नरः। मलिनो दुःखितो नीचो निःस्वो दासः खलो भवेत्" तद्भङ्गस्तु तत्रैव "चन्द्रे केन्द्रगतेऽथवा ग्रहयुते सर्वैश्च दृष्टे विधौ सर्वैः कण्टकसंश्रितैर्ग्रहवरैः केमद्रुमो नेष्यते। लग्नाद्विधोर्वा दशमैः शुभैः कर्म्म शुभं फलम्। द्वाभ्यां मध्यं तदेकेनाल्पं चेद्धानि दरिद्रता"

केमुक पु० के मूर्द्धि अमयति अम–रोगे उक अलुक् स०। (केँउ) १वृक्षभेदे। २कन्दशाकभेदे न० भावप्र०। "केमुकं कटुकं पाके तिक्तं ग्राहि हिमं लघु। दीपनं पाचनं हृद्यं कफपित्तज्वरापहम्। कुष्ठकासप्रमेहास्रनाशनं वातलं कटु"। तत्र तद्गुणा उक्ताः तत्फलन्तु हविष्ये वर्ज्यम् "फल केमुकवर्ज्जितम्" स्मृतिः।

केयूर पु० के बाहुशिरसि याति या–ऊर किच्च अलुक्समा०। (बाजु) (ताड़) बाहुभूषणे अमरः। "विहुरे केयूरे कुरु करयुगे रत्नवलयम्" गी० द० "केयूरबन्धोच्छ्वसितैर्नुनोद" रघुः। २रतिबन्धभेदे पु० स च द्विधा। "स्त्रीजङ्घे चैव

संपीड्य दोर्भ्यामालिङ्ग्य सुन्दरीम् । कारयेत् स्तापनं कामी बन्धः केयूरसंज्ञितः” स्मरदीपिका । “स्त्रीणां जङ्घान्तराविष्टो गाढमालिङ्ग्य सुन्दरीम् । कामयेद्विपुलं कामी बन्धः केयूरसंज्ञितः” । रतिमञ्जरी ।

केरक पुं॰ ब॰ व॰ । देशभेदे । “एकपादांश्च पुरुषान् केरकान् वनवासिनः” भा॰ सभा॰ ३०अ॰ । सहदेवदक्षिणदिग्विजये । अतः तद्देशस्य दक्षिणविभागस्थत्वम् ।

केरल पुं॰ सगरेण म्लेच्छतां प्रापिते क्षत्रियभेदे । तत्कथा हरिवं॰१४अ॰

“ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा । पह्लवांश्चैव निःशेषान् कर्त्तुं व्यवसितः किल । ते वध्यमाना वीरेण सगरेण महात्मना । वशिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् । वशिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः । सगरं वारयामास तेषां दत्त्वाऽभयन्तदा । सगरः स्वां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च । धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह । अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् । यवनानां शिरः सर्वं काम्बोजानां तथैव च । पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः । निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना । शका यवनकाम्बोजाः पारदाः पह्लवास्तथा । कोलिसर्पाः समाहिषा दार्व्वाश्चोलाः सकेरलाः । सर्व्वे ते क्षत्त्रियास्तात ! धर्म्मस्तेषां निराकृतः । वशिष्ठवचनाद्राजन् ! सगरेण महात्मना” ।

२तदधिष्ठानदेशभेदे ब॰व॰ । स च दक्षिणस्थः वृ॰सं॰ कूर्म्मविभागे १४अ॰ । “दमपुरगोनर्द्दकेरलकाः” दक्षिणस्थत्वम् तत्रत्य पर्य्यन्तसह्यादि रघौ वर्णितं यथा “तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः । रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः । भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् । अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः । मुरलामारुतोद्धूतमगमत् कैतकं रजः” । ३होरायां ४ज्योतिर्ग्रन्थविशेषे च स्त्री गौरा॰ ङीष् शब्दरत्ना॰ । केरलज्योतिर्विद्यायाञ्च सङ्केतविशेषोदिष्टमात्रं दर्श्यते । “वर्णवर्ग्गप्रमाणञ्च अक्षरं तादृशं क्रियः । पिण्डसंख्या भवेत्तस्य यथाभागेन कल्पना” गर्गसंहिता । अस्यायमर्थः । अ क च ट त प य श इत्यादौ वर्गास्तेषामेकादिसंख्या यथा अवर्गे १ । कवर्गे २ । चवर्गे ३ । टवर्गे ४ । तवर्गे ५ । पवर्गे ६ । यवर्गे ७ । शवर्गे ८ । वर्णसंख्या च प्रतिवर्गं भिन्ना यथा अवर्गे १६ वर्णा यथा अ१ आ२ इ३ ई४ उ५ ऊ६ इत्यादि । कादौ पान्ते वर्गे च पञ्च पञ्च संख्या । यवर्गे ४ शवर्गे च ४। एवं च दाडिमफलनामप्रश्ने दकारस्य तवर्गत्वात् वर्गसंख्या ५ वर्णसंख्या ३ मिलित्वा ८ । डस्य वर्गसंख्या ४ वर्णसंख्या ३ मिलित्वा ७ । मस्य वर्गसंख्या ६ वर्णसंख्या ५ मिलित्वा ११ एवं वर्गवर्णसंख्या २६ । दाडिमपदे आ इ अ इति स्वरत्रययुक्ते अवर्गसंख्या १ आद्यपसंख्या २ मिलित्वा ३ एवं इ ४ अ २ । मिलित्वा स्वरसंख्या तथा समष्टौ ३५ । पश्चात् यथोक्तक्रिया कार्य्या । प्रश्नशब्दे तद्गणनादि फलं च वक्ष्यते । क्वचित् स्वरसंख्यामनादाय अन्यथा सङ्केतो दर्शितो यथा । “कादयष्टादयोऽङ्काः स्युः पाद्याः पञ्च तथा मताः । याद्योऽष्टौ ङनां शून्यं गणकैः परिकीर्त्तितम्” इत्युक्तिमनुरुध्य कालमा॰ “सौरचान्द्रसव्यसायनगणधरनाक्षत्रिकाः क्रमेण । भानुलपातालतुलविनुलविमलवरदाश्च संवत्सराः पञ्च” आर्य्यभट्टवाक्ये “गणकतमिदयाचरसंख्यया भानुलशब्दः पञ्चषष्ट्यधिकशतत्रयमाचष्टे तावद्दिवसपरिमितः कालः सौरः । पातालशब्दः एकषष्ट्यधिकशतत्रयमाचष्टे तावद्दिवसपरिमितः बार्हस्पत्यः । अतुलशब्दः षष्ट्यधिकशतत्रयमाचष्टे तावद्दिवसपरिमितः सावनः । विमलशब्दः चतुःपञ्चाशदधिकशतत्रयमाचष्टे तावद्दिनपरिमितश्चान्द्रः । वरदशब्दश्चतुर्विंशत्यधिकशतत्रयमाह तावद्दिवसपरिमितो नाक्षत्रिकः संवत्सरः” इत्युक्तम् । अस्यायमर्थः । भानुलशब्दस्य स्वरत्यागे भस्य पकारात् पञ्चमत्वं तेन ५संख्या स्फुरते । नकारस्य टादितः षष्ठत्वेन ६संख्या लस्य यादौ तृतीयत्वेन ३संख्या अङ्कस्य वामागत्या तेषां यथाक्रमयोजने भानुलशब्दे ३६५संख्या निष्पद्यते । एवं पातालशब्दे पस्य आद्यत्वात् १संख्या तकारस्य टादितः षष्ठत्वात् ६संख्या लस्य प्राग्वत् ३संख्या । तेन पातालशब्दे ३६१संख्या । अतुलशब्दस्य नञादेशाकारस्य शून्यार्थत्वात् ० । तकारस्य ६संख्या लस्य ३संख्या । तेन ३६०संख्या । विमलशब्दे च वस्य यादौ चतुर्थत्वात् ४संख्या मस्य प्राग्वत् ५संख्या लस्य ३संख्या यथा स्थानयोजने ३५४ संख्या । वरदशब्दे व ४ र २ द ३ यथाक्रमयोजने ३२४ संख्या । एवं केरलसङ्केतमभिप्रेत्यैव भक्तविशेषपुटितसप्तशतीजपस्य एकस्मिन् दिने करणाशक्तौ १२माहात्म्यात्मकसप्तशत्या दिनविशेषेषु माहात्म्यसंख्याविशेषपाठार्थं तट्टीकायां नागोजी-

वा भाव्यतां धनुः" भा०द्रो० १८८अ० । "दीव्य यत् कैतवं पाण्डव ! तेऽद्यमिदम्" भा० स० ६१अ० । "यदवोचमतदेवैमि कैतवम्" कुमा०

कैतवेय पु० कितवायाः अपत्यं ढक् । शकुनिसुते उलूके नृपभेदे "उलूकः कैतवेयश्च योऽस्यांशुमतः सुतः" हरिवं०८८अ० । वा० अञ् । कैतयोऽप्यत्र "उलूकः गच्छ कैतव्य ! पाण्डवान् सहसोमकान्" भा० उ०१६अ० ।

कैन्दासायन पुंस्त्री० किन्दासस्य युवापत्यम् हरिता० फक् । निन्दितदासस्य युवापत्ये

कैन्नर त्रि० किन्नरः तस्यासन्नदेशभिजनोऽस्य तक्षशिला० अञ् । मित्रादित्वेन १किन्नरवर्षवासिनि । किन्नरस्येदम् अण् । २किंपुरुषसम्बन्धिनि त्रि० उभयत्र स्त्रियां ङीप् ।

कैमुतिक पु० किमुत इत्यर्थात् आगतः ठक् । किमुतेत्यर्थतः प्राप्ते न्यायभेदे । यथा यस्याधमकाध्यकर्मसमर्थस्य अस्या यानसाध्यकर्मसामर्थ्यं तस्यार्थसिद्धेरन्यदप्युत्तम् ।

कैरलेय त्रि० केरलानां राजा वा०ढक् । केरलदेशनृपे "उत्तमौजाश्च गान्धः कैरलेयश्च कौशिकः" हरिवं०८८अ०

कैरव न० के जले रौति रु–अच् अलुक् स० केरवो हंसस्तस्य प्रियम् अण् । १कुमुदे. शुक्लोत्पले. अमरः २शत्रौ पु० कैतवे न० मेदि० । "ज्ञायन्तकनं कैरवध्वंसं कूजावते च या सुमनसामङ्गामिनी मानसे" चन्द्रालो० । "करो नाथ ! समस्तं कैरवकुलं व्योमान्तमालम्बते" उद्भटः । ततः पुष्करा० इनि ङीप् । कैरविणी कुमुदयुक्तसरसां तत्समूहे च स्त्री ।

कैरविणीखुर्द पु० मधूके शब्दा० अमरः । कुमुदलतासमूहे

कैरविणीफल न० ६त० । (तेरा) इति ख्याते कर्दलीभेदे

कैरवन् पु० कैरं प्रकाशमापनोति वन–श्च इति चन्द्रे शब्दमा०

कैरवी स्त्री कैरवस्य प्रिया अण् ङीप् । १चन्द्रिकायां मेदि० २मेथिकायां राजनि० [स्वार्थे अण् । स्वार्थकरविभेदे हेम०,

कैराटक पु० किरं पर्यन्तभूमिमटति अट–ण्वुल् ६त० ततः

कैरात पु० किरात इव शूरः इवार्थे अण् । १बलवत्पुरुषे, किरातदेशे (पर्व्वतदेशे) भवः अण् । २भूनिम्बे शब्दच० ३गन्धचन्दने न० राजनि० ४भूनिम्बे पु० राजनि० । किरातस्येदम् अण् । ५किरातसम्बन्धिनि त्रि० "कैरातं वेशमास्थाय" भा०व० ३९अ० ।

कैराल न० किरं पर्यन्तभूमिमलति अल–अण् उप०स० ततः स्वार्थे अण् । १विडङ्गे वैद्यकम् । गौरा० ङीष् । २कैराली तदर्थे स्त्री राजनि० ।

कैलास पु० के जले लासो लसनं दीप्तिरस्य अनुप्र० केलसः स्फटिकस्तद्वत् शुभ्रः अण् । केलीनां समूहः अण् — कैलं तेनास्यतेऽत्र आस–आधारे घञ् वा । शिवकुबेरयोः स्थाने पर्व्वतभेदे । स च ३४७० सं० कूर्मविभागे उत्तरस्यामुक्तः "उत्तरतः कैलासोहिमवान् गिरिर्धनुष्मांश्च" । स च अलकासमीपस्थितः "अलकां समधा चैव कैलासः गन्धमादनः" काशी० १२अ० । तत्स्वरूपञ्च हरिवं० २१७अ० दर्शितं यथा

"मन्दरश्चोपशिखरः, स्फाटिकैर्भूमिभिश्चितः । वज्रगर्भैर्विराजद्भिः स्वर्गोदय इवाबभौ । सर्व स्वङ्गैव कैलासः शिलाधातुविभूषितः । तोरणैश्चैव निविष्टैः प्रांशुभिश्चैव पादपैः । प्रवादयद्भिर्गन्धर्वैः किन्नरैश्च प्रगायभिः । देवकन्यासहस्रैश्च प्रक्रीडित इवाबभौ । मधुरैश्चाद्यगीतैश्च नृत्यैश्चाभिनयोज्ज्वलैः । सहस्रारैः कुमुदाकैश्च कैलासो मदनायते" ।

तस्य विष्णुनाभिपद्मस्य गर्भाङ्कुरत्वं हरिवं० २०२ अ० वर्णितं यथा

"तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते । सर्वतेजोगुणमये पार्थिवैर्लक्षणैर्युते । तच्च पद्मं पुराकल्पाः पृथिवीरूपमुत्तमम् । नारायणात् समुत्पन्नं प्रवदन्ति महर्षयः । या तु पद्माह्वया देवी तां पृथ्वीं परिचक्षते । ये तु गर्भाङ्कुरास्तस्यास्तान् दिव्यान् पर्व्वतान् विदुः । हिमवन्तञ्च मेरुञ्च नीलं निषधमेव च । कैलासं मुञ्जवन्तञ्च तथाऽन्यं गन्धमादनम् । पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च, उदयञ्च गिरिश्रेष्ठं विन्ध्यमस्तञ्च पर्व्वतम् । एते देवगणानाञ्च सिद्धानाञ्च महात्मनाम् । आश्रयाः सर्वभूतानां पुण्याः कामदुघोद्भवः । एतेषामन्तरो देशो जम्बुद्वीप इति स्मृतः" ।

कैलासप्रमाणञ्च भाग० ५।१६।२१, उक्तं यथा "जठरदेवकूटौ मेरुं पूर्वेण द्वादशयोजनसहस्रमुदगायतौ द्विसहस्रपृथुतुङ्गौ भवतः एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ" । "शुभ्रं पाण्डुरमेघाभं कैलासम् नगोत्तमम्" हरि० ११६अ० । "कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः" मेघ०

कैलासनाथ पु० ६त० । १शिवे २कुबेरे च "कैलासनाथं तरसा जिगीषुः" रघुः । केन सुखलासोऽस्य तत् ।

कैलासयात्रा स्त्री कैलासयात्रामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक् । हरिवंशान्तर्गते "किमदं

भगवान् विष्णुर्देवदेवो जनार्द्दनः। गतः कैलासशिखरमालयं शङ्करस्य च” २६४स० अध्यायावधिकै २८१अध्यायपर्य्यन्ते ग्रन्थे। उपसंहारे अनुक्रमणिकाध्याये “कैलासयात्रा कृष्णस्य पौण्ड्रकस्य वधस्तथा” इत्युक्तं तेन गौड़पुस्तके कैलासयात्राग्रन्थाभावः प्रामादिक एव

कैलासौकस् पु० कैलास ओको यस्य। १शिवे २कुबेरे च हेमच०

कैवर्त्त पुंस्त्री के जले वर्त्तते वृत–अच् अलुक्स० ततः स्वार्थे अण्। “निषादो मार्गवं सूते दासं नौकर्म्मजीविनम्। कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः” मनूक्तायां(जेले)धीवरजातौ। “ब्राह्मणेन शूद्रायां जातो निषादः प्रागुक्तः प्रकृतायामायोगव्यां मार्गवं दासापरनामानं नौव्यवहारजीविनं जनयति। आर्य्यावर्त्तदेशवासिनः तं कैवर्त्तशब्देन कीर्त्तयन्ति” कुल्लू०

कैवर्त्तमुस्त न० के जले वर्त्तते वृत–अच् अलुक्स० स्वार्थे अण् कर्म्म०। मुस्तकभेदे (केउरिया) शब्दर० स्वार्थे क। तत्रार्थे भरतः [प्रसिद्धे लताभेदे वस्त्ररञ्जनायाम् राजनि०

कैवर्त्तिका स्त्री कैवर्त्तीव इवार्थे कन् ह्रस्वः। मालवदेश

कैवर्त्तीमुस्तक न०। कैवर्त्त्याः कैवर्त्तपत्न्याः प्रियं मुस्तकं संज्ञायां “ङ्यापोः” पा० वा ह्रस्वः। कैवर्त्तमुस्तके मुस्ताभावे कैवर्त्तीमुस्तकमप्यत्र (केउरया) ख्याते मुस्तकभेदे भरतः

कैवर्त्ती स्त्री के जले वर्त्तते वृत-अच् अलुक्स० कैवर्त्तीजनस्यायं स्वार्थे अण् ङीप्। (केउरिया) १मुस्तकभेदे वैद्यकम् पुंयोगे ङीष्। २कैवर्त्तपत्न्याञ्च [ [illegible] रत्नमा०

कैवल न० के वलते वल–अच् अलुक्स० स्वार्थे अण्।

कैवल्य न० केवलस्य भावः ष्यञ्। १आत्यन्तिकदुःखविगमरूपे मुक्तिभेदे तत्स्वरूपतत्त्वादिकारणानि च सां०का०तत्त्वकौमुद्योर्दर्शितानि यथा“पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च” “इतश्चास्ति पुरुष इत्याह कैवल्यार्थं प्रवृत्तेश्च शास्त्रकाराणां महर्षीणाञ्च दिव्यलोचनानां कैवल्यमात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां सम्भवति ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते तद्व्यतिरिक्तस्य त्वदात्मन आत्मनस्तो वियोगः शक्यस्तस्मात् कैवल्यार्थं प्रवर्त्तमानानां महर्षीणामस्ति बुद्ध्याद्यतिरिक्त आत्मेति सिद्धम्” तत्त्वकौमुदी “कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च” सां०का० “आत्यन्तिकदुःखत्रयाभावः कैवल्यं तच्च स्वभावादेव त्रैगुण्यात् सुखदुःखमोहरहितत्वात् सिद्धम्” कौ० “पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य” का० “पुरुषत्रप्रधानापेक्षां दर्शयति पुरुषस्य कैवल्यार्थम्। तथा हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम्। न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते। अनादित्वाच्च संयोगपरम्परायाः भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यते इति युक्तम्” त० कौ० विवृतञ्चैतदस्माभिः “व्यवहितमपि पुरुषस्येति पदं कैवल्यार्थमित्यत्रान्वेतीत्याख्याति पुरुषस्यापेक्षामुपपादयति पुरुषस्यापेक्षामिति प्रकृतेरिति शेषः। कैवल्यं केवलीभावः स च अनुभूयमानस्य बुद्धिधर्मस्य दुःखत्रयस्य विनाश एव, तदर्थं तदुद्देशेन पुरुषस्य प्रकृत्यपेक्षा। तथा हि इष्टविषयेच्छया इष्टसाधनाय प्रवर्त्तमानो दृष्टः। पुरुषश्च आत्मन्यनुभूयमानं दुःखत्रयं जिहासुस्तत्परिहारसाधनमन्वेषते दुःखत्रयाभिघातश्च प्रकृतिपुरुषविवेकाधीन इति प्रकृतिं विना कथङ्कारं पुरुषस्तद्दुःखमात्मनि प्रतीयादिति दुःखत्रयाभिघातार्थमपेक्षणीयप्रधानसाधनत्वेन पुरुषस्य प्रकृत्यपेक्षा”।

“सम्यग्ज्ञानाधिगमाद्धर्म्मादीनामकारणप्राप्तौ। तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः” सां० का०

“तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्म्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगप्रसवाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्म्मबीजान्यङ्कुरं प्रसुवते तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्म्मबीजानामङ्कुरप्रसवः। तदिदमुक्तं धर्म्मादीनामकारणप्राप्ताविति अकारणत्वप्राप्तावित्यर्थः। उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात्तिष्ठति यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति। शरीरस्थितौ च प्रारब्धपरिपाकौ धर्म्माधर्म्मौ संस्कारौ। तथा चाश्रूयते “भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते” इति “तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये” इति। भोगसंस्कारविशेषश्च संस्कारस्तद्वशाच्चक्रभ्रमवद्धृतशरीरस्तिष्ठति” त० कौ० विवृतमेतदस्माभिः—

“इतरे उत्पन्नविवेकज्ञानाः शेषेण प्रारब्धकर्म्माणीति शेषः क्षपयित्वा नाशयित्वा सम्पद्यन्त इति यावत् अथ—प्रारब्धक-

वेदान्तिमते अविद्याकल्पितदेहादिबन्धनिवृत्तौ स्वाद्वितीयब्रह्मभावापत्तिरूपे कैवल्यत्वे च। तच्च कैवल्यं द्विविधं जीवन्मुक्तिर्विदेहकैवल्यञ्च। तत्र जीवन्मुक्तिलक्षणम् विस्तरेण जीवन्मुक्तशब्दे वक्ष्यते दिङ्मात्र मत्राभिधीयते तत्र विवेकचूडामणौ जीवन्मुक्तलक्षण मुक्तोक्तं यथा

"विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः। अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः। प्राचीनवासनावेगादसौ संसरतीति चेत्। न सदेकत्वविज्ञानान्मन्दीभवति वासना। अत्यन्तकामुकस्यापि वृत्तिः कुण्ठति मातरि। तथैव ब्रह्मणि ज्ञाते पूर्णानन्दे मनीषिणः। निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते। ब्रवीति श्रुतिरेतस्य प्रारब्धफलदर्शनात्। सुखाद्यनुभवो यावत्तावत् प्रारब्धमिष्यते। फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्रचित् ?। अहंब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम्। सञ्चितं विलयं याति प्रबोधात् स्वप्नकर्म्मवत्। यत् कृतं स्वप्नवेलायां पुण्यं वा पापमुल्बणम्। सुप्तोत्थितस्य किं तत् स्यात् ? स्वर्गाय नरकाय वा। स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा। न श्लिष्यति च यत्किञ्चित् कदाचिद्भाविकर्म्मभिः। न नभो घटयोगेन सुरागन्धेन लिप्यते। तथात्मोपाधियोगेन तद्धर्म्मैर्नैव लिप्यते। ज्ञानोदयात् पुराऽऽरब्धं कर्म्म ज्ञानान्न नश्यति। अदत्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत्। व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ। न तिष्ठति छिनत्त्येव लक्ष्यं वेगेन निर्भरम्। प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः सम्यग्ज्ञानहुताशनेन विलयः प्राक्सञ्चितागामिनाम्। ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये सर्व्वदा संस्थितास्तेषां तत्त्रितयं नहि क्वचिदपि ब्रह्मैव ते निर्गुणम्। उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः। प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसम्बन्धकथेव जाग्रतः। न हि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्यपि च प्रपञ्चे। करोत्यहन्तां ममतामिदन्तां किन्तु स्वयं तिष्ठति जागरेण। तदाऽस्य मिथ्यार्थसमर्थनेच्छा न संग्रहस्तज्जगतोऽपि दृष्टः॥ तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम्। तद्वत् परे ब्रह्मणि वर्त्तमानः सदात्मना तिष्ठति नान्यदीक्षते। स्मृतिर्यथा स्वप्नविलोकितार्थे तथा विदः प्राशनमोचनादौ। कर्म्मणा निर्म्मितो देहः प्रारब्धं तस्य कल्प्यताम्। नानादेरात्मनो युक्तं नैवात्मा कर्म्मनिर्म्मितः। अजो नित्यः शाश्वत इति ब्रूते श्रुतिरमोघवाक्। तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना। प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः। देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः। शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि। अध्यस्तस्य कुतः सत्त्वम् ? असत्यस्य कुतो जनिः ?। अजातस्य कुतो नाशः ? प्रारब्धमसतः कुतः ?। ज्ञानेनाज्ञानकार्य्यस्य समूलस्य लयो यदि। तिष्ठत्ययं कथं देह ! इति शङ्कावतो जडान्। समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः। न तु देहादिसत्यत्वबोधनाय विपश्चिताम्। परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन। सद्घनं चिद्घनं नित्यमानन्दघनमक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन। प्रत्यगेकरसं पूर्णमनन्तं सर्व्वतोमुखम्। एकमेवाद्वयमित्यादि। अहेयमनुपादेयमनादेयमनाश्रयम्। एकमेवाद्वयमित्यादि। निर्गुणं निष्कलं सूक्ष्मं निर्व्विकल्पं निरञ्जनम्। एकमेवाद्वयमित्यादि। अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम्। एकमेवाद्वयमित्यादि। सत्समृद्धं स्वतः सिद्धं शुद्धं बुद्धमनीदृशम्। एकमेवाद्वयमित्यादि। निरस्तरागा निरपास्तभोगाः शान्ताः सुदान्ता यतयो महान्तः। विज्ञाय तत्त्वं परमं तदन्ते प्राप्ताः परां निर्वृतिमात्मयोगात्। भवानपीदं परतत्त्वमात्मनः स्वरूपमानन्दघनं विचार्य्य। विधूय मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः। समाधिना साधुविनिश्चलात्मना पश्यात्मतत्त्वं स्फुटबोधचक्षुषा। निःसंशयं सम्यगवेक्षितश्चेच्छ्रुतः पदार्थो न पुनर्विकल्प्यते। स्वस्याविद्याबन्धसम्बन्धमोक्षात् सत्यज्ञानानन्दरूपात्मलब्धौ। शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चान्तःसिद्धा स्वानुभूतिः प्रमाणम्। बन्धो मोक्षश्च तृप्तिश्च चिन्तारोग्यक्षुदादयः। स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम्। तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा। प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया। स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम्। संसिद्धः सम्मुखं तिष्ठेत् निर्व्विकल्पात्मनात्मनि। वेदान्तसिद्धान्तनिरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च। अखण्डरूपस्थितिरेव मोक्षो ब्रह्माद्वितीये श्रुतयः प्रमाणम्"।

तदीयप्रमाणकारोऽपि तत्र दर्शितो यथा

"अकर्त्ताहमभोक्ताहमविकारोऽहमक्रियः। शुद्धबोध-

स्वरूपोऽहं केवलोऽहं सदाशिवः। द्रष्टुः श्रोतुर्वक्तुः कर्त्तुर्भोक्तुर्विभिन्न एवाहम्। नित्यनिरन्तरनिष्क्रियो निःसीमाऽसङ्गपूर्णबोधात्मा। नाहमिदं नाहमदोऽप्युभयोरवभासकं परं शुद्धम्। बाह्याभ्यन्तरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम्। निरुपममनादितत्त्वं त्वमहमिदमद इति कल्पनादूरम्। नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमेवाहम्। नारायणोऽहं नरकान्तकोऽहं पुरान्तकोऽहं पुरुषोऽहमीशः। अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहञ्च निर्ममः। सर्व्वेषु भूतेष्वहमेव संस्थितो ज्ञानात्मनान्तर्बहिराश्रयः सन्। भोक्ता च भोग्यं स्वयमेव सर्व्वं यद्यत् पृथक् दृष्टमिदन्तया पुरा। मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः। उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात्। स्थूलादिभावा मयि कल्पिता भ्रमादारोपितानुस्फुरणेन लोकैः। काले यथा कल्पकवत्सरायनर्त्त्वादयो निष्कलनिर्व्विकल्पे। आरोपितं नाश्रयदूषकं भवेत् कदापि मूढैरतिदोषदूषितैः। नार्द्रीकरोत्यूषरभूमिभागं मरीचिकावारिमहाप्रवाहः। आकाशवत् कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम्। अहार्य्यवन्नित्यविनिश्चलोऽहमम्भोधिवत् पारविवर्जितोऽहम्। न मे देहेन सम्बन्धो मेघेनेव विहायसः। अतः कुतो मे तद्धर्म्मा जाग्रत्स्वप्नसुषुप्तयः। उपाधिरायाति स एव गच्छति स एव कर्म्माणि करोति भुङ्क्ते। स एव जीर्य्यन् म्रियते सदाहं कुलाद्रिवन्निश्चल एव संस्थितः। न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य निरंशकस्य। एकात्मको यो निविडो निरन्तरो व्योमेव पूर्णः स कथं नु चेष्टते?। पुण्यानि पापानि निरिन्द्रियस्य निश्चेतसो निर्व्विकृतेर्निराकृतेः। कुतो ममाखण्डसुखानुभूतेः? ब्रूते ह्यनन्वागतमित्यपि श्रुतिः। छायया स्पृष्टमुष्णं वा शीतं वा सुष्ठु दुष्ठु वा। न स्पृशत्येव यत् किञ्चित् पुरुषं तद्विलक्षणम्। न साक्षिणं साक्ष्यधर्म्माः संस्पृशन्ति विलक्षणम्। अविकारमुदासीनं गृहधर्म्माः प्रदीपवत्। रवेर्य्यथा कर्म्मणि साक्षिभावो वह्नेर्य्यथा दाहनियामकत्वम्। रज्जोर्य्यथारोपितवस्तुसङ्गस्तथैव कूटस्थचिदात्मनो मे। कर्त्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि नाहम्। द्रष्टापि वा दर्शयितापि नाहं सोऽहं, स्वयंज्योतिरनीदृगात्मा। चलत्युपाधौ प्रतिबिम्बलौल्यमौपाधिकं मूढधियो नयन्ति। स्वबिम्बभूतं रविवद्विनिष्क्रियं कर्त्तास्मि भोक्तास्मि हतोऽस्मि हन्त। जले वापि स्थले वापि लुठत्वेष जडात्मकः। नाहं विलिप्ये तद्धर्म्मैर्घटधर्म्मैर्नभो यथा। कर्त्तृत्वभोक्तृत्वखलत्वमत्ततामिलत्वबद्धत्वविमुक्ततादयः। बुद्धेर्विकल्पा न तु सन्ति वस्तुतः स्वस्मिन् परे ब्रह्मणि केवलेऽद्वये। सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि। किं मे सङ्गिभिरेभिर्न ह्यम्बुदा वरमम्बरं स्पृशन्ति। अव्यक्तादिस्थूलपर्य्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम्। व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि। सर्व्वाधारं सर्व्ववस्तुप्रकाशं सर्व्वाकारं सर्व्वगं सर्व्वशून्यम्। नित्यं शुद्धं निश्चलं निर्व्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि। यन्निरस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम्। सत्यज्ञानानन्दमानन्दरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि। निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः। निर्व्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः। सर्व्वात्मकोऽहं सर्व्वोऽहं सर्व्वातीतोऽहमद्वयः। केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरम्। स्वाराज्यसाम्राज्यविभूतिरेषा भवत्कृपाश्रीमहिमप्रसादात्। प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेऽस्तु पुनर्नमोऽस्तु"।

पुनस्तल्लक्षणं तत्रैवोक्तं यथा

"क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि। तथैव विद्वान् रमते निर्म्ममो निरहं सुखी। चिन्ताशून्यमदैन्यभैक्ष्यमशनं, पानं सरिद्वारिषु, स्वातन्त्र्येण निरङ्कुशा स्थितिरभी निद्रा श्मशाने वने। वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्या मही सञ्चारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि। विमानमालम्ब्य शरीरमेतद् भुनक्त्यशेषान् विषयानुपस्थितान्। परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः। दिगम्बरो वापि च साम्बरो वा त्वगम्बरो वापि चिदम्बरस्थः। उन्मत्तवद्वापि च बालवद्वा पिशाचवद्वापि चरत्यवन्याम्। कामान्निष्कामरूपी संचरत्येकचरो मुनिः। स्वात्मनैव सदा तुष्टः स्वयं सर्व्वात्मना स्थितः। क्वचिन्मूढो विद्वान् क्वचिदपि महाराजविभवः क्वचिद्भ्रान्तः सौम्यः क्वचिदजगराचारकलितः। क्वचित् पात्रीभूतः क्वचिदवमतः क्वाप्यविदितश्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः। निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः। नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः। अपि कुर्व्वन्नकुर्व्वाणश्चाभोक्ता फलभोग्यपि। शरीर्य्यप्य-

शरीरस्थोऽपि परिच्छिन्नोऽपि सर्वगः । अशरीरं सदा सन्तमिदं ब्रह्मविदं क्वचित् । प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे । स्थूलादिसम्बन्धवतोऽभिमानिनः सुखञ्च दुःखञ्च शुभाशुभे च विध्वस्तबन्धस्य सदात्मनो मुनेः कुतः शुभं फलमशुभं फलं वा । तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः । ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् । तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् । पश्यन्ति देहवन्मूढाः शरीराभासदर्शनात् । अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति । इतस्ततश्चाल्यमानो यत्किञ्चित् प्राणवायुना । स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् । दैवेन नीयते देहो यथाकालोपभुक्तिषु । प्रारब्धकर्मपरिकल्पितवासनाभिः संसारिवच्चरति भुक्तिषु मुक्तदेहः । सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं चक्रस्य मूलमिव कल्पविकल्पशून्यः । नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष नैवापयुङ्क्त उपदर्शनलक्षणस्थः । नैव क्रियाफलमपीषदवेक्षते स स्वानन्दसान्द्ररसपानसुमत्तचित्तः । लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत् केवलात्मना । शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः । जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः" ।

विदेहकैवल्यमपि तत्र दर्शितं यथा "उपाधिनाशाद् ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् । शैलूषवेषसद्भावाभावयोश्च यथा पुमान् । तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः । यत्र क्वापि विशीर्णं सत् पर्णमिव तरोर्वपुः पतनात् । ब्रह्मीभूतस्य यतेः प्रागेव तच्चिदग्निना दग्धम् । सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दमयात्मना सदा । न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्डविसर्जनाय । देहस्य मोक्षो मोक्षो न दण्डस्य कमण्डलोः । अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः । कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे । पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम् ? । पत्रस्य पुष्पस्य फलस्य नाशवद्देहेन्द्रियप्राणधियां विनाशः । नैवात्मनः स्वस्य सदात्मकस्यानन्दाकृतेर्वृक्षवदस्ति चैषः । प्रज्ञानघन इत्यात्मलक्षणं सत्यसूचकम् । अनूद्यौपाधिकस्यैव कथयन्ति विनाशनम् । अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः । प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु । पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव । देहेन्द्रियासुमनआदि समस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्मभावम् । विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि । तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते । घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् । तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले । संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः" ।

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् । ब्रह्मभावं प्रपद्यैष यतिर्नावर्त्तते पुनः । सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः । अमुष्य ब्रह्मभूतत्वाद् ब्रह्मणः कुत उद्भवः? । मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः । यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ । आवृतेः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे । नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् । यद्यस्त्यद्वैतहानिः स्यात् द्वैतं न सहते श्रुतिः । बन्धञ्च मोक्षञ्च मृषैव मूढा बुद्धेर्गुणं वस्तुनि कल्पयन्ति । दृगावृतिं मेघकृतां यथा रवौ यतोऽद्वयासङ्गचिदेकमक्षरम् । अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि । बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः । अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि । निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने । अद्वितीये परे तत्त्वे व्योमवत् कल्पना कुतः? । न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता । सकलनिगमचूडास्वान्तसिद्धान्तगुह्यं परमिदमतिगुह्यं दर्शितं ते मयाद्य । अपगतकलिदोषं कामनिर्मुक्तबुद्धिं स्वसुतवदसकृत्त्वां भावयित्वा मुमुक्षुम्" । कैवल्यं स्वरूपत्वेनास्त्यस्य अर्श० अच् । २कैवल्यस्वरूपे त्रि० "ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्ब्रह्मन् सदने मा गतिर्भवान्" भा० अनु० १६अ० । "कैवल्या मोक्षाख्या गतिः" नीलक० । केवल एव स्वार्थे ष्यञ् । ३अद्वितीये वस्तुनि न० "धातारमक्षममव्यक्तं यमाहुः परमव्ययम् । कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम्" भा० अ० ६३अ०

कैशिक न० केशानां समूहः ठक् । १केशसमूहे । २नाटकप्रसिद्धे वृत्तिभेदे स्त्री ङीप् हेमच० सा० द० सरस्वतीकण्ठाभरणे च कौशिकीत्येव पाठः । अलङ्कारशब्दे ३८८पृ० तल्लक्षणमुक्तम् । ३शृङ्गारे पु० जटा० तस्य केशवेशपूर्व्वकत्वेन तदधीनत्वात् तथात्वम् । ४नृपभेदे पु० "काकृतिः कैशिकश्चैव भीष्मकश्च नराधिपः" हरिवं० ८६अ०

कैशोर न० किशोरस्य भावः कर्म वा प्राणभृद्वयोवाचित्वात् अञ् । "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।

कैशोरमा पञ्चदशात् यौवनं तु ततः परमिति" श्रीधरधृते एकादशावधिपञ्चदशपर्य्यन्तवयसि "फलं पचति कैशोरे भग्नानुग्रहकारकम्" भाग०२।२८।१८ स्वार्थे क। तत्रार्थे "कैशोरकं मानयन् वै सह ताभिर्मुमोद ह" हरिवं० ७७ [ ढक्। किशोर्य्या अपत्ये

कैशोरिकेय पुंस्त्री० किशोरी+स्वार्थे क ततः शुभ्रा० अपत्ये

कोक पुंस्त्री० कुक–आदाने अच्। १चक्रवाके "हंसारवैः कोकरवैश्च" भा० आनु० २६अ० "विरहविधुरकोकद्वन्द्वशोकं विभिन्दन्" उद्भटः। २वृके "वने यूथपरिभ्रष्टा मृगी कोकैः (वृकैः) रिवार्द्दिता" रामा०। ३भेके च स्त्रियां ङीष्। ४ज्येष्ठ्याम् (टिकटिकी) ५खर्ज्जूरीवृक्षे च पु० मेदि० ६विष्णौ पु० त्रिका०

कोकड पुंस्त्री० कोकं वृकं तद्रूपं लाति ला–क लस्य डः। विशेषयमृगभेदे चमरमृगे राजनि० स्त्रियां ङीष्।

कोकदेव पुंस्त्री० कोक इव दीव्यति दिव–अच्। कपोते राजनि०

कोकनद न० कोकान् चक्रवाकान् नदति नादयति अन्तर्भूतण्यर्थे नद–अच्। १रक्तकुमुदे, २रक्तपद्मे च। "व्याकोशकोकनदतां दधते नलिन्यः" माघः। "सरसः कोकनदभ्रमादिव" नैष०

कोकनदच्छवि पु० कोकनदस्य छविरिव छविर्यस्य। १रक्तवर्णे २तद्वति त्रि० अमरः। [ छर्वे शब्दच० ।

कोकबन्धु पु० कोकयोश्चक्रवाकयोर्मिलनकारित्वात् बन्धुरिव।

कोकरक पु० ब०व० देशभेदे। "वृकाः कोकरकाः प्रोष्ठाः समवेगवशास्तथा" भा० भी० ९ देशकथने।

कोकवाच पुंस्त्री० कोकस्य वागिव वाक् रवो यस्य। विशेषयमृगभेदे राजनि०

कोकाक्ष पु० कोकस्येवाक्षमस्य। तमालिकाक्षुपभेदे राजनि०

कोकामुख न० भारतवर्षस्थे तीर्थभेदे "कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः। जातिस्मरत्वमाप्नोति दृष्टमेतत् पुरातनैः" भा० व० ८४अ० "कोकामुखे विगाह्याप" भा० आनु०। २५अ०

कोकाह पु० कोकवदाहन्ति आ+हन–ड। श्वेताश्वे हेमच०

कोकिल पुंस्त्री० कुक–इलच्। स्वनामख्याते पक्षिणि अमरः। "पुंस्कोकिलो यन्मधुरं चुकूज" कुमा० स्त्रियाम् जातित्वेऽपि अजा० टाप्। "कोकिलाकलरवो वनेवने नूनमत्र निगडो भविष्यति" उद्भटः। "अवकूजतः कोकिति" वि० को० "रतिदूतिपदेषु कोकिलाम्" कुमा० "कोकिलामञ्जुवादिनीम्" रघुः। अङ्गारे पु० त्रिका० संज्ञायां कन्। "हयदशभिर्नजौ भजजला गुरु नद्‌टकम्। मुनिगुहकार्णवैः कृतयति वद कोकिलकम्" वृ० र० उक्ते २छन्दोभेदे न०।

कोकिलनयन पु० कोकिलस्य नयनमिव रक्तं पुष्पमस्य। अतिरक्तपुष्पे (तालमाखना) (कुलेखाड़ा) वृक्षभेदे रमानाथः [ (तालमाखना) वृक्षभेदे अमरः

कोकिलाक्ष पु० कोकिलस्याक्षीव रक्तं पुष्पमस्य पञ्चतमा०।

कोकिलावास पु० ६त०। आम्रवृक्षे राजनि०

कोकिलासन न० रुद्रयामलोक्ते आसनभेदे तल्लक्षणम् यथा "अथान्यदासनं वक्ष्ये येन सिद्धो भवेन्नरः। निरुध्य हृद्वायुमद्धारं कोकिलास्यासनेन च। अर्द्धं हस्तद्वयं कृत्वा तदग्रे पादयोः सुधीः। बद्धाङ्गुष्ठद्वयं नाथ! शनैः शनैः प्रसारयेत्। पद्मासनं समारुह्य कूर्परोपरि संस्थितः"

कोकिलेक्षु पु० कोकिल इव कृष्णः इक्षुः। (काजला) इक्षुभेदे। राजनि०

कोकिलेष्टा स्त्री०६त०। महाजम्बूवृक्षे राजनि०

कोकिलोत्सव पु० कोकिलानामुत्सवोऽत्र। आम्रवृक्षे राजनि० [ (देशान्) भाग० ५।६।८

कोङ्क पु० ब०व०। देशभेदे। "संक्रमाप्य कोङ्कवेङ्कटकान्"

कोङ्कण पु० ब०व०। देशभेदे स च देशः वृ० सं० कूर्म्मविभागे दक्षिणस्यामुक्तः "चिपिटकफणिकारकोङ्कणाभीराः"। "अथापरे जनपदा दक्षिणा भरतर्षभ!। कौकुट्टकास्तथा चोलाः कोङ्कणा मलयानराः" भा० भी० ९अ०। क्वचिदेकत्वम् "नाथ पद्यः कोङ्कणे मागधे च" मु० चि० "मालवे गौडदेशे च सिन्धुदेशे च कोङ्कणे। व्रतं चूडां विवाहश्च वर्ज्जयेत्करके गुरौ" पी० धा०। तेषां राजा अण्। कौङ्कण तद्देश्यराजे बहुषु तस्य लुक्। तत्रार्थे स्वार्थे क "कुन्तलांश्च तथा वह्नान् शाल्वान् कोङ्कणकांस्तथा (विजित्य)" हरिवं० १४अ०

कोङ्कणासुत पु० कोङ्कणदेशोद्भवा अण् तस्य लुक् कोङ्कणा रेणुका ६त०। परशुरामे शब्दमा०

कोच त्रि० कुच–ज्वला० कर्त्तरि ण। १सङ्कोचके, । भावे घञ्। २सङ्कोचे "एकैकस्य स्वकोचमंदलपनात्स्मादाः कुचे महत्पूर्वयुते भवन्ति" वस्तु० ब्रह्मवै०पु० उक्ते ३जातिभेदे (कोंच) "तीवरस्यैव स पुत्रः मांसकोटिरसम्भवः। कोचजातिरिति तस्योक्तेः"। स्त्रियां ङीप्। ४तत्प्रधाने देशे पु०। सोऽभिजनोऽस्य अण्। कौच तद्देशवासिनि बहुषु तस्य अणो लुक्।

कोजागर पु० को जागर्त्ति इति लक्ष्म्या उक्तिरत्र काले पृषो०। आश्विनपौर्णमास्याम्। तत्कृत्यव्यवस्थादि ति० त० कल्पतरौ ब्रह्मपुराणम् "आश्वयुज्यां पौर्णमास्यां निकु-म्भोयात्यकार्त्तिकात्। आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्। तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपतः। शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः। पुष्पार्घ्य-फलमूलान्नसर्पिष्प्रकरैस्तथा। वेश्मानि भूषितव्यानि ना-नावर्णैर्विशेषतः। स्नातैरनुलिप्तैश्च नरैर्भाव्यं सवा-न्धवैः। दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः। स्त्री-बालमूर्खवृद्धैश्च भोक्तव्यं पूजितैः सुरैः"। पूजितैः सु-रैः पूजितसुरैरित्यर्थः। "दद्याच्च सफलैः पुष्पैस्तथा द्वारो-र्द्ध्वभित्तयः। द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः। यथावत्तघृतोपेतैस्तण्डुलैश्च सुतर्पितः। संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च। स्कन्दः सभार्य्यो रुद्रश्च तथा नन्दीश्वरो मुनिः। गोमद्भिः सुरभिः पूज्या छाग-वद्भिर्हुताशनः। उरभ्रवद्भिश्च वरुणो गजवद्भिर्विनायकः। पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः। ततः पूज्यो-निकुम्भोऽपि समांसैस्तिलतण्डुलैः। सुगन्धिभिर्घृतो-पेतैः सगराज्यैश्च भूरिभिः। ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम्। वंशपार्श्वगतैर्नेया रात्रिः क्रीड़ाः पृथग्विधाः"। ततश्च द्वारोर्द्ध्वभित्तिहु-व्यवाहपूर्णेन्दुसभार्य्यरुद्रस्कन्दनन्दीश्वरमुनयः सर्वे पूज्याः। द्वारोर्द्ध्वभित्तिशब्दोऽत्र बहुवचनान्तः। नन्दीश्वरोमुनिरेकः। गोमता सुरभिः, छाग-वता हुताशनः मेषवता वरुणः, हस्तिमता विनायकः, अश्ववता रेवन्तः सर्व्वैरेव निकुम्भः पूज्यः, सहार्णवे लि-ङ्गपुराणम्। "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्य्या लोकविभूतये। कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम्। सुगन्धि-र्निशि सद्वेशो ह्यक्षैर्ज्जागरणं चरेत्"। तथा "निशीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीड़ां करोति यः। नारिकेलैश्चिपिटकैः पितृन् देवान् समर्चयेत्। बन्धूंश्च प्रीणयेत्तेन स्वयं तद-शनो भवेत्"। अत्र निशीति निशीथ इति चाभिधानात् रात्रिकर्त्तव्यमिदम्। ततश्च "प्रदोषव्यापिनी ग्राह्या तिथि-र्नक्तव्रते सदा। प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते" इति वत्सवचनात् यद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम् उभयव्याप्त्यनुरो-धात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने प्रदोष-व्याप्तिस्तदा परेद्युस्तत्कृत्यम्। प्रधानपूजाकालव्याप्त्य-नुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने न प्रदोषव्याप्तिस्तदा सुतरां पूर्व्वेद्युस्तत्कृत्यम् "अतः सु-तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा। नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" इति वचनात्"।

"नारिकेलोदकं पीत्वा ह्यक्षैर्जागरणं निशि। तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले" कृत्यकौमुदी। तत्राक्ष-क्रीड़ा कार्य्या। अक्षक्रीड़ाविशेषश्च चतुरङ्गशब्दे दृश्यते। "या तु कोजागरे याते" ति० त० राजमार्त्तण्डः।

कोट पु० कुट–घञ्। १कौटिल्ये। आधारे घञ्। दुर्गे (गड़) मेदि०। ततः चतुरर्थ्याम् अश्मा० र कोटर कोटस्य स-न्निकृष्टदेशादौ त्रि० [ विवृतिः स्त्रियां ङीप्।

कोटक पुंस्त्री कुट–ण्वुल् जातिभेदे ब्रह्मवै० जातिशब्दे

कोटचक्र न० कोटस्य दुर्गस्य शुभाशुभज्ञापनार्थे अष्टविध-चक्रभेदे चक्रशब्दे विवृतिः। "कोटचक्रमष्टविधं चतुर-स्रादिभेदतः" इति नरपतिजयचर्य्या

कोटर पुंन० कोटं कौटिल्यं राति रा-क। वृक्षस्कन्धादिस्थग-र्त्ते। "चलत्पक्षाधरमिव कोटरं तरुः" माघः। "महाहहारविटपदन्तियाङ्कुरकोटरः" भा० आनु० १७अ० २दुर्गस्य सन्निकृष्टदेशादौ त्रि० व्युत्पत्तिः कोटशब्दे दृश्या। कोटरं दुर्गसन्निकृष्टं वनम् तथाभूतस्थाप्यं वा वनम् कोटरा० पूर्व्वपददीर्घः णत्वञ्च। कोटरावणम् वनभेदे न०।

कोटरादि पु० वनशब्दे परे पूर्व्वस्वरदीर्घनिमित्ते पा०ग० सूत्रोक्ते शब्दगणे स च गणः। "कोटर मिश्रक सिध्रक पुरग शारिक"।

कोटरी स्त्री कोटं कौटिल्यं रीयाति री–बधे गतौ च क्विप् १नग्नायां स्त्रियां २दुर्गायाञ्च अमरटीका।

कोटवी स्त्री कोटं कौटिल्यं दुर्गं वा वाति वा–गतौ हिंसने क गौरा० ङीष्। १दुर्गायाम् भरतः। २नग्नायां स्त्रियां अमरटीका।

कोटि स्त्री कुट–इञ्। १धनुषोऽग्रभागे अमरः २वस्तुमात्र-स्याग्रभागे, ३अश्रीणां कोणे ४उत्कर्षे ५शतलक्षमित-संख्यायां, ६तत्संख्येये च मेदि०। ७स्पृक्कायाम् (पिड़िङशाक) अमरः ८वांशयज्ञालम्बने, वादे निर्ण-यार्थं कृते ९पूर्व्वपक्षे, वा ङीप् कोटीत्यप्यत्र। "धनु-ष्कोट्याहतश्च कर्णेन वीरम्" भा० आ० १८०। "तेन

भूमिर्निहितैककोटि तत्" (कार्मुकम्) रघुः। "आवर्जितजटामौलिविलम्बिशशिकोटयः" कुमा०। "शृङ्गिसहस्रच्छिन्नदीर्घतरकोटिमिनम्" माघः "विवर्तितपतिताकाजन्यकोट्युपस्थितः" संशयहेतुकोटौ गदाधरः। "इष्टाहाकोर्यः स्यात्तत्कृतिर्विभ्रां विगतिरोबाहुः। त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः" १०लीलावत्युक्ते त्रिकोणादिक्षेत्रावयवरेखाभेदे स्त्री "तच्यायते तद्भुजकोटिघातः" लीला० "त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्यादयुग्युग्मसंज्ञा च तेषाम्। अयुग्मे पदे यातमुष्यन्तु युग्मे भुजोबाहुहीनं त्रिभं कोटिरुक्ता" सि०शि० उक्ते राशिचक्रस्य ११चतुर्थांशे १२तत्रोक्ते छायानिरूपणार्थे कल्प्यमानक्षेत्रावयवरेखाभेदे यथा "दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्रपूर्व्वापरसूत्रमध्यम्। दोर्दोःप्रभावर्गवियोगमूलं कोटिर्नराग्रं प्रागपरा ततः स्यात्" सि० शि०" "दिक्संपातस्य शङ्कोर्भुवं यत्र पतति तस्य पूर्व्वापरसूत्रस्य च यदन्तरं स दोरित्युच्यते छायादोर्वर्गान्तरपदं पूर्व्वापरा कोटिरिति" प्रमि० १३चन्द्रस्य शृङ्गोन्नतिज्ञानार्थं तत्रैव दर्शिते क्षेत्रावयवभेदे च यथा "दोऽथो नरो दिनकृतः स विधोरदृग्गङ्कुकल्पितो मम मता खलु सा कोटिः" सि० शि०

"यो रवेरधःशङ्कुरसौ विधोरूर्ध्वशङ्कुना युतः सैव कोटिर्मम मता अत्रोपपत्तिः। दृक्कर्मोपायमिन्द्रोत्तरभावेन यदन्तरं स भुजः। ऊर्ध्वाधरभावेन यदन्तरं सा कोटिः। सा चैवं भवति। उदयास्ते वा यदि स्यादिन्दुस्तदा रविशङ्कोरधोभागस्थितत्वाच्छङ्कुरेव कोटिः। यदा निशि रवेरधः शङ्कुस्तदा स शङ्कुर्विधोरुदयशङ्कुना युतो यावांस्तावत् तयोरूर्ध्वाधरयोरन्तरं सैव कोटिरुचिता। यतो दृष्टा दुष्टेषावनोऽवस्थानक्रमेण प्रदिनः शङ्कुसूत्रमनुलेख्यम्। अतः स्वावस्थानसमत्वादूर्ध्वरूपणया कोट्या भवितव्यम्। भुजकोटिकर्णकृतं त्र्यस्रं दृष्टेरग्रतः उद्रेकं यथा भवति तथा कल्प्यम्" प्रमि० तत्रैवोक्ते १४उदयास्तसूत्रकल्पितक्षेत्रावयवभेदे यथा "उदयाद्द्विगुणतत्रं दर्शयं यामयां गतं हि द्युनिशं कृतोदयं। अथ च सौम्यां निशि सौम्यगतत्वात् शङ्कुलिखितं स्वतलं निरुक्तम्। सौम्यापक्रमपादतलं हि यात्यं याम्यापक्रमात् पुनरेव याम्यम्। तदन्तरैक्यं सममण्डलस्थांशजीवां भुवि बाहुमाहुः। दृग्ज्यां श्रुतिं चाथ तयोश्च कोटिं पूर्वापरां दर्शयितोऽयमनूनकम्" सि०शि०

"क्षितिजसमाहोरात्रवृत्तसंपातयोर्यत् सूत्रमुदयास्तसूत्रम्। पदस्थानाद्गम्यः शङ्कुः। तस्य तलमुदयास्तसूत्राद्दक्षिणतो भवति। यतः क्षितिजादुपरि दक्षिणतोऽहोरात्रवृत्तं गतम्। अधश्चोत्तरतो गतम्। अतो निम्नतरं स्वतलम्। अथ भुज उच्यते। उत्तरगोलेऽग्रोत्तरा स्वतलं याम्यमतस्तयोरन्तरं बाहुर्भवति। बाहुर्नाम शङ्कुप्राच्यपरसूत्रयोरन्तरम्। यदाग्रा शङ्कुतलादूना तदा तयोरन्तरं दक्षिणं शङ्कुतलं बाहुः स्यात्। एवं समवृत्तप्रवेशादुपरि दक्षिणगोले स्वग्रा याम्या शङ्कुतलं च याम्यं तयोर्योगे कृते बाहुः स्यात्। रविसममण्डलयोरन्तरांशानां ज्या बाहुः। तत्र या दृग्ज्या स कर्णः। तयोर्वर्गान्तरपदं पूर्वापरा कोटिः" प्रमि०

"शतं शतसहस्राणां कोटिमाहुर्मनीषिणः" रामा०। तत्र संख्यायाम् "योनिकोटिसहस्रेषु सृतिं चास्यान्तरात्मनः" मनुः। "कोटिकोटिगुणितं दिवि दायि" नैष०। संख्यान्विते "कोटीश्चतस्रो दश चाहरेति" रघुः। ततः वारे कृत्वसुच्। कोटिकृत्वः कोटिवारार्थे अव्य०। कारकार्थवृत्तेः सुतः वीप्सार्थां शस्। कोटिशस् वीप्सान्वितकारकवृत्ते तदर्थे अव्य० कोटिशोददाति।

कोटिक पु० कोट्या बहुधा कायति प्रकाशते कै—क। इन्द्र-[गोपकीटे जटाधरः।

कोटिकास्य पु० कोटिकस्येवास्यमस्य। शिबिवंश्ये सुरथपुत्रे नृपभेदे "अहन्तु राज्ञः सुरथस्य पुत्रः यं कोटिकास्येति विदुर्मनुष्याः" भा० व० २६४अ०। द्रौपदीं प्रति तदुक्तिः

कोटिजित् पु० कोटिं सर्वकोटिं, यद्वा कोटिमितं द्रव्यं वा जितवान् जि-भूते क्विप्। रघुवंशादिकाव्यकारे कालिदासे त्रिका०।

कोटिज्या स्त्री ६त० सि० उक्ते पदकल्पितसाधनाङ्गे चापावयवभेदे तदानयनं यथा

"गताद्भुजज्या विषमे गम्यात् कोटिः पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गताद्भवेत्" सू०सि०। "विषमे पदे गतात् भुक्तात् पदादितो यद्गतं राशित्रिभागात्मकं भाग-ज्ञातं तस्मादित्यर्थः भुजज्या स्यात्। गम्याद्गतोनं त्रिभं यद्गतं पदान्ताद्गन्तव्यम्। तस्मात् कोटिः कोटिज्या स्यात्। युग्मे समे तुकारात् पदे गम्याद् भुजज्या, गतात् कोटिज्या स्यात् तुकारो विशेषद्योतकः। एकस्मादेवोक्तरीत्या द्वयं वा भवतीत्यर्थः। अत्रोपपत्तिः विषमपदे पश्चोर्ध्वाधररेखान्तरानुसारेण फलमुत्पद्यते ततो दक्षिणोत्तररेखान्तरसमरेखया भुजकल्पना तदर्द्धचापं तदन्तरांशा

**कोर** पु० कुल-संस्त्याने अच् अस्य रः । १संस्त्यानवति कोरका-
कारे सुश्रुतोक्ते देहस्थसन्धिभेदे यथा
"त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसे-
वनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणि-
बन्धगुल्फजानुकूर्परेषु कोराः सन्धयः" । "नामभिरेवा-
कृतयः व्याख्याताः" । कुल-घञ् । २संस्त्याने पु०

**कोरक** पुंन० कुल-संस्त्याने ण्वुल् अस्य रः । कलिकायाम् ।
"कलिका कोरकः पुमान्" इत्यमरोक्तेः प्रायिकाभिप्राया "को-
रकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोः" विश्वोक्तेः
तेन "मधुपहरत् विचकार कोरकाणि" माघे क्लीव-
प्रयोगः "कोरकोऽस्त्री कुड्मले स्यात्" मेदि० । २कक्कोले
३मृणाले च विश्वः । ४चोरनामगन्धद्रव्ये जटाध० । ततः
तारका० संजातेऽर्थे इतच् । कोरकित जातमुकुले त्रि०

**कोरङ्गी** स्त्री० कुर-अङ्गच् गौरा० ङीष् । १सूक्ष्मैलायाम्
(छोटएलाच्) अमरः २पिप्पल्यां राजनि०

**कोरदूष** पु० कोरं संस्त्यानं दूषयति दूषि अर्थान्तात् अण् उप०
स० । (कोंदो) ख्याते व्रीहिभेदे अमरः । "निवारचिङ्क
यवगोधूमकोरदूषेत्यादि" सुश्रु० "श्यामाककोरदूषाख्यं त-
कं पित्ताकफमरुद्भिः" सुश्रु० । ण्वुल् । कोरदूषकोऽप्य-
त्रार्थे । "दैवयोगभविता लोके युगान्ते पर्युपस्थिते । य-
मानां प्रवरा भावी धान्यानां कोरदूषकः" भा०व०१९०अ०

**कोल** पु० कुल-संस्त्याने अच् । १शूकरे २कुवेले (भेला) अमरः
३क्रोडे ४शनिग्रहे ५चित्रके (चिता) ६अङ्कपालौ ७आ-
लिङ्गने मेदि० । ८देशभेदे पु०ब०व० शब्दरत्ना० ९जनभेदे पु०
धर० "मेदान् धीवरकान्ताजाते" १०जातिभेदे ब्रह्मवै० पु० ।
११वंशभेदे "करूशाश्चाद्याश्चोडकेरलाश्च चालकाः ।
पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः । तेषां जन-
पदाः ख्याताः पाण्ड्याः कोलाः सकेरलाः" हरिवं०३२अ० ।
१२मरिचे न० राजनि० १३चव्ये (चइ) वैद्य० । १४तोलक-
परिमाणे वैद्यकम् । १५कर्कन्धूवृक्षे स्त्री० गौरा० ङीष् ।
तस्याः फलम् अण् तस्य लुक् । १६बदरीफले न० कर्कन्धुप-
र्य्ये विहितः "बदरीसदृशाकारोहलः सूक्ष्मफलोभवेत् ।
घटयामिव सा घोण्टा कोलघोण्टेति योच्यते" सुभूतिः
"फलं कोलि कर्कन्धुघोण्टा घोण्टा च बदरीफला । सूगाल-
कोलिः कर्कन्धूः" रत्नकोषः "क्वाथ कोलदलितमका-
शनैः" । "यः कोलतां वहुलतामु विभ्रत्" माघः । कोल-
रुद्राय मुखे अष्टवर्गे उक्तः । तस्य मार्यं १२२५० टङ्कम्

**कोलक** पु० कुल-ण्वुल् । १अङ्कोटवृक्षे, राजनि० २कक्को-
लवृक्षे जटाधरः (कांकला)च ३गन्धद्रव्यभेदे, ४मरिचे,
५कक्कोले च न० अमरः ।

**कोलकन्द** पु० कोलस्य कन्दोऽस्य । महाकन्दभेदे राज-
नि० "कोलकन्दः कटूष्णश्च कृमिदोषविनाशनः । वमि-
च्छर्दिप्रशमनः विषदोषानिलापहः" राजनि०

**कोलकर्कटिका** स्त्री० कोलस्य कर्कटिका । मधुखर्जूरि-
कायां राजनि०

**कोलघोण्टा** स्त्री० । बदरीभेदे सुभूतिः । [द्रव्ये अमरः ।

**कोलदल** न० कोलं बदरीफलमिव दलमस्य । नखीनामगन्ध-

**कोलगिरि** पु० दक्षिणदिक्स्थे पर्वतभेदे "क्रतुञ्च कोलगि-
रिञ्चैव सुरभीपट्टनं तथा" भा० स० ३०अ० सहदेवदक्षि-
णदिग्विजये । कोलाचलादयोऽप्यत्र । कोलाचलकोल-
नगेति तस्य विशेषणं तत्पर्वतस्थितत्वात् [दृष्टं हारा०

**कोलनासिका** स्त्री० कोलस्य शूकरस्य नासिकेव । रक्तिशो-

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कप-
क्षिणि हारा० । [ राजनि०

**कोलमूल** न० कोलं बदरीफलमिव मूलमस्य । पिप्पलीमूले

**कोलम्बक** पु० कुल-अम्बच् कोलम्बः संज्ञायां कन् । त-
न्त्रीनिबद्धे अलाबूप्रभृतिसमुदाये वीणायाः अवयवे भरतः

**कोलवल्ली** स्त्री० कोलोवराह इव वल्ली तल्लोमतुल्यशुङ्गावत्त्वात् ।
गजपिप्पल्याम् राजनि० । २शूकरपादिकायां राजनि०

**कोलशिम्बि** स्त्री कोलपादाकारा शिम्बिरस्याः । (कालक-
शीति) ख्यातायां शूकरपादिकायां लतायाम् । वा ङीप् ।
"कोलशिम्बी समीरघ्नी गुरुष्णा कफवातकृत् । रुक्षा-
म्लवातकृद्वल्या रुचिकृत् बहुविड् गुरुः" इति भावप्र०

**कोला** स्त्री कुल-ज्वला० ण टाप् । १पिप्पल्याम् २चव्ये (चइ)
मेदि० ३कोलिवृक्षे शब्दरत्ना० । ४कोलापुरे च

**कोलाख** पु० ब० व० । देशभेदे शब्दरत्ना०

**कोलापुर** न० दक्षिणदेशस्थिते महालक्ष्म्याः स्थाने पुरभेदे

**कोलाविध्वंसिन्** त्रि० कोलां पुरभेदे विध्वंसितुं शलं शीलमस्य
विपूर्व्वेण धातोरन्यार्थपरत्वम् । पर्वतवासिनि म्लेच्छभेदे,
"एवं पालयतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलावि-
ध्वंसिनः ग्रामाः" इति देवीभागवतम् । "कोलाविध्वंसि-
नःक्षत्रिया" देवीभाग० । कोलाशब्दः कोलाहलवाचकतया
च कोलाहलेनैव राज्यविध्वंसं ये कुर्वन्ति । २तेषु च ।

**कोलाहल** पु० कुल-घञ् तमाहलति अच् । बहुविधे दूर-
गामिन्यव्यक्ते शब्दे अमरः "शंखं भेरीनिनादेन स्फुट-
कोलाहलेन वै" रामा०

कोलि स्त्री कुल–इन्। बदर्याम् शब्दच० वा ङीप् अमरः

कोलिसर्प: पु० सगरेण स्वेच्छतां प्रापिते क्षत्रियभेदे। उदा० शेरवशब्दे हरिवं० वाक्यमुक्तम् "कोलिसर्पामाहिषका-स्तास्ताः क्षत्रियजातयः। वृषलत्वं परिगता ब्राह्मणाना-मदर्शनात्" भा०अनु०३३अ० [राजा अण् कौलूत तन्नृपे

को(कौ)लूत पु० कुलूतशब्दार्थे हे० च० पाठान्तरम्। तस्य

कोल्या स्त्री कोलमर्हति यत्। पिप्पल्यां रत्नमा०

कोल्ल पु० भारतवर्षस्थे पर्वतभेदे "भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः" इत्युपक्रमे "ऋषभः कूटकः कोल्लः सह्यगिरिः" इत्यादि भाग० ५।१९।१० उक्तम्। स च गिरिः वृ०सं०कूर्मविभागे "अथ दक्षिणेन लङ्का" इत्युपक्रमे "कर्णाटकमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः" इति दक्षिणस्थत्वोक्तः। कोल्लगिर्यादयोऽप्यत्र। तत्र भवः तस्य राजा वा बा० ढक्। कौल्लगिरेय तत्भवे तन्नृपे च। "धर्षितः प्रययौ भूयो दक्षिणं सलिलार्णवम्। तत्रापि द्राविडैरान्ध्रै रौद्रै र्माहिषकैरपि। तथा कौल्लगिरेयैश्च युद्धमासीत् किरीटिनः" भा० आश्व० ८३अ०।

कोविद पु० कुङ् शब्दे–विच् कोर्वेदनं वेत्ति विद–क। १पण्डिते २विदुषि अमरः "समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम्" मनुः। "आत्मनेव गुणदोषकोविदः"। "श्रौतमार्गसुखगानकोविदैरिति च" माघः।

कोविदार पु० कुं भूमिं विदारयति–वि+दृ–अण् पृषो०। १रक्तकाञ्चनारे (रक्तकाञ्चन)। अमरः। "कोविदारकलिकाऽतिकोमला तक्रसिद्धतिलतैलपाचिता। हिङ्गुवासलवणालमिश्रिता वेसवारलुलिताऽतिशोभना" पाकशास्त्रम्। काञ्चनारशब्दे गुणा उक्ताः। "कशेरु कोविदारञ्च तालकन्दस्तथा विषम्"। श्राद्धे देयवचने वायुपु०। "श्वेतकाञ्चनसदृशः कोविदारः" इति श्राद्धविवेकः। २पारिजाते च। हरिवं० १२६अ० तद्व्युत्पत्तिर्दर्शिता यथा "कोऽयं दारयितेत्याहुरजानन्तोऽथ तज्जनाः। कोविदार इति ख्यातस्ततः स महातरुः। मन्दारः कोविदारश्च पारिजातश्च नामभिः। स वृक्षो ज्ञायते दिव्यो यस्यैतत् कुसुमोत्तमम्" पारिजातहरणे। "पारिजातान् कोविदारान् देवदारुद्रुमांस्तथा" भा०व० १५५अ०। अत्र पारिजाताद्भिन्नशब्देन निर्देशात् रक्तकाञ्चनपरता। स्वार्थे क। रक्तकाञ्चने "असनैः पिचुमर्दैश्च मन्दारैः कोविदारकैः" काशी०।

कोश(ष) पुंन० कुश(ष) शादि कुश(ष)–आधारादौ अच् कर्त्तरि अच् वा। १अण्डे शब्दर०। कृताकृतयोः २हेमरूप्ययोः अमरः। ३कुड्मले मुकुले ४खड्गपिधाने (खाप) ५शूके ६दिव्यभेदे अमरः। मूर्द्धन्यमध्यस्तु अभिधानभेदे ७शब्दपर्यायज्ञापकग्रन्थे मेदि० ८धनाद्यागारे ९पानपात्रे चषके १०शिम्बायां हेमच०। पनसादिमध्यस्थे (कोया) ख्याते ११पदार्थे भर०। शब्दान्तरपूर्वस्तु गोलकाकारे १२पदार्थे यथा "नेत्रकोशः" क्षीरस्वामी। तत्र खड्गपिधाने "वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान्"। "पृथुवर्षिककोशश्च" तस्य हेममये कोशे सुतप्ते पावकप्रभे" भा०वि० ४२अ०। बहुशः प्रयोगः। धनागारे "निःशेषविश्राणितकोशजातम्" मुकुले "मार्गाचणोद्यत्र विभिन्नकोशैः" "भिन्नाद्रिगैरिकतटा इव दन्तकोशाः" रघुः १२त्वगाद्यावरणे कोशपदावरकत्वात् "शरीरकोशाद्यत्तस्याः पार्वत्या निःसृताम्बिका। कौशिकीति समाख्याता ततो लोकेषु गीयते" देवीमा०। १३विधानमात्रे "सुजातयोः पङ्कजकोशयोः श्रियम्" रघुः। "कोशमङ्गुल्यग्रपर्वसु विदध्यात्" सुश्रु०। "कोशाख्यं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशः" भाग० ५।१६।६। कोश(ष)पानं दिव्यञ्च वीरमि० दर्शितो यथा "अथ कोश(ष)विधिः। तत्र "अतः परं प्रवक्ष्यामि कोश(ष)स्य विधिमुत्तमम्। शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम्। पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशङ्कस्याऽव्यसनिनः कोशपानं विधीयते। इत्यतः सद्भावस्य देवब्राह्मणसन्निधाविति"। सशङ्कस्य अस्त्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य कोशपानम्। उग्रदेवतास्नानोदकपानं देवतास्नानोदकस्य प्रसृतित्रयं पाययित्वाह विष्णुः "उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेदिदं मया न कृतमिति व्याहरन् देवताभिमुखः" इति। याज्ञवल्क्योऽपि "देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत्। संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति"। उग्रान् दुर्गादित्यादीन्। तेषामन्यतमं देवं प्राड्विवाकः सोपवासो गन्धपुष्पादिभिः सम्पूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदेशमानयेदित्यर्थः। नीत्वा च तत्र निधाय धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिं विधाय देवतायतनसमीपे मण्डलञ्च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा तमसत्येनेत्यादि-व्याहरणेऽनिष्टं संश्राव्य जलविधानोक्तेन "तोय! त्वं प्राणिनां प्राणः" इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात् प्र-

प्रसृतित्रयं पाययेत् । कोषश्च जलविधानोक्तेन "सत्यान्तविभागस्य" इत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । तथा च नारदः "तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयमिति" । पितामहोऽपि "आर्द्रवस्त्रं कारिणं कृत्वा पाययेत् प्रसृतित्रयम् । पूर्वोक्तेन विधानेन स्नानमालोचितं शुचिमिति" । कारिणं दिव्यकारिणं शोध्यमिति यावत् । पूर्वोक्तेन षड्दिव्यसाधारणतया प्रागुक्तेनेत्यर्थः । नारदोऽपि "अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु । एनश्च श्रावयित्वा तु पाययेत् प्रसृतित्रयमिति" । एनः पापम् । तच्च तत्प्रकाशाभिधानमुखेन तेनैव दर्शितम् । "स्वेच्छया यः पिबेत्कोशं कश्चिद् धितो नरः । न संदेहरो लोभात् पापी भवति दुर्मतिः । जानानः कालकारेण कोशम्पीत्वा विसंवदेत् । दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायते" इति । सशिरस्केऽभियोगे अभियोक्तुः आत्मनिष्टमप्याह सपक "प्रत्याकोशे हि यो दत्त्वा हितमिच्छेत चात्मनः । स विनाशो भवेत्तस्य तत्र कार्यं न विद्यतीति" । एवं यस्य कस्यचिद्देवस्य स्नानोदकमाहृत्य कोशानुष्ठाने प्राप्ते नियमार्थमाह पितामहः "भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् । दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेदिति" । उग्रदेवतायुधानि स्नापयित्वा तदुदकं महत्यपराधे पाययेत् । तथा च कात्यायनः "महत्यपराधे देवानां पाययित्वाऽऽयुधोदकम् । पात्योऽधिकारे चायुधो नियम्यः शुचिरन्दचेति" । पाव्यः पाययितव्यः । नियम्यो दण्ड्यः । आयुधपदञ्च [illegible] यथाह बृहस्पतिः "यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् । प्रक्षाल्य पाययेत्तस्माज्जलन्तु प्रसृतित्रयमिति" अत्र विशेषमाह पितामहः "दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम् । अन्येषामपि देवानां स्नापयेदायुधानि तु" इति" । कृतकोशपानस्य किं तत्कालमेव शुद्धिर्नेत्याह कात्यायनः "अथ दैवविसंवादात् त्रिसप्ताहात्तु दापयेत् । अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव चेति" । दैवविसंवादः दैविकव्याध्युद्भवः । दैविकव्याध्यादीनपि स दर्शयति "ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम् । नेत्रगण्डभगरोगश्च तथोन्मादः प्रजायते । शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति" । शुद्धिकालावधिं विष्णुराह "यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा । रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा । तमशुद्धं विजानीयात् तथा शुद्धं विपर्ययेत् । दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्मिको नृपः" इति । पितामहोऽपि "त्रिरात्रात् सप्तरात्राद्वा द्विसप्ताहादथापि वा । वैकृतं यस्य दृश्येत पापकृत् स तु मानवः । तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणं चैव तस्य विभावयेदिति" । तद्रोगवैकृतं कृतकोशपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न, किन्तु तद्देशसर्वस्य जनस्य मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः । अतएव बृहस्पतिः "सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते । पुत्रदारधनानाञ्च स शुद्धः स्यान्न संशयः" इति । याज्ञवल्क्योऽपि "अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः" इति । एतेषाञ्च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या । अवधेरूर्द्धन्तु रोगाद्युद्भवेऽपि न पराजयः तथा च नारदः "ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमादिति" । अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाभ्युपगमे चतुर्दशरात्रादूर्द्ध्वमपि वैकृतोत्पत्तौ पराजयः एवं त्रिरात्रसप्तरात्रात् प्रागपि वैकृतोत्पत्तौ पराजय इति सिद्धम्

१५ कोषशब्दश्चैषु वेदान्तमतसिद्धेषु अन्नमयादिषु पञ्चसु पदार्थेषु अन्नमयः प्राणमयः मनोमयः विज्ञानमयः आनन्दमयः इत्येते पञ्च पदार्थाः अनात्मकाः तेषामात्मतोऽविवेकार्थं वेदान्तिभिः कल्पिताः । तत्र पञ्चकोषविवृतिः विवेकचूडामणौ "देहोऽयमन्नभवनोऽन्नमयस्तु कोषश्चान्नेन जीवति विनश्यति तद्विहीनः । त्वक्चर्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः । पूर्वं जनेरपि मृतेरपि नायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैको जडश्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता । पाणिपादादिमान् देहो नात्मा व्यङ्गोऽपि जीवनात् । तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः । देहतद्धर्म्मतत्कर्म्मतदवस्थादिसाक्षिणः । स्वत एव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः । शल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः । त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।

विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम्। देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवोऽविदुषस्त्वहंधीः। विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि। अत्रात्मबुद्धिं त्यज मूढबुद्धे! त्वङ्मांसमेदोऽस्थिपुरीषराशौ। सर्व्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं परमां भजस्व। देहेन्द्रियादावसति भ्रमोदितां विद्वानहन्तां न जहाति यावत्। तावन्न तस्यास्ति विमुक्तिवार्त्ताप्यस्त्वेष वेदान्तनयान्तदर्शी। छायाशरीरे प्रतिबिम्बगात्रे यत् स्वप्नदेहे हृदि कल्पिताङ्गे। यथात्मबुद्धिस्तव नास्ति काचित् जीवच्छरीरे च तथैव मास्तु। देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम्। यतस्ततस्त्वं जहि तां प्रयत्नात् त्यक्ते तु चित्ते न पुनर्भवाशा। कर्म्मेन्द्रियैः पञ्चभिरञ्चितोऽयं प्राणो भवेत् प्राणमयस्तु कोषः। येनात्मवानन्नमयोऽन्नपूर्णात् प्रवर्त्ततेऽसौ सकलक्रियासु। नैवात्मापि प्राणमयो वायुविकारो गन्ता गन्ता वायुवदन्तर्बहिरेषः। यस्मात् किञ्चित् क्वापि न वेत्तीष्टमनिष्टं स्वं वान्यं वा किञ्चन नित्यं परतन्त्रः। ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात् कोषो ममाहमिति वस्तुविकल्पहेतुः। संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्व्वकोषमभिपूर्य्य विजृम्भते यः। पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्म्मनोमयाग्निर्दहति प्रपञ्चम्। न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः। तस्मिन् विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन् सकलं विजृम्भते। स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्व्वम्। तथैव जाग्रत्यपि नो विशेषस्तत्सर्व्वमेतन्मनसो विजृम्भणम्। सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित् सकलप्रसिद्धेः। अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति। वायुना नीयते मेघः पुनस्तेनैव नीयते। मनसा कल्प्यते बन्धो मोक्षस्तेनैव कल्प्यते। देहादिसर्व्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं पशुवद्गुणेन। वैरस्यमत्र विषवत् सुविधाय पश्चादेनं विमोचयति तन्मन एव बन्धात्। तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने। बन्धस्य हेतुर्म्मलिनं रजोगुणैर्म्मोक्षस्य शुद्धं विरजस्तमस्कम्। विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै। भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे। मनो नाम महाव्याघ्रो विषयारण्यभूमिषु। चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः। मनः प्रसूते विषयानशेषान् स्थूलात्मना सूक्ष्मतया च भोक्तुः। शरीरवर्णाश्रमजातिभेदान् गुणक्रियाहेतुफलानि नित्यम्। असङ्गचिद्रूपममुं विमोह्य देहेन्द्रियप्राणगुणैर्निबध्य। अहंममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु। अध्यासदोषात् पुरुषस्य संसृतिरध्यासबन्धस्त्वमुनैव कल्पितः। रजस्तमोदोषवतोऽविवेकिनो जन्मादिदुःखस्य निदानमेतत्। अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः। येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम्। तन्मनःशोधनं कार्य्यं प्रयत्नेन मुमुक्षुणा। विशुद्धे सति चैतस्मिन् मुक्तिः करफलायते। मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्व्वकर्म्म। सच्छ्रद्धया यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः। मनोमयो नापि भवेत् परात्मा ह्याद्यन्तवत्त्वात् परिणामिभावात्। दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः। बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्त्तृलक्षणः। विज्ञानमयकोषः स्यात् पुंसः संसारकारणम्। अनुव्रजच्चित्प्रतिबिम्बशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः। ज्ञानक्रियावानहमित्यजस्रं देहेन्द्रियादिष्वभिमन्यते भृशम्। अनादिकालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा। करोति कर्म्माण्यपि पूर्व्ववासनः पुण्यान्यपुण्यानि च तत्फलानि। भुङ्क्ते विचित्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्द्ध्वमेषः। अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थासुखदुःखभोगाः। देहादिनिष्ठाश्रमधर्म्मकर्म्मगुणाभिमानः सततं ममेति। विज्ञानकोषोऽयमतिप्रकाशः प्रकृष्टसान्निध्यवशात् परात्मनः। अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमात्। योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्स्वयं ज्योतिः। कूटस्थः सन्नात्मा कर्त्ता भोक्ता भवत्युपाधिस्थः। स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः। सर्व्वात्मकः सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव। उपाधिसम्बन्धवशात् परात्मा ह्युपाधिधर्म्माननुभाति तद्गुणः। अयोविकारानविकारिवह्निवत् सदैकरूपोऽपि परः स्वभावात्। शिष्य उवाच। भ्रमेणाप्यन्यथा वाऽस्तु जीवभावः परात्मनः। तदुपाधेरनादित्वान्नानादेर्नाश इष्यते। अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः। न निवर्त्तेत, तन्मोक्षः कथं? मे श्रीगुरो! वद।

कर्म्म बहुभिः कर्म्मभेदतः। भरयेत् वणिगोरक्षावार्त्तिजन्मप्याप्यनुष्ठितौ। संशयं लभते किञ्चित्तेन राजा विगर्ह्यते। धनिनः पूजयेद्भिर्वा पानाच्छादनभोजनैः। वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै। अङ्गमेतन्महद्राज्ये धनिनो नाम भारत!। ककुदं सर्वभूतानां धनस्थो नात्र संशयः। प्राज्ञः शूरो धनस्थश्च स्वामी धार्म्मिक एव च। तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति। तस्मात् सर्वेषु भूतेषु प्रीतिमान् भव पार्थिव!। सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय। एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लप्स्यसे। सत्यार्ज्जवपरो राजन्मित्रकोषबलान्वितः"। ६तदाधारे गृहे जटा० (खाजनाचर) "तस्मात् द्विजेभ्योदत्त्वार्थं सर्व्वं कोषे निवेशयेत्" मनुः। ७पेशे निघ०।

**कोश(ष)कार** पु० कोशं(षं)करोति कृ-अण् उप०स०। १खड्गाद्यावरणकारके स्त्रियां टाप् सि०कौ० तस्य पत्नी ङीप्। पुम्बोधकत्वे ङीप्। "नैर्ऋत्यै कोषकारीम्" यजु० ३०।१४। "खड्गावरणकोश(ष)कारिणीम् स्त्रियम्" वेददी०। २इक्षुभेदे शब्दरत्ना०। कोषं स्ववेष्टनं तन्तुभिः करोति कृ-अण्। ३कीटभेदे (गुटिपोका)। "संवेष्टमानं बहुभिः मोहात्तन्तुभिरात्मजैः। कोषकारवदात्मानं वेष्टयन्नावबुध्यते" भा०शा० २२१अ०।

**कोश(ष)कृत्** त्रि० कोषं खड्गाद्यावरणं वेष्टनं वा करोति कृ-क्विप् ६त०। १कोषकारार्थे। २इक्षुभेदे सुश्रुतः "वंशको दीर्घपत्रश्च नीलपोरोऽथ कोषकृत्" सुश्रु० इक्षुभेदोक्तौ

**कोश(ष)चञ्चु** पु० कोशः चञ्चौ यस्य। सारसपक्षिणि शब्दच०

**कोश(ष)पाल** पु० कोषं राज्ञामर्थसंचयं पालयति पालि-अण् उप०स०। कोषरक्षके तल्लक्षणं हेमा० परि०ख० लक्षणसमुच्चये। "धातुरत्नाजिनादीनां रत्नानां प्रविभागवित्। विज्ञाता फल्गुसाराणामसंहार्य्यः शुचिः सदा। निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः। आयद्वारेषु सर्वेषु धनाध्यक्षसमानराः। व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता। आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः। कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादर्थरक्षकः"। "निर्यान्तु कोश(ष)पालाश्च कुरवश्चाश्रमं प्रति" भा० आश्र० २२अ०। ण्वुल् कोश(ष)पालकोऽप्यत्र।

**कोश(ष)फल** न० कोषे(षे)फलमस्य। कक्कोले अमरः २महाकोषातक्याम् स्त्री राजनि० टाप्। ३नख्यां च स्त्री राजनि० गौरा० ङीष्।

**कोशयी** पु० कुश-वा० अयी। खड्गादिपत्रे। "कोशयीरिव वाजिनोऽदात्" ऋ० ६।४७।२२। छान्दसः प्रयोगः

**कोश(स)ला** स्त्री कुश(स) वृषा० कल नि० गुणः। १सरयूतटस्थायामयोध्यायां पुर्य्यां २तद्युक्ते देशे पु०ब०व०। "कुन्तलाः काशिकोश(स)लाः" भा० भी०८अ० जनपदकथने। पूर्व्वदिक्स्थदेशभेदेषु प्राच्यकोशलेषु पु०ब०व० ते च कोशलकारदमानवाः" बृ०सं० कूर्म्मविभागे पूर्व्वस्थास्तूक्ताः। क्वचिदेकत्वमपि। "कोश(स)लो नाम मुदितः स्फीतो जनपदो महान्। निविष्टः सरयूतीरे प्रभूतधनधान्यवान्" रामा० १।५।५। कोशलदेशो द्विविधः प्राच्योत्तरभेदात् तत्र अयोध्यायुक्तदेशस्योत्तरकोशलत्वम् "पितुरनन्तरमुत्तरकोशलान्" "तस्य सिद्धस्योत्तरकोश(स)लानाम्" "प्रियामथोत्तरकोशलेश्वरः" रघुः प्राच्यकोशलास्तु कोसलशब्दे वक्ष्यते। तद्देशस्य राजा अण्। कौश(स)ल्य कोशलदेशनृपे "कौ(शौ)सल्य इत्युत्तरको(शो)सलानाम्" रघुः स्त्रियां टाप् कौसल्या। "कौसल्यानन्दवर्द्धनोरामः" रामा०

**कोश(स)लात्मजा** स्त्री कोश(स)लाः पूर्व्वकोश(स)लदेशः लक्षणया तदधिपः तस्यात्मजा। प्राच्यकोशलाधिपनृपदुहितायाम् राममातरि शब्दर०

**कोशलिक** न० कुशलाय कर्म्मणे दीयते ठक् पृषो० ओत्वम्। निजकार्य्यसाधनार्थं राजादिकार्य्यकरेभ्यो दीयमाने उत्कोचे (घुस) हेम० कौशलिकमिति पाठान्तरं साधु

**कोश(ष)वत्** त्रि० कोषः(शः) अस्त्यस्य मतुप् मस्य वः। १कोश(ष)युक्ते। "धर्म्मात्मा कोषवांश्चापि देवराज इवापरः" भा० आनु० २अ०। स्त्रियां ङीप् कोश(ष)वती सा च २कोषातकीलतायां "दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत् कोषवतीरसेन" "शुकाख्याकोषवत्योश्च मूलं मदन एव च" "जीमूतकैः कोषवतीफलैश्च दन्तीद्रवन्तीत्रिवृताद्यैश्च" इति च सुश्रु०

**कोश(ष)वासिन्** पु० कोशे(षे) वसति वस-णिनि ७त०। कोषाभ्यन्तरस्थे जन्तुभेदे "कोषवासिनां पादिनां च तद्वत्" (अनुपानम्) सुश्रु० कोषस्थशब्दे विवृतिः

**कोश(ष)वृद्धि** पु० कोषस्य वृषणस्य वृद्धिर्येन। १कुरण्डक वृक्षे। ६त०। २अण्डकोषवृद्धौ रोगभेदे ३धनसम्पद्वृद्धौ च स्त्री

**कोश(ष)शायिका** स्त्री कोशे(षे) पिधानमध्ये शेते शी ण्वुल् ७त० अतइत्वम्। क्षुरिकायां जटाधरः

**कोश(ष)स्कृत्** पु० कोशं(षं)करोति कृ-क्विप् नि० सुट्। कोषकारके जन्तुभेदे (गुटिपोका) "त्यजेत् कोश(ष)स्कृदिव ह

मानः" भाग० ७।४।११ "कोश(ष)कृत् कोशकारः" श्रीधरः

**कोश(ष)स्थ** पु० कोशे(षे)तिष्ठति स्था–क ७त०। सुश्रुतोक्ते शङ्खादिके जन्तुभेदे। "आनूपवर्गस्तु पञ्चविधः" इत्युपक्रम्य कोशस्था इत्युद्दिश्य "शङ्ख शङ्खनख शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः पादिनश्च" इत्युक्त्वा कूर्मादीनां तन्मांसगुणा उक्ता यथा "शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः। शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः"

**कोशा(षा)गार** न० ६त०। धनागारे (खाजनाघर) "कोशागारमायुधागारमश्वशालां हस्तिशालाञ्च ग्रहः" भा०व० १६७ कोश(ष)स्थाद्देशोऽप्यत्र न० [कड़.] गुणभेदे हारा०

**कोशा(षा)ङ्क** न०कोशः(षः)इवाङ्कमस्य। वङ्कमूले इत्कटौ(बो-

**कोशा(षा)तक** पु० कोश(ष)मतति अत–क्वुन्। १कठवेदशाखाभेदे २पटोलयाम् घोषके (तरइ) (भीङा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष्। भा०व० इयं राजकोव्यत्वात् मङ्गल्याद्वा राजोपपदा निर्दिष्टा "धामार्गवः पीतपुष्पा जालिनी कृतवेधना। राजकोशातकी चेति तद्योक्ता राजिमत्फला। राजकोशातकी शीता मधुरा कफवातला। पित्तघ्नी दीपनी श्वासज्वरकाशकृमिप्रणुत्" "कोशातकीर्वाभ्रभवाऽप्यपञ्चपाशक्ते च युक्ताः सुपतेन संस्कृताः। सम्यज्जिताः सैन्धवहिङ्गुसाधिते तैलेऽतिरुच्या बहुपुष्टिदायकाः" तस्याः फलम् अण् हरीतक्या० लुप्। तत्फले स्त्री "कोशातकीपुष्पगुलुञ्छकान्तिभिः" नैषधः

**कोशा(षा)म्र** पु० को(क्षे)शे आम्र इव। १फलप्रधानवृक्षभेदे (कोशाम) "कोशाम्रः कुष्ठशोफास्रपित्तव्रणकफापहः। तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम्। पक्वं तु दीपनं रुच्यं लघूष्णं कफवातहृत्" भावप्र०। (केबांड) २फलवृक्षे राजवल्लभः

**कोशि(षि)न्** त्रि० कोश(ष)+अस्त्यर्थे इनि। १कोश(ष)युक्ते खामोपपदकोषी तु सुश्रुतोक्ते कर्णवन्धनजे रोगभेदे "वद्धमालस्तु यः कर्णः सङ्कर्षेणाभिवर्द्धते। आमकोषी समाख्यातः क्षिप्रमेव विशुष्यते"। २आम्रवृक्षे पु० शब्दमाला।

**कोशि(षि)ला** स्त्री कोश+अस्त्यर्थे पिच्छादित्वात् इलच्। मुद्गपर्ण्याम् राजनि०

**कोशी(षी)** स्त्री कुश–(कुष) अच् गौरा० ङीष्। १चर्मपादुकायाम् २धान्याद्यग्रभागे च (सुङ्गा) हेम०

**कोश्य(ष्य)** त्रि० कोशे हृदयकोशे(षे)भवः यत्। हृदयकोश मांसपिण्डे "प्लीहानि कोश्याभ्याम्" यजु० २५।८ "कोश्याभ्यां हृदयस्य मांसपिण्डाभ्याम्" वेददी०

**कोष** पु०न० १कुष–पचादि० अच्। १कोशशब्दार्थे कोशशब्दे विवृतिः। २ऋषिभेदे। "अयोग्र कोषा धावयन्तः शत० ब्रा० १०।५।५।८ "कोषानाम ऋषयः" भा०।

**कोषक** पु० कोष–स्वार्थे क। अण्डकोषे शब्दर०

**कोषला** स्त्री० कोष–अलच्। अयोध्यायां पुर्यां शब्दरत्ना०

**कोष्ठ** पु० कुष–थन्। १गृहमध्ये, २उदरमध्ये, ३धान्यादिस्थापने ४कुसूले च (कुठी) ५आत्मीये त्रि० मेदि० "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" ६सुश्रुतोक्ते आमाग्निपक्वमूत्ररुधिरस्थाने "प्रवाहिका शिरः शूलं कोष्ठशूलञ्च दारुणम्" "चले दोषे मृदौ कोष्ठे नेच्छेत्तात्र बलं न्वणाम्" सुश्रु० "भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते" भा० आश्व० १७ श्लो० "पतिं भार्याऽपितिष्ठेत ध्यायेत् कोष्ठगतं यथा" भा० भी० ६।।८। ५२। अकथहादिचक्रचतुःपार्श्वस्वरेखाचतुष्कान्विते ७स्थानभेदे अकथहशब्दे २८पृ० उदा०। ८पदे स्थानमात्रे "पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम्। षट्पञ्चविपणन् वेद पञ्चप्रकृतिस्त्रीधरम्। पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो!। तेजोऽवन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः। विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया" भाग० ४।२८।५१।५२।५३। कुसूले "अरत्नकोष्ठादुद्धीहीन्कराभिमिमानाहरति" कौषीतकिब्रा०

**कोष्ठागार** न० कोष्ठमगारमिव। धान्यधनादेःस्थापने गृहे (कुठी) "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः "कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः सुसंवृतम्। सदास्तु सत्सु संन्यस्तं धनधान्यपरोभव" भा० आ० ११८अ०

**कोष्ठागारिक** त्रि० कोष्ठागारे भवः तत्र नियुक्तोवा वा० ठन्। १कोष्ठागारभवे। "अन्वयं सवति रक्ते कोष्ठागारिकाकार मत्पिण्डेत्यादि" सुश्रु० २कोष्ठागारे नियुक्ते च।

**कोष्ठागारिन्** पु० कोष्ठरूपमगारमिशास्त्यस्य इनि। कीटभेदे "कोष्ठागारी क्रमिकरश्च मण्डलपुच्छकः" सुश्रुते प्राणनाशककीटोक्तौ

**कोष्ण** न० ईषदुष्णम् कोः कादेशः। १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः। "भुवं कोष्णेन पीनोष्मी मेध्येनाश्रुणा दपि" रघुः "एतेन मा यान्तिमुपैति जिह्वा कोष्णेन यष्टीमधुकान्वितेन" "गोयं सतोदं कोष्णेन सर्पिषा परिषेचयेत्" सुश्रु०

कौण्डिन्य पुंस्त्री कुण्डिनस्यर्षेः गोत्रापत्यं गर्गा० यञ् । कुण्डिन गोत्रापत्ये । "कौण्डिन्यात् कौण्डिन्यः" शत० ब्रा० १४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरकौण्डिनी-पुत्रात् पाराशरकौण्डिनीपुत्रः" शत० ब्रा० १४।८।३।२० वंशब्राह्मणे । कुण्डिनस्य युवापत्यम् गर्गा० यञि यञ-न्तात् फक् । कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री "कौण्डिन्यायनाच्च कौण्डिन्यायनः" शत० ब्रा० १४।५।५।२०। कौण्डिन्यस्य छात्रः कण्वा० अण् यलोपश्च । कौ-ण्डिन कौण्डिन्यस्य छात्रे । बहुषु यञोलुक् कुण्डिनादे-शश्च कुण्डिनः । स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीप्यलोपौ कौण्डिनी ।

कौण्डिन्यक पु० १सुश्रुतोक्ते शकृन्मूत्रविषे जन्तुभेदे विष-शब्दे विवृतिः । २तन्त्रोक्ते कीटभेदे च कीटशब्दे विवृतिः

कौण्डोपरथ पु० । आयुधजीविसंघे ततः स्वार्थे छ । कौण्डोपरथीय तदर्थे । "आङ्गिरसाः पर्वतास्तु कौण्डो-परथदाण्डकाः क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जा-लकिः" सि० कौ० । [ तस्कुतोभवे ।

कौतस्कुत त्रि० कुतः कुतोभवः अण् टिलोपः कस्का० । कु-

कौतस्त त्रि० कुतस्त्ये भवः अण् नि० वेदे यलोपः । कुत-स्त्यभवे । "कौतस्तावध्वर्यू परिमिजयध्व अनेनेजयध्व" पारा० ब्राह्म० ।

कौतुक न० कुतुकस्य भावः युवादि० अण् प्रज्ञा० स्वार्थे अण् वा । १कुतूहले अमरः । तत्र अद्भुतजिज्ञासातिशयः । "कौतुकागारमागात्" कुमा० । २मङ्गलार्थहस्तसूत्रे शाश्वतः "वैवाहिकैः कौतुकसंविधानैः" कुमा० । ३उत्-सवे ४अभिलाषे ५नर्म्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम० ।

कौतूहल न० कुतूहलस्य तद्वितस्य भावः कर्म्म वा युवा० अण् प्रज्ञादि० स्वार्थे अण् वा । कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा० आ० ६२अ० । "महत् कौतूहलं चेऽस्मि हरिश्चन्द्रकथां प्रति" मार्क० ८।१।

कौतूहल्य न० कुतूहल+ब्राह्मणा० स्वार्थे ष्यञ् । कुतूहले

कौतोमत पु० कुतोमतस्यापत्यम् अण् । ऋषिभेदे । "महद्धवाङ्गमौयेत्व इति कौतोमतेन" गोपथब्राह्मणम् ।

कौत्स पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण् । कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोऽभिहिङ्करोति" आश्व० श्रौ० सू० १।२।५। "कौत्साय दत्त्वा कन्यान्तु पंक्तिं नाम यशस्विनीम्" भा० आनु० १३७अ० । "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघुः । बहुषु तस्य लुक् । कुत्साः तदपत्येषु । कुत्सेन दृष्टं साम अण् । कुत्सर्षिदृष्टे विकृतिगाने गेये सामभेदे । तच्च साम देवाने १इम-२वहे १०गानम् । "कौत्सं भवति काण्वं भवति" श्रुतिः ।

कौथुम त्रि० कुथुमं वेदशाखाभेदमधीते वेद वा अण् । १कुथुम-शाखाध्यायिनि तद्वेत्तरि च । तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या । कठकौथुमाः इत्यादि । "अनुवादे चरणानाम्" पा० द्वन्द्वे एकवत् प्रत्ययात् कठकौथुमम् । "स्थेणोर्लुङि" वार्त्ति० स्थाधातोरिणधातोश्च लुङ्प्रयोग एव तस्य तथात्वं नियमितम् [ महा०जातिशब्दे विवृतिः

कौद्दालीक पुंस्त्री० रजक्यां तीवरात्जाते संकीर्णवर्णभेदे

कौद्रविक न० कोद्रवो निमित्तमस्य ठञ् । सौवर्चललवणे राजनि० [ धान्यभवनयोग्ये क्षेत्रे अमरः

कौद्रवीण न० कोद्रवस्य भवनं क्षेत्रं कोद्रव+खञ् । कोद्र-

कौद्रा(न्द्रा)यण पुंस्त्री० कौद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञ् कौद्रिः(न्द्रिः) इञन्तत्वात् युवापत्ये फक् । कुद्रि(न्द्रि) नामर्षेर्देशापत्ये ततः अरीह० चतुरर्थ्यां वुञ् । कौ-न्द्रायणक तत्सन्निकृष्टदेशादौ त्रि०

कौनख्य न० कुनखिनोभावः ष्यञ् टिलोपः । कुत्सितनख-रूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकजचिह्नम् "सु-वर्णचौरः कौनख्यम्" मनूक्तेः । [ निकटादौ

कौन्तायनि त्रि० कुन्ती+चतुरर्थ्यां कर्णा० फिञ् । कुन्ती-

कौन्तिक कुन्तः प्रहरणमस्य ठञ् । कुन्तास्त्रेण युद्धकारके अमरः । [षधौ अमरः

कौन्ती स्त्री कुन्तिषु देशेषु भवा अण् ङीप् । मकगन्धिन्यौ-

कौन्तेय पु० कुन्त्या अपत्यम् ढक् । १युधिष्ठिरादिषु त्रिषु । "कौन्तेय ! प्रतिसमीहि न मे कर्मफले स्पृहा" गीता । २अर्जुनवृक्षे राजनि० तस्य तत्तुल्यनामत्वात्तथात्वम् ।

कौप त्रि० कूपस्येदम् अण् । कूपसम्बन्धिनि जलादौ "क्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" इत्युक्ते तद्गुणा उक्ताः । "वसन्ते कौपं प्रास्रवणं वा पीतवेतम्" सुश्रुतोक्तकाले तस्य सेव्यता । स्त्रियां ङीप् ।

कौपीन न० कूपे पतनमर्हति खञ् अकार्य्ये नि० । १अकार्य्ये २पापे ३गुह्यप्रदेशे अमरः ४चीरे त्रिका० ५मेखलाबद्धे कक्षावस्त्रे (कपनी) मेदि० तद्वारणेन कूपे पतनात् तस्य तथात्वम् । अकार्य्यपदाच्छाद्यत्वात् ६पुरुषलिङ्गे शब्दचि०। तदावरकतया वस्त्रखण्डस्य कौपीनत्वम् । "कौपीनवन्तः खलु भाग्यवन्तः" पुरा० "कौपीनाच्छादनं यावत्तावदिच्छे-

क्रत्वर्थः, पुरुषाय यः, स पुरुषार्थः। जिज्ञासाशब्दोऽपि तत्र एव समधिगतः,—ज्ञातुमिच्छा जिज्ञासा—इति। तदेतत् प्रतिज्ञासूत्रम्,—"क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"—इति" ।(४।१।१) शवरभाष्यम्

"यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाऽविभक्तत्वात्" सू०२।

"अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थः इति लक्षणं वाच्यं, तथा हि लघीयसी प्रतिपत्तिः, उपदेशे गरीयसी तदुच्यते,—यस्मिन् प्रीतिः पुरुषस्य, (यस्मिन्कृते पदार्थे पुरुषस्य प्रीतिर्भवति) स पुरुषार्थः पदार्थः। कुतः?। तस्य लिप्सा अर्थेन च भवति, न शास्त्रेण, क्रत्वर्थो हि शास्त्रात् अवगम्यते, न अन्यथा, अविभक्तो हि पुरुषार्थः प्रीत्या, यो यः प्रीतिसाधनः स पुरुषार्थः। पुरुषार्थे लक्षिते तद्विपरीतः क्रत्वर्थः—इति क्रत्वर्थस्य लक्षणं सिद्धम् (१वर्णकम्)।

एवं वा सूत्रं वर्ण्यते,—दर्शपूर्णमासयोराम्नायते,—'अनतिदग्धं श्रपयति अनतिदग्धमेवैनं प्रजया पशुभिः करोति, इति तथा आहार्यपुरोडाशं पशुकामस्य वेदिं कुर्यात्, चतुस्रातुम् पशुकामस्य वेदिं कुर्यात्, गोदोहनेन पशुकामस्य प्रणयेत्'—इत्येवमादीनि। तत्र संशयः,—किम् एवञ्जातीयकाः क्रत्वर्थाः उत पुरुषार्थाः—इति। किं प्राप्तम्—क्रत्वर्थाः इति। कुतः? प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं च, तदुक्तं, (३।१।३सू०) 'द्रव्यगुणसंस्कारेषु बादरिः'—इति। तस्मात् क्रत्वर्थाः—एवं प्राप्ते ब्रूमः,—यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एव इति, प्रीतिस्तेभ्यो निर्वर्त्त्यते, तस्मात् एते पुरुषार्थाः—इति। 'ननु प्रत्यक्षः उपकारः क्रतोर्दृश्यते—इत्युक्तम्'। उच्यते—सत्यं दृश्यते न तु क्रतोरुपकाराय एभ्यः सङ्कीर्त्तितेभ्यः फलेभ्य एते श्रूयन्ते, न च स उपकरोति स शेषः, यस्तु यदर्थः श्रूयते, स तस्य शेषः—इत्युक्तं(३।१।२ सू०)'शेषः परार्थत्वात्'—इति। (२वर्णकम्)

एवं वा, द्रव्यार्जनम् उदाहरणम्, इह द्रव्यार्जनं तैस्तै र्नियमैः श्रूयते, ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना। तत्र सन्देहः,—किं क्रत्वर्थो द्रव्यपरिग्रहः उत पुरुषार्थ इति। किं प्राप्तम् क्रत्वर्थो नियमात्, यद्येष पुरुषार्थः स्यात्, नियमोऽनर्थको भवेत्, प्रत्यक्षेण एतत् अवगम्यते,—नियमादनियमार्जितं द्रव्यं पुरुषं प्रीणयति—इति, तस्मात् क्रत्वर्थः कामश्रुतिभिश्चास्य सहैकवाक्यता दृष्टा, इतरथा, अनुमेयेन फलवाक्येन सहैकवाक्यतां यायात्। लिङ्गं चापि भवति,—'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याहिताग्नेः सतोऽग्निर्गृहान् दहेत्, यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेत्—इत्येवमादि तद्धि द्रव्योपघाते चोद्यते यदि द्रव्यपरिग्रहः कर्मार्थः, तत्र एतदपि सति सम्बन्धे कर्मार्थम्—इत्युच्यते इतरथा असति सम्बन्धे कर्मार्थम्—इत्यनुमीयते फलं च अस्य कल्प्येत। तस्मात् यजतिश्रुतिगृहीतं द्रव्यार्जनं येन विना यागो न निर्वर्त्यते, स यागस्य श्रुत्या परिगृहीतः—इति गम्यते। तस्मात् क्रत्वर्थः—इति।

एवं प्राप्ते ब्रूमः,—पुरुषार्थः—इति। यस्मिन् कृते पदार्थे प्रीतिः पुरुषस्य भवति तस्मात् अस्य लिप्सा अर्थलक्षणा शरीरधारणार्था यस्य शरीरं ध्रियते अस्ति तस्यास्ति द्रव्यं शरीरिणो यागः श्रूयते तस्मात् विद्यमानद्रव्यस्य विनियोग उच्यते। न द्रव्यार्जनं श्रुतिगृहीतं विनापि हि द्रव्यार्जनवचनस्येन सद्रव्यस्य यागो निर्वर्त्त्यत एव, तस्मात् पुरुषार्थो द्रव्यपरिग्रहः।

अपि च, यदि शास्त्रात् कर्मार्थं द्रव्यार्जनं, तथानन्तरं विनियुज्येत तथार्जितम्, तत्र सर्वतन्त्रपरिलोपः स्यात्। अपि च उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः, तत्र एतन्नोपपद्यते,—अपि वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वा अतिपातयेत्'—इति यस्य हि त प्रयोगकालाद्बहिरेतदङ्गं तदनुपकारकं स्यात्। न च आधानवत् भवितुमर्हति, तत्र हि वचनं—वसन्तेऽग्निमादधीत—इति न चैतत् तद्वत्। अथ यदुक्तं—नियमवचनम् अनर्थकं पुरुषार्थे द्रव्यपरिग्रहे सति-इति। उच्यते, नैतावता पुरुषार्थता व्यावर्त्यते प्रत्यक्षा हि सा, त्वया च परोक्षया युक्त्या व्यपदिश्यते, न च परोक्षं प्रत्यक्षस्य बाधकं भवति, तस्मात् नियमवचनात् कामम् अदृष्टं कल्प्येत न तु दृष्टहानम् तस्मात् यत् पुरुषस्य प्रयोजनं प्रीतिः तदर्थं धनस्य अर्जनम्-इत्येवं च सति व्रीहिणा यागः कर्त्तव्यः प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा न अत्र कश्चित् विशेषः प्रीत्यर्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव, कर्मार्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव। तस्मात् न प्रयोगचोदनागृहीतं द्रव्यार्जनम्। अथ यदुक्तम्-अनुमेयेनाप्रकृतेन वा शब्देन युज्यते नियमस्य एकवाक्यता, प्रत्यक्षो

धातुके वा श्यन् इडमन्तत्वात् कृति ङिति ञिति णिति परे न वृद्धिः। कर्त्तरि क्राम्यति क्रामति। क्राम्यतु-क्रामतु। क्राम्यतु क्रामतु। अक्राम्यत् अक्रामत्। अक्रमीत्। चक्राम। क्रमिता क्रम्यात् क्रमिष्यति। अक्रमिष्यत्। कर्म्मणि क्रम्यते। अक्रमि। णिचि इत्त्व मुक्तौ वा वृद्धिः। क्रमयति-ते। अचिक्रमत्-त। कर्म्मणि क्रम्यते। अक्र(क्रा)मि। क्र(क्रा)मिताशे क्रमयिताशे। क्रतुः नमणीयम्। क्रमितव्यम् क्रम्यम् क्रमणम्। क्रमकः। क्रमी। क्रमिता। क्रान्तिः। क्रमितुम्। उदित् क्रमित्वा क्रान्त्वा। संक्रम्य। क्रमं क्रमम्। चिण्णमुलि वा वृद्धिः क्र(क्रा)मं क्र(क्रा)मम्। क्राम्यन् क्रामन्। क्रमिष्यन् क्रमिष्यमाणः। शवन्तस्य क्रमयिता क्रमितः। क्रमयितुम्। क्रमयितव्यम्। क्रियाणि युच् क्रमणा। क्रम-यन् मानः क्रमयिष्यन्। कर्म्मणि क्रम्यमाणः। क्र(क्रा)मिष्यमाणः। क्रमयिष्यमाणः। सनि चिक्रमिषति आत्मने०चिक्रंसते। "समुद्रात् पश्चिमे पूर्वं दक्षिणादपि चोत्तरा। क्राम्यन्नुदिते सूर्य्ये याली व्यपगतक्लमः" रामा०कि०८० अ०। "देवा इमांल्लोकानक्रमन्त" शत० ब्रा०६।७।२।१० "विष्णुस्त्वा क्रमताम्" यजु० ११६। "पादेनाक्रम्यारोहतु" वेददी०। "हत्वा रक्षांसि लवितुमक्रमीद्धारतिः पुनः" भट्टिः "इतोऽद्विजापत्यैरभिपूज्यमानः चक्राम पत्नीव दितेः सुतेषु" भा० आ० १६२ अ०। "क्रमं बबन्ध क्रमितुं सकोपः" "क्रान्तः क्रान्त्वा स्थितं कपित्" भट्टिः। परोपक्रमवत् अप्रतिबन्धादौ आत्म०। "न तत्र क्रमते मृत्युर्न जरा न च पावकः" भा० आनु० ८२ अ०। "हरेर्यदक्रामि पदैककेन खम्" नैषधे अक्रामीत्यसाधु। स्वार्थेणिचि अचक्रमत् साधु इत्यन्ये। निष्ठायां नेट् क्रान्त इत्यादि कौटिल्ये यङ् चंक्रम्यते नागः। "सोऽपि चंक्रम्यमाणः कूपे पपात" भा० आ० ७०० श्लो०।

अति+अतिक्रमणे उल्लङ्घने सक०। "स नदीः पर्वतांश्चापि सलिलानि सरांसि च। अचिरेणातिचक्राम खेचरः खे चरन्निव" भा०आ० ४६५२ श्लो०। "अत्यक्रामन्निमान् मासान् मन्यन्ध्वं परिचिन्तयन्" रामा० युद्ध० ८८ अ०।

अभि+अति+आभिमुख्येनातिक्रमणे सक०। "न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन च" भा० स० १०५१ श्लो०।

वि+अति+वैपरीत्येन क्रमणे। "ततः पुरमासाद्य व्यतिचक्राम तं जनम्" रामा० बाल० ७० अ०। विशेषेण अतिक्रमे च। "कालोऽनातिशतामीनामर्णीणां पुण्यकर्म्मणाम्। देशानाक्य व्यतिक्रम्य प्रह्वोऽसमवाप ह" रामा० आर०९ अ०। "एवं हि सुमहान् कालोऽत्यन्तक्रामत तस्य वै" भा०अनु०४५५ श्लो०। "विवाहे च व्यतिक्रमः" उद्वा०त०

सम्+अति+सम्यगतिक्रमणे। "अवलोकयन्नेव समतिक्रम्य पर्वतम्" भा० व० २२१ श्लो०

अधि+आधिक्येन क्रमणे

अनु+परिपाट्या क्रमणे। "अथ रतिर्भक्तिरनुक्रमिष्यति" भा०३।२५।२५। "महर्षिभिरनुक्रान्तं धर्म्मं पन्थानमास्थितः" रामा०उ०४७अ०। "परिपाटी त्वनुक्रमः" अमरः।

अप+अपसरणे अक० "हित्वा तेनापचक्राम चापि" भा० आ० ११७७श्लो०।

अभि+आभिमुख्येन गमने सक० "तमभिक्रम्य सर्वेऽद्य वयं वास्यामहे वसु" भा० व० ८२ अ०। "प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः" भा०अनु०६०४७० "आरम्भे च "नेहाभिक्रमनाशोऽस्ति" गीता अभिक्रमः आरम्भनाशः।

अव+अपसरणे हिंसने च सक०। "अवक्रामन्तः प्रपदैरभिप्लान्" ऋ० ६।७५।७। "अपक्रामन्तः हिंसन्तः" भा०।

अनु+अव+अनुगमने प्रवेशे च सक०। "एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" शत० ब्रा० १४।७।२।१। "मृतिकाले हृदयस्थां बुद्धिमेवान्वागच्छति" भा०।

आ+बलपूर्वकाक्रन्दने। "आक्रामन्नागभवने तदा नागकुमारकान्" भा०आ० ५०१८श्लो०। "आरोहणे च आक्रान्तिमग्नानितपादपीठम्" कुमा०। उद्गमे अक०तत्र दीप्राप्तिलक्षोद्गमे आत्म०। "भानुरल्पतरं यस्यां यावदाक्रमते जलम्। तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते" प्रा०त० दानधर्म्मः। एवं सूर्य्य आक्रमते इत्यादि। अन्यत्र आक्रामति। अत्रादिपूर्वकस्याङस्तु तत्तदर्थविशिष्टारोहणादिद्योतकता। "समभेव समाक्रान्तं द्वयं द्विरदगामिना" रघुः

उत्+उदये अक०। "यत्रस्य शीर्षाच्छिदस्य उदक्रामत्" शत० ब्रा० १४।१।२।१२। ऊर्द्ध्वक्रमणे च "न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते" श्रुतिः। "कश्चिदुत्क्रान्ते सर्व्वमिदमुत्क्रान्तम्" श्रुतिः। "तान् हत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान्" भा०आ० ३२अ०। "विग्रहच्छन्दा उत्क्रमणे भवन्ति" छा० उप०। उल्लङ्घने सक०। उत्क्रमः।—वैपरीत्येन क्रमणे अक० "क्रमात्क्रमान्नमेघबालादिमानम्" ज्यो० त०

अनु+उद्+उत्क्रमणानन्तरणे सक०। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" शत० ब्रा० ७।२।२।

वि+उद्+वैपरीत्येन विशेषेण च लङ्घने सक०ऊर्द्ध्वं गतौ अक०

"इन्द्रियाणि वीर्य्याणि व्युदक्रामन्" शत०ब्रा०१४।७।१।१८।
"व्युत्क्रान्तरजसोऽमलाः" भा० अनु० १४१८श्लो०।
"व्युत्क्रमात् प्रेतभावानि योनीनां धर्म्मसोहितः" ति० त० देवलः।

उप+आरम्भे सक० आत्म०। उपक्रमते आरभते इत्यर्थः। "उपक्रमस्व पुरुहूपमासर बाजम्" ऋ० ८।११।१४। "उपक्रमोपसंहारौ" वेदान्तभा०। "योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे। तिथिर्य्याऽभिमता सा तु कार्य्या नोप-क्रमोज्झिता" दीपि०। गत्यर्थभावद्योतकत्वे नात्मनेप-दम् "भागधेयमुपचक्राम भगवांस्तस्य कौशिकः" भा० स० १८अ०। अप्रतिबन्धे उत्साहे वृत्तौ च आत्म०। अस्य उपक्रमते बुद्धिः न प्रतिहन्यते इत्यर्थः अध्ययनाय उप-क्रमते उत्सहते। उपक्रमन्ते शास्त्राणि स्फीतानि भवन्ति इत्यर्थः। एषां परात्वेऽकर्त्तरि च एतदर्थेषु अकर्म्मकता आत्मनेपदम्। अन्योपसर्गपूर्वकत्वे तत्तदर्थेषु, परोपपूर्वस्याद्यर्थान्तरे च न तङ्। उपसर्गराहित्ये अस्यार्थेऽपि वा तङ्। क्रामति क्रमते इति। आङि तु ज्योतिरुद्गमने आत्मनेपदमिति भेदः। विपूर्वकस्य विशेषो वक्ष्यते समादिपूर्वकोपसर्गस्य तत्तदर्थविशिष्टारम्भद्योतकता। यज्ञं समुपचक्रमे।

नि+नितरां क्रमणे अत्यन्तक्रमणे। "कर्म्मन् वाजी न्यक्रमीत्" ऋ० ८।२६।१। "न्यक्रमीत् नितरामक्रमीत्" भा०

अनु+नि+अनुक्रमणे। "सप्तपदान्यनुनिक्रामति" शत० ब्रा० ७।२।१।१।

निर्(स्)+निःसरणे "जितोऽस्मा मर्त्त्यं पाण्डुर्निरक्रामत् पुरात् प्रभो!" भा०आ०११२अ०। अस्य कचिदात्मनेपदित्वम् "वाताद्दे! निष्क्रमस्वेति पुनः पुनरुवाच ह" भा०उ० ८८अ०।

अभि+निर्(स्)+आभिमुख्येन निःसरणे। "अभिनिष्क्रामति द्वारम्" पा०। "स तूर्णमभिनिष्क्रामति शौघ्रं कान्यकुब्जद्वारम्" सि० कौ० "प्रविश्य चाभिनिष्क्रान्तं सुग्रीवं वानरर्षभाः" रामा० किष्कि० ३५अ०

वि+निर्(स्)+विशेषेण निःसरणे "यथा प्रविश्यान्तरमन्तकस्य को वै मनुष्योऽपि विनिष्क्रमेत" भा०व०१०२७३अ०।

परा+बलेनाक्रमणे आत्म० सक०। "यत्र तपः पराक्रम्य व्रतं धारयन्युत्तरम्" अथ० १०।७।११। अप्रतिबन्धादौ उपोपसर्गवत्। तत्रोत्साहे "पाणीयार्थे पराक्रान्ता यत्र ते भ्रातरोऽनघाः" भा० महा० ८१श्लो०। पराक्रमः।

परि+भ्रमणे सक०। "परिक्रामति संसारे चक्रवत् बहुवेदनः" भा० व० २०८अ०। परितोगमने सक०। "परिक्रामति यः सर्वांल्लोकान् संत्रासयन् बलात्" भा० ८६।१४।७०।

सम्+परि+सम्यक् वेष्टनाकारेण परितो गमने सक० "बहूनि संपरिक्रम्य तीर्थान्यायतनानि च" भा० आ० १२श्लो० पर्य्यटने अक०

प्र+आरम्भे आत्म०। "प्रचक्रमे वक्तुमनुज्झितक्रमः" रघुः। अनारम्भे तु न आत्म० "विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रामन्ति" भाग०५.२२। १७श्लो०।

प्रति+प्रतिरूपक्रमे सक० "यं स्तुवेष प्रतिक्रामति" शत० ब्रा० २।४।४।८। प्रतिकूलक्रमणे निवृत्तौ अक०। "भद्रे! प्रतिक्राम नियच्छ वाचम्" भा० व० २६८अ०।

वि+पादविहरणे अक०आत्म०। "साधु विक्रमते वाजी" सि०कौ० "त्रेधा विष्णुरुरुगायो विचक्रमे" तैत्ति०। पादाकरणके तु न तङ्। वाजिना विक्रामति। "ते विक्रमन्तः स्फुरता हठेन विक्षिप्यमाणा धनुषा नरेन्द्राः" भा० आ० १८अ०। इत्यत्र न तङ् "ततपनं महादेवः पोत्य गात्रैः सुपोडितम्। तेजसा व्यक्रमद्दोषात् चेतसस्य विमोहयन्" भा० व० ३९अ०। दीर्घाभाव आर्षः। शौर्य्यातिशयेन पराक्रमे अक०। "ते यूयं त्वरिताः सर्वे विक्रमध्वं प्लवङ्गमाः" रामा० किष्कि० ५८अ०। तङ् आर्षः। एवं "तान् विक्रमस्व जेतुम्" भा०स० १८६श्लो० तङ् आर्षः। "वेः पादविहरणे" पा० योगविभागाद्वा क्वचिदन्यत्रापि तङ् इत्यन्ये।

अधि+वि+आधिक्येन पराक्रमे "यजमानायाधिविक्रमस्व" कात्या० २२।२।११

निर्+वि+विशेषेण निःसरणे। "भित्त्वा कुक्षिं निर्विचक्राम विप्रः" भा० आ० ७६अ०

सम्+एकत्रस्थितस्यान्यत्र संचरणे सक० "कार्मुकं तु परित्यज्य झषं (मकरम्) संक्रमते रविः" ति०त०भवि० पु०। "रविसंक्रान्तिरेव च" तत्रैव। "जीवः संक्रमतेऽन्यत्र कर्म्मबन्धनिबन्धनः" भा०व०२०८अ०। तङ् आर्षः। "औपसर्गिकरोगाः संक्रामन्ति नरान्नरम्" सुश्रु०। "संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि" पराशरः "कालोऽप्ययं संक्रमितुं द्वितीयम्" रघुः। सम्यक् क्रमणे सक० "संक्रामन्तौ बहून् देशान् शैलाश्चैव वनाहनम्" रामा० आर० ७३अ०।

अनु+सम्+आनुकूल्येन आनुपूर्व्येण च संक्रमणे। "इष्टापूर्त्तमनुसंक्राम विद्वन्!" अथ० १८।२।५७।

उप+सम्+सामीप्येन संक्रमणे सक० "सर्वशेषत्वे हि विधि-

निषेधो निषेध्यमुपसंक्रामतः सति विशेष्ये बाधे" दीधितौ न्यायवाक्यम् "एतमन्नमयात्मानमुपसंक्रामति" तैत्ति॰

प्रति+सम्+प्रतिकूलसङ्क्रमणे निवृत्तौ "तावच्च संसृतिरसौ प्रतिसंक्रमेत" भाग॰ ३।८।१०श्लो॰। "प्रतिसंक्रामयद्विश्वम्" ३।२४।३८श्लो॰ प्रतिसंक्रामयत् निवर्त्तयत्।

**क्रम** पु॰ क्रम–भावकरणादौ यथायथं घञ् मान्तत्वादवृद्धिः। १पादविक्षेपे २पादे हेमच॰ ३अर्थानां नैयत्येन ३पूर्वापरावस्थाने। ४कल्पे अनुष्ठाने अमरः ५सामर्थ्ये (सामर्थ्यहेतुकव्यापारे) ६आक्रमणे च मेदि॰। ७वेदसंहितानुसारिपाठतद्विलोमरूपे पाठभेदे। ऋग्वेदशब्दे तत्स्वरूपभेदादिकं १४११पृ॰चरणव्यूहवाक्यतद्भाष्याभ्यां दर्शितम्। ८विष्णौ "ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः" विष्णुस॰। 'क्रमणात् प्राणरूपेण गमनात्। क्रमणहेतुतया। (प्राणिगमनसाधनपादविन्यासहेतुभूतस्थ्यादिप्रकाशनाधिष्ठातृसूर्यादिदेवरूपतया) वा क्रमः" भा॰ ९परिपाट्यां यथोचितसन्निवेशे मेदि॰। १०शेषशेषिभावे अधिकृताधिकारे वा सत्येव वैदिककर्म्मणोरनुष्ठाने पौर्वापर्य्यरूपक्रम अङ्गमिति शा॰भा॰स्थितम् तन्नियामकश्च श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यभेदात् षड्विधः तस्य च कर्मविशेषे विशेषेण व्याकृता तद्वृत्तिः मीमांसा ५अ॰।१पा॰भाष्ययोर्दर्शिता यथा "श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्" जै॰ १सू॰

"चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणमुक्तं, तच्च विचारितव्यम्, इह इदानीं क्रमनियमलक्षणम् उच्यते, तत् श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यैर्वक्ष्यते, श्रुत्यादीनाम् च बलाबलम्। आदितस्तु श्रुतिक्रमश्चिन्त्यते,–किं यथाश्रुति पदार्थानाम् क्रमश्चास्थेयः, उत अनियमेन?–इति। किं प्राप्तम्?–एकत्वात् कर्त्तुः, अनेकत्वाच्च पदार्थानाम्, अवश्यं प्राप्ते क्रमे लाघवात् प्रयोग आशुभावाच्च अनियमः–इत्येवं प्राप्ते ब्रूमः

"श्रुतिलक्षणम् आनुपूर्व्यं तत्प्रमाणत्वात्–इति श्रुतिर्वचनम् अक्षराणां, तन्निमित्तं यस्य क्रमस्य, स साधु क्रमः। श्रुतिप्रमाणका हि वैदिका अर्थाः नैषामन्यत् प्रमाणमस्ति (१।१।२सू॰)–इत्युक्तम्। किम् इह उदाहरणम्?। सत्रे दीक्षाक्रमं विधत्ते, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्द्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारम् उद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, अग्नीधं ब्रह्मणः, प्रतिहर्त्तारम् उद्गातुः, अच्छावाकं होतुः, ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वा आचार्यप्रेषितः–इति। अनियमेन क्रमः कर्त्तव्यो, यथा पूर्वः पक्षः, यथा तर्हि सिद्धान्तः, एष एव क्रमः कर्त्तव्यः–इति।

तत्र आह, अन्याय्यं श्रुतिवचनम्–इति। उच्यते,–किमर्थं न साधुः? न न साधुः–इति ब्रूमः। न्याय्यं तर्हि न ब्रूमः,–न साधुः क्रमः–इति, किं तर्हि?–उक्तस्य पुनर्वचनमन्याय्यम्–इति। उच्यते,–साधोर्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव, असाधोस्तु सकृदप्यन्याय्यम्। आह सकृद्वचनेन ज्ञातस्य पुनर्वचने न प्रयोजनम् इति, उच्यते भवति अविस्मरणमपि प्रयोजनम् इत्युक्तम्। इतिकारेण तत् कार्यम्,–इति चेत्। सूत्रकारस्यायं विशेषो इतिकारेण। (१म वर्णकम्)

अथवा अर्थान्तरमेव इदम् तत्र हि अन्य एव संशयो विचारो निर्णयश्च,–श्रुतिप्रमाणकोधर्मः अन्यप्रमाणकोवा? इति संशयः। प्रत्यक्षादीनाम् अधिगम्यनिमित्तत्वात् न तत्प्रमाणकः, अतीन्द्रियत्वाच्चोदनालक्षणः–इति विचारः। चोदनालक्षण एव–इति निर्णयः। इह तु सिद्धे तत्प्रमाणत्वे व्यवहारक्रमस्य साधुत्वावधारणम्(२य वर्णकम्)

अथ वा श्रुतिविचारोऽयं–किं पदार्थाः कर्त्तव्याः? इति विधानम्? किं वा क्रमो विधीयते?–इति। अनेकार्थविधानानुपपत्तेः क्रमे अनुवादः, पदार्थानां विधिः, अवदानवाक्येष्विव पदार्थविधानं श्रुत्वा, क्रमविधानं वाक्येन, तस्मात् न क्रमो विधीयते–इति पूर्वः पक्षः। ननु अवदानवाक्येषु क्रमो विधीयते सत्यं विधीयते, पाठेन, न श्रुत्या, ये अर्त्विजस्ते यजमानाः "इति तु दीक्षायाः प्राप्तत्वात् क्रमविधानार्था श्रुतिः–इति सिद्धान्तः। तस्मात् अनुनरक्रम्–इति" (३य वर्णकम्)। भाष्यम्

"अर्थाच्च" २सू॰

"किम् एष एव उत्सर्गः? उत न, सर्वत्र श्रुतिक्रमेणैव भवितुमर्हति–इति उक्तं हि,–"चोदनालक्षणोऽर्थोधर्मः"

एवं प्राप्ते ब्रूमः–अर्थाच्च (सामर्थ्याच्च) क्रमो विधीयते–इति, गुणभूतोऽपि पदार्थानां क्रमो भवति, यश्च यस्य निर्वर्त्त्यमानस्य उपकरोति, स तस्य गुणभूतः, यस्य चाभावे पदार्थः एव न सम्पद्यते, न स गुणभूतः, किमपि

तेन, न वैगुण्यम् । एवं प्रवृत्तक्रमस्य मुख्यभावो यत्र, तत्र अर्थेन क्रमोऽनुमन्तव्यः । यथा "जाते वरं ददाति, जातमञ्जलिना गृह्णाति जातमभिमर्शति"-इति अर्थात् पूर्वमभिमर्शितव्यम् ततः अञ्जलिना गृहीतव्यः, ततो वरोद्देशः-इति, तथा विमोकः पूर्वमाम्नातः, पश्चाद्योगः, अर्थात् विपरीतः कार्यः । याज्यानुवाक्ये तु विपर्ययेण आम्नाते, विपर्ययेण कर्त्तव्ये, न अत्र पाठक्रमोऽनीयते, ततो देवतं प्रकाशयन्त्योऽनुवाक्या, प्रदानार्था याज्या, "अग्निहोत्रम् जुहोति"-इति पूर्वमाम्नातम्, "ओदनं पचति"-इति पश्चात्, असम्भवात् पूर्वमोदनः पक्तव्यः । प्रैषप्रार्थौ तु विपर्ययेण आम्नातौ, तौ च विपर्ययेण कर्त्तव्यौ" भाष्यम्

"अनियमोऽन्यत्र" ३ सू०

अन्यस्मिन् विषये क्रमस्य नियमो नास्ति, यथा दर्शपूर्णमासयोर्विहितानां प्रयाजानुमन्त्रणादीनाम् नानाशाखान्तरसमाम्नातानाम् "वसन्तमृतूनाम् प्रीणामि"-इत्येवमादीनाम्, "एको मम,-इत्येवमादीनाञ्च" भा०

"क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्" ४ सू०

"दर्शपूर्णमासयोराम्नातम्-'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति"-इति । तत्र संशयः-किम् अनियतेनैव क्रमेण एषाम् अनुष्ठानम् ? उत यः पाठक्रमः स एव नियम्येत ?-इति । किं प्राप्तम् ?-नियमकारिणः शास्त्रस्याभावात् अनियमः-इति । एवं प्राप्ते ब्रूमः-क्रमेण, एव नियम्येत एकस्मिन् क्रतौ-इति । कुतः ? । तद्गुणत्वात्, तद्गुणत्वं हि गम्यते पदार्थानाम्, यथा, स्नायात् अनुलिम्पेत्, भुञ्जीत-इति च क्रमेण अनुष्ठानम् अवगम्यते, वाक्यात् पदार्थानाम्, यथा चाहशर्थेषु उपदिश्यमानेषु, कश्चित् ब्रूयात्,-'देवाय धूपो देयः पुष्पाण्यवकारितव्यानि चन्दनेनानुलेप्तव्यः उपहारोऽस्मै उपहर्त्तव्यः' एवं कृते देवस्तुष्यति,-इति, तमन्यः प्रतिब्रूते, नैतदेवं, न प्रथमं धूपो दातव्यः प्रथमं पुष्पाणि अवकारितव्यानि-इति, एवं मन्यते-धूपदानस्य प्राथम्यम् अनेन उक्तम्-इति । तस्मात् वाचनिक एषाम् एष क्रमः-इति" भा०

"अशाब्द इति चेत्, स्याद्वाक्यशब्दत्वात् । ५ सू०

इति चेत्, पश्यसि, "अथैवं मन्यसे अशाब्दः एष क्रमः । कथं ? पदार्थैकदेशो वाक्यार्थः पदेभ्यश्च पदार्था एव अवगम्यन्ते न क्रमः । स्यात् एतदेवं, यदि पदार्थानाम् समूहस्य अवगमं प्रत्यायकम् अर्थस्य स्यात्, न तु समुदायः प्रत्यायकः,-इत्युक्तं "वृद्धानां क्रियार्थेन समाम्नायः" (१।१।२५ सू०) इत्यत्र । तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एव क्रमोऽवगम्यते । एवं चापर्यालोचितमप्युच्यते, इतरथा नापि विप्रलपन्त इव प्रतीयन्त एव । दर्शयन्ति च,-"हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः,-इति । यदि नियामकः पाठक्रमः ततो न विधातव्यमेतत्, नियामके हि पाठक्रमे पाठक्रमात् एव प्राप्नुयात्" भा०

"अर्थकृते वानुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धः, तस्मात्स्वशब्दमुच्यते" ६ सू०

"एकस्मिन् क्रतौ विकल्पात् कार्तुः, अनेकस्मिन् पदार्थेऽर्थकृतत्वात् क्रमस्य, तत्र एष एव क्रमो नियम्येतानुमानेन । कुतः ? परार्थत्वात् वेदस्य, परार्थो हि वेदो यद्यत् अनेन शक्यते कर्त्तुम्, तस्मै-तस्मै प्रयोजनाय एष समाम्नायते, शक्यते च अनेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्मात् वेदः पदार्थांश्च विधातुम् उपादेयः, क्रियाकाले च प्रतिपत्तुम्, न शक्यते विशेषः-विधातुमयं समाम्नायते, न प्रतिपत्तुम्-इति, अवश्यमाने विशेषे उभयार्थम् उपादीयते-इति गम्यते । प्रतिपत्तुं च अनेन क्रमेण शक्यते, नान्येन, अत एव च कृत्वा पाठक्रमापचारे, विनष्ट-इत्युच्यते, इतरथा हि यत् यस्य प्रयोजनं, तस्मिन् निर्वर्त्यमाने एव किं नष्टं स्यात्, अदृष्टं कल्प्येत, तच्च अन्याय्यं दृष्टे सति । तस्मात् अशब्दः क्रमः-य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि" भा०

"तथा चान्यार्थदर्शनम्" ७सू०

"एवं च अन्यार्थं दर्शयति,-"अव्यत्यस्तव्या उपदधाति" । "व्यस्तं योऽद्भिर्नं शंसति" । "आग्निमो हस्तौ स्वदते सं तृतीयं जुहोति"-इति, यदि अनियमेन उपधानं शंसनं च, अव्यत्यस्तवचनम् अनर्थकं स्यात्, न हि कथञ्चित् अव्यासः-इति । तथा आग्नेयस्य तृतीयस्य होमानुवादो न अवकल्पेत, यदि पाठक्रमेण नियमः-इति । तथा- 'अभिचरता प्रतिलोमं होतव्यम्' प्राणानेव अस्य प्रतीचः प्रतियौति"-इति क्वचित् प्रतिलोमं विदधदनुलोमं दर्शयति, तदुपपद्यते, यदि पाठक्रमेण प्रयोगः, इतरथा, सर्वमनुलोमं स्यात् प्रतिलोमदर्शनं नोपपद्येत ! तथा 'चतुर्होतारमयोः प्रतिक्रमासयति"-इति, उक्ते सति,

'अतिहायेडो बर्हिः प्रतिसमानयति,—इति उच्यते तेन बर्हिषः चतुर्थतां दर्शयति, सा पाठक्रमे नियामकेऽव कल्प्यते" भा०

"प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्" ८सू०

"वाजपेये 'सप्तदश प्राजापत्यान् पशून् आलभते'—इति श्रूयते। तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः, तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्यः द्वितीयादिषु भवति संशयः,— किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्यः? उत द्वितीयादिषु अनियमः?—इति। किं तावत् प्राप्तम्? नियमकारिणः शास्त्रस्याभावात् अनियमः-इति। एवं प्राप्ते, ब्रूमः,—यतः पूर्व आरब्धः, तत एव द्वितीयादयोऽपि पदार्था आरब्धव्याः—इति। कुतः एतत्? 'तदुपक्रमात्' सर्वे हि पदार्था प्रधानकालात् न विप्रकृष्टव्याः, प्रधानं हि चिकीर्षितं, कृतं वा तेषां निमित्तं, सहवचनं हि भवति"-'पदार्थैः सह प्रधानं कर्त्तव्यम्'—इति। बहुपदार्थसमाम्नानात् अवश्यम्भावी विप्रकर्षः, तथापि तु यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुम्, तावद्भिर्व्यवधानम् अवगतं कर्त्तव्यम्। ततोऽभ्यधिकेन न व्यवधातव्यम्—इति, यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्, तथा प्रयोगवचनं बाध्येत ।। 'ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति'। उच्यते,—अनुमतानां व्यवधायकानां त्यागेन कश्चित् अभ्यधिको गुणो भवति—इति तस्मात् यतः एव पदार्थ आरब्धः तत एव उत्तर आरम्भणीयः—इति" भा०

"सर्वमिति चेत्" ९सू०

"इति चेत् पश्यसि, प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रहः—इति, सर्वं तर्हि—गुणजातम् एकस्मिन् अपवर्जयितव्यं, यथा सौर्यादिषु" भा०।

"नाकृतत्वात्" १०सू०।

"नैतदेवम्, सहप्रयोगे एवं हि न अनुष्ठितः स्यात्" भा०।

"कृत्वन्तरवदिति चेत्"। ११सू०

"अथ यदुक्तं,—यथा कृत्वन्तरेषु सौर्यादिषु—इति, तत् परिहर्त्तव्यम्" भा०

"नासमवायात्" १२सू०

"न तेषामर्थात् क्रमः प्राप्नोति, यो नियम्येत, अङ्गान्यर्थो हि नियमो भवितुमर्हति, अनङ्गाकमान्यस्य स्वयमङ्गता कल्प्येत" भा०

"स्थानाच्चोत्पत्तिसंयोगात्" १३सू०

"एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्" इत्येवमादि श्रूयते। तत्र आगमेन सङ्ग्रादरणम्—इति वक्ष्यते। तत्र आगमे क्रियमाणे, किम् अनियमक्रमाः सर्वा अत्र आगमयितव्याः? उत आग्रक्रमेण? इति। किं प्राप्तम्?—अनियमेन—इति। कुतः? अतिरात्रे त्रिवृदादिशब्दार्थैर्नैताः प्राप्नुवन्ति, तत्र एतासां प्राप्तवतीनाम् पाठक्रमो नास्ति—इति। एवं प्राप्ते उच्यते,—यदासां सामाम्नाये स्थानं, तेनैता अत्र नियम्यन्ते, याः पूर्वं समाम्नाताः, ताः पूर्वमेव प्रयोक्तव्याः, आनुपूर्व्यस्य हि दृष्टमेतत् प्रयोजनम्, यदुत्तरस्य रूपं, तदपि चिकीर्षितमेव—इति। त्रिवृदादिशब्दैः अतिरात्रे यौगपद्येन आसां प्राप्तेः पाठक्रमस्य अविषयः—इति अधिकरणान्तरम्—इति भवति मतिः। समाम्नायपाठक्रमादेव अत्र नियमः—इति पुनरुक्ततामत्यते—इति अन्यथा वर्ण्यते" १मप०

"साद्यस्क्रे श्रूयते,—सह पशूनालभते,—इति अत्र प्रयोऽर्थः समधिगतः"—सवनीयकाले त्रयाणाम् आलम्भः—इति। अथ अत्र पाठक्रमात्, किम् अग्नीषोमीयः पूर्वम् आलब्धव्यः? उत स्थानक्रमात् पूर्वं सवनीयः इति। कुतः? । पाठक्रमात् । एवं प्राप्ते ब्रूमः,—सवनीयः पूर्वं, "स्थानात्, यदि पूर्वम् अग्नीषोमीयः स्यात्, सवनीय स्थानं व्याहन्येत! "आश्विनं ग्रहीत्वा त्रिवृता यूपं परिवीय" इति। "ननु इतरथापि पाठक्रमो बाध्येत. बाध्यतां, तस्य हि प्रतिषेधार्थः शब्दः समाम्नातः, श्रुतिविहितं च आश्विनग्रहस्थानम्, तन्न बाधितव्यम्" (२वर्णकम्) भा०

"मुख्यक्रमेण चाङ्गानां तदर्थत्वात्" १४सू०

"सारस्वतौ भवतः एतत् वै दैव्यं मिथुनम्"—इति श्रूयते। तत्र सन्देहः,—किं स्त्रीदैवत्यस्य प्रथमं धर्माः? उत पुंदैवत्यस्य?—इति। नियमकारिणः शास्त्रस्य अभावात् अनियमः,—इति प्राप्ते ब्रूमः,—मुख्यक्रमेण वा नियमः स्यात्—इति स्त्रीदैवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नानं, "प्रणो देवी सरस्वती"-इति। तस्मात् स्त्रीदैवत्यस्य पूर्वं प्रदानेन भवितव्यम्, तस्मात् स्त्रीदैवत्यस्य पूर्वं धर्माः कार्याः, तथा हि प्रधानकालता भवति अङ्गानाम्, इतरथा, द्वैः पादैर्व्यवधानं सामर्थ्यात् चतुर्थानं तेभ्योऽधिकैरपि व्यवधानं स्यात्"। भा०

"प्रकृतौ तु स्वशब्दत्वात् यथाक्रमं प्रतीयेत" १५सू०

"दर्शपूर्णमासयोः पूर्वमौपवसथ्यधर्माः समाम्नाताः, ततः साद्यस्य। तत्र सन्देहः,—किम् अग्नीषोमीयधर्माणाम्, मुख्यक्रमेण पूर्वम् साद्यस्य धर्माः कर्त्तव्याः! उत यथापाठम्?-इति। मुख्यक्रमानुग्रहेण साद्यस्य पूर्वम्,-इति प्राप्ते ब्रूमः,-प्रकृतौ यथापाठं प्रतीयेत, स्वशब्दो हि तेषां पाठक्रमः, सः अन्यथा क्रियमाणो बाधितः स्यात्, मुख्यस्य पुनरुपसङ्ग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे संगृह्णन् यथाक्रमं न बाधितो भविष्यति। अपि च पाठक्रमे स्वशब्दः,—"स्वाध्यायोऽध्येतव्यः" मुख्यक्रमेण प्रयोगवचनैकवाक्यतया मुख्या" भा॰

"मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मात् उत्पत्तिदेशः सः" १६ सू॰

"दर्शपूर्णमासयोः, आग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य। तत्र सन्देहः-कतमः पाठो बलीयान्?-इति। उच्यते,-अनियमः, नियमकारिणः शास्त्रस्य अभावात्-इति।

एवं प्राप्ते ब्रूमः, मन्त्रपाठो बलीयान्। कुतः? प्रयोगरूपसामर्थ्यात्'-प्रयोगाय मन्त्रस्य रूपसामर्थ्यं, शब्दस्य सामर्थ्यं येन मन्त्रः प्रयुज्यते, तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति। 'ननु च ब्राह्मणपाठस्य अपि तदेव प्रयोजनम्'। उच्यते-'उत्पत्तिदेशः सः'-अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति" भा॰

"तद्वचनाद्विकृतौ यथाप्रधानं स्यात्" १७ सू॰

"अस्ति वाध्वरकल्पा नामेष्टिः,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरुः'-इति। तत्र सन्देहः—किम् आग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्याः, चोदको बलवत्तरः, प्रयोगवचनात्, उत उपांशुयाजविकारस्य प्रयोगवचनो बलवत्तरः, चोदकात्?—इति। किम् प्राप्तम्?—'विकृतौ' अस्यां 'यथाप्रधानं स्यात्' 'तद्वचनात्'—तेषां आम्नायवचनक्रमो विकृतौ, तेन सन्निहितानाम् उपसंहारकः प्रयोगवचनो हि प्रत्यक्षः, तद्धर्माणां च आनुमानिकः चोदकेन हि स प्राप्तः। तस्मात् प्रत्यक्षः प्रयोगवचनो बलवत्तरः, तेन चोदक आनुमानिको बाध्यते भा॰

"विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति" १८ सू॰

मुख्याङ्गक्रम—विप्रतिपत्तौ वा यथा प्रकृतौ, तथैव विकृतौ भवितुमर्हति—इति। कुतः?। 'प्रकृत्यन्वयात्' यादृशाः प्रकृतौ धर्माः, तादृशा एव विकृतौ भवितुमर्हन्ति—इति, मुख्यक्रमेण क्रियमाणा न प्रकृतिवत् कृताः स्युः?। चोदको हि प्रयोगवचनात् बलवत्तरः, स हि उत्पादयति प्रापयति च। प्रापितान् अभिसमीक्ष्य प्रयोगवचन उपसंहरति, स प्राप्तेषु उत्पन्नः प्राप्तिनिमित्तक उत्तरकालं पूर्वप्राप्तं न बाधितुमर्हति चोदकं, प्रत्यक्षोऽपि सन्, बहिरङ्गत्वात्, यथाप्राप्तानेवोपसंहरिष्यति। तस्मात् पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्य" भा॰।

एतच्च स्पष्टतया तत्त्वबोधिन्यां दर्शितं यथा

"अग्निहोत्रं जुहोति यवागूं पचतीत्यादौ अनुष्ठेयानामनुष्ठानक्रमनियमोऽस्ति नवेति। तत्र न क्रमनियमः तत्प्रापकप्रमाणाभावादिति प्राप्ते क्रमनियमप्रापकाण्याह श्रुत्यर्थपठनस्थानमुख्यप्रावर्त्तिकाः क्रमाः। १श्रुतिरानन्तर्यबोधकक्त्वाप्रत्ययादिरूपम्। २अर्थः प्रयोजनं, ३पठनं पाठक्रमः ४स्थानं स्वस्थानस्थितिः, यथा आश्विनग्रहस्य सवनीयपशोः,। स्थानं स्थापत्तिवाक्यमिति केचित्। ५मुख्यं प्रधानं कर्म। ६प्रवृत्तिः प्रवर्त्तनक्रमः। प्रावर्त्तिकेति तद्धितेन प्रतीतिगम्यत्वाभिधायकेन श्रुत्यादिपदानां श्रुतिगम्यत्वादिपरत्वं सूचितं तथा च श्रुत्यादीनि क्रमप्रापकाणीति। अत्र श्रुत्यादीनां क्रमप्रापकताबोधकसूत्राणि बहूनि उक्तानि तानि च ग्रन्थगौरवभयात् निखिलभाष्यसूत्रार्थविवेचनेन ग्रन्थगौरवीभविष्यत्वाच्च न लिखितानि। तत्र श्रुतितो यथा "द्वादशाहस्य याग" "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ततउद्गातारं ततो होतारमिति" आनन्तर्यार्थकक्त्वाप्रत्ययेन क्रमोबोध्यते। यथा वा "हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः अथ वक्षसः" इति अथशब्देन। अयं च क्रमोऽन्येभ्यो बलवान् शब्दलभ्यत्वात्। एवमेषां पूर्वं न उत्तरोत्तरं दुर्बलं बोध्यम्। नन्वथादिशब्दादुपस्थितस्यापि क्रमस्य आख्यातरूपक्रियात्वाऽभावेन कथं विधेयत्वं तदिदमुक्तं प्रापकप्रमाणाभावादिति चेदुच्यते यथा दध्ना जुहोतीत्यादौ अक्रियारूपं दधिद्रव्यं क्रियाविशेषणं सद्विधीयते दधिसाधनकं होमं कुर्यादिति तथा इदमनेन क्रमेण कर्त्तव्यमिति क्रियाविशेषणतया क्रमोविधीयते। तथा च सूत्रम् "श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्" आनुपूर्व्यं श्रुतिगम्यं विधिगम्यं तस्य क्रमस्य प्रधानत्वात् दध्यादिवत् क्रियाविशेषणत्वेन विधेयत्वात्। तत्र कश्चित् श्रुतशब्दादथादितः कश्चित्त्वार्थादितोऽनुमानादिति विशेषः। इत्थञ्च श्रुतिगम्यं श्रुति

शब्दलभ्यमित्यर्थः स्वबोध्य इति भावः। श्रुतिगम्यं श्रुतिलभ्यमानुपूर्व्यं स्यादिति शेषः। "अथ अध्वर्युं गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादौ दीक्षैव विधीयते श्रुतितद्विद्यावगमात् क्रमस्तु वाक्यार्थो न विधेय इति। तद्विद्यावगमाभावात् तदुक्तं "वाक्यार्थो विधिरन्याय्यः श्रुत्यर्थैर्विधिसम्भवे। तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां प्राप्यते क्रमः"। उच्यते। द्वादशाहसत्रे य एव यजमानास्त एव ऋत्विजः" इति ब्रह्मादीनां सर्वेषामृत्विजां यजमानत्वेन यजमानदीक्षां विधिप्राप्तामनूद्य अनेनाप्राप्तक्रमएव विधीयते। तदुक्तं "सर्वेषां यजमानत्वात् दीक्षाप्राप्तेरचोदनात्। क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते"।

"अर्थाच्चेति" सूत्रम्। २अर्थात् यथाग्निहोत्रं जुहोति यवागूं पचतीत्यत्र यवागूपाकस्य होमः प्रयोजनं तत्र होमानन्तरपाके सति न सम्भवति होमोऽपि च यवागूं विना न निष्पद्यत इति पाकानन्तरं होमः। अतएव गृहपत्यादिदीक्षासु पाठप्राप्तक्रमस्यैवादृतत्वात् इहापि होमपाकयोः पाठप्राप्तक्रमोऽस्त्विति निरस्तं पाठक्रमग्रहणे विहितार्थानिष्पत्तेः। न च जुहोतीत्यस्य सामान्यप्राप्ताज्यादिद्रव्यकत्वमिति द्रव्यान्तरेण होमः, यवागूपाकस्य च अतिथिभोजनादिरूपप्रयोजनान्तरं कल्पनीयम् अथवा यवागूमित्यस्य जुहोतीत्यनेनान्वयात् पचतीत्यस्य कर्मान्तरमध्याहार्यमिति वाच्यं तत्कल्पकाभावात् गौरवात् विलम्बोपस्थितेः। द्वितीये यवाग्वा होमद्रव्यत्वाङ्गीकारेणार्थक्रमस्याभ्युपगमाच्च यवागूं जुहोतीत्यत्र पाकं विना यवाग्वा असम्भवेन पाकस्यावश्यकत्वाच्च। अत एवार्थक्रमः पाठक्रमाद्बलवान् जुहोतीत्यनेनाकाङ्क्षितद्रव्यान्तरस्याध्याहारादिना होमनिश्चयात् तत्र प्रवृत्तिः यवागूपाकस्य च प्रयोजनान्तरमदृष्टं च तदर्थं पाके प्रवृत्तिरिति तादृशावगमस्य कल्पनासापेक्षत्वेन विलम्बितत्वात् आर्थनिश्चयात् यवागूमित्यनेन जुहोतीत्यस्यान्वयात् यवागूपाकस्य होमप्रयोजनकत्वात्तस्य झटित्यवगमात्। अर्थात् युक्तेरिति कश्चित् तन्न। पठनस्थानादीनामपि युक्तिमध्यतेन विभागानुपपत्तेः। अतएव प्रयोजनवशात् नियम इति शास्त्रदीपिका। माधवाचार्यस्तु "यवागूं पचति यवाग्वाग्निहोत्रं जुहोति" श्रुतिमभिधाय तृतीयया यवाग्वा होमसाधनत्वमवगम्यत इत्याह।

३पठनाद्यथा "समिधो यजति तनूनपातं यजतीत्यादिषु दर्शपौर्णमासाङ्गप्रयाजादिषु क्रमपठितानां क्रमेणानुष्ठानम्। नन्वत्र गृहपत्यादिदीक्षास्विव क्रमबोधकशब्दाभावात् यवागूपाकस्येव साध्याभावाच्च कथं क्रमनियम इति चेत् न, तथैव लोकावगतेः। तथा च सूत्रं "क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्"। तदुक्तं "यथापाठमनुष्ठानं तथैव प्रतिपत्तितः। स्मृतिप्रयोगवेलायां वाक्यैरेव च कर्मणाम्"। आसनं स्वागतमित्यादिषु क्रमपाठस्थेषु आसनादिषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते। अयं स्थानादिक्रमतो बलवान् तदपेक्षया शीघ्रोपस्थितेः।

४स्थानाद्यथा। साद्यस्क्रनामकः कश्चिद्यागविशेषः ज्योतिष्टोमविकृतिः। तत्र श्रूयते "सह पशूनालभते" इति तत्र च प्रकृतियागज्योतिष्टोमे अग्नीषोमीयपशुरौपवसथ्यपूर्वदिने आलभ्यते, सवनीयः पशुः सुत्यादिने प्रातःसवने आश्विनग्रहग्रहणादूर्द्धमालभ्यते तथा च श्रुतिः "आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयमाग्नेयं पशुमुपाकरोतीति" अनुबन्ध्यपशुरवभृथादूर्द्धमालभ्यते विकृतौ साद्यस्के त्रयोऽपि पशवः सहालभ्यन्ते सहालभनमेकस्मिन् सवनीयस्थाने सुत्यादिने आलभनं तत्र च प्रकृतौ ज्योतिष्टोमे अग्नीषोमीयस्य प्रथममुपाकरणं ततो विकृतावपि अग्नीषोमीयस्य प्रथममुपाकरणमिति प्राप्ते "स्थानाच्चोत्पत्तिसंयोगात्" उत्पत्तिसंयोगात्। उत्पत्तिवाक्यात् प्राप्तात् स्थानात् उपाकरणस्थाने प्रथमं सवनीयपशोरालभनीयत्वेन सवनीयपशोः स्थानप्राबल्यात्। तथाचोक्तं "सह पशुना या इतरपरिभाषा पशुना सह कार्यः" अयम्भावः सवनीयपशोः स्थानमपि प्रकृतमीदृम् अन्ययोस्तु अन्यत्, तत्र प्रकृतौ "आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयपशुमुपाकरोतीति" श्रूयते त्रिवृता क्रमेणावयवा त्रिराहत्त्या परिवीय संवेष्ट्य इत्यर्थः। अत्र प्रकृतौ तथा कृतेऽन्यदतिदेशात् विकृतावपि सवनीयपशूपकरणात् पूर्वमाश्विनग्रहो ग्राह्यः। ततश्च गृहीते तस्मिन् समीपे स्थानमहिम्ना तत्र सवनीयपशोरेव प्रथममुपस्थितिकत्वेन प्रथममुपाकरणं न तु प्रकृतौ प्रथमोपाकरणमग्नीषोमीयपशोः, तस्य प्रथममनुपस्थितेः इतरयोः तदुपाकरणानुरोधात् स्थानात् सवनीयपशोः स्थानादितरयोरपि सन्निधानहन्योः इत्यः

"विरोधेऽर्थक्रमपरत्वात्" ६सू० "पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रम एव बलीयान् न पाठक्रमः। कुतः? तत्परत्वात् पाठस्यार्थपरत्वात् अर्थार्थत्वात् कार्यविज्ञानार्थत्वादित्यर्थः। तेन पूर्वं छेदनम् पश्चात्तया छिन्नया शाखया वत्सापाकरणमिति। अथ यत्र श्रुतेः श्रुतिपाठक्रमस्य च विरोधो भवति तद्यथा "संस्थिते यज्ञे माहेन्द्रं तर्पयितवै ब्रूयादिति"(शत०ब्रा०११।७।२।२८)श्रुतिः कर्मणि समाप्ते प्रैषं विदधाति पाठक्रमात् स्विष्टकृतः पश्चात् प्राशित्रावदानात् पूर्वमिति तत्र केन क्रमेणानुष्ठानमिति संशये सूत्रमाह" भा० "श्रुतिः क्रमादानुमानिकत्वात्" ६सू० "क्रमादिति श्रुतिपाठक्रमाच्छ्रुतिर्बलीयसी तेन श्रुतिप्रतीतक्रमेणैव संस्थिते कर्मणि प्रैषोच्चारणम् न पाठक्रमेण। कुतः आनुमानिकत्वात् पाठक्रमस्य अर्थाच्छ्रुतेः प्रत्यक्षत्वादिति शेषम्, प्रत्यक्षा हि श्रुतिः संस्थिते यज्ञे इति। पाठक्रमे त्वनुमानम्, यतोऽनेन क्रमेण पदार्था अनुष्ठेयाः अतोऽनेनैव क्रमेण पाठ इति। दुर्बलं च प्रत्यक्षादनुमानम्। अतः श्रुतिक्रमेणानुष्ठानमिति सिद्धम्। एवम् "तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियते" (शं०ब्रा०४।१।५।१६) इत्येतदप्युदाहरणम् किं श्रुतिमन्त्रपाठागतावस्थाने गृह्यते? उत श्रुतिबलाद्दशमे? इति तत्र श्रुतिबलात् दशमे इति सिध्यति। अथ यत्र चोदनापाठक्रमस्य मन्त्रपाठक्रमस्य च परस्परं विरोधो भवति। यथाग्न्याधिषवणे "सोऽग्न्याधानमधिषवणीये स्तौति" अधिषवणं विधाय तदनन्तरमेव "तत्पुनरुद्धानमवलुक्षे स्तौति" (शत०ब्रा०१।२।१।१६) चोदनापाठक्रमः। मन्त्रपाठे आग्न्याधिषवण-मन्त्रानन्तरं "धर्त्रोऽसि विश्वायुरित्यादिम् (यजु० १।२२) पठीवन्नन्तमन्त्रान् मन्त्रगणं पठित्वा आग्न्योद्धानमन्त्र "उर्वी स्तौति" पठितः। पूर्वाधिकरणे हि क्रमाच्छ्रुतेः प्रत्यक्षत्वाद्बलीयस्त्वमुक्तम् अत्रोभयोः प्रत्यक्षत्वात् किं चोदनापाठक्रमेणाग्न्योद्धानं कर्त्तव्यमुत मन्त्रपाठक्रमेणेति संशये सूत्रमाह" भा० "मन्त्रतश्च प्रयोगित्वात्" ७सू०। "मन्त्रचोदनयोरिति मन्त्रपाठचोदनापाठयोर्विरोधे मन्त्रक्रमम् मन्त्रपाठ एव बलवानित्यर्थः। कुतः? प्रयोगित्वात् मन्त्राणाम्, मन्त्रा हि कर्मकाले प्रयुज्यन्ते पठ्यन्ते न चोदनावाक्यानि अतो मन्त्रपाठः पदार्थानां सन्निकृष्टः चोदनापाठस्तु विप्रकृष्टः। तथा हि "समिधो यजति"(शत०ब्रा०१।५।३।८।) इत्यनेन पदार्थो विहितः सोऽनुष्ठानवेलायां तेन वाक्येन विहितस्याङ्गं स्मारयति तेन वाक्येन स्मृतेनानुष्ठानवेलायां स पदार्थः स्मारितः सन्ननुष्ठीयते, इतीतरेतराश्रयं स्यात् अर्थेन वाक्यं स्मार्यते वाक्येन चार्थ इति नैष दोषः सामान्यविशेषभेदात् सामान्येन हि दार्शिकमङ्गं कर्त्तव्यमित्यवगम्यते विशेषस्मरणार्थं विधायकं वाक्यमालोचयति तेन चालोचितेन पश्चात्तदर्थविशेषः स्मारितोऽनुष्ठीयते अनुष्ठितश्चासौ भाविन्येव द्वितीयं पदार्थं न स्मारयति अर्थानां प्रत्यासत्तेरेव क्रमेण पौर्वापर्यस्यानपेक्षत्वात् किं तर्ह्यनुष्ठानोत्तरकालं योऽसौ क्रतुमालोचयति समिद्यागोऽयं कृत इति स चालोच्यमानो देन समिधो यजतीत्यनेन (शतपथ)१।५।३।८। ब्राह्मणवाक्येन विहितमात्स्मारयति तत्र स्मृतं स्यादुत्तरम् "तनूनपातं यजतीत्येतत् स्मारयति कुतः? पाठात् ततः परं हि तत्पठितमिति तद्ब्राह्मणं पुनः पदार्थं विदधाति विधिरेव तस्य कार्यम् न स्मृतिः अनुष्ठानवेलायां तदेव ब्राह्मणं निर्व्यापारं कृत्वा चिरनिवृत्तव्यापारं प्रयोगकालाद्बहिर्भूतं स्मारकमपेक्षितम्। अयं मन्त्रपाठाद्ब्राह्मणपाठे विप्रकर्षः। मन्त्रः पुनरन्तःक्रतु प्रयुज्यमानः परिसमाप्यमान उत्तरं मन्त्रं पर्युपस्थापयति। स चोत्तरो मन्त्रः पर्युपस्थाप्य उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्यवतिष्ठते। तस्मात्तत्राकाङ्क्षान्तरापेक्षाभावान्नास्ति विप्रकर्षः। एतदुक्तं भवति स्मारकक्रमेण तावदनुष्ठानक्रमः न च मन्त्रे सत्यन्यार्थे सति ब्राह्मणस्य स्मारकत्वम् अप्रयुज्यमानतया सामर्थ्याभावात्। न हि निर्वपामीति-वच्चिर्वेदिति पदस्योच्चारितमनुष्ठानौपयिकमनुष्ठेयमर्थं प्रकाशनं करोति किं तु सन्निधिमात्रतया प्रयोगबहिर्भूतं सत् अनेन वाक्येनेदं विहितमत्र एतत्करोमीत्येवमालोचनेन स्मारकं भवति। मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति सन्निकृष्टः। विप्रकृष्टाच्च सन्निकृष्टं बलवदित्येवं प्राप्ते आह" भाष्यम् "न समत्वात्" ८सू०। "मन्त्रपाठ एव बलवान् यदुक्तं तन्न कुतः? समत्वात् मन्त्रपाठचोदनापाठयोः। कथमुभयोः समता उच्यते मन्त्राः कर्मणि क्रियमाणस्य कर्मणः स्मरणार्थं प्रयुज्यन्ते, चोदना तु कर्मणो विधायिका अत एव चोदनायाः प्रवृत्तिः पूर्वम् अतः पदार्थे विहिते सति पश्चात्तत्स्मरणार्थं मन्त्राः प्रयुज्यन्ते अतः सममेवैतदिति प्राप्ते सिद्धान्तमाह" भा० "गुणानां तु भूयस्त्वात्" ९सू० "तुशब्दः पूर्वपक्षनिरासार्थः। नैतदुभयं समम् किन्तु मन्त्रपाठ एव बलवान्। कुतः?

मन्त्रेषु गुणानां भूयस्त्वात् गुणानां बाहुल्यात् यतः चोदनापाठापेक्षया मन्त्रेषु बहवो गुणाविद्यन्ते । तद्यथा कर्मकाले उच्चारणे पदार्थस्मारके यतो मन्त्रा अर्थवादादिमतव्यवधानरहिताः क्रमेण पठ्यन्ते तेनोत्तरमुत्तरं पदार्थं झटिति स्मारयितुं शक्नुवन्ति नैवं चोदनापाठः विधेयार्थस्तावकवाक्यसंदर्भव्यवहितत्वेन मन्त्रवत्स्मारयितुमशक्तत्वात् । न च कर्मकाले तस्योच्चारणं विहितं मन्त्रवत् । श्रुतिरपि मन्त्राणां गुणभूयस्त्वमाह "तस्मादेतदृचाभ्यनूक्तमित्यादिना(शत०ब्रा०१।७।३।४)यो हि स्वप्रतिपादितस्यार्थस्य प्रामाण्यार्थमन्यस्योक्तिं प्रदर्शयति स स्वात्मापेक्षया उत्कृष्टस्यैव दर्शयति न निकृष्टस्य तेन गुणभूयस्त्वं मन्त्रेषु अतो मन्त्रपाठ एव बलवानिति सिद्धम् । पदार्थानां क्रमनियमे श्रुत्यादीनि षडपि प्रमाणान्युक्तानि तेषां विरोधे बलाबलं चोक्तम् अथेदं चिन्त्यते । यत्र बहूनि प्रधानानि सह क्रियन्ते यथा दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयैन्द्राग्नादीनि यथा चातुर्मास्यपर्वसु वाजपेयेऽतिरात्रपशुयागपृश्निसप्तदशप्राजापत्येषु च तत्रारादुपकारकाण्यङ्गानि सर्वेषां तन्त्रेण क्रियन्ते इति । अस्त्विति कर्मणां युगपद्भावः तन्त्रमित्युक्त(कात्या०१।७।१।)तेन न तेषु क्रमः किन्तु संनिपत्योपकारकाणि तु द्रव्यसंस्काररूपाणि प्रतिप्रधानभेदेन कर्त्तव्यानि तत्र चिन्त्यते तानि किं कैकस्य सर्वाणि कृत्वापरस्य कर्त्तव्यानि ? किं वा समान एकैकः पदार्थः सर्वेषां कर्त्तव्यः? इति । तत्रैकैकं प्रधानमन्यरहितानि स्वाङ्गान्यपेक्षते तत्राङ्गानां प्रधानकाण्डस्य न्याय्यत्वादेकैकस्मिन् गुणकाण्डमपवृञ्ज्यात् इतरथा हि पदार्थानुसमये सति स्वप्रधानाद्विप्रकृष्येरन् यस्यैकस्यासादनं कृत्वापरस्य तदेव क्रियते तदा पूर्वस्यासादनयोर्व्यवायः स्यात् सहवचनं त्वारादुपकारकसाहित्यमात्रेणाप्युपपद्यते तस्मात्काण्डानुसमय एवेति प्राप्ते आह" भा० "तुल्यवचनात्सामान्यपूर्वमानुपूर्व्ययोगात्"।०सू०। "तुल्यवचनाद् तुल्यानां प्रधानानां सह प्रयोगे द्रव्यसंस्काररूपाणि संनिपत्योपकारकाण्यङ्गानि सामान्यपूर्वं कर्त्तव्यानि पूर्वः पूर्वः पदार्थः सर्वेषां समानः सकृत् कर्त्तव्यः । तद्यथा बहुषु हविःषु प्रथमं सर्वेषां विभक्तीकरणम् ततः सर्वेषां पात्रोत्पवनम् ततः सर्वेषां तत्र व्यभिचारः ततः सर्वेषां पात्रीषूपकारः ततः सर्वेषामुद्वासनम् ततः सर्वेषां पेषणासादनम् ततः सर्वेषामाज्यपः इत्येवं पदार्थानुसमयः कार्यः । यद्येकैकस्मिन् गुणकाण्डमपवृज्यते तदा सति क्रमेण प्रयोगात् प्रयोगवचनप्रापिततस्य साहित्यस्य बाधः स्यात् न हि वचनेनाभिहितः साहित्यशब्दगम्यमानं कालसन्निकर्षेण प्रधानानामतिमात्रेणारादुपकारकविषयमात्रं कल्पयितुं शक्यते । तस्मात्पदार्थानुसमयः । कुतः ? आनुपूर्व्ययोगात् पदार्थानां तन्त्रन्यायाच्च एवं क्रियमाणे पदार्था आनुपूर्व्यं च अनुक्रमेण युज्यन्ते तन्त्रन्याय अन्यथोत्तरपदार्थकरणानन्तरं पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात् । "पौर्णमास्यां पौर्णमास्या यजेत" इत्यनेन वाक्येन पौर्णमासीशब्दबोध्यानां तत्सम्बद्धानां त्रयाणां यागानां साङ्गानामेककालप्रयोगोऽवगम्यते अतो यस्मिन्नेव क्षणे एकस्याधिश्रयणं कर्त्तव्यमापतति तस्मिन्नेवापरस्याधिश्रयणं कर्त्तव्यं मशक्यतया केवलं न क्रियते द्वितीये तु क्षणे न कश्चिद्देतवेन पुरोडाशान्तरं नाधिश्रियेत अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः पदार्थः सर्वेषां कर्त्तव्यः । एवं बहुषु प्रधानेषु सर्वत्र पदार्थानुसमय एव न्याय्यो न काण्डानुसमयो इति स्थितम् । यत्र तु प्रधानविरोधो भवति पदार्थानुसमये क्रियमाणे । तत्र काण्डानुसमय एवेति वार्त्तिकेन साहित्येन पदार्थानुसमयः प्राप्तोऽपि प्रधानविरोधात्त्यक्तव्यः । पुरोडाशाङ्गं हविःश्रपणादयः तदङ्गं च क्रमः पदार्थानुसमयरूपः तदाश्रयणे च तत्र कपालसंयोगात् पुरोडाशशोषप्रसङ्गः । न चाङ्गानुरोधेन प्रधानबाधो युक्तः । तेनानेकेषु हविःष्वेकैकस्य पुरोडाशस्याधिश्रयणं प्रथमङ्गैरभिघारणं चेत्यन्तं काण्डानुसमयः कार्यः । यत्र तु नास्ति प्रधानबाधः हविश्चतुरादिहविःषु तत्र भवतु पदार्थानुसमयः । दाक्षसम्भवयज्ञायां तु उद्वासनमपि व्युत्क्रमेण कार्यम् यदुक्तम् पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे पूर्वस्य व्यवधानमिति तत् सहत्वविधिबलात् परिह्रियते । एवं च सति वाजपेये आग्नेयैन्द्राग्नसारस्वतो वशाष्टश्विसप्तदशप्राजापत्येषु द्वाविंशतिसंख्येषु पशुष्वेकविंशत्या पदार्थैः समानासमानजातीयैर्व्यवधानमिष्यते न न्यूनाधिकैः । अन्ये त्वसमानजातीयैरेव । अनेनैव मुख्यक्रमप्रवृत्तिक्रमावुक्तौ भवतः । तथाहि यत्र बहूनि प्रधानानि भवन्ति तत्र यो मुख्यानां प्रधानानां क्रमस्तेनैव क्रमेण तदङ्गानां क्रमोभवति यथा पौर्णमास्यां प्रथममाग्नेययागः ततोऽग्नीषोमीययागः अत आग्नेयस्य प्रथमं ग्रहणम् ततोऽग्नीषोमीयस्य, एवं

प्रोक्षणादावपि । अयं मुख्यक्रमः अनेन क्रमेण यद्यङ्गान्यनुष्ठीयन्ते तदाङ्गानां नियता प्रधानप्रत्यासत्तिरनुगृहीता भवति एवं ह्यङ्गप्रधानयोर्यदनुष्ठानमेव व्यवधानं भवति इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमाङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात् ।

अथ प्रवृत्तिक्रम उच्यते यत्र बहूनि हवींषि भवन्ति समानदैवतानि यथा वाजपेये पशवः तत्र चोदाकरणादयः संनिपातिनः प्रतिपश्वावर्त्तनीयाः । तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वा परस्यापि तथैव क्रियन्त इत्येवम् । किं तर्हि ? सर्व्वेषामुपाकरणं यतः कुतश्चित् पशोरारभ्य कृत्वा ततः सर्व्वेषां नियोजनमित्युक्रम् । तत्र प्रथमे पदार्थे उपाकरणे अनियम एव यतः कुतश्चित् पशोरारभ्य कर्त्तव्यः । द्वितीयस्तु पदार्थो नियोजनरूपः किं प्रथमो यत आरब्धः तत एवारम्भणीयः? उत तत्राप्यनियम एवेति ? तत्र क्रमनियमकारणानां श्रुत्यर्थपाठानामभावदनियमे प्राप्ते उच्यते प्रवृत्त्यैव नियमः । प्रथमः पदार्थो येन क्रमेण कृतः स एव क्रम उत्तरेष्वपि नियोजनादिषु नियम्यते । कुतः ? पदार्थैः सह प्रधानं कर्त्तव्यमिति वचनात् सर्व्वे पदार्थाः प्रधानकालाद्विप्रकृष्टव्याः कथं? पदार्थैः सह प्रधानस्य वचनम् यावता "दर्शपूर्णमासाभ्यां यजेत प्राजापत्यैश्चरन्तः" इत्यादिषु प्रधानमात्रं श्रूयते उच्यते, समीहितं भावयेद्यागेनेत्यभि न हि यजेतेत्यस्यार्थः । तत्र यस्यामेव वेलायां स्वर्गो भावने कर्त्तृत्वं प्रतिपद्यते तस्मिन् क्षणे करणेतिकर्त्तव्यते अपि व्याप्रियेते । अयमर्थः नात्र प्रधानं कर्त्तव्यं श्रूयते किन्तु प्रधानेन स्वर्गः कार्य इति करणविभक्तिनिर्द्देशाद्यागेनेष्टं कार्यमस्मिन्काले कुर्यादिति तेन स्वकार्यं सेतिकर्त्तव्यताकेन कर्त्तुं शक्यते नान्यथा । तस्माच्चितयस्य फलकरणेतिकर्त्तव्यतस्य युगपद्यजेतेत्यनेन कर्त्तव्यतोच्यते । ततोऽन्यथा करणेतिकर्त्तव्यताकत्वमेव न स्यात् न हि पश्चाद्भावि करणं भवति । तथा भविष्यति भाव्ये भूते च करणे प्रथमेव दोषः न हि विनष्टं करणं भवतीति । तथा करणेतिकर्त्तव्यतयोरपि मिथो विप्रकर्षे अयमेव दोषः । न हि विनष्टमनागतं वानुग्राहकं भवति । तेन यद्वस्तु स्यामेककालतैषां समवायात् । ततः प्रधाने सेतिकर्त्तव्यताके एकस्मिन् क्षणे सह कर्त्तव्ये प्राप्ते सति एकः कर्त्ता बहूनि प्रधानानि इतिकर्त्तव्यतां वा असमर्थः कर्त्तुं, यौगपद्येनेत्यवश्यम्भावी क्रियाणां विप्रकर्षः । ईदृशेनापि विप्रकर्षेण सर्व्वैव पदार्थाः कृता भवन्ति । प्रयोगवचनो हि यावतः पदार्थाननुष्ठापयति तावद्भिरपवर्जनीयतया यावान् कालो व्याप्यते तावानेकः कालः तावति च काले सर्व्वेषां कालो विधीयते न त्वेकस्मिन् क्षणे अशक्यार्थविधिप्रसङ्गात् । तेन प्रत्यासत्तिरेतेषां साहित्यम् नैकक्षणवर्त्तित्वम् । यद्येवम् प्रयोगवचनेनैव क्रमस्य सिद्धत्वात् श्रुत्यादिभिः किं क्रियते ? अनियतक्रमेणानुष्ठानं प्राप्नोतीति क्रमनियमे तेषां व्यापारः । यस्मात् प्रयोगविधिर्नैकक्षणवर्त्तित्वं विधत्ते प्रत्यासत्तिमात्रम् । तस्मात् प्रधानं चिकीर्षितमनागतं कृतं वा तेषां प्रधानार्थानामनुग्राहकम् ! करिष्यमाणेन कृतेन वा प्रधानेन प्रत्यासत्तिमात्रमङ्गानां तत्साहित्यम् नैकक्षणवर्त्तित्वम् । तत्राग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् स्विष्टकृदादीनां तु कृतम् । तेनैवमवश्यम्भाविनि विप्रकर्षे केचित्पदार्थाः क्षणव्यवहिताः प्रधानेनापेक्ष्यन्ते केचिद्द्वाभ्यां क्षणाभ्यां व्यवहिताः केचिद्बहुभिरिति । एवं वाजपेयपशुष्वपि अग्न्यन्वाधानादि प्रागुपाकरणात् साधारण्यं सर्व्वपशूनां सह अनुभूतम् । उपाकरणादयोऽपि संनिपत्योपकारकाः त्वे चाविभ्रमादावर्त्तयितव्या अपि साहित्येनैव पशुभिरनुभवितव्याः । यदेकस्योपाकरणम् तदेवेतरेषामपि कुतः ? सहचोदितत्वात्पशूनां साङ्गानाम् । तत्रैवं सहानुभवितव्ये सति यस्य पशोः प्रथममुपाकरणं क्रियते तस्य प्राकृतेन पाठेन यद्यपि द्वितीयः पदार्थो नियोजनरूपः स्याप्यते तथापि सहवचनादेव एकविंशतिक्षणव्यवहितं द्वितीयं पदार्थमाकाङ्क्षति । द्वितीयस्तु पशुर्विंशत्योपाकरणक्षणैर्व्यवहितमेकेन प्रथमस्य पशोर्नियोजनक्षणेन च व्यवहितं स्वीयं द्वितीयं पदार्थमाकाङ्क्षति । एवं तृतीयादयोऽपि पशवः सजातीयविजातीयव्यवहितानात्मीयान् पदार्थानपेक्षन्ते । अन्त्यस्तु विजातीयैः पूर्व्वोपाकृतानामेकविंशतेः पशूनां नियोजनक्षणैर्व्यवहितमेव द्वितीयं पदार्थमपेक्षते । तदेवं संनिपत्योपकारकानालोच्य ईदृशी एकविंशतिक्षणव्यवधानापेक्षा प्रधानानां भवति । ततश्च यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्त्तुं तावद्भिर्व्यवधानमगत्याश्रयं कर्त्तव्यम् अतोऽभ्यधिकैस्तु न व्यवधातव्यम् । यद्येकं पदार्थमेकस्य कृत्वा द्वितीयोऽपि पदार्थस्तस्यैव क्रियते ततः सहवचनं नोपपद्येत । एवं सर्व्वत्र तृतीयादिष्वपि पदार्थेषु योज्यम् । प्रथमपदार्थक्रम एव द्वितीयादिष्वपि समाश्रयितव्यः इतरथा केषां चन व-

न्यूनाधिकैरपि धर्मैर्व्यवहितानि स्युः। न च तद्युक्तम्। न चैवं केषांचिदत्यन्तैर्व्यवधानं गुणो भविष्यतीति वाच्यम् यथाधिकैर्व्यवधानेऽश्रुतकरणम् एवं न्यूनैरपि व्यवधानेऽश्रुतकरणमेव। तस्मादेकविंशतेः पशूनां सर्वेऽपि त्वक्रमत एव प्रयोगवचनविहितः क्रमः पदार्थानां मिथ एकविंशतित्वसंख्यप्रधानाङ्गकोऽपेक्षितः। स न्यूनैरधिकैर्वा व्यवधाने बाध्येत। अतः सर्वेषां तुल्यप्रयोगसिद्ध्यै प्रथमपदार्थक्रम एव द्वितीयादिष्वाश्रयणीय इति सिद्धम्। प्रधानाङ्गानां मिथः प्रत्यासत्तिर्नियमकारणम्, मुख्यक्रमे तु अङ्गानां प्रधानप्रत्यासत्तिरिति विशेषः। मुख्यक्रमप्रवृत्तिक्रमयोर्विरोधे च मुख्यक्रमो बलीयान्। तद्यथा दर्शपूर्णमासयोः सांनाय्यधर्माः शाखाच्छेदनादयः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः प्रदानं त्वाग्नेयस्य प्रथमम् पश्चात्सांनाय्यस्य ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं प्राशित्रावदानं वेदाभासादनादिकं च किं प्रवृत्तिक्रमात् सांनाय्यस्य पूर्वं भवति? उत मुख्यक्रमादाग्नेयस्येति? संदेहादनियमे प्राप्ते मुख्यक्रमो बलीयानित्युच्यते। अस्मिन् हि आश्रीयमाणे अल्पीयांसः प्रथमपदार्थाः प्रधानाद्विप्रकृष्यन्ते अन्ये सर्वे संनिकृष्टा भवन्ति प्रवृत्तिक्रमे तु बहूनां विप्रकर्षः। एवं तु इह प्रवृत्तिभ्यां बलीयसा पाठक्रमेण मुख्यक्रमो बाध्यते प्राशित्रादानादिषु पाठक्रमाभावात् प्रवृत्तिक्रमो मुख्यक्रमेण बाध्यते। अथ स्थानक्रमोऽनुच्यते। साद्यस्के "सह पशूनालभेत" इति(मत०२२.२,२८.)श्रूयते साहित्यं च सवनीयस्य स्थाने। तत्र किमुपाकरणादौ अनियमः? उताग्नीषोमीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्येति?। तत्र नियमकारणाभावादनियमे प्राप्ते प्रकृतिवदग्नीषोमीयस्य प्राथम्ये प्राप्ते उच्यते सवनीयस्यैव प्रथममुपाकरणम्। अग्नीषोमप्रणयनानन्तरमग्नीषोमीयस्योपस्थानम्। स तेनोपस्थितोऽपि सहालम्भवचनेन तत्स्थानापकर्षितत्वादननुष्ठितोऽत्र तु न तस्य किंचिदुपस्थापकमस्ति। सवनीयस्तु स्वस्थानादप्रचलितः सन्नाश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्। इतरयोस्तु कयं क्रमः? अनियम एव, तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टपौर्वापर्यमस्तीति बाधेऽप्युपहर्तव्यमित्यग्नीषोमीयस्यानन्तरमनूबन्ध्योपाकरणमिति। तदेवं श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिसंज्ञानि षट् प्रमाणानि क्रमनियमकारीण्युक्तानि तेषां परस्परविरोधे च पूर्वं-पूर्वं बलवत् उत्तरमुत्तरं च दुर्बलमिति। तदुक्तम् "श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिभिः। एकाम्नातस्थहीनानां नियतः कर्मणां क्रमः। विरोधे पारदौर्बल्यमेतेषामपि पूर्ववदिति" भा० (पूर्ववत् श्रुतिलिङ्गादिवत्)

क्रमस्य विनियोगसाधनता जै० सू० भाष्ययोर्दर्शिता यथा "क्रमश्च देशसामान्यात्" ३।३।१२ सू०

"अथ किमेतावन्त्येव विनियोगकारणानि?। न,—इत्युच्यते। किं च क्रमश्च देशसामान्यात्। क्रमवतामानुपूर्व्येणोपदिश्यमानानां यस्य पदार्थस्य यं धर्मं समनन्तरं तस्य तं प्रति आकाङ्क्षा अनुमीयते, सकामाकाङ्क्षायामेकवाक्यभावः, तस्मात् ततो विनियोगः—इति। किमिहोदाहरणम्? किं च प्रयोजनम्?। आनुपूर्व्यवतां यागानामनुमन्त्रणेष्वाम्नातेषु उपांशुयाजस्य क्रमे "दब्धिर्नामासीति" समाम्नातः, तस्य आकाङ्क्षोत्पाद्य तेन एकवाक्यतां यात्वा तत एव विनियोगमर्हति—इति, तथा च ऐन्द्राग्नं कर्म पिपातयज्ञातस्य अस्ति भ्रातृव्यवतः, तस्य याज्यानुवाक्यायुगलमत्याम्नायते ऐन्द्राग्नम्, "इन्द्राग्नी रोचनादिवः परिवाजेषु"—इत्येकम्, अपरं "इन्द्राग्नी नवतिं पुरः श्नथद्वृत्रम्"—इति। तत्र लिङ्गाद्विनियोगे सिद्धे विशेषविनियोगो भवति, पूर्वं युगलं पूर्वस्य ऐन्द्राग्नस्य, उत्तरमुत्तरस्य—इति, एतत् उदाहरणम् प्रयोजनञ्च" भा०

क्रमप्रकरणयोरेकत्र समवाये प्रकरणं बलीयः। क्रमसमाख्ययोस्तु क्रमो बलीयान् "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" सू०। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या० कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रैर्विनियोगसाधकानां श्रुत्यादीनां लक्षणोक्त्या स्थानशब्दस्य क्रमवाचकतावगतेः। विवृतमेतत् तत्त्वबोधिन्यां यथा "योगबलं प्रसिद्धावयवार्थक—समाख्या योगार्थेन प्रवृत्तं पदम्। यथा हौत्रमाध्वर्यवमौद्गात्रमिति। दर्शपूर्णमासादिषु याज्यायाजकपाठाद्योपस्थौ ऋग्वेदोक्ताहौत्रसंज्ञकाः, दोहननिर्वापादयो यजुर्वेदोक्ता आध्वर्यवसंज्ञकाः, स्तोत्रपाठादयः सामवेदोक्ता औद्गात्रसंज्ञकाः पदार्थाः उक्ताः। तस्मात्ते धर्मा इति नियामकाभावात् स्वेच्छया सर्वेषां सर्वकरणप्रसक्तौ होतृ-

रितं हौत्रमिति प्रकृतिप्रत्ययरूपावयवशक्तिलभ्यार्थ योगबलरूपसमाख्यया हौत्रादिकर्त्तृत्वं प्रतीयते। एवं "हौत्रं जुहोति औद्गात्रं जुहोतीत्यादौ" होत्रादेर्होमकर्तृत्वं प्रतीयते। होता ऋग्वेदी अध्वर्युर्यजुर्वेदी उद्गाता सामवेदी "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमादिति" कोषात्। न च समुदाये शक्तिः प्रमाणाभावात् अतएवोक्तं भट्टपादैः "पाकन्तु पचिरेवाह कर्तारं प्रत्ययोऽष्वकः। पाकविशिष्टः पुनः कर्त्ता वाच्यो नान्यस्य कस्यचित्"। पाकभृतः पाकविशिष्टः"।

शबरभाष्ये उदा॰ यथा "अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम्?। राजसूयप्रकरणेऽभिषेचनीयक्रमे शौनःशेपाख्यानादि आम्नातं, यदि प्रकरणं बलवत् सर्वेषां, तदङ्गम्, यदि क्रमः, अभिषेचनीयस्यैव। किं तावत्प्राप्तम्?-तुल्यबले एते कारणे-इति। कुतः?। न तावत् विशेषमुपलभामहे, नावगच्छाम इदं बलीयः-इति। तस्मात् तुल्यबले एते कारणे-इति। अपि च प्रकरणं वाक्येन बाधितं, तस्मात् बाध्येत क्रमेणापि-इति"। "एवं प्राप्ते ब्रूमः,-प्रकरणं क्रमात् बलीयः। कुतः!। अर्थविप्रकर्षात्। कोऽत्रार्थविप्रकर्षः!। प्रकरणवतः साकाङ्क्षत्वात् तत्सन्निधानाम्नातेन परिपूर्णेनाप्यवकल्प्येत एकवाक्यत्वम्, न तु क्रमवतः, क्रमेण आम्नातेन, अनेकस्याम्नायमानस्य सन्निधिविशेषाम्नानमात्रं हि क्रमः तत्र सन्निधिविशेषाम्नानसामर्थ्यात् क्रमवतः सन्निधानाम्नातस्यानुपलभ्यमानमेव आकाङ्क्षावचनमस्ति-इत्यवगन्तव्यम्। प्रकरणे तु प्रकरणवतः प्रत्यक्षम्, न च प्रकरणवता क्रमवता च यौगपद्येन एकवाक्यता सम्भवत्याम्नातस्य-इति विरोधः। तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वं, क्रमस्यानुमानिकी बाधितुमर्हति। साकाङ्क्षत्वात् एकवाक्यत्वम्, एकवाक्यत्वादभिधानसामर्थ्यं, सामर्थ्यात् श्रुत्यर्थः-इति सन्निकृष्टः प्रकरणस्य श्रुत्यर्थो, विप्रकृष्टः क्रमस्य। तस्मात् क्रमप्रकरणयोः प्रकरणं बलवत्तरम्-इति"।

"अथ यदुक्तं,-वाक्येनापि हि तत् बाधितम्, अतोऽन्येनापि तत् बाधितव्यम्-इति, नैतत्, बाधितस्यानुग्रहो न्याय्यो, न बाधितं बाधितव्यम्-इति"।

"अथ क्रमसमाख्ययोर्विरोधे किमुदाहरणं! किं बलवत्तरम्!-इति। पौरोडाशिकम्-इति समाख्याते काण्डे साम्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे'-इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र सन्दिह्यते, किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः,(मन्त्रः) उत क्रमस्य बलीयस्त्वात् साम्नाय्यपात्राणाम् ?-इति। किं तावत्प्राप्तम् ?-तुल्यबले एते कारणे स्याताम्। कुतः? अविशेषात्, यदि वा समाख्यैव बलीयसी, बाधितो हि क्रमः प्रकरणेनापि इति"। "एवं प्राप्ते ब्रूमः,-क्रमो बलीयान्। कुतः?। अर्थविप्रकर्षात्। कः पुनरत्रार्थविप्रकर्षः?। निरूते प्रकरणेन केनापि कस्यैकवाक्यत्वे यत् सन्निधावाम्नायते, तत्र आकाङ्क्षा परिकल्प्यते, नैकवाक्यतेत्यवगम्यते, लौकिकश्च शब्दः समाख्या, न च, लोक एवंविधेषु अर्थेषु प्रमाणम्। तस्मात् क्रमो बलीयान्"

विवृतमेतत् तत्त्वबोधिन्यां यथा

"स्थानप्रकरणयोर्यथा। पविष्टिसोमयागादयः परस्परनिरपेक्षा अपि प्रत्येकं फलवन्तः समप्राधान्याः। ते च मिलिता राजसूयः। तन्मध्येऽभिषेचनीयाख्यः कश्चित् सोमयागविशेषः तत्सन्निधौ अक्षदेवनादिकं श्रूयते। यथा "अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यापयतीति" जिनाति जयति। शौनःशेपं बह्वृचब्राह्मणे आम्नातं शुनःशेपस्तुतिविषयमुपाख्यानमिति माधवाचार्यः। एतेन शुनःशेफस्तुतिचरितं पुराणप्रसिद्धमित्युदीच्यव्याख्यानं निरस्तं, वैदिके कर्मणि वैदिकोपाख्यानस्यैवोचितत्वाच्च "शौनःशेफं श्रावयतीति" पाठकल्पनमपि कल्पनमेव माधवाचार्यादिभिर्वेदस्थ राख्यापयतीत्यस्य लिखितत्वात्। तत्र च सान्निध्यरूपस्थानबलात् अक्षदेवनादेरभिषेचनीयाङ्गत्वं लभ्यते प्रकरणात्तु सर्वयागात्मकराजसूयस्य इति कर्त्तव्यताकाङ्क्षया अक्षदेवनादयो विहिता इति। प्रकरणबलात् राजसूयाङ्गत्वमक्षदेवनादेः राजसूयस्य बहुयागात्मकत्वेन तत्र सर्वेषामङ्गत्वं, सर्वाङ्गत्वञ्च राजसूयघटकीभूतसर्वयागजन्यफलजनकापूर्वोपकारद्वारा सर्वोपकारकत्वम्। अत्र चाकाङ्क्षायाः श्रुत्याद्यर्थविप्रकृष्टतानिरूपितदकल्पनं व्यवधानम् अभिषेचनीयस्याक्षदेवनादेराकाङ्क्षा नास्ति तस्य ज्योतिष्टोमविकृतित्वेन प्रकृतिवद्विकृतिरित्यायात् अतिदिष्टैः प्रकृतीभूतज्योतिष्टोमाङ्गैरेवेतिकर्त्तव्यताकाङ्क्षानिवृत्तेरिति सन्निधिपाठबलात् आकाङ्क्षामुत्थाप्य तद्वारा वाक्यलिङ्गश्रुतीनां कल्पनीयतया चतुर्भिर्व्यवहितमप्रत्यक्षमानमिति प्रकरणादिसम्बन्धेन प्रापकं स्थानं दुर्बलमिति। तस्मात्

क्रिमिघ्न न॰ क्रिमिं हन्ति हन–ट । विड़ङ्गे रत्नमा॰ । २कृमिनाशकमात्रे त्रि॰ स्त्रियां ङीप् ।

क्रिमिज न॰ क्रिमिभ्योजायते जन-ड । अगुरुचन्दने अमरः २लाक्षायां स्त्री रत्नमाला॰

क्रिमिशत्रु पु॰ क्रिमेः शत्रुरिव । विड़ङ्गे रत्नमाला

क्रमु पु॰ क्रम उन् । गुवाके हिरूपकोषः

क्रमुक पु॰ क्रम–उन् संज्ञायां कन् । १पट्टिकाख्यलोध्रे २गुवाकवृक्षे ३भल्कदारुवृक्षे च अमरः ४भद्रमुस्तके ५कार्पासिकाफले न॰ मेदि॰ अयं शालसारादिगणे सुश्रुते उक्तः "शालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकेत्याद्युक्त्वा "शालसारादिरित्येष गणः कुष्ठविनाशनः । मेहपाण्डामयहरः कफमेदोविशोषणः" सुश्रु॰ तद्गुणा उक्ताः "आस्यादितान् क्रमुकाः समुद्रात्" माघः गौरा॰ ङीष् । ६गुवाके स्त्री शब्दरत्नमाला

क्रमेतर त्रि॰ ५त॰ । क्रमात् वेदपाठप्रकारभेदात् भिन्ने । ततः उक्थादि॰ तदध्येतरि वेत्तरि वा ठक् । क्रामेतरक तद्वेत्तरि तदध्येतरि च त्रि॰

क्रमेल पुंस्त्री॰ क्रामति क्रम–विच् एलति अच् कर्म॰ । उष्ट्रे स्वार्थे क । तत्रार्थे । स्त्रियां जातित्वात् ङीष् ।

क्रय पु॰ क्री–भावे अच् । पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वापादनव्यापारे (केना) । प्रतिरूपद्रव्यदानेन तथाचरणे तु न क्रयव्यवहारः इत्यतः द्रव्यपदमनुक्त्वा पणपूरणेत्युक्तम् । क्रयस्य स्वत्वहेतुत्वञ्च पूर्वस्वामिस्वत्वनाशादेव भवति प्रति तत्स्वत्वं सजातीयस्वत्वं प्रति सजातीयस्वत्वस्य प्रतिबन्धकत्वेन क्रेतुः स्वत्वोत्पत्त्यभावात् अतोमूल्यदानेन तत्स्वत्वापाकरणम् । तस्य च स्वत्वहेतुत्वम् "सप्त वित्तागमा धर्म्याः दायोलाभः क्रयोजयः । विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतेः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" गौतमवचनाच्च । क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यं वीरमि॰ व्यवस्थापितं यथा

"सप्त स्थावरागमोपायान् प्रदर्श्य तत्र भुक्तेः प्रामाण्यमाह हारीतः । विद्यया क्रयबन्धेन शौर्यभार्य्यान्वयागतम् । षष्ठं स्यात्प्राक्तनांशं स्थावरं सप्तधा मतम् । पितृतक्रमक्रयाभावे रिक्थशौर्य्यप्रवेदनात् । प्राप्ते सप्रविधे भोगः सागमः सिद्धिमाप्नुयात्" ।

विद्यया प्रतिपक्षादिकपराजिकया स्वत्वोपायःक्रयःप्रसिद्धः । बन्धो बन्धकं सोपाधिकस्वत्वहेतुर्न त्वावधी चात्यन्तिकस्वत्वहेतुस्तद्व्युत्क्रम विवेचनीयम् । क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम् । शौर्य्यागतं युद्धार्जितम् । भार्य्यागतं विवाहकाले प्राप्तम् । अन्वयागतं पित्रादिक्रमोपात्तम् । अपत्यस्य अपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम् । पितृत्वादिना प्राप्तकानेव सप्तस्थावरागमोपायानन्द्य तत्र भोगस्य प्रामाण्यं विधीयते । तत्र प्रवेदनं विवाहः । स एव "क्रमागतः शासनिकः क्रयाधानागमान्वितः । एवं विधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् । संविभागक्रयप्राप्तं पितृलब्धञ्च राजतः । स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया । प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थितम् । तस्य तत्सिद्धिमाप्नोति हानिश्चोपेक्षया तथा । अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्" ।

मूल्यं दास्यामीति नियमं कृत्वाऽपि ग्रहणादपि क्रयसिद्धिः यथाह विवादचि॰ कात्या॰ "पण्यं गृहीत्वा योमूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्" अत्र विषये लेख्यपत्रकरणमाह बृहस्पतिः "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कार्यते यत्तु क्रयलेख्यं तदुच्यते" । तस्यानुशयकालश्च अनुशयशब्दे दर्शितः" । वैदिककर्म्माङ्गपरिक्रयादौ प्राधान्येन यजमानस्यैवाधिकारः यथाह क्रत्वधिकरणे जैं॰सू॰भा॰

"स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात्" ३।७।१ सू॰ ।

"अस्ति परिक्रयः ज्योतिष्टोमे "द्वादशशतं" दर्शपूर्णमासयोः अन्वाहार्यम्" । तत्र सन्देहः किम् अध्वर्युणा परिक्रेतव्या ऋत्विजः, उत स्वामिना ?-इति । किं प्राप्तम्?-समाख्यानात् अध्वर्युणा,-इति प्राप्ते ब्रूमः,-'स्वामिकर्म परिक्रयः' कस्मात् ? कर्मणः तदर्थत्वात्, फलकामो हि यजमानः यत्र फलकामः, तेन स्वयं कर्त्तव्यम्, स यदि परिक्रीणीते, ततः स्वयं सर्वं करोति इति मन्यते, अथ न परिक्रीणीते, न सर्वं कुर्यात् । तस्मात् स्वामी परिक्रीणीते इति" शबरभाष्यम्

"वचनादितरेषां स्यात्" सू॰

"किम् एष एवोत्सर्गः ? न-इत्युच्यते,-'वचनात् इतरेषां स्यात्' । यत्र वचनं भवति, तत्र वचनप्रामाण्यात् भवति परिक्रयः,-'य एतामिष्टकाम् उपदध्यात् स त्रीन् वरान् दद्यात्'-इति" भा॰ ।

सोमादिक्रयस्य द्रव्यसाध्यतया स्त्रियां पित्रा विक्रीतत्वात्

न्यायोऽद्यते, सर्वं "शास्त्रं शास्त्रकारणं भवतीति" न्यायात् उच्यते। क्रयणस्य क्रयः कार्यं इत्युक्तेः विक्रयस्य तत्कर्मत्वात् तत्र क्रयवत् निषेधाभावः एवं विक्रयदृष्टेऽपि क्रयनिषेधाभावः तत्र निषेधे सत्यन्यनक्षत्राणां मध्यमत्वापत्तेः कदाचित् क्रयनक्षत्राणां मध्यमत्वमङ्गीकृत्य विक्रयस्य विहितत्वस्योक्तानुपलब्धौ तत्र मुहूर्त्तमध्यमोऽपि यात्रास्तद्वर्षमपि शार्वनिकस्तन्निषेधः कृतः। क्रयविक्रयनक्षत्रेभ्योऽभिन्ननक्षत्रेषु क्रयविक्रयौ मध्यमाविति तु भिन्नः निषेधस्तु वार्त्तिकवाक्यम् दीपिकायाम् "दस्रादितिकृत्तिकाहस्तश्रवणपूर्वान्तेष्टाः क्रये विक्रयणेऽतिशस्ताः। पौष्णार्द्रचित्रान्त्यु पवातकस्याः शस्ताः क्रये विक्रयणे निषिद्धाः" इति क्रय क्रयकृतं उच्यते। तत्र पौष्णं रेवती अम्बुपः शततारका अदिती वातः स्वाती श्रवणः चित्रा एतानि भानि क्रये शुभानि विक्रये निषिद्धानि च सम्मतिरत्नोक्तेव"।

**क्रयण** न॰ क्री–भावे ल्युट्। क्रये "वैश्यराजन्ययोः सोमे न्यग्रोधस्तिर्मीतुपनद्धेऽभवत् भवाय क्रयणप्रभत्वनुसोमम्" कात्या॰श्रौ॰१०,८,२०. क्रयणप्रभृति (सोम) क्रयणादारभ्य" कर्कः। क्रयणस्येदम् छ। क्रयणीय क्रयणसम्बन्धिनि। "अद्भ्यस्त्वमभ्यागापनं क्रयणीयादौ" कात्या॰ श्रौ॰ १६.६,१२, आदौ क्रयणीयस्याङ्गः" सं॰ व्या॰।

**क्रयनियम** पु॰ क्रये नियमः। क्रेतृविक्रेत्रोर्नियमभेदे। स च नियमः "भूयसा वस्नमचरत् कनीयोऽविक्रीतो अकानिषं पुनर्यन्। स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्रवाणम्" ऋ॰४,२४.८, भाष्ये दर्शितो यथा–"अत्र अयमृग्वेदे संवादार्थविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते तएव लिख्यन्ते। 'वस्नं' यः प्रतिगृह्णाति मूल्यं पण्येन भूयसा। स क्रेतारं पुनर्गत्वा विक्रीतस्त्वयं मया। इति ब्रुवन् कामयते पुनर्मूल्यस्य पूरणम्। स विक्रेता पुनर्मूल्यं भूयसा न प्रदर्शयेत्। हीनं न लभते वस्त्रं तदा विक्रीतवान् पुरा। यथासमयमेव स्यात्तयोर्न पुनरन्यथा। अयं विक्रय एवेति समयश्चेत् ततो भवेत्। अथ मूल्यार्थमेतत् स्यादिच्छायां तु निर्णयः। इत्येवं समयो ऽकारि तदा मूल्यं प्रपूर्यते। तस्मादादौ मया कार्यः स समयोऽस्त्विति चिन्तयत्। वामदेवो वशीकृत्य सकृत् स्तोत्रेण भूयसा। विक्रीणन् समयं चक्रुरिन्द्रं च दर्शनीकृत्य। अथ तत्र च एकार्थौ भूयसा इन्द्रमिन्द्रमिति"। अथ मन्त्रः प्रतिपाद्यते कश्चित् भूयसा मूल्ये पण्येन द्रव्येण कनीयोऽल्पतरं वस्नं तत् मूल्यं धनमचरत् प्राप्नोति पुनर्यन् क्रेतारं पुनर्गच्छन् अविक्रीतोऽयमर्थो मया न विक्रीत इति ब्रुवन् न कानिषं मूल्यपूर्त्तिं कामयते अवदेनोत्तम पुरुषः। स विक्रेता भूयसा धनेन कनीयोऽल्पतरं मूल्यं नारिरेचीत् क्रेतुः सकाशाच्च रिक्तीकरोति न लभत इत्यर्थः। दीना असमर्था दक्षाः समर्था वा सर्वं वचनं विप्रदुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते"

"क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत्" ऋ॰ ४.२४.१०,

"मम मदीयमिदं स्वभूतमिन्द्रं धेनुभिः गोभिर्यद्वीभिर्दशभिर्दशसंख्याकाभिः स्तुतिभिः कः क्रीणाति क्रयं करोति के तदानीं क्रेतारो युष्माकं मध्ये एवमपि समयः क्रियते यदाऽयमिन्द्रो वृत्राणि त्वदीयान् शत्रून् जंघनत् हन्यात् अथानन्तरमेवैनमिन्द्रं मे मह्यं पुनर्ददत् पुनर्दद्यात्" भा॰।

"निश्चित्य वस्तु तन्मूल्यमुभयोः सम्मतौ सिद्धे!। परस्पराधाकरणं क्रयसिद्धिप्रदो भवेदिति"। "क्रयसिद्धिर्दुष्टानां गुणश्रवणतो भवेत्। विपर्यये तद्गुणानामन्यथा भवति क्रयः" मङ्गा॰ नि॰ त॰

**क्रयलेख्य** न॰ ६त॰। "क्षेत्रं गेहादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" इत्युक्तलक्षणे क्रयसूचकपत्रे (कवाला)।

**क्रयविक्रय** पु॰ द्वि॰ स॰। द्वयोः क्रये विक्रये च। "आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ। विचार्य्य सर्वपण्यानां कारयेत् क्रयविक्रयौ। पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते। कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः" मनुः। "आगमनिर्गमोपयोगादेः पण्यानामनियतत्वात् अस्थिरार्घाणां पञ्चरात्रे पञ्चरात्रे गते, स्थिरतरार्घाणां पक्षे पक्षे गते वणिजामर्घविदां प्रत्यक्षं नृपतिराग्रपूर्वेण व्यवस्थां (मूल्यस्य) कुर्य्यात्" कुल्लू॰। "क्रयविक्रयानुशयश्च विवादः स्वामिपालयोः" मनुः। क्रयसहितो विक्रयः शा॰ त॰। २क्रयसहितविक्रये। "देवदानवगन्धर्वयक्षराक्षसपन्नगाः। नासन् कृतयुगे तात! तदा न क्रयविक्रयः" भा॰ व॰ १४८अ॰। तद्युक्ते वाणिज्ये "ऋणदानं तथाऽऽदानं पशूनां क्रयविक्रयम्। न कुर्य्याद्गुरुणा सार्द्धं शिष्योभूत्वा कदाचन" तन्त्रसा॰।

**क्रयविक्रयानुशय** पु॰ क्रये विक्रये चानुशयः पश्चात्तापः। मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे। स च द्विविधः क्रीतानुशयो विक्रीतानुशयश्च। अनुशयशब्दे १८६पृष्ठे तत्र द्विवृतिः दृश्या। अधिकं क्रीतानुशयशब्दे वक्ष्यते।

क्रयविक्रयिक पु० क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने "वस्नक्रयविक्रयाट् ठन्" पा० क्रयविक्रयग्रहणं व्यस्तसमस्तविग्रहम् तेन व्यस्तादपि ठन्। क्रयिक विक्रयिक तेन जीविनि त्रि०।

क्रयशीर्ष न० क्रयिशीर्ष+पृषो०। क्रयिशीर्षे त्रिका०।

क्रयाकन्दिका कुत्सितः अकन्दः शाक० स्वार्थे क अत-इत्वम्। कदे अकदे च।

क्रयारोह पु० क्रयस्य क्रयार्थमारोहत्यत्र आ+रुह आधारे घञ् चतुर्थ्यर्थे इत०। हट्टे (हाट) हारा०।

क्रयिक त्रि०क्रयेण जीवति क्रयात् व्यस्तादपि ठन्। वणिग्जने "दर्शयतः क्रयिकलोकमगणानुपगम्येत्यादि" माघः क्रय+प्रयोजनमस्य ठन्। २क्रेतरि "धनेन क्रयिको हन्ति खादकश्चोपभोगतः। घातको वधबन्धाभ्यामित्येष त्रिविधो वधः" भा० आनु० ११५अ०

क्रय्य त्रि० क्रयाय क्रेतारः क्रयाणं सर्वतुद्रव्या प्रसारितम् क्री–यत् "क्रय्यस्तदर्थे" पा० नि०। क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये "क्रय्यास्ते सोमो राजा इति क्रय्य इत्याह सोमविक्रयी" शत० ब्रा० ३,३,३,१.

क्रवण त्रि० क्रु–ड–शब्दे ल्यु। स्तुतिकर्त्तरि "अथा न वाहि क्रवणस्य रेजते" ऋ० ५,४४,९, "क्रवणस्य स्तुतिकर्त्तुः" भा० भावे ल्युट्। २शब्दकरणे न०

क्रविष्णु त्रि० क्रु–बा०इष्णुच्। क्रव्यादे राक्षसादौ "क्रव्यात् क्रविष्णुर्विविनोतु वृक्णम्" ऋ० १,८७,४,

क्रविस् न०क्रुव–इसुन्बाहुल०। मांसे क्रव्ये। "यदश्वस्य क्रविषो मक्षिकाश" ऋ०१,१६२,९,१०, "क्रविषः मांसस्य" भा०

क्रव्य न० क्रुव–यत् अस्य रः। आममांसे अमरः। "स्फुटगतमपि क्रव्यमव्यग्रमत्ति" मालती०। "क्रव्यादाः प्राणिनां क्रव्यं दुदुहुः स्वकलेवरात्" भाग० ४,१८,२२,। मांसभेदाश्चतुर्गुणाश्च सुश्रुते उक्ता यथा

"अत ऊर्द्ध्वं मांसवर्गानुपदेक्ष्यामः तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गास्तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः तद्यथा—जाङ्गला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा विलेशया ग्राम्याश्चेति। तेषां जाङ्गलविष्किरौ प्रधानतमौ तत्रैणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करश्चर्मणमातृकाप्रभृतयो जाङ्गला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च। कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा। संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः। मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः। शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः। एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते। न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते। शीतासृक्पित्तशमनी विज्ञेया मृगमातृका। सन्निपातक्षयश्वासकासहिक्काऽरुचिप्रणुत्। लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावार्त्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रककुतित्तिरिकुररोङ्कययनकप्रभृतयः क्राङ्कणा विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च। संग्राही दीपनश्चैव कषायमधुरो लघुः। लावः कटुर्विपाकश्च सन्निपाते प्रपूजितः। ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः। तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः। रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः। कफोत्थेषु च रोगेषु मन्दवाते च शस्यते। वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः। लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः। कषायः स्वादुलवणस्त्वच्यः केश्योरुचिप्रदः। मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियकार्यकृत्। स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः। वृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः। वातरोगक्षयवमीविषमज्वरनाशनः। कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिमाणवकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टूषकसुगृहीखञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः। कषायमधुरा रूक्षाः फलाहारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः। सर्वदोषकरस्तेषां भेदाशी मलदूषकः। कषायस्वादुलवणो गुरुः काककपोतकः। रक्तपित्तप्रशमनः कषायविशदोऽपि च। विपाके मधुरश्चापि गुरुः पारावतः स्मृतः। कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः। सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयो गुहाशयाः। मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः। उष्णवीर्या हिता नित्यं नेत्रगुह्यविकारिणाम्। काककङ्ककुररचाषभासशशघात्युलूकचिल्लश्येनगृध्रप्रभृतयः प्रसहाः। एते सिंहादिभिः सर्वे समाना वायसादयः। रसवीर्यविपा-

तेषु विशेषाश्चोत्तिमे स्थिताः । मद्गुमूषिकहरगादि-
कासकुशपूतिवासशानरप्रभृतयः प्रसहसमाः । मधुरा
गुरवो ह्युष्णवीर्याः शीतविषे स्थिताः । सृष्टमूत्रपुरीषाश्च
कासार्शःश्वासनाशनाः । श्वाविच्छल्यकगोधाशशवृषदंशलो-
पाकलोमशकर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुल-
महाबभ्रुप्रभृतयो विलेशयाः । वर्चोमूत्रं संहतं कु-
र्वन्तेते वीर्ये चोष्णाः पूर्ववत् स्वादुपाकाः । वातं घ्नन्ति
श्लेष्मपित्ते च कुर्युः स्निग्धाः कासश्वासकार्श्यापहाश्च ।
कषायमधुरस्तेषां शशः पित्तकफापहः । नातिशीतल-
वीर्यत्वाद्वाते साधारणो मतः । गोधा विपाके मधुरा
कषायकटुका स्मृता । वातपित्तप्रशमनी बृंहणी बल-
वर्द्धिनी । शल्लकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।
प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः । दुर्नामा-
निलदोषघ्नाः कृमिदूषीविषापहाः । चक्षुष्या मधुराः
पाके सर्पा मेधाग्निवर्द्धनाः । दर्वीकरा दीपकाश्च तेषूष्णाः
कटुपाकिनः । मधुराश्चाक्षिचक्षुष्याः सृष्टविण्मूत्रमा-
रुताः । अश्वाश्वतरगोखरोष्ट्रबस्तौरभ्रमेदःपुच्छकप्रभृतयो
ग्राम्याः । ग्राम्या वातहराः सर्वे बृंहणाः कफपित्त-
लाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः । ना-
तिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः । छागस्त्व-
नभिष्यन्दी तेषां पीनसनाशनः । बृंहणं मांसमौरभ्रं
पित्तश्लेष्मावहं गुरु । मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं
गुणैः । श्वासकासप्रतिश्यायविषमज्वरनाशनम् । श्रमा-
त्यग्निहितं गव्यं पवित्रमनिलापहम् । औरभ्रवत्सलवणं
मांसमेकशफोद्भवम् । अल्पाभिष्यन्दिनश्चैते वर्गो जाङ्गलः
समुदाहृतः । दूरे जनान्तनिलया दूरे पानीयगोचराः ।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः । अ-
तोऽन्यथा निलया समीपोदकगोचराः । ये मृगाश्च वि-
हङ्गाश्च महाभिष्यन्दिनस्तु ते । आनूपवर्गस्तु पञ्चविधः
तद्यथा कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्या-
श्चेति । तत्र गजगवयमहिषरुरुचमरसृमररोहित-
वराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतयः
कूलचराः पशवः । वातपित्तहरा वृष्या मधुरा रस-
पाकयोः । शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्ध-
नाः । विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः । स्वा-
द्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः । गवयस्य तु
मांसं हि स्निग्धं मधुरकासजित् । विपाके मधुरं
चापि व्यवायस्य तु वर्द्धनम् । स्निग्धोष्णमधुरो वृष्यो
महिषस्तर्पणो गुरुः । निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांस-
दार्ढ्यकृत् । रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् । तथा चमरमांसन्तु
स्निग्धं मधुरकासजित् । विपाके मधुरं चापि वातपित्त-
प्रणाशनम् । सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् । स्वेदनं बृंहणं
वृष्यं शीतलं तर्पणं गुरु । स्निग्धं श्रमानिलहरं वाराहं
बलवर्द्धनम् । कफघ्नं खड्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् । गोकर्ण-
मांसं मधुरं स्निग्धं मृदु कफावहम् । विपाके मधुरञ्चापि
रक्तपित्तविनाशनम् । हंसकारण्डवक्रौञ्चचक्रवाककुररका-
दम्बकारण्डवजीवञ्जीवकवकबलाकापुण्डरीकप्लवशरारी-
मुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्कर-
शायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतवारलप्रभृतयः
प्लवाः संघातचारिणः । रक्तपित्तहराः शीताः
स्निग्धा वृष्या मरुज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रस-
पाकयोः । गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
बृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः । शङ्खशङ्ख-
नखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः । कूर्मकुम्भीर-
कर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः । शङ्खकू-
र्मादयः स्वादुरसपाका मरुन्नुदः । शीताः स्निग्धा हिताः
पित्ते वर्चस्याः श्लेष्मवर्द्धनाः । कृष्णकर्कटकस्तेषां बल्यः
कोष्णोऽनिलापहः । शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनि-
लपित्तहा । मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च । तत्र
नादेयाः । रोहितपाठीनपाटलाराजीववर्मिगोमत्स्य-
कृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः । ना-
देया मधुरा मत्स्या गुरवो मारुतापहाः । रक्तपित्तकरा-
श्चोष्णा वृष्याः स्निग्धाल्पवर्चसः । कषायानुरसस्तेषां शष्प-
शैवालभोजनः । रोहितो मारुतहरो नात्यर्थं पित्तको-
पनः । पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ।
दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ । मुरलो बृंहणो
वृष्यः स्तन्यश्लेष्मकरस्तथा । सरस्तडागसम्भूताः स्निग्धाः
स्वादुरसाः स्मृताः । महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः
स्मृताः । तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दि-
वारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सा-
मुद्राः । सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्द्धनाः । बला-
वहा विशेषेण मांसाशित्वान्महाबलाः । तेषामप्य-

निम्नगत्वादीषद्गतौ पश्चौ गुणोत्तरौ। स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणोत्तराः। नादेया गुरवो मध्ये यस्मात्पुच्छास्यचारिणः। सरस्तडागजातानान्तु विशेषेण शिरोलघु। अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः। किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते। अधस्तादुरसो ज्ञेया गुरवः सारसाः स्मृताः। उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम्। इत्यानूपो महाभिष्यन्दिमांसवर्गो व्याख्यातः। तत्र शुष्कपूतिव्याधितविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मांसान्यभक्ष्याणि यस्माद्विगतव्यापन्नापहृतपरिणतत्वाभिपूर्णशीर्णत्वाद्दोषकराणि भवन्ति। जरोपहतं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम्। विषव्याधिहतं मृत्युं बालं छर्दिञ्च कोपयेत्। कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम्। क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम्। एभ्योऽन्यथा ग्राह्यं मांसमिति। स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेष्वल्पशरीरा अल्पशरीरेषु महाशरीराः प्रधानतमा एकजातीयानां महाशरीराः प्रधानतमाः। स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरेषु गुरुतरास्तथा सक्थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्म्मकालेयकयकृदन्त्राणि। शिरःस्कन्धं कटीपृष्ठं सक्थिनी चात्मपक्षयोः। गुरुपूर्वं विजानीयाद्धातवस्तु यथोत्तरम्। सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः। पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम्। उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्। पक्षोत्क्षेपात्समो दृष्टो मध्यभागस्तु पक्षिणाम्। अतीव रूक्षं मांसन्तु विहङ्गानां फलाशिनाम्। बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम्। मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम्। जलजानूपजा ग्राम्याः क्रव्यादैकशफास्तथा। प्रसहा विलवासाश्च ये च जाङ्गलसंज्ञिताः। प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम्। अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा। प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च। सर्वप्राणिनां सर्वशरीरेभ्यो प्रधानतमा भवन्ति यकृद्देशवर्त्तिनस्तानाददीत प्रधानलाभाभावे मध्यमवयस्कं सद्यस्कमकृशमुपादेयं मांसमिति। भवति चात्र। वयः शरीरावयवाः स्वभावो धातवः क्रिया। लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्षिता"।

क्रव्यघातन पु० क्रव्यस्य क्रव्यार्थं घात्यतेऽसौ हन–स्वार्थे णिच्–कर्म्मणि ल्युट् घत्वादि हन०। १मृगमात्रे शब्दच०। क्रव्यार्थं घातयन्ति घाति–ल्यु। मांसार्थघातके रुरुरूपे मृगभेदे "यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति" भाग० ५।२६।१२ तस्य तथात्वोक्तेः "क्रव्येण निमित्तेन मांसार्थम्" श्रीधरः

क्रव्यभुज् पु० क्रव्यं भुङ्क्ते भुज–क्विप्। १क्रव्यादे राक्षसे २क्रव्यादे रुरुरूपे मृगभेदे च "सशैल्यजः क्रव्यभुगेषमांसयोर्हितः सर्पिः समधुः पुटाह्वयः" सुश्रु०। ३मांसभोक्तृमात्रे त्रि०।

क्रव्याद् पु० क्रव्यं मांसमत्ति अद–क्विप्। १राक्षसे २मांसाशिनि त्रि० मेदि० "क्रव्याद्गणपरीवारश्चितान्लिरिव जङ्गमः। रघुः "क्रव्यादः स्वप्रादपः" भट्टि० "क्रव्याद्भिरिव भूतस्थान्यैः" मनुः "क्रव्याद्भिः व्याघ्रादिभिः" कुल्लू० "स्तेनगायकवर्जितौ याप्यैः क्रव्याद्भिरेव" मनु० च ३शवदाहके अग्निभेदे "अथाग्ने कल्पमाशादं जहि निष्क्रव्यादं सेधेत्ययं वा आमाद् येनेदं मनुष्याः पक्वाऽदन्ति अथ येन पुरुषं दहन्ति स क्रव्याद् एतावेवैतदुभावतोऽपहन्ति" शत० ब्रा० ११।२।२।७। "हे अग्ने ! गार्हपत्य ! आमादमग्निमपजहि परित्यज तथा क्रव्यादमग्निं निःसेध निःशेषं दूरे गमय" वेददी० "योऽग्निं क्रव्यात् प्रविवेश वो गृहम्" ऋ० १०।१६।१० क्रव्याद्योनिप्राप्तिश्च गुरुतल्पगमनमहापातकशेषवतां समुक्ता यथा "तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणां तथा। क्रूरकर्म्मकृताञ्चैव शतशो गुरुतल्पगः"

क्रव्याद पु० क्रव्यमत्ति अद–अण् उप० स०। १राक्षसे २मांसभोजिमात्रे त्रि० स्त्रियां टाप् सि०कौ०। "क्रव्यादः पर-भक्षणे" विधानपा० ५०सू० उक्ते ३सर्पभेदे।

यज्ञे च क्रव्यादत्वं भा० आ०७अ० भृगुणा सर्वभक्षत्वशापे अग्नये दत्ते तत्परिहारार्थं ब्रह्मणक्रव्यादत्वादुक्तम् "कथं देवमुखो भूत्वा यज्ञभागाग्रभुक् तथा। हुतभुक् सर्वलोकेषु सर्व्वभक्षत्वमेष्यति" इत्युपक्रमे "लोकानामिह सर्व्वेषां त्वं कर्त्ता चान्त एव च। त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च प्रवर्त्तकः। स तथा कुरु लोकेश ! नोच्छिद्येरन् यथा क्रियाः। कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन !। त्वं पवित्रं सदा लोके सर्व्वभूतगतिश्च ह। न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि। अपाने ह्यर्चिषो यास्ते सर्वं भोक्ष्यन्ति ताः शिखिन् !। क्रव्यादा

द्वित गोले निबध्नीयादिति तात्पर्यार्थः । भासयन् भुवनानि प्रकाशयन् सन् सः सूर्यः । एतेन चन्द्रादीनां निरासः । सदा निरन्तरं तया क्रान्तिमण्डलरूपया कक्षया पर्य्येति सामकक्षया गच्छन् भगणपरिवृत्तिभोगं करोति । सूर्य्यगत्यनुरोधेन नियतं क्रान्तिवृत्तं कल्पितमिति भावः । ननु चन्द्राद्याः क्रान्तिवृत्ते कुतो न गच्छन्तीत्यत आह" रङ्ग० "चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रितैः । ततोऽपकृष्टा दृश्यन्ते विक्षेपान्तेष्वपक्रमात्" सू० "चन्द्रादयोऽर्कव्यतिरिक्ता ग्रहाः स्वकैः स्वकीयैः पातैः पाताख्यदैवतैरपमण्डलं क्रान्तिवृत्तमाश्रितैः स्वस्वगोलस्थानेऽधिष्ठितैस्ततः क्रान्तिवृत्तान्तर्गतग्रहभोगस्थानादित्यर्थः । चक्राराद्विक्षेपान्तरेणापकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति । अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः । दक्षिणत उत्तरतो वा विक्षेपान्तेषु गणितागतविक्षेपकलाग्रस्थानेषु भूस्थजनैर्दृश्यन्ते । तथा च क्रान्तिवृत्तं यथा विषुवन्मण्डलेऽवस्थितं तथा क्रान्तिवृत्ते पातस्थाने तत्षड्भान्तरस्थाने च लग्नमुक्तपरमविक्षेपकलाभिस्त्रिभान्तरस्थानादूर्द्ध्वाधःक्रमेण दक्षिणोत्तरतो लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं भिन्नं कल्पितं तत्र गच्छन्तीति भावः" रङ्ग०

क्रान्तिस्पष्टताप्रकारश्च सू० सि० रङ्गनाथाभ्यां दर्शितो यथा "अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" रङ्ग० "विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता । दिग्भेदे वियुता स्पष्टा भास्करस्य यथा गता" सू० सि०

"यस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनांशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतग्रहगोलदिक्का ज्ञेया । तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनग्रहगोलदिक्को ज्ञेयः । गोलस्तु मेषादिषड्भस्थत्वे उत्तरस्तुलादिषट्के दक्षिणः । अथ शरक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुताऽन्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात् । ननु सूर्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति । सूर्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः । अत्रोपपत्तिः । विषुवद्वृत्ताद्ग्रहबिम्बकेन्द्रपर्य्यन्तं याम्योत्तरं चान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमितमन्तरमिति । अत्र शरस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकश्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपालुना । अन्यथा शरस्य ध्रुवाभिमुखत्वे भगवदुक्तमावनत्वकर्म्म कथमव्याहतं स्यादित्यलम्" रङ्गनाथः ।

रवेर्गक्रान्तिवशेन दिनरात्रिभेदः सू० सि० रङ्गनाथाभ्याम् "हानिवृद्धी सदा वामं सुरासुरविभागयोः" इति दिनरात्र्योर्हानिवृद्धी सुरासुरविभागयोर्भवत इत्युपक्रम्य विशदीकृत्य दर्शितो यथा

"मेषादौ तु सदा वृद्धिरुदगुत्तरतोऽधिका । देवांशे च क्षपाहानिर्विपरीतं तथाऽऽसुरे । तुलादौ द्युनिशोर्वामं क्षयवृद्धी तयोरुभे । देशक्रान्तिवशान्नित्यं तद्विज्ञानं पुरोदितम्" सू० "मेषादौ षड्भे उदगुत्तरगोले सूर्ये सति उत्तरतो यथोत्तरं सदा यावदुत्तरगोले देवांशे जम्बूद्वीपेऽधिका यथोत्तरमधिका वृद्धिर्निरक्षदेशीयदिने । तुलाराद्ययोत्तरं सूर्यस्योत्तरगमने यथोत्तरं दिने वृद्धिः परमोत्तरगमनात् परावर्त्तते । यथोत्तरं न्यूना वृद्धिरित्यर्थः । क्षपाहानी रात्रेरपचयः । चः समुच्चये । आसुरे समुद्रादिदक्षिणभागे तथा दिनरात्र्योः क्षयवृद्धी विपरीतं व्यस्तम् । दिने हानी रात्रौ वृद्धिरित्यर्थः । तुलादौ षड्भे दक्षिणगोले सूर्ये सति तयोर्जम्बूद्वीपसमुद्रादिदक्षिणभागयोर्दिनरात्र्योरुभे द्वे क्षयवृद्धी उपचयापचयौ वामं व्यस्तम् । अयमर्थः जम्बूद्वीपे दिनरात्र्योरुत्तरगोलस्थरविवदक्रमेण क्षयवृद्धी स्तः । समुद्रादिदक्षिणभागे दिनरात्र्योर्वृद्धिक्षयौ स्त इति । ननु क्षयवृद्ध्योः कियन्मितत्वमित्यतः पूर्वोक्तं स्मारयति देशक्रान्तिवशादिति । तद्विज्ञानं तयोः क्षयवृद्ध्योर्ज्ञानं पूर्वकथितं नित्यं प्रत्यहं देशक्रान्तिवशात् । देशपलभा क्रान्तिरेतदुभयानुरोधात् पुरा पूर्वस्पष्टाधिकारे "क्रान्तिज्या विषुवत्कर्णी क्षितिज्या द्वादशोद्धृता । त्रिज्यागुणाहोरात्रार्द्धकर्णाप्ता चरजासवः" । तत्कार्मुकमित्यनेन दिनरात्र्योरर्द्धं उक्तम् तद्द्विगुणं दिनरात्र्योरित्यर्थसिद्धम् । अत्रोपपत्तिः । निरक्षदेशे ध्रुवद्वयलग्नक्षितिजवृत्तं तत्र उत्तरभागे स्वस्थानक्षितिजं स्वभूगोलमध्यस्थमुत्तरध्रुवादधो दक्षिणध्रुवाच्चोर्द्ध्वमत उत्तरगोले निरक्षक्षितिजादधो दक्षिणगोले ऊर्द्ध्वमिति पञ्चदशघटिका निरक्षदेशदिनार्द्धं क्षितिजान्तरकृतचरेण गोलक्रमेण युतहीनं दिनार्द्धं रात्र्यर्द्धं च विपरीतम् । एवं दक्षिणभागेऽभीष्टदेशे क्षितिजमुत्तरध्रुवादुन्नतं दक्षिण-

किञ्च कर्हि नियतौ यदोदितौ" इति भास्कराचार्योक्ते तच्छ्लोके रङ्गनाथः।

**क्रान्तिक्षेत्र** न० क्रान्तिज्ञानार्थं क्षेत्रम्। सि० शि० उक्ते अक्षक्षेत्राकारे पदार्थे यथा

"क्षेत्राणि वक्ष्येऽपमसंभवानि संक्षेपतोऽक्षप्रभवाणि यानि। भुजोऽपमः कोटिगुणो द्युजीवा कर्णस्त्रिभज्या त्रिभुजेऽपमीये। मेषादिजीवाः श्रुतिरोऽपवृत्ते तद्भूमिजे क्रान्तिगुणा भुजाः स्युः। तत्कोटयः स्वद्युनिशाख्यवृत्ते व्यासार्धवृत्ते परिणामनानाम्। चापेषु तासामयवक्रतो वे तेऽन्यो विशुद्धा उदया निरक्षे" सि० शि०

**क्रान्तिज्या** स्त्री क्रान्तिवृत्तज्यावत्स्वे सि० शि० उक्ते अपवृत्तावयवभेदे। अपवृत्तशब्दे ४२१० पृ० अपवृत्तानि उक्तानि। तन्मानानयनम्।

"युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् चरभुक्तभोग्यौ। जिनांशमौर्व्या १३९७ गुणितार्कदोर्ज्या त्रिज्याहृता क्रान्तिगुणोऽस्य चापम्। त्रिज्याकृतेः ११८१९८४४ प्रोज्झ्य पदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम्। अक्षप्रभासंगुणितापमज्या तद्द्वादशांशो भवति क्षितिज्या सि० शि०।

"अत्र खेटादिकृपमसाधनम्। यस्मात् खेटात् क्रान्त्याद्यपमः साध्यस्तस्मात् सायनांशादेव। तथा यस्मादुदयसम्बन्धिनौ भुक्तभोग्यकालौ साध्यौ तस्मादपि सायनांशादेव। सायनार्कस्य दोर्ज्या जिनभागज्यया गुणिता त्रिज्यया भक्ता क्रान्तिज्या स्यादित्यादि स्पष्टार्थम्।

अत्रोपपत्तिः। विषुवत्क्रान्तिवृत्तयोर्याम्योत्तरमन्तरं क्रान्तिः। तयोः संपाते क्रान्त्यभावः। ततस्त्रिभेऽन्तरे परमा जिन २४तुल्यभागाः। अतस्तत्संपातादारभ्य क्रान्तिः साध्या। उदयाश्च तत एव। स तु संपातो मेषादेः प्रागयनांशतुल्येऽन्तरे। अतः सायनांशात् खेटात् क्रान्तिर्भुक्तभोग्यकालौ चेत्युक्तम्। यदि त्रिज्यातुल्यया भुजज्यया जिनांशज्यातुल्या क्रान्तिज्या लभ्यते तदेष्टज्यया किमिति। फलं क्रान्तिज्या विषुवद्वृत्तात् तिर्यग्रूपा भवति। क्रान्तिज्या मूलाग्रज्या कर्णस्तद्गर्भान्तरपदम्-कोटिरास्त्र्यस्रत्वाकारम्। सैव द्युज्या" प्रमि०।

देशभेदे कालभेदेन रवेः क्रान्तिज्याज्ञानार्थं प्रश्नपूर्वकं सि० शि० निर्णीतं यथा

"मार्तण्डः समनमण्डलं किल यदा दृष्टः प्रविष्टः सखे! काले पञ्चघटीमिते दिनगते यद्वा नते तावति। केनाप्युज्जयिनीगतेन तरणेः क्रान्तिं तदा वेत्सि चेत्तन्त्रे त्वां निपुणं सगर्वगणकोत्तंसं भजाम्यागमम्"।

"हे गणक! केनचित् किलोज्जयिनीगतेन यदा दिनगते पञ्चघटीमिते काले मार्तण्डः समनमण्डलं प्रविष्टो दृष्टस्तदा कियती क्रान्तिज्येत्येकः प्रश्नः। अथान्यः तावति पञ्चघटीमिते नते वा काले समण्डलं प्रविष्टो दृष्टस्तदा च या क्रान्तिज्या तां त्वं चेद्वेत्सि तदा सगर्वगणकोत्तंसभक्त्याहं यं निपुणोद्भूतं त्वामहं मन्ये" प्रमि०

"या स्वाद्युजैषचरकालकौशभोद्या द्युतिः सा प्रथमं प्रकल्प्या। अर्कोऽक्षभाघातहृताक्षकर्णहृल्लोद्भुता स्यादपमज्यकाऽस्याः। चरादिकेनेष्टधृतिः प्रसाध्या द्युगुणस्तया क्रान्तिगुणोऽसकृच्च। तदाद्यधृत्या विधृतः स्फुटः स्यात् यद्वा रवौ समनमण्डलस्थे" सि० शि०।

"रवेः समनमण्डलप्रवेशे य उन्नतकालः दृष्टस्तस्य जीवा सा तावत् प्रथममिष्टधृतिः कल्प्या। ततो द्वादशगुणया तया गुणया पलकर्णेनैव भाज्या। सा किल स्थूला क्रान्तिज्या भवति। तस्याः क्रान्तिज्याया द्युज्यां कुज्यां चरज्यां चरं च कृत्वा "अथोन्नताद्युनगुणाद्धरेण" इत्यादिनेष्टधृतिः साध्या। तया पूर्वभागात् क्रान्तिज्या गुणया। आद्यधृत्या कल्पितया भाज्या। फलं स्फुटासन्ना क्रान्तिज्या भवति। अत्रोपपत्तिः। अत्रोन्नतकालजीवातुल्या प्रथमं तद्धृतिः कल्पिता। तस्या अनुपातेन शङ्कुः। यदि पलकर्णेन द्वादशकोटिस्तदा तद्धृतिकर्णेन किमिति। अत्र तद्धृतेर्द्वादशगुणः पलकर्णो हरः। फलं समनमण्डलशङ्कुः। पुनरन्योऽनुपातः। यदि पलकर्णे नाक्षभा भुजो लभ्यते तदा समनमण्डलशङ्कुतुल्येन कर्णेन किमिति। फलं क्रान्तिज्या स्थूला। अस्याः क्रान्तिज्यायाश्चरादिकेन "अथोन्नताद्युनगुणाद्धरेण" इत्यादिनेष्टधृतिः साध्या। तां तद्धृतिं प्रकल्प्य पुनः क्रान्तिज्या साध्या। एवमसकृद्यावदविशेषः। तत्रापलकर्मेऽपि त्रैराशिकेन क्रियोपसंहारः कृतः। यदि कल्पितया धृत्येयं क्रान्तिज्या लभ्यते तदेदानीमानीतया किमिति। एवं क्रान्तिज्या स्फुटा स्यादित्युपपन्नम्। इदानीं द्वितीयप्रश्नोत्तरमाह" प्रमि०

"तद्वा नतज्यात्रिभजीवयोर्यद्वर्गान्तरं तत् पलभाकृतिघ्नम्। तेनोद्धृतो व्यासदलस्य वर्गो वेदेन्द्र १४४निघ्नोऽथ फलद्युतज्या। व्यासार्धवर्गाद्युतात् पदं स्यात् क्रान्तिज्यका सा त्रिभजिह्निनीघ्नी। जिनांशमौर्व्या विहृताऽथ चापादपमः स यथा रविः स्यात्" सि० शि०।

"क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽन्यच्चिह्नं कार्यम्। ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्नाद्यतस्त्रिभेऽन्तरे नाडीवृत्ताद् गचतुर्विंशत्योत्तरतो यथा भवत्यपरविभागे त्रिभेऽन्तरे दक्षिणतश्च, तैर्भागैर्दैवा भवति तथा बध्नीयात्"। प्रमि॰ चक्रिकंक्रान्तिशब्दे दृश्यम्। क्रान्तिवलयक्रान्तिमण्डलादयोऽप्यत्र।

क्रान्तिसाम्य न॰ ६त॰। ग्रहाणां तुल्यक्रान्तौ। यद्यपि सर्वग्रहाणां क्रान्तिसाम्यमस्ति तथापि चन्द्रार्कयोः क्रान्तिसाम्यस्य मङ्गलकार्ये वर्ज्जनीयता १८६५पृ॰व्यपसमशब्दे विस्तरेण दर्शिता। क्रान्तिसाम्ये च ग्रहाणामवनत्यभावः सू॰ सि॰ दर्शितोयथा "अक्षोदग्मध्यमक्रान्तेः साम्ये नावनतेरपि" सू॰ सि॰

"अक्षांशा उत्तरा ये मध्यमस्य मध्यलग्नस्य क्रान्त्यंशाः। अत्र मध्यलग्नशब्देन दशमभावस्त्रिभोनलग्नं वा ग्राह्यमुभयपक्षेऽप्यदोषः। अनयोस्तुल्यत्वेऽवनतेर्नतेः अपिशब्दात् लम्बनस्य न अभाव इत्यर्थः" रङ्गनाथः।

क्रान्तिसूत्र न॰ सि॰शि॰ उक्ते ध्रुवस्थानि क्रान्तीनां सूत्राकारे योगभेदे। "सर्वतः क्रान्तिसूत्राणां ध्रुवे योगोऽभेद्यतः। विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा" सि॰ शि॰।

क्रान्तु पुंस्त्री क्रम–तुन् इदित्त्व। पक्षिणि उज्ज्वलद॰।

क्रायक त्रि॰ क्री ण्वुल्। १क्रेतरि अमरः २क्रयजीविनि भरतः तद्भिन्नं तत्र क्रयिक इत्येव साधु जीवतीत्यर्थे वस्नादिपि क्रयशब्दात् ठन्विधानात्।

क्रावन् त्रि॰ क्रम–वनिप् "विड्वनोरनुनासिकस्यात्" पा॰ नस्यात् क्रान्तरि "दधिक्रावणोऽकारिषं जिष्णोरश्वस्य वाजिनः" यजु॰२३।३२। स्त्रियां ङीप् रचान्तादेशः क्रावरी।

क्रिमि पु॰ क्रम–इन् अतइत्व। १कृमौ क्षुद्रजन्तौ उज्ज्वल॰ २रोगभेदे कृमिशब्दे २१८४पृ॰ विवृतिः। "कृमयस्तु द्विधा प्रोक्ताः बाह्याभ्यन्तरभेदतः। बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः। नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः" "तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः। बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः" माधवः। "क्रिमयः क्रिमित्वं यथा" भाग॰ ३,३१।२८, [मेदि॰

क्रिमिकण्टक न॰ क्रिमौ कण्टकमिव। क्रमिकण्टकशब्दार्थे

क्रिमिघ्न पु॰ क्रिमिं हन्ति हन–टक्। १विडङ्गे रमानाथः। २कृमिनाशके त्रि॰ स्त्रियां ङीप्। सा च १सोमराज्यां स्त्री शब्दच॰। [२वार्त्ताकां स्त्री रत्नमाला।

क्रिमिज न॰ क्रिमेर्जायते जन ड ५त॰। १अगुरुचन्दने अमरः

क्रिमिशत्रु पु॰ क्रिमेः शत्रुरिव नाशकत्वात्। रक्तपुष्पके (पालदामादार) शब्दच॰। [खदिरे शब्दच॰।

क्रिमिशात्रव पु॰ क्रिमेः शात्रवइव नाशकत्वात्। विट्-

क्रिमिशैल पु॰ क्रिमिनिर्म्मितः शैलः। वल्मीके (उइ-ढिपि) त्रिकाण्ड॰

क्रिय पु॰ क्रिया प्रहाणामाद्यमतिक्रिया विद्यतेऽत्र अच्। मेषराशौ दीपिका कौर्पशब्दे २२७८पृ॰ प्रमाणं दृश्यम्। "क्रियैणतौलीन्दुमतीनवांशाः" नील॰ ता॰।

क्रिया स्त्री कृ–भावे करणादौ वा यथायथं श। १आरम्भे २निष्कृतौ (प्रायश्चित्ते) ३शिक्षायां ४पूजायां ५संप्रधारणे (विवादविचाराङ्गे साधने) ६सामाद्युपाये। ७अध्ययनादिसहिते उत्क्षेपणादौ कर्म्मणि व्याकरणमतसिद्धे ८धात्वर्थे ९चेष्टायां (परिस्पन्दे) १०चिकित्सायां च अमरः। ११करणे(अनुष्ठाने)हेम॰। १२श्राद्धे क्षीरस्वामी। १३शौचे शब्दरत्ना॰। १४प्रयोगे च तत्र न्यायमतसिद्धा क्रिया कर्म्मशब्दे १७५५पृ॰ दर्शिता। कर्म्मलक्षणन्तु औलूक्यशब्दे सर्व॰द॰ वाक्ये १५८६पृ॰ उक्तम् तत्र अनित्यमात्रसमवेतत्वे सतीतियुक्तम् नित्यमात्रसमवेतत्वाभावादित्ययुक्तम् अनित्यमात्रसमवेतत्वाभावादिति युक्तम्। वैयाकरणमते तु धात्वर्थः क्रिया तत्स्वरूपप्रकारादि शब्दार्थरत्नेऽस्माभिर्निरूपितं यथा

"क्रिया च भावना उत्पादयितृव्यापाररूपा साध्यत्वेनाभिधीयमानेति बोध्यम्। "व्यापारो भावना सैवोत्पादना सैव च क्रियेति" हर्य्युक्तेः "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते" इति "साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते" इति च वाक्यपदीयाच्च। "यावदिति सर्वं मित्यर्थः तदेव विवृणोति सिद्धमसिद्धं वेति। सिद्धं वर्त्तमानध्वंसप्रतियोगि, तद्भिन्नमसिद्धं तच्च वर्त्तमानं भविष्यच्चेति द्विविधं तेनापचत् पक्ष्यति पचतीत्यादौ सर्वत्र साध्यत्वेन असत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिरनेन दर्शितेति भावः। यौगिकत्वमप्याह आश्रितक्रमरूपत्वादिति। आश्रितःक्रमो रूपं यस्यास्तत्त्वात् पूर्वापरीभूतावयवकत्वादित्यर्थः। तदीयावयवानामधिश्रयणाद्यधःश्रयणपर्य्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन तत्समुदायोऽभिधीयते यत्र च न क्रमिको व्यापारोऽस्ति तत्र रूढिरादरणीयेति पौर्वापर्य्यारोपेण वा सर्वत्र फलस्य जनन-

फलव्यापारगतपौर्वापर्यारोपवत् यौगिकत्वम्। अतएव फलमात्रबोधकस्यापि क्वचित् धातुत्वसिद्धिरिति फलितार्थः। इयांस्तु विशेषः पाकइत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाः सिद्धक्रियारूपे घञर्थे विशेषणत्वं पचतीत्यादौ तु नैवमिति। अतएव "साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते" इति वाक्यपदीयकारिकाव्याख्यायां भूषणसारदर्पणे तिङ्पदैरित्यतद्गुणसंविज्ञानबहुव्रीहिणा तिङन्तपदैर्धातुभिरित्यभिहितम्। तेन सर्वत्र धातोः साध्यरूपक्रियाबोधकत्वम्। किन्तु क्रियाकाण्डानामेकदाऽसत्त्वेऽपि यत्किञ्चिदवयवसत्त्वकाले वर्त्तमानत्वव्यवहारः अवयवावयविनोरभेदारोपात्। भूतभविष्यत्त्वव्यवहारस्तु सर्वेषामवयवानां भूतभविष्यत्त्वयोरेव, न तु यत्किञ्चित्क्रियाव्यक्तिभूतत्वादौ। उक्तञ्च वाक्यपदीये "गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति। अस्यार्थः क्रमिकतत्तद्व्यापारं प्रति गुणभूतैर्गुणभावेन भासमानैरवयवैरुपलक्षितः बुद्ध्या एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिन् तद्रूपः क्रमजन्मनां व्यापाराणां समूहः क्रियेति। अत्र क्षणनश्वराणां व्यापाराणां मेलनासिद्ध्या बुद्ध्युक्तम् तदा च बुद्धिजन्यसंस्कारद्वारा तेषां मेलनसम्भव इति भावः। अतएव भाष्ये "क्रिया हि नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुमिति" व्यापारसमुदायात्मिकायाः क्रियायादर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितम्। तत्त्वाभिन्नैकबुद्धिविषयतया एकत्वव्यवहारस्त्वपि बोध्यम्। अथवाऽनेकव्यापारव्यक्तिवृत्तिजातिरेव क्रियेति सिद्धान्तस्य चादरणीयः। तस्याश्च व्यक्तिद्वारैव साध्यत्वम् अस्ति च पचित्वादिकं जातिः पचतीत्याद्यनुगतव्यवहारात् तत्तानेकव्यक्तेरेकत्वव्यवहार इति मन्तव्यम्। तदुक्तं वाक्यपदीये "जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम्। असाध्यां व्यक्तिरूपेण सा साध्येवाभिधीयते" इति। युक्तञ्चैतत् सर्वत्रैव बाधकाभावात् जातिशक्तिस्वीकारेण घटादिधातूनामपि तत्रैव शक्तिकल्पनेति दिक्। सा च क्रिया धातुवाच्या फलव्यापारोभयरूपा, नहि शब्दरूपा वा "फलव्यापारयोर्धातुः" इत्यपि भाषणात्। व्यवस्थापयिष्यते च मतभेदेन फलव्यापारयोः पृथक्शक्त्या विशिष्टशक्त्या वा धातुवाच्यता। अत्र फलांशस्य कर्त्तुरुद्देश्यत्वेऽपि प्राधान्याभावात् व्यापारस्यैव प्राधान्यं समुचितं तस्य च साध्यतया कर्मातिरिक्तसर्वकारकाणां तत्रैव स्वस्वव्यापारद्वारा साधकत्वेनान्वयः कर्मणस्तु फल एव, क्रियाजन्यफलाश्रयतयैव तस्योद्देश्यत्वादिति विवेकः। उक्तञ्च वाक्यपदीये "प्राधान्यात्तु क्रिया पूर्वमर्थस्य प्रविभज्यते। साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकमिति"। अर्थस्य फलस्य तदवच्छेदेनार्थः। प्राधान्यात् विशेष्यत्वात् साध्यं प्रयुक्तं यैः तानि साध्यसाधकानि अङ्गानि कारकाणीत्यर्थः। अत्र फलस्य क्रियाप्रयोजकत्वाभिधानं तदुद्देशेनैव क्रियायां प्रवृत्तिरित्येवं ज्ञापनाय। तथा च सर्वो लोकः स्वाभीष्टफलमभिप्रेत्य तत्साधनाय यतते लभते च ततस्तत्फलमुपायसंसाधनेन। एवं च क्रियाफलं विक्लित्त्यादिकमभीप्सुः पाकाय यतमानो जनः पाकसंसाधनेन फलं लभते। ततश्च फलसाधनतया पाकादेरभीष्टत्वात् साध्यत्वम्। फलविशिष्टक्रियायाधात्वर्थत्वमते तु विशिष्टस्यैवेष्टत्वात् विशिष्टस्यैव साध्यत्वमिति विशेषः। कारकान्वयस्त्वेतन्मते पूर्वोक्तदिशावसेयः एकदेशान्वयस्वीकाराच्च न कर्मणोऽनन्वय इति बोध्यम्। तथाचैवं रीत्या साध्यत्वेन क्रियां जानता जनेन तस्याः प्राधान्यबुबोधयिषयैवाख्यातान्तस्य धातुः प्रयुज्यते अन्यथा तदन्तमिति। एवञ्च भावकृदन्तस्थले धातुना साध्यरूपक्रियाबोधनेऽपि तस्याः प्रत्ययार्थसिद्धरूपक्रियाविशेषणत्वेन न प्राधान्यम् "भावप्रधानमाख्यातमित्यादि" निरुक्तवचनस्य, "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यमिति" न्यायस्य च परस्परं विरोधपरीहाराय न्यायस्य आख्यातातिरिक्तविषयत्वव्यवस्थापनम्। हरिणापि धातुभावकृतोः क्रियायाश्चाविशेषेऽपि धातुना साध्यत्वेन, कृता तु सिद्धत्वेन क्रियाया बोधनमिति व्यवस्थापितं यथा "साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना। सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः" इति आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता। प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः" इत्येताभ्याम्। भागाभ्यां यथा पचति भवतीत्यादौ तिङन्ताभ्यां साध्यसाधनवर्त्तितेति पचति भवतीत्येकस्य साधनत्वमपरस्य साध्यत्वं क्रियाकारकभावेन तयोरन्वयात् घञर्थक्रियायास्तु इतरक्रियायामेव साधनत्वमिति विवेकः। साध्यत्वञ्च लिङ्गसंख्यानन्वयित्वं तद्विपरीतं सिद्धत्वं तदा च घञाद्युपस्थाप्यक्रियायाः लिङ्गसंख्यान्वयित्वेनापरक्रियायां साधनत्वम्। उक्तञ्चैतत् यत् घञन्तादौ द्विवि-

चक्रियायामभानं कारकाणां साध्यक्रियायामेवान्वयोपगमात् तदन्तस्यले कारकविभक्तिप्रयोगस्य सर्व्वजनीनतया साध्यत्वेन तदुपस्थितावेव कारकान्वयोपपत्तिः । "साध्यस्य साधनाकाङ्क्षेति" "नियतं साधने साध्यं क्रिया नियतसाधनेति" "साध्यत्वेन निमित्तानि क्रिया परमपेक्षते" इति चाभियुक्तोक्तेः। अतएव स्तोकं पाक इत्यादौ द्वितीयान्तोपपद्यते साध्यक्रियाफलस्य विशेषणेऽपि द्वितीयानुशासनात्। असाध्यस्यापि क्रियाविशेषणस्य तु विशिष्टलिङ्गतया प्रथमाद्यन्तता "कृदभिहितो भावो द्रव्यवत् प्रकाशत" इतिभाष्योक्तेः । कृदभिहितः कृता बोधितः । भावो भावना धात्वर्थस्वरूपमिति यावत् द्रव्येण तुल्यं प्रकाशते द्रव्यधर्म्मान् लिङ्गसंख्याकारकत्वानि भजते इति यावत् । अत्र द्रव्यत्वं लिङ्गसंख्यान्वयित्वमेव योग्यत्वात् न तु पृथिव्याद्यात्मकत्वं शानपाकादौ तदभावात् । नापि "वस्तूपलक्षणं यत्र सर्व्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति पारिभाषिकसर्व्वनामपरामर्शयोग्यत्वादिरूपं, साध्यक्रियाया अपि तथात्वे भावविशेषापत्तेः । किन्तु सत्त्वस्थानानि नामानीत्येकवाक्यतया सत्वद्रव्ययोः पर्य्यायत्वस्य बहुषु स्थलेषु दर्शनात् सत्वभूतत्वमेव द्रव्यत्वमिति फलितार्थः "क्रिया न युज्यते" इत्यादिना लिङ्गाद्ययोगस्यासत्वलक्षणत्वाभिधानात् तद्योगस्यैव सत्वलक्षणत्वौचित्यादिति तु तत्त्वम् । वैयाकरणादिमते घट इत्यादौ क्रियायां शक्तिः "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" काव्यप्र० उक्तेः । "असम्पादयतः कञ्चिज्जातिद्रव्यक्रियागुणैः" माघः । प्रयोगे "तस्मिन् पायाः सर्व्वे नः क्रूरे प्रतिप्रहतक्रियाः" कुमा० "प्रतिहतक्रियाः विफलप्रयोगाः" मल्लि० करणे (अनुष्ठाने) "वचमसस्य सपदि क्रिया केवलमुत्तरम्" भावः । "यथाक्रमं पुंसवनादिकाः क्रियाः" रघुः । "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" "तद्भूतानां क्रियार्थेन समाम्नायः" जै० सू० । शिक्षायाम् "क्रिया हि वस्तूपहिता प्रसीदति" रघुः "चिकित्सायां "क्रियाः(योगाः) सर्व्वा गतायुषः" सुश्रु० । कर्म्मणि(स्पन्दे) "क्षितिर्जलं तथा तेजः पवनोमन एव च । परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी" भाप० । "यदाश्रया क्रिया तमविकुर्व्वती नैवात्मानं लभते" शा०भा० । "क्रियैव कालः इति मते सुतरां नाधिकरणता" ति० त० रघु० । संयोग विभागयोरसमवायिकारणतावच्छेदकतया क्रियात्वजातिसिद्धिः । "क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम् । गृह्णाति चक्षुःसम्बन्धादालोकोद्भूतरूपयोः" भाषा० तेन योग्यवृत्तिमत्याः प्रत्यक्षता "धात्वर्थे व्यापारे "तेन तुल्यं क्रिया चेद्वतिः" क्रियासमभिहारे यङ्" "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा० । "क्रियया यमभिप्रैति" वार्त्ति० "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" "कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते । दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते" । "निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा । अपेक्षितक्रियञ्चेति त्रिधाऽपादानमिष्यते" "धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते" इति च भर्त्तृहरिः । "क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" माघः । धात्वर्थे फले । "कर्म्मवत् कर्म्मणा तुल्यक्रियः" पा० कर्म्मणा कर्म्मस्थक्रियया तुल्यक्रियः समानाधिकरणक्रियः कर्म्मस्थमात्रस्थक्रियारूपफलकरत्यर्थः । क्रियाविशेषणम् । अत्र च यथा फलस्य विशेषणत्वेऽपि द्वितीया तथा क्रियाविशेषणशब्दे वक्ष्यते । क्रियान्वयिनश्च हरिणा दर्शिता यथा

"संबोधनान्तं कृत्वोऽर्थः कारकं प्रथमोदितिः । धातुसम्बन्धाधिकारविहितमसमस्तनञ् । तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् । संबन्धवाष्टकस्यास्य क्रियैवाश्रयार्थताम्" । व्यवहाराङ्गक्रियायाम् उदा० क्रियापादशब्दे वक्ष्यते । श्राद्धे "चतुर्द्दशग्रां क्रियाः कार्य्या अन्येषान्तु विगर्हिताः" म० त० मरीचिः । "मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः" शु० त० मरीचिः । "सपिण्डसन्ततिर्वापि क्रियार्हा नृप ! जायते" तत्रैव विष्णुपु० । "ये सपिण्डीकृताः प्रेता न तेषां च पृथक् क्रिया" ति० त० शाता०

क्रियाकल्प पु० क्रियायां चिकित्सायां कल्पोविधिः । सुश्रुतोक्ते उत्तरतन्त्रे अष्टादशाध्यायप्रतिपाद्ये क्रियाभेदे । "अथातः क्रियाकल्पं व्याख्यास्यामः" इत्युपक्रमात् तत्रोक्ते सम्यात्मस्

क्रियाकार पु० क्रियां शिक्षारम्भं करोति कृ–अण् उप०स०। १नवच्छात्रे त्रिका० २कार्य्यकारकभावे त्रि० स्त्रियां टाप् सि० कौ० । मुग्ध० मते ईप् इति भेदः।

क्रियाद्वेषिन् त्रि० क्रिया व्यवहाराङ्गसाधनं साक्षिलेख्यादिकं द्वेष्टि द्विष–णिनि इत०। विवादे-पञ्चविधहीनान्तर्गतहीनप्रतिवादिनि "अन्यवादी क्रियाद्वेषी नोपस्थाता

क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः । अन्यवादी तथा हीनः स एव विक्षताननः । पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" । कात्यायनेनापि "चारयित्वा यदा कार्यं लभेदन्यद्वदेद्यदि । अन्यपक्षाश्रयत्वेन हतो वादी स हीयते" । यत्र कश्चिदभियुक्त न्याहमेनमभियुञ्जे इत्येवं विरुद्धमभिदधीत सोऽपि अन्यवादी तथा हीन इत्याह स एव "न मयाभिहितं कार्यमभियुक्त परं वदेत् । विब्रुवंश्च भवेदेव हीनत्वमपि निर्दिशेत्" । तथा पत्रे लिखितं पूर्वपक्षमन्यथा कुर्वन्नन्यवादी तथा हीन इत्याह स एव "लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः । वदेद्वादी स हीयेत नाभियोगस्तु सोऽर्हति" । अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः । क्रियाद्वेषिणोऽनुपस्थातुश्च हीनतायास्तेनैव विवरणं कृतम् "लेख्यं च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः । तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते । आह्वानादनुपस्थानात् सद्य एव स हीयते" । निरुत्तरतया हीनमप्याह स एव "ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यो दण्डमर्हति । द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम्" । पराजयं तत्पक्षहीनताम् । अतएव हारीतः "सापदेशं हरेत्कालमब्रुवंश्चापि संसदि । उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम्" । सापदेशं सव्याजम् । यथाह कात्यायनः "व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत् । सापदेशं तु तद्विद्याद्धारिकरं च तमिति" । आहूतप्रपलायी अभियोगपरिहारार्थमाह्वानबुद्ध्या प्रपलायी । एतेषाञ्चोत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं "हीनः पञ्चविध" इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्वस्मरणात् । हीनतागुरुत्वज्ञापनं दण्डभूयस्त्वार्थम् । यथोक्तं कात्यायनेन "अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश । नोपस्थाता दश द्वे च षोडशैव निरुत्तरः । आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम्" । अत्रापि विशेष उक्तस्तेनैव "निराकृतमनायातमाहूतप्रपलायिनम् । पञ्चरात्रमतःकालं विनयेत्तं महीपतिः" कात्यायनेनैव प्रकारान्तरेणापि हीन उक्तः । "आविलव्यवहाराणामेकत्वप्रभेदयेत् । वादिनं नोभयेश्चैव हीनत्वमपि निर्दिशेत्" । आविलव्यवहाराणां भयादीनां मध्ये एकमपि यः प्रभेदयेत् अन्यहारानुरोधाद्यात्मनेनैवं ।

बृहस्पतिरपि "भयं करोति भेदं वा भीषणं वा निरोधनम् । एतानि वादिनो यस्तु व्यवहारे स हीयते" । भयादीनि व्यवहारकृतानि येन कृतानि स हीयत इत्यर्थः । भयं करोति भीषणामन्यकृतेन भयोत्पादनमिति शेषः । मनुरपि "अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः । यश्चाधरोत्तरानर्थान् विगतान्नावबुध्यते । अपदिश्यापदेश्यं च पुनर्यस्त्वपधावति । सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति । असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः । निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् । ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् । न च पूर्वापरं विद्यात्तस्मादर्थात् स हीयते । ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः । धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत्" । अदेश्यमनुपयोगमसत्यादिना निर्देशानर्हं दिशति कथयति यः । यश्च कथितमपि न भवेदुक्तमित्यपलपति । यश्चाधरोत्तरानर्थान् पूर्वापराभिहितान्विगीतान्विरुद्धांस्तत्त्वेन नावबुध्यते । यश्चापदेश्यं व्याजं पीडादिकमपदिश्योद्भाव्यापधावति अपसरति सभातः । यश्च सम्यक् प्रणिहितं सम्यक् प्रणिधानेनाकलितमपि परोक्षमर्थं पृष्टः सन्नाभिनन्दति अनुवादप्रत्युत्तरदानादिना नाद्रियते । मेधातिथिस्त्वदेशमिति पठित्वा भाषादिलिखितदेशभिन्नमसम्भाव्यं वा देशम् । यदाऽभियोक्ता दिशेत्तथाप्यत्र देशभङ्गेन साक्षिणो व्याख्याय साक्षिनिर्देशः । अकाले सम्भावितसाक्षिणो निर्दिशतीति व्याचख्यौ । यत्र ज्ञातारः साक्षिणो ममात्रार्थे सन्तीति सभायामुक्त्वा के ते वदेत्युक्तो न वदेत्तान् । सन्ति मा मां ज्ञातारः । यथार्थवादत्वमिति जानानाः साक्षिण इति यावत् । द्वितीयैकवचनान्तस्यास्मच्छब्दस्य द्वितीयाया इत्यनेन माम् इत्यस्य मा इत्यादेशः । सन्ति मे इति पाठान्तरमेतत् । "स्वसर्वदत्तमामिति" तद्विरोधात् । तेन मेति सन्धिरपि समाहित इति मेधातिथिः । आचार्यास्तु व्याकरणाधिकरणे सन्धिकरणमनापयन्त इति पूर्वपक्षसमङ्गेन वदन्तः पाठान्तरमेवाश्रु मन्यन्ते मे सन्तीति सम्बन्धाच्च षष्ठीयामन्त्र्ययुक्तपदीपनिषेधावकाश इति तेषामभिसन्धिः । सन्ति ज्ञातार इत्युक्तेति कल्पतरुलिखितपाठस्तु नाकर एवाचार्यमेधातिथिभ्यामदृष्टत्वादिति ध्येयम् । सिद्धान्ते त्वाचार्याणां छान्दसत्वमत्र समाधिरभिमतः । एतैः कारणैर्व्यस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीननिर्दिशेदित्यर्थः । हीनवादितया दण्डार्हतामात्रम् प्रक-

मन्वकर्तव्यं विजानतेति"। साक्षिसभ्यविकल्प इति उभयोरर्थिप्रत्यर्थिनोः किमेते वदन्तीति साक्षिसभ्यविषयको विकल्पो भवेत् तत्र कार्य्यनिर्णये दोलायमानौ सन्देहदोलारूढौ यावदर्थिप्रत्यर्थिनौ सन्धिं कुर्य्यातान्तौ विचक्षणौ चतुरौ पराजयजनिताऽप्रतिष्ठादिनिरोधानादियर्थ इति कल्पतरुः। रत्नाकरस्तु "साक्षिणां सभ्यानाञ्च विकल्पः परस्परविरोधः इत्याह। प्रमाणसमतेति। यत्र सभ्यानां वादिद्वयपक्षे प्रमाणं साम्यं प्रतिभाति। यत्र च शास्त्रचरित्रयोर्भेदः शास्त्रे शास्त्रान्तरेण चरित्रे व्यवहारे चरित्रान्तरेण भेदो विप्रतिपत्तिर्नतु शास्त्रव्यवहारयोः परस्परभेदः धर्मशास्त्रविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात्" इति व्याचख्यौ। तत्र राजाज्ञया सन्धिः कार्य्यत्वेन प्रयस्यते धर्म्माधर्म्मदण्डादिहेतुत्वात् निग्रहानुग्रहाद्यव्यवस्थानिवर्त्तकत्वाच्च। तस्मादित्यादिना राजाज्ञैव केवलं न सन्धिहेतुः कुलगणाध्यक्षादिवचोऽपि राजवचनसममिति प्रतिपाद्यते। एतच्च प्रत्याकलितं सभ्यैरवश्यमादर्त्तव्यमित्याह नारदः "प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः। सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः"। अस्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः "अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाणकर्त्तारः प्रमाणशब्देन लक्ष्यन्ते। ते सीदन्ति विनश्यन्ति निर्णयं नाप्नुवन्ति। अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतः प्रमाणानि परिपाल्यानि यथा व्यवस्थादुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थ इति"। वयन्तु अव्यवस्थितैर्मूलग्रन्थैरित्यादिना दुःस्थितैः प्रमाणैः प्रमाणानुग्राहकैस्तर्कैः प्रमाणानि साक्ष्यादीनि सीदन्ति निर्णयासमर्थानि भवन्ति, हि यतोऽतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि सत्तर्कपरिग्रहानुग्रहेण तत्त्वनिर्णयफलानि कार्य्याणीति व्याचक्ष्महे। अनयोश्च व्याख्यानयोस्तारतम्यमन्यस्सुधीभिर्विवेचनीयम्। इदञ्च प्रत्याकलितं व्यवहर्त्तृसम्बन्धाभावात् व्यवहारदर्शिमात्रकर्त्तृकत्वाच्च व्यवहारपादचतुष्टयानुभूतमिति मिताक्षराकारस्य सम्मतम् नत्वनुपादेयम्, एतदन्तरेण तृतीयक्रियापादानवतारात्। तथाहि उत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया का वा क्रियेति परामर्शनरूपस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्व्यवहर्त्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमिति। अपरार्कस्तु "साध्यसिद्धिपदेन जयपराजयावधारणलक्षणं प्रत्याकलितं योगीश्वरवचने लक्षणया गृहीत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति"। "सम्प्रतिपत्त्युत्तरेण क्रियापादे नापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपात्त्वमेवेति" प्राञ्चो वाचस्पतिरपि तदेवानुमन्यते। कल्पतरुस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखनानन्तरभावितानां हीनपरिस्थानसन्धिकरणक्रियादानानां क्रियापादप्राग्भाविनां प्रत्याकलितत्वमभिहितवन्तौ। व्यवहारोपयोगित्वाद् दृष्टव्यादिदर्शनानां प्रागभिहितानामनुरोधाच्च व्यवहारपादत्वं परन्त्वनभ्युपगतवन्तौ क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम्। ये तु तिष्ठन्ति करण इत्यादिवचनात् व्यवहारपादत्वमस्तु नैतस्मन्देतत्। यत्तु साध्यसिद्धेर्व्यवहारफलत्वाच्च व्यवहारपादत्वं युक्तमिति तन्न व्यवहारभावनया फलापवर्गित्वाः फलनिरूप्यत्वेन फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात्। अतएव संग्रमा भावनेति मीमांसकानामुद्घोषः। तात्पर्यपरिशुद्धावुदयनाचार्यस्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यते यथाह "यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः। पृच्छोपक्रममात्रेण द्वितीयोपयोगात्। सम्बन्धेऽपि तयोर्विषयोपस्थापनमात्रपर्यवसानात् सभ्यैरेव परीक्षकत्वम्। तथापि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारप्रवर्त्तनात् फलतो न कश्चिद्विशेषः। एककर्त्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारे विद्यमानत्वात् तस्मादप्यनिपुणो देशकालयापि देयं शापथमेवेति"। वस्तुतस्तु न प्रमाणोपन्यासमात्रस्य प्रत्याकलितत्वेनाभिप्रेतः। किन्तु सभिकहस्तः प्रमाणोपष्टम्भकतर्ककोटिपरामर्श एव। यतो न शास्त्रीयकथायां व्यवहारवत्पूर्वपक्षोत्तरपक्षौ स्वाभिमतपक्षहेतुकसाध्यनिर्देशमात्रपरौ। किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षदूषणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणप्रस्थापनं प्रथमं क्रियते। ततः सभ्यैस्तदुभयविवेकात्मप्रत्याकलितेन निष्कर्षं एकतरपक्षनिर्धारणरूपः क्रियते। तावता कथासमाप्तिर्वादे, जल्पवितण्डयोस्तु सभिकादीनामुत्तरोऽपि व्यापारो विद्यत इत्यादि तत्त्वमाकरे। अत्र तु साक्ष्यादिविलक्षणं मानमुत्तरभेदेन नियतं प्रागुपन्यासानर्हमिति न पूर्वोत्तरपादान्तरगतिरस्य। अतएव प्रत्याकलितस्यानोत्तरे कस्य क्रियेत्यादिनिदर्शनस्य स्वेच्छतस्य प्रत्याकलितस्य प्राप्यत्वं

प्रमाणोपन्यासासत्त्व तु प्रतीच्छत्वमेव स्यादेवमृतप्रमाणसाध्यसाधुतां विवेकरूपता चेत्यलम् विस्तरः। एवं प्रत्याकलितमाकलितम्। अधुना क्रियापादो निरूप्यते। तत्र कात्यायनः। वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम्। तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम्। सारभूतं पदं मुक्त्वा निःसाराणि बहून्यपि। संसाधयेत् क्रियायान्तु तास्त्यजेत् सारवर्जिताम्। पक्षहवं साधयेद्या तास्त्यजेद्दूरतः क्रियाम्। क्रियां बलवतीमुक्त्वा दुर्बलां योऽवलम्बते। स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियामिति"। ताम्बलवतीम्। तेन प्रागेव प्रबलं प्रमाणमुद्भाव्य दुर्बलप्रमाणावलम्बनेन पराजितस्य पश्चात् प्रबलप्रमाणोपन्यासावसरो नास्तीत्यर्थः। अतएवाह नारदः "निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं साक्षिणो वापि पूर्वमावेदितं नचेत्"। निर्णिक्ते शोधिते अन्यतरजयपराजयान्यतरावधारणं प्रापित इति यावत्। पूर्वमेव दुर्बलप्रबलसकलप्रमाणोपन्यासे कृते तु सर्वप्रमाणानुसारेण बलं निरस्येत्यभिधानात् निर्णयः। पश्चादुद्भावितन्तु लिखितत्वादिगम्यार्थकमुद्भावितमित्यनुवादेनमेवेत्यर्थः। अतएव पूर्ववाक्येऽपि सक्तेति पुनरिति चोक्तम्। अतएव "यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः। निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा"। उत्तरे पत्रनिवेशिते साध्यसिद्धेः साधनाय तत्साधननिर्देशक्रमः कुर्यादित्यपेक्षिते याज्ञवल्क्य आह "ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्"। तत उत्तरलिखनानन्तरमर्थी अर्थ्यत इत्यर्थः साध्यं सोऽस्यास्तीत्यर्थी साध्यवान् सद्यः पश्चाद्विलम्बं न प्रतिज्ञातस्य प्रतिज्ञाविषयस्यार्थस्य साध्यस्य साधनम् साध्यतेऽनेनेति साधनं प्रमाणम्। साधनादि लौकिकमलौकिकं वा लेखयेत् लेखकद्वारा। स्वयं वा लिखेदित्यपि द्रष्टव्यम् दृष्टार्थत्वात् अत्र सद्य इति पदमुत्तराभिधाने कालविलम्बनमप्यनुमन्यते। तच्च विशेषपरिभाषायां विवक्षते। अर्थी लेखयेदित्यनेन सम्प्रतिपत्तौ न कस्यापि क्रियेति न कोऽपि साधनं लेखयेदिति पादद्वयेनैव व्यवहारनिर्णयः। तथा चोक्तम् "द्विपात् सम्प्रतिपत्तिर्भवति मिथ्योत्तरे पूर्ववादिन एवार्थित्वात् सएव साधनं लेखयेत्। कारणोत्तरप्राङ्न्यायोत्तरयोस्तु प्रत्यर्थ्येव साध्यवान् कारणप्राङ्न्याययोस्तस्यैव साध्यत्वादिति स एव लेखयेदित्युक्तं भवति। तेन "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्। मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि। प्राङ्न्यायेऽपि तथैव स्यात् प्रतिपत्तौ न सा भवेदिति" व्यासादिस्मृत्युक्तोऽर्थिपदेन सङ्क्षेपतः सर्व एवोक्तो भवति। अत्र चण्डेश्वरः "साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम्। विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः"। इत्यत्र सद्यो विवादयेदुत्तरन्दापयेदित्यनेन प्रत्यर्थिपक्षस्य लिखने विलम्बप्राप्तौ साहसादिषु तत्पक्षमपि सद्य एव लेखयेदिति योऽपवादः स यदि प्राग्भाषावादिपक्षलिखने विलम्बोक्त्यार्थवान् प्रत्यर्थिपक्षलिखनविलम्बः स्यात् तदैव घटते नान्यथेत्यतो तदा अवव्याख्याने यदर्थिपदेन प्रत्यवस्कन्दनप्राङ्न्याययोः प्रत्यर्थ्यप्यर्थी जात इति स एव साधनं लेखयेदिति। प्रत्यर्थिनोऽपि ग्रहणमिति मिताक्षराकारव्याख्यानं तत्पूर्वापरविरोधादनन्दमित्याह"। तदतिसाहसम् भाषोत्तरवादिपक्षमात्रलेखनपरत्वं यद्यनयोर्वाक्ययोस्तर्हि साधनपदान्वये समासानुपपत्तेः सन्दर्भविरोधाच्च साधनलेखनस्यैवोत्तरलेखनोत्तरमाकाङ्क्षितत्वात् साहसादिष्वप्युत्तरभेदव्यवस्थया द्वयोरपि पूर्ववाक्योपात्तसाधनलेखने सद्यस्त्वर्थाक्षिप्तोत्तरलेखनविलम्बापवादोपपत्तेः। नचोत्तरलेखनं सर्वत्र प्रत्यर्थिन एवेति तद्विलम्बानुमतिविपत्त्योक्तं प्रत्येव प्रतिपादनार्हमिति वाच्यम् एतावतापि क्रियोपन्यासप्रतिपादकवचनस्यार्थिपदेन भाषावादिमात्रग्रहणापत्तेः नियामकाभावात्। प्रत्युत मिथ्याक्रियेत्यादिवचनार्थसंग्रहाय द्वयोरपि ग्रहणमर्थिपदेनेत्यस्यैव युक्तत्वात्। एवं सति मिताक्षरायां पूर्वापरविरोधापादनमज्ञानविलसितमेवेत्यास्तां तावत्। वृहस्पतिः "द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा। एकैकानेकधा भिन्ना मुनिभिस्तत्त्ववादिभिः। साक्षिलेख्यानुमानञ्च त्रिविधा मानुषी क्रिया"। साक्षिलेख्यानुमानमिति द्वन्द्वैकवद्भावः। "साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम्। अनुमानन्तु द्विविधन्नवधा दैविकी क्रिया"। इदं संख्याभिधानञ्च नियमाय भेदान्तराणामपि प्रमाणप्रकरणे दर्शयिष्यमाणत्वात्। कात्यायनः "लिखितं साक्षिणो भुक्तिः प्रमाणन्त्रिविधं विदुः। देशोद्देशस्तु युक्तिः स्यादुदिव्यानीह विषादयः"। देशोऽन्ययानुपपन्नो धर्मस्तस्योद्देशोऽभिमर्शो युक्तिरित्यर्थः। "पूर्ववादेऽपि लिखिते यथाऽक्षरमशेषतः। अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्"। पूर्ववादो भाषालिखितं पूर्व-

पक्षतया लिखितं उत्तरमिति यावत्। तृतीयपादः प्रत्याकलिताख्यः तस्मिन् सति क्रियया प्रमाणेन प्रतिपादयेत् साध्यमिति शेषः। भाषोत्तरप्रत्याकलिताख्यपादद्वये सति क्रियया स्वकार्य्यमर्थी साधयेदिति तात्पर्य्यार्थः। कार्य्यक्रियाशब्दौ व्याचष्टे व्यासः "कार्य्यं हि साध्यमित्युक्तं साधनन्तु क्रियोच्यते। द्विभेदा सा पुनर्ज्ञेया मानुषी दैविकी तथेति"। साधनं प्रमाणं प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता स्मृतिचन्द्रिकाकारेणैवमिदं वचो व्याख्यातम्। मिताक्षराकारमते तु तृतीयपादक्रियवेति स पदार्थः। साक्षीहारभेद इत्यादिप्रमाणप्रकरणे प्रपञ्चयिष्यामः। याज्ञवल्क्यः "प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्। एषामन्यतमाभावे दिव्यान्यतममुच्यते" इति। दिव्येऽन्यतममित्यर्थः। कात्यायनः "यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्। मानुषीं तत्र गृह्णीयात् न तु दैवीं क्रियां नृपः। यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी। सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम्"। एकदेशप्राप्ता साध्यैकदेशविषया। अत्र यद्येको वादी मानुषीं साक्ष्याद्यन्यतमां क्रियां स्वपक्षसाधकतयोपन्यस्यत्यन्यस्तु तत्प्रतिपक्षतया दैविकीमुद्दिशतीतरवादि-पक्षसिद्ध्यसिद्ध्योः तुल्यत्वेन न दिव्यापेक्षेति प्रथमवचनार्थः। यत्रैकोऽपि वादी साध्यानेकत्वे साध्यैकदेशमपि यदि प्रमाणेन साधयति तदैकदेशविभावितन्यायेनैकदेशान्तरस्यापि सिद्धेर्व्यमाणत्वान्न दिव्यावसर इति द्वितीयवाक्यार्थः। दिव्यस्वरूपप्रमाणयोरागमैकगम्यत्वान्मानुषप्रमाणसम्भवे न दिव्यस्य प्रामाण्यमिति मुनिवचननिचयपर्य्यालोचनयावगम्यते। अन्यान्यपि कचित् कचित् केषाञ्चित् प्रमाणानां प्राधान्याभिप्रायेण व्यवस्थापकानि वचनान्युपीषां यथा "क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु। लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः" इति कात्यायनः। पितामहः "स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेत्। साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत्"। इदमपि कात्यादिवचनं स्थावरविवादविषयेषु सुलभसाक्षित्वात् सम्भवात्तत्परमेव कार्य्यमित्येवम्परत्वं सर्व्वथा दिव्यपरिहारपरम्। सर्व्वथा मानुषसम्भवेऽपि दिव्याग्रहणे निर्णयाभावप्रसङ्गात्। कात्यायनः "दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति। विक्रियादानसम्बन्धे क्रीत्वा धनमनिच्छति। द्यूते समाह्वये चैव विवादे समुपस्थिते। साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम्। पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता। तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः। द्वारमार्गक्रियाभोग जलवाहादिषु क्रिया। भुक्तिरेव तु गुर्व्वी स्यान्न दिव्यं न च साक्षिणः"। दत्तादत्ते प्रतिज्ञाप्रदाने दत्त्वा पुनः प्रत्याहरणे या दत्ताप्रदानिके विवादपद इति यावत्। भृत्यानामित्यादिना वेतनादाने। विक्रियादानेत्यादिना क्रयविक्रयानुशये इत्यादुक्तम्। दत्तादत्तादिषु इष्टानां लिखितकरणाप्रसिद्धेर्भुक्तेश्चासम्भवात् साक्षिण एव तादृशविषये सुलभत्वान्मानुषप्रमाणसम्भवे च दिव्यासम्भवाच्च दिव्यं न च लेख्यकमित्युक्तम्। पूगादीनां संविदि तु तत्काले कार्य्या लिखितं विना न निर्वाहः सर्व्वेषां व्यवहर्त्तृत्वाच्चोदासीनसाक्षिसम्भवो मानुषसत्त्वे च दिव्यानवकाश इत्यभिसन्धायाभिहितस्य दिव्यं च साक्षिण इति। द्वारमार्गादिष्वपि समनागमनादिरूपभोगस्यैव दृष्टं भावात्तस्य चान्यसिद्धेर्मानुषाभाव एव च दिव्यावकाशात् दिव्यमित्यादि भुक्तिरेव तु गुर्व्वीति चोक्तम्। एवं सर्व्ववचनानि विवेचनीयानि। अतएव "अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे। न्यासापह्नवने चैव दिव्या सम्भवति क्रियेति" नारदेन सम्भवतीत्युक्तम्। स एव "यदा साक्षी न विद्येत विवादे वदतां नृणाम्। तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः। स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि। एष एव विधिर्दृष्टः सर्व्वार्थापह्नवेषु चेति"। कात्यायनः "गूढसाहसिकानान्तु प्राप्तं दिव्यैः परीक्षणम्। मुक्तिलेखेङ्गिताकारप्रत्यूहचेष्टितैर्न्नृणाम्। अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्द्दिशेत्। दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत्"। वृहस्पतिः "मणिमुक्तप्रवालानां कूटकृन्मानकारकः। हिंसकोऽग्न्युपनाशी परीक्ष्यः शपथैः सदा। महापापाभिशापेषु निःक्षेपहरणे तथा। दिव्यैः कार्य्यं परीक्षेत राजा सत्स्वपि साक्षिषु। चिरनष्टोपांशुकृतचिरनष्टेषु साक्षिषु। प्रदुष्टेषु समानेषु दिव्यैः कार्य्यं विशोधयेत्"। अत्र सत्स्वपि साक्षिष्वित्यनेनात्र विषये साक्षिण एव तावन्न सम्भवन्ति। सम्भवन्तोऽपि वा कथञ्चिदुष्टतया प्रायः प्रदुष्टा इति विवक्षितं न तु यथाश्रुतम्। चिरन्तनकृते उपांशुकृते रहसि कृते इत्यनेन लेखाद्यसम्भवमेवोपलक्षयति। अतएवाये चिरनष्टेषु

फलमुख्यप्रयोजनाभावेऽपि कर्तृवाचकत्वम्। क्रियोद्देश्ये संयोगविभागादिरूपे फलविशिष्टव्यापारस्य धात्वर्थतावादिमते धात्वर्थतावच्छेदकरूपे ४फले पृथक्शक्तिवादिमते कर्त्राख्यातस्थले तद्धातूपस्थाप्ये धात्वर्थांशे विशेषणतया भासमाने तद्धातुजन्ये ५संयोगादिके फले च। इत्थमेव शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा

"तत्र फलतीतिव्युत्पत्त्या फलं नाम तद्धात्वर्थजन्यं संयोगविभागादि, गम्यादौ विभागस्य फलत्ववारणाय तद्धातूपस्थाप्यत्वेन विशेषणेऽपि विभागजन्यसंयोगस्य पतनफलत्वमते विभागस्य तद्धात्वर्थजन्यत्वात् तद्धातूपस्थाप्यत्वादतिव्याप्तिरतस्तद्धात्वर्थे विशेषणतया भासमानत्वेनैव विशेषणीयं गम्यादौ च विभागस्य तद्धात्वर्थे विशेषणतया भासमानत्वाभावात् न फलत्वप्रसक्तिः। सङ्ग्राहस्थले तु कर्तृप्रत्ययस्थले तथाभासमानत्वमिति विवेकः। क्रियाविशेषणादेर्धात्वर्थे विशेषणत्वेऽपि तज्जन्यत्वाभावान्न फलत्वप्रसङ्गः। विशेषणत्वञ्च साक्षादेव विवक्षितं तेन घटं करोतीत्यादौ घटादेः धात्वर्थक्रियाजन्यस्य विषयत्वसंसर्गद्वारा तद्विशेषणत्वेऽपि न फलत्वापत्तिः" इति।

**क्रियाभ्युपगम** पु० क्रियायाः कर्षणादिक्रियार्थमभ्युपगमः चतुर्थ्यर्थे ६त०। यत्र क्षेत्रे उत्पन्नस्य शस्यस्य उभयोः फलभागितेतिनियमेन कर्षणाद्यर्थमन्यक्षेत्रस्वीकारे। "क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च" मनुः।

**क्रियाभ्यावृत्ति** स्त्री क्रियाया अभ्यावृत्तिः। क्रियायाः पौनःपुन्ये। "क्रियाभ्यावृत्तिगणने कृत्वसुच्" पा०। विवृतमेतदस्माभिः शब्दार्थरत्ने यथा

"क्रियाया एव पौनःपुन्यरूपाभ्यावृत्तिपदेनैव क्रियालाभे पुनः क्रियापदग्रहणेन इतरांशे विशेषणतानापन्नायाः क्रियाया एवाभ्यावृत्तौ तेषां साधुत्वज्ञापनात् पञ्चकृत्वः पचतीत्येव प्रयोगः न तु पञ्चकृत्वः पाक इत्यपि। केचित्तु "द्विर्वचनेऽचीति" पा० निर्देशात् साध्यरूपक्रियान्वये एव तेषां साधुत्वं तेन भावघञन्तादपि धातुना साध्यक्रियाया अभिधानात् पञ्चकृत्वः पाक इत्यपि भवत्येव। सिद्धरूपक्रियायां तदन्वयविवक्षायां तु नैवं तेन तत्र पञ्च इत्येव स्यादिति प्राहुः"

**क्रियायोग** पु० क्रियैव योगः योगोपायः। "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इति पातञ्जलसूत्रभाष्यादाद्युक्ते योगोपायभूते क्रियाभेदे। तस्य योगोपायत्वादिदर्शकं तद्भाष्यं कर्मयोगशब्दे ४०११पृ० दर्शितम्। "ज्ञानयोगस्तु योगस्य यस्तु साधनभावना। यस्तु बाह्यार्थसंयोगः क्रियायोगः स उच्यते। प्रधानं कारणं योगो मुक्तेर्मुनिवरोत्तम!। क्रियायोगस्तु योगस्य परमं तत्र साधनम्" वह्निपु०। मत्स्यपु०५२अ०विस्तारेणोक्तं यथा

"कर्मयोगञ्च वक्ष्यामि यथा विष्णुविभाषितम्। ज्ञानयोगसहस्राद्धि कर्मयोगः प्रशस्यते। कर्मयोगोद्भवं ज्ञानं तस्मात्तत्परमं पदम्। कर्मज्ञानोद्भवं ब्रह्म न च ज्ञानमकर्मणः। तस्मात् कर्मणि युक्तात्मा तत्त्वमाप्नोति शाश्वतम्। वेदोऽखिलो धर्ममूलमाचारश्चैव तद्विदाम्। अष्टावात्मगुणास्तस्मिन् प्रधानत्वेन संस्थिताः। दया सर्वेषु भूतेषु क्षान्तीरक्षाऽऽतुरस्य तु। अनसूया तथा लोके शौचमन्तर्बहिर्द्विजाः!। अनायासेषु कार्येषु माङ्गल्याचारसेवनम्। न च द्रव्येषु कार्पण्यमार्त्तेषूपार्जितेषु च। तथाऽस्पृहा परद्रव्ये परस्त्रीषु च सर्वदा। अष्टावात्मगुणाः प्रोक्ताः पुराणस्य तु कोविदैः। अयमेव क्रियायोगो ज्ञानयोगस्य साधकः। कर्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते। श्रुतिस्मृत्युदितं धर्ममुपतिष्ठेत् प्रयत्नतः। देवतानां पितॄणाञ्च मनुष्याणाञ्च सर्वदा। कुर्यादहरहर्यज्ञैर्भूतर्षिगणतर्पणम्। स्वाध्यायैरर्चयेदृषीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धैरन्नदानैर्भूतानि बलिकर्मभिः। पञ्चैते विहिता यज्ञाः पञ्चसूनापनुत्तये। कण्डनी पेषणी चुल्ली जलकुम्भी प्रमार्जनी। पञ्च सूना गृहस्थस्य तेन स्वर्गं न गच्छति। तत्पापनाशनायामी पञ्च यज्ञाः प्रकीर्त्तिताः। द्वाविंशति ध्वजाद्यौ च ये संस्काराः प्रकीर्त्तिताः। तद्युक्तोऽपि न मोक्षाय यस्त्वात्मगुणवर्जितः। तस्मादात्मगुणोपेतः श्रुतिकर्म समाचरेत्। गोब्राह्मणानां वित्तेन सर्वदा भद्रमाचरेत्। गोभूहिरण्यवासोभिर्गन्धमाल्योदकेन च। पूजयेद् ब्रह्मविष्ण्वर्करुद्रवस्वात्मकं शिवम्। व्रतोपवासैर्विधिवत् श्रद्धया च विमत्सरः। योऽसावतीन्द्रियः शान्तः सूक्ष्मोऽव्यक्तः सनातनः। वासुदेवो जगन्मूर्त्तिस्तस्य सम्भूतयो ह्यमी। ब्रह्मा विष्णुश्च भगवान् मार्त्तण्डो वृषवाहनः। अष्टौ च वसवस्तद्वदेकादश गणाधिपाः। लोकपालाधिपाश्चैव पितरो मातरस्तथा। इमा विभूतयः प्रोक्ताश्चराचरसमन्विताः। ब्रह्माद्याश्चतुरो भूतभव्यस्याधिपतिः स्मृतः। ब्रह्मणा चाथ सूर्येण विष्णुनाथ शिवेन वा। अभेदात् पूजितेन स्यात् पूजितं सचराचरम्।

मन्त्रादीनां परस्मात् प्रयाणादपि संस्थितिः। वेदमूर्त्तेः सदा पूजनीयः प्रयत्नतः। तस्मादग्निद्विजमुखान् कृत्वा संपूजयेदिमान्। दानैर्व्रतोपवासैश्च जपहोमादिना नरः। इति क्रियायोगपरायणस्य वेदान्तशास्त्रश्रुतितत्परस्य। विकर्मभीतस्य सदा न किञ्चित् प्राप्तव्यमस्तीह परे च लोके"। २क्रियासम्बन्धे "उपसर्गाः क्रियायोगे" पा॰ उपसर्गशब्दे क्रियायोगशब्दे विवृतिः।

क्रियार्थ त्रि॰ क्रिया अनुष्ठानमर्थोऽभिधेयोऽस्य। कर्त्तव्यविधिबोधके वेदादिवाक्यभेदे तादृशवाक्यस्यैव प्रामाण्यम् मीमांसायां स्थापितं यथा

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" जै॰ सू॰। "क्रिया कथमनुष्ठेया इति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति यानि क्रियां नावगमयन्ति क्रियासम्बद्धं वा किञ्चित् तान्येव भूतमर्थमाचक्षते" "आनर्थक्यम् (अप्रामाण्यम्)" इति च शबरभा॰। "चोदनालक्षणोऽर्थो धर्मः" जै॰ सू॰। "चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहुः। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किञ्चनेन्द्रियमिति" भा॰। तेन क्रियापरस्य वेदभागस्यैव प्रामाण्यम् अर्थवादानां भूतार्थानां तु क्रियार्थेन सहैकवाक्यत्वात् प्रामाण्यं यथाह तत्रैव "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" जै॰ सू॰। "वायव्यं श्वेतमालभेत भूतिकामः" "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीति" वायुर्वै क्षेपिष्ठा देवतेत्यत्र यद्यपि क्रिया नावगम्यते क्रियासम्बद्धं किञ्चित्, तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणं भूतिकामश्वेतोविध्युद्देशः तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः"। "पदानां साकाङ्क्षत्वात् विधेः स्तुतेश्चैकवाक्यत्वं भवति भूतिकाम आलभेत, कस्मात्? यतो वायुः क्षेपिष्ठेति"। "स्तुत्यर्थेन विधीनां स्युः स्तुतिशब्दाः स्तुवन्तः क्रियाम्, प्ररोचयमानाः अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः" इति च भा॰। "तद्भूतानां तु क्रियार्थेन समाम्नायः" जै॰ सू॰ तेन सहैकवाक्यत्वात् प्रामाण्यमिति स्थितम्। तदेतन्मतं विशदीकृत्य पूर्वपक्षीकृत्य शा॰ सू॰ भाष्याभ्यां निराकृतं यथा "कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते? यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्, अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात्। कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम् उपासनादिक्रियान्तरविधानार्थत्वं वा। न हि परिनिष्ठितवस्तुस्वरूपप्रतिपादनं सम्भवति प्रत्यक्षादिविषयत्वात् परिनिष्ठितवस्तुनः। तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्। अत एव "सोऽरोदीत्" इत्यादीनामानर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तम्। मन्त्राणाञ्च "इषे त्वा" इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम्। न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टा उपपन्ना वा। न च परिनिष्ठिते वस्तुस्वरूपे विधिः सम्भवति, क्रियाविषयत्वाद्विधेः। तस्मात् कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम्। अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम्। तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते" भाष्यम्। "तत्तु समन्वयात्" शारीरकसूत्रम्।

"तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथम्? समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" "आत्मा वा इदमेक एवाग्र आसीत्" "तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्म सर्वानुभूः" "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादीनि। न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च तेषां कर्तृदेवतादिस्वरूपप्रतिपादनपरतावसीयते। "तत् केन कं पश्येत्" इत्यादिक्रियाकारकफलनिराकरणश्रुतेः। न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वम्। "तत्त्वमसि" इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति नैष दोषः हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः"। तत्रैव सूत्रे व्याख्यानशेषे

"यदपि शास्त्रतात्पर्यविदामनुक्रमणम्। "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इत्येवमादिः "तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम्। अपि च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः प्रवृत्तिनिवृत्ति-

विधितश्चोपव्यतिरेकेण भूतश्चेदस्त्युपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीत्यत्र को हेतुः। न हि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः क्रियार्थत्वेऽपि क्रियानिर्वर्त्तनशक्तिमद्वस्तूपदिष्टमेव। क्रियार्थन्तु प्रयोजनं तस्य। न चैतावता वस्त्वनुपदिष्टं भवति। यदि नामोपदिष्टं किं तव तेन स्यादिति? उच्यते, अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति, तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन। अपि च "ब्राह्मणो न हन्तव्यः" इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया नापि क्रियासाधनम्। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् ब्राह्मणो न हन्तव्यः" इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तं, तच्चानिष्टम्। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयति, अभावबुद्धिश्चौदासीन्यकारणं सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति, तस्मात् प्रसक्तक्रियाया निवृत्त्यौदासीन्यमेव "ब्राह्मणो न हन्तव्यः" इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः। तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवाक्यानामानर्थक्याभिधानं द्रष्टव्यम्। यदप्युक्तं कर्त्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् (सप्तद्वीपा वसुमतीत्यादिवदिति) तत् परिहृतं रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्" भा०। क्रिया अर्थः प्रयोजनं यस्य। २क्रियानिमित्ते त्रि०। "तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्" पा०।

**क्रियावत्** त्रि० क्रियाऽस्त्यस्य मतुप् मस्य वः। १क्रियाविशिष्टे २क्रियानिरते अमरः "यः क्रियावान् स पण्डितः" चाण०। "त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम्" भा० व० २५०। ३क्रियाश्रये कर्त्तरि च "यथात् क्रियावता कर्त्ता योगेऽपवर्ति कर्म वा" हरिः। लघुबिंशक्षे दृश्यम्।

**क्रियावसन्न** त्रि० क्रियया अवसन्नः। साक्ष्यादिप्रमाणेनावसन्ने पराजिते वादिनि प्रतिवादिनि च। "दर्शोऽस्तु साक्षिणः सत्यां प्रतिज्ञां स जयो भवेत्" इत्युपक्रम्य "स्वयमभ्युपगतोऽपि स्वचर्य्योर्विगतोऽपि सन्। क्रियावसन्नोऽप्यर्हति परं सभ्यावधारणम्" व्य० त० नारदः। क्रियावसन्नः साक्ष्यादिना प्राप्तपराजयः" रघुनन्दनः।

**क्रियावादिन्** त्रि० क्रियां क्रियासाध्यं वदति वद–णिनि। व्यवहारे साक्ष्यादिप्रमाणरूपक्रियासाध्ययुक्ते वादिनि (फैरादी) मिता०।

**क्रियाविशेषण** न० ६त०। धात्वर्थसाध्यरूपक्रियायाः शाब्दबोधे विशेषणत्वेन भासमाने पदार्थे। शब्दार्थरत्ने विवृतिः "आख्यातं सकारकविशेषणमिति" भाष्योक्तवाक्यलक्षणे विशेषणपदस्य कारकविशेषणक्रियाविशेषणोभयपरतया कारकविशेषणानां क्रियाविशेषणानां कारकभिन्नसम्बोधनादीनां च वाक्यघटकत्वम्। तानि च वाक्यपदीये कतिचित् संगृह्य प्रदर्शितानि यथा "संबोधनान्तं कृत्वोऽर्थाः कारकं प्रथमोदितः। धातुसम्बन्धाधिकारनिष्पन्नमनमव्ययम्। तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्। सम्बन्धवाचकस्यास्य क्रियैवावधार्य्यताम्"। अत्र यद्यपि सम्बोधनस्य सर्वत्र प्रकृतक्रियान्वयित्वं न सम्भवति तथापि आनीहीत्यध्याहृतक्रियान्वयितया तस्याप प्रकृतक्रियायामन्वयात् परम्परया भवत्येव प्रकृतक्रियान्वयित्वम्। तथाहि "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यः सम्बोध्यः क्रियासु विनियुज्यते" इति वाक्यपदीये क्रियासु नियोज्यस्यैव संबोध्यतोक्त्या विनियोगविषयक्रियायामेव तस्य साधुत्वात् व्रजानि देवदत्तेत्यादौ तु देवदत्तस्य गमनक्रियायां विनियोगाभावेनाध्याहर्त्तव्यायां आनीहीत्यादिक्रियायामेवान्वयौचित्यात् तत्क्रियायाश्च व्रजानीत्यादिक्रियाया विषयत्वादिसम्बन्धेन विशेषणत्वादेकवाक्यत्वम्। अन्यथा व्रजानि देवदत्तेत्यनयोरुभयवाक्यघटकत्वे तयोश्च परस्परमन्वयेनैकवाक्यत्वाभावेन समानवाक्याभावनिघातानुपपत्तेः। तथाहि पदादित्यधिकृत्य सर्वमनुदात्तमपदादाविति"चोपक्रम्य आमन्त्रितस्य चेति" उक्तेन अष्टमाध्याये पदादुत्तरवर्त्तिनोऽपादादिस्थितस्यामन्त्रितस्य षष्ठाध्यायविहिताद्युदात्तत्वं निहत्य सर्वानुदात्तत्वं विहितं वार्त्तिककारेण च "समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्यनेन आद्युदात्तनिघातः एकवाक्यएव व्यवस्थापितोऽतः व्रजानि देवदत्तेत्यनयोरेकरीत्यैकवाक्यत्वएव निघातो नान्यथेति। उक्तञ्च वाक्यपदीये संबोधनपदं यच्च तत् क्रियायाः विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र

तदाख्यातीति"। अत्रेदं बोध्यम् विशेष्यतेऽनेनेति व्युत्पत्त्या विशेषणपदं भेदाभेदान्यतरसम्बन्धेनान्वयिविशेषणपरं तत्र कारकादीनां भेदसम्बन्धेन क्रियायामन्वयात् भेदविशेषणत्वम् स्तोकं पचतीत्यादौ तु विक्लित्तिरूपधात्वर्थफले, द्रुतं गच्छतीत्यादौ धात्वर्थव्यापारे सत्यादौ च अभेदेनान्वयात् स्तोकादेरभेदविशेषणत्वम्। अत्रायं भेदः साध्यरूपक्रियाया विशेषणत्वे तस्याश्च लिङ्गसंख्यान्वयित्वाभावेन तद्विशेषणस्य सामान्यत्वात् क्लीवता उत्सर्गतोभावाख्यातवदेकवचनान्तता च तेन स्तोकं पच्यते इत्यादि साधु। घञाद्यन्ते तु साध्यसिद्धोभयरूपक्रियबोधकप्रत्ययाभ्यां बोधनस्य क्रियाशब्दे दर्शितत्वेन धातुबोध्यसाध्यरूपक्रियाविशेषणत्वविवक्षायामेकवचनक्लीवता घञाद्यन्तसिद्धक्रियान्वयविवक्षायां तु विशेष्यस्य लिङ्गसंख्यान्वयित्वेन तद्विशेषणस्य द्विवचनपुंस्त्वादि। अतएव "सन्तारो रतिमन्दिरावधि सखी कर्णावधि व्याहृतमिति" "आगमोनिष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो" इति च प्रयोगः संगच्छते। फलविशिष्टस्य कर्मणः कर्मसंज्ञाविधानेन व्यपदेशिवद्भावपरिभाषया साध्यक्रियाविशेषणस्य कर्मत्वम् तेन स्तोकमीशब्दस्य कारकार्थकत्वात् यण्। तत्र पदसाधुतामात्रार्थं द्वितीयामात्रविधाने तस्य स्यात् इति बोध्यम्। अस्य च एकवचनान्तत्वं त्वौत्सर्गिकी क्वचित् द्विवचनादिप्रयोगोभवत्येव उक्तञ्च हरिणा "एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया। भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति"। उत्सर्गतएकत्वे सत्यपि साधनाश्रयसंख्ययाख्याते क्रिया भिद्यते इत्यर्थः। अत्राख्यात इत्युपादानात् आख्यातार्थाश्रयसंख्ययैव क्रियाभेदो न तु तृतीयाद्युपस्थाप्याश्रयसंख्ययापि तेन चैत्राभ्यां सुप्यते इत्यादौ न द्विवचनादि, तथा नामार्थलिङ्गेन क्रियाभेदो लिङ्गस्य तत्पदोपात्तत्वात्। एतच्च लिङ्गसंख्यानन्वयित्वरूपासत्त्वलक्षणे संख्याविशेषस्य साक्षादनन्वयित्वविवक्षणाल्लिङ्गमात्रस्य वा तथात्वविवक्षणाच्च दोषइत्यनुसन्धेयम्। उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इत्यादि भाष्योदाहरणे च उपमानोष्ट्रासनादिबाहुल्येनोपमेयासनादेर्बाहुल्यस्य विवक्षणाद्भावेऽपि बहुवचनादीत्याकरे स्पष्टम्। उष्ट्रासिकापदस्य द्वितीयाबहुवचनान्तं क्रियाविशेषणतया द्वितीयोत्पत्तेर्बाहुल्येनैवोपमानविवक्षणात् बहुवचनम्" अन्य मतभेदेन शब्दशक्तिप्र॰ विशेषोदर्शितो यथा "भावविशेषितानामपि घञादीनामाकृत्यैव शक्तिः तत्रापि भावपदस्य धात्वर्थस्वरूपपरत्वात्। अन्यथा पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्मत्वाद्यनन्वयापत्तेः दृष्टे धात्वर्थस्यान्वयस्याव्युत्पन्नत्वात् इत्यमेव च स्तोकः पाक इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य सामाञ्जस्यम् अन्यथा स्तोकादीनां धात्वर्थे विशेषणत्वे नियमतो द्वितीयापत्तेः अतएव "सन्तारोरतिमन्दिरावधि सखीकर्णावधि व्याहृतम्" इत्यादिकं काव्यम् "आगमोनिष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो" इत्यादिः स्मृतिश्च सङ्गच्छतइति नव्याः। स्तोकपरप्रत्ययार्थसाकाङ्क्षस्यैव धातोरर्थे विशेषणतापन्नस्य बोधने तदर्थकनाम्नोद्वितीयाद्यपेक्षा नतु धातुमात्रस्य तथाच स्तोकः पाक इत्यादिरेव प्रमाणं नतु स्तोकं पाक इत्यादिः। पृथग्रूपक्रियाया विशेषणं कर्मत्वाद्यनुशिष्टेरपि तत्रैव तात्पर्यात्। अतएव स्तोकं स्थीयते साधु गतं चकितं दृष्टमित्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वात् तद्विशेषणस्य द्वितीयाद्युपपत्तिरिति तु शाब्दिकसम्प्रदायः"।

भेदसम्बन्धेन क्रियायामन्वयिविशेषणे तु पौनःपुन्येन गच्छति अतिशयेन पचति समेनैति विषमेणैतीत्यादिषु प्रकृत्यादि॰ तृतीया। क्वचित् धात्वर्थस्य करणत्वेनान्वये तद्विशेषणीभूतात् तृतीयादि यथा "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादौ यागेनेष्टं भावयेदिति भाट्टमते यागस्य करणतया भावनायामन्वयात् अश्वमेधस्य तत्राभेदविशेषणत्वेन तद्विभक्तिकत्वम्। अन्यमते तु नाम्ना शिव इत्यादिवत् अभेदे तृतीयेति भेदः। मुग्धबोधे "कर्मक्रियाविशेषणेत्यादि" कर्मसंज्ञाद्वितीयाविधानञ्च अभेदान्वयिविशेषणपरम्। भेदविशेषणे तु तृतीयैव। तत्रायं विशेषः क्रियायाम् अभेदसम्बन्धेनान्वयविवक्षायां द्वितीया। अभेदप्रकारकान्वयाविवक्षायां तु तृतीया।

क्रियाशक्ति स्त्री क्रियैव शक्तिः। जगदुत्पत्तिसाधने परमेश्वरस्य शक्तिभेदे। सा च शाङ्करूपा यथोक्तं शा॰ ति॰ पदार्थादर्शे च "सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततोनादोनादाद्विन्दुसमुद्भवः। परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः। विन्दुर्नादोवीजमिति तस्य भेदाः समीरिताः। विन्दुः शिवात्मको वीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्व्वागमविशारदैः। रौद्री विन्दोस्ततोनादाज्ज्येष्ठा वीजादजायत। वामा, ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः। ते ज्ञानेच्छाक्रियात्मानो वह्नीन्दु-

कर्मस्वरूपिणः” शा०ति०। व्याख्यातमेतत् पदार्थादर्शे “अविद्याश्रयत्वेन जडत्वे कथं तस्य सृष्टिकर्तृत्वमिति ? शङ्कां वारयति सच्चिदानन्दविभवादिति अनेनाविद्योपहितत्वेऽपि तस्य न स्वरूपहानिरित्यर्थः। सकलाच्छक्तिरासीदिति योजना। शक्तिशब्दितोद्देशः पुनः सकलात् सा कथमासीदिति ? चेत् सत्यं या अनादिरूपा चैतन्याध्यासेन महाप्रलये सूक्ष्मा स्थिता तस्यागुणवैषम्यानुगुणतया प्राक्तनरागजनितामसस्वप्नप्रपञ्चकार्यसाधने उच्छूनत्वमेवोपचारादुत्पत्तिः। इदं सांख्यमतेनोक्तम्। प्रयोगसारे “तस्माद्विनिर्गता शक्तिः सर्वगा विश्वसम्भवा”। वायुसं० “शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवेति”। पञ्चरात्रेऽपि “एवमालोच्य सर्गादौ सच्चिदानन्दरूपिणीम्। समस्ततत्त्वसंबन्धत्वात् सर्वतोऽधिष्ठानरूपिणीम्। व्यक्तां करोति तां नित्यां प्रकृतिं परमः पुमान्” तस्या एव नादबिन्दू सूक्ष्मपरोक्ष्यावस्थारूपौ तदुक्तं प्रयोगसारे “नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी। शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता। सैव सर्गोन्मुखा” अन्यत्रापि “अभिव्यक्ता परा शक्तिरविनाभावलक्षणा। अखण्डा परचिच्छक्तिमता चिद्रूपिणी विभुः। समस्ततत्त्वभावेन विवर्त्तेच्छासमन्विता। प्रयाति बिन्दुभावं च क्रियाप्राधान्यलक्षणम्”। इच्छाज्ञानादिरूपतया बिन्दोर्विश्वप्रपञ्च परेति साक्षात् परशक्तिमयः अतः पश्चाद्दवस्थात्मकत्वमेवोक्तम् असौ त्रिधा भिद्यते। यतो नादबिन्दू प्रथमोक्तनादबिन्दुभ्यामन्यौ तदुक्तं “स बिन्दुर्भिद्यते त्रिधा”। बिन्दादेर्भेदत्रयस्वरूपमाह बिन्दुरिति। तत्सकाशात् बिन्दोः रौद्री यतस्तस्याः शिवमयत्वम् अतोऽन्यत्रापि। नादाज्ज्येष्ठेति। सर्वभूतत्वे नादस्थितत्वे नान्यत्वं ता सैया। बीजाद्वामा अजायतेति सम्बन्धः तस्याः कुन्दरत्वादन्वर्थत्वम्। तदुक्तं प्रयोगसारे “बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्तेभ्यो जाताश्च शक्तयः। रौद्री बिन्दोः समुद्भूता ज्येष्ठा नादादजायत। वामा बीजादभूच्छक्तिस्ताभ्यो देवास्त्रयोऽभवन्”। ते इति ज्ञानमिच्छा क्रिया च तदात्मानो रुद्रब्रह्मरमाधिपाः क्रमेणेच्छाज्ञानक्रियाभिज्ञानशक्तिस्वरूपाः। अतएव रुद्रादयः निरोधकाले वह्नीन्द्वर्कस्वरूपिणः शक्तेरवस्थाविशेषा ज्ञेयाः एतासामिच्छाक्रियाज्ञानरूपत्वं शक्तित्व उक्तत्वात्। दक्षतन्त्रे च “इच्छाज्ञानक्रियात्मानः” इति। ईश्वरप्रत्यभिज्ञायाम् “यतइच्छति तज्ज्ञातुं कर्त्तुं वा सेच्छया क्रियाम्। अनन्तरं हि तत्कार्यं ज्ञानं दर्शनशक्तितः। ज्ञानशक्तिस्तया चैयोऽसौ स्फुरणसद्यमः। सा क्रियाशक्तिरुदिता यतः सर्व्वं जगत् सृजेत्” गोरक्षसंहितायाम् “इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति”

**क्रियासमभिहार** पु० सम्+अभि+हृ—घञ् ६त०। क्रियायाः पौनःपुन्ये। “क्रियासमभिहारे यङ्” पा० “क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ?” इति माघः।

**क्रियास्नान** न० क्रियाङ्गं स्नानम्। गङ्गोक्ते स्नानविधिभेदे तत्प्रकारो यथा

“क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकम्। मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि। जले निमज्य उन्मज्य उपस्पृश्य यथाविधि। तीर्थस्यावाहनं कुर्य्यात् प्रक्षाल्यशेषतः। प्रपद्ये वरुणं देवमम्भसां पतिमर्च्चितम्। याचेत देहि मे तीर्थं सर्व्वपापापनुत्तये। तीर्थमावाहयिष्यामि सर्व्वाघविनिसूदनम्। सान्निध्यमस्मिन् तोये च क्रियतां मदनुग्रहात्। रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुसदस्तथा। सर्व्वानप्सुसदश्चैव प्रपद्ये प्रयतः स्थितः। देवमप्सुसदं वह्निं प्रपद्येऽघनिसूदनम्। आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा। रुद्राश्चाग्निश्च सर्पश्च वरुणस्त्वाप एव च। शमयन्त्वाशु मे पापं मां च रक्षन्तु सर्व्वशः। हिरण्यवर्णातिसृभिर्जगतीति चतसृभिः। शन्नोदेवीति च तथा शन्नआपस्तदेव च। इदमापः प्रवहत इत्यृचञ्च समुदीरयेत्। एवं सम्मार्ज्जनं कृत्वा छन्दआर्षञ्च देवताः। अघमर्षणसूक्तञ्च प्रपठेत् प्रयतः सदा। छन्दोऽनुष्टुप् च तस्यैव ऋषिश्चैवाघमर्षणः। देवता भाववृत्तश्च पापक्षये प्रकीर्त्तितः। ततोऽम्भसि निमग्नः स्त्रिः पठेदघमर्षणम्। द्रुपदाख्याङ्कृति तथा महाव्याहृतिभिर्जपम्। यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः। तथाघमर्षणं सूक्तं सर्व्वपापप्रणाशनम्। अनेन विधिना स्नात्वा स्नानवान् धौतवाससा। परिवर्त्तितवासास्तु तीर्थनामानि संजपेत्। उदकस्याप्रदानात्तु स्नानशाटीं न पीड़येत्। अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते”।

**क्रियेन्द्रिय** न० क्रियायाः साधनमिन्द्रियम्। वाक्पादादौ कर्म्मेन्द्रिये हेम०।

**क्रिवि** पु० कृवि—इन् नि०। १कूपे निघण्टुः २कर्त्तरि ३हिंसके

१४६ श्लो०। "फलान्यादतृत्स चित्राणि परिक्रीडस्व सानुषु" भट्टिः। "महतसममितः परिचिक्रीडुः" शत० ब्रा० २,५,२,२०, आर्षस्तङभावः। समस्तु अकूजने अव्यक्तशब्दाभावे एव तङ्। "समोऽकूजने" वार्त्तिकक्षता नियमात् "हरः संक्रीडमानश्च उमया सह पर्व्वते" रामा० आ० ४७,१०, तेनास्य कूजनार्थताऽपि किन्तु तत्र न तङ् "संक्रीडति चक्रम्" सि०कौ०। "तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम्। समाः संक्रीडतां तेषाम्" भा० आ० २०६ अ०। अत्र आर्षः तङभावः।

क्रीड पु० क्रीड–घञ्। परीहासे शब्दरत्ना०। [त्रिका०।

क्रीडक न० क्रीड–ण्वुल्। १क्रीडाकारके। २द्वाःस्थे सेवके

क्रीडचक्र न० "इदं क्रीडचक्रं सदीर्घं समस्तैर्गकारैः समेतम्" इ० र० उक्ते छन्दोभेदे।

क्रीडन न० क्रीड–भावे–ल्युट्। १खेलायाम् "उदकक्रीडनं नाम कारयामास भारत!" भा० आ० १२८ अ०। "बालक्रीडनमिन्दुणे सरधनुर्भङ्गावधि" महाना०। करणे ल्युट्। २क्रीडासाधने। "यथा हिरण्याक्ष उदारविक्रमो महाम्बुधे क्रीडनवद्विराजतः" भाग० ३,१८,१४, स्वार्थे क। तत्रार्थे "क्रीडसे त्वं नरव्याघ्र! बालः क्रीडनकैरिव" भा० व० १२ अ०।

क्रीडनीय त्रि० क्रीड–करणे वा० अनीयर् क्रीडनाय साधु छ वा। क्रीडासाधने। "क्रीडतः क्रोडनीयानि ददुः पक्षिगणांश्च ह" भा० अनु० ८६ अ०।

क्रीडा स्त्री क्रीड–भावे अ। १परीहासे २खेलने च "क्रीडारसं निर्विशतीव बाल्ये" कुमा०। "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः" छा० उप०। "तोयक्रीडानिरत युवतिस्नानतिक्तैर्मरुद्भिः" मेघ० "क्रीडायासश्रमशमपटवः" माघः। क्रीडाट्टह. क्रीडागेल. क्रीडोद्यानादयः क्रीडार्थ ट्टहादौ। क्रीडासचिवः नर्म्मसचिवे

क्रीडाताल पु० "रकपश्च द्रुतोयत्र क्रीडातालः स कथ्यते" इति संगीतदामोदरोक्ते तालभेदे।

क्रीडानारी स्त्री क्रीडायाः क्रीडार्थं नारी अश्ववालादिवत् चतुर्थ्यर्थे इत०। क्रीडार्थायां वेश्यारूपायां नार्य्याम्। "वेश्या निर्वेशिता वीर! हारवन्त्यां सहस्रशः। मामाव्वाखाः कृमापापां क्रीडानार्य्यो महात्मनाम्" हरि० १४७ अ०। [शब्द चि०

क्रीडायान न क्रीडार्थं यानम् चतुर्थ्यर्थे इत०। पुष्परथे

क्रीडारत्न न० क्रीडाया रत्नमिव। रतौ त्रिका०

क्रीडारथ पु० क्रीडायाः क्रीडार्थो रथः चतुर्थ्यर्थे इत०। पुष्परथे "क्रीडारथोऽस्तु भवश्चुत सांग्रामिको रथः" भा० आ० १२ अ०

क्रीडारसातल न० श्रीगदितवत्सयुते उपरूपकभेदे यथा

"प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्। प्रसिद्धनायकं गर्भविमर्शाभ्यां विवर्ज्जितम्। भारती वृत्तिबहुलं श्रीतिशब्देन संयुतम्। मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् यथा क्रीडारसातलम्" सा० द०

क्रीडि त्रि० क्रीड–इन्। क्रीडके। "आ क्रीडयो न मातरं तुदन्तः" ऋ० १०।९४।१४।

क्रीडिन् त्रि० क्रीड–शा०ताच्छील्ये इनि। १क्रीडाशीले २वायुभेदे पु० "क्रीडिभ्यः संहृतान् मरुद्भ्यः" यजु० २४। २६ "क्रीडी च शाकी चोज्जेषी" यजु० १७।८५ "क्रीडी सदाक्रीडाशीलोमरुत्" वेददी०।

क्रीडु त्रि० क्रीड उन्। क्रीडाकारके। "क्रीडुर्मखो न मंहयुः पवित्रं सोम! गच्छसि" ऋ० ९।२०।७

क्रीत त्रि० क्री–कर्म्मणि क्त। १मूल्यदानेन स्वस्वत्वीभूते क्षते। "शूद्रानीतैः क्रयक्रीतैः (जनैः)कर्म्म कुर्व्वन् पतत्यधः" स्मृतिः। २गौणपुत्रभेदे पु०। "क्रीतश्च ताभ्यां विक्रीतः" विष्णु सं०। भावे क्त। ३क्रये न० क्रीतानुशयः। पुत्रभेदास्तल्लक्षणानि च योगीश्वरेण दर्शितानि यथा "औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतोमतः। अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रोदत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीतः, कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धोभवेत् सुतः"। "असुरवास्थर्णामति देशभाषाविप्रकृष्टस्य प्रतिषेधः एवं क्रीतस्वयन्दत्तकृत्रिमेष्वपि योज्यं समानन्यायत्वात्। क्रीतस्तु विक्रीतः मातापितृभ्यां पूर्ववत् तदेकं पुत्रं ज्येष्ठञ्च वर्ज्जयित्वा आपदि। सवर्णं इत्येव यत्तु मनुनोक्तम् "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा" इति" तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं न जात्या "सजातीयेष्वयंप्रोक्तस्तनयेषु मया विधिः" इत्युप संहारात्" मिता०। स्वार्थे क। तत्रार्थे। "कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।

स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः" इति मनूक्तेः तस्य पितृधनाद्यभिन्नदायानधिकारित्वम्। दत्तकमीमांसामते "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम च" पराशरेण कलिधर्म्मप्रस्तावे चतुर्णामेव ग्राह्यतया उक्तेः दत्तकचन्द्रिकामते "दत्तौरसेतरेषाञ्च पुत्रत्वेन परिग्रहः" इत्यादि पुराणे दत्तौरसभिन्नानां कलौ वर्ज्यत्वोक्तेश्च क्रीतपुत्रस्य न कलौ कर्त्तव्यता।

क्रीतानुशय पु० क्रीते क्रये अनुशयः। "क्रयविक्रयानुशयश्च" इति मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे अनुशयशब्दे १८६ पृ० तद्विवृतिर्दर्शिता। अधिकं वीरमित्रोदये दर्शितं यथा

"अथ क्रीतानुशयोव्यवहारपदम्। तत्स्वरूपमाह नारदः "क्रीत्वा मूल्येन यत् पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते" इति। न बहु मन्यते—सम्यग्गसमर्घमिति पूर्व्वं न विचार्य्य गृहीत मित्यर्थः। क्रीतं परीक्षणीयमित्याह वृहस्पतिः "परीक्षेत स्वयं क्रीतमन्येषाञ्च प्रदर्शयेत्। परीक्षितं बहुमतं गृहीता न पुनस्त्यजेदिति"। अन्येषां पण्यगुणदोषविदामिति शेषः। नारदोऽपि "क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति"। चर्म्मादीनां परीक्षा सद्यः कार्या तथा च व्यासः "चर्म्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च। वसुकुप्यहिरण्यानां सद्य एव परीक्षणमिति"। अत्र वसुशब्देन रूप्यं गृह्यते। कुप्यं रूप्यहेमव्यतिरिक्तं त्रपुसीसादिकम्। तथा च हेमरूप्ये प्रस्तुत्याहामरसिंहः "ताभ्यां यदन्यत्तत् कुप्यमिति"। क्रीतपण्यद्रव्यविशेषेण परीक्षणकालावधिमाह नारदः "त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु। मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम्। द्विपदामर्द्धमासन्तु पुंसान्तद्द्विगुणं स्त्रियाः। दशाहं सर्व्वबीजानामेकाहं लोहवाससाम्। अतोऽर्व्वाक् पण्यदोषस्तु यदि सञ्जायते क्वचित्। विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयादिति"। त्र्यहात् क्रयदिनादारभ्येति शेषः। पञ्चाहादित्यादावप्येवमेव शेषोऽवगन्तव्यः। त्र्यहं विक्रेत्रे प्रतिदेयमित्यादिविधिदर्शनात् त्र्यहादोह्यमित्यादि परीक्षणं प्रीतिदोह्यादिद्रव्यविषयमिति मन्यते इति स्मृतिचन्द्रिका। दोह्यं महिष्यादिकम् वाह्यं बलीवर्दादिकम्। मुक्तापदेन रत्नोपलक्षणम्। द्विपदाम् मनुष्यदासानामित्यर्थः। तद्द्विगुणं मासादित्यर्थः स्त्रियादासीदित्यर्थः।

पूर्व्वोदाहृतचर्म्मकाष्ठेत्यादिव्यासवचनेन धान्यादीनां गृहीतानां धान्यादीनां सद्यःपरीक्षणाभिधानात् सर्व्वबीजानामित्यत्र बीजशब्दोऽवपनार्थं गृहीतधान्यपरः। अन्यथा सद्यःपरीक्ष्यत्वप्रतिपादकव्यासवचनविरोधः स्यात्। अतोऽर्व्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः। कात्यायनोऽपि "भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव चेति"। भूमेर्गृहक्षेत्रादिरूपाया अनुशयः परावर्त्तनयोग्यः कालः परीक्षाकाल इति यावत्। यथोक्तपरीक्षाकालातिक्रमे दोषदर्शने न प्रतिदानमित्याह स एव "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्। क्रीतन्तत् स्वामिने देयम्पण्यं कालेऽन्यथा न त्विति"। अविज्ञातं परीक्षाशैथिल्यात्तत्त्वतोऽपरिज्ञातम्। दुष्टं विभावितं दोषवत्तया ज्ञातमित्यर्थः। काले परीक्षाकाले। अन्यथा तत्कालात्यये दुष्टतया परिभावितमपि तत् स्वामिने न देयम्। अविज्ञातन्तु यत्क्रीतमित्यनेन यत् क्रयात् प्राक् अपरीक्ष्य क्रीतन्तत् परीक्षासमये दोषदर्शने परावर्त्तनीयम्। यत्तु परीक्ष्य गृहीतं तन्न परावर्त्तनीयमिति। दर्शितमर्थं नारदश्चाह "क्रीत्वा नानुशयं कुर्य्याद्वणिक्पण्यविचक्षणः। क्षयं वृद्धिञ्च जानीयात् पण्यानामागमन्तथा। क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति"। अनुशयं पश्चात्तापम्। पण्यानां वस्त्रादीनां कस्मिन्देशे मूल्यहानिः कस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमञ्च क्रयात् प्रागेव जानीयादित्यर्थः। दोषदर्शनमन्तरेण परीक्षाकाल एव प्रत्यर्पणे विशेषमाह कात्यायनः "क्रीत्वा चानुशयं पश्चात् त्यजेद्दोषाहते नरः। अजुष्टमेव काले तु स मूल्याद्दशमं वहेत्। क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते। षड्भागन्तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नरः" इति। अजुष्टमनभिभुक्तम्। काले परीक्षाकाले अत्र मूल्यदशमभागदानं यदुपभुज्यमानमपि न नश्यति भूम्यादिकं तद्विषयम् उपभोगविनश्वरबीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया। ननु विज्ञानताऽप्यनुशयो न कार्य्यः "क्रीत्वा नानुशयम् कुर्य्यादिति" निषेधश्रवणादिति चेत्सत्यं अपवादस्य सत्त्वात् स चापवादोदर्शितो नारदेन "क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतमिति"। मन्यते इत्यनेन वस्तुतो दोषाभाव उक्तः। द्वितीयादिदिवसे प्रत्यर्पणे विशेषमाह स एव "द्वितीयेऽह्नि ददत् क्रेता मू-

स्यात्त्रिंशांशमावहेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रे-तुरेव तदिति"। परतः तृतीयाहात् परतः क्रेतुरेव तत् क्रीत्वा अनुशयादिकं न कुर्यादित्यर्थः। यत्तु मनुवचनम् "क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वेति" तदुपभोगे नश्वरवस्त्रधान्यगृहादिविषयम्। यत्तूपभोगेन विकारप्रापितं सदोषमपि तत् परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह नारदः "परिभुक्तन्तु तद्वासः क्लिष्टरूपं मलीमसम्। सदोषमपि तत् क्रीतं विक्रेतुर्न भवेत् पुनरिति"। वासोग्रहणमुपलक्षणमिति मदनरत्ने। वासोविषयमेवैतदिति माधवीये। पण्यानां देशकाले उपचयापचयौ ज्ञातव्याविल्याह नारदः "क्षयं वृद्धिञ्च जानीयात् पण्यानामागमन्तथेति"। अन्यादिपण्यानामस्मिन् काले अस्मिन् देशे च क्षयं वृद्धिं वा जानीयात्तथागमं कुलीनत्वादिप्राचार्थम् उत्पादकजन्मभूम्यादिकञ्च जानीयादित्यर्थः। क्रयकाले मूल्यक्षयवृद्धिदोषदर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्यः क्रये दण्डमाह याज्ञवल्क्यः "वृद्धिं क्षयं वा वणिजा पण्यानामविजानता। क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभागिति"। वृद्धिं मूल्यवृद्धिम् अविजानता क्रेत्रा एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः। परीक्षाकालातिक्रमेण प्रत्यर्पणे दण्डमाह मनुः "अकाले तु ददात्यस्य न दद्याच्चापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति"। ददाहग्रहणं परीक्षाकालस्य पूर्वोक्तस्योपलक्षणम्। सर्वमेतत्परिभाषणमृते परिभाषणं तु तदनुसारेणैव प्रतिदानं तदभावादिकं मन्तव्यम्"। क्रयानुशयोऽप्यत्र।

क्रुङ् पुंस्त्री० क्रुन्च–क्विन् "दधृगित्यादि०" पा०नि० नलोपाभावः(कोंचबक)। बकभेदे अमरः स्त्रियां टाप्। २हंसे च "अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया। ऋतेन सत्यमिन्द्रियम्" यजु०१९।७२ "आङ्गिरसः अङ्गानां रसः प्राणो यथा क्रुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धमपिबत् पिबति संपृक्ताभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः" वेददी०।

क्रुञ्च पुंस्त्री० क्रुन्च–अच्। (कोंचबक) बकभेदे अमरः "वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान्" यजु० २४।२२ "कर्णविहो लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा, वाचे क्रुञ्चः" यजु० २४।२१ स्त्रियां संयोगोपधत्वात् टाप्। पुंयोगे तु अजा०टाप्। टाबन्तः। २वीणाभेदे स्त्री मन्द्रा०। ततः चतुरर्थ्यां नडादि० छ कुक्च। क्रुञ्चकीय तन्निकटदेशादौ। क्रुञ्चा वीणास्त्यस्य क्रुञ्चा वर्णी कलाप वा मतुप् यवादि० न मस्य वः। क्रुञ्चामत् तद्युक्ते त्रि० १क्रौञ्चपर्वते पु० हेमच०। स्वार्थे अण्। क्रौञ्च स्वनामख्याते पर्वते क्रौञ्चदारणः। बकभेदे च "ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुदर्शनम्" "यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" रामा० आ० २स०। स्त्रियां तु जातित्वात् ङीप्। "निशम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत्" रामा० आ० २स०

क्रुड निमज्जने घनीभावे च तु० कुटा० प० अक० सेट्। क्रुडति अक्रुडीत् चुक्रोड–क्रोडः।

क्रुथ हिंसने क्र्या० प० सक० सेट् वान्त्यः। क्रुथ्नाति अक्रोथीत् चुक्रोथ। क्रोथः।

क्रुध कोपे दिवा० पर० अक० सोपसर्गः सक० अनिट्। क्रुध्यति स्वत्वमभिक्रुध्यति अदित् अक्रुधत्। चुक्रोध क्रोद्धा क्रोत्स्यति। क्रोद्धव्यम् क्रोध्यम् क्रोधनीयम् क्रोद्धा क्रोधी क्रुद्धः। क्रुध्यन् क्रोधः। क्रुद्धा संक्रुध्य "चुक्रोध पुरगादकः" भा० आ०।१२३अ० "द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः" भाग०६,४.५, अत्र तादर्थ्ये चतुर्थी यत्रादौ वानश् वा। "क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः" भट्टिः "क्रोधं विभो! संहर संहरेति" कुमा०। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कोपविषयस्य संप्रदानता। अस्मै क्रुध्यति। "क्रुधद्रुहोरुपसृष्टयोः कर्म" पा० सोपसर्गस्य तस्य सम्प्रदानस्य कर्मता "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः। "भक्तमभिक्रुध्यति" सि० कौ० अन्यादुपसर्गात् परस्तु तत्तदुपसर्गद्योत्यार्थयुक्तक्रोधे सक० प्रति+वैपरीत्येन क्रोधने सक० "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः

क्रुध् स्त्री क्रुध–सम्प० भावे क्विप्। कोपे कामव्याघात हेतुके चित्तवृत्तिभेदे अमरः "इतिक्रुधाऽऽक्रुश्यत तेन केतकम्" नैष०। हलन्तत्वात् वा टाप्। क्रुधा

क्रुधमिन् त्रि०क्रुध–बा० मिनि क्विच। क्रोधयुक्ते "उग्रो यः युध्मः क्रुधमी मनांसि" ऋ० ७।५६।८

क्रुन्च(ञ्च) कौटिल्ये, अल्पीभावे च भ्वा०पर०सेट्। क्रुञ्चति अक्रुञ्चीत् चुक्रुञ्च। क्रुङ् क्विन् क्रुङ् अत्र "चोः कुः" पा० चवर्गान्तत्वेन कुत्वप्राप्तौ दधृगित्यादिना क्विनं विधाय "क्विन् प्रत्ययस्य कुः" पा० क्विनन्तस्य पृथक् कुत्वविधानात् संयोगान्तलोपात् प्राक् कुः। भावे क्यप् अक्रुञ्चि। केचित्तु दधृगादिसूत्रे क्रुञ्चामिति निर्देशात् क्रुञ्चेति क्रोः

यथं श्रोतं धातुभाङ्गः तन्मते भावे क्रुष्टाने इत्येव । एतन्मते क्रुङ् इत्यत्र क्तिनि नलोपाभावे न निपातकल्पना

क्रुन्थ क्लेशे श्लेषे च क्र्या॰ पर॰ अक॰ सेट् इत्यायुधः । क्रुथ्नाति अक्रुन्थीत् चुक्रुन्थ अयमपाणिनीयः

क्रुमु त्रि॰ क्रम–उन् वेदे पृषो॰ । सर्वत्र क्रमणशीले "क्रुमुर्मा वः सिन्धुर्निरीरमत्" ऋ॰५।५३।९। "क्रुमुः सर्वत्र क्रमणशीलः" भा॰

क्रुमुक पु॰ क्रम–उक वेदे पृषो॰ । गुवाके "क्रुमुकमपि कुर्य्यात् यथा वा अग्नेः प्रिया तनुः यत्क्रुमुकः" तैत्ति॰५।१।९।५

क्रुश रोदने अक॰ आह्वाने आक्रोशे च सक॰ भ्वा॰ प॰ अनिट् । क्रोशति अक्रुक्षत् । चुक्रोश क्रोक्ष्यति । क्रोष्टा क्रुष्टः क्रोशन् क्रोशः क्रोशनः क्रोष्टुः । "रसज्ञरगन्धान्धां मायमक्रुक्षदिति मन्यते" ऋ॰ १०।१४६।४ "ह्रदहदन्ति भद्रिरेख भन्त्रिनेन्द्रं क्रोशन्तोऽविदन्ना मधु" ऋ॰१०।९४।४ "एष क्रोशति दात्यूहः विपक्षी प्रतिकूजति" रामा॰ अयो॰२६अ॰ । कर्म्मणि क्रुश्यते अक्रोशि "इतिक्रुधाक्रुश्यत तेन केतकम्" नैष॰

अस्मादुपसर्गात् परस्तु तत्तद्द्योत्यार्थयुक्ते रोदनादौ

अनु+दयायाम् अनुरोदने च सक॰ । अनुक्रोशः (दया) "न तानुभनुक्रोशन्ति चितयोभरेषु" ऋ॰ ४।२८।५ "किमनुक्रुश्य वैक्लव्यमुत्पादयसि मेऽनघ !" भा॰अनु॰५अ॰

आ+अप्रियकथने सक॰। "गतं शाल्वमथाक्रुश्य अतियोदयन्तमर्हति" मनुः । "प्रत्याक्रोशेदिहाक्रुष्टः" भा॰ अनु॰ ४५६२श्लो॰ । "आक्रुष्टः पुरुषः सर्वं प्रत्याक्रोशेदनन्तरम्" भा॰ व॰ १८३श्लो॰ । "हा प्रिये ! क्वासि भद्रासि व्याक्रोशन्नपतत् क्षितौ" रामा॰ क्वा॰ ८६अ॰

उद्+उच्चैराह्वाने सक॰ "उदक्रोशन् च पाण्डवान्" भा॰ आ॰ ७४८श्लो॰ । उच्चै रोदने च अक॰

क्रुश्वन् पुंस्त्री क्रुश–क्वनिप् । शृगाले उज्ज्वल॰ स्त्रियां ङीप् रश्चान्तादेशः क्रुश्वरी । [ताप्रिये २आह्वते च त्रि॰ ।

क्रुष्ट न॰क्रुश–भावे क्त । १रोदनरवे। कर्म्मणि क्त । २कृते

क्रुड क्रुडवत् । क्रूडति अक्रूडीत् चुक्रोड "तस्य रेतः परापतत् तदग्नियोनिलोदापस्तज्ञादयता तदक्रूडयत्तत् क्रूडमानं गभि व्यदधत् तदिद पयः" श्रुतिः ।

क्रूर त्रि॰ कृत–रक् धातोः क्रूः । १निर्दये २कठिने अमरः ३घातके ४उग्रे च मेदि॰ । "तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया" रघुः । "नवियुधाताः सर्वेऽनः क्रूरे मतिकृतक्रियाः" कुमा॰। "हठकारी मृदुर्दान्तः क्रूराचारैरसंवसन्" मनुः । तस्य भावः ष्यञ् क्रौर्य्यं न॰, तल् क्रूरता स्त्री, त्व क्रूरत्व न॰, निर्दयत्वे हिंसने काठिन्ये उग्रत्वे च । "ओजोऽथ युग्मं विषमः समश्च क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च । चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः" दीपिकोक्ते मेषादिषु मध्ये ५विषमराशौ पु॰ "अर्कोनेन्दर्कसौरारा पापाः सौम्यास्तथा परे । पापयुक्तो बुधः पापो राहुकेतू च पापदौ" ज्योति॰ उक्ते ६ग्रहभेदे च "यथा दृष्टफला क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्तः पुनः सौम्योऽपि यः क्रूरफलप्रदः" "इदश्च सौम्यक्रूराणां फलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्य्ययात्" "ग्रहाः सौम्याश्रया क्रूरा वक्राः शीघ्रोच्चनीचगाः" इति "तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत् । सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः । न नन्दति विवाहे च यात्रायां न निवर्त्तते । रोगाद्विमुच्यते रोगी भेषजेनाकृतोद्यमः । रोगकाले भवेद्वेधः क्रूरवेधस्तथायतः" "क्रूराक्रान्ता महाक्रूरा" इति च ज्यो॰ त॰ पापग्रहार्थपरतया क्रूरशब्दप्रयोगात् । क्रूरवेधप्रकारस्तु चक्रशब्दे सर्व्वतोभद्रचक्रे वक्ष्यते । ७रक्तकरवीरे पु॰८श्येनपक्षिणि ९कङ्कपक्षिणि च पुंस्त्री॰ राजनि॰ स्त्रियां जातित्वात् ङीष् । १०रक्तपुनर्नवायां स्त्री राजनि॰

क्रूरकर्म्मन् त्रि॰ क्रूरं हिंसकं कर्म्म यस्य । १हिंसाकर्म्मकारिणि "क्रूरकर्म्मकृताश्चैव शतशो गुरुतल्पगः" मनुः । २कटुतुम्बिनीवृक्षे पु॰ राजनि॰ ।

क्रूरकोष्ठ त्रि॰ क्रूरं कठिनं कोष्ठं यस्य । धातुवैषम्यकृते बद्धकोष्ठापये । "क्रूरकोष्ठस्यातितीक्ष्णाग्नेः रसमौषधमल्पगुणं वा भक्तवत् पाकमुपैति तत्र वमुदोषदोषा यथाख्य कर्म्मनिर्हृतयमाणा व्याधिं बलविभ्रमश्चापादयन्ति" सुश्रु॰ ।

क्रूरगन्ध पु॰ क्रूरः उग्रो गन्धोऽस्य । १गन्धके राजनि॰ २तीक्ष्णगन्धमात्रे त्रि॰ क्रूरः गन्धएकदेशोऽस्याः टाप् । कन्थारीवृक्षे तीक्ष्णकण्टकायाम् राजनि॰ ।

क्रूरदृश् त्रि॰क्रूरा दृग् यस्य, क्रूरं पश्यति दृश–क्विन् २त॰ स॰ वा । १पिशुने खले २शनैश्चरग्रहे पु॰ मेदि॰ । ३मङ्गलग्रहे "आरोवक्रः क्रूरदृक् चावनेयः" ज्यो॰त॰ । कर्म्म॰। नील॰ ता॰ उक्ते स्थानविशेषस्थितानां ग्रहाणां स्थानविशेषे ४चतुरास्थदृष्टौ रिपुदृष्टौ स्त्री । ५५१पृ॰दरिशब्दे विवृतिः । क्रूरस्य ग्रहविशेषस्य दृक् । ५पापग्रहदृष्टौ स्त्री ।

**क्रूरधूर्त्त** पु० क्रूरः कष्टत्वात् तत्सदृशः धूर्त्तः । कृष्णधत्तूरके राजनि०

**क्रूरप्रसादन** त्रि० क्रूरमपि प्रसादयति प्र+सद+णिच्—ल्यु । भक्ते सेवके शब्दचि० । [राजनि० स्त्रियां ङीप् ।

**क्रूररावित्** पुंस्त्री० क्रूरमुग्रं रौति रु-णिनि । द्रोणकाके

**क्रूरलोचन** पु० क्रूरं लोचनमस्य । शनिग्रहे ज्योति० तद्दृष्टेर्हिंसकत्वात् तस्य तथात्वम् । यथा च तद्दृष्ट्या घातकत्वं तथा दृग्भाननशब्दे ८८१पृ० उक्तम्

**क्रूराकृति** त्रि० क्रूरा आकृतिर्यस्य । १कठिनमूर्त्तिके २रावणे पु० शब्दमा० । कर्म्म० । ३कठिनायां मूर्त्तौ स्त्री

**क्रेङ्कित** न० क्रेङ्कुत्यव्यक्तं शब्दं करोति णिच्—भावे क्त । क्रेङ्कुत्यव्यक्तशब्दभाषणे "निरुध्यमाना चक्रोश चक्री क्रेङ्कितभाषणैः" काशीख०

**क्रेणि** त्रि० क्री—नि । क्रेतरि—शब्दक्रेणिः उज्ज्वलद०

**क्रेय** त्रि० क्री—कर्म्मणि यत् । क्रेतव्ये अमरः

**क्रैडिन** त्रि० क्रीडी मरुत् देवताऽस्य अण् वेदे नि० नलोपाभावः । क्रीडिदैवत्ये साकमेधीये तृतीयाहे प्रातःसवनिके चरुद्वयनिष्पन्ने हविषि । "शिष्टान्येवास्य क्रैडिनं हविः शिष्टैर्हि क्रीडतीवासमेवायाङ्क् प्राणः" शत० ११,५,२,४ "चरुकौ लिङ्गं चेति त्रीणि शिष्टानि" भा० "तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णमास्यं प्रातः सवनिकेषु क्रैडिनम्" आश्व० श्रौ० ८।२।१५ तद्द्रव्यमभिक्रम्य इष्टिः च । क्रैडिनीया इष्टिभेदे सा च इष्टिः कात्या० श्रौ० ५,७,१ सूत्रादौ दर्शिता । तस्याः पद्धतिश्च संक्षेपेण कर्कभाष्ये दर्शिता यथा

"अथ क्रैडिनीया हिष्टिरुच्यते तत्र मरुद्भ्यः क्रीडिभ्यः सप्तकपालः, अदित्यै चरुः, इमे हविषी समानतन्त्रे भवतः प्रतीक्ष्य हरणपक्षे क्रैडिन्यादित्ये द्रव्यमिश्रं हरणे क्रैडिन्यादित्येष्टिश्चाभवं यज्ञो इति। चरणे पात्रासादने सप्तकपालानि एका चरुस्थाली, दक्षिणा अन्वाहार्यः गतावदानानन्तरम्, मेक्षणम् विंशतिरिध्मकाष्ठानि पुरोडाशपात्री का अन्यत्सर्वं प्रकृतिवत्। पक्षे मरुद्भ्यः क्रीडिभ्यो जुष्टम्, अदित्यै जुष्टम् । प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् अदित्यै त्वा जुष्टम्। नानाबीजपक्षे तद्धर्मा उक्ताः एकबीजपक्षे करणान्ते विभज्यानुमन्त्रः इदं मरुतां क्रीडिनाम्, इदमदित्याः । भागदाने मरुतः क्रीडिनो गच्छ, अदितिं गच्छ, सप्तदशेन पञ्चे चोलवद्धावते । उत्तमभागे अष्टमक्ते सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि । प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि मरुतः क्रीडिनो यज इदं मरुद्भ्यः क्रीडिभ्यः, अदित्या अनुब्रूहि अदितिं यज इदमदित्यै, मेक्षणेन चरोरवदानम् । स्विष्टकृदादि पुरोडाशस्य प्राशित्रेडाव्यतिरिक्तं न भवति चरोस्तु सर्वं भवत्येव । स्यूहने मरुतां क्रीडिनामदित्या उज्जितिम् मरुतः क्रीडिनोऽदितिश्चमपनुदन्तु । प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति । अन्यत्कर्मापवर्गान्तं प्रकृतिवत् इति"

**क्रैव्य** पु० क्रिवीणां पञ्चालानां राजा वा० ञ्य । क्रिविदेशराजभेदे क्रिविशब्दे दृश्य०

**क्रोञ्च** पु० क्रुञ्च अच् वा० गुणः। "कैलासे धनदावासे क्रौञ्चः क्रोञ्चोऽभिधीयते" इति हलायुधोक्ते क्रौञ्चपर्वते क्रोञ्चदारणः कार्त्तिकेयः इति रायमुकुटः

**क्रोड** पुंस्त्री० क्रुड—घनीभावे संज्ञायां घञ् । १सूकरे "क्रोडकुलदष्ट्रमानभद्रमुस्तारसामोदः" काद० "नदी सैवालदिग्धाङ्गं हरिद्रकुञ्जराघरम् । ... क्रोडैश्चितैरिवार्पितम्" भा० अनु० ५० अ० । २भुजयोरन्तरे (कोल) न० स्त्री० अमरः "कुपितकपिकपोलक्रोडताम्रस्तमांसि" उद्भटः ३तरुकोटरे "हा हा हन्त तथापि जन्मविटपिक्रोडे मनोधावति" उद्भटः । घनीभूते ४वक्षोमध्यभागे पु० "इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्" यजु० २५,८ "क्रोडस्य घनीभूतवक्षोमध्यभागपरता वेददीपे उक्ता । क्रोडं तु वक्षोभुजान्तरे देहांशभेदः । "हृदयं जिह्वां क्रोडं सव्यसक्थि पूर्वनडं पार्श्वे मतस्ने गुदमध्यं दक्षिणा श्रोणिरिति जौह्वानि" कात्या० श्रौतसू० ६,७,६ "क्रोडं वक्षोभुजान्तरम्" कर्कः "शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणि वर्ज्जम्" कात्या० श्रौतसू० ६,८,१३, । ५अश्वानामुरसि ६उत्तरस्थग्रामभेदे शब्दचि० ७वाराहीकन्दे पु० राजनि० ८शनिग्रहे ९मेदिनिः

**क्रोडकन्या** क्रोडस्य सूकरस्य कन्येव प्रियत्वात् । वाराहीकन्दे राजनि० । [ (थड थुलकुडि) राजनि०

**क्रोडचूडा** स्त्री क्रोडे चूडा यस्याः । महाश्रावणिकायाम्

**क्रोडपत्र** न० क्रोडे उपचारात् मध्ये स्थितं पत्रम् शाक० । ग्रन्थलेखने भ्रमात् त्रुटितग्रन्थस्य परिपूरणाय ग्रन्थस्थपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापिते पत्रे ।

**क्रोडपर्णी** क्रोडे कण्टकमध्ये पर्णं यस्याः गौरा० ङीष् । कण्टकारिकायाम् शब्दच०

**क्रोडपाद्** पुंस्त्री क्रोडे पादोऽस्य। कच्छपे हेम॰ क्रोडाङ्घ्रि प्रभृतयोऽप्यत्र।

**क्रोडादि** पु॰ पाणिन्युक्ते उपसर्जनस्त्रीत्वे ङीप्निषेध निमित्ते शब्दगणे स च गणः "क्रोड नख खुर गोखा उखा शिखा बाल शफ गुद" क्रोडादिराकृतिगणः तेन भग गल घोण इत्यादयोऽपि ग्राह्याः

**क्रोडी** स्त्री क्रोड+जातौ, गौरा॰ ङीष्। १वराहजातिस्त्रियां २वाराहीकन्दे च राजनि॰।

**क्रोडीकरण** न॰ क्रोड+च्वि+कृ-भावे ल्युट्। आलिङ्गने हला॰

**क्रोडीमुख** पुंस्त्री क्रोड्याः शूकर्य्या मुखमिव मुखमस्य। गण्डके (गाण्डार) राजनि॰ स्त्रियां जातित्वात् ङीष्।

**क्रोडेष्टा** स्त्री क्रोडस्य इष्टा प्रिया। मुस्तके (मुथा) राजनि॰

**क्रोथ** पु॰ क्रुथ-हिंसने भावे घञ्। हनने हेमच॰

**क्रोध** पु॰ क्रुध-भावे घञ्। १परापकाराय चित्तवृत्तिभेदे, पराभिद्रोहाभिलाषेण अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे। क्रोधश्च रौद्ररसस्य स्थायिभावः "रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः" सा॰ द॰। स च यदा कुतश्चित् प्रतिहतः क्रोधरूपेण परिणमते स च रजोगुणकार्य्यः "काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" गीतोक्तेः "यस्त्वया पृष्टो हेतुरेष काम एव। ननु क्रोधोऽपि पूर्वं त्वयोक्तः "इन्द्रियस्येन्द्रियस्यार्थे" इत्यत्र, सत्यं नासौ ततः पृथक् किन्तु क्रोधोऽप्ययमेव, काम एव हि केनचित् प्रतिहतः क्रोधात्मना परिणमते। पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेणैकत्वेनोच्यते लोकगुरुत्वात् प्रसङ्गयतीति तथा" श्रीधरः। तस्य कामजत्वमपि "सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते" गीतावाक्यात्। तत्कार्य्याणि उक्तानि "न कर्म्म क्रोधान्धः प्रभवति विधातुं रणक्षेत्रे" "अन्धीकरोति भुवनं बधिरीकरोति धीरं सचेतनमचेतनतां नयेत् क्रुत्। कृत्यं न पश्यति न चात्महितं शृणोति धीमानधीतमपि न प्रतिसन्दधाति" नीतिमा॰ "क्षमैव क्रोधविजये समर्थेति विवेकिनः। क्रोधः कार्य्यविभङ्गाय तस्मात्तं क्षमया जयेत्" शकुन्तला॰ स च मृदुमध्याधिमात्रभेदेन त्रिधेति पा॰ साधन पादे ३४सू॰ भा॰ स्थितम् "क्रोधं विभो! संहर संहरेति" कुमा॰। "क्रोधे शक्रगणः परे दमघुषः पापो प्रलम्बासुरः" सा॰ द॰। "क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" वेणी॰। "दिगम्बरं जगत्सर्व्वं आकुलं समुदाहृतम्। जनानां जायते भद्रे! क्रोधे क्रोधः परमम्" इत्युक्तलक्षणे षष्टिसंवत्सरान्तर्गते अष्टत्रिंशत्तमे २वर्षभेदे पु॰।

**क्रोधकृत्** त्रि॰ क्रोधं करोति कृ-क्विप्। क्रोधकारिणि १परमेश्वरे पु॰ "क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः" विष्णुसं॰ असाधून् प्रति क्रोधकर्तृत्वात् तस्य तथात्वम् "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी नरके प्रतिवर्त्तते" इति श्रुतिस्मृत्युदितकर्म्मानाचरणे ईश्वरद्विष्टत्वोक्तेः तस्य तादृशान् प्रति क्रोधकर्तृत्वम्। तच्च प्राणिनां स्वादृष्टविशेषात् भवति

**क्रोधज** त्रि॰ क्रोधात् जायते जन-ड ५त॰। १क्रोधजाते २मोहे पु॰ मोहस्य क्रोधजत्वं गीतावाक्ये यथा "क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः" क्रोधजाते त्रिविधव्यसनान्तर्गते व्यसनाष्टके च. यथाह मनुः "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"

**क्रोधन** क्रुध-युच्। १क्रोधशीले अमरः "यद्रागेण कृतं तदेव कुरुते क्रोधायनिः क्रोधनः" वेणी॰ "वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च। स्तम्भः पितृवर्त्ती च नामभिः कर्म्मभिस्तथा। कौशिकस्य सुता आसन् शिष्याः गर्गस्य भारत!" हरि॰ २१ अ॰ उक्ते गर्गशिष्ये २कौशिकपुत्रभेदे। "रोगो मरणदुर्भिक्षं विरोधोत्तरमङ्गलम्। क्रोधने विषमं सर्वं समाख्यातं हरप्रिये!" इत्युक्तलक्षणे षष्टिसंवत्सरान्तर्गते ऊनषष्टितमे ३वर्षभेदे। "अधिताङ्गारकवर्णक उत्पन्नः क्रोधनस्तथा" इति तन्त्रोक्ते ४भैरवभेदे च पु॰।

**क्रोधमूर्च्छित** त्रि॰ क्रोधेन मूर्च्छितो बहुलीभूतोऽस्य ३त॰ वा। १अतिकोपने "एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्च्छिता" भा॰व॰ ४६अ॰ ५त॰। २कारनामगन्धद्रव्ये पु॰ शब्दर॰

**क्रोधवर्द्धन** त्रि॰ क्रोधं वर्द्धयति वृध-णिच् ल्यु ६त॰। १कोपस्य वर्द्धके अनिष्टजनकवाक्यादौ २असुरभेदे पु॰ "चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च" हरि॰ २६३अ॰ असुरकथने। स एव भारतयुद्धकाले दण्डधारनृपत्वेनाविर्भूतः यथा "क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः। दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः" भा॰ आ॰६७अ॰ अंशावतारे

**क्रोधहन्** पु॰ क्रोधं हन्ति हन्-क्विप्। १विष्णौ "क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः" विष्णुसं॰ "साधूनां क्रोधं हन्तीति क्रोधहा" भा॰। २कोपघातके त्रि॰

**क्रोधहन्तृ** त्रि॰ क्रोधं हन्ति हन-तृच् ६त॰। १कोपघातके

२असुरभेदे पु० स च दनुजासुरस्यावरजः। "क्रोधहन्तेति यस्तस्य (दनोः) बभूवावरजोऽसुरः। दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ" भा० आ० ६७०। ३असुरभेदे पु० क्रोधवर्द्धनशब्दे दृश्यम्

**क्रोधसम्भव** त्रि० सम्भवत्यस्मात् सम्+भू—अपादाने अप् क्रोधः सम्भवोऽस्य। कोपजाते "क्रोधाद् भवति संमोहः" गीता०भावे अप् ६त०। २कोपोत्पत्तौ "आच्छादिर्मूषिकास्पर्शे आकृष्टे क्रोधसम्भवे" क्रोधसम्भवे कोपोत्पत्तौ" प्रा० त० रघुनन्दनः। [ क्रोधो निद्राविकारी" सुश्रुतः

**क्रोधालु** त्रि० क्रुध—बा० आलुच्। कोपशीले "क्रोधालुर्विमुख-

**क्रोधिन्** त्रि० क्रुध—णिनि। कोपयुक्ते मारुतप्रकृतेरेव तथात्वं भवति यथाह सुश्रुतः
"सप्त प्रकृतयो भवन्ति। दोषैः पृथग्द्विशः समस्तैश्च। शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु। तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मात्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितकरचरणोऽल्परूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति। अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः। अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः। किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः"।

**क्रोश** पु० क्रुश—भावे घञ्। १रोदने २आह्वाने च। क्रोशति यतः अपादाने घञ्। "हस्तैर्दशभिर्वंशो दण्डः। क्रोशः सहस्रद्वितयेन तेषाम्" लीला०उक्ते८०००हस्तकरमिते अध्वपरिमाणे "चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन च। क्रोशोऽनुः सहस्रेण गव्यूतिस्तच्चतुर्गुणा" हेमा०दा०मार्क० पु० उक्तेः, "गव्यूतिः स्त्री क्रोशयुगम्" अमरोक्तेश्च तस्य गव्यूतेरर्द्धमानता प्रतीयते हेमाद्रि० दा० आदित्यपुराणे च "धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते" इत्युक्त्या तु गव्यूतेर्द्विसहस्रधनुर्मितत्वात् तदर्द्धेन चतुःसहस्रहस्तमितत्वमपि क्रोशस्य कार्य्यविशेषे स्मर्य्यते इति भेदः। ३सङ्केते "दशदण्डे तु या पूजा तत्फलं सञ्चयं भवेत्। एकं क्रोशे महेशानि! तत्फलं सम्यतोपमम्। सप्तमे क्रोशजे देवि! द्रव्यतुल्यं न संशयः। अतःपरं महेशानि। विफलत्वं न संशयः" इति गङ्गाभ० तं० ६पटले। "क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा" रघुः

**क्रोशताल** पु० क्रोशं व्याप्य तालः शब्दोऽस्य। ढक्कायां हारा०

**क्रोशध्वनि** पु० क्रोशं व्याप्य ध्वनिरस्य। ढक्कायां हारा०

**क्रोशयुग** न० ६त०। क्रोशद्वयमिते गव्यूतौ अमरः

**क्रोशिन्** त्रि० क्रुश—णिनि। शब्दकारके उपमानपूर्वकतया समासे क्रोशिनि परे पूर्वपदस्याद्युदात्तता। ध्वाङ्क्षक्रोशी

**क्रोष्टु** पुंस्त्री क्रुश—तुन्। १शृगाले अमरः अस्य अस्य वृत्तौ सर्वनामस्थाने परे नित्यं तृतीयादावचि वा, स्त्रियां तु नित्यं तृज्वत्। क्रोष्टा क्रोष्टारौ हे क्रोष्टो!। क्रोष्टून्। क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्यामित्यादि स्त्रियां ङीप् क्रोष्ट्री। "क्रोष्टा मायोरिन्द्रस्य गौरमृगः" यजु० २४,३२ "याह्नस्य गुर्वीं गन्धां नीचः क्रोष्टाभिमर्दति" भा०आ० २१३अ० २यदुवंश्ये नृपभेदे पु०। "क्रोष्टोस्तु शृणु राजेन्द्र! वंशमुत्तममव्ययम्। यदोर्वंशधरस्याथ यज्वनः पुण्यकर्म्मणः। क्रोष्टोर्वंशं हि श्रुत्वैव सर्वपापैः प्रमुच्यते। यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः" "गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः" हरि० ३५अ० स्वार्थे क। शृगाले "क्रोष्टुकद्वीपिदंशैर्वृकमशकैः" भा० आ० १४०अ०। क्रोष्टुकपुच्छिका। क्रोष्टुर्गोत्रापत्यम् कुञ्जा० च्फञ् क्रोष्टुः क्रोष्ट्र। क्रौष्टायन ततः स्वार्थे अस्त्रियां ञ्यः। क्रौष्टायन्य तद्गोत्रापत्ये पुंसि स्त्रियान्तु न ञ्यः। जातित्वात् ङीष् क्रौष्टायनी।

**क्रोष्टुकपुच्छिका** स्त्री क्रोष्टुकस्य शृगालस्य पुच्छमिव पुष्पमस्त्यस्य ठन्। १पृश्निपर्ण्याम् (चाकुलिया) (रामचावक) इत्यमरटीकायां स्वामी २गोलोमिकायाम् राजनि०

**क्रोष्टुकमेखला** स्त्री क्रोष्टुकस्य मेखलेवास्त्यस्याः अच्। पृश्निपर्ण्यां (चाकुलिया) रत्नमा०

**क्रोष्टुकर्ण** पु०। ग्रामभेदे सोऽभिजनोऽस्य तक्षशिला० अञ्। क्रौष्टुकर्ण पित्रादिक्रमेण तद्ग्रामवासिनि स्त्रियां ङीप्

**क्रोष्टुकशिरस्** न० "वातशोणितजः शोथः जानुमध्ये महारुजः। शिरःक्रोष्टुकपूर्वन्तु स्थूलं क्रोष्टुकशीर्षवत्" सुश्रुतोक्ते वातजे रोगभेदे। "क्रोष्टुकशिरःखञ्जपङ्गुवातवेदनासु इत्यादि" "स्तम्भी विश्वाची क्रोष्टुकशिरःखञ्जकादि सुश्रु०

**क्रोष्टुपाद** पु० ऋषिभेदे तस्य गोत्रापत्यम् इञ्। क्रौष्टुपादि तद्गोत्रापत्ये अस्त्रियां बहुत्वे यस्कादि०तस्य लुक्। क्रोष्टुपादाः स्त्रियान्तु क्रौष्टुपादी। एवं क्रोष्टुमान, क्रोष्टुमायप्रौ ऋषिभेदयोः तदपत्ये इञ् बहुषु अस्त्रियाम् यस्कादि० तस्य लुक्।

**क्रोष्टुपुच्छिका** स्त्री क्रोष्टुःपुच्छमिवास्त्यस्याः ठन्। पृश्निपर्ण्याम् (चाकुलिया) रत्नमा०

"क्लिश्यन्निवाग्रे भुजमध्यमुरःस्थलेन" रघुः। अत्र मल्लिनाथः क्लिश्यन्निति पठित्वा क्लिश्नातिरयं सकर्म्मकः "क्लिश्नातिभुवनत्रयमिति दर्शनादिति व्याचख्यौ। तेन टीकापुस्तके क्लिश्नन्निति पाठः प्रामादिक एव।

उपसर्गविशेषात् तत्तदुपसर्गद्योत्यार्थयुक्ते बाधने।

परि+सर्वतोबाधने; "परिक्लिश्यमाने" पा०।

**क्लिशित** त्रि० क्लिश—क्त वा इट्। १क्लेशयुक्ते २उपतापिते च

**क्लिष्ट** त्रि० क्लिश-क्त वा इडभावः। १क्लेशयुक्ते २पीडिते च। ३पूर्व्वापरविरुद्धार्थके वाक्ये न० अमरः

**क्लिष्टा** स्त्री क्लिष्टं क्लेशः अस्त्यस्याम् अच्। पातञ्जलोक्ते चित्तवृत्तिभेदे यथा

"वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" सू०

"क्लेशहेतुकाः कर्म्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः। ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति। अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथाजातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इति एवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेनावतिष्ठते प्रलयं वा गच्छतीति। ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः" भा०

"स्यादेतत् पुरुषो हि गम्यो, उपदिश्यते। न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरलम्भमाः कैश्चित् परिगणयितुमसंख्याताश्च कथं निरोधव्या इत्याशङ्क्य तासामियत्तामाह उपदर्शयतदुपरं सूत्रमवतारयति ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः। वृत्तिरूपोऽवयवी एकः। तस्य प्रमाणादयोऽवयवाः पञ्च तत्सङ्घातः पञ्चतयः पञ्चावयवा वृत्तिर्भवति नाम वृत्तयस्तु मैत्रादिचित्तभेदात् बह्व्य इति पञ्चतयमनुपपन्नम् एतदुक्तं भवति चैत्रो वा मैत्रो वा कश्चिदश्वो वा तेषां वृत्तयः पञ्चतय्य एव नाधिका इति! चित्तस्येति चैकवचनं जात्यभिप्रायं चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषमनुष्ठानोपयोगं दर्शयति। क्लिष्टाऽक्लिष्टा इति। अक्लिष्टा उपादेयाः क्लिष्टा निरोद्धव्या अपि परेण वैराग्येणेति। अस्य व्याख्यानम्। क्लेशहेतुका इति। क्लेशाः अविद्यादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां ताः तथोक्ताः। यद्वा पुरुषार्थं प्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशैरिव वृत्तिः क्लेशः क्लिष्टम् तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्ज्जनार्थमसूषां प्रवृत्तिरत एव कर्म्माशयप्रचयक्षेत्रीभूताः प्रमाणादिकाः। अस्ययं प्रतिपक्ष्यदर्शनाय तत्र सङ्क्लिष्टो वा कर्म्माशयमाचिनोतीति भवन्ति धर्म्माधर्म्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति अक्लिष्टा व्याचष्टे ख्यातिविषया इति। विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति तेन सत्त्वपुरुषविवेकविषया यतः अतएव गुणाधिकारविरोधिन्यः कार्य्यकरणं हि गुणानामधिकारो विवेकख्यातिपर्य्यवसानश्च स इति चरिताधिकाराणां न गुणानामधिकारं विरुन्धति इति अतश्च अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्व्वे प्राणभृतां न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टवृत्तयः। सत्यामपि भावेऽपि कार्य्यकारिता विरोधिमध्यपातित्वात्। तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधः तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह। क्लिष्टप्रवाहेति। आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रान्तरे तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तरालवर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह तथाजातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्तिसंस्कार, चक्रमनिशमावर्त्तते आनिरोधसमाधेः तदेवंभूतञ्चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्यापाततः। प्रलयं वा गच्छतीति परमार्थतः। विभक्तोद्देश्यमर्थमाह। ता इति पञ्चतेत्यवधारणमात्रेण न तु गणवृत्तिव्याख्यानं तयोः प्रकारेऽन्तरग्रहात्। ताः स्वसंज्ञाभिरुद्दिशति" विव०

"प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" सू०

"निर्द्देशे यथावचनं विभज्य लक्षणं इत्यभाव इतरेतरयोगः। यथा नित्यानित्यशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येत्युक्तेऽपि न द्विकमीदृशामत्रकारादिविभ्रमा व्युदस्यन्ते। एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसङ्ग्रहशङ्कां व्युदस्येति तन्निराकरणाय वक्तव्यं पञ्चतय्य इति एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति" विव०

**क्लिष्टि** स्त्री क्लिश-क्तिन्। १क्लेशे २सेवायां च मेदिनी।

क्लीत पु० सुश्रुतोक्ते अग्निप्रकृतिके कीटभेदे। "क्लीतः कृमिसरारी च" सुश्रुतः कीटशब्दे विवृतिः

क्लीतक न० क्लीव+क्विप् नि०वलोपः क्लिवं तकति हसते कच्। मधूके (यष्टिमधु)। अमरः। "तत्र क्लीतकाश्मारग्वधा सुगन्धगर्गरकरघाटविद्युदिचाविलदावीलवटौ मूत्रविरा-चि" सुश्रुतः। २करञ्जबीजे "यास्रनि मन्यान् संनमयेत्" "एकक्लीतकेन" आश्व० गृ० १,८,७,८. "करञ्जबीजस्य यन्नैकं बीजं तदेकक्लीतकम्" नारा० वृ०।

क्लीतकिका स्त्री क्लीतादागतः कन् क्लीतकः विक्रयः निन्द्यायां ठन् टस्य कः। नीलद्यामौषधौ अमरः। नीलद्राः विक्रयस्य निन्दितत्वमाह मिता० आपस्तम्बः "रोमकूने सदा गच्छेद्दसौ नीलद्रासु कस्यचित्। त्रिरर्षेषु च मासान्दारन्नप्रकृच्छ्रं विशोधनम्। पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम्। पतनञ्च भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति"

क्लीतनक न० क्लीतं कीटभेदं नुदति नुद-बा० ड संज्ञायां कन्। मधूलिकायाम् अतिरसायाम् राजनि०।

क्लीव(ब) वैक्लव्ये अप्रागल्भ्ये च भ्वा० आत्म० अक० सेट्। क्लीव(ब)ते अक्लि(ब्लि)वि(बि)ष्ट। चिक्लीवे(बे) क्लीवि(बि)त्वा। धा० मते अयं पवर्ग्यान्त्यः कविक० मते अन्तस्थान्त्यः। अदित् चङि अचिक्लीव(ब)त् त।

क्लीव(ब) पु० न०। क्लीव(ब)-क। पुंस्त्रीभिन्ने तृतीयप्रकृतौ षण्ढे। स च "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते" इति कात्यायनोक्तलक्षणः। स च चतुर्दशविधः नारदेन दर्शितो यथा।

"चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः। चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात्। निसर्गषण्ढो१ वन्ध्यश्च२ पक्षषण्ढ३स्तथैव च। अभिशापाद्गुरो४ रोगात्५ देवक्रोधा६त्तथैव च। ईर्ष्याषण्ढश्च ७सेव्य८श्च वातरेता९ मुखेभगः१०। आक्षेप्ता ११मोघबीजश्च १२शालीनो १३ऽन्यापति १४स्तथा। तत्राद्यावप्रतीकार्य्यौ पक्षाख्यं मासमाचरेत्। अनुक्रमात्त्रयस्यास्य कालः संवत्सरः स्मृतः। ईर्ष्याषण्ढादयोऽन्ये च चत्वारः समुदाहृताः। त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रियाः। आक्षेप्तृमोघबीजाभ्यां क्षतेऽपि पतिकर्म्मणि। पतिरन्यः स्मृतो नार्य्या वत्सरार्द्धं प्रतीक्ष्य तु। शालीनस्यापि धृष्टस्त्रीसंयोगाद्भ्रंशयेत् ध्वजः। तं हीनवेगमन्यस्त्रीबालाद्यभिरुपाचरेत्। अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति। लभेत साऽन्यं भर्त्तारमेतत्कार्य्यं प्रजापते। अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः। क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति" अत्र "नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" इति क्लीवपतिपरित्यागे प्राप्ते क्लीवस्य चिकित्स्याचिकित्स्यत्वभेदेन द्वैविध्यमुक्त्वा चिकित्स्यस्य कालविशेषपर्य्यन्तं सुश्रुताद्युक्तवाजीकरणादिना उपचर्य्यता अचिकित्स्यस्य तु सर्व्वथा त्याज्यता दर्शिता। तत्र निसर्गषण्ढः मनूक्तो मातापित्रोः समवीर्य्यजातः। वन्ध्यः वण्डहीनः छिन्नाण्डः कृतक्लीवश्च तौ द्वौ अप्रतीकार्य्यौ अचिकित्स्यौ। पक्षाख्यं पक्षव्यापकषण्ढं मासमाचरेत् चिकित्सेत्। त्रयस्य गुरोरभिशापरोगदेवकोपजतक्लैव्यस्य संवत्सरं चिकित्स्यत्वम्। ईर्ष्याषण्ढादयस्तु चत्वारः अचिकित्स्यत्वात् पतितवत्त्वेन सर्व्वथा त्याज्याः न तत्र कालप्रतीक्षा। अक्षता बीजस्य ईषत्क्षेप्ता दर्शनमात्रादिना स्खलितवीर्य्यः मोघवीर्य्यः अपत्योत्पादनायोग्यबीजः एतौ द्वौ षण्मासं चिकित्स्यौ शालीनस्य तु चिकित्स्यत्वेन अत्याज्यता। अन्यपतेस्तु सर्व्वथा त्याज्यता। अत्र क्षतयोन्या इति विशेषणात् क्लीवपतित्यागवचनं वाग्दत्ताविषयमिति कल्पनं निरस्तम्। नष्टे मृते इत्यादिवचनं युगान्तरविषयम् "दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च" इत्यादिना आदिपुराणे कलिवर्ज्यधर्म्मेष्वभिधानात् इति माधवाचार्य्याः। अन्ये तु कलिधर्म्मप्रकरणे पराशरेण तथाविधानात् स्मृतेः पुराणात् बलवत्त्वेन कलावपि तत्प्रवृत्तिरित्याहुः। साम्प्रदायिकास्तु वेदार्थानुपलब्धमुनिप्रणीतवाक्ययोरेव स्मृतित्वेन पुराणान्तर्गतधर्म्मविधायकनिषेधवाक्ययोरपि स्मृतित्वात् "द्वैधे बहूनां वचनमिति" न्यायेन बहूनां तथाऽसम्मतत्वभावात् शिष्टाचारविरोधाच्च पराशरवाक्यमनादृत्य बहुसम्मत एव पक्ष आदरणीय इत्याहुः। एतेऽषण्ढादिलक्षणं सुश्रुतोक्तम्। सुश्रुते तु नपुंसकोत्पत्तिकारणपूर्व्वकं तद्भेदा अन्यथा दर्शिता यथा

"पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्। यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्। स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुं-

वत् प्रवर्त्तते। कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम्। दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते। ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम्। यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते। ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः। ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि। तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता। आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः। अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः। हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्"।

तस्य दायानधिकारिता अनंशशब्दे १४२पृ० उक्ता। तत्रायं विशेषः। "क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः" या० व्याख्या मिता० "एतेषां विभागात् प्रागेव दोषप्राप्तानामनंशत्वं न पुनर्विभक्तानां, विभागोत्तरकालम् औषधादिना दोषनिर्हरणे भागार्हत्वमेव "विभक्तेषु सुतो जातः सवर्णायां विभागभाक्" इत्यस्य समानन्यायात्। क्लीबान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव यदि त्वन्तरा तदा, तदपगमे दोषाभावात्, तर्हि "दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितादिति" रीत्या विभागार्हावेवेत्युक्तम्"। अत्र विशेषः क्लीबादीनामनंशत्वात्तत्पुत्राणामप्यनंशत्वे प्राप्त इदमाह" मिता० "औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः"। या० "एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लैब्यादिदोषरहिता भागहारिणः, अंशग्राहिणो भवन्ति। तत्र क्लीबस्य क्षेत्रजः पुत्रः सम्भवत्यन्येषामौरसा अपि। औरसक्षेत्रजयोर्ग्रहणं दत्तकादेरप्युपलक्षणार्थम्। क्लीबादिदुहितॄणां विशेषमाह मिता०"। "सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्त्तृसात्कृताः"। या० "एतेषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता न भवन्ति तावद्भरणीयाः। विवाहश्चांशाद्वा कार्य्यः। क्लीबादिपत्नीनां विशेषमाह मिता०" अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च" या०। "एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्त्तव्याः भरणीयाः। व्यभिचारिण्यस्तु निर्वास्याः। प्रतिकूलाश्चैव निर्वास्या भवन्ति भरणीयाश्चाव्यभिचारिण्यश्चेत्। न पुनः प्रतिकूलमात्रेण भरणमपि न कर्त्तव्यम्" मिता०

वीरमित्रोदये विशेषः "क्लीबादीनामपि दारपरिग्रहेण पुत्रस्य भाव उक्तो मनुना "यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथञ्चन। तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति"। तन्तुरपत्यम्। न च क्लीबादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम्। उपनयनानर्हतया अनुपनीतत्वे शूद्रवदपतितत्वात्"।

एतच्चिन्त्यं "सर्वेभगाद्य ये केचित् क्लीबप्राया नपुंसकाः। ब्रह्मद्रोहहता ये च ये च वै ब्रह्मकर्षिताः। महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः" शु० त० ब्रह्मपु० क्लीबस्य पतितत्वोक्तेः। केचित्तु तत्र उत्तरार्द्धे "पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः। न चाश्रुपातः कर्त्तव्यो न चाशौचं न चोदकक्रिया" इत्युक्तेः क्लीबाद्यभावात् क्लीबमिदं पातित्यं नान्यत्र। अतएव धर्मविगणनायां याज्ञवल्क्यादिभिः पतितात् पृथक् क्लीबस्य कीर्त्तनं सङ्गच्छते इत्याहुः। मनुनाऽप्यपाङ्क्तेयत्वमुक्तम् "आचारहीनः क्लीबश्च नित्ययाचनकस्तथा" इत्युपक्रमे "एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्" इति। क्लीबोत्पत्तौ कारणमुक्तं मनुना। "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः" "पुंबीजे अधिकेऽयुग्मास्वपि पुत्रो जायते स्त्रीबीजेऽधिके युग्मास्वपि दुहितैव। अतोऽल्पाहारादिना निजबीजाधिक्यं भार्य्यायाश्चाहारलाघवादिना बीजाल्पत्वं सम्पाद्य युग्मास्वपि पुत्रार्थिना गन्तव्यमिति दर्शितं स्त्रीपुंसयोस्तु बीजसाम्येऽपुमान् नपुंसकं जायते पुंस्त्रियाविति यमौ निःसारेऽल्पे चोभयोरेव बीजे गर्भस्यासम्भवः" कुल्लू०।

कर्त्तव्यकर्मसु अनिरुद्धसाहसे अधीरे त्रि० पौरुषहीने अमरः तस्य भावः ष्यञ्। क्लैब्य न०। तल् क्लीबता स्त्री। त्व क्लीबत्व न० तद्भावे "मा क्लैब्यं गच्छ कौन्तेय! नैतत्त्वय्युपपद्यते" गीता। "पुनरक्लीबतया प्रकाश्यताम्" रघुः। "अक्लीबमना धैर्येण" भट्टि०। "ब्रूहि धर्मोऽस्ति ते भीष्म! ब्रह्मचर्य्यमिदं तथा। यद्वारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः" भा० स०४०अ०। क्लीबस्य पुंस्त्वेन्द्रियोपघातः अदन्तिमशब्दे ४७२ पृ० उदा०। तारस्य क्लीबताकारणं च सुश्रुते दर्शितं यथा "शुक्रवहे द्वे धमन्यौ तयोर्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीबता चिरात् प्रसेको रक्तशुक्रता च"। "क्लीबस्पर्शाङ्गरोटिमः" ऋ० ८,६,७, क्लीब इवाचरति क्यङ् क्विप् वा। क्लीबायते। क्ला-

क्लेशग्रणः सर्व्वसत्त्वानां क्लेशं विदधात्यसौ" । २कुन्दमारके जलादौ त्रि० ।

क्लेदु पु० क्लिद-उन् । चन्द्रे उज्ज्वल० २सन्निपाते त्रिका०

क्लेश पु० क्लिश-भावे घञ् । उपतापे दुःखे क्लिश्नन्ति क्लिशबाधने कर्त्तरि अच् । पातञ्जलोक्तेषु अविद्यादिषु पञ्चसु । "क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पात० सू० । "अविद्यादयः क्लेशाः" भा० । "क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति" विवरणम् । अविद्यादीनां यथा क्लेशहेतुत्वात् तत्क्लेशशब्दवाच्यत्वम् तथा तेषां निरोधोपायश्च तत्रैव साधनपादे दर्शितो यथा

"अथ के क्लेशाः कियन्तो वेति" भा०

"अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" सू०।

"इति पञ्च विपर्य्यया इत्यर्थः । ते स्पन्दमाना गुणाधिकारं द्रढयन्ति परिणाममवस्थापयन्ति कार्य्यकारणस्रोत उन्नमयन्ति परस्परानुग्रहतन्त्रीभूत्वा कर्म्मविपाकं चाभिनिर्हरन्ति" भाष्यम् ।

"पृच्छति अथेति । अविद्येति सूत्रेण परिहारः । अविद्यादयः क्लेशाः । आह पञ्च विपर्य्यया इति । अविद्या तावद्विपर्य्यय एव अस्मितादयोऽप्यविद्योपादानात्तदविनाभाविनः इति विपर्य्ययाः । तत्रचाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः । तेषामुच्छेतव्यताहेतुं संसारकारणत्वमाह ते स्पन्दमानाः । लब्धवृत्तयो गुणानामधिकारं द्रढयन्ति बलयन्ति कुर्व्वन्ति अतएव परिणाममवस्थापयन्ति अव्यक्तमहदहङ्कारपरम्परया हि कार्य्यकारणस्रोत उन्नमयन्ति उद्भावयन्ति । यदर्थं सर्व्वमेतत् कुर्व्वन्ति तद्दर्शयति परस्परेति । कर्म्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थः" तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति । किं कृत्वा ? तेत्याह परस्परानुग्रहेति कर्म्मभिः क्लेशाः क्लेशैश्च कर्म्माणीति" वाचस्पतिविवरणम् ।

"अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" सू० "अत्राऽविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्व्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम् । तत्र का प्रसुप्तिः ? चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः तस्य प्रबोध आलम्बने सम्मुखीभावः प्रसंख्यानवतो दग्धक्लेशबीजस्य सम्मुखीभूतेऽप्यालम्बने नासौ पुनरस्ति दग्धबीजस्य कुतः प्ररोह इति । अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धबीजानाम् अप्ररोहश्च । तनुत्वमुच्यते प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति । तथा विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः समुदाचरन्तीति विच्छिन्नाः कथं ? रागकाले क्रोधस्यादर्शनात् । न हि रागकाले क्रोधः समुदाचरति रागश्च क्वचित् दृश्यमानो विषयान्तरे नास्ति, नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्तः, किन्तु तत्र रागो लब्धवृत्तिः, अन्यत्र भविष्यद्वृत्तिरिति स हि तदा प्रसुप्ततनुविच्छिन्नो भवति । विषये यो लब्धवृत्तिः स उदारः । सर्व्व एवैते क्लेशविषयत्वं नातिक्रामन्ति । कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेशः ? इति, उच्यते सत्यमेवैतत् किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तं तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्तम् इति सर्व्व एवामी क्लेशा अविद्याभेदाः कस्मात् ? सर्व्वेषु अविद्यैवाभिप्लवते यदविद्यया वस्त्वाकार्य्यते तदेवानुशेरते क्लेशाः विपर्य्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणां चाविद्यामनुक्षीयन्त इति" भा० ।

"तेषामां क्लेशानामविद्यामूलत्वं दर्शयति अविद्याक्षेत्रमित्यादि । तत्र का प्रसुप्तिरिति चोदितामर्थक्रियामकुर्व्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः । उत्तरं चेतसीति । स्वां स्वामर्थक्रियां कर्त्तुं क्लेशाः विदेहप्रकृतिलयानां बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति घोर इव इव्विनोऽविवेकख्यातिरन्यदीक्ष कारणं सहभूतायाम् अतोविदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशाः न यावदवधिकालं प्राप्नुवन्ति, ततः प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु विषयेषु सम्मुखीभवन्ति । शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः । तदनेनोत्पत्तिशक्तिरुक्ता बीजभावोपगम इति च कार्य्यशक्तिरिति । ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ताः ? इत्यत आह प्रसंख्यानवत इति । चरमदेहो न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयास्य देहः चरम इत्यर्थः । विदेहादिभिन्नयति नान्यत्र ननु सतो नाप्यन्तविनाश इति किमिति तदीययोगर्द्धिवलेन विषयसम्मुखीभावेन क्लेशाः न बुध्यन्ते इत्यत आह सतामिति । सन्तु क्लेशाः दग्धक्लेशं प्रसङ्ख्यानाग्निना बीजभाव इत्यर्थः । क्लेशप्रतिपक्षः क्रियायोगस्तत्र

कषायेणाहतोभूता दोषा जेतुं दुरासदाः"। आहृती-भूताः प्रवृद्धाः स्वमार्गं परित्यज्य इतस्ततो गताः। अत्र कषायशब्देन क्वाथो गृह्यते। उक्तञ्च क्वाथस्य पर्य्यायाः। "शृतं क्वाथः कषायश्च निर्यूहः स निगद्यते" इति। "तो-यपेयादिसंस्कारे निर्द्दोषं तत्र भेषजमिति"। तत्र तरु-णज्वरे भेषजम् सुखभेषजं क्वाथरूपं न तु कल्कनमु-द्दिश्य कषायः प्रतिषिध्यत इति कल्कनं तोयपेयायवा-ग्वादिकम्। ननु "स्वरसस्य तथा कल्कः क्वाथस्य हिमफाण्टयोः। शेषा कषायाः पञ्चैते लघवः स्युर्यथो-त्तरम्" इति वचनात् स्वरसादयोऽपि कथं न निषिध्यन्ते। तत्राह "तत्र यस्तु कषायः स्यात् पञ्चात् स तरुणज्वरे" इति। चतुर्थभागावशेषकरणेनाष्टमभागशेषकरणे च कषायवर्णः कषायरसश्च स्यात्। स कषायः क्वाथः स तरुणज्वरे निषिद्धः। कषायस्य लक्षणमाह "पादशिष्टः कषायः स्यात्"। अतः षडङ्गादिस्तरुणज्वरे न निषिद्धः षडङ्गपाके चोक्तलक्षणाभावेन कषायत्वाभावात्। अथ तरुणज्वरे कषायस्य दोषमाह "दोषा बद्धाः कषा-येण स्तम्भितास्तरुणज्वरे। आध्मान्ते न विपच्यन्ते कुर्व-न्ति विषमज्वरम्"। कषायेण स्तम्भिता प्रवृत्तौ निवा-रिताः। अत आह कषायरसगुणात् "कषायः स्तम्भनः शीतोऽहृद्यः पित्तकफापहः" इत्यादि। आध्मान्ते आध्मानं कुर्वन्ति न पच्यन्ते कृच्छ्रेण न विपच्यन्ते दुःखं इत्वा-धिकत्वेन विपच्यन्ते इति यावत्"। [अमरः।

क्वाथोद्भव: न० क्वाथादुद्भवति उद्+भू-अच्। तुत्थाञ्जने

क्वेल कम्पे अक० गतौ सक० प० सेट् कवि०। क्वेलति अक्वेलीत् इदित् चङि अचिक्वेलत् त।

क्ष पु० क्षि-बा० ड। १संवर्त्ते २राक्षसे ३नरसिंहे ४विद्युति ५क्षेत्रे ६क्षेत्रपाले ७नाशे च मेदि०। तस्य वाचकशब्दाः तन्त्रशास्त्रे वर्णाभिधाने उक्ता यथा

"क्षः क्रोधस्तुम्बकः कालोत्कटः संवर्त्तकः परः। नृसिं-होविद्युता माया महातेजा युगान्तकः। परात्मा क्रोध-संहारी वर्णान्तो मेरुवाचकः। सर्वाङ्गः सागरः कामः संयोगान्त्यविपूरकः। क्षेत्रपालो महाक्षोभो मातृका-न्तोऽनन्तश्चयः। दक्षकर्णस्य वाचना कालजिह्वा गणे-श्वरः। कायापुत्रश्च संघातोमलयश्चीर्णनाटगः" अत्र संयो-गान्त इत्युक्तेः शब्दकल्पद्रुमे क्षकारस्य वर्णान्तरत्वकल्पनम् लोकशास्त्रविरुद्धत्वादतीव प्रामादिकम्। तथाहि

अस्य कषयोः संयोगजत्वेन कादित्वम्। पृथग्वर्णत्वे चक्षमे धुर्य्यात् क्षिपेयादिकपदं न सिद्ध्येत् कर्णयुक्ता-तया छकारादित्वप्रसक्तौ कवर्गादित्वाभावेन क्षत्वा-प्रसक्तेः। किञ्च संयुक्तवर्णात् पूर्व्वस्य गुरुत्वेन "निपीय यस्य क्षितिरक्षिणः कथाम्" नैषधे "साङ्गुलिविक्षय विक्षिपितोभिः कुमारादौ काव्ये च "गजाकुलीयाति-क्षितिपतिरित्यादौ" "दक्षये कालिकेति" च भैरवतन्त्रोक्त कालोक्तौ च सर्वत्र तत्पूर्व्वस्य गुरुत्वे सत्येव छन्दोनु-गुणता असंयुक्तवर्णत्वे सर्वत्र छन्दोभङ्गः स्यात्। न च तस्यासंयुक्ततया क्वचिदपि तत्पूर्व्वस्य लघुत्वं दृष्टम्। अतएव कविकल्पद्रुमे "खदाद्यन्तादिमक्रमः" इति प्रति-ज्ञाय कादित्वेन क्षकारादिधातुपाठः मेदिन्यादौ कोषेऽपि तथैव कादिषु तस्य पाठः।

तन्त्रे तु कषयोः संयोगजत्वेऽपि मातृकावर्णानामेक-पञ्चाशत्संख्यापूरणार्थं लकारवत् पृथक् कीर्त्तनं न्यासादिकार्य्यार्थं "पञ्चाशल्लिपिभिर्भक्ता विहिता सर्व-कर्मसु। अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता। क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम!। अनया सर्व-मन्त्राणां जपः सर्व्वसमृद्धिदः" इति गौतमतन्त्रोक्तजपा-क्षमालाकल्पनार्थञ्च न वर्णान्तरत्वार्थम्। एवं शब्दकल्पद्रुमे वर्णान्तरत्वकल्पनं लोकशास्त्रविरुद्धत्वादुपेक्ष्यम्। "विशेषं कथयाम्यद्य मोक्षार्थोः कण्ठतः स्वराः। कद्वयं जिह्वा मूर्द्ध्नि अद्वयं दन्तजिह्वया। दृक्स्थानाद्बलोष्ठाभ्यां क्षकारः कण्ठतालुतः" इति वरदातन्त्रे १पटले तस्य कण्ठ-स्थानोद्भवत्वाभिधानं वाद्यकाराभिप्रायेण द्रष्टव्या। "अतएव यान्ताः स्पर्शादि या ज्ञाता वर्णानामनुलोमतः। पृथक् क्रमेण वश्यन्ते तथाप्येते समन्वयात्" विश्व-प्रकाशे तस्य उभयरूपताकथनञ्च उक्तः। तत्समन्वय-चक्रादीनाञ्च बोध्यः। एतेन बङ्गानां खकारत्वेन मैथि-लानां च तस्य छकारत्वेनोच्चारणं प्रामादिकमेव।

क्षज कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट्। क्षञ्जयति ते अचक्षञ्जत् त। क्षञ्जयां बभूव आस चकार चक्रे।

क्षज वधे भ्वा० आ० सक० सेट् घटा०। क्षजते अक्षजिष्ट। चक्षजे मित् क्षजा। क्षजयति ते अचिक्षजत् त।

क्षञ्ज गतौ दाने च भ्वा० आत्म० इदित् सक० सेट्। क्षञ्जते अक्षञ्जिष्ट चक्षञ्जे। कर्म्मणि क्षञ्ज्यते घटा० क्षञ्जयति इति क्ष(क्षा)ञ्जि णमुलि क्षञ्जं क्षञ्जं क्षाञ्जं क्षाञ्जम् अनुपधाया अपि दीर्घः

क्षण वधे तना० उभ० सक० सेट्। क्षणोति क्षणुते। अक्ष-

णीत् अक० सेट्। क्षणाय रक्षणे। इदित् क्षणित्वा क्षत्वा। क्षतिः क्षतः। क्षणः। तानत्वमतेऽपि रूपं तुल्यम् विच अन् इति भेदः।

क्षण पु० क्षणोति दुःखं क्षण-अच्। १उत्सवे २मुहूर्त्तात्मक कालस्य द्वादशांशे त्रिंशत्कलात्मके कालांशभेदे अमरः ३प्रशस्तमुहूर्त्ते दीपिका "भुवनदुन्दुभयस्ते वाजिहस्ता समेतैः क्षणमुदयमतीशां सन्तु सेन्द्रस्तिमेषु" नाडीद्वयात्मके ४मुहूर्त्तरूपे कालांशे सि० शि० तद्वाक्यं १०८८पृष्ठे दर्शितम्। ५निमेषक्रियावच्छिन्नकालस्य चतुर्थभागे गन्धर्व० तादृशार्थे प्रमाणेन "क्षणादिः स्यादुपाधितः" भाषा० व्या० मुक्तावलीवाक्यं तच्च कालशब्दे १८५५पृ० दर्शितम्। ६निर्व्यापारस्थितौ अमरः ७अवसरे ८मध्ये ९पराधीनतायां हेमच०। तत्र उत्सवकालभेदयोः "क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना" माघः। उत्सवे "नार्हं त्यक्तुमुचितं लोकं मूढस्य क्षणमाचरेत्" उ०त०ब्रह्मपु०। "क्षणमुत्सवम्" उ०त०रघु०। कालांशे "क नु मां क्षणभिन्नसौहृदः" "स्थिताः क्षणं पक्ष्मसु ताडिताधराः" कुमा०। अवसरे "स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते" "दीयते स्म यदितुं मदनोऽपि न क्षणः क्षणदयाऽपि बभूवः" माघः। अत्र क्षणदयापि न क्षणो दत्तइति उत्सवार्थत्वेन विरोधस्य कालांशपर्यायत्वेन परिहारात् विरोधाभासः। "नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या" मेघः

क्षणक्षण अव्य० वी० प्रकारे-द्वित्वम्। क्षणमात्रे त्रिका०

क्षणतु पु० क्षण-भावे वा० अतु। क्षते विदरणादौ हेम०

क्षणद पु० क्षणं यात्रादिमुहूर्त्तं उत्सवं वा ददाति दा-क। १मौहूर्त्तिके गणके मेदि० २जले न० हेम०। ३रात्रौ ४हरिद्रायाञ्च स्त्री अमरः "क्षणदापायशशाङ्कदर्शनः" रघुः "न क्षणः क्षणदयापि बभूवः" माघः

क्षणदाकर पु० क्षणदां करोति हेतौ ट। निशाकरे चन्द्रे "आरुह्य नाथः क्षणदाकरत्वम्" माघः

क्षणदाचर पुंस्त्री क्षणदायां चरति चर-ट। निशाचरे राक्षसे "सन्निहिता धर्म्मराजेन प्रवृद्धाः क्षणदाचराः" भा० व० ५५अ०। "सानुप्लवः प्रभुरपि क्षणदाचराणाम्" रघुः। स्त्रियां जातित्वात् ङीष्। २निशाचरे पक्ष्यादौ त्रि० स्त्रियां ङीप्।

क्षणदान्ध्य न० क्षणदायामान्ध्यम्। रात्रिकाणत्वे। "मोतोजं मेक्षवं तथा रेणुकाञ्चापि पेषयेत्। अजमूत्रेण ता वर्त्त्यः क्षणदान्ध्यप्रणाशने हिताः" सुश्रुतः

क्षणद्युति स्त्री क्षणं द्युतिरस्याः। क्षणप्रभायां विद्युति।

क्षणन न० क्षण-भावे ल्युट्। वधे हनने अमरः

क्षणनिःश्वास पुंस्त्री० क्षणात् मुहूर्त्तात् निःश्वासोऽस्य। शिशुमारे (शोशक) शब्दरत्ना०। स्त्रियां जातित्वात् ङीष्।

क्षणप्रभा स्त्री क्षणं प्रभाऽस्याः। विद्युति चञ्चलावत् अमरः

क्षणभङ्ग पु० क्षणात्परः भङ्गः ५त०। सर्व्वेषां भावानां क्षणिकत्वे क्षणनश्वरत्वे। स च सर्व्व०द०दर्शितो यथा।

"तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिन्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः सम्भवति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः सकाशाद्व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यात्? इति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति? न वा?। आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्य्यं समर्थश्चायं भाव इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदापि न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य, यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा शिलाशकलमङ्कुरे, न चैष वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्य्ययाच्च। ननु क्रमवत्सहकारिलाभात् स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां, सहकारिणः किं भावस्योपकुर्वन्ति? न वा?। नो चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते? न वा?। भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य,

आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्यस्य। तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्?। चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः" इति। अथ भावस्तैः सहकारिभिः सहैव कार्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि गले पाशेन बद्धा तत्त्वं कार्यं कुर्यात् स्वभावस्यानपायात्। किञ्च सहकारिजन्योऽतिशयोऽतिशयान्तरमारभते? न वा? उभयथापि प्रागुक्तदूषणपाषाणवर्षणप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौःस्थ्यमपि स्यात्। अतिशये जनयितव्ये सहकार्यन्तरापेक्षायां तत्परम्परापातादेकानवस्था ऽऽस्थेया। तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादयदभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत्, बीजमप्यतिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिजन्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्यमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षः कार्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेय एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण। तस्मादक्षणिकस्यार्थक्रिया दुर्घटा। नाप्यक्रमेण घटते विकल्पासहत्वात्। तथाहि युगपत्सकलकार्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा। प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्यकरणमापतेत्। द्वितीये स्थायित्वाशा मूषिकभक्षितबीजादावङ्कुरादिजननप्रार्थनामनुहरेत्। यत् विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः। न चायमसिद्धो हेतुः स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसङ्गतद्विपर्ययसिद्धत्वात्। तत्रासामर्थ्यसाधकौ प्रसङ्गतद्विपर्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत्तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः यद्यदा यत् करोति तत्तदा तत्र समर्थं यथा सामग्री स्वकार्यं, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्ययः। तस्माद्विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्ययबलात् स्वीकृतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम्। तदुक्तं ज्ञानश्रिया "यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा। नाप्येकैव विधान्यथा परकृतेनापि क्रियादिर्भवेत् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति"। न च कणभक्षादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं, सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः, गौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवत् तगवेषु गुणवच्चाप्रतिभासनाच्च। किञ्च सामान्यं सर्वगतं, स्वाश्रयसर्वगतं वा? प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति"। किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद्वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः। किञ्च विनष्टे घटे सामान्यमवतिष्ठते? विनश्यति? स्थानान्तरं गच्छति? वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्त्ययुक्तिः, तृतीये द्रव्यत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकम्। तदुक्तम् "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानाद्वृत्तिरित्युक्तता। यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न तु। तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम्। न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति"। अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन"।

चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्वपेत् तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा। नैर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा इति एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु च"। आसमावर्त्तनात् तौ विसर्गे दिवास्वप्ने चाप्यादि चेयम्। पशोरभावे नैर्ऋतं चरुं निर्वपेदित्यर्थः। एतच्चामावास्यायां कर्त्तव्यमित्याह बौधायनः। "अथावकीर्णममावस्यायां निशाग्निमुपसमाधाय संपरिस्तीर्य दार्व्वीं होमिकीं इतिकर्त्तव्यतां कृत्वा द्वे आज्याहुती जुहुयात्"। अत्र च व्रतान्तरेष्विचाभिदधता दर्शितेन द्वादशवार्षिकव्रतेषु पुण्यार्थचान्द्रायणादिषु च यथानिर्दिष्टं तथाचैतदतिदिष्टमविशेषात्। अतएव "कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः" इति मनुना सामान्येनावकीर्णिलक्षणमभिधाय अकामतो रेतसः स्रावे मनुः "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्"। ब्रह्मचारिणो गुरुदारगमने तु तद्गमनोक्तप्रायश्चित्तेनैव गुरुणा अवकीर्णिप्रायश्चित्तं कृतमस्येत्। यथा दण्डनिपतनप्रायश्चित्तेनैव गुरुणा तदन्तरीयकाङ्गस्पर्शप्रायश्चित्तं सम्पद्यते"।

**क्षतहर** न० क्षतं हरति हृ–हेतौ ट। क्षतहरणहेतौ १अगुरुचन्दने शब्दच०। २क्षतहारकमात्रे त्रि०

**क्षताशौच** न० क्षतनिमित्तमशौचम्। समरादिक्षतकृते मृत्युके अशौचे। "उत्तमः क्षत्रियो क्षयी मत्तोन्मत्तरसाश्च ताः। कृतवस्तुरवस्तुश इत्युक्तोऽन्यो स्वकालतः" प्रा०त० देवलः। अशुचित्वमथाह तत्रैव शङ्खः। "इन्द्रसम्पर्कहार्यं लेपं मन्येत दुस्तरम्। न तत्र बहुधा कुर्यात् बालसंहरणे पुनः। भवेदशौचमत्यन्तं नृपवैधात् क्षये कृते"। नृपवैधादिषु पञ्चत्वं क्षयहेतुजनमावस्य। अस्यापवादः "चन्द्रक्षयपक्षे चैव मृतानां पिण्डकर्म्मणि। महातीर्थे तु संग्रामे क्षतदोषो न विद्यते" प्रा०त० पुराणम्। मृतानां पिण्डकर्म्मणि निरङ्कावत्वात् चितासिद्धोदकदानादौ। संग्रामे भिन्नगात्रादिना सम्यक्प्रामे।

**क्षति** स्त्री क्षण-क्तिन्। १हानौ, २अपचये, ३नाशे च। "क्षयाणां न क्षतिः काचित् रक्षत न मानवैः" भा० व० १७२अ०। "हिमां क्षतीयां क्रमे शिलीमुखाः" किरा०

**क्षतोदर** क्षतजाते उदररोगभेदे उदरशब्दे ११५० पृ० विवृतिः। शल्यमित्यादि तल्लक्षं सुश्रुतवाक्यं भावप्र० व्याख्याय चरकसुश्रुतसम्मतिप्रदर्शनेन विशेष उक्तो यथा "शल्यं कण्टककर्करादि। अन्नोपहितं भुक्तं यत् अन्त्रं भिनत्ति तथा अन्यथा आगतं भोजनं विना आगतं शर्करादिरितरथापि यदन्त्रं भिनत्ति तत्। उपलक्षणम्। जृम्भणमत्यशनं वा यदन्त्रं भिनत्ति। यतउक्तं सुश्रुतेन शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः। भिद्येतान्त्रं यदा भुक्तं जृम्भयात्यशनेन चेत्"। तस्मात् भिन्नादन्त्रात्। गुदतस्तु भूयः अन्नात्संसृत्य पुनर्गुदतः सृतैरिदर्शः। दाल्यति विदार्यत एव। यदर्शविकारासत्वात्। एतत् क्षतोदरमन्त्रान्तरे परिस्राव्युदरमुदितम्"

**क्षत्तृ** पु० स्त्री० क्षद–संवृतौ संज्ञायाम् तृच् अनिट्। १सारथौ २द्वाःस्थे ३क्षत्रियायां शूद्रेण जाते वर्णसङ्करे पुंस्त्री० अमरः स्त्रियां ङीप्। ४दासीपुत्रे ५नियुक्ते ६वेधसि पु० मेदि० ७मत्स्ये शब्दरत्ना०। उपधादीर्घविधौ क्षत्तृशब्दस्य ग्रहणात् औणादिकत्वात् अस्य निषेधेऽपि दीर्घः क्षत्तारौ "क्षत्तारौ ते प्रजापते। तानिहायतनं स्कृतिम्" २,२४,७, "यत् क्षत्तारं हृदय्या" ऋ० ८.६.४८, "आशिश्चतस्त्राग्निः क्षत्ता विश्वे देवाः सभासदः" श०ब्रा० १२.५.४,६, "विविक्तं क्षत्तारम्" यजु० ३०.१३,। "क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च" या० स्मृ०: "शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः। एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ। क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि" मनूक्तेः क्षत्रियायां विप्राज्जात इति अमरमतत्वेन शब्दक० उक्तिः प्रामादिकी। "क्षत्ता स्यात् सारथौ द्वाःस्थे, क्षत्रियायाञ्च शूद्रजे" इति नानार्थेऽमरोक्तेः मनुयाज्ञवल्क्यादिवाक्याच्च "माहिष्योऽर्थक्षत्रिययोः क्षत्ताद्यौ शूद्रयोः सुतः" इत्यमरोक्तौ यद्यपि शूद्रजातस्य क्षत्तृत्वोक्तावपि तत्र वध्वां स्वामिनी योग्यत्वात्तत्र क्षत्रिया, तेन न पूर्वापरविरोध इति भानुदीक्षितव्याख्या। अतएव मेदिन्याम् "क्षत्ता शूद्रक्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यादियुक्तवेधसोः पुमान्"। तत्र इतिमाह मनुः "अथ उपक्रमाणां तु विकीर्णोऽस्यवन्धनम्"। तत्र दासीपुत्रे "ततः प्रीतमनाः क्षत्ता (विदुरः) धृतराष्ट्रं विशाम्पते!। उवाच दिष्ट्या कुरवो वर्द्धन्त इति विस्मितः। वैचित्रवीर्य्यस्तु नृपो निशम्य विदुरस्य तत्" भा०आ०२००अ०। विदुरस्य दासीपुत्रत्वं विदुरशब्दे वक्ष्यते "ततोऽपकृष्ट

विदुरं तूर्णमाराद्धयायान्तं सपदस्थः स राजा। अथाब्रवीत् भ्रातरं भीमसेनं किं नु क्षत्ता वक्ष्यते न सखेव ?" भा० स० ५८अ०। द्वाःस्थे। "तत द्वाःस्थः प्रविश्यैवेत्युपक्रमे "ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत्" "क्षत्तारं कुरुराजस्तु शनैः कर्णमुपाजपत्" इति च भा० वि० ६८अ०। सारथौ "जानश्रुतिर्ह पौत्रायणः उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाच" "स ह क्षत्तान्विष्य नाविदमिति" "स ह क्षत्ताऽविदमिति" च छा० उप०। दौवारिके च "अथ क्षत्ता पानागवीमभिमेहति" शत० ब्रा० १३।५।२।८ "क्षत्ता मन्त्रिधिनः कोशाध्यक्षः" भा०

क्षत्र पुंन०। क्षतस्त्रायते त्रै—क ५त० क्षद संभृतौ कर्त्तरि ष्ट्रन् वा अर्द्धर्चा०। क्षत्रिये "यस्य ब्रह्म च क्षत्त्रं च उभे भवत ओदनः" श्रुतिः "यत्र ब्रह्म च क्षत्त्रञ्च सम्यञ्चौ चरतः सह" यजु० २०।२५। "क्षत्त्रं च नयजातिः" वेददी० "क्षतात् किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः" रघुः। अत्र मल्लि० "क्षणु हिंसायामिति धातोः सम्पदादित्वात् क्विप् गमादीनामिति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् ततः क्षणात् त्रायते इति क्षत्त्रः सुपीति योगविभागात् कः। तामेतां व्युत्पत्तिं कविरुक्तोऽनुक्रामति क्षतादित्यादिना। उदग्रः उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य वाचकः शब्दः क्षत्त्रशब्द इत्यर्थः क्षतात् त्रायते इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु नाकपृष्ठादिवत् केवलरूढः किन्तु पङ्कजादिवत् योगरूढः"। "नाब्रह्म क्षत्त्रमृध्नोति नाक्षत्त्रं ब्रह्म वर्द्धते। ब्रह्म क्षत्त्रञ्च संपृक्तमिह चामुत्र च वर्द्धते" मनुः। क्षद्यते संभिद्यते राष्ट्रं, क्षद-कर्म्मणि त्र। २राष्ट्रे "क्षत्त्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते क्षत्त्रं राष्ट्रम्" शत० ब्रा० ।२२। क्षत्त्रस्य कर्म्म ष्यञ्। तत्कर्म्मणि। "क्षात्त्रं द्विजत्वञ्च परस्परार्थम्" भट्टिः तस्येदमण्। क्षात्त्र तत्सम्बन्धिनि त्रि० "क्षात्त्रं कर्म्म स्वभावजम्" गीता ३उदके ४धने च निघ० ५देहे उणादिको० ६तगरे न० राजनि०

क्षत्त्रकर्म्मन् न० ६त०। "शौर्य्यं तेजो धृतिर्दाक्ष्यम् युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षत्त्रकर्म्म स्वभावजम्" गीतोक्ते कर्म्मभेदे। अत्र क्षात्त्रं कर्म्मेति वा पाठः

क्षत्त्रधर्म्म पु० ६त०। स्मृत्याद्युक्ते क्षत्त्रियस्य धर्म्मभेदे। तथाह हारीतः

"राजन्यः क्षत्त्रियश्चापि प्रजा धर्म्मेण पालयन्। कुर्य्यादध्ययनं सम्यग्यजेद्यज्ञान् यथाविधि। दद्याद्दानं द्विजातिभ्यो धर्म्मबुद्धिसमन्वितः। स्वभार्य्यानिरतं नित्यं षड्भागार्हः सदा नृपः। नीतिशास्त्रार्थकुशलः सन्धिविग्रहतत्त्ववित्। देवब्राह्मणभक्तश्च पितृकार्य्यपरस्तथा। धर्म्मेण यजनं कार्य्यमधर्म्मपरिवर्जनम्। उत्तमां गतिमाप्नोति क्षत्त्रियोऽप्येवमाचरन्"।

"त्रीणि राजन्यस्याध्ययनं शस्त्रेण च प्रजापालनं स्वधर्म्मस्तेन जीवेत्" वशिष्ठः। पद्मपु० स्वर्गखण्डे २६अ० "क्षत्त्रियस्यापि यो धर्म्मस्तं ते वक्ष्यामि पार्थिव!। दद्याद्राजा न याचेत यजेत न च याजयेत्। नाध्यापयेदधीयीत प्रजाश्च परिपालयेत्। नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम्। ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः। ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः। अविक्षतशरीरो हि संगराद्यो निवर्त्तते। क्षत्त्रियस्य तु तत् कर्म्म नोभयत्र यशःप्रदम्। क्षत्त्रियाणामयं धर्म्मो निर्णीतो मुनिभिः परः। नास्य कृत्यतमं किञ्चिद्राष्ट्रे दस्युविनिग्रहात्। दानमध्ययनं यज्ञो राज्ञां श्रेयोऽभिधीयते। तस्माद्राज्ञा महाराज! योद्धव्यं धर्म्मजीविना। प्रजाः स्वेषु च धर्म्मेषु स्थापयेत महीपतिः। धर्म्माण्येव हि कर्म्माणि कारयेत् स तं प्रजाः। परत्र विन्दिमाप्नोति नृपतिः परिपालनात्। कुर्य्यादन्यन्न वा कुर्य्यादैन्द्रो राजन्य उच्यते। राजन्यानां करादानं विना वैशाखिकश्च यः। प्रतिपक्षः स विन्द्योऽस्य परत्र चाशुभप्रदः। युद्धे पलायनञ्चैव तथा कातरताऽपि च। अपालनं प्रजानाञ्च दाने धर्म्मे विरक्तता। अनेकधा स्वराष्ट्रस्य ब्राह्मणानामनादरः। अमात्यानामसम्मानस्तेषां कर्म्मनिवेशनम्। भृत्यानाञ्च परीक्षाभो निषिद्धं क्षत्त्रजन्मनाम्। राजन्यस्तु महाराज! यदा क्षेममवाप्नुयात्। तत् स्पृश्य तदाख्याले धर्म्मसंपत्तत्परः। वेदानधीत्य धर्म्मेण राजशास्त्राणि चानघ!। स्नानादीनि कर्म्माणि कृत्वा होमं निवेश्य च। पालयित्वा प्रजाः सर्व्वा धर्म्मेण जयतां वर। राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च। आहृत्य च यथापाठं विप्रेभ्यो दत्तदक्षिणः। संग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु। स्थापयित्वा प्रजापालं पुत्त्रं राज्ये च पार्थिवः। अन्यगोत्रं प्रशस्तं वा क्षत्त्रियं क्षत्त्रियर्षभ!। अर्च्चयित्वा पितॄन् सम्यक् पितृयज्ञे यथा-

**क्षमाभुज्** पु॰ क्षमां भुनक्ति भुज–पालने क्विप् । नृपे "शर-वैरिव च उरसि क्षमाभुजः" माघः । स । क्षमाभुजोऽप्यत्र

**क्षमावत्** त्रि॰ क्षमा+अस्त्यर्थे मतुप् मस्य वः । क्षमायुक्ते । "एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः" भा॰ उ॰ ३३ अ॰ स्त्रियां ङीप्

**क्षमितृ** त्रि॰ क्षम–तृच् । सोढरि सहनशीले अमरः

**क्षमिन्** त्रि॰ क्षम-ताच्छील्ये घिनुण् । क्षमाशीले "शमं चा-प्यत् यः क्षमी" माघः "अक्रूरः पेशलो दक्षोदक्षिणः क्षमिणां वरः" विष्णुस॰ स्त्रियां ङीप् ।

**क्षय** पु॰ क्षि–क्षये क्षि–निवासगत्योर्वा भावादौ यथायथम् अच् । त्रिवर्गान्तर्गते नीतिवेदिनां राज्ञाम् अष्टवर्गा-पचये । अष्टवर्गश्च । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जर बन्धनम् । खन्याकरः करादानं सैन्यानाञ्च निवेशनम् । अष्टवर्गः स्मृतो राज्ञाम्" भरतः । "क्षयस्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरः । "क्षयः अष्टवर्गस्यापचयः तस्यैवोपचयः वृद्धिः, स्थानं तस्य उपचयापचयहीनतया स्थितिः" २ प्रलये तस्मिन् सर्वेषां नाशात्तथात्वम् । ३ अप-चये सच भावविकारभेदः यास्कोक्तः यथा "षड् भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्य-प्रच्यवमानस्य तत्त्वाद्विकारं, वर्द्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते श-रीरेणेति वा, अपक्षीयत इत्यनेनैव व्याख्यातः प्रति-लोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति" । ४ग्टहे अमरः ५यक्ष्मरोगे यक्ष्मरोगस्य क्षयसंज्ञाकारणं यथा "क्रियाक्षयकरत्वाच्च क्षय इत्यु-च्यते बुधैः । राज्ञश्चन्द्रमसो यस्मादभूदेष महामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः" सुश्रु॰ । "रक्तपित्तात्भवेत् कासः कासात् संजायते क्षयः" वैद्यकम् "राजयक्ष्मपरिहाणिमाययौ" इत्युपक्रमे "राज्ञि तत् क्षयमभूत् क्षयातुरे" रघुः । ६रोगमात्रे राजनि॰ । ७प्रभवाद्यन्तर्गते षष्टितमे अब्दे तल्लक्षणं ज्यो॰त॰ भवि॰पु॰ "मेदिनी क्षमते देवि! सर्वभूतं चराचरम् । हैमप्रस्थ इ-मि" क्षये संक्षीयते प्रजा । सौराष्ट्रे मालवे देशे द-क्षिणे कोङ्कणे तथा । दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ! । कौसुदीनर्मदायाश्च सहनानर्मदातटम् । वि-न्ध्यायां मैत्र्यसवादि विनश्यति न संशयः । सिन्धु-मध्यदेशश्च कालञ्जरस्तथैव च । क्षये क्षयन्ति सर्वाणि नान्यथा वरवर्णिनि ।" ।

८ब्राह्मणोक्ते इन्द्रवंशे देवसंघे च यथा "रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता इहस्पते स्तुत" ता॰ब्रा॰ "तैत्तिरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मि-रिति मन्त्रः सामादित्यादिस्तुति हेतुत्वाभिधानादादित्यादि-परतया स्तूयादिशब्दाभ्यास्य यः तत्तु ब्राह्मणकृतर-मोदाहरिष्यते । हे आदित्य ! त्वं रश्मिरसि रश्मि-युक्तोऽसि देवा यस्मिन् क्षियन्ति निवसन्ति इति क्षयः संघ: क्षयः तस्मै क्षयाय तत्तन्त्राय तत्प्राप्तये आदित्य! त्वां करोमीति शेषः । ततः क्षयं देवसङ्घात्मी-मीक्षय क्षयशब्दस्य देवविषयत्वं तैत्तिरीयास्तु तीयकाण्डे ब्राह्मणे समामनन्ति "रश्मिरसि क्षयाय त्वा क्ष जिन्वेत्याह देवे क्षय इति" भा॰ । ९ज्योतिषोक्ते द्विसंक्रान्तियुक्ते शुक्लप्रतिपदाद्यमावस्यान्ते चान्द्रे मा-सि यथाह सि॰शि॰

"असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं च" ।

"यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम् । तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षय-मासो ज्ञेयः । यतः संक्रान्त्युपलक्षिता मासाः । अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जा-तम् । स क्षयमासः कदाचित् कालान्तरे भवति । यदा भवति तदा कार्त्तिकादित्रय एव । तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽपरश्च मासत्रयान्तरितोऽन्य-श्वासंक्रान्तिमासः स्यात् । अत्रोपपत्तिः । चन्द्रमासप्रमाण-मेकोनत्रिंशत् सावनदिनान्येकत्रिंशत् घटिकाः पञ्चाशत् पलानि २९।३१।५० । तथार्कमासस्त्रिंशद्दिनानि षट्त्रिंशत्-घटिकाः सप्तदशपलानि ३०।२६।१७ एतावद्भिर्दिवसैरर्विक-ब्धगत्या राशिं गच्छति । यदार्कगतिरेकषष्टिः कलास्तदा सार्द्धैकोनत्रिंशता दिनैः २९।३० राशिं गच्छति । अत चान्द्रमासादल्पोऽर्कमासस्तदा स्यात् । एवं रविमासस्य परमाल्पता २९।२०।४० । सा चैकषष्टिगतिद्वयिकादिलये-ऽर्कस्य । स ईदृशोऽल्पोऽर्कमासो यदा चन्द्रमासस्या-न्तःपाती भवति तदैकस्मिन् मासे संक्रमणद्वय-मुपपद्यते । अत उक्तं क्षयः कार्त्तिकादित्रय इति । पूर्वं

**क्षय्य** त्रि॰ क्षेतुं शक्यः क्षि—शक्यार्थे यत् "क्षय्यजय्यौ शक्यार्थे" पा॰ नि॰। क्षेतुं शक्ये। शब्दक॰ क्लीवोक्तिः प्रामादिकी

**क्षर** सञ्चलने भ्वा॰ पर॰ अक॰ सेट्। क्षरति अक्षारीत्। चक्षार क्षरितः क्षरन् क्षारः। "इयं त इन्द्र! रातिं क्षरति सुन्वतः" ऋ॰८,१२,४। "मधु क्षरन्ति सिन्धवः" मधुसूक्तम्। "यशोऽनृतेन क्षरति तपः क्षरति कीर्त्तनात्" "इन्द्रियाणां हि च सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा" मनुः। "त्वत्प्रसादान्महादेव! तपो मे न क्षरेत वै" भा॰व॰७॰११श्लो॰। आर्षत्वात् पदव्यत्ययः। "क्षुधारिपुः शरास्त्राणि तस्मिन् रक्षःपयोधराः" भट्टिः ज्वला॰ क्षरः क्षारः। उपसर्गपूर्वस्तु तदुपसर्गद्योत्यार्थयुक्ते चलने। आङ्पूर्वकः णिजन्तस्तु आक्षारणे ह॰२ सू॰ दृश्यम्। सञ्चलनञ्च मोचनं क्षरणं चलनं स्यन्दनञ्च तत्र मोचने सक॰ अन्यत्र अक॰। तत्र मोचने "मधु क्षरन्ति सिन्धवः"। "स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः" किरा॰। क्षरणे "तपः क्षरतीत्यादि प्रागुक्तम्। वेदे नि॰ तिपि क्षर्त्ति।

**क्षर** न॰ क्षरति स्यन्दते गच्छति वा क्षर—अच् पचा॰ वा अच्। १जले २मेघे पु॰ मेदि॰। ३चले त्रि॰ ४देहे "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" गीतोक्तेषु ५सर्वप्राणिषु तेषां स्वोपाध्यन्तःकरणचलनेन औपाधिकचलनवत्त्वात्तथात्वम् भा॰अनु॰ १०अ॰ जीवानां क्षरणप्रकार उक्तो यथा "आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते। शरीरग्रहणे यस्मिंस्तेषु क्षीणेषु सर्वशः। आयुःक्षयपरीतात्मा विपरीतानि सेवते। बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते। सत्त्वं बलञ्च कालञ्च विदित्वा चात्मनस्तथा। अनिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान्। यदाऽयमतिकष्टानि सर्वाण्युपनिषेवते। अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन। दुष्टान्नामिषपानञ्च यदन्योन्यविरोधि च। गुरु चाप्यमितं भुङ्क्ते नातिजीर्णेऽपि वा पुनः। व्यायाममतिमात्रञ्च व्यवायञ्चोपसेवते। सततं कर्म्मलोभाद्वा प्राप्तं वेगं विधारयेत्। रसाभियुक्तमन्नं वा दिवास्वप्नञ्च सेवते। अपक्वान्नागते काले स्वयं दोषान् प्रकोपयेत्। स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्। अपि चोद्बन्धनादीनि परीतानि व्यवस्यति। तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा। जीवितं प्रोच्यमानं तद्यथावदुपधारय। ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः। शरीरमनुपर्य्येत्य सर्वान् प्राणान् रुणद्धि वै। अत्यर्थं बलवानूष्मा शरीरे परिकोपितः। भिनत्ति जीवस्थानानि मर्म्माणि विद्धि तत्त्वतः। ततः सवेदनो जीवः सद्यः प्रच्यवते क्षरात् (देहात्)। शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु। वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम!। जातीमरणसंविग्नाः सततं सर्वजन्तवः। दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ!। गर्भसंक्रमणे चापि कर्म्मणामतिसर्पणे। तादृशीमेव लभते वेदनां मानवः पुनः। भिन्नसन्धिरथ क्लेदमद्भिः स लभते नरः। यथा पञ्चसु भूतेषु सम्भूतत्वं नियच्छति। शैत्यात् प्रकुपितः काये तीव्रवायुसमीरितः। यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः। स गच्छत्यूर्द्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम्। शरीरञ्च जहात्येवं निरुच्छ्वासश्च दृश्यते। स निरूष्मा निरुच्छ्वासो निःश्रीको हतचेतनः। ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते नरः। स्रोतोभिर्यैर्विजानाति इन्द्रियार्थान् शरीरभृत्। तैरेव न विजानाति प्राणानाहारसम्भवान्। तत्रैव कुरुते काये यः स जीवः सनातनः। तथा यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित्। तत्तन्मर्म्म विजानीहि शास्त्रदृष्टं हि तत्तथा। तेषु मर्म्मसु भिन्नेषु ततः स समुदीरयन्। आविश्य हृदयं जन्तोः सत्त्वञ्चाशु रुणद्धि वै। ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन। तमसा संवृतज्ञानः संवृतेष्वेव मर्म्मसु। स जीवो निरधिष्ठानश्चाल्यते मातरिश्वना। ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम्। निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनम्। स जीवः प्रच्युतः कायात् कर्म्मभिः स्वैः समावृतः। अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाप्युपपद्यते। ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः। इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः। यथाऽन्धकारे खद्योतं लीयमानं ततस्ततः। चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः। पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा। च्यवन्तं जायमानञ्च योनिञ्चानुप्रवेशितम्। तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः। कर्म्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः। ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः। इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्म्मभिः। इहैवाशुभकर्म्माणः कर्म्मभिर्निरयं गताः। अवाक्स्थितिरियं कष्टा यत्र पच्यन्ति मानवाः। तस्मात् सुदुर्लभो मोक्ष आत्मा रक्ष्यस्ततो भृशम्। ऊर्द्ध्वन्तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः। कीर्त्त्यमानानि तानीह त-

च्युतः सविशेषं मे । तच्छ्रुत्वा नैष्ठिकीं बुद्धिं विन्देयाः कर्म्म निश्चयम् । ताराध्याणि सर्वाणि यच्चैतच्चन्द्रमण्डलम् । यच्च विभ्राजते लोके स्वभासा सूर्य्यमण्डलम् । स्थानान्येतानि जानीहि जनानां पुण्यकर्म्मणाम् । कर्म्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः । तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः । न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियम् । इत्येता गतयः सर्वाः पृथक् ते समुदीरिताः । उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परम् । तथा तन्मे निगदतः शृणुष्वावहितो द्विज !" ।

११अज्ञाने च "क्षरं त्वविद्या ह्यमृतं तु विद्या" श्वेताश्व॰ उ॰ । १२परमेश्वरे "सदसत्क्षरमक्षरम्" विष्णुस॰ । "सर्वं क्षरतीदं यस्मादिति" श्रुतेस्तस्य सर्वभूतमयत्वात् क्षरत्वम् । "कार्य्यकारणरूपं तु नश्वरं क्षरमुच्यते" इत्युक्तयोः १३कार्य्यकारणयोः ।

क्षरे(र)ज त्रि॰ क्षरे जायते जन—ड वा सप्तम्या अलुक् । मेघजाते

क्षरण न॰ क्षर—भावे ल्युट् । १स्रवणे २मोचने च "क्षरणात् क्षपणाद्वा क्षारः" सुश्रुतः "अनुलोमक्षरणसम्प्रवर्त्तकः" । कर्त्तरि ल्यु । ३क्षरणशीले त्रि॰ ।

क्षरिन् पु॰ क्षर—इनि । १वर्षाकाले हेमच॰ । २क्षरणयुक्ते त्रि॰ स्त्रियां ङीप् ।

क्षल शोधने वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् । क्षालयति ते क्षलति अचिक्षलत् त अक्षालीत् । क्षालयाम् बभूव आस चकार चक्रे चक्षाल । ज्वल॰ णः क्षालः । "ऋते रवेः क्षालयितुं क्षमेत कः" माघः । "क्षालितमपि हृदयं मलिनं शोकोर्म्मिभिः क्रियते" प्रबो॰ । "क्षालयन्नपि वृक्षाङ्घ्रीन्नदीवेगो निकृन्तति" हितो॰ । क्षादिस्तु क्षले क्षयने कवि॰ इति भेदः । प्राद्युपसर्गपूर्व्वस्तत्तदुपसर्गद्योत्यार्थयुक्तशोधने । "गत्वापि वारुणी चैव प्रक्षाल्य सलिलेन ताः" भा॰ वि॰ १७अ॰ । "सुखं प्रक्षालयेत्ततः" स्मृतिः ।

क्षव पु॰ क्षु—भावादौ अप् । १क्षुते (हाँचि) २राजिकायां (राइसर्षा) । अमरः । ३काशे शब्दरत्ना॰ ।

क्षवक पु॰ क्षु—करणे अप् संज्ञायां क । १राजिकायाम् २अपामार्गे ३भूताङ्कुशे च राजनि॰ । [भावप्र॰ ।

क्षवकृत् पु॰ क्षवं करोति कृ—क्विप् । क्षुपभेदे (छिकनी)

क्षवथु पु॰ क्षु—अथुच् । १क्षुते (हाँचि) । २कासे च मेदि॰ । क्षुतजन्यं सुश्रुते उक्तं "घ्राणाश्रिते मर्म्मणि संप्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः" । "उद्घाततोयः क्षवथुर्निरेति" सुश्रुतः । क्षवजशब्दे २३५६ पृ॰ उदा॰

क्षवपत्रा स्त्री क्षवः क्षुतहेतुः पत्रं यस्याः । द्रोणपुष्प्याम् राजनि॰ तत्पत्राघ्राणे हि क्षुतं जायते । क्षरपत्रेति वा पाठः ।

क्षविका स्त्री क्षवः क्षुतं साध्यतयाऽस्त्यस्य ठन् । बृहतीभेदे राजनि॰ ।

क्षात्र न॰ क्षत्रस्य कर्म्म भावो वा—अण् । "शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम्" गीतोक्ते १क्षत्रियकर्म्मणि । तस्येदमण् । २तत्सम्बन्धिनि त्रि॰ "क्षात्रकर्म्मक्षमं देहं क्षात्रो धर्म्म इवाश्रितः" रघुः ।

क्षत्राणां समूहः अण् । ३तत्समूहे न॰ "शतं क्षात्रं संगृहीतानाम् पुत्राः" शत॰ ब्रा॰ १२,४,२,५, "क्षत्राः क्षोणाध्यक्षाः तेषां समूहः क्षात्रम्" भा॰ ।

क्षात्रि त्रि॰ क्षत्रजायां जातिभिन्नं इञ् । क्षत्रसम्बन्धिनि जातौ तु घ॰ क्षत्रिय इत्येव ।

क्षान्त त्रि॰ क्षम—कर्त्तरि क्त । १सहिष्णौ केनचित्पीडनेऽपि सामर्थ्ये सति तत्प्रतीकारपराङ्मुखे । कर्म्मणि क्त । २सोढे । "निर्वैरो निर्वृतिः क्षान्तो निर्म्मन्युः कलिरेव च । त्रिषदो मातृवर्णी च व्याधाः परमधार्म्मिकाः" हरिवं॰ २१अ॰ उक्ते सप्तव्याधमध्ये ३व्याधभेदे । ते च गुरोर्गोहरणात् कर्म्मणा मृगचक्रवाकादियोनिमाप्ताः तत्रैव तत्कथा । क्षान्ताशब्दे परे प्रिया॰ कर्म्मधारये न पुंवत् । परमक्षान्ता । वृत्करा॰ चतुरर्थ्यां छ । क्षान्तीय तन्निर्वृत्तादौ त्रि॰ । ४ऋषिभेदे पु॰ । क्षान्तस्य गोत्रापत्यम् अश्वा॰ फञ् । क्षान्तायन तद्गोत्रापत्ये पुंस्त्री॰

क्षान्ति स्त्री क्षम-भावे क्तिन् । क्षमायाम् सामर्थ्ये सत्यपकारिणोऽपकाराचिकीर्षायाम् । "क्षान्त्या शुध्यन्ति विद्वांसः" मनुः । "शमोदमस्तपः शौचं क्षान्तिरार्ज्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम्" गीता "शमोदमस्तपः शौचं सन्तोषः क्षान्तिरार्ज्जवम् । ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्" भाग॰ ७।११।२२

क्षान्तु पु॰ क्षम—तुन् दीर्घश्च । १क्षमाशीले उणादिकोषः २पितरि पु॰ संक्षिप्तसा॰

क्षाम त्रि॰ क्षै—कर्त्तरि क्त । १क्षीणे २अल्पे शब्दरत्ना॰ "क्षामोऽस्मि वर्षवह्निना नक्तैः किञ्चिन्नन्दपि" । "क्षामेव सद्दग्धो न मन्दाग्निना" सुश्रुतः "क्षामच्छायं भवनमधुना त्वद्वियोगेन नूनम्" मेघ॰ "मध्ये क्षामा चकितहरिणीप्रेक्षणा नि-

नद्योह्रदाः पायसकर्दमाः । तान् लोकान् पुरुषा यान्ति क्षीरस्नपनका हरेः । आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चानुत्तमम् । सप्तजन्मस्वथाप्नोति क्षीरस्नानपरो हरेः । दुग्धादीनां विकाराणां क्षीरतः सम्भवो यथा । तथैवाशेषकामानां क्षीरस्नपनमुत्तमम् । यथा च विमलं क्षीरं यथा निर्वृतिकारकम् । तथास्य विमलं ज्ञानं भविष्यति फलप्रदम् । पञ्चादुत्तमतां पुष्टिं प्रियसङ्गाप्तिके जने । करोति भगवान् विष्णुः क्षीरस्नपनतोषितः । सर्वोऽस्य विघ्नशान्तेति हरिमाले प्रमोदति । स्नातक्षीरेण देवेशे स्नपिते मधुसूदने" । वह्नि॰ पु॰ क्रियायोगनामाध्याये । तत्पाकविधिः भावप्र॰ । "क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम् । क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत्"

**क्षीरक** पु॰ क्षीरमिव कायति कै-क । क्षीरमोरटलतायाम् रत्नमा॰ । [ शब्दर॰ रत्नमा॰ ।

**क्षीरकञ्चुकी** स्त्री क्षीरं कञ्चुकमिव त्वगस्य । क्षीरीश

**क्षीरकण्ठ** पु॰ क्षीरं कण्ठे यस्य । स्तनन्धये बालके ।

**क्षीरकन्द** पु॰ क्षीरमिव कन्दोऽस्य । १क्षीरविदार्य्याम्, जटाधरः २क्षीरवल्ल्यां स्त्री राजनि॰ । "क्षीरकन्दोऽपि वा प्रोक्तो विनालश्च मनालकः" राजनि॰ ।

**क्षीरकाकोलिका** स्त्री क्षीरमिव शुभ्रा काकोली । क्षीरविदार्य्यां भावप्र॰ काकोलीशब्दे १८५४ दृश्यम् ।

**क्षीरकाण्डक** पु॰ क्षीरान्वितं काण्डं यस्य कप् । १स्नुहीवृक्षे, २अर्कवृक्षे च अमरः ।

**क्षीरकाष्ठा** स्त्री क्षीरप्रधानं काष्ठमस्याः । वटीवृक्षे राजनि॰

**क्षीरकीट** पु॰ ६त॰ । दुग्धजाते कीटभेदे त्रिका॰

**क्षीरक्षव** पु॰ क्षीरं क्षरति क्षु-अच् । दुग्धपाषाणे राजनि॰

**क्षीरखर्ज्जूर** पु॰ क्षीरवत् स्वादुः खर्ज्जूरः । पिण्डखर्ज्जूरे

**क्षीरघृत** न॰ क्षीरात्तस्मात् उद्धृतं घृतम् । महिषदुग्धजाते घृते "क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च" सुश्रुते तद्गुणा उक्ताः "द्राक्षारसं क्षीरघृतं पिबेद्वा" सुश्रुतः [ भावे लि॰

**क्षीरज** न॰ क्षीराज्जायते जन-ड । १दधि हेम॰ २दुग्धजात-

**क्षीरतैल** न॰ क्षीरपक्वं तैलम् । सुश्रुतोक्ते तैलभेदे "क्षीरेणैकाग्र्य पादांशमिष्टमधुरार्थ्यं परिक्वाथ्य तैलेनोन्मिश्र्य पुनरष्टभागावशेषयेत् ततस्तैलं क्षीराद्गुणमवतार्य्य शीतीभूतमभिमथ्य नीयात यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधकल्कक्षीरयुक्तं विपचेदेतत् क्षीरतैलमदन्तानां पानाभ्यङ्गादिषूपयोज्यम् । तेनार्ङ्गीर्न वा क्षीरं ह्रिरं सततं स्यामिति" ।

**क्षीरदल** पु॰ क्षीरं दले यस्य । अर्कवृक्षे (आकन्द) राजनि॰

**क्षीरद्रुम** पु॰ क्षीरप्रधानो द्रुमः शा॰त॰ । अश्वत्थवृक्षे राजनि॰

**क्षीरधि** पु॰ क्षीरं धीयतेऽस्मिन् धा—आधारे कि । क्षीरसमुद्रे क्षीरनिधिरप्यत्र । "इन्दुः क्षीरनिधाविव" रघुः

**क्षीरधेनु** स्त्री क्षीरनिर्म्मिता धेनुः । दानार्थकल्पितक्षीरनिर्मितधेन्वाम् तद्दानादि हेमा॰ दा॰ ख॰ वराहपु॰ यथा "क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप! । अनुलिप्ते महीपृष्ठे गोमयेन नरोत्तम! । गोचर्म्ममात्रमानेन कुशानास्तीर्य्य सर्वतः । तस्योपरि महाराज! न्यसेत् कृष्णाजिनं बुधः । ततोऽपरि कुण्डलीकां गोमयेन कृतामपि । क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम् । सुवर्णमुखशृङ्गाणि चन्दनागुरुकाणि च । प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् । मुखं गुडमयं तस्या जिह्वा शर्करया तथा । फलप्रशस्तदन्ताश्च मुक्ताफलमयेक्षणाम् । इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् । ताम्रपृष्ठां कांस्यदोहां पट्टसूत्रमयं तथा । पुच्छञ्च, स्तपयाद्व ! नवनीतमयस्तनीम् । स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नमयीं शुभाम्। चत्वारि तिलपात्राणि चतुर्दिक्षु स्थापयेत् । सप्तधान्यसमायुक्तां दिक्षु सर्वासु कल्पयेत् । एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् । आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्च्चयेत् । धूपदीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् । आच्छाद्यालङ्कृतं कृत्वा मुद्रिकाकर्णपत्रकैः । पादुकोपानहं छत्रं दत्त्वा दानं समर्पयेत् । अनेनैव तु मन्त्रेण क्षीरधेनुं प्रकल्पयेत् । या लक्ष्मीः सर्वभूतानामित्यादि नरपुङ्गव! । आवाहयेति मन्त्रेण क्षीरधेनुं प्रदापयेत् । गृह्णामि त्वां देवि! भक्त्या ग्राहको मन्त्रमुच्चरेत्। एवं धेनुं प्रदायाथ क्षीराहारो दिनं चरेत् । त्रिरात्रन्तु पयोभक्षी ब्राह्मणो राजसत्तम! । दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् । एतां हेमसहस्रेण शतेनाथ स्वशक्तितः । शतार्द्धेन वा पाद्धं, तदर्द्धं यथेच्छया । दत्त्वा धेनुं महाराज! शृणु तस्यापि तत्फलम् । दिव्यं वर्षसहस्रन्तु रुद्रलोके महीयते । पितृपितामहैः सार्द्धं ब्रह्मणो भवनं व्रजेत् । दिव्यं विमानमारूढो दिव्यगन्धानुलेपनः। क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति । द्वादशादित्यसङ्काशैर्विमानैरुपशोभितैः । गीतवादित्रनिर्घोषैरप्सरोगणसेवितैः । तत्रोपविष्टोऽसौ राजा विष्णुसायुज्यतां व्रजेत् । य इदं शृणुयाद्राजन् । पठेद्वा भक्तिभावितः । सर्वपापविनिर्म्मुक्तो विष्णुलोकं स गच्छति"

क्षीरनाश पु० क्षीरं नाशयति नश–णिच् अण् उप०स० । गाम्भोटवृक्षे राजनि० । तद्वृक्षदुग्धयोगादन्यदुग्धस्य नाशनं लोकसिद्धम् ।

क्षीरनीर न० क्षीरात्तं नीरमिव । १आलिङ्गने शब्दमा० आलिङ्गने हि क्षीरनीरयोरिव संसर्गो भवति । समा० द्व० । २क्षीरनीरसमाहारे न० "क्षीरनीरसमं मित्रं प्रशंसन्ति विचक्षणाः । तत्र नीरं क्षीरयति" वैता० क्षीरमिव नीरम् । ३क्षीरतुल्ये जले न० क्षीरनीरं धीयतेऽत्र धा-आधारे कि । क्षीरधि दुग्धसमुद्रे पु० ।

क्षीरप त्रि० क्षीरं पिबति पा–क । दुग्धपायिनि बालक भेदे पु० "सन्तोनर्योऽङ्गवर्षो बालकोऽपि त्रिविधः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपाः द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादाः" सुश्रु० "क्षीरं तु बालवृत्तानां ये पिबन्तीह मानवाः । न तेषां क्षीरपाः केचित् भवन्ति कुलवर्द्धनाः" भा०आनु०।२५अ०

क्षीरपर्णिन् पु० क्षीरयुक्तं पर्णमस्यास्ति इनि । अर्कवृक्षे राजनि०

क्षीरपर्णी स्त्री क्षीरं पर्णेऽस्या गौ०ङीष् । अर्कवृक्षे शब्दच०

क्षीरपलाण्डु पु० क्षीरमिव शुभ्रः पलाण्डुः । श्वेतपलाण्डौ "स्निग्धोरश्चिक्कः स्थिरधातुकर्त्ता बल्योऽक्षिमेधाकर पुष्टिदश्च । स्वादुर्गुरुः स्वादितप्रितश्चकः स्निग्धक्षः क्षीरपलाण्डुरुक्तः" सुश्रुते तद्गुणा उक्ताः ।

क्षीरपाण पु० पीयते पा-कर्म्मणि ल्युट् क्षीरं पानंयस्य "पानं देशे" पाणत्वम् अत्र देशः देशस्थायिजनपरः । १उशीनरनामजनपदे सि०कौ० "पा भावकरणयोः" पा० भावे करणे च ल्युटि पा पानम् इत० । २तत्पानकरणे त्रि० । ३तत्पानपात्र्यां स्त्री ङीप् । ४दुग्धस्य पाने न० ।

क्षीरभृत पु० क्षीरेण भृतः । दुग्धमात्रभृतिके गोपाले भृत्यभेदे । "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् । गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः "यो गोपालस्यो भृत्यः क्षीरेण भृतो न भक्तादिना स स्वाम्यनुमत्या दशभ्यो गोभ्यः श्रेष्ठामेकां गां भृत्यर्थं दुह्यात् सा भक्तादिरहिते गोपाले भृतिः स्यात् । एवं शतगोक्षीरदानेन दश गाः पालयेदित्युक्तम्" कुल्लू०

क्षीरवर्ग पु० ६त० सुश्रुतोक्ते क्षीरभेदसमूहे यथा "गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत् । अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत्पयः । तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु । मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु । सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते । तत्र सर्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात् । वातपित्तशोणितमानसेष्वविकारेष्वविरुद्धम् । जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममद-दाहपिपासाहृद्वस्तिपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भस्रावरक्तपित्तश्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुधाव्यवायकर्शितानाञ्च पथ्यतमम् । गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम् । रक्तपित्तहरं शीतं मधुरं रसपाकयोः । जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् । गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् । दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् । अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् । नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः । रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु । शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् । आविकं मधुरं स्निग्धं गुरु पित्तकफापहम् । पथ्यं केवलवातेषु कासे चानिलसम्भवे । महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् । निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु । उष्णं चैकशफं बल्यं शाखावातहरं लघु । नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् । नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् । हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् । प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् । रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा । दिवाकराभितप्तानां व्यायामानिलसेवनात् । श्रमानुलोमि वातघ्नं चक्षुष्यं चापराह्णिकम् । पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्त्तितम् । तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् । वर्जयित्वा स्त्रियाः स्तन्यमामेव हि तद्धितम् । धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा । तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते । अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत् । वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्" । भावप्र० अत्र विशेष उक्तस्तत्र दृश्यः ।

क्षीरसौरट पु० क्षीरवत् स्वादुः सौरटः । सौरटभेदे सौरटशब्दे विवृतिः । "क्षीरसौरटमधूलिकाकुष्माण्डप्रभृतीनि समादेन मधुरोपलेः" सुश्रु० सा च मौलुपर्णीशब्दे ।

क्षीरलता स्त्री क्षीरप्रधाना लता । क्षीरविदार्य्याम् राजनि०

**क्षीरवत्** पु० क्षीरमिव निर्यासोऽस्त्यस्य मतुप् मस्य वः। अश्वत्थादौ श्वेतनिर्यासयुक्ते वृक्षे। २दुग्धयुक्ते त्रि० "बहुपयान् क्षीरवांश्चरमेष्ठमादत्" कथ० १८।४।१६ स्त्रियां ङीप्। सा च ३नदीभेदे "ततः क्षीरवतीं गच्छेत् पुण्यां पुण्यतमैर्वृताम्। पितृदेवार्चनपरो वाजपेयमवाप्नुयात्" भा० व० ८४अ०

**क्षीरवल्ली** स्त्री क्षीरा क्षीरवती वल्ली। क्षीरविदार्य्याम् राजनि०

**क्षीरवारि** पु० क्षीरमिव वारि यस्य। क्षीरसमुद्रे

**क्षीरवारिधि** पु० क्षीरमिव वारि धीयतेऽस्मिन् धा-आधारे कि। क्षीरसमुद्रे क्षीरसिन्धुःप्रभृतयोऽप्यत्र

**क्षीरविकृति** स्त्री ६त० (क्षीरसा) कूर्चिकायाम् अमरः

**क्षीरविदारी** स्त्री क्षीरमिव शुभ्रा विदारी। १श्वेतभूमिकुष्माण्डे शब्दार्थचि०। क्षीरप्रधाना विदारी। २शुक्लरक्तयोः भूमिकुष्माण्डयोः राजनि०

**क्षीरविषाणिका** स्त्री क्षीरमिव विषाणमग्रमस्यस्य ठन्। १दृश्चिकालीवृक्षे (विछाटि) शब्दाथ०। २क्षीरकाकोल्याम् राजनि०

**क्षीरवृक्ष** पु० क्षीरप्रधानो वृक्षः। १उडुम्बरे शब्दा० २क्षीरिकायां भरतः। ३राजादन्याम् राजनि० ४न्यग्रोधे ५अश्वत्थे ६मधूके (मौल) च सुश्रुतः। "चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोदुम्बराश्वत्थमधूकानाम्" सुश्रु० "पलाशि क्षीरवृक्षाणाम्" सुश्रु०।

**क्षीरशर** पु० क्षीरं शीर्य्यतेऽत्र शॄ—आधारे अप्। आमिक्षायां हेमच० दधियोगात्तद्योग्यपदस्य अत्यन्तेन आश्रमानत्वात् तथात्वम्। [भावप्र०उक्ते नष्टे दुग्धे (छें डा दुध)

**क्षीरशाक** न० "पक्तमेव हि यच्छष्टं क्षीरशाकं हि तत् पयः"

**क्षीरशीर्ष** पु० क्षीरमिव शीर्षमस्य। श्रीगर्भे चन्दनभेदे राजनि०

**क्षीरशुक्ल** पु० क्षीरमिव शुक्लः। १शृङ्गाटके(पानीयफल)शब्दच०। २राजादन्यां राजनि०। ३शुक्लभूकुष्माण्डे स्त्री अम०

**क्षीरशुक्ला** स्त्री क्षीरवत् शुक्ला। क्षीरकाकल्यां राजनि०

**क्षीरश्री** त्रि० क्षीरेण श्रीयते मिश्रीक्रियते श्री—कर्म्मणि क्विप्। क्षीरमिश्रिते सोमादौ "शुक्रः क्षीरश्रीः" यजु० ८।५७। "क्षीरमिश्रितः सोमः शुक्र एव भवति" वेददी० क्षीरस्य श्रीरिव श्रीरस्य। २दुग्धवत्शोभाके त्रि०। ६त० । ३दुग्धशोभायां स्त्री

**क्षीरषट्पलक** न० क्षीरेण षण्णां पञ्चकोलानां पलमत्र कप्। चक्र० उक्ते पक्वे घृते "पञ्चकोलैः सयवक्षारैः पलिकैः पयसा समम्। सर्पिः प्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्"

**क्षीरषष्टिक** न० क्षीरेण पक्वं षष्टिकम्। क्षीरपक्वे षष्टिकभान्याहे। तत्र पञ्चपधे बुधवन्तौ देवं यथाह याज्ञ० "गुडौदनं पायसञ्च हविष्यं क्षीरषष्टिकम्। दध्योदनं हविश्चूर्णं मांसं चित्राहमेव च। दद्यात् ॥…॥ [illegible] तत्"।

**क्षीरस** पु० क्षीरं स्यति सो—क। क्षीरसरे राजनि०

**क्षीरसन्तानिका** स्त्री० क्षीरस्य सन्तानोऽस्त्यस्य ठन्। क्षारिका(लाना) राजनि० "क्षीरसन्तानिका हृद्या स्निग्धा पित्तानिलापहा" राजनि०

**क्षीरसमुद्र** पु० क्षीरवत्स्वादुरसः समुद्रः। क्षीराम्बुधौ क्षीरसागरादयोऽप्यत्र। "मथितःक्षीरसागरः" भाग०८।८।४

**क्षीरसर्पिस्** न० क्षीरेण पक्वं सर्पिः। सुश्रुतोक्ते क्षीरतैलपाकविधिना क्षीरेण पक्वे घृतभेदे। क्षीरतैलपाकविधिः क्षीरतैलशब्दे उक्तः। "तैलहीनं वा क्षीरसर्पिरञ्चितर्पणम्" सुश्रु०। "क्षीरसर्पिषा चैनमनुवासयेत्" सुश्रु०

**क्षीरसार** पु० क्षीरं सरति गच्छति सारत्वेन सृ—अण्। क्षीरजाते शृङ्गाटकादिद्रव्यविशेषेण (पानजात)सृजाते १पदार्थे। ६त०। २नवनीते च "क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्वया" उद्भटः।

**क्षीरस्फटिक** पु० क्षीरमिव शुभ्रः स्फटिकः। क्षीरवर्णे स्फटिकमणिभेदे हेम०।

**क्षीरस्वामिन्** पु० अमरटीकाकारे शाब्दिके पण्डितभेदे

**क्षीरहिण्डीर** पु० ६त०। दुग्धफेने शब्दचिन्ता०।

**क्षीरह्रद** पु० क्षीरदर्शे ह्रदः। क्षीरवर्णे ह्रदे। तत्रभवादौ शिवा०—अण्। क्षैरह्रद तद्भवादौ त्रि०

**क्षीरा** स्त्री क्षीरं तद्वर्णोऽस्त्यस्य अच्। काकोल्याम् राजनि०

**क्षीराब्धि** पु० क्षीरस्य दुग्धरसस्याब्धिः। क्षीरसमुद्रे एवं क्षीरसागरादयोऽप्यत्र।

**क्षीराब्धिज** पु० क्षीराब्धौ जायते जन—ड। १चन्द्रे। २लक्ष्म्यां स्त्री ३कल्पलतादौ यथायोग्यलिङ्गता।४मौक्तिके ५सामुद्रलवणे न० मेदि०। "यथा भगवता ब्रह्मन्! मथितः क्षीरसागरः" इत्युपक्रमे भाग०८.८अ०तेषामुत्पत्तिर्दर्शिता यथा "तद्यामा जम्बुः सर्वे तच्छेषं शङ्करो ऽपर्बीत्। नारायणाहृया तेन नीलकण्ठत्वमाप्नुयात्। ऐरावतश्च नागेन्द्रो हयश्चोच्चैःश्रवाः पुनः। द्वितीयावर्त्तनाद्दानवात् तु मन्दारादिति नः श्रुतम्। तृतीयावर्त्तनेऽप्सरोगणो जातः सुशोभनः। चतुर्थात् पारिजातश्च उत्पन्नः स महातरुः। पञ्चमात् हिमगुत्पन्नात् उत्थितः क्षीरसागरात्। तं भवः शिरसा धत्ते नारीव स्वलिकं नृप!। नाना-

माणिक्यानि रत्नानि दिव्यान्याभरणानि च । क्षीरोदधेस्तू-
त्थितानि गन्धर्वांश्च सहस्रशः । एतान् दृष्ट्वा तदोत्पन्ना-
नत्याश्चर्यसमन्विताः । अभवन् जातहर्षास्ते तत्र सर्वे
सुरासुराः । दैत्यपक्षे ततो मेघाः सम्यग्वर्षन्ति संस्थिताः ।
कृष्णाज्ञया तु वायुस्तु सुखं याति सुरान् प्रति । विष-
निःश्वासवातेन वासुकेश्चार्कतापनात् । निस्तेजसोऽभ-
वन् दैत्या निर्वीर्याश्च महामते ! । ततः श्रीश्च गता तस्मात्
क्षीरोदाद्धृतपङ्कजा । विभ्राजमाना राजेन्द्र दिशः सर्वाः
स्वतेजसा । ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता ।
दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता । देवपक्षं समा-
साद्य स्थिता चारिन्दम ! । हरिवक्षःस्थलं प्राप्ता ततः
सा कमलालया । ततोऽमृतघटं पूर्णं गृहीत्वा पयसो-
निधेः । धन्वन्तरिः समुत्तस्थौ" ।

क्षीराब्धितनया स्त्री ६त० । लक्ष्म्यां १तस्यास्तज्जातत्वा-
कथात्वम् २चन्द्रे पु० क्षीराब्धिजशब्दे दृश्यम् ।

क्षीरावी स्त्री क्षीरमवति अव–अण् ङीप् । दुग्धिकायाम्
(दुधी) अमरः स्वार्थे क । तत्रार्थे । क्षुद्राः पत्रच्छेदने
दुग्धवर्षिवदीसर्वदिग्भीवात्तथात्वम् । सा च "शकलतुल्य-
पत्रा" सुभूतिः । [ क्षिका०

क्षीराह्व पु० क्षीरमाह्वयते स्पर्द्धते आ+ह्वे-क । सरलद्रुमे

क्षीरिका स्त्री क्षीरं तत्तुल्यस्वादोऽस्त्यस्य ठन् । १राजादने
२पिण्डखर्ज्जूरे अमरः । "क्षीरिकायाः फलं पक्वं
गुरु विष्टम्भि शीतलम्" राजनि० । "क्षीरिकायाः फलं वृष्यं
बल्यं स्निग्धं हिमं गुरु । तृष्णामूर्च्छामदभ्रान्तिक्षयदो-
षत्रयापहृत्" भावप्र० । ३परमान्ने भावप्र० क्षताशशब्दे
२१८०पृ० दृश्यम्

क्षीरिद्रुमाद्य न० "क्षीरिद्रुमाद्योत्थरसे विपक्वं तज्जैश्च
कल्कैः पयसा च सर्पिः । सितोपलार्द्धं मधुपादयुक्तं
रक्तातिसारं शमयत्युदीर्णम्" चक्रदत्तोक्ते घृतभेदे

क्षीरिन् पु० क्षीरं तत्तुल्यनिर्यासोऽस्त्यस्य इनि । क्षीरतुल्य-
निर्यासयुक्ते १वृक्षभेदे स च भावप्र० उक्तो यथा
"न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः । पञ्चैते क्षीरिणो
वृक्षास्तेषां त्वक् पञ्चवल्कलम् । केचित्तु पारीषस्थाने
शिरीषं वेतसं परे" वदन्तीति शेषः । "क्षीरवृक्षा हिमा
वर्ण्या योनिरोगव्रणापहाः । रूक्षाः कषाया मेदोघ्ना
विसर्पशोथनाशनाः । शोषपित्तकफास्रघ्नाः स्तन्याभ-
ग्नास्थियोजकाः । त्वक्पञ्चकं हिमं ग्राहि व्रणशोथ-
विसर्पजित् । तेषां पत्रं हिमं ग्राहि कफवातास्रजिल्लघु ।
विषघ्नाध्मानजित् तिक्तं कषायं वपुलेखनम्" तद्गुणाः ।
२हिमजायां तिक्तदुग्धायां पीतदुग्धायां क्षीरिकायां स्त्री
ङीप् जटा० "क्षीरिणी तिक्तपीता च रेचनी शोकताप-
नुत् । क्रमिदोषकफघ्नी च पित्तज्वरहरी परा" राज-
नि० । ३वराहक्रान्तायां शब्दचि० ४कटुम्भिन्यां ५काश्म-
र्यां ६दुग्धिकायां च राजनि० दुग्धिकायां पुंस्त्री शब्दच०
७स्नुहीवृक्षे ८दर्भहरे ९राजादन्याम् १०दुग्धपाषाणे
११दूर्वे १२सोमलतायां १३स्थालीवृक्षे च पु० राजनि०

क्षीरी स्त्री० क्षीर+अस्त्यर्थे अच् गौरा० ङीष् । (क्षिरखोला)
ख्याते वृक्षभेदे शब्दर० ।

क्षीरीश पु० क्षीरिणां वृक्षाणामीशः प्रधानत्वात् । वरपत्रे
मुकुन्दे मूलकाकारमूले स्वल्पगन्धे वृक्षभेदे रत्नमा० ।

क्षीरेयी स्त्री० क्षीरेण इं शोभां याति या-क गौ० ङीष्,
क्षीर+श० भवार्थे ढञ् वा ङीप् । परमान्ने हला०

क्षीरोद पु० क्षीरमिव स्वादु उदकं यस्य उदादेशः । दुग्धस-
मुद्रे "ततः श्रीरुत्थिता तस्मात् क्षीरोदात् धृतपङ्कजा"
नृसिंहपु० । क्षीरोदमन्थनकथा यथा
"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ।
दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम् । अहञ्च
तत्र साहाय्यं करिष्यामि दिवौकसः! । भविष्यत्यमृतं तत्र
तत्पानाद्बलवत्तराः । भविष्यथ प्रसादेन अमृतस्य प्रभा-
वतः । यूयं सर्वे महावीर्या भुक्तिदा रणविक्रमाः ।
इन्द्राद्यास्तु महोत्साहाः स्थानवर्जितमहानरीन् ।
ततो हि दानवान् जेतुं समर्था नात्र संशयः । इत्युक्ता
देवदेवेन देवाः सर्वे जगत्पतिम् । प्रणम्यागत्य निलयं
सन्धिं कृत्वाथ दानवैः । क्षीराब्धिमथने सर्वे चक्रु-
रुद्योगमुत्तमम् । बलिना चोद्धृतो राजन् ! मन्दराख्यो
महागिरिः । क्षीराब्धौ क्षेपतश्चैव तेनैकेन नृपोत्तम ! ।
सर्वौषधीश्च प्रक्षिप्ता देवैर्दैत्यैः पयोदधौ । वासुकिश्च
ततस्तत्र राजन् । नारायणाज्ञया । सर्वदेवहितार्थाय वि-
ष्णुश्च स्वयमागतः । ततो विष्णुसमादेशात्तत्र सर्वे सुरा-
सुराः । समेत्य मिलितेनैव क्षीराब्धेस्तटमाश्रिताः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम् । ततो
मथितुमारब्धा नृपते ! तरसाऽमृतम् । विष्णुना मुखभागे
तु वासुकेर्दानवाः कृताः । देवाश्च पुच्छभागे तु मन्थ-
नार्थं नियोजिताः । एवन्तु मन्थनात्तत्र मन्दरोऽधः प्र-
विष्टो वै । आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः ।
सर्वेषां हितार्थाय कूर्मरूपमधारयत् । आत्मानं स्वं

नाचानेत् दर्शनं श्रवणं स्पृशेत्”। अन्दाते जीवेत्यादिः प्रयोक्तव्यः यथा मदनपारिजातधृतम् “जीवेति क्षवतो ब्रूयात् जीवेत्युक्ते तथा वदेत्” क्षुतात् पतनजृम्भायु जीवोत्तिशब्दनिर्ध्वनिः। गतोऽपि च वक्तव्योऽन्यथा महाहा भवेत्” तन्त्र०। “दीर्घायुष्कः क्षुतं दीर्घं युगपद्धि विपर्ययितम्” काशीख० स्त्रीलक्षणे। कर्मयुतकुष्ठस्य क्षुतकरणं निषिद्धं यथा विष्णुध० “नाभंत्रजपधः कुर्याद्धास्यं जृम्भां तथा क्षुतम्”। “स्वनितं प्रतिक्षुतमित्रोपयुक्तं” माघः ताजकोक्तायाम् श्वर्षदशौ करिगच्छे ३१५ पृ० विवृतिः “क्षुताच्छस्त्रधा न शुभं तदापि”। “क्षुतदृष्ट्या रिपोर्भयम्” नीलक०।

क्षुतक पु० क्षुताय धाव कन्। राजिकायाम् राजनि०।

क्षुताभिजनन पु० क्षुतमभिजनयति अभि+जन-णिच्-ल्यु। (राइ) कृष्णसर्षपभेदे अमरटीकायां स्वामी

क्षुत्करी स्त्री क्षुतं करोति कृ ट ङीप्। मर्षाभेदे शब्दच०

क्षुद गतौ निघ० भ्वा० प० सक० सेट्। क्षोदति अक्षोदीत् चुक्षोद। “उत क्षोदन्ति रोदसी महित्वा” ७,५८,१, “क्षोदन्त आपो रिणते वनानि” ऋ० १,५८,६,

क्षुद पेषणे रुधा० उभ० सक० अनिट् इरित्। क्षुणत्ति अक्षुदत् अक्षौत्सीत् अक्षुत्त। चुक्षोद चुक्षुदे। क्षुणः क्षुन्दन् क्षुन्दानः। क्षोदः। “क्षुण्णाभिरविपन्नकैः” क्षुन्दन्ति मर्यान् मातले” भट्टिः। “ते तं व्यक्षिपुरक्षौत्सुः” “अक्षुदन् तानि भट्टिः” “पदः खलुनखाग्रखाद्यस्खलच्चोदक्षमे” नैषधम्। उपसर्गपूर्वस्तु तत्तदर्थयुक्ते पेषणे। [ कविक०।

क्षुद् स्त्री क्षुद-सम्प० भावे क्विप्। चूर्णने “क्षुदिर चूर्दि”

क्षुद्र त्रि० क्षुद-कर्त्तरि रक्। १कृपणे २अधमे ३क्रूरे ४अल्पे च मेदि०। ५दरिद्रे हेम०। ६तण्डुलीयशाके पु० संक्षिप्तसा०। “क्षुद्रेऽपि नूनं शरणं प्रपन्ने” कुमा० “क्षुद्राः संत्रासमेते विजहत हरयः” शा०द०। “कामात्मा विषमः क्षुद्रः” मनुः। ततः अतिशायने इष्ठन् ईयसुन् रलोपे गुणः। क्षोदिष्ठ क्षोदीयस् अतिशयक्षुद्रवाटौ त्रि०। “दृष्टृत्वहायः कार्यान्तं क्षोदीयानपि गच्छति” माघः

क्षुद्रकण्टकारी स्त्री नि० क०। अग्निदमनीवृक्षे राजनि०

क्षुद्रकण्टकी स्त्री क्षुद्रं कण्टकं यस्याः गौ० ङीष्। १हस्तिन्याम् भावप्र० क्षुद्रकण्टकीति वा पाठः

क्षुद्रकण्टिका क्षुद्रं कण्टकं यस्याः टाप् अत इत्वम्। कण्टकारिकायाम् शब्दचि०।

क्षुद्रकमानस न० काश्मीरदेशस्थे कुङ्कुमोत्पत्तिस्थानभेदे। “काश्मीरेषु सरोनाम्ना दिव्यं क्षुद्रकमानसम्” सुश्रु०

क्षुद्रकम्बु पु० कर्म०। शम्बूके (शामुक)। हेमच०

क्षुद्रकारवेल्ली स्त्री कर्म०। वनकारवेल्लीभेदे राजनि० स्वार्थे० क्षुद्रकारविकाप्यत्र राजनि०

क्षुद्रकुलिश पु० नि० कर्म०। वैक्रान्तमणौ राजनि०

क्षुद्रकुष्ठ न० कर्म० सुश्रुताद्युक्तेषु एककुष्ठादिषु एकादश कुष्ठभेदेषु कुष्ठशब्दे विवृतिः [ क्षुरे राजनि०

क्षुद्रक्षुर पु० क्षुद्रः क्षुरस्येवाकारोऽस्त्यस्य अच्। क्षुद्रगो-

क्षुद्रगोक्षुरक क्षुद्रगोक्षुरमिव कायति कै-क (छोटगोक्षुरी) गोक्षुरभेदे राजनि० [ किङ्किण्याम् (घुङुर) अमरः

क्षुद्रघण्टिका स्त्री० घण्टा+अल्पार्थे कन् घण्टिका कर्म०।

क्षुद्रचोली स्त्री नि० कर्म०। १चिरिञ्चिकाक्षुपे राजनि०

क्षुद्रचञ्चु पु० क्षुद्रः चञ्चुरिवाकारोऽस्य। क्षुपभेदे राजनि०

क्षुद्रचन्दन पु० नित्य कर्म०। रक्तचन्दने राजनि०

क्षुद्रचिर्भटी स्त्री नि० कर्म०। गोपालकर्कट्यां राजनि०

क्षुद्रचूड पुंस्त्री क्षुद्रा चूडा यस्य (गुएमालिक) खगभेदे शब्दच०

क्षुद्रजन्तु पु० कर्म०। “क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव वा। शतं वा प्रसृतौ येषां केचिदान कुलादपि” इत्युक्ते स्वल्पे १जन्तौ। २शतपद्यां शब्दमाला

क्षुद्रजम्बू स्त्री कर्म०। भूमिजम्ब्वाम् शब्दचि०।

क्षुद्रजातीफल पु० कर्म०। आमलके राजनि०

क्षुद्रजीरक न० कर्म०। कणजीरके, सुगन्धे शब्दच०

क्षुद्रजीवा स्त्री कर्म०। जीवन्तीवृक्षे राजनि०

क्षुद्रतुलसी स्त्री नि० कर्म०। बर्बरीभेदे राजनि०

क्षुद्रदंशिका स्त्री नि०कर्म०। (छोटडांश) दंशभेदे जटा०।

क्षुद्रदुरालभा स्त्री नि०कर्म०। स्वल्पदुरालभाभेदे राजनि०

क्षुद्रदुस्पर्शा स्त्री नि० कर्म०। अग्निदमनीवृक्षे राजनि०

क्षुद्रधात्री स्त्री नित्य कर्म०। कर्कटवृक्षे राजनि०।

क्षुद्रधान्य न० कर्म०। तृणधान्ये कङ्गुप्रभृतौ भावप्र० “क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम्। क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम्। वातकृत् बद्धविट्कञ्च पित्तरक्तकफापहम्” तद्गुणा उक्ताः।

क्षुद्रनासिक त्रि० क्षुद्रा नासिकाऽस्य। क्षुद्रनासिके (खाँदा)

क्षुद्रपत्रा स्त्री क्षुद्रं पत्रं यस्याः टाप्। चाङ्गेर्याम् (चुको पालङ्ग)। हारा०। २स्वल्पपत्रान्विते त्रि०। गौरा० ङीष्। ३वचायां स्त्री राजनि०।

क्षुद्रपनस पु० नि० कर्म०। लकुचे (मांदार) राजनि०।

क्षुद्रपर्ण पु० क्षुद्रं पर्णमस्य। १अर्जके बर्बरीभेदे राजनि०। २स्वल्पपत्रयुक्ते त्रि०। [ क्षुपभेदे राजनि०।

क्षुद्रपाषाणभेदा स्त्री नि० कर्म०। गिरिभवे कन्दरोत्थे

क्षुद्रपिप्पली स्त्री नित्य० कर्म०। वनपिप्पल्याम् राजनि०

क्षुद्रपृषती स्त्री नित्य० कर्म०। क्षुद्रैर्बिन्दुभिर्युक्तायां पृषत्यां मृगीभेदे "पृषती क्षुद्रपृषती स्थूलपृषती मैत्रावरुण्यः" यजु० २४.२, अत्रत्यवेददीपे तथार्थकता दृष्टा

क्षुद्रपोतिका स्त्री नि० कर्म०। भूतपोतिकायां राजनि०।

क्षुद्रफल(क) क्षुद्रं फलमस्य वा कप्। १जीवनवृक्षे शब्दच०। २भूमिजम्बुवृक्षे शब्दमा०। कबभावे। ३इन्द्रवारुण्यां ४गोपालकर्कट्याम् ५अग्निदमन्यां ६कण्टकारिकायां च स्त्री राजनि० टाप्।

क्षुद्रभण्टाकी स्त्री नि० कर्म०। बृहत्याम् राजनि०।

क्षुद्रमत्स्य पु० कर्म०। स्वल्पमत्स्ये (चोटमाछ) "क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः। लघुपाका रुचिकराः सर्वदा ते हिता मताः। वृत्तिस्थूलाः पुंस्त्वकराः रुच्याः कासानिलापहाः" भावप्र० तद्गुणा उक्ताः।

क्षुद्रमुस्त स्त्री नि० कर्म०। कशेरुरूपे राजनि०।

क्षुद्ररोग पु० कर्म०। सुश्रुतोक्ते चतुश्चत्वारिंशत्स्वल्परोगभेदे यथा "अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः। समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति। तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्दभो जालगर्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराऽर्बुदं पामा विचर्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्ते दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्मशकचर्मकीलं तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति। स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा। कफवातोत्थिता ज्ञेया बालानामजगल्लिका १। यवाकारा सुकठिना ग्रथिता मांससंश्रिता। पिडका श्लेष्मवाताभ्यां यवप्रख्येति२ सोच्यते। अवक्त्रां पिडकामुन्नतां परिमण्डलाम्। अन्धालजी३ मल्पपूयां तां विद्यात् कफवातजाम्। विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्। विवृतामिति४ तां विद्यात्पित्तोत्थां परिमण्डलाम्। ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां[illegible]ता विद्यात्तां कच्छपी५मिति। पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि। ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते। तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः। व्याधिर्वल्मीक ६ इत्येष कफपित्तानिलोद्भवः। पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम्। इन्द्रवृद्धान्तु ७ तां विद्याद्वातपित्तोत्थितां भिषक्। कर्णयोरुपरि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक्। शालूकवत्पनसिकां ८ तां विद्यात् श्लेष्मवातजाम्। हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम्। पाषाणगर्दभं ९ विद्याद्बलासपवनात्मकम्। विसर्पवत्सर्पति यो दाहज्वरकरस्तनुः। अपाकः श्वयथुः पित्तात्स ज्ञेयो जालगर्दभः१०। बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपात्सम्भूतां कक्षामिति११ विनिर्दिशेत्। अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः। क्वचित्सर्वत्र वा देहे स्मृता विस्फोटका१२ इति। कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः। सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्। तामग्निरोहिणीं १३ विद्यादसाध्यां सन्निपाततः। नखमांसमधिष्ठाय पित्तं वायुश्च वेदनाम्। करोति दाहपाकौ च तं व्याधिं चिप्प१४मादिशेत्। तदेव क्षतरोगाख्यं तथोपनखमित्यपि। अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसितः खरः। भवेत्तु कुनखं१५ विद्यात्कुलीनमिति संज्ञितम्। गम्भीरामल्पसंरम्भां सवर्णामुपरि स्थिताम्। कफादन्तःप्रपाकान्तां विद्यादनुशयीं१६ भिषक्। विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु। रक्तां विदारिकां१७ विद्यात् सर्वजां सर्वलक्षणाम्। प्राप्य मांसशिरास्नायु श्लेष्मा मेदस्तथाऽनिलः। ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम्। स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः। मांसं विशोष्य ग्रथितां शर्करां जनयेत्पुनः। दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः। स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम्१८। पामाविचर्च्यौ१९ २०कुष्ठेषु रकसा२१ च प्रकीर्त्तिता। परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः। पादयोः कुरुते दारीं२२ सरुजां तलसंश्रिताम्। शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः। मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम्। स कीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा। कोलमात्रः सरक्स्रावो जायते कदरस्तु२३ सः। क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ। दुष्टकर्दमसंस्पर्शादलसं २४ तं विनिर्दिशेत्। रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति

रोमाणि ततः श्लेष्मा समाश्रितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं २५खालित्यं रूढ्येति च विभाव्यते। दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते। कफवातप्रकोपेण विद्याद्दारुणकन्तु२६ताम्। अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम्२७। क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तञ्च केशान् पचति पलितं २८तेन जायते। दाहज्वररुजाक्रान्ताः स्फोटाः सपीतकाः। गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः२९। शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः। जायन्ते पिडका यूनां ३०वक्त्रे या मुखदूषिकाः। कण्टकैराचितं वृत्तं कण्डुमत्पाण्डुमण्डलम्। पद्मिनीकण्टकप्रख्यैस्तदाख्यं३१ कफवातजम्। नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम्। सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं ३२विदुः। अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते। माषवत्कृष्णमुत्सन्नमनिलान्माषकं३३दिशेत्। समुत्थाननिदानाभ्यां चर्मकील ३४ प्रकीर्त्तितम्। कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान्३५। मण्डलं महद्दल्पं वा श्यामं वा यदि वा सितम्। सहजं नीरुजं गात्रे न्यच्छ३६मित्यभिधीयते। क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। सहसा मुखमागत्य मण्डलं विसृजेत्ततः। नीरुजं तनुकं श्यावं मुखे व्यङ्गं ३७तमादिशेत्। मर्द्दनात्पीडनाच्चापि तथैवाप्यभिघाततः। मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः। तदा वातोपसृष्टन्तु चर्म प्रतिनिवर्त्तते। मणेरधस्तात्कोषश्च ग्रन्थिरूपेण लम्बते। सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित्। मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम्३८। सकण्डूः कठिना चैव सैव श्लेष्मसमुत्थिता। अल्पीयसीं यदा हर्षाद्बालां गच्छेत्स्त्रियं नरः। हस्ताभिघातादथ वा चर्मण्युद्वर्त्तिते बलात्। मर्द्दनात्पीडनाद्वापि शुक्रवेगविघाततः। यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम्३९। वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम्। मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च। निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम्। मूत्रं प्रवर्त्तते जन्तोर्मणिर्न च विदीर्य्यते। निरुद्धप्रकशं४०विद्यादरुढां चावपाटिकाम्। वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः। निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च। मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति। संनिरुद्धगुदं४१व्याधिमेनं विद्यात्सुदुस्तरम्। शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा। कण्डूयनात्ततः क्षिप्रं स्फोटास्रावश्च जायते। एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्४२। स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः। प्रक्लिद्यते यदा स्वेदात् कण्डूं जनयेत्तदा। तत्र कण्डूयनात् क्षिप्रं स्फोटास्रावश्च जायते। प्राहुर्वृषणकच्छूं४३तां श्लेष्मरक्तप्रकोपजाम्। प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्।

क्षुद्रल त्रि० क्षुद्राः क्षुद्ररोगाः सन्त्यस्य सिध्मा० लच्। क्षुद्ररोगयुक्ते

क्षुद्रवर्वरा स्त्री नित्यकर्म्म०। वरटायां राजनि०

क्षुद्रवल्ली स्त्री नित्यकर्म्म०। मूलपोतिकायाम् राजनि०

क्षुद्रवार्त्ताकिनी स्त्री नि०कर्म्म०। श्वेतकण्टकार्य्यां राजनि०

क्षुद्रवार्त्ताकी स्त्री नि० कर्म्म०। वृहत्याम् अमरः

क्षुद्रशङ्ख पु० नित्य कर्म्म०। शङ्खनखे (जोङ्ङा) अमरटीका

क्षुद्रशर्करा स्त्री नि०कर्म्म०। यावनालशर्करायाम् राजनि०

क्षुद्रशार्दूल पुंस्त्री नि० कर्म्म०। क्षुद्रव्याघ्रे (चिताबाघ) राजनि० [वति त्रि०

क्षुद्रशीर्ष पु० क्षुद्रं शीर्षमस्य। १मयूरशिखावृक्षे, २स्वल्पशीर्ष-

क्षुद्रशुक्ति स्त्री नि० कर्म्म०। जलशुक्तिकायाम्। स्वार्थे क तत्रैवार्थे राजनि०

क्षुद्रश्यामा स्त्री नि० कर्म्म०। कटभीवृक्षे राजनि०

क्षुद्रश्लेष्मातक पु० नि० कर्म्म०। भूकर्बुदारवृक्षे राजनि०

क्षुद्रश्वास पु० कर्म्म०। श्वासरोगभेदे

“क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चधा भिद्यते स महाव्याधिः श्वास एको विशेषतः। प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा। आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च। किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते। निषण्णस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः” सुश्रु०

“रूक्षायासोद्भवः कोष्ठे क्षुद्रो वातमुदीरयन्। क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः। हिनस्ति न च गात्राणि न च दुःखं यथेतरे। न च भोजनपानानां निरुणद्धुचितां गतिम्। नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम्। स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः” भावप्र०

क्षुद्रश्वेता स्त्री सुश्रुतोक्ते कर्काटिगणोक्ते औषधिभेदे “कायेन्द्र दुग्धी क्षुद्रश्वेता महाश्वेत्यादि” सुश्रुतः

**क्षुद्रसहा** स्त्री सह–अच् क्षुद्रस्य सहा ३त०। १शूकशिम्ब्याम् २मार्जारगन्धायाञ्च राजनि०

**क्षुद्रसुवर्ण** न० नि० कर्म०। पित्तले राजनि०

**क्षुद्रहिङ्गुली** स्त्री कर्म०। १कण्टकार्याम्। स्वार्थे क अतो इत्त्वे टाप्। अत्रैवार्थे शब्दच०।

**क्षुद्रा** स्त्री क्षुद्–रक्। १वेश्यायाम्. "क्षुद्राधिष्ठितभवनाः" काद० २कण्टकार्याम्, ३सरघायाम्. अमरः ४मक्षिकामात्रे. ५चाङ्गेर्याम्, ६हिंस्रायाम्, हेमच० ७नटीभुकायां (गड-गड़ेधान) रत्नमा० ८वादरतायाम्, शब्दर० "क्षुद्राभि-रक्षुद्रतराभिराकुलम्" माघः "क्षुद्राभिः सरघाभिः" मल्लि० ९व्यङ्गायाञ्च। क्षुद्राभिः निर्वृत्तम् अण्। क्षौद्र मधुनि "स क्षौद्रपटलैरिव" रघुः [कायाम् राजनि०

**क्षुद्राग्निमन्थ** पु० कर्म०(छोटगणियारी) क्षुद्रगणिकारि-

**क्षुद्राञ्जन** न० सुश्रुतोक्ते अञ्जनभेदे "गोमूत्रपित्तमदिरा यकृदा-क्षीरके पचेत्। क्षुद्राञ्जनं रसे चान्दनयकृत् स्वे फलेऽपि वा। गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलं सैन्धवो-पहितं युक्त्याविहितं वेणुगह्वरे। मेदो यकृद्द्युतञ्चाजं पिप्पल्यः सैन्धवं मधु। रसमामलकञ्चापि पक्वं सम्यग्नि-धापयेत् कोशे खदिरनिर्माणे तद्वत् क्षुद्राञ्जनं हितम्"।

**क्षुद्राण्डमत्स्यसंघात** पु० क्षुद्राण्डानामण्डमत्स्यानामगाद्या भिन्नदलातानां मत्स्यानां संघातः। (पोनार भांक) चीनाधाने अमरः

**क्षुद्रादिकषाय** पु० चक्रदत्तोक्ते कषायभेदे "क्षुद्रामृता नागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे। सश्वा-सकासारुचिपार्श्वरुग्भवे ज्वरे त्रिदोषप्रभवे च शस्यते"

**क्षुद्रापामार्ग** पु० नि० कर्म०। रक्तापामार्गे राजनि०

**क्षुद्रामलसंज्ञ** पु० क्षुद्रामलकस्य संज्ञेव संज्ञा यस्य। कर्कटवृक्षे राजनि०

**क्षुद्राम्र** पु० नि० कर्म०। कोशाम्रे राजनि०

**क्षुद्राम्रपनस** पु० नि० कर्म०। लकुच त्रिका०

**क्षुद्राम्ला** स्त्री अम्ला अम्लरसा कर्म०। १चाङ्गेर्याम् भारा० (चुकोपालङ्ग) स्वार्थे क। अत्रैवार्थे। २मधाण्ड-ल्याम् राजनि०

**क्षुद्रिका** स्त्री क्षुद्रैव क। दंशे(डांश) राजनि०

**क्षुद्रीय** त्रि० क्षुद्र+उत्करा० चतुरर्थ्याम् छ। क्षुद्रकिर्ण्णादौ

**क्षुद्रेङ्गुदी** स्त्री नित्यकर्म०। दन्ताले राजनि०

**क्षुद्रेर्वारु** पु० कर्म०। गोपालकर्कट्याम् राजनि०

**क्षुद्रोदुम्बरिका** स्त्री कर्म०। काकोदुम्बरिकायाम् राजनि०

**क्षुद्रोपोदिका** स्त्री नि० कर्म०। मूलपोतिकायाम् राजनि०

**क्षुद्रोलूक** पुंस्त्री कर्म०। उलूके राजनि०

**क्षुध** बुभुक्षायां दिवा० पर० सक० अनिट् लृदित्। क्षुध्यति अक्षुधत्। चुक्षोध क्षुत्। क्षुधा क्षुधितः। क्षोधिता। "क्षुध्यन्तोऽस्य बाबृतिदाः ऋ० १,१०४,७, मा क्षुधन्ना-शयत्" अथ० २,२९,४, क्षुध्यन्तोऽप्यवसन् व्याला"। "क्षुधित्वा पतिभिर्द्दनम्" भट्टिः। क्षुधाजातास्य तारका० इतच्। क्षुधित संजातक्षुधे त्रि०

**क्षुध्** स्त्री क्षुध–भावे संप० क्विप्। १बुभुक्षायाम्। कर्मणि क्विप्। २ऋत्वे निघ० पाठान्तरम्। "यस्य राष्ट्रस्तु विषये श्रोत्रियः सीदति क्षुधा" मनुः हलन्तत्वात् वा टाप्। क्षुधाप्यत्र स्त्री क्षुधार्त्तः। "या देवी सर्वभूतेषु क्षुधा-रूपेण संस्थिता" देवीमा०। क्षुधा च प्राणिनां स्वाभा-विकदुःखहेतुर्यथोक्तं सुश्रुते "स्वाभाविकाः क्षुत्-पिपासाजरामृत्युनिद्रा प्रभृतयः"। इयञ्च प्राणधर्मः यथाह शा०ति० "बुभुक्षा च पिपासा च प्राणस्य,मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः"। क्षुधा कार्य्याणि यथा

"व्याधयो निर्जिताः सर्वे क्षुधया नृपसत्तम!। कुब्जकी-हकटी कामी तथैवाबहतो नरः। क्षुधार्त्तो न विरा-जेत प्रेतवत्तृषितो यथाम्। क्षीरत्वं विविधान् भोगान् वस्त्राण्याभरणानि च। न चेच्छति नरः किञ्चित् क्षुधया समुपीडितः। यथा भूमिगतं तोयं रविरश्मिभिः शुष्यति। शरीरस्थस्तथा धातुः शुष्यते जाठराग्निना। न शृणोति न चाघ्राति चक्षुषा न च पश्यति। दह्यते वेपते मूढः शुष्यते च क्षुधार्दितः। मूकत्वं बधिरत्वञ्च जडान्धत्वन्तु पङ्गुताम्। रौद्रं मर्य्यादहीनत्वं क्षुधा सर्वं प्रयच्छति। भगिनीं जननीं पुत्रं भार्य्यां दुहितरं तथा। भ्रातरं स्वजनं चापि क्षुधाविष्टो न विन्दति"।

**क्षुधाकुशल** पु० ७त०। बिल्वान्तरवृक्षे राजनि०

**क्षुधाभिजनन** पु० क्षुधामभिजनयति अभि+जन+णिच् ल्यु। १राजिकायां अमरः। २क्षुधाजननमात्रे त्रि०

**क्षुधालु** त्रि० क्षुध–बा० आलुच्। क्षुधायुक्ते

**क्षुधावत्** त्रि० क्षुधा–अस्त्यस्य क्षुधा शब्दतयाऽस्त्यस्याः वा मतुप् मस्य वः। १क्षुधायुक्ते स्त्रियां ङीप्। भैषज्यरत्ना-वल्युक्ते २गुटिकाभेदे स्त्री "रसगन्धकाभ्राणि लवणं त्रिफला वचा। यमानी शतपुष्पा च चविका जीरकद्व-यम्। प्रत्येकं कर्षमेषान्तु अष्टाकर्षा हरीतकी। मात्रक

पञ्चकर्षेन्द्रकेशराजसुदर्शनाः। दण्डोत्पला त्रिवृद्दन्ती जामारक्तचन्दनम्। भृङ्गापामार्गकलिका मण्डूकस्य वसाईकम्। रार्द्रकस्य रसेनाथ गुडिकां संप्रकल्पयेत्। बदरास्थिसमान्तां भक्षयित्वा पिबेदनु। वारि भक्तं ज-लञ्चैव प्रातरुत्थाय मानवः। वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी। अग्निञ्च कुरुते दीप्तं भक्षकञ्च नियच्छति। अन्नपानस्य भुक्तस्य परिणामकृतश्च यत्। तत् सर्वं गमयत्याशु भास्करस्तिमिरं यथा। महत्तरं वर्ज्जयेदत्र विशेषात् क्षीरशर्करे"।

**क्षुधासागररस** पु० भैषज्यरत्नावल्युक्ते औषधभेदे "त्रिकटु त्रिफला चैव तथा लवणपञ्चकम्। क्षारत्रयं रसं गन्धं भागैकं चूर्णयेद्भिषक्। गुञ्जाभाभां वटीं कुर्य्याद्रसङ्गैः पञ्चभिः सह। क्षुधासागरनामायं रसः सद्यैव निर्म्मितः"। [अमरः। "अद्यस्य क्षुधितः पातुम्"

**क्षुधित** त्रि० क्षुधा+जाताऽस्य तार० इतच्। क्षुधायुक्ते

**क्षुधुन** पुंस्त्री क्षुध–उन किच्। म्लेच्छजातौ उज्ज्वल०।

**क्षुप** सदे सौ० प० अक० सेट्। क्षोपति अक्षोपीत् चुक्षोप "स सद्यस्क्षुपतः" भा० व० १७१अ०

**क्षुप** पु० क्षुप–क क्षु–पक् वा। ह्रस्वशाखाशिफे वृक्षे अमरः। वासुदेवस्य सत्यभामाया गर्भजातपुत्रभेदे। "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः" हरिवं० १६०अ०। इक्ष्वाकुपितरि २राजभेदे च पु०। "आसीत् कृतयुगे तात! मनुर्दण्डधरः प्रभुः। तस्य पुत्रो महाबाहुः प्रस-न्धिरिति विश्रुतः। प्रसन्धेरभवत् पुत्रः क्षुप इत्येव संज्ञितः। क्षुपस्य पुत्र इक्ष्वाकुः" भा०शान्ति०२२अ०। ४द्वार-कापश्चिमस्थे ४पर्व्वतभेदे।

"बभौ रैवतकः शैलो रम्यसानुगुहाजिरः। पूर्व्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः। दक्षिणस्यां ल-तावेष्टः पञ्चवर्णो विराजते। इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः" हरि० १५७अ०।

**क्षुपडोडमुष्टि** पु० डोलयति दल–उत्क्षेपे अच् डोलयोमुष्टि रस्य पृषो० कर्म०। विषमुष्टिक्षुपे राजनि०

**क्षुब्ध** पु० क्षुभ नि० करणे क्तः। १मन्थानदण्डे हेम०। "दधीव मन्दरक्षुब्धक्षोभिताम्भोधिवर्णना" माघः। २क्षोभयुक्ते त्रि०। "पार्ष्णी परि पदे कृत्वा योनिं शिश्नेन ताडयेत्। बाहुभ्यां धारयेद्गाढं बन्धोऽयं क्षुब्धसंज्ञकः" रतिम० उक्ते ३रतिबन्धभेदे पु०।

**क्षुभ** सञ्चलने भ्वा० आत्म० सक० सेट् लृदित्। क्षोभते अक्षुभत् चुक्षुभे क्षोभ्यम्। क्षोभः क्षोभकः क्षोभी "तानसौ नापि-चाक्षुभत्" "नाक्षुभद्राघवक्षोभात्" भट्टिः क्षुब्धः क्षुभितः। "क्षुभ्यतो या महावेगाः श्वसमाना इवाशुगाः" भा० व० ८अ०। "क्षुभिताः सागराः सर्व्वे" रामा० वा० ६६स०। "चुक्षुभे द्विषतां मनः" रघुः "यदेतदादित्यस्य मध्ये क्षोभत इव" छा० उ०। क्षोभमावः।

**क्षुभ** सञ्चलने वा दिवा० क्र्या० अक० सेट्। क्षुभ्यति क्षुभ्नाति अक्षोभीत्। क्षुभितः। "क्षुभ्यन्ति प्रसभमहोऽपि नापि हेतोः" माघः। क्षुभ्नातीत्यत्र क्षुभ्ना० न णत्वम्। प्राद्युपसर्गपूर्व्वकस्तत्तद्द्योत्यार्थयुक्ते क्षोभे

**क्षुभ** त्रि० क्षुभ–क। १क्षोभके २प्रवर्त्तके च "मठरादयाद-रखाद्यांस्तांस्तान् दण्डेऽर्गानिक्षुभान्" भा०व० ३अ० "अग्नि-क्षुभान् तत्प्रवर्त्तकान्" नीलक०। ३सूर्य्यपारिषदभेदे स्त्री। "क्षुभया सहिता मैत्री याश्चान्याभूतमातरः" तत्रैव "क्षुभा-निष्प्रहानुचर्य्यौ देवता" नीलक०

**क्षुभित** त्रि० क्षुभ–क्त। १आलोडिते, २व्याकुले, ३भीते च हला०। "क्षुभितसैन्यपरागविपाण्डुरे" माघः "महा-प्रलयमारुतक्षुभितपुष्करावर्त्तकेति वेणी०

**क्षुम्नादि** पा० उक्ते निमित्ते सत्यपि णत्वनिवृत्तिनिमित्ते शब्दगणे स च गणः "क्षुम्ना नर्त्तन नन्दिन् नन्दन नगर। एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति। हरिनन्दी हरिनन्दनः गिरिनगरम्। नृतिर्यङि प्रयोजयति। न-रीनृत्यते। नर्त्तन गहन नन्दन निवेश निवास अग्नि अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्त्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः। आचार्य्यादणत्वञ्च। आचार्य्यभोगीनः। आ-कृतिगणोऽयम् क्षुम्नादिः। "अविहितलक्षणो णत्वप्रतिषे-धः क्षुम्नादिषु द्रष्टव्यः" इति भाष्यम्" न भाभूपूकमिगमि-दयस्तस्यैव प्रपञ्चः" इति कैयटः। पाठान्तरम् "क्षुम्ना तृप्नु नर्त्तन नर नगर नन्दन यङ्नृति गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्य्यभोगीन चतुर्हायन इरिकादीनि वनोत्तरपदानि (संज्ञायाम्) इरिका तिमिर समीर कुबेर हरि कर्म्मार क्षुम्नादिः"।

**क्षुमत्** त्रि० क्षु+अस्त्यर्थे मतुप्। १अन्नयुक्ते उपचारात् २अन्नवत्सुखे च। "आ तु इन्द्र! क्षुमन्तम्" ऋ० ८,८१,१, "क्षुमन्तं सुखम्" भा०

**क्षुमा** स्त्री क्षु–मक्। (मसिना) (तिसी) १अतस्याम् अमरः। "क्षमायो विधूनने क्षमायति शब्दं न कम्पयति पृषो०। क्षुमा २अलुक्षमके त्रि० "क्षुमासि पातवे-

नृपाज्ञया चरेत्। गयायां तीर्थगमने सिन्धुमज्जनं क्षुर-माचरेन्न तु गर्भिणीपतिः"। मु॰ चि॰

"अथ केशाद्विनिमित्तविशेषे चौरस्य विधिनिषेधौ मञ्जुभाषिण्योक्तावाह। ऋतुपाणीति अत्र पूर्वार्द्धे यद्यपि निषिद्धवारादौ एषु कर्मसु क्षुरकर्म चौरं सद्यः कार्य्यमिति वाक्यार्थः क्रमेण(?) तथापि विवाहादौ चौरम्। तथा पाणिपीडो विवाहो तत्रत्यदा ततः प्राग्भाविनि गोदानकर्मणि केचित् विवाहे श्मश्रुकर्मागमेतत्परं चौरमित्याहुः अतएव शाखाविशेषेण विवाहे चौरमुक्त-मित्यूचुः। तथा च श्रुतिः "सुशुन्धयितारः अविवाय नावपूर्व्वामित्यादि"। मृतौ मातापित्रोर्मरणे बन्धमोक्षणे कारागृहे बन्धस्य यदामोचनं भवेत्तदा द्विजाज्ञया राजाज्ञयाऽपीति बोध्यम नृपे राजा तदाज्ञया चौरादेः चौरं कार्य्यमेव यदाह नारदः "नृप-विप्राज्ञया यज्ञे मरणे बन्धमोक्षणे। उद्वाहेऽखिलवार-र्क्षतिथिषु चौरमिष्टमिति"। धर्म्मशास्त्रे "गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि। आधाने सोमपाने च षट्सु चौरं विधीयते" इति। अथ गर्वेति गर्भिणी गर्भवती तस्याः पतिर्भर्त्ता शवयाहं मृतकवहनं तीर्थयात्रां उपलक्षणत्वात् विदेशगमनमपि। सिन्धुमज्जनम् समुद्र स्नानं, क्षुरं क्षुरकर्म एतानि कर्म्माणि न चाचरेन्न कुर्य्यात्। यदाह वसिष्ठः "मृतकनिर्हरणं सिन्धुस्नानं चौलं मृतकस्य तु। तीर्थयात्रां नखच्छेदं न कुर्य्याद्गर्भिणीपतिः"। "सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाह-नम्। विदेशगमनञ्चैव न कुर्य्याद्गर्भिणीपतिः" धर्म्मशास्त्रे तु विशेषतः "राजा योगी पुरन्ध्री च मातापित्रोस्तु-जीवतोः। मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिः" अयञ्च चौरादिनिषेधो गुर्व्विणीपतेः सप्तमासादूर्द्ध्वं न प्राक् यदुक्तं नारदीये "वपनं तीर्थयात्राञ्च वर्जयेद्गर्भिणीप-तिः। आद्धञ्च सप्तमान्मासादूर्द्ध्वं नान्यत्र वेदवित्"। आद्धं श्राद्धभोजनम्। इदमुत्तरार्द्धं गर्भाधानप्रकरणे वक्ष्याम्य-पि प्रसङ्गादत्रैवोक्तं पद्यमिति"। पी॰ धा॰

"नृपाणां हितं चौरभे श्मश्रुकर्म दिने पञ्चमे पञ्चमेऽ-स्योदये वा। घटग्निक्षिप्रमैत्रोऽष्टकः पञ्चपित्र्येऽष्टतोऽ-ष्ययंत्रा चौरकर्मान्यनुमेति"। मु॰ चि॰

"अथ चौरे राज्ञां विशेषं सर्व्वथा वर्ज्यनक्षत्राणि च मुहूर्त्तपदार्थेनाह नृपाणां हितमिति चौरभे चौर-नक्षत्रे विहिते सति पञ्चमे पञ्चमे एव दिने श्मश्रुकर्म्म-श्मश्रुशोभाकारि क्षुरकर्म नृपाणां राज्ञां हितं प्रशस्तं यदाह वसिष्ठः "महीभृतां पञ्चमे पञ्चमेऽह्नि चौरं च कार्य्यं हितमुक्तमेभिः" नतु पञ्चमे इति वीप्सोक्त्या नियम प्रतीतेर्विहितनक्षत्राभावे च सति श्मश्रुकर्म कार्य्यमिति उक्तं च वसिष्ठेन "न लभ्यते चेन्न तदुक्तधिष्ण्यं तल्लोदये वा निखिलं विधेयमिति" उदयशब्देन मुहूर्त्त इति व्या-ख्यावृह्यात्(?) तदाह गर्गः "चौरकर्म महीपानां पञ्चमे पञ्चमेऽहनि। कर्त्तव्यं चौरनक्षत्र्यथवा तन्मुहूर्त्तके इति तेषां चौरनक्षत्राणां ये स्वामिनस्तेषां मुहूर्त्ते इत्यर्थः। तांश्च मुहूर्त्तान् विवाहप्रकरणे वक्ष्यति। अत्र चौरपदं श्मश्रुकर्मपरम्। "राजा योगी पुरन्ध्री च मातापित्रोस्तु जीवतोः। मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिरिति" राज्ञो मुण्डननिषेधात्। अतएवोक्तं श्रीपतिना "श्मश्रुकर्म पञ्चमे च पञ्चमेऽह्नि च भूभृताम्। चौरभस्योदये वाऽपि स्यान्निन्द्यतारका न चेत्" इति। निन्द्यतारका जन्म-विपदादितारका। अन्ये त्वेवं व्याचक्षते भस्योदये वेति चौरभस्योदये लग्ने। यथा मेषलग्नं त्रिंशद्भा-गात्मकं तत्राश्विन्यादयोदयभागा १३, २० सार्द्धत्रिंशत्तिप्रा यावता कालेन मेषलग्ने उदयं यान्ति तावदश्विनीनक्षत्र-स्योदयं यान्तीत्यर्थः। तदनन्तरं तावन्त एवांशा यावता कालेनोदयं यान्ति तावद्भरण्युदय इत्यनेन न्यायेन सर्वेषां नक्षत्राणामुदयाः ज्ञेयाः। इयं च व्याख्या वराहपद्यव्याख्यावसरे भट्टोत्पलेनाभ्यधायि। पितृचर-णास्त्वेवं व्याकुर्वते। यस्मिन्काले अश्विन्या उदयः क्षिति-जसम्बन्धः संपद्यते, तं समयमारभ्य यावद्भरण्या उदयः-क्षितिजसम्बन्धस्तदन्तराले यावान् कालः सोऽश्विन्या उदय उच्यते। एवं सत्युदयान्तरयोरन्तरालात्मकाङ्कितमार्गेण यावानिष्टकालः अगच्छेत्स एव तत्तन्नक्षत्रोदय इति निष्कृ-ष्टार्थ इति। नक्षत्रस्योपलक्षणत्वाच्छुभवारादयोऽपि त-त्रैवाचार्य्याः(?) कार्य्यम् उक्तञ्च नारदेन "यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते। प्रहरे क्षणवारेऽपि तस्य तत्कर्म सर्व्वदेति"। क्षणवारः कालहोरा। एवं सति निषिद्धनक्षत्रवारेऽपि प्रथमश्मश्रुकर्म का-र्य्यमिति युक्तमुत्पश्यामः। घटग्निरिति। अग्निः कृत्ति-का चौरात्मका(?) अग्र्यारं कृत्तिका यस्य। एवं मैत्र-मैत्रागस्त्यराभायस्य अष्टौ मा रोहिणीत्रयस्य। पञ्च पि-त्र्यादि मघायस्य। अष्टादशस्तारोऽर्य्यमाच उत्तराफाल्गुन्यो यस्य। एतादृशः चौरकृत् अङ्गतः वर्षान्तरं मृत्यु

पूर्व्वं सूरिभिः। कामरूपं महापीठं गुह्याद्गुह्यतमं परम्" कालिकापु० ५० अ०। गङ्गाक्षेत्रं स्कान्दे "तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते"। नारायणक्षेत्रं यथा "प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्। तत्र नारायणः स्वामी गङ्गागर्भान्तरे वरे। तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे। एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः। स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च" ब्रह्मवै० पु० प्र० ख० २७ अ०। भास्करक्षेत्रम् "गङ्गायां भास्करक्षेत्रे मातापित्रोर्म्मृते गुरौ। आधाने सोमपाने च वपनं सप्तसु स्मृतम्।" इति स्मृतिकल्पतरुधृतवचनम्। "भास्करक्षेत्रं प्रयागः" इति प्रायश्चित्ततत्त्वम्। गयाक्षेत्रं यथा "पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः" इति वायुपुराणम्। पुरुषोत्तमक्षेत्रम्। "ऋषय ऊचुः। पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम्"। "जैमिनिरुवाच। एतत्क्षेत्रवरं साक्षाद्वपुर्भूतं महात्मनः। स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्" उत्कलखण्डम्। विष्णुक्षेत्राणि यथा "श्रीभगवानुवाच। शृणुष्वावहितो ब्रह्मन्! गुह्यनामानि मेऽधुना। क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः। कोकामुखे वराहञ्च मन्दरे मधुसूदनम्। अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम्। माल्योदये तु वैकुण्ठं महेन्द्रे तु नृपात्मजम्। ऋषभे तु महाविष्णुं द्वारकायान्तु भूपतिम्। पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम्। वल्लीवने महायोगं चित्रकूटे नराधिपम्। नैमिषे पीतवासञ्च गवां निष्क्रमणे हरिम्। शालग्रामे तपोवासम् अचिन्त्यं गन्धमादने। कुब्जागारे हृषीकेशं गङ्गाद्वारे गदाधरम्। गरुडध्वजं तोषके च गोविन्दं नामसाह्वये। वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम्। केदारे माधवं विद्यात् वाराणस्यान्तु केशवम्। पुष्करे पुष्कराक्षन्तु धर्महव्यां जयध्वजम्। तृणबिन्दुवने वीरमशोकं सिन्धुसागरे। कसेरटे महाबाहुममृतं तैजसे वने। विश्वासयूपे विश्वेशं नारसिंहं वने वने। लोहकूटे रिपुहरं देवशाले त्रिविक्रमम्। पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः। विद्याधरं वितस्तायां वाराहे धरणीधरम्। देवदारुवने गुह्यं कावेर्य्यां नागशायिनम्। प्रयागे योगमूर्त्तिञ्च पयोष्ण्यां सुन्दरं विदुः। कुमारतीर्थे कौमारं लौहित्ये हयग्रीवकम्। त्रिविक्रमञ्चोज्जयिन्यां लिङ्गस्फोटे चतुर्भुजम्। हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते। विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम्। लोकवीरमयोध्यायां कुण्डिने रुक्मिणीपतिम्। भद्रीरे वासुदेवञ्च चक्रतीर्थे सुदर्शनम्। आद्यं विष्णुपदे विद्यात् शूकरे शूकरम् विदुः। कुबेरं मानसे तीर्थे दण्डके श्यामलं विदुः। त्रिकूटे नागमोक्षञ्च मेरुपृष्ठे च भास्करम्। विरजं पुष्पभद्रायां बालं चामीकरं विदुः। यशस्करं विपाशायां माहिष्मत्यां हुताशनम्। क्षीराब्धौ पद्मनाभञ्च विमले तु सनातनम्। शिवनद्यां शिवकरं गयायाञ्च गदाधरम्। सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते। अष्टषष्टिस्तु नामानि कीर्त्तितानि मया तव। क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः। कर्त्तव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः। वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम्" नारसिं० पु० ६२ अ०। मेषादिद्वादशराशिषु। "राशिनामानि च क्षेत्रं भवनञ्च गृहञ्च। मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्"। षड्वर्गे क्षेत्राणि ज्यो०त० च कुजशुक्रबुधेन्दुभेश सौम्यशुक्रावनीभुवाम्। जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः" ज्योति०त०। "इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः। एतत्क्षेत्रं समासेन सविकारमुदाहृतम्" गीतोक्तेषु उपदार्थेषु क्षेत्राकारे दर्शितावस्थादि प्रसिद्धे त्रिकोणचतुष्कोणादौ पदार्थे नानाक्षेत्रभेदाश्च रेखाभेदसाध्या अतो रेखाभेदसंज्ञा लिख्यते तत्राङ्कद्-रूपरेखैः क्षेत्रतत्त्वदीपिकायामित्युक्तमस्ति यथा

१ यः पदार्थोऽवयवितं यकः परिमाणस्थूलत्वदैर्घ्यविस्ताररहितः स बिन्दुः। [ (बिन्दुरुपदार्थयोरेखा)

२ यः पदार्थो दीर्घो विस्तारस्थूलत्वाभ्यां रहितः स रेखा

३ यः पदार्थो विस्तारदैर्घ्ययुक्तः स्थूलतारहितः स धरातलम्

४ यः पदार्थो विस्तारदैर्घ्यस्थौल्ययुक्तः सः स्थूलपदार्थः।

५ रेखा च त्रिविधा सरला वक्रा मिश्रिता च।

६ तत्र या रेखा एकदिग्गमनेनैव चिह्नद्वयान्तराले तिष्ठति एवं ययोश्चिह्नयोरन्तराले कृतास्वनेकरेखास्वतिशयेनाल्पतमा सा सरला। यत्र रेखामात्रमत्र सरलैव ग्राह्या।

७ या रेखा वर्त्तनेन प्रतिचिह्नं दिगन्तरं गच्छति सा वक्रा। (उभयलक्षणान्विता मिश्रिता)

८ रेखा च समानान्तरा विषमान्तरा लम्बः सम्पातरेखा च।

९ ययोः रेखयोरन्तरं समानम् एवं वर्द्धनेन तयोर्योगः

कदापि न मिलितुमर्हतीति सा समानान्तरा रेखा भवति ।

१० ययोरन्तरं विषमम् एवं वर्द्धिष्णु तदन्तरं तद्द्विधि वर्द्धने नोत्तरोत्तरमल्पान्तरं यावद्रेखायोगस्तदनन्तरमुत्तरो-त्तरमल्पान्तरं विवर्द्धते योगश्च कदापि भवितुं न श-क्नोति सा विषमान्तरा ।

११ एकरेखायामन्यरेखायां योगादुत्पन्नौ कोणौ यदि समानौ भवतस्तदा ते रेखे मिथोलम्बरूपे भवतः ।

१२ या रेखा वृत्तपालिमिलिता सती पालिखण्डं न करोति सा स्पर्शरेखा भवति । यदर्थं वृत्तस्पर्शेन खण्डितं न भवति स वृत्तस्पर्शः ।

१३ एकचिह्नान्निःसृते द्वे रेखे यदि सम्मुखेतरभिन्नदिग्गते भवतस्तदा तच्चिह्ने कोणोभवति ।

१४ कोणस्त्रिविधः समकोणोऽल्पकोणोऽधिककोणश्च ।

१५ तत्र समानरेखायां लम्बयोगादुत्पन्नः कोणः समकोणः

१६ समातिरिक्तोविषमकोणोभवति ।

१७ समकोणान्न्यूनोऽल्पकोणोभवति ।

१८ समकोणादधिकोऽधिककोणो भवति ।

१९ धरातलं द्विविधं समं भग्नं च ।

२० तत्र यस्मिन्धरातले सरला रेखा सर्वतो भावेन संलग्ना भवति यद्वा यत्र कुत्रापि चिह्नद्वये लग्ना सरला रेखा सर्वतः स्पृशति तद्धरातलं समं ज्ञेयम् । समातिरिक्तं विषममिति ।

२१ सरलरेखाभिः कुटिलरेखाभिर्वा निबद्धसीमं धरा-तलं समधरातलक्षेत्रं भवति । यत्र क्षेत्रमुद्दिष्टं तत्र सम-धरातलक्षेत्रं ज्ञेयम् ।

२२ सरलरेखानिबद्धसीमं धरातलकं क्षेत्रं भुजैः कोणैर्वा ऽभिधेयं भवति किन्तु यावन्तोभुजास्तावन्त एव कोणाः भवति । [णैश्चानेकविधं भवति ।

२३ त्रिभिर्भुजैर्निबद्धसीमं धरातलं त्रिभुजक्षेत्रं भुजैः को-

२४ यस्य त्रयोबाहवः समानास्तत्समत्रिभुजं भवति ।

२५ यस्य द्वौ बाहू समानौ तद्द्विसमद्विभुजं ज्ञेयम् ।

२६ यस्य त्रयोबाहवोविषमास्तद्विषमत्रिभुजं भवति ।

२७ यस्यैकः समकोणस्तत्समकोणत्रिभुजं ज्ञेयम् ।

२८ समातिरिक्तकोणं विषमत्रिभुजं भवति ।

२९ यस्यैकोऽधिककोणस्तदधिककोणत्रिभुजं भवति ।

३० यस्य त्रयोऽपि न्यूनकोणास्तन्न्यूनकोणत्रिभुजं ज्ञातव्यम् ।

३१ चतुर्भुजैर्निबद्धसीमं धरातलं चतुर्भुजक्षेत्रं भवति ।

३२ यस्य चतुर्भुजस्य परस्परं सम्मुखौ भुजौ समानान्तरौ भवतस्तत्समानान्तरभुजं चतुर्भुजं क्षेत्रं भवति । तद्-व्यमाणाभिधानं चतुर्विधं तद्यथा ।

३३ यस्य चतुर्भुजस्य परस्परसम्मुखौ भुजौ समानौ एक-कैकः समकोणश्च भवति तच्चतुर्भुजं समकोणायतं भवति।

३४ यस्य चत्वारोभुजा मिथःसमानाः कोणाश्च समास्तच्चतु-र्भुजं समकोणसमचतुर्भुजं वर्गक्षेत्रं वा भवति ।

३५ यस्य परस्परं सम्मुखरेखाद्वयं समानं समानान्तरं च भवति । कोणाश्च विषमास्तच्चतुर्भुजं विषमकोणायतम्

३६ यस्य चत्वारोबाहवः समानाः समानान्तराश्च भवन्ति कोणाश्च विषमास्तद्विषमकोणसमचतुर्भुजं भवति ।

३७ यस्य च परस्परं सम्मुखौ भुजौ विषमान्तरौ तच्चतु-र्भुजं विषमचतुर्भुजं भवति ।

३८यस्य भुजद्वयं समानान्तरं तत्समानान्तरविषमचतुर्भुजम्

३९ चतुर्भुजस्यैकान्तरकोणसंलग्ना रेखा कर्णो भवति ॥

४० चतुर्भुजादधिकभुजैर्निबद्धं धरातलं सामान्यतोबहुभुजं क्षेत्रं तद्बहुविधं भुजानुसारेण कोणानुसारेण वा तेषां नामानि

४१ यथा पञ्चभुजं षड्भुजं सप्तभुजमष्टभुजं नवभुजं दशभुज-मेकादशभुजं द्वादशभुजमित्यादीनि ॥

४२ तत्र बहुभुजक्षेत्रं यदि समभुजं भवति तस्य कोणा समानाभवन्ति तदा तत्क्षेत्रं समपञ्चभुजमित्याभिधानकं भवति तदितरत् विषमपञ्चभुजमित्यादि ।

४३ एवमेव समत्रिभुजे कोणाः समानाभवन्त्येवेति नियमः तत्त्रिभुजं समानकोणसमत्रिभुजं भवति । यस्य चत्वारो भुजाः समानाः सन्ति तत्समचतुर्भुजं क्षेत्रं भवति ।

४४ यस्य क्षेत्रस्य भुजाः समानाभवन्ति तत् क्षेत्रं समभुजं यस्य कोणाः समानास्तत्समानकोणं क्षेत्रं यस्य भुजाः को-णाश्च समानाभवन्ति तत्क्षेत्रं समकोणसमभुजं भवति

४५ कुटिलरेखया निबद्धसीमं धरातलं वृत्तक्षेत्रं भवति सा रेखा परिधिसंज्ञिका पालिसंज्ञिका वा भवति तस्या मध्य-बिन्दुः केन्द्रसंज्ञकोभवति ॥

४६ केन्द्रान्निःसृता वृत्तपालिसंलग्ना रेखा व्यासार्द्धं भवति ।

४७ या रेखा उभयतः पालिसंलग्ना केन्द्रगा च भवति सा व्याससंज्ञिका भवति ॥

४८ परिधिखण्डश्चापसंज्ञकोभवति ॥

४९ चापोभयप्रान्तगा रेखा चापकर्णसंज्ञिका ज्यासंज्ञिका च

५० जीवाचापाभ्यां निबद्धधरातलकं क्षेत्रं धनुःक्षेत्रं चाप क्षेत्रं वा भवति ॥

५१ यस्य चापस्य व्यासरेखा जीवा भवति तत् अर्द्धवृत्तम् ।

५२ केन्द्राद्बहिःसृते द्वे रेखे चापोभयप्रान्तसंलग्ने यदि भवत
स्तदा तत्क्षेत्रं वृत्तांशसंज्ञकं वृत्तखण्डकं च भवति ॥

५३ यस्य चापः परिधिपादमितः केन्द्राद्बहिःसृताभ्यां रेखा
भ्यां समकोणश्च भवति तद्वृत्तपादक्षेत्रं भवति ॥

५४ क्षेत्रस्योर्द्धकोणादाधाररेखायां पतितलम्बमितमौच्चम्

५५ समकोणत्रिभुजे समकोणसम्मुखभुजः कर्णोभवत्यन्यौ
पादौ भवतः किं तैक आधारोऽन्योलम्बः ॥

५६ अत्र कोणोपलब्धिः कल्पितत्रिभिर्वर्णैर्भवति किन्तु सदैव
कोणसंलग्नोवर्णोमध्यउच्चारणीयः ॥

५७ परिधेः षष्ट्यधिकशततमांशोंऽशसंज्ञकोभवति । अंशस्य
षष्ट्यंशः कला । कलायाः षष्ट्यंशोविकला । विकलायाः
षष्ट्यंशः प्रतिविकलेत्यादि ।

५८ कोणस्य परिमितिः कोणचिह्नगतकेन्द्रात् कृते वृत्ते तत्-
कोणाकारकरेखयोरन्तरालचापगतांशतुल्या भवति स-
कोणस्तद्वृत्तस्य केन्द्रं भवति ॥

५९ तेषां चापानां केन्द्राद्दूरत्वं समानं भवति येषु केन्द्राद्बहिः
सृतोलम्बः समोभवति ॥

६० येषु दीर्घोलम्बः पतति तेषां दूरत्वं दीर्घं भवति ॥

६१ चापगतैकचिह्नाद्बहिःसृते द्वे रेखे तदन्यचापोभयप्रान्त-
मिलिते तद्वृत्तः कोणचापान्तर्गतकोणोभवति ॥

६२ अनन्तरोक्तकोणादपरदिग्भवः कोणस्तत्कोणगर्भे चा
पोपरिस्थः कोणोभवति किन्तु द्वयोः कोणयोः स्वरूपं
समानं तयोः प्रथमोऽन्तर्गतोद्वितीयउपरिस्थइत्येष भेदः

६३ यत्कोणचिह्नं परिधिगतं भवति स प्रान्तिकोणोभवति यस्य
तच्चिह्नं केन्द्रगतं स्यात्स कोणः केन्द्रकोणोभवति ॥

६४ सरलरेखाकृतक्षेत्रस्य सर्वे कोणा यदि वृत्तमध्ये परि
धिसंलग्नाभवन्ति तदा तत्क्षेत्रं वृत्तान्तर्गतं क्षेत्रोपरि
गतवृत्तं वा भवति ॥

६५ यदि सरलरेखाकृतक्षेत्रस्य मध्ये सर्वभुजसंलग्नः परि
धिस्तदा तद्वृत्तं क्षेत्रान्तर्गतं वृत्तोपरिगतक्षेत्रं वा,

६६ सरलरेखाकृतक्षेत्रस्य सर्वभुजसंलग्नायदि तद्भिन्नान्य
क्षेत्रस्य सर्वे कोणाभवन्ति तदा तत्क्षेत्रं क्षेत्रान्तर्गतं
क्षेत्रोपरिगतक्षेत्रं वा भवति ॥

६७ यद्रेखायाएकांशोवृत्तान्तर्गतोद्वितीयोबहिर्गतः स्यात्सा
रेखा वृत्तखण्डिनी भवति ॥

६८ ययोर्द्वयोस्त्रिभुजयोर्येषां सरलरेखाकृतक्षेत्राणां वा
प्रतिदिग्भुजैः प्रतिदिग्भुजाः समानाः सन्ति तानि पर-
स्परं तुल्यभुजानि भवन्ति ययोर्येषां वा प्रतिदिक्कोणैः
प्रतिदिक्कोणाः समानास्तानि क्षेत्राणि परस्परं समान
कोणानि भवन्ति ॥

६९ उभयोः क्षेत्रयोः परस्परं भुजाः कोणाश्च परस्परं
भुजैः कोणैश्च समानाभवन्ति किं वैकस्य क्षेत्रस्य सर्वे भु-
जाः कोणाश्च द्वितीयक्षेत्रस्य सर्वैर्भुजैः कोणैश्च परस्परं
समानाः यथा एकक्षेत्रोपरि द्वितीयक्षेत्रं स्थाप्यते तदा
सर्वे भुजाः कोणाश्च सर्वभुजोपरि कोणोपरि च समा-
नरूपेण पतिताः स्युः यथा द्वयोरेकरूपं स्यादीदृक्क्षे-
त्राण्येकरूपाणि भवन्ति ॥

७० येषां क्षेत्राणां प्रतिदिक्कोणाः समानाएवं प्रतिदिग्भुजा
एकनिष्पत्तियुताभवन्ति तानि क्षेत्राणि सजातीयानि

७१ क्षेत्रस्याखिलभुजयोगः सीमाख्यमित्युच्यते ॥

एवं रेखाभिष्पन्नक्षेत्राणां भुजकोणादिमानफलस्थाना-
र्थं लीलावत्युक्तः क्षेत्रव्यवहारोऽत्र दर्श्यते यथा
"भुजकोटिकर्णानामन्यतमाभ्यामन्यतमानयनाय करण-
सूत्रं वृत्तद्वयम् । इष्टाद्बाहोर्यः स्यात्तत्स्पर्द्धिन्यां दिशो-
तरोबाहुः । त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता
तज्ज्ञैः । तत्कृत्योर्योगपदं कर्णो,दोःकर्णवर्गयोर्वि-
वरात् । मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः।
उदाहरणम् । कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः।
कोटिन्दोःकर्णतः, कोटिश्रुतिभ्याञ्च भुजं वद ।

न्यासः




कोटिः ।४। भुजः ।३। भुजवर्गः
९ । कोटिवर्गः । १६। एतयोर्यो-
गात् ।२५।मूलम्।५। कर्णोजातः॥

॥अथ कर्णभुजाभ्यां कोट्यानयनम् ॥

न्यासः




कर्णः ।५। भुजः ।३।अनयोर्वर्गा-
न्तरम् ।।१६। एतन्मूलं ।४। कोटिः

अथ द्वितीयप्रकारेण।

न्यासः




भुजः ।१२। अस्य कृतिः ।१४४। इष्टेन ।२। भक्ता लब्धम् ।७२। इष्टेन ।२। ऊनम् ।७०। युतौ ।७४। अर्द्धितौ जातौ कोटिकर्णौ ।३५।३७।

चतुष्टयेन वा।




कोटिः ।१६। कर्णः ।२०।

(उक्तरीत्यायातः)

षट्केन वा।




कोटिः ।९। कर्णः ।१५।

(उक्तरीत्यायातः)

अथेष्टकर्णात्कोटिभुजानयने करणसूत्रं वृत्तम्। इष्टेन निघ्नाद्द्विगुणाच्च कर्णादिष्टस्य कृत्यैकयुजा यदाप्तम्। कोटिर्भवेत् सा पृथगिष्टनिघ्नी तत्कर्णयोरन्तरमत्र बाहुः॥ "उदाहरणम्। पञ्चाशीतिमिते कर्णे यौ वाप्यकरणीगतौ। जातौ कोटिभुजौ तौ तौ वद कोविद। सत्वरः

न्यासः




कर्णः ।८५। अयं द्विगुणः ।१७०। द्विकेनेष्टेन हतः ।३४०। इष्ट ।२। कृत्या ।४। सैकया ।५। भक्तो जाता कोटिः ।६८। इयमिष्टगुणा ।१३६। कर्णो ।८५। भिन्ना जातो भुजः ।५१।

चतुष्केणेष्टेन वा।




कोटिः ।४०। भुजः ।७५।

(उक्त रीत्यायातः)

प्रकारान्तरेण तत्करणसूत्रं वृत्तम्। इष्टवर्गेण सैकेन द्विघ्नः कर्णोऽथवा हृतः। फलोनः श्रवणः कोटिः फलमिष्टगुणं भुजः॥
पूर्वोदाहरणे। न्यासः




कर्णः ।८५। अत्र द्विकेनेष्टेन जातौ किल कोटिभुजौ ।५१।६८।

चतुष्केण वा।




कोटिः ।७५। भुजः ।४०। अत्र दोःकोट्योर्नियमेद एव केवलं न सङ्ख्याभेदः।

अथेष्टाभ्यां भुजकोटिकर्णानयने करणसूत्रं वृत्तम्। इष्टयोराहतिर्द्विघ्नी कोटिर्वर्गान्तरं भुजः। कृतियोगस्तयोरेवं कर्णश्चाकरणीगतः॥

उदाहरणम्। यैर्यैस्त्र्यस्रं भवेत्क्षेत्रं कोटिदोःश्रवणैः सखे!। त्रीनिष्टैर्विदितानेतान् क्षिप्रं ब्रूहि विचक्षण!॥

न्यासः




अथवेष्टे । २ । १ । आभ्यां कोटिभुजकर्णाः । ४ । ३ । ५ ।

(उक्तरीत्यायाताः)




अथवेष्टे । ३ । २ । आभ्यां कोटिभुजकर्णाः । १२ । ५ । १३ ।

(उक्तरीत्यायाताः)




अथवेष्टे । २ । ४ । आभ्यां कोटिभुजकर्णाः । १६ । १२ । २० । एवमन्यत्रानेकधा ॥

कर्णकोटियुतौ भुजे च ज्ञाते पृथक्करणसूत्रं वृत्तम् । वंशाग्रमूलान्तरभूमिवर्गो वंशोद्धृतस्तेन पृथग्युतोनौ । वंशौ तदर्धे भवतः क्रमेण वंशस्य खण्डे श्रुतिकोटिरूपे ।

उदाहरणम् । यदि समभुवि वेणुर्द्वित्रिपाणिप्रमाणो गणक ! पवनवेगादेकदेशे स भग्नः । भुवि नृपमितहस्तेष्वङ्ग लग्नं तदग्रं कथय कतिषु मूलादेष भग्नः करेषु ॥




वंशाग्रमूलान्तरभूमिर्भुजः । १६ । वंशः कोटिकर्णयुतिः । ३२ । जाते कर्णकोटी वंशखण्डे । २० । १२ ।

बाहुकर्णयोगे दृष्टे कोट्यां च ज्ञातायां पृथक्करणसूत्रं वृत्तम् । स्तम्भस्य वर्गोऽहिबिलान्तरेण भक्तः फलं व्यालबिलान्तरालात् । शोध्यं तदर्धप्रमितैः करैः स्याद्बिलाग्रतो व्यालकलापियोगः ॥

उदाहरणम् । अस्ति स्तम्भतले बिलं तदुपरि क्रीडाशिखण्डी स्थितः स्तम्भे हस्तनवोच्छ्रिते त्रिगुणितस्तम्भप्रमाणान्तरे । दृष्ट्वाहिं बिलमाव्रजन्तमपतत्तिर्यक् स तस्योपरि क्षिप्रं ब्रूहि तयोर्बिलात्कतिमितैः साम्येन गत्योर्युतिः ॥




स्तम्भः । ९ । अहिबिलान्तरम् । २७ । जाता बिलगत्योर्मध्यभुजाः । १२ ।

कोटिकर्णान्तरे भुजे च दृष्टे पृथक्करणसूत्रं वृत्तम् । भुजाद्वर्गितात्कोटिकर्णान्तराप्तं द्विधा कोटिकर्णान्तरेणोनयुक्तम् । तदर्धे क्रमात्कोटिकर्णौ भवेतामिदं धीमताऽऽवेद्य सर्वत्र योज्यम् । सखे ! पद्मतन्मज्जनस्थानमध्यं भुजः कोटिकर्णान्तरं पद्मदृश्यम् । नलः कोटिरेतन्मितः स्याद्यदम्भो वदैवं समानीय पानीयमानम् ॥

उदाहरणम् । चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे तोयादूर्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम् । मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे तस्मिन्मग्नं गणक ! कथय क्षिप्रमम्भःप्रमाणम् ॥ न्यासः




कोटिकर्णान्तरम् १/२ भुजः । २ । लब्धं जलगाम्भीर्यम् १५/४ इयं कोटिः इयमेव कलिकामानयुता जातः कर्णः १७/४

कोटेर्दर्शनेन युते कर्णे भुजे च दृष्टे कोटिकर्णज्ञानाय करणसूत्रं वृत्तम् । द्विनिघ्नतालोच्छ्रितिसंयुतं यत्सरोऽन्तरं तेन विभाजितायाः । तालोच्छ्रितेस्तालसरोऽन्तरघ्नादुड्डीनमानं खलु लभ्यते तत् ॥

उदाहरणम् । वृक्षाद्धस्तशतोच्छ्रयाच्छतयुगे वापीं कपिः कोऽप्यगादुत्तीर्याथ परो द्रुतं श्रुतिपथेनोड्डीय किञ्चिद्द्रुमात् । जातैवं समता तयोर्यदि गतावुड्डीनमानं कियद्विद्वन् ! चेत्सुपरिश्रमोऽस्ति गणिते क्षिप्रं तदाऽऽचक्ष्व मे ॥ ॥ न्यासः




वृक्षवाप्यन्तरम् । २०० । वृक्षोच्छ्रायः । १०० । लब्धमुड्डीनमानम् । ५० । कोटिः । १५० । कर्णः । २५० । भुजः । २०० ।

भुजकोट्योर्योगे कर्णे च ज्ञाते करणसूत्रं वृत्तम् । कर्णस्य वर्गाद्द्विगुणा

द्विघ्नोऽथ दोःकोटियोगः स्वगुणोऽस्य मूलम् । योगो द्विधा मूलविहीनयुक्तः स्यातां तदर्द्धं भुजकोटिमाने ॥

उदाहरणम् । दशसप्ताधिकः कर्णस्त्र्यधिका विंशतिः सखे ! । भुजकोटियुतिर्यत्र तत्र ते मे पृथग्वद ॥

न्यासः




कर्णः । १७ । दोःकोटियोगः । २३ । जाते भुजकोटी । ८ । १५ ।

उदाहरणम् । दोःकोट्योरन्तरं शैलाः कर्णो यत्र त्रयोदश । भुजकोटी पृथक्तत्र वदाशु गणकोत्तम ॥

न्यासः




कर्णः । १३ । भुजकोट्यन्तरम् । ७ । लब्धे भुजकोटी । ५ । १२ ।

लम्बाबाधाज्ञानाय करणसूत्रं वृत्तम् । अन्योऽन्यमूलाग्रगसूत्रयोगाद्वेण्वोर्वधे योगहृतेऽवलम्बः । वंशौ स्वयोगेन हृतावभीष्टभूघ्नौ च लम्बोभयतः कुखण्डे ॥

उदाहरणम् । पञ्चदशदशकरोच्छ्रायवेण्वोरज्ञातमध्यभूमिकयोः । इतरेतरमूलाग्रगसूत्रयुतेर्लम्बमानमाचक्ष्व ॥ न्यासः




वंशौ । १५ । १० । जातो लम्बः । ६ । वंशान्तरभूः । ५ । अत्र जाते भूखण्डे । ३ । २ अथवा भूः । १० । खण्डे । ६ । ४ । वा भूः । १५ । खण्डे । ९ । ६ । वा भूः । २० । खण्डे । १२ । ८ । एवं सर्वत्र लम्बः स एव ।

यद्यत्र भूमितुल्ये भुजे वंशः कोटिस्तदा भूखण्डेन किमिति त्रैराशिकेन सर्वत्र प्रतीतिः ।

अथ क्षेत्रलक्षणे सूत्रम् । धृष्टोद्दिष्टमृजुभुजं क्षेत्रं यत्रैकबाहुतः स्वल्पा । तदितरभुजयुतिरथवा तुल्या ज्ञेयं तदक्षेत्रम् ॥

उदाहरणम् । चतुरस्रे त्रिषड्द्व्यर्कोन्मितान्भुजास्त्र्यस्रे त्रिषड्नवाः । उद्दिष्टा यत्र धृष्टेन तदक्षेत्रं विनिर्दिशेत् ॥ एते ह्यनुपपन्ने क्षेत्रे ।






भुजप्रमाणाद्युपगमात् भुजस्थाने तु विन्यस्तानुपपत्तिर्दर्शनीयेति ।

आबाधादिज्ञानाय करणसूत्रमार्याद्वयम् । त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या । द्विःस्था भूरूनयुता दलिताऽऽबाधे तयोः स्याताम् ॥

स्वाऽऽबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः । लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति ॥

उदाहरणम् । क्षेत्रे मही मनुमिता त्रिभुजे भुजौ तु यत्र त्रयोदशतिथिप्रमितौ च मित्र ! । तत्रावलम्बकमितिं कथयावबाधे क्षिप्रं तथा च समकोष्ठमितिं फलाख्याम् ॥ न्यासः




भूः । १४ । भुजौ । १३ । १५ । लब्धे आबाधे । ५ । ९ । लम्बः । १२ । क्षेत्रफलम् । ८४ । अथाऽन्यदुदाहरणम् । दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रमा मही । अवबाधे वद लम्बकं तथा गणितं गाणितिकाशु तत्र मे ॥




भुजौ । १० । १७ । भूमिः । ९ । अत्र त्रिभुजे भुजयोर्योगतदन्तरादिना लब्धम् । २१ । अनेन भूरूना न स्यात् अतोऽस्मादेव भूरपनीता शेषार्द्ध-मृणगताऽऽबाधा दिग्वैपरीत्येनेत्यर्थः । तथा जाते आबाधे । ६ । १५ । उभयत्रापि जातो लम्बः । ८ । फलम् । ३६ ।

चतुर्भुजत्रिभुजयोरस्पष्टफलानयने करणसूत्रं वृत्तम् । सर्वदोर्युतिदलं चतुःस्थितं बाहुभिर्विरहितञ्च तद्धतात् । मूलमस्फुटफलं चतुर्भुजे स्पष्टमेवमुदितं त्रिबाहुके ॥

उदाहरणम् । भूमिश्चतुर्दशमिता मुखमङ्कसङ्ख्यं बाहू त्रयोदशदिवाकरसम्मितौ च । लम्बोऽपि यत्र रवि-

अयं तत्र चतुर्भुजे समलम्बः कल्पाऽऽबाधोनित-समभूमेर्लम्बस्य च वर्गयोगः । ५०४८ । अयं कर्णवर्गः एवं बृहदाबाधातो द्वितीयकर्णवर्गः । २१७६ । अनयो-रासन्नमूलकरणेन जातौ कर्णौ ७१/१/२०।४६।१२/२० एवं चतुरस्रे तेनैव बाहुमध्ये कर्णौ बहुधा भवतः एवमनियतत्वेऽपि नियतावेव कर्णावानीतौ ब्रह्मगुप्ता-दिभिस्तदानयनं यथा ।

कर्णाश्रितभुजघातैक्यमुभयथाऽन्योऽन्यभाजितं गुण-येत् । योगेन भुजप्रतिभुजवधयोः कर्णौ पदे विषमे




न्यासः

कर्णाश्रितभुजघातेति एकधारमनयोः । २५ । ३९ घात । ९७५ । तथा । ५२ । ६० । अनयोर्घातः । ३१२० । तयोर्द्वयोरैक्यम् । ४०९५ । तथा द्वितीयधारम् । २५ । ५२ । अनयोर्घाते जातम् । १३०० । तथा द्वितीयधारम् । ३९ । ६० । अनयोर्घाते । २३४० । घातयोर्द्वयोरैक्यम् । ३६४० । भुजप्रतिभुज । ५२ । ३९ । घातः । २०२८ । पश्चात् । २५ । ६० । अनयोर्वधः । १५०० । तयोरैक्यम् । ३५२८ । अनेनैक्येन । ३६४० । गुणितं जातं पूर्वैक्यम् । १२८४१९२० । प्रथमकर्णाश्रितभुजघातैक्येन । ४०९५ । भक्तं लब्धम् । ३१३६ । अस्य मूलम् । ५६ । एकः कर्णः तथा द्वितीय कर्णार्थं प्रथमकर्णाश्रितभुजघातैक्यं । ४०९५ । भुज-प्रतिभुजवधयोगः ३५२८ गुणितं जातम् । १४४४७१६० अन्यकर्णाश्रितघातैक्येन । ३६४० । भक्तं लब्धम् । ३९६९ । अस्य मूलं । ६३ । द्वितीयः कर्णः । अस्य कर्णानयनस्य प्रक्रियागौरवं लघुप्रक्रियादर्शन-द्वारेणाह । अभीष्टजात्यद्वयबाहुकोटयः परस्परं कर्ण-हताभुजादति । चतुर्भुजे यद्विषमं प्रकल्पितं श्रुती च तत्र त्रिभुजद्वयात्ततः ॥ बाह्वोर्वधः कोटिवधेन युक् स्यादेका श्रुतिः कोटिभुजाहुतैक्यम् । अन्या लघौ सत्यपि साधनेऽस्मिन् पूर्वैः कृतं यद्गुरु तन्न विद्मः ॥

लाअथ तदयस्

न्यासः







एतयोरितरेतरकर्णहताभुजाः कोटयः, इतरेतरकर्ण हताः कोटयोभुजादति कृते जातं । २५ । ६० । ५२ । । ३९ । तेषां महती भूर्लघु मुखमितरौ बाहू इति प्र-कल्प्य चेत्रदर्शनं इमौ कर्णौ महतायासेनानीतौ । ६३ । ५६ । अत्रैव जात्यद्वयस्योत्तरोत्तरभुजकोट्यो र्घातौ जातौ । ३६ । २० । अनयोरैक्यमेकः कर्णः । ५६ । बाह्वोः । ३ । ५ । कोट्योश्च । ४ ।१२। घातौ । १५ । ४८ । अनयोरैक्यमन्यः । ६३ । एवं सुखेन श्रुती स्याताम् अथ यदि पार्श्वभुजद्वयोर्व्यत्ययं कृत्वा न्यस्तं चेत्रम् न्यासः




तदा जात्यद्वयकर्ण-योर्वधः । ६५ । द्वि-यकर्णः ।

अथ सूचीक्षेत्रोदा-हरणम् । त्रे यत्र शतत्रयं । ३०० । क्षितिर्मितिस्तत्र नृ । १२५ । तुल्यं मुखं बाहू खोत्कृतिभिः । २६० । शरातिधृतिभि । १९५ । स्तुल्यौ च तत्र श्रुती । एका षाष्ट्यगैः । २८० । समा तिथिगुणै । ३१५ । रन्याऽथ तल्लम्बकौ तुल्यौ गोधृतिभि । १८९ । स्तथाजिनवमै । २२४ । यौगाच्छ्रीलम्बयोः ॥

तत्कथयरे कथयाधरे अवधयोर्योगाञ्च लम्बावधे तत् सूची मितमार्गद्वयभुजयोर्योगाद्यथा स्यात्ततः । मावार्ध यद लम्बकाद्य भुजयोः सूच्याः प्रमाणे च के सर्व गाधितिक ! प्रयत्न विस्तरं क्षेत्रे दशोऽसि चेत् ।

उदाहरणम्। विष्कम्भमानं किल सप्त यत्र तत्र प्रमाणं परिधेः प्रचक्ष्व। द्वाविंशतिर्यत्परिधिप्रमाणं तद्व्यासमङ्ख्यां च सखे। विचिन्त्य॥




स्थूलोवा परिधिर्वा। २२।

अथवा परिधितोव्यासानयनाय न्यासः




वृत्तगोलयोः फलानयने करणसूत्रं वृत्तम्। वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं यत् क्षुण्णं वेदैरुपरि परितः कन्दुकस्येव जालम्। गोलस्यैवं तदपि च फलं पृष्ठजं व्यासनिघ्नं षड्भिर्भक्तं भवति नियतं गोलगर्भे घनाख्यम्॥

उदाहरणम्। यद्व्यासस्तुरगैर्मितः किल फलं क्षेत्रे समे तत्र किं व्यासः सप्तमितश्च यस्य सुमते! गोलस्य तस्यापि किम्। पृष्ठे कन्दुकजालसन्निभफलं गोलस्य तस्यापि किं मध्ये ब्रूहि घनं फलञ्च विमलां चेद्वेत्सि लीलावतीम्॥




गोलपृष्ठफलदर्शनाय न्यासः




गोलान्तर्गतघनफलदर्शनाय न्यासः




अथ प्रकारान्तरेण तत्फलानयने करणसूत्रं सार्धवृत्तम्। व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते। रुद्राहते शक्रहृतेऽथ वा स्यात् स्थूलं फलं तद्व्यवहारयोग्यम्॥ घनीकृतव्यासदलं निजैकविंशांशयुग्गोलघनं फलं स्यात्॥

व्यासः। ७। अस्य वर्गे। ४९। भनवाग्निनिघ्ने पञ्चसहस्रभक्ते तदेव सूक्ष्मं फलम् ३८
२४२३
५०००

यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः । यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ" ।

बृहस्पतिना "उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु" इत्यादिना तन्निषेध उक्तः । मिताक्षरायामयं पक्षो द्व्यामुष्यायणप्रसङ्गे समर्थितः यथा
"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः" या० । "अपुत्रां गुर्वनुज्ञातः" इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्य्यायां गुरुनियोगेनोत्पादितः पुत्र उभयोर्बीजक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इत्यस्यायमर्थः । यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तोऽयं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं यतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः स च नियमेन बीजिनो रिक्थहारी पिण्डदोऽपीति । यथोक्तं मनुना "क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत् प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चेति" । क्रियाभ्युपगमादिति अस्मोत्पन्नमपत्यमावयोरुभयोरपि भविष्यति संविदङ्गीकरणाद्यत् क्षेत्रं क्षेत्रस्वामिना बीजिने बीजवपनार्थं दीयते तस्मिन् क्षेत्रे उत्पन्नस्यापत्यस्य बीजक्षेत्रिणौ भागिनौ दृष्टौ महर्षिभिः । तथा । "फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी" मनुः । "फलं त्वनभिसन्धायेति अस्मोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव । यतो बीजाद्योनिर्बलीयसी गवाश्वादिषु तथादर्शनात् । अत्रापि नियोगो वाग्दत्ताविषय एव इतरस्य नियोगस्य मनुना निषिद्धत्वात् "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये । विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन" इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति । "नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् । नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः । अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति । स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां सङ्करं चक्रे कामोपहतचेतनः । ततःप्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं गर्हन्ते तं हि साधवः" इति । न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम् नियोक्तॄणां निन्दाश्रवणात् । स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात् संयमस्य प्रशस्तत्वाच्च । तथाह मनुरेव "कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु" इति जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य "आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः । अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते" इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् । एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह "यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात्सकृत्सकृदृतावृताविति" । यस्यै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव गम्यते । तस्मिन् प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यङ्गवाङ्नियमादिना । शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रहस्यागर्भग्रहणात्प्रत्यृत्वेकैकं वारं गच्छेत् । अयञ्च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्य्यात्वमापादयत्यतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य संविदा तूभयोरपि" अनेन सन्दर्भेण प्रमीतपतिकायां नियोगनिषेधात् वाग्दत्तायामनिषेधः तेन पाण्डुराजेन कुन्त्यां माद्र्यां च नियोगद्वारा सन्तानोत्पादनं न विरुद्धम् ।

वस्तुतः "अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः" इति बृहस्-

तिना शक्तिहीनानामिदानीन्तनानां तथाचरणस्य निषेधात् शक्तिमद्भिरभिज्ञर्षिभिस्तस्याचरणं न निषिद्धं तेषां तपःप्रभावात् तत्पापक्षयसम्भवात्। अतएव क्षेत्रपतिकयोरपि अम्बिकाम्बालिकयोर्विचित्रवीर्य्यभार्य्ययोर्नियोगात् व्यासेन धृतराष्ट्रपाण्डुरूपक्षेत्रजयोरुत्पादनं न विरुद्धम्। अतएवादित्यपुराणे कलिवर्ज्यप्रकरणे "देवरेण सुतोत्पत्तिर्दत्तकन्या प्रदीयते" इत्युक्तं कालिकापुराणे च तत्प्रकरणे "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इत्युक्तम्। धृतराष्ट्रादीनां तु कलियुगोत्पन्नत्वेऽपि वासुदेवस्य भूमावस्थितिपर्य्यन्तं कलिधर्म्माणां प्रादुर्भावाभावाच्च विरोधः। अतः कलौ तस्य सर्व्वथा निषेधात् तद्विषये विशेषो नाभिहितः। २क्षेत्रजातमात्रे त्रि० ३श्वेतकण्टकार्य्यां ४शशाण्डुल्यां ५गोमूत्रिकायां ६शिल्लिकायां ७चविकायाञ्च स्त्री राजनि०

**क्षेत्रज्ञ** पु० क्षेत्रमात्मत्वेन सर्व्वत्वेन वा जानाति ज्ञा—क। १आत्मत्वेन देहाद्यभिमानिनि जीवे २सर्व्वज्ञे परमेश्वरे। "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः। क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत!। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम। तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत् समासेन मे शृणु। ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः। महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्" गीता। "अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च" विष्णुस०। ३साक्षिणि च। "प्रकृत्यास्तु विकाराये क्षेत्रज्ञस्तैरधिष्ठितः" नचैनं ते प्रजानन्ति स तु जानाति तानि वै" भा०शा०२४२अ०। "यश्चात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते" इति मनूक्ते ४अन्तर्यामिणि "हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति" भा० आ० १०१६ श्लो०। ५वटुकभैरवे "क्षेत्रज्ञः कलियोगिराट्" वटुकस्तवः। ६विदग्धे त्रि० मेदि०। ७कृषके त्रि० शब्दरत्ना०। ८क्षेत्रज्ञातरि त्रि० "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुः" छा०उ०। ततः ब्राह्मणा० भावे ष्यञ् क्षैत्रज्ञ्य युवा० अण्। क्षैत्रज्ञ तद्भावे न०।

**क्षेत्रदूती** स्त्री क्षेत्रे दूतीव। श्वेतकण्टकारिकायाम् राजनि०।

**क्षेत्रपति** पु० ६त०। क्षेत्रस्वामिनि "बीजं क्षेत्रपतिं प्राहुः केचित् क्षेत्रमथापरे। स्वतन्त्र एव स कश्चित् क्षेत्रस्य परिरक्षति" तन्त्र०। क्षेत्रपतेरपत्यादि पत्युत्तरपदत्वेऽपि अश्वपत्यादौ पाठात् अण्। क्षैत्रपत तदपत्यादिषु त्रि०।

**क्षेत्रपर्पटी** स्त्री क्षेत्रे पर्पटीव। (क्षेतपापड़ा) इति ख्याते क्षुपभेदे वैद्यकम्।

**क्षेत्रपाल** त्रि० क्षेत्रं पालयति पालि—अण्। १क्षेत्ररक्षके त्रि०। २भैरवभेदे पु०। तद्भेदाः प्रयोगसारे उक्ता यथा "भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः। मातृकार्णक्रमभेदेन संक्षिप्ता नामभेदतः। अजराख्यापकुम्भश्च इन्द्रमूर्त्तिस्ततःपरः। ईड़ाचारस्तथोक्षश्च उन्मादः कपिलुदनः। ऊष्मकी लूतकेशश्च खुल्वकश्च कर्द्दमः। ऐरावतश्चौषधघ्नुरोषधेशस्तथैव च। अञ्जनश्चास्त्रवारश्च कवलः करुणाकरः। गोकुलश्चैव घण्टाशी रुग्मनाथश्चक्रवारणः। जटाटोपो जटालाख्यो भूतारश्च जङ्घरः। टङ्कपाणिस्तथाचान्यदानवश्चैव डामरः। ढक्कारवो धमर्दश्च तडिद्देहः स्थिरस्तथा। दन्तुरो धनदश्चान्यो नतिकान्तः प्रचण्डकः। फट्कारो वीरसंघश्च भङ्काख्यो मेघभासुरः। युगान्तो रौद्ररूपश्च लम्बोष्ठो वसुमांस्तथा। शूलनन्दः षड्ाख्यश्च सुनामा कम्बुकस्तथा। एते भेदाः समाख्याता मातृकाक्षरयोनिकाः"। क्षेत्रपालकथनप्रयोजनं यथा "नाम पञ्चस्य वर्णानां यो वर्णो मातृकान्तरे। दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः। तत्र तत्र विशिष्टात्मा भेदैरेतैर्व्यवस्थितः। ततो विशिष्टो यष्टव्यः क्षेत्रपालस्य सर्व्वतः। क्षेत्रपालमसंपूज्य यः कर्म्म कुरुते क्वचित्। तस्य कर्म्मफलं हन्ति क्षेत्रपालो न संशयः"। तन्त्रोक्ते ३पश्चिमद्वारपाले भैरवभेदे च "गणेशं वटुकं चैव क्षेत्रपालञ्च योगिनीः। पूर्व्वादिक्रमयोगेन द्वारपालान् प्रपूजयेत्" तन्त्र०। ४क्षेत्रपालके त्रि०

**क्षेत्रफल** न० क्षेत्रस्य फलम्। १भूम्यादिक्षेत्रजाते शस्यादौ। लीलावत्याद्युक्ते त्रिकोणादिक्षेत्रभवे २हस्तादिरूपे(कालि) फले क्षेत्रशब्दे विवृतिः। [यवायां वैद्यकम्।

**क्षेत्रमालिका** स्त्री क्षेत्रं मालयति मल—णिच्—ण्वुल्।

**क्षेत्ररुहा** स्त्री क्षेत्रे रोहति रुह—क। १वालुक्यां कर्कटीभेदे राजनि०। २क्षेत्रजातमात्रे त्रि०। [तन्त्रकार्यके व्यवहारभेदे।

**क्षेत्रव्यवहार** पु० लीलावतीप्रदर्शिते त्रिकोणादिक्षेत्रफलादि-

**क्षेत्रसम्भव** त्रि० क्षेत्रे सम्भवति सम्+भू—अच्। १क्षेत्रजाते "क्षेत्रसम्भवफलं घनं भवेत्" लीला०। २भूमिजातमात्रे त्रि०। ३भिक्षाढ्ये पु० राजनि०।

क्षेमक पु० क्षेम-स्वार्थे क । १चोरनामगन्धद्रव्ये जटा० २राक्षसभेदे, "एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप! शून्यां निवेशयामास क्षेमको नाम राक्षसः" हरि०२९अ० ३पाण्डुवंश्ये नृपभेदे । "दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः" इत्युपक्रमे "क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ" भा० ९,२२,२९श्लो० ।

क्षेमकर त्रि०क्षेमं करोति कृ-अच् हेत० । १मङ्गलकारके "पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः!" भा० आनु० १५ अ० ।

क्षेमकार त्रि०क्षेमं करोति कृ-अण् उप०स० । मङ्गलकारके "पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम्" भट्टिः

क्षेमकृत् त्रि० क्षेमं करोति कृ-क्विप् हेत० । १मङ्गलकारके २उपासकस्य रक्षके परमेश्वरे पु० । "अनियन्ता नियन्तात्मा संक्षेप्ता क्षेमकृच्छिवः" विष्णुसं० ।

क्षेमङ्कर त्रि० क्षेमं करोति "क्षेमप्रियमद्रेऽण् च" पा० चकारात् खच् मुम् च । क्षेमकारके ।

क्षेमङ्करी स्त्री "क्षेमान् देवेषु या देवी कृत्वा दैत्यपतेः क्षयम् । क्षेमङ्करी शिवेनोक्ता पूज्या लोके भविष्यसि" देवीपु० ४० अ०उक्ते १देवीभेदे, २शङ्खचिल्लपक्षिणि । "कुरु मारक्षय-बोधिनि! कुन्देन्दुधवलानने । मत्स्यमांसप्रिये! देवि! क्षेमङ्करि! नमोऽस्तु ते" इति तत्प्रणाममन्त्रः

क्षेमदर्शिन् त्रि० क्षेमं पश्यति दृश-णिनि । मङ्गलदर्शिनि स्त्रियां ङीप् । कोशलाधिपराजभेदे ।"कोसलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम्" "स कालं पञ्चरे बद्धा विषयं क्षेमदर्शिनः" भा० शा० ८२ अ० ।

क्षेमधन्वन् पु०रामवंश्ये राजभेदे । "रामस्य तनयोऽभूत् कुश इत्यभिविश्रुतः" इत्युपक्रमे "नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः" हरि० १५ अ० । "स क्षेमधन्वानममोघधन्वा... पुत्री" रघुः ।

क्षेमधूर्त्ति पु० ब०व० बृह० सं० कूर्मविभागे "मन्त्रामाकाः क्षेमधूर्त्तीय" इति उत्तरस्थाङ्गुक्ते देशभेदे ।

क्षेमधृत्ति पु० कैकेयदेशाधिपे राजभेदे । "हन्तुरक्षेत्रमदाबलं कैकेयं दृढविक्रमम् । क्षेमधूर्त्तिं महाराज! विद्याधोरसि मार्गणैः" भा० द्रो०१० ७अ० । "गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। ततः सञ्जज्ञिरे वीराः" इत्युपक्रमे "ब्राह्मणेभ्यः राजानः क्षेमधूर्त्तिस्तथैव च" भा०आ०६७अ० । [क्षेमाफलेति पाठे पूर्गो० ।

क्षेमफला स्त्री० क्षेमं फलं यस्याः । उदुम्बरवृक्षे शब्दच० ।

क्षेममूर्त्ति स्त्री दुर्य्योधनभ्रातृभेदे "उग्रश्रवाः उग्रसेनः क्षेममूर्त्तिस्तथैव च" भा० आ० ६७ अ० ।

क्षेमवृद्धिन् त्रि० क्षेमस्य वृद्धिरस्त्यस्य इनि । क्षेमवृद्धिर्भवेत्ततः बाह्वा० इञ् । क्षैमवृद्धि तदपत्ये पु० स्त्री० ।

क्षेमा स्त्री १देवीमूर्त्तिभेदे "निरिक्षिते पूजयेत् क्षेमां सर्वकाम-फलप्रदाम्" देवी०पु०४७अ० । २अप्सरोभेदे च "अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा" भा० आ०१२२अ० ।

क्षेमाधि पु० मिथिलाधिपे राजभेदे । "अरिष्टनेमिस्तस्यापि श्रुतायुस्तत् सुपार्श्वकः । ततश्चित्ररथोयस्य क्षेमाधिर्मिथिलाधिपः" भाग०९,१३,१४ ।

क्षेमासन न० "अथ क्षेमासनं वक्ष्ये यत् कृत्वा प्रेमवर्द्धनम् । दक्षहस्ते दक्षपादं केवलं स्थापयेत् सुधीः" इति रुद्रयाम-लोक्ते आसनभेदे ।

क्षेम्य त्रि० क्षेमाय साधु यत् । कुशलयोग्ये "सायं प्रातश्च पशवश्च क्षेम्या भवन्ति" श्रुतिः ।

क्षेय त्रि० क्षेतुं योग्यः क्षि-यत् । क्षेतुं योग्ये ।

क्षेव क्षेवने भ्वा०पर०सक० सेट् । क्षेवति अक्षेवीत् चिक्षेव ।

क्षै क्षये भ्वा० पर०अक० अनिट् । क्षायति अक्षासीत् चक्षौ । क्षेयं क्षाता क्षामः ।

क्षैत त्रि० क्षितेरयम् अण् । १क्षितिसम्बन्धिनि २क्षीणता-सम्बन्धिनि च "यमस्तरोयमश्वां क्षैतो अक्षे" ऋ०९,९७,२,

क्षैतयत पु० क्षैताय क्षीणताये यतते यत-अच् । क्षीणता-यै यतमाने ऋषिभेदे गर्गादि तस्य० फिञ् । क्षैत-यतायनि तदपत्यादौ

क्षैत्र न०क्षेत्राणां समूहः भिक्षा० अण् । १क्षेत्रसमूहे । स्वार्थे अण् । २क्षेत्रे च "वैश्वानरं क्षैत्रजित्याय देवाः" यजु० ३३,६० । "क्षेत्रमेव क्षैत्रं तस्य जित्यं जयसाधनं यजमा-नस्य क्षैत्राप्त्यै" वेददी०

क्षैमिक त्रि० क्षेमेण निर्वृत्तं ठञ् । १लब्धस्य रक्षणोप-योगिनि २विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे स्थिति-विघटकीभूतनिवर्त्तकसम्बन्धव्यवस्थापननिर्वाह्ये जन्यत्वे च । यथा दुःखात्यन्ताभावस्य मोक्षत्ववादिमते अत्यन्ताभाव-स्याजन्यत्वेऽपि स्वप्रतियोगिदुःखानुत्पादनद्वारा स्वाधि-करणे स्वविघटकीभूतनियामकदुःखप्रागभावनिवृत्त्यनुरूप सम्बन्धनिर्वाहकत्वं तत्त्वज्ञानस्येति दुःखात्यन्ताभावस्य क्षैमिकी तत्त्वज्ञानसाध्यता । एवं कृतिसाध्यत्वस्य विध्य-र्थत्वमते "एकादश्यां न भुञ्जीत" इत्यादौ अहोरात्र भोजनाभावस्य क्षैमिकं कृतिसाध्यत्वम् । "भावोदयाऽ-

भावः कार्य्यवत् कारणं मनः” इत्युदयनाचार्य्यैरभावमात्रस्य दृष्टान्तविधया कार्य्यत्वोक्तिः क्षणिकविषया। एतेन प्रागभावत्वविवेकटीकायां श्रीकृष्णतर्कालङ्कारैरात्यन्ता-भावस्य क्षणिकजन्यत्वस्य निराकरणम् निरस्तम् प्रतियोग्यकालीनस्वरूपसम्बन्धविशेषस्यैवात्यन्ताभावविषय-कबोधनियामकत्वेन तादृशसम्बन्धस्य तत्तज्ज्ञानक्षणा-दिनिर्वाह्यत्वात् क्षणिकत्वे सति हि दुःखे भोजने वा तादृशस्वरूपसम्बन्धाभावात् विशिष्टबुद्धेरनुदयात् तस्य तत्त्वज्ञानादिप्रयोज्यत्वमेवमन्यत्रोह्यम्

**क्षैरह्रद** त्रि० क्षीरह्रदस्येदम् शिवा० अण्। क्षीरह्रद-सम्बन्धिनि।

**क्षैरेय** त्रि० क्षीरे संस्कृतम् ढञ्। १क्षीरे संस्कृते परमान्ने न० हेम०। २यवाग्वां स्त्री ङीप्।

**क्षोड** पु० क्षोड-घञ् पृषो०। १आलाने गजबन्धन्याम् शब्दचि०

**क्षोण** त्रि० क्षि–बा० डोन। क्षयशीले। “भद्रः क्षोणस्याश्विना कण्वाय” ऋ०१,११७,८ क्षोणस्य क्षयणस्य निरु० ६,६।

**क्षोणि(णी)** स्त्री क्षै–बा० डोनि वा ङीप्। १पृथिव्यां निघ०। “मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतुः” भाग०२,७,१२। २एकसंख्यायाम्

**क्षोद** पु० क्षुद–घञ्। १चूर्णने पेषणे अमरः कर्म्मणि घञ्। २रजसि च हेम०। “आनेमिमग्नैः शितिकण्ठपत्र-क्षोदद्युतश्चुभिरे रथौघैः” माघः “पदः खरखुरनयस्य क्षाद्यमङ्कजक्षोदक्षमे” नैष०।

**क्षोदक्षम** त्रि० क्षोदं क्षमते क्षम–अच्। विचारसहे “पदः खरखुरनयस्य ज्ञाद्यमङ्कजक्षोदक्षमे” नैष०।

**क्षोदस्** न० क्षुद–असुन्। जले निघ०।

**क्षोदित** न० क्षुद–णिच्-क्त। १चूर्णिते पेषिते शब्दचि०।

**क्षोदिमन्** पु०क्षुद्रस्य भावः इमनिच् क्षोदादेशः। क्षुद्रतायाम्।

**क्षोदिष्ठ** त्रि० अतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः। अतिक्षुद्रे।

**क्षोदीयस्** त्रि० अतिशयेन क्षुद्र ईयसुन् क्षोदादेशः। क्षुद्रतरे “इत्थमुपायः कार्य्यान्तं क्षोदीयानपि गच्छति”। माघः स्त्रियां ङीप्। [प्रजाश्च भवन्ति” शत०ब्रा० १,५,२,७।

**क्षोधुक** त्रि० क्षुध– बा०उकञ्। क्षुधायुक्ते। “क्षोधुका ह्यस्य

**क्षोभ** पु० क्षुभ-घञ्। १सञ्चलने “स नूपुरक्षोभपदाभिराशीत्” “रथक्षोभपरिश्रान्तः” रघुः। २विकारे च “क्षोभमाशु हृदयं न यदूनाम्” माघः। “कर्णेन्द्रियक्षोभमयुग्मनेत्रः” कुमा०।

**क्षोभक** पु०“ईशानाच्चस्य पूर्वस्यां पुरं नाम पराशनम्। तद्विग्ने महाशैलः क्षोभको नाम नामतः” कालिकापु० ७६अ० उक्ते कामाख्यातीर्थस्थनगभेदे। क्षुभ–ण्वुल्। २क्षोभ-कारके त्रि०।

**क्षोभण** त्रि०क्षुभ-णिच्-ल्यु। १क्षोभजनके। २कामबाणविशेषे पु० पञ्चबाणशब्दे विवृतिः ३शिवे पु०। “नमो वृद्धाय लुब्धाय लुब्धाय क्षोभणाय च” भा० शा० २८६अ० शिवसहस्रनाम। ४विष्णौ। “वसुदः क्षोभणो देवः श्रुत-गर्भोरमेश्वरः” विष्णुसं० तस्य च सृष्टिकाले प्रकृत्यादि-क्षोभकत्वात्तथात्वम् यथाह विष्णुपु० “प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया प्रभुः। क्षोभयामास भगवान् सर्ग-काले व्ययाव्ययौ” । भावे ल्युट्। ५क्षोभणे न०।

**क्षोम** न०क्षु-मन्।१प्रसद्मोपरिशालायाम्(चिलेवर)शब्दचि०। २अट्टे भरतः ३गवाक्षके पु० जटाधरः संज्ञायां कन्। तत्रार्थे ४चोरनामगन्धद्रव्ये पु० शब्दचि०।

**क्षौ(क्षो)णी** स्त्री क्षु–पा० नि इत्वं वा ङीप्। १धरण्याम् अमरः। अन्या व्युत्पत्तिः ब्रह्मवै०पु०२०७ अ०उक्ता यथा “इच्छा च यागभाराच्च क्षौणी क्षीणा भवेच्च या। महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता” तेन क्षीणाशब्दात् पृषो० साधु। २एकसंख्यायाम्।

**क्षौणीप्राचीर** पु० क्षौण्याः प्राचीर इव यस्य। समुद्रे जटा०।

**क्षौणीभुज्** पु० क्षौणीं भुनक्ति अवति भुज-क्विप्। क्षिति पालके राजनि

**क्षौद्र** न०क्षुद्राभिः सरघाभिर्निर्वृत्तम् अण्। “मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत्” इति भावप्र०उक्ते १मधुनि अमरः। “सक्षौद्रपटलैरिव” रघुः। “गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनं परम्” भावप्र०। २जले मेदि०। ३चम्पकवृक्षे पु० शब्दच०। ४क्वाथितकण्वे पांशौ न० शब्दचि० ५मागध्यां जाते जातिसङ्करभेदे पु०स्त्री० “चतुरो मागधी सूते क्रूरान् मायोपजीविनः। मांस-स्वादुकरं क्षौद्रं सौगन्धमिति विश्रुतम्” भा० अनु० ४८ अ०। क्षुद्रस्य भावः अण्। ६क्षुद्रतायां न०।

**क्षौद्रक्य** न० क्षुद्रकः आयुधजीविसंघः स्वार्थे ञ्यट्। आ-युधजीविसंघे टिच्चसामर्थ्यात् स्त्रियां ङीप् क्षौद्र कीत्यस्य स्त्री सि०कौ०।

**क्षौद्रज** न० क्षौद्रात् जायते जन-ड। (मोम) ख्याते १सिक्-थके राजनि०। २मधुजातमात्रे त्रि०।

**क्षौद्रधातु** पु० कर्म०। माक्षिके उपधातुभेदे वैद्यकम्।

**क्षौद्रप्रिय** पु॰ क्षौद्रमिव प्रियः स्वादुत्वात् । १जलमधूकद्रुमे वृक्ष॰ । २मधुप्रिये त्रि॰ ।

**क्षौद्रमेह** पु॰ क्षौद्रमिव मेहः । मधुमेहे रोगे मेहशब्दे ८।०पृ॰ सुश्रुतवाक्ये तल्लक्षणं दृश्यम् "कषायं मधुरं रूक्षं क्षौद्रमेहं वदेत्तु धः" भावप्र॰ ।

**क्षौद्रेय** न॰ क्षौद्रे भवः ढक् । (मोम) सिक्थके राजनि॰ ।

**क्षौम** न॰क्षु—मन् मन्ना॰ स्वार्थे अण् । १दुकूले पट्टवस्त्रे । "स्त्रियः पद्मनिवस्त्रायाः क्षौमान्तरितमेखले" रघुः "क्षौममाकुलकचा विचकर्ष" माघः "वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" मनुः । क्षुमाया अतस्या विकारः अण् । २शणभेदजातवस्त्रे स्त्रियां ङीप् क्षौमी कन्था । क्षौमेण दुकूलेन च रक्षतो रथः अण् । ३दुकूलपरिहते रथे पु॰ । ४हर्म्यभेदे पु॰न॰क्षौदिस्य ।। अट्टे अमरः । अट्टश्च प्रासादाग्रस्थितवस्त्रगृहमिति केचित् । मञ्चमोपरि-निर्मित स्थानम् (चिलेकर) इत्यन्ये । [शब्दचि॰ ।

**क्षौमिक** पु॰ क्षौममिव कायति कै—क । चोरनामगन्धद्रव्ये ।

**क्षौमी** स्त्री क्षुमैव स्वार्थे प्रज्ञा॰ अण् ङीप् । १अतस्याम् (मसिना)ख्याते वृक्षे । क्षुमाया विकारः कन्था अण् ङीप् । २क्षुमाजातवस्त्रकन्थायां स्त्री ।

**क्षौर** न॰ क्षुरेण निर्वृत्तम् अण् । १क्षुरकर्मणि केशकर्त्तने । तत्र विहितनक्षत्रादि क्षुरकर्मशब्दे २२८६ पृ॰ उक्तम् । अत्र विशेषोऽत्र कश्चिदभिधीयते "ब्रतानाकृषवाणानां श्राद्धादीनाञ्च संयमे । न करोति क्षौरकर्म अशुचिः सर्वकर्मसु । स च तिष्ठति कुम्भेषु म-धादीनाञ्च सुन्दरि ! । तदेव दिनमानार्द्धं तत्रोऽसौ दक्ष-ताकृतः" ब्रह्म वै॰ पु॰२७अ॰ । "चन्द्रशुद्धिर्यदा नास्ति ताराया च विशेषतः । क्षौरकर्मेऽपि कर्त्तव्यं चन्द्रचन्द्र-जयोर्हिते" ज्यो॰त॰ । "मासं क्षौरे हन्ति गुरुः शुक्रं शुक्रो-धनं रविः । आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः" श्रीपतिरत्नमाला । "कारया नरपतेर्द्विजन्मनां दारकर्म मृत सूतकेषु च । बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु" भोजदे॰ । "इवकार्थे पितृश्राद्धे रवेरंशपरिच्छदे । क्षुरकर्म न कुर्वीत जन्ममासे च जन्मभे" वृद्धगार्ग्यः, "केशवमार्त्तपूर्वं पादविशुद्धं पुरीमहिम्नताम् । दितिमदितञ्च करतां क्षौरविधौ भवति कल्याणम्" ज्यो॰ त॰ । अत्र क्रमो वराहपु॰ "श्मश्रुकर्म कारयित्वा नखच्छेदनन्तरम्" ज्योति॰ त॰ । "केशश्मश्रुलोम-नखानि वापयीत शिखावर्जम्" गृ॰ त॰ गोभिलः ।

"रोहिण्याञ्च विशाखायां मैत्रे चैवोत्तरासु च । मघायां कृत्तिकायाञ्च द्विजैः क्षौरं विवर्जितम् । कृत्वा तु मैथुनं क्षौरं यो देवान् तर्पयेत् पितॄन् । रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्" ब्रह्म॰ वै॰ पु॰ नापितस्थले क्षौरनिषेधो यथा "स्वयं माल्यं स्वयं पुष्पं स्वयं घृष्टञ्च चन्दनम् । नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम्" कर्मलोचनः ।

**क्षौरपव्य** न॰ क्षुरं पविरिव स्वार्थे ष्यञ् । अति-तीक्ष्णे "कश्चिदं निशकय क्षौरपव्यं स्वयं भ्रमिम्" भाग॰ ६, ९,८ ।

**क्षौरिक** पु॰ क्षौरं शिल्पमस्य ठन् । नापिते शब्दमा॰

**क्ष्णु** तेजने अदा॰ पर॰ सक॰ सेट् । क्ष्णौति अक्ष्णावीत् । चुक्ष्णाव । क्ष्णविता क्ष्णुतः । "वाचं क्ष्णुवानोदमयत् सपत्नान्" अथ॰५।२०।१ । "उभयतो क्षीदं वाचः क्ष्णुतम्" शत॰ ब्रा॰ ६।३।१।३१ ।

**क्ष्णुत** त्रि॰ क्ष्णु—क्त । तीक्ष्णीकृते अमरः ।

**क्ष्णोत्र** न॰क्ष्णु—करणे ष्ट्रन् । अस्त्रतेजने शाणाख्ये यन्त्रभेदे । "क्ष्णोत्रेणेव स्वधितिर्मीयमानेत्" ऋ॰ २,३९,७ ।

**क्ष्मा** स्त्री क्षमते भारं क्षम—अच् उपधालोपश्च । १धरायाम् । अमरः "क्ष्मां लम्भयित्वा क्षमयोपपन्नम्" रघुः । "नचोदकप्रवेशेन न च क्ष्मायतनादपि" भा॰ व॰ १८८ अ॰ । "क्ष्मया चरति यदि वा ह्यवत् मः" निरु॰ पृषा क्षक् २एकसंख्यायाञ्च ।

**क्ष्माज** पु॰ क्ष्माया जायते जन-ड । १मङ्गलग्रहे २नरकासुरे च

**क्ष्मापति** पु॰ ६त॰ । भूपे क्ष्मानाथादयोऽप्यत्र ।

**क्ष्माभुज्** पु॰ क्ष्मां भुनक्ति अवति भुज—क्विप् । भूमिपाले

**क्ष्माभृत्** पु॰क्ष्मां बिभर्त्ति पालयति धारयति वा भृ—क्विप् तुक् च । १राजनि २पर्वते च तस्य भूमिधरत्वात्तथात्वम् ।

**क्ष्माय** विधूनने कम्पने भ्वा॰आत्म॰ अक॰ सेट् । क्ष्मायते । अक्ष्मायिष्ट चक्ष्माये ईदित् क्ष्मातः । "चक्ष्मायन्त मही स्वभ्राः" "चक्ष्माये च मही रामः" भट्टिः । णिचि पुक् यलोपश्च । क्ष्मापयति ।

**क्ष्मील** निमेषे भ्वा॰ पर॰ अक॰ सेट् । क्ष्मीलति अक्ष्मीलीत् चिक्ष्मील । निमेषः पक्ष्मभिश्चक्षुषोरावृतिः ।

**क्ष्विड** स्नेहे भ्वा॰ आत्म॰ अक॰ मोचने सक॰ सेट् । क्ष्वेडते ऋदित् अचिक्ष्वेडत् । चिक्ष्विडे ञीदित् । क्ष्वेडितम् । आदित् क्ष्वेडम् क्ष्वेडितं तेन "नास्फोटयेन्न चाक्ष्वेडेत्" मनुः । परस्मैपदमार्षम् एवं "क्ष्वेडन्तोघारमानाश

प्रक्ष्वेडन्तो महाजवाः" रामा० कि० ४५ अ० । "क्ष्वेडन्ति बुबुरायन्ते स्वनन्तीव च ते मृधाः" हरिवं० । अव्यक्तशब्दकरणे अक० "क्ष्वेडितोत्क्रुष्टहुङ्कृतैः" भा० आश्व० ५८ अ० ।

क्ष्विद् मोचने सक० भ्वा० आ० सेट् । क्ष्वेदते ऌदित् अक्ष्विदत् ओदित् क्ष्विण्णः आदित् क्ष्विण्णं क्ष्वेदितं तेन ।

क्ष्विद् कूजने दिवा० पर० अक० सेट् । क्ष्विद्यति । इरित् अक्ष्वेदीत् अक्ष्विदत् । आदित् क्ष्विण्णं क्ष्वेदितं तेन ।

क्ष्वेड पु० क्ष्विड–भावादौ घञ्, पचाद्यच् वा । १अव्यक्तशब्दे २कर्णे ३मोचने ४त्यागे । ५कर्णामयभेदे कर्णगतरोगशब्दे १७०८ पृ० विवृतिः । ६विषे पु० अम० ७पीतघोषाफले राजनि० ८लोहितार्कपर्णफले न० मेदि० ९वंशशलाकायां १०सिंहनादे ११कोषातकीफले स्त्री राजनि० ।

क्ष्वेडित न० क्ष्विड भावे–क्त । सिंहनादे अमरः ।

क्ष्वेल संचालने, गतौ अक० क्रीडायाम् अक० भ्वा० पर० सेट् । क्ष्वेलति अक्ष्वेलीत् ऋदित् णिचि चङि न ह्रस्वः । अचिक्ष्वेलत् । "ये तु विष्टब्धगात्राश्च क्ष्वेलन्ति च नदन्ति च" (ते हरियूथपाः) रामा० ६, २४ अ० "दंष्ट्राः मधुरांश्च संहृष्टाः क्ष्वेलन्त्यपि यथापुरम्" ६, २६ अ० । "ते तदा स्फोटयामासुः क्ष्वेलनाय समन्ततः" २७ अ० ।

क्ष्वेला स्त्री क्ष्वेल–अ । क्रीडायाम् । स्वार्थे क क्ष्वेलिकाप्यत्र । "क्ष्वेलिकया मृषा समाधिना आमीलितनयनं प्रेमसंरम्भेण चाक्रान्तवदित आगत्य पृष्ठपदनिपातमेव कुर्वति" भाग० ५ स्क० ८ अ० । चौरा० उभ० क्ष्वेलयति अचिक्ष्वेलत् । "बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः । क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार" भाग० १० स्क० २९ अ० ।

इति श्री तारानाथतर्कवाचस्पतिभट्टाचार्यविरचिते वाचस्पत्ये ककारादिशब्दार्थसङ्कलनम् ।

## ख

खकारः "जिह्वामूले तु कुः प्रोक्तः" शिक्षोक्तेः कण्ठमूलो-च्चार्य्यः जिह्वामूलपदस्य कण्ठमूलपरत्वात्। अस्योच्चारणे आभ्यन्तरप्रयत्नः स्पृष्टता (जिह्वामूलस्पर्शः) बाह्यप्रयत्नाश्च "खरां यमः खयः+कँ पौ विसर्गः शर एव च। एते श्वासानु-प्रदाना अघोषाश्च विवृण्वते। कण्ठम्" इति शिक्षोक्तेः श्वासा-घोषविवाराः "अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः" इति शिक्षोक्तेः वर्गमध्ये युग्मवर्णत्वात् महाप्राणश्च। खादिवर्णे परे पूर्वस्य विसर्गस्य स्थाने जिह्वामूलीयः यथा मनो+खनिः मनाᳵखनिः वा मनःखनिः। भा+खरः भाᳵखरः भाःखर इति। वर्णाभिधाने अस्य वाचकाः शब्दाद-र्शिताः यथा "खः प्रचण्डः कामरूपी गुह्यवर्णः सर-स्वती। आकाशचन्द्रिका दुर्गा चण्डी सन्तापिनी गुरुः। शिवचण्डी दन्तोजातीयः कपोलाद्यगरुडोत्मदी। शून्यं कपाली कल्याणी सूर्यकर्णोऽजरामरः। शुभान्नेव चण्डविङ्गे जनो भद्रारकडङ्गको"। अस्य मातृका-वर्णान्तर्गतत्वेन ध्येयरूपं वर्णोद्धारतन्त्रे उक्तं यथा "बन्धूकपुष्पसङ्काशां रत्नालङ्कारभूषिताम्। वराभयकरीं नित्यार्थीष्टाप्तिकर्त्रीं पराम्। एवं ध्यात्वा खरूपां तन्मन्त्रं दशधा जपेत्"। मातृकान्यासे चास्य बाहौ न्यस्यता। श्लोकरचनायां तस्याद्यवर्णतयोपन्यासे पद्य-कर्त्तुः दुःखोत्करता "कः खो गो घश्च लक्ष्मीं वितरति वियशोङः दुःखं चः सुखं छः" वृत्तर०टीकाधृतवाक्यात्।

**ख** पु० खर्व-खन-वा० ड। १सूर्य्ये हेमच०। २इन्द्रिये ३पुरे ४क्षेत्रे ५शून्ये ६बिन्दौ ७आकाशे ८संवेदने ९स्वर्गे १०कर्म्मणि च न० मेदि०। ११लग्नात् दशमे स्थाने ज्यो०त०। "खारे स्वस्थे च तद्धन्याद्गुरोभयम्" भीमप०। "तनुनिधनसुखेषाः केन्द्रकोणे त्रिकाभे" जातकप०। १२सुखे हेमच०। १३अभ्रके (आव) उपधातुभेदे राजनि०। "तत्रेन्द्रिये "ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्व्वशः" मनुः। आकाशे "नक्षत्रीन्दुर्यथा विद्धः खे विद्ममनुविध्यतः" मनुः खं "वायुर्ज्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति" प्रबो०। "एतस्माज्जायते—खं वायुर्ज्योतिरापश्च" श्रुतिः। "यावत् गिरः खे मरुतां चरन्ति" कुमा०। १४परमानन्दस्वरूपे ब्रह्माकाशे। "कं ब्रह्म खं ब्रह्म" "यदेव कं तदेव खम्" इति च छा०उ०।

**खकक्षा** स्त्री सूर्य्यरश्मिप्रचारावधिके वेष्टनाकारे ब्रह्माण्डबहिरे गगनपरिधौ। सि० शि० तत्परिमाण-मुक्तं यथा "कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभि-१८७१२०६९२०००००००० ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद्ब्रह्माण्डकटा-हसंपुटतटे केचिज्जगुर्वेष्टनम् केचित् प्रोचुरदृश्य-दृश्यकगिरिं पौराणिकाः सूरयः। करतलकलिता-मलकवदमलं सकलं विदन्ति ये गोलम्। दिनकरकर-निकरनिहततमसो नभसः स परिधिरुदितस्तैः" मू०। "एभिर्योजनैस्तुल्यां गणकाः खकक्षामाकाशपरिधिं वदन्ति। तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यत इत्याशङ्क्याऽ-दृष्टपरिध्यतिवृत्तो नभसः परिधिरिदं वदन्ति। अत एव पौराणिका गणकाश्च ब्रह्माण्डपरिधिं वदन्ति। केचि-ट्टीकाकारा वदन्ति। यतस्तदन्तर्वर्त्ति न एवार्करश्मयः। एवमन्ये वदन्तीति नास्माकं मतभिन्नत्वं प्रमाणशून्य-त्वात्। करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति। इदानीं स्वमतमाह" प्रमि०। "ब्रह्माण्डमेत-न्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्व्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः" मू०। इदानीं ग्रहकक्षा आह। "ग्रहस्य चक्रै-र्विहृता खकक्षा भवेत् स्वकक्षा निजकक्षकायाम्। ग्रहः खकक्षामितयोजनानि भ्रमत्यजस्रं परिवर्त्तमानः" मू०। "या खकक्षा यस्य यस्य भगणैर्ह्रियते तस्य तस्य ग्रहस्य कक्षामितिर्लभ्यते। अत्रोपपत्तिरूपं श्लोकस्योत्तरार्ध-मिति। यतः खकक्षायां ग्रहो भ्रमन्नजस्रं परिवर्त्तमानः खकक्षामितानि योजनानि पूरयति। अतो ग्रहभगणैः भक्तायाः खकक्षाया यल्लभ्यते सा ग्रहकक्षामितिरित्यु-पपन्नम्।

**खकामिनी** स्त्री खं सुखमाकाशं वा कामयते कम-स्वार्थे णिङ्-णिनि ङीप्। १पार्वत्यां २चिल्लदयितायां च त्रिका०। [महादेवे त्रिका०। खकेशादयोऽप्यत्र।

**खकुन्तल** पु० खमाकाशः कुन्तलस्थानीयमिव यस्य। व्योमकेशे

**खक्ख** हासे भ्वा०पर०सक० सेट्। खक्खति अखक्खीत्। चखक्ख। प्रनिखक्खति।

**खक्खट** पु० खक्ख-अटन्। कठिने (खडि) रायमु०।

**खखोल्क** पु० काश्यां आदित्यभेदे तत्कथा काशी० ५० अ० यथा "खखोल्कोनाम भगवानादित्यः परिकी-र्त्तितः। त्रिपिष्टपोत्तरे भागे सर्वव्याधिविनाशकः। यथा खखोल्कस्त्वाख्या तस्यादित्यस्य तच्छृणु" इत्युपक्रमे

दृक्सूत्रेणाग्रतोऽप्येवं पातो राहुः स्वरंहसा। विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमात्॥ उत्तराभिमुखं पातो विक्षिपत्यपरार्द्धगः। पूर्व्वः प्रागभगपार्द्धस्थो याम्यायामपकर्षति॥ बुधभार्गवयोः शीघ्रात् तद्वत् पातो यदा स्थितः। तच्छीघ्राकर्षणात् तौ तु विक्षिप्येते यथोक्तवत्॥ महत्त्वान्मण्डलस्यार्कः स्वल्पमेवापकृष्यते। मण्डलाल्पतया चन्द्रस्ततो बह्वपकृष्यते॥ भौमादयोऽल्पमूर्त्तित्वाच्छीघ्रमन्दोच्चसंज्ञकैः। दैवतैरपकृष्यन्ते सुदूरमतिवेगिताः॥ अतो धनर्णं सुमहत् तेषां गतिवशाद्भवेत्। आकृष्यमाणास्तैरेवं व्योम्नि यान्त्यनिलाहताः॥ वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा। तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः॥ तत्रातिशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा। ऋज्वीति पञ्चधा ज्ञेया या वक्रा सानुवक्रगा" सू॰ सि॰॥ वक्रानुवक्रेत्यादिकं रङ्गनाथेन विवृतं यथा।

"भौमादिपञ्चानां ग्रहाणामष्टप्रकारा गतिः। कथिता। तत्र वक्रेत्यादिसमेत्यन्तं षट्प्रकारा गतिः शीघ्रतरा शीघ्रेति गतिद्वयम्। तथा मत्सूत्रे। अथाष्टधा गतिं भेदज्ञानमपि स्फुटम्। अष्टधेनाष्टधा गतिं भेदद्वयेन श्लोकद्वयेन कथयति। तत्रातिशीघ्रातिशीघ्रा शीघ्रेत्यादिसमेत्यन्ता ऋज्वी पञ्चधा गतिः। अन्या मार्गी गतिर्ज्ञेया या गतिः सानुवक्रगानुवक्रगमनेन सह वर्त्तमाना पूर्व्वोक्तेऽनुवक्रगतेर्वक्रकुटिलमध्याभिधानादुभययामसत्वाद्वक्रानुवक्रा कुटिलेति गतिर्वक्रा संज्ञा तथा च परार्थं मार्गी वक्रेति गतिद्वयम्" ॥ शीघ्रमान्द्यादिप्रकारस्तु तत्रैव द्रष्टव्यः विस्तरभयान्नोदाहृतः।

खगपति पुं॰ खगानां पतिः पा—क। गरुडे खगपत्यादयोऽप्यत्र। गरुडस्य खगपतित्वकारणकथा भा॰ आ॰ ३१अ॰ यथा "अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरपर्व्वणः। पलाशवर्त्तिकामेकां वहतः संहतान् पथि। प्रलीनान् स्वेष्विवाङ्गेषु निराहारांस्तपोधनान्। क्लिश्यमानान् मन्दबलान् गोष्पदे संप्लुतोदके। तान् सर्व्वान् विस्मयाविष्टो वीर्य्योन्मत्तः पुरन्दरः। अवहस्याभ्यगाच्छीघ्रं लङ्घयित्वाऽवमन्य च। तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः। आरेभिरे महत् कर्म तदा शक्रभयङ्करम्। जुहुवुस्ते सुतपसो विधिवज्जातवेदसम्। मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु। कामवीर्य्यः कामगमो देवराजभयप्रदः। इन्द्रोऽन्यः सर्व्वदेवानां भवेदिति यतव्रताः। इन्द्राच्छतगुणः शौर्य्ये वीर्य्ये चैव मनोजवः। तपसो नः फलेनाद्य दारुणः सम्भवत्विति। तद्बुद्ध्वा भृशसन्तप्तो देवराजः शतक्रतुः। जगाम शरणं तत्र कश्यपं संशितव्रतम्। तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः। वालखिल्यानुपागम्य कर्म्मसिद्धिमपृच्छत। एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः। तान् कश्यप उवाचेदं सान्त्वपूर्व्वं प्रजापतिः। अयमिन्द्रस्त्रिभुवने नियोगाद् ब्रह्मणः कृतः। इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः। न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः। भवतां हि न मिथ्याऽयं सङ्कल्पो वै चिकीर्षितः। भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान्। प्रसादः क्रियतामस्य देवराजस्य याचतः। एवमुक्ताः कश्यपेन वालखिल्यास्तपोधनाः। प्रत्यूचुरभिसम्पूज्य मुनिश्रेष्ठं प्रजापतिम्। वालखिल्या ऊचुः। इन्द्रार्थोऽयं समारम्भः सर्व्वेषां नः प्रजापते!। अपत्यार्थं समारम्भो भवतश्चायमीप्सितः। तदिदं सफलं कर्म्म त्वयैव प्रतिगृह्यताम्। तथा चैवं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि। सौतिरुवाच। एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा। विनता नाम कल्याणी पुत्रकामा यशस्विनी। तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः। उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः। आरम्भः सफलो देवि! भविता यस्त्वयेप्सितः। जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ। तपसा वालखिल्यानां मम सङ्कल्पजौ तथा। भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ। उवाच चैनां भगवान् कश्यपः पुनरेव ह। धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः। एतौ सर्व्वपतत्रीणामिन्द्रत्वं कारयिष्यतः। लोकसम्भाविनौ वीरौ कामरूपौ विहङ्गमौ। शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः। त्वत्सहायौ महावीर्य्यौ भ्रातरौ ते भविष्यतः। नैताभ्यां भविता दोषः सकाशात्ते पुरन्दर!। व्येतु ते शक्र! सन्तापस्त्वमेवेन्द्रो भविष्यसि। न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः। न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः। एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम्। विनता चापि सिद्धार्था बभूव मुदिता तदा। जनयामास पुत्रौ द्वावरुणं गरुडं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः। पतत्रीणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत"।

खगम त्रि॰ खे आकाशे गच्छति गम-खच्। आकाशगामिनि विहगन्धर्वादौ। "ततो दिव्याश्रमापन्ना गन्धर्वा हेम-

माविनः" इत्युपक्रमे "ते कार्द्दमाथाः खगमाः शरौघैः हतमाताः" भा॰द्रो॰ २४४ अ॰ । [शब्दच॰ ।

**खगवक्त्र** पु॰ खगस्य वक्त्रमिवाकारोऽस्य । मकुचवृक्षे (मान्दार)

**खगवती** स्त्री खगः खगपादयुग्मस्याकाशमस्ति तत्वेनास्त्यस्याः मतुप् मस्य वः । भूमौ शब्दा॰ । तस्याः व्योम्नि स्थितत्वात् खगतुल्यत्वम् । "मध्ये समन्तादण्डस्य भूगोलः व्योम्नि तिष्ठति । बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्" सू॰सि॰उक्तेः । आर्य्यभट्टमते तु पृथिव्याः खकक्षायामाकाशगतिमत्त्वात् खगतुल्यगतित्वेन खगवत्त्वमिति भेदः । खगोलशब्दे विवृतिः ।

**खगशत्रु** पु॰ खगस्य शत्रुरिव । पृश्निपर्ण्याम् (चाकुलिया) शब्दच॰ । हेम॰ । २श्येनविहगे ।

**खगस्थान** न॰ ६त॰ । द्रुमस्य कोटरे शब्दच॰ ।

**खगान्तक** पु॰ खगान्तयति अन्तं करोति णिच्–ण्वुल् ६त॰ । श्येनविहगे राजनि॰ ।

**खगासन** पु॰ खगः गरुड़ आसनमस्य । १विष्णौ तस्य तदासनत्वं तस्य तत्कथा च भा॰ आ॰ ३३ अ॰ यथा "विष्णुना च तदाकाशे वैनतेयः समेयिवान् । तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा । तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् । स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः । उवाच चैनं भूयोऽपि नारायणमिदं वचः । अजरश्चामरश्च स्याममृतेन विनाप्यहम् । एवमस्त्विति तं विष्णुरुवाच विनतासुतम् । प्रतिगृह्य वरौ तौ च गरुड़ो विष्णुमब्रवीत् । भवतेऽपि वरं दद्यां वृणोतु भगवानपि । तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् । ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् । एवमस्त्विति तं देवमुक्त्वा नारायणं खगः । वव्राज तरसा वेगाद्वायुं स्पर्द्धन् महाजवः" । "बद्धं तथा चाधः शीर्षं यः करोति खगासनम् । खगासनप्रसादेन स्वमलोपाभिवृद्धितम्" रुद्रजा॰ उक्ते २आसनभेदे न॰ ।

**खगेन्द्र** पु॰ ६त॰ गरुड़े खगपतिशब्दे विवृतिः ।

**खगेन्द्रध्वज** पु॰ खगेन्द्रः गरुड़ो ध्वजोऽस्य । विष्णौ तस्य गरुड़ाङ्कध्वजधारकता खगासनशब्दे दर्शिता ।

**खगेश्वर** पु॰ ६त॰ । गरुड़े अमरः ।

**खगोल** पु॰ सू॰सि॰उक्ते गोलाकारे आकाशस्य परिधौ सूर्यकिरणप्रचारयोग्यदेशे ब्रह्माण्डाधारे आकाशभेदे । यथा "ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम् । कटाहद्वितयस्येव सम्पुटं गोलकाकृतिः" सू॰ सि॰ । "एतत् प्रागुक्तं ब्रह्माधिष्ठितं ब्रह्माण्डं सुषिरमवकाशात्मकं, तन्मध्यकाशे इदं जगत् भूर्भुवादिकं भूर्भुवःस्वर्गात्मकमाश्रितं न बहिः । तत्स्वरूपस्य गोलाकारत्वेनान्तरवकाशात्मकत्वं न सम्भवतीत्यत आह कटाहद्वितयस्येति । कटाहोऽर्द्धगोलाकारं खर्पराकारं पात्रं तस्य द्वितयं द्वयं तस्य समम् । एवकारो न्यूनाधिकव्यवच्छेदार्थः । सम्पुटमाभिमुख्येन मिलितं गोलकाकारं तयोराकारः स्यात् । तथाच न क्षतिः । अत ब्रह्माण्डान्तः परिधिं वदंस्तदन्तर्भपदार्थकमाकाशे यथास्थानं परिभ्रमतीति श्लोकाभ्यामाह" रं॰ ना॰ "ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा । मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः" सू॰ सि॰ । "ब्रह्माण्डान्तः परिधिस्तुल्यवृत्तमाना व्योमकक्षा नक्षत्राकाशकक्षोच्यते । तन्मध्ये नक्षत्रकक्षाया आकाशे भानां नक्षत्राणां सर्वेषां ग्रहनक्षत्रज्योतिर्विमानानां भ्रमणं भवति । तथा तदन्तर्ज्योतिर्निर्वाणो नक्षत्रेभ्योऽधोऽधः क्रमात् शनिबृहस्पतिभौमार्कशुक्रबुधचन्द्राः क्रमशः परिभ्रमन्ति । सिद्धा विद्याधराश्चाश्चन्द्रादधःस्थिता अधोऽधः क्रमेणाकाशे स्थिताः । एषां ग्रहनक्षत्राद्वयस्थानाभावाच्चन्द्रादिवत् परिभ्रमः । अथ भूस्थस्थानमाह" रं॰ ना॰ "मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति । बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्" सू॰ सि॰ । "अण्डस्य ब्रह्माण्डस्य समन्तात् सर्वप्रदेशान्मध्ये मध्यस्थाने केन्द्ररूपे आकाशे भूगोलस्तिष्ठति । तस्याकाशे निराधारवस्तुनोऽवस्थानासम्भवात् कथमवस्थितो भूमिगोल इत्यतो भूगोलविशेषणमाह बिभ्राण इति । ब्रह्मणः परमां शक्तिं धारणात्मिकां निराधारावस्थानहेतुं बिभ्राणो धारयन् । तथाच न क्षतिः । एतेन भूः किमाधारा किमाश्रयेति" प्रश्नद्वयमुत्तरितम् । अथ कुत्र सप्त पातालभूमय इति प्रश्नस्योत्तरमाह रं॰ना॰ "तदन्तरपुटाः सप्त नागासुरसमाश्रयाः । दिव्यौषधिरसोपेता रम्याः पातालभूमयः" सू॰ सि॰ । मेर्वादिस्थितिमाह "अनेकरत्ननिचयो जाम्बूनदमयो गिरिः । भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः । उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः । अधस्तादसुरास्तद्वद्द्विषन्तोऽन्योऽन्यमाश्रिताः । ततः समन्तात् परिधिः क्रमेणायं महार्णवः । मेखलेव स्थितो धात्र्या

देवासुरविभागकृत्। समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादिनगर्यो देवनिर्मिताः। भूवृत्तपादे (१२५६) पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता। तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः। भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिताः। ताभ्यश्चोत्तरगो मेरुस्तावानेव १२५६ सुराश्रयः। तासामुपरिगो याति विषुवस्थो दिवाकरः। न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते। मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये। अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा। मेषादौ देवभागस्थे देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः। अत्यासन्नतया तेन ग्रीष्मे तीव्राः करा रवेः। देवभागे सुराणां तु हेमन्ते मन्दतान्यथा। देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे। मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरम्। सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः। तुलादींस्त्रीन् मृगादींश्च तद्वदेवासुरद्विषाम्। अतो दिनक्षपे तेषामन्योन्यं हि विपर्ययात्। अहोरात्रप्रमाणं च भानोर्भगणपूरणात्। दिनक्षपार्धमेतेषामयनान्ते विपर्ययात्। उपर्यात्मानमन्योन्यं कल्पयन्ति सुरासुराः। अन्येऽपि समसूत्रस्था मन्यन्तेऽधः परस्परम्। भद्राश्वकेतुमालस्था लङ्कासिद्धपुराश्रिताः। सर्वत्रैवं महीगोले स्वस्थानमुपरि स्थितम्। मन्यन्ते खे यतो गोलस्तस्य क्वोर्ध्वं क्व वाप्यधः। अल्पकायतया लोकाः स्वस्थानात् सर्वतोमुखम्। पश्यन्ति वृत्तामप्येतां चक्राकारां वसुन्धराम्। सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम्। उपरिष्टाद्भगोलोऽयं व्यक्षे पश्चान्मुखः सदा। अतस्तत्र दिनं त्रिंशन्नाडिकं शर्वरी तथा। ह्रासवृद्धी सदा वामं सुरासुरविभागयोः। मेषादौ तु सदा वृद्धिरुदगुत्तरतोऽधिका। देवांशे च क्षपाह्रानिर्विपरीतं तथाऽऽसुरे। तुलादौ द्युनिशोर्वामं क्षयवृद्धी तयोरुभे। देशक्रान्तिवशान्नित्यं तद्विज्ञानं पुरोदितम्"।

अथ क्रान्त्यवधिदेशं विवक्षुः प्रथमं तदुपयुक्तानि क्रान्त्यंशयोजनान्याह "भूवृत्तं क्रान्तिभागघ्नं भगणांशविभाजितम्। अवाप्तयोजनैरर्को व्यक्षाद्यात्युपरि स्थितः" सू॰ सि॰ ॥ "भूवृत्तं भूपरिधियोजनमानं (५०२६ स्थूलम् ४९६७ सूक्ष्मम्) भागुक्रमभीष्टक्रान्त्यंशैर्गुणितं द्वादशराशिभागैः षष्ट्यधिकशतत्रयमितैर्भक्तं लब्धयोजनैः तत्र सूर्य्य उपरि आकाशे स्थितो वर्त्तमानो दक्षिणत उत्तरतो वा याति गच्छति। क्रान्त्यभावे तु निरक्षदृग्गोपर्य्येव परिभ्रमति। अत्रोपपत्तिः निरक्षदेशान्मेरोरुत्तरदक्षिणाभिमुखं सूर्यः क्रान्त्यंशैर्गच्छति। तद्योजनज्ञानं तु यदि भगणांशैर्निरक्षदेशस्पृष्टभूपरिधियोजनानि तदा क्रान्त्यंशैः कानीत्यनुपातेनेत्युपपन्नम्। अथ दिनमानानयनगणितस्यावधिदेशज्ञानं श्लोकाभ्यामाह" र॰ ना॰। "परमापक्रमादेवं योजनानि विशोधयेत्। भूवृत्तपादाच्छेषाणि यानि स्युर्योजनानि तैः। अयनान्ते विलोमेन देवासुरविभागयोः। नाडीषष्ट्या सकृदहर्निशाप्यस्मिन् सकृत् तथा" सू॰ सि॰ ॥ "परमक्रान्तिभागाच्चतुर्विंशतिमितात्। एवं पूर्वोक्तरीत्या योजनानि ज्ञातानि ३२६ भूपरिधेः पूर्वोक्तस्य ५०२६ चतुर्थांशात् १२५६ परिशोधयेत्। अवशिष्टानि यानि यत्संख्यामितानि योजनानि भवन्ति तैर्योजनैर्देवासुरविभागयोर्निरक्षदेशादुत्तरदक्षिणप्रदेशयोर्ये देशौ तयोरित्यर्थः। अयनान्ते उत्तरदक्षिणायनसन्धौ कर्कादिस्थे सूर्ये दक्षिणोत्तरायणसन्धौ, मकरादिस्थे सूर्ये विलोमेन व्यत्यासेन सकृदेकवारं नाडीषष्ट्या घटीषष्ट्याऽहर्दिनमानं भवति। अस्मिन् तादृशे देशे दक्षिणोत्तरायनसन्ध्यासन्ने सकृदेकवारं तथा षष्टिघटीमिता विलोमेन निशा रात्रिर्भवति। अपिशब्दो दिनेन समुच्चयार्थः। एवदुक्तं भवति। कर्कादिस्थे सूर्ये निरक्षदेशादुत्तरतद्योजनान्तरितदेशे षष्टिघटीमितदिनं तदैव निरक्षदेशाद्दक्षिणतद्योजनान्तरितदेशे षष्टिघटीमिता रात्रिः। मकरादिस्थे सूर्ये तादृशोत्तरभागे षष्टिघटीमिता रात्रिर्दक्षिणभागे तादृशे षष्टिघटीमितं दिनमिति। अत्रोपपत्तिः। परमक्रान्तियोजनानि ३२६ भूवृत्तचतुर्थांशयोजनेभ्यो १२५६ हीनानि ९३०। निरक्षदेशात् तन्मितयोजनान्तरितो यो दक्षिणोत्तरदेशस्तस्मान्मेरोर्दक्षिणोत्तरायं क्रमेण परमक्रान्तियोजनान्तरम्। अतस्तत्र लम्बांशाश्चतुर्विंशतिः पलांशाश्च षट्षष्टिरिति तद्देशे क्रान्तिवृत्तानुकारं क्षितिजमित्ययनान्ते षड्दशघटीमितमहोरात्रवृत्तचतुर्थांशखण्डं निरक्षतद्देशक्षितिजयोरन्तरालरूपं चर-

चतुर्दश भागा विंशतिकलोनसप्तभागैर्युता उत्तराषाढ़ाया ध्रुवश्चत्वारिंशत्कलाधिकोऽङ्कध्रुव इति पर्यवसितोऽयमपाठम् ब्रह्मसिद्धान्तविरोधात्। अभिजिद्ध्रुवकमाह। चाप-स्थेति। पूर्वाषाढ़ाया अवसाने धनूराशेर्विंशतिकलोन-सप्तविंशतिभागेऽभिजिद्योगतारा ज्ञेया। चत्वारिंशत्-कलाधिकषड्विंशतिभागाधिका अष्टौ राशयोऽभिजितो ध्रुव इत्यर्थः। एवकारोऽन्ययोगव्यवच्छेदार्थः। तेन संहितासम्मतं श्रवणचतुर्दशांशस्थानं विंशतिविकलायुत-त्रयोदशकलायुतचतुर्दशभागादिकमकरांशके निरस्तम्। श्रवणस्य ध्रुवकमाह। वैधात्र इति। उत्तराषाढ़ाया अवसाने श्रवणयोगतारायाः स्थानं ज्ञेयम्। नव राशयो दश भागाः श्रवणध्रुवक इत्यर्थः। धनिष्ठाया ध्रुवक-माह। त्रिचतुःपादयोरिति। श्रवणस्य तृतीयचतुर्थ-चरणयोः क्रमेणान्त्यादिसन्धौ मकरराशेर्विंशतिभागे श्र-विष्ठा धनिष्ठा ज्ञेया। नव राशयो विंशतिभागा धनिष्ठा-ध्रुव इत्यर्थः। तुकारात् देवान्तर्गतधनिष्ठास्थानं कुम्भस्य विंशतिकलोनसप्तभागा निरस्तम्। शततारायाः भोग-माह। स्वभोगत इति। धनिष्ठाभोगात् कुम्भस्य विंश-तिकलोनसप्तभागावधेरित्यर्थः। शततारायाः अशीति-र्भोगः। अतः प्राग्वद्ध्रुव इति ज्ञापनार्थं स्वभोगत इत्युक्तम्। शततारायाः स्थानं शततारकध्रुव इति पर्यवसन्नम्। अवशिष्टनक्षत्राणां भोगानाह। षट्-कृतिरिति। पूर्वभाद्रपदायाः षट्त्रिंशत् कला भोगः। उत्तरभाद्रपदाया द्वाविंशतिः। रेवत्या एकोनाशीतिः। अथ ध्रुवकानयनं यथा। अश्विन्या भोगः। ४८। दश-गुणितः। ४८०। अतीतनक्षत्राभावाद्भोगयोजनाभावः। अतोऽश्विन्याः कलात्मको ध्रुवः ४८०। राश्याद्यस्तु ०।८। भरण्या भोगः। ४०। दशाहतः। ४००। अतीतनक्षत्रैकत्वादष्टशतयुता भरण्याः परिभाष्या राश्याद्यो ध्रुवः ।०।२०। एवमार्द्राभोगः। ४। दशाहतः। ४०। अतीतनक्षत्राणां पञ्चतया पञ्चगुणिताष्टशतेन। ४०००। चतुःसहस्रात्मकेन युतः कलाद्यो ध्रुवः। ४०४०। राश्याद्यस्तु। २। ७। २०। एवं पूर्वाषाढ़ाया दशगुणितो भोगः। ४०। एकोनविंशतिगुणिताष्टशतेन। १५२००। युतः परिभाष्यो राश्याद्यो ध्रुवः। ८। १४। शतता-राया दशगुणितो भोगः। ८००। त्रयोविंशतिगुणिता-ष्टशतेन। १८४००। युतश्चतुर्विंशतिगुणिताष्टशतरूपो। १९२००। जातो ध्रुवो राश्याद्यः। १०। २०। पूर्वभा-द्रपदाया दशगुणितो भोगः। ३६०। चतुर्विंशतिगुणि-ताष्टशतेन। १९२००। युतो। १९५६०। जातो ध्रुवो राश्याद्यः। १०। २६। उत्तराषाढ़ाभिजिच्छ्रवणधनि-ष्ठानां स्वभोगस्थानात् पश्चात् स्थितत्वेनोक्तरीत्यसम्भवात्त्रि-प्ररीत्या ध्रुवका उक्ताः। खादिस्थानाद्योगतारा यदन्तर-कलाभिः स्थितास्ताः कलाद्याः भोगसंज्ञा उक्ताः। तथा च ब्रह्मसिद्धान्ते "अष्टौ विंशतिरष्टौ न गजाग्निवर्षर्तवः। त्रितर्काः सप्तिभागाद्रिरसाश्च-द्वाय षट्शतम्॥ नवाङ्गा नवरुद्राश्च वेदेन्द्राः शरवा-यवः। शाब्दिः अष्टतिर्गोऽतिधृतिर्विशाखिनकाया॥ वेदाष्टतिर्गोदिक्पक्षाः शब्धिहस्ता युगार्णवाः। धीत्-कृतिरथ त्र्यश्चीनाश्वरदचक्राः षड्जिनक्। अगोऽ-श्विनः षदन्ताः षड्दन्ताः शैलगुणाग्नयः। मेषाद्यकद्रा-दिमध्यांशाः षड्भिर्गोनाः खष्टगुणाः"॥ इति। अथ नक्षत्राणां विक्षेपभागानाह एषामिति। उक्तध्रुव-कसम्बन्धिनामश्विन्यादिनक्षत्राणां यथाक्रमं क्रमादि-त्यर्थः। स्यात् पक्षीयापक्रमात् क्रान्त्यर्थात् क्रान्तिवृत्त-स्थध्रुवकस्थानादित्यर्थः। विक्षेपा विक्षेपभागा दक्षिणा उत्तरा वा भवन्ति। तत्रोत्तरदिश्यश्विन्यादित्रयाणां दिङ्मार्गणिकाः क्रमेण दश द्वादश पञ्चेत्यर्थः। दक्षिण-दिशि रोहिण्यादित्रयाणां पञ्चदश नव। उत्तरस्यां पुन-र्वस्वोः षड्भागाः। पुष्यस्य खं विक्षेपाभावः। अत्र पञ्चमा-क्षरस्य गुरुत्वेन छन्दोभङ्ग आर्षत्वान्न दोषः। दक्षिणस्या-मश्लेषायाः सप्त। उत्तरस्यां मघादित्रयाणां शून्यं द्वादश त्रयोदश। दक्षिणस्यां हस्तचित्रयोरेकादश द्वौ। अनन्तरं स्वात्या उत्तरदिशि सप्तत्रिंशत्। दक्षिणस्यां विशाखादीनां षण्णां सार्धैकः त्रयं चत्वारः। नव सार्ध-पञ्च पञ्च क्रमेण उत्तरदिशि तथा विक्षेपभागा अभि-जितः षष्टिः। श्रवणस्य त्रिंशत्। धनिष्ठायाः षट्-त्रिंशत्। एवकारो न्यूनाधिकव्यवच्छेदार्थः। चकारः पूरणार्थः। दक्षिणस्यां तुकारस्तथा। अर्धभागः शत-तारायाः। तुकारस्तथा। उत्तरस्यां पूर्वभाद्रपदा-याश्चतुर्विंशतिः। तस्यामेव दिशि भागा विक्षेपभागा उत्तरभाद्रपदायाः षड्विंशतिः। रेवत्या विक्षेपाभावः। चकारः पूरणार्थः" र० ना०॥ अत्र स्पष्टत्वात् अनेकेषां नक्षत्राणां ध्रुवका न दर्शिताः। सि०शि० मिताक्षरायां तु यथाक्रमं सर्वेषां स्फुटतो ध्रुवका दर्शिता यथा

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ· | भ· | कृ· | रो· | मृ· | आ· | पु· | पु· | आ· | म· | पू· | उ· | ह· | चि· |
| ० | ० | १ | १ | २ | २ | ३ | ३ | ३ | ४ | ४ | ५ | ५ | ६ |
| ८ | २० | ८ | २२ | ६ | ७ | ३ | १६ | १८ | ९ | २७ | ५ | २० | ३ |
| ० | ० | २८ | २८ | ० | २० | ० | ० | ० | ० | ० | ० | ० | ० |

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वा· | वि· | अ· | ज्ये· | मू· | पू· | उ· | अ· | श्र· | ध· | श· | पू· | उ· | रे· |
| ६ | ७ | ७ | ७ | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ० |
| १९ | २ | १४ | १९ | १ | १४ | २० | २५ | ८ | २० | २० | २६ | ७ | ० |
| ० | ५ | ५ | ५ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |

विक्षेपा यथा

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ· | भ· | कृ· | रो· | मृ· | आ· | पु· | पु· | आ· | म· | पू· | उ· | ह· | चि· |
| १० | १२ | ४ | ४ | १० | ११ | ६ | ० | ७ | ० | १२ | १२ | १२ | १ |
| | | १० | ३० | | | | | | | | | | ४५ |
| उ | उ | उ | द | द | द | उ | उ | द | उ | उ | उ | द | द |

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वा· | वि· | अ· | ज्ये· | मू· | पू· | उ· | अ· | श्र· | ध· | श· | पू· | उ· | रे· |
| ३७ | १ | १ | ३ | ८ | ५ | ५ | ६२ | ३० | ३६ | ० | २४ | २६ | ० |
| | २० | ४५ | २० | २० | २० | | | | | ३० | | | |
| उ | द | द | द | द | द | द | उ | उ | उ | द | उ | उ | उ |

सि·शि·ग्रहकक्षा अन्यविधा उक्ता यथा

"खार्थाद्रिगोमनुशराब्धिमितार्ककक्षा ४३३१४९७१/२ चान्द्री सहस्रगुणिता जिन२.मसंख्या ३२४०००। अभ्रे श्विभाङ्गगजकुञ्जरगोऽङ्गपक्षाः २५९८८९८५० कक्षां व्रजन्ति गगका भगणस्य चेमाम्" सि·शि· । शेषाणां ग्रहाणां कक्षाप्रमाणानि श्रीपतिनान्यथोक्तानि यथा "कट्रह्मपक्षमनु नन्दाः ८१४६९१६ शशिनन्दनस्य शक्रे मदन्तकृतलेन्दु मिता १०४३२११ च शुक्रेः । रूपाश्विनागयुगशैलगुणेन्दुबाणाः ५१३७४८२१ खाब्धङ्कनागररसोत्कृतयः२६६४६२०मितस्य, भूधराङ्गनगनागरसर्तु चन्द्राधराश्विगधिन:१२७६६८७८७। शनिकक्षा" रव्यादीनां मन्दोच्चादिपरिधिमानञ्च सि·शि· 'मन्दोच्चनीचपरिधिर्विमितिर्नवोमयञ्च १३।४० भागा रवेर्जिनकलोनरदा ३१।२६ हिमांशोः। खाब्धा ७० भुजङ्गदहना ३८ बसरा १२ भवाथ ११ पूर्णेषवो ५० निगदिताः क्षितिजादिकानाम्" सि·शि·। "इह ग्रहभ्रमणोपपत्त्यर्थं मन्दोच्चनीचवृत्तानि पूर्वैः कल्पितानि । तेषां प्रमाणान्येतावन्तो भागाः । अत्रोपपत्तिः । ग्रहस्य दन्तवेधविधिना यत् परमं फलमुत्पद्यते तस्य ज्या परमफलज्यान्त्यफलज्या चोच्यते । अन्त्यफलज्यातुल्यव्यासार्धेन यद्वृत्तमुत्पद्यते तन्नीचोच्चवृत्तम् । तत्परिधिश्चैराशिकेन । यदि त्रिज्याव्यासार्धे भांशाः ३६० परिधिस्तदान्त्यफलज्याव्यासार्धे किमिति लब्धं परिधिभागाः । एवमर्कादीनां त्रिज्यायोगयुक्ता इत्यादय उत्पद्यन्ते । अथ भौमादीनां चलपरिधीनाह" दशि· सौरागमेण सूक्ष्मत्वाद्विरोधः ।

"एषां चलाः क्रतजिनाश्विनवेन हीना २४२।४० दन्तेन्दवो १३२ वसुरसा ६८ वसुबाणदस्राः २५८ । पूर्णाब्धयो ४० ऽथ भृगुजस्य तु मन्दकेन्द्रदोःशिञ्जिनी द्विगुणिता त्रिगुणेन २४२८ भक्ता । लब्धेन मन्दपरिधी रहितः स्फुटः स्यात् तच्छीघ्रकेन्द्रभुजमौर्व्य च बाणनिघ्नी। उत्तरस्यां सप्तर्षिस्थानं सप्तर्षिशब्दे १४५२ पृ· दर्शितं तेषां शतवर्षैरेकैकनक्षत्रभोगकाल समाख्यं वराहसंहितायाञ्च मतोक्तम् । भचक्रस्य द्वादशधा विभक्तमपि अश्विन्यादिभिः सप्तविंशतिनक्षत्रात्मकं तत्र त्रिभिस्त्रिभिर्नक्षत्रैर्नव वीथयः हड़·सं· उक्ता यथा "नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः । अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद्वीथयः कथिताः ॥ नागा तु पवनयाम्यानलानि पैतामहात्त्रिभाः शिवाः । गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भाद्रपदे ॥ जरद्गव्यां श्रवणात् त्रिभं मृगाख्या त्रिभं च मैत्राद्यम् । हस्तविशाखात्वाष्ट्राण्यजेत्यषाढाद्वयं दहना ॥ तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्यमार्गस्थाः । तासामप्युत्तरमध्यदक्षिणावस्थितैकैका ॥ वीथीमार्गानपरे कथयन्ति यथा स्थिता भमार्गस्थ । नक्षत्राणां तारायाम्योत्तरमध्यमाकृहत् ॥ उत्तरमार्गो याम्यादि निगदितो मध्यमस्तु भाग्याद्यः । दक्षिणमार्गोऽप्याषाढादि कैश्चिदेवं कृता मार्गाः" ॥

भचक्रस्यग्रहाणां प्राग्गतिभेदकारणमुक्तं सू·सि· यथा "पश्चाद् व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः" ॥ सू· सि· ।" "पश्चादनन्तरं पुनराक्रम्य पश्चात् पश्चिमदिगभिमुखं नक्षत्रैस्तारकादिभिः सह ग्रहाः सूर्यादयोऽतिजवात् प्रवहवायुप्रखरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्गगाः स्वकक्षाश्रितास्ते जीयमाना नक्षत्रैः पराजिता नक्षत्राणामपेक्षया गमनात्। अत एव लम्बन्ते गुरुभूता इति तात्पर्यार्थः। तुल्यं समम् । एवकारादधिकन्यूनव्यवच्छेदः । लम्बन्ते स्वस्थानात् पूर्वं स्थित्तुल्यायमाना भवन्ति। यथा चलितः पश्चाद्भवति नाग्रे । तुकारादधोऽधः कक्षाक्रमान्तरोधेन मन्दादिग्रहाणां चन्द्रान्तानां गुरुतापचयः शनि-

इतिगुरुभूतत्वात् किञ्चिन्न्यूनो गुरुत्वादपि भौम इत्यादि यथोत्तरम्। यस्य कक्षा महती तस्य गुरुत्वाधिक्यं यस्य लघ्वी तस्य तदनुरोधेन गुरुत्वाल्पत्वमिति। एतदुक्तं भवति। ब्रह्मणा प्रवहवायौ नक्षत्राधिष्ठितो मूर्त्तो गोलः स्थापित-स्तदन्तर्गताः खस्थाकाशगोलस्थाः शन्याद्यो नक्षत्राधिष्ठित-मूर्त्तगोलस्थक्रान्तिवृत्तस्थरेवतीयोगताराग्रस्वरूपमेषादिप्रदेश-समन्ततस्थाः स्थापिताः। क्रान्तिवृत्तं तु मेषतुलास्थाने-विषुवद्वृत्तलग्नसम्पातात् त्रिभान्तरितक्रान्तिवृत्तप्रदेशौ स्व-स्वविषुवद्वृत्तप्रदेशाभ्यां चतुर्विंशत्यंशान्तरेण दक्षिणोत्तरौ मकरकर्कादिरूपौ तद्देशं द्वादशराश्यात्मकं वृत्तं ग्रहचारभू-तम्। विषुवद्वृत्तं तु ध्रुवमध्यस्थं निरक्षदेशोपरिगम्। तत्र प्रवहवायुना स्वाघातेन मूर्त्तो नक्षत्रगोलो षष्टिघटी-भिः परिवर्त्तते। तदन्तर्गतवायुभिस्तदाघातेन वा ग्रहा भ्रमन्तोऽपि नक्षत्रगोलस्थितक्रान्तिवृत्तीयमेषादिप्रदेशेन समं न गच्छन्ति वायूनां स्वल्पत्वात् तदाघातस्याप्यल्पत्वाद्ग्र-हाणां गुरुत्वाच्च। अतस्तत्स्थानाद्ग्रहाणां लम्बनं दृश्यते। अत एव नक्षत्रोदयकाले तेषां द्वितीयदिने नोदयः किन्तु ग्रहो लम्बितप्रदेशेन वायुना तदनन्तर-मूर्द्धभागस्थितोऽनन्तरमुदयः। लम्बनं तु शन्यादीनां कक्षानुरोधेन गुरुत्वाद्वायूनां तद्घातानां वा कक्षानुरोधेन बह्वल्पत्वात् तुल्यम्। यद्यपि वायोर्ध्रुवानुरोधेन सत्त्वा-द्ग्रहलम्बनं विषुवद्वृत्ते भवितुमुचितं न क्रान्तिवृत्ते, तथा च वक्ष्यमाणक्रान्त्यनुपपत्तिः क्रान्तिवृत्तस्थद्वादश-राशिभोगेन वक्ष्यमाणानां भगणानामनुपपत्तिश्च। तथापि वायुनावलम्बितो ग्रहो विषुवन्मार्गेऽपि तद्विषुवत्प्रदेशा-सन्नक्रान्तिवृत्तप्रदेशेन ग्रहाकाशगोल एव स्वसमण्डले चा-लयत इति नानुपपत्तिः। अत एव खमार्गगा इति क्रान्तिवृत्तानुसृताकाशगोलस्थकक्षामार्गगता इत्यर्थक-मुक्तमिति सङ्क्षेपः। अत एव ग्रहाणां लोके प्राग्गतित्वं सिद्धमित्याह" र॰ना॰।

"प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः। परिणा-हवशाद्भिन्ना तद्वशाद्भानि भुञ्जते" सू॰सि॰। "अतो ऽवलम्बनादेव तेषां ग्रहाणां प्राग्गतित्वं प्राच्यां दिशि गतिर्येषां ते प्राग्गतयस्तद्भावः प्राग्गतित्वं सिद्धम्। लम्बनस्वरूपैव ग्रहाणां पूर्वगतिरुपपन्ना लोकैः कारणा-नभिज्ञैः प्रत्यक्षागततया तत्क्रियाजनिता कल्पितेत्यर्थः। सा किंरूपेत्यत आह। भगणैरिति। वक्ष्यमाणभग-णैः प्रत्यहं प्रतिदिनं गतिः प्राग्गमनरूपा भगणानां यदि गत्युपपन्नत्वाद्भगणसम्बन्धिवक्ष्यमाणदिनैः सूर्यसावनै-र्भगणा लभ्यन्ते तदैकेन दिनेन केत्यनुपातात्सिद्धा। ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगति-र्भिन्नेति पूर्वं लम्बनरूपा ग्रहगतिरयुक्तोक्ता ग्रहलम्बन-स्याभिन्नत्वादित्यत आह परिणाहवशादिति। परि-णाहः कक्षापरिधिस्तद्वशात् तदनुरोधादियं ग्रहगति-र्भिन्नाऽतुल्या। अयमभिप्रायः। ग्रहाणां लम्बनं तुल्यप्रदेशे न, परन्तु स्वस्वकक्षायां तत्तत्प्रदेशे तुल्ये याः कलास्ता गतिकलास्तास्तु गच्छति कक्षाल्पत्वेऽल्पा बहु-कक्षात्वे बह्व्यः सर्वकक्षापरिधीनां चक्रकलाङ्कितत्वात् भगणास्तु गतिवशादेव यस्य कक्षावृत्तं महत् तस्याल्पा यस्य च लघु कक्षावृत्तं तस्य बहवस्तदुपपन्ना गतिरपि तथेति न विरोधः। नन्वेकरूपगतिं विहाय भिन्नरूपा गतिः कथमङ्गीकृतेत्यत आह। तद्वशादिति भिन्न-गतिवशाद्भानि राशीन् नक्षत्राणि भुञ्जते ग्रहा भुञ्जन्ती-त्यर्थः। तथा च ग्रहराश्यादिभोगस्य नानाविधत्वेन गतिरूपयुक्ता नैकरूपेति भावः। अत भभोगे विशेषं वदन् वक्ष्यमाणभगणस्वरूपमाह" र॰ना॰। "शीघ्रगस्ता-न्यथाल्पेन कालेन महताल्पगः। तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू॰सि॰। "अथ तद्भः पूर्वोक्त-विशेषकथकः शीघ्रगतिग्रहस्तानि भान्यल्पेन कालेन भुनक्त्यल्पगतिर्ग्रहो महता कालेन भुनक्ति तुल्यराश्यादि-भोगो मन्दशीघ्रगतिग्रहयोस्तुल्यकालेन न भवतीति विशेषार्थः। तेषां राशीनां परिवर्त्तेन भ्रमणेन। तुला-राद्युपक्रान्तिगतिभोगजनितेन भगणः प्रागुक्तः। क्रा-न्तिवृत्ते द्वादशराशीनां सत्त्वात् तद्भोगेन चक्रभोगसमा-प्तेर्यत् स्थानमारभ्य चलितो ग्रहः पुनस्तत् स्थानमायाति स चक्रभोगः परिवर्त्तसञ्ज्ञोऽपि द्वादशराशिभोगाद्भगण इत्यर्थः। ननु क्रान्तिवृत्ते सर्वप्रदेशेभ्यः परिवर्त्तसम्भवा-दत्र कः परिवर्त्तादिभूतः प्रदेश इत्यत आह पौष्णान्त इति। सृष्ट्यादौ ब्रह्मणा क्रान्तिवृत्ते रेवतीयोगताराऽऽ-सन्नप्रदेशे सर्वग्रहाणां निवेशितत्वात् तदवधितो ग्रहचल-नाच्च पौष्णस्य रेवतीयोगताराया अन्ते निकटे प्रदेशे तथा च रेवतीयोगतारासन्नस्थानमेवाद्यन्तावधि-भूतमिति भावः" र॰ना॰।

सूर्य्यादिग्रहाणां महायुगे भगणमानमुक्तं तत्रैव।

"युगे सूर्य्यज्ञशुक्राणां खचतुष्करदार्णवाः। कुजा-र्किगुरुशीघ्राणां भगणाः पूर्वयायिनाम्" सू॰सि॰। 'षड्रा-

अवशिष्टा ये चान्द्रमासास्तेऽधिमासा एव भवन्ति नान्ये। अनेन चान्द्रत्वमधिमासानां स्फुटीकृतम्। अत्रोपपत्तिः। त्रिंशत्तिथ्यात्मकस्य रवीन्दुयुतिकालरूपदर्शान्तावधिचान्द्र-मासस्य द्वादशराशिमितेन सूर्यचन्द्रान्तरेणैव सिद्धिः। कथमन्यथा दर्शान्ते सन्दृशीभवतोः सूर्यचन्द्रयोर्योगस्य पुनर्दर्शान्ते सम्भवः। द्वादशराश्यन्तरं त्वेकं भगणान्तर-मतो भगणान्तरेण चान्द्रो मासः सिद्धः। सौरमासा-मेवत्र यदन्तरेण चान्द्रमासानामधिकत्वं त एवाधिमासा इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्। अथ वक्ष्यमाणावमसूर्यसावनयोः स्वरूपमाह" र० ना०। "सावनाह्वानि चान्द्रेभ्यो द्युभ्यः प्रोज्झ्य तिथिक्षयाः। उदयादोदयं भानोर्भूमिसावनवासराः"। चान्द्रेभ्यो द्युभ्यो वक्ष्यमाणचान्द्रदिवसेभ्यः सकाशादित्यर्थः। सावनाह्वानि सावनदिनानि प्रोज्झ्य त्यक्त्वावशेषं तिथिक्षयाः। तिथिषु चान्द्रदिनेषु सावनदिनानामवशेषतुल्यः क्षयो न्यूनत्वम्। यद्वा तिथिशब्देन सावनो दिवसस्तस्य चान्द्रदिवसात् क्षय इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्। ननु भोदया भगणैरित्यादिना पूर्वं सर्वेषां सावनदिवसा उक्ता इत्यत्र कस्य साह्रा इत्यतः सूर्यसावनस्वरूपकथन-व्याजेनोत्तरमाह। उदयादिति। सूर्यस्योदयकाल-मारभ्याव्यवहिततदुदयकालपर्यन्तं यः कालः स एको-दिवसः। इति ये दिवसास्ते भूमिसावनवासराः। भूदिवसा इदस्य भूसम्बन्धेनागमात्। सावनादिवसा-र्थेत्यर्थः। तथा च निरुपपदसावनभूमिशब्दाभ्यां सूर्यस्य वासरा एव नान्येषां सोपपदत्वाभावादिति भावः। ते कियन्त इत्यतस्तत्प्रमाणं चान्द्रदिनप्रमाणं चाह"र०ना० "वसुद्व्यष्टाद्रिरूपाङ्कसप्ताद्रितिथयो युगे। चान्द्राः खा-ष्टखखव्योमखाग्निखर्त्तुनिशाकराः" सू०। "खटाद्रि-गजषट्सप्तपत्तुभूमिता युगे सूर्यस्य सावनदिवसाः। चान्द्रा दिवसा युगनियम इत्यर्थः। अशीतिशून्यचतुष्कतिथ-रूपा एते त्रिंशद्भक्ताश्चान्द्रमासा उत्पाद्याः। अनेनैव चान्द्रदिनानामुपपत्तिः सूर्यचन्द्रयोर्भगणयोरन्तररूप-चान्द्रमासास्त्रिंशद्गुणिता इति स्फुटीकृता। अथाधि-मासावमयोः संख्यामाह" र०ना०। "षट्पञ्चत्रिहुता-शाङ्गतिथयश्चाधिमासकाः। तिथिक्षया यमार्थाक्षिद्व्यष्ट-व्योमशराश्विनः" सू०। "अधिमासकाः प्रागुक्तस्वरूपा-श्चाराद्युगे षट्‌देशशामगोशरेन्दुमिताश्चाधिकचया दिन-क्षया अवमानीत्यर्थः। अवयोः पञ्च। एवं हिमराश्च-

इत्यतस्त्यानि। ननु सूर्यमासान्तरेऽधिमासकसंख्या कथं ज्ञातेत्यतो रविमासकसंख्यां स्वरूपेण कथयन्नाह" र०ना०। "अचतुष्कशतद्वाष्टकृपष्ठ रविमासकाः। भवन्ति भो-दयाभानुभगणैरूनिताः कुहाः" सू०। "सूर्यमासा द्वादशगुणितरविभगणानुरूपाः शून्यचतुष्कवेदर्त्तुशर-मिताः। ननु सावनदिवससंख्या प्रागुक्ता कथमागते-त्याह। भवन्तीति। भोदया नाक्षत्रदिवसाः प्रागुक्ताः सूर्यस्य भगणैः प्रागुक्तैर्वर्जिताः सन्तः कुहा भूवासरा भवन्ति। भोदया इत्यादिप्रागुक्तेः।

ननु सूर्यादिमन्दोच्चभौमादिपातानां युगे भगणानुत्पत्तेः कल्पभगणकथनमावश्यकमतस्तत्पठ्यन्त्यां प्रागुक्ता एते भगणादयः कल्प एव कथं नोक्ता इत्यत आह" र०ना०। "प्राग्गतेः सूर्यमन्दस्य कल्पे सप्ताष्टवह्नयः। कौजस्य वेदखयमा बौधस्याष्टर्त्तुवह्नयः। खखरन्ध्राणि जैवस्य शौक्रस्यार्थगुणेषवः। गोऽग्नयः शनिमन्दस्य पातानामथ वामतः" सू० सि०। प्राग्गतेः कल्प इत्यनयोः शनि-मन्दान्तं प्रत्येकं सम्बन्धः। पूर्वगतेः सूर्यमन्दोच्चस्य कल्पे सप्ताष्टरामसिताः ३८७ शनिपातस्य भगणा इति वक्ष्यमाणस्य भगणा इति पदस्य प्रत्येकमन्वेति। कौजस्य कुजसम्बन्धिनः सूर्यमन्दस्येत्यस्यैकदेशो मन्दस्येति म-न्दोच्चस्येत्यर्थकमत्राप्येति। तथा च भौममन्दोच्चस्य चतुरधिकं शतद्वयम् २०४। बौधस्य बुधमन्दोच्चस्याष्टषष्टि-मिताः ३६८। जैवस्य गुरुसम्बन्धिनः। अत्र शनिमन्दस्येति वक्ष्यमाणस्यैकदेशो मन्दस्येति मन्दोच्चस्येत्यर्थकमन्वे-तव्यत्वात्। यद्वाप्यनयोर्मन्दस्येत्युभयत्र मध्यस्थाना-मन्वयः सूपपन्न इति। तथा च गुरुमन्दोच्चस्य नवशतं ९०० शौक्रस्य शुक्रमन्दोच्चस्य पञ्चत्रिंशदधिकपञ्चशतं ५३५ शनि-मन्दोच्चस्यैकोनचत्वारिंशत् ३९। अथानन्तरं पातानां भौमादिपातानां वामतः पश्चिमगत्या भगणा उच्यन्त इति शेषः तान् श्लोकाभ्यामाह" र० ना०। "मनुदस्रास्तु कौजस्य बौधस्याष्टाष्टसागराः। कृताद्रिचन्द्रा जैवस्य त्रिखाङ्काश्च भृगोस्तथा। शनिपातस्य भगणाः कल्पे यमरसर्त्तवः। भगणाः पूर्वमेवात्र प्रोक्ताश्चन्द्रोच्चपातयोः"। सू० सि०। "कुजसम्बन्धिनः। तत्कारात् पातस्य भौ-मपातस्य कल्पे भगणाश्चतुर्दशाधिकं शतद्वयम् २१४। बौधस्य बुधसम्बन्धिनः शनिपातस्येत्यस्यैकदेशः पातस्येत्य-त्राप्येति। बुधपातस्य द्वादशोना पञ्चशती ४८८। जैवस्य गुरुपातस्य चतुःसप्तत्यधिकं शतम् १७४। भृगोः शुक्रस्य

तथा स शन्निनक्षत्रात् पातस्य शुक्रपातस्य व्यर्थः। अत्र-धिका नवमतो९०२। शनिपातस्य द्विरसषट्का ६६२भगणाः कल्पे भवन्ति। नन्वस्मिन् ग्रन्थे चन्द्रस्योच्चपातयोर्भगणाः कथं नोक्ता इति मन्दावबोधाय प्रयोजनं पूर्वोक्तं स्मारयति। भगणा इति। चन्द्रोच्चपातयोश्चन्द्र मन्दोच्चपातयोर्भगणा च माक्रिस्याधिकारे पूर्वं पाठयुगभगणकथने। एतकारो विस्मरण निरासार्थकः “शोक्ताश्चन्द्रोच्चस्य त्या दशोकेनोक्ताः” इत्या०। कुजादिकक्षाणां भूमिमध्यत उच्छ्रितिः श्रीपतिनोक्ता यथा भौमस्य गोकुरसमषभुवसूर्यसंख्या १२९६२१८ इनाश्चयम्-स्वर्दमिता १६६०२२ शतिरिन्दुजस्य। एतदस्य नागगुण-पञ्चरसाद्रिभूमि नागाव ८१७६१२८ सर्पगजसाश्विय-माश्वयोऽथ ४२४०८८। शुक्रस्य, सूर्यतनयस्य कुशप्रवाह भूतमधृदश्रमित १०२१८०७। योजनकर्ण एवम्। नागाश्व-षड्भिरसाग्निकुवेदसंख्यो ४१२६२६५८ नक्षत्रमण्डलभवः श्रवणो निरुक्तः”। सि०शि० विशेष उक्तः।

“स्रष्टा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः। शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे। ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि। तदल्पगत्वेन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतराश्चवर्त्मसु” मू०। “यदेतद्भचक्रं ग्रहैः सह भूपदर्श्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ सृष्टा ततः शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम्। एतदुक्तं भवति। भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहश्चक्रं ग्रहाश्च सूर्या-दयस्तैः सह सृष्टम्। तानि भानि प्राक् संस्थया सम-न्तान्निवेशितानि। ग्रहास्तु भगणादावश्विनीमुखे निवे-शितास्त उपर्युपरि संस्थया। तत्रादौ तावदधश्चन्द्रः। तदुपरि बुधः। ततः शुक्रः। ततो रविः। तस्मा-द्भौमः। ततो गुरुः। ततः शनिः। सर्वेषामुपरि दूरे भचक्रम्। एषां कक्षाप्रमाणानि कक्षाध्याये प्रति-पादयिष्यन्ते। कश्चो यद्यूर्ध्वोर्ध्वस्था ग्रहास्तदुपरि दूरतो भगणस्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते। उच्यते। अत्र भूमध्ये सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम्। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवे-शिताः। भूमण्डलं द्वादशधा विभज्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः तत्र ग्रहकक्षायां ये संपातास्ते तत्र कक्षाद्राशयः।

तद्वत्प्रकारा राशय इति सर्वत्रप्रसिद्धोक्तम्। कक्षाध्याये गोले च किञ्चिद्विस्तीर्णं वक्ष्यामः। एवंविधं भचक्रं सृष्टा ब्रह्मणा गगने निवेशितम्। यत्र निवेशितं तत्र प्रवहो नाम वायुः। स च नित्यं प्रत्यग्गतिः। तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम्। यत् तस्य प्रत्यग्भ्रमणं तच्छीघ्रतरम्। यत एकेनाह्ना भमण्डलस्य परिवर्त्तः। एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति। नीचोच्चतराश्चवर्त्मसु। अनन्तरकथितेषु स्वस्व-मार्गेषु तेषां प्राग्भ्रमणम्। तत् तदल्पगत्या प्रत्यग्-गतेर्बहुत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्ते इति भावः। तथा तस्य भपञ्जरस्य यौ दक्षिणोत्तरावन्तौ तत्र द्वे तारे ते ध्रुवत्वे नियुक्ते” प्रमिता०। सि०शि० ग्रहाणां केषां चित् कल्पे भगणा अन्यथोक्ता यथा।

“अर्कशुक्रबुधपर्यया विधेरह्नि कोटिगुणिता रदाब्धयः ४३२००००००। इत एव शनिजीवभूभुवां कीर्त्तिताश्च गणकैश्चलोच्चजाः। खाभ्रखाभ्रगगनामरेन्द्रियच्छापरा-द्रिविषया ५७७५३३०००० हिमद्युतेः। युग्मयुग्म-शरनागनोषनव्याङ्कपञ्चयमाऽश्विनो २२९६८२८५२२ ऽब्जजः। सिन्धुसिन्धुरनवाष्टगोऽङ्कषट्सप्तसिद्धभूमयोऽश्विनो १७९३६९९८९८४ शशीघ्रजाः। षट्पञ्चयुगषट्कलोचन-द्व्यब्धिरद्गुणिता ३६४२२६४५५ गुरोर्मताः। द्विनन्द-वेदाङ्कगजाग्निलोचनद्विन्दुस्वगैश्चाः ७०२२३८९४९२ सित-शीघ्रपर्ययाः। भुजङ्गनन्दद्विनगाङ्कवाणषट्कर्तेन्द्रवः १४६५६७०२९८ सूर्यसुतस्य पर्ययाः। खाष्टाब्धयो ४८० ऽष्टाश्वगजेषुदिग्द्विपद्विपाब्धयो ४८८१०५८५८ द्वाङ्कयमा २९२ रदाग्नयः ३३२। शरेभिभा ८५५ स्वयमरसाः ६५२ कृशानवः ४१ सुः पूर्वगत्या तदपेर्क्षदूरजाः। गजाष्टिभर्गविरदाश्विनः १ २३२३१११६८ कृष्णप्रमाश्विनः २६७ कृत्तिशराः ५२१ भूमर्त्तवः ६३। त्रिनन्दनागा ८९३ युगकृष्णरेखवो१४८४ निशाकराद्यस्तगपातपर्ययाः” इ०।

ग्रहाणां पूर्वगत्या गच्छतां कल्पे एतावन्तो भगणा भवन्ति। तथा मन्दोच्चानां चलोच्चानां च प्राग्गत्या एता-वन्तः पर्यया भवन्ति। तथा पातानां पश्चिमगत्या एता-वन्तो भवन्ति। अत्रोपपत्तिः। सा तु तत्तद्भागकथनेन तत्तत्क्षेत्रसंस्थानज्ञेन श्रुतगोलेनैव श्रोतुं शक्यते नान्येन। ग्रहमन्दशीघ्रोच्चपाताः स्वस्वमार्गेषु गच्छन्तः एतावन्तः पर्ययान् कल्पे कुर्वन्तीत्यागम एव प्रमाणम्। स

चागमो महता कालेन हेतुकाध्यापकाध्येतृदोषैर्बहुधा जातस्तदा कतमत्र प्रमाणम्। अथ यद्येवमुच्यते गणितस्कन्ध उपपत्तिमानेव गमः प्रमाणम्। उपपत्त्या ये सिध्यन्ति भगणास्ते ग्राह्याः। तदपि न। यतोऽतिमहता कालेन पुरुषेणोपपत्तिर्ज्ञातुमेव शक्यते। न तथा तेषां भगणानामियत्ता कर्त्तुं शक्यते पुरुषायुषोऽल्पत्वात्। उपपत्तौ तु पक्षः प्रत्यहं यन्त्रेण वेध्यः भगणान्तं यावत्। एवं शनैश्चरस्य तावत्‌ वर्षाणि त्रिंशता भगणः पूर्यते। मन्दोच्चानां तु बहुभिरनेकैः। अतो नायमर्थः पुरुषसाध्य इति। अत एवातिप्राज्ञा गणकाः साम्प्रतोपलब्ध्यनुसारिणं प्रौढगणकस्वीकृतं कमप्यागममङ्गीकृत्य ग्रहगणित आगमो गणितगोलयोर्निरतिशयं कौशलं दर्शयितुं तथान्यैर्भ्रान्तिज्ञानेनान्यथोदितानर्थांश्च निराकर्त्तुमन्वात्‌ ग्रन्थान् रचयन्ति। ग्रहगणित इति कर्त्तव्यतायामप्रमाणिः कौशलं दर्शनीयं भवत्यागमो योऽपि कोऽप्यत्र मानयतां णाम्। यथात्र पञ्चे ब्रह्मगुप्तस्वीकृतागमोऽङ्गीकृत इति। तर्हि तिष्ठतु तावदुपपत्त्या भगणानामियत्तासाधनम्। अथ यदुपपत्तिरुच्यते तर्हि इतरेतराश्रयदोषशङ्कया वक्तुमशक्या। तथापि किञ्चिद्रसुपपत्तिं वक्ष्यामः। इतरेतराश्रयदोषोऽत्र दोषाभावः। उपपत्तिभेदानां योगरूढ्येन वक्तुमशक्यत्वात्। यथोच्यते सर्वगुरुकरुधयाविधेरित्यादि। यावन्ति कल्पे वर्षाणि तावन्त एव सूर्यभगणा इत्युपपन्नम्। यतो भगणभोगकालो हि वर्षसंज्ञम्। बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित्‌ पृष्ठतश्चानुचरादिव सदा भ्रमन्तौ दृश्येते। अतस्तयोरपि रविभगणतुल्या भगणा इत्युपपन्नम्। चन्द्रोच्चभगणोपपत्तिमग्रे वक्ष्यामः। अथ समायां भूमावभीष्टकर्कटकेन त्रिज्याप्रमाणेन वृत्तं दिगङ्कितं भगणांशैरङ्कितं कृत्वा तत्र प्राचीचिह्नादुदक्चले नातिदूरे प्रदेशे उत्तरेऽयने वृत्तमध्यस्थितेन कीलेन रवेरुदयो वेध्यः। ततोऽनन्तरं वर्षमेकं रव्युदया गणनीयाः। ते च पञ्चषष्ट्यधिकशतत्रय ३६५ तुल्या भवन्ति। तत्रान्तिमोदयः पूर्वोदयस्थानादासन्नो दृश्यत एव भवति। तयोरन्तरं विगणय्य पाठम्। ततोऽन्यस्मिन् दिने पुनरुदयो वेध्यः। स तु पूर्वचिह्नादुत्तरत एव भवति। तदप्यन्तरमन्तरं पाठम्। ततोऽनुपातः। यद्यन्तरद्वितयकलाभिरेकोनताभिः षष्टि ६० घटिका लभ्यन्ते तदा दृश्यमानान्तरेण किमिति। अत लभ्यन्ते

पञ्चदश घटिकाः स्वांशत्‌ पलानि सार्धानि द्वाविंशतिर्विपलानि १५। ३०। २२। ३०। आभिर्घटीभिः सहितानि पञ्चषष्ट्यधिकशतत्रयतुल्यानि सावनदिनान्येकस्मिन् रव्यब्दे भवन्ति ३६५। १५। ३०। २२। ३०। ततोऽनुपातः। यद्येकेन वर्षेणैतावन्ति कुदिनानि तदा कल्पवर्षैः किमिति। एवं ये लभ्यन्ते ते सावनदिवसा भवन्ति कल्पे। अथ यदि तैरेव रवेर्भगणैः पार्थिवैः कुदिनैश्चकला लभ्यन्ते तदैकेन किमिति। फलं मध्यमा रविगतिरित्युपपन्नम्। अथ चन्द्रभगणोपपत्तिः। तत्रादौ तावद् ग्रहवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्यम्। तत्र खगोलस्यान्तर्गोल आधारवृत्तद्वयोपरि विषुवद्वृत्तम्। तत्र च यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बध्वा कदम्बद्वयकीलकयोः प्रोतमन्यद्वृत्तं ग्रहवेधवलयम्। तच्च भगणांशाङ्कितं कार्यम्। तत्र खगोलयन्त्रं सम्यग् ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा कृत्वा रात्रौ गोलमध्यचिह्नगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते यो मीनान्तस्तं रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्या चन्द्रं विलोक्य तद्वेधवलयं चन्द्रोपरि निवेश्यम्। एवं कृते सति वेधवृत्तस्य क्रान्तिवृत्तस्य च यः सम्पातस्तस्य मीनान्तस्य च यावदन्तरं तस्मिन् काले तावान् स्फुटचन्द्रो वेदितव्यः। क्रान्तिवृत्तस्य चन्द्रबिम्बमध्यस्य च वेधवृत्ते यावदन्तरं तावांस्तस्य विक्षेपः। ततो यावतीषु रात्रिगतघटिकासु वेधः कृतस्तावतीष्वेव पुनर्द्वितीयदिने कर्त्तव्यः। एवं द्वितीयदिने स्फुटचन्द्रं ज्ञात्वा तयोर्यदन्तरं सा तद्दिने स्फुटा गतिः। अथ तौ चन्द्रौ "स्फुटयुक्तं मध्यमं प्रकल्प्य ग्रहार्द्धमा" मध्यमौ कृत्वा तयोरन्तरं या मध्यमा चन्द्रगतिः। तदाऽनुपातः। यद्येकेन दिनेनैतावती चन्द्रगतिस्तदा कुदिनैः किमित्येवं चन्द्रभगणा उत्पद्यन्ते। तथा चाह श्रीमान् ब्रह्मगुप्तः "ज्ञातं कृत्वा मध्यं भूयोऽन्यदिने तदन्तरं भुक्तिः। त्रैराशिकेन भुक्त्या कल्पग्रहमण्डलानयनम्" ॥ एवमन्येषामपि भगणोपपत्तिः। अथ चन्द्रोच्चस्य। एवं प्रत्यहं चन्द्रवेधं कृत्वा स्फुटगतयो विलोक्याः। यस्मिन् दिने गतेः परमाल्पत्वं दृष्टं तत्र दिने मध्यम एव स्फुटचन्द्रो भवति। तदेवोच्चस्थानम्। यत उच्चगते ग्रहे फलाभावो गतेश्च परमाल्पत्वम्। ततश्च तस्माद्दिनादारभ्यान्येषां चन्द्रपर्यये प्रत्यहं चन्द्रवेधात् तदेवोच्चस्थानं ज्ञेयम्। तत्र

भूगोलवेगजनितेन समीरणेन केत्वादयोऽप्यपरदिग्गतयः सदा स्युः । प्रासादभूधरशिरांस्यपि संपतन्ति तस्माद्भ्रमत्युडुगणस्त्वथ वाऽऽवहेन" । एतन्नाप्यसि 'यदि च भ्रमति क्ष्मा तदा स्वकुलायं कथमाप्नुयुः खगाः । इषवोऽभिनभः समुज्झिता निपतन्तः स्युरपांपतेर्दिशि । पूर्वतोऽभिमुखे भवेद्भुवो वरुणाशाभिमुखो व्रजेद्धनः । अथ मन्दगमात्तथा भवेत् कथमेकेन दिवा परिभ्रमः" इत्याह ।

सि॰ शि॰ भूमेरेव स्थिरत्वं व्यवस्थापितं यथा "भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम् । नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात् । सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः । कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव" सि॰ शि॰ । "योऽयं मृदनिलसलिलव्योमतेजोमय इति पाञ्चभौतिको भूमेः पिण्डो वृत्तो वर्तुलाकारश्चन्द्रादिकक्षैः शशाङ्कादिकक्षावृत्तैरावृतः स चानन्याधारः स्वशक्त्यैव नियतं निश्चितं वियत्याकाशे तिष्ठति । तत्पृष्ठनिष्ठं च जगत् । सदनुजमनुजादित्यदैत्यम् । दनुजा दानवाः । मनुजा मानवाः । आदित्या देवाः । दैत्या असुराः । तैः समेतं समन्तात् तिष्ठति । शेषं स्पष्टार्थम्" प्रमि॰ । इदानीं पुराणेषु भूमेराधारपरम्परा या पठिता तां निराकर्तुमाह । "मूर्ती धर्ता चेद्धरित्र्यास्ततोऽन्यस्तस्याप्यन्योऽप्येवमत्रानवस्था । अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये किं नो भूमेः साष्टमूर्तेश्च मूर्तिः" सि॰शि॰ । कथमियं भूमेः स्वशक्तिरित्याशङ्कां परिहरन्नाह । "यथोष्णताऽर्कानलयोश्च शीतता विधौ, द्रुतिः के कठिनत्वमश्मनि । मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः । आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या । आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे" सि॰शि॰ । "आकृष्टिशक्तिश्च महीत्यनेन भूमेरधःपतनशङ्का तत्तिर्यगधःस्थितानां चाधःपतनशङ्का निरस्ता" प्रमि॰ । तथान्यत्रापि युक्तिभाव दर्शिता यथा "स्थिरोऽस्याङ्गा प्रवहस्य परिभ्रमम्" । "यदा भरण्यास्थो रविर्भवति तदा तस्यास्तमयकाले ध्रुवमत्स्यस्तिर्यक्स्थो भवति । तस्य रुचकतारा पश्चिमतः, शुक्लतारा पूर्वतः । तदा रुचकतारास्तमये रविरस्तमेति । अथ निशावसाने रुचकतारा परिवृत्य पूर्वतो याति । शुक्लतारा पश्चिमतो याति ।

ततो रुचकतारास्तमयगतस्यैवार्कस्योदयो दृश्यते" प्रमि॰ । अत्रायमाशयः यदि भूमेरेव चलनं न भचक्रस्य चलनमङ्गीक्रियेत तदा ध्रुवमत्स्यस्य ध्रुवतारानिकटस्थाने भचक्रे स्थितस्य स्थूलताराकतारादयस्य ध्रुवचतुर्दिक्षु भचक्रभ्रमणवत् पश्चात् प्रत्यङ्मुखेनाङ्गा परिभ्रमणं दृश्यते भरण्यास्थे सूर्ये च तस्यास्तमयकाले ध्रुवमत्स्यस्य रुचकतारायाः पश्चिमस्थत्वं शुक्लतारायाश्च पूर्वस्थत्वं दृश्यते दृश्यते च निशावसाने तयोर्दिग्विपर्ययः । भूमेरेव चलनात् तस्योदयास्तमयस्वीकारे यथास्थितैकदेशावस्थानमपि दृश्येत न च तथा दृश्यते । अतो भचक्रस्यैव चलनात् सर्वव्यवहारोपपत्तौ मुधा भूमिचलनाङ्गीकारेण । एवं सप्तर्षिमण्डलस्य मरीच्यादिक्रमेण निशामुखे उदयसमये पूर्वस्थत्वमस्तमयकाले निशावसाने च तद्विपर्ययेणावस्थानं भचक्रभ्रमणं विनाऽनुपपन्नमेव तेषां च राशिचक्रे यथा पूर्वादिक्रमेण स्थितिः सतदर्पणेकैकनक्षत्रभोगपद्या ऋषिशब्दे १४६१पृ॰ दर्शितम् । यत्तु श्रीपतिना "प्रासादशिरांसि पतन्तीति" यदुक्तं तदपास्तम् भूमेः खोर्ध्वाकाशविभागस्थानस्थानां तथाकर्षणेनैव भूमौ पतनमिति नियमेन स्वाधिष्ठिततया भूमौ तस्यैवाधोभागतत्वेन पतनसम्भवात् तेन न प्रासादशिरःपतनसम्भवः "क्वाधःपतेदिति वाक्यपर्यालोचनया तथैवावगमादिति सुधीभिर्भाव्यम् । भूचलने अन्येऽपि दोषाः सम्भवन्ति । तथाहि पूर्वापरभागे तुल्यवत्वे बालस्य क्षिप्तशरयोः समान्तरेण प्रत्यक्षसिद्धा समता गत्या च तुल्यभूमिभागे एव तयोः पतनमुचितम् । भूमेः प्राग्गतित्वाङ्गीकारे च प्राक्क्षिप्तस्याधिकभूम्यन्तरे, पश्चात्क्षिप्तस्य चाल्पभूम्यन्तरे पतनं स्यात् । न च तथा लक्ष्यते । किन्तु द्वादशयोजनात्मकभूवायुना सार्द्धं भूमेः प्राग्गतिस्वीकर्तृणामिनस्योदक्ज्योतिर्विदां मतेऽपि प्राग्गतेः शरस्य वायुकृतत्वादपि अधिकगतित्वं प्रत्यग्गतेस्तु प्रतिकूलवायुना प्रतिरोधात् अल्पगतित्वमपि सर्वतोऽनुकूलप्रतिकूलगतिमतोर्गतिभेदवत् स्यात् ।

किञ्च आर्यभट्टमते भूमेः स्वकक्षायामेव भ्रमणाङ्गीकारेऽपि इंलण्डीयज्योतिर्भिः प्रत्यक्षं भूमेरेककालं प्राग्गमनेऽपि पर्येण च क्रमशः सूर्यमण्डलभ्रमणमुररीकृतं तथाऽङ्गीकारे च भूमेः विषुवद्दृश्यानावधि षड्राशिषु क्रमशो वेष्टनाकारेणोर्द्धं गत्वा षण्मासोत्तरं सूर्यस्योर्द्ध्वं स्थितिः स्यात् । तथा च तदानीं सूर्यस्य भूतलापेक्षया यावदुच्चतरदेशे स्थितिस्स्यात्तद्वर्तिजनैः सूर्यस्योर्द्ध्वं भूमेः स्थितिः ऊर्ध्वतद्दृष्टे च

कालविभागाः सि॰शि॰ दर्शिता यथा। "गुर्वक्षरैः खेन्दुमितैरसुः स्यात् षड्भिः पलं तैर्घटिका खषड्भिः। स्याद्वा घटीषष्टिरहः खरामैर्मासो दिनैस्तैर्द्विकुभिश्च वर्षम्" "एकमात्रो लघुः। द्विमात्रो गुरुः। तथाच "सानुस्वारो विसर्गान्तो दीर्घो युक्तपरस्तु यः" इति छन्दोवचनप्रतिपादितम् यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्मात्परस्य परतः संयोगस्तद्रूपि गुरुसंज्ञं ज्ञेयम्। गुर्वक्षरस्योच्चारणमात्रस्य यावान् कालस्तद्दशकेनैकोऽसुः प्राणः प्रकृतिस्थस्य पुरुषस्य श्वासोच्छ्वासान्तर्वर्त्ती काल इत्यर्थः। षड्भिः प्राणैरेकं पानीयपलम् पलानां षष्ट्या घटी। घटीनां षष्ट्या दिनम्। त्रिंशद्दिनैरेको मासः मासैर्द्वादशभिर्वर्षमिति कालस्य विभागो दर्शितः" प्रमि॰। भचक्रविभागस्तथैव विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते। तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते"।

ब्राह्मादि दिनभेदाः सू॰सि॰ उक्ता यथा

"ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव। चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः। बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः" सू॰सि॰। "अत्र मनुष्यलोके सौरचान्द्रनाक्षत्रसावनमानैश्चतुर्भिर्व्यवहारः कर्मघटना। षष्ट्यब्दं प्रभवादिषष्टिवर्षं सार्वात्मकपाठैकवचनम्। बार्हस्पत्येन बृहस्पतिमानेन बृहस्पतिमध्यमराशिभोगात्मकमानेन प्रत्येकं ज्ञेयम्। अन्यैरवशिष्टैर्ब्राह्म्यदिव्यपित्र्यप्राजापत्यैः। नित्यशः सदेत्यर्थः। व्यवहारो नास्ति। तुकारात् बार्हस्पत्येन तैर्व्यवहारः" रं॰ना॰। अथ सौरेण व्यवहारं प्रदर्शयति "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता" सू॰सि॰। "अहोरात्रयोर्मानं सौरेण ज्ञेयम्। प्रात्यहिकसूर्यगतिभोगादहोरात्रं भवतीत्यर्थः। षडशीतिमुखानि वक्ष्यमाणानि। चः समुच्चये। तेन सौरमानेन ज्ञेयानि अयनं विषुवत्। चः समुच्चये। संक्रान्तेः पुण्यकालता सूर्यबिम्बकलासम्बन्धा सौरमानेन" रं॰ना॰। अथ षडशीतिमुखमाह "तुलादिषडशीत्यह्नां षडशीतिमुखं क्रमात्। तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु" सू॰सि॰। "तुलारम्भात् षडशीतिदिनमानानां सौराणां षडशीतिमुखं भवति। तच्चतुष्टयं षडशीतिमुखस्य चतुःसङ्ख्या द्विस्वभावेषु राशिषु चतुर्षु क्रमादेवं वक्ष्यमाणा भवति" रं॰ना॰। "षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च। मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे" सू॰सि॰। "धनुराशेः षड्विंशतितमेऽंशे षडशीतिमुखं, मीनराशेर्द्वाविंशतितमेऽंशे षडशीतिमुखम्। चकारः समुच्चयार्थकः प्रत्येकमन्वेति। मिथुनराशेरष्टादशेऽंशे षडशीतिमुखं, कन्यायाश्चतुर्दशे भागे षडशीतिमुखम्। अत एव तुलादितः षडशीत्यंशो गणनया येषु राशिषु भवन्ति ते राशयो द्विस्वभावाः षडशीतिमुखसञ्ज्ञा संक्रान्तिप्रकरणे मुनिभिरुक्ताः" रं॰ना॰। अथ षडशीत्यंशगणनया चत्वारि षडशीतिमुखान्युक्त्वा भगणांशपूर्त्यर्थमवशिष्टांशाः षोडशान्तिमुक्ता इत्याह "ततः शेषाणि कन्याया यान्यहानि तु षोडश। क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्" सू॰सि॰। "ततः कन्यादिचतुर्दशभागानन्तरं शेषाणि भगणभागेऽवशिष्टानि कन्याया यान्यहानि सौरभागसमानि तानि षोडश। तुकारात् पूर्वदिनात्मकानि क्रतुभिर्यज्ञैः समानि। अतिपुण्यकालीनेत्यर्थः। तत्र पितॄणां दत्तं श्राद्धादि तदक्षयमनन्तफलदं भवति" रं॰ना॰। "अथ राशयुक्तक्रान्तिवशेन चत्वारि स्थानानि पदसन्धिस्थाने विषुवायनाख्यानि प्रसिद्धानीत्याह

"भचक्रनाभौ विषुवद्द्वितयं समसूत्रगम्। अयनद्वितयं चैव चतस्रः प्रथितास्तु ताः" सू॰सि॰। "भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्वितयं विषुवद्द्वयं समसूत्रगं परस्परं व्यासमूत्रान्तरितं ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ च क्रमेण पूर्वापरौ विषुवत्सञ्ज्ञौ मेषतुलाख्यौ चेत्यर्थः। अयनद्वितयमयनद्वयं कर्कमकरादिरूपम्। चः समुच्चये। तेन समसूत्रगं ता विषुवायनाख्याः क्रान्तिवृत्तप्रदेशरूपा भ्रमवशतश्चतस्रः संख्याः प्रथिता गणितादौ पदादित्वेन प्रसिद्धाः। एवकारादन्यराशीनां निरासः। तुकारात् तासां समस्थलत्वेऽपि विषुवायनत्वाभावात् पदादित्वेनाप्रसिद्धिरित्यर्थः" रं॰ना॰। अयनादिघटनामादिस्वरूपमप्याह।

"तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः। नैरन्तर्यात्तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्" सू॰सि॰। "तदन्तरेषु विषुवायनान्तरालेषु। व्यवधानराशीनां चतुःस्थाने सद्भावाद्बहुवचनम्। संक्रान्तिद्वितयं द्वितयं पुना राश्यादिभागे पञ्चाषामाक्रमणं वारद्वयं भवति। तदन्तराले राश्यादिगतौ द्वौ भवत इत्यर्थः। तथा हि मेषाख्य-

वृषवृश्चिकायनयोरन्तराले कुम्भमिथुनयोरादौ । कर्क-तुलयोरन्तराले सिंहकन्ययोरादौ । तुलामकरयोरन्तराले वृश्चिकधनुषोरादौ । मकरमेषयोरन्तराले कुम्भमीनयोरादौ इति । एवं विषुवानन्तरं संक्रमणद्वयमनन्तरमयनं तदनन्तरं संक्रान्तिद्वयं तदनन्तरं विषुवमनन्तरं संक्रान्तिद्वयमनन्तरमयनमित्यादि पौनःपुन्येन बोद्धव्यमित्यर्थः । संक्रान्तिद्वयमध्ये प्रथमसंक्रान्तौ विशेषमाह नैरन्तर्येति । निरन्तरतया कृतादृशः संक्रान्तेः स्थानाद्विष्णुपदीद्वयं तदन्तराले इत्यर्थः । अयमर्थः प्रथमसंक्रान्तिर्विष्णुपदसञ्ज्ञा तयोर्द्वयं तदभ्यन्तरे प्रत्येकं भवतीति तात्पर्यार्थः । षडशीतिसञ्ज्ञं द्वितीयसंक्रमणं पूर्वसूचितं तयोरपि द्वयं तदन्तराले भवतीति ध्येयम्" र०ना० । अयनद्वयमाह "भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् । कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्" सू०सि० । "सूर्यस्य मकरसंक्रान्तेः सकाशात् षट् सौरमासा उत्तरायणं भवति । कर्कादेः कर्कसंक्रान्तेः सकाशात् तथा सूर्यभोगात् । एवकारादन्यपक्षनिरासः । षण्मासाः तत्काशात् सौराः । दक्षिणायनं भवति" र०ना० । ऋतुमासवर्षाण्याह "द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः । मेषादयो द्वादशैते मासास्तैरेव वत्सरः" सू०सि० । "ततो मकरसंक्रान्तेः सकाशात् । अपिशब्दः उत्तरायणावधिना समुच्चयार्थकः । द्विराशिनाथा राशिद्वयस्वामिका राशिद्वयार्कभोगात्मका इत्यर्थः । शिशिरादयः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता ऋतवः कालविभागविशेषा भवन्ति । एते सूर्यभोगविषयका मेषादयो राशयो द्वादश मासास्तैर्द्वादशभिर्मासैः । एवकारादत्र नाधिकक्षयव्यवच्छेदः । वत्सरः सौरवर्षं भवति" र०ना० । अथ प्रसङ्गात् संक्रान्तौ पुण्यकालमवधिमाह । "अर्कबिम्बकलाः षष्ट्या गुणितास्तुभुक्तिभाजिताः । तदर्धनाड्यः संक्रान्तेरर्वाक् पुण्यं तथापरे" सू०सि० । "सूर्यस्य बिम्बप्रमाणकलाः षष्ट्या गुणिताः सूर्यगत्या भक्तास्तस्य फलस्यार्धे तत्सङ्ख्याका घटिका इत्यर्थः । संक्रान्तेः सूर्यस्य राशिप्रवेशकालादित्यर्थः । अर्वाक् पूर्वं पुण्यं स्नानादिधर्मकृत्ये पुण्यघटिकाः पुण्यवृद्धिकारिकाः । अपरे संक्रान्त्यनन्तरकाले तथा । स्नानादिधर्मकृत्ये पुण्यवृद्धिदा इत्यर्थः । अत्रोपपत्तिः । सूर्यबिम्बकेन्द्रस्य राश्यादौ सञ्चरणकाले संक्रमणकालस्य सूक्ष्मत्वेन दुर्ज्ञेयत्वात् स्थूलकालः बो-ध्यसूपेयः स तु राश्यादौ बिम्बसञ्चरणकालोऽङ्गीकृतो बिम्बसम्बन्धात् । अतोऽर्धबिम्बस्य गत्या परिमाणघटिकास्तदा सूर्यबिम्बकलान्तिः का इत्यनुपातागता बिम्बघटिकाः संक्रान्तिकालः स्थूलः प्राक्तनेऽर्धसञ्चरणकालात् परिमितिमितप्रत्यक्कालपर्यन्तं तदर्धघटिका स्पर्शार्धघटिका इति । संक्रान्तिकालात् ताभिः पूर्वपरत्र काले प्राग्परयोः कृतेष सञ्चरणात् पूर्वोत्तरकाले पुण्या इति" र०ना० । अथ सौरमुक्त्वा प्रसङ्गाच्चान्द्रमानमाह । "अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी । तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः" सू०सि० । "सूर्यात् समागमं त्यक्त्वा विनिर्गतः पृथग्भूतः सञ्चन्द्रोऽहरहः प्रतिदिनं यत् तत्सङ्ख्यामितं प्राचीं पूर्वां दिशं गच्छति तत् प्रतिदिनं चान्द्रमानं तत्तु गत्यन्तरांशमितम् । ननु सौरदिनं सूर्यांशेन यथा भवति तथैतद्रूपैरंशैः किंवद्भिः पूर्णं चान्द्रं दिनं भवतीत्यत आह अंशैरिति । भागैस्तुकारात् सूर्यचन्द्रान्तरोत्पन्नैः, तच्च तद्रूपत्वात् द्वादशभिर्द्वादशसङ्ख्याकैस्तिथिर्ज्ञेया । एकं चान्द्रं दिनं ज्ञेयमित्यर्थः । एतदुक्तं भवति । सूर्यचन्द्रयोगाच्चान्द्रदिनप्रवृत्तेः पुनर्योगे भगणभागे भगणान्तरेण चान्द्रो मासस्त्रिंशच्चान्द्रदिनात्मकः । अतस्त्रिंशद्भिर्दिनैर्द्वादशभगणांशान्तरं यद्यनेन किमिति । द्वादशभागैरेकं चान्द्रदिनम् । "दर्शः सूर्येन्दुसङ्गमः" इत्यभिधानाद्दर्शावधिकमासस्य त्रिंशत्तिथ्यात्मकत्वात् तिथिचान्द्रदिनमेकमिति" र०ना० । अथ चान्द्रव्यवहारमाह "तिथिः करणमुद्वाहः क्षौरं सर्वक्रियास्तथा । व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते" सू०सि० । "तिथिः प्रतिपदाद्या करणं ववादिकमुद्वाहो विवाहः क्षौरं चौलकर्म । एतदाद्याः सर्वक्रिया व्रतबन्धादयस्तथा व्रतोपवासयात्राणां नियमोपवासगमनानां क्रिया करणम् । तथा समुच्चयार्थकः । चान्द्रमानेन गृह्यते अङ्गीक्रियते" र०ना० । अथ चान्द्रमासं प्रसङ्गात् पित्र्यमानं चाह "त्रिंशता तिथिभिर्मासश्चान्द्रः, पित्र्यमहः स्मृतम् । निशा च, मासपक्षान्तौ तयोर्मध्ये विभागतः" सू०सि० । "त्रिंशता त्रिंशत्सङ्ख्याभिस्तिथिभिश्चान्द्रो मासः । पित्र्यं पितृसम्बन्धि । अहर्दिनम् निशा च रात्रिः पितृसम्बन्धा । चकारो व्यवस्थार्थकः । तेनोभयं नैकं प्रत्येकं, किन्तु मिलितम् । अतोऽभिमत विकल्पानुरोधेनोभयमात्येति तथा च चान्द्रो मासः पित्र्याहोरात्रमित्यर्थः फलितः । मासपक्षान्तौ मासान्तो दर्शान्तः पक्षान्तः पूर्णमान्तः

घटाविच्छेदः । विभागतः कर्मणेत्यर्थः । तयोः पितृप्रोत्योर्मध्येऽर्द्धं भवतः । दर्शान्तः पितृणां मध्याह्नः, पूर्णिमान्तः पितृणां मध्यरात्रमित्यर्थः । अर्थात् कृष्णाष्टम्यर्द्धे दिनप्रारम्भः । शुक्लाष्टम्यर्द्धे दिनान्त इति सिद्धम्" रङ्गना० । अथ क्रमप्राप्तं नाक्षत्रमानं प्रसङ्गान्मासमञ्ज्ञां चाह "भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते । नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः" "नित्यं प्रत्यहं भचक्रभ्रमणं नक्षत्रप्रवहवायुकृतपरिभ्रमः नाक्षत्रं नक्षत्रसम्बन्धि दिनं मानज्ञैः कथ्यते निरुक्तिसद्भावेन चन्द्रभोगनक्षत्रभोगो नाक्षत्रमित्यस्य निरासः भचक्रभ्रमणस्यानुपपत्तेः । मासमञ्ज्ञा नक्षत्रसम्बन्धेनेत्याह । पर्वान्तयोगतः पर्वान्तः पूर्णिमान्तः तस्य योगात् तत्सम्बन्धात् नक्षत्रसंज्ञया मासाः । तत्र चान्द्रा अवगम्याः पूर्णिमान्तस्थितचन्द्रनक्षत्रसञ्ज्ञो मासो ज्ञेय इति तात्पर्यार्थः । तथाहि चान्द्रमासावधिभूतान्त्यौ मासप्रदृश्यन्तरस्थितपूर्णिमान्तस्थितचन्द्रनक्षत्रसमृद्धः । यथा चित्रासम्बन्धाच्चैत्रः । विशाखासम्बन्धाद्वैशाखः । ज्येष्ठासम्बन्धाज्ज्यैष्ठः । आषाढासम्बन्धादाषाढः । श्रवणसम्बन्धाच्छ्रावणः । भाद्रपदासम्बन्धाद्भाद्रपदः । अश्विनीसम्बन्धादाश्विनः । कृत्तिकासम्बन्धात् कार्त्तिकः । मृगशीर्षसम्बन्धान्मार्गशीर्षः । पुष्यसम्बन्धात् पौषः । मघासम्बन्धान्माघः । फाल्गुनीसम्बन्धात् फाल्गुन इति" रङ्गना० । ननु पूर्णिमान्ते तत्तन्नक्षत्राभावे कथं तत्सञ्ज्ञा मासानामुचितेत्यत आह "कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्" सू०सि० । नक्षत्रसंयोगार्थमिति निमित्तसप्तमी । कार्त्तिक्याद्यासु कार्त्तिकमासादीनां पौर्णमासीष्वित्यर्थः । कृत्तिकादि द्वयं द्वयं नक्षत्रं कथितं कृत्तिकारोहिणीभ्यां कार्त्तिकः । मृगार्द्राभ्यां मार्गशीर्षः । पुनर्वसुपुष्याभ्यां पौषः । आश्लेषामघाभ्यां माघः । चित्रास्वातिभ्यां चैत्रः । विशाखानुराधाभ्यां वैशाखः । ज्येष्ठामूलाभ्यां ज्यैष्ठः । पूर्वोत्तराषाढाभ्यामाषाढः । श्रवणधनिष्ठाभ्यां श्रावण इति फलितम् । अवशिष्टमासानामाह । अन्त्योपान्त्याविति । अत्र कार्त्तिकमासादित्वेन पञ्चमात्तत्य आश्विनः । उपान्त्यो भाद्रपदः । एतौ मासौ पञ्चमः फाल्गुनः । चकारः समुच्चये इति मासत्रयं त्रिधा स्थानत्रये उक्तम् । रेवत्यश्विनीभरणीति नक्षत्रत्रयसम्बन्धादाश्विनः । शततारापूर्वोत्तराभाद्रपदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः । पूर्वोत्तराफाल्गुनीहस्तेति नक्षत्रत्रयसम्बन्धात् फाल्गुन इति सिद्धम्" रङ्गना० । अथ प्रसङ्गात् कार्त्तिकादिवर्षसंज्ञा इत्याह । "वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ । कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात्तथा" सू०सि० । यथा पौर्णमास्यां नक्षत्रसम्बन्धेन तत्सञ्ज्ञो मासो भवति । तद्वदिति सम्बन्धार्थकम् । बृहस्पतेः सूर्यसान्निध्यादस्तात् सूर्याभ्यामस्मादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमावास्यायामित्यर्थः । चकारः पौर्णमासीसम्बन्धात् समुच्चयार्थः । योगो दिननक्षत्रसम्बन्धः कार्त्तिकादीनि द्वादश वर्षाणि भवन्ति । वैशाखकृष्णपञ्चदश्याममावास्यायां बृहस्पतेरस्त उदये वा जाते सति तद्दिने चन्द्रस्य नक्षत्रं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसञ्ज्ञम् । एवं ज्येष्ठाषाढश्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषमाघफाल्गुनचैत्रमासेषु मृगपुष्यमघापूर्वाफाल्गुनीचित्राविशाखाज्येष्ठापूर्वाषाढाश्रवणपूर्वाभाद्रपदाश्विनीदिननक्षत्रसम्बन्धान्मार्गशीर्षादीनि भवन्ति । अत्रापि पौर्णमास्यवत् नक्षत्रद्वयत्रयसम्बन्धः प्रागुक्तो बोध्यः । पञ्चदशो हव्यपक्षकम् । तेन यद्दिने बृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्सञ्ज्ञं बार्हस्पत्यं वर्षं भवतीति तात्पर्यम् । संहितायन्थे त्वस्तोदयवशाद्वर्षाणि परमिदानीमुदयवशव्यवहारो गणकैर्गृह्यते येनोदितेज्य इत्युक्तेरिति" रङ्गना० । अथ क्रमप्राप्तं सावनमाह "उदयादुदयं भानोः सावनं तत् प्रकीर्त्तितम् । सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः" सू०सि० । सूर्यस्योदयादुदयकालमारभ्यावच्छिन्नोदयकालपर्यन्तं यत् कालात्मकं तत् सावनं मानज्ञैरुक्तम् । एतेनोदयद्वयान्तरालकालस्य गणनया सावनानि अहोरात्राणि एतेन साधितत्वादिना मध्याधिकारोक्तानि भवन्ति । तद्व्यवहारमाह यज्ञकालविधिरिति । यज्ञस्य यः कालस्तस्य गणना तैः सावनैः । तुकारोऽन्यमाननिरासार्थकैवकारपरः" रङ्गना० । अथ व्यवहारान्तरमाह । "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा । मध्यमा ग्रहभुक्तिश्च सावनेनैव गृह्यते" सू०सि० । "सूतकं जननमरणसम्बन्धि । आदिपदग्राह्यं चिकित्सितचान्द्रायणादि । तस्य परिच्छेदो निर्णयः । दिनाधिपमासेश्वराब्देश्वराः । तथा ग्रहाणां गतिर्मध्यमा । तु पारात् स्पष्टगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धाभावात् । एतेन स्पष्टया स्पष्टस्य

स्फुटपातयोगो हि विक्षेपकेन्द्रम्। अतः स्फुटपातस्थाने संपातं कृत्वा तस्मात्त्रिभेऽन्तरे स्फुटीकृतैः परमविक्षेपांशैः प्राग्वदुत्तरे दक्षिणे च विन्यस्तम्। तथा न्यस्ते विमण्डले स्फुटपातस्थाने विक्षेपः स्फुटविक्षेपेण गणितागतेन तुल्यो दृश्यते नान्यथेत्यर्थः। इदानीं चन्द्रगोले विशेषमाह" प्रमि०। "चन्द्रस्य गोले कथितापमण्डलं प्रकल्प्य कक्षावलयं यथोदितम्। निबध्य नीचप्रतिवृत्तमस्मिन् विमण्डलं तत् पठितैः शरांशैः। मध्योऽत्र पातो मृदुतुङ्गभूम्योः स्पष्टीकृतेन्दौ च युतस्तु देयः" सि०शि०। "भगोल एव तावच्चन्द्रगोलः कल्प्यः। तत्र स्फुट एव पातः। अथ यदि तदन्तश्चन्द्रगोलोऽन्यो निबध्यते तदा तत्र यथोक्तं विषुवद्वृत्तं क्रान्तिवृत्तं च बद्ध्वा तत् क्रान्तिवृत्तं कक्षामण्डलं प्रकल्प्य तत्र केन्द्रकोक्तविधिना नीचप्रतिमण्डलं बद्ध्वा तत्र प्रतिमण्डले गणितागतं पातं मेषादेर्विलोमं गणयित्वा तत्र चिह्नं कार्यम्। अथ त्रिज्याव्यासार्धमेवान्यद्वृत्तं राश्यङ्कं विमण्डलाख्यं कृत्वा तत्रापि मेषादेर्व्यस्तं पाताग्रे चिह्नं कृत्वा प्रतिमण्डलविमण्डलयोः पातचिह्ने प्रथमं संपातं ततो भार्धान्तरे द्वितीयं च संपातं कृत्वा पातादग्रतः पृष्ठतश्च त्रिभेऽन्तरे परमविक्षेपांशैः पठितैः प्रतिवृत्तादुत्तरे दक्षिणे च विमण्डलं विन्यस्यम्। तत्र मन्दस्फुटगत्या पारमार्थिको पातो भवति। अतो मेषादेरनुलोमं मन्दस्फुटो विमण्डले देयः। स तत्रस्थः प्रतिमण्डलाद्याम्योत्तरेण विक्षेपप्रमाणांशान्तरप्रदेशे विक्षेपः। अतो वृत्तसंपातस्थे पाते विक्षेपाभावः। त्रिभेऽन्तरे परमो विक्षेपः। मध्येऽनुपातेन। अतो वृत्तसंपातचन्द्रयोरन्तरं केन्द्रम्। तदन्तरं पातचन्द्रयोगे कृते भवति पातस्य विलोमगत्वात्। स योगः शरार्थं केन्द्रम्। यदि त्रिज्यातुल्यया केन्द्रज्यया परमः शरस्तदाभीष्टयाऽनया क इति फलं प्रतिमण्डलविमण्डलयोस्तिर्यगन्तरं स्यात्। विमण्डलस्थचन्द्राद्भूमध्यगं सूत्रं तदुभयचन्द्रान्तरम्। स च नीचकर्णः। यदि भूमध्यात् कर्णाग्रे एतावान् विक्षेपस्तदा त्रिज्याग्रे कियानिति द्वितीयं त्रैराशिकम्। आद्ये त्रिज्या हरो द्वितीये गुणकस्तयोर्नाशे कृते केन्द्रज्यायाः परमशरगुणितायाः कर्णो हरः। फलं कक्षावृत्तचन्द्रयोस्तिर्यगन्तरम्। स स्फुटः शरः। इदानीमहोरात्रवृत्तमाह" प्रमि०। "देशस्थितक्रान्तितुल्येऽन्तरे वर्तते नाडिकाख्यादहोरात्रवृत्ताख्यकम्। तत्र बद्ध्वा घटीनां च षष्ट्याङ्कितस्यास्य विष्कम्भखण्डं द्युजीवा मता" सि०शि०। "नाडीवृत्ताद्दक्षिणत उत्तरतो वा भवेत् इष्टक्रान्तितुल्येऽन्तरे यद्वृत्तं निबध्यते तदहोरात्रवृत्तम्। तेन वृत्तेन तस्मिन् दिने रविर्भ्रमतीत्यर्थः। तस्य वृत्तस्य व्यासार्धं द्युज्या। इदानीमन्यदाह" प्रमि०। "अथ कल्प्या मेषाद्या अनुलोमं क्रान्तिपाताद्भात्। एवं मेषादीनां द्युरात्रवृत्तानि रचयेत्। नाडीवृत्तोभयतस्त्रीणि त्रीणि क्रमोत्क्रमात् तानि" सि०शि०। क्रान्तिपाताद्भादारभ्य त्रिंशता त्रिंशता भागैरन्यान् मेषादीन् प्रकल्प्य तदग्रेषु द्युरात्रवृत्तानि बध्नीयात्। तानि च नाडीवृत्तोभयतस्त्रीणि त्रीणि भवन्ति। तान्येव क्रमोत्क्रमतः सायनांशार्कस्य द्वादशराशीनाम्" प्रमि०। "एवं भगोलः कथितः खेचरगोलोऽप्ययमेव विज्ञेयः। क्रान्त्यपमण्डले वा सूत्राधारैरधश्च तस्यैव। चन्द्रादीनां कक्षा बध्नीयादूर्ध्वनामक्रमाभाः। बद्ध्वा भगोलमेवं यष्ट्यां दृढं खगोलमन्निकान्तः। तस्य भ्रमवेतं यष्ट्याधारं स्थिरौ खदृग्गोलौ" सि०शि०। "यथायं भगोलो बद्धस्तथैव खगोलोऽपि बन्धनीयाः। किन्तु तेषां केन्द्रकमन्तर्यातु नायातीति बहिःस्थमेव दर्शनीयम्। अथ वा भगोले क्रान्त्यपमण्डलं तस्याधोऽधःस्थानिवद्धैः सूत्राधारैर्बद्ध्वा चन्द्रादीनां कक्षा दर्शनीयाः। एवंविधं भगोलं यष्ट्यां दृढं बद्ध्वा यष्ट्यग्रयोः नीते नलिकाद्वये निबद्धौ खगोलदृग्गोलौ कृत्वा भगोलभ्रमणं दर्शयेत्" प्रमि०।

## तदयं खगोलस्थपदार्थसंक्षेपः।

कटाहद्वितयवत् सम्पुटाकारस्यान्तरवकाशवतो ब्रह्माण्डस्य मध्ये सूर्यकिरणसम्पातावधिर्व्योमकक्षा। तदधः नक्षत्रकक्षा तदधः क्रमेण दृश्याः पूर्वगाः शनिजीवकुजसूर्यशुक्रबुधचन्द्राः स्वस्वकक्षासु राहुपातादयः पश्चिमगतयः, वक्ष्यमाणस्वस्वकक्षायां स्थिताः। अश्विन्यादिनक्षत्राणि स्थिराण्यपि तत्सम्बद्धप्रवहाख्यभचक्रं पश्चाद्गमनशीलप्रवहवायुनाऽभिहतं पश्चात् भ्रमत् नाक्षत्रषष्टिघटिकाभिः भूमेरेकवारं भ्रमति तत्स्था रव्यादयः पश्चाच्चलनात् पूर्वापरयोरपि तदाधारातिशीघ्रभचक्रपश्चाद्भ्रमणेन पश्चाद्भ्रमणमनुभवन्तो दृश्या भवन्ति।

राशिचक्रस्य ३६० अंशैर्विभक्तत्वात् षष्टिकलाभि-

| | |
|---|---|
| ऐरावतवीथिः | पुनर्वसुपुष्याश्लेषाः |
| वृषभवीथिः | मघादित्रयम् |
| गोवीथिः | हस्तादित्रयम् |
| जरद्गववीथिः | विशाखादित्रयम् |
| मृगवीथिः | मूलादित्रयम् |
| अजवीथिः | श्रवणादित्रयम् |
| दहनवीथिः | पूर्वभाद्रपदादित्रयम् |

सूर्यादिग्रहाणां ४३२०००० वर्षात्मकयुगे राशिचक्र भ्रमणसंख्या सू॰सि॰ उक्ता यथा

| | | |
|---|---|---|
| रवेः | ४३२०००० | पूर्वगत्या |
| बुधस्य | ४३२०००० | तथा |
| शुक्रस्य | ४३२०००० | तथा |
| स्पष्टभौमशीघ्रोच्चस्य | ४३२०००० | तथा |
| स्पष्टगुरुशीघ्रोच्चस्य | ४३२०००० | तथा |
| स्पष्टशनिशीघ्रोच्चस्य | ४३२०००० | तथा |
| चन्द्रस्य | ५७७५३३३६ | तथा |
| भौमस्य | २२९६८३२ | तथा |
| स्पष्टबुधशीघ्रोच्चस्य | १७९३७०६० | तथा |
| गुरोः | ३६४२२० | तथा |
| स्पष्टशुक्रशीघ्रोच्चस्य | ७०२२३७६ | तथा |
| शनेः | १४६५६८ | तथा |
| स्पष्टचन्द्रमन्दोच्चस्य | ४८८२०३ | तथा |
| स्पष्टराहोः (पातस्य) | २३२२३८ | पश्चाद्गत्या |

एत एव ग्रहलघुपठिताः कल्पे सूर्यादिभगणाः ।
तत्र सि॰शि॰सूक्ष्मतया विशेष उक्तः स च २४२८पृ॰दर्शितः ।

कल्पे सूर्यमन्दोच्चादिभगणसंख्या

| | सू॰सि॰ मते | सि॰शि॰ मते |
|---|---|---|
| प्राग्गतेः सूर्यमन्दोच्चस्य | ३८७ | ४८० |
| तथा कुजमन्दोच्चस्य | २०४ | २९२ |
| तथा बुधमन्दोच्चस्य | ३६८ | ३३२ |
| तथा जीवमन्दोच्चस्य | ९०० | ८५५ |
| तथा शुक्रमन्दोच्चस्य | ५३५ | ६५३ |
| तथा शनिमन्दोच्चस्य | ३९ | ४१ |
| पश्चाद्गतेः कुजपातस्य | २१४ | २६७ |
| तथा बुधपातस्य | ४८८ | ५२१ |
| तथा जीवपातस्य | १७४ | ६३ |
| तथा शुक्रपातस्य | ९०३ | ८९३ |
| तथा शनिपातस्य | ६६२ | ५८४ |

कल्पादौ पातं विहाय सर्वे ग्रहाः मीनान्ते मेषादौ प्राग्गत्या स्थिताः पातस्तु विलोमगत्या तुलादौ स्थित इति भेदः । तदुत्तरकाले तु स्वस्वगत्यनुसारेण राशिकलादौ स्थितिः प्राग्गत्या पश्चाद्गत्या वा बोध्या ॥ चैत्रशुक्लप्रतिपदि शनिवारे कल्पारम्भः इदानीन्तु श्वेतवराहकल्पः । तत्र च वर्त्तमानकालपर्य्यन्ताहर्गणानयनम् अहर्गणशब्दे ५७७ पृ॰ दर्शितरीत्या ज्ञेयम् । अस्य कलेः शुक्रवारे प्रवृत्तिः ।

महायुगे नाक्षत्रादिदिनसंख्या सू॰सि॰ उक्ता

| | |
|---|---|
| नाक्षत्रदिनसंख्या | १५८२२३७८२८ |
| सावनदिनसंख्या | १५७७९१७८२८ |
| चान्द्रदिनरूपतिथिसंख्या | १६०३००००८० |

सूर्यादिबिम्बमानयोजनानि सि॰शि॰ उक्तानि

| | |
|---|---|
| रवेर्बिम्बव्यासयोजनानि | ६५२२ |
| चन्द्रमण्डलव्यासयोजनानि | ४८० |

भूमण्डलव्यासयोजनानि स्थूलानि १६००सू॰सि॰ उक्तानि १५८१ सूक्ष्माणि सि॰शि॰ उक्तानि । योजने करमानाङ्गुलस्य षट्सप्तत्यादिमितत्वभेदेन योजनसंख्याभेदः । अन्येषां ग्रहाणां बिम्बमानं सौरागमे बोध्यम् । कल्पादौ ग्रहाणां ध्रुवकाः २४३२ पृ॰ उक्ता ग्रहाणां सावनदिने मध्यगतिमानं तत्रैव पृ॰ उक्तं, मेषादौ सूर्य्यस्य सावनमानेन भोगकालः ४२३४,३५ पृ॰ दर्शितः

दशगुर्वक्षरोच्चारणकालः प्राणः असुरिति चोच्यते ६ षड्भिः प्राणैः पलं विनाडी च, षष्ट्या पलैः नाडी-दण्ड इति चोच्यते षष्ट्या दण्डैर्नाक्षत्राहोरात्रम् । भचक्रस्य तावता कालेन भूसम्भ्रमणात् तस्य नाक्षत्रत्वम् । सावनदिनं सूर्योदयाद्द्वितीयसूर्य्योदयपर्य्यन्तकालरूपम् तच्च नाक्षत्रदिनात् सूर्य्यस्य स्वाक्रान्ततद्राश्यंशादिभोगकालाधिकम् । सावनदिनमपि नाक्षत्रदिनवत् स्वपरिमाणानुसारिषष्टिदण्डात्मकमिति भेदः ।

नक्षत्रचक्रस्य षष्ट्या दण्डैर्भूसम्भ्रमणेऽपि तस्य द्वादशराश्यात्मकतया षष्टिदण्डमध्ये द्वादशराशीनामुदयः । राश्युदयश्च स्वस्वदृष्टिगोचरक्षितिजवृत्ते पूर्वस्यां प्राथमिकदृष्टिगोचरयोग्यस्थानसम्बन्धः । राशीनां मध्ये यस्य यत्क्षितिजलग्नत्वादुदयः तस्योदय इति व्यवह्रियते । राशिचक्रस्य तिर्य्यक्स्थिततया देशभेदेन दृष्टियोग्यकालतारतम्येन कालभेदेनैव मेषादीनामुदयः न तु समकालेन । तत्र निरक्षदेशे मेषादीनामुदयासवः सू॰सि॰उक्ता यथा

| | असवः | पलानि | दण्डादि । |
|---|---|---|---|
| मेषस्य | १६७० | २७८।२/६. | ४।२८।२/६ |
| वृषस्य | १७९९ | २९८।५।६ | ४।५८।५/६ |
| मिथुनस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| कर्कस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| सिंहस्य | १७९९ | २९८।५/६. | ४।५८।५/६ |
| कन्यायाः | १६७० | २७८।२/६. | ४।२८।२/६ |
| तुलायाः | १६७० | २७८।२/६ | ४।२८।२/६ |
| वृश्चिकस्य | १७९९ | २९८।५/६ | ४।५८।५/६ |
| धनुषः | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| मकरस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| कुम्भस्य | १७९९ | २९८।५/६. | ४।५८।५/६ |
| मीनस्य | १६७० | २७८।२/६ | ४।२८।५/६. |

मेषादीनामुदयकालभेदे कारणम् २४२६ पृ० दर्शितम् अन्यदेशेषु चरखण्डवशेन लग्नमानभेद उन्नेयः ।
चरस्थानञ्च द्विविधं सौम्ययाम्यं पूर्वापरञ्च ।
तत्र लङ्कातोमेरुपर्य्यन्तदेशः सौम्ययाम्यं चरस्थानं मध्यरेखातः समसूत्रपातस्थपूर्वापरदेशः पूर्वापरचरस्थानम् ।
चरखण्डानयनञ्च २४२६ पृ० दर्शितम् ।

देशभेदेन सूर्य्योदयादिव्यवस्था सि० शि० उक्ता लङ्कामारभ्य उत्तरमेकं नीयमाना रेखा अवन्तीकुरुक्षेत्रादिदेशान् स्पृशन्ती या याति सा मध्यरेखा । मध्यरेखायां यदा सूर्य्योदयः तत्पूर्वदेशे ततः पूर्वमेव तदुदयः । ततः पश्चिमे भागे तु पश्चात् । तत्र यदि ६० घटीभिः भूपरिधियोजनानि लभ्यन्ते तदा रेखास्वपुरान्तरालयोजनानि कियता घटिका इत्यनुपातेनोदयकालज्ञानम् । सौम्यायने देवभागस्थदेशे दिवसो महान् तदुपरि सूर्य्यस्य गतत्वात्, रात्रिस्तु स्वल्पा । याम्यायने देवभागे दिनं स्वल्पं रात्रिर्महती । निरक्षे तु सर्व्वदैव अहोरात्रं समानम् पूर्वप्रदर्शितप्रमाणकोदयकालकानां मेषादीनां मध्ये यं कञ्चिदारभ्य दिनारम्भे त्रिंशद्घटिकामानत्वसिद्धेः । तत्र मेषादौ देवभागस्थतया सूर्य्यस्याधस्त्वात् तत्प्रदेशे घर्मप्रधानता । तुलादौ तु दैत्यभागस्थत्वात् सूर्य्यस्य विप्रकृष्टतया देवभागे शिशिरप्रधानता । दैत्यभागे तु वैपरीत्येन शिशिरमीक्ष्यते । द्वादशराशिषु मध्ये द्वयोः सौम्ययाम्यायनसंक्रान्ती द्वयोर्विषुवसंक्रान्ती अष्टसु विष्णुपदः संक्रान्तयः । तथाहि विषुवायनयोर्मध्ये

द्वे विष्णुपदाख्यौ संक्रान्ती । तेन मेषारम्भे पूर्वविषुवसंक्रान्तिः । वृषे विष्णुपदीसंक्रान्तिः मिथुनेऽपि विष्णुपदी संक्रान्तिः तस्यांशविशेषे च षडशीतिमुखं तेनेयं संक्रान्तिः षडशीतिमुखे अतीते जायमानत्वात् षडशीतिरिति च भण्यते । मिथुनान्ते कर्कादौ याम्यायनसंक्रान्तिः सूर्य्यस्य दक्षिणगतेरारम्भात् तस्य दक्षिणायनत्वं तत्र चन्द्रादिषु वर्द्धतया शैत्यम् । सिंहे विष्णुपदी । कन्यारम्भे विष्णुपदी प्राग्वत् षडशीतिरिति च कथ्यते । कन्यान्ते तुलादौ अपरविषुवसंक्रान्तिः तुलान्ते वृश्चिकादौ विष्णुपदी, धनुरादौ विष्णुपदी प्राग्वत् षडशीतिरिति च । धनुरन्ते सौम्यायनसंक्रान्तिः सूर्य्यस्योत्तरगत्यारम्भात् । तत्र चन्द्रादौ विच्छिन्नत्वेन शैत्यम् । मकरान्ते कुम्भादौ विष्णुपदी, कुम्भान्ते मीनादौ विष्णुपदी षडशीतिरिति च कथ्यते । षडशीतिमुखत्वञ्च षडशीत्यंश मितान्तरकालस्थित्या । तथाहि तुलादितः षडशीतितमोऽंशः धनुषः षड्विंशोऽंशः तत्र प्रथमं तन्मुखम् तत आरभ्य मीनद्वाविंशेऽंशे द्वितीयं, ततो मिथुनस्याष्टादशांशे तृतीयं कन्यायाश्चतुर्दशांशे चतुर्थमिति भेदः । अतश्चराचरद्व्यात्मकराशिषु षडशीतिमुखसद्भावात् तिस्रः षडशीतयः। सुरासुराणां दिनरात्रिविभागकारि अयनन्तु मेषादिमारभ्य कन्यान्तं यावत् सौम्यायनं तुलादिमीनान्तं च याम्यायनमिति भेदः । संक्रान्तिश्च द्विविधा स्थिरा चला च विवृतिरयनसंक्रान्तिशब्दे २२८ पृ० दृश्या । अयनचलनवत् विषुवविष्णुपदादीनां चलनात् कालभेदेन राशिविशेषाद्यंशभेदेनैव तत्तत्संक्रान्तिर्भवति ।
इदानीन्तु मीनस्य पश्चात् एकविंशांशे अर्थात् तन्नवमांशे विषुवारम्भः मिथुननवमांशे च अयनारम्भः । इत्येवं सर्वसंक्रान्तीनां तत्तदंशभेदे चलसंक्रान्तिरित्यूह्यम् ।
राशिचक्रस्य तत्स्थाश्विन्यादिसप्तविंशतिनक्षत्राणाञ्च एकस्यां रात्रौ दृष्टियोग्यता । तथाहि सूर्य्यस्य यस्मिन् राशौ यदंशादौ उदयः, ततः सप्तमे राशौ तथाविधांशाद्यास्तमनम् । तेन सूर्य्याक्रान्तांशापेक्षया १८० भचक्रांशाः क्रमेण दिवसे उदिता अपि सूर्य्यकिरणाच्छन्नतया दिवसे न दृष्टियोग्या अस्तमिते तु सूर्य्ये रात्र्यारम्भतस्ते सर्वे पूर्वकुजत्वात् पश्चिमकुजत्वमध्ये नतोन्नतया दृश्यन्ते । यथा यदा मेषस्य प्रथमांशे सूर्य्योदयात् दिनारम्भः ततः पूर्वस्या मेषार्द्धघटिकायाः, वृषादिराशिपञ्चकं १५ अंशात्मकं तुलायाः प्रथमांशाद्यार्द्धं च क्रमेण दिने उद्

च्छति। ततः रात्र्यारम्भे तुलायाः प्रथमांशद्वितीयार्द्धं, ततो धनुरादिपञ्चकम् १५०अंशात्मकं, मेषस्याद्यांशश्च क्रमेण रात्रौ उद्गच्छति ; अत एकस्यां रात्रौ सर्वराशिचक्रांशदर्शनम्। इयांस्तु विशेषः पूर्वकुजलग्नात् खमध्यकोपरिस्थाकाशभागरूपं खस्वस्तिकं यावत् ९० अंशात्मकं राशित्रयं मध्याह्नकालमध्ये क्रमेणोन्नतं भवति अपराह्णे तु तदेव ९०अंशात्मकं राशित्रयं खस्वस्तिकात् पश्चिमकुजलग्नाभिमुखं सत् नतं भवति। उन्नतांशानां मध्ये यस्य यस्य स्थानस्य पूर्वस्यैकनवतितमांशस्योदयः तस्य तस्य नतिर्भवति। नतांशानान्तु मध्ये यस्य स्थानस्य १८१ पूर्वस्यैकाशीत्युत्तरशततमांशस्योदयः तस्य तस्य पश्चिमकुजलग्नेनाच्छादनादस्तमयम् भवति। राशिचक्रवत् तत्स्थानि अश्विन्यादीनि नक्षत्राणि तत्स्था भौमादिग्रहाश्च एकरात्रौ दर्शनयोग्या भवन्ति। अस्तंगतास्तु सूर्य्येण सह दिन एव उदिता अपि सूर्य्यकिरणाभिभूततेजस्कत्वात् न दृश्यन्ते। कालशब्दे १९८१पृ०दर्शितास्तांशकमध्यवर्त्तिनस्तु सूर्य्यसन्निकर्षविशेषेण मन्दकिरणतया दृश्या अपि न सम्यक् दृश्यन्ते। चन्द्रस्य दर्शने त्वयं विशेषः चन्द्रो हि जलमयः तस्य स्वतोदीप्तिर्नास्ति तस्य दूरस्थजलमयस्य दृश्ययोग्यत्वात्। सूर्य्यकिरणप्रवेशेनैव दीप्त्या दर्शनयोग्यता तन्मण्डलस्य सूर्य्याधःस्थितत्वेऽपि एकराशेर्द्वादशांशावस्थितिकालरूपामावास्यान्तकालात् क्रमेण सूर्य्यात् पूर्वगतस्य तिर्य्यग्रूपेण स्थितत्वात् तत्प्रवेशः। तत्रापि ४८० योजनात्मक चन्द्रबिम्बस्य गोलाकारतया सूर्य्याभिमुखार्द्धे एव सूर्य्यकरप्रवेशः नेतरार्द्धे। तथा च पूर्णिमान्तसमये तयोः सम्यक्तिर्य्यग्रूपेण स्थितत्वात्तदानीमेव चन्द्रबिम्बार्द्धे २४० योजनात्मके तत्करसंपूर्णप्रवेशः। पूर्णिमान्तकालश्च सूर्य्याक्रान्तराश्यादितः भचक्रस्य १८० अंशस्थे चन्द्रे भवति। स च पञ्चदशतिथिभिर्भवति तथा च यदि १५ दिनैः १८० अंशगत्या करप्रवेशपूर्त्तिकालः तदा एकेन दिनेन क इत्यनुपातेन फलम् १२ अंशाः। यदि १८०अंशगत्या २४०योजनात्मकपूरणं तदा द्वादशांशगत्या किमित्यनुपातेन फलं १६योजनात्मकं चन्द्रबिम्बार्द्धस्य पञ्चदशांशरूपकलापूरणं लभ्यते ततश्च चन्द्रबिम्बार्द्धस्य पूर्वगतौ पञ्चदशांशात्मक १६योजनरूपायाः कलायाः पश्चिमस्य सूर्य्यादिशया तिर्य्यक्स्थित्या सूर्य्यकिरणप्रवेशाच्छुक्लतया तत्क्रियात्वमारोप्यते। पञ्चदशकलात्मकचन्द्रमण्डलस्य तु प्रतिपद्यपि सूर्य्याक्रान्तांशादितो द्विभागान्तरक्रियायाद्धनिःसरणस्य क्रमात् न केवलैकादिभागकलाक्रिया, तथाङ्गीकारे च केवलाद्यागस्य बिम्बं विहाय गमनप्रसङ्गात् न निःसरणं सम्भवति न वा दृश्यते। दृश्यते च द्वितीयादौ सूर्य्याक्रान्तांशादिभ्योऽल्पदूरतया चन्द्रबिम्बस्य स्थितिः। किञ्च प्रथमादि दिने प्रथमादिकलामात्रस्य पूर्वतोनिःसरणस्वीकारे चन्द्रबिम्बस्य पूर्वादिकलानामेव दृश्यतापत्तिः। न च तथा दृश्यते प्रत्युत पश्चिमस्थकलानामेव क्रमशः दृष्टिरुदेति। अतः सूर्य्यकिरणप्रवेशयोग्यत्वरूपादिका तिर्य्यक्स्थितत्वकृतैव प्रथमादिकलाक्रियेति वस्तुस्थितिः। तत्रामावास्यान्तक्षणे सूर्य्याक्रान्तराश्यंशादिस्थत्वेन तदधःस्थचन्द्रस्य सर्वथाऽदर्शनम् सूर्य्येण सह दिन एव तस्योदयात्। ततः शुक्लप्रतिपदि द्वादशांशान्तरितत्वेन तस्य सूर्य्यात् पूर्वगत्या १६ योजनात्मकचन्द्रबिम्बार्द्धकलायाः तिर्य्यक्स्थितत्वेऽपि कालशब्दे १९८० पृ० दर्शितास्तांशमध्यवर्त्तित्वात् अस्तांशमध्यवर्त्ति भौमादीनामिव न दृष्टिः। एवं कृष्णचतुर्दश्यामपि द्वादशांशान्तरितेन पश्चात्तिर्य्यक्स्थित्यापि न दृष्टियोग्यता। शुक्लद्वितीयायान्तु सूर्य्याक्रान्तराश्यंशात् दिनद्वयेन २४ अंशान्तरितत्वेन पूर्वादिशया सूर्य्यादधिकतिर्य्यक्स्थित्या २४ योजनात्मकस्य चन्द्रबिम्बार्द्धपञ्चदशांशरूपकलाद्वयस्य सूर्य्यकिरणप्रवेशात् दृष्टियोग्यता। एवं तृतीयादिष्वपि क्रमेण सूर्य्यकिरणप्रवेशाधिक्यात् अंशविशेषे दीप्तिपरिवृद्धिः शुक्ले पक्षे सूर्य्याक्रान्तराशितः द्व्यादिराश्यन्तरितत्वेन स्थितस्य दिवोदितस्यापि चन्द्रबिम्बस्य सूर्य्यकिरणविशेषप्रवेशेऽपि सौरालोकेनाभिभूतत्वात् सम्यक् नैव दृष्टियोग्यता। पूर्णिमायान्तु चन्द्रस्य सूर्य्याक्रान्तराशितः १८०भचक्रांशगत्या परमतिर्य्यक्स्थित्या सर्वकलासु २४० योजनात्मिकासु सूर्य्यकिरणप्रवेशः। कृष्णप्रतिपदि तु द्वादशांशान्तरितत्वेन सूर्य्यात् पश्चात् स्थित्या तिर्य्यग्गमनरूपतया १६ योजनरूपप्रथमकलायां न सूर्य्यकरप्रवेश इत्यतस्तस्य न दर्शनम् तत्र सूर्य्यकराप्रवेशनाच्छुक्लतिर्य्यग्गतिभेद एव कृष्णशुक्लपक्षकलाक्रियेति भेदः। अधिकमिन्दुशब्दे ९३० पृ० उक्तम्।

तिथिकरणयोगनक्षत्रवारेशादिरूपादिकं तत्तच्छब्दे दृश्यमिति दिक्।

खगमाङ पु० खे आकाशे गच्छति गम—खच् पृषो० नस्य ङः। (खामका) ख्याते वृक्षभेदे रत्नमा०। [सूर्य्यकान्ते हेमच०।]

खङ्कर पु० खन्यते खन—डिच् कीर्य्यते कॄ—अप् कर्म्मा०।

कर्णेषा प्रोक्तः । आशापत्त्रं समतः पादेष्वङ्घ्रयः सर्वदि-
शिराः । यः सर्वैः श्रीपर्ण्याः पर्यङ्को निर्मितः स धन-
दाता । असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः ।
यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः ।
चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् । यः पद्म-
कपर्यङ्कः स दीर्घमायुः श्रियं श्रुतं वित्तम् । कुरुते,
शालेन कृतः कल्याणं शाकरचितश्च । केवलचन्दनरचितं
काञ्चनगुप्तं विचित्ररत्नयुतम् । अध्यासनपर्यङ्कं विबुधै-
रपि पूज्यते स्वर्गतः ! अन्येन समायुक्ता न तिन्दुकी
शिंशपा च शुभफलदा । न श्रीपर्णी न च देवदारुकृतो
न चाप्यसनः । शुभदौ तु शाकशालौ परस्परं संयुतौ
पृथक् चैव । तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रकक-
दम्बौ । सर्वः स्पन्दनरचितो न शुभः प्राणान् हिनस्ति
चाप्यचिरात् । असनोऽन्यदारुसहितः क्षिप्रं दोषान् करोति
बहून् । आम्रस्पन्दनचन्दनहस्तानां स्पन्दनाच्छुभाः
पादाः । फलतरुणा शयनासनमिष्टफलं भवति सर्वेषु ।
गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगे । कार्योऽल-
ङ्कारविधिर्गजदन्तेन प्रशस्तेन । दन्तस्य मूलपरिधिं द्वि-
रायतं प्रोह्य कल्पयेच्छेषम् । अधिकमनूपचराणां
न्यूनं गिरिचारिणां किञ्चित् । श्रीवत्सवर्द्धमानच्छ-
त्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धि-
सौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्ट-
देशाप्तिः । लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ।
स्त्रीरूपे स्वनाशो भृङ्गारेऽभ्युत्थितं सुतोत्पत्तिः । कुम्भेन
निधिप्राप्तिर्यात्राविघ्नं च दण्डेन । कृकलासमर्कटभुजङ्गे-
ष्वसुभिक्षव्याधयो रिपुवशत्वम् । गृध्रोलूकध्वाङ्क्षश्येना-
कारेषु जनमरकः । पाशेऽथ वा कबन्धे नृपमृत्युर्जन-
विपत् स्रुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं
भवति । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवे-
च्छेदः । अशुभशुभच्छेदा ये गमनेष्वपि ते तथा फलदाः ।
ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः । अपसव्ये-
क्रियते भवति भयं भूतसञ्जनितम् । एकेनावाक्शि-
रसा भवति हि पादेन पादवैकल्यम् । द्वाभ्यां न
सर्वतोऽन्नं त्रिभिश्चतुर्भिः क्लेशवधबन्धाः । सुषिरेऽथ वा
विषमे पर्वणि पादस्य शीर्षके व्याधिः । पादे कुम्भो यश्च
पर्वो तस्मिन्नुदररोगः । कुम्भाधस्ताज्जङ्घा तत्र कृतो
जङ्घयोः करोति भयम् । तस्माच्चाधारोऽधः क्षयकृद्-
द्रव्यस्य तत्र कृतः । खुरदेशे यो ग्रन्थिः खुरिणां पीडा-

करः स निर्दिष्टः । ईषायोर्यस्य त्रिभागसंस्थो भवेत्स
शुभः । निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं
च । कालकमन्यद्धुन्धुकमिति कथितश्छिद्रसंक्षेपः ।
घटवत् सुषिरं मध्ये सङ्कटमास्ये च निष्कुटं छिद्रम् ।
निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् । सूकर-
नयनं विषमं विवर्णमध्यर्द्धपर्वदीर्घं च । वामावर्त्तं भिन्नं
पर्वमितं वत्सनाभाख्यम् । कालकमसितं तथा धुन्धुक-
मिति यच्चैव दुर्निर्भिन्नम् । दारुसवर्णं छिद्रं न तथा
पापं समुद्दिष्टम् । निष्कुटसंज्ञे द्रव्यक्षयस्तु कोलेक्षणे
कुलध्वंसः । शस्त्रभयं सूकरके रोगभयं वत्सनाभाख्ये ।
कालकधुन्धुकसंज्ञं कीटैर्विद्धं च न शुभदं छिद्रम् ।
सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु । एकद्रुमेण
धन्यं वृक्षद्वयनिर्मितं च धन्यतरम् । त्रिभिरात्मजवृद्धिकरं
चतुर्भिरर्थो यशश्चाग्र्यम् । पञ्चवनस्पतिरचिते पञ्चत्वं
याति तत्र यः शेते । षट्सप्ताष्टतरूणां काष्ठैर्घटिते
कुलविनाशः" वृ०सं० ।

सुश्रुतोक्तेषु चतुर्दशसु व्रणबन्धविशेषेषु खट्वाकारे २बन्धभेदे
"तत्र कोशदामस्वस्तिकानुवेल्लितमुतोलीमण्डलस्थगिकायम-
कखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश-
बन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः"
तस्य बन्धस्योपयोगस्थलं चोक्तं यथा "हनुशङ्खगण्डेषु खट्वाम्"

**खट्वाका** खट्वा—स्वार्थे क "खाटाखाट्विकाम्" पा० दा० व्याह ।
खट्वायाम् । अल्पार्थे कन् । २अल्पखट्वायाम् । इत्त्वाभावे
वा ह्रस्वः पक्षेऽतदन्तम् । खट्वका खट्विकाप्यत्र ।

**खट्वाङ्ग** न० ६त० । (खाटेरखुर) १खट्वाङ्गभेदे तदाकारे
२शिवस्यास्त्रभेदे । "खट्वाङ्गधरधारकः" शिवस्तवः ।
"खट्वाङ्गैः पट्टिशैः शूलैर्नाङ्गलैर्दण्डसैरकम्" काशीख०
३सूर्यवंश्ये नृपभेदे पु० । "सुतः पञ्चजनादासीदंशुमा-
निति विश्रुतः । दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः"
हरिवं० १५अ० । भागवते तु ९।९।२२ श्लो० "ततो दश-
रथस्तस्मात् पुत्र ऐडविडस्ततः । राजा विश्वसहो यस्य
खट्वाङ्गश्चक्रवर्त्त्यभूत्" इत्यनेन अन्यपुत्रता तस्याभिहिता
कल्पभेदादविरोधः । प्रायश्चित्तीयधार्ये खट्वाङ्गाकृतौ
४पात्रभेदे न० "एककालं तु भुञ्जीत चरन् भैक्ष्यं स्वक-
र्मकम् । कपालपाणिः खट्वाङ्गी ब्रह्मचारी कृतोद्यतः"
भा० शा० ३५ अ० । "खट्वाङ्गी चीरवासाश्च" मनुः ।

**खट्वाङ्गधर** पु० खट्वाङ्गं धरति धृ—अच् । शिवे । भृ—क्विप् ।
खट्वाङ्गभृदप्यत्रार्थे । २खट्वाङ्गधारिणि त्रि० ।

खट्वाङ्गमुद्रा स्त्री तन्त्रोक्ते मुद्राभेदे तल्लक्षणं यथा "खट्वाङ्गस्योर्द्ध्वविषये निर्मिताः सर्व्वसंयुताः। खट्वाङ्गमुद्रा-विख्याता देवस्य सुप्रिया मता" रुद्रया०।

खट्वाङ्गवन न० नित्यक०। वनभेदे "अहं हि खट्वाङ्गवने नारदेन समागतः" हरिवं० ७८ अ०।

खट्वारूढ त्रि० खट्वा+आरूढ़ अलौकिकविग्रहे द्वितीयातत्पु-रुषेण नित्यसमासः निन्दायाम्। जाल्मे त्रि०कौ०। मयूरादि० अन्तोदात्ततास्य। "इतस्त्वं पापैरमितैः खट्वा-रूढः प्रमादवान्" भट्टिः। "खट्वारूढः उत्पथप्रस्थितः" जयमङ्गला। तेन २तदर्थे च।

खड मन्थने भञ्जने च भ्वा०आत्म० इदित् सक० सेट्। खण्डते अखण्डिष्ट। चखण्डे खण्डनं खण्डः खण्डितः।

खड भेदने चुरा०उभ०सक० सेट्। खाडयति-ते अचीखडत् त खाडयाम् बभूव आस चकार चक्रे। खण्डयन्।

खड न० खड अच्। १तृणभेदे (खड) २पानकभेदे, पु० मेदि० तच्च पानकं वैद्यके प्रसिद्धम् तत्करणप्रकारः वैद्याश्रयेयः यथाह सुश्रुतः "खडाः खडयवाम्बुचाडवाः पानकानि च। एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः" स च भोजनकाले प्रथमान्ते पेयो यथोक्तं सुश्रुते "खडानि च खडांश्चैव सर्व्वशेषु दापयेत्"। खड+चातुरर्थ्यां नद्यामपि मतुप् मस्य वः। खडवत् खडस-न्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। ३ऋषिभेदे पु० तस्य गोत्रापत्यम् अश्वा० फञ्। खाडायन तद्गोत्रापत्ये पुंस्त्री०।

खडक न० खड+संज्ञायां कन्। स्थाणौ "स्थाणुः खडक-मुच्यते" कात्या०श्रौ० १४।२।१२ सू० व्याख्यायां कर्कः।

खडक्की स्त्री खडक् इत्यव्यक्तशब्दं करोति कृ-बा०ड गौ० ङीप्। पक्षद्वारे (खिड्कि)। स्वार्थे क ह्रस्वः। खड-क्किका तदर्थे हारा०।

खडत्तु पु० खड+अत्तु। बाहुलकात्तरणे संप्रसारः।

खडयवागू स्त्री खडपक्वा यवागूः। पानकभेदे खडशब्दे विवृतिः "खडयूषयवागूषु पिप्पल्याद्येव योजयेत्" सुश्रुतः

खडयूष पु० "तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः। सुपक्वं खडयूषोऽयमयं काम्बलिकोऽपरः" चक्रदत्तोक्ते पक्वतक्रभेदे।

खड्डिक त्रि० खडमस्त्यस्य ठन्। खडयुते। ततः सुतङ्गमा० चतुरर्थ्याम् इञ्। खाड्डिकि तत्सन्निकृष्टदेशादौ त्रि०।

खडी स्त्री खड-अच् गौ० ङीष्। खटिकायाम् शब्दच०। स्वार्थे क ह्रस्वः। खडिका तदर्थे।

खड्डु स्त्री खड-रु-। स्तनगद्धायां संक्षिप्तसारः।

खड्डूर त्रि० खड्डुरस्त्यस्य पा० उरच्। खड्डुयुक्ते। "खड्डूरे अविपक्वमां अर्पिकां सर्व्वरामिनीम्" अथर्व० ११।८।१६। ततः शुभ्रा० अपत्ये ढक्। खाड्डूरेय तदपत्ये पुंस्त्री०

खडोन्मत्ता स्त्री खडेन उन्मत्ता। खडशब्दोन्मत्तायाम्। ततः शुभ्रा० अपत्ये ढक्। खाडोन्मत्तेय तदपत्ये पुंस्त्री०।

खड्ग खड-भेदने गन्। उणादि० ११८ सू०। दीर्घतलकारके लौहादिमये १प्रहरणास्त्रभेदे। "न हि खड्गो विजानाति कर्म्मकारं स्वकारणम्" उद्भटः (खाँड़) इति ख्याते २पदार्थे ३गण्डकशृङ्गे ४गण्डके (गाण्डार) पुंस्त्री०। ५बुद्धभेदे पु० मेदि० ६चोरनामगन्धद्रव्ये पु० राजनि०। खड्ग-स्योत्पत्तिः मन्त्रस्रष्टुमे ब्रह्मयज्ञाग्नित उक्ता तत्-प्रमाणस्य मूलकत्वम्। तस्य चालने गतिभेदस्य द्वात्रिंशद्विधः महाभारते उक्तो यथा "मण्डलाकारतः खड्गभ्रामणं भ्रान्त १मुच्यते। तदेव बाहुकुदाम्य कृतमुद्भ्रान्त २मीरि-तम्। भ्रामणं स्वस्य परितः खड्गस्याविद्ध ३मुच्यते। परप्रयुक्तशस्त्रस्य वारणार्थमिदं त्रयम्। गत्वेतरारीमथा-श्चोद्य गमनन्त्वाप्लुतं ४मतम्। खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृतं ५मतम्। वञ्चयित्वा रिपौ शस्त्रपातनं सृदितं स्मृतम्६। परिवृत्तं ७मर्वेस्वतोऽभिमर्दयतो गतिः। पश्चात् यदापसरणं निवृत्तं ८समुच्यते। अन्योन्य ताडनं प्राहुः सम्पातं९मुभयोरपि। आधिक्यमात्मनो यत् तत्समुदीर्ण१०मुदीरितम्। खड्गमत्यङ्गरेणु भ्रामणं भारतं ११मतम्। विचित्रखड्गसञ्चारदर्शनं कौशिकं१२ स्मृतम्। निर्भीय चर्म्मनिक्षेपो यदसेः सात्वतं १३हि तत्" वह्निपुराणे खड्गचर्म्मयुद्धे द्वात्रिंशत्स्थानान्युक्तानि यथा "भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम्। सम्पातं समुदीर्णञ्च श्येनपात-मथाकुलम्। उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च। अनालक्षितविस्फोटौ करालेन्द्रमहा-सखौ। विकरालनिपातौ च विभीषणभयानकौ। समपादं तृतीयांशपादपादार्द्धवारिजम्। प्रत्यालीढमथा-लीढं वराहं ललितं तथा। इति द्वात्रिंशतो ज्ञेयाः खड्गचर्म्मविधौ रणे"। गण्डकशृङ्गस्य पञ्चनखत्वेऽपि भक्ष्यतामाह मनुः "श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशां-स्तथा। भक्ष्यान् पञ्चनखेष्वाहुः"। तस्य मांसस्य श्राद्धे प्रशंसामाह" मनुः "कालशाकं महाशल्काः खड्ग-लौहामिषं मधु। आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्व्वशः"। "प्राप्तोविशायपरिमोक्षणदूतशाखान् खड्गां-

चकार स्वरनिर्मितैः क्षुरप्रैः" रघुवंशमहाकाव्य।

खड्गधेनु स्त्री खड्गिनी धेनुः जातित्वात् युवतिपोटेत्यादि कर्म० पूर्वनिपातः पुंवत्त्व। गण्डकजातिधेन्वाम्। "खड्गधेनुकानां स्वास्तपरिचयपोतान्वेषिणीनाम्" काद०।

खड्गिन् पुंस्त्री खड्गः तदाकारं शृङ्गमस्त्यस्य इनि। गण्डके "एतत् खड्गिकलक्रीडितम्" काद०। स च सुश्रुते आनूपवर्गे कूलचरत्वेनोक्तः यथा "तत्र गजगवयमहिषरुरुचमरसृमर रोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः"। तन्मांसगुणास्तत्रोक्ता यथा "कषायं खड्गिपिशितं कफघ्नमनिलापहम्। पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम्। स्त्रियां ङीप्। २असिधारके त्रि०। ३मञ्जुघोषे पु० शब्दचि०। ४महादेवे पु० ५असनी शतघ्नी खड्गी पट्टिशी आयुधी महान्" भा० आनु० १७ शिवसहस्रनामोक्तौ [खड्गाकारपत्रके लताभेदे शब्दच०।

खड्गिमार पु० खड्गिनं मारयति मृ-णिच्-अण् उप०स०।

खड्गीक न० खड्गो तत्कर्मणि कुशलः का०ईक। दात्रे शब्दरत्ना०। तस्य खड्गकार्यकारित्वात् तथात्वम्।

खण्ड पु० खडि-घञ्। १भेदे "खण्डं खण्डं ययुर्घनाः" देवीमाहात्म्यम्। २विड्लवणे, ३इक्षुविकारभेदे (खाँड) न० राजनि०। खण्डगुणाः इक्षुशब्दे ९८१० पृ० उक्ताः। "यतः खण्ड न खण्डत्वाद्यमङ्गलमोदकमे" नैष०। कर्मणि घञ्। ४एकदेशे पु०न० अमरः। "ताराधिपखण्डधारी" कुमा०। काशीखण्डः केदारखण्ड इत्यादि। ७मणिदोषभेदे मेदि०। कर्मणि वञ्। ८खण्डिते त्रि० "खण्डाभ्रैर्विपिनगते" श्रुतिः "न खण्डे खण्डमिष्यते" श्रुतिः ततः पृथ्वा० भावे इमनिच्। खण्डिमन् खण्डभाव पु०। उत्करा० चतुरर्थ्यां छ। खण्डीय खण्ड सन्निकृष्टदेशादौ त्रि०।

खण्डक पु० खण्डेन निर्वृत्तादि खण्ड+अश्मा० क। खण्डनिर्मिते सितास्वण्डे शर्कराभेदे राजनि०। खण्डयति खडि-ण्वुल्। २छेदके त्रि०। [लिका०।

खण्डकथा स्त्री० खण्डः खण्डिता कथा। स्वल्पकथायाम्

खण्डकर्ण पु० खण्ड इव कर्णः कन्दो यस्य। (शकरकन्द) आलुभेदे। हेमच०।

खण्डकाद्यलौह पु० चक्रदत्तोक्ते खण्डपक्वौषधभेदरूपे औषधभेदे तल्लक्षणं यथा

"शतावरीच्छिन्नरुहावृषमुण्डतिकावलाः। तालमूली च गायत्री त्रिफलायास्त्वचकायाः। भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च। जलद्रोणे विपक्तव्यमष्टभागावशेषितम्। दिव्यौषधहतस्यापि माक्षिकेण हतस्य वा। पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्। खण्डतुल्यं घृतं देयं पलषोडशिकं बुधैः। पचेत् ताम्रमये पात्रे गुड़पाको यथामतम्। प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्। शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम्। त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम्। चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत्। यथाकालं प्रयुञ्जीत बिड़ालपदकं ततः। गव्यक्षीरानुपानश्च सेव्यं मांसरसं पयः। गुरुवृष्यानुपानानि स्निग्धं मांसादिबृंहणम्। रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः। वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्। श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा। आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च। चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम्। आरोग्यपुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम्। श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम्। छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः। कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत्। नारिकेलपयःपानं सुनिषण्णकवास्तुकम्। शुष्कमूलकजीवन्त्यं पटोलं वृहतीफलम्। फलं वार्त्ताकुपक्वाम्रं खर्जूरं स्वादु दाड़िमम्। ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम्। वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता। लौहान्तरवदत्रापि पुटनादिक्रियेष्यते"। [आलुभेदे शब्दच०।

खण्डकालु पु० खण्ड इव कायति कै-क कर्म०। (शकरकन्द)

खण्डकाव्य न० "खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च" सा०द० उक्ते काव्यभेदे तत्र महाकाव्यस्य बह्वधिकसर्गतया ततो न्यूनसर्गात्मकं यथा मेघदूतादि।

खण्डकुष्माण्डक पु० खण्डेन पक्वं कुष्माण्डमत्र कप्। कुष्माण्डरसायनशब्दे १०५ पृ० चक्रदत्तोक्तलक्षणे औषधभेदे।

खण्डखर्जूर न० खण्डेन पक्वं खर्जूरम्। खण्डपक्वे खर्जूरफले। खण्ड इव स्वादु खर्जूरम्। २स्वादुखर्जूरे च

खण्डज पु० खण्ड इव जायते जन-ड। यवासशर्करायां गुड़भेदे राजनि०।

खण्डजोद्भवज पु० खण्डज उद्भवोऽस्य तस्मात् जायते जन-ड। यवासशर्करारचिते खण्डभेदे राजनि० ।

खण्डताल पु० "द्रुतैकं भवेदात्र खण्डतालः स उच्यते

अपरं नियतं दिनं” इत्युक्तलक्षणे एकतालरूपे संगीतोक्ते तालभेदे (एकताला) संगीतदामो०।

खण्डधारा स्त्री खण्डे एकदेशे धारा यस्याः। कर्त्तर्याम् (कातारी) अस्त्रभेदे शब्दमाला।

खण्डन न० खडि—भावे ल्युट्। १भेदने, २छेदने, ३निराकरणे च। “अरमस्य रसखण्डनवर्जितम्” “दर्पणेन कृतखण्डनव्यथम्” रघुः। भावे युच्। तत्रार्थे स्त्री शब्दार्थनिर्वचनखण्डनया नयन्तः” श्रीहर्षखण्डनम्। खडि-करणे ल्युट्। परमतादिनिराकरणे ४शास्त्रभेदे यथा श्रीहर्षखण्डनं शिरोमणिकृतं दीधितिखण्डनम्। “यतः खण्डनखण्डखाद्यसंज्ञकोदयमे” नैष०। कर्त्तरि ल्यु। ५खण्डके त्रि० “स्मरगरलखण्डनम् मम शिरसि मण्डनम्” गीतगो०।

खण्डनखण्डखाद्य न० खण्डनं पदार्थस्य निर्वचनीयता-निराकरणं खाद्यम् खण्ड इव। श्रीहर्षप्रणीते सर्वपदार्थानाम् निर्वचनीयताप्रतिपादके चतुःपरिच्छेदात्मके ग्रन्थभेदे तत्र प्रथमपरिच्छेदे प्रमाणतदाभासनिर्वचनखण्डनम्। द्वितीये हेत्वाभासनिग्रहस्थाननिर्वचनखण्डनम्। तृतीये सर्वनामार्थनिर्वचनखण्डनम्। चतुर्थे भावाभावविशेषसत्तादिपदार्थानां निर्वचनखण्डनम्

खण्डपरशु पु० खण्डयतीति खण्डः परशुरस्य। १शिवे ततोऽस्त्रम्परशुके २जामदग्न्ये च हेम०। “येनैव खण्डपरशुर्भगवान् प्रचण्डः खण्डीकृतस्त्रिभुवनेषु गुरुः, प्रचण्डः” वीरच०। ३विष्णौ “द्वधन्वा खण्डपरशुः” विष्णुस०। “त्वत्प्रभां खण्डनात् खण्डः परशुरस्य जामदग्न्यादस्तैरिति” भ०।

खण्डपाल पु० खण्डं पालयति खण्डिमिष्टान्नसाधनतया पालि-ण्वुल्। गुडविकारनिर्मातरि शिल्पिभेदे (मयरा)

खण्डप्रलय पु० खण्डस्य भूम्यादिखण्डस्य प्रलयः। चतुर्युगसहस्रब्राह्मदिनावसाने भूम्यादिखण्डस्य लयाधारे कालभेदे “इड्डिर्निर्दिष्ट भुवः समन्तात् स्याद्योजनं भूभवभूतदैवैः। ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेऽखिलायाः” सि०शि०। “क्षयो नाम भूतविनाशः। प्रलय इत्युच्यते। स दैनंदिन उच्यते। यो ब्रह्मदिनान्ते चतुर्युगसहस्रावसाने लोकत्रयस्य संहारः स ब्राह्मलय उच्यते। तत्रापीनपुण्यपापा एव लोकाः कालवशेन ब्रह्मशरीरं प्रविशन्ति। तत्र मुखं ब्राह्मणाः, बाहू क्षत्रियाः, ऊरुद्वयं वैश्याः, पादद्वयं शूद्राः। ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो मुखादिस्थानेभ्यः कर्मपुटान्तरत्वाद्ब्राह्मणादय एव निःसरन्ति। तस्मिन् प्रलये भुवो योजनमात्रवृद्धेर्विनाशो नाखिलायाः” प्रमि०।

खण्डप्रलयप्रकारश्च हरिवं० १८८। १८९अ० उक्तो यथा “दिव्यं द्वादशसाहस्रं यदेतद्युगमुच्यते। तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते। एतदेवं सहस्रगुणं ब्राह्ममहरिहोच्यते। ततोऽहनि गते तस्मिन् सर्वेषामेव देहिनाम्। शरीरनिर्वृतिं दृष्ट्वा लोकसंहारबुद्धिमान्। देवतानाञ्च सर्वेषां ब्राह्मणानां महीपते। दैत्यानां दानवानाञ्च यक्षकिन्नररक्षसाम्। देवर्षीणां महर्षीणां तथा राजर्षीणामपि। गन्धर्वाणामप्सरसां भुजगानां तथैव च। पर्वतानां नदीनाञ्च पशूनाञ्चैव भारत!। तिर्य्यग्योनिगतानाञ्च सत्त्वानां क्रिमीणां तथा। महाभूतपतिर्देवः पञ्च भूतानि भूतकृत्। जगत्संहरणार्थाय कुरुते वैशसं महत्। भूत्वा सूर्य्यश्चक्षुषी चाददाति भूत्वा वायुः संहरन् प्राणिजालम्। भूत्वा वह्निर्निर्दहन् सर्वलोकान् मेघो भूत्वा भूय उग्रोऽप्यवर्षत् १८८अ०। वैशम्पायन उवाच। भूत्वा नारायणो योगी सप्तमूर्त्तिर्विभावसुः। गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान्। पीत्वार्णवांश्च वै स ह नदीः कूपांश्च सर्वशः। पर्वतानाञ्च सलिलं सर्वमादाय रश्मिभिः। भित्त्वा सहस्रशश्चैव महीं गत्वा रसातलम्। रसातलगतं कृत्स्नं पिबते रसमुत्तमम्। अन्यच्च मूत्रजं क्लेदमन्यद्यद्दाति प्राणिनां ध्रुवम्। तत् सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः। वायुश्च बलवान् भूत्वा स विधूयाखिलं जगत्। प्राणोदयं सुराणाञ्च वायुना कुरुते हरिः। ततो देवगणानाञ्च सर्वेषामेव देहिनाम्। ये चेन्द्रियगणाः सर्वे ये चान्ये भूतसम्भवाः। तथा घ्राणं शरीरञ्च पृथिवीमाश्रिता गुणाः। जिह्वा रसश्च स्नेहश्च संश्रिताः सलिलं गुणाः। रूपं चक्षुर्विपाकश्च ज्योतिरेवाश्रिता गुणाः। स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः। परमेष्ठिनमीते वै कृष्णीकृतं समाश्रिताः। ततो भगवता तत्र रश्मिभिः परिवारिताः। वायुना क्रममाणाश्च रूपज्योऽन्तकमाक्षदात्। तेषां सङ्घर्षजातश्च पावकः शतधा ज्वलन्। अदहच्च ततो लोकान् संवर्त्तकोऽनलः। स पर्वतान् द्रुमान् गुल्मान् लतावल्लीस्तृणानि च। विमानानि च दिव्यानि पुराणि विविधानि च। आश्रमांश्च तथा पुण्यान् दिव्यान्यायतनानि च। यानि चाश्रयणीयानि

खादीरं खाद । प्रतिखदति । "तथा खदिः खरच-ग्रहृति तथा निखर्वति" शत० ब्रा० ।।७।४।।० "अत्यन्त-त्वात्स्थिरत्वगाढत्वम्" भाष्यम् ।

**खद** पु० खद-वा० भावे अप् । स्थिरत्वे । तस्मै हितादि गवादि० यत् । खद्य स्थिरत्वहिते त्रि० । खद्यपत्नी ।

**खदिका** स्त्री खे आकाशे दीयते दो-घञर्थे क टाप् ततः संज्ञायां कन् । लाजेषु त्रिका० तेषां भर्ज्जनपात्रात् उड्डीयाकाशे एव स्फोटनात् तथात्वम् ।

**खदिर** पु० खद-किरच् । (खएर) ख्याते वृक्षभेदे तस्य सारे स्थिरत्वात्तथात्वम् । २चन्द्रे त्रिका० शशचिह्नकत्वात् तथात्वम् । खे आकाशे दीर्यते इन्द्रादिकारिभिर्वलैः ट-अपादाने किरच् । ३इन्द्रे मेदि० । इन्द्रादिकारि-भिर्हि चन्द्रमण्डलात् पारश्रावप्रदेशविदारणाकाशे पतनात् तस्य तथात्वं खगोलशब्दे ४४० पृ० विवृतिः खदिरवृक्षभेदपर्यायगुणा भावप्र० उक्ता यथा "खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः । खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् । तिक्तः कषायो मेदोघ्नः कृमि-मेहज्वरव्रणान् । श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् । खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः । कदरो विशदो वर्ण्यो मुखरोगकफास्रजित् । इरिमेदो विट्खदिरः कालस्कन्धोऽरिमेदकः । इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान्" खदिररसादिविधानं सुश्रुते उक्तं यथा "अतः खदिरविधानमुपदेक्ष्यामः । प्रशस्तदेशजातमनुपहतं मध्यवयसं खदिरं परितः खानयित्वा मध्यममूलं छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रस-ग्रहणसमर्थो भवति । ततस्तं गोमयमृदावलिप्तमवकीर्य-ण्यनेर्गोमयमिश्रैरादीपयेत् । यथास्य दह्यमानस्य रसो द्रवत्यधस्तात्तदा जानीयात्तमथ भाजनमिश्रदेशगतमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात् ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योप-युञ्जीत जीर्णे भल्लातकविधानवदाहारः परिहारश्च । प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति ॥ खदिरसारतुलामुदकद्रोणे विपाच्य षोडशांशावशिष्टमव-तार्यानुगुप्तं निदध्यात् तमामलकरसमधुसर्पिर्भिः संसृ-ज्योपयुञ्जीत । एष एव सर्वेष्वसारेषु कल्पः । खदिर-सारचूर्णतुलां खदिरसारक्वाथभावितां वा प्रातः प्रातरुप-युञ्जीत खदिरसारक्वाथसिद्धमरिष्टं वा सर्पिः । अमृत-वल्लीस्वरसं क्वाथं वा प्रातःप्रातरुपसेवेत तत्सिद्धं वा सर्पिः अपराह्णे सर्पिष्मतौदनमामलकयूषेण भुञ्जी-तैवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यते" इति ।

"अथ तैलमल्लातकतैलामलकरसस्वर्णपर्णीक्षीरं सारसारा-दिकषायस्य च त्रिफलात्रिकटुकहरितालमनःशिलाकुष्ठफल-सारचित्राक्षीरतुत्थहरिद्राद्वयविड़ङ्गनीलोत्पलकटुरोहिणीपिप्पली-तिविषारग्वधप्रियङ्गूनां च त्रिकार्षिकान् भागान् कृत्वा स्नेहपाकविधानेन पचेत् तत्साधुसिद्धमवतार्य परिस्रा-व्यानुगुप्तं निदध्यात् तत उपसंस्कृतशरीरं प्रातः प्रात-रुत्थाय पाणिशुक्तिमात्रं लीढ्वा च प्रतिसंसृज्योपयुञ्जीत जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदक-सिद्धं सद्योदनमश्नीयात् खदिरोदकसेव्येवं द्रोणमुप-युज्य सर्वकुष्ठैर्विमुक्तः शुद्धतनुः वर्षशतमायुषमायुर-रोगो भवति" । खदिरस्य योन्युत्पत्तिः श्रूयते । "प्रजा-पतेः प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत" इत्युपक्रम्य "अस्थिभ्य एवास्य खदिरः समभवत् तस्मात् स दारुणो बहुसारोऽदारमिव ह्यस्थि तेनैवैनं तद्रूपेण समर्द्धयति अन्तरे वैन्वा भवन्ति बाह्यो खादिरा अन्तरे हि मज्जानो बाह्यान्यस्थीनि" शत० ब्रा० ६।४।४।६ "त्रिमा खदिर-सारेण हारेण हरिणीदृशाम् । नाधरे जायते रागो-ऽनुरागः पयोधरे" उद्भटः । खदिरस्य विकारः अण् । खादिर खदिरवृक्षजाते त्रि० । "खादिरे पशुं बध्नीत खादिरं वीर्यकामस्य यूपं कुर्वीत" श्रुतिः । स्त्रियां ङीप् । "अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात्" याज्ञ० उक्तेः तस्य सूर्यग्रहसमित्त्वम् । "अभावे खदिरबिल्वरौहितकान्" "खदिराभावे सोमवल्कात्" । कात्या० ६।१।८।।० । पलाशाभावे खदिरादीन् यूपान् कुर्वीत सोमयागे खदिर एव मुख्यः । तदभावे बिल्वादि इति भेदः । ४ऋषि-भेदे च तस्य गोत्रापत्यम् अश्वादि० फञ् । खादि-रायण तद्गोत्रापत्ये पुंस्त्री० । ततः कण्वादि० चातु-रर्थ्यां क । खदिरक तत्सन्निकृष्टदेशादौ त्रि० । खदिरोविद्यते-ऽस्य मतुप् मस्य वः अजिरा० न दीर्घः । खदिरवत् खदिरयुते त्रि० स्त्रियां ङीप् खदिरवती नदीभेदे स्त्री "छन्दोऽवत्याः" पा० अस्यान्तोदात्तता । खदिरात् परत-मत्वस्य असंज्ञायामपि णत्वं खदिरवणम् । खदिरस्य दारुः पीत्वा० कृषच् । खदिरकृच तद्रूपार्थे पु० । ततः

उत्करादि चतुरर्थ्याम् छ । खदिरीय तत्सन्निकृष्टदेशादौ त्रि० । वराहा० चतुरर्थ्यां कक् । खादिरक तत्सन्निकृष्टदेशादौ त्रि०

**खदिरपत्रिका** स्त्री खदिरस्य पत्रमिव पत्रमस्याः कप् कापि अत इत्वम् । १विट्खदिरे २लज्जालुलतायाञ्च राजनि० स्वभावे ङीप् । खदिरपत्री लज्जालुलतायां स्त्री जटा० । [“विना खदिरसारेण” उद्भटः ।

**खदिरसार** पु० ६त० । खदिरद्रुमस्य निर्यासजे सारे (खयेर)

**खदिरा** स्त्री खदिरः तत्पत्राकारोऽस्त्यस्याः पत्रे अच् । लज्जालुलतायाम् राजनि० ।

**खदिरिका** स्त्री खदिरः खदिररसमरसोऽस्त्यस्याः ठन् । १लाक्षायां तस्या हि खदिरवृक्षनिर्यासरूपत्वात् तथात्वम् । २लज्जालुलतायां च राजनि० ।

**खदिरी** स्त्री खद-किरच् गौरा० ङीष् । लज्जालुलतायाम् शाकभेदे (चाङ्‌जोडा) २लतायाञ्च जटा० । [रत्नमा० ।

**खदिरोपम** न० खदिर उपमा यस्य । (काटाशबला) द्रुमभेदे

**खदूरक** त्रि० खद-बा० ऊरच् संज्ञायां कन् । ऋषिभेदे । ततः बिदा० अपत्यादौ अञ् । खादूरक तदपत्यादौ ।

**खदूरवासिनी** स्त्री खे आकाशे दूरे वसति वस-णिनि ङीप् । वृश्चिकाभेदे त्रिका० ।

**खद्यपत्री** स्त्री खदे स्थैर्ये हितं गवा० यत्. खद्यं पत्रमस्य गौरा० ङीष् । खदिरे राजवल्लभः ।

**खद्योत** पु० खे द्योतते द्युत-अच् । १कीटभेदे (जोनाकी-पोका) “खद्योतरद्भिवातं तत्क्षरा विश्ववान्वितम्” भा० व० १२२ अ० । “खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्” मेघदू० । खं द्योतयति द्युत णिच्-अच् उप० स० । २सूर्ये जटाधरः ।

**खद्योतक** पु० खद्योत इव कायति कै-क । १फलविषवृक्षभेदे सुश्रु० । “कुमुद्वतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि” । २सूर्ये पु० । [जटा० ।

**खद्योतन** पु० खमाकाशं द्योतयति द्युत-णिच्-ल्यु । सूर्ये

**खधूप** पु० खमाकाशं धूपयति धूप-अण् उप०स० । खे धूप इव वा । आकाशगामिनि अग्निक्रियायुक्ते (हाउइ) इति ख्याते पदार्थे “खधुपः सधूपात्” भट्टिः ।

**खन** विदारे भ्वा० उभ० सक० सेट् । खनति ते अखानीत् अखनीत् अखनिष्ट खायात् खन्यात् । चखान चख्नतुः चख्ने । खातम् खनितं खेयम् । खनिता । खनित्वा खात्वा खानः । खनित्रम् । खनः । खायते खन्यते खनिः खनकः ।

“इमां खनाम्योषधिम्” ऋ० १०।१४५।१ । “अभ्रिरसि नार्यसि त्वया वयमग्निं शकेम खनितुम्” यजु० ११।१० “त्वं गन्धर्वा अखनन्” यजु० १२.९८ । “यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति” मनुः । “उगास्यः खनमानः खनित्रैः” ऋ० १.१७९.६ ।

अभि+आभिमुख्येन सर्वतश्च खनने । “यो होताभिखनेदेव एवाभिविन्देत्” शत०ब्रा० ११।१।६।१६ ।

अव+अधःखनने । अवखनति अवखातः ।

आ+समन्तात् खनने आखरः आखनः आखुः ।

उद्+उत्पाटने “पत्तैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः” (कलमाः) । “व्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा कृतैः !” “बल्लानुत्खाय तरसा उत्खातलोकत्रयकण्टकेऽपि” रघुः ।

नि+निधाने सक० “निचखान जयस्तम्भम्” पद्भ्यां निचख्नतुः” “अष्टादशद्वीपनिखातयूपः” रघुः “विषादशङ्कुं च मतौ निचख्ने” भट्टिः ।

निस्+निर्+निष्क्रमणे “समुद्रादिरखनं सोऽम्भिर्भिः” शत०ब्रा० ७।५।२।५२ ।

परि+परितः खनने परिखा उत्पाटने च “कण्टकिनोऽरिपक्षस्य समूलान् परिखायाद् यावदेवामागमम् छान्दो० २।७५

वि+विशेषेण खनने । “यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु” अथ० १२।१।३५ ।

**खनक** पु० खन-वुन् । १मूषिके, २सन्धिचौरे च । ३भूविदारके (कोड़ा) त्रि० हेम० “विदुरस्य सुहृत् कश्चित् खनकः कुशलोऽस्म्यहम्” भा० आ० १४७ अ० । ४स्वर्णाद्युत्पत्तिस्थाने आकरे मेदि० । “पुरी समन्ताद्विहिता सपताका सतोरणा । सचक्रा सहुडा चैव सयन्त्रखनका तथा” भा० व० १५ अ० ।

**खन(मा)पान** चतुर्थ्यां क्षत्रियभेदे “खन(मा)पानोऽङ्गरोजस्य तस्मादवितवस्ततः” भाग० ९।२३।२ ।

**खनयित्री** स्त्री खन-णिच्-नि० वृद्ध्यभावः तृच् ङीप् । (खुन्ती) इति ख्याते अस्त्रभेदे सा च जिगीषुणा यात्रायामग्रे चालनीया यथाह नारदपञ्चरात्रे “खनयित्री शुभा यात्रा जयार्थं वृद्धकाङ्क्षिभिः । पञ्चवर्णांशुकयुता चालनीया पुरःस्थिता”

**खनित्र** न० खन-इत्र । (खोन्ता) अस्त्रभेदे । “यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति” मनुः । स्वार्थे क तत्रार्थे हारा० ।

**खनि(नी)** स्त्री खन-इन् वा ङीप् । आकरे रत्नाद्युत्पत्तिस्थाने

खरकर पु० खरस्तीव्रः करोऽस्य । सूर्य्ये खरकिरणखरांशु-प्रभृतयोऽप्यत्र । [रत्नम् । बलायामौषधौ राजनि० ।
खरकाष्ठिका स्त्री खरतुल्यं काष्ठं यस्याः कप् कापि अत
खरकुटी स्त्री खरा तीव्रा क्षुरवत्त्वात् कुटी । १नापितस्थाने त्रिका० तस्याः क्षुरवत्त्वात्तथात्वम् । ६त० । गर्द्दभस्थाने च खरस्थानादयोऽप्यत्र ।
खरकोण पुंस्त्री खरं तीव्रं कोणयते शब्दायते कुण-शब्दे धातूनामनेकार्थत्वात् इह शब्दार्थता अच् उप० स० । तित्तिरिपक्षिणि हेम० । जातित्वात् स्त्रियां ङीष् ।
खरगन्धनिभा स्त्री खरगन्धेन नितरां भाति नि+भा-क । नागबलायां नागबलाम् (पान) शब्दा० ।
खरगन्धा स्त्री खरो गन्धोयस्याः । नागबलायाम् राजनि०
खरघातन पु० खरहयरोगं, तदाख्यराक्षसं वा घातयति हन-स्वार्थे णिच्-ल्यु । १नागकेशरे, २श्रीरामे च शब्दच० ।
खरच्छद पु० खरः छदः पत्रमस्य । (उलुखड़) १तृणभेदे रत्नमा० । २कुन्दरवृक्षे राजनि० ।
खरज्ञु त्रि० खरं जीर्य्यति जृ-बा० कु । तीव्रगतौ "अभू-नाथत् खरमञ्जा खरज्ञुः" ऋ० १०,१०६,७ ।
खरणस् त्रि० खरस्य नासेव खरा वा नासा यस्य नसादेशः णत्वम् । १खरतुल्यनासिके २तीव्रनासिके च । अच् समा० । खरणसोऽप्यत्रार्थे अमरः । [भावप्र० ।
खरत्वच् पु० खरा कठिना त्वक् यस्य । १कच्चालुभेदे ।
खरदण्ड न० खरः उग्रः कण्टकाहतत्वात् दण्डोऽस्य । पद्मे धरणी ।
खरदला स्त्री खरं दलं यस्याः । काकोदुम्बरे शब्दच० ।
खरदूषण पु० खरतुल्यं दूषयन्त्यादकमात्रैतद्दोषो यत्र । १धत्तूरे (धुतरा) २बहुदोषे त्रि० । शब्दरत्ना० । द० । राक्षसभेदयोः द्विव० "खरदूषणयोर्भ्रात्रोः" भट्टिः ।
खरधार त्रि० खरा उग्रा धाराऽस्य । तीव्रधारे अस्त्रभेदे करपत्रमित्यस्य खरधारस्य च शस्त्रादौ प्रयोगे दोषाः यथाह सुश्रुतः "तत्र वक्रं कुण्ठं खण्डं खरधार-मतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधार-मस्थिच्छेदनार्थम्" ।
खरध्वंसिन् पु० खरं खरनामानं राक्षसं ध्वंसयति ध्वंस-णिच्-णिनि । श्रीरामे । खरहन्त्रादयोऽप्यत्र । रामस्य खरध्वंसकथा खरशब्दे दृश्या ।

खरनादिन् त्रि० खरं नदति नद-णिनि । तीव्रशब्दकारके स्त्रियां ङीप् । सा च २रेणुकाख्यगन्धद्रव्ये शब्दच० । खर इव नदति नद-णिनि । ३गर्द्दभतुल्यनादकारके त्रि० "उपमानं शब्दार्थप्रकृतावेव" पा०कस्यादुदात्तता । खरनादिनोऽपत्यं बाह्वादि० इञ् । खारनादि तदपत्ये पुंस्त्री० ।
खरनाल न० खरं नालमस्य । पद्मे "नार्वागगतस्तत्खरनाल-नालनाभिं विचिन्वंस्तदविन्दताजः" भाग० ३,८,२१ ।
खरप पु० खरं पिबति पा-क । १ऋषिभेदे ततो नडादि० गोत्रापत्ये फक् । खारपायण तद्गोत्रापत्ये पुंस्त्री० । बहुषु तस्य यास्का० लुक् । खरपास्तद्गोत्रापत्येषु ।
खरपत्र पु० खरं पत्रमस्य । १मरुबके (मेधुन) २क्षुद्रतुलसीवृक्षे च रत्नमा० । ३यावनालशरे ४मरुबके ५हरिदर्भे च राजनि० । वा कप् । खरपत्रक । तिलकवृक्षे शब्दच० ।
खरपत्री स्त्री खरपत्रमस्याः गौ० ङीष् । १गोजिह्वावृक्षे २काकोदुम्बरिकायाञ्च राजनि० ।
खरपात्र न० खरं पात्रम् कर्म० । लौहपात्रे त्रिका० ।
खरपादाढ्य पु० खरैः पादैर्मूलैराढ्यः । कपित्थद्रुमे शब्दच०
खरपुष्प पु० खरं पुष्पमस्य । मरुबके रत्नमा० ।
खरपुष्पा(ष्पी) स्त्री खराणि पुष्पाण्यस्याः वा ङीप् । बर्बरा-शाके (बाबुइ तुलसी) अमरः ।
खरप्रिय पुंस्त्री खरो धान्यादिमर्द्दनस्थानं प्रियोऽस्य खरः । पारावते शब्दमा० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् ।
खरमञ्ज पु० खरं मञ्जयति मस्ज-र । अक्षरलोचके । खरम्ब शब्दे दृष्टा० ।
खरमञ्ज(रि)री स्त्री खरा मञ्जरी यस्याः समासान्तविधेर-नित्यत्वात् न कप् कृदः वा ङीप् । अपामार्गे अमरः । तत्र कृदन्ते "पलाशद्रुमे खरमञ्जरेर्वा" "फलानि पिप्पलेः खरमञ्जरेर्वा" । "खरमञ्जरिवाद्राक्षैश्चचामरदारुभिः" सुश्रु० । दीर्घान्ते "बिल्वाक्षखरमञ्जरीमधुरिपु सुद्या-ग्नीत्यादि० सुश्रुतः ।
खररोमन् त्रि० खरं रोमाऽस्य । कठिनरोमयुक्ते स्त्रियां वा डाप् । खररोमत्वं गर्द्दभहत्याकर्मविपाकः यथाह शाता० "खरे विनिहते चैव खररोमा प्रजायते" इति । २नागभेदे पु० शब्दा० । [काभावे खरस्त्रीत्यप्यत्र रत्नमा० ।
खरवल्लिका स्त्री खरा वल्ली सैव स्वार्थे क । नागबलायाम्
खरशब्द पु० खर उग्रः शब्दोऽस्य । १कुररखगे । ६त० । २गर्द्दभशब्दे पु० । ५ष० । ३उग्रशब्दे पु० । [भावप्र० ।

कठतया गर्वहेतुत्वात् तथात्वम्। खर्व—गतौ अच्। यद्वा मध्यः ३ह्रस्वे ४वामने त्रि० अमरः "खर्व! गर्वसमूह-परिवर्तनो!" तारास्तोत्रम्। ५संख्याभेदे (सहस्रकोटौ) "अर्बुदमब्जं खर्वनिखर्व"मिति लीलावती। ६तत्संख्याते च

**खर्व(र्ब)ट** पु० खर्व(र्ब)—अटन्। "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्व(र्ब)टोनाम नदीगिरिसमाकुलः" भाग० टीकायां श्रीधरोक्ते ग्रामभेदे।

**खर्वशाख** त्रि० खर्वा शाखा तत्तुल्यस्य हस्तपादादर्यो ऽस्य। वामने हेम०।

**खर्वित** त्रि० खर्व—नीचगतौ कर्त्तरि क्त। ह्रस्वे स्त्रियां टाप्। सा च अमावास्याभेदे, "संमिश्रयेच्चतुर्दश्या अमावास्या भवेत् क्वचित्। खर्वितां तां विदुः केचिद्गताध्वामिति चापरे" कर्मप्रदी० पूर्वदिनस्थिततिथ्यपेक्षया परदिने २अल्पकालस्थिततिथिमात्रे च।

**खर्वूरा** स्त्री खर्व उरच्। तरदीवृक्षे राजनि०।

**खर्बु(र्वु)ज** न० खर्बु(र्वु) उन् तथा भूता जायते जन—ड। (खरबुज) लताफलभेदे। तस्य गुणा भावप्र० उक्ता "खर्बु(र्वु)जं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु। स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम्। तेषु यत्स्याम्लमधुरं सक्षारञ्च रसाद्भवेत्। रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम्"।

**खल** चलने सञ्चने च भ्वा० पर० सक० सेट्। खलति अखालीत् चखाल प्रतिखलति खलः।

**खल** पुंन० खल—अच् अर्द्धर्चा०। धान्यमर्द्दनस्थाने हेम०। (खामार) धान्यखलः गोधूमखलः यवखलः। "खलात् क्षेत्रादगाराद्वा यतोवाप्युपलभ्यते" मनुः। खलयज्ञः खलेकपोतः। "खले न पर्षान् प्रतिहन्मि भूरि" ऋ० १०,४८,७, २धूलिराशौ च ३भुवि ४स्थानमात्रे च। खलञ्च माध्यन्दिनेषु यज्ञेषु उत्तरवेदित्वेन विहितो यथा "माध्यन्दिनेष्वेतरा वेदिः "खल उत्तरवेदिः" आश्व० श्रौ० ७,१२,१४, तत्र खलशब्दनिर्वचनं कात्यायने यथा "खल उत्तरवेदिः धान्यखलः प्रत्ययात्" कात्या० श्रौ० २२,३·३२,४३, खल इत्युक्ते धान्यखलः प्रतीयते यतः" कर्कः। "ये वेदिमभितस्तानुत्तरवेदिदेशे स्तृणन्ति" कात्या०श्रौ० ४५, "धान्यखलनभितः सन्निधानात् वेदिमभितो ये यज्ञविशेषास्तानुत्तरवेदिदेशे स्तृणन्ति मर्द्दयन्तो सान्वेभ्यो विमोकार्थमनुडुद्भिः परितो गच्छद्भिराक्रमणीयार्थः" कर्कः। इति पूर्वपक्षः "पांशुखलो वा प्रत्यवायविशेषात्" ४७सू०। वाशब्दः पक्षान्तरे पांशुखलो-ऽोत्तरवेदिर्भवति तत्रापि खलशब्दप्रयोगप्रत्ययौ" कर्कः "पांशुखलो धूलिराशिः प्रत्येतव्यः कुतः खल इत्युक्ते धान्यखलोऽपि प्रतीयते पांशुखलोऽपि प्रतीयते" सं०व्या० इति सिद्धान्तः। ५तिलकल्के पु० (खलि) ६नीचे ७अधमे ८दुर्जने त्रि० "सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः। मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते" चाणक्यः। "स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः" भाग० १,७,३७। ९इतरे च त्रि० अमरः। खे लीयते ली—ड। १०सूर्य्ये। खं तद्वत् लाति ला—क। ११तमालवृक्षे पु० शब्दच०। १२प्रक्षरणके औषधमर्द्दनपात्रभेदे वैद्यकम्। १३खडे डलयोरैक्यात्। "खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः" सुश्रुतः। "खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ" सुश्रुतः। खल एव अनुकम्पा० स्वार्थे ठक्। खालिक खलशब्दार्थे। शब्दच०।

**खलक** पु० खं शून्यं मध्ये लाति ला—क संज्ञायां कन्। कुम्भे

**खलकुल** न० खलको खलभूमौ लीयते ली—बा० ड। कुलत्थ कलाये "दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिल माषा अणुप्रियङ्गवो गोधूमाश्च खल्वाः खलकुलाश्च" इ०उ० "खलकुलाः कुलत्थाः" भा०।

**खलता** स्त्री खलस्य लता। १आकाशलतायाम्। खलस्य भावः तल्। २दुर्जनत्वे च। "अनिवारिततापसम्पदं फलहीनां सुमनोभिरुज्झिताम्। खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधोजनः" माघः। खलता च "अक्षौहिणि तथा गात्रे विहेवः खलता स्मृता" इत्युक्तलक्षणा।

**खलति** पु० स्खलन्ति केशाः अस्मात् स्खल० भीमा० अपादाने अति पृषो०। (टाक) १इन्द्रलुप्तरोगे शब्दार्थ विहतिः। २तद्वति त्रि० स्त्रियां वा ङीप्। तद्रोगयुक्तपरत्वे कडा० कर्मधा० परनि०। गुरुखलतिः खलतिगुरुः। "अथ यद्येन्द्रस्तेष्वुपक्रमे 'विकङ्कतखलतिविक्लिधशुक्रस्य मूर्द्धनि जुहोति" कात्या० श्रौ० २०,८,१८, "खलतिः खल्वाटः" कर्कः।

**खलतिक** पु० खलतिरिव कायति कै—क। पर्वते "खलतिकादिषु वचनम्" वार्त्ति०। खलतिकः पर्वतस्तस्य वनानि खलतिकं वनानि" बहुत्वेऽपि एकवचनम् सि०कौ०।

**खलधान** पु० खलाः सदा धीयतेऽस्मिन् धा—आधारे ल्युट्। (खामार) स्थाने खलपदार्थे हेमच०।

**खलपू** त्रि० खलं भूमिं पुनाति पू—क्विप्। स्थानशोधनकारिणि (फराश)। अमरः।

**खलयज्ञ** पु० खले कर्त्तव्यो यज्ञः। खले कर्त्तव्ये यज्ञभेदे

**खाण्ड** न० खण्डस्य भावः ष्यञ्० भावे पक्षे अण् । खण्डतायां खण्डस्य विकारः अण् । २खण्डविकारे च ।

**खाण्डव** त्रि० खाण्डं खण्डविकारं वाति वा-क । खण्डविकारयुक्ते मोदकादौ । "रसालापूपकांश्चित्रान् मोदकांश्च सखाण्डवान्" भा० आनु० ५३ अ० ।
२वनभेदे । तच्च वनं पुरा शक्राद्याश्रयस्थानं तच्च छित्त्वा सोमवंश्येन सुदर्शनेन राज्ञा खाण्डवी पुरी कृता पुनः सा काशीराजेन विजयेन जित्वा शक्रनिदेशात् वनतां प्रापिता यथाह कालिकापु० ७८ अ० ।

"सोमवंशेऽभवद्राजा महात्मा स महाबलः । वीरः सुदर्शनो नाम चारुरूपः प्रतापवान् । स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् । सिंहान् व्याघ्रान् समुत्सार्य्य क्वचिद्वापि तपोधनान् । खाण्डवीं नाम नगरीमकरोत्तत्र शोभनाम् । त्रिंशद्योजनविस्तीर्णामायतां शतयोजनम्" ॥ "अथ हित्वा नरपतिर्विजयस्तं सुदर्शनम् । कृतापचारं बहुधा देवानाञ्च तथा न्टणाम् । वाराणसीपतिं वीरं विजयं जयशालिनम् । सन्धाय कृत्वा साचिव्यं तत्रैव न्ययोजयत् । विजयो विवरं प्राप्य महाबलपराक्रमः । सुदर्शनस्य न्टपतेरस्कन्दनमथाकरोत् । नासहत् सोऽवस्कन्दं विजयस्य सुदर्शनः । चतुरङ्गबलेनाशु युद्धायाभिमुखोऽभवत् । विजयो रथमारुह्य नियुज्य चतुरङ्गिणीम् । सेनां सुदर्शनं योद्धुं सम्मुखोऽभवदञ्जसा । तदा महद्युद्धमासीद्विजयेन महात्मना । सुदर्शनस्य न्टपतेर्देवासुरयोरिव । ततः सुदर्शनो राजा हारितो युद्धतोऽभवत् ॥ उत्फुल्लनयनो राजा विजयः परवीरहा । मेनेऽमरावतीं तान्तु पुरीं क्षितिगतामिव । तं वीक्ष्य नरपतिं नगरीं तां सुरेश्वरः । सदेव विजयं प्राह सान्त्वयन् श्लक्ष्णया गिरा । इन्द्र उवाच । राजन्! मद्वनमिदमासीद्देवगणावृतम् । नरगन्धर्वयक्षाणां मुनीनाञ्च मनोहरम् । सर्व्वोत्सार्य्य देवादीन्मम चाप्यप्रिये रतः । भङ्क्त्वा वनमिदं शुभ्रं समुत्सार्य्य तपोधनम् । खाण्डवीं नगरीं चक्रे हठाद्राजा सुदर्शनः । तदिदं पुनरेव त्वं वनं कुरु भूमीप ! । यत्राहं विहरिष्यामि तत्रैव समं रक्षः । मुनीनाञ्च तपःस्थानं भवत्वं ते प्रसादतः । भविष्यति च यक्षाणां किन्नराणाञ्च पार्थिव ! । मार्कण्डेय उवाच । एतत् श्रुत्वा वचस्तस्य शक्रस्य विजयस्तदा । वनमेवाकरोत्तान्तु खाण्डवीं शक्रगौरवात् । गच्छन्तु भो यथास्थानं प्रजाः सर्व्वा यथेच्छया । येषां वाञ्छास्ति लोकानां मद्राज्यगमने पुनः । वाराणसीं ते गच्छन्तु मयैव प्रतिपालिताम् ॥ ततस्तस्य वचः श्रुत्वा जनाः केचिन्निजं पदम् । जग्मुर्वाराणसीं केचिद्विजयेनाभिपालिताम्" ॥ "अष्टाविंशतिमे प्राप्ते युगे द्वापरशेषतः । वह्निर्ब्राह्मणरूपेण भिक्षां जिष्णुमयाचत । दानभक्तोक्ते भिक्षां तदा पाण्डुसुतेन वै । वह्निस्वरूपमास्थाय जिष्णुं वचनमब्रवीत् । अहमग्निः पाण्डुपुत्र ! यज्ञभागातिभोजनात् । व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना । खाण्डवं नाम विपिनं सर्व्वसिंहगजाकुलम् । यदि त्वं मां भोजयितुं शक्नोषि श्वेतवाहन ! तदा ममाप्यसौ व्याधिरपयास्यति नोचिरात् । पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् । भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् । यदेतद्देवविहितं वनं तच्छ्वेतवाहन ! । विरोधात्तस्य शक्रस्य न स्वयं भोक्तुमुत्सहे । तस्मात्त्वाहि महाभाग ! वच्मि तन्मे नियोजय । यथाहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः । तच्च तद्वचनं श्रुत्वा सव्यसाची महाबलः । दाहयामास विपिनं तत् सर्व्वं प्राणिसंकुलम् । देवकीतनयोपेतो वासुदेवेन पालितः । खाण्डवं दाहयामास ज्वलनस्य हिते रतः" । २तन्नामपुर्य्यां स्त्री ।

**खाण्डवप्रस्थ** पु० इन्द्रप्रस्थे युधिष्ठिराश्रयस्थानभेदे "अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽभिचिन्तितः" भा० आ० ६१ अ० । इन्द्रप्रस्थशब्दे तत्कथा दृश्या ।

**खाण्डवायन** पु० ऋषिभेदे "व्यजनं तदा राजन्! प्रख्याताः खाण्डवायनाः" भा० व० ११७ अ० ।

**खाण्डविक** पु० खाण्डवं मोदकादि शिल्पमस्य ठञ् । मोदककारके ( मयरा ) "आरालिकाः सूपकाराः ये च खाण्डविकास्तथा" भा० आश्र० १ अ० ।

**खाण्डवीरणक** त्रि० खण्ड इव वीरणः खण्डवीरणः ततः अरीहणा० चातुरर्थ्यां वुञ् । खाण्डवीरणसन्निकृष्टदेशादौ । [मोदककारके हारा० ।

**खाण्डिक** पु० खण्डं मोदकादि शिल्पमस्य ठञ् ।(मयरा)

**खात** न० खन-भावे क्त । १खनने कर्म्मणि क्त । २पुष्करिण्यादौ त्रि० "पूर्त्तं खातादिकर्म्म च" अमरः । तडागशब्दे विवृतिः । खातवेतनादिदानार्थं लोकव्यवहारोपयोगी खातव्यवहारो लीला० उक्तो यथा ।
"अथ खातव्यवहारे करणसूत्रं वृत्तार्द्धम् । गणयित्वा

**खातक** न० खात+संज्ञायां कन्। १परिखायाम् (खाद) हेमच०। "उत्तमर्णो धनस्वामी अधमर्णस्तु खातकः" इत्युक्ते २अधमर्णे ३परसैन्यविदारके च "खातकव्यूहमत्यन्तं बकदर्शनगोचरम्" भा० शा० ११८ अ०। "खातकाः परसैन्यविदारकाः" नीलक०।

**खातभू** स्त्री खातयुक्ता भूः। १परिखायां २प्रतिकूपे च हारा०

**खाति** स्त्री खन–खै–वा भावे–क्तिन् आत्। खनने।

**खात्र** न० खन–त्रन् किच्च आत्। १खनित्रे २जलाधारे च सि०कौ० ३वने ४दवे च संक्षिप्तसारः।

**खाद** भक्षणे भ्वा० पर० सक० सेट्। खादति अखादीत् चखाद। खाद्यः खादकः खादनम्। णिचि। खादयति अचिखादत् त। "सक्तून् खादति यस्तस्य रिपवो नाशं प्रयान्ति ध्रुवम्" ति० त० "न खादेः परमन्नानि" इत्यौत्सर्गिकमन्त्रः। "देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्" मनुः। "स हि (उषस्तिः) कुल्माषान् खादन्तं बिभिक्षे" छा० उप०। "मांसानि च न खादेद्यस्तयोः पुण्यं फलं स्मृतम्" मनुः। "आयङ्क्ष्मानो वैदेहीं खादितां निहतां स्मृताम्" भट्टिः। "तादृशं भवति प्रेत्य यथा मांसानि खादकः" मनुः। चन्द्रमाकम्बादकः। खादनस्य हिंसाव्यभिचरितत्वात् हिंसार्थत्वात् अकित्त्वेऽपि वा० चरा० तेन स्वार्थे णिच् खादयति। "दुर्बलं बलवन्तो हि मत्स्या मत्स्यं विशेषतः। खादयन्ति" मत्स्यपु०। "मां खादय मृगश्रेष्ठ! दुःखादस्मात् हिमोदय" भा०व० ६१ अ०। "देवराजो मया दृष्टो वारिवारणमस्तके। खादयन्नर्कपत्राणि" विदग्धमु०। अस्य भक्षणार्थत्वेऽपि "आदिखाद्योर्न" वार्त्ति० णिचि प्रयोज्यकर्त्तुः न कर्मत्वम्। खादयति अन्नं वटुना" "वयोभिः खादयन्त्यन्ये" "तां श्वभिः खादयेद्राजा" मनुः। "मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः" भट्टिः। खादनञ्च कठिनादि द्रव्यस्य गलाधःसंयोगानुकूलव्यापारविशेषः प्रतिषिद्धभक्षणविषये तु दशनमात्रप्रवेशेऽपि प्रायश्चित्तादिमिति भेदः यथाह प्रा०त० "यद्यपि लशुनादीनां कण्ठादधोनयनमेव भक्षणं न तु निष्ठीवनाय मुखप्रवेशादेः कण्ठधारणं, तथाविधे प्रयोगाभावात्। तथापि पापविशेषे तथाविधानुवन्धेऽपि प्रायश्चित्तं, प्रकृतवत्ते तथा दर्शनात् यथा याज्ञवल्क्यः "चरेद्व्रतमहत्वाऽपि घातार्थञ्चेत् समागतः"। अत्र हननप्रतिषेधेन यथा तदङ्गभूताभ्यवरणादेरपि प्रतिषिद्धत्वात् प्रायश्चित्तविधानं तथाऽत्रापि भक्षणप्रतिषेधेन तदङ्गभूताव्यभिचारितास्यादिसंयोगस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वात् भवत्येव प्रायश्चित्तं, मिताक्षराद्याचामप्येवम्। अतएवोक्तं "जिघ्रन्नपि सुरां कश्चित् पिबतीत्यभिधीयते। यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम्" इति। अत्र वक्त्रे गण्डूषस्य प्रवेशनेन पानातिदेशवद्भक्षणोद्यमेऽपि भक्षणातिदेशः। तत्र विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" इति याज्ञवल्क्योक्तेः दण्डोद्यमे दण्डनिपातप्रायश्चित्तार्द्धवत् भक्षणोद्यमे कण्ठादधोनयनसम्भावनारहिते अर्द्धं प्रायश्चित्तं ज्ञेयम्"

**खादक** त्रि० खाद–ण्वुल्। १भक्षके। "इथा मांसानि खादकः" मनुः "यदि चेत् खादको न स्यात् न तदा घातको भवेत्" भा० आनु० ५६२४ श्लो०। २अधमर्णे च "खादको वित्तहीनः स्यात् लग्नको वित्तवान् यदि। मूलं तस्य भवेद्देयम्" नारदः "खादकोऽधमर्णः" मिता०।

**खादतमोदता** खादत मोदत इत्युच्यते यस्यां क्रियायाम् मयू०स०। खादनमोदनाय निर्देशक्रियायाम्।

**खादन** पु० खादत्यनेन खाद–करणे ल्युट्। १दन्ते हेम०। भावे ल्युट्। २भक्षणे न०। "अन्नानां खादनेनाहमर्थी नान्येन केनचित्" रामा०२,५०स०४५ श्लोकः।

**खादि** त्रि० खाद–कर्मणि इन्। भक्ष्ये "अंसेषा वः प्रपथेषु खादयः" ऋ०१,१६६,९,। "खादयः भक्ष्याः" भा० खाद–धातूनामनेकार्थत्वात् त्राणे कर्त्तरि इन्। २त्रायके। "हस्तेषु खादिश्च कृतिश्च संदधे" ऋ०१, १६८,३। "हस्तेषु खादिः हस्तत्रायकः" भा०।

**खादित** त्रि० खाद–क्त। भक्षिते अमरः। "आयङ्क्ष्मानो वैदेहीं खादितां निहतां स्मृताम्" भट्टिः।

**खादिन्** त्रि० खाद–णिनि। भक्षके स्त्रियां ङीप्। "लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः" मनुः।

**खादुक** त्रि० खाद–उन् संज्ञायां कन्। हिंसाशीले हेम०।

**खादोअर्णस्** स्त्री खाद–कर्मणि असुन् खादः खाद्यमर्णं जलं यस्याः पृषो० पूर्वरूपैकादशाभावः नद्यां। निघ०।

**खाद्य** त्रि० खाद–कर्मणि ण्यत्। भक्ष्ये। "मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप!" भा०स० ४अ०।

**खान** न० खै–धातूनामनेकार्थत्वात् भक्षणे भावे ल्युट्। भक्षणे। "सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः। इतरे खानपानेन वाक्प्रदानेन पण्डिताः" गरु० पु० १०८ अ०। "खाने पाने च दातव्यम्" इत्या० तत्त्वम् खै–खनने हिंसने च भावे ल्युट्। १खनने २हिंसने च।

**खानक** त्रि॰ खन–ण्वुल् । खनके "व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान्" मनुः ।

**खानि** स्त्री खनिरेव पृषो॰वृद्धिः । स्वर्णाद्युत्पत्तिस्थाने आकरे हेमच॰ । वा ङीप् तत्रार्थे शब्दच॰ । [त्रिका॰ ।

**खानिक** न॰ खानेनं खननेन निर्वृत्तं ठञ् । कुड्यच्छेदे गर्त्ते

**खानिल** पु॰ खानं खननं भित्त्यादेस्तेनास्त्यस्य वा॰ इलच् । सन्धिचौरे भित्तिभेदनेन चोरयितरि त्रिका॰ ।

**खानिष्क** पु॰"दोषघ्नीनां सदा पथ्यः खानिष्कः कफकृद्गुरुः" सुश्रुतोक्ते मांसभेदे । [त्रिका॰ ।

**खानोदक** पु॰ खानाय भोजनाय उदकमस्य । नारिकेले

**खापगा** स्त्री खस्याकाशस्यापगा । गङ्गायाम् हेम॰ खधुनी खनद्यादयोऽप्यत्र ।

**खार** पु॰ खमवकाशमाधिक्येन ऋच्छति ऋ–अण् उप॰ स॰ । खारीपरिमाणे उज्ज्वल॰ ।

**खारि(री)** स्त्री खं मध्यावकाशमाराति आ+रा–क गौरा॰ङीष् वा ह्रस्वः । द्रोणषोडशात्मके धान्यादिमानभेदे । "पलञ्च कुडवः प्रस्थः आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः । द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते" हेमा॰ दा॰विष्णु ध॰ । अर्द्धशब्दात् संख्यायाश्च परतोऽस्य समासे वा टच् । अर्द्धखारम् अर्द्धखारि । द्विखारं द्विखारि । अर्द्धखार्य्या क्रीतम् ठञ् पूर्वपदस्य वा वृद्धिः । अ(आ)र्द्धखारिकम् । अध्यर्द्धशब्दात् संख्यायाश्च परतःखार्य्याः क्रीताद्यर्थे ईकन् । अध्यर्द्धखारीकं द्विखारीकम् । केवलाया अपि ईकन् तत्रार्थे खार्य्या क्रीतम् खारीकम् । [ ह्रस्व । खारीध्मायके ।

**खारिन्धम** त्रि॰ खारीं धमति ध्मा–खश् धमादेशः मुम्

**खारिम्पच** त्रि॰ खारीं तन्मितधान्यं पचति पच–खश् मुम् ह्रस्व । खारीमितान्नपाचके ।

**खारीक** त्रि॰ खारीं खारीवापमर्हति ईकन् । खारीवाप योग्ये क्षेत्रे अमरः २खारीमितधान्यादिक्रीते च ।

**खारीवाप** त्रि॰खारी तन्मितधान्यम् उप्यतेऽत्र वप–आधारे घञ् । खारीमितधान्यवपनयोग्ये क्षेत्रादौ अमरः । खारीं वपति वप–कर्त्तरि अण् उप॰स॰ । खारीमितधान्यादिवापके त्रि॰ स्त्रियां टाप् सि॰कौ॰ । मुग्ध॰ मते अण् अतः स्त्रियाम् ङीप् इति भेदः ।

**खार्कार** पु॰ गर्द्दभजातिशब्दे "खार्काररभसा मत्ताः पर्य्यधावन् वरूथशः" भाग॰ ३,१७,१२ तत्र तत्रार्थतामाह श्रीधरः ।

**खार्जूरेय** त्रि॰ खर्जूरस्येदम् वा॰ ढक् । १खर्जूरसम्बन्धिनि । २रसालभेदे न॰ । "मधुरदधनि मध्ये शर्करां सर्पिषोऽल्पं शुचि विदलितखण्डं प्रक्षिपेत् खार्जूरेयम् । करचिलुलितमेणैर्गौमितं नाभिगन्धैर्जितमधुजठराग्निं स्वादयत्येव नूनम् । रसालं खर्ज्जू(र्जू)रस्येदं विदग्धिकविकारकम् । हृद्यञ्च कफदं बल्यं पित्तघ्नं मूत्रकृत् सरम्" भावप्र॰ ।

**खालत्य** न॰खलतेर्भावः ष्यञ् । इन्द्रलुप्तरोगे"जरा खालत्यं पालित्यं शरीरमनुप्राविशत्" अथ॰ ११।८।१९ । पृषो॰ इन्द्रलुप्ताख्ये वा यथाह सुश्रुतः "रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् । प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः । रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः । तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते" ।

**खिखिर** पुंस्त्री खिङ्खिर–पृषो॰ । ( खाकशियाली ) शिवाभेदे त्रिका॰ । [शेयाली ) शिवाभेदे त्रिका॰ ।

**खिङ्खिर** पु॰ खिमित्यव्यक्तं शब्दं किरति कॄ–क । (खाक-

**खिट** भये भ्वा॰ पर॰ अक॰ सेट् । खेटति अखेटीत् । चिखेट । खेटकम् ।

**खिद** परितापे तुदा॰ पर॰अक॰अनिट् मुचादि । खिन्दति खिन्दतः । अखैत्सीत् चिखेद । खिन्नः ।

**खिद** दैन्ये दिवा॰ रुधा॰ च आत्म॰ अक॰ भीषायां सक॰ अनिट् । खिद्यते खिन्ते अखित्त चिखेद । खिन्नः । "अपथनिरभिलाषः खिद्यते लोकहेतोः" शकु॰ । "हरिरित्यखिद्यत नितम्बिनीजनः" माघः । "खिन्ने तेष्वेव ये द्रव्यं दीयमानं न गृह्णति" कविरहस्यम् । "अखिन्दानस्य तेजसा" भट्टिः । "प्रहर्त्तासिखिदेन च" भट्टिः "खिदञ् ध्यौ दैन्यके"इत्येव वोपदेवे पाठः अतएव "रक्षं न्यशीषदक्षाम्यदखिदद्युधाजिकाङ्क्षरम्" भट्टिः आ+प्रकर्षेण खेदने । "आखेदते प्रखिद्यते च नमः" यजु॰ १६।४६। "आखेदते प्रकर्षेण खेदयति पापिनः"वेददी॰। वेदे गणव्यत्ययः अन्तर्भूतण्यर्थता च ।

उद्+उत्पाटने । "प्रजापतिरात्मनोवपामुदखिदत्" श्रुतिः । "अथ वपामुत्खिदन्ति" शतब्रा॰ ३।८।२।५। "इमां वपामुत्खिदन्ति मध्यतः" ३।८।३।२। "वपामुत्खिदतोत्खिद्य" ४।५।१।१।२। सर्वत्र गणव्यत्ययः ।

परि+समन्तात् खेदे । "कान्तावियोगपरिखेदितचित्तवृत्तिः । "परिखेदितविन्ध्यवीरुधः" भट्टिः। "लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः" भाग॰ ३।६।२८।

सम्+सम्यक्तापे अक॰उत्पाटने सक॰। "यथा हृदयः प्रसृष्टो

शङ्खान् संखिद्रेत् धर्मिततरान् समखिदत्” शा॰ब्रा॰।

**खिद्रिर** पु॰ खिद्यते क्षयपक्षे खिद–किरच्। चन्द्रे उज्ज्व॰।

**खिद्यमान** त्रि॰ खिद–ताच्छील्ये चानश्। १दैन्ययोगिनि २खेद-युक्ते च।

**खिद्र** त्रि॰ खिद–दैन्ये रक्। १रोगे २दरिद्रे च उज्ज्वल॰। “बलित्था पर्वतानां खिद्रं बिभर्षि पृथिवि!” ऋ॰५।८४।१।

**खिद्वन्** त्रि॰ खिद–अन्यभूतगतार्थे क्वनिप्। खेदकारके। “कक्षो किरयो दभ्र खिद्वः” ऋ॰ ६।२२।४। “खिद्वः! शत्रूणां खेदयितः!” भा॰।

**खिन्न** त्रि॰ खिद–क्त। १दैन्ययुक्ते, २अलसे ३खेदयुक्ते च। “खिन्नः कार्यक्षणे न्ययः!” मनुः “तयोपचाराञ्जलि-खिन्नहस्तया” रघुः।

**खिर्हिरी** स्त्री महाशमङ्गायाम् राजनि॰।

**खिल** खणन आदाने तुदा॰ पर॰ सक॰ सेट्। खिलति अखेलीत्। चिखेल।

**खिल** त्रि॰खिल–क। हलादिना १अकृष्टे क्षेत्रादौ २शास्त्रतः संक्षिप्ते पूर्वशास्त्रानुक्तपरिशिष्टे, यथा ऋग्वेदे श्रीसूक्तादि, यजुर्वेदे शिवसंकल्पादि, महाभारते हरिवंशः। खिलेषु हरिवंश इति पुष्पिकाव्याख्याने “खिलो नारायणः प्रोक्तस्तद्गुणा इवतः स्मृताः” इति नीलकण्ठेनोक्तेः ३नारायणे पु॰। ततः अभूततद्भावे भूधातुना कृधातुना च समासः। खिलीभवति खिलीकरोति त्रि॰। “खिलीभूते विमानानां तदापातभयात् पथि” कुमा॰। “तौ सुकेत-सुतया खिलीकृते” रघुः। “पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम्” रघुः। “विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभाः” माघः। “धर्मशास्त्राणि चैव हि। आख्यानानीतिहासाश्च पुराणानि खिलानि च” मनुः। “अर्थं दृष्ट्वैव मर्दीनैः खिलानां शिवमस्तु वः” भाग॰ ६।४।१५।

**खिल्य** त्रि॰ खिले भवः यत्। खिलभवे लवणादौ। “यथा सैन्धवखिल्यः उदके प्रास्त उदकमेवानुविलीयेत” शत॰ब्रा॰१४,५,४।१२। “स्यन्दनात् सिन्धुरुदकं तस्य विकार-स्तद्भवो वा सैन्धवः सचासौ खिल्योऽवयवश्चेति सैन्धवखिल्यः” भा॰। २खिले परिशिष्टे पठिते च। “इदानीं खिल्यान्युच्यन्ते, वेददी॰। तानि च “अग्निश्च पृथिवी च सन्नते” इत्यादीनि यजु॰ २६अ॰ गतानि। एवमृग्वेदे खिल्यानि दशमण्डले द्रष्टव्यानि।

**खिलैषु** पु॰ खिलस्य हरेरिषुर्यो यत्र। हरिवंशे। तत्र हरिगुणाभिख्यानस्य नातत्वात्वम्। “खिलेषु हरिवंशे” हरिवंशस्याध्यायसमाप्तिषु पुष्पिका।

**खील** पु॰ कील+पृषो॰। कीलके। “त्रीणि शतानि शङ्कवः षष्टिः खीला अविचाचला ये” अथ॰१०।८।४। [चुक्षुवे।

**खु** ध्वनौ भ्वा॰ आत्म॰ सक॰ अनिट्। खवते अखोष्ट।

**खुङ्गाह** पु॰ खुमित्यव्यक्तं शब्दं कृत्वा गाहते गाह–अच्। कृष्णपिङ्गलवर्णतया दृश्ये हेमच॰।

**खुज** स्तेये भ्वा॰ पर॰ सक॰ सेट्। खोजति अखोजीत्। चुखोज उदित् खोजित्वा खुक्त्वा खुग्नः।

**खुञ्ज(ञ्जा)क** पु॰ खुज–वा॰ आक वा॰ नुगागमौ नुमा-गमो वा। देवतालवृक्षे रत्नमा॰।

**खुड** भङ्गे इदित् भ्वादि॰ आत्म॰सक॰ सेट्। खुण्डते अखु-ण्डिष्ट। चखुण्डे। खुण्ड्यते।

**खुड** भेदने चुरा॰ उभ॰ सक॰ सेट्। खोडयति–ते अचूखु-डत्–त। खोडयाम् बभूव मास चकार चक्रे।

**खुड** भेदे चुरा॰ इदित् उभ॰ सक॰ सेट्। खुण्डयति ते अचुखुण्डत् त।

**खुडक** पु॰ खुलकः लस्य डः। गुल्फभागभेदे खुलकशब्दे दृश्यः “न्यस्ते तु विषमे पादे रुजः कुर्यात् समीरणः। वातकण्टक इत्येष विज्ञेयः खुडकाश्रितः” सुश्रु॰ भावप्र॰ तु “एक पादे विषमे न्यस्ते श्रमाद्वा जायते यदा। वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्” इ-त्युक्तम् इति खुडकाश्रित इत्यस्य स्थाने गुल्फाश्रयतोक्ते-स्तस्य गुल्फांशार्थता।

**खुद** भेदने सक॰ पर॰ अनिट्। खोदति अखोदीत् चुखोद। “चोदयत खुदत वाजसातये” ऋ॰ १०।१०१।१२। माधवस्तु खुर्दधातोरेव तद्रूपसिद्धा रत्नोपम्यान्दस इत्याह वोपदेवधातुपाठे तु अयं धातुर्नास्ति। “पनीयुदरु यथा खपम्” आश्व॰श्रौ॰ २।१०।१४। [खुरः।

**खुर** विलेखने तुदा॰पर॰सक॰सेट्। खुरति अखोरीत् चुखोर

**खुर** पु॰ खुर–क। १शफे पशूनां पादयोर्लिखिते नखाधारे पदार्थे २कोलदले ३नखीनामगन्धद्रव्ये मेदि॰। करणे अजर्थे क। ४नापितास्त्रभेदे शब्दर॰। ५खट्वापादे(खाटेर खुरा) धरणौ। “उदात्तकपालुषकलेषु खुराभिघातात्” माघः। “रजःकणैः खुरोद्धूतैः” रघुः। खुरशब्दस्य बह्वा॰ङीप् वा खुरी। तेन क्रीतमण्यस्य।

**खुरक** पु॰ खुर इव कायति कै–क। तिलवृक्षे शब्दच॰।

**खुरणस(स)** त्रि॰ खुर इव नासिकाऽस्य नसादेशः टच्

मना॰ चवङ्। चिपिटनासिके। अमरः। [खाभी।

**खुरप्र** पु॰ खुर इव प्राति–पूरयति प्रा–क। क्षुरप्रशब्दार्थे

**खुरली** स्त्री खुर इव लाति–ला–क गौरा॰ ङीष्। १शरा-भ्यासे त्रिका॰। शस्त्रप्रयोगे २अभ्यासकाले च। "खुरली कलहे गणानाम्" महावीरच॰।

**खुराक** पु॰स्त्री खुर–आकन्। पशौ उणा॰।

**खुरालक** पु॰ खुर इवालति पर्याप्नोति अल–ण्वुल्। लौह-मयबाणे शब्दमा॰।

**खुरालिक** पु॰ खुराणामालिभिः कायति प्रकाशते कै–क। (भाँड)१नापितास्त्रभाण्डे,२नाराचास्त्रे,३उपधाने च मे॰

**खुरासान** पु॰ "हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि!। खुरासानाभिधो देशो म्लेच्छमार्गपरायणः" इत्युक्ते देशभेदे

**खु(खू)र्द** क्रीडायां भ्वा॰आ॰ अक॰ सेट्। खु(खू)र्दते अचु-(खू)र्दिष्ट चुखु(खू)र्दे।

**खुलक** पु॰खुर–कुन् स्वार्थे क। गुल्फाधःभागे "या गुल्फ-कस्खात् सुमितस्य जन्तोरस्याष्टभागं खुलकादिभस्य" सुश्रु॰।

**खुड्ड** न॰ क्षुद्–संप॰क्विप् तां लाति ला–क पृषो॰। १नखी-नामगन्धद्रव्ये शब्दच॰। २क्षुद्रे ३स्वल्पे ४कनिष्ठे च त्रि॰ स्वार्थे क। तत्रार्थे निष्ठुरे दरिद्रे खले च अमरः।

**खुल्लतात** पु॰खुल्लः कनिष्ठस्तातस्य नि॰पूर्वनि॰। पितुः कनिष्ठ-भ्रातरि शब्दच॰एवं खुल्लपितामहादयोऽपि पितामहादेः कनिष्ठभ्रातरि।

**खल्लम** पु॰खुल्लेन मीयते मा वा॰ कर्मार्थे क। पथि त्रिका॰।

**खूगल** न॰ तनुत्राणे "खूगलेव विक्षतः पातमस्मात्" ऋ॰ २।३९।४। खूगला तनुहिंसाया रक्षकः" भा॰ "पिशङ्गे रूपे खूगलं तदा बध्नन्ति वेधसः" अथ॰ ३।९।२।

**खेखीलक** पु॰ खे आकाशे कीलक इव यस्य रः। शब्दवत्यां घण्टायाम् हारा॰। [ कराठविहगे शब्दमा॰।

**खेगमन** पुंस्त्री खे आकाशे गमनमस्य अलुक् स॰। काल-

**खेचर** पु॰ खे चरति चर–ट अलुक्स॰। १शिवे, शब्दर॰ २विद्याधरे जटा॰ ३पारदे राजनि॰ ४सूर्यादिग्रहे, ५आकाशगामिमात्रे त्रि॰। स्त्रियां ङीप्। ६तत्वे न॰ रत्ना॰ तत्त्वस्य तन्मात्रया खे गतिमत्त्वात्तथात्वम्। ७चोटके पुंस्त्री शब्दरत्ना॰ ८योगाङ्गे मुद्राभेदे स्त्री सा च काशीख॰ ४१अ॰। "कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। न पीड्यते स रोगेण न च लिप्येत कर्मणा। बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम्। चित्तं चरति खे यस्मात् जिह्वा चरति खे गता। तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता। याव-द्बिन्दुः स्थिरो देहे तावत् मृत्युभयं कुतः। यावद्बद्धा च सा मुद्रा तावद्बिन्दुर्न गच्छति" ९तन्त्रोक्ते पूजाङ्गे मुद्राभेदे यथा "सव्यन्दक्षिणदेशेषु सव्यदेशे तु दक्षि-णम्। बाहुद्वयं महादेवि। कृत्वा द्वौ परिवर्त्त्य च। कनिष्ठानामिके देवि! युक्ते तेन क्रमेण च। तर्ज्ज-नीभ्यां समाक्रान्ते सर्वोर्द्ध्वमपि मध्यमे। अङ्गुष्ठौ महेशानि! सरलौ वापि कारयेत्। इयं सा खेचरी नाम्ना पार्थिवस्थानयोजिता" तन्त्रसा॰। १०मेषादिराशौ पु॰। "खेचराद्य सर्वे" ज्यो॰ त॰। सर्वे राशयः।

**खेट** भोजने अद॰ चु॰ उभ॰ सक॰ सेट्। खेटयति ते अ-चिखेटत् त।

**खेट** पु॰ खेटति खट–अच् खिट–अच् वा। १सूर्या-दिग्रहे, "यस्मिन्नृक्षे स्थिताः खेटाः" इति ज्यो॰त॰। २इनिन्दके त्रि॰ विश्वः। ३अधमे त्रि॰ अमरः ४कर्षकग्रामे पु॰ मेदि॰ "खेटखर्वटवाटीश्च वनान्युपवनानि च" भाग॰ १,७,११। "खेटाः कर्षकग्रामाः" श्रीधरः। ५अस्त्रभेदे पु॰। "यष्टिरूपेण खेट! त्वमरिसंहारकारकः। देवीहस्तस्थितो नित्यम्" तत्पूजा मन्त्रः। स्वार्थे क। तत्रार्थे पु॰न॰ "दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम्" भा॰ वि॰ ह्र॰। "अनयोः स्त्रियौ च कार्य्ये खेटक-निस्त्रिंशधारिण्यौ" वृह॰सं॰। अनयोःशाम्बप्रद्युम्नयोः, "खेटकं पूर्णचापञ्च" दुर्गाध्यानम्। "खेटकास्तन्तु हस्त-स्थितमेवारीन् घ्नन्ति यथाह "हस्तघ्नोविश्वावयुनानि" यजु॰ १८,५१। "हस्ते स्थितोघ्नन्ति हस्तघ्नः खेटकः" वेददी॰ स च यष्टिरूपः। ६चर्मणि मेदि॰। खिट भये करणे घञ्। ७मृगयायाम् पुंन॰ आखेटकम्। कर्त्तरि अच्। ८तृणे न॰ हेमच॰। कु(क)रपालस्याधःस्थिते ९फलकाकारे काष्ठभेदे न॰ तन्मानादिकं हेमा॰परि॰ख॰ लक्षणसमुच्चये "तत्र खेटकमपि कु(क)रपस्य त्रिविधमुत्तमं द्वादशाङ्गुलं दशाङ्गुलं मध्यममष्टाङ्गुलं निकृष्टम् बाला-नामेतत् खेटकमबालानान्तु विंशत्यङ्गुलमुत्तममष्टादशाङ्गुलं मध्यमं षोडशाङ्गुलं निकृष्टमिति" कौषनसनीतिः। १०धनहृद्विजीविनि त्रि॰ हारा॰ ११बलदेवगदायामि-त्यन्ये, १२कफे मेदिनि॰।

**खेटाङ्ग** खेटमङ्गं यस्य। अपद्रावकजन्तुभेदे, "डाकिनी याकिनीभूतप्रेतवेतालराक्षसाः। मदङ्गभारुह्य खेटाङ्गाः

तत्र कथने "अख्यन्मुनिस्तस्य शिवं समाधेः" भट्टिः। कर्म्मणि ख्यायते अख्यायि। "हिरण्यपुरमित्येव ख्यायते नगरं परम्" भा०। खपुरशब्दे दृश्यम्। "विभीषणेन सोऽख्यायि" भट्टिः। "शुभयोगसमायुक्ता शनौ शतभिषा यदि। महाभद्रेति सा ख्याता कुलकोटीः समुद्धरेत्" ति० त०। [ २२।१४ ।

अति+अतिक्रम्य कथने। "परोऽक्षरावतिख्यतम्" ऋ० ८।

अनु+अनुकर्षणे। "अनु पूर्वाणि चख्यथुर्युगानि" ऋ० ७।७०।४। "अनुचख्यथुः अनुक्रमेणानुपश्यतार्थम्" भा०। अनुवादे च। [२१६ पृ० दृश्यम्।

अनु+आ+तात्पर्य्यविधारणार्थं व्याख्याने अन्वाख्यानशब्दे

अभि+आभिमुख्येन दर्शने "मृळीकं सुमना अभिख्यम्" ऋ० ७।८६।२। "अभिख्यमभिपश्येयम्" भा०। "अभिख्याय तं तिग्मेन विध्य" ऋ० २।३०।६। "अभिख्याय संदीप्य" भा०। अभितः ख्यातौ च "पुण्यमेतदभिख्यातं लिषु लोकेषु भारत!" भा० आनु० ८६ अ०। दीप्तौ अक० अभिख्या। "कान्त्यभिख्या तयोरासीत्" रघुः।

अव+अवाक्प्रेक्षणे। "अव हि ख्यताधिकूलादिव स्पशः" ऋ० ८।४७।२। न्यक्कारेण दर्शने च "यदा वाख्यत् समरणम्" ऋ० १०।२७।२। "अवाख्यत् अवाक्कृतं न्यक्कृतमहं पश्यामि" भा०।

आ+कथने। "आख्याहि मे को भवानुग्ररूपः" गीता। "आख्यातमाख्यातेन क्रियासातत्ये" पा०। "स पृष्टः सर्व्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम्" रघुः। "अनाख्याय ददत् दोषं दण्ड्य उत्तमसाहसम्" याज्ञ०। "सैषा अ-हस्तिराख्याता" मनुः। [१।२।१४

उद्+आ+उदाहरणे। "दश वीर्य्याण्युदाख्याय" शत० ब्रा०

उप+आ+पुरावृत्तकथने। उपाख्यानम्। उत्तरदानेन व्याख्याने च। "यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम्। यदासीत् तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः" भाग० २।८।२५।

प्रति+आ+निवारणे "यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद!" भा० व० ५६ अ०। "अभिप्रेतमनापन्नः प्रत्याख्यातुमनीश्वरः" भाग० ३।३१।२५।

वि+आ+विवरणे शब्दान्तरेण तदर्थकथने। "अथातः पुत्रपरिग्रहविधिं व्याख्यास्यामः" शौनकः। "व्याख्यातुं कुशलाः केचित् ग्रन्थान् धारयितुं परे" भा० आ० १ अ०। विशेषेण कथने च "व्याचचक्षैव शुभं प्रशस्तम्"।

अनु+वि+आ+। उक्तस्य पुनः व्याख्याने "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" छा० उ०।

उप+वि+आ+उपासनादिविभूतिफलकथने "ओमित्युद्गायति तस्योपव्याख्यानं भवति" छा० उ०। "तस्याक्षरस्योपव्याख्यानमेवमुपासनम् एवंविभूति एवं फलमित्यादि कथनमुपव्याख्यानम्" भा०। "अस्त्येतस्यैवाक्षरस्योपव्याख्यानम्" छा० उ०।

सम्+आ+ सम्यक्कथने। "तिथयस्ताः समाख्याताः षोडशैव वरानने!" स्कन्दपु० प्रभासख०।

परि+परितः सर्व्वतो वा ख्यातौ "कृतघ्न! यथा तस्य भार्गवस्य महात्मनः। च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः" भा० आ० ५ अ०। "अङ्गनेति परिख्याता पत्नी वैशरिणः कवेः" रामा० सु० २।१४।

सम्+परि+सम्यक् सर्व्वतः ख्यातौ। "यथावत् संपरिख्यातो गन्धर्व्वाप्सरसां तथा" भा० आ० ६५ अ०।

प्र+प्रकर्षेण कथने। "यस्तु देव मनुष्येषु प्रख्यातः सद्गुणैः" भा० व० ३५ अ०।

वि+विशेषेण ख्यातौ "संह्राद इति विख्यातः प्रह्लादस्यानुजस्तु यः" भा० आ० ६७ अ०।

सम्+सम्यक् कथने "दश पितामहान् सोमपान् संख्याय" शत० ब्रा० ४।३।२। एकादिसंख्याभेदेन गणने "संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप!" भा० १०७ अ०।

अन्यादिपूर्व्वकस्य सम् तदुपसर्गद्वयोपाधिसहितसंख्याने "अतः कालं प्रसंख्याय संख्यामेकत्र पिण्डयेत्" सू० सि०। प्रतिसंख्या प्रत्येकसंख्या प्रतीतसंख्या वेत्यर्थः।

**ख्यात** त्रि० ख्या—क्त। १कथिते २विदिते च अमरः। भावे क्त। ३कथने ४घोषणायाम् न०। "तथा ख्यातविधानञ्च घोषमक्षार एव च" भा० शा० ५९ अ०। "ख्यातमभिमन्त्रितदुन्दुभिनादेन प्रयाणकथनम्" नीलक०।

**ख्यातगर्हण** त्रि० ख्याता गर्हणा निन्दाऽस्य। प्रसिद्धनिन्दे अवगीते अमरः।

**ख्यातगर्हित** त्रि० गर्हितं गर्हणं भावे क्त ख्यातं गर्हितं यस्य। प्रसिद्धनिन्दे जटा०।

**ख्याति** स्त्री ख्या+क्तिन्। १प्रशंसायाम्, २प्रसिद्धौ ३कथने च अमरः। ४प्रकाशे ५ज्ञाने च। "ख्यातिञ्च सत्त्वपुरुषान्यताऽधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्" माघः। "सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन भिन्नो भिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ

## ग

गकारः व्यञ्जनवर्णभेदः तस्योच्चारणस्थानं जिह्वामूलरूपकण्ठदेशः, आभ्यन्तरप्रयत्नः जिह्वामूलस्पर्शः, बाह्यप्रयत्नाः संवारनादघोषाः अल्पप्राणश्च। मातृकान्यासेऽस्य दक्षिणमणिबन्धे न्यासः। अस्य ध्येयरूपदेवतादिकं कामधेनुतन्त्रे उक्तं यथा "गकारं परमेशानि! पञ्चदेवात्मकं सदा। निर्गुणं त्रिगुणातीतं निरीहं निर्मलं सदा। पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये!। अरुणादित्यसङ्काशं कुण्डलीं प्रणमाम्यहम्"। हृदयस्थद्वादशदलकमलस्य कादिठान्तद्वादशवर्णयुततया अस्य तन्मध्यगत्वम्। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा "गो गौरी गौरवं गङ्गा गणेशो गोकुलेश्वरः। शार्ङ्गी पञ्चात्मको गाथा गन्धर्वः सर्वगः स्मृतिः। सर्वसिद्धिः प्रभा भूमा द्विजास्यः शिवदर्शनः। विद्यात्मा गौः पृथग्रूपा मणिबन्धाक्षलोचनः। गीतं सरस्वती विद्या भोगिनी नगलोचरा। तेजस्वती च हृदयं ध्यानं जालन्धरो जयः"। काव्यादिरचनायामस्य संयुक्ततया प्रथमविन्यासे लक्ष्मीः फलम्। "कः खो गो घश्च लक्ष्मीम्" संयुक्तं चेह न स्यात् सुखभरणपदैर्वर्णविन्यासयोगः। पद्यादौ गद्यवक्त्रे क्वचिदपि च सकले प्राकृतादौ समोऽयमिति" वृ॰र॰टी॰ धृतवचनयोक्तेः।

ग न॰ गै—क। १गीते २गणेशे ३गन्धर्वे पु॰ एकाक्षरको॰ ४गुरुवर्णे "म्यरस्तजभनगैर्लान्तैरेभिर्दशभिरक्षरैः" वृत्तर॰। "गुर्वेको गकारस्तु लकारो लघुरेककः" छन्दोम॰। "पराममगतौ गतौ" "गौ स्त्री" वृत्तर॰। "सुप्युपपदे गमेर्डः। हृद्ग हृदयगामिनि कण्ठग कण्ठगामिनि इत्यादौ त्रि॰ "हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः" मनुः। सुप्युपपदे गै—क। सामग सामगातरि छन्दोग छन्दोगातरि त्रि॰।

गकार पु॰ ग+स्वरूपे कार। गस्वरूपे वर्णे "गुर्वेको गकारस्तु लकारो लघुरेककः" छन्दो॰।

गगन न॰ गम—युच् गोऽन्तादेशः। णत्वं प्रामादिकम् "फाल्गुने गगने फेने णत्वमिच्छन्ति बर्बराः" इत्युक्तेः। १आकाशे २शून्ये च। ३लग्नापेक्षया दशमराशौ तस्य उदितराश्यपेक्षया सर्वोर्द्ध्वस्थितत्वात् तथात्वं तथा हि पूर्वस्यामेव राशीनामुदयेन ततः सप्तमराशावुदये तस्य अस्तम् दशमराशिस्तु तदा सर्वोर्द्ध्वस्थितः इति तस्य सर्वोर्द्ध्वाकाशस्थितत्वात् तथात्वम्। तद्गुणादेः आकाशशब्दे ५८२ पृ॰ विवृतिः। सुश्रुते देहस्य पाञ्चभौतिकत्वाङ्गीकारेण "आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता चेति" देहस्याकाशधर्मा उक्ताः "पृथिव्यप्तेजोवाय्वाकाशानां समुदायात् द्रव्याभिनिर्वृत्तिः" इत्युपक्रम्य द्रव्यगता गगनलक्षणधर्मास्तेनोक्ता यथा "तत्र श्लक्ष्णसूक्ष्मव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम् तन्मार्दवशौषिर्यलाघवकरम्"। तथाकाशगुणभूयिष्ठं संशमनम्" इत्युपक्रम्य भूतविशेषकार्य्येण धातुविशेषसंशमनकारित्वं तस्य दर्शितं सुश्रुतेन यथा "खतेजोऽनिलजैः श्लेष्मा शमयेति शरीरिणाम्। वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः" "तस्याकाशगुणभूयिष्ठं मृदुत्वम्" इति च। तस्य धर्मविशेषाः भा॰ शा॰ उक्ता यथा "आकाशस्य गुणः शब्दोऽव्यापित्वम् छिद्रमेव च। अनाश्रयमनालम्बमव्यक्तमविकारिता। अप्रतीघातिता चैव भूतत्वं विकृतानि च"। "गगनं गगनाधिपतिमूर्त्तिरिति" माघः। "अवोचदेनं गगनस्पृशा (स्वरेण) रघुः। "प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः" मेघ॰।

गगनगति पु॰ गगने गतिर्यस्य। १देवे २सूर्य्यादिग्रहे ३आकाशगामिनि त्रि॰। ७त॰। ४आकाशे गतौ स्त्री।

गगनचर त्रि॰ गगने चरति चर—ट। आकाशगामिनि देवग्रहादिपक्षिविहगादौ। तत्र विहगे "निरुद्धयन् बहुविधमरुज्जीविनो बुभुक्षितो गगनचरेश्वरः (गरुडः) तदा" भा॰ आ॰ २८ अ॰। [ हेमच॰

गगनध्वज पु॰ गगनस्य ध्वज इव। १मेघे, हारा॰ २सूर्य्ये

गगनप्रिय पु॰ दैत्यभेदे। "प्रह्लादोऽश्वशिराः कुम्भः संह्रादो गगनप्रियः" हरि॰ ४२ अ॰।

गगनमूर्द्धन् पु॰ दानवभेदे। "तथा गगनमूर्द्धा च वेगवान् केतुमांश्च यः" भा॰ आ॰ ६५ अ॰। दनुवंशकथने। "तथा गगनमूर्द्धा च कुम्भनाभो महासुरः" हरि॰ ३ अ॰।

गगनसद् त्रि॰ गगने सीदति गच्छति सद—क्विप्। गगनगामिनि देवग्रहविहगादौ। "बालत्वं वृद्धता वा यदि गगनसदां जन्मकाले नराणाम् प्रधानान्द्रम्" जातकालङ्कारः। "विश्वेशान् गगनसदः करोत्यधस्तान्" माघः। गगनविहारिन् प्रभृतयोऽप्यत्र स्त्रियां ङीप्।

गगनसिन्धु स्त्री ६त॰। मन्दाकिन्याम् "गगनसिन्धुफेनपटलजालान्तरस्थ" काद॰। गगननद्यादयोऽप्यत्र।

**गगनाङ्गना** स्त्री गगनगताङ्गना। अप्सरःसु।

**गगनाध्वग** पु० गगनाध्वना आकाशमार्गेण गच्छति गम–ड। सूर्य्ये हेम०।

**गगनाम्बु** न० ६त०। दिव्योदके तडागादावपतिते पात्रादौ धृते मेघनिःसृतजले। "गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने। बल्यं रसायनं मेध्यं पात्रापेक्षि ततःपरम् रक्षोघ्नं शीतलं ह्लादि जड़दाहविनाशकम्" सुश्रुतः।

**गगनेचर** पु० गगने चरति चर–ट अलुक् स०। १देवे २सूर्य्यादिग्रहे ३राशिचक्रे च। ४पक्ष्यादौ त्रि० स्त्रियां टाप्। "तस्मिंस्तु कथिते माता कादम्बे गगनेचरः" भा० आ० २७ अ०।

**गगनोल्मुक** पु० गगने उल्मुक इव। १मङ्गलग्रहे हारा०। तस्य गगनगत्वात् लोहिताङ्गत्वाच्च तथात्वम्। [जनाय।

**गग्घ** हासे भ्वा० पर० सक० सेट्। गग्घति अगग्घीत्

**गग्नु** स्त्री वाचि निघण्टौ "वग्नु" इत्येव पाठान्तरम्।

**गङ्गा** स्त्री गम–गन्। १विष्णुपादभवे नदीभेदे २हिमवत्कन्याभेदे च। "इमं मे गङ्गे! यमुने! सरस्वति! शुतुद्रि! स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे! वितस्तयार्जीकीये! शृणुह्या सुषोमया" ऋ० १०,७५,५। इमामृचमधिकृत्य दशप्रधाननदीनां निरुक्तियास्केन ८,२६ दर्शिता यथा "अवयवपदनिरुक्तम् गङ्गा गमनात्। यमुना प्रयुवती गच्छतीति वा प्रवियुतं गच्छतीति वा। सरस्वती सर इत्युदकनाम सर्त्तेस्तद्वती। शुतुद्री शुद्राविणी क्षिप्रद्राविणी आशुतुन्नेव द्रवतीति वा। इरावतीं परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी। असिक्नी अशुक्लाऽसिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितम्। मरुद्वृधा सर्वा नद्यः, मरुत एना वर्द्धयन्ति। वितस्ता अविदग्धा विवृद्धा महाकूला। आर्जीकीया विपाडित्याहुः ऋजुकप्रभवा वा ऋजुगामिनी। विपाड् विपाटनाद्वा विपाशनाद्वा विप्रापणाद् वा पाशा अस्यां व्यपाशस्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद्विपाडुच्यते पूर्वमासीदुरुञ्जिरा। सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः सिन्धुः स्यन्दनात्"। "अष्टाविंशतिं (कुयान्) भरतो दौःषन्तिर्यमुनामनु। गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्" शत० ब्रा० १३,५,४,११। "न वै गावो मन्दीरस्य गङ्गाया उदकं पपुः" काव्या० श्रौ० २२,३,२०। "तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः" मनुः। "गङ्गाया हिमवत्कन्यारूपत्वेऽपि नदीरूपतया पृथिव्यवतरणकथा रामा० आदि० यथा "भगीरथस्तु राजर्षिर्धार्म्मिको रघुनन्दन!। अनपत्यो महाराजः प्रजाकामः स च प्रजाः। मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः। तपो दीर्घं समातिष्ठद्गोकर्णे रघुनन्दन!। ऊर्द्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः!। तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः। अतीतानि महाबाहो! तस्य राज्ञो महात्मनः। सुप्रीतो भगवान् ब्रह्मा प्रजानां प्रभुरीश्वरः। ततः सुरगणैः सार्द्धमुपागम्य पितामहः। भगीरथं महात्मानं तप्यमानमथाब्रवीत्। भगीरथ! महाराज! प्रीतस्तेऽहं जनाधिप!। तपसा च सुतप्तेन, वरं वरय सुव्रत!। तमुवाच महातेजाः सर्व्वलोकपितामहम्। भगीरथो महाबाहुः कृताञ्जलिपुटः स्थितः। यदि मे भगवान् प्रीतो यद्यस्ति तपसः फलम्। सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः। गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम्। स्वर्गं गच्छेयुरत्यन्तं सर्वे च प्रपितामहाः। देव! याचे ह सन्तत्यै नावसीदेत् कुलञ्च नः। इक्ष्वाकूणां कुले देव! एष मेऽस्तु वरः परः। उक्तवाक्यं तु राजानं सर्वलोकपितामहः। प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम्। मनोरथो महानेष भगीरथ! महारथ!। एवम्भवतु भद्रन्ते इक्ष्वाकुकुलवर्द्धन!। इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता। तां वै धारयितुं राजन्! हरस्तत्र नियुज्यताम्। गङ्गायाः पतनं राजन्! पृथिवी न सहिष्यते। तां वै धारयितुं राजन्नान्यं पश्यामि शूलिनः। तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत्। जगाम त्रिदिवं देवैः सर्व्वैः सह मरुद्गणैः।" ४२ स०।

"देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीड़िताम्। कृत्वा वसुमतीं राम! वत्सरं समुपासत। अथ संवत्सरे पूर्णे सर्व्वलोकनमस्कृतः। उमापतिः पशुपती राजानमिदमब्रवीत्। प्रीतस्तेऽहं नरश्रेष्ठ! करिष्यामि तव प्रियम्। शिरसा धारयिष्यामि शैलराजसुतामहम्। ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता। तदा सातिमहद्रूपं कृत्वा वेगञ्च दुःसहम्। आकाशादपतद्राम! शिवे शिवशिरस्युत। अचिन्तयच्च सा देवी गङ्गा परमदुर्द्धरा। विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम्। तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः। तिरोभावयितुं बुद्धिञ्चक्रे त्रिनयनस्तदा। सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्द्धनि। हिमवत्प्रतिमे राम! जटाम-

स्तवनमहरे । सा कथञ्चिद्भुवं गन्तुं नाशक्नोद्यत्नमास्थिता । नैव सा निर्गमं लेभे जटामण्डलमध्यतः । तत्रैवाबभ्रमद्देवी संवत्सरगणान् बहून् । तामपश्यन् पुनस्तत्र तपः परममास्थितः । स तेन तोषितश्चासीदत्यन्तं रघुनन्दन ! । विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति । तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ह्लादिनी पावनी चैव नलिनी च तथैव च । तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः । सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीन्तु शुभोदकाः । सप्तमी चान्वगात्तासां भगीरथरथं तदा । भगीरथोऽपि राजर्षिर्दिव्यस्यन्दनमास्थितः । प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ।" ४३ स० ।

"स गत्वा सागरं राजा गङ्गयानुगतस्तदा । प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः । भस्मन्यथाप्लुते राम ! गङ्गायाः सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् । तारिता नरशार्दूल ! दिवं याताश्च देववत् । षष्टिः पुत्राः सहस्राणि सगरस्य महात्मनः । सागरस्य जलं लोके यावत् स्थास्यति पार्थिव ! । सगरस्यात्मजाः सर्वे दिवि स्थास्यन्ति देववत् । इयञ्च दुहिता ज्येष्ठा तव गङ्गा भविष्यति । त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता । गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च । त्रीन् पथो भावयन्तीति तस्मात्त्रिपथगा स्मृता ।" ४४ स० ।

पुराणान्तरेषु तु तस्या अवतरणप्रकारोऽन्यथा उक्तः कल्पभेदादविरोधः । यथा

महाभारते "महापुण्यां गगनतः पतन्तीं वै महेश्वरः ! दधार शिरसा गङ्गां तामेव दिवि सेवते" । ब्रह्माण्डे "महादेवस्य या गम्भीरतमाङ्गोतमाच्चभात् । विनिर्गता महानन्दा दक्षिणेक्षणतः शुभा" स्कान्दे "त्रिविक्रमपदोद्भिन्नब्रह्माण्डशुषिरोद्गता । परा विष्णुपदीगङ्गा सहस्रामूर्त्तिकारिणी ।" वैष्णवे "ततः प्रभवति ब्रह्मन् ! सर्वपापहरा सरित् । गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा । विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः । सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यत । सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ।" पाद्मे "क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवां-स्तेन त्रिपथगा स्मृता ।" भविष्ये "महेश्वरस्य या गर्भोर्मूर्त्तिरेषा सनातनी । त्रैलोक्यपावनार्थाय दययाधरणीकृता ।" तत्प्रभावप्रकरणं ब्रह्माण्डे "दाहकानां पापहन्त्री स्वर्गमोक्षाभिहेतुका । स्वभाव एव गङ्गायाः शैत्यं शीतरुचो यथा" भविष्ये "पापक्षयकरी सा हि महीगङ्गा स्वभावतः । उपपातकराशीनां सा हि हन्त्री यतः स्मृता" स्कान्दमात्स्ययोः "क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम् । कामिनाञ्च तथान्येषां तपोव्रतादि निष्फलम् । गङ्गायान्तु कृतं सर्वं सफलं स्यान्न संशयः । परब्रह्मस्वरूपा या गङ्गायास्तु स्वभावतः" । सर्वदेवादिमयत्वकथनम् भविष्ये "शिववाक्ये त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च । पर्वतादीनि रम्याणि पुण्यक्षेत्राणि यानि च । धर्माश्च सर्वदेवाश्च सर्वयज्ञतपांसि च । अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्विताः । अष्टाविंशतिकोट्यस्तु देवता यास्तु वै सदा । गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः । तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् । सर्वदा कलिकाले च गङ्गायां नात्र संशयः" भविष्ये "सर्वदेवमयी गङ्गा सर्वदेवस्वरूपिणी" भगवद्गीतायां "स्रोतसामस्मि जाह्नवीति" अत्र तस्या विशिष्टताकथनम् "देवानान्तु महादेवो यथा श्रेष्ठतमः स्मृतः । सर्वेषामेव तीर्थानां तथा गङ्गा विशिष्यते" महाभारते "सर्वतीर्थमयी गङ्गा सर्वधर्ममयो मनुः । सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः" स्कान्दे "भूतेश्वरादिह परोऽस्ति न पूजनीयो नैवाश्वमेधसदृशः क्रतुरस्ति लोके । गङ्गासमं त्रिभुवने न हि तीर्थमस्ति नान्यद्व्रतं च शिवरात्रिसमं तथास्ति" महाभारते "न गङ्गासदृशं तीर्थं न देवः केशवात् परः । ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः" ब्रह्माण्डे "कलौ तु सर्वतीर्थानि स्वस्वहृतप्रभावतः । गङ्गामभिसर्वं यान्ति सा तु देवी न कुत्रचित्" नारदीये "कोटिवटाश्च दशसु तीर्थानां यत् फलं भवेत् । तत्फलमभिषेकेण गङ्गायां लभते नरः" भविष्ये "धनिभूति प्रयासेन भक्तिप्राह्या महेश्वरी । भावानुरूपफलदा गङ्गा सर्वजगद्धिता" ब्रह्माण्डे "प्रभासे गोसहस्रेण राहुग्रस्ते दिवाकरे । यत्फलं पाण्डवश्रेष्ठ ! गङ्गायां तद्दिने दिने । महापुण्या महावेगा सद्यः शुद्धिकरी परा । महापुण्यप्रदा सद्यः स्वर्गमोक्षप्रदैव सा" दानधर्मे "स्वायम्भुवं यथा स्नानं सर्वाद्यसमं कृतम् । तीर्थानां

तीरे वसेन्नित्यं गङ्गातोयं पिबेत् सदा । दीक्षितः सर्व्वयज्ञेषु सोमपानं दिने दिने । गङ्गातोयाभिसंसिक्तां भिक्षामश्नाति यो नरः । सर्पवत् कञ्चुकं मुक्त्वा पापानीह नरोत्तमः । स्वर्गापवर्गिकीं सिद्धिं प्राप्नोत्येव न संशयः" स्कान्दे "गण्डूषमात्रपानेन अश्वमेधफलं लभेत् । स्वच्छन्दं यः पिबेदम्भस्तस्य मुक्तिः करे स्थिता" पाद्मे "त्रिभिः सारस्वतं तोयं सप्तभिश्चैव यामुनम् । नार्म्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्य्यति" अथ पापक्षयप्रकरणम् । ब्राह्मे "तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा गतिम् । न तां लभते जन्तुर्गङ्गां संसेव्य यां लभेत्" नारदीये "किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः । वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम्" महाभारते "पूर्व्वे वयस्यधर्म्माय कृत्वा पापानि ये नराः । पश्चाद्गङ्गां समाश्रित्य तेऽपि यान्ति परां गतिम्" ब्रह्माण्डे "महापातकिनो ये च सेवन्ते यदि जाह्नवीम् । पातकेभ्योऽपि मुच्यन्ते का कथाऽन्यस्य पाप्मनः" भविष्ये "त्रिरात्रं सप्तरात्रं वा स्थितिमात्रेण भक्तितः । गङ्गातीरे नरो यस्तु नरकं स न पश्यति" । विघ्नप्रकरणम् भविष्ये "पदे विघ्नसहस्राणि गङ्गां रक्षन्ति यत्नतः । निरासयन्त्यभक्तांश्च पापकर्म्मरतांस्तथा । कामक्रोधमदोन्मादलोभादिनिशितैः शरैः । प्रहरन्ति मनस्तेषां स्थितिं वै नाशयन्ति च" प्रतिग्रहप्रकरणम् मात्स्ये "यस्तत्र प्रतिगृह्णाति तीर्थेष्वायतनेषु च । हिरण्यं रजतं ताम्रं यच्चान्यदपि किञ्चन । निःफलं तस्य तत् तीर्थं यावत्तदपि चाश्नुते । वरं विक्रयणं मातुर्व्वरं विक्रयणं पितुः । अपि गङ्गाजलस्यान्तु न गृह्णीयात् कदाचन" स्मृतिः । "गङ्गाविक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत् । जनार्दने तु विक्रीते विक्रीतं स्याज्जगत्त्रयम्" अभक्तिप्रकरणम् भविष्ये "गङ्गां प्राप्य तु ये मर्त्याः श्रद्धां भक्तिं न कुर्व्वते । तीर्थान्तरे रतिं कुर्व्वन्ति ते निरयगामिनः" । कृतघ्नप्रकरणम् ब्रह्माण्डे "गङ्गां संश्रित्य यस्तस्य सम्यक्कार्य्यं न विद्यते । कृतघ्नः स वै मूढो जीवन्मृतो भवेन्नरः" । मृत्युफलप्रकरणम् ब्राह्मे "ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोऽपि वा । गङ्गायान्तु मृतो मर्त्त्यो मोक्षं स्वर्गञ्च विन्दति" भविष्ये "कृमिकीटपतङ्गाद्या ये मृता जाह्नवीजले । कूलाद्विप्रपतिता वृक्षास्तेऽपि यान्ति परां गतिम्" तथा "अपि योजनपर्य्यन्ते गङ्गां स्मृत्वा तनुं त्यजेत् । वैवस्वतोऽपि तस्यार्घ्यं दत्त्वा स्वर्गं प्रयच्छति" स्कान्दे "अर्द्धोदके तु जाह्नव्या म्रियतेऽनशनेन यः । स याति न पुनर्जन्म ब्रह्मसायुज्यमेव च" अस्थिप्रक्षेपप्रकरणम् वनपर्व्वणि कौर्म्मे च "यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च । तावद्वर्षसहस्राणि ब्रह्मलोके महीयते । यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते" ब्रह्माण्डे "गङ्गातोये तु यस्यास्थि नीत्वा संक्षिप्यते नरैः । तत्कालमादितः कृत्वा स्वर्गे तस्य भवेत् स्थितिः । गङ्गातीरेषु यस्यास्थि प्लाव्यते पुण्यकर्म्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन" केशादिप्रकरणम् ब्रह्माण्डे "केशलोमनखादीनि येषां पुंसान्तु पावना । निक्षिप्यन्ते च गङ्गायां तेषां स्याद्दिवि स्थितिः" अथ प्रकीर्णकम् ब्रह्माण्डे "दृष्टा शतकृतं पापं स्पृष्टा जन्मशतानि च । स्नात्वा जन्मसहस्राणि हन्ति गङ्गा कलौ युगे" । गङ्गाद्वारवाराणसीप्रयागादिप्रकरणम् मात्स्ये "सर्व्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे" वनपर्व्वणि "स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः । तत्राभिषेकं यः कुर्य्यात् सोऽश्वमेधमवाप्नुयात्" ब्रह्माण्डे "वाराणस्यां विशेषेण गङ्गा नित्यं विमुक्तिदा । अनन्तकोटिकल्पोत्थं पापं पुंसां प्रणाशयेत् । वाराणस्यां विशेषेण सद्यः पापविनाशिनी । गङ्गायान्तु जले मोक्षो वाराणस्यां जले स्थले । जले स्थले चान्तरीक्षे गङ्गासागरसङ्गमे" । मोक्षप्रकरणम् स्कान्दे "ब्रह्मादिदेवलोकानां सम्यक् च प्राप्तये नृणाम् । गङ्गा च परमा हेतुः कलिकाले विशेषतः" ।

गङ्गामाहात्म्यं काशीख० विष्णुं प्रति शिवेनोक्तम् यथा

"सर्व्वैव सा परा मूर्त्तिस्तोयरूपा शिवात्मिका । ब्रह्माण्डानामनेकेषामाधारः प्रकृतिः परा । शुद्धविद्यास्वरूपा च त्रिशक्तिः करुणात्मिका । आनन्दाऽमृतरूपा च शुद्धधर्म्मस्वरूपिणी । तामेनां जगतां धात्रीं धारयामि स्वलीलया । विश्वस्य रक्षणार्थाय परब्रह्मस्वरूपिणीम् । त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राणि यानि च । सर्व्वत्र सर्व्वे ये धर्म्माः सर्व्वे यज्ञाः सदक्षिणाः । तपांसि विष्णो ! सर्व्वाणि श्रुतिः साङ्गा चतुर्व्विधा । अहञ्च त्वञ्च ब्रह्मा च देवतानां गणाश्च ये । पुरुषार्थाश्च सर्व्वे वै शक्तयो विविधाश्च याः । गङ्गायां सर्व्व एवैते सूक्ष्मरूपेण संस्थिताः । स स्नातः सर्व्व-

तीर्थेषु सर्वक्रतुषु दीक्षितः । चीर्णसर्वव्रतः सोऽपि यस्तु गङ्गां निषेवते । तपांसि तेन तप्तानि सर्वदानप्रदः स च । स प्राप्तयोगनियमो यस्तु गङ्गां निषेवते । सर्ववर्णाश्रमिभ्यश्च वेदविद्भ्यश्च वै तथा । शास्त्रार्थपारगेभ्यश्च गङ्गास्नायी विशिष्यते । मनोवाक्कायजैर्दोषैर्दुष्टो बहुविधैरपि । वीक्ष्य गङ्गां भवेत् पूतः पुरुषो नात्र संशयः । कृते सर्वाणि तीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् । ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे तद्द्वयं यज्ञः कलौ गङ्गैव केवलम् । पूर्वजन्मान्तराभ्यासवासनावशतो हरे ! । गङ्गातीरे निवासः स्यान्मदनुग्रहतः परम् । यो देहपतनाद्यावद्गङ्गातीरं न मुञ्चति । स हि वेदान्तविद्योगी ब्रह्मचर्यव्रती सदा । कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् । विधिहीनक्रियाणाञ्च गतिर्गङ्गां विना नहि । अलक्ष्मीः कालकर्णी च दुःस्वप्नो दुर्विचिन्तितम् । गङ्गागङ्गेति जपनात्तानि नोपविशन्ति हि । गङ्गा हि सर्वभूतानामिहामुत्र फलप्रदा । भावानुरूपतो विष्णो ! सदा सर्वजगद्धिता । यज्ञदानतपोयोगजपाः सनियमा यमाः । गङ्गासेवासहस्रांशं न लभन्ते कलौ हरे ! । किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः । वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् । अपि दूरस्थितस्यापि गङ्गामाहात्म्यवेदिनः । अयोग्यस्यापि गोविन्द ! भक्त्या गङ्गा प्रसीदति । श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं परन्तपः । श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धया सा प्रसीदति । अज्ञानरागलोभाद्यैः पुंसां संमूढचेतसाम् । श्रद्धा न जायते धर्मे गङ्गायाञ्च विशेषतः । बहिःस्थितं जलं यद्वन्नारिकेलान्तरस्थितम् । तथा ब्रह्माण्डबाह्यस्थं परं ब्रह्माम्बु जाह्नवम् । गङ्गालाभात् परो लाभः क्वचिदन्यो न विद्यते । तस्माद्गङ्गामुपासीत गङ्गैव परमः पुमान् । यज्वनः पण्डितस्यापि गुणिनो दानशालिनः । गङ्गास्नानविहीनस्य हरे ! जन्म निरर्थकम् । वृथा कुलं वृथा विद्या वृथा यज्ञो वृथा तपः । वृथा दानानि तस्येह गङ्गाभक्तो न यो भवेत् । पुष्पतृणाद्यपूजायां न स्याद्वै तादृशं फलम् । यथा गङ्गाजले स्नातः पूजने विधिना फलम् । मम तेजोऽग्निगर्भेयं मम वीर्यातिसम्भृता । दाहिका सर्वदोषाणां सर्वपापविनाशिनी । स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा । गङ्गां गच्छति यस्त्वेकस्तं भक्त्यानुमोदयेत् । तयोस्तुल्यं फलं प्राहुर्भक्तिरेवात्र कारणम् । गच्छंस्तिष्ठन् स्वपन् भुञ्जन् ध्यायन् जाग्रत् वसन् वदन् । यः स्मरेत् सततं गङ्गां स हि मुच्येत बन्धनात् । पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम् । गुडसर्पिस्तिलैः सार्द्धं गङ्गाम्भसि विनिःक्षिपेत् । तृप्ता भवन्ति पितरस्तस्य वर्षशतं हरे ! । यच्छन्ति विविधान् कामान् परितुष्टाः पितामहाः । लिङ्गे संपूजिते सर्वमर्चितं स्याज्जगद्यथा । गङ्गास्नानेन लभते सर्वतीर्थफलं तथा । गङ्गायान्तु नरः स्नात्वा यो लिङ्गं नित्यमर्चति । एकेन जन्मना मुक्तिं परां प्राप्नोति स ध्रुवम् । अग्निहोत्राणि यज्ञाश्च तथा दानतपांसि च । गङ्गायां लिङ्गपूजायाः कोट्यंशेनापि नो समाः । गङ्गां गन्तुं विनिश्चित्य कृत्वा श्राद्धादिकं गृहे । स्थितस्य सम्यक् सङ्कल्पात् तस्यानन्दन्ति पूर्वजाः । पापानि च रुदन्त्याशु हा क्व यास्याम इत्यलम् । लोभमोहादिभिः सार्द्धं मन्त्रयन्ति पुनः पुनः । यथा गङ्गां न यात्येष तथा विघ्नं प्रकुर्महे । गङ्गां गतो यदा चैष न स्थास्यन्ति विधास्यति । स्नानाङ्गावगाहार्थं गच्छतस्तु पदे पदे । निराशानि व्रजन्त्येव पापान्यस्य शरीरतः । पूर्वजन्मकृतैः पुण्यैस्त्यक्त्वा लोभादिकं हरे ! । व्युदस्य सर्वविघ्नौघान् गङ्गां प्राप्नोति पुण्यवान् । अनुषङ्गेण शुल्केन वाणिज्येनापि सेवया । कामासक्तोऽपि वा मर्त्यो गङ्गास्नायी दिवं व्रजेत् । अनिच्छयापि संस्पृष्टो दहनोऽपि यथा दहेत् । अनिच्छयापि संस्नाता गङ्गा पापं तथा दहेत् । तावद्भ्रमति संसारे यावद्गङ्गां न सेवते । संसेव्य गङ्गां नो जन्तुर्भवक्लेशं प्रपश्यति । यो गङ्गाम्भसि संस्नातो भक्त्या संत्यक्तसंशयः । मनुष्यचर्मणा नद्धः स देवो नात्र संशयः । गङ्गास्नानार्थमुद्युक्तो मध्ये मार्गं मृतो यदि । गङ्गास्नानफलं सोऽपि सदाप्नोति न संशयः । माहात्म्यं ये च गङ्गायाः शृण्वन्ति च पठन्ति च । तेऽप्यशेषैर्महापापैर्मुच्यन्ते नात्र संशयः । दुर्बुद्धयो दुराचारा हैतुका बहुसंशयाः । पश्यन्ति मोहिता विष्णो ! गङ्गामन्यां नदीमिव । जन्मान्तरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः । इह जन्मनि गङ्गायां नृणां भक्तिः प्रजायते । गङ्गाभक्तिमतामर्थे महेन्द्रादिपुरेषु च । हर्म्याणि रत्नभोगानि निर्मितानि स्वयम्भुवा । सिद्धयः सिद्धलिङ्गानि सर्वलिङ्गान्यनेकशः । प्रासादा रत्न-

रचिताचिन्ताभषिगणा अपि । गङ्गाजले न तिष्ठन्ति कलिपापानि भीतितः । अतएव हि संसेव्या कलौ गङ्गेति निश्चिता । सूर्य्योदये तमांसीव वज्रिवज्रभयान्नगाः । तार्क्ष्यतुण्डाद्यथा सर्पाः मेघा वाताहता यथा । तत्त्वज्ञानाद्यथा मोहाः सिंहं दृष्ट्वा यथा मृगाः । तथा सर्वाणि पापानि यान्ति गङ्गेक्षणात् क्षयम् । दिव्यौषधैर्यथा रोगा लोभेन च यथा गुणाः । यथा शीघ्रोष्णमन्निरगाधह्रदमज्जनात् । तूलशैलाः स्फुलिङ्गेन यथा नश्यन्ति तत्क्षणात् । तथा दोषाः प्रणश्यन्ति गङ्गाम्भःस्पर्शनाद्ध्रुवम् । क्रोधेन च तपो यद्वत् कामेन च यथा मतिः । अनयेन यथा लक्ष्मीर्विद्या मानेन वै यथा । दम्भकौटिल्यमायाभिर्यथा धर्मो विनश्यति । तथा नश्यन्ति पापानि गङ्गायादर्शनेन तु । मानुष्यं दुर्लभं प्राप्य विद्युत्सम्पातचञ्चलम् । गङ्गां यः सेवते सोऽत्र बुद्धैः पारं परं गतः । निर्धूतपापाये मर्त्याः परञ्ज्योतिःस्वरूपिणीम् । सहस्रसूर्य्यप्रतिमां गङ्गां पश्यन्ति ते भुवि । साधारणाम्भसा पूर्णां साधारणनदीमिव । पश्यन्ति नास्तिका गङ्गां पापोपहतलोचनाः । संसारमोचनार्थं जनानामनुकम्पया । गङ्गातरङ्गरूपेण सोपानं निर्ममे दिवः । सर्व एव शुभः कालः सर्वो देशस्तथा शुभः । सर्वो जना दानपात्रं श्रीमति जाह्नवीतटे । यथाश्वमेधो यज्ञानां नगानां हिमवान् यथा । व्रतानान्तु यथा सत्यं दानानामभयं यथा । प्राणायामश्च तपसां मन्त्राणां प्रणवो यथा । धर्माणामप्यहिंसा च काम्यानां श्रीर्यथा वरा । यथात्मविद्या विद्यानां स्त्रीणां गौरी यथोत्तमा । सर्वदेवगणानाञ्च यथाहं परमेश्वरः । सर्वेषामेव भक्तानां शिवभक्तो यथा वरः । तथा सर्वेषु तीर्थेषु गङ्गातीर्थं विशिष्यते । हरे ! यस्त्वावयोर्भेदं न करोति महामतिः । शिवभक्तः स विज्ञेयो महापाशुपतश्च सः । पापपांशुमहावात्या पापद्रुमकुठारिका । पापेन्धनदवाग्निश्च गङ्गेयं पुण्यवाहिनी । नानारूपाश्च पितरो गाथां गायन्ति सर्वदा । अपि कश्चित् कुलेऽस्माकं गङ्गास्नायी भविष्यति । देवर्षीन् परिसन्तर्प्य दीनानाथांश्च दुःखितान् । श्रद्धया विधिना स्नात्वा दास्यते सलिलाञ्जलिम् । अपि नः स कुले भूयाच्छिवे विष्णौ च साम्यदृक् । तदाश्रयकरो भक्त्या तत्र सम्याज्जनादिकृत् । अकामो वा सकामो वा तिर्य्यग्योनिगतोऽपि वा । गङ्गायां यो मृतो मर्त्यो नरकं न स पश्यति ।

तीर्थमन्यत् प्रशंसन्ति गङ्गातीरे स्थिताश्च ये । गङ्गां न बहु मन्यन्ते ते स्युर्निरयगामिनः । माञ्च त्यक्त्वैव गङ्गाञ्च यो द्वेष्टि पुरुषाधमः । स्वकीयैः पितृभिः सार्द्धं स घोरं नरकं व्रजेत् । षष्टिर्वर्षसहस्राणि गङ्गां रक्षन्ति सर्वदा । अभक्तानाञ्च पापानां वासे विघ्नं प्रकुर्वते । कामक्रोधमहामोहलोभादिनिशितैः शरैः । घ्नन्ति तेषां मनस्तत्र स्थितिञ्चापनयन्ति च । गङ्गां समाश्रयेत् यस्तु स मुनिः स च पण्डितः । कृतकृत्यः स विज्ञेयः पुरुषार्थचतुष्टये । गङ्गायाञ्च सकृत्स्नातो हयमेधफलं लभेत् । तर्पयंश्च पितॄंस्तत्र तारयेन्नरकार्णवात् । नैरन्तर्येण गङ्गायां मासं यः स्नाति पुण्यभाक् । स शक्रलोके वसति यावच्छक्रः सपूर्वजः । अब्दं स्नाति च गङ्गायां नैरन्तर्येण पुण्यवान् । विष्णुलोकं समासाद्य सुखं संवसेच्चिरम् । गङ्गायां स्नाति यो मर्त्यो यावज्जीवं दिने दिने । जीवन्मुक्तः स विज्ञेयो देहान्ते मुक्त एव सः । तिथिनक्षत्रपर्वादि नापेक्ष्यं जाह्नवीजले । स्नानमात्रेण गङ्गायां सञ्चिताघं विनश्यति । पण्डितोऽपि स मूर्खः स्याच्छक्तियुक्तोऽप्यशक्तिकः । यस्तु भागीरथीतीरं सुखसेव्यं न संश्रयेत् । किमायुषाप्यरोगेण विकाशिन्याथ किं श्रिया । किं वा बुद्ध्या विमलया यदि गङ्गां न सेवते । यः कारयेदायतनं गङ्गाप्रतिकृतेर्नरः । भुक्त्वा स भोगान् प्रेत्यापि याति गङ्गासलोकताम् । शृण्वन्ति महिमानं ये गङ्गाया नित्यमादरात् । गङ्गास्नानफलं तेषां वाचकपोषणाद्धनैः । पितॄनुद्दिश्य यो लिङ्गं स्नापयेद्गाङ्गवारिणा । तृप्ताः स्युस्तस्य पितरो महानिरयगा अपि । अष्टकलो मन्त्रजप्तैस्तु पूतैः सुगन्धिभिः । प्रोक्षुर्गाङ्गैर्जलैः स्नानं शतस्नानादिकं बुधाः । आपः क्षीरं कुशाग्राणि घृतं दधि गवां मधु । रक्तानि करवीराणि रक्तचन्दनमित्यपि । अष्टद्रव्यविमिश्रेण गङ्गातोयेन यः सकृत् । माधव ! प्रस्थमात्रेण ताम्रपात्रस्थितेन च । भानवेऽर्घं प्रदद्याच्च स्वकीयपितृभिः सह । सोऽतितेजोविमानेन सूर्य्यलोके महीयते । यथाङ्कोऽर्वोऽप्यवर्द्धिष्णुस्तथैव रवितोषणः । गाङ्गैर्वाभिः कोटिगुणो ज्ञेयो विष्णोऽन्यवारितः । गङ्गातीरेषु यत्नाद्यः कुर्य्याद्देवालयं सुधीः । अन्यतीर्थप्रतिष्ठातो लभेत् कोटिगुणं फलम् । कूपवापीतडागादिप्रपादानादिभिस्तथा । अन्यत्र यद्भवेत् पुण्यं तद्गङ्गा-

**गङ्गाक्षेत्र** न० ६त०। "तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते" इत्युक्ते गङ्गातीरादुभयपार्श्वस्थक्रोशद्वयमितस्थाने। [(गांगचिल) छारा०।

**गङ्गाचिल्ली** स्त्री गङ्गायाः नद्याश्चिल्ली। चिल्लभेदे

**गङ्गाज** पु० गङ्गातो जायते जन—ड। भीष्मे कार्त्तिकेये च तत्र भीष्मस्य गङ्गातो जन्मकथा।

"स राजा शान्तनुर्धीमान् देवराजसमद्युतिः। बभूव मृगयाशीलः सततं वनगोचरः। स मृगान् महिषांश्चैव विनिघ्नन् राजसत्तमः। गङ्गामनुचचारैकः सिद्धचारणसेविताम्। स कदाचिन्महाराज! ददर्श परमां स्त्रियम्। जाज्वल्यमानां वपुषा साक्षाच्छ्रियमिवापराम्। सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम्। सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम्। तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसम्पदा। पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः। सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम्। स्नेहादागतसौहार्द्दा नातृप्यत विलासिनी। तामुवाच ततो राजा सान्त्वयन् श्लक्ष्णया गिरा। देवी वा दानवी वा त्वं गन्धर्वी वाथ वाप्सराः। यक्षी वा पन्नगी वापि मानुषी वा सुमध्यमे!। याचे त्वां सुरगर्भाभे! भार्य्या मे भव शोभने।" भा० आ० ९७अ०।

"एतत् श्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च। वसूनां समयं स्मृत्वाऽप्यभ्यगच्छदनिन्दिता। उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा। भविष्यामि महीपाल! महिषी ते वशानुगा। यत्तु कुर्य्यामहं राजन्! शुभं वा यदि वाऽशुभम्। न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम्। एवं हि वर्त्तमानेऽहं त्वयि वत्स्यामि पार्थिव!। वारिता विप्रियञ्चोक्ता त्यजेयं त्वामसंशयम्। तथेति राज्ञा सा तूक्ता तदा भरतसत्तम!। प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम्। आसाद्य शान्तनुस्तां तु बुभुजे कामतो वशी। न प्रष्टव्येति मन्वानो न स तां किञ्चिदूचिवान्। स तस्याः शीलवृत्तेन रूपौदार्य्यगुणेन च। उपचारेण च रहस्तुतोष जगतीपतिः। दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी। मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी। भाग्योपनतकामस्य भार्य्योपस्थिताऽभवत्। शान्तनो राजसिंहस्य देवराजसमद्युतेः। सम्भोगस्नेहचातुर्य्यैर्हावलास्यैर्मनोहरैः। राजानं रमयामास तथा रेमे तथैव सः। स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः। संवत्सरानृतून् मासान् बुबुधे न बहून् गतान्। रममाणस्तया सार्द्धं यथाकामं नरेश्वरः। अष्टावजनयत् पुत्रांस्तस्याममरसन्निभान्। जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत!। प्रीणामि त्वामिहेत्युक्त्वा गङ्गास्रोतस्यमज्जयत्। तस्य तन्न प्रियं राज्ञः शान्तनोरभवत्तदा। न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः। अथैनामष्टमे पुत्रे जाते प्रहसतीमिव। उवाच राजा दुःखार्त्तः परीप्सन् सुतमात्मनः। मा वधीः कासि कस्यासि किन्तु हिंससि सुतानिति। पुत्रघ्नि! सुमहत् पापं संप्राप्तं ते विगर्हिते!। स्त्र्युवाच। पुत्रकाम! न ते हन्मि पुत्रं पुत्रवतां वर!। जीर्णोऽस्तु मम वासोऽयं यथा स समयः कृतः। अहं गङ्गा जह्नुसुता महर्षिगणसेविता। देवकार्य्यार्थसिद्ध्यर्थमुषिताहं त्वया सह। इमेऽष्टौ वसवो देवा महाभागा महौजसः। वशिष्ठशापदोषेण मानुषत्वमुपागताः। तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते। मद्विधा मानुषी धात्री लोके नास्तीह काचन। तेषां जननीहेतोर्मानुषत्वमुपागता। जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः। देवानां समयस्त्वेष वसूनां संश्रुतो मया। जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति। तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः। स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम्। एष पर्य्यायवासो मे वसूनां सन्निधौ कृतः। मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम्" ९८अ०।

"स कदाचिन्मृगं विद्धा गङ्गामनुसरन्नदीम्। भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः। तां दृष्ट्वा चिन्तयामास शान्तनुः पुरुषर्षभः। स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा। ततो निमित्तमन्विच्छन्ददर्श स महामनाः। कुमारं रूपसम्पन्नं बृहन्तं चारुदर्शनम्। दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम्। कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम्। तां शरैराचितां दृष्ट्वा नदीं गङ्गां तदन्तिके। अभवद्विस्मितो राजा दृष्ट्वा कर्म्मातिमानुषम्। जातमात्रं पुरा दृष्ट्वा तं पुत्रं शान्तनुस्तदा। नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम्। स तु तं पितरं दृष्ट्वा मोहयामास मायया। संमोह्य तु ततः क्षिप्रं तत्रैवान्तर-

भीयत। तदङ्कं ततो दृष्ट्वा तत्र राजा स शान्तनुः। जङ्गमानः सुतं गङ्गामपृष्टोद्दर्शयेति ह। दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम्। गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम्। अलङ्कृतामाभरणैर्विरजोऽम्बरधारिणीम्। दृष्टपूर्वामपि स तां नाभ्यजानात् स शान्तनुः। गङ्गोवाच। यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः। स चायं पुरुषव्याघ्र! सर्वास्त्रविदुत्तमः। गृहाणेमं महाराज! मया संवर्द्धितं सुतम्। आदाय पुरुषव्याघ्र! नयस्वैनं गृहं विभो!" भा॰आ॰ १००अ॰ "गङ्गाज। नद्ध्येयसनारीकेतुः" भा॰वि॰ ६८अ॰। गङ्गाजेत्यत्र मुद्रितपुस्तके नदीजेति पाठः। कार्त्तिकेयस्य गङ्गातो जन्मकथा अग्निगर्भशब्दे ९९६पृ॰ उक्ता। गङ्गाजातगङ्गातनयादयोऽप्यत्र।

**गङ्गाटेय** पु॰ गङ्गायां नद्यामटे याति या—क पृषो॰ तलोपः अलुक् स॰। (चिङ्गिड़ी) मत्स्यभेदे त्रिका॰।

**गङ्गादत्त** पु॰ गङ्गया दत्तः। भीष्मे गङ्गाजशब्दे दृश्यम्।

**गङ्गादित्य** पु॰ काशीस्थे विश्वेशाद्दक्षिणस्थिते आदित्यभेदे "गङ्गादित्योऽस्ति तत्रान्यो विश्वेशाद्दक्षिणेन वै। तस्य दर्शनमात्रेण नरः शुद्धिमियादिह। यदा गङ्गा समायाता भगीरथपुरस्कृता। तदा गङ्गां परिष्टोतुं रविस्तत्रैव संस्थितः। तत्राद्यापि रविर्गङ्गां संमुखीकृत्य भास्करः। परिष्टौति प्रसन्नात्मा गङ्गाभक्तवरप्रदः। गङ्गादित्यं समाराध्य वाराणस्यां नरोत्तमः। न जातु दुर्गतिं क्वापि लभते च न रोगभाक्" काशीख॰५१अ॰।

**गङ्गाद्वार** न॰ गङ्गाया भूम्यवतरणद्वारम्। मायापुर्यां हरिद्वारे "ततो मायापुरीं प्राप्तः दुष्प्रापां पापकारिभिः। यत्र सा वैष्णवी माया जगन्नृ पाशैर्न पातयेत्। केचिद्धुर्हरिद्वारं मोक्षद्वारं जगुः परे। गङ्गाद्वारञ्च केऽप्याहुः केचिन्मायापुरीं पुनः। यतोऽभिनिर्गता गङ्गा ख्याता भागीरथी भुवि। यन्नामोच्चारणात् पुंसां पापं याति सहस्रधा। वैकुण्ठस्यैकसोपानं हरिद्वारं जगुर्जनाः। तत्राप्लुता नरा यान्ति तद्विष्णोः परमं पदम्" काशीख॰७अ॰।

**गङ्गाधर** पु॰ गङ्गां धरति मूर्ध्नि धृ—अच् ६त॰। १महादेवे अमरः। गङ्गाशब्दे तद्धारणकथा दृश्या। गङ्गाधरादयोऽप्यत्र। २समुद्रे त्रिका॰। [illegible] जीर्णातिसारनाशके चूर्णभेदे यथा "धातक्यामलकीपयोधरशठीकट्फलवृक्षीमधुशौण्ड्यम्बष्ठकशाल्मलीनागरविषाह्वीबिल्वलोध्रेन्द्रजैः। तक्रांशं विहितं सतण्डुलजलं गङ्गाधराख्यं महच्चूर्णं तुल्यमराकरोति शमनं जीर्णातिसारं परम्"।

**गङ्गाधररस** पु॰ वैद्यकप्रसिद्धे औषधभेदे।

**गङ्गापत्री** स्त्री गङ्गेव शुभ्रं पत्रमस्याः ङीप्। सुगन्धिकायां वृक्षभेदे राजनि॰।

**गङ्गापुत्र** पु॰ ६त॰। गङ्गातनये १भीष्मे २कार्त्तिकेये च "लेटात् तीवरकन्यायां गङ्गापुत्र इति स्मृतः" ब्रह्मवै॰पु॰ उक्ते ३सङ्कीर्णजातिभेदे (हरदाकराय)।

**गङ्गायात्रा** स्त्री॰ गङ्गामुद्दिश्य यात्रा। गङ्गामरणार्थं यात्रायाम्।

**गङ्गालहरी** स्त्री ६त॰। १गङ्गायास्तरङ्गपङ्क्तौ २जगन्नाथपण्डितरचिते गङ्गास्तोत्रभेदे च।

**गङ्गावतार** पु॰ गङ्गाया अवतारः ब्रह्मलोकात् भूमौ पतनमत्र। गङ्गाद्वाररूपे तीर्थभेदे ६त॰। तस्या भूमौ २अवतरणे च। "भगीरथ इव इहगङ्गावतारः" कद॰।

**गङ्गावाक्यावली** गङ्गामाहात्म्यादिप्रतिपादकानां वाक्यानामावली। स्मृतिनिबन्धभेदे।

**गङ्गासागर** पु॰ गङ्गया सङ्गतः सागरः शा॰ त॰। गङ्गासागरयोः सङ्गमरूपे तीर्थभेदे।

**गङ्गासुत** पु॰ ६त॰। १भीष्मे, २कार्त्तिकेये च हेम॰।

**गङ्गाह्रद** पु॰ गङ्गाया ह्रद इव। भारतप्रसिद्धे खण्डिपुरस्थे १कूपरूपे तीर्थभेदे। "ततः खण्डिपुरं गच्छेत्" इत्युपक्रमे "गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ!। तिस्रः कोट्यस्तु तीर्थानां तस्मिन् कूपे महीपते!। तत्र स्नात्वा नरो राजन्! स्वर्गलोकं प्रपद्यते" भा॰व॰ ८४अ॰। २कोटितीर्थस्थे तीर्थभेदे च "कोटितीर्थे समस्पृश्य लभेदिह सुवर्णकम्। गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम!। तत्र स्नायीत धर्मज्ञ! ब्रह्मचारी समाहितः। राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः"। तत्राद्यार्थे "६त॰। ३गङ्गायाह्रदे च।

**गङ्गुक** पु॰ कङ्गु+स्वार्थे॰। कङ्गौ धान्यभेदे (काङ्नी) सुश्रु॰। "रक्तशालिशयष्टिकगङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकासनकपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः"।

**गङ्गोद्भेद** पु॰ गङ्गायाः उद्भेदः प्रथमप्रकाशो यत्र। तीर्थभेदे। "गङ्गोद्भेदं समासाद्य तर्पयेत् पितृदेवताः। वाजपेयमवाप्नोति ब्रह्मभूतो भवेत् सदा" भा॰वन॰८४अ॰

**गङ्गोज्झ** न॰ गङ्गया उज्झ्यते उज्झ—कर्मणि घञ्। गङ्गास्रोतःशून्ये जलादौ।

**गजभक्षक** पु॰ गजो भक्षकोऽस्य। अश्वत्थवृक्षे राजनि॰।

**गजभक्ष्या** स्त्री गजेन भक्ष्या। शल्लकीवृक्षे अमरः। गजेन भक्ष्यते कर्म्मणि यत्। गजभक्ष्या तदर्थे स्त्री शब्दरत्ना॰।

**गजमण्डली** स्त्री गजानां सन्निवेशनभेदेन मण्डली परिवेशः वेष्टनाकारपरिधिः। गजानां सन्निवेशनविशेषेण परिधिरूपे वेष्टने। स्वार्थे क ङ्गस्वः। तदर्थे। "चन्द्राकृतीनि गजमण्डलिकाभिरुद्धैः" माघः। ङीप्। २गजसमूहे च।

**गजमाचल** पुंस्त्री मच–कल्कने अच् माचः गजस्य माचं माद्यं लुनाति लू–बा॰ ड। १सिंहे हारा॰ स्त्रियां जातित्वात् ङीष्।

**गजमुक्ता** स्त्री गजे तत्कुम्भे जाता मुक्ता। हस्तिकुम्भजाते मुक्ताभेदे "मुक्ताफलैः केसरिणां किराताः" कुमा॰व्या॰ मल्लिनाथधृतवाक्यम् "करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि"मुक्तैव स्वार्थे क टाप्। गजमौक्तिकमप्यत्र। "गजमौक्तिकावलियुतेन वक्षसा" किरा॰ मल्लिनाथधृता॰ करिणां मुक्तायोनित्वे प्रमाणमाहागस्त्यः "जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः"।

**गजमुख** पु॰ गजस्य मुखं मुखमस्य। १गणेशे यथा च तस्य तन्मुखवत्ता तथा इभाननशब्दे ८८१ पृ॰ उक्ता। "प्रमथाधिपो गजमुखः" हर॰सं॰५८अ॰। गजवदनादयोऽप्यत्र।

**गजमोटन** पुंस्त्री॰ गजं मोटयति चु॰ मुट–मोदे ल्यु। १सिंहे शब्दमा॰। स्त्रियां जातित्वात् ङीष्।

**गजवल्लभा** स्त्री ६त॰। १बङ्गसीजायां गिरिकदल्यां, २गजभक्ष्यायां राजनि॰।

**गजवीथी** स्त्री भचक्रमार्गस्थे "रोहिण्यार्द्रामृगशिरो गजवीथ्यभिधीयते" इत्युक्ते १नक्षत्रत्रये। खगोलशब्दे २४५१ पृ॰ विवृतिः। ६त॰। २गजानामावल्यां च।

**गजशिक्षा** स्त्री गजानां शिक्षा। गजचालनाभ्यासे "तदैव गजशिक्षायां नीतिशास्त्रेषु पारगः" भा॰आ॰१०६ अ॰।

**गजशिरस्** पु॰ गजस्य शिर इव शिरोऽस्य। १दैत्यभेदे "गजोदरो गजशिरा गजस्कन्धो गजेक्षणः" हरिवं॰२४० अ॰। गजस्य तन्नामासुरस्य वा शिरः शिरोऽस्य। २गणेशे च। इभाननशब्दे ८८१ पृ॰ गजाननशब्दे च दृश्यम्।

**गजसाह्वय** पु॰ गजेन हस्तिनामकनृपेण सह्वित आह्वयो यस्य। हस्तिनापुरे (दिल्ली)। "नियंयुर्गजसाह्वयात्" भा॰ व॰ १अ॰। गजाह्वयमप्यत्र न॰।

**गजस्कन्ध** पु॰ गजस्य स्कन्ध इव स्कन्धोऽस्य। दैत्यभेदे गजशिरःशब्दे उदा॰ दृश्यम्। गजवत् संश्लिष्टस्कन्धे उत्तमपुरुषलक्षणयुते च।

**गजाख्य** पुं॰गजं गजकर्णमाख्याति पत्रेण आ+ख्या–क। १चक्रमर्द्दवृक्षे राजनि॰। तस्य पत्रस्य गजकर्णतुल्याकारत्वात् तथात्वम्। २गजतुल्यनामनि हस्तिनापुरे न॰

**गजाग्रणी** पु॰ ६त॰। ऐरावते हस्तिनि शब्दर॰।

**गजाजीव** पु॰ गजैस्तत्पालनादिभिराजीव्यते जीव–घञ्। १हस्तिपालके हेमच॰।

**गजाण्ड** न॰गजस्याण्डमिव मूलं यस्य।१विण्डमूले राजनि॰

**गजादिनामन्(मा)** स्त्री गज इति शब्द आदौ यस्य तादृशं नामास्य वा डाप्। गजपिप्पल्याम् "कालास्कन्दाशिग्रुपुनर्नवार्कगजादिनामाकरहाटकत्कैः" सुश्रुतः।

**गजानन** पु॰ गजस्याननमाननं यस्य। १गणेशे अमरः। इभाननशब्दे ८८१पृ॰दृश्यम्। स्कन्दपु॰गणेशख॰ ११अ॰ तु अन्यथा तस्य गजाननता वर्णिता तत्र गणेशस्य मस्तकशून्यतयोत्पत्तौ पुरा शिवच्छिन्नेन कैलासे स्थापितेन गजासुरमस्तकेन मुखयोजनं तेन कृतमित्युक्तं यथा "गुरुरुवाच। अवतारो यदि इतः मातुराज्ञाय भो विभो!। प्रकाशयाशु वदनं सर्वेषां शोकनाशनम्। नयस्व सर्वदेवानामानन्दं हृदयं प्रभो!। शिव उवाच। मन्युवाच गुरुं पुत्रः पार्वत्या हीनमस्तकः। शिशुरुवाच। महेशास्येन रात्रा ते प्रभ्रतौ चरणौ यदा। तदाशीर्वा त्वया दत्ता तस्मै रात्रे गुरो! तदा। गजयोनौ जनिर्शक्तिः शिवकृत्यादुदीरिता। तद्वर्शमभवत् तस्य विद्यते चारुमस्तकः। पृच्छ्यमानं शिवेनास्ते मुखत्वादगजः शुभोभनः। अवतारकरोऽत्रौ मे गुरोऽस्ति भविता कथम्। शिवउवाच। आश्चर्यपूर्णहृदयो गुरुरूचे पुनः शिशुम्। गुरुरुवाच। भगवन्! विश्वरूपोऽसि त्रिकालज्ञोऽखिलेश्वरः। मया यदुदितं तस्मै त्वया ज्ञातं यतः प्रभो!। कल्पकोटिसहस्रैर्न परिच्छेत्तुं न च क्षमः। स्तुत्वैवं मन्मथः पुत्रो नारदस्तत्र चाब्रवीत्। नारद उवाच।

"एवमेवावतीर्णोऽसि हीनमूर्द्धा कथं प्रभो!। अथवा बालरूपस्य छिन्नं केन तच्छिरः। एतन्मे संशयं छिन्धि कृपया परमेश्वर!। शिव उवाच। निपीय नारदीं वाणीमुवाच शिशुरुत्कैः। शिशुरुवाच। सिन्दूरः कोऽपि

दैत्यो मे वायुरूपधरोऽभिभवत् । अदमै माद्य सम्यर्थं प्रविश्योदरं शिरः । तमिदानीं हनिष्येऽहं गजास्यं शाश्वतं द्विज ! । शिव उवाच । श्रुत्वैवं नारदः प्राह शिशुरूपमनोहरम् । नारद उवाच । अक्लिष्टरूप एवं देव ! योजनेऽस्य मुखस्य ते । त्वमेव च स्वभावेन सुखमेतद्वियोजय । शिव उवाच । वदतीत्थं मुनि यावत्तावत् स दग्धोऽखिलैः । सर्वावयवसम्पूर्णो गजाननउमासुतः । कोरीटकुण्डलधरो युगबाहुः सुलोचनः । वामदक्षिणभागे च सिद्धिबुद्धिविराजितः । दृष्टा विनायकं स्कन्द ! तथाभूतं निजेच्छया । हर्षोत्फुल्लनयना देवाः सर्वे तदाऽस्तुवन् । गजानन इति ख्यातो भवितायं जगत्त्रये" "एवं भाद्रचतुर्थ्यां स जातोऽसौ गजाननः" इति च तत्राध्याये । ६त० । हस्तिमुखे न० ।

**गजारि** पु० ६त० । १सिंहे । २वृक्षभेदे शब्दच० । ३शिवे च गजासुरद्वेषिशब्दे दृश्यम् । [ (भाङ्गत) अमरः

**गजारोह** पु० गजमारोहति आ+रुह-अण् । १हस्तिपके

**गजा(ज)शन** पु० गजैरश्य(श्र)ते कर्मणि ल्युट् । १अश्वत्थवृक्षे । २शल्लक्यां स्त्री ङीप् । ३गजभक्ष्यायाम् (भाङ्ग भावप्र० ४पद्ममूले न० रत्ना० ।

**गजासुर** पु० गजाकारोऽसुरः । असुरभेदे । तस्योत्पत्तिकथा च स्कन्दपु० गणेशख० १०अ० यथा "साम्प्रतं कथयिष्यामि गजासुरकथानकम् । पुरा युगे स राजासीद्धीतिशो लोकपालकः । कश्यपोगान् रूपसम्पन्नो वेदशास्त्रार्थकोविदः । देवद्विजार्चनरत आत्मविद्याविशारदः" । "महेश इति नाम्ना च विख्यातो भुवनत्रये" इत्युपक्रम्य "उत्पत्तिमाप्स्यते राजन् त्वया योनौ गजस्य हेति" गुरुवाक्यमुपन्यस्य "कदाचिद्रक्षता तेन पीडितो नारदः पथि । अवमत्य ययौ तं तु मन्त्रोऽसौ मुनिना कृतः । इभास्यो भवितासि त्वनौद्धत्यादन्यजन्मनि । गजासुर इति ख्यातिं यास्यसि त्वं नराधिप ! । कैलासे प्राप्स्यसि स्थानमन्ते तस्यैव जन्मनि । अवमत्य यतो यातो मामिदानीं नराधम ! । इत्युक्त्वान्तर्हितो भूत्वा स स्वयं नारदो मुनिः । गुरुनारदशापाभ्यां महेशो विस्मयं गतः । गते बहुतिथे काले राजा पञ्चत्वमाप सः । पश्चाल्लोकानने स्कन्द ! करिण्यां जनिमाप सः । इभास्यो बलवान् वीरः सर्वलासी नराकृतिः" ।

**गजासुरद्वेषिन्** पु० गजासुरं द्वेष्टि द्विष-णिनि ६त० । महादेवे कृत्तिवासःशब्दे विवृतिः ।

स्कन्दपु० गणेशख० १०अ० तु तं हत्वा तस्य चर्मकृत्तिवासस्य तच्चर्मधारणं तच्छिरसः कैलासे स्थापनञ्च वर्णितं यथा "जघान तं त्रिशूलेन स्कन्द ! कोपात् गजासुरम्" इत्युपक्रम्य "तव हस्ताद्भक्तस्त्वरन्ते ते दर्शनं गतः । त्वञ्च गुरुणा पूर्वं शप्तश्च नारदेन च । कैलासन्तु गते तस्मिन् मद्दास्ये चर्म चाननम् । चर्मणः परिधानञ्च मुखस्यापि प्रपूजनम् । भक्तवात्सल्यभावेन क्रियतेऽद्यापि षण्मुख !" । अस्यैव शिरसा विघ्नकस्य विनायकस्य गजाननतेति गजाननशब्दे दर्शितम् ।

**गजास्य** पु० गजस्यास्यमास्यमस्य । १गणेशे हेम० । ६त० । २हस्तिवदने न० । गजस्यास्यमिवास्यं यस्य । ३गजासुरे पु० गजासुरशब्दे दृश्यम् ।

**गजाह्व** न० गजसहिता आह्वा यस्य पाक० त० । १हस्तिनापुरे मेदि० । गजाह्वमप्यत्र । "युधिष्ठिरस्यानुमते वनवासात् गजाह्वयम्" भा० व० ६अ० । २तत्पुरयुक्ते देशभेदे तद्वासिषु तद्भूपेषु च पु० बहुव०, स च देशः बृहत्सं० १४अ० कूर्मविभागे मध्यस्थतयोक्तः । "गजाह्वयाचेति मध्यमिदम्" । [मेदि०। २हस्तिनापुर्यां च ।

**गजाह्वा** स्त्री गजोपपदा आह्वा आख्या । १गजपिप्पल्याम्

**गजेन्द्र** पु० गज इन्द्र इव व्याघ्रा० उपमित स०, ६त०वा । १श्रेष्ठगजे । २गजयूथपतौ च । "नैतत्प्रियं विक्रमतो द्विरदगजेन्द्राः" माघः । अगस्त्यशापेन गजेन्द्रतां प्राप्ते इन्द्रद्युम्नभूपे च तस्य तथाशापादिकथा भाग० ८स्क० ४अ० उक्ता यथा

"स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः । इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः । स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् । जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः । यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः । तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह । तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य । विप्रावमन्ता विशतां तमिस्रं यथा गजः स्तब्धमतिः स एव । श्रीशुक उवाच । एवं शप्त्वा गतोऽगस्त्यो भगवान् नृप ! सानुगः । इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् । आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम् । हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः" ।

ततः तच्छापेन गजेन्द्रतां प्राप्य कदाचित् त्रिकूटपर्वते वरुणोद्यानस्थसरसि निमग्नस्य ग्राहेण पदमे

पूर्वजन्मार्जितहरिसेवाराधनावशात् हरिस्मरणमेव तदुपायतया संचिन्त्य तस्य स्तवने कृते हरिणा तस्य ततो विमोचनं कृतं तेनैव च दिव्यगतिलाभश्च तस्य जात इत्येषा कथा तत्रैव १० अ० स्थिता दिङ्मात्रं ततः उदाह्रियते ।

"इयो करेणुकरभाश्च दुर्मदो नाचष्ट कृच्छ्रं कमलोऽज्ञमायया । तं तत्र कश्चिन्नृप ! दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् । यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे । यथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा । विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् । नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः । समाः सहस्रं व्यगमन्महीपते ! सप्राणयोश्चित्रममंसतामराः । ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः । विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत् सकलं जलौकसः । इत्थं गजेन्द्रः स यदाप सङ्कटं प्राणस्य देही विवशो यदृच्छया । अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत । न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् । ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् । यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम् । भीतं प्रपन्नं परिपाति, यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि" । भा० ८।२ अ० ।

ततः तत्कृतस्तुतिस्तत्रैव ३ अ० गेये, हरिणा ततो गजेन्द्रस्य मोचनमुक्तं यथा

"एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् । तं तद्वदार्त्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः । छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः । सोऽन्तःसरस्युरुबलेन गृहीत आर्त्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् । उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो ! भगवन्नमस्ते । तं वीक्ष्य पीडितमजः सहसावतीर्य सग्राहमाशु सरसः कृपयोज्जहार । ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुस्रियाणाम्" ।

गजेन्द्रमोक्षणकथस्य हरिचरितस्य श्रवणे फलमाह "एतन्महाराज ! तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् । स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य ! शृण्वताम् । यथानुकीर्त्तयन्त्येतच्छ्रेयस्कामा द्विजातयः । शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये" । तद्गजेन्द्रकृतस्तवमाहात्म्यमपि तत्रैवोक्तं यथा "ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये । तेषां प्राणात्यये चाहं ददामि विमलां मतिम्" इति हरेर्वरदानम् ।

**गजेष्टा** स्त्री गजानामिष्टा । विदार्य्याम् भूमिकुष्माण्डे राजनि० ।

**गजोदर** पु० गजस्योदरमिवोदरमस्य । दैत्यभेदे हरिवं० । गजाशिरःशब्दे दृश्यम् । [ राजनि० ।

**गजोषणा** स्त्री गजोपयुक्ता उषणा । गजपिप्पल्याम् ।

**गञ्ज** पु० गजि–घञ् । १अवज्ञायाम् हेमच० । आधारे घञ् । २गोष्ठागारे हारा०, ३भाण्डागारे ४खनौ मेदि० । ५पामरवट्ठे, ६हट्टस्थाने, ७मद्यभाण्डे, शब्दरत्ना० । ८मदिरागृहे स्त्री टाप् अमरः ।

**गञ्जन** त्रि० गजि–अवज्ञाने णिच्–ल्यु । तिरस्कारके "नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयम्" सा० द० । "सुभ्रूलते खञ्जनगञ्जनाक्षि ! शिरोमणीयं यदि याति यातु" उद्भटः । "अविकलगञ्जनमञ्जनकम्" गीतगो० ।

**गञ्जिका** स्त्री गञ्जैव स्वार्थे क । मदिरागृहे शब्दर० ।

**गड** सेके भ्वा० पर० सक० सेट् । गडति अगाडीत्-अगडीत् । जगाड गडा० । गडयति-ते ।

**गडि** वदनैकदेशे (गण्डव्यापारे) इदित् भ्वा० पर० अक० सेट् । गण्डति अगण्डीत् । जगण्ड । गण्डः । गण्डूषः ।

**गड** पु० गड–सेके अच् । (गडुइ) गडकोनामके मत्स्यभेदे । "गडको मधुरा स्निग्धा गुरवो वातपित्तहृत् । कफघ्नो रुचिकृद्वृष्यो दीपनो बलवीर्यकृत्" भावप्र० । तस्य पाकविशेषे गुणा उक्ता वैद्यके "पुच्छशीर्षेण रहिताः कामं सुविमर्द्दिताः । हिङ्गुतैले च संतप्ता गडमत्स्यस्य खण्डकाः । गडो वातहरो बल्यो हृद्यः पथ्योऽग्निवर्द्धनः । रुच्यः शुक्रदोऽत्यर्थं किञ्चित् कफकरः सरः" २अन्तराये मेदि० । ३परिखायां ४व्यवधाने शब्दर० । ५देशभेदे शाम्बरे राजनि० । गड–संज्ञायां कन् । गडक (गडुइ) मत्स्यभेदे अमरः ।

**गडदेशज** न० गडदेशे शाम्बरदेशे जायते जन–ड । शाम्बरदेशजातलवणे राजनि० ।

गडयन्त पु० चुरा० गड–णिच्–झच् मुम् च । १मेघे त्रिका० ।

गडलवण न० गडदेशजं लवणम् । शाम्बरदेशजे लवणभेदे राजनि० "गडोत्थं लघुवातघ्नमत्युष्णं भेदि पित्तलम् । तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च" भावप्र०

गडि पु० गड–इन् । १वत्सतरे राजनि० । २भारवहनादि-स्वकार्य्ये अलसे गवादौ (गड़िया) "गुणानामेव दौरात्म्याद् धुरि धुर्य्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः" काव्यप्र० ।

गडु पु० गड–उन् । १गलगण्डे घाटामस्तकयोर्मध्ये मांस-वृद्धिकारके रोगभेदे भरतः । २कुब्जे मेदि० । ३पृष्ठा-ग्रे शब्दर० । ४किञ्चुलके (केंचो) त्रिका० । गल-गण्डवद्विरर्थके ५पदार्थे च "काव्यान्तर्गडुभूतत्वात् नाल-ङ्कारः प्रहेलिका" सा० द० । "कृमिरन्तर्गडुना" सर्वद० स० । अस्य कण्ठशब्देन समासे वाहिताग्न्या० वा पूर्वनि० । गडुकण्ठः, कण्ठगडुः ।

गडुक पु० गडुर्गलगण्ड इव कायति मध्ये कै–क । (गाडु) ख्याते भृङ्गारे पात्रभेदे तन्मध्यस्य गलगण्डाकृतित्वात् तथात्वम् । "घण्टागडुककलशादिस्नानोपस्करभाजनैः" काशी० २६अ० । २तदाकृतौ ऋषिभेदे पु० तस्य गोत्रापत्यम् इञ् । गाडुकि तदपत्ये पुंस्त्री अन्यशब्देन तस्य द्वन्द्वे बहुत्वे च बहुषु इञो लुक् । गडुकाश्वटपेगोत्रापत्येषु ।

गडुर(ल) त्रि० गडुः कुब्जरोगोऽस्त्यस्य सिध्मा० लच् बा० र वा । १कुब्जे शब्दर० । स्त्रियां गौरा० ङीष् । गल-गण्डवदाकृतिमत्त्वात् तस्य तथात्वम् । ततः ब्राह्मणा० भावे ष्यञ् । गाडुल्य तद्भावे न० कडा० कर्म्मधा० अस्य पूर्वनि० । खञ्जगडुलः गडुलखञ्जः ।

गडेर पुंस्त्री० गड–एरक् । १मेघे (गाडोल) । त्रिका० । जातित्वात् स्त्रियां ङीष् ।

गडोत्थ न० गडात् देशभेदात् उत्तिष्ठति उद्+स्था–क । शाम्बरदेशजे लवणभेदे राजनि० । [२पांशौ हेम० ।

गडोल पु० गड–ओलच् । १गुडके (गुली) अन्नभेदे उज्ज्व० ।

गड्डर(ल) पु० गड–बा० डर डल वा अस्य नेत्वम् । १मेषे ।

गड्डरि(लि)का स्त्री गड्डरं(लं) मेषमनुधावति ठन् । मेषानुगन्त्र्यां १मेषपङ्क्तौ । तस्याश्चाद्यादविच्छिन्नगतौ अनुगतप्रवाहागमभूते २धारावाहिनि च शब्दचि० ।

गड्डुक पु० गडुक+पृषो० । १भृङ्गारे जलपात्रभेदे शब्दर० पृषो० दीर्घमध्योऽपि तत्रार्थे ।

गण संख्याने अद० चु० उभ० सक० सेट् । गणयति ते अ-जीगणत् त अजगणत् त । गणयाम्–बभूव आस-चकार चक्रे । गणयितव्यः । गण्यः । गणयिता गणयन् । गणितम् गणनम् गणना । गणयित्वा । विग-णय्य । गणः, "गणयति गिरिशतुलामविकल्पम्" गीतगो० "तां भक्तिरेवागणयत् पुरस्तात्" रघुः । "पदानि गणयन् गच्छ स्थानि नैषध ! कानिचित्" भा०व०२६।८। नलं प्रति कर्कोटकनागोक्तिः "यदि त्रिलोकी गणनापरा स्यात् तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्द्धं ग-णितं यदि स्यात् गणेयनिःशेषगुणोऽपि स स्यात्" नैष० । "लीलाकमलपत्राणि गणयामास पार्वती" कुमा० । "अजी-गणद्दाशरथं न वाक्यम्" भट्टिः । "आर्य्यौ कालभुजोदली-गणदशाभासीञ्च वैयासिकीम्" माघटी०, मल्लिनाथः "इत्थ-ञ्चतिश भगवानादित्येष्वेव गण्यते" भा० आ० २६०२ श्लो०

अव+अवज्ञायाम् । "नार्हन्नैनोऽवगणैरेकाक्षभिरनाधनैः" भा० व० ८२अ० ।

वि+विशेषेण संख्याने "अदूरवर्त्तिनीं सिद्धिं राजन् ! विग-णयात्मनः" रघुः ।

गण पु० गण–कर्म्मणि अच् कर्त्तरि अच् वा । १समूहे । "गणानां त्वां गणपतिम्" यजु० २३,१९ । "गणपतिं गणानां समूहानां पालकम्" वेददी० । २प्रमथे "सकलहंसगणं शुचि मानसम् शिवगणाङ्कजया च तनौ यया सकलहं सगणं शुचिमानसम्" "गणान्नमेरुप्रसवावतंसाः" कुमा० । सेनाविशेषाणां ३सङ्ख्याविशेषे अमरः । स च अनीकि-नीशब्दे १६८४पृ० दर्शितेन "त्रयोगुल्मा गणो नाम" इत्या-दिवाक्येन उक्तः तेन (रथाः २७ गजाः २७ । अश्वाः ८१ प-दातिकाः १३५ सर्वसमष्टिः २७०, इति संख्याविशेषः) । ४चोरनामगन्धद्रव्ये मेदि० । गणः प्रमथादिः अस्त्यस्य तेन सत्त्वादिगुणगणः अस्त्यस्य तेन वा गणः गणदेवः नायकत्वेन वाऽस्त्यस्य अच् । ५गणेशे "गणदीक्षाप्रवर्त्तकः" महानि० । प्रमथाधिपत्वात् तस्य गणेशत्वम् । विवाहे वरकन्ययो-र्मेलनज्ञानोपयोगिनि ६देवराक्षसमानुषरूपके ताराभेद-वर्गे उदयमयशब्दे १२५०पृ० विवृतिः । "गणमैत्री भकूटं च नाड़ी चैते गुणाधिकाः" मुहूर्त्तचि० । "नो गणानां च दोषः" ज्यो०त० । ७भुजादिसंज्ञके नक्षत्रविशेष-समूहे "इषः पूर्वभान्ताश्च भुजगणः इत्यादि" ज्यो०त० । समूह एकद्रव्यतापादनेन द्व्याद्यधिकारि-वर्णिकसमूहे च "द्वे त्वनेकमपार्थस्तु गणानामशयं विधिः" "गणद्रव्यं हरेद्यस्तु संविदं यश लङ्घयेत्" याज्ञ० ।

"भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः" उक्तेषु गणादिविकरणविशेषनिमित्तेषु दशसु धातुसमुदायेषु तद्युक्तत्वात् ।९गणपाठग्रन्थेऽपि । पाणिनिरचिते ।१०स्वरादिशब्दप्रतिपादकग्रन्थे ।११दैत्यभेदे स च दैत्यः अभिजिदपरनाम्नो गुणवतः गुणवत्यां जातः यथाह स्कान्दपु० गणेशख० १अ० "अथ सोऽप्यभिजित् पत्न्या समुद्रस्नानमाचरौ । पर्वणि श्रद्धया युक्तश्चक्रे स्नानं तया सह । हर्षिता सा गुणवती पपौ चाञ्जलिना जलम् । यदीयं मङ्गुपात्यक्तं दैवात्तदुदरे गतम्" ।"भार्या गुणवती तस्य नवमासादनन्तरम् । पुत्रं प्रासूताऽह्नि शुभे दिव्यरूपं गुणाढ्युतम् । ज्योतिर्विद्भिस्तदुक्तातो गण इत्यभिधां पिता । कृत्वाभ्युदयिकं चक्रे व्यतीते दशमेऽहनि" स तु च महादेवमाराध्य त्रैलोक्यं निर्जित्य कपिलमुनेश्चिन्तामणिं हृतवान् तेन जातमन्युना तेन गणेशस्य सेवने कृते गणेशेन तद्युद्धे अवतीर्य तं गणदैत्यं नाशितवान् इत्येषा कथा तत्रैव विस्तीर्णा दिङ्मात्र सूच्यते यथा "कथं नाशितवान्नाभो ! गणदैत्यं विनायकः । तन्मे कृपया देव ! कथयस्व ममाग्रतः । शिव उवाच । यथा नाशितवान् दैत्यं गणं दुष्टमतिं विभुः । तथाहं कथयामि त्वं शृणु षडानन" ६६अ० इत्युपक्रम्य

"प्राप्तमंशं परशुना हन्ति स्म तं यथा विभुः । इत्यवान् परशुं वीरस्त्वक्षः सूर्यमिवापरम् । सुतीक्ष्णं ज्वालया व्याप्तं कालचक्रनिभं शुभम् । दहन्तं दशदिग्भागान् प्रलयानलसन्निभम् । यदा तस्योदरं हत्वा स पश्चाच्च दैत्यराट् । तदैवाघातयच्छित्त्वा परशुस्तस्य मस्तकम् । सपर्वतवना पृथ्वी चाचलत् सागरैः सह । अभिजित्प्रमुखाः सर्वे रुरुदुः पतिते गणे" ७अ० । गण गणयम्, हन्नम्, गणहन्त्वम्, दीपकार्थे कारकार्थे दृष्टौ गणशब्दार्थे अव्य० । १२स्वपत्ने "सगणाय सपरिवाराय सायुधाय सशक्तिकाय इन्द्राय नमः" इति विधानपारिजा० । १४वाक्ये निघण्टुः ।

गणक त्रि० गण–ण्वुल् । १संख्याकारके २सांवत्सरिके पु० । तस्य लक्षणगुणदोषादिकमुक्तं वृ०स० २अ० यथा

"ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् तत्कार्त्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता । स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ।

"अथातः सांवत्सरसूत्रं व्याख्यास्यामः । तत्र सांवत्सरोऽभिजातः प्रियदर्शनो विनीतवेषः सत्यवागनसूयकः समः सुसंहतोपचितगात्रसन्धिरविकलचारुकरचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गो वपुष्मान् गम्भीरोदात्तघोषः । प्रायः शरीराकारानुवर्त्तिनो हि गुणाश्च दोषाश्च भवन्ति । तत्र गुणाः । शुचिर्दक्षः प्रगल्भो वाग्मी प्रतिभानवान् देशकालवित् सात्त्विको न पर्षद्भीरुः सहाध्यायिभिरनभिभवनीयः कुशलोऽव्यसनी शान्तिपौष्टिकाभिचारस्नानविद्याभिज्ञो विबुधार्चनव्रतोपवासनिरतः स्वतन्त्राश्चर्योत्पादितप्रभावः पृष्टाभिधाय्यन्यत्र दैवात्ययाद्ग्रहगणितसंहिताहोराग्रन्थार्थवेत्ता । तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु युगवर्षायनर्तुमासपक्षाहोरात्रयाममुहूर्त्तनाडीविनाडीप्राणत्रुटित्रुट्यवयवाद्यस्य कालस्य क्षेत्रस्य च वेत्ता । चतुर्णां च मानानां सौरसावननाक्षत्रचान्द्राणामधिमासकावमसम्भवस्य च कारणाभिज्ञः । षष्ट्यब्दयुगवर्षमासदिनहोराधिपतीनां प्रतिपत्तिविच्छेदवित् । सौरादीनाञ्च मानानां सदृशासदृशयोग्यायोग्यत्वप्रतिपादनपटुः । सिद्धान्तभेदेऽप्ययननिवृत्तौ प्रत्यक्षं सममण्डललेखासम्प्रयोगाभ्युदितांशकानाञ्च छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादनकुशलः । सूर्यादीनाञ्च ग्रहाणां शीघ्रमन्दयाम्योत्तरनीचोच्चगतिकारणाभिज्ञः सूर्याचन्द्रमसोश्च ग्रहणे ग्रहणादिमोक्षकालदिक्प्रमाणस्थितिविमर्दवर्णदेशानामनागतग्रहसमागमयुद्धानामादेष्टा । प्रत्येकग्रहभ्रमणयोजनकक्षाप्रमाणप्रतिविषययोजनपरिच्छेदकुशलो भूभगणभ्रमणसंस्थानाद्यक्षावलम्बकाहर्व्यासचरदलकालराश्युदयच्छायानाडीकरणप्रभृतिषु क्षेत्रकालकरणेष्वभिज्ञो नानाचोद्यप्रश्नभेदोपलब्धिजनितवाक्सारो निकषसन्तापाभिनिवेशैर्विशुद्धस्य कनकस्येवाधिकतरममलीकृतस्य शास्त्रस्य वक्ता तन्त्रज्ञो भवति । उक्तञ्च न प्रतिबद्धं गमयति वक्ति न च प्रश्नमेकमपि पृष्टः । निगदति न च शिष्येभ्यः स कथं शास्त्रार्थविज्ञेयः । ग्रन्थोऽन्यथान्यथार्थः करणं यश्चान्यथा करोत्यबुधः । स पितामहमुपगम्य स्तौति नरो वैशिकेनार्याम् । तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते । होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या । उक्तञ्चार्यविष्णुगुप्तेन । अप्यर्णवस्य पुरुषः प्रतरन् कदाचिदासादयेदनिलवेगवशेन पारम् । न त्वस्य कालपुरुषाख्यमहा-

ऋषिपुत्राणां प्रयतः प्रेतपर्व्वते । प्राचीनावीतिनाघ्यञ्च दक्षिणाभिमुखः स्मरन् । 'कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः । आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह"। "मदीयाः पितरो ये च कुले जाताः सनाभयः । तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् । ते सर्व्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्" । आचम्योक्त्वा च पश्चाच्च प्राणायामं प्रयत्नतः । पुनराह त्विरञ्चितः ब्रह्मलोकाप्तिहेतवे । एवञ्च विधिवत् श्राद्धं कृत्वा पूर्व्वं यथाक्रमम् । पितॄनावाह्य चाभ्यर्च्च्य मन्त्रैः पिण्डप्रदो भवेत् । तीर्थे प्रेतशिलादौ च चरुणा शक्तुना वा । प्रक्षाल्य पूर्व्वं तत्स्थानं पञ्चगव्यैः पृथक् पृथक् । मन्त्रैरेव संपूज्य पञ्चगव्यैश्च देवताम् । यावन्तस्ते मनुष्याश्च गृहीताः पितृकर्म्मणि । गच्छन्ति तावदहराः सिंहत्रस्ता यथा मृगाः । अष्टकासु च वृद्धौ च गयायां मृतवासरेऽहनि । मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह । वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्व्वकम् । गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन तत्त्वतः । सक्तुना सुदमालेन दद्यादर्घ्यपिण्डकम् । आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आ ब्रह्मभुवनात् लोकादिदमस्तु तिलोदकम् । पिता पितामहश्चैव तथैव प्रपितामहः । माता पितामही चैव तथैव प्रपितामही । मातामहस्तत्पिता च प्रमातामहकादयः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् । मुष्टिमात्रप्रमाणन्तु आर्द्रामलकमात्रकम् । शमीपत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे । उद्धरेत् सप्तगोत्राणां कुलानि शतमुद्धरेत् । पितुर्मातुश्च भार्य्याया भगिन्या दुहितुस्तथा । पितृष्वसुर्मातृष्वसुः सप्तगोत्राः प्रकीर्त्तिताः । विंशतिर्विंशतिरिन्द्राः ।। षोडश द्वादशैव हि । रुद्रा ।। एकशतञ्चैव कुलान्येकोत्तरं शतम् । नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः । सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः । पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम् । दक्षिणा चान्नसंकल्पस्तीर्थश्राद्धेष्वयं विधिः" ।

अधिकं मदीयगयाश्राद्धादिपद्धतौ द्रष्टव्यम् । गयाश्राद्धस्य फलादेराधारादिकं गयाश्राद्धादिपद्धतौ ज्ञातव्यमपि यथा "गयाश्राद्धफलं किंनिष्ठमिति विविच्यते । "यन्नाम्ना पातयेत् पिण्डम्" इत्यादिवचनजातात् पुत्रादिकृतश्राद्धात् तदुद्देश्यपित्रादिगतं नरकनिवृत्तिर्ब्रह्मलोकावाप्त्यादिफलमवगम्यते तच्च नोपपद्यते । तथा हि सर्व्वो हि लोकः स्वेष्टसाधने कर्म्मणि प्रवर्त्तते तत्प्रवृत्त्या च तत्तदिष्टसाधनं वस्तु साधयति इत्येवं नियमे स्थिते वैदिककर्म्मण्यपि तथैव स्वाभीष्टफलवत्त्वेन प्रवृत्तिरुचिता नान्यगामिफले । एवं शास्त्रदेशितं फलमनुष्ठातर्य्येव कर्म्म निष्पद्यते "शास्त्रीयं फलं प्रयोक्तरि तल्लक्षणत्वादिति" जैमिनीयन्यायात् । अन्यकर्त्तृकक्रियया अन्यदीयफलस्य जननेऽतिप्रसङ्गः स्यात् । ततश्च पुत्रादिकृतश्राद्धात् कथं पित्रादेरुद्धारादिरूपफलं तस्य श्राद्धाद्यकर्त्तृत्वात् इत्येवं प्राप्ते उच्यते 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव सः' इत्यादिवेदवचनात् जैमिनीयन्यायस्य जातेष्ट्यादिभिन्नविषयत्वं कल्प्यते । तथा च पित्रादिकृतजातेष्ट्यादिद्वारा अन्नप्राशनादिसंस्कारद्वारा च यथा तत्राऽकर्त्तर्य्यपि पुत्रे फलमुत्पद्यते एवं गयादिश्राद्धकर्त्तुरुद्देश्यस्याकर्त्तुरपि उद्धारादिफलसम्बन्धः नानापुराणवचनबलादपि सम्भवति "फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादिति" जैमिनीयन्यायान्तरेण विधिविशेषेणैव फलविशेषसम्बन्धस्य इत्युक्तत्वात् । तथा च शास्त्रातिप्रसङ्गस्य शास्त्रातिरिक्तविषयत्वमिति कल्प्यते "नास्ति वचनस्यातिभारः" इति न्यायात् "वाचनिकेऽर्थे न्यायानवतारात्" इति न्यायाच्च । तत्र वचनाच्चोभयगतफलसाधनताऽवगता जातेष्ट्यादिवत् । तच्च फलं पुत्रविशेषस्त्वन्यनरकाद्युद्धारो वेत्यन्यदेतत् । मीमांसादावेतद्विवेचितमित्युपरम्यते । काम्यादिस्वर्गादिफलकृतगयाश्राद्धस्य तु कर्त्तव्यत्वे अकरणनिबन्धनप्रत्यवायपरिहारमात्रं, सति कामे विशिष्टफलान्यथ फलम् "गयायां पिण्डदानेन पितॄणामनृणो भवेत्" इत्यादिवचने पितॄणामकरणस्यावश्यकतया तदकरणे प्रत्यवायबोधनात् "गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति । शोचन्ति पितरस्तस्य वृथा तस्य परिश्रमः" इति कूर्म्मपुराणीयेन समर्थस्य गयाश्राद्धाऽकरणे प्रत्यवायोक्तेः "जीवतो वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता" इत्यादिवचने गयाश्राद्धादिकरणेनैव पुत्रकार्य्यकारितया पुत्रत्वमित्युक्तेश्च । तेन गयाश्राद्धं नित्यमत एव यथाशक्ति अनुष्ठेयं "नित्यं यथा शक्नुयादिति" न्यायात् । तथापि सकृत्करणमेव

नित्यं तावतैव शास्त्रार्थसिद्धेः "सकृत्कृते कृतः शास्त्रार्थ इति" न्यायात् आवृत्तिबोधकशेषप्रमाणाभावाच्च जन्मतिथ्यादिकं वत् पुनःपुनः करणावश्यकता । पुनःकरणे तु फलाधिक्यम् "यो भूय आरभते तस्य फले विशेषः" इति न्यायात् "सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्" इत्यादिवाक्यमप्याद्यस्यैवावश्यकत्वार्थं न तु द्वितीयादेर्निरासार्थमपि, परिसंख्यापत्तेः । तत्रापि प्रथमयात्रायां येषां प्रेतत्वनिवारणार्थं प्रेतशिलायां पिण्डदानभाण्डस्फोटने कृते तत्र द्वितीययात्रायां तेषां ते न कार्य्ये इत्येव विशेषः । प्रथमयात्रानन्तरमृतानान्तु द्वितीययात्रायां ते अपि कार्य्ये । अन्यत् सर्व्वं सर्व्वास्वपि यात्रासु समानम् । तस्मादसुक्ते पित्रादौ नरकोद्धारादि यथायथं फलं सुक्ते तु तस्मिन् पुत्रादेः प्रत्यवायाभावः फलाच्च कामनायां विशिष्टस्नानादि पुत्रादिगतं फलं भवतीति सिद्धम् । अत्रेदं विविच्यते प्रागुक्तपुराणादिवचनेषु गयाश्राद्धस्य पित्राद्युद्धारः प्रत्यवायपरिहारः पुत्रावाप्तिश्च फलत्वेन श्रूयते तत्र गयाश्राद्धप्रवृत्तौ किं प्रयोजकं किमेकैकमुभयं वा त्रितयं वेति सन्देहे त्रितयस्यैव प्रयोजकता तत्र कामनाभेदादेकस्य मुख्यफलताऽपरयोर्द्वयोः प्रासङ्गिकता वा तथा च यदा पित्राद्युद्धारार्थिना गयाश्राद्धं क्रियते तदा तदेव मुख्यं फलं तत्प्रवृत्तौ प्रयोजकं, प्रत्यवायपरिहारः पुत्रोत्पत्तिश्च तत्र प्रासङ्गिकौ अन्यार्थदीपस्यानुद्देश्यप्रकाशनवत् । यदा तु पुत्रार्थिना तदनुष्ठीयते तदा पुत्रोत्पत्तिरेव मुख्यं फलं पित्राद्युद्धारस्तु तत्र द्वारमित्येव सिद्धान्तः । एवं पित्राद्युद्धारस्य फलत्वे स्थितेऽधुना तत्रेदं विचार्य्यते । उद्धारो नाम स्वापेक्षयोत्कृष्टस्थानादिनयनं तच्च प्रकृते नारकीयदेहविगमानन्तरं देवादिदेहप्रापणरूपं तच्च न सम्भवति नारकीयादिदेहादेः स्वस्वकर्म्मप्रारब्धतया कारणसत्त्वे विगमासम्भवात् तत्कर्म्मणां च भोगेनैव नाश्यत्वात् "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" स्मरणात् । ततश्च तद्देहनाशः प्रारब्धकर्म्मनाश एव नान्यथा । तथा च गयाश्राद्धादिना कथमुद्धारसम्भवः । प्रारब्धकर्म्मणाञ्च भोगादेव क्षये सति गयाश्राद्धेनोद्धारो जननीय इति कल्पनापि न युक्ता भोगादेव कर्म्मक्षये कल्पेन गयाश्राद्धवैफल्यापत्तेः । इत्येवं स्थिते उच्यते कर्म्मविपाकोक्तदानादिना प्रारब्धकर्म्मक्षयद्वारा यथा रोगनाशकल्पना तथा प्रकृतेऽपि गयाश्राद्धादिना प्रारब्धक्षयनाशद्वारैव उद्धारकल्पना "नाभुक्तं क्षीयते" इत्यादिवाक्यस्य तु बलवद्वाक्यस्यैव प्रतिबन्धकस्य सत्त्वे नाप्रवृत्तेः "न हि वचनस्यातिभारः इति" न्यायात् तथा च गयाश्राद्धस्यैव प्रारब्धक्षयजनकपुण्यविशेषजनकता कर्म्मविपाकोक्तदानादिवदेव कल्प्यते इति न कश्चिद्विरोधः । किञ्च भोगादेव प्रारब्धकर्म्मक्षयादनन्तरमुद्धारकल्पनेऽपि न गयाश्राद्धवैफल्यं पापविशेषैरेकैकयोनिष्वनेकावृत्तिश्रवणात् फलोन्मुखानामितरेषामनारब्धफलानां कर्म्मणाञ्च गयाश्राद्धनाश्यता भविष्यतीति । अस्ति च नारकीयाद्यारम्भके पापे उद्धारस्य ब्रह्मलोकावाप्तिरूपतैव । स्वकर्म्मानुसारेण तल्लोकप्राप्तेरपि पूर्व्वं मृतत्वे तु पुत्रनिष्ठः प्रत्यवायपरिहार एव फलं सुक्तपित्रादौ तथाकल्पनस्य पूर्व्वमुक्तत्वात् तथैवात्र कल्पनौचित्यात् ।

अथ गयाश्राद्धाधिकारिणः । तत्र पुत्रपौत्रप्रपौत्रा एव प्रधानाधिकारिणः । तद्भिन्नाः सर्व्वेऽपि गौणाधिकारिणः । तथा "पुत्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाम्" इत्यादिवचनेन पुत्रसत्त्वेऽन्यकर्तृकश्राद्धस्य निषेधेऽपि गयायां तस्य प्रतिप्रसवः, "आत्मजो वाऽन्यजो वापि गयाकूपे यदा तदा । यन्नाम्ना पातयेत् पिण्डं तं नयेद्ब्रह्म शाश्वतम्" इति वायवीयवचनात् "सवर्णा भ्रातरो भिन्नाम्बराः सुहृदस्तथा । तेऽपि भूयो गयां गत्वा पिण्डं दद्युर्विधानतः" इति स्मृतिरत्नावलीधृतवाक्याच्च । तथा चात्र सम्बन्धिमात्राणामधिकारः । यो यदीयधनं यथा कथञ्चिद्गृह्णाति सोऽसवर्णोऽपि तदीयगयाश्राद्धेऽधिकारी, "प्रेत किञ्चिद्दयुद्धर्म्मम्" इत्यादि वायवीयवचनेऽसवर्णवणिग्दत्तपिण्डेन प्रेतोद्धारस्य कीर्त्तनात् पुत्रो वा बन्धुपुत्रो वा मित्रं वा स्वजनोऽपि वा । अपितो वाथवा दद्याद् द्वयोः स्वर्गस्तदा तयोरिति" वह्निपुराणीयाच्च । तथान्यत्र कर्तृविशेषविषयनिषेधोऽपि गयायां न प्रवर्त्तते "न पुत्रेभ्यः पिता दद्यान्नानुजेभ्यस्तदाग्रजः । न पत्न्यै तु पतिर्दद्यात् बुद्धिमान् सुसमाहितः" इति च सामान्यतो निषिध्य "तेऽपि यान्ति दिवं सर्व्वे पिण्डे दत्ते इति स्मृतिः । एतस्तेभ्योऽत्र यत्नेन पिण्डं दद्यात् समाहितः" इति स्मृतिरत्नावल्यां गयायां प्रतिप्रसवात् बौधायनेनापि "पित्रा श्राद्धं न कर्त्तव्यं पुत्राणान्तु कदाचन । भ्रातृज्येष्ठेन वा कार्य्यं भ्रातॄणां न कनीयसाम् । अतिस्नेहेन कार्य्यं वा सपिण्डीकरणं विना । गयायामविशेषेण ज्यायानपि समा-

चरेदिति सामान्यतो निषिध्य गयायां प्रतिप्रसवात्। पूर्ब्बवचने अत्रेति गयायामित्यर्थः।

अथ गयाश्राद्धानधिकारिणः। जीवत्पितृको जीवन्मातृकश्च गयाश्राद्धे सर्व्वथानधिकारी। जीवत्पितृको मृतमातृकस्तु यदि प्रसङ्गेन गयां प्राप्नोति तदा अन्वष्टकाश्राद्धमिव मातृपार्व्वणमेव कुर्य्यात् "अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च क्षयाहनि। मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति" इति मैत्रायणीयपरिशिष्टवाक्यात्। अत्र प्राप्त्युक्त्या प्रासङ्गिकगमनं सूचितम् "गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेदिति त्रिस्थलीसेतुधृतवचने प्रसङ्गत इति पदस्य स्पष्टोपादानस्वरसात्। तेन जीवत्पितृकस्य गयोद्देश्य गमने न मातृश्राद्धकरणम्। मातृश्राद्धस्यान्वष्टकाश्राद्धसादृश्यात् पार्व्वणमेव कार्य्यमिति त्रिस्थलीसेतुप्रभृतयः। अन्ये तु जीवन्मातृको मृतमातृको वा जीवत्पितृकोऽपि पार्व्वणविधिना पितामहादीनां गयाश्राद्धं कुर्य्यात् "जीवे पितरि वै पुत्रः श्राद्धकार्य्यं विवर्ज्जयेत्। येषां वापि पिता दद्यात्तेषामेके प्रचक्षते" इति हारीतवचनोत्तरार्द्धेन जीवत्पितृकपार्व्वणस्य विधानेन गयायामपि तत्प्रवृत्तेरित्याहुः। आचार एवात्रान्यतरपक्षग्रहणे शरणम्।

संन्यासिनस्तु सर्व्वकर्म्मपरित्यागितया गयाश्राद्धेऽनधिकारिणः। तथापि तत्र विष्णुपदादिश्राद्धस्थानेषु दण्डमात्रस्पर्शनं प्रणवोपासनादिवत् तैराचरणीयं न तु श्राद्धतर्पणादि "दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः। दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते" इति वायवीयात् स्पृष्ट्वा स्पर्शयित्वेत्यर्थः। पुत्रवत्याः स्त्रिया नाधिकार इति गौड़ैकदेशिनामाचारः स तु मूलाभावान्नादरणीयः।

अथ गयाश्राद्धकालः। न तत्र कालशुद्ध्यपेक्षा "गयायां सर्व्वकालेषु पिण्डं दद्यात् विचक्षणः। अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च वृहस्पताविति" वायवीयात्। अत्र सर्व्वकालेष्वित्युपादानात् अस्ते इत्याद्युक्तिस्तु सर्व्वसमयशुद्धिप्रयोजकनिमित्तमात्रोपलक्षणार्था न तु रात्र्यादिपर्य्युदस्तकालपरिग्रहणार्थेति बोध्यं सर्व्वत्र तीर्थादौ रात्र्यादिकालस्य पर्य्युदस्ततया रघुनन्दनादिभिः स्वीकारात्। संक्रान्त्यादौ तु फलातिशयः "गयाश्राद्धं प्रकुर्व्वीत संक्रान्त्यादौ विशेषतः। काले वाऽपरपक्षे वा चतुर्थ्यां दिनक्षयेऽपीति" वह्निपुराणीयात् "मकरे वर्त्तमानेऽर्के ग्रहणे चन्द्रसूर्य्ययोः। दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनमिति" वायुपुराणवाक्याच्च। तथान्येऽपि निषिद्धकाला गयायां प्रतिप्रसूताः। यथा "विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्। पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणमिति" कार्ष्णाजिनिवचनेन, "वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया। कृता गर्गादिभिर्मुख्यैस्तीर्थमेकन्तु कर्म्मणामिति" स्मृतिसंग्रहवाक्येन च विवाहादेरूर्द्धं वर्षादिकालपर्य्यन्तं पिण्डदानस्य निषेधेऽपि "महालये गयाश्राद्धे मातापित्रोर्मृताहनि। कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व्वपणं सुतः" इति. "पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये। गयायां पिण्डदानस्य न कदाचिन्निराक्रियेति" च त्रिस्थलीसेतुधृतस्मृतिसंग्रहवाक्याच्च तत्प्रतिप्रसवः। तथा तत्र तिलतर्पणनिषेधाभावोऽपि "उपरागे व्यतीपाते गयायामथ पर्व्वणि। आदित्यादिनिषेधेऽपि कर्त्तव्यं तिलतर्पणमिति" स्मृतिदर्पणधृतसंग्रहवाक्यात्।

अथ गयाश्राद्धे निषिद्धकालः। "तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम्। अब्दमध्ये न कुर्व्वीत महागुरुनिपातने" इति गारुड़ात् प्रमीतमहागुरुकस्य वर्षमात्रं गयाश्राद्धं निषिद्धम्। तत्रायं विशेषः वृद्ध्यादिनिमित्तकृतसपिण्डीकरणे तु कर्त्तुं शक्यत एव "अस्थिक्षेपं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्। अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना" इति गारुड़वाक्यान्तरात्। अत्राप्यपरोविशेषः यदि पितृभक्तिमान् तदाब्दमध्येऽपि गयाश्राद्धं कर्त्तुं शक्नोति "अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्। प्रथमाब्देऽपि कुर्व्वीत यदि स्याद्भक्तिमान् सुतः" इति त्रिस्थलीसेतुधृतवचनात्। अत्र भक्तिः प्रीतिरिति बहवः। अन्ये तु अब्दमध्ये प्रेतस्य दैवतात्वयोग्यतासिद्धये दैवतासंस्कारकमेकं पार्व्वणं कर्त्तव्यं तदेव भक्तिपदाभिधेयं तच्च कृत्वा गयाश्राद्धं कुर्य्यादित्याहुः। भक्त्या वर्षमध्ये गयाश्राद्धकरणे तु वृद्धाविव मासिकादीन्यपकृष्य कार्य्याणीति बोध्यम्। अत्रेयं सम्प्रदायानुसारिणी व्यवस्था अकृतसपिण्डनस्य प्रथमाब्दे गयाश्राद्धं नैव कार्य्यं कृतसपिण्डनस्यापि सति सम्भवे प्रथमाब्दे नैव कार्य्यमित्येव मुख्यः पक्षः प्रसङ्गतो गयाप्राप्तौ पुनरागमनाद्यसम्भावनायान्तु भक्त्या, कृतान्तरोक्तं श्राद्धं कृत्वा वा। प्रथमाब्देऽपि तत् कार्य्यं नित्य

त्वा”दिति। महापातकिनामपि वर्षमात्रं गयाश्राद्धं न कार्य्यम् “क्रियते पतितानां च गते संवत्सरे क्वचित्। देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिरिति” स्मरणात् कूपग्रहणं गयास्थतीर्थमात्रोपलक्षणम्। पतितानामिति यावद्दुर्मरणहतानामप्युपलक्षणार्थं ते च विस्तरभयान्नात्र लिखिताः। मुक्तमेवं मिताक्षरायां यावद्दुर्निमित्तमृतानां संवत्सरादूर्द्ध्वमेव नारायणबलिविधानपूर्वकं श्राद्धकरणस्वीकारात् गयाश्राद्धस्यापि तत्स्थानीयत्वेन तत्काले एव करणौचित्यम्। अतएव तत्र षट्त्रिंशन्मतीयवाक्यम्“गोब्राह्मणहतानाञ्च पतितानां तथैव च। ऊर्द्ध्वं संवत्सरात् कार्य्यं सर्वमेवौर्द्ध्वदैहिकमिति”। अत्र सर्वमिति सर्वशब्दस्वरसात् नारायणबलेरिव गयाश्राद्धादेरपि वर्षोत्तरमेव कर्त्तव्यता नार्वागिति प्रतीयते। अतएव तद्वचनव्याख्यायां मिताक्षराकृता नारायणबलिं कृत्वौर्द्ध्वदैहिकं कार्य्यमित्युक्तम्। एवञ्चात्मघातिनाम्“नास्ति किञ्चिद्गयां विना”इत्युक्तिरपि वर्षोत्तरमेव तत्कर्त्तव्यतार्थैवेति बोध्यम्। अथ कर्तृविशेषे गयाश्राद्धविशेषः। तत्र“पितृणां दत्तमक्षयमिति”, “पिण्डं दद्याच्च पित्रादेरिति” च वायवीयात् पित्रादित्रयाणामुद्देश्यता। “पितरो यत्र पूज्यन्ते तत्र मातामहादयः”इत्युक्तेः,गयामुपक्रम्य “मातामहानामप्येवं श्रुतिरेषा सनातनीति” पाद्मसृष्टिखण्डवचनाच्च मातामहादीनामप्युद्देश्यतेत्येवं षड्दैवतं पार्व्वणमिति गौड़ीयाः। “अन्वष्टकायां वृद्धौ च गयायाञ्च मृताहनि। अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह” इति वाय्वग्निपुराणोक्तेः“नान्दीमुखेऽष्टकायां गयायाञ्च मृताहनि। पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत्” इति शातातपोक्तेश्च मात्रादीनामप्युद्देश्यता तेन नवदैवत्यम्। तत्रायं विशेषः। नान्दीमुखे अमामेदिनामिव नवदैवतपार्व्वणस्य विधानेन तत्साहचर्य्यात् तद्देदिनामेव नवदैवत्यमिति। “पित्रादि नवदैवं वा तथा द्वादशदैवतम्” वह्निपुराणीयात् मातामह्यादित्रिकसहितं नवदैवतमिति द्वादशदैवतं वा। तत्र शास्त्रद्वयश्रवणात् विकल्प एव गम्यते स च देशभेदादिना व्यवस्थितः। पितृव्यादीनान्तु एकोद्दिष्टमेव तदशक्तौ पिण्डदानमात्रं कार्य्यम्। तत्पत्नीनामपि पृथगेवैकोद्दिष्टादि कार्य्यम् “न योषिद्भ्यः पृथग्दद्यात्”इत्यादिना पृथग्दाननिषेधेऽपि“स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातनम्। अपृथक् निष्फलं श्राद्धं पिण्डश्चोदकतर्पणम्” इति वायवीये गयामुपक्रम्य सहदाननिषेधेन तत्प्रतिप्रसवात्।”

गयाकूप गयास्थकूपभेदे पुं०। गयाक्षेत्र न०। गयारूपे क्षेत्रभेदे। गयातीर्थ तद्रूपे तीर्थे न०। गयादित्य पुं० गयास्थादित्यभेदे। गयाशिरस् न० गयास्थे गयशिरसि। “सर्वे शान्ता व्यदन्वाय” इत्युक्तेः गयाशिरमप्यत्र न० “पिण्डं दद्यात् गयाशिरे” वायुपु०। गयाशीर्षगयाशेखरादयोऽप्यत्र। ३गन्तव्ये। “गतोऽसि गयोऽसि” ता० ब्रा०। “गयः फलाकाङ्क्षिभिर्गन्तव्यः” भा०।

गर त्रि० गीर्य्यते गॄ-कर्म्मादौ पचादि० अच्। तत्र गणे गरट् इति पाठात् टित्त्वात् स्त्रियां ङीप्। १गीर्य्यमाणे २उपविषे ३रोगे ४विषे च पु० हेमच०। “गरो गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता” नैष०। “स्त्रियोऽन्नपानं नखरोममूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः। यच्छन्ति प्रयच्छन्त्यरयो गरांश्च” सुश्रुतः। “विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात्” सुश्रुतः। विषभक्षणजातमृत्युकरणोक्तौ “अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः” स्मृतिः। ५विषभेदे न० हेमच० “तस्मादिदं गरं भुङ्क्ते” भाग० ८।७।२२श्लो०। ६वत्सनाभाख्ये विषे राजनि०। बवादिषु पञ्चमे तिर्य्यग्रूपे ७करणे न० मेदि०। करणशब्दे विवृतिः। “गरोदूष्ये” पा० गणसूत्रोक्ते दूष्ये च तस्य उञ्छादि० अन्तोदात्तता। भावे अप्। ८निगरणे पु०। ततः तार० इतच्। गरित सञ्जातगरणे। गीर्य्यते कर्म्मणि अप्। १०भक्ष्ये चूर्णभेदे “स्नेषु मन्दविषेषु” इत्युपक्रमे “योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत्” सुश्रुतः।

करणशब्दे अनुक्तत्वात् प्रसङ्गात् करणाधीशाः तत्फलभेदे तेषां प्रहरणादिकं च वृ०सं०९९अ०उक्तं प्रदर्श्यते यथा।

“बवबालवकौलवतैतिलाख्यगरवणिग्विष्टिसञ्ज्ञानाम्। पतयः स्युरिन्द्रकमलजमित्रार्यमभूश्रियः सयमाः। कृष्णचतुर्द्दश्यर्द्धाद्ध्रुवाणि शकुनिचतुष्पदं नागम्। किन्तुघ्नमिति च तेषां कलिवृषफणिमारुताः पतयः। कुर्य्याद्बवे शुभचरस्थिरपौष्टिकानि, धर्मक्रिया द्विजहितानि च बालवाख्ये। सम्प्रीतिमित्रकरणानि च कौलवे स्युः सौभाग्यसंश्रयगृहाणि च तैतिलाख्ये। कृषिबीजगृहाश्रयजानि गरे वणिजि ध्रुवकार्य्यवणिग्युतयः। नहि विष्टिकृतं विदधाति शुभं परघातविषादिषु सिद्धिकरम्। कार्य्यं पौष्टिकमौषधादि

शकुनौ गूढानि मन्त्राण्यथा। गोकार्यादि चतुष्पदे द्विजपितृनुद्दिश्य राज्ञानि च। नागे स्थावरदारुणानि करणं दौर्भाग्यकर्म्मोक्ततः। किन्तुग्ने शुभमिष्टकृत्यकरणं मङ्गल्यसिद्धिक्रियाः।"

**गरघ्न** पु॰ गरं हन्ति हन–टक्। १कृष्णार्जके २बर्बरे च राजनि॰। (गरुड) ३मत्स्यभेदे स्त्री ङीप्। भावप्र॰ तद्गुणा उक्ता यथा "गरघ्नी मधुरा तिक्ता तुवरा वातपित्तनुत्। कफघ्नी रुचिकृद्गुल्मी दीपनी बलवीर्य्यकृत्"।

**गरण** न॰ ग्ट–सेचने गॄ–निगरणे वा भावे ल्युट्। १सेचने २भक्षणे च। "गरुत्मान् गरणवान्" निरुक्तौ ६।१८। ३विषे शब्दार्थचि॰।

**गरद** न॰ गरेण सेचनेन दीयते खण्ड्यते दो–खण्डने कर्मणि बाहुल्यात् क। १विषे हेम॰ दा–क ६त॰। २विषदातरि त्रि॰ "अग्निदो गरदश्चैव" स्मृतिः।

**गरभ** पु॰ गॄ–बा॰ अभच्। गर्भे हेमच॰।

**गरल** न॰ गिरति जीवनम् गॄ–अलच् गरं सेचनं लाति प्रतीकाराय ला–क वा। १विषे अमरः। "स्मरगरलखण्डनं मम शिरसि मण्डनम्"। "गरलमिव कलयति मलयसमीरम्" गीतगो॰ "संक्वादितं गरलनिवापनेन" भा॰ व॰ ६७ अ॰। २तृणपुञ्जे(घासेर आटि) ३सर्पविषे ४मानभेदे च हेमच॰।

**गरलारि** पु॰ ६त॰। मरकतमणौ राजनि॰। [शब्दरत्ना॰।

**गरव्रत** पुंस्त्री गरः विषवद्दुःसर्पभोजनं व्रतमस्य। मयूरे

**गरस्** न॰ गॄ–बा॰ असुन्। १भक्षणे। "सगरा अहि बुभ्रः" ताण्ड्या॰। "गरसा भक्षणेन सह वर्त्तमानः" भा॰।

**गरहन्** पु॰ गरं हन्ति हन्–क्विप्। १कृष्णार्जके २बर्बरे च त्रिका॰।

**गरा** स्त्री ग्ट–गॄ–वा अच् अजादेराकृतिगणत्वात् टाप्। १देवताडीवृक्षे राजनि॰। भावे–अ। २भक्षणे धरणी।

**गरागरी** स्त्री गरं मूषिकविषमागिरति गॄ–अच् गौरा॰ ङीष्। देवताडीवृक्षे अमरः।

**गरात्मक** न॰ गरस्य विषस्येवात्मा यस्य। शिग्रुबीजे शब्दच॰।

**गराधिका** स्त्री गरे गरप्रतीकारेऽधिका श्रेष्ठा। लाक्षायाम् रत्नमा॰। गरायिकेति पाठान्तरे गर इवाचरति क्यच्–ण्वुल्। तत्रार्थे। [उभ॰ सेट् गरयति अजगरत् त।

**गरि** (गुरुं करोतीत्यर्थे णिच् गुरोर्गरादेशः) गुरुकरणे अक॰

**गरिमन्** पु॰ गुरोर्भावः इमनिच् गरादेशः। अधःपतनसाधने अर्द्धस्थितिविरोधिनि गुरुत्वरूपे गुणे। "पादाहतं यत् सहसा गरिम्णः"। "इतराङ्गवत् यदिदं गरिमग्लपितावलम्बमगमत्तनुताम्" माघः। "प्रोद्यद्गाजफलो गृहीतगरिमा विष्वग्वृतोभोगिभिः" सा॰द॰।

**गरिष्ठ** त्रि॰ अतिशयेन गुरुः गुरु+इष्ठन् गरादेशः। १अतिगुरौ। २राजभेदे पु॰ "हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः" भा॰ स॰ ७अ॰ शक्रसभ्योक्तौ। ३दैत्यभेदे पु॰। "हविष्यश्च गरिष्ठश्च मलयो नरकः पृथुः" हरिवं॰ २६२ अ॰ दैत्योक्तौ।

**गरी** स्त्री गॄ–पचाद्यच् तत्र गणे गरट् इति पाठात् ङीप्। देवताडीवृक्षे अमरः गरागरीत्यत्र पदद्वयमित्यन्यमतात्।

**गरीयस्** त्रि॰ अतिशयेन गुरुः गुरु+ईयसुन् गरादेशः। अतिगुरौ "सखा गरीयान् तव च" "वाक्यस्यार्थगरीयसः" माघः। स्त्रियां ङीप्। "तथापि शुश्रूषुरहं गरीयसीः" माघः।

**गरुड** पु॰ गरुद्भ्यां डयते डी–ड पृषो॰ तलोपः। कश्यपात्मजे विनतागर्भजाते १पक्षिराजे अमरः। "विनतापि सुपिडायां बभूव मुदिता तदा। जनयामास पुत्रौ द्वारुणं गरुडं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः। पतत्त्रिणान्तु गरुड इन्द्रत्वेनाभ्यषिच्यत" भा॰ आ॰ ३१अ॰। विंशतिविधप्रासादमध्ये २प्रासादभेदे। "गरुडाकृतिश्च गरुडो नन्दीति षट्चतुष्कविस्तीर्णः। कार्य्यश्च सप्तभौमो विभूषितोऽण्डैश्च विंशत्या" वृ॰स॰ ५६अ॰ ३सैन्यनिवेशनभेदरूपे व्यूहभेदे। "दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा। वराहमकराभ्यां वा सूच्या वा गरुडेन वा" मनुः। "अग्रपश्चाद्भागः पृथुमध्यो वराहव्यूहः एष एव पृथुतरमध्यो गरुडव्यूहः ताभ्यां पार्श्वयोर्भये सति व्रजेत्" कुल्लू॰।

**गरुडध्वज** पु॰ गरुडो ध्वजोऽस्य। १विष्णौ अमरः। यथा च तस्य तत्केतनत्वं तथा खगासनशब्दे पृ॰२४१६ दृश्यम्। गरुडकेतनादयोऽप्यत्र। "पयांसि भक्त्या गरुडध्वजस्य" माघः। "महाक्षो गरुडध्वजः" विष्णुसं॰।

**गरुडपुराण** न॰ गरुडायोक्तं विष्णुना पुराणम्। अष्टादशमहापुराणान्तर्गते सप्तदशे महापुराणभेदे। गरुडस्येदम् उद्देश्यतया अण् गारुडमप्यत्र। तत्संख्याप्रतिपाद्यविषयाश्च उत्तरख॰ १०८अ॰ नारदीयपुराणोक्ताः यथा

"ब्रह्मोवाच। मरीचे! शृणु वक्ष्यामि पुराणं गारुडं शुभम्। गरुडायाब्रवीत् पृष्टो भगवान् गरुडा-

सनः। एकोनविंशसाहस्रं तार्क्ष्यं कल्पकथाचितम्। तत्र पूर्वखण्डे। "पुराणोपक्रमो यत्र सर्गः संक्षेपतस्ततः। सूर्यादिपूजनविधिर्दीक्षाविधिरतः परम्। श्राद्धादिपूजा ततः पश्चान्नवव्यूहार्चनं द्विज!। पूजाविधानञ्च वैष्णवं तथा पञ्जरं ततः। योगाध्यायस्ततो विष्णोर्नामसाहस्रकीर्त्तनम्। ध्यानं विष्णोस्ततः सूर्यपूजा मृत्युञ्जयार्चनम्। मालामन्त्राः शिवार्चाऽथ गणपूजा ततः परम्। गोपालपूजा त्रैलोक्यमोहनं श्रीधरार्चनम्। विष्ण्वर्चा पञ्चतत्त्वार्चा चक्रार्चा देवपूजनम्। न्यासादिसन्ध्योपास्तिश्च दुर्गार्चाऽथ सुरार्चनम्। पूजा माहेश्वरी चातः पवित्रारोहणार्चनम्। मूर्त्तिध्यानं वास्तुमानं प्रासादानाञ्च लक्षणम्। प्रतिष्ठा सर्वदेवानां पृथक् पूजा विधानतः। योगोऽष्टाङ्गो दानधर्मः प्रायश्चित्तविधिक्रिया। द्वीपेशनरकाख्यानं सूर्य्यव्यूहश्च ज्यौतिषम्। सामुद्रिकं स्वरज्ञानं नवरत्नपरीक्षणम्। माहात्म्यमथ तीर्थानां गयामाहात्म्यमुत्तमम्। ततो मन्वन्तराख्यानं पृथक् पृथक् विभागशः। पित्राख्यानं वर्णधर्मा द्रव्यशुद्धिः समर्पणम्। श्राद्धं विनायकस्यार्चा ग्रहयज्ञस्तथाऽऽश्रमाः। जननाख्या प्रेताशौचं नीतिसारो व्रतोक्तयः। सूर्य्यवंशः सोमवंशोऽवतारकथनं हरेः। रामायणं हरिवंशो भारताख्यानकन्ततः। आयुर्वेदे निदानं प्राक्चिकित्सा द्रव्यजा गुणाः। रोगघ्नं कवचं विष्णोर्गारुडं त्रैपुरो मनुः। प्रश्नचूडामणिश्चान्ते हयायुर्वेदकीर्त्तनम्। ओषधीनामकथनं ततो व्याकरणोहनम्। छन्दःशास्त्रं सदाचारस्ततः स्नानविधिः स्मृतः। तर्पणं वैश्वदेवञ्च सन्ध्या पार्वणकर्म च। नित्यश्राद्धं सपिण्डाख्यं धर्मसारोऽथ निष्कृतिः। प्रतिसंक्रम उक्तोऽथ युगधर्माः कृतेः फलम्। योगशास्त्रं विष्णुभक्तिर्नमस्कृतिफलं हरेः। माहात्म्यं वैष्णवञ्चाथ नारसिंहस्तवोत्तमम्। ज्ञानामृतं गुह्याष्टकं स्तोत्रं विष्ण्वर्चनाह्वयम्। वेदान्तसांख्यसिद्धान्तं ब्रह्मज्ञानात्मकं तथा। गीतासारः फलोत्कीर्त्तिः पूर्वखण्डोऽयमीरितः"। उत्तरखण्डे प्रेतकल्पे। "अथास्यैवोत्तरे खण्डे प्रेतकल्पः पुरोदितः। यत्र तार्क्ष्येण संपृष्टो भगवानाह वाडव!। धर्मप्रकटनं पूर्वं योनीनां गतिकारणम्। दानादिकं फलञ्चापि प्रोक्तमत्रौर्द्ध्वदैहिकम्। यमलोकस्य मार्गस्य वर्णनञ्च ततः परम्। षोडशश्राद्धफलकं वृत्तान्तञ्चात्र वर्णितम्। निष्कृतिर्यममार्गस्य धर्मराजस्य वैभवम्। प्रेतपीडाविनिर्द्देशः प्रेतचिह्ननिरूपणम्। प्रेतानां चरिताख्यानं कारणम् प्रेततां प्रति। प्रेतकृत्यविचारश्च सपिण्डीकरणोक्तयः। प्रेतत्वमोक्षणाख्यानं दानानि च विशुद्धये। आवश्यकोत्तरं दानं प्रेतसौख्यकरं हितम्। शारीरकविनिर्द्देशो यमलोकस्य वर्णनम्। प्रेतत्वोद्धारकथनं कर्मकर्त्तृविनिर्णयः। मृत्योः पूर्वक्रियाख्यानं पश्चात् कर्मनिरूपणम्। मध्यं षोडशकं श्राद्धं स्वर्गप्राप्तिक्रियोहनम्। सूतकस्याथ सङ्ख्यानं नारायणबलिक्रिया। वृषोत्सर्गस्य माहात्म्यं निषिद्धपरिवर्जनम्। अपमृत्युक्रियोक्तिश्च विपाकः कर्मणां नृणाम्। कृत्याकृत्यविचारश्च विष्णुध्यानं विमुक्तये। स्वर्गतौ विहिताख्यानम् स्वर्गसौख्यनिरूपणम्। भूर्लोकवर्णनञ्चैव सप्तधा लोकवर्णनम्। पञ्चोर्द्ध्वलोककथनं ब्रह्माण्डस्थितिकीर्त्तनम्। ब्रह्माण्डानेकचरितं ब्रह्मजीवनिरूपणम्। आत्यन्तिकलयाख्यानं फलस्तुतिनिरूपणम्। इत्येतद्गारुडं नाम पुराणं भुक्तिमुक्तिदम्"। तत्फलस्तुतिः। "कीर्त्तितं पापशमनं पठतां शृण्वतां नृणाम्। लिखित्वैतत्पुराणन्तु विषुवे यः प्रयच्छति। सौवर्णहंसयुग्माढ्यं विप्राय स दिवं व्रजेत्"।

**गरुडमन्त्र** पु० ६त०। "संवर्त्तको मेरुयुतः पार्श्वस्तारोऽग्निसुन्दरी। (क्षिप ॐ स्वाहा)। गारुडो मनुराख्यातो विषद्वयविनाशनः। स्मरन् गरुडमात्मानं मन्त्रमेनं जपेन्नरः। विषमालोचनेनैव हन्यादागमयं कृतः" तन्त्रसारे निबन्धोक्ते विषहारके मन्त्रभेदे।

**गरुडमुद्रा** स्त्री "हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठके। मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा। मध्यमानामिकाद्वे तु द्वौ पक्षाविव चालयेत्। एषा गरुडमुद्रा स्याद्विष्णोः सन्तोषवर्द्धिनी" तन्त्रसारोक्ते विष्णुपूजाङ्गे मुद्राभेदे।

**गरुडरुत** न० "गरुडरुतं नजौ भजतगा यदा सुमदा" छन्दो० उक्तलक्षणे षोडशाक्षरपादके छन्दोभेदे ६त०। गरुडस्य रवे च "भ्रमरमयूरमानसमुदे गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने" छन्दोम०।

**गरुडवेगा** स्त्री गरुडस्य वेग इव वेगो गमने यस्याः। भीमोत्पद्यमानलताभेदे। "वीरधयो वाराही ज्योतिष्मती च गरुडवेगा" वृ०सं० ५४ अ०।

**गरुडव्यूह** पु० गरुड इवाकृत्या व्यूहः। सैन्यनिवेशन-

विशेषे गरुड़ाकृतौ व्यूहभेदे गरुड़शब्दे दृश्यम् ।

**गरुड़ाग्रज** पु० ६त० । विनतायाः ज्येष्ठपुत्रे सूर्य्यसारथौ १अरुणे । अमरः । तस्य गरुड़ाग्रजत्वकथा गरुड़शब्दे दृश्या । "विभिन्नवर्णा गरुड़ाग्रजेन" माघः ।

**गरुड़ाङ्कित** न० गरुड इवाङ्कितं तत्सवर्णत्वात् । १मरकतमणौ शब्दरत्ना० । गरुड़ाङ्कादयोऽप्यत्र ।

**गरुड़ाश्मन्** पु० गरुड इवाश्मा समानवर्णत्वात् । मरकतमणौ जटाधरः ।

**गरुड़ासन** न० "गरुडासनमास्थाय येन ध्यानस्थितो भुवि । सर्वदोषाद्विनिर्मुक्तो भवतीह महावशी । एकपादस्थितो वह्ने ! एकपादे च दण्डवत् । जङ्घापादकुञ्चितेन जान्वोरूर्ध्वं व्यवस्थितम् । एतदासनमाकल्प्य भवेत् संसारसद्गया । आधाराय योगनाथस्य दास ईश्वरस्य च" रुद्रयामलोक्ते आसनभेदे ।

**गरुड़ोत्तीर्ण** पु० गरुडो वर्णेनोत्तीर्णः अतिक्रान्तो येन । मरकतमणौ राजनि० । [उपनिषच्छब्दे दृश्यम् ।

**गरुड़ोपनिषद्** स्त्री अथर्ववेदान्तर्गते गारुडाख्योपनिषद्भेदे ।

**गरुत्** पु० गॄ—उति । खगानां गमनागतिहेतौ पक्षे (पाखा) अमरः। २गरणे गरुत्मच्छब्दे उदा०। ३भक्षणे च ।

**गरुत्मत्** पु० प्रशस्तौ गरुतौ स्तोऽस्य मतुप् यवादि० मस्य न वः । १गरुडे अमरः । "सुपर्णोऽसि गरुत्मान्" यजु०१२।४ । "अथ सवितुर्गरुत्मान् पूर्व्यो जातः" ऋ०१०।१४८।२ । २पक्षिमात्रे अग्नौ च । "सुपर्णोऽसि गरुत्मान् पृष्ठे" यजु० १७।७२ । "अग्ने ! त्वं सुपर्णोऽसि सुपर्णपक्ष्याकारो गरुड इवासि । गरुत्मान् गरुत् गरणं गिलनं भक्षणमस्यास्तीति गरुत्मान् अशनायावानित्यर्थः" वेददी० । ३पक्षिमात्रे च ।

**गरुद्योधिन्** पुंस्त्री गरुता युध्यति युध—णिनि ३त० । भारतीखगे (भारुइ) त्रिका० ।

**गरुल** पु० गरुड+डस्य लः । गरुडे हेमच० ।

**गर्ग** पु० गॄ—ग तस्य नेत्त्वम् । आङ्गिरसे मुनिभेदे । "वृहस्पतेराङ्गिरसः पुत्रो राजन् ! महामुनिः। संक्रामितो भरद्वाजः" इत्युपक्रमे "वितथस्याभिषिच्याथ भरद्वाजो वनं ययौ । स चापि वितथः पुत्रान् जनयामास पञ्च वै । सुहोत्रञ्च सुहोतारं गयं गर्गं तथैव च । कपिलञ्च महात्मानम्" हरिवं ३२ अध्या० । तस्य च शिवतोषात् चतुःषष्ट्यङ्गज्योतिषज्ञानं यथाह भा० आनु० १८अ०। "गर्ग उवाच चतुःषष्ट्यङ्गमददत् कालज्ञानं ममाद्भुतम् । सरस्वत्यास्तटे तुष्टो(शिवः)मनोयज्ञेन पाण्डव !" कलाज्ञानमित्यपपाठः । तस्य च कालज्ञानप्रकारः भा० व०१८८अ०उक्तः। तत्र वाक्यं गर्गस्रोतश्शब्दे दृश्यम् । तत्कृता ज्योतिषसंहिता गर्गसंहितेति प्रसिद्धम् ।"तन्त्रस्थानि मुनिर्मलानि निबद्धानि तानि दृष्ट्वेदम् । क्रियते गर्गपराशरकाश्यपवात्स्यरचितानि" "गर्गादीनां मतं वीक्ष्य" इति च वृ०सं० २१अ० । स च भरद्वाजगोत्रान्तर्गतः आर्षशब्दे ८१७पृ० दृश्यम् । तस्य गोत्रापत्यं गर्गा०यञ् । गार्ग्य तद्गोत्रापत्ये पुंस्त्री । युवापत्ये फक् । गार्ग्यायणः यूनि तद्गोत्रापत्ये पुंस्त्री । बहुषु यञो लुक् अस्त्रियाम् । "गर्गाः शतं भोक्ष्यन्ताम्" महाभा० "गर्गाश्चाङ्गिरसबार्हस्पत्यभारद्वाजगैन्यगार्ग्येति पञ्च" आश्व० श्रौ० १०।१२।१२। स्त्रियान्तु ङीप् यलोपश्च गार्गी इत्येव "गार्गी वाचक्नवी" आश्व० गृ० ३।४।४ । गार्ग्यश्च गार्ग्यायणश्च इत्येकशेषे "वृद्धो यूना" पा० वृद्धशेषे गार्ग्यौ । कृमिरोगाक्रान्ते २मुनिभेदे । "कृमिरासीत् महावीर्य्यः कृमिर्गर्गो महायशाः" भा० श० ५१ अ० । तत्कथा वृद्धकन्याशब्दे दृश्या । गयाक्षेत्रे यथार्थं सृष्टे ब्रह्मणो ३मानसपुत्रभेदे ।"ब्रह्मा सम्भृतसंभारो मानसानृत्विजोऽसृजत्" इत्युपक्रमे "गर्गं कौशिकवासिष्ठौ" वायु० गयामा०२अ० । ४वृषे ५किञ्जल्के शब्दार्थचि० । "चतुर्द्रुतविरामान्तस्तालोऽयं गर्गसंज्ञितः" संगीतदामोदरोक्ते ६तालभेदे पु० ।

**गर्गत्रिरात्र** पु० तिसृभिः रात्रिभिः साध्यः अण् द्विगोर्लुक् लुकि अत्रिश्वचनत्वा गर्गकृतस्त्रिरात्रः । त्रिरात्रके त्रिदिनसाध्ये यागभेदे । "त्र्यहाः पञ्च गर्गवेदच्छन्दोमान्तर्वसुपराकाः" कात्या० श्रौ० २३।८ । "त्र्यहाः (त्र्यह साध्याः") पञ्च अहीनाः । "द्विगौ क्रतौ" पा० पूर्वपदमन्तोदात्तम् । सुक्रारोह्या० आद्युदात्तञ्च

**गर्गर** पुंस्त्री गर्गेति शब्दं राति रा—क स्व—वा० गरन् वा । "यः पीतवर्णोऽपि च पिच्छिलाङ्गः पृष्ठेषु रेखाबहुलः सगलूकः । स गर्गरो घर्घरनादरूक्षो जडश्च शीतः कफवातकारी" राजनि० उक्ताकारगुणे मत्स्यभेदे स्त्रियां जातित्वात् ङीष् । २तक्रमथनी ३दधिमन्थनभाण्डे च शब्दार्थचि० "गर्गरोद्गारनिस्वनम्" हरिवं० ६१ अ० । "नैषां ब्रह्म च नोत्सृष्टा न गर्गरो मथ्यते नो यजन्ते" भा० शा० ७० अ० । "न दृष्टाः संप्रवर्त्तेरन्नमथ्येरंश्च गर्गराः" भा० शा० ६८ अ० ।

३कलसे कल्यार्थे ङीप्। ४स्वल्पघटे स्त्री “मेघाद्रौ गह्वयो देया वारिपूर्णा तु गर्गरी” ति०त०। गर्गस्येदम् कुवा० गञ। गार्ग्य तत्सम्बन्धिनि त्रि०।

**गर्गशिरस्** पु० दैत्यभेदे। “हरा गर्गशिरा यश्च” हरिवं० ३अ०।

**गर्गसंहिता** स्त्री गर्गेण कृता कालज्ञानस्य संहिता। गर्गकृते ज्योतिषग्रन्थभेदे।

**गर्गस्रोतस्** न० भा०श० प्रसिद्धे सरस्वतीतीर्थस्थे तीर्थभेदे “तस्मात् गाङ्गावतीर्थाच्च महाभाक्षुररिन्दमः। गर्गस्रोतो महातीर्थमाजगामैकुण्डली (बलभद्रः)। यत्र गर्गेण वृद्धेन तपसा भावितात्मना। कालज्ञानगतिश्चैव ज्योतिषाञ्च व्यतिक्रमः। उत्पाता दारुणाश्चैव शुभाश्च जनमेजय!। सरस्वत्याः शुभे तीर्थे विहिता वै महात्मना। तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम्। तत्र गर्गं महाभागमृषयः सुव्रता नृप!। उपासाञ्चक्रिरे नित्यं कालज्ञानं प्रति प्रभो!” भा० श० ३८अ०

**गर्गाट** पुंस्त्री गर्गेति शब्दायाटति अट–अच्। मत्स्यभेदे हारा०।

**गर्गादि** पु० गोत्रे यञ्प्रत्ययनिमित्ते शब्दगणे स च गणः गर्ग वत्स (राजा वे) संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनञ्जय वृक्ष विश्वावसु जरमाण लोहित संशित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष वृक्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कुण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल चणक चुलुक मुद्गल मुसल जमदग्नि पराशर जातूकर्ण्य महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अररक एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज् भिष्णज भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलू पिप्पलू बृहदग्नि सुलोहिन् सुलाभिन् उक्थ कुटीगु।

**गर्ज** अव्यक्तशब्दे भ्वा० पर० अक० सेट्। गर्जति। अगर्जीत् जगर्ज। गर्जितम्। गर्जनं गर्जः। गर्जन्। गर्ज्जी। “गर्ज गर्ज क्षणं मूढेति” देवीमाहात्म्यम्। “शरदि गर्जति, न वर्षति, वर्षति वर्षासु निःस्वनो मेघः” उद्भटः। “कुम्भकर्णं ततोऽगर्जीत्” “गर्जन् हरिः साम्भसि शैलकुञ्जे” भट्टिः। “योधानां चैव गर्जताम्” भा० भी० ६७८ श्लो०। “नाम संश्रावयामास जगर्ज च ननाद च” रामा० सु० ८६। शीलार्थे चानश्। गर्जमानः। “तथाश्च गर्जमाने तु मेघवृन्देऽभिनिस्वनम्” भा० व्या० २०अ०। “सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोबलम्” स्मृतिः। “माघादिचतुरो मासान् गर्जनाद्यं विवर्जयेत्” स्मृतिः।

अनु+गर्जनप्रतिरूपगर्जने। “अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः” कुमा०। अनुरूपगर्जने च। “सोऽनुगर्जन् धनुष्पाणिः” भा०द्रो० ३०अ०।

अभि+अभिलक्ष्य गर्जने सक०। “दुःशासनस्ताभिगर्जमानः” भा०म०६५अ०। ताच्छील्ये चानश्। “शार्दूलाविव चान्योन्यमामिषार्थेऽभ्यगर्जताम्” भा०द्रो०१२२अ०। सम्यग्गर्जने अक०। “शूराणाञ्चाभिगर्जताम्” भा०क०२६अ०

प्रति+प्रतिरूपगर्जने अक०। “बलवच्चापि संक्रुद्धावन्योन्यं प्रतिगर्जताम्” भा० वि० २२अ०। आर्षः पदव्यत्ययः। “प्रतीपं पततो मत्तान् कुञ्जरान् प्रतिगर्जतः” भा० उ० ५०अ० “सुहृदयोऽहृदयः प्रतिगर्जताम्” रघुः। प्रतिलक्षीकृत्य गर्जने सक०। “अरीणां कदनं कृत्वा मामपि प्रतिगर्जति” हरिवं० ४८अ०।

**गर्ज** रवे चुरा० उभ० अक० सेट्। गर्जयति ते अजगर्जत्–त। गर्जयां बभूव आस–चकार चक्रे। गर्जयन् गर्जयमानः।

**गर्ज** पु० गर्ज–भावे घञ्। १हस्तिशब्दे २मेघादिशब्दे च गुरुमत्त्वात् सेट्कत्वाच्च भावे अ स्त्रियाम्। गर्जा। ३मेघादिध्वनौ स्त्री “गण्डूषगर्जागरभुजगीलव्यालपर्ता कलीडाः। उत्कगढसटवराटकरभकाः क्लीबे तु टावन्ताः” त्रिका०।

**गर्जक** पु० गर्ज–ण्वुल्। (गाच)मत्स्यभेदे शब्दर०। [मेदि०।

**गर्जन** न० गर्ज–भावे ल्युट्। १शब्दे करणे ल्युट्। २कोपे

**गर्जर** न० गर्ज–बा० अरच्। १दृञ्जने (गाजर)ख्याते मूलप्रधाने वृक्षे भावप्र०। “गर्जरं स्वञ्जनं प्रोक्तं तथा नारङ्गवर्णकम्। गर्जरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु। संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित्”।

**गर्जाफल** पु० गर्जया फलति फल–अच् ३त०। विकङ्कतवृक्षे राजनि०।

**गर्जि** पु० गर्ज–भावे इन्। १मेघशब्दे हेम०।

**गर्जित** न० गर्ज–भावे क्त। १मेघादिध्वनौ कर्त्तरि क्तः।

३मांसगन्धे अमरः। ४गर्जनकर्त्तरि मेघादौ त्रि॰ "स-न्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः" स्मृतिः। गर्जो जातोऽस्य तार॰—इतच्। ५जातगर्जने त्रि॰।

गर्ज्य न॰ गर्ज–ण्यत् "न कादेः" पा॰न कुत्वम्। गर्जनीये।

गर्त्त पुंस्त्री॰ गृ–तन्। १भूमिच्छिद्रे २त्रिगर्त्तदेशे ३स्त्रीनितम्बस्य कुकुन्दरे च मेदि॰। ४रोगभेदे शब्दर॰। ५गृहे निघ॰। ६रथे उत्तमासनाद्यौ च निरु॰। "अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्" ऋचो निरुक्तौ गर्त्तः सभास्थाणुः गृणातेः सत्यसङ्गरो भवति रथोऽपि गर्त्त उच्यते गृणातेः स्तुतिकर्म्मणः स्तुततमं यानम्" इति ३।५। "वरुण! मित्र! गर्त्तमचयाथे" ऋ॰ ५।६२।८ "गर्त्तं रथम्" भा॰ "गमस्वता एतदावाधिगर्त्ते" ५४।६।५। "गर्त्ते रथे" भा॰। ७खातभेदे "धनुः-शतपरिणाहश्च गतिर्यासां न विद्यते। न ता नदी-शब्दवहा गर्त्तास्ताः परिकीर्त्तिताः" ति॰ त॰। "स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च" मनुः। ८खातेन क्षतविलमात्रदेशे च "अशुचिस्थानम् उच्छिष्टलेपयस्थानं गर्त्तादिकम्" मिता॰। "न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः" (मूत्रं कुर्य्यात्) मनुः। "गर्त्तेष्वथ-कारी-षावम्निमवधापयेत्" आश्व॰ गृ॰ २।८।१४। "सर्वासां स्त्रूणानां गर्त्तेषु" कात्या॰ "यथेष्टमत्र गर्त्तेऽवदध्युः" ४।५।१। "स्थाणुं वर्च्छतु गर्त्ते वा पात्यते" ऋ॰भा॰श्रुतिः। गर्त्तस्यादूरभवो देशः सुवास्त्वा॰ अण्। गार्त्त गर्त्तसन्नि-कृष्टदेशादौ त्रि॰। ततः चतुरर्थ्याम् प्रेक्षा॰ इनि। गर्त्तिन् गर्त्तसन्निकृष्टादौ त्रि॰ स्त्रियां ङीप्। गर्त्ते भवः धूमा॰ वुञ्। गार्त्तक गर्त्तभवे त्रि॰। उत्करा॰ चतु-रर्थ्यां छ। गर्त्तीय गर्त्तयुक्तदेशादौ त्रि॰। कुमुदा॰ चतुरर्थ्यां ठक्। गार्त्तिक गर्त्तसन्निकृष्टदेशादौ। गर्त्तं तत्पतनमर्हति "छन्दसि च" पा॰ यत्। गर्त्त्य गर्त्तपतनमर्हति त्रि॰ छन्दसीत्युक्तेः वेद एवास्य प्रयोगः।

गर्त्तिका स्त्री गर्त्तोऽस्त्यस्याः ठन्। १तन्त्रवपनशालायां (ता-तघर)। हेमच॰। २गर्त्तवति त्रि॰।

गर्द्द रवे वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट्। गर्द्द-यति-ते गर्द्दति अजगर्द्दत्-त अगर्द्दीत्। गर्द्दयाम् बभूव आस चकार चक्रे जगर्द्द।

गर्द्दभ पुंस्त्री॰ गर्द्द–अभच् (गाधा) १जन्तुभेदे। स्त्रियां जातित्वात् ङीष्। "सहैव दशभिः पुत्रैर्भारं वहति गर्द्दभी" "अविश्रान्तं वहेद्भारं शीतोष्णञ्च न विन्दति। सन्तोषश्चरते नित्यं त्रीणि शिक्षेत गर्द्दभात्" चाणक्य॰। "दीपनं गार्द्दभं मूत्रं कृमि-वातक-फापहम्। शोफकुष्ठोदरोन्मादग्रहजन्मविनाशनम्" सुश्रु॰ तत्र पुंसामेव मूत्रं ग्राह्यं यथाह भावप्र॰ "खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं स्मृतम्"। तदुत्-पत्तिः "अथ यासां पांसवः पर्य्यशिष्यन्त ततो गर्द्द-भः समभवत् तस्माद्यत्र पांसुलं भवति गर्द्दभस्थानमिव तत्रेत्याहुः" शत॰ब्रा॰ ४।५।१।८। तस्य पांसुषु उत्पन्न-त्वात् पांसुलस्थानप्रियता। "चण्डालश्वपचानान्तु बहि-र्ग्रामात् प्रतिश्रयः। अपात्राश्च कर्त्तव्या धनमेषां श्व-गर्द्दभम्" मनुना तस्य श्वपचादिधनत्वमुक्तम्। २गन्धे हेमच॰। ३श्वेतकुमुदे ४विडङ्गे च न॰ राजनि॰।

गर्द्दभगद पु॰ जालगर्द्दभाख्ये रोगभेदे राजनि॰। जाल-गर्द्दभशब्दे दृश्यम्।

गर्द्दभयाग पु॰ गर्द्दभेन यागः। अवकीर्णिनः प्राय-श्चित्तार्थे नैर्ऋतदेवताककाणगर्द्दभपश्वालम्भनेन कर्त्तव्ये यागभेदे। तद्विधिर्मनुनोक्तो यथा

"अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे। पाक-यज्ञविधानेन यजेत निरृतिं निशि। हुत्वाग्नौ विधि-वद्धोमानन्ततश्च समेत्यृचा। वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाऽऽहुतीः। कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्द्धर्मज्ञा ब्रह्मवादिनः। मारुतं पुरु-हूतञ्च गुरुं पावकमेव च। चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः"।

गर्द्दभयज्ञ गर्द्दभेज्यादयोऽप्यत्र। तत्र विशेषः कात्या॰श्रौ॰ सूत्रे उक्तो यथा।

"योऽवकीर्णिनो गर्द्दभेज्या" सू॰१।१।१३ "यो ब्रह्मचारी सन् स्त्रियं गच्छति सोऽवकीर्णी तस्यावकीर्णिनः स्खलित-ब्रह्मचर्यस्य गर्द्दभेज्या गर्द्दभेनेज्या यागो गर्द्दभेज्या प्राय-श्चित्तार्थो भवति। यागश्चो विकल्पार्थः तेन स्मृत्युक्तमपि प्रायश्चित्तान्तरमाज्याहुतिद्वयरूपं विकल्पेन भवति "अथाप-रमाज्याहुती जुहोति कामावकीर्णोऽस्मीत्यादिना" (पार-स्कर) शाखान्तरे उभयस्य विकल्पेन उक्तत्वात् अत्रैतद्विचार्य्यते किं स्वपतोऽपि अवकीर्णिपशुश्च तदुभय-साधनसंस्कृतेष्वाहवनीयादिषु भवति उत लौकिके इति। तत्र प्रकृतित्व आहवनीयादिप्राप्तेराहवनीयादीनां चा-धाननिष्पाद्यत्वात् स्वपतोऽवकीर्णिनश्चाधानविध्यभावेऽपि इष्टिपशू आधानं प्रयोजतः अत एतदर्थमेवाधानेनाऽऽ-

हवनीयादीनुत्पाद्य तेष्वेतदुभयं कर्त्तव्यमिति प्राप्ते आह" कर्कः। "लौकिके" ४सू०। "एतौ स्थपतीष्टवकीर्णिपशू लौकिकेऽग्नौ भवतः न होमाविष्टिपशू आधानं प्रयोजयतः आभ्यां हि तदेव क्रियते यद्दर्शपूर्णमासाङ्गं भवति। न चाधानं दर्शपूर्णमासाङ्गम् स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितमिति। अतो लौकिकाग्नावेवैतावनुष्ठेयौ लौकिकमेव गार्हपत्यस्थाने स्थापयित्वा तत आहवनीयादिस्थानेषु विहृत्य स्थपतीष्ट्यवकीर्णिपशू दर्शपूर्णमासवच्छ्रुतवत् कर्त्तव्यौ। अत्र विशेषविधानार्थमाह" कर्कः। "भूमौ पशुपुरोडाशश्रपणम्" ५सू०। "अत्रावकीर्णिनो गर्दभपशुयागे पशुपुरोडाशस्य श्रपणं भूमावेव कर्त्तव्यम् न तु कपालेनु" कर्कः। "अप्स्ववदानहोमः" ६सू०। "अवदानानां हृदयजिह्वाक्रोडादीनां होमोऽप्सु उदकेषु भवति नाग्नौ वचनात्। अवदानग्रहणादन्यदाघाराज्यभागहोमादिकमग्नावेव कार्य्यम्" कर्कः। "शिश्नात् प्राशित्रावदानम्" ७सू०। "गर्दभस्य शिश्नात् प्राशित्रावदानं कार्य्यम् वचनात्" कर्कः।

**गर्दभशाक** पु० गर्दभोगन्धो शाकोऽस्य। मञ्जरविटपे (वामनहाटि) जटा०। २तत्स्वार्थे स्त्री गौरा० ङीष् रत्नमा०।

**गर्दभशाखी** स्त्री गर्दभो गन्धः शाखायां यस्याः गौरा० ङीष्। १भार्ग्याम् राजनि०।

**गर्दभाण्ड** पु० गर्दभं गन्धमर्मति अम–गतौ ड। पत्रकाण्डफलादिभिरश्वत्थाकारे १प्लक्षवृक्षे (पाकुड) अमरः। (पिप्पली) ख्याते २वृक्षे भारसुन्दरी।

**गर्दभाह्वय** न० गर्दभेति आह्वयो यस्य। १कुमुदे हेमच०।

**गर्दभिका** स्त्री "मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकावृतम्। रुजाकारीं गर्दभिकाम् तां विद्यात् वातपित्तजाम्" माधवकरोक्ते रोगभेदे।

**गर्दभी** स्त्री गर्द–अभच् गौरा० ङीष्। अग्निप्रकृतिके १कीटभेदे सुश्रु० कीटशब्दे २०४८पृ० विवृतिः। स्वार्थे क। २गर्दभिकारोगे संज्ञायां कन्। ३अपराजितायाम् ४श्वेतकण्टकार्य्याम् ५कटभ्याञ्च राजनि०। गर्दभ+जातौ स्त्रियां ङीष्। ६गर्दभजातिस्त्रियाम् तत्क्षीरादिगुणाः "बल्यं वातहरं मधुराम्लं च गार्दभम्। पयो रूक्षं दीपनञ्च सुपथ्यं परिकीर्त्तितम्। गार्दभं दधि रूक्षोष्णं लघु दीपनमुच्यते। पाचनं मधुराम्लञ्च रुचिकृत् वातदोषहृत्। गार्दभं नवनीतं च कषायं कफवातहृत्। बल्यञ्च दीपनं पाके लघूष्णं मूत्रदोषकृत्" राजनि०।

**गर्द्ध** लिप्सायां चुरा० उभ० सक० सेट्। गर्द्धयति ते अजगर्द्धत् त। गर्द्धयाम् बभूव आस चकार चक्रे। गर्द्धः गर्द्धा। गर्द्धनः। [२गर्द्धभाण्डवृक्षे च शब्दच०।

**गर्द्ध** पु० गृध–अच् घञ् वा। १अतिशयस्पृहायां, हेमच०।

**गर्द्धन** त्रि० गृध–युच्। लुब्धे अमरः।

**गर्व** गतौ भ्वा० पर० सक० सेट्। गर्वति अगर्वीत् जगर्व।

**गर्व** दर्पे अद० चुरा० आत्म० अक० सेट्। गर्वयते अजगर्वत। गर्वः। गर्वितः। "तदपसारगर्वितलक्ष्यप्रहारम्" रघुः।

**गर्व** पु० गर्व–दर्पे भावे अच्। अहङ्कारे अमरः।

**गर्भ(र्व्भ)** पु० गृ–भन् वा द्वित्वे भस्य वः। भृणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये १मांसपिण्डे, २शिशौ, ३कुक्षौ, ४नाटकसन्धिभेदे, ५पनसकण्टके मेदि० ६अपवरके, हेमच० "भाद्रकृष्णचतुर्दश्यां यावदाप्लवते जलम्। तावद् गर्भं विजानीयात्" प्रा०त० उक्ते भाद्रकृष्णचतुर्दश्यां, गङ्गाजलाप्लावनस्थाने, ७अन्ने, ८अग्नौ, ९पुत्रे च शब्दार्थचि०। गर्भस्य देहहेतुता कायशब्दे १९०८पृ० दर्शिता कश्चिदत्र विशेषोऽभिधीयते। तत्र भावप्र०

"कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः। गर्भः सञ्जायते नार्य्याः स जातो बाल उच्यते। गर्भः शुद्धोऽशुद्धश्च अशुद्धस्तु गर्भोऽशुद्धशुक्रशोणितयोरपि दम्पत्योर्भवति यत आह "दम्पत्योः कुष्ठबाहुल्यात् दुष्टशोणितशुक्रयोः। यदपत्यनयोर्जातं ज्ञेयं तदपि कुष्ठितमिति"। कुष्ठं सञ्जातं यस्य तत् कुष्ठितम्, अत्र तारकादित्वादितच् प्रत्ययः। यत्तु, "वातादिदुष्टरेतसः प्रजोत्पादने न समर्थाः" इति सुश्रुतः। तत्र शुद्धप्रजोत्पादने न समर्था इति बोद्धव्यम्। रोगादिनाऽशुद्धास्तु वातादिदुष्टशुक्रा अपि प्रजा जनयन्ति जन्मान्धबधिरपङ्ग्वादिसम्भवात्। अतो स्त्रीपुंसयोर्योगे मकरध्वजवेगतः। मेढ्रयोन्यभिसङ्घर्षाच्छरीरोष्माऽनिलाहृतः। पुंसः सर्वशरीरस्थं रेतो द्रावयतेऽथ तत्। वायुर्मेहनमार्गेण पातयत्यङ्गनाभगे। तत् संसृत्य व्यात्तमुखं याति गर्भाशयं प्रति। तत्र शुक्रवदायातेनार्त्तवेन युतं भवेत्। गर्भाशयस्य स्वरूपमाह शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। यथा रोहितमत्स्यस्य मुखं भवति रूपतः। तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः। अयमर्थः गर्भशय्याया मुखं रोहितमत्स्यस्येव भवति यथा च रोहितमत्स्यस्य स्थितिर्भवति तथा पित्ताशयपक्वाशयमध्ये गर्भशय्यायाः

कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः। भवेत्तदा स मुनिभिः शरीरीति निगद्यते। अङ्गोपाङ्गसंयुतः व्यक्ताङ्गोपाङ्गः। तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः। मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः। आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः। तस्यान्तर्मस्तुलुङ्गं च ललाटं भ्रूयुगं तथा। नेत्रद्वयं तयोरन्तर्वर्त्तिते द्वे कनीनिके। दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनी। पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम्। पालिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता। ओष्ठाधरौ च सृक्किण्यौ मुखं तालु हनुद्वयम्। दन्ताश्च दन्तवेष्टाश्च रसना चिवुकं गलः। द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते। तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे। तस्योपरिगतौ स्कन्धौ प्रगण्डौ भवतस्ततः। कफोणियुगं तदधः प्रकोष्ठयुगलं तथा। मणिबन्धौ ततो हस्तौ तयोरङ्गुलयो दश। नखाश्च दश ते ख्याता दश च्छेद्याः प्रकीर्त्तिताः। चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे। स्तनौ पुंसस्तथा नार्य्या विशेष उभयोरयम्। यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ। गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ। हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम्। जाग्रतस्तद्विकसति स्वपतस्तु निमीलति। आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम्। अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि। चेतनास्थानमुत्तममिति अयमभिप्रायः। चेतनानामधिष्ठानं मनोदेहश्च सेन्द्रियः। केशलोमनखाग्रं च मलं द्रव्यगुणं विना" इत्युक्तवता चरकेण सकलं शरीरं चेतनास्थानमुक्तम्। तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति। कक्षयोर्वक्षसः सन्धौ जत्रुणी समुदाहृते। कक्षे उभे समाख्याते तयोः स्यातां च वङ्क्षणौ। उदरं पञ्चममङ्गं षष्ठं पार्श्वद्वयं मतम्। सपृष्ठवंशं पृष्ठं तु समस्तं सप्तमं स्मृतम्। उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः। शोणिताज्जायते प्लीहा वामतो हृदयादधः। रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः। हृदयाद्वामतोऽधश्च फुस्फुसो रक्तफेनजः। अधो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः। तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्। अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम्। क्लोम तिलकम्। एतत्तु वातरक्तजम्। अत्र वृद्धवाग्भटः "रक्तादतिसर्वयुक्तात्कालीय-कमथुर्भव इति। मेदःशोणितयोः साराद्वृक्कयोर्युगलं भवेत्। तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः। उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः। अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत्। उण्डुकश्च कटी चापि त्रिकं बस्तिश्च वङ्क्षणौ। कण्डराणां प्ररोहः स्यात् स्थानं तद्वै वीर्य्यमूत्रयोः। स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः। शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। यस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। वृषणौ भवतः सारात् कफासृङ्मांसमेदसाम्। वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ। गुदस्य मानं सर्वस्य सार्द्धं स्याच्चतुरङ्गुलम्। तत्र स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः। प्रवाहिणी भवेत्पूर्वा सार्द्धाङ्गुलमिता मता। उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता। तस्याधः संवरणी स्यादेकाङ्गुलसमा मता। अर्द्धाङ्गुलप्रमाणं तु बुधैर्गुदमुखं मतम्। मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनिर्मितः। पुंसः प्रोथौ स्फिचौ यौ तु तौ नितम्बौ च योषितः। तयोः कुकुन्दरे स्यातां सक्थिनी त्वङ्गमष्टमम्। तदुपाङ्गानि च ब्रूमो जानुनी पिण्डिकाद्वयम्। जङ्घे द्वे घण्टिके पार्ष्णी तले च प्रपदे तथा। पादाङ्गुलयस्तत्र दश तासां नखा दश"। अथेदं शरीरमपरेणापि येन येन समवायिकारणेनोत्पद्यते तानि सर्वाण्याह "अथ दोषाः प्रवक्ष्यन्ते धातवस्तदनन्तरम्। आहारादेर्गतिस्तस्य परिणामश्च वक्ष्यते। ख्यातिं चाथ धातूनां मलास्तदुपधातवः। आशयाश्च कलाश्चापि मर्माण्यथ च सन्धयः। शिराश्च स्नायवश्चापि धमन्यः कण्डरास्तथा। रन्ध्राणि भूरिस्रोतांसि जालैः कूर्चाश्च रज्जवः। सेवन्यश्चाथ सङ्घाताः सीमन्ताश्च तथा त्वचः। लोमानि लोमकूपाश्च देहे एतन्मयो मतः"।

१०भेषजस्य जलवर्षणयोग्यतासम्पादके निमित्तभेदे स च वृ०सं० २१ अ० उक्तो यथा

"दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति। तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्देशे। किं वाऽतः परमन्यच्छास्त्रं ज्यायोऽस्ति यद्विदित्वैव। प्रध्वंसिन्यपि काले त्रिकालदर्शी कलौ भवति। केचिद्वदन्ति कार्त्तिकशुक्लान्तमतीत्य गर्भदिवसाः स्युः। न तु तन्मतं बहूनां गर्गादीनां मतं वक्ष्ये। मार्गशिरःशुक्लप्रतिपत्प्रभृति क्षपाकरेऽषाढाम्। पूर्वां वा समुपगते गर्भाणां

दशद्वादशौ मासौ इमौ आसामिहा एवं अनुवादेन अनुवाद पादम संवत्सरोऽस्य समापयामेति व्यवहितान्वेति सनिहितस्य व्यवहितेन सम्बन्धः। तासां गवां जातानि शृङ्गाणि द्वादशसु मासेषु मासद्वयं पूर्वं प्रावर्त्तन्त प्रापयन् दशभिर्मासैः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरन्यद्वया यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनःपतनमित्यभिप्रायः तथा चैतरेयकम् "अथ याः समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्त्तन्तेति एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्वेर्त्तुभवसन्नाद्यमदनीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्गहीनाः इष्यन्ते तस्मात्ताः सर्वान् द्वादश मासौ मासान् प्रेरते प्रगच्छन्ति ईर यतो शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिणो महिष्यादयस्तु कृशा भवन्ति तस्मादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात्सर्वेषु ऋतुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "ऊर्जमसुन्वन्त तस्मादु ताः सर्वानृतूनुत्तिष्ठन्तीति"। उक्तार्थं जानतः फलमाह" भा०। "सर्वमन्नाद्यमाप्नोति य एवं वेद" तां०ब्रा०४। स्पष्टोऽर्थः। तदेवं दशमासनिर्वर्त्त्यं द्वादशमासनिर्वर्त्त्यं चेति द्विविधं गवामयनं प्रतिपादितं तयोर्ज्योतिष्टोमदर्शपूर्णमासादिवदेतत्काम एतत्कुर्य्यादिति कामफलसम्बन्धफलविशेषाश्रवणाद्विश्वजिन्न्यायेनान्यत्राम्नातस्य स्वर्गस्य कल्पनाया अन्याय्यत्वाद्रात्रिसत्रन्यायेनार्थवादिकस्य समृद्धिफलस्य वाक्यशेषे श्रुतत्वादनुत्साहङ्गरीय इति समृद्धिकामा एतत्सत्रमासीरन्निति विधिरुन्नेतव्यः। तैत्तिरीयके समृद्धिफलत्वं स्पष्टमाम्नातम् "य एवं विद्वान् संवत्सरमुपयन्त्याप्नुवन्त्येवेति" भा०तैत्ति०४।२ कण्डिकामारभ्य। ५अ०८ख०८क०पर्य्यन्ते तद्विधानमुक्तम्। तत्र सत्रे दीक्षाकालविधानार्थमेकाष्टकारम्भपक्षं निरस्य चैत्रशुक्लैकादश्यां दीक्षामाह तत्रैव ५।८।११ कण्डिकादिषु

"चित्रापूर्णमासे दीक्षेरन्" ता०ब्रा०५।८।१०। "चित्रायुक्तः पौर्णमासः चित्रापूर्णमासः तस्मिन् दीक्षेरन्" तदेतत् स्तौति" भा०। "चक्षुर्वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखतो वै चक्षुर्मुखत एव तत् संवत्सरस्य दीक्षन्ते तस्य न निर्यास्ति" ता०ब्रा०११। "चित्रापूर्णमास इति यत् एतत् संवत्सरस्य चक्षुः जायमानस्य हि प्रथमं मुखं जायते तत्रापि चक्षुरेव प्रथममाविर्भवति अतस्तस्य संवत्सरस्य चक्षुः उक्तक्रमेण मुखतो मुखप्रदेश एव इच्छुः, अतो मुखएव तत् संवत्सरमारभ्य यज्ञीया दीक्षन्ते। यः फाल्गुन उक्तः सोऽप्यत्र विद्यत इत्युक्तं भवति तस्य न निर्यास्ति कश्चिदपि दोषो न विद्यते" इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तम् अथ तस्मिन्नेव मासि शुक्लैकादश्यां दीक्षितव्यमित्याह" भा० "चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्" ता० ब्रा०१२। "चैत्र्याः पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्णामह्नां समाहारश्चतुरहस्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्य्या एवं दीक्षायाः गुणमाह" भा० "तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकां न छम्बट् कुर्वन्ति" ता० ब्रा०१३। "सर्वेषां सत्राणां द्वादश दीक्षा भवन्ति तत एकादशीप्रभृति द्वादशसु गतासु रात्रिषु त्रयोदशी रात्रिरष्टमी स्यात् एकाष्टका च माघकृष्णाष्टमीति अस्यामेकाष्टकेत्युपचारः तस्याः क्रयः सम्पद्यते प्रथमे उपवसथे राजक्रयस्तस्मिन् दिने प्रातःकाले प्रायणीयाद्या यज्ञावयवाः प्रक्रम्यन्ते तेन प्रक्रमेण एकाष्टकां न छम्बट् कुर्वन्ति क्रियासुपयोगेन व्यर्थं न कुर्वन्ति अतएव एकाष्टकाप्रारम्भपक्षतो गुणस्तस्मिन् पक्षेऽन्तर्भवति इत्यर्थः। अन्योऽपि गुणः अस्मिन् पक्षे सत्रीत्याह" भा० "तेषां पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः पशव ओषधयोऽनूत्तिष्ठन्ति तान् कल्याणी वागभिवदत्यरात्सुरिमे सत्रिण इति ते राध्नुवन्ति" ता०ब्रा० १४। "तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्वपक्षे सम्पद्यते सत्राणां सर्वेषां द्वादशोपसदः तत्राष्टमीप्रभृति द्वादशसु गतासु त्रयोदशी शुक्लपक्षपञ्चमी तस्यां प्रथमोऽतिरात्र इति पूर्वपक्षे सुत्या प्रारभ्यत इत्यर्थः। किंयता त्रिंशताऽहोभिर्मासेषु पूर्वपक्ष एव सर्वे मासाः सन्तिष्ठमाना यन्ति वर्त्तन्ते एवं द्वादशसु मासेषु गतेषु पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्वतो यजमानाननु पशवः पशव ओषधयोत्तिष्ठन्ति ऊर्द्ध्वं रोहन्ति तान् यजमानान् कल्याणी शोभना वाक् यशस्करी वाक् वदति किमिति इमे सत्रिणो यजमानाः अराध्नुः समृद्धा अभवन्निति तदनन्तरमेव सत्रिणो राध्नुवन्ति समृद्धा भवन्ति"।५अध्यायसमाप्तिपर्य्यन्तं तस्यैव विधानभेदा उक्ताः। "गवामयनेनेयुः" कात्या०श्रौ०२४।५।२। "गवामयनं वाऽभिगत्सुतैः" २४।४।४८। इदन्तु एकपदं तेन गावामयनिकमित्यादौ ठकि पूर्वपदवृद्धिः। "गावामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम्" जैमिनीयन्यायमाला।

सोमसखौ" ऋ० ५।१।१२। २कश्चित् मुनौ च "अग्निरतिं भरद्वाजं गविष्ठिरम्" ऋ० १०।१५०।५। "गविष्ठिरं कश्यम्" भा०।

**गवीधुका** स्त्री गवेधुका+पृषो०। धान्यभेदे। "अनाकृति वै जर्त्तिलाय गवीधुकाय" तैत्ति० ५।४।३।२।

**गवी(वे)श्वर** पु० ६त०वा अलुक्। गोस्वामिनि अमरः।

**गवेङ्गित** न० गवामिङ्गितम् अलुक्। शुभाशुभसूचके गवां चेष्टाभेदे तच्च वृ० स० ९२ अ० उक्तं यथा।

"गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान्। मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीताः स्तरारावं रुवन्त्यः। अकारणे क्रोशति चेदनर्थं भयाय रात्रौ वृषभः शिवाय। भृशं निरुद्धा यदि मक्षिकाभिस्तदाशु वृष्टिं सरमाश्च जैवौ। आगच्छन्त्यो गोष्ठमार्द्रे च वेश्म सम्भारैव संविशन्त्यो गोष्ठमार्द्रे गवां गाः। आर्द्राङ्गो वा हृष्टरोमाः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम्"। [स०। (गड्गडे) धान्यभेदे अमरः।

**गवेडु** स्त्री गवे दीयते डीङ् रक्षणे कु पृषो० दस्य डः अलुक्

**गवेधु** पु० गवे धीयते धाञ्–धारणे कु अलुक्स०। (गड्गडे) १धान्यभेदे तस्या गवे धारणात्तथात्वं यथोक्तम्

"अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरुं निर्वपति तदेनं रुद्र एव पशुपतिः पशुभ्यः शुल्कय यद्र् गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुका तस्माद्गावेधुको भवति" शत० ब्रा० ५।३।३।७।

"गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्। गवेधुः कटुका स्वादी कार्श्यकृत् कफनाशिनी" भावप्र०। तेन गन्धक०गवेधुशब्दस्य पुंस्त्वोक्तिः प्रामादिकी। गवेधुश्च सुश्रुते कुधान्यवर्गे उक्ता यथा

"कोरदूषकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकासरबरकतोदपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः"

**गवेन्द्र** पु० गौरिन्द्र इव निपातनात् अलुक्। श्रेष्ठे गवि।

**गवेरुक** न० गां गोशोभामीरयति ईर–णा० उकञ् अलुक्। गैरिके त्रिका०। गैरिकेण गोभूषणात्तथात्वम्।

**गवेश** पु० ६त० अलुक्। १गोस्वामिनि गोरक्षके तेन निर्वृत्तादि० संकाशा० पाठान्तरे ततोऽस्। गावेश तन्निर्वृत्तादौ त्रि०। २रुद्रे च गोपतिशब्दे दृश्यम्। पश्चेड्। गवीश उक्तार्थेषु।

**गवेशकी** स्त्री। गवामीशः गौरक्षः तथाभूत इव कायति कै–क गौरा० ङीष्। (गोरक्षचाकुलिया) लताभेदे शब्दच०। गवेशकेति केचिदिमं टाबन्तमाहुः।

**गवेष** अन्वेषणे, अद० चुरा० आत्म० सेट्। गवेषयते अजगवेषत। गवेषयाञ्चक्रे। गवेषितः गवेष्यं गवेषणा।

"तीर्थेष्विलस्तमनस्याभिचचार गवेषयन्" भा०व०२६२अ०। आर्षः पदव्यत्ययः। तस्य ण्यादित्वं तद्वत्त्वं च क्वचित् प्रयोगे दृश्यते "गवेषमाणं महिषीकुलं जलम्" रत्ना०।

**गवेष** त्रि० गवेष+अच्। १अन्वेष्टरि भावे अच्। २अन्वेषणे पु०। तेन निर्वृत्तादि संकाशा० अण्। गावेष तन्निर्वृत्तादौ त्रि०।

**गवेषणा** स्त्री गवेष–भावे युच्। १अन्वेषणे अमरः। गोरुदकस्य वा एषणा। गोरुदकस्य वा २अन्वेषणे। इष–ल्यु ६त०। ३गोरन्वेषके त्रि०। गवेष–ल्यु। ४अन्वेष्टरि त्रि० "अग्निरिन्द्रो गवेषणो यत्र विज्ञ्रो गवेषणः" ऋ० ॥ १।१३२।३। "अक्षीनः सखा गवेषणः" ऋ० ७।२०।५। "गवेषणः गवामन्वेष्टा उदकान्वेष्टा। यजमानफलस्य मार्गयिता वा" भा०। भावे गवेष मार्गणे पूर्ववत् ल्यु इत्येव पाठः मुद्रितपुस्तके ल्युट् इति पाठः प्रामादिकस्तस्याकर्त्तर्य्येव विधानात् क्लीवत्वाच्च।

**गवेषित** त्रि० गवेष–क्त। १अन्वेषिते मार्गिते अमरः।

**गवेष्ठिन्** न० दैत्यभेदे "शङ्कुकर्णो विरोधश्च गवेष्ठी दुन्दुभिस्तथा" हरिवं० २४०। [द्वयोः समाहारे।

**गवैडक** न० गौश्च एडकश्च गवाश्वा० नि० क्लीवता च। गोमे-

**गवोश** पु० प्रशस्तः प्रशस्ता वा गौः "प्रशंसावचनैश्च" पा० जातेः कर्म० परनि० अवङ्। १प्रशस्ते गवि। २प्रशस्तायां गोजातिस्त्रियाञ्च अस्य नियतलिङ्गत्वात् स्त्रियामपि तथात्वम्।

**गव्य** (आत्मनो गामिच्छति क्यच् "वान्तो यि प्रत्यये" पा० अव्) आत्मसम्बन्धित्वेन गोरिच्छायाम् अक० भ्वा० पर० सेट्। गव्यति अगव्यीत्-अगवीत् गव्या (मा)म् चकार" "गौरसि वीर! गव्यते" ऋ० ६।४५।८।२६।

**गव्य** त्रि० गोर्विकारः गवि भवं,गोर्हितं,गोरिदं, वा सर्वत्र यत् याद्यौ अव्। १गोसम्बन्धिनि, 'गव्यसनुके' जै० अधिकर० मा०। २सरलमर्थ्यं मधुमच्च गव्यम्" कुमा० "संवत्सरं तु गव्येन पयसा पायसेन वा। "येलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत्" मनुः। ३गोर्हितादौ च। गवि इयौ नेत्रे वा साधु यत्। ३ज्यायां ४रागद्रव्ये च न० मेदि०। ज्यायाः शरक्षेपणसाधनत्वात् रागद्रव्यस्य च नेत्ररागजनकत्वात्तथात्वम्। गं विकारे ५गोरोचनाद्रव्ये स्त्री राजनि०। तस्य गोर्विकारत्वात्तथात्वम् तत्र ज्यायाम्

"श्वशोषशान्तिकनीयमानगव्यम्" माघः। तस्मै हिताः यत्। ६गोसमूहे, ७गव्यूतौ क्रोशयुगे च स्त्री हेमच०।

**गव्यश्री** स्त्री गोरिदम् वा० यत् पुडागमश्च यादौ अत् ङीप्। गोरक्ष्ये त्वगादौ। "गव्यश्री त्वगभवति" ऋ० ८।७०।७। "गव्यश्री गोमयी त्वक्" भा०।

**गव्ययु** त्रि० गामिच्छति गो+क्यच्—उन् यादौ वेदे दीर्घलोपाभावौ। गोरिच्छावति "आ दिशः दृषसुर्गव्ययुः" ऋ०८।२६।६। "गव्ययुर्गामिच्छन्" भा०।

**गव्यु** त्रि०गामिच्छति क्यच् उन् यादौ अत् दीर्घलोपाभावौ। गामिच्छति। "अश्वयुर्गव्यू रथयुर्वसुयुः ऋ० ।१५।१।३।

**गव्यूत** न० गव्यूति+पृषो० अदन्तादेशः। १क्रोशे २क्रोशयुगे च हेमच०।

**गव्यूति** स्त्री गोर्यूतिः "गोर्यूतौ" पा० अत्। द्विसहस्रधनुर्मिते १क्रोशे हेमच०। २क्रोशद्वये अमरः। "गव्या गव्यूतगव्यूती इति दीर्घपाठदर्शनात् शब्दकल्प० दीर्घान्तगव्यूतिशब्दकल्पनं प्रामादिकम् तत् गव्यूतगव्यूती इत्यस्य द्विवचनान्ततया दीर्घान्तशब्दत्वाभावात् किन्तु यूतिरित्यस्य क्तिन्नतया निपातनात् "क्तिकारादक्तिनः" पा० अक्तिन्नन्तस्यैव ङीषो विधानेन तनो ङीषोऽप्रसक्तिः।

**गह** गहने अद० चुरा० उभ० सक० सेट्। गहयति ते अजगहत् त। गहनं दुर्बोधः दुष्प्रवेशो दुर्गमश्च।

**गहन** न० गाह—ल्युट्—"ऋक् गहनयोरिति" पा० निर्देशात्, पृषो०वा ह्रस्वः गह—गहने ल्युट् वा। १वने अमरः। तस्य दुर्गमत्वात् तथात्वम्। २निबिडे त्रि० "जगाम गहनं वनम्" देवीमा० ३गह्वरे ४दुःखे च न०मेदि०। ५दुर्गमे ६दुर्बोधे ७दुष्प्रवेशे त्रि०। ८परमेश्वरे पु०। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस०। "स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यते इति गहनः" भा० "गभीरो गहनो गुप्तः" विष्णुस० "दुष्प्रवेशत्वात् गहनः अवस्थात्रयसाक्षित्वाद्वा गहनः" भा०। "गहना कर्मणो गतिः" गीता। ९उदके निघ० गाहनात्तस्य तथात्वम्। १०अलङ्कारे स्त्री शब्दार्थचि०।

**गहादि** न० चतुरर्थ्यां छप्रत्ययनिमित्ते पा० ग० उक्ते शब्दगणे स च गणः

"गह अन्तस्थ सम विषम (मध्य मध्यंदिन चरणे) उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ खाडायन काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशंसि शौङ्गि आग्निशर्मि भौजि वाराटकि वाल्मीकि क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकविन्दवि दन्ताग्र हंस तन्त्वग्र उत्तर अन्तर (मुखपार्श्वतसोर्लोपः) (जनपरयोः कुक् च) (स्वस्य च) (देवस्य) (वेण्वादिभ्यश्छण्)। गहादिराकृतिगणः"। "गहादिभ्यश्छः" पा०। गहीयः।

**गह्व** न० गह—कर्मणि भावे वा वा०व। १गाम्भीर्ये २दुष्प्रवेशे च ततः अश्मादि० चतुरर्थ्यां र। गह्वर तद्युक्तादौ त्रि०।

**गह्वर** न० गुह—वरच् पृषो० नि०। १दम्भे अमरः। २वने, ३निकुञ्जे पु० मेदि०। ४रोदने, हेमच०। ५विषमस्थाने, ६अनेकार्थसङ्कुले च न० शब्दार्थचि०। "अथान्धकारं गिरिगह्वरस्थम्" रघुः। ८गुहायां न०स्त्री स्त्रीत्वपक्षे ङीप्। "गौरीगुरोर्गह्वरमाविवेश" रघुः। "गुहाहितं गह्वरेष्ठं पुराणम्" कठो० कण्ड्रा०० श्रुतम्। "कान्तारेषु च गह्वरेषु च" यजु०१६।४।

**गा** गतौ सक० भ्वा० आ० अनिट्। गाते अगास्त जगे।

**गा** स्तुतौ सक०जन्मनि अक०जुहो०वैदिकोऽयं धातुः सार्वधातुके अभ्यासस्येत्त्वम्। जिगाति अगासीत्। जगौ। "सोमो जिगाति गातुवित्" ऋ० ३।६२।१३। "जरितुः सखा यस्ती जिगाति चेतनः" ३।१२।२। "त्वेषु चयेषु प्रथमो जिगाति" १०।८।२। इङादेशस्य इणादेशस्य च गाति रूपं तत्तद्धातौ उक्तम्।

**गाङ्ग** पु० गङ्गाया अपत्यम् शिवा० अण्। गङ्गापुत्रे १भीष्मे २कार्त्तिकेये च गङ्गापुत्रशब्दे दृश्यम्। गङ्गाया इदम् अण्। ३गङ्गासम्बन्धिनि जलादौ "गाङ्गमम्बु सितमम्बु यामुनम्" काव्यप्र० "गाङ्गं जलं निर्मलम्" गङ्गास्तोत्रम्। "गाङ्गं वर्षेण शीर्यतिः" प्रा०न०। ४मेघनिःसृते सुश्रुतोक्ते जलभेदे गङ्गाम्बुशब्दे ३२७० उक्तम्। ५स्वर्णे "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" भा० व० उक्तेस्तस्य तज्जातत्वात् तथात्वम्। अग्निरेतःशब्दे विवृतिः। ६स्वर्णनामनामके धुस्तूरे अमरः ७कशेरुणि शब्दार्थचि०। ८नदीसम्बन्धिनि तटादौ त्रि०।

**गाङ्गट** पु० गाङ्गं नदीतटमटति अट—अच् शक०। (चिङ्गिड़ि) १मत्स्यभेदे शब्दरत्ना०। स्वार्थे क। तत्रैवार्थे शब्दर०। [तत्रैव। (चिङ्गिड़ि) मत्स्यभेदे शब्दर०।

गाङ्गटेय पु० गाङ्गे नदीतटे अटति अट–अच् पृषो० ।

गाङ्गायनि पु० गङ्गाया अपत्यम् तिका० फिञ् । १भीष्मे २कार्त्तिकेये च । प्रवरप्रवर्त्तके ३ऋषिभेदे च प्रव-राध्यायः ।

गाङ्गेय पु० गङ्गा+अपत्ये ढक् । १भीष्मे, २कार्त्तिकेये च । "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्तेः ३स्वर्णे, ४तन्नाम-नामके मुस्तके, ५कशेरुणि च शब्दार्थचि० । ६रक्षि-समत्स्ये पु० त्रिका० । ७भद्रमुस्तके राजनि० ।

गाङ्गेरुका स्त्री गाङ्गं जलमीरयति क्षिपति ईर–उ स्वार्थे क गौरा० ङीष् । नागबलायाम् अमरः गोरक्ष-तण्डुलायाम् शब्दार्थचि० ।

गाङ्गष्टी स्त्री गाङ्गे नदीतटे तिष्ठति स्था–क अम्ब० ष-त्वम् अलुक् स० गौरा० ङीष् । (नटा) कटशर्करा-लतायाम् हारा० ।

गाङ्ग्य त्रि० गाङ्गे गङ्गाकूले भवः यत् । गाङ्गसम्ब-न्धिनि । "उदः कच्चो न गाङ्ग्यः" ऋ० ६।४५।३१ । "गा-ङ्ग्यः गाङ्गकूले भवः" भा० ।

गाजर न० गज–मदे घञ् "न क्वादेः" पा० न कुत्वम् गाजं मदं राति रा–क । १मूलके २गर्ज्जरे (गाजोर) । मूलभेदे गर्ज्जरमित्यत्र भावप्र० पाठान्तरम् गर्ज्जरशब्दे गुणाद्युक्तम् ।

गाडव पु० गडराकारेणास्त्यस्य प्रज्ञा० अण् गडोर्भागो वा अण् । १मेघे स्वार्थे त्रिका० २गडुभावे न० ।

गाडिक त्रि० गडिक+चतुरर्थ्यां सुतङ्ग० इञ् । गडिक-निर्वृत्तादौ ।

गाडुल्य न० गडुलस्य भावः ब्राह्म०ष्यञ् । गडुलभावे ।

गाढ़ न० गाह–क्त । १अतिशये दृढे । २दृढ़ते, ३अवगाढे, ४सेविते च त्रि० । "तपस्विगाढ़ां तमसां प्राप्येति" रघुः । "गाढकान्तदशनक्षतव्यथाम्" माघः । "सद्यःकण्ठ-च्युतभुजलतग्रन्थिगाढोपगूढे" मेघ० ।

गाढ़मुष्टि पु० गाढो मुष्टिरस्य । खड्गे मेदि० ।

गाढ़ावटी स्त्री चतुरङ्गक्रीड़ाङ्गे क्रीड़ाभेदे "नौकैका वटिका यस्य विद्यते कोणके यदि । गाढ़ावटीति विख्याता परं तस्य न दुष्यति" ति०त० । [कारिभवादौ ।

गाणकार्थ त्रि० गणकारो भवः कुर्वादि० ण्य । गण-

गाणगारि पु०गणगारस्यापत्यम् इञ् । मुनिभेदे । "सर्वे समानमन्त्रा स्युः गाणगारिः" विधार०ष्टतवाक्यम् । "पुनर्होमस्तु गाणगारिः" आश्व०श्रौ० २।६।७।१८ । सूत्रे

गाणपत त्रि० गणपतेरिदम् अश्वपत्या० अण् । नलोपाभावः । १गणपतिसम्बन्धिनि । "सारस्वतो गाणपतः सौरश्च वैष्णवः क्रमात्" ति० त० ।

गाणपत्य त्रि० गणपतेर्भावः पत्यन्तात् यक् । गणपतिभावे "महादेवप्रसादेन गाणपत्यञ्च विन्दति" भा० व० ८२ अ० । "उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात्" तत्राध्याये ।

गाणिक त्रि० गणं वेत्त्यधीते वा उक्था०ठक् । १गणसूत्रादि पाठके २तद्वेत्तरि च । गणे गणपाठे साधुः कथा०ठक् । ३गणसम्बद्धकुशले त्रि० । [यञ् । वेश्यासमूहे हेम० ।

गाणिक्य न० गणिकानां समूहः गणिकाया यञ् वार्त्ति०

गाणिन पुंस्त्री गणिनोऽपत्यादि "इन्यऽनपत्ये" पा० अपत्यार्थकेनो निषेधेऽपि गाथिविदथीत्यादिना इनो-नलोपः । १गणिनोऽपत्ये २तच्छात्रे च स्त्रियां ङीप् ।

गाण्डव्य पु० गण्डोरपत्यादि गर्गा० यञ् । गण्डोरपत्ये । यूनि यञन्तत्वात् फञ् । गाण्डव्यायन यूनि तदपत्ये लोहिता० स्त्रियां युवत्यामयुवत्याञ्च ष्फ सित्वात् ङीप् । गाण्डव्यायनी तदपत्यस्त्रीमात्रे ।

गाण्ड(ण्डी) स्त्री गडि–इन् "गाण्ड्यजगात् संज्ञायाम्" पा० दीर्घनिर्देशात् नि० वृद्धिः । ग्रन्थौ । इदिकारान्त-त्वात् वा ङीप् । तत्रार्थे । "एष गाण्डीमयश्चापः" भा० उ० ८७अ० ।

गाण्डि(ण्डी)व पुंन० गाण्डिरस्त्यस्य संज्ञायाम् व । १अर्जु-नस्य धनुषि । तच्च धनुर्ब्रह्मणा निर्माय सोमाय दत्तं सोमेन च वरुणाय, अग्निप्रार्थितेन च वरुणेनार्जुनाय दत्तम् तत्कथा भा०आ०२२५अ० ।

"ततस्तोद्भूमकेतुः प्रतिभाष्य जलेश्वरम् । चतुर्थं लोक-पालानां देवदेवं सनातनम् । सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते । तत् प्रयच्छोभयं शीघ्रं रथञ्च कपि-लक्षणम् । कार्यं हि सुमहत् पार्थो गाण्डीवेन करिष्यति । चक्रेण वासुदेवश्च तन्ममाद्य प्रदीयताम् । ददानीत्येव व-रुणः पावकं प्रत्यभाषत । तदद्भुतं महावीर्यं यशःकीर्त्ति विवर्धनम् । सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च । सर्वायुधमहामात्रं परसैन्यप्रधर्षणम् । एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् । चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्ण-मव्रणम् । देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः । प्रादा-च्चैव धनूरत्नमक्षय्यौ च महेषुधी" । "एतद्दिव्यं धनुः

यथा "तस्यैतस्य क्रुष्टमस्य साम्नः स्वरत्वं देवा उपजीवन्ति येऽवरेषां प्रथमस्तं मनुष्या, द्वितीयस्तं गन्धर्वाप्सरसो, यस्तृतीयस्तं पशवो, यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते, यः पञ्चमस्तमसुररक्षांसि, योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत्, तस्मादाहुः सामैवार्द्धमिति साम ह्येवायमुपजीवनं प्राप्नुयात्। उपजीवनीयो भवति य एवं वेद तस्य ह वा एतस्य साम्न आगेयात्मीति स्वरोमांसानि लोमा लोमानि। यो ह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति स्वरो वाव साम्नः स्वं तदेव सुवर्णम्"।

छान्दोग्ये च "का साम्नो गतिरिति स्वर इति हो वाच" "स्वर इति स्वरात्मकत्वात् साम्नः, यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति मृदाश्रय इव घटादि" भा०। सामसंहिताभाष्येऽपि तथैवोक्तं यथा

"साम-शब्द-वाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः,अक्षरविकारादिभिश्च निष्पाद्यते। क्रुष्टः प्रथमः द्वितीयस्तृतीयश्चतुर्थः मन्द्रः अतिस्वार्य इत्येते सप्त स्वराः ते चावान्तरभेदैर्बहुधा भिन्नाः। स्वरस्य साम-निष्पादकत्वं छान्दोग्योपनिषदः प्रथमे प्रपाठके प्रश्नोत्तराभ्यामामनन्ति"।

तत्राक्षरविकारविषये पूर्वोत्तरपक्षौ जै० ९।२।२२। सूत्रादिभाष्ययोर्दर्शितौ यथा

"सामप्रदेशे विकारस्तदपेक्षः स्यात्शास्त्रकृतत्वात्" सू०२२। "इदमाम्नायते,—'रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति कवतीषु रथन्तरं गायति, त्रिराद्य वामदेव्यम्" इति। तत्र सन्देहः,—किमुत्तराक्षरवशेन गातव्यं, किं योनिवर्णवशेन ?। कथमुत्तराक्षरवशेन गीतं भवति ? कथं वा योनिवर्णवशेन ? इति। उच्यते, किञ्चिदुदाहरणं गृहीत्वा व्याख्यास्यामः,—यदा तावत् इडन्तात्वमाईं भवति इति योनौ यस्मिन् भागे आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति, अथ भागान्तरे इडन्तात्वं इडा आईभावः क्रियते, तत उत्तराक्षरवशेन गीतं भवति। किं पुनरत्र कर्त्तव्यम् ?—योनिवर्णवशेनेति। कथम् ?। यावति भागे एकारस्य योनौ ईभावः कृतस्तं विचारयामः,—किं तत्र कृतमिति ?—एकारो नोच्चारितः, ईकाराकारौ आगमिताविति, एवमेवोत्तरास्वपि तावत्येव भागे यो वर्णः, स न उच्चारयितव्यः, ईकाराकारौ आगमयितव्यौ इति। एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति। तस्माद्योनिवर्णवशेन गातव्यमिति। अपि चैवं गीतिर्न नङ्क्ष्यति, इतरथा क्वचित् प्रणश्येत् यत्र प्रकृतौ गीतिः अल्पेषु अक्षरेषु गीयते, तत्र अस्याः प्रणश्यति यदुत्तराक्षरवशेन क्रियते, तस्माद्योन्यक्षरवशेन कर्त्तव्यमिति। अपि च क्वचित् क्रम उपरुध्यते यत्रक्रमे आईभावभागवर्णः, आर्षेद क्वचिदुपरुध्यते, यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकाले गानमविरुद्धं कर्त्तव्यं, तस्मात् योन्यक्षरवशेन कर्त्तव्यमिति "सामप्रदेशे विकारः" आईभावादिः, "तदपेक्षः" योन्यपेक्षः, एतत् शास्त्रेण कृतः,—'यद्योन्यां तदुत्तरयोः' इति, यावति सामभागे योनौ आईभावः कृतः, तावत्येवोत्तरासु कर्त्तव्यः" भा०। "वर्णे तु बादरिरेवयाद्रव्यं द्रव्यव्यतिरेकात्"२३सू०। "उत्तराक्षरवशेन कर्त्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन। कुतः ?। योऽसौ प्रकृतौ आईभावः कृतः, नासौ आगमः, न च तत्र एकारलोपः, किन्तर्हि ? एकारो नाम आवर्णम् इवर्णश्च आवर्णं संहतम्, ईवर्णं विहृतम्, उभे अपि च दीर्घे, ताभ्यामसाधुभ्यां सन्ध्यक्षरं साधु जन्यते। तत्र प्रकृतौ आकारेकारौ विश्लेषितौ, नापूर्वावागमितौ, गुणस्तु तयोः कश्चिदपूर्वः कृतः। सर्वत्राव प्रमाणं यत्र तद्वत्, तावति भागेऽन्यो वर्णो भवति, न सन्ध्यक्षरं, तत् संश्लेषाभावे विश्लेषो न शक्यः कर्त्तुम्, अन्यस्मिन् भागे यत् सन्ध्यक्षरं भवति, तत् तद्गतादिश्लेषः क्रियते एवं, यद्योन्यास्तदुत्तरयोः कृतं भवति, योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः, इहापि संश्लिष्टयोर्विश्लेषः, इतरथा व्यतिरिक्तं कल्पितं स्यात् अथ यदुक्तं,—गीतिः प्रनङ्क्ष्यतीति, न प्रनङ्क्ष्यतीति, विनाम कृत्वा अनक्षरं गायिष्यते। संश्लेषभावाच्चाशक्यो विश्लेषः, आर्षक्रमो नोपरोत्स्यते" भा०।

स्तोभविषये च तथैव तौ पक्षौ तत्रैव९।२।२४।२६सूत्रादौ दर्शितौ यथा

"स्तोभस्यैके द्रव्यान्तरे निवृत्तिमन्यवत्"२४सू०। "कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति यद्योन्यां तदुत्तरयोर्गायति" इति। तत्रोत्तराक्षरवशेन गातव्यमित्येतत् समधिगतम्। अथेदानीम् इदं संदिह्यते,—किं स्तोभाः प्रदिश्यन्ते न वा ? इति। किं प्राप्तम् ?—न प्रदिश्यन्ते इति। कुतः। गीतिर्हि

इत्यत्र दीर्घता इति वर्णविकारः। वी इत्यत्र वीइ (यि) विश्लेषणम्। त इत्यस्य तो इति विकारः। ये इत्यत्र यकारस्य यायि, इति विश्लेषे ताइ इति। तोयाइ तोयाइ इत्यभ्यासः। स्वाहोइ इति ऋग्वाक्ये इत्यस्यैकदेशे विरामः। व्यदातये इत्यत्र त इत्यत्र तकारस्य तो इति विकारे ये इत्यत्र यायि इति विश्लेषे च तोयाइ इति तस्य चाभ्यासः। नि इत्यत्र नायि इति वर्णविकारः। हो इत्यत्र विरामः। ता इति यथास्थितम् सत्सीत्यस्य स इत्यत्र विरामः दीर्घश्चाक्षरागमः वर्णविकारः। ब्रि इत्यस्य स्थाने तृषाय इति तलोपविकारौ। बर्हिषि इत्यस्य ब इत्यत्र विरामो दीर्घश्च। औहो वा इति स्तोभः ऋगक्षराधिकत्वात्। हिंषि इत्यत्र दीर्घरलोपौ अक्षरविकारश्च। एवमन्यत्राप्यूह्यम्। एवंरूपेण अक्षरविकारादि तु नारदशिक्षाद्युक्तप्रकारेण बोध्यम्। सामभेदाश्च रथन्तरादयः गानविशेषा एव यथाह सामसं॰ भाष्ये

"यदुक्तं "गीतिषु सामाख्येति" जै॰सू॰ तदेव विशदीकर्त्तुं सप्तमाध्यायस्य द्वितीयपादे रथन्तरशब्दो निरूपितः "अतिदेशोऽत्र विनिश्चेतुं कवतीषु रथन्तरम्। गायतीत्यृक् गानयुक्ता शब्दार्थो गानमेव वा। इति चिन्ता गानयुक्ता त्वभित्वेत्यृक् प्रसिद्धितः। लाघवादतिदेशस्य योग्यत्वाद्गानमो भवेत्। इदमाम्नायते—"कवतीषु रथन्तरं गायति"-इति, "कया नश्चित्र आभुवदित्याद्यास्तिस्र ऋचः कवत्यः, तासु वामदेव्यं सामाध्ययनतः प्राप्तम् तस्मादिदं रथन्तरं साम तास्वतिदिश्यते, तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तर शब्दार्थश्चिन्त्यते। गानविशेषयुक्ता "अभि त्वा शूर नोनुम" इतीयमृग् रथन्तरमित्युच्यते, कुतः? अध्येतृ-प्रसिद्धितः रथन्तरं गीयतामिति केनचिदुक्ताः अध्येतारः स्वर-स्तोभविशेषयुक्ताम् अभित्वेत्यृचं पठन्ति, न तु स्वरस्तोभमात्रम् तस्माद् गान-विशिष्टायामृचो रथन्तर-शब्दार्थत्वमिति प्राप्ते, ब्रूमः स्वरादिविशेषानुपूर्वीमात्रस्वरूपस्वरगणर-व्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थः, कुतः? लाघवात्, किञ्च कवतीष्वृक्षु गानमतिदेष्टुं योग्यम्। नत्वृगृग्द्वयोस्तावत्, कयानोऽभित्वेत्यनयोश्चोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात्, तस्माद् गानविशेष एव रथन्तरशब्दार्थः इति। पुनरपि नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गानमात्र-वाचित्वं स्थापितम्—"सामोक्ति-रुद्गुत्युक्तौ गीतायामृचि केवले। गाने वा गानमेवेति स्यार्थते स्वप्रमोदितम्। सामान्यवाची सामशब्दो विशेषवाचिनो बृहद्रथन्तरादि—शब्दाश्च गानमात्रे वर्त्तन्ते, न तु गान-विशिष्टायामृचि-इत्ययं नियमः सप्तमस्य द्वितीयपादे सिद्धः"। वेदगानग्रन्थे ऊहगानग्रन्थे चास्य विस्तरः। तद्भेदाश्च सामशब्दे वक्ष्यन्ते।

गा—गतौ ल्युट्। १गमने। गा स्तुतौ ल्युट्। २स्तवने।

**गानिन्** त्रि॰ गानमस्त्यस्य इनि। १गतियुक्ते। २गीतियुक्ते ३स्तुतियुक्ते च स्त्रियां ङीप्। ४वचायाम् स्त्री शब्दच॰।

**गान्तु** त्रि॰ गम—तुन् वृद्धिश्च। १गन्तरि २पथिके उज्ज्वल॰ ३गायके संक्षिप्तसा॰ वस्तुतः तत्रापि पथिक इत्येव पाठः लिपिकरप्रमादात् गायक इति।

**गान्त्री** स्त्री गन्त्र्येव गन्त्री+स्वार्थे अण् ङीप्। वृषयाने शकटे रायमुकुटः। "ऋषिजगमिनमीत्यादिना" सूत्रेण ष्ट्रन् इडभावः गान्त्रं शकटमित्युज्ज्वलदत्तोक्तेः क्लीवत्वमपि। [नदीभवे।

**गान्दिक** त्रि॰ गन्दिकायां भवः सिन्ध्वा॰ अण्। गन्दिका-

**गान्दिनी** स्त्री काशिराजदुहितरि श्वफल्कभार्य्यायामक्रूरादि मातरि त्रिका॰ तस्या नामनिरुक्तिः हरिवं॰३५अ॰ उक्ता यथा "श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत। गान्दिनी नाम सा गां तु ददौ विप्रेषु नित्यशः। सा मातुरुदरस्था तु बहून् वर्षगणान् किल। निवसन्ती न वै जज्ञे गर्भस्थां तां पिताऽब्रवीत्। जायस्व शीघ्रं भद्रन्ते किमर्थमिह तिष्ठसि। प्रोवाच चैनं गर्भस्था कन्या गाञ्च दिने दिने। यदि दद्यां ततो जाये पितरं प्रत्युवाच ह। तथेत्युक्ता च तां चास्याः पिता काममपूरयत्। दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः। अक्रूरः सुषुवे तस्यां श्वफल्काद्भूरिदक्षिणः। उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः। अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः। धर्मभृत् यतिधर्मा च गृध्रभोजान्धकस्तथा। आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना"। गान्धिनीति त्रिका॰ पाठान्तरम्। दर्शितनिरुक्तेरीकारयुक्ततैव युक्ता। गां भूमिं दापयति शोधयति दै—णिनि पृषो॰। २गङ्गायां त्रिका॰।

**गान्दि(न्धि)नीसुत** पु॰ ६त॰। १भीष्मे २कार्त्तिकेये त्रिका॰ ३अक्रूरादौ च। गान्दिनीशब्दे तत्कृतं

इत्यम्। “रिपोर्गिरा सुतमपि गान्दिनीसुतम्” माघः। “गान्दि(न्दि)न्यास्तु श्वफल्कतः। अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः” भाग० “आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः। धर्मवृद्धः सुकर्मा च क्षेत्रोऽपेक्षोऽरिमर्द्दनः। शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादशः। तेषां स्वसा सुचार्व्वाख्या” भाग० ९।२४।१६। अत्र अक्रूरप्रमुखा इत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा अक्रूरं त्यक्त्वा द्वादश तेन सह त्रयोदशेत्यर्थः। तत्सुतायां ४चार्व्वां स्त्री। गान्दिनीशब्दोक्ते हरिवं० वाक्ये तत्पुत्रायां नामान्तरमुक्तं तत्तु कल्पभेदादविरुद्धम्।

गान्दी स्त्री अक्रूरमातरि गान्दिन्याम्। “श्वफल्कात् जातो गान्दीपुत्रो महायशाः” हरिवं ४०अ०।

गान्धपिङ्गलेय पुंस्त्री गन्धपिङ्गलाया अपत्यम् शुभ्रा० ढक्। गन्धपिङ्गलायाः अपत्ये स्त्रियां ङीप्।

गान्धर्व त्रि० गन्धर्वस्येदम् अण्। १गन्धर्वसम्बन्धिनि गान्धर्वलोकः। “इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयः” इत्युक्ते २विवाहभेदे, गान्धर्वविवाहेऽधिकारिभेदादि नि० सि० उक्तं यथा।

“मनुः “षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो वरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्”। चतुरः आसुरगान्धर्वराक्षसपैशाचान्, तान् राक्षसवर्ज्जान् वैश्यशूद्रयोः। स एव “आसुरं वैश्यशूद्रयोः” हेमाद्रौ पैठीनसिः “राक्षसो वैश्यस्य, पैशाचः शूद्रस्य” प्रचेताः “पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानाञ्च” मनुः “राक्षसश्चासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः” क्षत्रियादेः संकटे पैशाचमाह माधवीये वत्सः “सर्व्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या। चौर्य्येणापि विवाहेन सा विवाह्या रहःस्थिता” गान्धर्व्वादिविवाहेष्वप्युदकपूर्व्वकं दानमाह तत्रैव यमः “नोदकेन न वा वाचा कन्यायाः पतिरुच्यते। पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे” पराशरमाधवीये देवलोऽपि “गान्धर्व्वादिविवाहेषु पुनर्वैवाहिको विधिः। कर्त्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः” त्रैवर्णोक्तेः गान्धर्वादौ विप्रस्यैवाधिकार उक्तः। तत्रैव परिशिष्टे “गान्धर्व्वासुरपैशाचा विवाहा राक्षसश्च यः। पूर्वं परिणयस्तेषु पश्चाद्धोमो विधीयते” अतो होमादावकृते भार्य्यात्वाभावाद्दरान्तराय देया तथा च तत्रैव वशिष्ठबौधायनौ “बलाद्दत्ता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति” अत्र मन्त्रसंस्काराभावेऽन्यस्मै दानस्य सर्वविवाहेषु साम्याद्बलादपहारे राक्षसपैशाचयोर्विशेषवचनं व्यर्थम्। तेन तयोर्यदि न संस्कृता संस्कृता चेत्याहृत्य कन्यानुमत्यभावेऽन्यस्मै देयेति व्याख्येयम्” “द्वयोः सकामयोर्मातापितृरहितो योगो गान्धर्वः” विष्णुः। ३भारतवर्षीयोपद्वीपभेदे “भारतस्यास्य वर्षस्य नव भेदान्निशामय। इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गा(ग)न्धर्व्वस्त्वथ वारुणः। अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः” पुराणस० विष्णुपु०। तस्य द्वीपस्य गन्धर्वप्रधानत्वात् गा(ग)न्धर्वसंज्ञा। ४सामवेदस्योपवेदे उपवेदशब्दे १२२०पृ० विवृतिः। “पदस्वरसंघातस्तालेन सङ्गतस्तथा। प्रयुक्तश्चावधानेन गान्धर्व्वमभिधीयते” इत्युक्ते ५सङ्गीतभेदे, न० हेमच०। गान्धर्वचित्तता च सुश्रुते वातप्रकृतिनिमित्ततयोक्ता। सम्प्रकृतयो भवन्तीत्युपक्रमे “वातप्रकृतिलक्षणोक्तौ “तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितचरणः” इत्यादि। गान्धर्वशाला सङ्गीतशालायाम् गान्धर्वविद्या सङ्गीतविद्यायाम्। गान्धर्वविद् सङ्गीतवेत्तरि। गन्धर्वो देवताऽस्य अण्। ६तद्देवताकेऽस्त्रे। “गान्धर्वमादत्स्व सखे! समास्त्रम्” रघुः। स्वार्थे अण्। ७अश्वे अमरः। “नानाविधाविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः। गान्धर्वभूमिष्ठतया समानतां स सामवेदस्य दधौ जलोदधिः” माघः। सामवेदपक्षे गानस्य प्रपञ्चो ध्वजः। गान्धर्वं गानं प्रियत्वेनास्त्यस्याः प्रज्ञा० अण् ङीप्। ८दुर्गायाम् स्त्री “ह्रीं श्रीं गार्गीति गान्धर्वी योगिनी योगदा सदा” हरिवं १७८ अ० दुर्गास्तुतौ। इयाचि स्त्री निघण्टुः। “अग्निर्गान्धर्वी पथ्यामृतस्याग्ने गव्यूतिर्घृत” ऋ० १०।८०।६।

गान्धर्विक त्रि० गान्धर्वे कुशलः ठक्। सङ्गीतकुशले। “याम्ये मापकृतस्याभोज्यं गान्धर्विके योगः” वृ० सं० ८८अ०। काकशकुने उक्तम्।

गान्धार पु० गन्ध एव स्वार्थे अण् तमृच्छति ऋ—अण् उप०स०। १सिन्दूरे २देशभेदे च (कान्दार) मेदि० स च देशः वृ०सं० कूर्मविभागे १५अ० उत्तरस्यामुक्तः “उत्तरतः कैलासः” इत्युपक्रमे “गान्धारयशोवतिहेमतालराज-

न्यमुचराय" गन्धारोऽभिजनोऽस्य सिन्ध्वा॰ अण्। पिता-दिक्रमेण १गान्धारदेशवासिनि। ४तद्देशे च बहुषु तस्य लुक्। गन्धाराः तद्वासिषु तद्देशे च व॰व॰। "क्रमेण व्यचरत् स्फीतस्ततः पञ्चनदं ययौ" "तस्मादपि च कौरव्य! गन्धारविषयं ययौ" "ततो गन्धारराजेन युद्धमासीत् किरीटिनः" भा॰ आनु॰ ८३ अ॰। "शकुनेस्तनयो वीरो गन्धाराणां महारथः। निरुध्यमानस्त्वापि गन्धारैः पाण्डुनन्दनः"। "वध्यमानेषु तेष्वाजौ ग-गन्धारेषु समन्ततः" ८४ अ॰। गन्धारे भवः तस्य राजा वा कच्छा॰ अण्। ५गन्धारदेशभवे मनुष्यतत्स्थभिन्ने मनुष्यतत्स्थयोस्तु वुञ्। गान्धारक गान्धारदेशस्थे मनुष्ये तदीयहस्तितादौ च। "शकुनिस्तु सहानीको माद्रीपुत्रमवारयत्। गान्धारकैः सप्तशतैश्चापशक्त्यसि पाणिभिः" भा॰ द्रो॰ ९५ अ॰। "वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः। नानागन्धवहः पुण्यो गान्धारस्तेन हेतुना" भरतोक्ते "नाभेः समुद्गतो वायुर्गन्धर्वोक्तं च चालयन्। गन्धं हृत्तेन निर्याति गान्धारस्तेन कथ्यते" संगी॰ दा॰ उक्ते च तन्त्रीकण्ठोत्थितसप्तस्वरान्तर्गते ५तृतीयस्वरे। "अजाविकं च गान्धारम्" इत्युक्तेः तस्याजाविकस्वरतुल्यता। "चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः। ऋषभे धैवते तिस्रो द्वे गान्धारनिषादयोः" संगी॰ दा॰। ७गन्धरसे न॰ त्रिका॰। गान्धारेरपत्यम् "शाल्वेयगान्धारिभ्यश्च" पा॰ अण्। ८गान्धारेरपत्ये पुंस्त्री स्त्रियां ङीप्।

**गान्धारि** पु॰ गन्धमेव गान्धं सौरभमृच्छति ऋ–इन्। १गान्धारदेशे गान्धारस्य तद्देशनृपस्यापत्यम् इञ्। २तद्देशनृपापत्ये। "गान्धारिभिरसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः" भा॰ कर्ण॰ ४६ अ॰। "यत्र द्यूतेन गान्धारे! विदुरो न प्रशंसति" भा॰ स॰ ४८ अ॰। गान्धारिः शकुनिः सुबलस्यपुत्रः। "अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा भा॰ व॰ २३८।

**गान्धारी** स्त्री गान्धारस्यापत्यम् स्त्री इञ् ततो ङीप्। गान्धारदेशनृपकन्यायाम्१सा च अजमीढभार्याभेदः यथाह भा॰ आ॰ ९५ अ॰। "अजमीढस्य चतुर्विंशं पुत्रशतं बभूव कैकय्यां गान्धार्यां विशालायामृक्षायां चेति"। धृतराष्ट्रभार्या सुबलात्मजा दुर्योधनादिमाता च यथाह भा॰ आ॰ ११० अ॰। "अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम्। आराध्य वरदं देवं भगनेत्रहरं हरम्। गान्धारी किल पुत्राणां शतं लेभे वरं शुभा। इति श्रुत्वा च तत्त्वेन भीष्मः कुरुपितामहः। ततो गान्धारराजस्य प्रेषयामास भारत!। अचक्षुरिति तत्रासीत् सुबलस्य विचारणा। कुलं ख्यातिञ्च वृत्तञ्च बुद्ध्या तु प्रसमीक्ष्य सः। ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम्। गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम्। आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत!। ततः सा पट्टमादाय कृत्वा बहुगुणं तदा। बबन्ध नेत्रे स्वे राजन्! पतिव्रतपरायणा। नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया। ततो गान्धारराजस्य पुत्रः शकुनिरभ्यगात्"। "इडापुटे तु गान्धारी मयूरगलसन्निभा। सव्यपादादिनेत्रान्तव्यापिनी परिकीर्त्तिता" तन्त्रोक्तलक्षणे २नाडीभेदे। ३जिनानां शासनदेवताभेदे हेमच॰। ५यवासे राजनि॰। ६दुरालभायां भावप्र॰। ७पार्वतीसहचरीभेदे "गौरी विद्याथ गान्धारी केशिनी मित्रसाह्वया" भा॰ व॰ २३०अ॰।

**गान्धारीतनय** पु॰ ६त॰। १दुर्योधनादौ तद्भिन्नायां २दुःशलायां स्त्री। तस्यां तदुत्पत्तिकथा

"क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम्। तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ। सा वव्रे सदृशं भर्त्तुः पुत्राणां शतमात्मनः। ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत्। संवत्सरद्वयं तन्तु गान्धारी गर्भमाहितम्। अप्रजा धारयामास ततस्तां दुःखमाविशत्। श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम्। उदरस्यात्मनः स्थैर्य्यमुपलभ्यान्वचिन्तयत्। अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः। सोदरं घातयामास गान्धारी दुःखमूर्च्छिता। ततो जज्ञे मांसपेशी लौहाष्ठीलेव संहता। द्विवर्षसम्भृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे। अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत्। तां स मांसमयीं पेशीं ददर्श जपतां वरः। ततोऽब्रवीत् सौबलेयीं किमिदं ते चिकीर्षितम्। सा चात्मनो मतं सत्यं शशंस परमर्षये। गान्धार्युवाच। ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम्। दुःखेन परमेणेदमुदरं घातितं मया। शतञ्च किल पुत्राणां वितीर्णं मे त्वया पुरा। इयञ्च मे मांसपेशी जाता पुत्रशताय वै। व्यास उवाच। एवमेतत् सौबलेयि! नैतज्जात्वन्यथा भवेत्। वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यदा। घृतपूर्णं कुम्भशतं क्षिप्रमेव विधीयताम्। सुगुप्तेषु

७८ब० । "गिरिराट्पादचारीव" भाग० ६।१२।२५ । २हिमाचले च ।

**गिरिराज** पु० ६त० । हिमालये । यथा च तस्य नगराजत्वं तथा अचलराजशब्दे ८२ पृ० उक्तम् । "सोऽपि कार्पटिकस्तस्य गिरिराजस्य भावितम्" । "गिरिराजाङ्गजाभयः" काशी० । "गिरिराजराजसुतान्वितवामतनुम्" शिवस्तवः ।

**गिरिवासिन्** त्रि० गिरिं वासयति सुखीकरोति वासि-णिनि, गिरौ वसति वस-णिनि वा । वृक्षिकन्दे ह्रस्वे राजनि० ।

**गिरिव्रज** न० गिरीणां पङ्क्तीनां व्रजो यत्र । मगधदेशान्तर्गते जरासन्धपुरे "सोऽभिजनोऽस्य अण् । गिरिव्रजतद्देशवासिनि त्रि० बहुषु तस्य लुक् । "गिरिव्रजाः मगधपुरस्य निधिनाथ" ह०म०।०ख० ।

गिरिव्रजवर्णनं भा०स०२१अ० । यथा

"एष पार्थ ! महान् भाति पशुमान्नित्यमम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः । वैहारो १ विपुलः शैलो वराहः २ वृषभ ३ स्तथा । तथा ऋषिगिरि ४स्तात ! शुभश्चैत्यक५पञ्चमाः । एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्" इत्युपक्रमे ।

"अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः । गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ! । वनराजीस्तु पश्येमाः प्रियवार्णां मनोरमाः । लोध्राणाञ्च शुभाः पार्थ ! गौतमौकःसमीपजाः । अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ । स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः । अपरिहार्या मेघानां मागधा मनुना कृताः । कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् । एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः । अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते" ।

**गिरिश** पु० गिरौ शेते शी-बा० डोऽदेऽपि ड, गिरिरस्त्यस्य लोमा० श वा ।शिवे अमरः । "गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा० । "गिरिशरमणी कालि ! सततम्" काशीस्तवः । "शिवेन वचसा त्वा गिरिशाच्छा वदामसि" यजु० १६।४ ।

**गिरिशन्त** पु० महादेवे । "गिरिशन्ताभिचाकशीहि" यजु० १६।२ । "गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति, गिरि वाचि स्थितः शं तनोतीति वा गिरौ-मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा वेददी० । पृषो० तन-बा० ड । गिरि वाचीति पक्षे अलुक्स० ।

**गिरित्र** पु० गिरौ कैलासे शेते त्री-अच् । महादेवे । "नमो गिरिशयाय च गिरित्राय च" यजु० १६।६ ।

**गिरिगाल** पु० गिरिं गलति आश्रयत्वेन गच्छति गल-गतौ अण् उप० स० । सुश्रुतोक्ते प्रतुदे पक्षिभेदे । कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्ग... गिरिगालक्षानद्रुपक्षेत्यादयः महदाः" सुश्रुतः ।

**गिरिशालिनी** स्त्री गिरिं वाग्बुद्धिकारकत्वं शलते व्याप्नोति शल-व्याप्तौ णिनि ङीप् । गिरिकर्णिकायामपराजितायाम् "पारिभद्रं पाटला च वकुलं गिरिशालिनी" वामन पु० । तत्त्वपपत्त्वेन गिरेः व्यापनात् तस्यास्तथात्वम् ।

**गिरिशृङ्ग** पु० गिरेः शृङ्गमाकारोऽस्त्यस्य अच् । १गणेशे शब्दरत्ना० शुण्डादण्डस्योत्तमने गिरिशृङ्गाकारत्वात् तस्य तथात्वम् । ६त०।२ पर्वतशिखरे न० ।

**गिरिषद्** पु० गिरौ सीदति सद-क्विप् षत्वम् । महादेवे ।

**गिरिष्ठा** स्त्री गिरौ तिष्ठति स्था क्विप् अम्ब० षत्वम् । १महादेवे २पर्वतस्थायिमात्रे त्रि० । "मृगो न भीमः कुचरो गिरिष्ठाः" ऋ०१।१४४।२ । "गिरिष्ठा गिरिस्थायी" निरु० ।

**गिरिसर्प** पु० नित्यः ७त० । दर्वीकरसर्पभेदे सुश्रुतः । अहिशब्दे ५८। पृ० विवृतिः ।

**गिरिसार** पु० ६त० । १लौहे २रङ्गे धातुभेदे च "द्रोणाय प्रेषयामास गिरिसारमयीं बलौ" भा० भी० ५१अ० गिरिषु सारः चन्दनादिसुरभिद्रव्यवत्त्वात् श्रेष्ठः । ३ मलयपर्वते मेदिनिः ।

**गिरिसुत** पु० ६त० । १मैनाकपर्वते ।२पार्वत्याम् स्त्री । "अवतु वो गिरिसुता गणिश्वतः प्रियतमा" उद्भटः । "यस्योः शिरसीन्दुकला इत्थञ्जोऽपि च तृतीयमप्यर्धम् । मूर्त्तं धनुः पिनाकं वामार्धं वा गिरिसुतार्धम्" ह०म० ५८ अ० ।

**गिरिस्रवा** स्त्री गिरेः स्रवति स्रु-अच् ५त० । पर्वतनद्याम् "गिरिस्रवाभिः सर्वाभिः पृष्ठतोऽनुगता शुभा" भा० आनु०१३४अ० ।

**गिरिह्वा** स्त्री गिरिं वाग्मूर्त्तिकारकत्वं ह्वयति स्पर्धते तदाकारेण ह्वे-क । गिरिकर्णिकायाम् अपराजितायाम् तत्कर्णतुल्यपत्रत्वात्तस्यास्तथात्वम् । "श्वेता गिरिह्वा किणिही सिता च" सुश्रु० । आ+ह्वे-क । गिर्याह्वा-

ञ्च। 'गिरीषः शिवीहिः देवुः गिरीड़्रा रजनी-ह्वयम्' शब्द०।

**गिरीन्द्र** पु० गिरिरिन्द्र इव श्रेष्ठत्वात् इत० वा। हिमालये पर्वते श्वचवराजगन्द्रे दश० विहृतिः। १महादेवे च कैलासेश्वरत्वतस्य तथात्वम्। "माधवश्च गिरीन्द्रोऽसौ सन्मावदति चेतसि" काशी० ६६ अ०।

**गिरीश** पु० गिरेः कैलासस्य ईशः। महादेवे अमरः। "श्रुतां गिरीशप्रतिपन्नमानसाम्" कुमा०। गिरीशामीशः। २हिमालये। गिरां वाचामीशः। ३वाचस्पतौ च मेदि०।

**गिर्वणस्** पु० गिरा स्तुत्या वन्यते वन-कर्मणि असुन् संज्ञात्वात् णत्वं पृषो० नोपपददीर्घः। १स्तवनीये देवभेदे। "गिर्वणादेवो भवति गीर्भिरेनं वनयन्ति" निरु० ६।१४। "सोमास इन्द्र! गिर्वणः" ऋ० १।५।७। "गीर्भिः स्तुतिभिः संभजनीयो देवविशेषः" भा०। कर्त्तरि असुन्। २स्तोतरि च। "धीरो गिर्वणसु विदानः" ऋ० १०।११।१। "गीर्भिर्वनन्ति भजन्ते इति गिर्वणसः स्तोतारः वनतेरसुनि रूपम् उपपददीर्घाभावश्छान्दसः। तदन्तात् क्यच्। "क्याच्छन्दसि" पा० उप्रत्ययः स्तोतॄन् कामयमानः" भा०। "इरि त्वा गिर्वणो! गिर इमा भवन्तु विश्वतः" शत० ब्रा० ३।६।१।२४।

**गिर्वन्** पु० गिरा वन्यते वन-विच् नि० उपपददीर्घाभावः। इन्द्रादौ देवे "इन्द्रो वै गिर्वा" शत० ब्रा० ३।६।१।२४।

**गिर्वाहस्** पु० गिरा स्तुतिवाचा उह्यते नि० उपपददीर्घाभावः। "स्तुतिवाक्यवाहनीये इन्द्रादौ देवे। "न जगृभ्रगिर्वाहो! अश्वाः" ऋ० ६।२४।६।

**गिल** गिल गिलने सक० तु० पर० सेट्। गिलति गिलन् सार्वधातुकविषयोऽयम्। गिरतेः रस्य लः इत्यन्ये। किन्तु गिलन इति निर्देशात् सौत्रोऽयं धातुरित्येव न्यायः।

**गिल** त्रि० गिल-क। १भक्षके। "गिलेऽगिलस्य" वार्त्ति० एतत्परे पूर्वस्य मुम्। तिमिङ्गिलः। "तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव!" गिलस्य तु न गिलगिलः "गेलगिले च" पा०। तिमिङ्गिलगिलः इत्यादौ मुम्। २कुम्भीरे पु० शब्दच०। तस्य सर्वपदार्थस्य चर्वणाभावेन गिलनात् तथात्वम्। कर्मणि मूल० क। ३जम्बीरे शब्दच० तस्य दन्तशठत्वेन चर्वणान्तरेण गिलनात्तथात्वम्।

**गिलगिल** पु० गिलं कुम्भीरं गिलति गिल-क। अगिलस्येत्युक्तेः न मुम्। गिलग्राहे नक्रे (घाँगर)।

**गिलग्राह** पु० गिलं कुम्भीरं गृह्णाति ग्रह-अण् उप० स०। नक्रे राजनि०।

**गिलन** न० सौ० गिल-ल्युट् गिलन इति निर्देशात् न गुणः। चर्वणमन्तरेण भक्षणे(गेला) अमरः।

**गिलायु** "पञ्चगते त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः। संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः" सुश्रुतोक्ते कण्ठरोगभेदे।

**गिलि** स्त्री गिल-भावे इन्। गिलने अमरटी०।

**गिलित** त्रि० गिल-क्त। भक्षिते अमरः।

**गिलोड्य** पु० मधुरफले इक्षुभेदे। "कतकाश्मन्तकोपिण्डाखोड्याड्युपक्रमे "समासेन मधुरो वर्गः" सुश्रुतः।

**गि(गे)ष्णु** त्रि० "गे-गाद्राभ्यामिष्णुच्" उणा० इष्णुच् आद्गुणः। इष्णुगिति केचित् पठन्ति तन्मते आतो लोपः। १गायने २सामादिगायके पु०। उज्ज्वलदत्तीये तु इष्णुजित्येव पाठः मतान्तरे एष्णुक् इति पाठान्तरमुक्त्वा आतो लोपे रूपसाम्यमुक्त्वा चित्स्वराभावात् स्वरे भेद इत्युक्तं तेन ग्रन्थकृद्भिर्मते गिष्णु इत्यदन्तशब्दकल्पनं प्रामादिकम्। तथा च गिष्णुरिति, गेष्णुरिति वा शब्दरूपद्वयम्।

**गीत** न० गै-गाने भावे क्त। गाने स्वरविशेषनिष्पाद्ये शब्दभेदे। तच्च द्विविधं लौकिकं वैदिकञ्च तत्र गानशब्दे वैदिकगानलक्षणादिकमुक्तं लौकिकमधुनोच्यते।

"धातुमात्रासमायुक्तं गीतमित्युच्यते बुधैः। तत्र नादात्मको धातुर्मात्रा त्वक्षरसञ्चयः"। तद्द्विविधं यथा "गीतञ्च द्विविधं प्रोक्तं यन्त्रगात्रविभागतः। यन्त्रं स्याद्वेणुवीणादि गात्रन्तु मुखजं मतम्। निबद्धमनिबद्धञ्च गीतं द्विविधमुच्यते। अनिबद्धं भवेद्गीतं वर्णादिनियमं विना। तद्वा गमकधात्वाद्यैरनिबद्धं विनाकृतम्। निबद्धन्तु भवेद्गीतं तालमान रसाश्रितम्। छन्दोगमकधात्वाद्यैर्वर्णादिनियमैः कृतम्। ऋग्भिः पाठ्यमभूद्गीतं सामभ्यः समपद्यत। यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणः स्मृताः। अथ संगीतलक्षणम् "ताललयानुगं गीतं नटीभिर्यत्र गीयते नृत्यस्यानुग तं रङ्गे तत्सङ्गीतमुच्यते। सङ्गीतकेन रम्येण सुखं यस्य न चेतसि। मनुष्यऋषभो लोके विधिनैव स वञ्चितः। संसारदुःखदग्धानामुत्तमानामनुग्रहात्। प्रभुणा शङ्करेणात्र गीतवाद्यं प्रकाशितम्। गीतं वाद्यं तथा नृत्यं तौर्यत्रिकमिदं मतम्। तूर्यशब्दोक्तदक्षे स्यात् तुर-

भेदे च। स्वार्थे क। गीतिका १गीतौ गाने।

**गीथा** स्त्री गै—थक्। वाचि। "एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदं सर्वमुत्तब्धं, वागेव गीथा उच्च गीथा चेति स उद्गीथः" शत॰ब्रा॰ १४।४।१।२५। "वागेव गीथा उद्गीथाभिव्यक्तिरूपा गायतेः शब्दार्थत्वात्" भा॰

**गीरथ** पु॰ गीः रथ इवास्य। १गीष्पतौ त्रिका॰। २जीवात्मनि शब्दार्थचि॰।

**गीर्ण** त्रि॰ गॄ—निगरणे शब्दे कर्म्मणि क्त। १वर्णिते २स्तुते ३गिलिते च अमरः। [अमरः।

**गीर्णि** स्त्री गॄ—भावे क्तिन्। १स्तुतौ २वर्णने ३गिलने च

**गीर्देवी** स्त्री गिरोऽधिष्ठात्री देवी। १सरस्वत्याम् शब्दरत्ना॰।

**गीर्पति** पु॰ ६त॰ अहरा॰ वा रः। १बृहस्पतौ। २पण्डिते च पक्षे पत्वेऽपि गीष्पतिः गीःपतिशब्दावप्यत्र अमरः।

**गीर्वा(र्वा)ण** पु॰गीरेव वाणः कार्य्यसाधनत्वादस्य शब्द। १देवे सुरे। अन्तःस्वमध्यत्वे गिरं स्तुतिरूपां वनुत वन—याचने अण् "पूर्वपदात् संज्ञायामिति" पा॰ णत्वम् उप॰स॰। देवानां स्तुतिप्रियत्वात् तथात्वमिति भेदः।

**गीर्वा(र्वा)णकुसुम** न॰ गीर्वा(र्वा)णप्रियं कुसुमम्। देवकुसुमे लवङ्गे राजनि॰ गीर्वाणपुष्पादयोऽप्यत्र।

**गीर्लता** स्त्री गीरिव विस्तीर्णा लता। महाज्योतिष्मतीलतायाम् राजनि॰।

**गीर्वत्** त्रि॰ गीरस्त्यस्य मतुप् "छन्दसीरः" पा॰ मस्य वः। वाक्ययुक्ते छन्दसीत्युक्तेः लोके न वः। गीर्मत् इति।

**गु** ध्वनौ अव्यक्तशब्दे भ्वा॰ आत्म॰ अक॰ अनिट्। गवते अगोष्ट। जुगुवे। "उपो वेनस्य जोगुवानः" ऋ॰ ११६१।१४। गुङ् अव्यक्ते शब्दे अस्मात् यङ्लुकि पदव्यत्ययेन शानच्" भा॰। "विश्वास्वज्यासु जोगुवे" ऋ॰ ५।६४।२। "जोगुवे शब्दयामीति" भा॰ पूर्व्ववत् पदव्यत्ययः।

**गु** विष्ठोत्सर्गे तुदा॰ कुटा॰ पर॰ अक॰ अनिट्। गुवति अगुत ओदित् क्त तस्य नः "दुग्वोर्दीर्घश्च" पा॰ दीर्घः गूनः।

**गुग्गु(ल)लु** पु॰ गुज—क्विप् गुक् व्याधिः ततो गुडति रक्षति गुड—क कु वा डलयोरैकत्वम्। स्वनामख्याते वृक्षभेदे, अमरः। भरतस्तु रमसदन्तमप्याह स्म। २रक्तशोभाञ्जनवृक्षे शब्दच॰।

"श्रीवासकरसगुग्गुलुभल्लातककुन्दुरुकसर्जरसैः" "बालाकुन्दुरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि" वृ॰ स॰ ५७अ॰। तस्य पर्य्यायभेदगुणादि भावप्र॰उक्तं यथा "गुग्गुलुर्द्देवधूपश्च जटायुः कौशिकःपुरः। कुम्भोलूखलकं क्लीबे महिषाक्षः पलङ्कषः। महिषाक्ष१ महानीलः२ कुमुदः ३पद्म ४इत्यपि। हिरण्यः ५पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः। भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः। महानीलस्तु विज्ञेयः स्वनामसमलक्षणः। कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः। हिरण्याक्षस्तु हेमाभः पञ्चानां लिङ्गमीरितम्। महिषाक्षो महानीलो गजेन्द्राणां हिता उभौ। हयानां कुमुदः पद्मः स्वस्थ्यारोग्यकरौ परौ। विशेषेण मनुष्याणां कनकः परिकीर्त्तितः। कदाचिन्महिषाक्षश्च मतः कैश्चिन्नृणामपि। गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णः पित्तलः सरः। कषायः कटुकः पाके कटू रूक्षो लघुः परः। भग्नसन्धानकृद्वृष्यः सूक्ष्मः स्वर्यो रसायनः। दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः। मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान्। पिडकाग्रन्थिशोफार्शोगण्डमालाकृमीन् जयेत्। माधुर्य्याच्छमयेद्वातं कषायत्वाच्च पित्तहा। तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्व्वदोषहा। स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः। स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः। नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः। शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः। पुराणः स तु विज्ञेयः गुग्गुलुर्वीर्य्यवर्ज्जितः। अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम्। मद्यं रोषन्त्यजेत् सम्यग्गुणार्थी पुरसेवकः" पुरः गुग्गुलुः।

अस्य स्थानविशेषे जन्मादिकथनं यथा "आयान्ति पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः शीतर्त्तौ शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा। हेमाभं महिषाक्षितुल्यमपरं सत् पद्मरागोपमं भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्या परीक्षा ततः। वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति क्षिद्यन्ति कोष्णसलिले पयसः समानाः। ग्राह्या शुभाः परिहरेच्चिरकालजातान् अङ्गारवर्णसमपूयविगन्धवर्णानिति" प्रयोगामृतम्। अस्य वह्निपु॰ उत्पत्तिस्थानमुक्तम् यथा

"गोरचना या मङ्गल्या संजाता सर्वकामिका। गुग्गुलुस्तु ततो जातो गोमूत्राच्छुभदर्शनः"।

**गुग्गुलुक** त्रि॰ गुग्गुलुः पण्यमस्य किशरा॰ ष्ठन्। गुग्गुलुविक्रेतरि स्त्रियां षित्त्वात् ङीष्।

**गुग्गुलुगन्धि** पुंस्त्री गुग्गुलुर्गन्धो येयोऽस्य अल्पार्थेऽ-

गन्धस्येत् समा०। ग०"गावो गुग्गुलुगन्धयः" प्रा०त०यमः गुग्गुलोर्गोमूत्रभवत्वात् गोसत्त्वात्तम् गुग्गुलुशब्दे तत्कथा । गुग्गुलोर्गन्ध इव गन्धोऽस्य वा इत् समा०। २गुग्गुलुगन्धयुक्ते त्रि० ।

गुङ्गू स्त्री कुह+इगोः । कुहूतिथौ । "या गुङ्गूर्या सिनीवाली या राका या सरस्वती" ऋ० २।३२।८ ।
"अत्र गुङ्गूशब्देन राकासिनीवाल्योः साहचर्यात् कुहूरुच्यते" भा० ।

गुच्छ(त्स) पु०गु-संप०-क्विप् गुतं छ्यति स्यति वा छो-सो-वा क । कलिकाकुसुमादिसमूहवति १स्तवके, काण्डशून्ये मूलत एव शाखाप्रधानसंघात्मके धान्यमल्लिकादेः २स्तम्बे, द्वात्रिंशद्यष्टिके ३हारभेदे, ४मयूरपुच्छे च मेदि० । ५मल्लिकादौ च "गुच्छगुल्मं तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च । तमसा बहुरूपेण वेष्टिताः कर्महेतुना । अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" मनुना तेषां कर्महेतुतोक्ता। "मूलत एव यत्र लतासमूहो भवति न प्रकाण्डानि ते गुच्छा मल्लिकादयः, गुल्मा एकमूलाः संघातजाताः शरेक्षुप्रभृतयः" कुल्लू० । ६गुच्छकरञ्जे मेदि० । स्तवके पु० स्त्री राजनि० स्त्रियां ङीप् । "दरगुरुकगुच्छगुच्छगन्धयः" माघः। स्वार्थे क । गुच्छक एतदर्थेषु । संज्ञायां कन् । रीठाकरञ्जे पर्णिपर्णे न० भाव० ।

गुच्छ(त्स)कणिश पु०गुच्छः कणिशोऽस्य । धान्यभेदे राजनि०

गुच्छ(त्स)करञ्ज पु० गुच्छाकरः करञ्जः । करञ्जभेदे राजनि० । "कटुर्गुच्छकरञ्जस्तु तिक्तोष्णो विषवातहृत् । कण्डूविचर्चिकाकुष्ठत्वग्दोषनाशनः" राजनि० ।

गुच्छ(त्स)दन्तिका स्त्री गुच्छीभूता दन्ताः पुष्पस्वरूपाःसन्त्यस्याः ठन् । कदल्याम् राजनि० । तस्या हि मोचकरूपे पुष्पे गुच्छाकृतिदन्तरूपत्वात्तथात्वम् ।

गुच्छ(त्स)पत्र पु० गुच्छाकृतीनि पत्राण्यस्य । तालवृक्षे राजनि० । तस्य हि प्रत्येकपत्रस्य गुच्छाकारत्वात्तथात्वम् ।

गुच्छ(त्स)पुष्प पु०गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य । सप्तच्छदवृक्षे २रीठाकरञ्जे ३धातक्यां स्त्री राजनि० ङीप् ।

गुच्छ(त्स)फल पु० गु(त्सा)च्छाकृतीनि फलान्यस्य । १रीठाकरञ्जे, २राजादन्यां, ३कतके च । ४अग्निदमन्यां, ५काकमाच्यां, ६द्राक्षायां ७कदल्याञ्च स्त्री राजनि० टाप् ।

गुच्छ(त्स)बध्ना स्त्री गुच्छेन बध्यते बन्ध-बा० रक् । गुण्ड्राकाण्डके राजनि० । [गुण्ड्रासिनीवृक्षे राजनि० ।

गुच्छ(त्स)मूलिका गुच्छाकृति मूलमस्याः कप् अतइत्वम् ।

गुच्छा(त्सा)र्द्ध पु० गु(त्स)च्छ इव ऋध्नोति ऋध-अच् । चतुर्विंशतियष्टिके हारभेदे । ६त०। गुच्छ(त्स)स्यार्द्धे पु०न० । अमरः । [ त्सा+सा-क वा । मूलके राजनि० ।

गुच्छा(त्सा)ल पु०गुच्छाय अलति अल-अच् गुच्छमालाति

गुच्छा(त्सा)ह्वकन्द पु० गुच्छमाह्वयति आ+ह्वे-क गुच्छाह्वः कन्दोऽस्य । गुलुञ्चकन्दे राजनि० ।

गुज ध्वनौ तुदा० कुटा० पर० अक० सेट् । गुजति अगुजीत् जुगोज । घनिगुजति । [जुगोज ।

गुज कूजने भ्वा० पर० अक० सेट् । गोजति अगोजीत् ।

गुञ्ज कूजने भ्वा०पर०अक०सेट् इदित् । गुञ्जति अगुञ्जीत् जुगुञ्ज गुञ्जितम् गुञ्जः गुञ्जन् । (गुनगुन) इति ध्वनिविशेषं कूजनम् । "न जुगुञ्ज यः कलमिति" । "न गुञ्जितं तत्र चकार षट्पदः" । "रेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः" भट्टिः । "लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्" "गुञ्जन् मत्तमधुव्रतः" सा० द० ।

गुञ्ज(ञ्जे)री स्त्री १रागिणीभेदे। तत्स्वरूपं सङ्गीतदा० उक्तं यथा "श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पयाना । श्रुतेः स्वराणां दधती विभागं तन्त्रीमुखात् दक्षिणगुर्ज(ञ्ज)रीयम्" कालभेदे तस्या गानं निषिद्धं तत्रैव "नाटी गौडी वराटी च गुञ्ज(ञ्जे)री देशिरेव च । पूर्वाह्णे गानमेतेषां निषिद्धमिति तद्विदः" २रागभेदे च "गुञ्ज(ञ्जे)रीरागः कव्वालीतालेन गीयते" गीतगो० ।

गुञ्ज पु० गुजि-अच् । १पुष्पस्तवके शब्दर० । भावे घञ् । गुञ्जने (गुनगुन) इति २ध्वनौ च । भावे ल्युट् । गुञ्जनमप्यत्र ध्वनौ । [शब्दच० ।

गुञ्जकृत् पु० गुञ्जं ध्वनिभेदं करोति कृ-क्विप् । १भ्रमरे

गुञ्जा स्त्री गुजि-अच् । १लताभेदे (कुँच) तत्फलेऽपि हरीतक्यादित्वात् न लुक् । "तुल्या यवाभ्यां कथितात्र गुञ्जेति" लीलावती । २गोधूमद्वयमाने, राजनि० ३चतुर्धान्यमाने, वैद्यकम् "श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता । रक्ता सा काकचिञ्ची स्यात् काकणन्ती च रक्तिका । काकादनी काकपीलुः सा स्मृता काकवल्लरी" "श्वेतरक्तप्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः । गुञ्जाद्वयं तु केश्यं स्यात् वातपित्त-

ज्वरापहम्। शुक्लयोश्चमसञ्चाम(?)स्यामदविनाशनम्। नेत्रामयहरं हृद्यं वल्यं कण्डूव्रणं हरेत्। कमीन्द्रलुप्तकुष्ठानि रक्ता च धवलाऽपि च” भावप्र० तद्गुणा उक्ताः। सितगुञ्जा चाभिचारकर्मभेदे विहिता। “अर्पयेत् सितगुञ्जानां कुड़वं कृत्तिकोदये” शा० ति० नवदुर्गामन्त्राभिचारे। तत्र कार्त्तवैदिकपौराणिककर्म्मसु त्रियवमिता गुञ्जा वैद्यके तु चतुर्यवमितेति भेदः। कर्षशब्दे १७७४पृ० दृश्यम्। “सर्वमिप्रवणैरुपासितं न हि गुञ्जाफलमेति सोम्यताम्” माघः। “अन्तर्विषमयाह्येता बहिश्चैव मनोरमाः गुञ्जाफलसमाकाराः स्वभावादेव योषितः” पञ्चत०। “तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते” भ्रमरा०। कर्त्तरि अच्। ४पटहे। भावे अ। ५कलध्वनौ मेदि०। ६चणीर्यां त्रिका०। आधारे अ। ७मदिरागृहे शब्दरत्ना०। तत्र सुरासवगन्धेन भ्रमरगुञ्जावाहुल्यात् तथात्वम्।

**गुञ्जिका** स्त्री गुञ्जा+संज्ञायां कन्। त्रियवपरिमाणे शब्दच०।

**गुटिका** स्त्री बटोव स्वार्थे क पृषो०। वटिकायाम् वर्त्तुलाकारे पदार्थे। “समुद्रे गुटिकापातः” ज्यो०। “गुटिकापातादिना व्यञ्जनं वा विभागः” दायभागः। “निर्वौतहारगुटिकाविशदं हिमाम्भः” रघुः। कत्वभावे ङीप् गुटीत्यपि तत्रार्थे।

**गुटिकाञ्जन** न० “गैरिकं सैन्धवं कृष्णां नागरञ्च यथोत्तरम्। द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते” सुश्रुतोक्ते १अञ्जनभेदे। गुटिका वटिका तथाभूतमञ्जनमित्यर्थः। “अञ्जनं क्रियते येन तद्द्रव्यमञ्जनं मतम्। रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम्” भावप्र०। सुश्रुतेऽपि “वटिकारसचूर्णानि त्रिविधान्यञ्जनानि च”।

**गुठ** वेष्टने चुरा० उभ० इदित् सक० सेट्। गुण्ठयति-ते अजुगुण्ठत्-त। गुण्ठितः गुण्ठनम्। “प्रतिपद्य यदा स्वतुधैरर्णोरेणुगुण्ठितः” भा०आ० ७३ अ०। “अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम्। बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः” सर्वद०। अव+समन्तात् वेष्टने। “रजनीतिमिरावगुण्ठिते पुरमार्गे” कुमा०।

**गुड़** वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट्। गुण्डयति-ते अजुगुण्डत्-त। गुण्डः गुण्डिता। गुण्डनं गुण्डा। [अमुडोत्। जुगोड।

**गुड़** रक्षणे आघाते च तुदा० कुटा० पर०सक०सेट्। गुडति।

**गुड़** पु० गु—ड कित्। १इक्षुविकारे इक्षुशब्दे ९०९ पृ० विवृतिः। “ऐक्षवं गुडवर्जितम्” ति०त०। गुडेन निर्वृत्तादि गुड+अस्त्या०र। गुडर गुडनिर्वृत्ते त्रि०। गुडाय साधु गुडा० ठञ्। गौडिक गुडसाधने इक्षौ। भक्ष्येण मिश्रणे स० गुडधाना गुडौदन गुडमिश्रितधानादौ। “सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः” वैद्यकम्। २गोले वर्त्तुलाकारपदार्थे “प्रादुरासन् महीपाल! कार्ष्णायसमया गुडाः” भा० द्रो० २०० अ०। ३हस्तिसन्नाहे मेदि०। ४ग्रासे हेमच०। ५कार्पास्यां स्त्री राजनि०। ६स्नुहीवृक्षे स्त्री गुडाकादायाः केशा यस्य। गुडाकेशः अर्जुनः। उज्ज्वलद०।

**गुडक** त्रि० गुडेन पक्वः या० कन्। १गुडपक्वे औषधादौ गुड+स्वार्थे क। २गोलाकारे पदार्थे। “मधुगुडकप्रभगुडकाः” भा०३० १५ अ०। “अक्षगुडकाः पर्त्तीलताः अपापाः” नील०। “नोतौ च तद्युक्तात्” पा० परम्परया अनुकम्पायाम् कन्। अनुकम्प्यबालादौ दीयमाने ३गुडद्रव्ये च। “इन्त ते धानकाः गुडका एहकि” सि०कौ०।

**गुडकरी** स्त्री रागिणीभेदे हला(?)यु०।

**गुडकुष्माण्डक** न० चक्रदत्तोक्ते औषधभेदे यथा।

“कुष्माण्डस्य पलशतं सुस्विन्नं निष्कुलीकृतम्। प्रस्थं इतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत्। त्वक्पत्रधान्याकव्योषजीरकैलाद्वयानलम्। ग्रन्थिकं चव्यमातङ्गपिप्पलीविश्वभेषजम्। शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम्। चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत्। शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत्। कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते। कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम्। प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः। क्षयेण च गृहीतानां परमेतद् भिषग्जितम्। कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम्। गुडकुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम्। खण्डकुष्माण्डवत् पाकं स्निग्धकुष्माण्डकद्रवः।”

**गुडची** स्त्री गुडेन चीयते ची—ड गौ०ङीष्। गुडूच्याम् भरतः।

**गुडतृण** न० गुडसाधनं तत्प्रधानं वा तृणम् शा०त०। १इक्षौ राजनि० पृषो०। इडत्रिणमप्यत्र शब्दरत्ना०।

**गुडत्वच्** स्त्री गुड इव मधुरा त्वग् यस्याः। (दारचिनि) ख्याते पदार्थे शब्दरत्ना०। “त्वक् स्वाद्वी तु गुडत्वक् स्यात् तथा दारुसिता मता। उक्ता दारुसिता स्वाद्वी तिक्ता

वातनिलपित्तहृत् । सुरभिः शुक्रदा वक्त्रशुद्धिकरी गुल्मगोपस्न-"पापहा" भावप्र० ।

**गुडत्वचा** स्त्री गुड इव मधुरा त्वचा यस्याः ॥ गुडत्वचि(दार-चिनि) ख्याते पदार्थे २ राजभोग्ये (जयन्ती)न० शब्दच०।

**गुडदारु** न० गुडप्रधानं दारु शाक०त० । इक्षौ त्रिका० ।

**गुडधेनु** स्त्री दानार्थं गुडनिर्मिते धेनुभेदे। तद्विधिश्च हेमा०दा० यथा "प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा । तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिता । क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा । सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी । रसधेनुर्नवमी स्याद्दशमी स्यात् स्वरूपतः" इत्युपक्रमे "एतासां तु विधानञ्च समाचक्ष्व जगत्पते ! । किंरूपं केन मन्त्रेण दातव्या तदिहोच्यताम् । मत्स्य उवाच । गुडधेनुविधानस्य यद्रूपमिह यत्फलम् । तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् । कृष्णाजिनं चतुर्हस्तं प्रागग्रीवं विन्यसेद्भुवि । गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः । लघ्वेणकाजिनन्तद्वत्तस्य परिकल्पयेत् । प्राङ्मुखीं स्थापयेद्धेनुमुदक्पादां सवत्सकाम्" । एणकाजिनं कृष्णाजिनं प्राङ्मुखीं प्राक्शिरस्कमित्यर्थः। "तदनुसारेण वत्सोऽपि तथैव परिकल्पनीयः । "उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् । वत्सस्त्वारेण कुर्वीत भाराभ्यां मध्यमा स्मृता । अर्द्धभारेण वत्सः ! स्यात् निजवित्तानुसारतः" । निजवित्तानुसारत इति इयत्तमध्यमादिकल्पना निजवित्तानुसारतः कर्त्तव्येत्यर्थः । "धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ । सितसूत्रसिरालौ तौ सितकम्बलकम्बलौ । ताम्रकट्टकपृष्ठौ तौ सितचामररोमकौ"। कट्टकं ककुत्प्रदेशः । "विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ । क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ । नानाफलमयैर्दन्तैर्घ्राणगन्धकरण्डकौ" । अत्र च भारतः परिमाणतश्च फलविशेष इति यथाशक्ति सुवर्णशृङ्गादित्यमवधेयम् । "इत्येवं रचयित्वा तु धूपदीपैरथार्च्चयेत्" । "विधानमेतद्धेनूनां सर्वासामिह पठ्यते" । सर्वासामन्यधेनुव्यतिरिक्तानामित्यवगन्तव्यम् । तथा "एतदेव विधानं स्यात एवोपस्कराः स्मृताः । मन्त्रावाहनसंयुक्ताः सदा पर्वणिपर्वणि । यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः । सौभाग्यफलदाः सर्वपापहराः शुभाः । अयने विषुवे पुण्ये व्यतीपातेऽथ वा पुनः । गुडधेन्वादयो देया उपरागादिपर्वसु" मत्स्यपु० । अत्र घृतादिधेनुद्रव्यपरिमाणमपि गुडधेनुक्रमेण । "विधानमेतद्धेनूनां सर्वासामपि पठ्यते इत्यतिदेशात् 'कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः" इति तु भारचतुष्टयादिपरिमितस्य द्रवद्रव्यस्य कुम्भाधारतयावस्थापनम्" हेमाद्रिदानखण्डम् ।

अन्यत् क्षीरधेनुशब्दे २२७३ पृ० दर्शितरीत्या कार्य्यम्" "धेनुवत्सौ तदा तौ तु सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुद्धमुक्ताफलेक्षणौ । सितसूत्रसिरालौ तु सितकम्बलकम्बलौ । ताम्रकट्टकपृष्ठौ तु सितचामररोमकौ । विद्रुमभ्रूयुगयुतौ नवनीतस्तनान्वितौ । क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । इत्येवं रचयित्वा तु धूपदीपैः समर्च्चयेत्" पद्मपु० ।

**गुडपाक** पु० ६त० । गुडस्य पाके वैद्यकोक्ते औषधपाकभेदे तत्पाकप्रकारः चक्रदत्तेनोक्तो यथा "तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः । क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते । यदा दर्वीविलेपः स्याद्यावद्वा तन्तुलो भवेत् । एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः" । "सुखनद्धः सुखस्पर्शो गुडः पाकमुपागतः । पीडितो भजते तन्तु गन्धवर्णरसान्वितम्" ।

**गुडपिप्पलीघृत** न० चक्रदत्तोक्ते औषधभेदे ।

"सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे । विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्" ।

**गुड़पुष्प** पु० गुड इव मधुरं पुष्पमस्य । मधुकवृक्षे (मौल) (मड्या) अमरः ।

**गुड़फल** पु० गुड इव मधुरं फलमस्य । पीलुवृक्षे अमरः ।

**गुड़भल्लातक** पु० गुडेन पक्वः भल्लातकः । पाकविशेषेण गुड़पक्वे भल्लातकादिरूपे औषधभेदे चक्र० तत्पाको यथा "भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् । पादशेषे रसे तस्मिन् पचेद्गुडतुलां भिषक् । भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत् । सिद्धेऽस्मिंस्त्रिफलाव्योषयमानीमुस्तकैस्त्वचम् । कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम् । खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ! । कुष्ठार्शःकामलामेहपाण्डुगुल्मपाण्डुताः । हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान् । गुडभल्लातको ह्येष श्रेष्ठयार्शोविकारिणाम्" । प्रकारान्तरं यथा "दशमूलकृता भागीं श्वदंष्ट्रा चित्रकं शटी । भल्लातकसहस्रञ्च प्रत्येकं क्वाथयेद् बुधः । पादशेषे जलद्रोणे रसे तस्मिन्

विपाचयेत्। दत्त्वा गुडतुलामेकां लेहीभूतं समुद्धरेत्। सान्निध्यं पिप्पलीतैलं मारदकस्य दापयेत्। कुडवं कुडवञ्चात्र त्वगेलामरिचैस्तथा। कर्षःकामसुदावर्त्तं पाण्डुत्वं शोथमेव च। नाशयेद्वह्निसादञ्च गुडभल्लातकः स्मृतः"।

**गुड़भा** स्त्री गुड इव भाति भा–क। यावनालशर्करायाम्। राजनि०। [(कनृकानटे। शब्दच०।

**गुड़मूल** पु० गुड इव मधुरं मूलमस्य। क्षुद्रमारिपशाके

**गुड़ल** न० गुडं कारणतया लाति ला–क। १गौड्यां मदिरायां शब्दच०। २गुडोत्पन्ने त्रि०।

**गुड़बीज** पु० गुड इव मधुरं बीजमस्य। मसूरे राजनि०।

**गुड़शर्करा** स्त्री गुडजाता शर्करा। गुडजातशर्करायाम् त्रिका०।

**गुड़शिग्रु** पु० गुड इव मधुरः शिग्रुः। रक्तशोभाञ्जने शब्दच०

**गुड़ा** स्त्री गु–ड किच्। १स्नुहीवृक्षे २वटिकायां गुटिकायां मेदि०। ३उशीर्यां राजनि०।

**गुड़ाका** स्त्री गुडि वेष्टने बा० आकन् उपधालोपश्च। १आलस्ये २निद्रायाञ्च।

**गुड़ाकेश** पु० गुडा स्नुहीव केशा यस्य उज्ज्व० गुडाकाया निद्राया आलस्यस्य वा ईशः। १गुडाकस्वेशयुक्ते अर्जुने। "गुडाकेशः अर्जुनः" उज्ज्वल०। २जिताचसे "एवमुक्तो हृषीकेशं गुडाकेशः परन्तपः" गीता। "गुडाकेशो जितालस्यः" मधुसूदनः ३शिवे जटा०।

**गुड़ाचल** पु० दानार्थं कल्पिते गुडनिर्मिते मेरुरूपे पर्वते "प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः। गुडाचलस्तृतीयस्तु" मत्स्यपु० दश मेरवो। गुडपर्वतादयोऽप्यत्र। तद्विधिः हेमा० दा० मत्स्यपु०। "ईश्वर उवाच। "अथात संप्रवक्ष्यामि गुडपर्वतमुत्तमम्। यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम्। उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः। त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान्"। भारः, परिमाणवाचे व्याख्यातः। "तद्वदामन्त्रणं पूजाहेमवृक्षसुरार्च्चनम्। विष्कम्भपर्वतांस्तद्वत् सरांसि वनदेवताः। होमं जागरणं तद्वल्लोकपालाधिवासनम्। धान्यपर्वतवत् कुर्यादिमं मन्त्रमुदीरयेत्। यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः। सामवेदस्तु वेदानां महादेवस्तु योगिनाम्। प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा। तथा रसानां प्रवरः सदैवेक्षुरसो मतः। मम तस्मात् परां लक्ष्मीं ददस्व गुडपर्वत!। यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्वत!। निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा। अनेन विधिना यस्तु दद्यात् गुडमयं गिरिम्। पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते। पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत्। आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः" इति पद्मपुराणोक्तो गुडपर्वत दानविधिः। "श्रीभगवानुवाच। अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम्। सर्वपापहरं पुण्यं सौभाग्यजननं परम्। पुष्टिदं शान्तिदञ्चैव सुखदं दिव्यभोगदम्। भारैस्तु दशभिः कुर्य्यादशक्तश्चापि वा भवेत्। पूर्ववत् मण्डपं कृत्वा सर्वोपकरणानि च"। पूर्ववदिति, ब्रह्माण्डपुराणोक्तधान्यपर्वतवदित्यर्थः। लोकपालसमोपेतं तथा काञ्चनशृङ्गकम्। मुक्ताफलविचित्राङ्गं वस्त्रालङ्कृतविग्रहम्। प्रवालकलशोपेतं इक्षुखण्डोपवेष्टकम्। नितम्बं राजतन्तस्य मेखलाकारसंस्कृतम्। कुर्य्यात्ताम्रमयं स्कन्धं नानाधातुविभूषितम्। कृत्वा तमीदृशं शैलं सर्वधान्यसमावृतम्। सर्वौषधिसमोपेतं रम्यञ्च समहाद्रुमम्। कल्पयित्वा विधानेन सवितानं विचक्षणैः। कुण्डमेकं ततः कृत्वा चतुःकोणं स्वलङ्कृतम्। नियोज्याश्चात्र विद्वांसो ब्राह्मणाः संशितव्रताः। पञ्चभो गुरुरप्यत्र तान् सर्वान् पूजयेत्ततः। पूजितास्ते यथान्यायं होमं कुर्य्युरतन्द्रिताः। लोकपालान् ग्रहांश्चैव ब्रह्मादींश्च विधानतः। स्वलिङ्गोक्तैश्च मन्त्रैश्च होमयेयुर्द्विजोत्तमाः। महाव्याहृतिभिश्चैव अयुतं तत्र होमयेत्। आचार्य्यः सह विप्रैस्तु मौनेन सुसमाहितः। ब्रह्मघोषरतस्तस्मिन् कारयित्वा महोत्सवम्। एवं विधिं तदा कृत्वा पूर्वेद्युः श्रद्धयान्वितः। दद्यात्तं माघमासस्य तृतीयायां विशेषतः। चैत्रस्य वा विधानेन तृतीयायां प्रदापयेत्। अन्येष्वपि च कालेषु पर्व्वादिषु कारयेत्। त्वं रसानां वरो नित्यं देवानाञ्च सदा प्रियः। सुखं प्रयच्छ मे नित्यं नमस्ते पर्वतोत्तम!। यावद्भूः सागरा नद्यो यावच्चन्द्रार्कतारकाः। तावन्मे त्वं सुखं यच्छ सौभाग्यमतुलं तथा। एवं संपूजयित्वा तं ब्राह्मणानां निवेदयेत्। आचार्य्यं पूजयेत्पापाहीनाञ्च तपसानपि। विद्वज्जनं ब्राह्मणांस्तांस्तु कृत्वा चैव प्रदक्षिणम्। तस्मिन् दिने च भोक्तव्यं मधुरं क्षारवर्ज्जितम्। अनन्नालेपनञ्चैव कृतकृत्यो भवेन्नरः। तस्मादेवमिदं दानं फलमुत्तममिच्छता। गतिञ्च शाश्वतीं लोके सौभाग्यं रूपमेव च। अनेन विधिना चैव दातव्यो

गुडपर्वतः। विधिद्वारस्तु कर्त्तव्यः शेषं पूर्ववदाचरेत्। दानमेतत् प्रशस्तं स्यात् स्त्रीणां राजन् विशेषतः। सौभाग्यराज्यकामस्तु सर्वस्यापि विधीयते। पूर्वोक्तञ्च फलं प्राप्य ततश्चो हि जायते" इति ब्रह्माण्डपुराणोक्तो गुडपर्वतदानविधिः"।

**गुडादि** पु० पा० गण० उक्ते साध्वर्थे ठञ्निमित्ते शब्दगणे स च गणः "गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम सङ्घात संक्राम संवाह प्रवास निवास उपवास" "गुडादिभ्यष्ठञ्" पा० गुडाय साधु गौडिक इक्षुः।

**गुडापूप** पु० गुडेन मिश्रितः अपूपः। गुडमिश्रिते पिष्टके "तदस्मिन्नन्नं प्रायेण संज्ञायाम्" पा० कन् टाप्। गुडापूपिका पौर्णमास्यां सि०कौ०।

**गुडाशय** पु० गुड इव मधुररसश्चाशेतेऽस्मिन् आ+शी आधारे अच् इत०। आक्षोडवृक्षे (आखरोट) राजनि०।

**गुडगुडायन** न० "कण्ठे मारुतः श्लेष्मा कुपितश्चार्द्धमार्गस्थितः। संनिरुद्धः करोत्याशु ध्वानं गुडगुडायनम्" सुश्रुतोक्ते श्लेष्मरुद्धवायुजनिते शब्दभेदे।

**गुडु(डू)ची** स्त्री गुड-रक्षणे बा० ऊ(ऊ)चट् ङीप्। स्वनामख्यातायां लतायाम्। तस्या उत्पत्तिगुणादिकं भावप्र० उक्तं यथा

"हते तस्मिन् सुरारातौ रावणे बलगर्विते। देवराजः सहस्राक्षः परितुष्टोऽस्ति राघवे। तत्र ये वानराः केचिद्राक्षसैर्निहता रणे। तानिन्द्रो जीवयामास संसिच्यामृतवृष्टिभिः। ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः। पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका। गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी। छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च। जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली। चक्रलक्षणिका धीरा विशल्या च रसायनी। चन्द्रहासा वयस्था च मण्डली देवनिर्मिता। गुडूची कटुका तिक्ता स्वादुपाका रसायनी। संग्राहिणी कषायोष्णा लघ्वी बल्याऽग्निदीपनी। दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम्। कामलाकुष्ठवातास्रज्वरक्रिमिवमीन् हरेत्। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्।" तत्फलगुणाः

"अमृतायाः सत्वं चूर्णं शाखया परिशोधितम्। पृथक् षोडश भागाः स्युः गुडमाक्षिकसर्पिषाम्। यथाग्नि भक्षयेदेतज्जरा हितमिताशनः। नास्य कश्चित् भवेद्व्याधिर्न जरा पलितं न च। न ज्वरा विषमा नैव मेहोनातिसरक्रमम्। न च नेत्रगता रोगाः परमेतद्रसायनम्। मेधाकरं त्रिदोषघ्नं प्रयोगाद्दस्य बुद्धिमान्। जीवेद्वर्षशतं साग्रं यथैवादितिजा स्वर्येति"। तत् पत्रगुणाः

"गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु। कषायं कटुतिक्तञ्च स्वादुपाकं रसायनम्। बल्यमुष्णञ्च सङ्ग्राहि हन्याद्दोषत्रयं तृषाम्। दाहमेहवातासृक्कामलाकुष्ठपाण्डुताः"।

"गुडूची कटुका तिक्ता स्वादुपाका रसायनी। संग्राहिणी कषायोष्णा बल्या तिक्ताग्निदीपिनी। कामला कुष्ठवातास्रज्वरपित्तक्रिमीन् जयेत्। हन्ति वातं घृतेनापि विबन्धं पित्तं सितायुक्ता मधुना कफञ्च। वातास्रमेरण्डजतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची" वैद्यकम्।

**गुडूच्यादि** पु० "गुडूची निम्बधन्याकं पद्मकं चन्दनानि च। एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः। हृल्लासारोचकच्छर्दिपिपासादाहनाशनः" इति चक्रद०उक्ते गुडूच्यादिद्रव्यगणे। "आरग्वधादिगुडूच्यादिरित्यादिना सुश्रुते उक्तो तिक्तवर्गे उक्तः तिक्तशब्दे विवृतिः।

**गुडूच्यादिकषाय** पु० "गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दबालकैः। पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः। कषायः शीतलः पेयो ज्वरातीसारशान्तये। हृल्लासारोचकच्छर्दिपिपासादाहनाशनः" चक्रदत्तोक्ते पाचनभेदे।

**गुडूच्यादिघृत** न० "गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च। मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरान्तकाः" चक्रदत्तोक्ते घृतभेदे।

**गुडूच्यादितैल** न० "गुडूचीक्वाथदुग्धाभ्यां तैलं लाक्षारसेन च। सिद्धमभ्यञ्जनाल्लक्षरसैर्वा वातरक्तनुत्" चक्रदत्तोक्ते तैलभेदे।

**गुडेर** पु० गुडि-एरक् नलोपश्च। १गुडके(गुली) वर्त्तुलाकारे पदार्थे उज्ज्वल०। २ग्रासे हेमच०। स्वार्थे क। तत्रार्थे।

**गुडोद्भवा** स्त्री उद्भवत्यस्मात् उद्+भू-अपादाने अप् गुड उद्भवोऽस्याः। १शर्करायाम् राजनि०। २गुड-जातमात्रे त्रि०

**गुण** आमन्त्रणे आवर्त्तने अदन्तो चुरा० उभ०सक० सेट्। गुणयति-ते अजुगुणत्-त। "गुणयान्यमङ्गुणकेन हन्यात्"। "विषमे गच्छे व्येके गुणकः स्यादथः समेऽर्द्धिते वर्गः" "गुण्यः पृथक् गुणितः समेतः" लीला०। "वर्गं वर्गं गुणयेत् भजेच्च" लीला०

च ते प्रायेण उक्ता द्रव्यत्ने च २३भौमहैने द्रष्टव्यम् २१। द्वित्वसंख्यायाश्च सत्त्वे विद्यते इत्यस्यायमर्थः। सत्त्वं द्रव्यम्। सत्त्व एव विद्यते इति सावधारणम्। तेन सत्ता व्यावर्त्त्यते। सत्ता हि न केवलं द्रव्ये वर्त्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्य एव द्रव्यत्वं वर्त्तते इति तत्रातिव्याप्तिरत आह अपैतीति अनन्वयी भवतीत्यर्थः अर्थात् द्रव्ये यथा पीततायां जातायां फलादेर्नीलतापैति नैवं द्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वं गोषु वर्त्तते चलादावनन्वयम् तत्रातिव्याप्तिरत आह पृथग्जातिषु दृश्यत इति। गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते गुणस्तु दृश्यते यथा कृष्णे नीलता दृष्टा घटादिष्वपि सा दृश्यते। तेन पूर्वोक्तेन सकलजातेर्व्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्त्तते ततोऽपैति, पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह क्रियाक्रियाजश्चेति। उत्पाद्यानुत्पाद्यतासमानाधिकरणजातिमान् इत्यर्थः। तत्रोत्पाद्यो यथा घटादेः पाकजो रूपादिः। अक्रियाजः अनुत्पाद्यो यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव न क्वापि नित्येति तस्या नित्यत्वसामानाधिकरण्याभावात् गुणत्वाभावः। एवमपि द्रव्यस्य गुणत्वापत्तिः अवयविद्रव्यं हि अवयवद्रव्येषु विद्यते, असमवायिकारणसंयोगनिवृत्तौ च स्वयं विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते। तच्च द्विविधं भवति नित्यानित्यभेदेन निरवयवस्याकाशपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह असत्त्वप्रकृतिरिति। अद्रव्यस्वभावः द्रव्यभिन्न इति यावत्।

वैशेषिकमतप्रसिद्धगुणभेदलक्षणादिकं कणादसूत्रतद्वृत्त्योरुक्तं यथा

"रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" ।।७सू०।

"गुणत्वेन रूपेण गुणानां सर्वद्रव्याश्रितत्वं द्रव्याभिव्यञ्जकत्वं द्रव्याभिव्यञ्जकत्वञ्चेति द्रव्यानन्तरं गुणानामुद्देशं विभागञ्चाह रूपेत्यादि चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दान् समुच्चिनोति ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः। गुणत्वव्याप्यानां यथास्थानं लक्षणतः स्वरूपतश्च दर्शयिष्यन्ते तत्र रूपरसगन्धस्पर्शानां समानकालीनरूपरसगन्धस्पर्शसामानाधिकरण्यं नास्तीति सूचनार्थं समासः। सङ्ख्यापरिमाणयोस्तु समानकालीनसङ्ख्यापरिमाणसामानाधिकरण्यसूचनायासमासो बहुवचननिर्देशश्च यद्यप्येकत्वसमाधिकरणं नैकत्वान्तरं न वा महत्त्वदीर्घत्वसमानाधिकरणं महत्त्वदीर्घत्वान्तरं तथापि द्वित्वादीनामन्योऽन्यं सामानाधिकरण्यं महत्त्वदीर्घत्वादीनाञ्च विजातीयपरिमाणयोः सामानाधिकरण्यमस्त्येव। पृथक्त्वस्य यद्यपि द्विपृथक्त्वादिसमानाधिकरणं, तेन सङ्ख्यावद्बहुत्वेनैव निर्देष्टुमर्हति तथाप्यवधिव्यङ्ग्यत्वलक्षणं सङ्ख्यातो वैधर्म्यं दर्शयितुमेकवचननिर्देशः। संयोगविभागयोर्द्वयोरप्येककर्मजन्यत्वसूचनाय द्विवचनं परत्वापरत्वयोरन्योन्याश्रयनिरूप्यतया दिक्कालिकत्वविशेषसूचनाय च द्विवचनं; बुद्धीनां विद्यादिभेदेन साङ्ख्याभिमतैकमात्रबुद्धिनिराकरणसूचनाय बहुवचनं, सुखदुःखयोर्द्वयोरपि भोगमात्रफलोद्देशकार्यजनकत्वम् अविशेषेण चाद्दृष्टोपायकत्वं सुखस्यापि दुःखत्वेन भावनस्य ख्यापयितुं द्विवचनम्। इच्छाद्वेषयोर्द्वयोरपि प्रवृत्तिं प्रति कारणत्वसूचनाय द्विवचनं प्रयत्नानां विहितनिषिद्धगोचराणां द्विविधानां सुखदुःखहेतुत्वं, प्रतिपालनाञ्च पापहेतुत्वमभिप्रेत्याय बहुवचनमित्युन्नेयम्। यद्वा रूपरसगन्धस्पर्शानां भौतिकेन्द्रियव्यवस्थाहेतुत्वप्रतिपादनार्थं पाकजप्रक्रियाव्यवस्थापनार्थं वा ते समस्योक्ताः सङ्ख्यायां द्वित्वबहुत्वादौ विप्रतिपत्तिरिति तन्निराकरणसूचनार्थं बहुत्वेनाभिधानं, पृथक्त्वे तु सङ्ख्यावद्बहुत्वे सत्यपि बहुत्वमिति सूचनायावधिप्रामव्यञ्जनीयत्वं सङ्ख्यातो वैधर्म्यमिति सूचनाय च पृथगभिधानम्। परिमाणे तु दीर्घत्वह्रस्वत्वादिविप्रतिपत्तिनिरासाय बहुवचनम्। संयोगविभागयोरन्योन्यविरोधख्यापनाय द्विवचनं, परत्वापरत्वयोर्दैशिककालिकभेदेन भिन्नजातीयसम्भवेन चतुष्टयापत्तौ गुणविभागो न्यूनः स्यात् इति तत्रापि द्विवचनमित्याद्युन्नेयम्" उप० वृत्तिः।

"द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्" ।।१६सू०

"द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी एतच्च द्रव्येऽपि गतमत आह अगुणवानिति तथापि कर्मण्यतिव्याप्तिरित्यत आह संयोगविभागेष्वकारणं तथापि संयोगविभागधर्माधर्मस्मरणादीनामसङ्ग्रहः स्यादत उक्तमनपेक्ष इति अनपेक्ष इत्यनन्तरं गुण इति पूरणीयं संयोगविभागेष्वनपेक्षः सन् कारणं यो न भवति स गुण इत्यर्थः।

संयोगविभागादीनां संयोगविभागौ प्रति सापेक्षत्वात् नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं संयोगविभागौ भिन्नितौ प्रति समवायिकारणत्वासमवायिकारणत्वरहिते सामान्यवति यत् कारणत्वं तद्गुणत्वाभिव्यञ्जकं, संयोगविभागयोः प्रत्येकमेव संयोगविभागकारणत्वं न मिलितयोः, धर्माधर्मेश्वरज्ञानादीनां द्वयोर्निमित्तकारणत्वमात्रं न समवायिकारणत्वं नाप्यसमवायिकारणत्वमिति तेषां संग्रहः, यद्वा संयोगविभागसमवायित्वासमवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्वव्यञ्जकं सामान्यवत्त्वे सति कर्मान्यत्वे च सत्यगुणवत्त्वमेव वा गुणलक्षणम् ॥" उप० वृत्तिः

"नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा असमवायिकारणवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा कार्य्यसमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा" तत्त्वैवोक्तम्। कर्म्मत्वजातेः सत्तासाक्षाद्व्याप्यत्वेऽपि नित्यवृत्तित्वाभावात् द्रव्यत्वजातेस्तथात्वेऽपि नित्यवृत्तिनित्यवृत्तित्वाभावान्नातिव्याप्तिः गुणत्वजातेस्तु नित्यरूपादिषु वर्त्तमाने नित्ये महत्त्वादौ वृत्त्वात् तामादाय लक्षणसमन्वयः। व्याप्तिश्च भेदगर्भा बोध्या। तेन सत्ताव्याप्यत्वस्य क्वचिदपि सत्त्वेन तामादाय न द्रव्यकर्मणोरतिव्याप्तिः।

"तेषां मूर्त्तामूर्त्तगुणत्वादिभेदः भाषायामुक्तो यथा।

"रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम्। द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी। धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च। एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्त्तिताः। संख्यादिश्च विभागान्त उभयेषां गुणो मतः। संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः। अतः शेषा गुणाः सर्वे मता एकैकवृत्तयः। बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः। अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः। संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा। गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः। संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च। एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः। बाह्यैकैकेन्द्रियग्राह्या, गुरुत्वादृष्टभावनाः। अतीन्द्रिया. विभूनान्तु ये स्युर्वैशेषिका गुणाः। अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः। अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम्। स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम्। स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः। संयोगश्च विभागश्च वेगश्चैते तु कर्म्मजाः। स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके। भवेदसमवायित्वमथ वैशेषिके गुणे। आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः। वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा। द्विधैव कारणत्वं, स्यादथ प्रादेशिको भवेत्। वैशेषिको विभुगुणः संयोगादिद्वयं तथा"।

एते च गुणाः द्रव्यभिन्ना गन्धशब्दे २५२४पृ०दर्शिते उपस्कारवृत्तिवाक्ये स्पष्टमुक्ताः। तद्भिन्ना अपि ते द्रव्याधीना इति वैशेषिकादय आहुः। वैदान्तिकादयस्तु द्रव्याभिन्ना एव गुणा इति मन्यन्ते यथाह शा०भा० "वैशेषिकास्तन्त्रार्थभूतान् षट् पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति यथा मनुष्योऽश्वः शश इति। तथात्वमभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति। तन्नोपपद्यते कथं यथाहि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नैवेतरेतराधीनत्वं भवति एवं द्रव्यादीनामप्यत्यन्तभिन्नानां नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ च भवति द्रव्याधीनत्वं गुणादीनाम्। ततो द्रव्यभावे भावात् द्रव्याभावे चाभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग् भवति। यथा देवदत्त एकएव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग् भवति तद्वत् तथासति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्। नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते, सत्यं दृश्यते भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते इह तु शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन विशेषेण प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति।" इतःपरं भाष्यम् अयुतसिद्धशब्दे १४५ पृ० दर्शितम्। तत्र च द्रव्याभिन्नत्वं गुणादीनामुक्तम्।

सां०प्र० भा० समवायनिराकरणेनैव गुणादीनां द्रव्याभिन्नत्वमुक्तं यथा

"कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति अन्यथा स्वरूपमात्रेणैव स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात्। स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति। अतः सम्बन्धग्राहकप्रमाणे-

सजातीयत्वनिषेधे पर तस्य तुल्यता। स च दुर्बलत्व- पातित्वात् बन्धुदायहरः यथाह मनुः "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादबान्धवाश्च षट्"।

गूढात्मन् पु० गूढ आत्मा यस्य। परमात्मनि। "भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्ययात्। गूढात्मा वर्णविकृतेर्वर्णलोपे पृषोदरः" व्या० का०। "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" श्रुतिः तस्य सर्वान्तर्यामित्वेन स्थितावपि अविदुषामगम्यत्वात् गूढत्वम्।

गूथ पु०न०। गु-थक् अर्द्धर्चा०। विष्ठायाम् अमरः।

गूथलक पुंस्त्री गूथे रक्त आसक्त इव कः। (गुवेशालिक) प्रसिद्धे खगे शब्दच०। स्त्रियां जातित्वात् ङीष्।

गून त्रि० गु–क्त तस्य नः। हतविष्ठोत्सर्गे अमरः। [गूरणम्

गूर उद्यमे चुरा०आत्म० सक० सेट्। गूरयते अजुगुरत।

गूर वधे गतौ च दिवा० आत्म० सक० सेट्। गूर्यते अगूरिष्ट। जुगूरे ईदित् गूर्णः

गूर्त्त(र्त्त) त्रि० गुरी उद्यमे क्त ईदित्वात् नेट् वेदे निष्ठानत्वाभावः। उद्युक्ते "प्रक्षोता गूर्त्तमना उराणाः" ऋ०६।६३।४ "इदमित्था रौद्रं गूर्त्तवचाः" ऋ० १०। ६१।१।२प्रशस्ते च "पुरां गूर्त्तश्रवसं दर्म्माणम्" ऋ० १।६१।५ "गूर्त्तश्रवसम् प्रशस्यान्नम्"भा०। लोके निष्ठातस्य नत्वे गूर्ण इत्येव।

गूर्त्ति त्रि० स्तवन्ति स्तुवन्ति गृ–कर्त्तरि क्तिच् "वक्तं त्वर्त्वि" पा०उक्तम्। १स्तोतरि "गूर्त्तयो नेमान्निषः" ऋ०।।५।६।२ "गूर्त्तयः स्तोतारः"भा०। भावे क्तिन्। २स्तुतौ स्त्री "गिरां न यज्ञैः स्वदयन्त गूर्त्तिभिः" ऋ०८।।५।। "गूर्त्तिभिः स्तुतिभिः" भा० लोके तु गीर्णिरित्येव।

गूर्द स्तुतौ अक०चु०उभ० सेट्। गूर्दयति ते अजुगूर्दत् त। "गूर्दयतिः स्तुतिकर्म्मा" निघ० "तं गूर्दय स्वर्णरम्" ऋ० ७।१६।१ "गूर्दय स्तुहि" भा० क्रीडार्थे गुर्दवत्।

गूवाक पु० गुवाक+पृषो०। गुवाकशब्दार्थे पूगवृक्षे राजनि०

गूषणा स्त्री मयूरपिच्छचन्द्रे शब्दच०।

गृ सेके भ्वा० पर०सक०अनिट्। गरति अगार्षीत्। जगार।

गृज ध्वनौ भ्वा० पर० अक० सेट्। गर्जति। अगर्जीत् जगर्ज "गर्ज गर्ज क्षणं मूढ!" देवीमा० "गर्जन् हरिः साम्भसि शैलकक्षे" भट्टिः। भावे गृज्यते। अगर्जि

गृञ्ज ध्वनौ भ्वा०पर०अक० सेट् इदित्। गृञ्जति अगृञ्जीत्। जगृञ्ज गृञ्जनम्। भावे गृञ्ज्यते अगृञ्जि

गृञ्जन पु० गृञ्जति रोगभेदनाशाय ध्वनति गृञ्ज–कर्त्तरि ल्यु। १मूलभेदे मेदि० २रक्तलशुने राजनि०। "गृञ्जनः पित्तलः माध्वी तीक्ष्णोष्णो रोगनाशनः। गन्धाकृति पुष्पैस्तुल्यः स्वस्तनालः पलाण्डुना" इत्युक्तलक्षणे (गाजर) प्रसिद्धे ३ मूलभेदे पु०। "कटुष्णं कफवातघ्नं गृञ्जनं गुल्मनाशनम्। रुचिकृत् दीपनं हृद्यं दुर्गन्धि परिकीर्त्तितम्" इत्युक्तगुणे (लशुन) ख्याते ४मूलभेदे न० "लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च" अभक्ष्ये मनुः। (गाजर) इति ख्याते ५मूलभेदे च विषदिग्धपशुमांसे न० मेदि० स्वार्थे क। तत्रार्थे। "शोभाञ्जनः कोविदारस्तथा गृञ्जनकादयः" भा०आनु०६१ अ० अपाङ्क्तेयोक्तौ।

गृञ्जिम पु० यदुवंश्ये शूरस्य पुत्रे वसुदेवस्यानुजभेदे। "मरिषायां जज्ञिरे शूरात् भोज्यायां पुरुषा दश। वसुदेवो महाबाहुः" इत्युपक्रमे "अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः" हरिव० ३५ अ०।

गृणीषणि पु० गृ–णिक् गृणिः स्तोत्रं तदिच्छा इष–भावे बा०कनिन् इत०। स्तोत्रेच्छायाम् "देवं देवं वोऽवसे इन्द्रमिन्द्रं गृणीषणि" ऋ०८।१२।१६ "गृणीषणि स्तोत्रेच्छायाम्" भा०। [ङीष्।

गृधजीव पुंस्त्री स्थूलाङ्गगात्रे हेम० स्त्रियां जातित्वात्

गृत्स पु० गृध्यति अनेन गृध–स। १कामदेवे उज्ज्वलद० २स्तोतरि ३स्तुत्ये च त्रि० माधवः "गृत्सं कविं विश्वविदममूरम्" ऋ० ३।१।१ "गृत्सं गृत्समम्" भा० "गृत्सो राजा वरुणश्च यनम्" ऋ० ७।८७।५ "गृत्सः स्तुत्यः" भा०। ४मेधाविनि त्रि० निरु०। "अग्निस्तरणविदस्तु" ऋ० ७।४।२ "गृत्सो मेधावी" भा०। ५विषयाभिलाषुके त्रि० ६रुद्रभेदे पु० "गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमः" यजु०१६।२५ [उदा०हरणम्।

गृत्सपति पु० ६त०। रुद्रभेदे गृत्सशब्दे उदाहरणम्

गृत्समति पु० क्षत्रवृद्धवंश्ये सुहोत्रपुत्रभेदे यथा "सुहोत्रस्य सुतद्वयम्" "काशकश्च महासत्त्वस्तथा गृत्समतिर्नृपः" हरिव० ३२ अ०।

गृत्समद पु० शौनकगोत्रपरे शुनहोत्रस्य पुत्रभेदे "शुनहोत्रस्य दायादास्त्रयः परमधार्म्मिकाः। काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः" हरिव० २९ अ० "शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गववीतहव्यगार्त्समदेति" आश्व०श्रौ० १२।१०।१२ "अपित्वम·

दीनाम यज्ञस्य दयितः सखा” भा० अनु० १८ अ०। स च ऋग्वेदिनां तर्पणीयर्षिभेदः “अथर्षिभ्यः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः” इति आश्व० गृह्य० सू० ३।४।२ “वीतहव्यो महाराज! ब्रह्मवादित्वमेव च। तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः। शक्रस्त्वमिति यो दैत्यैर्निगृहीतः क्षितावभूत्। ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः। यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्” अनु० ३० अ० उक्ते २वीतहव्यसुते ऋषिभेदे च।

गृध अभिकाङ्क्षायां दिवा० पर० सक० सेट्। गृध्यति इरित् अगृधत्-अगर्धीत्। जगर्ध। गर्द्धित्वा-गृद्ध्वा गृध्नुः।

गृधु त्रि० गृध-कु। १अभिलाषुके २कामे पु० उणादि०।

गृधू स्त्री गृध-कू। १गुदे २कुत्सिते ३अपाने च संक्षिप्तसा०

गृध्नु त्रि० गृध-क्नु। लुब्धे अमरः “अगृध्नुराददे सोऽर्थान्” रघुः “वातकलोऽयमगृध्नुः” मेघदू० “मा ते गृध्नुरविभजातिशायिवस्त्राणामापि” अथ० ११।६।२०

गृध्य त्रि० गृध-कर्मणि क्यप्। १अभिकाङ्क्षणीये “गृध्यमर्थमपायुग्रवि” भट्टिः। भावे क्यप्। २अभिकाङ्क्षायां न०। ततो ऽस्त्यर्थे इनि। गृध्यिन् अभिकाङ्क्षावति त्रि०। “नेमां हिंस्युरिमे बाला क्रव्यादा मांसगृध्यिनः” भा० अनु० ७२ अ०। स्त्रियां ङीप्।

गृध्र पुंस्त्री गृध-क्रन्। (शकुन) पक्षिभेदे राजनि०। “आकाशमध्ये नियतं चरन्ति गृध्रादयो मूर्ध्नि गृहोर्द्ध्वभागे” शकुनशास्त्रम्। “कौशिकगृध्रमयूरैस्तिमिरविहगैः परित्यक्ते” वृ०स० ४८ अ०। गृध्रस्येदम् गार्ध्रं गृध्रसम्बन्धिनि त्रि० गार्ध्रपक्षशब्दे २५८५ पृ० उदा० ‘गृध्रच्छाये वर्हिणौ” २पक्षिमात्रे च “तौ सीतान्वेषिणौ गृध्रं (जटायुषम्) लूनपक्षमपश्यताम्” रघुः। ३लुब्धे त्रि० “अत्यर्थमभिसितैः शस्त्रैर्जयगृध्राः प्रहारिणः” भा० द्रो० ७ अ०। गृध्रपक्षिजातिश्च श्येनीजाता यथाह “श्येनी श्येनांश्च गृध्रांश्च तथोलूकानजायत” रामा०। गृध्रीशब्दे दृश्यम्। स्त्रियां ङीष्।

गृध्रकूट पु० गृध्रप्रधानं कूटमस्य। मगधदेशस्थपर्वतभेदे। “गोलाङ्गुलैर्महाभागो गृध्रकूटेऽभिरक्षितः” (हरिवंशः) भा० आ० ४६ अ०। “चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे!। तावत् कीकटदेशः स्यात्तदन्तर्मगधो भवेत्” शक्ति० सङ्ग० ३०७ पट०

गृध्रनखी स्त्री गृध्रस्य नखसदृशाकारोऽस्त्यस्याः अच् गौरा० ङीष्। (कानियाखाडा) १कुलिकवृक्षे रत्नमा०। २कोलिवृक्षे बदर्याम् त्रिका० “करमर्द्दीविकण्टकसौवीरकशतावरीगृध्रनख्यश्चेति कण्टकसंज्ञः। रक्तपित्तहरौ ह्येतौ शङ्खौ कुष्ठसंज्ञकौ। सर्वमेहहरौ चैव शुक्रदोषविनाशनौ” सुश्रुते तस्याः कण्टकसंज्ञत्वमुक्त्वा गुणा उक्ताः।

गृध्रपत्रा स्त्री गृध्र इव धूम्रं पत्रं यस्याः। धूम्रपत्रावृक्षे राजनि०। गृध्रस्य पत्रं पक्ष इव पत्रोऽस्य। गृध्रपक्षिपक्षयुतपक्षे २वाणभेदे। गृध्रवाजादयोऽप्यत्र “शतेन गृध्रवाजानां शराणां नतपर्वणाम्” भा० शल्य० २७ अ०। “देशमे स्कन्दस्य सैनिका” इत्युपक्रमे “हुङ्कारकः कोकनदो गृध्रपत्रश्च जम्बुकः” भा० श० ४६ अ०। उक्ते ३स्कन्दसैन्यभेदे।

गृध्रयातु पु० गृध्ररूपेण याति या-तुन्। गृध्ररूपे राक्षसभेदे। “सुपर्णयातुमुत गृध्रयातुम्” ऋ० ७। १०४।२२।

गृध्रराज पु० ६त०। गृध्रो राजेवेति वा उपमितस०। गरुडात्मजे जटायुपक्षिणि। “निर्बिभेद सुतीक्ष्णाग्रैर्गृध्रराजं शिलाशितैः” रामा० आर०। गृध्रपत्यादयोऽप्यत्र।

गृध्रवट पु० गृध्रोपलक्षितो वटोऽत्र स्थाने। तीर्थभेदे “ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः। स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम्। ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्। इतरेषां तु वर्णानां सर्वपापं प्रणश्यति” भा० व० ८४ अ०

गृध्रसी स्त्री गृध्रमपि स्यति सो-क गौरा० ङीष् ६त०। वातरोगभेदे यथाह सुश्रुतः “पार्ष्णीं प्रत्यङ्गुलीनां तु कण्डरा यानिलार्दिता। सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता”। माधवकरोऽप्याह। “स्फिक्पूर्वा कटीपृष्ठोरुजानुजङ्घापदं क्रमात्। गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता”। भावप्रकाशे विशेषोक्तम् यथा च “स्फिक्पूर्वा कटीपृष्ठोरुजानुजङ्घापदं क्रमात्। गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः। वातजायां भवेत्तोदो देहस्यातीव वक्रता। जानुजङ्घोरुसन्धीनां स्फुरणं स्तब्धता भृशम्। वातश्लेष्मोद्भवायान्तु गौरवं वह्निमार्द्दवम्। तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च। गृध्रसी वातात् केवलात् स्फिगादिपर्यन्तं स्तम्भरुक्तोदैर्गृह्णाति। क्रमात् इति क्रमात् तेन यथा यथा

वर्द्धते तथा तथा स्फिगादीन्याक्रामति । नात्र मद्दणे निर्द्देशक्रमनियमः । तथा शुष्कः स्कन्दते स्फिगादिषु निराकम्पं करोतीत्यर्थः" ।

गृध्राण पुं॰ गृध इवानिति अन–अच् गौरा॰ ङीष् संज्ञायां णत्वम् । धूम्रपत्राद्रुमे वैद्यकम् ।

गृध्री स्त्री कश्यपपत्न्याः सुताभेदे । "षट् सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः । काकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका । गृध्री गृध्रनां-स्तथा भासी भासान् गृध्रांश्च गृध्र्यपि" हरिवं॰३अ॰।

गृभ न॰ गृह+वेदे हस्य भः । गृहे "न्यु भ्रियन्ते यशसो गृभादा" ऋ॰ ७।२२।२ गृभात् गृहात्" भा॰

गृभि पु॰ ग्रह–कि हस्य॰ वेदे हस्य भः । ग्रहणे । "वनस्पतीनां गृभिरोषधीनाम्" अथ॰ १२।१।५७

गृभीत त्रि॰ग्रह–क्त वेदे हस्य भः । गृहीते "रात्रिं गृ-भीतां सुवतो नवन्ति" ऋ॰१।१६२।२ "गृभीतां गृही-ताम्" भा॰ २गृहीतयते च "यदि गृभीततातये" ऋ॰ ५।७४।४ "गृभीततातये स्वीकृतयज्ञसन्तानाय" भा॰ क्वचित् आर्षेऽपि प्रयोगे लोके भः । "जयजय जह्यज-जामजितदोषगृभीतगुणाम्" भाग॰१०।८७। ११ श्लो॰ ।

गृष्टि स्त्री गृह्णाति सकृत् गर्भम् ग्रह–कर्त्तरि क्तिच् पृषो॰ । १सकृत्प्रसूतायां गवि । "गृष्टिः सहव स्थविरं तवागाम्" ऋ॰४।१८।१० "आपीनभारोद्वहनप्रयत्नात् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः" रघुः । "भक्षमाणश्च पयसो गृष्टीः स प्रचचार ह" हरि॰ ३०७अ॰। जात्या महाल्ले कर्म॰। विशेषणत्वेऽपि परनिपातः गोस्त्रिः । इदन्तत्वात् वा ङीप् । "श्रवीहीनां पीवराणाश्च ताव-दष्ट्राः गृष्टीभिनवः सुव्रताश्च" भा॰ अनु॰ ८२ अ॰ । २सकृत्प्रसूतस्त्रीमात्रे अतएव गृष्टेर्गौभा-वपरत्वे "चतुष्पादो गर्भिण्याः" पा॰ सूत्रान्तरमारब्धं शब्दार्थचि॰ गृष्टेरपत्यम् गृष्ट्यादि ढक् । गार्ष्टेय तदपत्ये पुंस्त्री। कर्मणि क्तिन्। ३वराहकान्तायाम् अमरः । ४बदरकले मेदि॰। ५काश्मर्यां राजनि॰। स्वार्थे क तत्रार्थे । धमपर्णारग्वधेत्याद्युपक्रमे "मधुकभूनिम्ब गृष्टिका इति समभागाः कल्कः" सुश्रुतः ।

गृष्ट्यादि अपत्यार्थे ढक्प्रत्ययनिमित्ते पा॰ग॰सूत्रोक्ते शब्द-गणे स च गणः "गृष्टि हृष्टि बलि हलि विधि कुद्रि अजबस्ति मित्रयु" । [स्पृहयालुः ।

गृह ग्रहणे अद॰चु॰ आत्म॰सक॰सेट् । गृहयते अजगृहत

गृह न॰ गृह्यते धर्माचरणाय ग्रह–गेहार्थे क । इष्टका-स्तम्भिकादिरचिते १गेहे । अर्द्धर्चादित्वादयमुभयलिङ्गः तत्र एकगृहे न॰ पुंलिङ्गस्तु बहुवचनान्त एव "तत्रा-गारं धनपतिगृहादुत्तरेणास्मदीयम्" मेघदू॰ । "नाना-गताभ्यांऽधिगृहं गृहिण्यः" "गृहाणि नीमैरिव तत्र रेजुः" "स्निग्धा भाता गृहदेहलीनाम्" गृहैर्विशालैरपि भूरिशालैः" माघः । चु॰गृह–ग्रहणे कर्मणि अच् । २कलत्रे "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मृतिः । ३नामनि शब्दर॰४मेषादिभवने राशौ च । गेहनिर्माणप्रयोजनमाह वशिष्ठः "वास्तुज्ञानं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा । ग्रामसद्मपुरादीनां निर्माणं वक्ष्यते मया" । भवि॰पु॰ "गृहस्थस्य क्रियाः सर्वाः न सिध्यन्ति गृहं विना । यतस्तस्माद् गृहारम्भप्रवेश समयं ब्रुवे । परगेहे कृताः सर्वाः श्रौतस्मार्त्त्ताःदयाः क्रियाः । निष्फलाः स्युर्यतस्तासामधीशः फलमश्नुते" तत्र ग्रामादिभेदे पुरुषभेदस्य शुभाशुभं राशिभेदेन द्वार-निवेशनञ्चाह्मम् "यद्भं द्वयङ्कसुतेशदिङ्मितमसौ ग्रामः शुभोनामभाम्स्य वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम् । काकिण्यस्तनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थदोऽथ द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः" मु॰ चि॰ । "व्यवहारप्रसिद्धं यन्नाम (नीलकण्ठः) इत्या-दिकं तन्नावकहडचक्रानुसारेण यदनुराधादिकं नक्षत्रं ततो यद्वृश्चिकादिराशिः स्यात्तन्नाममभमेव यस्मिन् ग्रामे नगरे वा वस्तुमिष्यते तस्य (वरणादेः)इत्यादिकं यन्नाम तस्माज्जातो यो राशिर्मीनादिस्तद्ग्रामभम् एवं नाम-भद्वयं ज्ञात्वा नामभात् पुरुषनामराशेः सकाशात् यद्भं यस्य ग्रामस्य भं राशिः यदा द्वितीयो नवमः पञ्चमः एका-दशषष्ठोदशमश्च स्यात्तदासौ ग्रामः तस्य शुभो फलदाता स्यात् अन्यथा न भवतीत्यर्थः । यथा नीलकण्ठस्य वृ-श्चिकराशितः पञ्चमोमीनराशिस्तस्यवरणादिर्नीलकण्ठस्य वासयोग्यः सन् शुभफलदो न वाराणस्यादिः । उक्तञ्च मुहूर्त्तमार्त्तण्डे "नामभात् द्विसुताङ्कदिग्भवगतो ग्रामः शुभोनाऽन्यथेति" । अत्र काकिण्यादौ नामराशिरेव ग्राह्यः । उक्तञ्च "काकिण्यां वर्गशुद्धौ च वादे द्यूते-स्वरोदये । मन्त्रे पुनर्भूवरणे नामराशेः प्रधानतेति" अथ ग्रामात्मनोरुत्तमर्णाधमर्णत्वं चाह स्वं वर्ग-मिति । वर्गास्तु "अकचटतपयशाः खगेशमार्जार सिंहशुनाम् । सर्पाखुमृगावीनां निजपञ्चमवैरिणामष्टौ"

इत्युक्तमत्र तस्य पुंसः यत्संख्याकोवर्गो गरुडादिः स्यात्तद्वर्गसंख्यां द्विगुणां विधाय कृत्वा परस्य ग्रामस्य वर्गसंख्यया आढ्यां च कृत्वा गजैरष्टभिः शेषितमवशिष्टाः काकिण्योंऽशाः पुंसः । एवं ग्रामस्यापि स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुंसः वर्गसंख्यया युक्तां च कृत्वा गजभक्तावशिष्टाः ग्रामस्य काकिण्यो भवन्ति एवमनयोः पुरुषग्रामयोः काकिण्यः स्युः । तत्र तद्विवरतः पुरुषकाकिणीनां ग्रामकाकिणीनां विवरमन्तरलक्षितम् क्रियमाणे यस्य ग्रामस्य दातृत्वात् पुंसः काकिण्याधिक्ये पुंसोऽव्ययहानिः । ग्रामस्य प्रतिपद्मीत्वादित्यर्थः । यथा । नीलकण्ठस्य वर्गः सर्पः तत्संख्या ५ द्विगुणा १० चरणाद्रेर्वर्गः सिंहस्तत्संख्यया २ युक्ता १२ गजभक्तशेषं ४ नीलकण्ठस्य काकिण्यः । एवं ग्रामवर्गसंख्या २ द्विगुणा ४ नीलकण्ठवर्ग ५ संख्यया युक्ता ११ अष्टभक्तावशेषं ३ ग्रामस्य काकिण्यः द्वयोरन्तरे शेषं १ नीलकण्ठस्य दातृत्वात् स्वद्रव्यहानिरित्यर्थः । उक्तञ्च "स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्" इति । इतोऽन्यथाहुः कश्यपवसिष्ठनारदाः "अकारादिषु वर्गेषु दिक्षु प्राच्यादिषु क्रमात् । गरुडमार्जारसिंहाश्वसर्पाखुगजमेषकाः । द्विवर्गैषा मिथः योनिः स्ववर्गात्पञ्चमो रिपुः । रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदाः । साध्यवर्गं पुरः स्थाप्य पृष्ठतः साधकं न्यसेत् । विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम् । व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम् । ऋणाधिकं स्वल्पधनं सर्वसंपत्प्रदं स्मृतम्" इति । गृहोऽत्र गरुडः गरुडसर्पयोर्महावैरसत्त्वात् साध्य इत्यर्थः । साध्यो ग्रामयोस्थो ग्रामादिस्तस्य वर्गं वर्गसंख्यां पुरः संस्थाप्य साधकस्य नीलकण्ठादेः वर्गसंख्यां पृष्ठतोन्यसेत् । एवं विशिष्टोऽङ्कोऽष्टभिर्भक्तः शेषं साधकस्य धनं स्यात् । यथा साध्यवर्गसंख्या २ पुरः स्थापिता साधकस्य ५ वर्गसंख्या च पृष्ठतः स्थापिता ५२ एताभ्यामङ्कात् अष्टभक्तावशिष्टं साधकस्य ४ धनं साधकस्य साध्यस्य च संख्या विपरीतस्थापिता २५ अष्टभक्तशेषं साधकस्य ऋणं स्यात् । अथ द्वारनिवेशनमाह । अश्वेति । द्विजादिराशिमतां पुंसां क्रमेण पूर्वतः प्राच्यादिदिक्चतुष्टये द्वारं हितं यथा द्विजराशयः कर्कवृश्चिकमीनास्तेषां पूर्वदिशि । वैश्यराशयो वृषकन्यामकरास्तेषां दक्षिणदिशि । शूद्रराशयो मिथुनतुला कुम्भास्तेषां पश्चिमदिशि क्षत्रराशयो मेषसिंहधनूंषि तेषामुत्तरदिशि द्वारनिवेश इत्यर्थः" पीयू० धा०

अत्रेदं बोध्यम् "शेषाङ्केन फलं बोध्यं शेषाभावे तु हारकात् । अङ्कादेव फलं बोध्यमिति तत्त्वविदां मतम्" ज्यो० त० अष्टभक्ताद्यभावे हारकाङ्कात् फलनिर्णयः । राशिविशेषस्य ग्रामादिस्थानविशेषे निवासनिषेधमाह । "गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिहयाङ्गनाश्च । कर्कीं धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः स्युरैन्द्र्याः" मु० चि० "वस्तुमिदस्य ग्रामस्य वस्त्रविभागवन्नवधा विभागं कृत्वा मध्ये मध्यमविभागे गोसिंहनक्रमिथुनं वृषसिंहमकरमिथुनराशिमन्तः न निवसेत् वृषसिंहमकरमिथुनराशिमन्तः पुरुषा न वसेयुः । अथ पूर्वककुभः पूर्वदिशातोऽष्टदिक्षु अलिहयविकः तदा द्विराशिमन्तः पुरुषाः न वसेयुः । यथा । पूर्वस्यां वृश्चिकः आग्नेय्यां भषो मीनः, दक्षिणस्यां कन्या, नैर्ऋत्यां कर्कः पश्चिमायां धनुः । वायव्यां तुला उत्तरस्यां मेषः ऐशान्यां कुम्भः न वसेदित्यर्थः । अथ वर्गाः । अकचटतपयशवर्गाः अष्टौ ऐन्द्र्याः पूर्वदिशमारभ्य अष्टदिक्षु बलिनः । यथा अवर्गः पूर्वस्याम् । कवर्ग आग्नेय्याम् । चवर्गो दक्षिणस्याम् टवर्गो नैर्ऋत्याम् । तवर्गः पश्चिमायाम् पवर्गो वायव्याम् । यवर्गः उत्तरस्याम् । शवर्ग ऐशान्यां बलीत्यर्थः । कीदृशाः वर्गाः स्वपञ्चमपराः स्वस्मात् पञ्चमः परः शत्रुर्येषां ते । यस्य अवर्गः पूर्वस्यां बली तेन स्वपञ्चमपश्चिमायां द्वारं निवासो वा न विधेयः एवं कवर्गादीनामाग्नेयादिस्वदिक्षु बलित्वं तत् पञ्चमस्य रिपुत्वञ्च ज्ञेयम्" । पी० धा०

तत्र गृहयोग्यभूमिपरीक्षा विश्वकर्मणोक्ता यथा "अथातः संप्रवक्ष्यामि लोकानां हितकाम्यया । श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्वशः । सुगन्धा ब्राह्मणी भूमी रक्तगन्धा तु क्षत्रिणी । मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिणी । मधुरा ब्राह्मणी भूमिः कषाया क्षत्रियान्विता । अम्ला वैश्या भवेद्भूमिस्तिक्ता शूद्रा प्रकीर्तिता । चतुरस्रा द्विपाकारा सिंहा वृषभरूपिणी । वृत्तं च भद्रपीठं च त्रिशूलं लिङ्गसन्निभम् । प्रासादध्वजकुम्भादिदेवानामपि दुर्लभम् । त्रिकोणां शकटाकारां शूर्पव्यजनसन्निभाम् । मुरजाकारसदृशीं सर्पभेकरूपिणीम् । खराजगरसंकाशां वक्रां चिपिटरूपिणीम् । मुद्गराभां तथा उलूककाकसन्निभां तथा ।

शूकरोष्ट्राजसदृशीं धनुःपरशुरूपभाम् । कङ्कालसदृशाकारां दुर्गन्धां च विवर्जयेत् । मनोरमाऽत्र या भूमिः परीक्षेत्तां प्रयत्नतः । द्वितीया दृढभूमिश्च निम्ना चोत्तरपर्व्वके । गम्भीरा ब्राह्मणी भूमिर्न्यायां तरुमाश्रिता । वैश्यानां समभूमिश्च शूद्राणां विकटा स्मृता । सर्व्वेषां चैव वर्णानां समभूमिः शुभावहा । शुक्लवर्णा च सर्व्वेषां शुभा भूमिरुदाहृता । कुशकाशयुता ब्राह्मी दूर्व्वा नृपतिवल्लभा । फलपुष्पयुता वैश्या शूद्राणां तृणसंयुता । नदीपाताश्रितां तद्वत् महापाषाणसंयुताम् । श्मशानाभां महाघोरां वायुना चापि पीड़िताम् । बहुभल्लुकसंयुक्तां मध्ये विकटरूपिणीम् । श्वशृगालनिभां रूक्षां दन्तिकैः परिवारिताम् । चैत्यश्मशानवल्मीकधूर्त्तालिकेषु वर्त्तिनीम् । चतुष्पथमहावृक्षदेवमन्त्रिनिवासतः । अदूरस्थां श्वभ्रगर्त्तयुक्तां चैव विवर्जयेत्" भूमिभेदे फलानि तत्रैव "सुवर्णगन्धा सुरसा धनधान्य शुभावहा । व्यत्यये व्यत्ययफला ततः कार्य्यं परीक्षणम् । चतुरस्रा महाधन्या द्विपाभा धनदायिनी । सिंहाभा सद्गुणान् पुत्रान् वृषाभा पशुवृद्धिदा । वृत्ता सद्वृत्तदा भूमिर्भद्रपीठनिभा तथा । त्रिशूलरूपा वीराणां सुतसनिर्धनतोऽग्यदा । लिङ्गाभा लिङ्गिना श्रेष्ठा प्रासादध्वजसन्निभा । पदोन्नतिं प्रकुरुते कुम्भाभा धनवर्द्धिनी । त्रिकोणशकटाकारा शूर्पव्यजनसन्निभा । क्रमेण सुतसौख्यार्थधर्म्महानिकरी स्मृता । मुरजा वंशहा सर्पमण्डूकाभा भयावहा । नैःस्वा खरानुकारा च मृत्युदाऽजगरान्विता । चिपिटा पौरुषैर्हीना वक्राकारा तथैव च । काकोलूकनिभा तद्वद् दुःखशोकभयप्रदा । सर्पाभा पुत्रपौत्रघ्नी वंशाभा वंशहानिदा । शूकरोष्ट्राजसदृशी धनुःपरशुरूपिणी । कुचेलान्वितान् मूर्खान् मलाक्तान् जनयेत् सुतान् । कङ्कालसदृशाकारा सतप्ता धनार्त्तिदा । दुर्गन्धां पापिनीं दुष्टप्रजां भूमिं परित्यजेत् । मनोरमा सुतप्रदा दृढा धनप्रदा मता । सुतार्थदा तथाप्युदक्पूर्व्वादिक्प्लवा मही । गम्भीरगन्धा जनयेत् पुत्रान् गम्भीरनिःस्वनान् । दृढा पदान्वितान् कुर्य्यात् सदा सौभाग्यदायिनी । विकटा शूद्रजातीनां तथा दुर्गमवासिनाम् । शुभदा न परेषां च तस्कराणां शुभावहा । सुवर्णवर्णा स्यात् वर्णान् वर्णानामाधिपं सदा । शुक्लवर्णा च सर्व्वेषां पुत्रपौत्रप्रवर्द्धिनी । कुशकाशान्विता ब्रह्मवर्च्चसान् कुरुते सुतान् । दूर्व्वान्विता वीरसूनिः फलाढ्या धनपुत्रदा । नदीपाताश्रिता मूर्खान् सुतवक्तांस्तथैव च । दरिद्रानश्ममध्यस्था गर्त्तान्तस्था मृतासुतान् । विवरा पशुपुत्रार्त्तिदायिनी सौख्यहारिणी । वक्रातिवक्रा जनयेत् पुत्रान् विद्याविहीनकान् । शूर्पमार्जारसुतनिभा भीतिसुतार्त्तिदा । मुषला मुषलान् पुत्रान् जनयेद्दंशघातकान् । घोराघोरप्रदा वायुपीड़िता वायुभीतिदा । बहुभल्लुकसंयुक्ता पशुहानिप्रदा सदा । विकटा विकटान् पुत्रान् श्वशृगालनिभा तथा । ददाति रूक्षा परुषा दुर्व्वलान् जनयेत् सुतान् । गृहस्वामिभयं चैव वल्मीके विपदः स्मृताः । धूर्त्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम् । चतुःपथे त्वकीर्त्तिः स्यादुद्वेगो देवसद्मनि । अर्थहानिश्च सचिवे श्वभ्रे विपद उत्कटाः । गर्त्तायां तु पिपासा स्यात् कूर्म्माभे धननाशनम् । दशहस्तादिपर्य्यन्तं पीड़न्ते पुरवासिनः । चैत्यश्मशानदेवानां गृहाणि परिवर्जयेत् । निखनेद्धस्तमात्रेण पुनस्तेनैव पूरयेत् । पांशुनाधिकसम्पूर्णाः श्रेष्ठमध्याधमाः क्रमात् । जलेनापूरयेत् श्वभ्रं शीघ्रं गत्वा शतं पदम् । तथैवागत्य वीक्षेत न हीनं सलिलं शुभा । करत्रिमात्रे श्वभ्रे वा चतुर्निम्ने च सर्व्वतः । हस्तमात्रमगाधस्य कृत्वा वर्त्तिचतुष्टयम् । ज्वाल-वेदभूपरीक्षार्थं सम्पूर्णं सर्व्वदिक्शुभम् । दीप्ता पूर्व्वादि गृह्णीयाद्वर्णानामनुपूर्व्वशः । कृताष्टे तयोर्देशे सर्व्वबीजानि वापयेत् । त्रिपञ्चसप्तरात्रेण संप्ररोहन्ति तान्यपि । उप्तबीजा त्रिरात्रेण माङ्कुरा शोभना मही । मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता । तिलान्वा वापयेत्तत्र यवांश्चापि च सर्षपान् । अथ वा सर्व्वधान्यानि वापयेच्च समन्ततः । यत्र नैव प्ररोहन्ति तां प्रयत्नेन वर्जयेत् । व्रीहयः शालयो मुद्गाः गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त सर्व्वबीजानि चैव हि । सुवर्णताम्रपुष्पाणि श्वभ्रमध्यं गतानि च । यत्र नाशं समायान्ति न भूमिस्तत्र शोभना । पांशवो रेणुतां नीता निरीक्ष्यावान्तरिक्षगाः । अधोमध्योर्द्ध्वगा ह्येषां गतिस्तुल्यफलप्रदाः" ।

भूमेः पूर्व्वादिदिक्प्लवफलं तत्रैवोक्तम् "चतुरस्रां समां शुद्धां भूमिं कृत्वा प्रयत्नतः । तस्मिन् दिक्साधनं कार्य्यं हस्तमध्ये गते दिशि । पूर्व्वप्लवे भवेद्वृद्धिराग्नेय्यां शोकमादिशेत् । याम्यां याति यमद्वारं नैर्ऋते च महाभयम् । पश्चिमे कलहं कुर्य्याद्वायव्यां मृत्युमादिशेत् । उत्तरे वंशवृद्धिः स्यादैशाने रत्नसञ्चयम् । दिङ्मूढे कुलनाशः स्याद्वक्रे दारिद्र्यमादिशेत्" ।

दक्षिः। न तु निःसन्दिग्धेष्वेकराशात्मकेषु अश्विन्यादिषु। धनर्णयोश्च फलम् "धनाधिकं गृहं दद्यात् निर्धनाय ऋणाधिकमिति"। नक्षत्रस्य फलम् "विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः। निधनाख्या तारका तु सर्वथा निधनप्रदा। विवर्ज्य तारकास्त्वेतास्तद्विमोक्षमशुभप्रदम्। कुर्वंस्तु यावतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। अत्र गृहनक्षत्राद्दिनभं यत्तु ख्यं नक्षत्रभक्तमवशिष्टतारका विपत्तारादिकाः स्युश्चेत्तदानिष्टास्तद्दिने गृहारम्भं न कुर्यात् अन्यस्मिन् दिने शुभतारासु गृहारम्भं कुर्यादित्यर्थः इति केचित्। अपरे तु गृहकर्तृनामनक्षत्राद्गृहभं संगण्य नवभक्तमवशिष्टं विपत्तारादिकं स्यात्तद्गृहमनिष्टमन्यथा शुभमिति यदाह कश्यपः "दत्ते दुःखं तृतीयर्क्षं पञ्चमर्क्षं यशःक्षयम्। आयुःक्षयं सप्तमर्क्षं कर्तुर्भाद्यदि सप्तममिति" वास्तुशास्त्रेऽपि "गृहभात् स्वामिभं गण्यं भक्तं च नवभिः पुनः। यच्छेषं सा भवेत्तारा सप्तपञ्चत्रिकाऽधमेति" प्राहुः। यदा तु गृहकर्तुर्गृहस्य चैकं नक्षत्रं स्यात्तदा तच्छुभमशुभं वेति निर्णयमाह। वशिष्ठः "गृहस्य तत्पतेश्चैकं धिष्ण्यं चेन्निधनप्रदमिति" निधनं मरणम्। राशेश्चाप्येष दोषः न तु भिन्नराशित्वे तद्वाक्यस्य विवाहप्रकरणोक्तत्वात्। केचित्त्वत्रापि प्रयोजनमुक्तं तदुक्तं व्यवहारसमुच्चये "त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यैरृक्षैरपत्याप्तिधनानि शोकम्। शत्रोर्भयं राजभयं च मृत्युः सुखं प्रवासश्च नव प्रभेदाः" इति। गृहभवशाद्दायस्थानेऽपि प्रयोजनमाह स एव। (विश्वकर्मा) राशिकूटादिकमित्यादि (तद्वाक्यमनुपदं दर्शयम्) वास्तुशास्त्रे कृत्तिकादिषु द्विराशिषु भेषु राशिनिर्णयो यथा "अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम्। मूलादित्रितयं चापे शेषेषु नव राशय" इति। शेषेषु भेषु रोहिण्यादिषु नव राशयो ज्ञेयाः। यथा रोहिणीमृगयोर्वृषः। आर्द्रापुनर्वस्वोर्मिथुनम्। पुष्याश्लेषयोः कर्कः। एवं हस्तादिके श्रवणादिद्विके च कन्यामकरादिराशयः स्युरित्यर्थः अयं च पक्षो वास्तुशास्त्रे नवांशानुक्रमेणोक्तः। अत्र राशिकूटनाडीवेधो न दोषाय। उक्तं च ज्योतिश्चिन्तामणौ "सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि। परस्परं मित्रयोश्चैकनाडी प्रशस्यते" इति। तिथिप्रयोजनं तिथ्यानयनप्रकारान्तरं च वास्तुशास्त्रे "षष्ठाहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम्। तिथयः प्रतिपदाद्याः स्युः दर्शे रिक्ते च वर्जयेदिति"। तल्लग्नाद्यंशाच्छुभाशुभप्रकरणोक्तं नेष्टयोगवर्जनं च योगानां, प्रयोजनं स्पष्टमेव आयुषः प्रयोजनं तावत्कालं गृहस्थितिरिति" पी॰धा॰ आयादिफलं विश्व॰वास्तुशास्त्रे "भिन्नत्रे च वसुभिर्भक्ते व्ययः स्याच्छेषकाङ्कके। धनाधिकं गृहं दद्यात् निर्धनाय ऋणाधिकम्। व्ययान्विते क्षेत्रफले ध्रुवाद्यक्षरसंयुते। त्रिभिः शेषे क्रमादिन्द्रयमभूमिपांशकाः। इन्द्रांशे दद्वीडविर्भक्तैः सौख्यं प्रजायते। यमांशे मरणं नूनं रोगशोकमनेकधा। राजांशे धनधान्यानि पुत्रवृद्धिश्च जायते। राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत्। नैःस्वं द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता। षट्काष्टके नैधनं स्याद्दशलाभे मध्यमं स्मृतम्। (अन्यत्र द्वादशद्वितीयादौ) शुभस्थिते धनलाभः सौभाग्यश्च सदैव च। जन्मतृतीये च तथा धनधान्यागमो भवेत्। दशमैकादशे चन्द्रे धनायुर्वृद्धिप्रदः। चतुर्थाष्टमरिःफस्थो मृत्युपुत्रविनाशदः। त्रिकोणेऽस्त्वनपत्यं स्यात् केचिद् बन्धुगृहे शुभम्। वदन्ति चन्द्रे शुभयोर्नैतन्मम मतं स्मृतम्। अश्विन्यादित्रयम् इत्यादिकम् (अनुपदउक्तम्)। सूर्यारवारराश्यंशाः सदा वह्निभयप्रदाः। शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिदाः। गृहस्थागतभं वस्तु तद्धि राश्यात्मकं यदि। तन्नवांशवशात्तस्य ज्ञातव्यं सर्वदा गृहम्। विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः। निधनाख्या तु या तारा सर्वथा निधनप्रदा। विवर्ज्य तारकास्त्वेतास्तद्विमोक्षमशुभप्रदम्। प्रत्यरितारा भयदा निरंशत्वेव मृत्युभीः। निधनाख्या तु या तारा क्षीणतार्तिप्रदायिनी। कुर्वंस्तु यावतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। तिथौ रिक्ते दरिद्रत्वं दर्शे गर्भनिपातनम्। कुयोगे धनधान्यादिनाशः पातश्च मृत्युदः। वैधृतौ सर्वनाशाय नक्षत्रैक्ये तथैव च। आयुर्विहीने गेहे तु दुर्भगत्वं प्रजायते। नाडीवेधो न शुभदस्तारा रोगभयप्रदा। गणवैरे पुत्रहानिर्धनहानिस्तथैव च। योनौ कलिर्महाद्दुःखं यमांशे मरणं ध्रुवम्। नक्षत्रैक्ये स्वामिमृत्युर्वंशे वंशविनाशनम्। पापवारे दरिद्रत्वं शिल्पिनां मरणं तथा। केचिच्चाग्निं प्रशंसन्ति चौरभीतिस्तु जायते"।

आयादिकल्पनाया मर्यादां दिग्भेदेन गृहभेदनिर्णयमाह विश्वकर्मा "एकादशकराद्दूर्ध्वं यावद्द्वात्रिंशद्धस्तकम्। तावदायादिकं चिन्त्यं तदूर्ध्वं नैव चिन्तयेत्। आय-

ष्टयो मासषुर्हिनं जीर्णं विनवेद् गृहे । शिलान्यासं प्रकुर्वीत मध्ये तस्य विधानतः । ऐशान्यां देवतागेहं पूर्वस्यां स्नानमन्दिरम् । आग्नेय्यां पाकसदनं शयनं दक्षिणे न्यसेत् । शस्त्रगेहञ्च नैर्ऋत्यां पश्चिमे भोजनालयम् । वायव्यां धान्यसदनं भाण्डारागारमुत्तरे । आग्नेयीपूर्वयोर्मध्ये दधिमन्थनमन्दिरम् । अग्निप्रेतेशयोर्मध्ये आज्यगेहं प्रशस्यते । याम्यनैर्ऋतयोर्मध्ये पुरीषत्यागमन्दिरम् । नैर्ऋत्याम्बुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् । पश्चिमानिलयोर्मध्ये रोदनार्थं गृहं कृतम् । वायव्योत्तरयोर्मध्ये रतिगेहं प्रशस्यते । उत्तरैशानयोर्मध्ये औषधार्थं च कारयेत् । ऐशानपूर्वयोर्मध्ये शेषं सर्वगृहं स्मृतम् । नैर्ऋत्यां सूतिकागेहं नृपाणां गेहमिष्यते । आसन्नप्रसवे मासि कुर्य्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चितम् । मासे तु नवमे प्राप्ते पूर्णपक्षे शुभे दिने । प्रसूति समये काले गृहारम्भणमिष्यते" ।

अलिन्दभेदेन गृहनामभेदात् तत्फलमलिन्दशब्दार्थश्चाह तत्रैव "गुरोरधो लघुः स्थाप्यः पुरस्तादूर्द्ध्वगं न्यसेत् । गुरुभिः पश्चिमे पूर्णं सर्वलघ्ववधिर्विधिः । स्यादलिन्दं लघुस्थाने नालिन्दं गुरुमाश्रितम् । प्रदक्षिणेगृहद्वारादलिन्दैर्दशषड्विधैः १६ । ध्रुवसंज्ञं १ गृहं स्याद्यं धनधान्यसुखप्रदम् । धन्यं २ धान्यप्रदं नृणां जयं ३ स्याद्विजयप्रदम् । नन्दं ४ स्त्रीहानिदं नूनं खरं ५ सम्पद्विनाशनम् । पुत्रपौत्रप्रदं कान्तं ६ श्रीप्रदं स्यान्मनोरमम् ७ । सुमुखं ८ भोगदं नूनं दुर्मुखं ९ विमुखप्रदम् । सर्वदुःखप्रदं क्रूरं १० विपक्षं ११ शत्रुभीतिदम् । धनदं १२ धनदं गेहं क्षयं १३ सर्वक्षयावहम् । आक्रन्दं १४ शोकजननं विपुलं श्रीयशःप्रदम् । विपुलं १५ नामसदृशं धनदं विजयाभिधम् १६ । प्रदक्षिणं लघुमुखादलिन्दं विद्यालघुस्थानसमाश्रितं च । गृहस्य पूर्वादिगतैरलिन्दैरेवं भवेयुर्दश षट् च भेदाः १६ । भवेत् पुनः शुभालिन्दयुतं कापालसंज्ञकम् । विस्तारात् द्विगुणं गेहं गृहस्वामिविनाशनम् । निरर्थकं तद्गृहं स्याद्भयं वा राजसम्भवम् । केचिदलिन्दं द्वारं तु प्रवदन्ति मनीषिणः । केचिदलिन्दं शालाञ्च केचिच्चालिन्दकं च तत् । गृहाद्बहिश्च ये कोष्ठा गृहस्यालिन्दगाश्च ये । तेषां कोष्ठीगतं त्रिकोणगेहं चालिन्दसंज्ञकम् । तन्मध्यहीनं गृहाद्बाह्यप्रान्तनिर्गतं कोष्ठनिर्मितम् । मध्याद्दूरं तत्र गेहं शालालिन्दसंज्ञकम् । यत्रालिन्दं च तत्रैव द्वारमार्गः प्रशस्यते । अलिन्दद्वारहीनं च गृहं कोटीसमं स्मृतम् । यत्रालिन्दं तत्र शाला तत्र द्वारं च शोभनम् । शालालिन्दद्वारहीनं न गृहं कारयेद्बुधः" अयमर्थः । "प्रस्तारे तु लघुं न्यस्य प्रथमस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् । ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत्" इ०र०उक्तरीत्या चतुर्द्वारस्वरूपचतुर्गुरु प्रकल्पनेन प्रस्तारे लघुं द्वारं प्रकल्प्य षोडश भेदाः स्वरूपतोदर्श्यन्ते यथा

१ | ऽऽऽऽ ऊर्द्ध्वमुखम् ध्रुवं शुभदम् ।
२ | ।ऽऽऽ प्राङ्मुखं धान्यं शुभम् ।
३ | ऽ।ऽऽ दक्षिणद्वारम् जयं शुभदम् ।
४ | ।।ऽऽ प्राग्दक्षिणद्वारम् नन्दमशुभदम् ।
५ | ऽऽ।ऽ पश्चिमद्वारं खरमशुभदम् ।
६ | ।ऽ।ऽ प्राक्पश्चिममुखम् कान्तं शुभदम् ।
७ | ऽ।।ऽ दक्षिणपश्चिमास्यम् मनोरमं शुभदम् ।
८ | ।।।ऽ प्राग्दक्षिणपश्चिमास्यं सुमुखं शुभदम् ।
९ | ऽऽऽ। उत्तरास्यम्—दुर्मुखमशुभदम् ।
१० | ।ऽऽ। पूर्वोत्तरद्वारम्—उग्रमशुभदम् ।
११ | ऽ।ऽ। दक्षिणोत्तरास्यम् विपक्षमशुभदम् ।
१२ | ।।ऽ। प्राग्दक्षिणादिगास्यम् धनदं शुभदम् ।
१३ | ।ऽ।। पश्चिमोत्तरास्यम् क्षयमशुभदम् ।
१४ | ।ऽ।। पूर्वपश्चिमोत्तरास्यम् आक्रन्दमशुभदम् ।
१५ | ऽ।।। दक्षिणपश्चिमोत्तरद्वारम् विपुलं शुभदम् ।
१६ | ।।।। चतुर्दिग्द्वारम् विजयं सर्वत्र शुभदम् ।

दिग्भेदेनैकशालादिनिर्माणप्रकारं तत्राह

"यद्वास्तुनि च विस्तारः सैवोच्छ्रायः शुभः स्मृतः । एकशालो गृहः कार्यो विस्ताराद्द्विगुणोच्छ्रयः । चतुःशालगृहस्यैवमुच्छ्रायो व्यासमंमितः । विस्ताराद्द्विगुणं दैर्घ्यमेकशालेषु शस्यते । विस्तीर्णं यद्भवेद्गेहं तद्दैर्घ्यं त्वेकशालके । द्विशाले द्विगुणं प्रोक्तं त्रिशाले त्रिगुणं तथा । चतुःशाले चतुर्गुणं तद्दैर्घ्यं नैव कारयेत् । शिखा चैव त्रिभागे तु गृहं चोत्तमसंज्ञकम् । एकं नागेन्द्रसंयुक्तौ द्वे च दक्षिणपश्चिमे । त्रिशालं पूर्वतोहीनं कार्यं वा सौम्यवर्जितम् । ऊर्द्ध्वभागत्रयं त्यक्त्वा अधोभागद्वयं तथा । मध्ये नाभिं विजानीयादिति प्राह पराशरः । पूर्वादिषु चतुर्द्दिक्षु शालमेकादयो भुवाः । विस्तारस्याथ दैर्घ्यस्य तथैवैकैकसंयुताः । शालं शालादिकोणेषु भुवं

विस्तारदैर्घ्ययोः। एकाद्याः स्वेच्छया सर्वे कार्याभेदसमन्विताः। अनेनैव प्रकारेण क्रियमाणे च वास्तुनि। आयव्ययादिसंशुद्धिं न चिन्तयति पूर्वतः" अस्यार्थः यदि वास्तुनि एकमेव गृहं क्रियते तदा नागेन्द्रसंशुद्ध्या सौम्यवर्जितं उत्तरशालाहीनं गृहं कार्यं यदि द्विशालकं गृहं क्रियते तदा दक्षिणपश्चिमे शाले कार्ये त्रिशाले पूर्वतोहीनं कार्यम् उत्तरशालया वा हीनं कार्यम्। शालाविभागस्तु अनेनैव विधानेन कार्यः पूर्वतः अर्द्धभागत्रयं त्यक्त्वा पश्चिमे भागद्वयं त्यक्त्वा यो मध्यगतो भागः स नाभिः तत्र शाला न विधेया अनेनैव प्रकारेण पूर्वादिदिक्षु पादकयो विस्तारस्य दैर्घ्यस्य एकैकभागं संयोज्य वातादिकोणेषु उत्तरशाला हीनत्वाच्च देयं सर्वे एकाद्याश्चतुःशालान्ता भेदसमन्विताः कार्याः अनेनैव प्रकारेण शालायुते गृहवास्तुनि आयव्ययादिशुद्धिर्न चिन्तनीया। एकशाले आयव्ययादिविचारः कर्त्तव्यः द्विशालादिगृहे आयव्ययादिशुद्धिर्न विचारणीया यतः निर्गमालिन्दनिर्यूहादीनि यानि चतुर्दिशं वेश्मनां तानि न ग्राह्याणि इति। वर्णभेदेनैकशालादिविशेषभेदादिकमाह तत्रैव "ब्राह्मणानां चतुःशालं क्षत्रियाणां त्रिशालकम्। द्विशालकं च वैश्यानां शूद्राणामेकशालकम्। सर्वेषामेव वर्णानामेकशालं प्रशस्यते। एकशालं द्विशालं वा त्रिशालं तुर्यशालकम्। यथानिन्दगृहं कुर्यात्तादृक्शाला प्रशस्यते। शालाभेदो न कर्त्तव्यो न कुर्यात्तु कुनिम्नकम्। समां शालां ततः कुर्यात्सम्यक् प्राकारमेव च। कुलीरो वृश्चिको मीन उत्तरद्वारसंस्थिताः। मेषसिंहधनुर्द्धारी पूर्वद्वारेषु संस्थिताः। वृषभो मकरः कन्या याम्यद्वारसमाश्रिताः। मिथुनं तुलकुम्भौ च पश्चिमद्वारमाश्रिताः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यथाक्रमम्। यदीशा राशयः प्रोक्तास्तस्मिन् शाला प्रवर्त्तते। अथ पूर्वविभागे तु ब्राह्मणा उत्तरे नृपाः। वैश्याश्च दक्षिणे भागे पश्चिमे शूद्रकास्तथा। आग्नेयादिक्रमेणैवापभ्रंशावर्णसङ्कराः। जातिभ्रष्टाश्च चौराश्च विदिक्स्थाः शोभनाः स्मृताः। ब्राह्मणाः क्षत्रियावैश्याः शूद्राः प्रागादिषु स्मृताः"। नृपादीनां गृहमानभेदमाह तत्रैव। "अष्टोत्तरं हस्तशतं विस्तारे नृपमन्दिरम्। कार्यं प्रधानमन्यानि तथाष्टाष्टोनितानि तु। विस्तारपादसंयुक्तं तेषां दैर्घ्यं प्रकल्पयेत्। एवं नृपाणां पञ्चैव गृहाणि शुभदानि च। सेनानीनां च पञ्चैव स्मृतानि शुभदानि च। षड्भिः षड्भिर्विहीनानि चतुःषष्टिमितानि च। पञ्चैव, तस्य विस्तारे दैर्घ्यं षड्भागसंयुतम्। षष्टिश्चतुर्विहीनानि वेश्मानि सचिवस्य च। पञ्चस्वष्टांशसंयुक्तं दैर्घ्यं तस्यार्द्धमेव च। नृपाणां महिषीणाञ्च प्रशस्तं पञ्च चैव हि। षड्भिः षड्भिश्च वर्ज्यानि कशीत्याश्च तथैव च। त्रिंशद्युतश्च दैर्घ्यं च युवराजगृहाणि च। पञ्च अर्द्धं च तस्यैव भ्रातॄणां प्रभवन्ति हि। नृपमन्त्रिगृहाणाञ्च अन्तरे यत्प्रमाणकम्। सामन्तराजमुख्यानां प्रवराणां गृहं स्मृतम्। नृपाणां युवराजस्य गृहाणामन्तरेण यत्। तत् गृहं कञ्चुकीवेश्म कलाज्ञानां तथैव च। युवराजमन्त्रिगृहेष्वन्तरं यद्भवेदिह। अध्यक्षस्य तु तद्गेहं तत्कर्मकुशलाश्च ये। अध्यक्षाधिकृतानां च रतिकोशप्रमाणकम्। चत्वारिंशच्चतुर्हीना पञ्च गेहा भवन्ति हि। षड्भागसंयुतं दैर्घ्यं दैवज्ञभिषजां तथा। पुरोहितानां शुभदं सर्वेषां कथयाम्यतः। हस्तात् चत्वारिंशता युक्तं विस्तारस्य द्विजाश्रयम्। विस्तारं षड्भागं तु दैर्घ्यं तस्य प्रकल्पयेत्। नृपाणां च क्षत्रादीनामाश्रयं पूर्वचोदितम्। नृपसेनापतिगेहस्यान्तरं यद्भवेदिह। तत्कोशगेहं भवति रतिगेहं तथैव च। सेनापतिनृपगेहानामन्तरं यत्प्रमाणकम्। चातुर्वर्ण्यस्य यद्गेहं तद्राजपूज्यसम्मतम्। अथ पारशवादीनां मातापित्रोर्यदन्तरम्। ब्राह्मणस्य च यन्मानं शूद्रेण सह तद्भवेत्। शतहस्तोच्छ्रितं कार्यं चतुःशालं गृहं भवेत्। प्रमितन्त्वेकशालन्तु शुभदं तत्प्रकीर्तितम्। सेनापतिनृपादीनां सप्तत्या सहिते कृते। व्यासे चतुर्दशहृते शालामानं विनिर्दिशेत्। पञ्चत्रिंशद्धृतेऽन्यस्मादलिन्दमानं भवेच्च तत्। शाला त्रिभागतुल्या च कर्त्तव्या वीथिकाबहिः। भवनात् पूर्वं सोष्णीषं पश्चात्सायाश्रयं भवेत्। सावष्टम्भं पार्श्वयोस्तु सर्वत्र सुस्थिरं भवेत्। विस्तारषोडशांशस्तु चतुर्हस्तयुतोच्छ्रयः। तदन्तरस्योच्छ्रितं प्रमाणं प्रवदेद्बुधः। द्वादशभागेनोनं च समस्तानां प्रकल्पयेत्। यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः। नलैरष्टमैको वा कारयेद्भवनोत्तमम्। तथा च सप्तभिरेव विप्राणां कारयेद्गृहम्। सार्द्धषड्भिः क्षत्रियाणां वैश्यानां सार्द्धपञ्चभिः। त्रिभिः सार्द्धैश्च शूद्राणां भवनं शुभदं स्मृतम्। स्वगृहाणां विभागेन प्रमाणमिह कथयेत्।